॥ श्रीः ॥

चौखम्बा संस्कृत ग्रन्थमाला

ग्रन्थ-संख्या १०४



श्रीशुक्लयजुर्वेदे

# कात्यायनश्रौतसूत्रम्

महर्षिकात्यायनमुनिप्रणीतं

कर्काचार्य-याज्ञिकदेवादिकृतभाष्येभ्यः सारमुद्धृत्य

डॉ० अल्बेर्तेन वेबेरेण शोधितम्






चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

१९७२

THE
CHOWKHAMBA SANSKRIT SERIES
WORK NO. 104

# THE ŚRAUTASŪTRA OF KĀTYĀYANA

WITH EXTRACTS FROM THE COMMENTARIES OF
KARKA AND YĀJÑIKADEVA

EDITED BY

Dr. ALBRECHT WEBER

THE
CHOWKHAMBA SANSKRIT SERIES OFFICE
VARANASI-1
1972

TO

BARON ALEXANDER VON HUMBOLDT

AS A TOKEN OF THE DEEPEST GRATITUDE

DEDICATED

THE EDITOR.

## PREFACE TO THE EDITION OF 1972

Already at the age of twenty, Albrecht Weber (1825–1901) presented a "Yajurvedae specimen cum commentario" to the Breslau University, which was accepted for the award of their Ph. D. degree in the same year, 1845. After that preliminary study he completed his edition of "The Vājasaneyisaṃhitā (in the Mādhyaṃdina—and Kāṇva–śākhā with the commentary of Mahīdhara)" not until seven years later.

By bringing out this work, Weber was one in the line of German vedic savants, who during the second half of the nineteenth century published in Europe most of the *editiones principes* of all the four Vedas, viz.,

1848, the Sāmaveda was edited by Theodor Benfey,
1849–74, the Ṛgveda by F. Max Mueller,
1856, the Atharvaveda by Rudolf Roth and his American colleague William D. Whitney,

and from 1852 onwards the different versions of the Yajurveda:

1852, the *Vājasaneyisaṃhitā* by Albrecht Weber (*the present reprint*),
1871–72, the Taittirīyasaṃhitā by Albrecht Weber,
1881–86, the Maitrāyaṇīyasaṃhitā by Leopold von Schroeder,
1900–10, the Kaṭhasaṃhitā by Leopold von Schroeder.

But Weber, certainly the most dynamic and productive German Sanskritist, did not content himself with the publication of the Vājasaneyisaṃhitā (together with Mahīdhara's commentary). He continued his enormous work editing in 1855 the Śatapathabrāhmaṇa (with extracts from three commentaries), and in 1859 the relevant Śrautasūtra of Kātyāyana (with extracts from two commentaries).

The literary tradition of the White Yajurveda, edited with those three voluminous quartos is to be considered as one of the most eminent monuments of the cultural heritage of India.

Being out of print for many decades, it was a great occasion to all Sanskritists at home and abroad, when the Chowkhamba Sanskrit Series Office ( Varanasi ) decided to bring out again of the above mentioned volumes at least Weber's Śatpathabrāhmaṇa in 1964.

Since then the world of Indological studies eagerly awaited also the reprints of Weber's monumental publications of the Vājasaneyisaṃhitā and the Śrautasūtra of Kātyāyana.

Now, that those two important editions are made available again more than hundred years after their first appearance, our thanks are due to the famous Chowkhamba Publishing House for all their great endeavours, and to the Government of my country, the native country of Albrecht Weber, for making possible these publications by very generous financial support. Anyone ever concerned may deeply feel indebted.

Institute of Indology,
University of Cologne,
5 Koeln 41 ( Germany )
December 1971.

**Klaus L. Janert**

# PRELIMINARY REMARKS UPON THE CONTENTS OF THIS NUMBER.

On account of the importance of the matter treated therein, the first *adhyâya* appears here accompanied by the complete Commentary (*vyâkhyâ* as well as *paddhati*) of Yâjnikadeva. Being in possession of only one copy of the *vyâkhyâ*, and that too only by means of my own transscript, I have been obliged to correct the text in several passages, often deriving great assistance in this difficult task from the Çâstradîpikâ, a short commentary on the Jaiminisûtra by Pârthasârathimiçra (Chambers 337). I dare not hope that I have always succeeded in my corrections, and in order to enable others to judge of them I have faithfully registred all those differences at the bottom of each page. — Quotations marked by four cyphers (१. १. १. १.) are taken from the Çatapatha-Brâhmaṇa (Mâdhyandina), those marked by three (१. १. १.) from the Kâtîyasûtra itself, and those marked by only two (१. १.) from the Vâjasaneyi-Saṃhitâ (Mâdhyandina). —

The abbreviations I have made use of in this first number are the following ones:

1. for the text of the sûtras and for the *vyâkhyâ*.

१ = E. I. H. 2844 (text). — १ second hand.
२ = my copy of E. I. H. 747 (*vyâkhyâ*). — २ second hand.

2. for the *paddhati*.

१ = E. I. H. 2589. — १ second hand.
२ = Chambers 790*b*. — २ second hand.
३ = Chambers 708*c*. — ३ second hand.

Berlin, March 1856. A. Weber.

ओम्

ब्रह्माणमथ विष्णुं च शिवं गणपतिं तथा ।
अम्बिकां शारदां चापि वन्दे विघ्नोपशान्तये ॥
कात्यायनं नमस्कृत्य गुरून् श्रीश्रीपतींस्तथा ।
पितरौ भाष्यकर्तॄंश्च पितृभूत्यादिसंज्ञकान् ॥
कात्यायनप्रणीतेऽस्मिन्सूत्रे यज्ञप्रकाशके ।
प्रजापतेस्तनूजोऽहं कुर्वे व्याख्यामिमां स्फुटम् ॥
जयन्ति ते गुरोर्वन्द्याः श्रीपतेः पादपांसवः ।
येषां प्रसादादज्ञोऽपि चापलं कर्तुमुद्यतः ॥
आलोच्य सूत्रभाष्यादि क्रियते संग्रहो यतः ।
स्वकल्पितत्वशङ्कात्र न कार्या विबुधैरतः ॥

इह पुण्यो वै पुण्येन कर्मणा भवति (१४. ६. २. १४.) तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनेति (१४. ७. २. २५.) अग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादिभिर्वाक्यैः कर्मणां स्वर्गापवर्गादिश्रेयःसाधनत्वं प्रतीयते । तानि चाग्निहोत्रादिकर्माणि वेदवाक्यैकवेद्यानि · वेदवाक्यानि चानेकशाखावस्थिततया स्वतश्च प्रतिवाक्यं नानाविधपरस्परविरुद्धार्थस्फुरणेन दुर्बोधार्थानि बहुभिरर्थवादवाक्यैर्मिश्रितानि च । तथा हि अग्निहोत्रं जुहुयात्स्वर्गकाम इत्यत्र किं स्वर्गो होमाय उत होमः स्वर्गाय · तथा अग्निहोत्रशब्दो गुणविधानार्थो नामधेयं वेति । तथा स वै संवत्सरं दीक्षाभिरेतीत्यादौ (१२. ३. ३. ११.) क्वचित्संवत्सरशब्दस्य मुख्यार्थत्वम् सहस्रसंवत्सरादौ (१२. ३. ३. १.) तस्यैव गौणत्वम् । अर्थवादमिश्रपाठाद्विध्यर्थवादसंदेहोऽपि भवति किमयं विधिरुतार्थवाद इति । यद्यपि जैमिनिशबरस्वामिकुमारिलप्रभृतिभिर्मीमांसायां तानि वाक्यानि संदेह-

निरासपूर्वकं यथार्थं व्याख्यातानि सन्ति · अधीतशास्त्राणां च तदर्थावगमोऽपि सुकर एव · तथापि तेषां नानाशाखाव्यवस्थितत्वेनेदानीन्तनैः सर्वैः पुरुषैरध्येतुं ज्ञातुं वाशक्यत्वात्तदधीनं कर्मणां ज्ञानं दुःशक्यमिदानीन्तनानामिति मत्वा परमकारुणिको भगवान्कात्यायनाचार्यो नानाशाखागतविधिवाक्यसंग्रहरूपं कल्पसूत्रं प्रणीतवान् ॥

तत्र पूर्वमधिकारादिकस्य सर्वकर्मसाधारणस्य निरूपणानन्तरं विशेषस्य दर्शपूर्णमासादेर्निरूपणं युक्तम् · अन्यथा प्रतिविशेषमधिकारादिनिरूपणे ग्रन्थगौरवं स्यात् · तन्मा भूदिति कृत्वा प्रथमेऽध्याये यावत्किंचित्सर्वकर्मसाधारणं तदुपदिशति । तत्रैतदादिसूत्रम् ·

अथातोऽधिकारः ॥१॥ वक्ष्यतऽइति सूत्रशेषः । तत्रायमथशब्दो मङ्गलार्थ आनन्तर्यार्थश्च · मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथेति अमरोक्तेः (३. ४. ३२. ८.) । तत्र मङ्गलमुच्चारणमात्रेण साधयति दधीव दर्शनादिति आनन्तर्यं तु अभिधावृत्त्या वक्ति · तेनान्वाय्यं चानेकार्थत्वमिति दोषानवकाशः । अपेक्षितं च प्रारिप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्तये प्रचयगमनाय च मङ्गलम् · आनन्तर्यं च न यतः कुतश्चित् अनुपयोगात् किं तु वेदाध्ययनापेक्षया तस्यात्रापेक्षितत्वात् । अतःशब्दोऽत्र हेत्वर्थस्तस्यैव वेदाध्ययनस्य वेदार्थविचारं प्रति हेतुतामाह । अधिक्रियतऽइत्यधिकारः स्वाम्यं फलभोक्तृतया कर्मण्यैश्वर्यमित्यर्थः । तेनायमर्थः अथ वेदाध्ययनानन्तरम् यतोऽधीतो वेदः अतो हेतोरधिकारो वक्ष्यते अभिधास्यते विचारपूर्वकं निरूपयिष्यतऽइत्यर्थः । अधिकारग्रहणं सर्वेषां वेदवाक्यप्रतिपाद्यानामर्थानामुपलक्षणार्थम् अधिकारादिकः सर्वोऽपि वेदवाक्यार्थोऽभिधास्यतऽइत्यर्थः । प्रतिज्ञासूत्रमिदम् · प्रतिज्ञाप्यतऽइदम् अधिकारो वक्ष्यतऽइति प्रतिज्ञाकरणं च शिष्यबुद्धेरव्याकुलतार्थम् · अन्यथा हि किमिदमुच्यतऽइति बुद्धेर्व्याकुलता भवति ॥ ॥ केचित्त्वेवं व्याचक्षते । अयमध्यायः सूत्रकृता नित्यकाम्यप्रायश्चित्तोपदेशानन्तरमुपनिबद्धः · तेनाथशब्दः सर्वकर्मोपबन्धनानन्तर्ये · अतःशब्दस्तु हेत्वर्थ एव · यतो दर्शपूर्णमासादीनि प्रवर्ग्यान्तानि कर्माण्युक्तानि अतस्तेष्वेव कर्मस्वधिकार उच्यते । एषु पूर्वोक्तेषु कर्मसु अस्याधिकारः अस्य स्वामित्वमस्य कर्मजन्य-

फलभोक्तृत्वमिति वक्ष्यतऽइत्यर्थः । यत उक्तेष्वेव कर्मसु एवमपेक्षा जायते एते- ष्वग्निहोत्रादिकर्मसु कस्याधिकार इति अत एवं प्रतिज्ञा । अथ सर्वकर्मोपबन्ध- नानन्तरम् यतः कर्माण्युक्तानि अतस्तेष्वधिकारोऽभिधीयतऽइति अधिकारो वक्ष्यत ऽइति प्रतिज्ञातम् ॥ ॥ कर्मजन्यफलभोक्तृत्वं चाधिकार इत्युक्तम् तच्च कर्मणां फलवत्त्वे सिद्धे सति सिध्यति नान्यथा · तेन तत्साधनार्थमिदं सूत्रमारभ्यते । तत्रैवं संदेहः किमफलवन्ति कर्माणि उत फलवन्तीति । अफलवन्तीति ब्रूमः · कर्मसम- नन्तरं प्रत्यक्षेण फलस्यानुपलब्धेः । ननु मा भूत्प्रत्यक्षं कर्मणां फलवत्त्वे प्रमाणम् · आगमस्तु भविष्यति · कश्चासौ · अग्निहोत्रं जुहुयात्स्वर्गकामः दर्शपूर्णमासाभ्यां स्व- र्गकामो यजेतेत्यादि · सत्यम् · भविष्यति · तथाप्यत्रैतद्विचारार्हम् अत्राग्निहोत्रादिषु किं पुरुषस्याधिकारः स्वाम्यं कर्मजन्यफलभोक्तृत्वमस्ति न वेति । तदर्थमिदं विचा- र्यते · यजेत जुहुयादित्यत्र येयं प्रत्ययोपात्ता भावना तस्यां किं धात्वर्थ एव भाव्यः प्रधानम् यागं कुर्याद्धोमं कुर्यादित्येवम् स्वर्गादि तु तत्साधनतया गुणभूतम् स्व- र्गेण यागं च होमं च कुर्यादिति उत काम्यमानत्वेनोपात्तः स्वर्गादिरेव भाव्य- स्तत्र च साधनं धात्वर्थ इति यागेन होमेन च स्वर्गं कुर्यादिति । ततोऽप्ये- तद्विचार्यते · योऽत्र क्रियायाः स्वर्गकामादेश्च पुरुषस्य क्रियाकर्तृरूपः सम्बन्धः तत्र किं क्रिया प्रधानभूता पुरुषो गुणभूतः अथवा पुरुषः प्रधानभूतः क्रिया गुणभूतेति । यदि गुणभूतः पुरुषः तस्य गुणभावं क्रियाक्षेपादेव सिद्धमनूद्य स्वर्गादि द्रव्यं साधनत्वेन विधीयते कामश्रुतिश्च साधनकामनानुवादः · अयमर्थः स्वर्गं साधन- त्वेन कामयमानो यजेत स्वर्गेण यागं कुर्यादित्यर्थः · अथवा समुद्रं मनसा ध्यायन्रथन्तरं गायेदिति वत् स्वर्गकामनैव गुणभूतकर्तृविशेषणं सती यागाङ्गत्वेन विधीयतऽइति द्वेधा पूर्वपक्षः । अथवा प्रधानभूतः पुरुषः ततस्तस्यात्मार्था स्व- र्गादिगोचरा प्रवृत्तिः प्रत्ययेन विधीयते · साधनतया च याग उपदिश्यते स्व- र्गकामो यागेन कुर्यादात्मार्थप्रवृत्तिमिति · स्वर्गकामस्य चात्मार्था प्रवृत्तिः स्वर्ग- विषयैवेति स्वर्गभावनैवानेन प्रकारेणोपदिष्टा भवति · तदयमर्थः यः स्वर्गं प्राप्तुमिच्छति स यागेन कुर्यादभिलषितम् स्वर्गश्च तस्याभिलषित इति स्वर्गं भाव- येद्यागेनेत्युक्तं भवति । तथा स्वर्गशब्दः स्रक्चन्दनवनितादिद्रव्यवाची सुखवाची

वेति · यदि द्रव्यवाची ततः कर्म प्रधानम् द्रव्यं गुणभूतम् अथ सुखवाची तदा यागो गुणभूतः स्वर्गः प्रधानमिति । तत्र पूर्वपक्षः · अत्र यजेत जुहुयादित्यनेनाख्यातेन भावनाभिधीयते तस्यां च धात्वर्थ एव भाव्यः एकपदोपात्तत्वात् · स्वर्गस्तु पदान्तरोपात्तत्वाद्वाक्येन भाव्यतयान्वेतव्यः · वाक्यं च श्रुतेर्दुर्बलम् · स्वर्गस्य च भाव्यत्वाभावे सति गुणत्वमङ्गीकार्यम् · स्वर्गशब्दश्चात्र सुखसाधनचन्दनादिद्रव्यवाची चन्दनं स्वर्गो द्विरष्टवर्षाः स्त्रियः स्वर्गः कौशिकानि सूक्ष्माणि वासांसि स्वर्ग इति लोके व्यवहारदर्शनात् सर्वत्र शब्दार्थे तस्यैव प्रामाण्यात् · तच्च[1] कामयितुं योग्यम् तेन विना यागानिष्पत्तेः · द्रव्यं च भूतसिद्धम् कर्म तु भव्यं साध्यम् · भूतस्य च भव्यार्थता युक्ता दृष्टार्थत्वात् न तु[2] भव्यस्य भूतार्थता दृष्टोपकाराभावात् । तस्मादपि यागहोमादिर्धात्वर्थ एव भाव्यः । अथवा स्वर्गादिकामनैव यागाङ्गमित्यस्मिन्नपि पक्षे तथैव । न च यागेन किमपि फलं साध्यत इत्युक्तम् तस्मादफलवन्त्येव कर्माणि · निष्फलेषु च तेषु लोभाभावाद्बहुवित्तव्यययागसाध्यत्वाच्च न कश्चित्प्रवर्तेतेति न कस्यापि कर्मजन्यफलभोक्तृत्वापरपर्यायोऽधिकारः सिध्यतीति प्राप्तऽआह ·

फलयुक्तानि कर्माणि ॥ २ ॥ फलं पुरुषाभीष्टं स्वर्गधनपुत्रादिकम् कर्माण्यग्निहोत्रादीनि फलयुक्तानि फलैः सम्बद्धानि फलवन्ति फलस्य साधकानि भवन्तीत्यर्थः । कथम् · इत्थम् · यजेत जुहुयादित्यत्र प्रत्ययस्य केवलमाख्यातरूपत्वमेवेति न मन्तव्यम् किं तु लिङ्प्रत्ययत्वेन विधिरूपत्वमप्यस्ति · तत्राख्यातत्वाकारेण भावनामाचष्टे विधित्वाकारेण पुरुषं प्रवर्तयति · पुरुषश्च स्वामित्वं फलमन्तरेण न प्रवर्ततऽइति तदपेक्षित स्वर्गमेव भाव्यतया विधिरुपादत्ते । स्वर्गशब्दश्च सर्वोत्कृष्टे सुखे रूढः तथा हि यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् इच्छामात्रोपनीतं तत्सुखं स्वर्गपदास्पदमिति · द्रव्ये तु लाक्षणिकः । तस्मात्स्वर्गस्य भाव्यत्वं विधिश्रुत्या सिद्धम् । धात्वर्थस्य भाव्यत्वमेकेनं पदेन प्रतीयमानमपि न प्रत्ययेनावगम्यते किं तु प्रकृत्या · तथा सति स्वर्गभाव्यत्वं भावनायाः प्रत्यासन्नम् एकेनैव विधिरूपेणाख्यातप्रत्ययेनावगमात् । कामयोगादपि[3] स्वर्गस्यैव भाव्यत्वम्

---

1) कर्म (sic!) च marg. 2) सप्तमपञ्चिकायां षोडशे marg. 3) किमयो° २.

यागहोमादि तु तत्साधनम् · तथा हि किं स्वर्गकामो यागायोपदिश्यते यथा लोहितोष्णीषाः प्रचरन्तीति यदि वा यागः स्वर्गकामाय यथा मलिनः स्नायाद्बुभुक्षितोऽश्नीयादिति । तत्र यदि स्वर्गकामः कर्मणऽउपदिश्यते उपदिष्टोऽपि न प्रवर्तते · को हि परार्थं प्रयासमातिष्ठेत · तथा च कर्मचोदनानर्थिकैव भवति । अथ यागः स्वर्गकामार्थः ततोऽसौ पुरुषस्योपकरोति तं पुरुषः स्वार्थेन करोतीति · तथा च कर्मचोदनार्थवती भवति · तस्माद्यागः स्वर्गकामस्योपकारकः । स्वर्गकामस्यानेक उपकारः पुत्रपशुग्रामान्नाद्यादिलाभरूपः · स यदि तत्रान्नाद्यादीनामन्यतमं करोति ततः स्वर्गशब्दोऽविवक्षितार्थः पुरुषमात्रवचनो भवति · तथा चानर्थक्यमेव · अन्तरेणापि हि तद्वचनं पुरुषमात्रमाख्यातादवगम्यते · तस्मात् यागात्स्वर्गो भवतीति निश्चीयते । अतश्च स्वर्गकामो यागेन कुर्यादिति वाक्यार्थः · अत्र स्वर्गं प्रार्थयमानस्यानुष्ठानमनूद्य यागस्तस्योपायत्वेन विधीयते · अतः स्वर्गादिकं यागादेः फलमिति सिद्धम् · फलवन्ति कर्माणीति च । अतः कर्मणां फलवत्त्वात्कर्मजन्यफलभोक्तृत्वापरपर्यायोऽधिकारोऽपि पुरुषस्याग्निहोत्रादिकर्मसु सिध्यति ॥ ॥ अधिकारो वक्ष्यतऽइति प्रतिज्ञातम् · स केषामित्यपेक्षायामाह ·

सर्वेषामविशेषात् ॥ ३ ॥ सर्वेषां कर्मानुष्ठानसमर्थानामसमर्थानां चान्धमूकपङ्गुबधिरदेवऽऋषितिरश्चां कर्मस्वधिकारो भवति · अविशेषात् फलार्थित्वस्य सर्वेषामविशिष्टत्वात् फलं हि सर्वैरिष्यतऽएव ॥ तत्राचेतनानां वृक्षादीनां कामनाभावादस्त्वनधिकारः तिरश्चां तु भवति · तिर्यञ्चो हि तापोपतप्ताश्छायां व्रजन्ति शीतपीडिताश्चातपम् । ननु तिर्यञ्चः प्रत्यासन्नमेव जानन्ति न तु कालान्तरभावि फलम् वैदिकानि च कर्माणि कालान्तरफलान्येव अतः कथं तिरश्चां तत्र प्रवृत्तिः · उच्यते · कालान्तरेऽपि फलं कामयमाना दृश्यन्ते श्वानश्चतुर्दश्यामुपवसन्ति श्येनाश्चाष्टमीमिति · लिङ्गान्यपि वेदे सन्ति देवा ह वै सत्त्रमासत (४. ६. १. १.) सर्पाः सत्त्रमासत वनस्पतयः सत्त्रमासत गावो वाऽएतत्सत्त्रमासतेत्यादीनि (पञ्चविंशब्राह्मण° ४. १.) तानि च देवानां सर्पाणां वनस्पतीनां गवां चाधिकारं दर्शयन्ति । नन्वेतेऽन्धादयो यथोक्तं कर्म कर्तुं न शक्नुवन्तीति कथम-

धिकार एषाम् · उच्यते · यजेतेत्यादिप्रधानवाक्येन स्वर्गाधिकारं कर्मावगतम् तदनुसारीणि चाङ्गवाक्यानि न तत्संकोचे समर्थानि · अतश्चक्षुष्मतः प्रत्याज्यावेक्षणविधिः अचक्षुषस्तु तद्विध्यभावात्तद्रहितमेव फलसाधनम् एवं बधिरस्य वाचनरहितम् मूकस्य मन्त्रोच्चारणरहितम् पङ्गोश्च विष्णुक्रमणरहितम् इति सर्वेषामर्थिनामशक्याङ्गरहितकर्मानुष्ठानात्सिद्धोऽधिकार इति पूर्वः पक्षः । सिद्धान्तमाह·

मनुष्याणां वारम्भसामर्थ्यात् ॥४॥ वाशब्दः पक्षव्यावृत्तौ · न सर्वेषामधिकारः किं तु मनुष्याणामेव · कुतः · आरम्भसामर्थ्यात् · मनुष्या एव हि यथाश्रुतं कर्मारब्धुं कर्तुं समर्थाः न देवऋषितिर्यगादयः । तत्र देवानां देवतान्तराभावादनधिकारः · न ह्यात्मानमुद्दिश्य त्यागः सम्भवति · किं च · देवाश्च प्राप्तस्वर्गादिकामाः · न च तेषां किंचिद्वाप्तव्यमस्ति यदर्थं कर्माणि कुर्वते ॥ ऋषीणां चार्षेयाभावादनधिकारः · न हि भृग्वादयो भृग्वादिसगोत्रा भवन्ति । तन्त्रान्ते तु विशेषः अनादिर्हि कालोऽस्माकं मीमांसकानाम् तेन भृगोरपि पूर्वपूर्वभृग्वन्तरसम्भवात्ततः पूर्वमप्येवमेवेति सम्भवत्येव भृगोर्भार्गवत्वमित्यस्त्येव ऋषीणामप्यधिकारः तथा येषां शब्द एव देवता तेषामिदमयुक्तं यद्देवानां देवतान्तराभावादनधिकार इति ॥ न च तिरश्चां गवादीनामधिकारः प्रधानमात्रेऽपि सामर्थ्याभावात् आसन्नचेतनत्वाच्च · ते ह्यासन्नमेव चेतयन्ते न पारलौकिकं फलमिति । ननूक्तम् शुनश्चतुर्दश्यामुपवासदर्शनाच्छ्येनस्य चाष्टम्यामुपवासदर्शनाच्च तेऽपि पारलौकिकं जानन्तीति । तत्कथमवगम्यते एते धर्मार्थमुपवसन्तीति · ये हि वेदस्मृतिपुराणादिकं पठन्ति त एव जानन्ति यदनेन कर्मणा इदं फलममुत्र प्राप्यत इति · न चैते वेदादिकं पठन्ति नाप्यन्येभ्य आगमयन्ति तेन शास्त्रार्थमविद्वांसः फलमामुष्मिकमकामयन्तः कथं तत्साधनं कर्म कुर्युः · तस्मान्न धर्मार्थमुपवसन्तीति । किमर्थं तर्ह्येतेषामुपवासः उच्यते रोगादरुचिरेषाम् · तर्हि नियतकाले कथं रोगः उच्यते नियतकाला अपि रोगा भवन्ति यथा तृतीयकचातुर्थिकादिज्वराः । अधनाश्चैते । तस्मान्न गवादीनां तिरश्चामधिकारः ॥ यानि पुनर्लिङ्गानि देवा ह वै सत्त्रमासतेत्यादीनि अर्थवादास्ते विधिप्ररोचनार्थाः · इत्थं सत्त्राणि प्रशस्तानि यानि कृतकृत्या अपि देवा आसते आसन्नचेतनास्तिर्यञ्चोऽपि

अचेतना वनस्पतयोऽपि · किं पुनर्मनुष्या यथाश्रुतमनुष्ठातुं समर्था इति। तस्माद्यथाश्रुतकरणसामर्थ्यान्मनुष्याणामेवाधिकारो न गवादीनामिति सिद्धम् ॥ ॥ एवमपि सर्वमनुष्याणामधिकारे प्राप्तऽआह ·

अङ्गहीनाश्रोत्रियषण्ढशूद्रवर्जम् [1] ॥५॥ णामुलयम् अङ्गहीनाश्रोत्रियषण्ढशूद्रान्वर्जयित्वा मनुष्याणामधिकारः कर्मसु भवति · मनुष्या अपि ये अङ्गहीना अङ्गेन चक्षुरादिना हीना अन्धपङ्गुमूकबधिरादयः अश्रोत्रिया अनधीतवेदाः षण्ढा नपुंसकाः शूद्राश्च नैतेषामधिकार इत्यर्थः। आरम्भसामर्थ्यादित्यत्राप्यनुवर्तते · न चैतेऽङ्गहीनादयो यथाश्रुतं कर्मारब्धुं कर्तुं शक्नुवन्ति · तद्यथा न ह्यन्ध आज्यावेक्षणं कर्तुं शक्नोति मूकश्च मन्त्रोच्चारणम् पङ्गुश्च विष्णुक्रमणम् बधिरश्च प्रैषश्रवणम् · अनधीतवेदोऽश्रोत्रिय इत्युच्यते स च किमपि मन्त्रसाध्यं कर्तुं न शक्नोति · षण्ढो नपुंसकः तस्याप्यनधीतवेदत्वादद्रव्यत्वादशुचित्वाच्च नाधिकारः · शूद्रस्य चानधीतवेदत्वादनधिकारः · आज्यावेक्षणादिभिश्च विना कर्मणो वैगुण्यं भवत्येव। ननूक्तम् अशक्याङ्गरहितकर्मानुष्ठानादधिकारो भविष्यतीति · अत्रोच्यते · भवेदेवं यदि आज्यमवेक्षतऽइत्यादीन्यङ्गवाक्यानि स्वातन्त्र्येण पुरुषैः सम्बध्येरन् प्रधानवाक्यशेषत्वात्तेषाम्। तदङ्गयुक्तेन प्रधानवाक्येन तदङ्गयुक्तः क्रतुः पुरुषैः सम्बध्यमानोऽसमर्थान्परित्यज्य समर्थान्प्रति ज्ञायते · तेनान्धस्य क्रतुरेवाविहितो न त्वाज्यावेक्षणमेवाविहितमितरच्च विहितमिति मन्तव्यम्। न च प्रधानवाक्यविरोधः सर्वाधिकारानिश्चयात् विशेषाभावाद्धि सर्वाधिकारः स्यात् अस्ति च विशेषः आरम्भसामर्थ्यम् · अतः समर्थानामेवाधिकारः। यत्र तु प्रधानवाक्यविरोधो यावज्जीवं यजेतेत्यादौ तत्र यथाशक्तिप्रयोगादपि फलं भवति · तदविरोधे तु सर्वाङ्गयुक्तकर्मानुष्ठानादेव फलम्॥ ननु आरम्भसामर्थ्यादित्यनेनैव गवादीनामिवान्धादीनामप्यधिकाराभावसिद्धेः किमर्थं पुनरङ्गहीनादिवर्जमित्युक्तम् · उच्यते · नियमार्थम् · एतेषामेवानधिकारो न निर्धनस्य · तस्य चाधिकारो भवत्येव न त्वारम्भसामर्थ्याभावादनधिकारः · अतो निर्धनोऽपि क्रत्वर्थं धनमर्जनादिना सम्पाद्यावश्यं यजेतेति। एवमन्धादिरपि यद्योषधिशस्त्रा-

---

1) खण्ड १.

दिनान्धत्वादिकं स्फोटयितुं शक्नोति तस्याप्यधिकारो भवत्येव । पूर्वमनङ्गहीन-
त्वावस्थायामाहिताग्निश्चेत् पश्चाद्रोगादिनाङ्गवैकल्ये जाते काम्येष्वधिकारो न भव-
ति नित्येषु तु यथाशक्ति कुर्वन्नधिक्रियत एव · अङ्गवैकल्ये सति अग्न्याधेयं न
भवत्येव ॥ मण्डनः दर्शेष्टिं पूर्णमासेष्टिं सोमेज्यामग्निसंग्रहम् । अग्निहोत्रं वि-
वाहं च प्रयोगे प्रथमे स्थितम् ॥ न कुर्याज्जनके ज्येष्ठे सोदरे वाथ कुर्वति ।
ज्येष्ठे श्रद्धाविहीने सत्याधेयं तदनुज्ञया ॥ पितुः स ह्यप्यनुज्ञाते नादधीत कदा
चन ॥ ॥ हारीतः सोदराणां तु सर्वेषां पारिवेत्त्यं [1] कथं भवेत् । दारैस्तु
परिविद्यन्ते नाधानेन [न] चेज्ययेति ॥ कात्यायनः (कर्मप्रदीप १.६.४-६.) देशान्त-
रस्थक्लीबैकवृषणानसहोदरान् । वेश्यातिसक्तपतितशूद्रतुल्यातिरोगिणः ॥ जड-
मूकान्धबधिरकुब्जवामनकुण्डकान् [2]। अतिवृद्धानभार्यांश्च कृषिसक्तान्नृपस्य च ॥
धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा । कुलटोन्मत्तचौरांश्च परिविन्दन्न दुष्य-
तीति ॥ तथा नाधिकारविघातोऽस्ति भिन्नोदर्येऽपि सोदरे । पङ्ग्वन्धमूकब-
धिरपतितोन्माददूषणे ॥ संन्यस्ते छिन्नहस्तादौ यद्वा षण्ढादिदूषणे । जनके सोदरे
ज्येष्ठे कुर्यादेवाविचारयन् ॥ ॥ ननु द्रव्यवतोऽनङ्गहीनस्य समर्थस्य सतः शू-
द्रस्याधिकारः कथं न भवति । वेदे चैवंविधानि लिङ्गान्यपि सन्ति यैः शूद्रस्याधि-
कारो भवतीति गम्यते · आधावेति शूद्रस्येति (१.१.४.१२.) हविष्कृदाह्वाने ·
मस्तु [3] शूद्रस्येति सोमे पयोव्रतस्थाने · अष्ठीवद्दघ्नं [4] शूद्रस्येति (१३.८.३.११.)
पितृमेधे । नन्वनधीतत्वात्कथमधिकार इति · उच्यते · अनुपनीतस्यापि अनधी-
तवेदस्यापि पत्नीवद्भविष्यति । एवं प्राप्त आह ·

ब्राह्मणराजन्यवैश्यानाम् श्रुतेः ॥६॥ शूद्रस्य कुतो नाधिकार इत्यत्र
हेतुः · ब्राह्मणराजन्यवैश्यानामेवाधानश्रुतेः · यतो ब्राह्मणादीनां त्रयाणामेवा-
धानं श्रूयते न शूद्रस्य । तथा हि वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः
शरदि वैश्य इति । अतः शूद्रस्याग्न्याधानश्रवणाभावादनग्निः शूद्रः · अतस्तस्या-
ग्निसाध्ये कर्मण्यधिकाराभावः । नन्वन्याहितानेवाग्नीन्क्रीतलब्धानाधाय करिष्य-

---

1) ? पारिवेत्यं २. 2) षोडकान् २. 3) दध्युदकम् marg. 4) जानुप्रमाणगर्तम् marg.

ति · मैवम् · · आदधीतेत्यात्मनेपदादाधातुरेव[१] फलेन भवितव्यम् कर्मयोग्यता चाग्नीनां तत्फलम् अतोऽन्येनाहिता अन्यस्य कर्म न साधयन्ति तेनान्याहितानामग्नीनामुपादानमयुक्तम् · अतः शूद्रस्याधानाश्रवणात्तदेकोपायसाध्यानामग्नीनामभावादग्निसाध्यकर्मण्यनधिकारः ॥ अथवा ब्राह्मणराजन्यवैश्यानामेवोपनयनश्रुतेः शूद्रस्यानधिकारः । तथा हि वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यमिति । उपनयनं चाध्ययनार्थम् अतोऽनुपनीतस्याध्ययनाभावादनधीतवेदत्वादनधिकारः शूद्रस्य । ननु मा भूदुपनयनम् अनुपनीतोऽपि पठिष्यति · मैवम् · शूद्रस्य वेदाक्षरश्रवणे उच्चारणे धारणे च प्रायश्चित्तस्य दर्शनात् · श्रवणे त्रपुजतुभ्यां श्रोत्रपूरणम् उच्चारणे जिह्वाछेदः धारणे च शरीरभेद इति · तथा पद्यु वा ऽएतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येयमिति शूद्रसमीपेऽप्यध्ययनं प्रतिषेधति । ननु तर्हि आधावेति शूद्रस्येत्यादीनां लिङ्गानां का गतिः · उच्यते · रथकारविषयाणि तानि · रथकारस्य हि कर्मस्वधिकारं वक्ष्यति रथकारस्याधानऽइति (१. १. १.) · स च शूद्रासम्बन्धाच्छूद्रः कथ्यते तस्य मातामही शूद्रेति ॥ ॥ अथ ब्राह्मणो यजेत स्वर्गकामो यजेतेत्येवमादिविधिं संदिह्यते · किं ब्राह्मणं स्वर्गकामं च पुरुषमेवाधिकृत्य यजेतेत्येष शब्द उच्चरितः उतानियमः स्त्रियं पुमांसं वेति । किं तावत्प्राप्तम् · पुंलिङ्गनिर्देशात्पुरुषस्यैवाधिकारः · कुतः · अत्र लिङ्गस्य प्रकृत्यर्थतया विवक्षितत्वात् यथा ग्रहं संमार्ष्टीत्यत्र · अतः पुरुषस्यैवाधिकारो न स्त्रियाः । अद्रव्यत्वाच्च · यतः स्त्री निर्धना अतः सा द्रव्यत्यागात्मकं कर्म कर्तुं कथं शक्नोति द्रव्याभावात् · द्रव्याभावश्च भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनमिति स्मृतेः (मनु° ८. ४१६.) । तस्मात्पुरुषस्यैवाधिकार इति प्राप्तेऽआह ·

स्त्री चाविशेषात् ॥ ७॥ स्त्री च अग्निहोत्रादिकर्मस्वधिकारिणी भवति · कुतः · अविशेषात् · यतः स्वर्गकामो ब्राह्मण इत्येतत्पुंलिङ्गं श्रूयमाणमपि निर्विशेषकरम् यत इदमुद्दिश्यमानस्य विशेषणम् यः स्वर्गकामः स यजेतेत्येवम् तेन विधिसंस्पर्शाभावादविवक्षितम् · अतो न पुरुषस्यैवाधिकारः किं तु स्त्रिया अपि

१) आधानकर्तुः marg.

। अथवा अविशेषात् इति स्वर्गकामत्वाविशेषादित्यर्थः · तदुक्तं जैमिनिना (६.१.२६.) फलोत्साहाविशेषादिति ॥ ननूक्तम् निर्धनत्वान्नाधिकार इति · मैवम् · धनवती हि सा तस्या अपि कर्तनादिना द्रव्यार्जनसम्भवात् पितृभ्रातृभर्त्रादिदत्तसंभवाच्च पत्यार्जितस्योभयसाधारणत्वाच्च · धर्मे चार्थे च कामे च नातिचरितव्या · पाणिग्रहणाद्धि सहत्वं कर्मसु · तथा कर्मफलेषु द्रव्यपरिग्रहेषु चेत्यादिस्मरणात् । ननूक्तं यत्ते समधिगच्छन्तीत्यादिकम् · तत्रोच्यते · स्मृतिप्रामाण्यान्निर्धनया भवितव्यम् श्रुतिविशेषात्फलार्थिन्या यष्टव्यम् · यदि स्मृतिमनुरुध्यमाना परवशा निर्धना च स्यात् यजेतेत्युक्ता सती न यजेत · तत्र स्मृत्या श्रुतिर्बाध्यते · न चैतद्युक्तम् · तस्मात्फलार्थिनी सती स्मृतिमप्रमाणीकृत्य द्रव्यं परिगृह्णीयात् यजेत चेति · अतः स्मर्यमाणमपि निर्धनत्वमन्याय्यमेव श्रुतिविरोधात् · अतो निर्धनत्वप्रतिपादकं वचनमस्वातन्त्र्यपरं व्याख्येयम् · तस्मात्स्त्रिया अपि फलार्थित्वाविशेषाद्धनवत्त्वाच्चाधिकारो भवति ॥

दर्शनाच्च ॥ ८ ॥      दृश्यते चायमर्थो वेदे यत्पत्न्यपि कर्मस्वधिक्रियतऽइति । मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीमिति पत्नी लौहऽइति (७. ४. ३४.) पत्नी च गार्हपत्ये तूष्णीमिति (५. ५. ३६.) च । अत्र योक्त्रादिविधिपरेषु वाक्येषु पत्न्या अपि कर्मस्वधिकारदर्शनात्पत्न्यप्यधिक्रियतऽइत्युक्तम् । अथवा वेदे पत्न्या अपि धनवत्तादर्शनाच्च पत्न्यधिक्रियते · तथा हि भसदा पत्नीः संयाजयन्ति भसद्यीया हि पत्न्यो भसदा वाऽएताः परगृहाणामैश्वर्यमवरुन्धतऽइति ॥ एवं पत्न्या अधिकारे सिद्धऽइदं चिन्त्यते · किं पत्नी पृथग्यजते यजमानश्च पृथक् उतोभौ सम्भूय यजेयातामिति । किं प्राप्तम् · पृथक्पृथगिति · कुतः · यजेतेत्याख्यातप्रत्ययगताया एकत्वसंख्याया उद्देश्यगतत्वाभावेन विवक्षाया वारयितुमशक्यत्वात् अत एककर्तृत्वसिद्धये यजमानेन पत्न्या च पृथक्पृथग्यागः कर्तव्य इति पूर्वः पक्षः । सिद्धान्तस्तु · न पृथग्यागः कार्यः · कुतः · वैगुण्यप्रसङ्गात् · दर्शपूर्णमासादावाज्यस्य पत्न्यवेक्षणं यजमानावेक्षणं चेत्युभयमाम्नातमस्ति · तत्र पृथक्प्रयोगे क्रियमाणे यजमानकर्तृके यागे पत्न्यवेक्षणं लुप्येत पत्नीकर्तृके च यजमानावेक्षणाम् तस्माद्वैगुण्याय सहैव दम्पती यजेयाताम् । ननु पृथगपि यजमानः पुमानधर्व्वा-

द्विवत्परिक्रयेणाज्यावेक्षणार्थं पत्नीं सम्पादयिष्यति स्त्री च यजमानम् · नैवम् · स्वामिनः परिक्रयणासम्पत्तेः · न हि या काचित्स्त्री पत्नीशब्दवाच्या · यज्ञस्वामिनी हि सा · पत्युर्नो यज्ञसंयोगऽइति पाणिनिस्मरणात् (४. १. ३३.) · एवं यजमानशब्दमपि यज्ञस्वामिन्येव स्मरन्ति · तस्मात्सहैव कर्तृत्वमुभयोः । न च यजेतेत्येकत्वं विरुद्धम् · अग्नीषोमौ देवतेत्यत्र यथा व्यासक्तयोर्देवतात्वाद्देवतैकत्वम् तथा दम्पत्योरेकमेव कर्तृत्वमित्यङ्गीकारात् · अनयोर्हि उद्वाहकालऽएव द्रव्यसाधारण्यमुक्तम् धर्मे चार्थे च कामे च नातिचरितव्येत्यनेन · अतो यस्त्यागः स इतरेतरसंसृष्टयोरेव दम्पत्योः न हि साधारणमेकेन त्यक्तुं शक्यते । ननु साधारणमपि धनं विभज्य पृथग्यागः सम्भवति · नैवम् · यतस्तयोर्विभागः प्रतिषिद्धो न भर्त्रा सह विभजेदिति · तस्मान्न विभज्य यागः । अतो द्रव्यसाधारण्यात् विभागप्रतिषेधात् धर्मे चार्थे च कामे च नातिचरितव्येति वचनात् पृथक्प्रयोगे प्रागुक्तवैगुण्यापत्तेश्च स्वामिभ्यां समुच्चिताभ्यामवेक्षितस्याज्यस्य कर्माङ्गत्वाच्च न पृथक्कर्तृत्वम् किं तु सहैव । एवं च यजमानविद्वत्तयैव पत्न्या अपि कार्यसिद्धेर्नाविद्वत्तया तस्या अधिकारभङ्गः । अत एव सूत्रकारोऽनुचरीर्वा फलाधिकारादितरासामिति (२०. ८. २८.) पत्न्या अपि फलं दर्शयति · श्रुतिरपि दिवि ज्योतिरजरमारभेतामिति · तथा च स्मृतिः (मनु ५. २५५.) नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् शुश्रूषयति भर्तारं तेन स्वर्गे महीयतऽइति [1] ॥ एवं दम्पत्योः सहाधिकारे तुल्यफलत्वे च सिद्धऽइदं चिन्त्यते · किं सर्वं याजमानं पत्न्यापि कर्तव्यम् उत यावदुक्तमाशीर्ब्रह्मचर्यादिकमिति । किं प्राप्तम् · तस्या अपि यजमानेन तुल्यत्वात्सर्वं याजमानं तयापि कर्तव्यमित्येवं प्राप्ते ब्रूमः । अत्र जैमिनिसूत्रम् (६. १. २५.) तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वादिति · तस्या यावदुक्तं स्यात् · कुतः · अतुल्यत्वात् यजमानस्तु पुमान्विद्वांश्च · पत्नी च स्त्री चाविद्या च । अतः क्रत्वर्थेषु यानि यजमानग्रहणानि तद्यथा यजमानो वेदं बध्नाति पात्राण्यासादयति शुक्रमन्वारभतऽइत्यादीनि तत्र यजमानस्योपादेयत्वादेकवचनं विवक्षितम् · अतस्तत्र न पत्न्याः कर्तृत्वम् । एवमेव पत्न्याज्यमवेक्षते · अद-

---

१) उपोषितं । पतिं शुश्रूषते येन तेन, Manu.

स्मै नर इत्येनमवेक्षते पत्नी इत्यादौ (१०.५.४.) पत्न्या एव कर्तृत्वम् न यजमानस्य · उक्तादेव हेतोः । यानि च क्रत्वर्थानि समन्त्रकाणि तेष्वविद्वत्त्वात्पत्नी न स्यात् · स्त्रीणामध्ययनप्रतिषेधात्सा मन्त्रोच्चारणं कर्तुं न शक्नोति · न चान्यथानुपपत्त्या तस्या अप्यध्ययनं कल्पयितुं शक्यते · सम्पन्नविद्येन पुंसा तेषामनुष्ठानसिद्धेः · यद्धि क्रत्वर्थं तदेव न येन केनचित्कर्तव्यम् · अतोऽनुपपत्तेः स्त्रीणावात्प्रतिषिद्धस्य पत्न्या अध्ययनस्य पुनःप्रसवे न किंचित्प्रमाणमस्ति · तस्मात्तदपि पत्न्या न कर्तव्यम् । याश्चाशिषो यच्च ब्रह्मचर्यं तत्पुरुषं प्रति गुणभूतम् न तत्रान्यतरेण कृते सिध्यति अन्यतरस्य संस्कारो हीयते · न च तत्र यजमानस्योपादेयत्वेन श्रवणम् तस्माल्लिङ्गमप्यविवक्षितम् अत आशीर्ब्रह्मचर्यमुभयोः । आशीःशब्देनात्र संस्कारा लक्ष्यन्ते व्रत्याशनाधःशयनप्रावनाद्यञ्जनाभ्यञ्जनादयः · ते ह्युभयोर्भवन्ति । संस्कारेष्वपि पत्न्या वपनं न भवति · कुतः · वपनविधौ केशश्मश्रु वपतऽइति (२.१.१.) समाहारद्वन्द्वोऽयम् · तत्र केशश्मश्रुणोरितरयोगे सति शास्त्रोक्तं वपनं न सम्पद्यते · न च पत्न्यास्तयोः साहित्यमस्ति श्मश्रुभावात् · अतस्तस्या न वपनमसामर्थ्यादिति तन्त्रत्ते । ब्रह्मचर्यग्रहणं कामानां लक्षणार्थम् ब्रह्मचर्यस्याशीर्ग्रहणेनैव लक्षितत्वात् · कामा अपि पत्न्या भवन्ति तदभावेऽधिकारानुपपत्तेः । येऽप्यमन्त्रकाः क्रत्वर्थास्तेष्वपि यजमान एव कर्ता विद्वत्वात् स्वतन्त्रत्वाच्च · अतः सर्वं समन्त्रकममन्त्रकं च याजमानं यजमानेनैव कर्तव्यम् आहृत्यविहितं त्वाज्यावेक्षणादि पत्न्या कर्तव्यम् नान्यत् ॥ ॥ तदेवमङ्गहीनादिवर्जितानां ब्राह्मणक्षत्रियवैश्यानां पत्नीसहितानामग्निहोत्रादिकर्मस्वधिकार उक्तः । अथ रथकारस्याधिकारमाह ·

रथकारस्याधाने ॥ ९ ॥ रथकारस्याधानेऽग्न्याधेयकर्मणि अधिकारो भवति · वर्षासु रथकार आदधीतेति श्रुतेः । अत्रेदं संदिह्यते · किं त्रैवर्णिकाणामन्यतमो रथकरणयोगाद्रथकारः आहोस्विन्नियतं किंचिज्जात्यन्तरमिति । किं तावत्प्राप्तम् · त्रैवर्णिकानामन्यतम एवेति · कुतः · सोऽपि हि रथं करोतीति योगाद्रथकार इत्युच्यते · तस्य च त्रैवर्णिकत्वादाधानं प्राप्तमेव ऋतुमात्रं विधेयम् · तथा सत्येकार्थविधानाद्वाक्यभेदो न भवति लाघवं च । जात्यन्तरपक्षे तु तस्याधानं विधा-

तव्यम् ऋतुसम्बन्धश्च · तथा सति वर्षास्वादधीत रथकार आदधीतेत्येवं वाक्यभेदः स्यात् । अपि च शूद्रस्त्वसामर्थ्यात्प्रतिषिद्धः । तस्मात्त्रैवर्णिकानामन्यतम एवेति पूर्वः पक्षः । सिद्धान्तमाह ·

नियतं च ॥ १० ॥ चो वार्थे · वाशब्दश्च पूर्वपक्षनिरासार्थः । न त्रैवर्णिको रथकारः तस्य शिल्पोपजीवनस्य प्रसिद्धत्वात् · किं तु नियतं जात्यन्तरमेव ॥ तत्र केचिदेवमाहुः · वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः शूद्रायां वैश्यादुत्पन्ना करणी तस्यां करण्यां माहिष्यादुत्पन्नो रथकार इति । तदुक्तं स्मृतौ माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात् शूद्रायां करणो वैश्यादिति । याज्ञवल्क्योऽपि (१. ९२.) वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः · विन्नासु विधिना परिणीतासु । तथा (१. ९. ५.) माहिष्येण करण्यां तु रथकारः प्रजायत इति । अतो रथकारशब्द एवंविधसंकरजातौ रूढः · रूढिश्च योगाद्बलीयसीति न्यायाद्रथं करोतीति योगं बाधित्वा जात्यन्तरमेव रथकारशब्देनोच्यते । तस्येदमाधानं कालविशिष्टं विधीयते · विशिष्टविधानाच्च वाक्यभेदोऽपि न भवति ॥ अपरे त्वाहुः · रथकारशब्देनात्र सौधन्वनानां ग्रहणम् ऋभूणां त्वेत्याधानमन्त्रवर्णात् (४. १. ५.) · सौधन्वनाश्च ऋभवः सौधन्वना ऋभव इति (ऋक्संहिता ३. ६०. ४.) सामानाधिकरण्यनिर्देशात् · तथा चाह मनुः (१०. २३.) व्रात्यात्तु जायते वैश्यात्सुधन्वा चार्य एव च कारुषश्च[१] विजन्मा च मैत्रः सात्वत एव चेति । अतो मनूक्तो यः सुधन्वा व्रात्यवैश्यपुत्रः तत्पुत्राणां सौधन्वनानामृभूणामेवात्राधिकारः · यस्तु याज्ञवल्क्येनोक्तो न तस्याधिकारः · सत्यपि रथकारशब्दवाच्यत्वे मन्त्रवर्णाच्छागन्यायेन सौधन्वनानामेवाधिकार इति । तथा च जैमिनिः (६. १. ५६.) सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात्प्रतीयेरन्निति · सौधन्वना नाम जातिः · हीनास्ते किंचित्त्रैवर्णिकेभ्यो जात्यन्तरम् न च ते शूद्रा न वैश्या न क्षत्रिया न ब्राह्मणा इति · तेषामिदमाधानम् · कथम् · प्रसिद्धैर्मन्त्रवर्णाच्च · मन्त्रवर्णो हि भवति सौधन्वना ऋभव इति · ऋभूणां त्वेति (४. १. ५.) च रथकारस्याधानमन्त्रः · तस्मात्सौधन्वना

---

१) वा भारुषश्च २.

ऋभवश्च रथकाराः · अपि च तं नेमिमृभवो यथेति च ये नेमिं नमन्ति ते ऋभव इत्युच्यन्ते रथकाराश्च नेमिं नमन्ति · तस्मात्त्रैवर्णिकानामशूद्राणामितदाधानमिति शबरस्वामिनः ॥ ॥ ननु विद्याभावेन सौधन्वनानामसमर्थतयानधिकारात् त्रैवर्णिक एवावयवव्युत्पत्त्या रथकारशब्देन किमिति न गृह्यते · सोऽपि हि रथकारो भवति · तस्य चाधानं प्राप्तमेवानूद्य ऋतुमात्रविधानाल्लाघवं भवति जात्यन्तरे तु विशिष्टविधानाद्गौरवं स्यादित्याशङ्कायामुत्तरमाह ·

नाभावादिति वात्स्यः ॥ ११ ॥ वात्स्य ऋषिरित्याह · न त्रैवर्णिको रथकारः · कुतः · अभावात् त्रैवर्णिकस्य रथकारस्याभावात् · कथमभावः यौगिकोऽयं शब्दो रथं करोतीति रथकार इति · तेन यावत्कालं रथकरणसम्बन्धस्तावत्कालं रथकार इत्युच्यते न सर्वदा · अतस्त्रैवर्णिकस्य रथकारस्याभावाद्विद्यारहितस्यापि ऋभुसौधन्वनसात्वतापरपर्यायस्य जात्यन्तरस्य नूद्यावगतस्य वचनादाधानेऽधिकारो भवति ॥ अत्र पार्थसारथिमिश्रा आहुः [1] रथकारस्यैव ऋभुसौधन्वनसात्वताद्यपरनामधेयस्याधानान्तरं वर्षासु विधीयते वचनात् न हि वचनस्य किंचिदशक्यमस्ति · तेन तावद्रूढिबलेन योगं बाधित्वा सौधन्वनानामाधाने विहिते तद्बलेनैव यथाकथंचित्तन्मात्रौपयिकं विद्यार्जनमपि विनोपनयनमाक्षिप्यते · स्वाध्यायविहिताध्ययनाङ्गत्वादुपनयनस्य रथकारस्य तदभावादाधानविधिनैव विद्यार्जनमाक्षिप्यते · न चास्याधानसम्भवेऽपि क्रत्वधिकारः सम्भवति

---

[1]) This quotation is not taken from the Çâstradîpikâ of that author, where we read only the following words: वसन्ते ब्राह्मणोऽग्निमादधीत ग्रीष्मे राजन्यः शरदि वैश्य इति विधाय श्रूयते वर्ष्मासु(!) रथकार आदधीतेति · तत्किं ब्राह्मणादीनामेव रथकरणे निमित्ते वर्षाविध्यर्थम् उत रथकारसंज्ञिकस्यावान्तरवर्णस्याधानान्तरविधानमिति संशये द्विजातीनां विद्वत्वात्कालमात्रविधाने च लाघवात्तेषामेव कालविधिर्नाविदुषोऽवान्तरवर्णस्य विशिष्टाधानविधिरिति प्राप्ते रूढिबलेन योगबाधाद्वचनबलाच्चाविदुषोऽप्यधिकारप्रतीतेरविथाता (?) ऋभूणां त्वेति च मन्त्रवर्णादृभुसौधन्वनपर्यायस्यावान्तरवर्णस्य रथकारस्येदमाधानं विधीयते· This being all Pârthasârathimiçra says there, the total difference of the two texts infers, that the quotation as given by Deva is taken from an other hitherto unknown work of Pârthasârathimiçra, I mean the Tantraratna, which is quoted so often by Deva, though once only (at ७. १. २.) under his name as the author's.

विद्याभावात् · आधानविधिस्तु तावन्मात्रोपक्षीणत्वान्न क्रतुष्वधिकारं कल्पयितुमर्हति · तेन प्रधानकर्मैव तस्याधानं विश्वजिदादिवत्कल्प्यफलम् · न चास्याहवनीयाद्युत्पादकत्वम् अर्थकर्मत्वेनाग्निसंस्कारार्थत्वाभावात् · किमिति पुनः संस्कारार्थत्वं न भवति　क्रत्वधिकाराभावेनाग्नीनामनुपयोगित्वेन संस्कारानर्हत्वात् · तस्मादाधानं प्रधानकर्म रथकारस्य विधीयतऽइति ॥

रथकारस्याधानऽइत्येवमादीनां सूत्राणामपरा व्याख्या · 　रथकारस्याधाने ॥ ९ ॥ 　ऽधिकारो भवति तत्र श्रुतत्वादित्युक्तम् · रथकारशब्दस्तु जात्यन्तरऽएव रूढः 　अतो यौगिकाशङ्कैव नास्ति । अतः प्रकारान्तरेण व्याख्यानं क्रियते · रथकारस्य किमाधानमात्रेऽधिकार उत त्रैवर्णिकवत्सर्वकर्मस्वपीति · तत्र वर्षासु रथकार आदधीतेति श्रवणादाधानमात्रेऽधिकार इति प्राप्तऽआह · 　नियतं च ॥ १० ॥ 　तस्य रथकारस्य नियतं नित्यं कर्माग्निहोत्रदर्शपौर्णमासादिकं भवति · चकारात्काम्यं नैमित्तिकं च । कुतः 　आधानश्रवणात् आधानं हि तस्य श्रुतम् तच्च गार्हपत्याद्यग्नीनामुत्पादकम् अग्नयश्च कर्मार्थमेवोत्पद्यन्ते स्वतोऽपुरुषार्थत्वात् · अतः कर्मार्थाग्न्युत्पादकाधानविधानादेवैवमवसीयते 　यदस्य सर्वकर्मस्वधिकारो भवतीति । एवं प्राप्तऽआह · 　नाभावादिति वात्स्यः ॥ ११ ॥ 　रथकारस्य सर्वकर्मस्वधिकारो भवतीति यदुक्तम् · तन्न · कुतः · अभावात् रथकारस्योपरितनकर्मसु लिङ्गाभावात् · इति वात्स्य आचार्य आह । यतो रथकारस्य कर्मसु लिङ्गानि न सन्ति · त्रैवर्णिकानां त्वाधानं श्रुतम् कर्मसु लिङ्गानि च सन्ति एहीति ब्राह्मणस्यागह्याद्रवेति वैश्यस्य च राजन्यबन्धोश्चेति (१. १. ४. १२.) तथा पयो व्रतं ब्राह्मणस्य यवागू राजन्यस्यामिक्षा वैश्यस्येति (७. ४. २७.) · एवम् इदं रथकारस्येत्येवं कुत्रापि कर्मणि लिङ्गं नास्ति 　तेनास्योत्तरकर्मस्वनधिकारो वचनाच्चाधानमात्रं भवतीति गम्यते । एवं प्राप्तऽइदमेव सूत्रं पुनः पठित्वा परिहारत्वेन व्याख्यायते · लिङ्गाभावादनधिकारो रथकारस्य कर्मस्विति यदुक्तम् · तन्न · कुतः · अभावात् लिङ्गाभावस्यैवाभावात् लिङ्गसद्भावादित्यर्थः · कानि पुनस्तानि लिङ्गानि ये रथकारस्यापि कर्मस्वधिकारोऽवसीयते · उच्यते · आधावेति शूद्रस्य (१. १. ४. १२.) अष्ठीवद्भ्रं शूद्रस्य (१३. ८. ३. ११.) मस्तु शूद्रस्येति ·

शूद्रासम्बन्धाद्रथकारोऽत्र शूद्रशब्देनाभिधीयते तस्य हि मातामही शूद्रेति · चतुर्थवर्णस्य मुख्यस्य शूद्रस्य तु प्रतिषेध उक्तः शूद्रवर्जमिति (१. १. ५.) · तेनैतानि गौणशूद्रविषयाणीति · रथकारस्याधानमात्रेऽधिकारपक्षे एतानि लिङ्गानि निर्विषयाण्येव स्युः · तस्माद्रथकारस्योत्तरकर्मस्वप्यधिकार इति सिद्धम् । तथा चोक्तं याज्ञवल्क्यस्मृतिविवृतौ मिताक्षरायां विज्ञानेश्वरेण (१. ९२.) क्षत्रियेण वैश्यायामुत्पादितो [१] माहिष्यः · वैश्याच्छूद्रायामुत्पादिता [२] करणी · तस्यां माहिष्येणोत्पादितो रथकारो नाम जात्या भवति · तस्य चोपनयनादि सर्वं कार्यं ववनात् · यथाह शङ्खः क्षत्रियवैश्यानुलोमानन्तरोत्पन्नो रथकारस्तस्याध्ययनेज्यादानोपनयनसंस्कारक्रियाश्चाप्रतिषिद्धा [३] रथसूत्रं वास्तुविद्याध्ययनवृत्तिता चेति · रथसूत्रं रथविद्येति मञ्जर्यां व्याख्यातम् [४] । अतो याज्ञवल्क्योक्त एव रथकारोऽत्र ग्रहीतुं न्याय्यः · तस्य च शङ्खोक्तेर्यज्ञादिकर्मस्वधिकार · तथा सति आधावेति शूद्रस्येत्यादीनि वेदवाक्यानि सार्थकानि भवन्ति · सौधन्वनपर्याये रथकारे गृह्यमाणे तेषां वैयर्थ्यमेव स्यात् न च तदिष्यते · तस्माद्याज्ञवल्क्योक्तमेव युक्तम् श्रुतिसंमतत्वादिति ॥

निषादस्थपतिर्गावेधुकेऽधिकृतः ॥ १२ ॥ निषादस्थपतिर्गावेधुके चरावधिकृतः अधिकारी भवति । एवं हि श्रूयते · यस्य रुद्रः प्रजाः शमयेत्स वास्तुमध्ये रौद्रं गावेधुकं चरुं निर्वपेदित्येतामिष्टिं प्रक्रम्य श्रुतम् एतया निषादस्थपतिं याजयेदिति निषादस्थपतिर्यजेतेत्यर्थः ॥ तत्रायं संदेहः · किमत्र षष्ठीसमासः निषादस्य स्थपतिर्निषादस्थपतिरिति निषादश्चासौ स्थपतिश्च निषादस्थपतिरिति कर्मधारयो वा । तत्र यदि षष्ठीसमासः तदा यो द्विजातिरेव विद्वान्निषादानामाधिपत्यं करोति तस्यात्राधिकारः · यदि च कर्मधारयः तदा निषाद एव यः स्थपतिस्तस्यात्राधिकार इति । तत्र त्रैवर्णिकस्यैव समर्थत्वाद्विद्वत्वादग्निमत्वाच्चात्राधिकारो

---

१) Thus also the Chambers- mss. of Vijnâneçvara's work: the edition reads क्षत्रियेण वैश्येन शूद्रायामु°. २) वैश्येन शूद्राया°, edit. and mss. ३) °कारस्तस्येज्यादानोपनयनसंस्कारक्रिया अश्वप्रतिष्ठा(!) रथसूत्रवास्तुवि°, edit. and Chambers 562; the same but °कारस्तस्योपनयनसं° Chamb. 371 a. and °कारस्तस्येज्या चोपनयनसं° Chamb. 371 b. ४) तत्र तु संस्कारक्रियाश्चाप्रतिषिद्धा रथसूत्रे इत्येवं पाठः, at the margin.

युज्यते अन्यजातीयस्य निषादस्याविद्यत्वेनानग्निमत्त्वेन चासमर्थत्वात् · तस्मात्षष्ठीसमास एवायमिति पूर्वः पक्षः । सिद्धान्तस्तु कर्मधारयोऽयम् निषादश्चायं स्थपतिश्चेति · कुतः · षष्ठीसमासपक्षे निषादपदे लक्षणाप्रसक्तेः · न ह्यत्र षष्ठी श्रूयते यतः सम्बन्धः[1] प्रतीयेत अतो निषादपदेनैव षष्ठ्यर्थो लक्षणीयः · इतरस्मिंस्तु पक्षे द्वयोरपि पदयोर्मुख्यार्थतैव न लक्षणा · तस्मान्निषाद एव स्थपतिरत्राधिकारी श्रुतिबलात् अविद्वाननग्निमानपीति सिद्धम् । अपि चात्र निषादद्रव्यं दक्षिणा श्रूयते कूटं[2] दक्षिणा काणो वा गर्दभ इति · कूटं हि निषादानामेवोपकारकम् नार्याणामिति ॥

वावकीर्णिनो गर्दभेज्या ॥ १३ ॥ यो ब्रह्मचारी सन्स्त्रियं गच्छति सोऽवकीर्णी · तस्यावकीर्णिनः स्खलितब्रह्मचर्यस्य गर्दभेज्या गर्दभेनेज्या यागो गर्दभेज्या प्रायश्चित्तार्था भवति । वाशब्दो विकल्पार्थः · तेन गृह्योक्तमपि प्रायश्चित्तान्तरमाज्याहुतिद्वयरूपं विकल्पेन भवति अथापरमाज्याहुती जुहोति कामावकीर्णोऽस्मीत्यादिकम् (पारस्कर॰ ३. १२.) शाखान्तरे उभयस्य विकल्पेन श्रुतत्वात् ॥ ॥ अत्रैतद्विचार्यते · किं स्थपतीष्टिरवकीर्णिपशुश्चैतदुभयमाधानसंस्कृतेष्वाहवनीयादिषु भवति उत लौकिकेऽग्नाविति । तत्र प्रकृतित आहवनीयादिप्राप्तेराहवनीयादीनां चाधाननिष्पाद्यत्वात्स्थपतेरवकीर्णिनश्चाधानविध्यभावेऽपि इष्टिपशू आधानं प्रयोजयतः · अत एतदर्थमेवाधानेनाहवनीयादीनुत्पाद्य तेष्वेतदुभयं कर्तव्यमिति प्राप्त आह ·

लौकिके ॥ १४ ॥ एतौ स्थपतीष्ट्यवकीर्णिपशू लौकिकेऽग्नौ भवतः · न ह्यिमाविष्टिपशू आधानं प्रयोजयतः · आभ्यां हि तदेव गृह्यते यद्दर्शपूर्णमासाङ्गं भवति · न चाधानं दर्शपूर्णमासाङ्गम् · स्वकाले हि पुरुषसंस्कारकत्वेन तद्विहितमिति । अतो लौकिकाग्नावेवैतावनुष्ठेयौ · लौकिकमेव गार्हपत्यस्थाने स्थापयित्वा तत आहवनीयादिस्थानेषु विहृत्य स्थपतीष्ट्यवकीर्णिपशू दर्शपूर्णमासपशुवत्कर्तव्यौ ॥ अत्र विशेषविधानार्थमाह ·

भूमौ पशुपुरोडाशश्रपणम् ॥ १५ ॥ अत्रावकीर्णिनो गर्दभपशुयागे पशु-

१) सम्बन्धश्च, marg. २) कृत्रिमं पित्तलादि, marg. — कूटं २.

पुरोडाशस्य श्रपणं भूमाविव कर्तव्यम् न तु कपालेषु ॥

अप्स्ववदानहोमः ॥ १६ ॥ अवदानानां हृदयजिह्वाक्रोडादीनां होमोऽप्सु उदकेषु भवति नाग्नौ वचनात् । अवदानग्रहणादन्यदाघाराज्यभागहोमादिकमग्नाविव कार्यम् ॥

शिश्नात्प्राशित्रावदानम् ॥ १७ ॥ गर्दभस्य शिश्नात्प्राशित्रावदानं कार्यम् वचनात् । न जौहवेभ्यो हृदयादिभ्यः ॥ ॥ उक्तोऽधिकारः । अथाग्निप्रस्तावादाहवनीयाद्यग्निषु किं-किं कर्म कर्तव्यमित्यपेक्षायामाह

वैतानिकेषु सर्वं सर्वार्थत्वात् ॥ १८ ॥ वैतानिका वितानार्हा विहारयोग्या गार्हपत्यादयः तेषु वैतानिकेष्वग्निषु सर्वं कर्म श्रौतं स्मार्तं च कर्तव्यम् श्रौतं च हविःश्रपणहोमादिकम् स्मार्तं च पक्वादिनित्यपाकप्रकाशादिकम् । कुतः सर्वार्थत्वात् यतो गार्हपत्यादयो वैतानिकाः सर्वार्थाः कुतः यद्धि द्रव्यमुत्पत्तिकाले केनचिदर्थेनासंयुक्तमुत्पद्यते तस्य सर्वार्थतावसीयते कुतः सामर्थ्यात् समर्था हि गार्हपत्यादयः सर्वं कर्म साधयितुम् । आधानेनोत्पादितानामग्नीनां प्रयोजनापेक्षायां सामर्थ्येन सर्वाग्निकार्यार्थता विज्ञायते तस्माच्छ्रौतं च स्मार्तं च यद्गृह्यसूत्रोक्तं स्मृत्युक्तं च पाकादिकं तत्सर्वं गार्हपत्यादिषु वैतानिकेषु भवतीति ॥

दर्शनाच्च ॥ १९ ॥ दृश्यते चायमर्थो यत्स्मार्तमपि होमपाकादिकं वैतानिकेषु क्रियतऽइति । दक्षिणाग्निं प्रकृत्य श्रूयते मांसं तत्र न पचेयुरिति अत एव प्रतिषेधात्प्राप्तिरनुमीयते प्रतिषेधस्य प्राप्तिपूर्वकत्वात् न च श्रौतो[1] मांसपाको दक्षिणाग्नौ विहितोऽस्ति यस्यैष प्रतिषेधः स्यात् यतः शामित्रेऽग्नौ विहितः अस्ति त्वविहिताप्रतिषिद्धः स्मार्तो मांसपाकः तस्यायं प्रतिषेधो विज्ञायते ॥ स्मृतावपि दर्शश्राद्धं प्रकृत्याग्नौ करणार्थमग्निमाह मार्कण्डेयः आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः अनाहिताग्निस्त्वौपासनेऽग्न्यभावे तथाप्सु वेति । शङ्खलिखितौ धूपगन्धमाल्यैरलंकृत्य ब्राह्मणान्सघृतमन्नमनुज्ञाप्य दर्भैर्दक्षिणाग्निं परिस्तीर्य जुहुयादग्नये कव्यवाहनायेत्यादि । वायुपुराणेऽपि आहृत्य

1) श्रौते २.

दक्षिणाग्निं तु होमार्थं वै प्रयतन्त इति । अतोऽस्माद्दर्शनात्स्मार्तमपि वैतानिकेषु कर्तव्यमिति पूर्वः पक्षः । सिद्धान्तमाह ·

नौपासनश्रुतेः ॥ २० ॥ यदुक्तम् वैतानिकेष्वेवाग्निषु श्रौतं स्मार्तं च कर्तव्यमिति · तन्न · कुतः · औपासनश्रुतेः · यत आहिताग्नेरप्यौपासनः श्रूयते पितृमेधे अग्रहरणोपासनं निरस्यतीति (२१.४.२७) · यदि स्मार्तमपि वैतानिकेष्वेव क्रियेत तदा आहिताग्नेः पितृमेधे औपासनदर्शनं न स्यात् · अस्ति च · तस्मात्स्मार्तान्यौपासने कर्तव्यानीति । तथा च स्मृतिः (याज्ञवल्क्य° १.९७.) कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही दायकालाहृते वापि श्रौतं वैतानिकाग्निष्विति । तस्मिन्गृह्याणीत्यापस्तम्बस्मरणाच्च · गृहाय हितं गृह्यम् गृहशब्दश्च दम्पत्योर्वर्तते · तस्मिन्नित्यावसथ्ये · अतश्च यत्किंचिद्दम्पत्योर्हितं कर्म शान्तिकपौष्टिकव्रताङ्गहोमादिकं स्मार्तं तत्सर्वमावसथ्येऽग्नौ भवतीति । तथा च खादिरगृह्यसूत्रकारिकायाम् होमानात्मार्थपत्न्यर्थान्कृत्स्नं औपासनेन च परार्थानेकदेशेऽग्नौ स चान्ते लौकिको भवेत् । अत एव कात्यायनः (कर्मप्रदीप° २. ३. १७-१८.) न स्वेऽग्नावन्यहोमः स्यान्मुक्त्वैकां समिदाहुतिम् स्वगर्भसत्क्रियार्थांश्च यावन्नासौ प्रजायते अग्निस्तु नामधेयादौ होमे सर्वत्र लौकिकः न हि पित्रा समानीतः पुत्रस्य भवति क्वचित् · अतश्च सीमन्तोन्नयनमपि स्मार्ताग्नावेव कार्यम् ॥ अपि च आधानेनोत्पादितानां गार्हपत्यादीनामग्नीनाम् प्रयोजनापेक्षायां सत्यां गार्हपत्ये हवींषि अपयत्याहवनीये जुहोति दक्षिणाग्नावन्वाहार्यं पचतीति प्रत्यक्षवचननिर्दिष्टैरेव प्रयोजनैर्निराकाङ्क्षाणाम् न सामर्थ्यमात्रेणोक्तादन्यत्र विनियोगः कल्पयितुं शक्यते । ननु मा भूत्सामर्थ्यमात्रेण विनियोगः वाक्येनैव स्मार्तेष्वपि पार्वणस्थालीपाकादिहोमेषु भवन्त्विति चेत् · न · न च स्मार्ता होमास्तेषु विधातुं शक्याः ते हि सहैवाधारणावसथ्येनोत्पद्यन्ते यथा पक्षहोमादयः[1] ॥ अत्राह जैमिनिः (१२. २. ४.) सति चौपासनस्य दर्शनादिति सति च विहारे औपासनाग्निर्दृश्यते · यः कामयेत राष्ट्रमस्यै प्रजायै स्यादिति तस्यौपासने प्रतिहितमभ्याजुहुयादिति · राजसूये प्रवृत्ते कर्मण्येतद्वचनम् · तस्मिंश्च काले वि-

१) ? पदहोमादयः २.

हारोऽप्यस्ति · यदि च विहार एव स्मार्तान्यपि कर्माणि स्युस्तदा कार्याभावा-दौपासनदर्शनं न स्यात् · अस्ति च · तस्मात्स्मार्तान्यौपासन एव कार्याणि । यद्येवम् तर्हि मांसपाकप्रतिषेधस्य का गतिरित्यत आह ·

अधिश्रयणीये माꣳसप्रतिषेधः ॥२१॥ य एष उक्तो मांसपाकप्रतिषेधो मांसं तत्र न पचेयुरिति सोऽधिश्रयणीयेऽहनि ज्ञेयः । नवगृहे यदा वासः क्रियते तदा तस्मिन्नेवाहनि तत्र दक्षिणाग्नेराहरणं कार्यम् नाहवनीयवत्प्रतिहोममिति विकल्पं वक्ष्यति नवावसिते वेति (४. १३. ८.) · श्रूयते च नवावसिते वै-नमाहरेयुरिति (२. ३. २. ८.) · तदा च तस्मिन्नवगृहाहृते दक्षिणाग्नावविशेषेण भोजनार्हस्यानियतद्रव्यस्य पाको विहितोऽस्ति तस्मिन्पचेयुस्तद्ब्राह्मणा अश्नी-युरिति (२. ३. २. ८.) · तत्र कदाचिन्मांससम्पत्तौ तस्यापि पाकस्तत्र प्राप्नोति · त-स्यैष प्रतिषेधो , मांसं तत्र न पचेयुरिति · तथा चाह सूत्रकारः (४. १३. ९.) तस्मिन्पचेयुरमांसमिति । पक्वाल्लरमपि दुग्धाधिश्रयणाद्रूपमेतस्य विद्यते यद्यु तन्न विन्देद्यत्पचेदपि गोरेव दुग्धमधिश्रयितवै ब्रूयादिति (२. ३. २. ८.) · तेन अ-धिश्रयणसम्बन्धि अहः अधिश्रयणीयम् तस्मिन्नधिश्रयणीय इति अनेन नवगृ-हसम्बन्धिदक्षिणाग्न्याहरणादिनं लक्ष्यते ॥ ॥ अतः श्रौतान्येव वैतानिकेषु गार्हपत्यादिषु कर्तव्यानि स्मार्तानि त्वावसथ्येऽग्नावेवेति सिद्धम् · यस्तु स्मृतौ दक्षिणाग्नावग्नौ करणहोम उक्तः स[1] सर्वाधानपक्षे अर्धाधानपक्षे त्वावसथ्या-ग्नावेवेति तत्रैव निर्णीतमस्ति ॥ ॥ प्रथमा कण्डिका ॥१॥

अथ पद्धतिः ॥

प्रणम्य विघ्नहर्तारं गुरूंश्च श्रीपतिं[2] तथा ।
कात्यायनस्य सूत्रस्य पद्धतिः क्रियते मया ॥

तत्राग्न्याधेयादिसर्वकर्मसु ब्राह्मणक्षत्रियवैश्यानामधीतवेदानां वेदार्थज्ञानवता-मङ्गहीनाश्रोत्रियषण्ढशूद्रवर्जितानां पत्नीसहितानामधिकारो भवति । रथकारस्य च । निषादस्थपतेर्गावेधुके चरावधिकारः । ब्रह्मचारी सन्यः स्त्रियं गच्छति सो ऽवकीर्णीत्युच्यते · तस्य प्रायश्चित्तार्थायां गर्दभेज्यायामधिकारः । गावेधुकचरुरव-

१) सः २. २) श्रीपतीन् २.

कीर्णिपशुश्च लौकिकेऽग्नौ भवतः[१] · तत्रावकीर्णिपशौ पुरोडाशश्रपणं भूमौ भवति न कपालेषु · अवदानहोम उदके भवति नाग्नौ अन्यदाघाराद्यग्नावेव · प्राशित्रं गर्दभस्य शिश्नादवदेयम् । श्रौतं सर्वं कर्म वैतानिकेषु विहारार्हेषु[२] गार्हपत्याहवनीयदक्षिणाग्निषु कर्तव्यम् · स्मार्तं चावसथ्येऽग्नौ ॥ ॥१॥ ॥

इति प्रथमस्य प्रथमा कण्डिका ॥ ॥

कर्मणां फलवत्त्वोक्तिपूर्वकं तेष्वधिकारो निरूपितः । अधुना तस्यैव साङ्गस्य फलवतः कर्मणो निरूपणायाह ·

यज्ञं व्याख्यास्यामः ॥१॥ यज्ञो यागो यजनमिष्टिरिति पर्यायाः । यज्ञं यागं व्याख्यास्यामः · यागस्वरूपं कथयिष्यामः । तमेवाह ·

द्रव्यं देवता त्यागः ॥२॥ द्रव्यं देवता त्यागः यज्ञः । द्रव्यं पुरोडाशचरुसांनाय्यपशुसोमादिकम् · देवता अग्निसोमेन्द्रविश्वादिशब्दमयी तद्धितचतुर्थीमन्त्रवर्णान्यतमा बोध्या · तत्राग्न्यादिकां देवतामुद्दिश्य यो द्रव्यस्य पुरोडाशादेस्त्याग उत्सर्गः स यज्ञः स याग इत्यर्थः । तथा चोक्तम् तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन चेष्यते देवतासंगतिस्तत्र दुर्बलं तु परं-परमिति · तत्र तद्धितेन देवतासंगतिर्यथाग्नेयोऽष्टाकपालः अग्नीषोमीय उपांशुयाजोऽग्नीषोमीयः पुरोडाश ऐन्द्राग्नः पुरोडाशः ऐन्द्रं दधि ऐन्द्रं पयोऽग्नीषोमीयं पशुमालभेतेत्यादौ · चतुर्थ्या देवतासंगतिः यथा अग्नयेऽनीकवतेऽष्टाकपालम् अथ मरुद्भ्यः सांतपनेभ्यः अथ मरुद्भ्यो गृहमेधिभ्य इत्यादौ · मन्त्रवर्णेन देवतासंगतिर्यथा उत्तराघारे यथा च प्रयाजेषु । क्वचित्प्राकरणिकदेवतासम्बन्धोऽपि भवति तद्धितादीनामभावे यथोलूखले मुसल इत्यत्र (३. ७. १३.) कर्काचार्याः · अत एवोच्यते यास्केन (निरुक्ति° ७. ४.) तद्येऽनादिष्टदेवता मन्त्रास्तेषु देवतोपपरीक्षा यद्देवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवन्तीत्यादि । तेनैतत्सिद्धम् · देवतोद्देशेन द्रव्यत्यागो यागः स एव प्रक्षेपाधिको होम[३] इति ॥ अथाङ्गत्ववेदकं प्रमाणद्वयमाह ·

तदङ्गमितरत्समभिव्याहारप्रकरणाभ्याम् ॥३॥ [यदितरत् प्रोक्षणाग्र]ह-

---

१) भवति २. २) विस्तारार्हेषु २. ३. ३) देवतायै संकल्पितस्य वह्नौ प्रक्षेपो होमः, marg.

णादिकं[१] तत्सर्वं तदङ्गम् तस्य पूर्वसूत्रोक्तस्य देवतोद्देशेन द्रव्यत्यागात्मकस्यार्थात्प्रधानभूतस्य यागस्याङ्गम् उपकारकं भवति · धर्मः शेषोऽङ्गं गुण इत्येकार्थाः । कुतः कारणादङ्गं भवतीत्यपेक्षायामाह समभिव्याहारप्रकरणाभ्याम् · संशब्दो योग्यतासंनिधिवाचकः अभीत्याकाङ्क्षार्थः तेनायमर्थः समिति योग्यतासंनिधिमतामभीत्याकाङ्क्षावतां[२] पदानां व्याहार उच्चारणं समभिव्याहारो वाक्यम् तस्माद्वाक्यात् प्रकरणाच्चेत्यर्थः । तत्र वाक्यस्य तावदुदाहरणम् पौर्णमासे नेष्ट्वेन्द्राय विमृधेऽनुनिर्वपतीति प्रकरणपाठाद्विमृधस्योभयाङ्गत्वे प्राप्ते वाक्यात्पौर्णमासाङ्गता भवति · अत्र च शेषशेषिणोः साध्यसाधनभावो न श्रूयते · पदद्वयसमभिव्याहारादेव योग्यत्वमालोच्य शेषशेषित्वं कल्प्यते यथा स्वर्गकामो यजेतेति तत्र वाक्येन विनियोग इति · न ह्यत्र स्वर्गस्य साध्यत्वं यागस्य वा साधनत्वं केनचिदुपात्तम् अतः पदद्वयसमभिव्याहारादेव कल्प्यते । प्रकरणं चोभयाकाङ्क्षा · तथा हि दर्शपूर्णमासाभ्यां स्वर्गं भावयेत्कथमित्येतस्यामाकाङ्क्षायामविच्छिन्नायां वा श्रुतप्रयोजनान्यग्न्यन्वाधानादीनि ब्राह्मणतर्पणान्तानि कर्माणि पठ्यन्ते · दर्शपूर्णमासयोश्चोपकारकापेक्षा · न च दर्शपूर्णमासयोरुपकारकं किंचिद्दृश्यते न च अग्न्यन्वाधानादीनामुपकार्यं[३] किंचिद्दृश्यते · अवश्यं चोभयेनापि कुतश्चिद्भवितव्यम् · यदि तु केनचित्प्रमाणेन न ज्ञायते तदा नास्तीति बुद्धिर्भवति[४] · अस्ति च प्रमाणम · न ह्यत्यन्तसंनिकर्ष एव सम्बन्धकारणम् यदि संनिकृष्टं न लभ्यते तदा विप्रकृष्टे वेदस्य शक्तिः संचरति · तदिहोपकारकल्पनाप्रमाणं संनिकृष्टं श्रुतिलिङ्गवाक्यलक्षणमलब्ध्वा विप्रकृष्टमभ्यनुज्ञातमित्युभयाकाङ्क्षावशेनैवं विज्ञायते यद्दर्शपूर्णमासावुपकारमाकाङ्क्षतस्तन्नूनमेभिरग्न्यन्वाधानादिभिः क्रियते यच्चाग्न्यन्वाधानादयः कर्तव्यमपेक्षन्ते तद्दर्शपूर्णमासोपकार इति · न ह्युभयोरप्यन्यत्संनिकृष्टतरं भवति । यच्चान्यत्फलादि कल्प्येत तस्यान्येन सह सम्बन्धेन निराकाङ्क्षीभूतस्य नेह सम्बन्धाकाङ्क्षा विद्यते · तेनाग्न्यन्वाधानादीनां न विश्वजिदादिवत्फलकल्पनम्

---

१) There is a lacuna in २ at the beginning of this sentence: the cancelled axaras given above are supplied by mere conjecture. २) °मता अभी° २. ३) ? °मपिकार्यं २. ४) उपकार्योपकारकत्वाभावबुद्धिः marg.

नापि दर्शपूर्णमासफलानुषङ्गः · उभयाकाङ्क्षालक्षणसम्बन्धाभावे ह्यन्यतराकाङ्क्षालक्षणः सम्बन्धो गृह्यते न सम्भवेत् तस्मान्नष्टाश्वदग्धरथवदेव परस्परनियमः सिद्धः । किं च अग्न्यन्वाधानादेः फलान्तरकल्पने तु क्रतोः कथमित्युपकारकाकाङ्क्षा अनिवृत्तैव स्यात् · अस्ति चासावाकाङ्क्षा यागेन स्वर्गं कुर्यादित्येवं करणत्वेन विधानात् · तदुक्तम् न हि तत्करणं लोके वेदे वा किंचिदीदृशम् इतिकर्तव्यता साध्ये यस्य नानुग्रहेऽर्थितेति · एवमुभयोराकाङ्क्षावत्त्वे सति तत्सम्बन्धप्रतिपादकं वाक्यं कल्प्यते अग्न्यन्वाधानादिभिरुपकृतेन यागेन स्वर्गं कुर्यादित्येवम् · ततो वाक्याल्लिङ्गमग्न्यन्वाधानादिगतं सामर्थ्यं कल्प्यते · लिङ्गाच्च विनियोक्त्री श्रुतिः कल्प्यते एभिः प्रधानस्योपकारः कार्य इति ॥ ॥ ननु सूत्रकारेणाङ्गत्वे प्रमाणद्वयमेव कथमुक्तम् जैमिनिना (३. ३. १३.) तु श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यासंज्ञकानि षट्प्रमाणान्युक्तानि सन्ति · नैष दोषः · प्रमाणचतुष्टयस्य सोदाहरणस्याग्रे वक्ष्यमाणत्वात् । तत्र स्वार्थाभिधाने निरपेक्षं वचनं श्रुतिः सा त्रिविधा विधात्री अभिधात्री विनियोक्त्री च · तत्र विधात्री लिङाद्यात्मिका अभिधात्री व्रीह्यादिश्रुतिः विनियोक्त्री त्रिधा एकाभिधानम् एकं पदम् विभक्तिरिति · यस्य हि शब्दश्रवणादेव सम्बन्धः प्रतीयते सा विनियोगश्रुतिः तद्यत्रानेकार्थाभिधानमेकेन शब्देन युगपद्भवति विभक्त्येव लिङ्गसंख्याकारकाणाम् तत्र तेषामन्वितानामेवाभिधानम् तदेकाभिधानम्[1] यथा पशुनेति पशुः करणं प्रतीयते तथैकं करणं पुमांश्चेत्यपि · अतः संख्यादेरेकशब्दोपादानलक्षणया श्रुत्या कारकसम्बन्धः प्रातिपदिकार्थस्य तु पदश्रुत्या · यजेतेत्यत्र यागस्य प्रकृत्यर्थस्यैकपदेनोपात्ततया स्वर्गादिकं प्रति करणत्वम् · विभक्तिस्तु सम्बन्धमेव साध्यत्वं साधनत्वं वा प्रतिपादयन्ती विनियोगकारणम् तत्र द्वितीया साध्यत्वं प्रतिपादयति तृतीयादयस्तु साधनत्वम् तत्र व्रीहीनवहन्तीति द्वितीया साध्यत्वेन व्रीहीनभिदधानावघातस्य[2] तेषु विनियोगकारणं भवति । सर्ववस्तुगतं सामर्थ्यं लिङ्गम् तद्यथा स्रुवेणावद्यति स्वधितिनावद्यति हस्तेनावद्यति काष्ठेनावद्यतीति अवदानसाधनत्वेन सामान्येन

१) ?°धाने २. २) ?°धानस्य २.

श्रुतानां लिङ्गेन वस्तुसामर्थ्यात्मकेन विशेषविनियोगो भवति · तदुक्तम् साम-र्थ्यात्स्वधितिर्मांसे द्रवेषु स्यात्स्रुवस्तथा हस्तकाष्ठे पुरोडाशमवदातुं प्रकल्पत इति · मन्त्राणां च लिङ्गेन पदार्थानुसारकत्वे [1] विनियोगः । वाक्यं तु पदसंघा-तात्मकं प्रागुक्तम् । प्रकरणं चोभयाकाङ्क्षारूपं प्रागुक्तमेव । स्थानं क्रमः स च द्विविधः पाठसादेश्यमनुष्ठानसादेश्यं च · पाठसादेश्यमपि द्विविधम् यथासं-ख्याम्नानं संनिधावाम्नानं च । तत्राग्नीषोमीयानुष्ठानदेशे पशुधर्माणामाम्नाना-दग्नीषोमीयार्थत्वमनुष्ठानसादेश्यरूपेण स्थानप्रमाणेन भवति । यत्र च ब्राह्मणे क्रमेणाश्वगर्दभादानामभिमन्त्रणानि विहितानि संहितायां च तस्मिन्नेव क्रमेऽभि-मन्त्रणमन्त्राः पठिताः प्रतूर्तमित्यादयः तत्र यथासंख्याम्नानेन सम्बन्धो भवति · एवमेव शाखान्तरे ब्राह्मणे आध्वर्यवकाण्डे दर्शपूर्णमासयोस्त्रय आग्नेयादयो यागाः क्रमेण पठिताः याजमानकाण्डे च त्रीण्यनुमन्त्रणानि पठितानि तद्यथा अग्नेरहं देवयज्ययान्नादो भूयासम् अदब्धिर्नामास्यदब्धोऽहं भ्रातृव्यं दभेयम् [2] अग्नी-षोमौ वृत्रहणावग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासमिति दब्धिर्घातकमा-युधम् · यावति प्रदेशे ब्राह्मणे प्रधानं पठ्यते तावत्येव मन्त्रेषु मन्त्रः तयोश्चा-ङ्गाङ्ग्यपेक्षावेलायां यथासंख्यन्यायेन समानदेशत्वाद्बुद्धौ संनिधानं भवति · प्रथमस्य हि प्रधानस्य मन्त्रमन्विच्छन्नवश्यं मन्त्रसमाम्नायमादित आरभ्यालोचयति ततश्च प्रथमो मन्त्रः प्रथमं हृदयमागच्छति न चास्यातिक्रमहेतुरस्तीति स एव गृह्यते · तथा मन्त्रस्य शेषिणमपेक्षमाणस्य तयैव प्रक्रिययाद्येन [3] शेषिणा सह सम्बन्धो भवति ततश्च तन्निराकाङ्क्षता द्वितीयादीनामप्येवमेव द्वितीयादिभिरेव योगः · तत्राग्नेयाद्यनुमन्त्रणानामाग्नेयादिलिङ्गत्वात् तेनापि व्यवस्था सिध्यतीत्यव्यक्तलिङ्ग उपांशुयाजक्रमाधीतः अदब्धिर्नामास्यदब्धोऽहं भ्रातृव्यं दभेयमिति [4] मन्त्र उदाह-रणम् । ननु चास्य प्रकरणात्सर्वार्थत्वं विज्ञायते तत्तु क्रमाद्बलीयः तत्कथ-मस्योपांशुयाजत्वमिति · उच्यते · येऽन्ये शेषिण आग्नेयादयस्ते विस्पष्टलिङ्गैः क्रम-प्रकरणवद्भिर्मन्त्रान्तरैरवरुद्धत्वान्नैवमपेक्षन्ते · न च विकल्पोऽस्पष्टलिङ्गत्वेन·

[1] ? °दार्थास्सारकत्वे २. [2] ? दधेयम् २. [3] °क्ष्यमाणस्य तथैव प्रक्रियया आद्येन २.
[4] ? दधेयमिति २.

वैषम्याददृष्टार्थानां समुच्चय इति चेत् न प्रकृतयागप्रत्यवेक्षणेन दृष्टार्थत्वात् · सत्यपि चादृष्टार्थत्वे निरपेक्षाणां गत्यन्तरे सति समुच्चयानाश्रयणात् आग्नेयादिभिः कृतार्थैरुपेक्षितः सन्नगत्या पुनस्तेष्वेव भवेत् अस्ति चास्य गतिरुपांशुयाज इति · किं च न चाविज्ञातलिङ्गानां प्रक्रियादिनियोजिका असीत्यस्य च सामर्थ्यं संनिधावुपसंहृतम् · अदब्धिर्नामासीत्यस्पष्टलिङ्गोऽयम् न चेदृशं सत्तं प्रकरणं विनियोक्तुं क्षमम् · अयमसिशब्दो युष्मदर्थविषयत्वात्संनिहितमभिमुखं चाभिधत्ते नान्यम् उपांशुयाजश्च संनिहितोऽभिमुखश्चेत्यभिधानसामर्थ्यं क्रमादुपांशुयाजविषयं विज्ञायते · ततश्च लिङ्गेन प्रकरणं बाध्यतऽएवेत्यदोषः · अतः कर्कोक्तं यत्किंचित् पितृभूत्युक्तमेव साधीयः । संनिधावाम्नानेनापि विनियोगो भवति · विकृतौ यदपूर्वमङ्गं पठ्यते तदपि मया किं कर्तव्यमित्येवं साकाङ्क्षं भवति · प्रधानस्य· तु प्राकृतैरङ्गैर्निराकाङ्क्षस्य तदपेक्षा यद्यपि नास्ति तथापि तस्यापूर्वाङ्गस्यानर्थक्यं परिहाय तत्प्रति प्रधानस्यापेक्षां परिकल्प्य तस्य सम्बन्धः क्रियेत यथा देवसूहविरादीनामुपहोमादीनां च । समाख्या यौगिकी संज्ञा · हौत्रमाध्वर्यवमौद्गात्रमित्यादिका वैदिकी · प्रोक्षणीरित्यादिका लौकिकी च · तत्राध्वर्युवृतमात्र एवमपेक्षते मया किं कर्तव्यमिति तदपेक्षमाणस्य[1] यदि न कुतश्चिद्विशेषोऽवगम्यते ततो यत्किंचिदिति भविष्यतीति · तथाध्वर्यवसंज्ञितं कर्म को मे कर्ता भविष्यतीत्येवमेव विशेषमपेक्षते · तत्र शब्दार्थज्ञस्यादित एवैषोत्प्रेक्षा प्रत्येकं भवति यदस्याध्वर्योः कर्म तदाध्वर्यवशब्दवाच्यं भवति तथाध्वर्यवस्य यः कर्ता तस्याध्वर्युर्नामेति · एवं सर्वसमाख्यासु वाच्यम् ॥ सूत्रकारेण चैतानि प्रमाणानि स्वस्वविषयऽउक्तानि · तथा हि · काष्ठं हिरण्यं वाभिजुहुयात् श्रुतेरित्यत्र (२५. ३. २.) श्रुतिः काष्ठहिरण्ययोर्विनियोजकत्वेनोक्ता · तेषामारम्भेऽर्थतो व्यवस्था तद्वचनत्वादिति (१. ३. ४.) मन्त्रलिङ्गाच्चेति (१. ४. २६.) च लिङ्गमुक्तम् · वत्सज्ञानुं त्रिवृतं मूतकार्यं वा पशुब्रह्मवर्चसान्नाद्यकामा यथासंख्यमिति (१. ३. २३.) यथासंख्यरूपं स्थानम् · प्रयाजेषु संनिधेः (३. २. १५.) दशमे वा [संनिधेरिति] (१२. ४. ६.) संनिधिपाठलक्षणं स्थानम् ·

---

1) °पेक्ष्यमाणस्य २.

शेषमितरे यथाख्यम् (१. ७. २३.) उन्नीतोन्नयति समाख्यानादिति (१. ५. ३१.) समाख्या ॥ एतेषां श्रुत्यादीनां परस्परविरोधऽउत्तरोत्तरस्य दुर्बलत्वम् · तदुक्तं जैमिनिना (३. ३. १३.) श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति । तत्र श्रुतिलिङ्गयोर्विरोधे अनपेक्षमित्य शालाद्वार्योपस्थानं निवेशन इति (१७. २. ६.) अत्र श्रुतिः प्रत्येत्याग्निमुपतिष्ठते (७. २. १. १८.) यद्वोपतिष्ठते ऽयं वै लोको गार्हपत्य इति (१९.) निवेशन इति (२०.) · शाखान्तरे च ऐन्द्या गार्हपत्यमुपतिष्ठतऽइति अत्रेन्द्रो न तस्याविति मन्त्रगतेन लिङ्गेनेन्द्रस्योपस्थानं प्राप्नोति अग्निमिति द्वितीयाविभक्तिश्रुत्या तु गार्हपत्यस्य · तत्र श्रुतिः साक्षाद्विनियोक्त्री लिङ्गं तु श्रुतिमनुमाय तद्द्वारा विनियोजकमिति विप्रकर्षाद्दुर्बलम् · तेन श्रुत्यैव गार्हपत्यस्योपस्थाने विनियोगः · गार्हपत्य इतिं गार्हपत्यचितिरूपोऽग्निः कुतः प्रत्येत्याग्निमुपतिष्ठतऽइति प्रकृत्य (७. २. १. १८.) एतद्वाऽएतद्यथायथं करोति यदग्नौ सामिचितऽएतां दिशमेति तस्माऽएवैतन्निह्नुतेऽहिंसायै (१८.) अयं वै लोको गार्हपत्य इति (१९.) च वाक्यशेषात् । एवं लिङ्गवाक्ययोर्विरोधे लिङ्गं बलवत् वाक्यप्रकरणविरोधे वाक्यम् प्रकरणस्थानयोर्विरोधे च प्रकरणम् स्थानसमाख्ययोर्विरोधे च स्थानमिति ॥ ॥ तदङ्गमितरदित्यत्रेतरदित्यनेन पूर्वसूत्रप्रतिपादितदेवतोद्देशपूर्वकद्रव्यत्यागात्मकयज्ञादन्यल्लभ्यते · तेन देवतोद्देशपूर्वकद्रव्यत्यागात्मकानां प्रयाजादियागानां पूर्वाघारादिहोमानां चानेनाङ्गत्वं न सिध्यतीत्यत आह ·

यजतयश्चाफलयुक्तास्तदङ्गम् ॥ ४ ॥ फलेन युक्ताः फलयुक्ताः फलवन्तः न फलयुक्ता अफलयुक्ताः अफलयुक्ता यजतयः प्रयाजादियागाः चकारात्पूर्वाघारादिजुहोतयश्च तदङ्गम् तस्य फलवतो यागस्य प्रधानस्याङ्गमुपकारका भवन्ति । कुतः पूर्वसूत्रोक्तात्प्रकरणादेव । ननु दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यनेन यागमात्रस्य फलसम्बन्ध उक्तः कुतोऽफलयुक्ता यजतय इति · अत्रोच्यते · नात्र यागमात्रस्य फलसम्बन्ध उच्यते किं तर्हि ये यागा दर्शपूर्णमाससंज्ञास्तेषामेव । के च दर्शपूर्णमाससंज्ञाः ये दर्शपूर्णमाससंयोगेनोत्पन्नाः · तद्यथा आग्नेयोऽष्टाकपालः पौर्णमास्याममावास्यायां वाच्युतो भवतीत्याग्नेयस्य दर्शपूर्णमा-

ससंयोगेनोत्पत्तिः · तथा तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजतीति उपांशुयाजस्य पौर्णमाससंयोगेनोत्पत्तिः · ताभ्यामेतमग्नीषोमीयं पौर्णमासे प्रायच्छदित्यग्नीषोमीयस्य च · तथा ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायामित्यनयोर्दर्शसंयोगेनोत्पत्तिः · अमावास्यां प्रकृत्य (१. ६. ४. ३.) तस्मादिन्द्राग्नी द्वादशकपालः पुरोडाशो भवतीत्यैन्द्राग्नस्य च । एते चाग्नेयादयो यागा दर्शपूर्णमाससम्बन्धाद्दर्शपूर्णमासपदेन लक्ष्यन्ते · तेषामेव च फलसम्बन्धोऽनेन दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्येन क्रियते · अत एतऽएव फलवन्तः प्रधानभूताश्च · इतरे प्रयाजादयो निष्फलाः अतः फलवतां प्रधानभूतयागानामङ्गं भवन्ति उपकारका भवन्ति प्रकरणात् · तदुक्तम्[1] फलवत्संनिधावफलं तदङ्गमिति ॥ तदङ्गमित्यनुवर्तमाने पुनस्तदङ्गग्रहणं प्रयाजादीनां केवलादृष्टार्थत्वज्ञापनार्थम् · इतराणि चाङ्गानि कानिचिद्दृष्टार्थानि कानिचिदुभयार्थानि प्रयाजादीनि त्वदृष्टार्थान्येवेति । तदुक्तम् दृष्टादृष्टोभयार्थत्वात्त्रिधाङ्गानि प्रचक्षते दृष्टार्थानि चतुर्धा स्युर्जातिद्रव्यगुणक्रियाः अदृष्टार्थं द्विधा कर्म द्व्यर्थमपि तन्मतम् दृष्टार्थेष्वपि सर्वेषु नियमादृष्टमिष्यते । इति त्रिविधमङ्गजातम् दृष्टार्थमदृष्टार्थमुभयार्थमिति । दृष्टार्थमपि जातिद्रव्यगुणक्रियात्मकम् · तत्र जातिगुणौ पशुना यजेतारुणया क्रीणातीति क्रियासाधनत्वेन विनियुक्तौ तत्साधनद्रव्यावच्छेदेन दृष्टेनैवोपकारेण तस्याः शेषभावमनुभवतः · द्रव्यस्य तु साक्षादेव क्रियानिर्वृत्तिर्दृष्टमेव प्रयोजनम् · क्रियापि चावघातादिर्दृष्टार्थैव यां संनिपत्योपकारकमाचक्षते । अदृष्टार्थत्वं तु क्रियाया एव । सा च द्वेधा · संनिपत्योपकारकरूपा प्रोक्षणादिः आराडुपकारकरूपा प्रयाजादिः । संनिपत्योपकारकाणि च दृष्टार्थानि कर्माणि स्वकारकाणां कर्मादीनामुत्पत्तिं प्राप्तिं विकारं वा कुर्वन्ति[2] तत्साध्यस्य प्रधानस्योपकुर्वन्ति · तथा संयवनं पिण्डस्योत्पत्तिम् दोहनं पयसः प्राप्तिम् अवघातो व्रीहीणां विकारम् · अदृष्टार्थं तु संनिपाति संस्कारं स्वकारकस्य कुर्वत् प्रधानोपकारि भवति · तदेवमुत्पत्त्यादिसाध्यभेदात्संनिपाति चतुर्विधं

---

१) see Jaimini ४. ४. ३५. यत्फलवत्त्वं तत्संनिधावसंयुक्तं तदङ्गं स्यात् · २) Nom. plur. neutr. Partic. Praes.

भवति · तच्च कर्मादीनामन्यतमे कारके यथायथमुत्पत्त्यादि करोति कर्मण्यव-घातः कर्तरि व्रतम् करणे प्रयाजशेषाभिघारणम् सम्प्रदाने पशुपुरोडाशयागः अपादाने अग्नेस्तृणान्यपचिनोतीति अधिकरणे दृष्यानयनम् · आराडुपकारकं तु न कारकद्वारम् अपूर्वद्वारं तु प्रधानस्योपकरोतीति । दृष्टादृष्टार्थं च किंचित्कर्म · यथा पशुपुरोडाशयागः स हि त्यागांशेनादृष्टमुद्देशांशेन दृष्टं देवतास्मरणं करोतीत्युभयार्थः · एवमेव स्विष्टकृद्यागादयोऽप्युभयार्थाः तत्रापि त्यागांशेनादृष्टमुत्पद्यते प्रधानयागोपयुक्तहविरुत्तरार्धादि च प्रतिपाद्यते ॥ ॥ यज्ञतयश्चाफलयुक्ता इत्यत्र यजतिजुहोतयः प्रस्तुताः · अतस्तयोर्विवेकं पृच्छति ·

यजतिजुहोतीनां को विशेषः ॥५॥ यजतीनां यागानां जुहोतीनां होमानां च परस्परं को विशेषः को भेद इति प्रश्नः । तत्र यजतीनां विशेषमाह ·

तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोऽनुवाक्यावन्तो यजतयः ॥६॥ उच्यन्तऽइति शेषः । तिष्ठता होमो येषु ते तिष्ठद्धोमाः · वषट्कारेण प्रदानं येषु ते वषट्कारप्रदानाः · तथा याज्यावन्तः पुरोऽनुवाक्यावन्तश्च ये ते यजतय उच्यन्ते । अथ जुहोतीनां विशेषमाह ·

उपविष्टहोमाः स्वाहाकारप्रदाना जुहोतयः ॥७॥ उपविष्टेन कर्त्रा होमो येषु तऽउपविष्टहोमाः · स्वाहाकारेण प्रदानं येषु ते स्वाहाकारप्रदानाः · यऽउपविष्टहोमाः स्वाहाकारप्रदानाश्च ते जुहोतय इत्युच्यन्ते ॥ पूर्वमग्न्यन्वाधानादीनां प्रयाजादीनां चाङ्गत्वं सप्रमाणकमुक्तम् तानि चाङ्गान्यृत्विजः कुर्वन्तीति वक्ष्यति शेषमितरे यथाख्यमिति (१.७.२३.) कर्मणि पुरुषाणामिति (१.७.१३.) च । तत्रेदं चिन्त्यते · दर्शपूर्णमासज्योतिष्टोमादिषु किं त्रयोऽपि वर्णा ब्राह्मणक्षत्रियवैश्या ऋत्विजो भवन्ति उत ब्राह्मणा एवेति । किं तावत्प्राप्तम् · त्रयोऽपि वर्णा ऋत्विजो भवेयुः कुतः प्रभुत्वात् · सर्वेऽप्यध्ययनवन्तो विद्वांसश्च अतः सर्वेऽपि कर्तुं शक्नुवन्ति · याजनाध्यापनप्रतिग्रहा ब्राह्मणस्यैव वृत्त्युपाया इति तु नियमः पुरुषार्थतया स्मर्यते न क्रत्वर्थतया तेन क्षत्रियवैश्यावार्त्विज्यं कुर्वन्तौ नियमातिक्रमात्कामं स्वधर्मात्प्रच्यवेयाताम् न क्रतोः काचिद्गुणहानिः · तस्मात्त्रयोऽपि वर्णा ऋत्विजो भवन्तीति पूर्वपक्षः । सिद्धान्तमाह ·

ब्राह्मणा ऋत्विजो भक्षप्रतिषेधादितरयोः ॥ ८ ॥ ब्राह्मणा एवऽर्त्विजो भवेयुः न क्षत्रियवैश्याः कुतः इतरयोः क्षत्रियवैश्ययोर्भक्षप्रतिषेधात् । अग्निहोत्रशेषं प्रकृत्य श्रूयते (२. ३. १. ३१.) ते होचुः को न इदꣳ होष्यतीति प्रकृत्य तस्मात्तस्य एव कश्च पिबेत्तद्धि नाब्राह्मणः पिबदग्नौ ह्यधिश्रयन्ति तस्मान्नाब्राह्मणः पिबेदिति · किं पुनरग्निहोत्रोच्छिष्टम् यत्स्रुचि परिशिनष्टि तदग्निहोत्रोच्छिष्टमिति (३१.) · ननु स्थाल्यामपि यदवशिष्टं तदप्यग्निहोत्रोच्छिष्टमेव स्यात् नेत्याह अथ यत्स्थाल्यामिति (३१.) · यत्स्थाल्यां परिशिष्टं तद्यथा परीणाहः अनसो निर्वपेत् तद्यथा कुटुम्बार्थं सर्वसाधारणं तादृशं तत्र यत्स्थाल्याम् परितो नद्धं परिश्रितं धान्यपूर्णं शकटस्योपरि स्थानं परीणाट् यथा ततो हविषो निर्वापेऽपि तद्गतं धान्यं न शेषः किं तर्हि पुनरपि यागान्तरयोग्यमेव एवमेव तद्यत्स्थाल्यां पय इत्यर्थः · तस्मात्तस्यः कश्चिदकर्मसम्बन्धोऽपि पिबेत् तथापि त्वग्नावधिश्रितत्वादब्राह्मणो न पिबेत् ब्राह्मणस्त्वसम्बन्धोऽपि पिबेदिति । तथा शाखान्तरे तयोः सांनाय्यभक्षप्रतिषेधः श्रूयते न राजन्यो न वैश्यो वा सांनाय्यं पिबेदसोमपीथो ह्येष इति । तथा दर्शपूर्णमासयोः शाखान्तरे चतुर्धाकरणे ब्राह्मणा एव निर्दिश्यन्ते ब्राह्मणानामेवेदं हविः सौम्यानां सोमपानां नेहाब्राह्मणस्यास्तीति · शेषभक्षार्थं हि चतुर्धाकरणम् · शेषभक्षश्चऽर्त्विजाम् · यदि च राजन्यवैश्ययोरप्यार्त्विज्यं स्यात् न ब्राह्मणानामेवेदं हविः स्यात् राजन्यवैश्ययोरपि पक्षे स्यात् तत्रेदमवधारणमसंगतं भवेत् ।

दर्शनाच्च ॥ ९ ॥ श्रुतावप्ययमर्थो दृश्यते यद्ब्राह्मणा एवऽर्त्विजो भवन्ति न क्षत्रियवैश्या इति । तथा हि द्वया वै देवा देवा इत्युपक्रम्य (२. २. २. ६.) तेषां द्वेधाविभक्त एव यज्ञ आहुतय एव देवानां दक्षिणा मनुष्यदेवानां ब्राह्मणानां शुश्रुवुषामनूचानानामाहुतिभिरेव देवान्प्रीणाति दक्षिणाभिर्मनुष्यदेवान्ब्राह्मणाञ्छुश्रुवुषोऽनूचानानिति · तस्मादृत्विग्भ्य एत दक्षिणा दद्यान्नानृत्विग्भ्य इति (४. ३. ४. ५.) · ऋत्विग्भ्यो यद्दीयते परिक्रयार्थं तद्दक्षिणाशब्दाभिधेयम् दक्षिणाभिर्ब्राह्मणान्प्रीणातीत्यनेन दक्षिणानां ब्राह्मणसम्बन्ध एव दृश्यते अतोऽपि ब्राह्मणा एवऽर्त्विजः । किं च दर्शपूर्णमासिक्यां चान्वाहार्यदक्षिणायां

ब्राह्मणा एव दृश्यन्ते    तऽएते वै देवा अहुतादो यद्ब्राह्मणा यदन्वाहार्यमाहरति तानेव तत्प्रीणातीति · दक्षिणा चऽर्त्विग्भ्यो दीयते · तस्माद्ब्राह्मणा एव ऋत्विजो न क्षत्रियवैश्या इति सिद्धान्तः । ब्राह्मणा एवऽर्त्विज इति नियमः कर्तव्यः    यतोऽब्राह्मणस्यार्त्विज्ये क्रतुवैगुण्यमेव दृश्यते । रामायणे (१. ५९. १३.) क्षत्रियो याजको यस्य चण्डालस्य विशेषतः    कथं सदसि भोक्तारो हविस्तस्य सुरऽर्षय इति · तथा    राजयाजकयाज्यस्य विनश्यति यथा हविरित्यब्राह्मणार्त्विज्ये हविर्विनाशः स्मृतः · तथा    प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथेति स्मृतेश्च (याज्ञवल्क्य° १. ११८.) । अत एवाग्न्यधिश्रितस्य भक्षणप्रतिषेधात् क्षत्रियवैश्ययोरिष्टौ यजमानभागस्यापि होम एव विहितो न भक्षणमिति ॥    ॥ इदानीमिदं विचार्यते · चित्रया यजेत पशुकामः    द्वादशाहमृद्धिकामा उपेयुः    स्वर्गकामस्यऽर्तपेय (२२. ८. १०.) इत्येवमादीनां फलयुक्तानां कर्मणामारम्भे किं कर्तुर्याथाकाम्यम् उतावश्यं तेषां करणमिति । तत्र विधिबलादवश्यंकरणे प्राप्तऽआह ·

फलयुक्तानामारम्भे याथाकामी फलार्थित्वात् ॥ १० ॥        फलयुक्तानां फलसम्बद्धानां काम्यानां कर्मणां द्वादशाहादीनामारम्भे कर्मणां कर्तुर्याथाकामी स्यात् कर्तुर्याथाकाम्यं भवेत् इच्छया प्रवृत्तिः स्यादित्यर्थः । कुतः    फलार्थित्वात् फलमर्थयते याचतऽइति फलार्थी · यतः तस्य फलार्थिनः फलप्राप्त्यर्थं कर्म विधीयते    नान्यस्य    तेन यः फलं प्राप्तुं वाञ्छति स फलयुक्तानि कर्माणि तत्प्राप्त्यर्थं करोति    नान्यः । काममनतिक्रम्य यथाकामम् यथाकाममित्यस्य भावो याथाकामी याथाकाम्यमित्यर्थः · ब्राह्मणादित्वाद्यथाकामशब्दस्य    गुणवचनब्राह्मणादिभ्यः कर्मणि चेति (पा° ५. १. १२४.) ष्यञ्प्रत्ययः · यथा स्वभावात्तलन्तं स्त्रियां वर्तते एवं ष्यञन्तमपि क्वचित्स्त्रियां वर्तते    यथौचिती वैदग्धी याथाकामीति पदवृत्तौ · तेन क्वचित्तदन्तं स्त्रियां नपुंसके च वर्तते · यदा स्त्रियां तदा ष्यञः षित्वात्षिद्गौरादिभ्यश्चेति (पा° ४. १. ४१.) ङीष्    यस्येति चेत्यकारलोपः (पा° ६. ४. १४८.)    हलस्तद्धितस्येति (पा° ६. ४. १५०.) यकारलोपः · यथा औचित्यमौचितीति तथैव याथाकाम्यं याथाकामीति    समानार्थं रूपद्वयम् । तस्मात्फलयुक्तानां काम्यकर्मणामारम्भे कर्तुर्याथाकाम्यमिति सिद्धान्तः ॥ एवं सर्वकर्मस्विच्छयानुष्ठानप्राप्तावाह ·

न नियमनिमित्ताग्निहोत्रदर्शपूर्णमासदाक्षायणाग्रयणपशुषु प्रवृत्तेः ॥११॥

नियमः सत्यं वदेदित्यादिकः · निमित्तं कर्मविनाशादि · अग्निहोत्रं सायंप्रातर्होमः · दर्शपूर्णमासौ प्रकृतीष्टी · दाक्षायणोऽपि दर्शपूर्णमासविशेष एव · आग्रयणं नवयज्ञः · पशुर्निरूढः · एषु नियमादिषु पञ्चस्वेतेषु सूत्रोक्तेषु कर्तुर्न याथाकामी न याथाकाम्यम् कुतः प्रवृत्तेः शास्त्रं ह्येतेषु नियमेन पुरुषं प्रवर्तयति · अत एतेषां नियोगतोऽनुष्ठानं कर्तव्यम् नेच्छया। नियमेषु तावत् सत्यवादी स्यादधःशायी स्यादित्येवमादि शास्त्रं नियमेन प्रवर्तयति · कथम् · यदि नियमेषु याथाकाम्यं स्यात्तर्हि नियमशास्त्रमनर्थकं स्यात् शास्त्रं विनापि याथाकाम्यस्य सिद्धत्वात् · सर्वोऽपि यदेच्छति तदा सत्यं वदति अधः शेते वा · न च वेदे मात्रामात्रस्याप्यानर्थक्यमिष्यते · अतः शास्त्रस्यार्थवत्त्वाय नियमेषु न याथाकाम्यम्। निमित्ते सति यन्नैमित्तिकं विधीयते तत्रापि न याथाकाम्यम् · तद्यथा सायंप्रातर्दोहार्तावैन्द्रं पञ्चशरावमोदनं निर्वपेत् (२५.५.२.) गेहदाहेऽग्नये क्षामवते पुरोडाश इत्यादि (२५.४.३६.) · यद्यत्र याथाकाम्यं स्यात्तर्हि सायंप्रातर्दोहार्तौ-गेहदाहेत्यादिनिमित्तश्रवणमनर्थकमेव स्यात् · निमित्तश्रवणं विनापि विश्वजिदादिवदैच्छिकानुष्ठानस्य सिद्धत्वात् · अतोऽत्रापि न याथाकाम्यम्। अग्निहोत्रे ऽपि न याथाकाम्यम् कुतः यावज्जीवमग्निहोत्रं जुहुयादिति श्रुतेः · नन्वग्निहोत्रस्य फलसाधनत्वं श्रूयते अग्निहोत्रं जुहुयात्स्वर्गकाम इति ततश्च फलयुक्तत्वाद्याथाकाम्यं स्यात् · अत्र कस्मिंश्चन ब्राह्मणे काम्यं प्रयोगं विधाय यावज्जीवमग्निहोत्रं जुहुयादिति पठ्यते · तत्रायं संदेहः किं यावज्जीवप्रयोगात्काम्यः प्रयोगो भिन्नः उत एक एवायं काम्यप्रयोगः स एव यावज्जीवकालपरिमित इति · तत्र यदि यावज्जीवकालः कर्मधर्मत्वेन विधीयते ततः सायं जुहोति प्रातर्जुहोतीति [1] वाक्यवशेन तत्कालसमापनमग्निहोत्रं न शक्नोति तावन्तं कालं पूरयितुमित्यर्थाज्ज्योतिष्टोमवदभ्यस्तरूपमेकमेव प्रयोगं प्रतिपत्स्यते यदि पुनर्जीवनं निमित्तत्वेनोद्दिश्य कर्म विधीयते ततो यावत्कर्तृ भाविनि नियते निमित्ते विना कामसम्बन्धेन चोद्यमानमकरणे दोषप्रसक्तेरवश्यं पुरुषेण जीवता स्वार्थ-

१) °होमीति २.

सिद्ध्यर्थमनर्थपरिहाराय च कर्तव्यमिति कर्तृधर्मो नियमोऽनेन वचनेन चोदितो भवति तदा च सायंप्रातःकालयोर्जीवनस्य च संहतानां निमित्तत्वात्प्रतिदिवसं निमित्ते पर्यवसितं कर्म निमित्तावृत्तिवशात्पुनः-पुनः क्रियतऽइति प्रयोगाभ्यासत्वमिति · तत्र किं तावत्प्राप्तम् एकः प्रयोगोऽभ्यस्तव्यः कर्मधर्मो यावज्जीविकता · यावज्जीवशब्दो मरणावधिककालपरः तत्कालसम्बन्धश्च प्रकृते काम्याग्निहोत्रे पूर्वमप्राप्तत्वाद्विधीयते · तथा सति अस्य वाक्यस्य नित्यप्रयोगविधायकत्वाभावेन वाक्यान्तरविहितः काम्यप्रयोग एक एवाग्निहोत्रस्य पर्यवस्यति · स च काम्यप्रयोगोऽभ्यसितव्यः सकृदनुष्ठानस्याग्निहोत्रं जुहुयात्स्वर्गकाम इत्यनेनैव सिद्धेर्यावज्जीवमिति कालविधिवैयर्थ्यप्रसङ्गात् · तस्मादयं काम्यस्य कर्मणोऽभ्याससिद्धये कालरूपधर्मविधिः यावज्जीवकालमभ्यस्येदिति · तथा सति कर्माङ्गविधौ कथंभावसम्बन्धात्प्रकरणानुग्रहो[1] भवति पुरुषार्थविधौ तु तदसम्बन्धात्प्रकरणबाधः स्यात् कथम् तद्धि कथंभावात्मकं कर्मधर्ममपेक्षमाणं पुरुषधर्मे विधीयमानेऽत्यन्तं बाधितमेव भवति · एवं चैकप्रयोगे सति दीर्घसत्रसंस्तव उपपन्नो भविष्यति इतरथा पुनः प्रतिदिवससमाप्तेर्न किंचित्सत्रसारूप्यं भवेत् तस्मात्कर्मधर्मोऽभ्यास इति पूर्वपक्षः · सिद्धान्तस्तु यावज्जीवशब्दो न कालस्य वाचकः किंतु कृत्स्नस्य जीवनस्य · न च जीवनं कर्मधर्मत्वेन विधातुं शक्यते तस्य कर्तृधर्मत्वात् तं च कर्तृधर्मं निमित्तीकृत्याग्निहोत्रप्रयोगो विधीयते · इह हि यावत्कर्तृ भावि जीवनं श्रुत्यैव प्रतिपादितम् जुहोतीत्येतदपि स्वार्थविधायकमेव भवत्यन्ते तु जीवनेन कालो लक्ष्यते जुहोतिनाप्यभ्यासः · न च प्रकरणवशेन श्रुतेर्लाक्षणिकोऽर्थो वर्णयितुं युक्तः · तस्मात्कृत्स्ने जीवने प्राणधारणक्रियारूपे निमित्ते पुरुषस्य प्रत्यवायपरिहारायाग्निहोत्रप्रयोगो विधीयते · न चात्र कर्मभेदः तद्धेतूनां शब्दान्तरादीनामभावात् न चाभ्यासः अविशेषपुनःश्रुतेरभावात्[2] · अतः प्रयोगभेद एवायं पर्यवस्यति · जीवनस्य चात्र निमित्तत्वात् सति च निमित्ते नैमित्तिकस्य त्यागायोगान्नित्यत्वमप्यर्थसिद्धम् · न च जीवननैरन्तर्येण प्रयोगनैरन्तर्यापत्तिः सायम्प्रातःकालविशिष्टस्यैव जीवनस्य निमित्तत्वात् न

1) कर्माङ्गविधौ कर्मकथंभाव° the Çâstradîpikâ at Jaimini २.४.१. 2) ?°शेषयुभश्रुते°२.

कालान्तरीयस्य · तस्मात्काम्यस्वर्गार्थप्रयोगादयं नित्यः प्रयोगो भिन्न इति सिद्धान्तः · ततश्चाग्निहोत्रेऽपि न याथाकाम्यमिति सिद्धम् · अयं तु विशेषः काम्ये प्रयोगे कृते नित्यः कृत एव भवति यतः सोऽप्यग्निहोत्रप्रयोग एव · तथा चोक्तं तन्त्ररत्ने अग्निहोत्रं जुहोतीत्येवमुत्पन्नस्य कर्मणो विपरिवर्तमानस्य निमित्ते फले च विधानान्न तावत्कर्मान्तरमिदम् नापि प्रयोगभेदः अन्तर्गतत्वात्काम्ये नित्यप्रयोगस्य काम्यनित्ययोस्तन्त्रेणानुष्ठानम् श्रुतिकृत एव त्वस्ति भेदः पृथक्पृथङ्निमित्ते फले च कर्म श्रूयते अतस्तदुपाधिक एव भेदो न वास्तवः तस्मान्नित्यकाम्ययोस्तन्त्रेणानुष्ठानं सिध्यतीति । दर्शपूर्णमासयोरपि न याथाकाम्यम् कुतः यावज्जीवं दर्शपूर्णमासाभ्यां यजेतऽइति श्रवणात् · अत्राप्यग्निहोत्रवन्नित्यकाम्यप्रयोगभेदो ज्ञातव्यः तद्वदेवात्रापि वाक्यद्वयस्य श्रवणात् दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति · अत्रापि यावज्जीवकालं स्वर्गार्थं दर्शपूर्णमासाभ्यासः कार्य इति कर्मधर्मविधिः पूर्वपक्षे सिद्धान्ते तु पौर्णमास्यमावास्याविशिष्टे जीवने कर्तृधर्मे प्राणधारणक्रियारूपे निमित्ते दर्शपूर्णमासयागविधिरिति · तस्माद्दर्शपूर्णमासयोर्न याथाकाम्यम् । दाक्षायणयज्ञेऽपि न याथाकाम्यम् तस्य गुणमात्रविकृतदर्शपूर्णमासरूपत्वात् · ननु तर्हि पृथगस्य ग्रहणं न कार्यं दर्शपूर्णमासग्रहणेनैवसिद्धत्वात् अत्रोच्यते प्रजापश्वन्नयशस्कामस्येत्येवमादिफलसम्बन्धदर्शनात् (४.४.१.) काम्यत्वाशङ्काव्युदासार्थं पृथग्दाक्षायणग्रहणमित्यदोषः · प्रजादिकं फलं च गुणात् न तु दाक्षायणादिति वक्ष्यामः · अतो दाक्षायणेऽपि न याथाकाम्यम् । आग्रयणेऽपि न याथाकाम्यम् अनयोर्वाऽअयं द्यावापृथिव्यो रसोऽस्य रसस्य हुत्वा देवेभ्योऽथेममश्नामेति तस्माद्वाऽआग्रयणेष्ट्या यजतऽइति श्रवणात् (२.४.३.१.) · अत्र द्यावापृथिव्यो रसस्यान्नस्य देवेभ्यो होमानन्तरमशनं विधीयते अशनं च नित्यमवश्यं कार्यम् अन्यथा जीवनासम्भवात् न चाहुत्वैतत्कर्तुं शक्यम् हुत्वाथेममश्नामेत्युक्तत्वात् · तस्मादशनवदाग्रयणस्यापि नित्यता · तेन न याथाकाम्यम् · किं च अकृताग्रयणस्य नवान्नभोजने प्रायश्चित्त विहितमस्ति अनिष्ट्वाग्रयणेन नवस्याश्नीयाद्वैश्वानरं निर्वपेदिति (२५.८.१६.) · तथा चाहापस्तम्बः एतामेव निर्वपेद्योऽकृत्वाग्रयणं

नवस्याश्नीयादानीतो वाऽएष देवानां य आहिताग्निरदत्त्यस्य देवा अन्नं यदकृत्वा-ग्रयणं नवस्याश्नीयाद्देवेभ्यो भागं प्रतिकृत्यमन्यादार्तिमार्छेदिति · तस्मादाग्रयणेऽपि न याथाकाम्यम्। निरूढपशावपि न याथाकाम्यम् यतस्तं प्रक्रम्यैवं श्रूयते तं वै संवत्सरो नानीजानमतीयादिति (११. ७. १. ३.) षट्सु षट्सु पशुबन्ध-याजीति च (१०. १. ५. ४.) · तस्मात्पशावपि न याथाकाम्यम्। अत एवाह वसिष्ठः अवश्यं ब्राह्मणोऽग्नीनादधीत दर्शपूर्णमासाग्रयणेष्टिचातुर्मास्यपशुसोमैश्च यजेतेति। हारीतोऽपि पाकयज्ञान्यजेन्नित्यं हविर्यज्ञांश्च नित्यशः सोमांश्च विधिपूर्वेण य इच्छेद्धर्ममव्ययम्। ते च गौतमेन दर्शिताः अष्टका पार्वणश्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजी चेति सप्त पाकसंस्थाः अग्न्याधेयमग्निहोत्रं दर्श-पूर्णमासौ चातुर्मास्यान्याग्रयणेष्टिर्निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसं-स्थाः अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्था इति · पार्वणं पर्वणि क्रियमाणं स्थालीपाकलक्षणं श्राद्धं मासि मासि श्राद्धम्। मनुः (४. २५-२६.) अग्निहोत्रं च जुहुयादाद्यन्ते द्युनिशोः सदा दर्शेन चार्धमासान्ते पूर्णमासेन चैव हि सस्यान्ते नवसस्येष्ट्या तथऽर्त्वन्ते द्विजो ऽध्वरैः पशुना त्वयनस्यान्ते[1] समान्ते सौमिकैर्मखैः · आद्यन्ते द्युनिशोः सायं प्रातरित्यर्थः अध्वरैश्चातुर्मास्यैरिति॥

सोमे चैके ॥१२॥ सोमे सोमयागे अग्नीषोमाख्ये न याथाकाम्यम् कुतः वसन्ते-वसन्ते ज्योतिषा यजेतेति श्रुतेः। नन्वग्निहोत्रे दर्शपूर्णमासयोश्च यावज्जीवग्रहणात्कर्तृधर्मनिमित्तत्वं भवतु सोमादिषु कथम् · उच्यते · अत्रापि वीप्सासंयुक्तं कालशास्त्रमेव निमित्तं वसन्ते-वसन्ते ज्योतिषा यजेतेत्यादिकम् · न तावदेतत्काम्यस्योपदिश्यते तस्य हि यथेष्टमनुष्ठानस्योक्तत्वात् नैवं वक्तुं युक्तम् · अथापि नित्यस्य सकृत्प्रयोगः स्यात् तदा वीप्सा व्यर्था स्यात् · न च वसन्तपक्षावधारणे[2] प्रमाणमस्ति · तस्माद्यावज्जीवं ये वसन्तास्तेष्विति विज्ञा-यते · सप्तम्यपि च भिन्ने जुहोतीतिवन्निमित्तार्थैव · अत एवंजातीयके सर्वत्र कर्तृधर्मनिमित्तत्वावधारणात्कालशास्त्रमेवं प्रत्येतव्यम् · एवं सर्वत्र चातुर्मास्यादौ

१) °नस्यादौ Manu. २) ?वसन्ते प° २.

ज्ञेयम् । ननु ज्योतिष्टोमेन स्वर्गकामो यजेतेति काम्यत्वमस्य श्रूयते · सत्यम् · वसन्ते-वसन्ते ज्योतिषेत्यनेन नित्यत्वमपि श्रूयतऽएव · अतः प्रयोगभेद एवाय-मत्रापि अग्निहोत्रादिवत् एकः स्वर्गकामप्रयोगः अपरस्तु नित्य इति · अत एव गवामयने कारणान्तरेण सोमानन्तरायः श्रुतावुच्यते (१२. ३. ५. १०.) कथमेषां सोमोऽनन्तरितो भवतीति सवनैरिति ब्रूयादिति · यदि सोमस्यावश्यकर्तव्यता न स्यात्तर्हि कारणान्तरेणानन्तरायवचनं न स्यात् अस्ति च तस्मात्सोमेऽपि न याथाकाम्यम् । एकेग्रहणं तु पूजार्थम् मतान्तरस्यात्राभावात् । अत्राह वसिष्ठः अलमग्न्याधेयाय नानाहिताग्निः स्यात् अलं च सोमाय नासोमयाजीति · अलं समर्थः । सामर्थ्यं च याज्ञवल्क्येनोक्तम् (१. १२४.) त्रैवार्षिकाधिकान्नो यः स हि सोमं पिबेद्द्विजः · मनुः (११. ७.) यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये अ-धिकं वापि विद्येत स सोमं पातुमर्हति · एतत्काम्यसोमयागविषयम् ऋतुश्रुते-र्नित्यस्यावश्यकर्तव्यत्वादकरणे प्रत्यवायश्रवणात्प्रायश्चित्तविधानाच्च । शङ्खोऽपि त्रैवार्षिकाधिकान्नस्तु पिबेत्सोममतन्द्रितः इष्टिं वैश्वानरीं कुर्यात्तथैवाल्पधनो द्विजः । याज्ञवल्क्यः (१. १२४.) प्राक्सौमिकीः क्रियाः कुर्याद्यस्यान्नं वार्षिकं भवेत् । मनुः (११. ३९-४०.) पुण्यान्यन्यानि कुर्वीत श्रद्दधानो जितेन्द्रियः न त्वल्पद-क्षिणैर्यज्ञैर्यजेतेह कथं चन इन्द्रियाणि यशः स्वर्गमायुः कीर्तिं प्रजाः पशून् हन्त्यल्पदक्षिणो यज्ञस्तस्मान्नाल्पधनो यजेत् । मत्स्यः अन्नहीनो दहेद्राष्ट्रं मन्त्र-हीनस्तथऽर्त्विजः याज्यं तु दक्षिणाहीनो नास्ति यज्ञसमो रिपुरिति । अन्नपरि-माणमपि शङ्खेनोक्तम् सहस्रं भोजयेत्सोमे ब्राह्मणानां शतं पशौ चातुर्मा-स्येषु सर्वेषु शतं पर्वणि पर्वणि । यत्तु श्रुतौ दातव्यैव यज्ञे दक्षिणा भवत्य-ल्पिकापीति तन्नित्याभिप्रायम् · अत एव बौधायनः यस्य नित्यानि लुप्तानि तथैवागन्तुकाणि च विपथस्थो हीनः[1] स्वर्गं न गच्छेत्पतितो हि सः तस्मा-त्कन्दफलैर्मूलैर्मधुना पयसापि वा नित्यं नित्यानि कुर्वीत न च नित्यानि लोपयेदिति · तेनाल्पधनस्यापि आधाने सोमे चाधिकारः । तथा च प्रजापतिः सर्वसंस्थाधिकारः स्यादाहिताग्निर्धने सति आदध्यान्निर्धनोऽप्यग्निं न तु पापभ-

1) ? हिन २.

यादिन्नः · न पापभयादाहिताग्निः संस्थाधिकारी किम् धने सत्येव तासां काम्यत्वात् । कूर्मपुराणे नास्तिक्यादथ वालस्याद्योऽग्निं नाधातुमिच्छति यजेत वा न यज्ञेन स याति नरकान्बहून् तस्मात्सर्वप्रयत्नेन ब्राह्मणो हि विशेषतः आधायाग्निं विशुद्धात्मा यजेत परमेश्वरम् । तथा च स्मृतौ पशुसोमादीनामशक्या-करणासम्भवे प्रत्याम्नाय उपदिश्यते (मनु॰ ११. २७.) क्लृप्तानां पशुसोमानां निष्कृत्यर्थमसम्भवे इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये · क्लृप्तानामारब्धानां पशुसोमानामनुष्ठानासम्भवे तन्निष्कृत्यर्थं तत्प्रत्याम्नायवेनाब्दपर्यये वर्षस्यान्ते वैश्वानरीमिष्टिं नित्यमवश्यं निर्वपेदित्यन्वयः । तथा याज्ञवल्क्योऽपि (१. १२५-१२६.) प्रतिसंवत्सरं सोमः पशुः प्रत्ययनं तथा कर्तव्याग्रयणेष्टिश्च चातुर्मास्यानि चैव हि एषामसम्भवे कुर्यादिष्टिं वैश्वानरीं द्विज इति · स्वस्वकाले तत्प्रत्याम्नाय-रूपां वैश्वानरीमिष्टिं कुर्यादित्यर्थः ॥

चातुर्मास्येषु चर्तुमुखश्रुतेः ॥ १३ ॥ चातुर्मास्येषु च न याथाकाम्यम् · कुतः · ऋतुमुखश्रुतेः ऋतुमुखऋतुमुखे चातुर्मास्यैर्यजेतेति [१] वीप्साश्रवणात् · ऋतोर्मुखं. प्रथमदिनं प्रतिपत् तत्रेत्यर्थः । अत एव वैश्वदेववरुणप्रघासादीनि चातुर्मास्यपर्वाणि प्रतिपद्येव क्रियन्ते न पौर्णमास्यामित्यवसीयते यतः प्रतिपदेवर्तुमुखं न पौर्णमासीति · तथा च श्रूयते (६. २. २. १८.) एषा ह संवत्सरस्य प्रथमा रात्रिर्यत्फाल्गुनी पौर्णमासी योत्तरेति । नित्यत्वे कारणान्तरमाह ·

नियतसहपाठात् ॥ १४ ॥ नियतैर्नित्यैरग्निहोत्रादिभिः सहपाठादपि चातुर्मास्यान्यपि तद्वदवश्यं कर्तव्यानीत्यवसीयते · तेषु न याथाकाम्यमिति प्रतीयते · तथा हि (१०: ४. ३. ४.) तऽएतान्यज्ञक्रतूंस्तेनिरेऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुबन्धं सौम्यमधरमिति नित्यैः सहपाठेन तत्सदृशत्वमवगम्यतऽइत्यभिप्रायः ।

दर्शनाच्च ॥ १५ ॥ गवामयने उपायान्तरेण श्रुतौ चातुर्मास्यानामनन्तरायदर्शनाच्चातुर्मास्येषु न याथाकाम्यमित्यवगम्यते · तथा हि (१२. ३. ५. ८.) कथमेषां चातुर्मास्यान्यनन्तरितानि भवन्तीति पयस्ययेति ब्रूयादिति · यद्यवश्यमनुष्ठेयं तस्यैव

[१] °श्रुतेः ऋतुमुखे चातु° २.

लोपाशङ्कया कारणान्तरेणानुग्रह उपपद्यते　नेह्यानुष्ठेयस्य। अपरे तु दर्शनाच्चेत्यमुं हेतुमग्निहोत्रादिषु सर्वेषु योजयन्ति　यतः सर्वत्र श्रूयते (१२. ३. ५. ३-४.) कथमेषामग्निहोत्रमनन्तरितं भवतीति व्रतेनेति ब्रूयादिति कथमेषां पौर्णमासं हविरित्यादि कथमेषां सोमोऽनन्तरितो भवतीत्यन्तम् (१०.)　यतः सर्वत्र कारणान्तरेणानुग्रहो दृश्यते ॥ एवं सिद्धान्तमुक्त्वान्तरा पूर्वपक्षमाह ·

नोत्सर्गयोगात् ॥ १६ ॥　चातुर्मास्येषु न याथाकामीति यदुक्तम् तन्न किं तु तत्रापि याथाकाम्यमेव　न नित्यत्वम् · कुतः　उत्सर्गयोगात्　यतश्चातुर्मास्यानामुत्सर्गयोगोऽस्ति · उत्सर्गेण योगः सम्बन्धः उत्सर्गयोगः　इति नूत्सृजमानस्येति (२. ६. ३. १२.)। यदि हि चातुर्मास्यानि नित्यानि भवेयुस्तदा उत्सर्गयोगो न स्यात्　अस्ति च　अतोऽत्रापि याथाकाम्यमेव न नित्यत्वमित्येवं पूर्वपक्षितऽउक्तमेव सिद्धान्तं द्रढयति ·

स्याच्चित्रिंशद्वत् ॥ १७ ॥　चातुर्मास्यानां नित्यत्वेऽप्युत्सर्गयोगः स्याद्भवेत् किंवत् त्रिंशद्वत् यथा दर्शपूर्णमासयोस्त्रिंशद्वर्षानन्तरमुत्सर्गः श्रुतोऽस्ति नित्यत्वं च तयोरसंदिग्धं विद्यतऽएव । तथा हि　यद्दर्शपूर्णमासाभ्यां यजतऽइति प्रकृत्यैतदुच्यते　तस्मादु त्रिंशतमेव वर्षाणि यजेतेति (११. १. २. १३.)। एवमत्रापि वचनादुत्सर्गयोगोऽपि वैकल्पिको भविष्यति　नित्यत्वं च　तस्माच्चातुर्मास्यानामपि नित्यत्वमत एवापि न याथाकाम्यमिति सिद्धम् । अथवा एवं योजना · उत्सर्गयोगे सत्यपि चातुर्मास्यानां नित्यत्वं स्यात् त्रिंशद्वत् यथा दर्शपूर्णमासयोस्त्रिंशद्वर्षानन्तरमुत्सर्गयोगे सत्यपि नित्यत्वमविप्रतिपन्नं विद्यते एवमिहापीति · अपि च　यद्यवश्यं कर्तव्यं तन्नित्यमित्युच्यते ॥　॥ अथेदं विचार्यते · द्विप्रकारं कर्म　नित्यं काम्यं च · तत्र नित्यं प्रकृत्येदं विचार्यते · किं सर्वाङ्गोपेतं कर्तव्यम् उत यावन्त्यङ्गानि कर्तुं शक्नोति तावद्भिरङ्गैरुपेतमिति । किं तावत्प्राप्तम् सर्वाङ्गोपेतमेव कर्तव्यमिति　कुतः　भावनांशस्य कथंभावस्य सर्वैरङ्गैः परिपूरणेन सर्वाङ्गोपेतस्यैव प्रधानस्य फलवत्त्वात्　अन्यथा अङ्गाम्नानस्य वैयर्थ्यापत्तेः · तस्मात्सर्वाङ्गोपेतमेव कर्तव्यमित्येवं प्राप्तऽआह ·

विगुणे फलनिर्वृत्तिरङ्गप्रधानभेदात् ॥ १८ ॥　नित्ये कर्मणि अग्निहोत्र-

दर्शपूर्णमासादिके विगुणेऽपि अङ्गहीनेऽपि कृते फलनिर्वृत्तिः प्रत्यवायपरिहारूपस्य फलस्य निष्पत्तिर्भवत्येव । अङ्गप्रधानभेदात् यतोऽङ्गानि च प्रधानानि च भिन्नानि नित्येषु चेतिकर्तव्यता नास्ति · कुत इतिकर्तव्यता नास्ति अपूर्वाभावात् अपूर्वप्रयुक्ता हीतिकर्तव्यता सा च तस्मिन्नसति न भवितुमर्हति · कथमपूर्वाभावः फलाभावात् कालान्तरभाविफलसिद्ध्यर्थं ह्यपूर्वं कल्प्यम् तच्चासति फले कल्पयितुं न शक्यते · तस्मान्नित्येषु यागस्यैव भाव्यत्वम् न फलस्य · तस्मात्पौर्णमास्याममावास्यायां वाग्निमुद्दिश्य पुरोडाशस्त्यक्तव्य इत्येतावदुपदिश्यते · तेन दृष्टार्थानि यान्यङ्गानि संनिपत्योपकारकाणि यैर्विना प्रधानभूतयागनिष्पत्तिर्न भवति अन्यथानुपपत्त्या तावद्भिरुपेतं प्रधानं कर्तव्यम् नाङ्गानि अङ्गाम्नानं तु काम्यप्रयोगार्थम् · अतोऽग्निकालपुरोडाशमात्रमादरणीयम् अन्यदङ्गजातमदृष्टार्थं नादरणीयमिति । कथं तर्ह्युद्दिशे निष्फले पुरुषस्य प्रवृत्तिरिति चेत् · उच्यते · प्रत्यवायानुत्पत्त्यर्था प्रवृत्तिर्न तु फलार्था विहिताकरणाद्धि प्रत्यवायः स्मर्यते (मनु० ११. ४४.) अकुर्वन्विहितं कर्म प्रायश्चित्तीयते नर इति ॥ अतो नित्यकर्मणो निष्फलत्वादपूर्वाभावादितिकर्तव्यता नास्तीति हीनाङ्गस्यैव प्रयोग इति केचित्सिद्धान्तमाहुः तदेतन्नोपपद्यते · कथम् · भावनातो हि तिस्र आकाङ्क्षा जायन्ते किं केन कथमिति · तत्र कथमितीतिकर्तव्यताकाङ्क्षा नित्येऽप्यस्ति · तस्मादत्राप्यस्तीतिकर्तव्यता । सत्यम् अस्त्येवेहाप्याकाङ्क्षात्रयम् तथापि किम् आकाङ्क्षायाः समानपदोपात्तेन यागेनैव पूरणात्तन्निर्वृत्त्युपयोगिन्येवेतिकर्तव्यता कथम्-आकाङ्क्षया गृह्यते न त्वदृष्टोपयोगि प्रयाजाद्यङ्गम् अदृष्टस्य साध्यस्याभावादिति चेत् · न · यागस्य स्वतोऽपुरुषार्थत्वेन प्रवृत्त्यन्यथानुपपत्त्या समानपदोपात्तं यागमुत्सृज्य सर्वेषामभिमतस्य प्रत्यवायपरिहारस्येह भाव्यतया कल्पनात् । ननु चेत्सर्वेषामभिमतः स्वर्गः किमिति न कल्प्यते तस्य शरीरारम्भहेतुतया मोक्षविरोधित्वेन मुमुक्षूणामनभिप्रेतत्वात् प्रत्यवायपरिहारस्तु तैरपीष्यत एव · कथम् तस्मिन्पापे एतज्जन्मोपार्जिते भवान्तरोपार्जिते वा स्थिते सति तदुपभोगहेतुभूतशरीरारम्भावश्यंभावेन मोक्षाभावात् · अमोक्षार्थिनाप्यवश्यं पापक्षय एषितव्य एव समीहितफलाय इतरथाप्रक्षीणे पापे फलाप्राप्तेः · तस्मान्नि-

त्यानि कर्माणि पापक्षयस्योपायत्वेन चोद्यमानानीतिकर्तव्यतामपेक्षन्त एव । धर्मशास्त्रेषु च यथैवाकरणे प्रत्यवायः स्मृतः तथैव करणादपि पापक्षयः स्मर्यते (मनु २. १०२.) पूर्वां संध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहतीत्यादिभिः नित्यनैमित्तिकैरेव कुर्वाणोदुरितक्षयमिति च । तस्मान्नित्येऽप्यस्त्येव प्रत्यवायपरिहाररूपं फलम् तस्मान्नित्यान्यपि कर्माणि सर्वाभिमतस्य तस्य पापक्षयस्योपायत्वेन चोद्यमानानीतिकर्तव्यतामपेक्षन्त एव । ततश्च सर्वाङ्गोपेतानामनुष्ठानं कश्चिदपि सर्वदा कर्तुं न शक्नोति · जीवनादिनिमित्ते च तानि विधीयन्ते · निमित्तस्य चैतदेव रूपं यत्तस्मिन्सति नैमित्तिकमवश्यं कर्तव्यम् · तेन यावज्जीवं कर्तव्यम् सर्वाङ्गोपेतं च कर्तव्यमिति दुःशकमेव · तेन यथा शक्नुयादित्युपबध्यते · तत्रावश्यमन्यतरस्मिन्नहातव्ये[1] निमित्ते सति नैमित्तिकस्य कर्तव्यत्वं प्रधानवाक्ये श्रूयते · तद्यदि कस्यचिदङ्गस्यानुरोधेन सति निमित्ते नैमित्तिकं न क्रियते ततः प्रधानवाक्यविरोधः स्यात् · प्रधानमात्रं श्रुत्या निमित्ते विधीयते अङ्गानि तु तदर्थतया प्रकरणेन गृह्यन्ते अतस्तानि प्रधानवाक्यगतावश्यकत्वानुरोधेन यथाशक्त्युपसंहर्तव्यानि इतरथा प्रधानस्यावश्यकर्तव्यत्वं श्रुतं हीयेत · तस्मात्प्रधानाविरोधेनाङ्गानि यथाशक्त्युपसंहर्तव्यानि । नन्वेवं हीनाङ्गादपि प्रधानात्फलसिद्धेरभ्युपगमात्समर्थोऽप्यङ्गानि परित्यक्ष्यतीति · मैवम् · शक्तस्य कामतोऽङ्गे त्यज्यमाने वैगुण्यं स्यादेव · अङ्गोपदेशं निमित्तं वालोच्योभयानुरोधेन यावन्त्यङ्गानि कर्तुं शक्नोति तावद्भिरुपेतं प्रधानमेनः क्षपयतीति शास्त्रार्थोऽवधार्यते · तावतैव शास्त्रवशात्फलनिष्पत्तिः इति साधूक्तम् विगुणे फलनिर्वृत्तिरङ्गप्रधानभेदादिति । एतच्च प्रयोगविध्यनुष्ठाप्येष्वङ्गेषूच्यते · यद्धि कुर्यादित्युच्यते तत् यथाशक्तीत्युपबध्यते । यानि तु स्वभावसिद्धानि विध्यन्तरसिद्धानि वोपजीव्यन्ते यथा लोके धनार्जनादि वेदेऽपि कालो विद्याग्रयश्च तेषां स्वरूपेणैवाधिकारिविशेषणत्वम्[2] द्रव्यवान्विद्यावानग्निमानिति · एतदुक्तं भवति अङ्गं हि विधिबलादुपादीयते निमित्तानुरोधाद्वा त्यज्यते उभयानुग्रहार्थं वा शक्तं प्रत्युपादीयते अशक्तं प्रतित्यज्यत इति · नान्या गतिरस्ति · तत्रोभयानुग्रहो युक्तो यदि सम्भवति · सम्भवश्चो-

---

1) °स्मिनहातव्ये २.　　2) ?? °णत्वममास्यासंबंधे २. (°बंधि २.).

पादेयेष्वङ्गेषु यथाशक्ति व्रीहीन्सम्पादयेत् यथाशक्त्यवहन्यादिति · आहवनीयादिस्वरूपं तु नानेन विधिनोपादीयते · तस्मादग्निमान्विद्यावान्द्रव्यवान्जीवंश्च यजेतेत्येवमाश्रीयते · अतो विद्याग्निकालाद्यपरित्यागेनान्येषामङ्गानां [1] यथाशक्त्यनुष्ठानं सिद्धम् । तथा चोक्तं तन्त्ररत्ने . यानि प्रयोगविधिना कर्तुरुपादेयत्वेनाङ्गानि चोद्यन्ते तेषामेव शक्तिपरिमितत्वम् यावन्ति शक्नुयात्तावन्ति कुर्यादिति · यानि तु विध्यन्तरप्रयुक्तानि स्वयंसिद्धानि वाङ्गत्वेन गृह्यन्ते तानि स्वरूपत एवाधिकारिविशेषणम् यथाग्न्यादीनि · तेषामुपादानस्य प्रयोगविधिनानुपादानान्न यावच्छक्नोत्युपबन्धः सम्भवति किंतु तदपेक्षो विधिस्तद्वन्तमेवाधिकरोति [2] · तेन सपत्नीकस्यार्षेयस्य व्याख्यातोपात्तसंख्याविशिष्टस्याग्निमतो विद्यावतः प्रदोषादिकालसंयोगिनोऽधिकारो नान्यस्येति । एवं चाप्रतिसमाधेयाङ्गवैकल्येऽप्यग्न्यादिमानधिक्रियेतैव · आधानं तु न कुर्यात्तस्यानैमित्तिकत्वादिति ॥

प्रायश्चित्तविधानाच्च ॥१९॥ प्रायश्चित्तविधानादप्येवं ज्ञप्यते यद्विगुणेऽपि [3] फलनिर्वृत्तिर्भवतीति । यदि च विगुणात्फलं न स्यात्तर्हि प्रायश्चित्तं न विदधीत · न हि निष्फलस्याङ्गैः कृत्यमस्ति · अस्ति च विधानम् · तस्माद्विगुणादपि फलं भवतीति । येषां मते नित्येषु फलाभावेनापूर्वाभावात्तदर्थेतिकर्तव्यता नास्ति तेषां प्रायश्चित्तविधानमत्यन्तानुपपन्नम् · सेतिकर्तव्यताके तु निमित्ते भेदने ज्ञाते वैगुण्यात्तत्परिहारार्थापरं होमाख्यमङ्गं भिन्ने जुहोतीत्यादिकमुत्पन्नं सत्क्रियतऽएव · पक्षान्तरे त्वसत्यामितिकर्तव्यतायां भेदने ज्ञातेऽपि नास्ति वैगुण्यम् गुणहानिर्हि वैगुण्यम् असति गुणे कस्य हानिः स्यात् · ततश्चास्मत्पक्षऽएव प्रायश्चित्तविधानमुपपन्नमिति ॥

तथा च दृष्टम् ॥२०॥ नित्यं कर्म यथा कथंचित् श्रुताङ्गपरित्यागेनापि यथाशक्त्यङ्गोपेतमनुष्ठातव्यत्वेन श्रुतौ दृष्टम् । तथा हि यत्पयो न स्यात्केन जुहुया इति व्रीहियवाभ्यामित्यादि (११. ३. १. ३.) न वाऽइह तर्हि किं चनासीदथैतदहूयत सत्यं श्रद्धायामित्यन्तेन (४.) ग्रन्थेन · तथा तदेव यादृक्कीदृक्क [4]

---

1) °लादि अप २. °लादिप २. 2) °स्तद्वंत एवा २. 3) ज्ञप्यते नद्वि २. 4) यादृक्कीदृक्क २.

होतव्यमिति शाखान्तराच्च । तस्माद्विगुणेऽपि नित्ये प्रत्यवायपरिहाररूपं फलं भवति · अत एवोक्तं कर्काचार्यैः उपात्तदुरितक्षयो वा उत्पत्स्यमानदुरितप्रतिबन्धो वा भवत्येवेति ॥ ॥ अथ काम्ये कर्मणि चिन्त्यते · काम्येऽपि विगुणे फलाभिनिष्पत्तिर्भवत्येव । यतस्तत्राप्यङ्गानि प्रधानानि च भिन्नानि । अश्वमेधे च काम्ये प्रायश्चित्तविधानमप्यस्ति अश्वं प्रकृत्य अथातः प्रायश्चित्तीनां यद्यश्वो वडवाः स्कन्देद्वायव्यं पयोऽनुनिर्वपेदथ यदि स्रामो विन्देदित्यादि (१३. ३. ८. १-२.) · तथा पञ्चशारदीयेऽपि उत्सृष्टान्पशून्प्रकृत्य ताण्ड्ये प्रायश्चित्तविधानं दृश्यते अपोनप्त्रियोऽप्सु मृतऽइत्यादिकम् (२३. ४. १४.) · यदि च विगुणादपि काम्यात्फलं न स्यात् प्रायश्चित्तविधानं व्यर्थमेव स्यात् । तथा च दृष्टम् · विगुणमपि काम्यं फलोत्पादकं वेदे दृष्टम् · कारीरीमिष्टिं प्रकृत्य श्रूयते यदि वर्षेत्तावत्येव जुहुयादिति अत्रासमाप्तायामेव कारीर्यां तत्फलं वृष्टिरूपं वेदे दृष्टम् । अतो विगुणेऽपि काम्ये फलं सिध्यतीति पूर्वपक्षिते सिद्धान्तमाह ·

न श्रुतिलक्षणत्वात् ॥ २१ ॥ यदुक्तम् विगुणेऽपि काम्ये फलं सिध्यतीति तन्न · कुतः श्रुतिलक्षणत्वात् काम्यस्य · यतः काम्यं सगुणमेव सर्वाङ्गोपेतमेव श्रुत्या लक्षितम् फलसाधनत्वेन विहितम् तत्राङ्गलोपे काम्यमानफलस्यानुत्पत्तेः · तत्र प्रधानस्य त्यागे यथा फलं नास्ति एवमङ्गत्यागेऽपि · फलसाधनत्वं हि शास्त्रैकसमधिगम्यम् ततो यदङ्गं प्रधानं वा यावच्छब्दोपात्तम् तस्य लोपे साधनत्वं नास्ति · अतो यदा सर्वाङ्गोपेतं कर्तुं शक्नोति तदैव तत्र प्रवर्तते न तु यथाशक्ति । न हि तत्राङ्गत्यागे प्रमाणमस्ति प्रधानवाक्यसंत्यागेऽप्यविरोधात् · न हि तस्यावश्यकत्वं केनचिदुक्तं यतः औदासीन्यं न लभ्येत · कामश्रुतिस्तु समर्थेऽपि·वर्तमाना अत्यर्थतां न जहातीति नाङ्गत्यागे प्रभवति · निमित्तश्रुतिस्तु निमित्ते सत्यक्रियमाणे नैमित्तिके पीड्येतेति वैषम्यम् । अतो निमित्ते सति नित्यस्यावश्यकर्तव्यत्वबलात्सर्वदा सर्वाङ्गोपेतस्य केनापि कर्तुमशक्यत्वाद्यथा शक्नुयात्तथा कुर्यादित्येवं कल्प्यते · काम्ये त्ववश्यकर्तव्यत्वाभावादेवं कल्पयितुं न शक्यते · अतः काम्यं विगुणं फलं न साधयत्येवेति सिद्धम् । ननु यद्येवम् तर्हि काम्यऽएवाश्वमेधपञ्चशारदीयादौ किमर्थं प्रायश्चित्तविधानमित्याशङ्कायामाह ·

प्रायश्चित्तं तत्कालम् ॥२२॥ आरब्धं हि काम्यमयथाकरणादिना विगुणमपि असमापने शिष्टविगर्हणादूपाद्दिष्टाचारात्स्मृतिं स्मृतेश्च[1] श्रुतिं कल्पयित्वा अवश्यं समापनीयमेव। विगुणाच्च यद्यपि श्रुतं फलं न भवति तथापि तादृशात्प्रत्यवायपरिहारो भवत्येव। अत एव तत्कालम् तस्य काम्यस्य कर्मणो विनाशकाले यत्प्रायश्चित्तम् तत्तस्य विनष्टस्य कर्मणः प्रत्यवायपरिहारजनने उपकारकत्वात्स्वार्थकमेव भवति। ननु भवतु प्रायश्चित्तविधानमर्थवत् विगुणायामपि असमाप्तायां कारीर्यां वृष्टिरूपफलदर्शनस्य का गतिरित्याकाङ्क्षायामाह ·

दृष्टे तत्परिमाणम् ॥२३॥ कृतार्धायामिष्टौ वर्षणे दृष्टे सति तत्परिमाणमेव कर्म कर्तव्यं यत्परिमाणमदृष्टे वर्षणे क्रियते · न तु वृष्टौ दृष्टायां किमप्यूनं कृतार्धं वा परित्याज्यमिति · न च वर्षणं तस्या इष्टेः फलम् किंतु कालस्वभावात्प्रतिबन्धकापगमाच्च। काम्यस्य कर्मणो वीतायां फलेच्छायामवाप्ते वा फले अवश्यसमापनीयत्वं च जैमिनिनोक्तं षष्ठस्य द्वितीये चरणे (६. २. १०.) प्रक्रमात्तु नियम्येतारम्भस्य क्रियानिमित्तत्वादिति[2] ॥ अथवा एवं व्याख्या · वर्षणे दृष्टे सति तत्परिमाणमेव कर्म कर्तव्यम् · यावत्परिमाणे कृते वृष्टिर्दृष्टा तावत्परिमाणमेव कार्यं न समापनीयमित्यर्थः यदि वर्षेत्तावत्येव जुहुयादिति वचनात् · तथा चोक्तं कर्काचार्यैः तत्र तावत्प्रमाणता कर्मण उच्यतऽइति ॥ द्वितीया कण्डिका ॥२॥

अथ पद्धतिः ॥

देवतोद्देशेन द्रव्यत्यागो यागः। ये च यागा यदाग्नेयोऽष्टाकपाल इत्यादिवाक्यैर्दर्शपूर्णमाससंयोगेनोत्पन्नास्ते दर्शपूर्णमासशब्दवाच्याः · तेषां च दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति फलसाधनत्वेन विधानात्प्रधानत्वम् इतरत्सर्वं तत्प्रकरणपठितमग्न्यन्वाधानादि ब्राह्मणतर्पणान्तं तदङ्गम् · अफलयुक्ताः प्रयाजादियागाः पूर्वाघारादिहोमाश्च तत्प्रकरणपठितास्तदङ्गम्। यत्र यजतिशब्दः श्रूयते तत्र तिष्ठता होमो वषट्कारेण प्रदानम् याज्यापुरोऽनुवाक्ये च एतावद्य-

---

1) ? चारातिंस्मृतेश्च २. 2) Thus also the text in the Çâstradîpikâ, but तन्निमित्तत्वात् the ms. of the Jaim. sûtra itself.

वति · यत्र च जुहोतिशब्दस्तत्रोपविष्टेन होतव्यं स्वाहाकारेण च । सर्वकर्मसु ऋत्विजो ब्राह्मणा एव भवन्ति · न क्षत्रियवैश्याः · तेषां हविःशेषभक्षणप्रतिषेधात् । काम्यानि कर्माणि फलेच्छायां सत्यां कर्तव्यानि नावश्यम् नित्यानि तु अग्निहोत्रदर्शपूर्णमासदाक्षायणाग्रयणपशुचातुर्मास्याग्निष्टोमादीनि [1] अवश्यं कर्तव्यानि अकरणे दोषश्रवणात् । सत्यवदनाधःशयनब्रह्मचर्यादिनियमा अवश्यमनुष्ठेयाः । गेहदाहभार्यागोषुयमजननादौ [2] कर्माङ्गविनाशादौ च यानि नैमित्तिकानि विधीयन्ते तान्यप्यवश्यमनुष्ठेयान्येव · न तेषामिच्छयानुष्ठानम् । नित्यानि कर्माणि अवश्यकर्तव्यत्वाद्यथाशक्त्यङ्गयुक्तान्यप्यनुष्ठेयानि · काम्यानि तु सर्वाङ्गोपेतानि यथाश्रुतान्येव यदा कर्तुं शक्यन्ते फलेच्छायां सत्यामपि तदैवानुष्ठेयानि नान्यथा ॥ ॥२॥

इति प्रथमस्य द्वितीया कण्डिका ॥ ॥

वाक्यप्रकरणाभ्यामङ्गविनियोग उक्तः । अधुना लिङ्गेन मन्त्राणां विनियोगं वक्तुकामोऽध्येतृप्रसिद्धांस्तान्मन्त्रानाह ·

ऋचो यजूꣳषि सामानि निगदा मन्त्राः ॥१॥ ऋगादयो निगदान्ताश्चत्वारो मन्त्राः । तत्रार्थवशेन वृत्तवशेन वा यत्र पादव्यवस्था सा ऋक् · तत्र समिधाग्निं दुवस्यतेत्यादौ यत्र प्रत्यक्षेण समाप्तोऽर्थो दृश्यते तत्रार्थवशेन पादव्यवस्था यत्र च क्रियापदानुपादानात्सुसमिद्धाय शोचिषे तं त्वा समिद्भिरङ्गिर इत्यादौ अपर्यवसितोऽर्थस्तत्र वृत्तवशेन पादव्यवस्था भवति · अतश्च यत्र नियताक्षराणि नियताश्च पादाः नियतानि चावसानानि सा ऋगित्युच्यते । अनियताक्षरपादावसानं यजुः । यद्यपि प्रगीतं मन्त्रवाक्यं सामेत्यभियुक्तप्रयोगः तथापि तत्र विशेषणं गीतिः विशेष्याण्यृगक्षराणि नागृहीतविशेषणा विशेष्ये बुद्धिरिति प्रथमप्रतीयमानत्वात् गीतिरेव सामेत्युच्यते · तथा च कवतीषु [3] रथन्तरं गायति यद्योन्यां तदुत्तरयोर्गायति ऋच्यध्यूढं साम गायति प्रजापतेर्हृदयमनृच गायतीत्याद्युपपन्नं भवति · अत ऋगक्षरातिरिक्तं यद्गीतिशब्दवाच्यं तत्सामशब्देनोच्यते ·

---

१) °ग्निहोमादीनि २. ३. °ग्निहोमसोमादीनि २. २) यमलजननादौ १. यमजननहानौ ३.
३) कद्वतीषु ?

ननु यदि रथन्तरादिशब्दा गीतेरेव वाचकास्तदा रथन्तरेण स्तुवीतेति कथं स्तुतिसाधनत्वम् गुणगुणिसम्बन्धकीर्तनं हि स्तुतिः सा च गीतिरूपेण साम्ना न सम्भवति उच्यते गीतेः स्वयं स्तुतिवाचकत्वाभावादृगक्षरप्रकटनद्वारा स्तुतिसाधनत्वं भवतीति नोक्तदोषः । निगदाः प्रैषाः परसम्बोधनार्थाः प्रोक्षणीरासाद-या[ग्नीद्]ग्नीन्विहरेत्येवमादयः (२.६.३४. ३.७.५) · ननु निगदा अपि यजूंष्येव ततः किमर्थं पृथगुक्ताः उच्यते उपांशु यजुषा उच्चैर्निगदेनेति धर्मभेदेन यजुःष्वनन्तर्भावशङ्कया पृथग्वचनम् · वस्तुतस्तु निगदानां यजुष्ट्वमेव · परसम्बोधनार्थत्वादुच्चैर्निगदेनेति धर्मभेदः · न च धर्मभेदाद्भेदः ऋक्सामयोरपि क्वचिदुपांशुप्रयोगविधानात् । अतस्त्रैविध्यमेव मन्त्राणाम् । तथा चोक्तम् अहे बुध्न्य [1] मन्त्रं मे गोपाय यमृषयस्त्रैविदा विदुः ऋचः सामानि यजूंषीति · त्रीन्वेदान्विदन्तीति त्रिविदः त्रिविदां सम्बन्धिनोऽध्येतारस्त्रैविदाः ते च यं मन्त्रभागमृगादिरूपेण त्रिविधमाहुस्तं गोपायेति योजना ॥ ऋग्यजुःसामात्मको मन्त्रभेदोऽभिहितः · तदवान्तरभेदाकाङ्क्षायामृचां च साम्नां चाध्येतृप्रसिद्ध्यैव भेदे सिद्धे लक्षणं न क्रियते · यजुषां तु प्रश्लिष्टपठितत्वाल्लक्षणं विना भेदो न ज्ञायतऽइत्यत आह ·

तेषां वाक्यं निराकाङ्क्षम् ॥ २ ॥ तेषामिति तच्छब्देन यजुषां निर्देशः ऋचां साम्नां च भेदे लक्षणापेक्षाभावात् । ननु यजुषामपि भिन्नप्रतीकनियोगाद्भेदः सेत्स्यति · सत्यम् · न तावत्सर्वेषां ब्राह्मणेन विनियोगोऽस्ति · न च परादिना पूर्वान्त (१.३.१.) इत्येतल्लक्षणं वेदवचनम् न्यायेन तु सूत्रकृतेदमुक्तमिति · अतो लक्षणमुच्यते । तेषां यजुषां प्रश्लिष्टपठितानां मध्ये यावत्पदवृन्दं निराकाङ्क्षं पूर्वापरपठितपदान्तराकाङ्क्षारहितम् तावत्पदसमूहात्मकमेकं वाक्यम् ईदृशमेकं यजुः अर्थादतोऽन्यद्वाक्यान्तरं यजुरन्तरं चेत्युक्तं भवति । सर्वमन्त्राणामनेन यजेतानेन यजेतेति प्रथमं प्रकरणाम्नानानुमितवाक्यविनियोगो भवति · ततः सान्नाय्यागसम्बन्धासम्भवात्तदुपकारिप्रकाशनं [2] तैरिष्टं भवतीत्येवं कल्प्यते · तेन यावता पदसमूहेन यागसाधनं स्मर्यते तावद्यजुर्वाक्यम् · वचनार्हं हि वाक्यम् कार्यसमर्थं च तदर्हं भवति न न्यूनमधिकं वा तच्चैकार्थं साकाङ्क्षावयवं च ·

[1] अहिर्बुध्न्य २, but see Roer's Edit. of the Taitt. Saṃhitá p. 28. [2] ? °शने २.

तद्यथा देवस्य त्वा सवितुः प्रसवऽइति · अत्र हि सर्वाणि पदानि ग्रहणप्रकाशनार्थानि अत एकार्थानि साकाङ्क्षाणि च तस्मादिषामेव यजुष्ट्वम् · एवं सर्वत्र पुरस्तात्परस्ताच्चैकार्थपदपरिग्रहेणासमर्थपदविमोकेन भिन्नानि यजूंषि कल्प्यन्ते · एकप्रयोजनं साकाङ्क्षं पदजातमेकं यजुरित्युक्तम् । अनेन लक्षणेन यत्र समवेतार्थप्रकाशकं गृह्णामीत्यादिकं पदमस्ति तत्रैतत्सुगमं परिमाणम् । अथ यत्र समवेतार्थपदाभावाल्लैङ्गिकविनियोगाभावे [1] वाचनिक एव विनियोगः परस्परनैराकाङ्क्ष्यं च स्वरूपतोऽवगम्यते यथेषे त्वोर्जे त्वेति यथा चायुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामिति तत्र कियदेकं यजुरिति चिन्त्यते । किं प्राग्दृष्टार्थमन्त्रावधेरेकमन्त्रत्वम् उत यावदेव मिथःसम्बन्धम् इषे त्वेति तावत् एकं यजुः अन्यत्तु यजुरन्तरमिति · तदर्थं च किं सर्वमेकार्थमुत भिन्नार्थमिति विचारः । तत्र तावदनुष्ठेयार्थाप्रकाशनादिषामदृष्टार्थत्वम् · अदृष्टं चात्र कल्प्यमानमेकमेव कल्प्यम् तावताप्युपपत्तेः बह्वदृष्टकल्पनाया निष्प्रामाणिकत्वाच्च · अतः सर्वेषामेकार्थत्वात् प्रत्येकं साधनशक्त्यभावात्संहत्यकारित्वात् [2] विभज्यमानानां साकाङ्क्षत्वमस्तीत्येकवाक्यता । कथं पुनरेकत्वपक्षे प्रतीकभेदेन विनियोगः इषे त्वेति शाखां छिनत्ति ऊर्जे त्वेत्यनुमार्ष्टीति · कथं च क्लृप्तीर्वाचयतीति (५. २. १. ३.) बहुत्वनिर्देशः · उच्यते · आदिमध्यावसानग्रहणेनैकोऽपि मन्त्रस्तत्र-तत्र विनियुज्यमानो न पीड्येत यावद्विनियोगं सकल आवर्तिष्येत खण्डस्याप्रयोजनत्वात् · कल्पतां कल्पतामिति च पुनःपुनः प्रयोगादेकवाक्यत्वेऽपि बहुवचनाविरोधः । तस्मादेतेषामेकार्थत्वमेकमन्त्रत्वं चेति प्राप्तऽआह ·

मिथःसम्बद्धम् ॥ ३ ॥ यावदेव मिथःसम्बद्धं परस्परं सम्बद्धमन्वययुक्तम् इषे त्वेत्येतावत् तावदेकं यजुः एकं वाक्यम् ततोऽन्यद्वाक्यान्तरं यजुरन्तरमिति । यद्यपि एषां समवेतार्थप्रकाशकपदार्थत्वाददृष्टार्थत्वम् तथापि न तस्यादृष्टस्यैकत्वम् · यतो विनियोगप्रयोजने रूपादुत्तरकाले · न हि विनियोगप्रयोजनोत्तरकालं रूपनिरूपणं युक्तम् अज्ञातरूपस्य विनियोगाशक्तेः अविनियुक्तस्य च प्रयोजनकल्पनानुपपत्तेः · रूपं तु निरपेक्षं पाठादवधार्यते · तत्कालावधृतभेदानु-

१) °तार्थपदभावा° २. २) ? °त्संहत्यका° २.

वर्तित्वं च प्रयोजनविनियोगयोः · प्रमाणवशाच्च बहून्यप्यदृष्टानि कल्प्यन्ते · तदु-क्तम् प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपीति । न च रूपोपलब्धिवेला-यां परस्परसाकाङ्क्षत्वमेकप्रयोजनत्वं चोपलभ्यते · ततश्च निर्विरोधे भेदे निर्धारिते पश्चादेकत्वोपादानकारणं [1] किमपि न सम्भवति · न च प्रागनुपलब्धं साकाङ्क्षत्वं पश्चात्कल्पयितुं शक्यते । न चैतेषामदृष्टार्थत्वं च ब्राह्मणोपदिष्टदृष्टार्थसाधनत्वात् · तथा हि इषे त्वेति मन्त्रः शाखाछेदने करणत्वेन ब्राह्मणेऽउपदिष्टः · क्रियानि-ष्पादकं च करणम् न च मन्त्राणां क्रियानिष्पादकत्वं तत्प्रकाशनादन्यत्किमपि सम्भवति तेन विधिबलादेषां प्रकाशनार्थत्वम् · ततश्च तद्बलेनैव चैतेषां या-वता विना विहितप्रकाशनसामर्थ्यं नास्ति तावदनाम्नातमपि अध्याहर्तव्यम्, छि-नद्मीत्यादि । यद्वा यथैव [2] रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोतीति वचनादवा-चकस्यापि विनियोगानुसंधानेन स्तोत्राभिमुख्यचिह्नत्वं भवति एवमिषे त्वेत्या-दीनां छेदनादिस्मरणहेतुत्वम् । उभयमपि चैतत्प्रमाणवदिति सूत्रकारैः कैश्चित्कथं-चिदाश्रितम् । सर्वथात्रैवमध्यवसातव्यम् [3] · विकलवाक्यप्रयोगासम्भवादवाचक-प्रयोगानुपपत्तेश्चाध्याहारः · यथाम्नातविनियोगानुसारात्तादृशेनैव स्मर्तुः संस्कारा-धीनेन भवितव्यम् [4] तत्रानुष्ठात्रभिप्रायाधीनोऽन्यतरपरिग्रह इति तन्त्रटीका-याम् । तत्रैकेन छेदनं प्रकाश्यते अन्येनानुमार्जनमिति दृष्टप्रयोजनभेदादपि सिद्धो वाक्यभेदः · तथा आयुर्यज्ञेन कल्पतामित्यादीनामपि स्वरूपतो निराकाङ्क्षत्वात् क्लृप्तीर्वाचयतीति क्लृप्तीर्बहुवचनस्य चोदितत्वात्तत्सम्पत्त्यर्थमायुरादिविशिष्टक्लृप्तिभे-दप्रकाशनपरत्वादर्थभेदेन मन्त्रभेदः॥ तदेवं साकाङ्क्षस्य यजुषो विहितार्थप्रकाशक-त्वनिर्वाहयोग्यपदाध्याहारऽउक्तेऽपि यत्र संनिहिते वाक्ये मन्त्रशेषो दृश्यते सा-काङ्क्षे च मन्त्रे तादृश एवापेक्ष्यते · तद्यथा अस्मादन्नादस्यै प्रतिष्ठायाऽइत्यादौ (२. २५.) तत्र किं लौकिकः शेषोऽध्याहार्यः उत यः पूर्वमन्त्रानन्तरपठितः निर्भक्तो योऽस्मान्द्वेष्टीत्यादिः स एवानुषञ्जनीय इति · किं प्राप्नोति · लौकिकोऽनुषञ्ज-नीय इति · लौकिको हि शब्दः सर्वार्थो यथेष्टं सर्वत्र विनियुज्यमानो न विरु-

---

1) ? °कत्वापादान° २. 2) ? यदैव २. 3) ? °त्रैकमध्य° २. 4) ? स्मर्तुं संस्काराधाने पतितव्यं २.

ध्यते · वैदिकस्तु यदर्थमाम्नातस्तेनैव निबद्धो नान्यत्र नेतुं शक्यते · तस्माल्लौकिक इति प्राप्तऽउच्यते वेदेनैवापेक्षितरूपे वाक्यशेषे समर्पिते निष्प्रमाणलौकिकशेषकल्पनं न युज्यते · तस्माद्वैदिक एव निर्भक्त इत्यादिः शेषोऽस्माद्न्नादित्यत्रानुषञ्जनीयः अस्यै प्रतिष्ठायाऽइत्यत्र च । नन्वध्याहारानुषङ्गयोः को विशेषः · उच्यते · अध्याहारो लौकिकः अनुषङ्गस्तु वैदिक इति · प्रयोजनमेतच्चिन्तायाः अध्याहारविनाशे स्मार्तं प्रायश्चित्तम् अनुषङ्गविनाशे तु श्रौतमिति । एवमूहप्रवरनाम्नां लौकिकत्वं न मन्तव्यम् · सं ते प्राणो वातेन गच्छतामित्यत्र (६.१०.) गच्छतामित्येतत्पदमेकवचनान्तत्वात्समङ्गानि यजत्रैरित्यत्रान्वेतुमयोग्यत्वान्नानुषज्यते · तद्व्यवायेन बुद्धिसंनिध्यभावाच्च सं यज्ञपतिराशिषेत्यत्रापि नानुषज्यते · तेनानयोर्गच्छतां गच्छतामित्यध्याहारौ यथाक्रमं कार्यौ ॥ तत्राध्याहारपक्षाश्रयणे सौकर्याय ते प्रदर्श्यन्ते । तत्र दर्शपूर्णमासयोरिषे त्वेत्यत्र छिनद्मीत्यध्याहारः ऊर्जे त्वेत्यत्र संनमयामीति इमावध्याहारौ सूत्रकृतैवोक्तौ (४. २. २-३.) । कर्मणे वामित्याददे इति १.६. । उरु वाताय भवेति १.९. · प्रेक्षे इति केचित् । भूताय त्वा नारातये परिशेषयामीति १.११. । प्राणाय त्वेत्यादिषु त्रिषु पिनष्मीति १.२० । चक्षुषे त्वेत्यत्र ईक्षे इति १.२०. । इषे त्वेत्यत्राधिश्रयामीति १.२२. । त्रिताय त्वेत्यादिषु निनयामीति १.२३. । ऊर्जे त्वेत्यत्रोद्वासयामीति १.३०. । सं ज्योतिषा ज्योतिर्गच्छतामिति च[१] २.१. । वसुभ्यस्त्वेत्यादिषु अनज्मीति २.१६. । सं गच्छतां यज्ञपतिराशिषेति च ६.१०. । वरुणप्रघासेषु अनु त्वा देववीतये हरामि ५.१. · भूतेभ्यस्त्वा उच्छामीति च ५.१२. । पशौ विष्णवे त्वा उपस्पृशामि ५.१८. · दिवे त्वेत्यादिषु प्रोक्षामीति ५.२६. · सुपिप्पलाभ्यस्त्वौषधीभ्यः प्रतिमुञ्चामीति ६.२. · यूपायोच्छ्रीयमाणाय ६.३.६. · यूपाय परिवीयमाणायेति च ६.३.१४. । अग्निमन्थने अग्नये जातायेति ५.२.३. · अग्नये प्रह्रियमाणायेति ५.२.४. । पशुसमञ्जने सं गच्छन्तामङ्गानि यजत्रैः सं गच्छतां यज्ञपतिराशिषेति ६.१०. । शेषनिषेके शमहोभ्यो निषिञ्चामीति ६.१५. । सोमे स्वाहा यज्ञं मनस इत्यत्र आरभऽइत्यनुषङ्गः ४.६. · स्वाहोरोरिति स्वाहा द्यावापृथिवीभ्यामित्यनयोर्यज्ञमारभऽइति ४.६. ·

१) वा २.

स्वाहा वातादित्यस्यां यजमिति ४. ६. · ते रायः सन्तु मे रायः सन्त्विति ४. २२. · प्रजाभ्यस्त्वा बध्नामीति ४. २५. । हविर्धाने स्थूणानिखनने विष्णवे त्वा उपनिहन्मीति ५. १८. । तन्नौ सहास्तु ८. ५. १८. · तन्मेऽस्त्विति च ८. ५. २१. सुत्यायाम् । सोममाने इन्द्राय त्वेति पञ्चसु मिमे इति ६. ३२. । देवेभ्यस्त्वा मरीचिपेभ्य उपमार्ज्मि इति ७. ३. । ग्रहसादनमन्त्रेषु प्राणाय त्वेत्यादिषु ७. ३. साकाङ्क्षेषु सर्वत्र सादयामीति · ग्रहग्रहणमन्त्रेषु च सर्वेषु साकाङ्क्षेषु गृह्णामीति उपांश्वन्तर्यामाग्रयणोक्थ्यध्रुववर्जम् ७. १. ७. ४. ७. २०. ७. २२. ७. २५. · शुक्रामन्थिसादने सादयामीत्यस्याभावः ७. १२. ७. १६. । महावीरसम्भरणे पिण्डादेः आदाने मखाय त्वा मखस्य त्वा शीर्ष्णे आददे इति परिगृह्णामीति वा ३७. ३. · सम्भाराभिमर्शने मखाय त्वा मखस्य त्वा शीर्ष्णे अभिमृशामि ३७. ४. · निधाने निदधामीति ३७. ४-७. · संसर्गे संसृजामीति ३७. ७. · करणे करोमीति ३७. ७. · अन्तिमाभिमर्शने अभिमृशामीति ३७. ८. · श्लक्ष्णने श्लक्ष्णयामीति ३७. ८. · प्रदहने प्रदहामीति ३७. ९. · ऋजवे त्वेत्यादिषु उद्वपामीति ३७. १०. · अजापयोऽवसेके अवसिञ्चामीति ३७. १०. · यमाय त्वेत्यादिषु प्रोक्षामीति ३७. ११. · मधु मधु मधु आधूनोमि उपवाजयामि इति वा ३७. १३. । चयने प्राणभृच्छन्दस्याविराजामुपधानमन्त्रेषु १३. ५४. १४. १८. १५. ४. मया उपधीयतऽइत्यध्याहारः · प्राणभृत्सु पञ्चस्वपि कण्डिकासु १३. ५४-५८. दशमे-दशमे मन्त्रेऽध्याहाराभावः गृह्णामीत्यनेन निराकाङ्क्षत्वात् · आशुस्त्रिवृदिति कण्डिकापठितेषु धर्त्र चतुष्टोम इत्यन्तेषु च १४. २३. मया उपधीयतऽइति · वालखिल्यासु च आयुषे त्वेत्यादिषु १४. २१. त्वान्तेषु अष्टासु मन्त्रेषु उपदधामीति · यन्त्री राडित्यत्रासीति १४. २२. मूर्धासि राडित्यत्रासीति दर्शनात् १४. २१. अस्याप्यनेन समानार्थत्वात् · पशुशिरसि नासिकयोश्चक्षुषोश्च हिरण्यशकलप्रासने प्रास्यामीत्यध्याहारश्चतुर्षु मन्त्रेषु ऋचे त्वा प्रास्यामीत्यादि १३. ३९. · अग्निर्ज्योतिषेत्यस्यां ते अस्त्विति १३. ४०. · पुरुषशिरस उद्ग्रहणे सहस्राय त्वा उद्गृह्णामीति १३. ४०. · हिरण्यशकलप्रोक्षणे पञ्चमे मन्त्रे सहस्राय त्वा प्रोक्षामीति १५. ६५. · अश्मंस्ते क्षुदस्तु मयि तऽऊर्गस्तु इति १७. १. । वाजपेये ऐन्द्रेषु ग्रहेषु ९. २. ९. ४. ग्रहणे नाध्याहारः · अन्येषु सर्वेष्वपि ग्रहणे सादने च गृह्णामि सादयामीति

च · ऐन्द्रेष्वपि सादनमन्त्रेषु भवत्येव · सप्तदशसु ग्रहेषु १. ३१ - ३४. सादनऽएव एष ते योनिः सादयामीत्यध्याहारः न ग्रहणे । एवं सौत्रामण्यां च ग्रहणे सादने च । अङ्गालम्भनमन्त्रेषु वक्ष्यते । पितृमेधे अग्नेर्भ्राजसा सूर्यस्य वर्चसेत्यनयोः ३५. ३. पुनातुपदस्यानुषङ्गः ॥ तदेव मन्त्रस्वरूपे तद्भेदे चोक्ते तेषां प्रकरणप्रमाणेन सामान्येन विनियोगे सिद्धेऽधुना लिङ्गप्रमाणेन विशेषविनियोगमाह ·

तेषामारम्भेऽर्थतो व्यवस्था तद्वचनत्वात् ॥४॥ तेषां मन्त्राणामारम्भे प्रयोगे अर्थतो विहितार्थाभिधानरूपेण सामर्थ्येन लिङ्गेन अनेन मन्त्रेणायं पदार्थः कर्तव्यः अनेनायमित्येवंरूपा व्यवस्था भवति · यो मन्त्रो यत्पदार्थाभिधानसमर्थः स तत्र विनियुज्यतऽइत्यर्थः । कुतः तद्वचनत्वात् तमेवार्थं वक्तीति तद्वचनः तस्य भावस्तत्त्वं तस्मात् यतस्तमेवार्थं वक्तुं शक्नोति नार्थान्तरम् · यथा उरुप्रथा उरु प्रथस्वेति (१. २२.) अयं प्रथनमेवाभिधातुं समर्थः अतस्तत्रैव विनियुज्यते । ननु सूत्रकारः प्रतिपदार्थं मन्त्रविनियोगं वक्ष्यत्येव · किमर्थमिदमुक्तम् · अनुक्तसंग्रहार्थम् यथा प्रवत्स्यन्त्सर्वान्नर्येति प्रतिमन्त्रमित्यादौ (४. १२. १३.) ।

मन्त्रान्तैः कर्मादिः सांनिपात्योऽभिधानात् ॥५॥ कर्मसु ये मन्त्राः पठ्यन्ते तेषां मन्त्राणामन्तैः सह कर्मादिः क्रियमाणस्य कर्मणः आदिः सांनिपात्यः संयोजनीयः । कुतः अभिधानात् · यतो मन्त्रः पठित एव सन्कर्माभिदधाति वक्ति नान्यथा ततो मन्त्रेण स्मारितं सत्कर्मानुष्ठीयते । सकलस्य मन्त्रस्य विनियुक्तत्वात्सकलेन सम्पादितं स्मरणं कर्माङ्गम् · अतः सकलस्य मन्त्रस्य समाप्तौ तज्जनितं स्मरणं यावदेव नापभ्रष्टम् तावदेव प्रयोगः कर्तव्यः · तेन मन्त्रान्तस्य कर्मादेश्च संनिपातः ।

अनियमं वात्स्यः ॥६॥ वात्स्य आचार्यो मन्त्रप्रयोगस्य कालानियमं ब्रवीति पूर्वं क्रियमाणे वा कृते वा कर्मणि मन्त्रः पठितव्य इति · मन्त्रस्य कर्माभिधायकत्वमेवमपि भवत्येव । अथ सिद्धान्तमाह ·

आदिं त्वाचार्याः ॥७॥ तुशब्दो वात्स्यमतनिरासार्थः · आचार्याः सर्वेऽपि मुनयः कर्मण आदिमेव मन्त्रान्तैः सह योजयन्ति नानियमः · यतो मन्त्रेण स्मृतं कर्म कर्तव्यम् । तदुक्तम् अनुष्ठाने पदार्थानामवश्यंभाविनी स्मृतिः

अनन्यसाधनानन्यकार्यैर्मन्त्रैः प्रसाध्यते · न तावदनुष्ठानवेलायामस्मृतः कश्चिदपि पदार्थः शक्यः कर्तुमित्यवश्यंभाविन्या स्मृत्या योग्यसाधनमात्रापेक्षणाद्यत्किंचिद्ब्राह्मणपदार्थानुसंधानं वा पूर्वपदार्थप्रत्यर्थप्रत्यवेक्षणं वा सूत्रग्रन्थो वा आत्मीयग्रन्थौकवाक्यानि वोपदृष्टा वा साधनं ग्रहीतुमारभ्यते · तत्रानन्यप्रयोजना-न्प्रकरणे पठ्यमानानान्यत्किमप्येभिः[1] कर्तव्यमित्येवं प्रयोगवचनेन गृह्यमाणा-न्मन्त्रानुपलभ्य यादृशेन वाक्येन स्मृतिः कर्तुमाकाङ्क्ष्यते तादृग्रूपा एतऽइति विदित्वा लिङ्गप्रकरणानुमितया श्रुत्या विनियोगे सत्यभिधानार्थता विज्ञायते · ततश्चोपायान्तराण्यप्रमाणकत्वान्निवर्तन्ते · नियमादृष्टसिद्धिश्च · मन्त्रैरेव स्मृतं कर्म कृत्वाभ्युदयकारि भवतीत्यवधार्यते · यत्र च मन्त्रास्तत्र विधिवाक्येनैव तद-सम्भवे उपायान्तरेणापि पदार्थस्मृतिः कार्या ।

तऽआद्युक्ताः ॥ ८ ॥ ते मन्त्राः सूत्रमध्ये आद्युक्ताः आदिमात्रेणोक्ताः सन्तः प्रयोगकाले सकलाः प्रयोज्याः · न तु सूत्रमध्ये यावानवयव उच्यते तावन्मात्रा इति ।

परादिना पूर्वान्तः ॥ ९ ॥ परस्य मन्त्रस्य सूत्रोपात्तेनादिना चिह्नभूतेन पूर्वस्य मन्त्रस्यान्तो ज्ञेयः । नन्वेतन्न वक्तव्यम् वाक्यलक्षणेनैव मन्त्रान्तस्य सुगमत्वात् सत्यम् क्वचिद्वाक्यसमूहस्यैकमन्त्रत्वसिद्ध्यर्थं पुनरुच्यतऽइत्यदोषः · तद्यथा विश्वेषां देवानां भागधेयी स्थेति समाप्तेऽपि वाक्ये अमूर्या उप सूर्ये इत्यादि (६. २४.) प्रयुज्यते · यथा चाष्टगृहीतं जुहोति संततमुद्गृह्णन्युञ्जान इति (१६. २. ७.) अत्राष्टानामेकमन्त्रत्वम् · तथा देवस्य त्वेत्यभ्रिमादत्तेत्यत्र (६. २. ८.) त्रयाणां मन्त्रत्वम् · चित्यं गच्छन्ति पञ्च दिश इत्यादौ (१८. ३. १८.) च ।

उपांशुप्रयोगः श्रुतेः ॥ १० ॥ तेषां यजुषां यजुर्वेदमन्त्राणां कर्मसु उपांशुप्रयोगो भवति । कुतः श्रुतेः उच्चैर्ऋचा क्रियतऽउच्चैः साम्नोपांशु यजुषेति शाखान्तरे श्रवणात् · स्वशाखायामपि स उपांशु यजुर्भिश्चरतीत्यादिश्रुतेश्च (४. ६. ७. १८.) · अत्र[2] तेभ्यस्त्रयो वेदा अजायन्तेति वेदान्प्रक्रम्य मध्ये उच्चैर्ऋचा क्रियतऽइत्यादीनि वाक्यानि पठित्वा पुनरपि वेदेनैवोपसंहारोऽस्ति · तेनात्र ऋगादयः

---

1) ?? °न्समन्यः २· °न्सामान्यः २·    2) viz. शाखान्तरे·

शब्दा वेदोपलक्षकाः[1] तेन ऋचा ऋग्वेदेन विहितं साम्ना सामवेदेन विहितं चोच्चैः यजुषेति यजुर्वेदविहितं चोपांशु इति। अस्य सूत्रस्येष्टिपशुसोमव्यतिरिक्तं कर्माग्निहोत्रादिकं विषयः · एतेषु विशेषस्य वक्ष्यमाणत्वात्।·

न सम्प्रैषाः ॥ ११ ॥ सम्प्रैषाः निगदाः प्रोक्षणीरासादयाग्नीदग्नीन्विहर यजमान वाचं यच्छेत्येवमादयः (२.६.३४. १.७.५. २.३.२.) · याजुर्वैदिका अपि सम्प्रैषा उपांशु न प्रयोज्याः · अन्यबोधनार्था हि ते · न चोपांशूच्चारितैरेभिरन्यस्य बोधनं सम्भवति · तस्मात्तऽउच्चैरेव प्रयोज्याः ॥ ॥ शाखान्तरे दर्शपूर्णमासयोः श्रूयते बर्हिर्लुनानीति। तत्रेदं चिन्त्यते किं बर्हिःशब्दः संस्कारनिमित्त उत जातिनिमित्त इति। तत्र बर्हिःशब्दस्य शास्त्रे सर्वत्र संस्कृतेष्वेव तृणेषु प्रयोगात् यूपाहवनीयादिवत्संस्कारवाची बर्हिःशब्द इति प्राप्तऽआह ·

कौशं बर्हिः ॥ १२ ॥ बर्हिः कौशम् कुशा दर्भाः तस्येदं कौशम् कुशमात्रमेव बर्हिःशब्देनोच्यते न संस्कारः · कुतः अन्वयव्यतिरेकाभ्यां जातिवाचित्वाद्बर्हिःशब्दस्य · यत्र-यत्र बर्हिःशब्दप्रयोगस्तत्र तत्र जातिरित्यस्या व्याप्तेर्लोके वेदे च नास्ति व्यभिचारः · संस्कारव्याप्तेस्तु लौकिकप्रयोगे व्यभिचारो दृश्यते क्वचिद्देशविशेषे लौकिकव्यवहारे जातिमात्रमुपजीव्य विना संस्कारं बर्हिःशब्दः प्रयुज्यते बर्हिरादाय गावो गता इति · तस्माज्जातिवाची बर्हिःशब्दः असंस्कृतं कुशमात्रं बर्हिःशब्देनोच्यतऽइत्यर्थः। प्रयोजनम् बर्हींषि प्राच्युदञ्चि च प्रास्यतीत्यादौ (६.२.१८.) संस्कारा न कर्तव्याः। स्मृतौ कुशाभावे तु काशाः स्युः काशाः कुशसमाः स्मृताः काशाभावे ग्रहीतव्या अन्ये दर्भा यथोचिताः दर्भाभावे स्वर्णरूप्यताम्रैः कर्मक्रियाः सदा कुशकाशशरा दूर्वा यवगोधूमबाल्वजाः[2] सुवर्णं राजतं ताम्रं दश दर्भाः प्रकीर्तिताः स्नाने होमे तथा दाने स्वाध्याये पितृतर्पणे सपवित्रौ सदर्भौ वा करौ कुर्वीत नान्यथा सर्वेषां वा भवेद्द्वाभ्यां पवित्रं ग्रथितं न वा सपवित्रः सदर्भो वा कर्माङ्गाचमनं चरेत् नोच्छिष्टं तत्सदर्भं च दर्भोच्छिष्टं[3] तु वर्जयेदिति।

अर्थात्परिमाणम् ॥ १३ ॥ अग्न्यगारादौ वसोर्धाराहोमे च स्रुचः स्रु-

---

1) °पलक्षाः २. 2) ? बान्वजाः २. बाभ्रुजाः २. 3) भुक्तोच्छिष्टं marg.

वस्य च अर्थात्परिमाणं भवति · यावता परिमाणेनार्थः प्रयोजनं सिध्यति तावत्परिमाणं भवतीत्यर्थः परिमाणान्तरस्यानुक्तत्वात् । प्रयोगादृष्टिरेव शुष्केष्टिवद्याज्ञश्च मऽइत्यत आरभ्य वेठ्स्वाहेत्येतत्पर्यन्तं (१८. १-२१.) पठित्वा[१] कस्मिंश्चित्पात्रे संततं घृतं स्रुक्प्रणालिकया निनीय तस्याज्यस्य तोलनाद्युपायेन परिमाणं निश्चित्य तावदाज्यं यावत्परिमाणायां स्रुचि याति[२] तावत्प्रमाणां तां स्रुचं कुर्यात् तस्याज्यस्य पञ्चमभागसंग्राहकश्च स्रुवः कार्यः । एवं यदा षडुद्धप्रत्याम्नाये पावकेष्टिर्वैश्वानरेष्ट्यादिकं क्रियते तदापि वेदेः पश्चाद्भागोऽर्थात्तावत्परिमाणो विपुलः कार्यो यावति अवरोक्तमुत्तरं हविषीति न्यायेन (१. १०.५.) सर्वेषामुदक्संस्थमासादनं सम्भवति · तदनुसारेण प्राचीप्रमाणं पुरस्तात्तिर्यक्प्रमाणं च पादोनकल्पम् · तदुक्तं शतपथे (१. २. २. १४.) यावतीमेव स्वयं मनसा मन्येत तावतीं कुर्यादिति · सूत्रे चोक्तम् (५. ३. १५.) अपरिमिता वेति अपरिमितशब्दोऽत्र प्रमाणानियमपर इति वक्ष्यामः । एवं बर्हिर्हविर्द्रव्यपरिमाणानुक्तौ सर्वत्रोह्यम् ।

अयुग्धातूनि यूनानि ॥ १४ ॥ इध्मबन्धनबर्हिर्बन्धनार्थानि यूनानि संनहनानि रज्जवोऽयुग्धातूनि भवन्ति · धातवस्तृणमुष्टिप्रक्षेपाः अयुजो विषमा एकत्रिपञ्चसप्तनवादिविषमसंख्या धातवो येषां तान्ययुग्धातूनि । तथा चापस्तम्बः त्रिधातु पञ्चधातु वा शुल्वं करोतीति · शुल्वं रज्जुमित्यर्थः । पञ्चविंशतिकुशमयानि यूनानि इति यज्ञपार्श्वे[३] । तथा समूलानाममूलानां वा दर्भाणां पूर्ववत् शुल्वं कृत्वोदगग्रं निधायेतीध्मप्रस्तावे । मानवे च शुल्वं प्रतिदधात्ययुग्धातु प्रदक्षिणमिति । तित्तिरिसूत्रे[४] अथ त्रिरन्वाहितं शुल्वं कृत्वेति ॥ अथ बर्हिषो बन्धनप्रकारमाह ·

प्रागग्रे यूनऽउदगग्रं बर्हिराचिनोति ॥ १५ ॥ प्रागग्रे यूने प्रागग्रे संनहने बन्धनार्थायां रज्जौ उदगग्रं बर्हिराचिनोति बन्धनार्थं स्थापयति । अथेध्मबन्धनस्य प्रकारमाह ·

---

१) ? पर्यन्ते पठता २. २) स्रुति माति २. ३) But wanting in Chambers 358.
४) तैत्तिरि° २.

उदगग्रे प्रागग्रमिध्मम् ॥ १६ ॥ आचिनोतीत्यनुवर्तते · उदगग्रे यूने संनद्धे प्रागग्रमिध्ममाचिनोति बन्धनार्थं निदधाति ।

प्रत्यग्ग्रन्थीनवगूहति ॥ १७ ॥ इध्मबर्हिर्बन्धनार्थानां यूनानां ग्रन्थीन्प्रत्यगवगूहति यूनेन गाढं बद्धा यूनस्याग्रमूले संकल्प्य प्रदक्षिणमावेष्ट्य इध्मबर्हिषोरग्रभागे प्रोतयित्वा पश्चादिति तयोर्मूलभागे अवगूहति प्रेरयति · प्रत्यक्शब्देन इध्मबर्हिषोः पश्चाद्भागो मूलभाग इत्युच्यते दिग्वाचिनो बर्हिष्युदगग्रे निक्षिते असम्भवात् । काठके ग्रन्थिं कृत्वा पुरस्तात्प्रत्यञ्चमपकर्षतीति । मानवे शुल्वस्यान्तौ समायम्य पूषा ते ग्रन्थिमिति प्रदक्षिणमावेष्टयति पश्चात्प्राञ्चमपकर्षतीति [1]। तैत्तिरीयेऽपि पश्चात्प्राञ्चमुपगूहतीति । आपस्तम्बः पुरस्तात्प्रत्यञ्चं ग्रन्थिमुपगूहति पश्चाद्वा प्राञ्चमिति ।

अष्टादशेध्मं परिधिवृक्षाणाम् ॥ १८ ॥ परिधीनां [2] वृक्षाः पालाशवैकङ्कतादयः परिधिवृक्षाः · तेषां परिधिवृक्षाणां सम्बन्धिनमष्टादशसंख्यकाष्ठकमिध्मं कुर्यात् । मानवे समूलैर्दर्भैः पालाशं खादिरं रौहीतकं वाष्टादशदार्विध्मं संनह्यति त्रींश्च परिधीन्यो यज्ञियवृक्षस्तस्येति । काठके अष्टादशदारुं शुष्कं समानवृक्षस्य संनह्यति विंशतिमिष्टौ पशुबन्धे चेति । अत एव सामिधेनीविवृद्धौ काष्ठवृद्धिर्भवति ह्रासे च ह्रासो न भवति पित्र्यादौ · तथाह्यापस्तम्बः सामिधेनिविवृद्धौ काष्ठानि विवर्धन्ते प्रकृतितो [3] ह्रसमानासु प्रकृतिवदिति । उपसत्सु तु मात्रावदिध्माबर्हिरिति वचनात् (८. २. २४.) ह्रासः । इध्मप्रमाणं चारत्निरिति यज्ञपार्श्वे [4] निगमे च · प्रादेशद्वयमिध्मस्य प्रमाणं परिकीर्तितमिति कात्यायनः (कर्मप्रदीप १. ८. १२.) · तथा समित्पवित्रं वेदं च त्र्यं प्रादेशसंमितम् इध्मस्तु द्विगुणः कार्यः परिधिस्त्रिगुणः स्मृतः स्मार्ते प्रादेश इध्मो वा द्विगुणः परिधिस्तत इति ॥

एकविंशतिं वा ॥ १९ ॥ अथवा एकविंशतिमेकविंशतिसंख्यकाष्ठकमिध्मं कुर्यात् · तथा चापस्तम्बः खादिरं पालाशं वैकविंशतिदारुमिध्मं करोति ।

---

१) ?? °वेष्टयति सतेमा[त्स्थादितः २.] पश्चात्प्रा° २. २) परिधिनो २. ३) ?? सामिधेनिवृद्धौ काष्ठानि विवृद्धंते प्रकृति २. ४) But wanting in Chambers 358.

ततः परिधीनेके ॥ २० ॥ एके आचार्यास्तत एकविंशतिसंख्यकाष्ठकादिध्मात्त्रीणि काष्ठान्यरत्निमात्राण्येवोपादाय परिधीन्परिदधति · तद्धैकऽइध्मस्यैवैतान्परिधीन्परिदधतीति श्रुतेः (१. ३. ३. १८.) ॥ अथ विवमेवेदं सूत्रम् एकविंशतिं वा ततः परिधीनेक इति एके आचार्या विकल्पेन एकविंशतिसंख्यकाष्ठमिध्मं कुर्वन्ति तत इति तस्मादेवैकविंशतिकाष्ठकेध्मात्परिधीन्परिदधति च · एतदेव युक्ततरम् आपस्तम्बसूत्रे एकविंशतिकाष्ठानां विभागदर्शनात् । तथाचाहापस्तम्बः खादिरं पालाशं वैकविंशतिदारुमिध्मं करोति त्रयः परिधयः पालाशकार्ष्मर्यखादिरौदुम्बरबिल्वरोहीतकविकङ्कतानां ये वा यज्ञिया वृक्षा आर्द्राः शुष्का वा सत्वक्काः स्थविष्ठो[1] मध्यमोऽणीयान्द्राघीयान्दक्षिणार्ध्यो ह्रसिष्ठ उत्तरार्ध्यो द्वेऽआघारसमिधावनुयाजसमिदेकविंशीति समूलानाममूलानां वा दर्भाणां पूर्ववत्कुल्वं कृत्वोदगग्रं निधायेति । अत एवंविधमेकीयमतम् यदेकविंशतिकाष्ठक इध्मः तस्मिन्पक्षे चेध्मादेव त्रीणि काष्ठान्यादाय परिधिपरिधानमिति ॥ बन्धनानन्तरमिध्मबर्हिषोर्भूमौ निधानं न कार्यम् आपस्तम्बसूत्रे अनधो निदधातीत्युक्तवात् ॥ तद्धैकऽइध्मस्यैवैतान्परिधीन्परिदधतीत्यत्र (१. ३. ३. १८.) हरिस्वामिनः तद् तथा न कुर्यादनवक्लृप्ता हि तस्यैते भवन्तीति (१८.) बाहुमात्रैः परिधिभिरार्द्रैश्च भवितव्यम् इध्मस्तु शुष्क इन्धनवादेव द्विप्रादेशश्च तेन ते इध्मैकदेशभूताः परिधित्वायासमर्थाः[2] स्युः तदिदमाह अभ्याधानाय हीति (१८.) शुष्को ह्यसावाधेयः यावत्खरमात्रऽआहवनीयखरे सम्भवतीत्यभिप्रायः यस्तु परिधिबुद्ध्या आहरति सोऽवश्यं वेष्टनीयादग्निखरादतिरिक्तमेवाहरति अग्निवेष्टनं च दाहभयान्न शुष्कमिति तऽएवावक्लृप्ता इति ॥

अपरिमितं प्रणयनीयं त्रियूनम् ॥ २१ ॥ प्रणयनस्यायं प्रणयनीयः · तं प्रणयनीयमग्निप्रणयनार्थमिध्ममपरिमितमपरिमितकाष्ठकं त्रियूनं तिसृभिः संनहनरज्जुभिर्बद्धं कुर्यात् । त्रीणि यूनानि बन्धनानि यस्य स त्रियूनः तं त्रियूनमिति । अपरिमितत्वं च प्रागुक्तेध्मकाष्ठसंख्यापेक्षयातिशयेनाधिकसंख्यकाष्ठकत्वम् · तेन चतुर्विंशतिसामिधेनीको य इष्टकापशुस्तत्र सप्तविंशतिः काष्ठानि भवन्ति · ततश्च

1) ? प्रविष्ठो २. 2) · ? °त्वाद्यास° २.

प्रणयनीये ततोऽप्यधिकानि अष्टाविंशतिप्रभृतीनि इष्टासंख्यानि काष्ठानि भवन्ति।

निरूप्याज्यं वेदोऽसीति यजमानो वेदं करोति ॥२२॥ यजमान आज्यं निरूप्य प्रथमं वक्ष्यमाणप्रकारेणाज्यनिर्वापमाज्यस्थाल्यां कृत्वा वेदोऽसीत्यनेन मन्त्रेण (२.२१.) वेदं करोति। अस्य मन्त्रस्यानेकयजमानके ऊहो भवति · तेनावाभ्यां वेदो भूया इति द्वियजमानके · तेनास्मभ्यं वेदो भूया इति बहुयजमानके · देवपितृभ्यो वेदो भवेति पित्र्यायाम्। कीदृशं तमित्यपेक्षायामाह ·

कुशमुष्टिं सव्यावृत्तं वत्सज्ञानुं त्रिवृतं मूतकार्यं वा पशुब्रह्मवर्चसान्नाद्यकामा यथासंख्यम् ॥२३॥ पशुब्रह्मवर्चसान्नाद्यकामा यजमाना यथासंख्यं यथोपदेशक्रमेण एवमाकारं वेदं कुर्युः। तत्र पशुकामः कुशमुष्टिं सव्यावृत्तं प्रदक्षिणावृत्तं वत्सज्ञानुं वेदं करोति · अस्य निर्माणप्रकारः कठमैत्रसूत्रादिषु विलोकनीयः · ब्रह्मवर्चसकामः कुशमुष्टिं त्रिवृतं करोति अन्नाद्यकामो मूतकार्यम् · इति यथासंख्यशब्दार्थः। वत्सज्ञानुरिति वत्सज्ञानुसदृशः। त्रिवृत्त्रिगुणः · मौञ्जं त्रिवृद्रज्जव्यम् मुञ्जरज्जवस्त्रिवृतो मृद्दिग्धाः त्रिवृतं परिव्ययतीत्यादौ (६.३.१६.) तथैव दर्शनात् · मेखलायाम् वेणिं त्रिवृतमिति (७.३.२६.) पृथङ्निर्देशात्त्रिवृच्छब्देन वेण्याकारता यत्कैश्चिदुक्ता तत्केनाभिप्रायेणेति तऽएव विदुः। मूतो धान्यावापपात्रं तृणवर्त्यादिनिर्मितम् तद्वत्क्रियतऽइति मूतकार्यो मूताकार इत्यर्थः। तथा च मनुः वेदं करोति वत्सज्ञुं प्रसव्यमावेष्ट्य तूलैर्दक्षिणोत्तरतूलेषु शुल्वं प्रतिनिधाय त्रिरावेष्ट्य संनह्यत्युत्तरमुत्तरं प्रादेशमात्रे शुल्वात्परिवास्योत्करे मूलानि गमयति तूलानि निदधाति वेदं कृत्वा वेदिं करोतीति। तैत्तिरीये वेदं करोति वत्सज्ञानुं पशुकामस्य मूतकार्यमन्नाद्यकामस्य त्रिवृतं तेजस्कामस्योर्धाग्रं स्वर्गकामस्येति। लौगाक्षिः वेदं करोति दर्भमुष्टिं प्रसव्यमावेष्ट्योपभुज्याग्राणां शुल्वं कृत्वा त्रिः परिहृत्य गुणेषु शुल्वान्तमवकृष्यायम्य शुल्वात्प्रादेशे छित्त्वाग्राणीध्मे निधायोल्करे मूलानि ततो वेदिकरणमिति। आपस्तम्बश्च दर्भाणां वेदं करोति वत्सज्ञुं पशुकामस्य मूतकार्यमन्नाद्यकामस्य त्रिवृच्छिरसं ब्रह्मवर्चसकामस्य शुल्वात्प्रादेशे परिवास्य वेदपरिवासनानि निदधातीति · त्रिवृदेकशिराः त्रिवृच्छिराः त्रीणि शिरांसीति केचित् · कामाभावेऽप्येता आकृतयः अकामस्यान्यस्याविधा-

नात् · परिवासनानि सर्वाण्येव वेदाग्राणि · इति धूर्तस्वामिना व्याख्यातम् । अत एव सूत्रकृता वेदबन्धनं परिभाषायां सूत्रितम् वेदाकाराणां सर्वसाधारणत्वज्ञापनाय अन्यथा तु ते गोदोहनादिवद्गुणफलसम्बन्धात्प्रकृताविव निविशेयुर्न विकृताविति · तस्माद्दर्शपूर्णमासप्रकरणान्निष्कृष्यात्र सर्वसाधारणं परिभाषोपबन्धनमध्ये सूत्रितम् । वेदस्य प्रमाणं परिशिष्टऽउक्तम् वेदं समित्पवित्रं च त्रयं प्रादेशसंमितमिति ॥

आमुष्मादिति कर्मसु तच्च ॥ २४ ॥ कर्मसु पश्वादिषु यत्र-यत्र आ अमुष्मादित्येवमाङ्प्रयोगः क्रियते सूत्रमध्ये तद्यथा आ प्रयाजेभ्य आ इडाया आ वैश्वदेवादिति (६. ४. १. ३. १. ४. ६. १२. ८.) तत्र तत् चाप्यर्थे तदपि कर्म कर्तव्यत्वेन ज्ञेयं यदाङा सम्बद्धं प्रयाजादिकम् । सर्वत्राऽभिविध्यर्थो ज्ञेयो न मर्यादार्थः · यदाङा संयुक्तं तदपि कर्तव्यमध्ये ज्ञेयम् न त्ववधित्वेनेत्यर्थः ।

अन्तवचने च ॥ २५ ॥ शम्य्वन्तं भवतीडान्तं भवतीत्येवमादावन्तवचने (३. ७. १३. ५. ६. २५.) चकारात्तच्चेति पूर्वसूत्रादनुकृष्यते तदप्यन्तसंयुक्तं शम्य्विडादिकं कर्तव्यमध्ये ज्ञेयम् · न त्वन्तशब्दः समीपार्थे परिकल्प्यः[1] तत्समीपे ततोऽर्वाक्स्थातव्यमिति ॥

प्रतिकर्मोद्धरणमप्रसङ्गे ॥ २६ ॥ प्रतिकर्म कर्म-कर्म प्रति सर्वेषु कर्मसु पृथक्पृथगाहवनीयदक्षिणाग्न्योर्गार्हपत्यादुद्धरणं कर्तव्यम् न त्वाधानकालऽएवोद्धृतौ गार्हपत्यवत्सर्वं कर्म प्रति साधारणौ भवतः । परम् अप्रसङ्गे सति अन्यार्थमनुष्ठितस्यान्येनोपजीवनं प्रसङ्गः न प्रसङ्गः अप्रसङ्गस्तस्मिन्निति · तेन यदि दर्शपूर्णमासपश्वाद्यर्थमुद्धृतौ अनपवृत्तौ लभ्येते नित्यकर्मकाले तदा तत्कर्मार्थं पुनः पृथगुद्धरणं न क्रियते तयोरेव तदपि नियतकालीनं कर्म क्रियते · यथा अग्निहोत्रमागतोपस्थानादिकं च पुनराधानानन्तरं धारणे कृते विकृतेष्टिपशुचातुर्मास्यादिकं च ।

अपवृत्तकर्मा लौकिकोऽर्थसंयोगात् ॥ २७ ॥ अपवृत्तं समाप्तं कर्म यस्मिन्सोऽपवृत्तकर्मा आहवनीयो लौकिको भवति वैदिकमाहवनीयत्वं संस्कारद्रूपं

[1] परिकल्प्य २.

ततोऽवगच्छतीत्यर्थः । कुतः अर्थसंयोगात् यदर्थमुद्धृतस्तस्य तेनार्थेन प्रयोजनेन संयोगात् · तेन यत्कर्मार्थमुद्धृतस्तत्समाप्त्यनन्तरं लौकिको ज्ञेयः · अत ऊर्ध्वमाह्व-वनीयशब्देन विहितं कार्यं तत्र न कर्तव्यमित्यर्थः । अतश्च पौर्णमास्यादौ यदि बह्व्य इष्टयः पृथक्तन्त्राः क्रियन्ते तदा प्रतीष्टि पृथक्पृथगेवोद्धरणं कार्यम् न सकृ-दुद्धृतऽएव सर्वासामनुष्ठानमिति ।

अप्रकरणोत्पत्तिरनारभ्यवाद आश्रयित्वात्सर्वगुणः ॥२८॥ न विद्यते कस्यचित्कर्मणः प्रकरणे उत्पत्तिर्यस्य असौ अप्रकरणोत्पत्तिः · किंचित्कर्मारभ्यो-पक्रम्योच्यते उच्यतऽइत्यारभ्यवादः न आरभ्यवादोऽनारभ्यवादः । यथा[1] पर्ण-मयी जुहूर्भवति खादिरः स्रुवो भवतीत्यादिर्यो विधिः कस्यचित्कर्मणः प्रकरणे पठितो न भवति वाक्यान्तरेण च कर्मविशेषे विनियुक्तो न भवति अमु-ष्मिन्कर्मणि खादिरः स्रुवो भवतीत्येवंविधः यस्य प्रकरणेन वाक्येन चाङ्गत्वं न सम्भवति स एवंविधः पर्णमयीत्वखादिरत्वादिविधिः सर्वगुणो भवति प्रकृतेर्वि-कृतेश्च साधारण एवोपदिष्टो भवति । कुतः आश्रयित्वात् आश्रयोऽस्यास्तीत्या-श्रयी तस्य भावस्तत्त्वं तस्मात् जुह्वां स्रुवे चाश्रितत्वात्पर्णमयीत्वखादिरत्वादेः । यतोऽव्यभिचरितक्रतुसम्बन्धवतीं जुहूमाश्रित्य तद्धेतुः पर्णवृक्षो वाक्येन विधी-यते या जुहूः सा पर्णमयीति एवमव्यभिचरितक्रतुसम्बन्धवन्तं स्रुवमाश्रित्य तत्प्रकृतिभूतः खादिरवृक्षो वाक्येन विधीयते यः स्रुवः स खादिर इति · वाक्यं च प्रकृतिविकृत्योस्तुल्यमेव वर्तते उभयत्राश्रयभूतयोः स्रुवजुह्वोः सत्त्वात् · अतः खादिरत्वस्य पर्णमयीत्वस्य चाश्रयित्वात्स्रुवजुह्वाश्रितत्वात् स्रुवजुह्वोश्च प्रकृतिविद्य-मानत्वात् एवंविधोऽनारभ्यवादः सर्वगुणः प्रकृतिविकृत्योरुभयोरप्यङ्गमिति प्राप्ते सिद्धान्तमाह ·

प्रकरणे चाविशेषात् ॥२९॥ चकारोऽवधारणे निपातानामनेकार्थ-त्वात् · प्रक्रियन्तेऽस्मिन्धर्मा इति प्रकरणं प्रकृतिः · अप्रकरणोत्पत्तिरनारभ्यवाद-रूपो विधिः प्रकरणऽएव प्रकृतावेव निविशते नोभयत्र प्रकृतौ विकृतौ चेति । कुतः अविशेषात् यतश्चोदकः प्रकृतितः सर्वमङ्गजातं प्रकरणपठितमनारभ्य-

1) ? यस्य २.

वादप्रापितं चाविशेषेण विकृतौ प्रापयति । तथा हि किमयं विधिर्विकृतौ चोदकात्पूर्वं निविशते पश्चाद्वा · नाद्यः आश्रयभूतयोः स्रुवजुह्वोश्चोदकमन्तरेणासम्भवात् अतोऽनेन विधिनाश्रयभूतस्रुवजुह्वलाभार्थं विकृतौ चोदकप्रवृत्तिः प्रतीक्षणीया · पश्चादयं विधिर्निविशतऽइति द्वितीयपक्षे पर्णत्वं खादिरत्वं च जुह्वा स्रुवेण च सहैव चोदकेनातिदिश्यते · तत्र चोदकेन प्रापिते सति यद्यनारभ्यविधिः पुनः प्रापयेत द्विरुक्तितादोषः स्यात् अतश्चोदकेन प्रापितत्वात्पुनर्विधेर्वैयर्थ्यादनारभ्यविधेः प्रकृतावेव निवेश इति सिद्धान्तः । ननु विकृतावनारभ्यविधिनैव पर्णमयीत्वे खादिरत्वे च प्रापिते पश्चाच्चोदकस्तद्वर्जमङ्गानि प्रापयिष्यति एवं द्विरुक्तितादोषो न भविष्यति · मैवम् · यतो वैकृतस्य प्रधानस्य अनारभ्यविधिं प्रत्यपेक्षा नास्ति चोदनासारूप्याभावात् निराश्रयस्य पर्णत्वादेर्विधातुमशक्यत्वाच्च । अतो वैकृतं प्रधानं धर्मापेक्षं सच्चोदनासारूप्यात्प्राकृतानेव [1] धर्मान्प्रथमं गृह्णाति तदन्तर्भूतं पर्णत्वादिकं चेति सिद्धम् ।

दर्शनाच्च ॥३०॥ . विकृतौ प्रयाजादीनां प्राकृतानां धर्माणां दर्शनादप्येवं ज्ञायते यदनारभ्यवादा विकृतौ चोदकात्पूर्वं न निविशन्तऽइति · यदि पूर्वं निविशेयुस्तदा वैकृतं प्रधानमनारभ्यविधिनैव पूरितं सन्निराकाङ्क्षत्वात्प्राकृतान्यङ्गानि न गृह्णीयात् तदा च विकृतौ प्रयाजादीनां प्राकृतानां दर्शनं न स्यात् · अस्ति च · तथा ह्यश्वमेधे ऽथ सावित्रीमिष्टिं निर्वपतीति (१३. ४. २. ६.) प्रकृ[त्य] तस्यै प्रयाजेषु तायमानेष्विति (८.) अत्र गाथागानविधिपरे वाक्ये प्राकृतान्प्रयाजान्दर्शयति · पित्र्यायां च स तत एव प्राक्स्तम्बयजुर्हरतीत्यत्र (२. ६. १. १२.) स यज्ञोपवीती भूत्वाज्यानि गृह्णातीति (१२.) यज्ञोपवीतित्वविधिपरे वाक्ये बहून्प्राकृतान्पदार्थान्दर्शयति · ते च प्राकृतधर्मसापेक्षत्वे एव प्रयुज्यन्ते नान्यथा तस्मादनारभ्यवादाः प्रकृतावेव निविशन्तऽइति सिद्धम् । उदाहरणान्तरं च · ताण्ड्ये अनारभ्याधीताः प्रतिपत्पक्षाः सन्ति · ते यदि सर्वार्थाः तर्हि विकृतावपि ते भवन्ति यदि प्रकृताविवानारभ्यविधेर्निवेशः तदा तेषां प्रतिपत्पक्षाणां विकृतावप्रयोगः पुरुषार्थत्वेन विकृतौ प्राप्त्यभावादिति ॥ ॥

---

1) ? सचोद° २.

वैकङ्कतानि पात्राणि ॥ ३१ ॥ यज्ञपात्राणि सर्वाणि वैकङ्कतानि विकङ्कतवृक्षकाष्ठघटितानि भवन्ति ततो विकङ्कतः समभवत्तस्मादेष यज्ञियो यज्ञपात्रीयो वृक्ष इति श्रवणात् (२. २. ४. १०.)। सामान्यसूत्रमेतत् अस्यापवादमाह ·

खादिरः स्रुवः ॥ ३२ ॥ स्रुवः खादिरः स्यात्।

स्फ्यश्च ॥ ३३ ॥ चकारात्स्फ्यो वज्रोऽपि खादिरः स्यात् खादिर स्फ्य इति श्रुतेः (३. ६. २. १२.)।

पालाशी जुहूः ॥ ३४ ॥ हूयते अनयेति जुहूः स्रुक् सा च पालाशी पलाशवृक्षकाष्ठनिर्मिता भवति यस्य पर्णमयी जुहूर्भवति न स पापꣳ श्लोकꣳ शृणोतीति श्रुतेः।

आश्वत्थ्युपभृत् ॥ ३५ ॥ उपभृत्संज्ञका स्रुक् आश्वत्थी अश्वत्थकाष्ठघटिता भवति। ध्रुवा तु वैकङ्कती भवति वैकङ्कतानि पात्राणीत्यनेनैव (३१.) · अपवादाभावात् · होमसाधनत्वाच्च तया हि समिष्टयजूꣳषि हूयन्ते तिष्ठन्ध्रुवया समिष्टयजूꣳषि जुहोतीति शाखान्तरश्रुतेः · अत एव मैत्रकठापस्तम्बसूत्रेषु वैकङ्कती ध्रुवेति पठ्यते तेषां हि वैकङ्कतानि पात्राणीति सामान्यवचनं नास्ति।

वारणान्यहोमसंयुक्तानि ॥ ३६ ॥ होमेन संयुक्तानि यैर्होमः क्रियते तानि होमसंयुक्तानि न होमसंयुक्तान्यहोमसंयुक्तानि यैर्होमो न क्रियते तानि वारणानि भवन्तीत्यर्थः · परिशेषाद्यानि होमसंयुक्तानि होमसाधनानि यैर्होमः क्रियते तानि वैकङ्कतानि॥ तत्र वारणान्युदाह्रियन्ते उलूखलमुसलकूर्चेडापात्रीपिष्टपात्रीपुरोडाशपात्रीशम्याशृतावदानाभ्युपवेषान्तर्धानकटप्राशित्रहरणषडवत्तब्रह्मयजमानासनहोतृषदनादीनि। तत्रोलूखलमुसलयोर्विशेषः मुसलोलूखले वार्क्षे स्वायते सुदृढे तथा इच्छाप्रमाणे भवतः शूर्पं वैणवमेव चेति · तथा खादिरं मुसलं कार्यं पालाशः स्यादुलूखलः यद्वोभौ वारणौ कार्यौ तदभावेऽन्यवृक्षजाविति। कूर्चो बाहुमात्रः पीठाकारः। इडापात्री अरत्निमात्री मध्यसंगृहीता। तथैव द्वितीया हविधारणी पात्री अतिविपुला · पिष्टपात्रीति सैवोच्यते। पुरोडाशपात्री प्रादेशमात्री समचतुरस्रा · अर्थात्षडङ्गुलपरिमितपरिमण्डलखातवती लोकाद्धविषस्य प्रतिपत्तिरिति कठसूत्रात्। शम्या प्रादेशमात्री। प्रादेशमात्रं ती-

क्ष्णाङ्गुष्ठपर्वमात्रपृथुमुखं शृतावदानम्। अभ्रिररत्निमात्रस्तीक्ष्णमुखः। उपवेषोऽर-त्निमात्रः प्रादेशमात्रो वा हस्ताकृतिः। अन्तर्धानकटस्त्वर्धचन्द्राकारो द्वादशाङ्गुलः समाचारात्। प्राशित्रहरणस्य त्वाकारं वक्ष्यति (१.३.४०.)। षडवत्तं च उभयत्र खातवत्। आसनानि चारत्निमात्राणि वा प्रादेशमात्राणि वा प्रादेशमात्रपृथूनि। सर्वेषु पात्रेषु मूलाभिज्ञापकानि वृत्तानि कार्याणि। एतान्यहोमसंयुक्तत्वाद्वारणा-नि॥ अथ वैकङ्कतान्युच्यन्ते। यथा प्रकृतौ वैकङ्कती ध्रुवा। अग्निहोत्रहो-मार्था स्रुगग्निहोत्रहवणीसंज्ञा। अग्निहोत्रहोमार्थः स्रुवश्च। सोमयागे ग्रहचमस-द्रोणकलशादीनि च · तत्रापि हविर्धानाधिषवणफलकपरिप्लवासम्भरण्यादीन्य-होमसंयुक्तानि वारणान्येव · षोडशिपात्रं खादिरम् · अंश्वदाभ्यग्रहणपात्रमौदुम्बरं वचनात् (१२.५.६.) · वाजपेये सप्तदश सोमग्रहाः सप्तदश सुराग्रहाश्च तेषां पात्राणि वारणान्यहोमसंयुक्तत्वात् · सप्तदशसुराग्रहाणां पात्राणि मृन्मयान्यपि शाखान्तरसूत्रेषूक्तानि सन्ति। एवमादि सर्वमूहनीयम्॥ परिभाषायाः साधार-णत्वादावसथ्यपात्राण्यप्यहोमसंयुक्तानि वारणान्येव प्रणीताप्रोक्षणीपात्रदर्वीकङ्क-तादीनि॥ यज्ञपार्श्वे (९८-१०२.) चमसानां तु वक्ष्यामि दण्डाः स्युश्चतुरङ्गुलाः त्र्यङ्गुलस्तु भवेत्स्कन्धो[1] विस्तारश्चतुरङ्गुलः विकङ्कतमयाः श्लक्ष्णास्त्वग्बिला-श्चमसाः[2] स्मृताः अन्येभ्यो वापि वा कार्यास्तेषां दण्डेषु[3] लक्षणम् होतु-र्मण्डल एव स्याद्ब्रह्मणश्चतुरस्रकः उद्गातॄणां च त्र्यश्रि[4] स्याद्यजमानः पृथुः स्मृतः प्रशास्तुरवतष्टः स्यादुत्तष्टो ब्रह्मशंसिनः पोतुरग्रेविशाखी स्यान्नेष्टुः स्याद्विगृहीतकः अच्छावाकस्य रास्नाव आग्नीध्रस्य मयूखकः[5] इत्येते चमसाः प्रोक्ता ऋत्विजां[6] यज्ञकर्मणि पलाशाद्वा वटाद्वान्यवृक्षाद्वा चमसाः स्मृता[7] इति। स्मृत्यर्थसारे[8] समित्पवित्रं वेदं च मुसलोलूखलं ग्रहान् नाभ्युखा-सन्द्युपरवाञ्छम्यास्रुक्पुष्कराणि च शाखास्वरुविषाणानि चरूणां मेक्षणानि

---

1) त्र्यङ्गुलं तु भवेत्खातं Y. (Chambers 353). 2) °मयान्पात्रास्त्व° Y. 3) अन्यो-न्यावापि कार्या स्युस्तेषां दंडेषु Y. (दंडे तु sec. h.). 4) °तॄणां त्रिरत्नि Y. 5) रास्ना-वमाग्नीध्रस्य मयूषकः Y. 6) ऋत्विग्भ्यो Y. 7) This last hemistich is wanting in Y. 8) The following quotation stands in the Yajnapârçva, as १०३-१०५, immediately after the just quoted verses.

च कुर्यात्प्रादेशमात्राणि महावीरास्त्रयस्तथा द्रोणकलशाधिषवणफलके[१] स्रुग्दण्डपरिधिशूलानि[२] स्फ्यशूर्पोपवेषेध्मानपि[३] प्रणयनीयावपाश्रपण्यौ[४] कुर्यादरत्निमात्राणीति । निगमे (२४.) नैयग्रोधाश्चमसाश्चतुरस्राः प्रस्थोदकग्राहिणस्त्वग्बिला दण्डलक्षणाः · परिमण्डलश्चतुरस्रस्त्र्यश्रिः पृथुरवतष्टोत्तष्टविशाखविगृहीतराम्नावमग्रूखक्रिया[५] होतृब्रह्मसामगस्वामिप्रशास्तृब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकाग्नीध्राणाम्[६] · द्रोणकलशः पलशतग्राही परिप्लवाकृतिः[७] स्थाल्यर्धशतिकैकधनास्त्रिंशतिका ग्रहाः पञ्चपलिकाः · पुष्करा ग्रावाणो हस्तपर्णमात्राः जानुमात्रमुलूखलं पालाशम् पञ्चविंशतिपलमिडापात्रम् मुसलं खादिरं त्र्यरत्नि · दृषदरत्निप्रमाणा शूर्पं शम्यादर्वीशूलशङ्कवोऽधिषवणमसिशाखेध्मा धृष्टिः [परीशा]सावग्निरधरारणिः[८] परशुश्चेति · पवित्रं सत[९]. उत्तरारणिर्वेदो मेक्षणं पैतुदारवाः शरावं प्राशित्रहरणं शृतावदानं स्वरूपवेषसमिधश्चेति प्रादेशमात्राणि · सतप्रणयनचमसौ प्रास्थिकौ वितस्तिप्रमाणं पदप्रमानमिति । मण्डनः रौहीतकान्यग्रोधोत्थान्पालाशान्वा[१०] कठश्रुतेः कुर्वीत चमसांस्तेषामभावेऽन्यद्रुमोद्भवान् आश्वत्थं वारणं नो चेदिडापात्रमिहान्यजम् अग्निहोत्रहवण्यत्र ग्राह्या वैकङ्कती शुभा पालाशी तु कठश्रुत्या दयाभावेऽन्यवृक्षजेति । आपस्तम्बः खादिरः स्रुवः पर्णमयी जुहूराश्वत्थ्युपभृद्वैकङ्कती ध्रुवैतेषां वृक्षाणामेकस्य स्रुचः कारयेद्बाहुमात्र्योऽरत्निमात्र्यो वाग्राग्रास्त्वक्तोबिला हंसमुख्यः स्फ्यशम्याप्राशित्रहरणमिति खादिराणि वारणान्यहोमार्थानि भवन्तीति । मानवे खादिरं स्फ्यस्रुवं पालाशी जुहूराश्वत्थ्युपभृद्वैकङ्कती ध्रुवा मूलतोऽरत्निमात्रदण्डाः पाणितलमात्रपुष्कराः स्रुचो बिला ध्यङ्गुलखाताश्चतुरङ्गुलोच्छ्रयाः प्रादेशमात्राणि प्रस्रवणानीति[११] । काठके अरत्निमात्री स्रुगग्निहोत्रहवणी पालाशी सामान्यतया[१२] निर्वपणामि-

---

१) °षवणो फलके Y. २) मूलाश्च Y. ३) °ध्मावपि २. °ध्मानग्नि Y. ४) प्रणायिनीयावधिवपा° Y. ५) पृथोवतष्टो° २. and Nigama. पृथोरवत° २. °विगृहीतारा° २. and Nig. ६) होतृब्रह्मस्वामिसामगहोतृप्रशास्तृ° २. होतृब्रह्मसामगस्वामिहोतृप्रशास्त्र° Nig. ७) परिपूषाकृतिः २. परिप्लवाकृत्ति Nig. ८) ?धृष्टिः सावग्नि° २. धृष्टिसावग्नि° Nig. ९) सत् २. समित् २. सत Nig. १०) °कान्यग्रोधोश्वत्थान्पा° २. ११) प्रस्रावणोति २. १२) Thus *M. Müller*, Zeitschrift der Deutschen Morg. Gesellsch. vol. IX, pag. XLI. सा मान्या तथा २.

तरासाम् बाहुमात्राः स्रुग्दण्डाः प्रहस्तमात्राणि प्रस्रवणान्यर्थपरिमाणानि पात्राणि पालाशी तुङ्गराश्वत्थ्युपभृद्वैकङ्कती ध्रुवा शमीभूर्जमय्यो वा वक्रोबिला हंसमुख्यो भवन्तीति श्रुतिर्नैयग्रोधाश्चमसा रौहीतका वा सर्वाणि वा पर्णमयानि स्फ्यस्रुवशम्यं खादिरं प्राशित्रहरणं च यद्वायज्ञियानां [1] पात्रीडाचमसम् लोकाद्दिषस्य प्रतिपत्तिरिति ।

बाहुमात्र्यः स्रुचः पाणिमात्रपुष्करास्त्वग्बिला हंसमुखप्रसेका मूलदण्डा भवन्ति ॥३७॥ बाहु(:) प्रमाणमासाम् ताः बाहुमात्र्यः बाहुप्रमाणाः स्रुचः भवन्ति । तथा पाणिः प्रमाणमस्य तत्पाणिमात्रम् पाणिमात्रं पुष्करं मुखं यासां ताः पाणिमात्रपुष्कराः स्रुचः भवन्ति । तथा त्वग्बिलाः त्वक्प्रदेशे बिलं मुखं यासां तास्त्वग्बिलाः । तथा हंसमुखप्रसेकाः प्रसिच्यते ज्ञार्यतेऽनेनेति प्रसेकः प्रणालिका हंसमुखसदृशः प्रसेकः प्रणालिका यासां ताः हंसमुखप्रसेकाः · सा च प्रणालिका एकैव भवति एकयापि शास्त्रार्थस्य कृतत्वात् कार्यसिद्धेश्च न तु द्वे तिस्रो वा कुत्राप्यनुक्तत्वात् । तथा मूलदण्डाः मूले दण्डो यासां ता मूलदण्डाः · अर्थादग्रे पुष्करं सिध्यति । एवंविधाः स्रुचो भवन्ति । शाखान्तरीयो विशेषः पूर्वसूत्रेऽउक्तः ।

अरत्निमात्रः स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करः ॥३८॥ अरत्नि(:) प्रमाणमस्यासावरत्निमात्रः स्रुवोऽरत्निप्रमाणो भवति । पुनः कीदृशः अङ्गुष्ठपर्ववृत्तपुष्करः · अङ्गुष्ठपर्वणो वृत्तमङ्गुष्ठपर्ववृत्तम् अङ्गुष्ठपर्ववृत्तप्रमाणं वृत्तं पुष्करं मुखं यस्यासावङ्गुष्ठपर्ववृत्तपुष्करः · पर्वशब्दः संधिवाची संधिर्ग्रन्थिः · तदुक्तम् अङ्गुष्ठाङ्गुलिमानं तु यत्र-यत्रोपदिश्यते तत्र-तत्र बृहत्पर्वग्रन्थिभिर्मिनुयात्सुध इति · अतोऽङ्गुष्ठस्य बृहत्पर्वग्रन्थिप्रमाणं चतुरस्रं कृत्वा तदेव मण्डलं चतुरस्रं चिकीर्षन्नित्युपायेन वृत्तं विधाय तत्प्रमाणं स्रुवस्य पुष्करम् । नासिकावत्खातं च स्यात् · तदुक्तं कात्यायनेन (कर्मप्रदीप १. ८. १३.) स्रुवाग्रे घ्राणवत्खातमिति · तथा पुष्करार्धं भवेत्खात इति च ।

---

[1] ? यज्ञायज्ञि° २.

स्फ्योऽस्याकृतिः ॥ ३९ ॥  असिः खड्गः असेरिव आकृतिर्यस्य असावस्याकृतिः  खड्गसदृशः स्फ्यो वज्रो भवतीत्यर्थः ।

आदर्शाकृति प्राशित्रहरणम् ॥ ४० ॥  प्राशित्रमिति ब्रह्मणो भागावदानम्  तत् ह्रियते येन तत्प्राशित्रहरणम् · आदर्शो दर्पणः · आदर्शस्येवाकृतिराकारो यस्य तदादर्शाकृति  आदर्शसदृशं वर्तुलम् · तत्रावदानविधानाच्च खातवत्प्राशित्रहरणं भवति ।

चमसाकृति वा ॥ ४१ ॥  चमसस्येवाकृतिराकारो यस्य तच्चमसाकृति · वा विकल्पे · अथवा चमससदृशं चतुरस्रं प्राशित्रहरणं भवति ।

चात्वालोत्करावन्तरेण संचरः ॥ ४२ ॥  संचरत्यनेनेति संचरः गमनागमनमार्गः · चात्वालश्च उत्करश्च चात्वालोत्करौ · तौ अन्तरेण तयोरन्तरालेन सर्वेषां विहितकार्यार्थं संचरः गमनागमनमार्गो भवति । अयं च सोत्तरवेदिकेषु वरुणप्रघासमहाहविःपशुसोमेषु ज्ञेयः  चात्वालस्यैषेव सद्भावात् · अतः सोत्तरवेदिकेषु सर्वैरनेनैव मार्गेण गमनागमने कार्ये ।

प्रणीतोत्कराविष्टिषु ॥ ४३ ॥  अन्तरेण संचर इत्यनुवर्तते · इष्टिषु दर्शपूर्णमासादिषु प्रणीतोत्करावन्तरेण प्रणीतोत्करयोरन्तरालेन सर्वेषां विहितकार्यार्थं संचरः गमनागमनमार्गो भवति । अन्तरेणेत्ययं निपातोऽन्तरालशब्दार्थे · तद्योगे चात्वालोत्करौ प्रणीतोत्कराविति च द्वितीया  अन्तरान्तरेण युक्ते इति (पाणि॰ २. ३. ४.) सूत्रात् ॥  ॥ तृतीया कण्डिका ॥ ३ ॥

अथ पद्धतिः ॥

ऋचो यजूंषि सामानि प्रैषाश्चैते मन्त्रसंज्ञाः । यजुषां च यावति पदसमूहे उच्चरिते पदसमूहो निराकाङ्क्षो भवति तावत्परिमाणमेकं वाक्यं कर्मकाले प्रयोक्तव्यम् · यत्र तु मध्ये पठितैः पदैर्यजुर्निराकाङ्क्षं न ज्ञायते तत्र पदान्तरं योग्यमध्याहृत्य पूर्वपठितं वानुषज्य निराकाङ्क्षीकृत्य प्रयोज्यम् । प्रयोगकाले मन्त्राः कर्मारम्भे प्रयोज्याः · मन्त्राणामन्त एव कर्मारम्भणीयम् । ते मन्त्राः सूत्रमध्य आदिमात्रेणोपात्ताः सन्तः कर्मकाले सकलाः प्रयोज्याः · सूत्रोपात्तेन परस्य मन्त्रस्यादिना पूर्वस्य मन्त्रस्यान्तो ज्ञातव्यः । यजुर्वेदमन्त्रा उपांशु प्रयोज्याः · ऋग्वेदसामवेदयोस्तु

मन्त्रा उच्चैः प्रयोज्याः · प्रैषास्तु यजुर्वेदविहिता अप्युच्चैरेव प्रयोज्याः तेषामन्य-
सम्बोधनार्थत्वादुपांशुप्रयुक्तैरन्यसम्बोधनासिद्धेः ॥ अथ बर्हींषि प्राचीनाग्राणि
चेत्यादौ यत्र बर्हिःशब्देन विधानं दृश्यते तत्र-तत्रासंस्कृतमेव कुशज्ञातिमात्रं
ग्राह्यम् । अभ्यगारादौ वसोर्धाराहोमे स्रुक्स्रुवादौ च परिमाणविशेषानुक्तौ अर्था-
त्परिमाणं ज्ञेयम् यावता परिमाणेन कार्यसिद्धिर्भवति । इध्मबर्हिर्बन्धनार्थानि
संनहनान्ययुग्धातूनि भवन्ति विषमसंख्यैस्तृणमुष्टिभिर्युतानि भवन्तीत्यर्थः ·
प्रागग्रे संनहनऽउदगग्रं बर्हिर्निधाय संनहनेन बद्ध्वा बर्हिर्मूलभागे ग्रन्थिमव-
गूहेत् · उदगग्रे संनहने प्रागग्रमिध्मभागं निधायेध्ममूले ग्रन्थिमवगूहेत् · पुर-
स्तात्प्रत्यञ्चं ग्रन्थिमवगूहति पश्चाद्वा प्राञ्चमित्यापस्तम्बः । इध्मश्च पालाशोऽष्टा-
दशसंख्यारत्निमात्रकाष्ठकः एकविंशतिसंख्यकाष्ठको वा कार्यः · पालाशाभावे वै-
कङ्कत इध्मः कार्यः · तदभावे कार्ष्मर्यमयः कार्ष्मर्यः श्रीपर्णीवृक्षः · तदभावे
बैल्वो वा औदुम्बरो वा खादिरो वा । एके आचार्याः एकविंशतिकाष्ठ-
कादिध्मादेव त्रीणि काष्ठान्यरत्निमात्राण्येवोपादाय तैः परिधिपरिधानमिच्छन्ति ।
सामिधेनीविवृद्धौ चेध्मकाष्ठान्यपि वर्धन्ते · तद्यथा · सप्तदशसामिधेनीपक्षे विं-
शति(:) काष्ठानि · इष्टकापशावेकविंशतिसंख्यसामिधेनीपक्षे चतुर्विंशतिः · च-
तुर्विंशतिसामिधेनीपक्षे तु सप्तविंशतिः · पित्र्यादौ सामिधेनीह्रासे च काष्ठह्रासो
न भवति । अग्निप्रणयनार्थ इध्मस्त्वपरिमितकाष्ठकस्त्रिभिः संनहनैर्मूलभागे बद्धः
स्यात् · अपरिमितशब्देन पूर्वोक्तप्रमाणादतिशयेनाधिकमुच्यते · तेनेष्टकापशौ
इध्मकाष्ठानां सप्तविंशतिसंख्यासद्भावात्ततोऽप्यधिकैरष्टाविंशतिप्रभृतिभिः काष्ठैः प्र-
णयनार्थ इध्मः कार्यः ॥ वेदकरणं दर्शपूर्णमासऽएव वक्ष्यते ॥ यत्र-यत्र कर्मविषये
आङ् प्रयुज्यते आ प्रयाजेभ्य आ इडाया इत्यादौ तत्र सर्वत्राऽभिविधौ ज्ञेयो न
मर्यादायाम् · तदपि कर्म कर्तव्यमध्ये ज्ञेयम् न त्ववधित्वेनेत्यर्थः । शम्य्वन्तं भव-
तीडान्तं भवतीत्यादावप्यन्तशब्देन संयुक्तं शम्य्विडादिकं कर्तव्यमध्ये ज्ञेयम् न
त्वन्तशब्दं समीपवाचिनं सम्भाव्य तत्समीपे ततोऽर्वाक्स्थीयते ॥ वक्ष्यमाणेषु
सर्वकर्मस्वनुक्तमप्यादौ आहवनीयदक्षिणाग्न्योरुद्धरणं गार्हपत्यात्कर्तव्यम् · यत्र
त्वन्यकर्मार्थं प्रसङ्गादुद्धृतौ भवतस्तत्कर्म च समाप्तं न भवति अस्मिन्नवसरे यत्कर्मा-

पतति तत्पूर्वकर्मार्थोद्धृतयोरेव क्रियते न तदर्थं पृथगुद्धरणम् · यथा दर्शपूर्णमासेष्ट्यर्थमुद्धृतयोरेवाग्निहोत्रहोम आगतोपस्थानादिकं च पुनराधानानन्तरमग्निधारणे कृते विकृतेष्टिनित्येष्ट्यादिकं च । यत्कर्मार्थमाहवनीयदक्षिणाग्नीऽउद्धृतौ भवतस्तत्कर्मसमाप्त्यनन्तरं लौकिकौ ज्ञेयौ अत ऊर्ध्वं तयोराहवनीयादिशब्दविहितं कार्यं न कर्तव्यम् · अत एव यदा पौर्णमासादौ बह्व्य इष्टयः पृथक्तन्त्राः क्रियन्ते तदा प्रतीष्टि पृथगेवोद्धरणम् न सकृदुद्धृतयोरेव सर्वत्रोपयोगः ॥ खादिरः स्रुवः पर्णमयी जुहूरित्येवमादि यत्कस्यचित्कर्मणः प्रकरणे पठितं न भवति वाक्यान्तरेण च कर्मविशेषे विनियुक्तं न भवति अमुष्मिन्कर्मणि खादिरः स्रुवो भवतीत्येवम् तत्प्रकृतावेव निविशते ततः प्रकृतिवन्न्यायेनेतराङ्गवद्विकृतावपि गच्छति ॥ ॥ अथ पात्राणां लक्षणमुच्यते ॥ खादिरः स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करो नासिकावत्पर्वार्धखातो भवति । स्फ्यश्च खादिरः खड्गाकृतिररत्निमात्रः । स्रुचो बाहुमात्र्यो मूलदण्डास्त्वग्बिला हंसमुखसदृशैकप्रणालिकायुक्ताः पाणिमात्रपुष्करास्तावत्खातयुक्ताश्च कार्याः · पालाशी जुहूः · उपभृदाश्वत्थी · वैकङ्कती ध्रुवा · एतेषां वृक्षाणामेकस्य वा सर्वाः स्रुचः कारयेत् · बाहुमात्र्योऽरत्निमात्र्यो वाग्राग्रास्त्वक्तोबिला हंसमुख्य इत्यापस्तम्बः । अग्निहोत्रहवणी वैकङ्कती · अग्निहोत्रस्रुवो वैकङ्कतः । यैः पात्रैर्होमो न क्रियते तानि सर्वाणि वारणानि भवन्ति · तानि चोलूखलमुसलकूर्चेडापात्रीपिष्टपात्रीपुरोडाशपात्रीशम्याशृतावदानाभ्युपवेषान्तर्धानकटप्राशित्रहरणषडवत्तब्रह्मासनादीनि । तत्रोलूखल ° ° ° न्यवृक्षन्नाविति [1] । कूर्चो बाहुमात्रः पीठाकारः । इडापात्रीपिष्टपात्र्यौ अरत्निमात्र्यौ मध्यसंगृहीते । पुरोडाशपात्री प्रादेशमात्री समचतुरस्रा षडङ्गुलवृत्तखातवती । शम्या प्रादेश ° ° °द्वादशाङ्गुलः [2] । प्राशित्रहरणं वृत्तमादर्शाकारं चतुरस्रं चमसाकारं वा · तथैव द्वितीयमपिधानपात्रम् । षडवत्तं चोभयत्र खातवत् । आसनानि चारत्निमात्रदीर्घाणि प्रादेशमात्रविपुलानि । सर्वेषु पात्रेषु मूलाभिज्ञानार्थं वृक्षाणि कार्याणि । अनादेशे होमसाधनभूतानि पात्राणि वैकङ्कतानि भवन्ति · यथा सोमयागे ग्रहचमसद्रोणकलशादीनि · तत्रापि हविर्धानाधिषवणफलकसम्भरणीप-

---

१) see pag. ५९. lin. २०-२३. २) see pag. ५९, २६ - ६०, २.

रिम्लवादीन्यहोमसंयुक्तानि वारणान्येव · षोडशिनः पात्रं खादिरं चतुरस्रम् अंश्वदाभ्यपात्रमौडुम्बरं वचनात् · वाजपेये सप्तदशानां सोमग्रहाणां पात्राणि वारणानि अहोमसंयुक्तत्वात् सुराग्रहपात्राण्यपि वारणानि शाखान्तरान्मृन्मयानि वा · इत्येमवादि सर्वमूहनीयम् ॥ ॥ इष्टिषु प्रणीतोत्करावन्तरेण सर्वेषां गमनागमनाय मार्गः सोत्तरवेदिकेषु कर्मसु चात्वालोत्करयोरन्तरालेन ॥ ॥३॥

इति प्रथमस्य तृतीया कण्डिका ॥ ॥

अथेदं चिन्त्यते व्रीहिभिर्यजेत यवैर्यजेतेत्यादिभिर्वाक्यैः श्रुतौ ये व्रीहियवादयः यदि दैवान्मानुषाद्वा कारणात्ते यागार्थं न लभ्यन्ते तदा किं द्रव्यान्तरेण प्रतिनिधिभूतेन तत्कर्मारम्भणीयम् उत नेति । तत्र यागस्य प्रधानत्वाद्द्रव्य(स्य च) गुणभूतत्वाद्द्रव्यान्तरेण कर्मारम्भे प्राप्तऽआह ·

चोदिताभावेऽनारम्भस्तत्सिद्धित्वात्तस्य ॥१॥ चोदितस्य विहितस्य श्रुतस्य व्रीहियवादेर्मुख्यद्रव्यस्याभावे अलाभे अप्राप्तौ सत्यां काम्यस्य कर्मणोऽनारम्भोऽप्रयोग एव भवति । कुतः तत्सिद्धित्वात् तेनैव सिद्धिर्यस्य तत्तत्सिद्धि तस्य भावस्तत्सिद्धित्वम् तस्मात् तस्य काम्यस्य कर्मणस्तत्सिद्धित्वात् · यतः काम्यं कर्म तत्सिद्धि तेन श्रुतेनैव चोदितेनैव द्रव्येण सिध्यति नान्येन · यतस्तदेव तस्य साधनत्वेन श्रुतम् न द्रव्यान्तरम् । अतो यदि द्रव्यान्तरेण तत्कर्मारभ्यते तदा कर्मणो यागरूपस्य तदेकसाधनकत्वाद्द्रव्यान्यत्वे सति यथाश्रुतद्रव्यहान्या कर्मणो विगुणत्वमेव स्यात् न च विगुणात्काम्यात्किंचित्फलं भवति विनष्टशक्तित्वात् दग्धबीजवत् । न हि काम्यस्यावश्यकर्तव्यत्वं[1] केनचित्प्रमाणेन सिद्धम् यद्बलेन यथाशक्तिप्रयोगं दृढीकृत्य द्रव्यान्तरेणारभ्येत । तस्माच्चोदितद्रव्यस्याभावे काम्यस्यानारम्भ एव भवति । अग्रिमेण सूत्रेण (२.) नित्ये कर्मणि विशेषस्य वक्ष्यमाणत्वादिदं काम्यविषयम् ॥ अथ यथा विहितद्रव्याभावे काम्यस्यानारम्भ उक्तः तथा नित्येऽपि विहितद्रव्याभावे द्रव्यान्तरेणानारम्भे प्राप्तऽआह ·

नियते सामान्यतः प्रतिनिधिः स्यात् ॥२॥ यथाशक्तिप्रयोगस्य स्थापि-

[1] °कर्तव्यत्वे २.

तत्वात् नियते नित्ये कर्मणि दर्शपूर्णमासादौ श्रुतद्रव्याभावे सामान्यतो मुख्यद्रव्यसादृश्यात्प्रतिनिधिर्भवति　श्रुतद्रव्यसदृशेन द्रव्यान्तरेणापि नित्यं कर्मारम्भणीयम् · यावज्जीवंचोदनया हि अनारब्धमपि नित्यमवश्यं कर्तव्यमिति नियमश्चोद्यत एव । तत्र यागप्रधानचोदना नियमेन यत्किंचिदर्थाद्द्रव्यमाकाङ्क्षति[1] · सा च व्रीहिभिर्यजेतेति श्रुतैर्व्रीहिभिर्विद्यमानैरेकवाक्यतां प्रतिपद्यमानार्थप्राप्तानि द्रव्यान्तराणि बाधते[2] · श्रुतद्रव्याभावे तया द्रव्यान्तराणामर्थप्राप्तिः केन वार्यते तस्माद्द्रव्यान्तरं प्रतिनिधेयम्　यदि ह्याग्नेये चोदना न स्वयं द्रव्यं प्रयुञ्जीत व्रीहिवाक्यमेव तु तस्य प्रयोजकं स्यात्　ततस्तदभावे न द्रव्यान्तरमुपादीयेत · न चैतदस्ति · प्रधानचोदनयैव प्रयुज्यमानेषु द्रव्येषु नियममात्रं व्रीहिवाक्येन क्रियतेऽतस्तदभावेऽपि　प्रधानमेवावश्यकत्वाद्द्रव्यान्तरमुपादापयतीति । ननु द्रव्यान्तरे कर्मभेदो भविष्यतीति · उच्यते · न[3] · न हि द्रव्यकर्मणोरभेदः · न च द्रव्यात्मकं कर्म येन तद्भेदाद्भेदः　जातेरिव व्यक्तिभेदे । न च द्रव्यान्तरेऽपि तावेव दर्शपूर्णमासावित्यस्य प्रत्यक्षावगतस्य बाधोऽस्ति · कुतः　शब्दान्तरादीनां भेदकारणानामभावात् · न हि नीवारैः क्रियमाणस्य शब्दान्तरादिनिमित्तो भेदोऽवतरति येन तदेवेदमिति प्रत्ययो बाध्यते · तस्मान्नीवारैरपि क्रियमाणयोर्दर्शपूर्णमासाभिधेयतास्त्येव । यथा नैव चैत्रीप्रयोगाद्वैशाखीप्रयोगो भिद्यते　तेनैव च भेदाभावेन तौ दर्शपूर्णमासाभिधेयतां न जह्नीतः　तथा सति सामान्यात्तत्तुल्यत्वान्नीवारैरपि क्रियमाणयोरस्त्येव तदभिधेयता स्वरूपाभेदात् । यथा आश्रयभेदेऽपि गोत्वादिसामान्यस्याभेदात्तन्निमित्तं गवादिनामधेयं सर्वत्र वर्तते　तद्वद्द्रव्यभेदेऽपि कर्मभेदाभावात्तन्नामता न निवर्तते　तन्नामकाच्च फलमतो द्रव्यान्तरेऽप्यस्त्येव फलमिति · तथा यद्यपि देशादिभेदेऽपि भिन्ना एव कर्मव्यक्तयः सामान्यमेव तु दर्शपूर्णमासाभिधेयं फलवत्　तथापि देशादिभेदवद्व्रीहियवभेदवच्च नीवारेष्वपि तत्सामान्यव्यक्तिरेका　अतः सिद्धं द्रव्यभेदेऽपि कर्मैकत्वम् ॥　एवं द्रव्यभेदेऽपि कर्मैकत्वे सिद्ध इदं संदिह्यते　श्रुतद्रव्याभावे किं यत्किंचिद्विसदृशमपि प्रतिनिधित्वेन ग्राह्यम्　उत श्रुतसदृशमेवेति । तत्राष्टाकपालचोदना येन

1) ? °दर्थाद्द्र° २.　2) ? बाध्यते २:　3) Wanting in २, supplied by conjecture.

केनचिन्निर्वर्त्स्यते तत्किं सदृशोपादानेन · न च व्रीहिसदृशत्वाद्व्रीहिफलं नीवाराः साधयन्तीति वाच्यम् यदि तथा स्यात्तदा व्रीहिभिर्विकल्प्येरन्नेकार्थत्वात्[1] यववत् न चैतदिष्टम् · तेन सगुणासम्भवे विगुणोऽप्याग्नेयचोदनार्थः कर्तव्य इति कृत्वा द्रव्यान्तरोपादानम् तत्र च सदृशासदृशयोर्नास्ति विशेषः । तस्मान्न सदृशोपादानमित्येवं प्राप्ते ब्रूमः । फलार्थिना यथाश्रुतं व्रीह्यादिद्रव्यकं कर्म प्रक्रान्तम् तादृशस्यैव फलसाधनत्वेन श्रवणात् तस्य व्रीह्यभावेऽङ्गहान्या फलाभावात्तदन्तस्योत्सर्गे प्राप्ते शिष्टाचारानुमितात्प्रारब्धेन यज्ञेतैवेत्येवम्भूताद्वचनात्समाप्तिर्विधीयते । सा च समाप्तिर्यादृशः क्रतुः प्रक्रान्तस्तादृशस्य विधीयते नान्यादृशस्य । तत्र च प्रक्रान्ते क्रतौ व्रीह्याद्याकृतिर्यागसाधनं स्वाश्रयभूतं द्रव्यं परिच्छिन्दत्यङ्गतां[2] प्रतिपद्यते । तथैव व्रीहिगता ये विशेषा दीर्घशूकत्वादयस्तान्परिच्छिनत्ति · तेऽपि च क्रियायाः साधनमेव · न ह्यव्याप्रियमाणेष्ववयवेष्ववयवी व्यापृतः सम्भवति · व्रीहिसोमादिषु च पेषणादिविधानादवयवानामेवाङ्गत्वम् नावयविकत्वात्[3] · जात्या च स्वाश्रयवत्तदवयवानामप्युपलक्षणासम्भवाद्व्यक्तिस्तदवयवाश्च सर्वऽएव क्रियाङ्गतया विधीयन्ते । तत्र यद्यपि नीवाराकृतिर्व्यक्तिश्च व्रीहिजातेर्व्यक्तेश्चान्या तथाप्यन्ये बहवो धर्मा व्रीहिसमानास्तेषु विद्यन्ते · [अतः] श्रुतैकदेशसम्पत्तये तेऽवश्यमुपादेयाः न हि सम्भविनस्त्यागो युज्यते · ये तु असमाना नीवारगतास्तेऽनङ्गान्तरीयकत्वादुपादीयन्ते न तूपादित्सया[4] तस्मात्तदुपादानमदोषः । अतो यदि सदृशं प्रतिनिधीयते ततस्तेषामवयवानां कियन्तो लभ्यन्ते जातिमात्रमवयवान्तरं च परित्यक्तं भवति · असदृशोपादाने पुनः समस्तपरित्यागः स्यात् · अतो व्रीहिशास्त्रमपि यथासम्भवमुपपादयितुं सदृशोपादानम् · एवं च सुसदृशलाभे मन्दसदृशं नोपादेयम् सुसदृशे बह्ववयवानुग्रहात् । तदाह त्रिकाण्डे मण्डनः कार्यै[5] रूपैस्तथा पर्णैः क्षीरैः पुष्पैः फलैरपि गन्धै रसैः सदृग्ग्राह्यं पूर्वालाभे परं-परमिति । तस्मात्साधूक्तं सामान्यतः प्रतिनिधिः स्यादिति । तदुक्तम् यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् यवा-

---

1) °ल्प्येरने° २. 2) ? परिच्छेदत्यंगतां २. 3) ? नावयविनत्वात् २. 4) ? ते नांगतरीयत्वाडुपादीयंते न रूपा° २. °तरीयकत्वा° २. 5) ? कार्यै २.

नामिव गोधूमा व्रीहीणामिव शालय इति। अत एवं सिद्धम् · नित्यकर्मण्यारब्धे अनारब्धे च प्रतिनिधिर्भवति अवश्यकर्तव्यतया यथाशक्तिप्रयोगस्य स्थापितत्वात् · काम्ये पुनरवश्यकर्तव्यत्वाभावादनारब्धे मुख्यद्रव्यालाभे आरम्भो न भवतीति प्रागुक्तम् अथ काम्ये प्रारब्धे सति पश्चात् श्रुतद्रव्यस्य नाशदोषापहारालाभादौ ज्ञाते तस्य विगुणस्य फलसाधकत्वाभावस्य प्रागुक्तत्वात्प्रयोजनाभावेन काम्यं न समापनीयमिति प्राप्तऽआह ·

आरम्भान्नियमः ॥३॥ काम्येऽप्यारम्भादूर्ध्वं समाप्तेर्नियमोऽवश्यम्भावः। आरम्भादिति हेतौ पञ्चमी · तेनारम्भ एव समाप्तेः कारणम् · यत आरब्धमतोऽवश्यं समापनीयमेव। समाप्तिश्च मुख्याभावे प्रतिनिध्युपादानं विना न भवति। अतः काम्येऽपि आरब्धस्य समापनार्थं प्रतिनिधिर्भवत्येव · नित्येऽप्यवश्यकर्तव्यतैव प्रतिनिध्युपादाने कारणम् सा चारब्धे काम्येऽप्यविशिष्टा · आरम्भस्तु काम्यस्य विहितद्रव्याभावे द्रव्यान्तरेण न भवत्येव अनारब्धस्यावश्यकर्तव्यत्वाभावात्।

दोषश्चासमाप्तौ स्यात्सामान्यात् ॥४॥ किं च प्रारब्धस्य काम्यस्यासमाप्तावसमापने दोषः स्यात् · कुतः · सामान्यात् आरब्धस्य काम्यस्यावश्यकर्तव्यतया नित्येन समानत्वात्। यथा नित्यकर्मणामकरणे यथा शिष्टविगर्हणम् एवमारब्धानां काम्यानामसमापनेऽपीति · अतः शिष्टविगर्हणान्नूपाहिशिष्टाचारात्स्मृतिं स्मृतेश्च श्रुतिं कल्पयित्वा प्रक्रान्तं शास्त्रीयं कर्मावश्यं समापनीयम्। अपि च प्रक्रान्तस्यासमाप्तौ निन्दाप्रायश्चित्ते तैत्तिरीये श्रूयेते देवताभ्यो वाऽएष आवृश्च्यते यो यक्ष्यऽइत्युक्त्वा न यजते त्रैधातवीयेन यजेत न तेन देवताभ्य आवृश्च्यतऽइति। तस्मादप्यारब्धमवश्यं समापनीयम्। तदुक्तं जैमिनिना (६.२.१०.) प्रक्रमात्तु नियम्येतारम्भस्य क्रियानिमित्तत्वादिति।

दर्शनाच्च ॥५॥ श्रुतौ मुख्यद्रव्यस्याभावे द्रव्यान्तरेण परिसमाप्तिदर्शनाच्चैवमवसीयते यन्मुख्यद्रव्यस्याभावे द्रव्यान्तरं प्रतिनिधेयमिति। तद्यथा यदि सोमं न विन्देत्पूतीकानभिषुणुयादिति · अत्र सोमेऽपहृते सोमाभावे सति तत्स्थाने पूतीकानामभिषवं विदधाना पूतीकैर्यागः समापनीय इत्यमुमर्थं दर्शयति। एवं

दर्शनऽउक्ते दर्शनस्वरूपकथनपूर्वकमस्य दर्शनत्वमाक्षिपति ·

अन्यार्थं दर्शनं न पुनर्ग्रहणात् ॥ ६॥ अन्यार्थं सत् दर्शनं भवति · तद्धि दर्शनं कथ्यते यदन्यविधिपरं सत् प्रसङ्गादन्यमर्थं ज्ञापयति · यथा तस्यै प्रयाजेषु तायमानेषु ब्राह्मणो वीणागाथी दक्षिणत इत्यादि गाथा गायतीत्यन्तं (१३.४.२.८.) वाक्यं गाथागानविधिपरं सदस्यामिष्टौ प्रयाजानिसद्धान्दर्शयति ॥ यदि सोमं न विन्देदितीदं तु तादृशं दर्शनं न भवति · कुतः · पुनर्ग्रहणात् सोमाभावे सति पुनर्द्रव्यान्तरस्य पूतीकलक्षणस्याप्राप्तस्य ग्रहणात् विधानात् । तथा हि यदि सोमं न विन्देत्पूतीकानभिषुणुयादिति किमयं सोमाभावे द्रव्यान्तरविधिः सोमाभावे पूतीकैर्यागं साधयेदिति सोमजातिवत्पूतीकजातेर्यागसाधनपरिच्छेदकत्वेन [1] विधीयते · उत प्रतिनिधिनियमः सोमाभावे सुसदृशेष्वीषत्सदृशेष्वपि [2] प्राप्तेषु पूतीका नियम्यन्ते · यदा चैवम् तदा द्रव्यान्तरेण परिसमाप्तेर्दर्शनं भवति । अधुना त्वेतदाक्षिपति · अत्र सोमेन यजेतेति सोम उत्पत्तिशिष्टः अतः सोमानुरक्तस्यैव करणत्वात्तदसम्भवे करणत्वमेव हीयेतेति न प्रतिनिध्यपेक्षा कुतस्तन्नियमार्थता विधेः · दर्शपूर्णमासयोस्तु व्रीहीणामनुत्पत्तिशिष्टत्वान्नीवारैः कर्मस्वरूपस्य भेदो न भवति तेन तत्र प्रतिनिधिर्युज्यते । किं च नियमार्थो विधिरित्येतदप्ययुक्तम् · न हि सोमस्य [सु]सदृशे द्रव्यान्तरे सतीषत्सदृशः पूतीकः पक्षेऽपि प्राप्तः · सुसदृशे हि बहवः श्रुतद्रव्यावयवाः संगृह्यन्ते अल्पास्त्वीषत्सदृशे · न च भूयोऽनुग्रहे सम्भवत्यल्पानुग्रहो युक्तः । तस्मादत्यन्तप्राप्त्यभावे विधीयमानाः पूतीका न नियमार्था भवन्तीति · तस्मात्सोमाभावे अप्राप्तानां पूतीकानां यागसाधनत्वेन विधिरिति साधूक्तम् न पुनर्ग्रहणादिति । अथ सिद्धान्तमाह ·

अन्यार्थं पुनर्ग्रहणम् ॥ ७॥ पूतीकानभिषुणुयादित्येतत्पुनर्ग्रहणमिवान्यार्थम् पूतीकरूपप्रतिनिधिनियमार्थमित्यर्थः न तु [3] अप्राप्तानां पूतीकानां विधानार्थम् । विचारस्यैतत्प्रयोजनम् प्रतिनिधिनियमपक्षे पूतीकविनाशे सोमसदृशस्योपादानम् द्रव्यान्तरविधाने तु पूतीकसदृशमुपादेयमिति । कथमन्यार्थमिति

---

1) ? °त्पूतीकजातिर्याग° २. The Çâstradîpikâ at Jaim. ६. ३. ३१. reads किमयमभावे विधिः°° °वत्पूतीकजातियाग°. 2) °वे तुसदृ २. 3) न नु २.

चेत् · उच्यते · प्रक्रान्तं कर्म तावदवश्यं समापनीयमेव अतो द्रव्यान्तरोपादानं प्राप्नोत्येव । ननूक्तम् सोमस्योत्पत्तिशिष्टत्वान्न प्रतिनिध्यपेक्षेति · तत्रोच्यते · यजेतेत्येतत्पदं यत्किंचिद्द्रव्यमपेक्षमाणं सोमेनेति निराकाङ्क्षीक्रियते · यथाग्नेयो ऽष्टाकपाल इति वाक्यं वाक्यान्तरेण व्रीहिभिर्यजेतेत्यनेन · पदान्तरवाक्यान्तरप्राप्तयोर्नैव कश्चिद्विशेषो ऽस्ति अपेक्षायास्तुल्यत्वात् · अतस्तद्वत्प्रतिनिध्यपेक्षा भवत्येव । यच्चोक्तम् सत्यपि प्रतिनिधौ पूतीकानामीषत्सदृशत्वात्प्राप्तिर्नास्तीति अभावविधिरेवायमिति · तत्रोच्यते · यत्कदाचिदपि न प्राप्नोति तद्विधीयते पूतीकास्तु कदाचित्प्राप्नुवन्ति · यदा मुख्यस्याभावात् प्रतिनिधातव्यं किंचिदिति निरूप्यते तस्यां वेलायां सर्वेषामेव सुसदृशानामीषत्सदृशानां चास्ति प्राप्तिरनियमेन · तत्र यावदेव न्यायेन सुसदृशं नियन्तुमुपक्रम्यते तावदेवेषत्सदृशः पूतीको बलीयसा वचनेन निदम्यते · तस्मादिदं पूतीकानभिषुणुयादित्येवं तत्पुनर्ग्रहणमन्यार्थं सत् पक्षे प्राप्तानां पूतीकानां नियमार्थं सत् प्रक्रान्तस्य कर्मणो मुख्यद्रव्यालाभे द्रव्यान्तरेण परिसमाप्तेर्दर्शनं भवत्येवेति सिद्धम् · अतः साधूक्तम् अन्यार्थं पुनर्ग्रहणमिति अन्यार्थत्वाद्दर्शनं भवतीत्यभिप्रायः ॥ ॥ अथेदं विचार्यते । सोमे पयो व्रतं ब्राह्मणस्य यवागू राजन्यस्यामिक्षा वैश्यस्येत्यस्मिन्व्रते[१] किं प्रतिनिधिर्भवत्युत न भवतीति । तत्र पूर्वपक्षमाह ·

व्रते प्रसङ्गो न नियमशब्दात् ॥ ८ ॥ व्रते पयोव्रतादौ प्रतिनिधेः प्रसङ्गो न भवति प्रतिनिधिर्न भवतीत्यर्थः । कुतः नियमशब्दात् · नियमप्रतिपादकः शब्दो नियमशब्दः एवकारः · सो ऽत्र श्रूयते व्रतमेवास्यातो ऽशनं भवतीति · एवकारेण प्रतिनिधिरेव निवार्यते अन्यस्य निवारणीयस्याभावात् ॥ एवं पूर्वपक्षिते इदमेव सूत्रं सिद्धान्तपरतयापि व्याख्यायते । व्रते ऽपि प्रतिनिधेः प्रसङ्गो भवति प्रतिनिधिर्भवत्येव · कुतः · न नियमशब्दात् यतो नायं नियमशब्दः · न ह्ययं नियमं प्रतिपादयितुं शक्तः यतो ऽयमिष्टाशनस्तुत्यर्थः · पुरा केशश्मश्रोर्वपनात् यत्कामयेत तदश्नीयादितीष्टाशनं हि प्रकृत्यैतच्छ्रूयते व्रतमेवास्यातो ऽशनं भवतीति · अतस्तत्संस्तव एवायम् अतो न स्वार्थे प्रमाणमिति

१) See ७. ४. २७.

न प्रतिनिधिनिवारणाय प्रभवति · तस्माद्वतेऽपि प्रतिनिधिर्भवत्येव । अथ चैवं सूत्रयोजना नियमशब्दाद्वते प्रतिनिधेरप्रसङ्ग इति युक्तम् तन्नेति · एवमप्रसङ्ग इत्यकारप्रश्लेषः कार्यः ॥ ॥ अथेदं चिन्त्यते · विहितद्रव्यस्याभावे द्रव्यान्तरे प्रतिनिधित्वेनोपात्ते छागाभावे मेषरूपे · अनुवाचनप्रैषादौ किमूहं कृत्वा प्रतिनिहितद्रव्यशब्दस्य प्रयोगः कार्यः अग्नीषोमाभ्यां मेषस्य वपाया इत्येवम् · उत विहितद्रव्यशब्दस्यैव अग्नीषोमाभ्यां छागस्येत्येवमेवेति (३. ८. २. २६.) । तत्र मन्त्रेण द्रव्यमभिधेयम् न चानूहितः प्रतिनिहितं द्रव्यं शक्नोत्यभिधातुम् तस्मादूहित्वा प्रतिनिहितद्रव्यवाचिशब्दस्य प्रयोगे प्राप्तऽआह ·

शब्देऽविप्रतिपत्तिः ॥९॥ प्रतिनिधावुपात्तेऽपि विहितद्रव्यवाचिनि शब्दे अविप्रतिपत्तिरविपरिणामः अनूहो भवति · अग्नीषोमाभ्यां छागस्य वपाया इत्यनूहितमेव मेषेऽपि प्रयोज्यम् न तु मेषस्येत्येवं विपरिणतरूपमित्यर्थः । कुतः प्रतिनिधिः श्रुतद्रव्यबुद्ध्या गृह्यते न तु द्रव्यान्तरबुद्ध्या · अतश्छाग एवायमिति बुद्ध्या गृहीतत्वात्तच्छब्देनैवाभिधानम् । यद्यत्र मेषश्छागवत्साधनं भवेत्ततस्तत्प्रकाशकं मेषपदं प्रक्षिप्येत · न त्वेवम् किं तर्हि मेषगता ये छागांशास्तऽएवात्र साधनम् ते च छागगता-इव मेषगता अपि छागशब्देनैव प्रकाशयितुं शक्यन्त ऽइत्यनूहेनैव प्रयोगः । यत्र तु द्रव्यान्तरं वचनेन विधीयते यथा सारस्वतीं मेषीमिति (१३. २२. ४.) ऐन्द्रं मेषमिति ऐन्द्र ऋषभः सारस्वतीं मेषीमिति तत्र द्रव्यान्तरबुद्धिर्भवति · तत्र ऊहोऽपि भवति । न चात्रैवंविधं किमपि वचनमस्ति · तस्माद्वह्ननामवयवानां सामान्याच्छ्रुतद्रव्यमेवेदमिति बुद्ध्या मेषादिद्रव्यस्य छागादिप्रतिनिधित्वेनोपादानम् · तेन श्रुतद्रव्यशब्देनैवाभिधानं युक्तमिति साधूक्तम् शब्देऽविप्रतिपत्तिरिति ॥ यत्र तु वचनेन द्रव्यान्तरं विधीयते तत्र ऊहो भवतीत्युक्तम् तेन सोमाभावे पूतीकानभिषुणुयादिति पूतीकानां वाचनिकत्वादूहो भविष्यतीत्याशङ्क्याह ·

सोमेन ज्ञात्यभावात् ॥१०॥ सोमेनेति तृतीयैकवचनम् · सोमाभावे पूतीकेषूपात्तेषु सोमेनेति सोमशब्देनैव पूतीकानामभिधानं कर्तव्यम् अंशुरंशुष्टे देव सोम प्यायतामित्येवम् (३. ४. ३. १८.) · न तु पूतीकाशब्देन । अथवा सोमे

इति सप्तम्येकवचनम् नेति निषेधः · सोमप्रतिनिधित्वेनोपात्तेषु अर्जुनश्येनहृतपूतीकादिषु सोमे सोमशब्दे ऊहो न भवति । कुतः जात्यभावात् जात्यन्तरबुद्ध्यभावात् · न ह्यत्र वचनेन द्रव्यान्तरं विधीयते किं तर्हि सोमाभावे यागस्यावश्यकर्तव्यत्वादनेकेषु सुसदृशेष्वीषत्सदृशेषु च प्राप्ते[षु] पूतीकादेर्नियमः क्रियते · तेनैन्द्रो मेष इतिवद्वाचनिकजात्यन्तरविधानाभावादत्राप्यूहो न भवतीति ॥ ॥ अथेदं विचार्यते । वरुणप्रघासेषु पशौ च श्रूयते पृषदाज्यं गृह्णातीति (३. ८. ४. ७.) तेनानुयाजेषु चरतीति (८.) च · प्रकृतौ चाज्यपदसंयुक्ता नियमाः सन्ति देवानामाज्यपानावह स्वाहा देवानाज्यपान् (१. ४. २. १७.) देवानामाज्यपानां प्रिया धामानि (१. ७. ३. ११.) देवा आज्यपा आज्यमजुषन्तेति (१. ३. ८. १०.) च · आज्यपशब्देनात्र प्रयाजानुयाजदेवता उच्यन्ते प्रयाजानुयाजा वै देवा आज्यपा इति (१. ४. २. १७.) वाक्यशेषात् · अत्र च पृषदाज्येनानुयाजा इज्यन्ते[1] । तदिह संशयः आज्यपशब्दस्याज्यदधिपानित्येवमूहः अथवा दधिपानिति उत पृषदाज्यपानिति आहोस्विदविकारेणैवाज्यपानिति प्रयोगः · यद्युभयं हविस्ततः प्रथमः पक्षः · यदि दध्येव ततो द्वितीयः · यदि पृषदाज्यनामकं द्रव्यान्तरं हविस्ततस्तृतीयः · अथ त्वाज्यमेव हविः तस्य तु पृषत्त्वं चित्रता संस्कारमात्रम् तज्जननार्थं च दधि ततः सिद्धान्तः । तत्र अथ पृषदाज्यं गृह्णाति द्वयं वाऽइदꣳ सर्पिश्चैव दधि चेति (३. ८. ४. ७.) तुल्यवत्सकीर्तनादुभयं हविः उभयमप्यनुष्ठानाङ्गत्वेन स्मर्तव्यम् तस्मादुभयोः प्रकाशनम् · अथवा शाखान्तरे द्विरुपस्तृणाति द्विरवद्यति सकृदभिघारयतीत्युपस्तरणाभिघारणवादाद्दधिसंस्कारार्थमाज्यम् दध्येव हविः ततो दधिपानित्येवं वक्तव्यम् · नैतदुभयम् · ग्रहणे हि दध्याज्ययोस्तुल्यत्वं दध्नो वा प्राधान्यं गम्यते यागे त्वाज्यमेव पृषत्तागुणकं करणत्वेन श्रुत्या विधीयते नोभयम् नापि दधि · यच्च यागद्रव्यम् तदर्थो ग्रहणसंस्कारः तस्माद्ग्रहणेऽप्याज्यमेव प्रधानम् · तस्य तु पृषत्तासम्पादनार्थं दधि गृह्यते न स्वार्थेनानुपयोगित्वात् · तथाविधे तु दध्नि तुल्यनिर्देश उपस्तरणादिवादेन च प्राधान्यनिर्देशोऽर्थवादमात्रम् तस्मादविकारः । अन्यस्त्वाह · दध्ना आज्येन च द्रव्यान्तरं

[1] इत्यंते २.

निष्पद्यते · तस्य वाचकः पृषदाज्यशब्दः · तच्च हविः पृषदाज्येनानुयाजान्यज-
तीति · तस्मात्पृषदाज्यपानित्येवं वक्तव्यमिति प्राप्तेऽग्राह ·

आज्ये चादर्शनात् ॥ ११ ॥ अविप्रतिपत्तिरित्यनुवर्तते । पृषदाज्येनानु-
याजान्यजतीति वाचनिके पृषदाज्ये सत्यपि आवाहनादिनिगमेषु आज्ये आज्य-
शब्दे अविप्रतिपत्तिरविकारः · देवानाज्यपानित्येव वक्तव्यमित्यर्थः । कुतः अ-
दर्शनात् आज्यव्यतिरिक्तस्य द्रव्यान्तरस्यादर्शनात् · तथा हि स्याद्विकारो यदि
पृषदाज्यशब्दः समुदायशक्त्या द्रव्यान्तरमभिधत्ते · न त्वेवमस्ति [1] · पृषच्छब्दो लोके
चित्रवचनः पृषद्रज्जुः पृषन्मणिरिति · तेन पृषदाज्येनेति चित्रेणाज्येनेत्यर्थः ·
तेन प्राकृतस्यैवाज्यस्य चित्रतागुणमात्रविधानम् · गुणं च सम्पादयितुं दधि गृ-
ह्यते प्राधान्यनिर्देशोऽर्थवादमात्रम् · हविरेव च प्रकृतावुपलक्षितम् न
हविर्गुणः · तस्मादधिकारेणाज्यपानित्येव वक्तव्यमिति सिद्धान्तः । किं च ·

पशौ मन्त्रवर्णात् ॥ १२ ॥ पशावेवोत्तमप्रयाजप्रैषे पठ्यते स्वाहा देवा
आज्यपा इति (२१. ४०.) · वनस्पतिप्रैषेऽपि देवानामाज्यपानां प्रिया धामानी-
ति (२१. ४६.) · स्विष्टकृत्प्रैषेऽपि अयाड्देवानामाज्यपानामिति (२१. ४७.) · तत्र
नियमतः पृषदाज्येनैवानुयाजा इज्यन्ते · अत एव पशुसम्बन्धिनो मन्त्रवर्णाद्देवा-
नाज्यपानित्यावाहनादि [2] भवतीति गम्यते । किं च ·

श्रुतेश्च ॥ १३ ॥ एकवचनश्रुतिरप्यत्रैकस्यैव प्रधानं गम्यते नोभयोः
अथ पृषदाज्यं गृह्णातीति (३. ८. ४. ७.) · यदि चात्र दध्नोऽपि प्राधान्यं स्यात्तदा द्वि-
वचनं श्रूयेत · न च श्रूयते · अत एकवचनश्रुतेरप्ययमेवार्थोऽवसीयते यदेक-
स्यैवात्र प्राधान्यमिति तच्चाज्यस्यैवेति प्राक्साधितम् ॥ ॥ अथेदं विचार्यते ।
व्रीहिभिर्यजेत यवैर्यजेतेति विकल्पेन विहितेषूभयेषु मध्ये एकेन व्रीहिद्रव्येण
प्रारब्धे कर्मणि तस्य नाशदोषापहारादिके जाते पश्चाद्यदि व्रीहयो न प्राप्यन्ते
तदा किं वैकल्पिकं द्रव्यान्तरं यवरूपमुपादेयम् उत व्रीहिसदृशमिति । तत्र मुख्य-
द्रव्ये सति प्रतिनिध्युपादानस्यायुक्तत्वाद्यवानामुपादाने प्राप्ते सिद्धान्तमाह ·

विकल्पे प्रवृत्ते कर्मान्तरवात् ॥ १४ ॥ विकल्पे सति यत्प्रवृत्तम् येन

[1] न न्वेव° २. [2] ? °त्यादावनहीन २.

कर्मारब्धम् तदेव तस्मिन्प्रयोगे ऽङ्गम् इतरद्वैकल्पिकान्तरमनङ्गम् · तेन व्री-
हिभिः प्रयोगे ऽउपक्रान्ते तेषामपहारादौ अलाभे च व्रीहिसदृशं नीवारादिकमुपा-
देयम् न तु वैकल्पिका यवाः । कुतः कर्मान्तरत्वात् · यथारम्भं हि समापनी-
यम् · तत्र यदि व्रीहिभिः प्रारब्धस्तदा तस्मिन्प्रयोगे व्रीहय एवाङ्गम् तेषु च
विनष्टेषु साम्यात्तद्बुद्ध्यैव यदि नीवारा गृह्यन्ते तदेवेदं कर्मेति प्रतीतिर्भवति
तेन व्रीहिसदृशमेवोपादेयम् · यवेषु पुनर्द्रव्यान्तरबुद्ध्योपादीयमानेषु व्रीहिभ्यो
ऽन्यदेव द्रव्यमिति कर्मान्तरबुद्धिरुदेति सादृश्याभावात् तथा सति यथारम्भं
समापनं च कृतं न भवति । एवं सर्ववैकल्पिकेषु यावदेकमनुपक्रान्तम् ताव-
त्सर्वेषां प्राप्तिः · तेषां मध्ये तु एकेन प्रयोगे प्रारब्धे तस्मिन्प्रयोगे तदेव श्रुतं
द्रव्यम् द्रव्यान्तरं त्वश्रुतसममेव[1] · तेन प्रारब्धप्रयोगस्य द्रव्यस्याभावे तत्स-
दृशमुपादेयम् न तु वैकल्पिकमिति ॥ ॥ अथ वैवं सूत्रयोजना । सोमे न ज्ञा-
त्यभावादित्यतो (१०.) नेत्यनुवर्तते । विकल्पे प्रवृत्तम् यवादिकम् न प्रतिनिधे-
यम् । कुतः कर्मान्तरत्वात् यतस्तदुपादीयमानं द्रव्यान्तरबुद्ध्योपादीयमानत्वा-
त्कर्मान्तरत्वमापादयति · तच्च नेष्यते यथारम्भसमापनस्योचितत्वात् द्रव्यान्तरे
चोपात्ते तथा न स्यादिति । अतो व्रीह्याग्रयणानन्तरं प्रागयवाग्रयणाद्व्रात्या यवै-
र्यागे कृते तेषामश्रुतसमत्वात्पुनर्व्रीहिभिरेव यागो ऽनुष्ठेयः ॥ ॥ अथैतद्विचार्यते
। व्रीह्यभावे प्रतिनिधित्वेन नीवारैः प्रयोगे प्रारब्धे नीवाराणामपहारादिनाभावे
सति किं प्रतिनिधिभूतं नीवारसदृशमुपादेयम् उत मुख्यद्रव्यं व्रीहिरूपं तत्सदृशं
चेति । तत्र यथैव वैकल्पिकेष्वेकस्मिन्प्रवृत्ते तस्यैव तत्प्रयोगाङ्गत्वात्तदपचारे चैत-
त्सदृशमेवोपादेयम् वैकल्पिकान्तरं मुख्यमपि तत्प्रयोगानङ्गत्वान्नोपादीयते तथैव
प्रतिनिधौ प्रवृत्ते[2] तस्यैव तस्मिन्प्रयोगे ऽङ्गत्वात्तदपचारे तत्सदृशमेवोपादेयम् न
तु मुख्यं तत्सदृशं वा तस्यैतत्प्रयोगानङ्गत्वादिति प्राप्ते सिद्धान्तमाह ·

प्रतिनिधौ तत्कालात् ॥ १५ ॥ प्रतिनिधिद्रव्ये नीवारादौ विनष्टे न प्रति-
निधिभूतनीवारादिसाम्येन प्रतिनिध्युपादानम् किंतु मुख्यद्रव्यमेव व्रीहिरूपमु-
पादेयम् सम्भवे तदसम्भवे तु मुख्यसादृश्येन नीवारादिः प्रतिनिधिरुपादेयः ·

---

१) ? द्रव्यान्तरं २. २) ? प्रकृते २.

न तु प्रतिनिहितनीवारसादृश्येन । कुतः तत्कालात् स कालो यस्यासौ तत्कालः · भावप्रधानो निर्देशः प्रतिनिधेस्तत्कालत्वादित्यर्थः [१] · यतः प्रतिनिधेः स एव कालो यो मुख्यद्रव्यस्याभावः · तेन प्रतिनिधौ नीवारे विनष्टे मुख्यस्य लाभे मुख्यमेव ग्राह्यम् तदलाभे नीवारादिकं व्रीहिसदृशमेवेति · न तु कदाचिन्नीवारसदृशमित्यर्थः · न हि नीवाराणामङ्गत्वमस्ति श्रुतिलिङ्गादिप्रमाणाभावात् । श्रुतद्रव्यसाधारणास्तु येऽवयवा नीवारगता दीर्घशूकसतुषत्वादयस्तदुपादित्सया प्रवर्तमानो नान्तरीयकतया [२] नीवारानुपादत्ते · तस्मान्नीवारस्यानङ्गत्वाद्व्रीह्यवयवानामेवाङ्गत्वात्तत्सिद्ध्यर्थं सम्भवे व्रीहयो ऽसम्भवे च तत्सदृशमुपादेयम् न नीवारसदृशमिति सिद्धान्तः । वैकल्पिकान्तरं तु पूर्वाधिकरणे निराकृतमिति तदुपादानस्यात्र शङ्कैव नास्ति ॥ ननु यदि प्रमाणाभावान्नीवारादीनामनङ्गत्वम् श्रुतिलक्षणांस्य तु पूतीकादेरङ्गत्वात्तस्य प्रक्रान्तस्यापचारे तत्सदृशमेवोपादेयम् न सोमसदृशमिति चेत् · न तु · श्रुतिरप्यत्र [३] प्रतिनिधिनियमार्थैव · सत्यम् तथाप्यस्त्यत्र काचिदाशङ्का सोमावयवानामन्यत्रापि सद्भावे सति पूतीकनियमादेवं विज्ञायते नूनं पूतीकांशोऽप्यस्यां वेलायां क्रियाङ्गमिति · इतरथा सोमावयवस्याङ्गत्वे तस्यान्यत्रापि सम्भवान्न पूतीका एवोपादीयेरन् तत्र नियमविधिरुपरुध्येत [४] · तस्मात्पूतीकस्याप्यङ्गत्वात्तदपचारे तत्सदृशमुपादेयम् न सोमसदृशमिति । सिद्धान्तस्तु · सत्यम् · न सोमावयवमात्रमङ्गम् किंतु पूतीकावयवसहिताः सोमावयवाः · न तु तावता पूतीकावयवाः क्रियाङ्गं भवन्ति प्रतिनिधिनियमव्याघातप्रसङ्गात् · किंतु सोमावयवा एव क्रियाङ्गम् पूतीकावयवसाहित्यं तु तेषामेवाङ्गम् मैत्रावरुणग्रहस्येव पयःसंसर्गः · ततः पूतीकापचारे [५] द्वयसम्पादनार्थमुभयसदृशमुपादेयम् न केवलं पूतीकसदृशम् नापि केवलं सोमसदृशम् · उभयसदृशालाभे तु सोमावयवानां प्राधान्यात्तद्धि-

---

[१] प्रतिनिधिस्त° २. [२] Thus also the Çâstradîpikâ at Jaim. ६. ३. ३०: व्रीह्यवयवांस्तु तद्गतानुपाददानो नान्तरीयकतया नीवारानुपादत्ते नाङ्गतया. See p. ६८, lin. १७. [३] ? ननु श्रुतिर° २. The Çâstradîpikâ at Jaim. ६. ३. ३१. reads: नैवं · न हि श्रुतिः पूतीकानामंगत्वमाह · किं तर्हि तद्गतानां सोमावयवानां प्रतिनिधिनियमो ऽप्ययं नाभावे विधिरित्युक्तं. [४] ? °रुपध्येत २. [५] ? °कोपचारे २.

प्सया सोमसदृशमेवोपादेयम् न पूतीकसदृशमिति । अतश्च मुख्यद्रव्यस्यात्यन्ता-लाभ एव प्रतिनिधेः साधनत्वम् · तेन मुख्यद्रव्ये सति अल्पा प्रतिनिधिद्रव्येण यागे कृते पुनर्मुख्यद्रव्येण यागावृत्तिः ॥ ॥ अथ यत्रार्थद्रव्ययोर्विरोधस्तत्र कथम् । तद्यथा मुख्यं द्रव्यं खादिरादिकं नियोजनादिकार्यासमर्थं विद्यते प्रतिनिधि-द्रव्यं च कार्यसमर्थम् · तत्र यदि मुख्यं द्रव्यं गृह्यते तदा तेन कार्यं नियुक्तप-शुनपक्रमणरूपं न सिध्यति · यदि च कार्यसिद्धिसमर्थं प्रतिनिधिद्रव्यं गृह्यते तदा मुख्यद्रव्यं गृहीतं न स्यात् · तत्रैवं संदेहः किं कार्यसाधनासमर्थमपि मुख्यं ग्राह्यम् उत मुख्यमनादृत्य कार्यसमर्थं प्रतिनिधिद्रव्यमिति · तत्र मुख्या-मुख्ययोर्मुख्ये संप्रत्यय इति न्यायेन मुख्यस्यैव परिग्रहे प्राप्ते सिद्धान्तसूत्रम् ·

अर्थद्रव्यविरोधेऽर्थसामान्यं तत्परत्वात् ॥१६॥ अर्थः प्रयोजनं कार्यमिति यावत् · द्रव्यं मुख्यद्रव्यम् · अर्थद्रव्यविरोधे कार्यमुख्यद्रव्ययोर्विरोधे सति अर्थ-सामान्यम् अर्थेन प्रयोजनेन कार्येण सामान्यम् संयुक्तं कार्यसिद्धिसमर्थं यत् तदश्रु-तमपि प्रतिनिधिद्रव्यमुपादेयम् । कुतः तत्परत्वात् द्रव्यस्यार्थपरत्वात् कार्यार्थ-त्वात् · कार्यार्थं हि द्रव्यं न त्वदृष्टार्थम् येन च कार्यं न सिध्यति तच्छ्रुतमपि सदश्रुतसममेव · अतो द्रव्यस्य प्रयोजनार्थत्वात्तद्विरोधे तु श्रुतमप्यनादृत्य प्रयोज-नक्षममेवाश्रुतमपि [प्रति]निधिद्रव्यमेवोपादेयम् न तु मुख्यं कार्यासमर्थमिति सिद्धान्तः । तदुक्तं जैमिनिना (६. ३. ३२.) अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तिर्द्र-व्याणामर्थशेषत्वादिति ॥ यदा पुनरश्वशफपरिमाणाय (१. २. २. १०.) शेषकार्येभ्य-श्चापर्याप्ताः पुरोडाशजातिमात्राभिव्यक्तिसमर्था व्रीहयोऽल्पेऽपि लभ्यन्ते तदा[1] तैरेव पुरोडाशः कर्तव्य उत नीवारैरिति संशयः · तत्र यद्यपि यागोद्देशेन व्रीहयो विधीयन्ते तथाप्युत्पत्तिशिष्टपुरोडाशविरोधान्न तेषां साक्षाद्यागसाध-नता किंतु पुरोडाशप्रकृतितया · ततश्च व्रीहीणामपि पुरोडाशाङ्गत्वात् स्वि-ष्टकृदिडाप्राशित्रचतुर्धाकरणषडवत्तब्रह्मयजमानभागभक्षणरूपाणां शेषकार्याणाम-श्वशफपरिमाणस्य च सर्वेषां पुरोडाशाङ्गत्वात् नाङ्गप्रधानकृतो विशेषः · तेनाश्व-शफपरिमाणस्य भूयसां शेषकार्याणां चानुग्रहाय व्रीहिशास्त्रमेकं बाधितव्यम् ।

१) तदा किं Çâstradip.

किं च प्रतिनिध्युपादाने व्रीहिशास्त्रस्य नात्यन्तबाधोऽपि व्रीह्युपादाने तु[1] शेषकार्याणामत्यन्तलोपः स्यात् · [अतः] प्रधानाङ्गभूतपुरोडाशजात्यभिव्यक्तिमात्र-समर्थेषु सत्स्वपि व्रीहिषु शेषकार्यविघ्नबाधाय नीवारा एवोपादेया इति पूर्वः पक्षः । सिद्धान्तस्तु श्रुत्या तावद्यागाङ्गत्वमेव व्रीहीणामवगम्यते · वस्तुतोऽपि तथा · यद्यपि पुरोडाशप्रकृतित्वं व्रीहीणामवगम्यते तथापि तदवयवा एव पुरोडाशतामापन्ना यागद्रव्यं भवन्ति · ते[2] च नीवारेषूपादीयमानेषु विगुणा भवन्ति · ततश्च प्रधानमेव विगुणं स्यात् · तच्चाम्याय्यम् · तस्मात्प्रधानाङ्गभूतपु-रोडाशजात्यभिव्यक्तिसमर्थेषु व्रीहिषु सत्सु शेषकार्याण्यनादृत्य व्रीहिभिरेव पुरो-डाशः कार्यो न शेषकार्यानुरोधेन नीवारोपादानमिति सिद्धम् । तदुक्तं मण्ड-नेन अवत्तमात्रपर्याप्तव्रीहिद्रव्यस्य[3] सम्भवे पुरोडाशमकृत्वार्थं न नीवारपरिग्रह इति ॥ एवं सांनाय्येऽपि प्रधानयागसाधनसमर्थं स्रुग्द्वयत्रयपरिमाणमपि यावत् दुग्धं लभ्यते कथंचित् तावत् चरू सांनाय्यालाभ इति (२५. ५. ६.) चरू न भवतः · अवदानमात्रसमर्थमुख्यद्रव्याभावे त्वर्थद्रव्यविरोधेऽर्थसामान्यमिति न्यायेन प्रतिनिध्युपादानमेव युक्तम् ॥ ॥ अथ यत्र गुणद्रव्ययोर्विरोधस्तत्र कथम् । तद्य-था नैर्ऋतः परिवृत्त्यै[4] कृष्णव्रीहीणां नखनिर्भिन्नानामिति (१५. ३. १४.) तत्र ये व्रीहयः सन्ति मुख्यास्ते अकृष्णाः ये च नीवारास्ते च कृष्णाः · तत्र किं मुख्यद्रव्यमनादृत्य गुणानुरोधेन नीवारोपादानम् उत कृष्णगुणमनादृत्य[5] मुख्य-द्रव्यं व्रीहय इति · तत्र व्रीहीणामुपादाने कृष्णगुणहानिः स्यात् नीवाराणा-मुपादाने च तस्यानुग्रहः व्रीहिशास्त्रमपि किंचिन्न्यूनं सम्पादितं भवति · अतः कृष्णानां नीवाराणामुपादाने प्राप्तऽआह ·

गुणद्रव्ययोर्द्रव्यं प्रधानयोगात् ॥ १७ ॥ गुणद्रव्ययोर्विरोधे कृष्णत्वादिगु-णमुख्यद्रव्ययोर्विरोधे सति गुणमनादृत्य द्रव्यं मुख्यद्रव्यमेवोपादेयम् न गुणा-नुरोधेन प्रतिनिधिद्रव्यम् । कुतः प्रधानयोगात् द्रव्यस्य यतो द्रव्यं प्रधानेन संयुज्यते · यतस्तत्त्यज्यमानं यागं साधयति · अतो यागस्य द्रव्यं संनिकृष्टम् गुणो विप्रकृष्टः · अतो गुणमनादृत्य मुख्यद्रव्यमेवोपादेयमित्येवं प्राप्तऽआह ·

1) ? हि २. 2) ? तेन २. 3) ? °मात्राप° २. 4) परिवृत्यै २. 5) कृष्णं गुणम° २.

न समत्वात् ॥ १८ ॥　　द्रव्यमेव प्रधानयोगीति यदुक्तम् तन्न · कुतः · समत्वात्　उभयोर्गुणद्रव्ययोः सदृशत्वात् । द्रव्यमपि प्रधानयोगि　अन्तत्वाच्च गुणोऽपीत्येवं प्राप्तऽउक्तमेव सिद्धान्तं दृढयति [1] ·

गुणानुग्रहात् ॥ १९ ॥　　गुणेनानुगृहीतं विशेषितं द्रव्यमेव प्रधानयोगि · गुणस्तु तत्र विशेषणमात्रम्　विशेष्यं तु द्रव्यमेव · अतो विशेषणविशेष्ययोर्विशेष्ये सम्प्रत्यय इति न्यायाद्द्रव्यमेव गुणानुगृहीतं प्रधानयोगीति नैतदुभयं समम् । अत एवाग्निहोत्रे पुंवत्साया अग्निहोत्र्याः (४. १४. १.) पयसोऽभावे पुंवत्सत्वलक्षणं गुणं हित्वा स्त्रीवत्साया अप्यग्निहोत्र्याः पयसा होतव्यम् । एवं पालाशानां परिधीनामार्द्राणामभावे (२. ८. १.) आर्द्रत्वरूपं गुणं त्यक्त्वा शुष्का अपि पालाशा ग्राह्याः । बाहुमात्राणामसम्भवे (२. ८. १.) अबाहुमात्रा अपि । एवं सर्वत्रोह्यम् ॥　यदा पुनः खदिरस्तनुत्वात्तक्षणादिसंस्काराणामयोग्यः नियोजनमात्रे योग्यः　कदरश्च महान्संस्कारयोग्यस्तदा कस्योपादानमिति संदेहः · तत्र संस्कारक्षमकदरोपादाने खदिरविधेर्वैकल्पिकमात्रत्वेनात्यन्तपीडाभावात् [2] अक्षमखदिरोपादाने तु संस्कारविधीनामत्यन्तपीडाप्रसङ्गात् प्रतिनिधिरेवोपादेयः · मैवम् · न हि गुणानुरोधेन प्रधानमुपरोद्धव्यं भवति · तेन भवतु संस्काराणामत्यन्तपीडा न तु प्रधानं तदनुरोधेन कथंचिदपि पीडयितव्यम् · तस्मात्तक्षणाद्यसंस्कृतऽएव खदिरे पशुं नियुञ्जीत · तदुक्तं जैमिनिना (६. ३. ३५.) द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वादिति ।　यदा पुनर्मुख्यमलभ्यं मत्वा प्रतिनिधिमुपादातुं प्रस्थितेनान्तरा मुख्यं लब्धम्　तदा प्रतिनिधिः संकल्पितत्वात् मिथ्यासंकल्पदोषपरिहाराय मुख्यमनादृत्य प्रतिनिधिरेवोपादेय इति प्राप्तेऽभिधीयते · यथाशक्ति शास्त्रार्थं सम्पादयामीत्येवं शास्त्रार्थविषय एव संकल्पः कर्तव्यः　न प्रतिनिधिस्वरूपं संकल्पयितव्यम् · न च मुख्ये विद्यमाने प्रतिनिधिः शास्त्रार्थो भवति　समग्रानुष्ठानशक्त्यामसत्यां हि विकलाङ्गानुष्ठानमपि शास्त्रीयं भवति　न सत्यामिति · तस्मान्मुख्यप्राप्तौ मुख्यमेवोपादेयम् · तदुक्तं जैमिनिना (६. ३. ३२.) मुख्याधिगमे मुख्यमागमो हि तदभावादिति ॥　यदा पुनर्मुख्यं खदिरमलब्ध्वा प्रतिनिधिं कदरमु-

---

१) दृढयति २.　　२) ? °धेर्वैकल्पमात्र° २.

पादाय तत्तणादिषु कतिचित्संस्कारेषु[1] कृतेषु प्राक्पशुनियोजनात्खदिरं लभते तदा किमुपात्तेन प्रतिनिधिना कार्यं कुर्यात् उत तत्त्यागेन मुख्यमेवोपादाय संस्कारांश्च पुनः कृत्वा तत्रैव पशुं नियुञ्जीतेति संशयः । तत्रोपात्ते प्रतिनिधौ निवृत्तव्यापारं शास्त्रं नान्यदुपादापयति तस्मान्न मुख्योपादानमिति प्राप्ते ब्रूमः

नोपादानपरं शास्त्रम् येन तस्मिन्कृते निवृत्तव्यापारं स्यात् · प्रधानानुष्ठानार्थं शास्त्रम् तच्च प्रधानं[2] सति मुख्ये प्रतिनिधिना क्रियमाणं विगुणं स्यात् · अतः संस्कृतमपि कदरं छित्वा खदिरं संस्कृत्य तस्मिन्पशुर्नियोक्तव्यः · ये च कदरे कृताः संस्कारास्तेषां खदिरेऽआवृत्तिः स्यात् प्रधानवशेन गुणावृत्तेर्न्याय्यत्वात् । एवं पशुव्रीह्यादिष्वपि द्रष्टव्यम् · तत्रापि प्राक्तयागान्मुख्यद्रव्यलाभे संस्कृतमपि पुरोडाशादिकं प्रतिनिधिद्रव्यं निष्पादितं त्यक्त्वा मुख्यद्रव्येण पुरोडाशान्तरं संस्कृत्य तेन यागः साधनीय इति । तदुक्तम् (जैमिनि° ६. ३. ३३.) प्रवृत्तेऽपीति चेदिति । अथ यथा प्रतिनिधिना नियोजने कृते यदा मुख्यमुपलब्धम् तदा कृतमपि नियोजनं साद्गुण्याय[3] पुनः खदिरे कर्तव्यमिति मन्वानस्योत्तरम्[4] कृते नियोजने लब्धोऽपि खदिरोऽनर्थक एव · नियोजनार्थं हि तदुपादानम् · तच्च कृतं न गुणानुरोधादावर्तयितव्यम् · अतो नादर्तव्यः खदिरः · तदुक्तम् (जैमिनि° ६. ३. ३४.) नानर्थकत्वादिति । अथवा सूत्रद्वयमिदमेकाधिकरणम् · प्रवृत्तेऽपि कृतेऽपि प्रधाने मुख्योपादानं स्यादिति चेत् नानर्थकत्वादिति ॥ ॥ चतुर्थी कण्डिका ॥४॥

अथ पञ्चमी ॥

विहितद्रव्याभावे काम्यस्य कर्मण आरम्भ एव न कार्यः नित्यं च कर्म मुख्यद्रव्याभावेऽपि प्रतिनिधिनाप्यारम्भणीयमेव · काम्ये मुख्यद्रव्यस्य सद्भावं ज्ञात्वा आरब्धे आरम्भानन्तरं मुख्यद्रव्यालाभे काम्यमपि नित्यवत्प्रतिनिधिमुपादायावश्यं समापनीयमेव असमाप्तस्यैव परित्यागो न कार्यः · नित्ये कर्मण्यवश्यकर्तव्यत्वादारब्धे अनारब्धे च प्रतिनिध्युपादानं भवति · काम्ये चावश्यकर्तव्यत्वाभावात्प्रतिनिधिना आरम्भो न भवति आरब्धे चावश्यसमापनीयत्वात्समाप्त्यर्थं

---

1) कतिषु चित्सं° the Çâstradîp. 2) Thus the Çâstradîpikâ, प्रधाने 2. 3) Thus the Çâstradîp., स्याद्गु° 2. 4) Thus the Çâstradîp. मत्वातस्योत्तरं 2.

प्रतिनिधिर्भवत्येव । दीक्षितस्य पयआदिके व्रतेऽपि प्रतिनिधिर्भवति · व्रतं कृणु-वेत्येवकारस्येष्टाशनस्तुतिपरत्वेन व्रतप्रतिनिधिव्युदासपरत्वाभावात् । यदा मुख्य-द्रव्यालाभे प्रतिनिधिभूतं द्रव्यान्तरं गृह्यते यथा अग्नीषोमीयछागाभावे मेषः यथा वा परिक्रयादौ वासोगवादीनामलाभे द्रव्यम् तदा अग्नीषोमाभ्यां छाग-स्येत्यादौ वासोऽसि गौरसीत्यादौ च मुख्यद्रव्यवाचिशब्दस्याविपरिणामोऽनूह एव कार्यः · न तु छागस्येत्यस्य स्थाने मेषस्येत्यादि विपरिणतरूपं प्रयोज्यम् · यत्र पुनर्जात्यन्तरं विहितं भवति तत्र विपरिणामो भवत्येव यथा ऐन्द्रो वृष्णिः षोडशिनीत्यादौ (९. ८. ४.) । तथा सोमाभावे पूतीकेषूपात्तेष्वपि अंशुरंशुष्टे देव सोमेत्यादौ सोमशब्दश्च प्रयोज्यो न पूतीकशब्दः पूतीकानामपूर्वविध्यभा-वात् । तथा पश्वादौ पृषदाज्यसाधनकेष्वनुयाजेषु सत्स्वपि देवा आज्यपा इत्यत्रा-ज्यशब्दस्यानूह एव आज्यस्यैव कर्बुरस्य पृषदाज्यशब्दवाच्यत्वेन द्रव्यान्तरत्वा-भावात् । तथा व्रीहिभिर्यजेत यवैर्यजेत । तथा आग्रयणे द्यावापृथिवीययागे पुरोडाशेनाज्येन वा यजेत । तथा सरस्वत्यै चतुर्थेऽतिरात्रो मेषी वेत्यादौ (९. ८. ५-६.) वैकल्पिकद्रव्यविधाने समविकल्पत्वादन्यतरेण कर्मणि प्रारब्धे सति येन द्रव्येण कर्मारब्धं तस्य नाशदोषादौ जाते पश्चात्तज्जातीयद्रव्यालाभे वैकल्पिकं द्रव्यान्तरं नोपादेयमेव किंतु येनारब्धं तत्सदृशमेव प्रतिनिधित्वेनोपादेयम् · अतो व्री-हिभिः कर्मण्यारब्धे व्रीहिषु विनष्टेषु व्रीह्यन्तरालाभे सति व्रीहिसदृशान्नीवारा-दीनुपादाय कर्म समापनीयम् · विकल्पेन विहिता अपि यवा नोपादेयाः · एवं वै सर्वं वैकल्पिके व्यूह्यम् । एवं व्रीह्यभावे नीवारैः प्रयोगे प्रारब्धे नीवारेषु विनष्टेषु कथंचिद्व्रीहिप्राप्तौ सत्यां व्रीहिभिरेव अप्राप्तौ च व्रीहिसदृशैरेव कर्म समापनीयम् न नीवारसदृशैः नापि वैकल्पिकैर्यवैः । यत्र मुख्यद्रव्येण प्रयो-जनसिद्धिर्न भवति प्रतिनिधिद्रव्येण च भवति तदा मुख्यद्रव्यमनादृत्य प्रतिनि-धिनैव कर्म कर्तव्यम् · यथा पुरोडाशनिष्पत्त्यर्थं व्रीहय उपादीयन्ते ते च न पुरोडाशनिष्पत्तिसमर्थाः नीवाराश्च पुरोडाशनिष्पत्तिसमर्था विद्यन्ते तदा व्री-हीननादृत्य नीवारैरेव पुरोडाशो निष्पादनीयः । अथ यदा नैर्ऋतः परिवृत्त्यै [1]

[1] °वृत्यै १. २. ३.

कृष्णव्रीहीणामित्यत्र (१५. ३. १४.) कृष्णानां व्रीहीणामभावे अकृष्णा व्रीहयः सन्ति कृष्णाश्च नीवारा इति यदा कृष्णगुणमनादृत्य व्रीहयो गृह्यन्ते तदा गुणानामनुग्रहः कृतो न भवति · यदा च कृष्णनीवारा गृह्यन्ते न तदा व्रीहयः · तत्रैवं गुणद्रव्ययोर्विरोधे गुणं हित्वा व्रीहय एवाकृष्णा अप्युपादेयाः · एवमेवाग्निहोत्रेऽपि पुंवत्साया अग्निहोत्र्याः पयसोऽभावे पुंवत्सत्वलक्षणं गुणं हित्वा स्त्रीवत्साया अपि पय उपादेयम् · एवं पालाशानां परिधीनामार्द्राणामभावे आर्द्रत्वरूपं गुणं हित्वा शुष्का अपि पालाशा ग्राह्याः · एवं सर्वत्र प्रतिनिधिषूह्यम् [1] । एवं व्रीहीणामपि प्राशित्रेडादिप्रतिपत्तिकर्मपर्याप्तपुरोडाशनिष्पत्तिसमर्थानामभावे अवदानद्वयपर्याप्तपुरोडाशनिष्पत्तिमात्रा अपि व्रीहयो ग्राह्याः ॥ ॥४॥

इति प्रथमस्य चतुर्थी कण्डिका ॥ ॥

अथेदं विचार्यते । यान्येकप्रधानसम्बन्धीन्यङ्गकर्माणि किं तेषामनुष्ठाने कश्चित्क्रमनियमो नास्ति उतास्तीति · तत्र सूत्रेणैव पूर्वपक्षमाह ·

कर्मणामानुपूर्व्यं न युगपद्भावात् ॥१॥ आनुपूर्व्यं पौर्वापर्यं क्रम इत्यनर्थान्तरम् · कर्मणामिति अग्न्यन्वाधानादीनामङ्गकर्मणामनुष्ठाने आनुपूर्व्यं न भवति क्रमनियमो न भवति । कुतः युगपद्भावात् अतस्तान्यङ्गानि यदा प्रधानेनापेक्ष्यन्ते तदा युगपद्भावेनैव यौगपद्येनैव सहैव सम्बन्धं प्राप्नुवन्ति न क्रमेण [2] · ततश्चैषां नियमेन क्रमेणानुष्ठाने कारणाभावात् कर्तुरेकत्वादवश्यम्भाविनि क्रमे येन केनचिदनियतेन क्रमेणानुष्ठानम् ।

अर्थनिर्वृत्तेश्च ॥२॥ येन केनचित्क्रमेणाङ्गानुष्ठाने क्रियमाणे अर्थनिर्वृत्तिरङ्गकलापनिष्पत्तिः सुखेनैव भवति नियतक्रमेण क्रियमाणे तु नियतक्रमस्यानागतस्य वस्तुतः प्रतीक्षणेन विलम्बाद्बहुना कालेन स्यात् · तथा सति प्रयोगे प्राशुभावो [3] न स्यात् · प्रधानप्रत्यासत्त्या [4] कालो ह्यङ्गानां विहितः अङ्गानां नियतक्रमेणानुष्ठाने च सोऽपि अतिक्रान्तः स्यादिति · तस्मादङ्गानुष्ठाने क्रमनियमो नेति पूर्वः पक्षः । सिद्धान्तमाह ·

---

1) एवं सर्वप्रतिनिनिव्यूह्यं १. 2) ? तत्क्रमेण २. 3) ? प्रयोगी २. 4) ? °सत्या २.

स्याद्वानुपूर्व्यनियमः श्रुत्यर्थक्रमेभ्यः ॥३॥ वाशब्दः पूर्वपक्षनिरासार्थः। अग्न्यन्वाधानादीनामङ्गकर्मणामानुपूर्व्यनियमः स्यात् अनुष्ठाने क्रमनियमो भवेत् नानियमः। केभ्यः प्रमाणेभ्यः · श्रुत्यर्थक्रमेभ्यः श्रुतेः अर्थात्क्रमाच्च। श्रुतिस्तावत् · यथा द्वादशाहे तेषां गृहपतिः प्रथमो दीक्षते (१२. १. १. १.) अथ ब्रह्माणं दीक्षयति (२.) अथोद्गातारम् (३.) अथ होतारमित्यादि (४.) · नात्र ब्रह्मादीनां दीक्षा विधीयते यजमानवदेव तस्याः प्राप्तेः · क्रमस्य त्वन्यतःप्राप्त्यभावात्स एवात्र विधीयते · तथा तस्मादेष दशमो ग्रहो गृह्यते तृतीय एव वषट्क्रियत ऽइति (४. १. ५. १६.) अयमपि श्रुतिक्रम एव। अर्थादपि क्रमोऽवगम्यते · तद्यथा · पेषणसंयवनयोरवघातपेषणयोश्च अग्निहोत्रं जुहोति यवागूं पचतीति क्रमेण श्रुतेऽपि अर्थात्पूर्वं पाकस्ततो होम इति · होमद्रव्यं हि यवागूः तदुत्पत्त्यर्थः श्रुत्या लिङ्गेन च पाकः स च पश्चात्क्रियमाणोऽनर्थकः स्यात् होमोऽप्यसति द्रव्ये न निर्वर्तितातः पक्वा होमः कार्यः। क्रमः पाठक्रमः · स च द्विविधः श्रुतिपाठक्रमो मन्त्रपाठक्रमश्च · उभयविधोऽपि क्रमनियमे कारणं भवति · नियतेन हि क्रमेण पदार्थविधिपाठो मन्त्रपाठश्च वर्तेते [1] · तत्रैवमवगम्यते येन क्रमेण पदार्थविधिपाठो मन्त्रपाठश्च तेनैव क्रमेणानुष्ठानमिति · क्रमान्तरेणानुष्ठाने त्ववगतस्य क्रमस्य त्यागः अनवगतस्य क्रमस्योपादानमित्यसंगतं स्यात् · तस्मात्पाठक्रमादपि क्रमनियमोऽङ्गकर्मणां भवतीति।

प्राकृतं च विकृतौ ॥४॥ अतोऽपि कारणात्पाठक्रमेणाङ्गकर्मणामनुष्ठानं भवति यतो विकृतौ प्राकृतमेव क्रमं श्रुतिरनुवदति · यथा महापितृयज्ञे स तत एव प्राक्स्तम्बयजुर्हरतीत्यादिना [2] स यज्ञोपवीती भूत्वाज्यानि गृह्णातीत्येववमन्तेन (२. ६. १. १२.) · अत्राज्यग्रहणे यज्ञोपवीतित्वविधिपरे वाक्ये प्राकृतं क्रमं दर्शयति [3] यदि पाठक्रमेणानुष्ठानं न स्यात् तदानेनैव क्रमेणानुवादो न स्यात् ॥ अपरे त्वन्यथा व्याचक्षते प्राकृतं च विकृतौ विकृतौ प्राकृतवैकृतयोः कर्मणोः संनिपाते प्राकृतं पूर्वं कर्तव्यम् पश्चाद्वैकृतमिति। तद्यथा प्रकृतौ प्रास्य तृणं चक्षुष्या इत्यात्मानमालभत ऽइति (३. ६. १५.) प्रस्तरतृणानुप्रहरणानन्तरमा-

1) ? वर्तते २. 2) प्राकृतंतवयज्ञु° २. 3) Locat. Part. praes.

त्मालम्भ उक्तः विकृतौ च प्रकृत्य तृणं तेन चरतीति (४. ४. ११.) तृणानुप्रहरणानन्तरं वाजिनयाग उक्तः · तत्र पूर्वं प्राकृतमात्मालम्भोदकस्पर्शनरूपं कृत्वा पश्चाद्वाजिनयागः कर्तव्यः । तथा प्रकृतौ हविरासादनोत्तरकालं हविरालम्भात्मालम्भोदकालम्भा विहिताः · विकृतौ चासाद्य हवींष्यग्निं मन्थतीत्यग्निमन्थनं (३. ४. १. ११.) हविरासादनोत्तरकालं विहितम् · तत्र पूर्वं प्राकृता हविरालम्भात्मालम्भोदकालम्भाः पश्चाद्विकृतमग्निमन्थनम् । एवमथासाद्य स्रुचोऽप उपस्पृश्य राजानं प्रपादयतीत्येतदप्युदाहार्यम् (२. ६. ३. १७.) · अत्रापि पूर्वं प्राकृता हविरालम्भात्मालम्भोदकालम्भाः पश्चाद्विकृतं सोमप्रपादनादि । तथा पितृयज्ञे परिषिकात्प्रागिडाभक्षणमार्जनपवित्रप्रतिपत्तिदक्षिणादानान्यत [1] एव सिद्धानि । सुत्यायां च सवनीयपुरोडाशानां निर्वपनादूर्ध्वभाविनः प्रागलंकरणाद्ये पदार्थाः तेषां प्राक्प्रचरणीहोमादत एवानुष्ठानं सिद्धम् । अत एव पशौ प्राकृतं पूर्वमित्यस्य बाधनाय यत्नं करोति उत्तराघारमाघार्य पशुं पूर्वं समनक्तीति (६. ४. २.) · अत्र पूर्वमित्यनेन प्राकृतध्रुवासमञ्जनात्पूर्वं पशुसमञ्जनं विदधाति । तस्मात्समीचीनमेतद्व्याख्यानम् ॥ ॥ अथ क्रमप्रमाणानां विरोधे बलाबलं निर्णीयते । यत्र पाठक्रमार्थक्रमयोर्विरोधो भवति · तद्यथा स वै पर्णशाखया वत्सानपाकरोति तामाच्छिनत्तीति (१. ७. १. १-२.) पाठक्रमः अर्थस्त्वनेन क्रमेण न सिध्यति न ह्यच्छिन्नया वृक्षस्थया शाखया वत्सापाकरणं कर्तुं शक्यते वत्सापाकरणायैव च छेदनमिति · तत्र किं पाठक्रमाध्यवसानमुतार्थक्रमादिति संशयेऽआह ·

विरोधेऽर्थस्तत्परत्वात् ॥५॥ पाठक्रमार्थक्रमयोर्विरोधे अर्थक्रम एव बलीयान् न पाठक्रमः । कुतः तत्परत्वात् पाठस्यार्थपरत्वात् अर्थार्थत्वात् कार्यसिद्ध्यर्थत्वादित्यर्थः । तेन पूर्वं छेदनम् पश्चात्तया छिन्नया शाखया वत्सापाकरणमिति ॥ अथ यत्र श्रुतेः श्रुतिपाठक्रमस्य च विरोधो भवति तद्यथा संस्थिते यज्ञे ब्राह्मणां तर्पयितवै ब्रूयादिति (१. ७. ३. २८.) श्रुतेः कर्मणि समाप्ते प्रैषं विदधाति पाठक्रमात्तु स्विष्टकृतः पश्चात्प्राशित्रावदानाच्च पूर्वमिति तत्र केन क्रमेणानुष्ठानमिति संशये सत्याह ·

---

[1] पवित्रे २.

श्रुतिः क्रमादानुमानिकत्वात् ॥ ६॥ क्रमादिति श्रुतिपाठक्रमाच्छ्रुतिर्बलीयसी · तेन श्रुतिप्रतीतक्रमेणैव संस्थिते कर्मणि प्रैषोच्चारणम् न पाठक्रमेण । । कुतः आनुमानिकत्वात् पाठक्रमस्य अर्थाच्छ्रुतेः प्रत्यक्षत्वादिति ज्ञेयम् · प्रत्यक्षा हि श्रुतिः संस्थिते यज्ञऽइति पाठक्रमे त्वनुमानम् · अतोऽनेन क्रमेण पदार्था अनुष्ठेयाः यतोऽनेनैव क्रमेण पाठ इति · दुर्बलं च प्रत्यक्षादनुमानम् · अतः श्रुतिक्रमेणानुष्ठानमिति सिद्धम् । एवम् तस्मादेष दशमो ग्रहो गृह्यते तृतीय एव वषट्क्रियतऽइत्येतदप्यत्रोदाहरणम् (४. १. ५. १६.) · किं श्रुतिमन्त्रपाठात्तृतीयस्थाने गृह्यते उत श्रुतिबलाद्दशमऽइति · तत्र श्रुतिबलात्तु दशम ऽइति सिध्यति ॥ अथ यत्र चोदनापाठक्रमस्य मन्त्रपाठक्रमस्य च परस्परं विरोधो भवति । यथाज्याधिश्रयणे सोऽसावाज्यमधिश्रयतीषे त्वेत्यधिश्रयणं विधाय तदनन्तरमेव तत्पुनरुद्वासयत्यूर्जे त्वेति (१. २. २. ६.) चोदनापाठक्रमः मन्त्रपाठे आज्याधिश्रयणमन्त्रानन्तरं घर्मोऽसि विश्वायुरित्यादिं (१. २२.) पत्नीसंनहनमन्त्रान्तं मन्त्रगणं पठित्वा आज्योद्वासनमन्त्र (१. ३०.) ऊर्जे त्वेति पठितः । पूर्वाधिकरणे हि क्रमाच्छ्रुतेः प्रत्यक्षत्वाद्बलीयस्त्वमुक्तम् · अत्रोभयोः प्रत्यक्षत्वात्किं चोदनापाठक्रमेणाज्योद्वासनं कर्तव्यमुत मन्त्रपाठक्रमेणेति संशये सत्याह ·

मन्त्रचोदनयोर्मन्त्रबलं प्रयोगित्वात् ॥ ७॥ मन्त्रचोदनयोरिति मन्त्र[पाठचोदना]पाठयोर्विरोधे मन्त्रबलम् मन्त्रपाठ एव बलवानित्यर्थः । कुतः प्रयोगित्वात् मन्त्राणाम् · मन्त्रा हि कर्मकाले प्रयुज्यन्ते पठ्यन्ते न चोदनावाक्यानि · अतो मन्त्रपाठः पदार्थानां संनिकृष्टः चोदनापाठस्तु विप्रकृष्टः । तथा हि समिधो यजतीत्येनेन (१. ५. ३. १.) पदार्थो विहितः · सोऽनुष्ठानवेलायां येन वाक्येन विहितस्तद्वाक्यं स्मारयति · तेन वाक्येन स्मृतेनानुष्ठानवेलायां स्वपदार्थः स्मारितः सन्ननुष्ठीयते · इतीतरेतराश्रयं स्यात् अर्थेन वाक्यं स्मार्यते वाक्येन चार्थ इति · नैष दोषः सामान्यविशेषभेदात् · सामान्येन हि दार्शिकमङ्गं कर्तव्यमित्यवगम्यते विशेषस्मरणार्थं विधायकं वाक्यमालोचयति · तेन चालोचितेन पश्चात्तदर्थविशेषः स्मारितोऽनुष्ठीयते · अनुष्ठितश्चासौ कटित्येवं द्वितीयं पदार्थं न स्मारयति अर्थानां ग्रन्थानपेक्षेण रूपेण पौर्वापर्यस्यानवक्लृप्त-

त्वात् किं तत्र्वनुष्ठानोत्तरकालं योऽसौ कृतस्तमालोचयति समिद्यागोऽयं कृत इति · स चालोच्यमानो येन समिधो यजतीत्यनेन (१. ५. ३. १.) ब्राह्मणवाक्येन विहितस्तत्स्मारयति · तच्च स्मृतं स्वाङ्गुत्तरम् तनूनपातं यजतीत्येतत् (१०.) स्मारयति कुतः पाठात् ततः परं हि तत्पठितमिति · तद्ब्राह्मणं पुनः पदार्थं विदधाति · विधिरेव तस्य कार्यम् न स्मृतिः · अनुष्ठानवेलायां तदेव ब्राह्मणं विधिव्यापारं कृत्वा चिरनिवृत्तव्यापारं प्रयोगकालाद्बहिर्भूतं स्मारकमपेक्षितम् · अयं मन्त्रपाठाद्ब्राह्मणपाठे विप्रकर्षः । मन्त्रः पुनरन्तःक्रतु प्रयुज्यमानः परिसमाप्यमान उत्तरं मन्त्रं पर्युपस्थापयति · स चोत्तरो मन्त्रः पर्युपस्थाप्य उत्तरं पदार्थं पर्युपस्थापयन्नेव पर्युपतिष्ठते · तस्मात्तत्रालोचनान्तरापेक्षाभावान्नास्ति विप्रकर्षः । एतदुक्तं भवति स्मारकक्रमेण तावदनुष्ठानक्रमः · न च मन्त्रे अनन्यार्थे सति ब्राह्मणस्य स्मारकत्वम् अप्रयुज्यमानतया सामर्थ्याभावात् · न हि निर्वपामीतिवन्निर्वपेदिति पदमुच्चारितमनुष्ठानौपयिकमनुष्ठेयप्रकाशनं करोति किं तु सम्बन्धिमात्रतया प्रयोगबहिर्भूतं सत् अनेन वाक्येनेदं विहितमत एतत्करोमीत्येवमालोचनेन स्मारकं भवति · मन्त्रस्तु प्रयुज्यमान एवाभिधानत एव स्मारक इति संनिकृष्टः । विप्रकृष्टाच्च संनिकृष्टं बलवदित्येवं प्राप्तेऽआह ·

न समत्वात् ॥ ८ ॥ मन्त्रपाठ एव बलवान्यदुक्तं तन्न । कुतः समत्वात् मन्त्रपाठचोदनापाठयोः । कथमुभयोः समता · उच्यते · मन्त्रः कर्मणि करिष्यमाणस्य कर्मणः स्मरणार्थं प्रयुज्यते चोदना तु कर्मणो विधायिका · अत एव चोदनायाः प्रवृत्तिः पूर्वम् यतः पदार्थे विहिते सति पश्चात्तत्स्मारणार्थे मन्त्रः प्रयुज्यते · अतः सममेवैतदिति प्राप्ते सिद्धान्तमाह ·

गुणानां तु भूयस्त्वात् ॥ ९ ॥ तुशब्दः पूर्वपक्षनिरासार्थः । नैतदुभयं समम् किंतु मन्त्रपाठ एव बलवान् । कुतः मन्त्रेषु गुणानां भूयस्त्वात् गुणानां बाहुल्यात् यतः[1] चोदनापाठापेक्षया मन्त्रेषु बहवो गुणा विद्यन्ते । तद्यथा · कर्मकाले उच्चारणे पदार्थस्मारके[2] यतो मन्त्रा अर्थवादादिकृतव्यवधानरहिताः क्रमेण

---

1) यतो २. 2) ? उच्चारणं पदार्थस्मारकं २.

पद्यन्ते तेनोत्तरमुत्तरं पदार्थं झटिति स्मारयितुं शक्नुवन्ति · नैवं चोदनापाठः विधेयार्थस्तावकवाक्यसंदर्भव्यवहितत्वेन मन्त्रवत्स्मारयितुमशक्यत्वात् · न च कर्मकाले तस्योच्चारणं विहितं मन्त्रवत् । श्रुतिरपि मन्त्राणां गुणभूयस्त्वमाह　तस्मादेतदृषिणाभ्यनूक्तमित्यादिना (१. ७. ४. ४.) · यो हि स्वप्रतिपादितस्यार्थस्य प्रामाण्यार्थमन्यस्योक्तिं प्रदर्शयति　स आत्मापेक्षया उत्कृष्टस्यैव दर्शयति　न निकृष्टस्य · तेन गुणभूयस्त्वं मन्त्रेषु अतो मन्त्रपाठ एव बलवानिति सिद्धम् ॥　॥

पदार्थानां क्रमनियमे श्रुत्यादीनि त्रीणि प्रमाणान्युक्तानि · तेषां विरोधे बलाबलं चोक्तम् । अथेदं चिन्त्यते · यत्र बहूनि प्रधानानि सह क्रियन्ते　यथा दर्शपूर्णमासयोराग्नेयोपांशुयाजाग्नीषोमीयैन्द्राग्नादीनि　यथा चातुर्मास्यपर्वसु वाजपेयेऽतिरात्रपशुवशापृश्निसप्तदशप्राजापत्येषु[1] च　तत्राराडुपकारकाण्यङ्गानि सर्वेषां तन्त्रेण क्रियन्तऽइति वक्ष्यति कर्मणां युगपद्भावस्तन्त्रमित्यत्र (१. ७. १.) · तेन न तेषु क्रमचिन्ता · संनिपत्योपकारकाणि तु द्रव्यसंस्काररूपाणि प्रतिप्रधानं भेदेन कर्तव्यानि · तत्र चिन्त्यते　तानि किमेकैकस्य सर्वाणि कृत्वापरस्य कर्तव्यानि　किं वा समान एकैकः पदार्थः सर्वेषां कर्तव्य इति । तत्रैकैकं प्रधानमव्यवहितानि स्वाङ्गान्यपेक्षते · तत्राङ्गानां प्रधानकालत्वस्य न्याय्यत्वादेकैकस्मिन्गुणकाण्डमपवृञ्ज्यात् · इतरथा हि पदार्थानुसमये सति स्वप्रधानाद्विप्रकृष्येरन् · यद्येकस्यासादनं कृत्वापरस्य तदेव क्रियते तदा पूर्वस्यासादनयोर्व्यवायः स्यात् · सहवचनं त्वाराडुपकारकसाहित्यमात्रेणाप्युपपद्यते · तस्मात्काण्डानुसमय एवेति प्राप्तऽआह ·

तुल्यसमवाये सामान्यपूर्वमानुपूर्व्ययोगात् ॥ १० ॥　　तुल्यसमवाये तुल्यानां प्रधानानां सह प्रयोगे द्रव्यसंस्काररूपाणि संनिपत्योपकारकाण्यङ्गानि सामान्यपूर्वं कर्तव्यानि　पूर्वः पूर्वः पदार्थः[2] सर्वेषां समानः सदृशः कर्तव्यः । तद्यथा　बहुषु हविःषु प्रथमं सर्वेषां विभस्मीकरणम्　ततः सर्वेषां पात्रीस्थापनम्　ततः सर्वेषां तत्र व्यभिघारः[3] ततः सर्वेषां पात्रीषूपस्तारः ततः सर्वेषामुद्वासनम्[4] ततः सर्वेषां वेद्यामासादनम् ततः सर्वेषामालम्भः　इत्येवं पदार्थानुसमयः कर्तव्यः । यद्येकैकस्मिन्गुणकाण्डमपवृञ्ज्येत　तथा सति क्रमेण प्रयोगात्प्रयोग-

१) °सप्तदशसु प्रा° २.　२) परार्थः २.　३) ? तत्र षाभिघारः २.　४) °सनी २.

वाक्यावगतस्य साहित्यस्य साहित्यबाधः स्यात् · न हि वचनेनाविशेषतः साहित्यमवगम्यमानं काल्पनिकेन प्रधानासत्तिमात्रेणारादुपकारकविषयमात्रं कल्पयितुं शक्यते · तस्मात्पदार्थानुसमयः । कुतः आनुपूर्व्ययोगात् पदार्थानां तन्मन्त्राणां च · एवं क्रियमाणे पदार्था आनुपूर्व्येण अनुक्रमेण युज्यन्ते तन्मन्त्राश्च · अन्यथोत्तरपदार्थकरणानन्तरं पूर्वेषु क्रियमाणेषु आनुपूर्व्ययोगो न स्यात् । पौर्णमास्यां पौर्णमास्या यजेतेत्यनेन वाक्येन पौर्णमासीशब्दबोध्यानां तत्सम्बद्धानां त्रयाणां यागानां साङ्गानामेककालप्रयोगोऽवगम्यते · अतो यस्मिन्नेव क्षणे एकस्याधिश्रयणं कर्तव्यमापतति तस्मिन्नेवापरस्याधिश्रयणं कर्तव्यं सदशक्यतया केवलं न क्रियते द्वितीये तु क्षणे न कश्चिद्धेतुर्येन पुरोडाशान्तरं नाधिश्रियेत · अतः प्रथमं पदार्थं सर्वेषां कृत्वा ततो द्वितीयादिः पदार्थः सर्वेषां कर्तव्यः । एवं बहुषु प्रधानेषु सर्वत्र पदार्थानुसमय एव न्याय्यो न काण्डानुसमय इति स्थितम् · यत्र तु प्रधानविरोधो भवति पदार्थनुसमये क्रियमाणे तत्र काण्डानुसमय एवेति । वाचनिकेन साहित्येन पदार्थानुसमयः प्राप्तोऽपि प्रधानविरोधात्त्यक्तव्यः · पुरोडाशाङ्गं ह्यधिश्रयणादयः · तदङ्गं च क्रमः पदार्थानुसमयरूपः · तदाश्रयणे च सुतप्तकपालसंयोगात्पुरोडाशशोषप्रसङ्गः · न चाङ्गानुरोधेन प्रधानबाधो युक्तः · तेनातिबहुषु हविःष्वेकैकस्य पुरोडाशस्याधिश्रयणं प्रथनमद्भिरभिमर्शनं चेत्यन्तं काण्डानुसमयः कार्यः । यत्र तु नास्ति प्रधानबाधः द्वित्रिचतुरादिहविःषु तत्र भवतु पदार्थानुसमयः · दाहसम्भवशङ्कायां तु उद्वासनमपि व्युत्क्रमेण कार्यम् । यदुक्तम् पूर्वस्य पदार्थे कृते तस्मिन्नेव द्वितीयस्य क्रियमाणे पूर्वस्य व्यवधानमिति तत्सहत्वविधिबलात्परिह्रियते । एवं च सति वाजपेये आग्नेयैन्द्राग्नसारस्वतीवशापृश्निसप्तदशप्राजापत्येषु द्वाविंशतिसंख्येषु पशुष्वेकविंशत्या पदार्थैः समानासमानजातीयैर्व्यवधानमिष्यते · न न्यूनाधिकैः · अन्ये त्वसमानजातीयैरेव ॥

अनेनैव मुख्यक्रमप्रावृत्तिकक्रमावुक्तौ भवतः · तथा हि यत्र बहूनि प्रधानानि भवन्ति तत्र यो मुख्यानां प्रधानानां क्रमस्तेनैव क्रमेण तदङ्गानां क्रमो भवति · यथा पौर्णमासेष्ट्यां प्रथममाग्नेययागः ततोऽग्नीषोमीययागः अत आग्नेयस्य प्रथमं ग्रहणम् ततोऽग्नीषोमीयस्य एवं प्रोक्षणादावपि · अयं मुख्यक्रमः · अनेन

क्रमेण यद्यङ्गान्यनुष्ठीयन्ते तदाङ्गानां नियता प्रधानप्रत्यासत्तिरनुगृहीता भवति · एवं ह्यङ्गप्रधानयोर्यावदनुज्ञातमेव व्यवधानं भवति इतरथा तु पश्चाद्भाविनः प्रधानस्य प्रथमाङ्गं क्रियमाणं प्रधानेनात्यन्तं व्यवहितं स्यात् ॥ अथ प्रवृत्तिक्रम उच्यते । यत्र बहूनि हवींषि भवन्ति समानदेवतानि यथा वाजपेये पशवः तत्र चोपाकरणादयः संनिपातिनः प्रतिपश्वावर्तनीयाः · तेषां चावृत्तिर्नैकस्य पशोः कात्स्न्र्येन कृत्वापरस्यापि तथैव क्रियन्त इत्येवम् किं तर्हि सर्वेषामुपाकरणं यतःकुतश्चित्पशोरारभ्य कृत्वा ततः सर्वेषां नियोजनमित्युक्तम् । तत्र प्रथमे पदार्थे उपाकरणे अनियम एव यतःकुतश्चित्पशोरारभ्य कर्तव्यः · द्वितीयश्च पदार्थो नियोजनरूपः किं प्रथमो यत आरब्धः तत्रैवारम्भणीयः उत तत्राप्यनियम एवेति । तत्र क्रमनियमकारणानां श्रुत्यर्थपाठानामभावादनियमे प्राप्त उच्यते प्रवृत्त्यैव नियमः · प्रथमः पदार्थो येन क्रमेण कृतः स एवं क्रम उत्तरेष्वपि नियोजनादिषु नियम्यते कुतः पदार्थैः सह प्रधानं कर्तव्यमिति वचनात् सर्वे पदार्थाः प्रधानकालान्न विप्रकृष्टव्याः । कथं पदार्थैः सह प्रधानस्य वचनम् यावता दर्शपूर्णमासाभ्यां यजेत प्राजापत्यैश्चरन्तीत्यादिषु प्रधानमात्रं श्रूयते उच्यते समीहितं भावयेद्यागेनेत्थमिति हि यजेतेत्यस्यार्थः । तत्र यस्यामेव वेलायां स्वर्गो भावने[1] कर्तृत्वं प्रतिपद्यते तस्मिन्क्षणे करणेतिकर्तव्यते अपि व्याप्रियेते अयमर्थः नात्र प्रधानं कर्तव्यं श्रूयते किंतु प्रधानेन स्वर्गः कार्य इति करणविभक्तिनिर्देशाद्यागेनेष्टं कार्यमिस्मन्काले कुर्यादिति · तेन स्वकार्यं सेतिकर्तव्यताकेन कर्तुं शक्यते नान्यथा · तस्मात्त्रितयस्य फलकरणेतिकर्तव्यत्वस्य युगपद्यजेतेत्यनेन कर्तव्यतोच्यते · ततोऽन्यथा करणेतिकर्तव्यतात्वमेव न स्यात् न हि पश्चाद्भावि करणं भवति · तथा भविष्यति भाव्ये भूते च करणे असावेव दोषः न हि विनष्टं करणं भवतीति · तथा करणेतिकर्तव्यतयोरपि मिथो विप्रकर्षे अयमेव दोषः न हि विनष्टमनागतं वानुग्राहकं भवति । तेन शब्दवस्तुभ्यामेककालतेषां त्रयाणाम् ततः प्रधाने सेतिकर्तव्यताके एकस्मिन्क्षणे सह कर्तव्ये प्राप्ते सति एकः कर्ता बहूनि प्रधानानि इतिकर्तव्यतां वा असमर्थः कर्तुं यौगपद्येने-

1) भवने २. भवनैः २.

त्यवश्यम्भावी कियानपि विप्रकर्षः · ईदृशेनापि विप्रकर्षेण सहैव पदार्थाः कृता भवन्ति · प्रयोगवचनो हि यावतः पदार्थाननुष्ठापयति तावद्भिरवर्जनीयतया यावान्कालो व्याप्यते तावानेकः कालः · तावति च काले सर्वेषां कालो विधीयते न त्वेकस्मिन्क्षणे अशक्यार्थविधिप्रसङ्गात् · तेन प्रत्यासत्तिरेतेषां साहित्यम् नैकक्षणवर्तित्वम् · यद्येवम् प्रयोगवचनेनैव क्रमस्य सिद्धत्वात् श्रुत्यादिभिः किं क्रियते अनियतक्रमेणानुष्ठानं प्राप्नोतीति क्रमनियमे तेषां व्यापारः । यस्मात्प्रयोगविधिर्नैकक्षणवर्तित्वं विधत्ते प्रत्यासत्तिमात्रम् तस्मात्प्रधानं चिकीर्षितमनागतं कृतं वा तेषां प्रधानार्थानामनुष्ठापकम् · करिष्यमाणेन कृतेन वा प्रधानेन [1] प्रत्यासत्तिमात्रमङ्गानां तत्साहित्यम् नैकक्षणवर्तित्वम् । तत्राग्न्यन्वाधानादीनां करिष्यमाणं प्रधानं निमित्तम् स्विष्टकृदादीनां तु कृतम् · तेनैवमवश्यम्भाविनि विप्रकर्षे केचित्पदार्थाः क्षणव्यवहिताः प्रधानेनापेक्ष्यन्ते केचिद्द्वाभ्यां क्षणाभ्यां व्यवहिताः केचिद्बहुभिरिति । एवं वाजपेयपशुष्वपि अग्न्यन्वाधानादि प्रागुपाकरणात्साधारण्यं सर्वपशूनां सह अनुभूतम् [2] · उपाकरणादयोऽपि संनिपत्योपकारकास्तन्त्रेणाविभवादावर्तयितव्या अपि साहित्येनैव पशुभिरनुभवितव्याः · यदेकस्योपाकरणम् तदेवेतरेषामपि · कुतः सहचोदितत्वात्पशूनां साङ्गानाम् · तत्रैवं सहानुभवितव्ये सति यस्य पशोः प्रथममुपाकरणं क्रियते तस्य प्राकृतेन पाठेन यद्यपि द्वितीयः पदार्थो नियोजनरूपः स्थाप्यते तथापि सहवचनादेव एकविंशतिक्षणव्यवहितं द्वितीयं पदार्थमाकाङ्क्षति · द्वितीयस्तु पशुर्विंशत्योपाकरणक्षणैर्व्यवहितमेकेन प्रथमस्य पशोर्नियोजनक्षणेन च व्यवहितं स्वीयं द्वितीयं पदार्थमाकाङ्क्षति · एवं तृतीयादयोऽपि पशवः सजातीयविजातीयव्यवहितानात्मीयान्पदार्थानपेक्षन्ते · अन्यस्तु विजातीयैः पूर्वोपाकृतानामेकविंशतेः पशूनां नियोजनक्षणैर्व्यवहितमेव द्वितीयं पदार्थमपेक्षते · तदेवं संनिपत्योपकारकानालोच्य ईदृशी एकविंशतिक्षणाव्यवधानापेक्षा प्रधानानां भवति · ततश्च यावद्भिर्नाव्यवहितः शक्यः पदार्थः कर्तुम् तावद्भिर्व्यवधानमागत्यावश्यं [3] कर्तव्यम् अतोऽभ्यधिकैस्तु न व्यवधातव्यम् · यद्येकं पदार्थमेकस्य कृत्वा द्वितीयोऽपि पदार्थस्तस्यैव

१) ? चाप्रधानेन २. २) ?? सहक्तब्रूतं २. ३) ? °धानमगत्या° २.

क्रियेत ततः सहवचनं नोपपद्येत · एवं सर्वत्र तृतीयादिष्वपि पदार्थेषु योज्यम् · प्रथमपदार्थक्रम एव द्वितीयादिष्वपि समाश्रयितव्यः इतरथा केषां वचनम् बहून्यप्यधिकैरपि क्षणैर्व्यवहितानि स्युः न च तद्युक्तम् · न त्वेवं[1] केषांचिदल्पैर्व्यवधानं गुणो भविष्यतीति वाच्यम् यथाधिकैर्व्यवधानेऽश्रुतकरणम् एवं न्यूनैरपि व्यवधाने अश्रुतकरणमेव · तस्माद्द्वाविंशतेः पशूनां साहित्यसम्पत्तये प्रयोगविधिनायं क्रमः पदार्थानां मिथ एकविंशतिक्षणाव्यवधानात्मकोऽपेक्षितः स न्यूनैरधिकैश्च व्यवधाने बाध्येत अतः सर्वेषां तुल्यप्रत्यासत्तिसिद्ध्यै प्रथमपदार्थक्रम एव द्वितीयादिष्वाश्रयणीय इति सिद्धम् । अत्राङ्गानां मिथः प्रत्यासत्तिर्नियमकारणम् मुख्यक्रमे[2] तु अङ्गानां प्रधानप्रत्यासत्तिरिति विशेषः ॥ मुख्यक्रमप्रवृत्तिक्रमयोर्विरोधे च मुख्यक्रमो बलीयान् । तद्यथा दर्शपूर्णमासयोः सांनाय्यधर्माः शाखाच्छेदनादयः पूर्वं प्रवर्तन्ते पश्चादाग्नेयधर्माः · प्रदानं त्वाग्नेयस्य प्रथमम् पश्चात्सांनाय्यस्य · ततः स्विष्टकृदवदानं प्रयाजशेषाभिघारणं प्राणादानं[3] वेद्यामासादनादिकं च किं प्रवृत्तिक्रमात्सांनाय्यस्य पूर्वं भवति उत मुख्यक्रमादाग्नेयस्येति संदेहादनियमे प्राप्ते मुख्यक्रमो बलीयानित्युच्यते · अस्मिन्हि आश्रीयमाणे अल्पीयांसः प्रथमपदार्थाः प्रधानाद्विप्रकृष्यन्ते अन्ये सर्वे संनिकृष्टा भवन्ति प्रवृत्तिक्रमे तु बहूनां विप्रकर्षः · पूर्वं तु मुख्यप्रवृत्तिभ्यां बलीयसा पाठक्रमेण मुख्यक्रमो बाध्यते प्राणादानादिषु पाठक्रमाभावात्प्रवृत्तिक्रमो मुख्यक्रमेण बाध्यते ॥ अथ स्थानप्रमाणमुच्यते · साद्यस्क्रे सह पशूनालभतऽ इति (२२. ३. २८.) श्रूयते साहित्यं च सवनीयस्य स्थाने · तत्र किमुपाकरणादौ अनियमः अथवाग्नीषोमीयस्य प्रथममुपाकरणम् अथवा सवनीयस्येति · तत्र नियमकारणाभावादनियमे प्राप्ते प्रकृतिवदाग्नीषोमीयस्य प्राथम्ये प्राप्तऽउच्यते सवनीयस्यैव प्रथममुपाकरणम् · अग्नीषोमप्रणयनानन्तरं ह्यग्नीषोमीयस्यास्थानम् · स तेनोपस्थितोऽपि सहालम्भवचनेन तस्मात्स्थानाच्चलितत्वादननुष्ठितोऽत्र तु न तस्य किंचिदुपस्थापकमस्ति सवनीयस्तु स्वस्थानादप्रचलितः[4] सन्नाश्विनग्रहणादुपस्थितत्वात्तदनन्तरमुपाक्रियते · ततः साहित्यवचनादितरोपाकरणम् · अतः सव-

---

[1] ? नन्वेवं २. [2] मुख्यं क्रमे २. [3] प्राणादानं २. [4] °दप्युच° २.

नीयस्यैव प्राथम्यम् · इतरयोस्तु कथं क्रमः अनियम एव तयोरुपस्थाने विशेषाभावात् · अथवा प्रकृतिदृष्टं पौर्वापर्यमसति बाधेऽनुग्रहीतव्यमित्यग्नीषोमीयमुपाकृत्यानूबन्ध्योपाकरणमिति ॥ ॥ तदेवं श्रुत्यर्थपठनस्थानमुख्यप्रवृत्तिसंज्ञानि षट्प्रमाणानि क्रमनियमकारीण्युक्तानि तेषां परस्परविरोधे च पूर्वं-पूर्वं बलवत् उत्तरमुत्तरं च दुर्बलमिति । तदुक्तम् श्रुत्यर्थपठनस्थानमुख्यासत्तिप्रवृत्तिभिः एकाख्यातगृहीतानां नियतः कर्मणां क्रमः विरोधे परदौर्बल्यमेतेषामपि पूर्ववदिति ॥ ॥ अथेदं विचार्यते · दर्शपूर्णमासयोराग्नेयाग्नीषोमीयनिर्वापयोः पदार्थानुसमये स्थिते किमेकैकमुष्टिनानुसमयः उत चतुर्भिर्मुष्टिभिरिति · तत्र यद्येकैको मुष्टिः पृथक्पृथक्पदार्थस्तत एकैकेनानुसमयः अथ चतुर्मुष्टिनिर्वाप एकः पदार्थस्ततश्चतुर्भिर्मुष्टिभिरिति · एवं कपालोपधाने किमेकैकेन कपालेनानुसमयः उताष्टाभिरेकादशभिश्चेति · तथा द्विरवद्यति (१. १. २.) द्विर्दक्षिणमनक्ति त्रिरुत्तरमिति (७. २. ३४.) वपने च दक्षिणोत्तरगोदाने (७. २. १.) पावने च त्रिः पावयतीति ।· किं प्राप्तम् · एकैकमुष्टिनेति । कुतः · एकमुष्टिनिर्वापो ह्येकः पदार्थः न चतुर्मुष्टिनिर्वापः · कथम् · एकस्मिन्मुष्टौ निरुप्ते प्रयत्नः पर्यवसितो भवतीति न शक्यं वदितुम् किंचिन्न निरुप्तमिति · न च निरुप्ते[1] निर्वापो न कृतः स्यात् · न च मुष्टिमात्रेण निरुप्तेन न प्रयोजनम् न ह्येकस्मिन्ननिरुप्ते चत्वारः सम्भवन्ति मुष्टिसमानाधिकरणो हि चतुःशब्दः । तस्मान्मुष्टिना अनुसमयः कार्यः । एवं कपालान्युपदधातीति तत्राप्येकैककपालेनानुसमयः कार्यः एकैकेनावदानेन सांनाय्यसवनीयादौ अभ्यञ्जने एकैकवाराञ्जनेन[2] वपने अनेकयजमानके एकैकगोदानसंस्कारेण पावने वानेकयजमानकऽएव एकैकवारपावनेनेति । तदुक्तं जैमिनिना (५. २. ३.) मुष्टिकपालावदानाभ्यञ्जनवपनपावनेषु चैकेनेति[3] । एवं प्राप्तऽआह ·

नैककर्मणि सम्बन्धात् ॥११॥ एककर्मणि एकस्मिन्निर्वापकपालोपधानादिरूपे कर्मणि पदार्थे तदवयवेन एकैकमुष्टिना एकैककपालोपधानरूपेणानुसमयो न भवति किंतु चतुर्मुष्टिभिः अष्टभिरेकादशभिश्च कपालैः · न ह्येकैको

1) निरुप्ये २. 2) °ञ्जनेच २. 3) चैकैकेनेति २.

मुष्टिः पृथक्पदार्थः किं तर्हि चतुर्मुष्टिनिर्वाप एकः पदार्थः । कुतः सम्बन्धात् चतुःशब्दस्य मुष्टीनां च निर्वापसम्बन्धात् · एवं च सह कर्मणानेकगुणविधानं न्याय्यम् · इतरथा चतुःसंख्याया मुष्टिसम्बन्धे मुष्टीनां च निर्वापसम्बन्धे सति वैरूप्यलक्षणो वाक्यभेदः प्रसज्येत अनिर्वापाङ्गं च संख्या स्यात् । वैरूप्यं चैवम् चतुरो मुष्टीन्निर्वपतीत्यत्र निर्वापं प्रति मुष्टीनामुपादेयत्वं विधेयत्वमङ्गत्वं चेति त्रिकम् संख्यां प्रति च तेषामुद्देश्यत्वमनुवाद्यत्वं प्रधानत्वं चेति एतत्परस्परविरुद्धं त्रिकद्वयं मुष्टीनामापद्यते · तस्मात्संख्याया मुष्टीनां चोभयोर्निर्वपतिनैव सम्बन्धः · ये चत्वारस्ते मुष्टयः ये मुष्टयस्ते चत्वार इति परस्परव्यवच्छेद्यव्यवच्छेदकभावोऽरुणैकहायनीन्यायेन द्रव्यस्य गुणावच्छेदकत्वेन गुणस्य च द्रव्यावच्छेदकत्वेनार्थाद्भवति न तु वाक्यात् तेन वाक्यभेदो न भवति । तस्माच्चतुर्मुष्टिनिर्वाप एकः पदार्थः · अङ्गपर्यायो हि पदार्थशब्दः · तेन ययोः प्रधानयोः सहानुष्ठानम् तयोर्यदङ्गं तदेकस्य कृत्वापरस्य कर्तव्यम् · चतुरो मुष्टीन्निर्वपतीति शास्त्राच्चतुर्मुष्टिनिर्वापोऽङ्गम् · स च पदार्थः · तदवयवश्चैको मुष्टिः न पदार्थः · न चावयवेनानुसमयः किंतु पदार्थेन । एवं कपालोपधानादिष्वपि अष्टाकपालमेकादशकपालं निर्वपतीति निर्देशात्तावतामुपधानमेकैकः पदार्थः · द्विरवद्यति त्रिरभ्यङ्क्ते दक्षिणोत्तरगोदानवपने त्रिः पावयतीति च । एवं च संख्यादीनां क्रियाङ्गत्वं च भवति · तस्मात्समुदायेनानुसमय इति सिद्धम् । एवं सर्वत्र पदार्थानुसमये प्राप्ते क्वचित्तदपवादं काण्डानुसमयमाह ·

ग्रहणसादनावदानप्रदानेषु तु वचनात् ॥ १२ ॥ सोमे ग्रहाणां ग्रहणे एकैकस्य ग्रहस्य ग्रहणं सादनान्तं कर्तव्यम् अनेकहविष्के चावदानं प्रदानान्तं कर्तव्यम् वचनात् । वचनं च ऐन्द्रवायवादीनां सादनान्तं पठित्वा अथातो गृह्णात्येवायं वां मित्रावरुणेति (४. १. ४. ७.) अथ मन्थिनं गृह्णातीत्यादिकम् (४. २. १. १०.) । व्यूढच्छन्दसि द्वादशाहे[1] ग्रहव्यूढे तं गृहीत्वा न सादयतीत्ययं (४. ५. ३. ५.) सादनप्रतिषेधश्चान्यत्र ग्रहणानन्तरं तत्कालमेव सादनं बोधयति । वरुणप्रघासादिषु चानेकहविष्केषु अवदानस्य प्रदानान्तता सर्वेषु प्रधानयागेषु

१) द्वादशहे २.

पृथक्पृथक्श्रूयते । तुशब्दो विशेषार्थः । एवं सर्वत्रावदाने प्रदानान्ते प्राप्तऽआह ·

न द्रव्यभेदे गुणयोगादिति वात्स्यः ॥ १३ ॥ वात्स्य ऋषिरित्याह · द्रव्याणां पुरोडाशचरुसांनाय्यपश्वादीनां भेदे पृथग्भावे नानात्वे बहुत्वे सत्यपि देवता चेत्समाना भवति यामुद्दिश्य तानि त्यज्यन्ते तर्हि अवदानं प्रदानान्तं न भवति · किंतु सर्वाणि क्रमेणावदाय सहैव तेषां प्रदानं कार्यमित्यर्थः । कुतः गुणयोगात् द्रव्याणां यागं प्रति गुणत्वेन संयोगात् अङ्गत्वेन सम्बन्धात् · प्रधानं हि यागः द्रव्याणि चाङ्गभूतानि · तत्र यागश्चेन्न्यायेन सहैव सिध्यति तदा यद्यवदानं प्रदानान्तं क्रियते तर्हि गुणानुरोधेन प्रधानावृत्तिः कृता भवति न चासाविष्यते · तस्मात्तत्रावदानं प्रदानान्तं न कर्तव्यम् किंतु सर्वाण्यवदाय सह प्रदेयानि । तद्यथा दर्शेष्टौ दधिपयसोर्यागे सर्वत्र स्विष्टकृद्यागे चानेकहविष्के सप्तदशु प्राजापत्येषु च ॥ ॥ अथेदं विचार्यते किं दर्शपूर्णमासचातुर्मास्यपश्वादिके प्रारब्धे अपरिसमाप्ते च सति नियतस्य नियतकालस्याग्निहोत्रपितृयज्ञादेः काले आगते सति किं तन्मध्यऽएव तत्कर्म कर्तव्यमिति । यद्यपि चात्र भिन्नप्रयोगयोः प्रारब्धकर्माग्निहोत्रयोर्न मिथः क्रमोऽङ्गम् तथापि सायंकाले द्वयोः संनिपतितयोरवश्यम्भाविनि क्रमे प्रारब्धं समाप्य अग्निहोत्रे हूयमाने तस्य स्वकालातिपत्तिप्रसङ्गे सति किं युक्तमिति चिन्त्यते । तत्रेष्टिपश्वादिकं[1] च स्वकालादतिपन्नमेव तस्योभयथापि न कश्चिद्विशेषः । अग्निहोत्रस्य तु तस्मिन्काले क्रियमाणस्य उद्धरणस्य लोपः स्यात् उत्कर्षे तु काललोपः तत्र कस्यानुग्रहः कस्य लोप इति चिन्त्यते । तत्रोद्धरणानुग्रहे साङ्गप्रयोगावधारणोत्तरं[2] कालप्राप्तेः कालस्य जघन्यत्वेन बाधः प्राप्नोति · किं च पूर्वस्य व्यवधानं च स्यान्मध्ये क्रियमाणे · तस्मात्कालबाध इति प्राप्तऽआह ·

प्रवृत्ते नियतं दोषविशेषात् ॥ १४ ॥ प्रवृत्ते प्रारब्धे इष्टिपश्वादिके कर्मणि नियतस्य कालऽआगते नियतं नियतकालीनमग्निहोत्रपितृयज्ञादिकं तन्मध्यऽएव कर्तव्यम् · कालस्यानुपादेयत्वेन निमित्तत्वात्तस्मिन्प्राप्तमग्निहोत्रमुद्धरणमनादृत्यापि कर्तव्यम् । कुतः दोषविशेषात् यतो नित्यस्याकरणे दोषो भवति । ननु पूर्वस्य

---

1) तत्रेष्टिं पश्वा° २. 2) ? संगप्र° २.

कर्मणो व्यवधानेऽपि दोषोऽस्त्येव · सत्यम् · अक्रियमाणे तु विशेषेण यतो नित्यकर्मणः प्रधानरूपस्याक्रियेति · क्रियमाणे पुनरङ्गभूतानां पदार्थानां व्यवधानमात्रम् न तु कस्य चन लोपः · अत एवोक्तम् दोषविशेषादिति · अपि चासम्बन्धेन [1] व्यवधानेऽपि दोषः · तस्मान्नियतकालीनं कर्ममध्येऽपि कर्तव्यम् ॥

अथेदं विचार्यते । ज्योतिष्टोमे षोडशिनं प्रकृत्याम्नायते तं पराञ्चमुक्थ्येभ्यो विगृह्णातीति [2] · तथेदमपरं श्रूयते तं वै पुरास्तमयाडुपाकरोत्यस्तमितेऽनुशꣳस(ती)ति (४. ५. ३. ११.) · शाखान्तरे च समयाध्युषिते षोडशिनः स्तोत्रमुपाकरोतीति · एवं सति यदि दैवाडुक्थ्यानामुत्कर्षः स्यात् तदा किं षोडशी नोत्कृष्यते उक्थ्येभ्यः पूर्वमपि प्रागस्तमयात्षोडशिन उपाकरणं कर्तव्यम् · अथवोक्थ्योत्कर्षे सति षोडश्यप्युत्कृष्यते उक्थ्यविग्रहेभ्यः पर एव भवतीति । तत्र पूर्वाधिकरणोक्तन्यायेन नियतकालत्वादनुत्कर्षो युज्यते · तथा सति स्तोत्रस्य कालोऽनुगृहीतो भवति · यदि हि षोडशिग्रहयागाभ्यास [3] उत्कृष्येत ततः प्रधानकालत्वादङ्गानाम् ग्रहं गृहीत्वा चमसं चोन्नीय स्तोत्रमुपाकुर्यादिति वचनात्तदङ्गभूतं स्तोत्रमप्युत्कृष्येत · तत्र पुरास्तमयादिति (४. ५. ३. ११.) विहितः कालो बाध्येत । नन्वनुत्कर्षपक्षेऽप्युपरिभावो बाध्यते बाध्यताम् क्रममात्रं हि तत् कालस्तु बलीयानित्युक्तम् । तस्मादनुत्कर्ष इति प्राप्तेऽभिधत्ते ·

षोडशिनि त्वानुपूर्व्यभूयस्त्वात् ॥ १५॥ तुशब्दः पूर्वाधिकरणसिद्धान्तान्निवृत्तिं द्योतयति · षोडशिनि तु अनुत्कर्षो न भवति किंतूत्कर्ष एव । कुतः आनुपूर्व्यभूयस्त्वात् आनुपूर्व्यस्य क्रमस्य भूयस्त्वात् महत्त्वात् बलवत्त्वादित्यर्थः · कथम् · तं पराञ्चमुक्थ्येभ्य इति वचनात्षोडशियागाभ्यासस्योक्थ्येभ्य उपरिभावोऽङ्गम् सोऽनुत्कृष्यमाणे प्रधानाङ्गं सद्बाध्येत · न चैतद्युक्तम् · अतोऽङ्गभूतस्तोत्राङ्गस्यैव कालस्य बाध इत्युत्कर्ष एव षोडशिन इति सिद्धम् · निःसंदिग्धं च स्तोत्रस्य संनिहितग्रहयागाङ्गत्वम् । तथा चोक्तं पञ्चमस्य प्रथमपादान्त्याधिकरणे (जैमिनि ५. १. ३२.) तत्परत्वे न ग्रहणाक्रमानुग्रहार्थमुत्कर्षो विधीयते किं तर्हि यागक्रमानुग्रहार्थम् · तस्य च स्तोत्रं प्रति प्राधान्यमविवादम् अतस्तस्य यागाभ्यासस्य काले-

---

[1] ? वा संब° २. [2] See ४. २. ३. ६. [3] °याजा° २.

नाङ्गस्य स्तोत्रकालो बाध्यतऽइति युक्त एवोत्कर्ष इति । किं च अनुत्कर्षे षोडशिनो वैगुण्यम् उक्थ्यविग्रहाणां च उत्कर्षे त्वेकस्य षोडशिन इति अतोऽपि उत्कर्ष एव ॥' इदानीमिदं चिन्त्यते । अथैवं स्वाध्यायविहिते पाठे क्रमार्थवत्त्वाद्यागेषु समिदादिषु क्रमनियमः · तथा क्रत्वन्तरेष्वपि · तद्वाक्यानामपि हि विवक्षितक्रममेवाध्ययनं स्वाध्यायविधिना विधीयते · तस्य च प्रयोजनान्तरं नास्त्यतः क्रमानुष्ठानात् · तस्मात्क्रत्वन्तराणामपीष्टिपशुसोमयागादीनां[1] पाठक्रमेणानुष्ठानमिति पूर्वः पक्षः । सिद्धान्तमाह ·

अनियमः फलसंयुक्तेषु ॥१६॥ फलसंयुक्तेषु प्रधानकर्मसु इष्टिपशुसोमयागाद्यात्मकेषु अनुष्ठाने अनियमः क्रमनियमो न भवतीत्यर्थः । तत्र काम्येषु तावत् न क्रमनियमः · अनियमेन हि कामा उत्पद्यन्ते तेषां च नास्ति क्रमः · न हि ते वाक्यक्रमेण नियन्तुं शक्यन्ते वस्तुस्वभावस्य निरङ्कुशत्वात् · अतोऽनियतक्रमाः कामाः कर्मणामप्यनियमं प्रतिपादयन्तीति तद्बलेन पाठक्रमस्य बाधः । अपि च क्रतूनामनङ्गत्वादेकप्रयोगवचनाभावाच्च नास्ति क्रमः · यदि च क्रतवः परस्परस्याङ्गं भवेयुः यदि वा सर्वऽएतेऽन्यस्य कस्यचित्समिदादिवदङ्गं स्युः यदि वा सत्यप्यङ्गत्वे आग्नेयादिवदेकप्रयोगवचनपरिगृहीता स्युः ततः सर्वेषां सहानुष्ठानं बोधयन्प्रयोगविधिः क्रमनियममन्यतोऽपेक्षमाणः पाठनियामकत्वेन गृह्णीयात् · न ह्येतदस्ति · न च पाठः स्वयमेव क्रमस्य विधायकः अविधायकत्वात् । स्वाध्यायविधिरपि यत्नेन शक्यते कर्तुं तत्र-तत्रैव नियुङ्क्ते । पाठक्रमश्च प्रयोगवचनाकाङ्क्षितक्रमनियममात्रं शक्नोति कर्तुम् न क्रमं विधातुम् · तस्माद्भिन्नप्रयोगवचनपरिगृहीतानां न पाठतः क्रमनियम इति सिद्धम् । तर्हि पाठक्रमः किमर्थ इत्यत आह ·

क्रमो विध्यर्थः कर्मण्यसम्भवात् ॥१७॥ क्रमो विध्यर्थः विधानार्थो जपपारायणाध्यापनादिष्वनेनैव क्रमेण पठनार्थः नानुष्ठानार्थः । कुतः सर्वस्वारात्परे कर्मण्यसम्भवात् पाठक्रमेणानुष्ठानासम्भवात् · यतः सर्वस्वारो मरणाकामस्य विहितः यदि पाठक्रमेणानुष्ठीयते तर्हि सर्वस्वारेण मरणे सिद्धे सति

1) ? °पशुसर्वसोम° 2.

कथं तत ऊर्ध्वं कर्माणि कर्तुं शक्यन्ते · तस्मात्क्रत्वनुष्ठाने क्रमनियमो न भवतीति सिद्धम् ॥ ॥ पञ्चमी कण्डिका ॥५॥

अथ पद्धतिः ॥

पदार्थानुष्ठानं सर्वत्र श्रुतिपाठक्रमेण मन्त्रपाठक्रमेण च कर्तव्यम् अर्थसिद्धिक्रमेण च । यत्र च पाठक्रमार्थसिद्धिक्रमयोर्विरोधो[1] भवति यथा स वै पर्णशाखया वत्सानपाकरोति तामाछिनत्तीति (१. ७. १. १-२.) तत्र पाठक्रममनादृत्यार्थसिद्धिक्रम एवाश्रयणीयः ; पूर्वं छेदनम् ततो वत्सापाकरणमिति । यत्र श्रुतिपाठक्रमयोर्विरोधः यथा सꣳस्थिते यज्ञे ब्राह्मणं तर्पयितवै ब्रूयादिति (१. ७. ३. २८.) श्रुतिः संस्थिते यज्ञे ब्राह्मणतर्पनं विदधाति पाठक्रमस्तु प्राशित्रावदानात्पूर्वम् तत्र श्रुतिक्रमेण संस्थितऽएव कर्तव्यम् न पाठक्रमेण । यत्र च श्रुतिपाठमन्त्रपाठयोर्विरोधो भवति यथा सोऽसावाज्यमधिश्रयतीत्यधिश्रयणं विधाय तत्समनन्तरमेवोद्वासनं विदधाति तत्पुनरुद्वासयतीति (१. २. २. ६.) मन्त्रक्रमस्तु पत्नीसंनहनान्ते विष्णोर्वैष्णोऽस्यूर्जे त्वादब्धेनेति (१. ३०.) तत्र श्रुतिपाठक्रममनादृत्य मन्त्रपाठक्रमेणैवाज्योद्वासनं कर्तव्यम् ॥ ॥ अथ यत्र बहूनां प्रधानानां सहप्रयोगो भवति तदा संनिपत्योपकारकाः पदार्थाः सर्वेषां प्रधानानां पृथक्पृथक् सदृशपदार्थानुसमयेन कर्तव्याः · तद्यथा सप्तदशसु प्राजापत्येषु पशुषु सर्वेषां प्रथममुपाकरणम् ततः सर्वेषां नियोजनम् ततः सर्वेषां प्रोक्षणमिति · यथा बहुषु हविःषु सर्वेषां प्रथममभिघारणम् ततः सर्वेषामुद्वासनम् ततः सर्वेषां प्राणदानम् ततः सर्वेषामासादनम् ततः सर्वेषामालम्भ इति · आरादुपकारकास्तु तन्त्रेण भवन्तीति न तेषु क्रमचिन्ता । चतुर्मुष्टिकनिर्वापस्यैकपदार्थत्वम् एकादशकपालोपधानस्य च · तेनैकैकमुष्टिना एकैककपालोपधानेन च नानुसमयः किंतु प्रतिप्रधानं चतुर्मुष्टिको निर्वापः उक्तसंख्यकपालोपधानं चैकैकस्य कर्तव्यम् · सोमे चैकैकस्य ग्रहस्य ग्रहणं सादनान्तं कर्तव्यम् · सर्वत्र हविषोऽवदानं प्रदानान्तं कर्तव्यम् · अत्र वचनात्काण्डानुसमय एव न पदार्थानुसमयः । तथा हविर्मात्रभेदे देवतायामभिन्नायां देवतागुणे चोपांश्वादिके अभिन्ने अवदानं

---

1) °मार्थक्रम° १. २.

प्रदानान्तं न भवति किंतु क्रमेण सर्वाणि हवींष्यवदाय ततः प्रदानं कार्यम् · यथा वाजपेये सप्तदशसु प्राजापत्येषु दर्शेष्टौ दधिपयसोश्च स्विष्टकृद्यागे चानेकहविष्के ॥ तथा बहुषु प्रधानेषु सप्तदशप्राजापत्यपश्वादिषु प्रथमस्य पदार्थस्य सर्वेषनियमः · प्रथमे पदार्थे उपाकरणलक्षणे कृते द्वितीयपदार्थादौ उपाकरणक्रम एवाश्रयणीयो न क्रमान्तरम् · अयं प्रावृत्तिकः क्रमः । तथा मुख्यानां प्रधानानामाग्नेयादीनां पाठक्रमेण तदङ्गानां निर्वापादीनां क्रमो भवति यथा प्रथमं पठितस्याग्नेयस्य प्रथमं निर्वापादि पश्चात्पठितस्याग्नीषोमीयस्य पश्चादिति · अयं मुख्यः क्रमः ॥ दर्शपूर्णमासादावनेकाहःसाध्ये कर्मणि क्रियमाणे मध्ये नित्यस्याग्निहोत्रादेः काले आयाते मध्येऽपि तत्कर्म कर्तव्यमेव तस्य कालातिक्रमो न कार्यः । एवं पशुचातुर्मास्यसौत्रामण्यादौ ज्ञेयम् । अमावास्यायां सौत्रामण्यादिविकृतिमध्यऽएव पिण्डपितृयज्ञानुष्ठानं कर्तव्यम् तद्दक्षिणाग्नौ । तथा षोडश्यतिरात्रादौ षोडशिनो नियतकालत्वेऽपि दैवादुक्थ्योत्कर्षे उक्थ्यानन्तरमेव षोडशियागो भवति न कालानुरोधात्ततः पूर्वम् ॥ अग्निष्टोमादीनां प्रधानकर्मणां सत्रपर्यन्तानां हविर्यज्ञानां वानुष्ठाने क्रमनियमो नास्ति · यदा यस्येच्छा तदा तदनुष्ठीयते · अध्ययनार्थ एवैषां पाठक्रमो नानुष्ठानार्थः सर्वस्वारादूर्ध्वं पठितेषु पाठक्रमेणानुष्ठानासम्भवात् ॥ ॥५॥

इति प्रथमस्य पञ्चमी कण्डिका ॥ ॥

इदानीमिदं विचार्यते किमवत्तस्योद्धृतस्य द्यवदानमात्रस्य [१] नाशे हविरन्तरमुत्पाद्यते उत तस्मादेव हविःशेषात्पुनरवदेयमिति । तत्र सूत्रेणैव प्रथमं सिद्धान्तमाह ·

अवत्तनाशेऽन्यद्गुणानुग्रहात् ॥१॥ अवत्तस्य पुरोडाशचर्वादेः सकाशात्पृथक्कृतस्यावदानद्वयमात्रस्य नाशे अन्यद्धविरुत्पादनीयम् यागार्थम् । कुतः गुणानुग्रहात् एवं कृते मध्यपूर्वार्धावदानरूपेण गुणेनाङ्गेन साधनभूतेन यागोऽनुगृहीतो भवति । यदि पूर्वहविःशेषादेव पुनरवदाय यागः क्रियते तदा तस्य

[१] ?दानस्य मात्रस्य २.

पूर्वार्धविकलत्वाद्विगुण एव यागो भवेत् · कथम् · ह्यवदानस्यैव यागार्थत्वपत्ते तस्य विनष्टत्वादवशिष्टस्यायागार्थत्वात् समस्तपुरोडाशस्य यागार्थत्वेऽपि ह्यवदाननाशेन तस्य विकलत्वात् · न चासौ यागो विगुण इष्यते · तस्माद्धविरन्तरमेवोत्पाद्यमुद्धृतह्यवदाननाशे · इति प्राप्तऽआह ·

न पूर्वशेषात् ॥२॥ यदुक्तम् अवत्तनाशेऽन्यदुत्पादनीयमिति तन्न किं तु पूर्वशेषात् पूर्वस्यैवावशिष्टस्य हविषः शेषात्पुनरवदेयम् । कुतः विनष्टेऽपि ह्यवदाने पुनर्मध्यपूर्वार्धसम्भवात् तावन्मात्रस्य च शास्त्रार्थत्वात् · पुरोडाशस्य यौ मध्यपूर्वार्धावयवौ तदपादानकं तदवयवभूतमवदानद्वयं यागसाधनम्[1] · नष्टे च मध्ये पूर्वार्धावयविनि पूर्वसकलत्वपे पुरोडाशे यो मध्यावयवः पूर्वार्धावयवश्चावदानापादानभूतः स एवावदानापेक्षयावयवी · तस्मिन्नवदानोद्धरणेन विनष्टेऽपि मध्यान्तरस्य पूर्वार्धान्तरस्य चावदानद्वयोपलक्षणत्वेन विद्यमानत्वात्तत एव पुनरवदेयम् । ननु कृत्स्नस्य मध्यपूर्वार्धेऽवदेयम्[2] न विकलस्येति चेत् · तन्न · कुतो ऽशास्त्रार्थत्वात् · मध्यादवद्यतीत्येतावदेव श्रूयते न तु सकलस्य सकलपुरोडाशस्य[3] मध्यादिति । तस्मात्पूर्वशेषादेवावदेयम् ।

अचोदितत्वाच्च ॥३॥ किं च अवत्तह्यवदाननाशे अन्यद्धविरुत्पादनीयमित्येवमचोदितत्वात् कुत्राप्यविहितत्वात् पूर्वशेषादेवावदेयम् ।

स्विष्टकृद्वदानुपूर्व्ययोगात् ॥४॥ अपि च शेषादवदीयमाने तद्धविः स्विष्टकृद्भवति · स्विष्टकृदस्यास्तीति स्विष्टकृद्वत् । अन्यस्मिन्हविष्युत्पादिते तु इदं पूर्वहविः स्विष्टकृद्वन्न भवति · न हि तदा ततः स्विष्टकृदर्थमप्यवदानं गृह्यते किंतु नूतनोत्पादितादेव । कुतः आनुपूर्व्ययोगात् यतः स्विष्टकृदवदानस्यानुपूर्व्ययोगः क्रमयोगोऽस्ति · प्रधानावदानानन्तरं हि ततः स्विष्टकृदर्थमवदानं भवति · यदि च प्रधानावदानमेव[4] पूर्वस्मान्न गृह्यते स्विष्टकृदर्थमपि ततो न गृह्यते · ततः पूर्वस्य हविष उत्पत्तिर्व्यर्थैव स्यात् · शेषात्तु प्रधानार्थेऽवदीयमाने स्विष्टकृदर्थमपि ततोऽवदीयतऽएवेति पूर्वहविः स्विष्टकृद्भवतीति पूर्वपक्षे गुणः । अथोक्तमेव सिद्धान्तं दूष्यति ·

1) °धन २. धनः २. 2) ? °र्धेऽवदेये २. 3) ? सकलस्याससकलपुरोडा° २. 4) प्रदाना° २.

गुणहानौ तु शेषभावात् ॥५॥ तुशब्दः पक्षव्यावृत्तौ · गुणहानौ इति गुणस्य यागं प्रति गुणभूतस्य यागसाधनभूतस्य ह्यवदानस्य हानिर्गुणहानिः · हविषो मध्यपूर्वभागस्य यागं प्रति गुणभूतस्य यागसाधनभूतस्य हानौ सत्यां नाशे सति न पूर्वशेषादवदेयम् । कुतः शेषभावात् शेषत्वादेव तस्यावशिष्टस्य शेषकार्यार्थत्वादित्यर्थः । कृत्स्नस्य हि पुरोडाशस्य यो मध्यदेशस्तदपादानको यस्तस्योपरितनोऽङ्गुष्ठपर्वमात्रोऽवयवः सोऽवदातव्यः अन्यस्त्ववदेयस्यापादानभूतः न त्वसाववदातव्यः · स स्विष्टादिशेषकार्यार्थो न प्रधानकार्यार्थः · अतो नासौ हविः · यत्तु हविस्तद्विनष्टम् · तद्विनाशे च हविरन्तरमेवोत्पाद्यम् । यदा च ह्यवदानस्यैव यागार्थता ततस्तद्विनाशे शेषस्य कार्यार्थत्वाभावात् द्रव्यान्तरं यागार्थमुत्पाद्यम् । यद्यपि समस्तपुरोडाशसाध्यो यागस्तदापि ह्यवदाननाशे तस्य विकलत्वादविकलं हविरन्तरमुत्पाद्यम् । तस्मात्साधूक्तम् अवत्तनाशेऽन्यदिति । तदुक्तम् संस्काराणां पुरोडाशे ह्यवदानं प्रयोजकम् तद्विनाशाच्च नष्टास्ते नावदेयमतस्ततः गृहीतौ मध्यपूर्वार्धौ तौ च नष्टावुभावपि अतः शेषस्य शेषत्वात्प्रधानत्वं न युज्यतऽइति ॥ ॥ अथेदं चिन्त्यते । इन्द्राग्निसोमादिदेवतानामाहवनीयादीनामग्नीनां मन्त्राणामिषे-त्वेत्यादीनां क्रियाणामदृष्टार्थानां प्रयाजप्रोक्षणादीनामस्मरणादिना अपचारे किं देवतान्तरमग्न्यन्तरं शब्दान्तरं क्रियान्तरं च प्रतिनिधेयम् उत नेति । पूर्वेण न्यायेन प्रतिनिधौ प्राप्तऽआह ·

न देवताग्निशब्दक्रियाः परार्थत्वात् ॥६॥ देवता अग्न्यादिकाः अग्नय आहवनीयादयः शब्दो मन्त्रः क्रियाः प्रोक्षणप्रयाजादिका अदृष्टार्थाः । दृष्टार्थेषु त्ववघातादिष्वस्त्येव प्रतिनिधिः नखनिर्लुण्ठनादिभिरपि[1] तत्कार्यसिद्धेः । तदेतेषां देवतादीनामस्मरणादिना अपचारे प्रतिनिधिर्न भवति । कुतः परार्थत्वात् अदृष्टार्थत्वादित्यर्थः · प्रतिनियतानि ह्येषामदृष्टानि · तथा हि · यत्र हि प्रतिनिधीयमानं मुख्यस्य कार्यं साधयति तत्र प्रतिनिधिः न चेह तथा सम्भवति । देवता तावद्विधिलक्षणा न त्वन्या आनीयमाना[2] देवता भवति न चादेवताये संकल्पमाने यागो भवति · अतो न देवताकार्यमन्यतः सम्भवति · अतो

1) °निर्लुंचना° Çâstradîpikâ at Jaim. ६. ३. १६. 2) आहवनीयमाना २.

ऽग्न्यादिके विधिशब्दे विस्मृते तदर्थवाचकं शब्दान्तरमर्थान्तरवाचकं वा न प्रतिनिधातव्यम् · एवं च गत्यभावाद्यागस्यापि लोपः · न हि त्यागमात्रं यागः किंतु देवतोद्देशेन त्यागः · तेनासत्यां देवतायां प्रधानस्यैव यज्ञार्थस्य [1] स्याल्लोपः · किं च सदृशं प्रतिनिधातव्यम् देवताया अभावश्च शब्दनाशे शब्दद्वारेण च देवतात्वम् अतो मुख्यदेवताशब्दं स्मृत्वोत्तरकालं तत्सदृशशब्दस्य स्यादुपादानम् न ह्यस्मृते मुख्ये तत्सदृशो बुद्धावारोपयितुं शक्यः न च स्मृतस्य मुख्यस्य परित्यागो युक्तः · तस्माद्देवताया न प्रतिनिधिरिति । तथाग्निरप्याहवनीयादिरदृष्टार्थो विनाप्याधारेण प्रक्षेपसम्भवात् · न चाहवनीये प्रक्षेपे कृते यददृष्टं तदन्येन सिध्यतीति प्रमाणमस्ति · तस्मादग्नीनां न प्रतिनिधिः · नीवारादिना तु पुरोडाशनिष्पत्तिः प्रत्यक्षत एव दृश्यते । मन्त्रस्तु यद्यपि पदार्थप्रकाशनार्थत्वाद्दृष्टार्थः तथापि तस्य ध्यानादपि सिद्धेर्न [2] मन्त्रान्तरं प्रतिनिधेयम् · अत्र अर्थेन स्मृतेन प्रयोजनमस्ति न मुख्येन मन्त्रेण नापि तत्सदृशेन शब्दान्तरेण · अवश्यं हि मन्त्रार्थप्रतिपादकं शब्दान्तरं प्रतिनिदधता येन केनचिदुपायेनार्थः प्रथमं स्मर्तव्यः तदभावे तत्प्रतिपादकशब्दान्तरोपादानासम्भवात् · ततश्च सिद्धे स्मरणे न प्रतिनिधिना कार्यम् स्मरणार्थमेव हि प्रतिनिधीयते · न च शब्देन स्मरणं कर्तव्यमिति वचनमस्ति किं तर्हि मन्त्रविशेषाम्नानसामर्थ्यादुपद्रष्टाद्युपायनिवृत्तिः [3] असति च मन्त्रे उपद्रष्ट्रादि [4] केन वार्यते · अतो नास्ति शब्दान्तरं प्रतिनिधिः · ये तु मन्त्रनियमकृतम् यददृष्टं न तदन्येन सिध्यतीत्यप्रतिनिधिमाहुः तेषां व्रीह्याद्यपचारेऽपि तत्कृतनियमादृष्टस्यान्यथासिद्धेर्द्रव्यान्तरप्रतिनिधिर्न सिध्येत् । क्रियाया अपि प्रतिनिधिर्न भवति · यत्प्रयाजादिभिरदृष्टं क्रियते तदन्या क्रिया करिष्यतीति [5] नास्ति प्रमाणम् · कृत्यादीनां तु दृष्टार्थत्वात् द्रव्यवदस्त्येव प्रतिनिधिः क्रियाग्रहणं त्वदृष्टार्थक्रियाभिप्रायमिति ॥

कामं देवताम् ॥७॥ योऽग्निशब्दक्रियाः प्रतिनिधत्ते स कामं स्वेच्छया देवतामपि प्रतिनिदध्यात् · अकामानुमतौ काममित्यमरः (३. ४. १३.) । अग्निशब्द-

1) ? यज्ञ्यर्थस्य २· 2) ? सिद्धेन २· 3) ? °म्नातसामर्थ्यादुपद्रष्टाद्यु° २· 4) ? उपद्रष्टादि २· 5) तदन्या क्रिया करिष्यतीति २·

क्रियाणामप्रतिनिधेयत्वस्य दृढीकरणार्थमिदं सूत्रम् यतो देवतायाः प्रतिनिधिः सर्वथा न सम्भवति · न हि ऐन्द्रे हविष्यग्निर्देवता भवति न हि जात्या काचिद्देवतास्ति वैदिके कर्मणि · या यत्र विधीयते सा तत्र देवता · तेनान्यत्रान्या देवतेव भवति अविहितत्वात् ।

प्रतिषिद्धं प्रत्यवायात् ॥ ८॥ नेत्यनुवर्तते । यद्द्रव्यं कोद्रवमाषवरटादि प्रतिषिद्धं न तत्प्रतिनिधेयम् । कुतः प्रत्यवायात् यतः प्रतिषेधातिक्रमे प्रत्यवायो भवति · तथा हि अयज्ञिया वै कोद्रवा अयज्ञिया वै वरटका अयज्ञिया वै माषा इति प्रतिषिद्धयज्ञसाधनभावा माषादयः । मौद्गे चरौ मुद्गानामभावे सादृश्यान्माषाः प्राप्नुवन्ति श्यामाकचरौ च कोद्रववरटकाद्या इति · अत्र माषाद्याः प्रतिनिधित्वेन ग्राह्या न वेति संदेहः · तत्र यज्ञाङ्गत्वं माषादीनां प्रतिषिध्यते प्रतिनिधित्वे तु न माषस्य यज्ञाङ्गत्वम् किंतु तद्गतस्य मुद्गाद्यंशस्य [1] अतः प्रतिनिधेया माषादय इति चेत् · मैवम् · अयज्ञिया इत्यनेन यज्ञार्हतामात्रं प्रतिषिध्यते प्रतिनिधित्वे चावर्जनीयं साधनत्वम् · अतो न माषादीनां प्रतिनिधित्वम् । तदुक्तम् व्रीहिर्यवो वा श्यामाको नीवारो वा हविर्भवेत् वेणुयवा मसूरं वा शाकं मूलं फलं जलम् सत्यं वा हविरेतेषु यथासम्भवमाचरेत् प्रतिनिध्यन्तरवत्सत्यं विज्ञेयं हविरत्यये प्रधानदेवतोद्देशात्संत्यजेत्सत्यमात्मनः अतोऽन्यदपि वा ग्राह्यं सदृशं धान्यमात्रकम् न ग्राह्यं सर्वथा माषवरकोदारकोद्रवम् यद्वा व्रीहियवाभावे तुषतण्डुलयोगिनीः ओषधीः परिगृह्णीयादणुकोद्रववर्जिताः ग्राम्याणां वा भवेद्ग्राम्यमारण्यानामरण्यजम् यवाभावे तु गोधूमास्ततो वेणुयवादय इति ॥ ॥ अथेदं विचार्यते · प्रोषिते कार्यान्तरव्यापृते मृते वा यजमाने तत्स्थाने किं याजमानपदार्थकरणाय पुरुषान्तरं प्रतिनिधेयमुत नेति · तत्र व्रीह्याद्यपचारऽइव प्रतिनिधौ प्राप्तऽआह ·

स्वामी फलयोगात् ॥ ९॥ नेत्यनुवर्तते । स्वामी यजमानो न प्रतिनिधेयः । मृते तावत्कः पुरुषान्तरं प्रतिनिदध्यात् को वाध्वर्यवादीन्प्रवर्तयेत् [2] स्वयं प्रवर्तमानेषु च तेषु न मृतस्याकर्तुः फलं सिध्यति · यदि तु प्रतिनिहितो

[1] व्रीह्याद्यंशस्य Çâstradîp. at Jaim. ६. ३. १८. [2] Thus also the Çâstradîp.

दक्षिणादानं द्रव्यत्यागं च करोति तदा तस्य सम्यक्फलसम्बन्धान्मुख्य एव स्वामी स्यान्न प्रतिनिधिः · पत्नी त्वस्वतन्त्रा अनग्निश्च मृते पत्यौ पुरुषान्तरं प्रतिनिधाय प्रयोक्ष्यतीत्यनाशङ्कनीयमेव · प्रोषिते अन्यत्रव्यापृते [1] वा यजमाने ये ताः वत्क्रत्वर्था आज्यावेक्षणादयः तेषु यथासमाख्यमध्वर्य्वादय एव कर्तारो विद्यन्तऽइति न प्रतिनिधिना कार्यम् · पुरुषसंस्काराणां च ऋत्विग्वरणादीनां क्रत्वर्थत्वात् विनापि यजमानेन नास्ति वैगुण्यम् पत्न्या अपि तदनुष्ठानसम्भवात् · यानि च ब्रह्मचर्यादीनि फलं प्रति योग्यतायाः कारणानि तानि बहिरवस्थितेनापि यजमानेन क्रियमाणानि क्रतोरुपकारकाण्येव · तस्मादिदबन्धनाज्यावेक्षणादावध्वर्य्वादेर्विद्यमानत्वादितरत्र [2] ब्रह्मचर्यादावसम्भवात्प्रतिनिधेरनुपपन्नो यजमानप्रतिनिधिः । कुतः फलयोगात् न हि पुरुषान्तरेण क्रियमाणानि ब्रह्मचर्यादीनि यजमानस्य फलयोग्यतां सम्पादयन्तीत्यसम्भवः प्रतिनिधेः · तस्मान्न प्रवासादिनापचरिते स्वामिनि तत्स्थाने स्वाम्यन्तरं प्रतिनिधेयमिति । ननु [3] पत्न्यां मृतायां किमस्ति प्रतिनिधिरुत नेति नायमस्याधिकरणस्य विषयः · तदापि हि यदा तावत् भार्यायै पूर्वमारिण्यै दत्त्वाग्नीनन्त्यकर्मणीत्ययं (मनु॰ ५. १६८.) पक्षः समाश्रीयते तदाग्न्यभावादेवानधिकारः [4] सिद्धः · यदा तु नाग्नयः पत्न्यै दत्ताः तदाप्याचारप्रामाण्यान्नापत्नीकस्य [5] दर्शपूर्णमासाद्यनुष्ठानम् · अग्निहोत्रमात्रं तु वचनादनुष्ठीयते तदाप्यपत्नीकोऽप्यग्निमाहरेदिति [6] वचनात् · वचनान्नास्ति पत्न्याः प्रतिनिधिरिति तत्त्वरत्ने ।

गुणेषु प्रतिनिधिः परार्थत्वात् ॥ १० ॥ गुणेषु क्रत्वर्थेषु गुणपदार्थेषु पात्रासादनाद्यन्वाधानवेदबन्धनादिषु स्वामिनोऽपि प्रतिनिधिर्भवति · यथासमाख्यमध्वर्य्वादिरेव तत्तत्करोतीत्यर्थः । कुतः परार्थत्वात् पात्रासादनादीनां क्रत्वर्थत्वात् क्रत्वर्थानि होमादीनि वपनादिवद्यजमानसंस्कारार्थानि · अतः परार्थत्वादेवमादिषु [7] क्रत्वर्थेषु स्वामिनोऽपि प्रतिनिधिर्भवति ॥ ॥ अथेदं विचार्यते । सप्तदशावराश्चतुर्विंशतिपरमाः सत्त्रमासीरन्निति · तत्र सप्तदशप्रभृतिषु सत्त्रगणयागाद्यर्थ

१) Thus २. अन्यव्यापृते २. and Çâstradîp. at ६. ३. २०. २) ?॰देदबंध्याज्या॰ २. See p. १०१. not. १. ३) ?अनु २. ४) ॰ग्यभार्वोदेवानधि॰ २. ५) ॰न्नाफत्नीकस्य २. ६) ?तदाजरपत्नीको Ait. Br. ७. १. ७) ?पदार्थादेव॰ २.

प्रवृत्तेषु यदा कश्चिन्म्रियते तदा तत्स्थाने अन्यः प्रतिनिधेय उत नेति · तत्र पूर्वाधिकरणन्यायेन स्वामिनः प्रतिनिधिर्न भवतीति प्राप्तऽआह ·

सत्रेषु तु श्रुतेः ॥ ११ ॥ तुशब्दः पूर्वाधिकरणसिद्धान्तादिदमाह · सत्रेषु स्वाम्यपि प्रतिनिधीयते यजमानस्यापि प्रतिनिधिर्भवति । कुतः श्रुतेः · अथ यदि संदीक्षितानां प्रमीयेत तस्य यो नेदिष्ठी स्यात्तमुपदीक्ष्य तेन सह यजेरन्निति श्रवणात्[1] । काम्यमपि यत्प्रारब्धं तदवश्यं समापनीयमित्युक्तम् आवश्यकत्वाच्च यथाशक्ति प्रयोक्तव्यम् · अतो यद्यपि ये यजमानास्तऽऋत्विज इति यजमानशब्दस्य स्वामिभूतकर्तृवचनत्वात् एकशब्दोपात्तयोश्च स्वामिकर्तृत्वयोरार्त्विज्योद्देशेन विधिसम्भवात् स्वामिभिरेवार्त्विज्यं कर्तव्यम् तथापि स्वामिगता[2] सप्तदशादिसंख्या तत्राङ्गम् तया विना च वैगुण्यम् अतस्तत्सम्पादनाय पुरुषान्तरं प्रतिनिधेयम् । ननु स्वामिगता सप्तदशादिसंख्या न चानीतः स्वामी · कथम् · यो ह्यारभ्य समापयति तस्य सकलकर्तुः फलं भवति स च स्वामीत्युच्यते अयं पुनर्मध्ये प्रविष्ट एकदेशकर्ता[3] न फलं प्राप्तुमर्हति · न चासौ विधिवशात्प्रवृत्तो येन विधिवशात्प्रामाण्यात्फलं लभेत · न हि यः प्रतिनिधीयते तस्य कर्तव्यतया कर्म विहितम् यदस्मिन्फलेन प्रयुज्येत · इतरैरिह स्वामिभिः प्रारब्धमवश्यं समापनीयमित्याचारानुमितविधिवशेनासौ सोमादिभिः संख्यासम्पत्त्यर्थमृत्विक्स्थानीय आनीतस्तस्मान्नास्य स्वामित्वम् · तेनाशक्यैव स्वामिगता सप्तदशसंख्योपपादयितुमिति · उच्यते · स्वामिता[4] तत्स्थानीयस्य न भविष्यति न हि सा शक्या कर्तुम् · इदं तु वक्तुं शक्यम् ये ऋत्विजां पदार्थास्तऽइह सप्तदशावरैः कर्तव्या इति · एतावच्चोपपादितं भवति · अतो यद्यप्यानीयमानः स्वामिगतां संख्यां न पूरयति तथापि तु यो म्रियते तस्य यः पदार्थः कर्तव्यस्तस्मिन्कर्तृत्वं शक्नोति प्रतिपत्तुम् · न हि स्वामिसाप्तदश्यं न भवतीत्येतावता सम्भवदपि कर्तृसाप्तदश्यं[5] हातव्यं भवति · अतः स्वामित्वमात्रं त्यक्त्वा कर्त्रंशे साप्तदश्यं सम्पादयितुं सत्रे मृतस्य दीक्षितस्य स्थाने पुरुषान्तरं प्रतिनिधेयम् ॥ मृतस्य च फलं श्रूयते यो दीक्षितानां प्रमीयेतापि तस्य फलमिति । तदुक्तं जैमिनिना (६. ३. २४.) तस्मिंश्च फल-

1) See २५. १३. २८. 2) ?? °व्यं स्वामिगता हि २. 3) ? °देककर्ता २. 4) स्वामिना २. 5) ? कर्तृत्वं सा° २.

दर्शनादिति तस्मिन्मृते · अपि तस्य फलमिति मृतस्य फलं दर्शयन्प्रतिनिहिते नास्ति फलमिति दर्शयति · न चेदं फलपरम् किं तर्हि फलसद्रूपोऽयमर्थवादः पर्णमय्यधिकरणान्यायात्[1]। अथ मा भूदिदं मृतस्य फलपरम् · सत्त्रमासीरन्निति तु विधितः प्रवृत्तस्यापि किमिति फलं न भवतीति चेत् · न · सत्यपि फले मृतस्य समाप्त्यभावात् · अपिशब्दस्यायमर्थः । ऋद्धिकामाः सत्त्रमासीरन्निति तु विधिप्रमितं फलम् तत्तावदेकस्मिन्मृते सर्वेषां विपन्नमेव स्वामिसंख्याहान्या विगुणात्काम्यात्फलानुत्पत्तेः । प्रारब्धं समापयेदिति तु विध्यन्तरप्रमितफलेछ्यावशिष्टाः सत्त्रिणः प्रवर्तन्ते न च मृतस्य तत्र प्रसङ्गोऽस्तीति · अथ सत्त्रविधितः प्रतीतमेव फलं विगुणादपि निष्पद्यते तथापि न मृतस्य फलप्राप्तिः सकलाननुष्ठानात् · न हि प्रारम्भमात्रात्फलं भवति · इतरस्य च प्रतिनिहितस्य न केवलं सकलाननुष्ठानात् · कर्मकरत्वादपि विधिवशेन परप्रेरितस्य च ऋत्विग्वद्वर्तमानत्वादपि नास्ति फलसम्बन्धः इति तत्त्वरते । अन्ये तु वचनात् मृतस्य फलमेतदित्याहुः · न हि न्यायो वचनं बाधितुमिष्टो[2] नास्ति वचनस्य किंचिद्दुःकरमिति ॥ ॥ अथेदं चिन्त्यते सत्त्रे योऽयं प्रतिनिहितस्तस्य तत्फलयोग्यताहेतवो वपनाभ्यञ्जनादयञ्जनादयो यजमानधर्मा न भवन्ति उत भवन्तीति · तत्र स्वामिधर्माणां फलप्रतिग्रहणयोग्यत्वापादकत्वात् प्रतिनिधेश्च फलप्रतिग्रहाभावात् स्वामिधर्मा न भवन्तीति प्राप्तेऽभाह ·

स तद्धर्मा कर्मयोगात् ॥१२॥ स सत्त्रे प्रतिनिहितो नेदिष्ठी तद्धर्मा स्वामिधर्मा भवति स्वामिनो धर्माः संस्कारा वपनादयस्तस्य भवन्तीत्यर्थः । कुतः कर्मयोगात् स्वामिकर्मणा हि त्यागादिना स युज्यते अतस्तत्संस्कारसंस्कृतेनैव तत्कर्मानुष्ठानं युक्तम् · यद्यप्यस्य फलाभावात्फलिनः संस्कारा न प्राप्नुवन्ति[3] तथाप्यस्मिन्संस्कृते सत्यन्येषां यत्सप्तदश्यम् तत्संस्कृतेषु सप्तदशसु स्थितं भवति · ततः सप्तदशावराः सत्त्रमासीरन्नित्येतच्छास्त्रमनुगृहीतं भवति अन्यथा संस्कृताः षोडशैवेति शास्त्रं बाध्येत । यदि बहूनां यजमानानामलाभादवरा अल्पसंख्या यजमाना स्युस्तदापि सप्तदशापेक्षिताः न तु ततोऽप्यल्पसंख्या

1) ? ! ? पर्यामप्यधिक° २. 2) °मोष्टो २. 3) ? °स्कारान्प्राप्नु° २.

इत्यर्थः · अत इतरेषां फलप्राप्तेर्यथोपक्रान्तकर्मानुष्ठानसाध्यत्वात् सप्तदशकर्तृकस्य
ब्रह्मचर्यादेः स्वकार्यसाधनत्वात् तत्सिद्ध्यर्थं प्रतिनिहितोऽपि ब्रह्मचर्यवपनादिस्वा-
मिधर्मान्कुर्यात् इतरथा कर्तृसंख्यालोपादितरेषां ब्रह्मचर्यादेः स्वकार्यं न सि-
ध्येत् · तस्मात्स्वामिधर्मा नेदिष्ठी ॥ ॥ अथेदं विचार्यते सत्त्रेषु किं त्रयाणां
वर्णानामधिकारः उत ब्राह्मणानामेवेति । तदर्थं च किम् ये यजमानास्तेऽऋत्-
विज इत्यनेन आर्त्विज्यं यजमानसंस्कारत्वेन [1] विधीयते उत यजमाना आर्त्वि-
ज्याङ्गत्वेन । तत्र ऋद्धिकामादिवाक्येषु विशेषाश्रवणात्त्रिषु वर्णेषु प्राप्तेषु यच्छब्देन
तानुद्दिश्य तेषां संस्कारार्थमार्त्विज्यमुच्यते ये यजमानास्तेऽऋत्विज इति · अत्र
यजमानर्त्विक्शब्दयोः पृथगर्थत्वेन सिद्धयोः सामानाधिकरण्यमुपपत्त्यैकेन लक्षणा-
र्थेन भवितव्यम् · तत्र मुख्यत्वाद्यजमानशब्दः श्रुतिवृत्तः जघन्यत्वादृत्विक्शब्दो
लक्षणार्थः · ये हि परार्थमृतौ यजन्त्यध्वर्य्वादयस्तद्वाचकमृत्विक्पदमस्मिन्वाक्ये
तस्य च स्वामिवचनेन यजमानपदेन मुख्यसामानाधिकरण्यासम्भवात्कार्यलक्षणा
भवति · ये परिक्रीतकर्तृत्वेन प्रकृतितः प्राप्ताः पदार्थास्तेषु यजमानाः कर्तारः स्यु-
रिति । न चैवमृत्विक्कर्तृकत्वं शङ्कनीयम् यजमानानामेव कर्तृणां मुख्यर्त्विक्त्वोप-
पत्तेः · न हि वरणभरणजन्यमदृष्टमृत्विक्त्वम् आनमनार्थत्वाद्वरणभरणयोः अदृ-
ष्टार्थत्वे तु सत्यृतुयाज्या वरणवत् · सत्त्रेऽपि वरणभरणे कर्तव्ये स्याताम् ·
तस्मान्न वरणभरणनिमित्तमृत्विक्त्वम् किंतु क्रतुयजननिमित्तम् · अतः सत्त्रेऽपि
सत्यृत्विजस्तद्विशेषाश्चाध्वर्य्वादयः सन्त्येव · ते तु यजमाना एव नान्ये · वचनेन
हि परकर्तृकत्वेन प्राप्तानां पदार्थानां यजमानकर्तृकत्वमनेन विधीयते · यच्छब्दत-
च्छब्दौ यथाश्रुतमुद्दिश्यप्रतिनिर्देशकौ [2] · इति स्थिते को वाक्यार्थ इति चिन्त्यते ·
तत्र सर्ववर्णानां यजमानानामुद्दिष्टप्रतिनिर्दिष्टानामार्त्विज्यं संस्कारत्वेन विधीयते
प्रधानं ह्युद्देश्यं भवति यच्छब्दयुक्ताश्च यजमाना उद्देश्या इति तेषामेव प्राधान्यम् ·
तेन यथा ब्राह्मणानां यजमानानामेव सतां वचनप्रामाण्यादार्त्विज्यम् एवमि-
तरयोरपि वर्णयोः प्रधानभूतैरेव यजमानैः क्रियमाणमार्त्विज्यं न गुणभूतान्कर्तॄन-
पेक्षते · गुणकर्तृपरिच्छेदेन ब्राह्मण्यमार्त्विज्याङ्गम् तदभावे तदपि द्वाराभावान्न

1) Thus the Çâstradîp. at Jaim. ६. ६. १५. °स्कारत्वेन २. 2) ? °द्देशप्र° २.

सत्त्रे प्राप्नोति · तस्मात्त्रयाणामधिकार इति पूर्वपक्षः । सिद्धान्तमाह ·

सत्त्राणि ब्राह्मणानामृत्विक्श्रुतेः ॥ १३ ॥ सत्त्राणि द्वादशाहादीनि ब्राह्मणानामेव भवन्ति न क्षत्रियवैश्ययोः । कुतः ऋत्विक्श्रुतेः ये यजमानास्तऽऋत्विज इति श्रवणात् · यद्यप्यत्र सर्वे वर्णा उद्दिष्टप्रतिनिर्दिष्टाः विशेषाश्रवणात् तथाप्यत्रार्त्विज्यं यजमानानां संस्कारत्वेन न विधीयते तथा सत्यार्त्विज्यस्याप्राकृतकार्यप्रसङ्गात् · तेन यच्छब्दयोगेऽप्यत्र न यजमाना उद्दिश्यन्ते किंतु ऋत्विक्पदेन तत्कर्तृकान्पदार्थानुद्दिश्य यजमानाः कर्तृत्वेन विधीयन्ते प्रत्याम्नानाच्च ऋत्विजो निवर्तन्ते । आर्त्विज्यं ह्यत्र प्रधानम् · तस्य चात्र द्वौ धर्मौ अङ्गत्वेन प्रकृतितः प्राप्तौ अन्यकर्तृकता ब्राह्मणकर्तृकता च · तत्रान्यकर्तृकता ये यजमानास्तेऽऋत्विज इत्यनेन बाधिता ब्राह्मणकर्तृकतायां तु न किंचिद्बाधकमिति ऋद्धिकामादिशब्दानां ब्राह्मणाविरोधात् · तस्मात्प्रकृतितः प्राप्तं ब्राह्मणकर्तृकत्वं वाचनिकं च यजमानकर्तृकत्वमुभयं सम्पादयितुं ब्राह्मणानामेव सत्त्राणि भवन्तीति सिद्धम् ॥ ॥ अथेदमपरं चिन्त्यते · प्रयाजे पुरुषभेदेनानुष्ठाने विशेषोऽस्ति · राजन्यवसिष्ठादीनां नाराशंसो[1] द्वितीयः प्रयाजस्तनूनपादन्येषाम् · तत्र वसिष्ठात्रिवध्र्यश्वशुनककण्वकश्यपसंकृतिगोत्रोत्पन्नास्तत्प्रवरवन्तो वा नाराशंसप्रयाजवन्तः[2] इतरे च तनूनपात्प्रयाजवन्तः · तऽएते भिन्नकल्पा अपि मिलित्वा सप्तदशावराः संहत्य सत्त्राधिकारिणो भवन्ति उत समानकल्पा एवेति । तदर्थमिदं विचार्यते · किं वसिष्ठादयो नाराशंसाद्यङ्गत्वेन कर्तारो विधीयन्ते उत वसिष्ठादीनुद्दिश्य नाराशंसादि तादर्थ्येन विधीयते · इति वसिष्ठाद्यर्थत्वेन विधानेन फलकल्पनात्प्रकरणाबाधाच्च[3] वसिष्ठादय एव नाराशंसाद्यङ्गत्वेन विधीयन्ते षष्ठी च सम्बन्धवाचिनी · सत्त्रेषु च सत्त्रिणां प्रत्येकमिव कर्तृत्वमिति स्थितम् · अतस्तत्र वसिष्ठावसिष्ठैः क्रियमाणो नाराशंसो[4] वासिष्ठेनापि[5] तावत्क्रियतऽएवेत्यविगुणः तथा तनूनपादप्यन्यैः · अतो यं कंचित्कल्पमाश्रित्य भिन्नकल्पा अप्यधिक्रियेरन्नित्येवं प्राप्तऽआह ·

---

1) नरा° २. The Çâstradîp. at Jaim. ६. ६. १. reads throughout नाराशंस and वासिष्ठ. 2) नरा° २. 3) ? °कल्पनाप्र° २. 4) नरा° २. 5) वसि° २.

एककल्पानामवैगुण्यात् ॥ १४ ॥ एकः समानस्तुल्यः कल्पः पक्षो येषां त एककल्पाः तेषामेव सत्त्राणि भवन्ति न भिन्नकल्पानाम् । कुतः अवैगुण्यात् · यदि सर्वेऽपि नाराशंसवन्तः[1] अथवा सर्वेऽपि तनूनपात्प्रयाजवन्तः तदेवावैगुण्यं भवति · अवैगुण्याच्च फलसिद्धिर्भवति · इतरथा भिन्नकल्पेषु सह निविष्टेषु अन्यतरप्रयाजाश्रयणे सत्यन्येषां वैगुण्यात्फलं न सिध्येत् · न च वचनबलेन बाधः वचनस्य समानकल्पेषु सहचरितार्थत्वेन बाधकत्वासम्भवात् । अत्र वसिष्ठादीन्स्वामित्वेनोद्दिश्य तादर्थ्येन नाराशंसादि[2] विधीयते · तादर्थ्यं च क्रतूपकारकद्वारेणाप्युपपन्नमिति न भिन्नफलकल्पनापत्तिः · वसिष्ठानामिति षष्ठी स्वामिलक्षणा · अतो येषां स्वं नाराशंसः तेषामेव कर्मसिद्धिं करोति नेतरेषाम् । अयमर्थः · वसिष्ठानां नाराशंस एव यज्ञाङ्गम् तद्युक्त एव क्रतुः फलसिद्धौ पर्याप्तो भवतीति एवं तनूनपाद्युक्त एवेतरेषाम् · अत एककल्पानामेव सहाधिकारो न भिन्नकल्पानामिति सिद्धम् ॥ अत्र सत्त्रव्यतिरिक्तान्यप्यनेककर्तृकाणि द्वियज्ञगणयज्ञादीन्युदाहरणं भवत्येव[3] तुल्यन्यायत्वात् · प्रदर्शनार्थं तु सत्त्रग्रहणानुवृत्तिः प्रदर्शिता । अत्र विशेषः · वासिष्ठो ब्रह्मेति वचनात् ब्रह्मत्वं वासिष्ठेन कर्तव्यम् वैश्वामित्रो होतेति वचनात् हौत्रं तु वैश्वामित्रेण · तयोश्च भिन्नकल्पत्वान्न सहाधिकारसम्भवः · तस्माद्वरं गत्यभावाद्वासिष्ठं ब्रह्माणमाश्रित्य हौत्रस्य विश्वामित्रकर्तृकतां बाधित्वा वासिष्ठेन तत्समानकल्पेन वा केनचित्कर्तव्यम् वैश्वामित्रं वा हौत्रमङ्गीकृत्य ब्रह्मत्वमङ्गीकृत्यापि वासिष्ठकर्तृत्वबाधेन वैश्वामित्रेण तत्समानकल्पेन वा केनचित्कर्तव्यम् अथवा ब्राह्मणमात्रस्याधिकार इति । तत्राविशेषात्सर्वेषामधिकारः स्यात् · अथवा वासिष्ठो ब्रह्मेति प्रकृतौ वचनात् ब्रह्मत्वस्यावैगुण्यायावश्यं वासिष्ठेन भवितव्यम् अतस्तत्समानकल्पानामधिकारः सिद्धान्तस्तु य एव कश्चित्स्तोमभागानधीते स वासिष्ठ इति[4] वचनात्स्तोमभागाध्ययनवतोऽवासिष्ठस्यापि ब्रह्मत्वस्यानुज्ञानादवासिष्ठेनापि क्रियमाणं ब्रह्मत्वं विगुणं न भवति · वैश्वामित्रो होतेति वचनात्तु हौत्रं वैश्वामित्रेण विना विगुणं स्यात् तस्माद्विश्वामित्रतत्समानकल्पानामेव सत्त्रेऽधिकारो

1) नरा° २. 2) नरा° २. 3) °वत्येव २. 4) See १२. ६. १. ४१.

नान्येषामिति सिद्धम् ॥ अनेनैव न्यायेन तुल्यप्रमाणानामेव सत्त्राणि प्राप्नुवन्ति न भिन्नप्रमाणानां दीर्घह्रस्वानाम् । कुतः एवं हि श्रूयते यजमानेन संमितौडुम्बरी[1] कार्येति यजमानेनोर्ध्वबाहुप्रपदोच्छ्रितेन[2] समस्थितेन वा द्विपुरुषात् रज्जुं मिमीतेति (१६. ७. ३२.-८.१.) · तत्र येन यजमानेन[3] संमितौडुम्बरी न क्रियते अग्निचित्रसाधनार्था रज्जुर्वा येन संमिता न क्रियते तस्य वैगुण्यं भवतीत्येवमाशङ्क्याह ·

न परार्थत्वात् ॥ १५ ॥ तुल्यप्रमाणानामेव सत्त्रेऽधिकारो भविष्यतीति यदाशङ्कितम् तन्न । कुतः परार्थत्वात् परार्थो ह्यत्र यजमानः औडुम्बर्यादिमानार्थो गुणभूतः · अतो येन केनचिद्यजमानेन संमिता सती यजमानप्रमाणा भवत्येवेति भिन्नप्रमाणानामप्यधिकार इति सिद्धम् · अतः शालाग्निचरेष्टकायूपादिप्रमाणानि यस्य कस्यचिद्यजमानस्यारत्न्यादिना कार्याणि ॥ नन्वेवमग्नीनामपि परार्थत्वाद्यस्य कस्यचिदग्निषु साधितं कर्म सर्वेषां फलसाधकं भविष्यतीत्यनाहिताग्नीनामप्यधिकारः सत्त्रेषु भवतीति प्राप्तऽउच्यते । दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्यस्य प्रकृतितः प्राप्तेर्य एतेनानिष्ट्वेति वचनादकृतदर्शपूर्णमासज्योतिष्टोमानामनाहिताग्नीनां नास्ति सत्त्रेष्वधिकारः · तथाग्न्योऽप्याधानगतात्मनेपदादनाधातॄणां[4] न कार्यसिद्धौ पर्याप्नुवन्तीत्यनाहिताग्नीनामनधिकारः · आदधीतेत्यात्मनेपदाद्धि आधातुरेवाधानफलेन भवितव्यम् · कर्मयोग्यता चाग्नीनां तत्फलम् अतोऽन्येनाहिता अन्यस्य कर्म न साधयन्ति · यजमानेन संमितौडुम्बरी कार्येति तु शास्त्रार्थो येन केनचिदपि प्रयोगगतेन यजमानेन[5] सम्पाद्यतऽइति वैषम्यम् ॥ ननु तर्हि जुह्वादिपात्रेषु कथम् तानि किं यस्य कस्यचिद्यजमानस्य सम्बन्धीनि सत्त्रऽउपादेयानि अथवा साधारणान्यन्यान्येवेति । तत्राग्निवदात्मनेपदकृतविशेषविरोधाभावात्प्रमाणवद्यस्य कस्यापि पात्राण्युपादेयानीति प्राप्तऽउच्यते । सत्यम् अयं विरोधो नास्ति · तथापि आहिताग्निमग्निभिर्दहन्ति[6] यज्ञपात्रैश्चेति तथा

---

१) °नेनडुसं° २. २) °बाप्रप° २. °बाहैप्रप° २. ३) येनायमानेन २. ४) °पदा-वदना° २. ५) Thus (but प्रकृतप्रयोग°) the Çâstradîp. at Jaim. ६. ६. २५. °चिदपि प्रयानगगतेन यजमाने २. ६) Thus Çâstradîp. at ६. ६. ३१. अनाहि° २.

दक्षिणहस्ते जुहूꣳ सादयतीत्यादिवचनैः (२५. ७. २१.) पात्राणां दाहे करणभावः सादनप्रतिपत्तिश्च विधीयते · तत्र यदि कस्यचिद्यजमानस्य पात्रैः सत्त्रमारभ्यते तदा मरणस्यानियतकालत्वात्कदाचित्प्रयोगमध्यऽएव तस्य यजमानस्य मरणं स्यात् ततस्तस्य संस्कारः पात्राणां च प्रतिपत्तिर्दर्शयिते · यदि तु नैर्दह्यते प्रक्रान्तः प्रयोगो विगुणः स्यात् · तस्मात्साधारणानि पात्राण्युत्पाद्य सत्त्रं कार्यम् ॥ इदानीमिदं चिन्त्यते · आर्विज्यविरोधेन क्षत्रियवैश्ययोः सत्त्रेऽनधिकार उक्तः सत्त्राणि ब्राह्मणानामृत्विक्श्रुतेरिति (१३.) · तर्हि आर्विज्ये तयोरधिकारो मास्तु गार्हपत्येऽधिकारो भविष्यति तत्रार्विज्यविरोधाभावात् इत्याशङ्क्याह ·

वैश्यराजन्ययोर्गार्हपते ॥१६॥ नेत्यनुवर्तते । वैश्यराजन्ययोर्गार्हपतेऽपि गृहपतित्वेऽपि अधिकारो न भवति । कुतः तयोर्ब्रह्मसामपक्षभेदेन भिन्नकल्पत्वात् तनूनपान्नराशंसयाजिवत् · तथा हि बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्पार्थुरश्मं राजन्यस्य रायोवाजीयं वैश्यस्येति · तेन पार्थुरश्मे रायोवाजीये वा क्रियमाणे ब्राह्मणानां वैगुण्यं भवति बार्हद्गिरे तु क्रियमाणे क्षत्रियवैश्ययोः · तस्माद्वैश्यक्षत्रिययोर्गृहपतित्वेऽपि नाधिकारः ॥ पञ्चविंशतिब्राह्मणऽइदं श्रूयते पञ्च पञ्चाशतस्त्रिवृतः संवत्सराः पञ्च पञ्चाशतः पञ्चदशाः पञ्च पञ्चाशतः सप्तदशाः पञ्च पञ्चाशत एकविꣳशा[1] विश्वसृजाꣳ सहस्रसंवत्सरमिति । अत्रायं संदेहः किमयं सहस्रसंवत्सरशब्दो मुख्य उत गौणः । यदापि मुख्यस्तदापि किं मनुष्यव्यतिरिक्तानां स्वतः सहस्रायुषां गन्धर्वादीनामधिकारः उत मनुष्याणामेव रसायनमित्रविन्दादिसम्पादितसहस्रायुषाम् · अथवा कुलकल्पः[2] अथवा साम्युत्थानम् अथवा विश्वसृजामयनं[3] कुर्वतां सहस्रायुष्ट्वम् अथवार्धतृतीयशतानां[4] यजमानानामधिकारः । यदापि गौणत्वम् तदापि किं मासेषु संवत्सरशब्द उत द्वादशरात्रिषु उत दिवसेषु इति पक्षाः । तत्र प्रथमं पक्षं तावदाह ·

सहस्रसंवत्सरममनुष्याणामसम्भवात् ॥१७॥ सहस्रसंवत्सरं सत्त्रमम-

---

1) ? °विंशति २. 2) Thus Çâstradîp. at ६. ७. ३१. तुल्यकल्पः २. 3) ? °जा-नामयनं २. 4) शतात्यं २.

नुष्याणां मनुष्यव्यतिरिक्तानां स्वभावात्सहस्रायुषां गन्धर्वादीनां भवति । कुतः अ-सम्भवात् मनुष्याणां सहस्रायुष्ट्वस्यासम्भवात् न हि सहस्रायुषो मनुष्याः सन्ति · अतः श्रुतिबलाद्मनुष्याणां गन्धर्वादीनामधिकारः ।

स्याद्देहानित्यत्वात् ॥ १८ ॥ अमनुष्याणामनधिकारस्य प्रागुक्तत्वात् वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यादिविधानान्मनुष्याणामेवाहवनीयाद्यग्नयः सन्ति नान्येषामिति न कथमपि गन्धर्वादीनामधिकारः सम्भवति । अतो मनुष्याणामेव सहस्रसंवत्सरं सत्त्रं स्यात् कार्त्स्न्येन यथोदितं विधिमुपसंहर्तुं तेषामेव शक्तत्वात् । ननु मनुष्याणां सहस्रसंवत्सरपरिमाणमायुः कथं सम्भवति · उच्यते · आयुरपि तावत्परिमाणं मनुष्याणां स्यात् · कुतः देहानित्यत्वात् देहस्यायुषोऽनित्यत्वात् अनियतकालत्वात् न हि नियतकाल मनुष्यदेहावस्थानम् कश्चिच्छतं वर्षाणि जीवति कश्चिदधिकं कश्चिदधिकतरमिति · अतोऽपरिमितायुषो मनुष्या इति · तस्मान्मनुष्याणामेवाधिकारः । ननु मनुष्यदेहस्यानित्यत्वेऽपि सहस्रायुष्ट्वं तेषां कथं सम्भवतीत्याशङ्क्याह ·

तस्य च कार्यत्वात् ॥ १९ ॥ तस्य चायुषः कार्यत्वात् रसायनमित्रविन्दादिना कर्तुं शक्यत्वात् । श्रूयते हि मित्रविन्दयायुष्कामो[1] यजेतेति · अतो रसायनैर्मित्रविन्दादिभिरायुःप्रापकैः कर्माभिश्च मनुष्या अपि दीर्घमायुः प्राप्स्यन्तीत्याशङ्क्याह ·

नासम्भवात् ॥ २० ॥ रसायनैरपि एतावत्परिमाणमायुर्न सम्भवति · न च मित्रविन्दादिकर्मभिरपि · न ह्येतावदायुषो रसायनादीनां च सम्बन्धी दृष्टपूर्वः · न हि रसायनानामेतावत्सामर्थ्यं दृष्टम् यतस्तैः सहस्रं वर्षाणि मनुष्या जीवेयुः · एतानि ह्यग्निवर्धनानि बलीपलितनाशनानि स्वरवर्णप्रसाधकानि मेधाजननानि च नैतावत्परिमाणस्यायुषो दातॄणि दृश्यन्ते । न च मनुष्याणामेतावदायुः कल्पयितुं शक्यते शतायुर्वै पुरुष इत्यर्थवादात् (१२. ७. २. १३.) · ननु शतान्यायूंष्यस्येति विग्रहः करिष्यते नैवम् न हि द्विवचनबहुवचनान्ताभ्यां[2] शब्दाभ्यां समास इष्यते प्रमाणाभावात् अभिधानासामर्थ्याच्च · नन्वेव-

---

१) °न्दया आयुःका° २. २) °चनं ताभ्यां २.

मेकत्वेऽपि प्रमाणाभावात्तेन कथं विग्रहः उच्यते एकत्वं जात्यपेक्षम् प्रातिपदिकानि हि जातिरेकेति[1] यद्वा जातिराश्रयमन्तरेणानुपपद्यमाना एकं तावदाश्रयमाक्षिपतीत्येकत्वसिद्धिः । तस्मान्मनुष्याणां रसायनैर्मित्रविन्दादिभिश्च सहस्रसंवत्सरायुष्ट्वस्य करणासम्भवात्कथं मनुष्याणामधिकार इत्याशङ्क्याह ·

शास्त्रसम्भवादिति भारद्वाजः ॥ २१ ॥ भारद्वाजो मुनिरित्याह एवं ब्रवीति · मनुष्याणामपि सहस्रायुष्ट्वं सम्भवति । कुतः शास्त्रसम्भवात् शास्त्रात्सम्भवः[2] शास्त्रसम्भवः तस्मात् · मित्रविन्दायाः आयुष्कामो यजेतेति हि शास्त्रम् मित्रविन्दया आयुर्भावयेदिति बोधयति · न च तत्रायुषः परिमाणं श्रूयते · तेन केनचित्कर्माभ्यासेन सहस्रायुषोऽपि भविष्यन्तीति । रसायनान्यप्यल्पस्य स्थिरभावस्याकारकारकाणि[3] दृश्यन्ते · एवमभ्यस्यमानानि वीर्यवत्तमानि च स्थिरशरीरतामुत्पादयिष्यन्ति · शतायुर्वै पुरुष इत्यस्मिन्सत्यप्यधिकजीवनं[4] मनुष्येषु प्रत्यक्षेणानुभूयतऽएवेति नायमेकान्तः । तस्मान्मनुष्याणामपि रसायनैर्मित्रविन्दादिशास्त्रात्सहस्रसंवत्सरविधायकशास्त्राच्च सहस्रायुष्ट्वस्य सम्भवो भविष्यतीति प्राप्तऽआह ·

नादर्शनात् ॥ २२ ॥ शास्त्रसम्भवादिति यदुक्तम् तन्न । न हि मित्रविन्दया सहस्रसंवत्सरपरिमाणमायुर्भवतीति श्रूयते नाप्यभ्यासेन तावत्कर्तुं शक्यते नापि रसायनैः । कुतः अदर्शनात् तावदायुष्काणां[5] मनुष्याणामदर्शनात् · यद्येभिरुपायैरेतावदायुर्भवेत् तर्हि आयुषः सर्वैरपीष्यमाणत्वादेतदुपायसम्पादितैतावदायुषो मनुष्या दृश्येरन् · न च दृश्यन्ते · अत एवमवगम्यते एभिरप्युपायैरेतावदायुर्न भवतीति · न ह्येतावदायुः कस्यचिदपि सम्भवति । तत्र रसस्य तावदारोग्यपुष्ट्यादिजनकत्वमेव[6] न वायुर्हेतुत्वम् · आयुःप्रापकैश्च मित्रविन्दादिभिरप्यपमृत्युनिरास[7] एव क्रियते न विधातृसृष्टादधिकमायुः · तथा च मित्रविन्दां प्रकृत्य वाक्यशेषः (११. ४. ३. २०.) विन्दते मित्रं राष्ट्रमस्य भवत्यप पुनर्मृत्युं जयति सर्वमायुरेतीति · न चापमृत्युर्नास्तीति वाच्यम् आथर्वणे हि

1) ? °कानिहितातिरेकेति २. °कानिहिताजातिरेकेति २. 2) शास्त्रासम्भवः २. 3) ? स्थिराभाव° २. 4) °स्मिन्नत्यप्य° २. 5) ? °कारणां २. 6) °रोग्यंपु° २. 7) °मन्युनि° २.

पठ्यते एकशतमपमृत्यूनामिति · तेनैको महामृत्युस्तदुल्लङ्घनं केनाप्युपायेन कर्तुं न शक्यते · तथा मर्त्या पितरः पुरा ह्यायुषो म्रियते यस्तर्ह्याधत्तऽइति (२. १. ३. ४.) परमायुषः पूर्वमप्यपमृत्युना मरणं दर्शयति · तथा मनुरप्यमुमर्थं ब्रवीति (५. ४.) अनभ्यासेन वेदानामाचारस्य च लङ्घनात्[1] आलस्यादन्नदोषाच्च मृत्युर्विप्राञ्जिघांसतीति । अतो मनुष्याणां कथमपि सहस्रायुष्ट्वस्यासम्भवादेकस्मिन्कुले समुत्पन्नानां पितृपुत्रपौत्रप्रपौत्रतत्पुत्रादीनां बहूनां साधारणस्य सहस्रायुष्ट्वस्य[2] सम्भवात् कुलाधिकार इति तृतीयः पक्षोऽस्त्वित्याह ·

कुलसत्त्रमिति कार्ष्णाजिनिः ॥ २३ ॥ कार्ष्णाजिनिर्मुनिरित्याह एवं कथयति यत्[3] कुलसत्त्रमेतत्सहस्रसंवत्सरं भवति कुलस्य पितृपुत्रपौत्रप्रपौत्रतत्पुत्रादिरूपस्य वंशस्यैतद्भवति न त्वेकस्य कस्यचित् असम्भवात् । मनुष्याधिकारं चैतत् प्रारब्धं चावश्यं समापनीयम् न चैकः शक्नोति समापयितुमिति यथा शक्यते तथा समापनीयमिति गम्यमाने [ये] बहवस्ते शक्नुवन्ति तेन तत्कुलीनाः क्रमेण कैश्चिदारब्धं कैश्चिन्मध्येऽनुष्ठितं केचित्समापयिष्यन्तीत्येवं कुलसत्त्रं कार्ष्णाजिनिर्मन्यते स्म । नैतद्युक्तम् · यतः शास्त्रफलं प्रयोक्तरीति न्यायात्समग्रानुष्ठातॄणामेव फलं भवति नैकदेशानुष्ठातॄणाम् · न च पित्रादिष्वेकोऽपि[4] कृत्स्नं करोति · तस्मान्नास्त्येवैकस्यापि फलमिति · अतो न कुलसत्त्रमेतत् । तर्हि साम्युत्थानमस्त्विति चतुर्थः पक्षोऽस्त्वित्याह ·

साम्युत्थानमिति लौगाक्षिः ॥ २४ ॥ सामिशब्दोऽर्धांशस्यार्थे · अर्धसमाप्ते सत्त्रे उत्थानं परित्यागः साम्युत्थानम् · सामि त्वर्धे जुगुप्सितऽइत्यमरः (३. ४. २५४.) · असमाप्तमेवेदं सत्त्रं त्याज्यमित्यर्थः । लौगाक्षिरेवं मन्यते स्म कार्ष्णाजिन्यभिमतात्कुलसत्त्रपक्षात्साम्युत्थानं वरमिति · तन्मते हि बहूनां वृथा प्रयासः अस्मिन्मते त्वारम्भकर्तॄणामेवेति अस्य पक्षस्य[5] तदपेक्षयोत्कृष्टता · वस्तुतस्त्वयमप्यनुपपन्न एव असमाप्तात्कर्मणः फलानुत्पत्तेः ॥ तर्हि सूत्रविधायकवचनबलादेव सत्त्रिणां दीर्घायुर्भविष्यतीति पञ्चमः पक्षोऽस्तु · मैवम् · न ह्यस्य वचनस्य सोऽर्थः सम्भवति तद्वाचकपदाभावात् · न च कल्पयितुं शक्यते

1) वर्जनात् Manu. 2) युस्तस्य २· 3) यत २· 4) °दिष्वेकोपि २· 5) पक्षस्य या २·

सम्भावितायुष्काणामपि सत्त्रान्तरेषु प्रवृत्तानां दैवान्म्रियमाणानां तत्सत्त्रविधिबलादायुर्वृद्ध्यदर्शनात् ॥ तर्हि पञ्च पञ्चाशत इत्यस्य पुरुषपरत्वमङ्गीकृत्य सार्धद्विशतानां पुरुषाणामधिकारेऽभिहिते संवत्सरचतुष्टयेन [1] सहस्रसंवत्सरत्वं सम्पद्यते · यत एकोऽपि त्रिवृत्स्तोमकयागयुक्तः संवत्सरः पञ्चपञ्चाशत्संख्यैर्यजमानैः प्रत्येकं कर्तृभूतैः सम्बध्यमानस्तत्संख्यो भवति तथा पञ्चदशादयोऽपीति · तेन चतुःसंवत्सरमिदं सत्त्रमर्धतृतीयैर्यजमानशतैः क्रियमाणं सहस्रसंवत्सरं भवतीति पक्षः षष्ठोऽस्तु [2]। सोऽप्यनुपपन्नः · चतुर्विंशतिपरमाः सत्त्रमासीरन्निति वचनादधिकानां तत्राधिकाराभावात् ॥ तस्मात्संख्याशब्दसंवत्सरशब्दयोर्मध्ये अन्यतरस्य गौणत्वमाश्रित्य मनुष्याधिकार आश्रयणीयः · तत्रापि संख्याशब्दस्य मुख्यत्वादेकार्थनिश्चयसामर्थ्याच्च न [3] स्वार्थत्यागः · संवत्सरपदं तु जघन्यत्वात् सावनसौरचान्द्रनाक्षत्राद्यनेकार्थसाधारणत्वेनार्थनिश्चयासामर्थ्यात् गौणं भवति । तर्हि यो मासः स संवत्सर इति वचनात्संवत्सरशब्दस्य मासपरत्वे सति सहस्रमासमेतत्सत्त्रमित्येष सप्तमः पक्षोऽस्तु · सोऽपि नोपपद्यते · यतः अष्टमे वर्षऽउपनीतो द्वादश वर्षाणि वेदमधीत्य विंशतिवयस्को विवाहं कृत्वा जातपुत्रोऽग्नीनादधीत तस्मादाधानादूर्ध्वं ज्योतिष्टोमानुष्ठानोत्तरकालमस्यायुषि न सम्भवन्ति सहस्रमासाः ॥ ननु [4] तर्हि संवत्सरप्रतिमा वै द्वादशं रात्रय इति प्रयोगाद्द्वादशरात्रिषु संवत्सरशब्दः · प्रतिमाविशेषणं त्वत्र संवत्सरशब्दः न तस्य द्वादशरात्रिषु प्रयोगः · तस्मादष्टमः पक्षोऽप्ययुक्तः ॥ अथ नवमं पक्षं सिद्धान्तमाह ·

अह्नां वाशक्यत्वात् ॥ २५ ॥ वाशब्दोऽवधारणे । अह्नामेवैतत्सहस्रं प्रत्येतव्यम् न वर्षाणाम् न मासानाम् नापि द्वादशरात्रीणामपि । कुतः अशक्यत्वात् न ह्यन्यथैतत्सूत्रं मनुष्यैः कर्तुं शक्यते । अथवा शक्यत्वात् अह्नां संवत्सरशब्देन प्रतिपादने मनुष्यैरपि कर्तुं शक्यत्वात् । मुख्यार्थासम्भवे च गौणी वृत्तिराश्रीयतऽएव अन्यथानर्थक्यापत्तेः · न चात्र मुख्योऽर्थः सम्भवतीति प्रागुक्तम् · अतोऽवश्यम्भाविनि गौणपरत्वे दिवसपरत्वं युक्तम् त्रिवृदादिशब्दानु-

1) °रचतुष्टयेनेन २. 2) षष्ठ्यस्तु २. 3) Thus the Çâstradîp. at Jaim. ६. ७. ३१. °र्थ्यन २. 4) न २.

ग्रहणात् [१] · तत्त्रिवृत्पञ्चदशः सप्तदश इत्येते शब्दाः स्तोमवाचकाः सन्तः स्तोमयुक्त एकैकस्मिन्नहनि यागरूपे लक्षणाया वर्तन्ते सत्त्रे तु तथाविधप्रयोगबाहुल्यात् · न त्वहःसंघे [२] क्वचिदपि त्रिवृदादिशब्दाः प्रयुक्ताः · तैश्चैदे शब्दैः सामानाधिकरण्यात् संवत्सरशब्दः स्वावयवभूतेऽहनि लक्षणाया वर्तते · त्रिवृतः संवत्सरा इत्युक्ते त्रिवृत्स्तोमकयागयुक्तान्यहानीत्युक्तं भवति । ननु संवत्सरशब्दस्याह्नि वृत्तौ किं प्रमाणमित्यत आह ·

श्रुतिसामर्थ्यात् ॥२६॥ · अहन्यपि संवत्सरशब्दस्यार्थवादोदितं प्रवृत्तिनिमित्तमस्त्येव · श्रूयते हि (२. २. ३. १.) आदित्यस्त्वेव [३] सर्वऽऋतवो यदैवोदेत्यथ वसन्तो यदा संगवोऽथ ग्रीष्मो यदा मध्यन्दिनोऽथ वर्षा यदापराह्णोऽथ शरद्यदैवास्तमेत्यथ हेमन्त इति सर्वर्तुसमयाह्नवते दिवसः संवत्सरशब्देनाभिधातुम् · अहर्वै संवत्सर इत्यपि क्वचिच्छ्रूयते · अतः श्रुतिसामर्थ्यादितच्छ्रुतिबलात्संवत्सरशब्दो [४] ऽत्राप्यहरभिधायक इत्यर्थः · तस्मादह्नां सहस्रमेतदवसेयम् । किं च ·

प्रकृत्यनुग्रहाच्च ॥२७॥ प्रकृतेर्गवामयनद्वादशाहादेरेवमनुग्रहः कृतो भवति · प्रकृतौ हि अहान्येव संख्येयानि · इहापि यद्यहान्येव तथा भवन्ति तर्हि प्रकृतिरनुगृहीता भवति नान्यथा · तस्मात्सहस्रदिनात्मकमेतद्विश्वसृजामयनसंज्ञकं सत्त्रं मनुष्याणामेव भवतीति सिद्धान्तः ॥ ॥ षष्ठी कण्डिका ॥ ६॥

अथ पद्धतिः ॥

अवत्तस्य हविषो नाशे हविरन्तरमेवोत्पाद्यते · न स्विष्टकृदादिप्रतिपत्तिसहितो यागः कार्यः · न पुनः शेषादवदेयम् । अग्न्यादीनां देवतानामाहवनीयादीनामग्नीनामिषेत्वादिमन्त्राणामदृष्टार्थानां प्रयाजानुयाजादिक्रियाणां च प्रतिनिधिर्न भवति · कुतः अदृष्टार्थत्वात् · दृष्टार्थानां तु क्रियाणामवघातादीनां प्रतिनिधिर्भवत्येव । प्रतिषिद्धं वस्तु श्रुतद्रव्यसदृशमपि प्रतिनिधित्वेन न ग्राह्यम् · यथा श्यामाकचरौ कोद्रववरटादि यथा वा मौद्गे चरौ माषादि । यजमानस्यापि त्यागादौ वपनादौ संस्कारकर्मणि च प्रतिनिधिर्न भवति · गुणकर्मसु पात्रासादना-

---

१) ? °ब्दानुगुणात् २· २) नन्वहःसंघे २· See the Çâstradîp.: त्रिवृदादिपदैः स्तोमविशिष्टमहरुच्यते नाहःसंघः· ३) °दित्य एवैव' २· ४) ? °र्थ्यादित° २·

ङ्यावेक्षणाग्न्यन्वाधानव्यूहनवेदबन्धनादिषु यजमानस्यापि प्रतिनिधिर्भवत्येव क्रत्व-र्थत्वात् · एवं पत्न्यभावेऽप्याज्यावेक्षणान्वारम्भाक्तोपाञ्जनादौ गुणकर्मणि प्रतिनि-धिर्भवत्येव · सत्त्रेषु च श्रुतिवचनबलाद्यजमानस्यापि प्रतिनिधिर्भवति यजमा-नकर्मणा सम्बन्धाद्यजमानधर्मा दीक्षणादयोऽपि तस्य प्रतिनिहितस्य भवन्ति । सत्त्रेषु यऽऋत्विजस्ते यजमाना इति यजमानानामृत्विक्पदार्थकर्तृत्वविधानाद्ब्राह्म-णानामेव सत्त्राणि भवन्ति न क्षत्रियवैश्यानाम् · ब्राह्मणानामप्येककल्पानाम् न भिन्नकल्पानाम् · वैश्यराजन्ययोर्गृहपतित्वेऽपि नाधिकारः ब्रह्मसामादिकल्प-भेदेन ब्राह्मणैः सह विरोधात् । सहस्रसंवत्सरं सत्त्रं मनुष्याणामपि भवति संवत्सरशब्देन लक्षणया वृत्त्याह्नां प्रतीयमानत्वात् · अतः सहस्रसंवत्सरे सहस्रं सौत्यान्यहानि भवन्ति ॥ ॥ ६ ॥

इति प्रथमस्य षष्ठी कण्डिका ॥ ॥

अथेदं विचार्यते एकप्रयोगवचनचोदितानामेकफलानां संहृत्यकारिणां बहू-नां कर्मणां सदृशाङ्गभाजामङ्गानुष्ठानं किं तन्त्रेण भवति उत पृथगिति । तत्र तदर्थं[१] प्रथमं संहृत्यकारित्वं प्रतिपाद्यते · यदि आग्नेयादयः षडपि परस्परानपेक्षाः स्वर्गं साधयेयुः ततस्तेषां कामिनः कर्तव्यत्वेन युगपदुपस्थानाभावात् पृथक्पृ-थगेव स्वाङ्गयुक्ताः कर्तव्या इति तन्त्रत्वं न सिध्येत् · तस्मात्संहृत्यकारित्वं प्रति-पाद्यते । तत्र दर्शपूर्णमासादिष्वनेकप्रधानसंनिपाते संदेहो भवति किमाग्नेयादयः पृथक्पृथक्स्वर्गं साधयन्ति उत संहृत्येति · तत्राग्नेयादीनि प्रधानानि परस्परानपे-क्षाभिश्चोदनाभिः पृथग्भूतान्युत्पन्नानि पृथगेव फलमाकाङ्क्षन्ति · ततस्तत्संनिधौ स्वर्गादि फलं श्रूयमाणं भेदेनाकाङ्क्षितत्वाद्भेदेनैव सम्बध्यते · तस्मात्प्रतिप्रधानं फ-लभेदे प्राप्तऽउच्यते पृथग्भूतानामप्येतेषामेकमेव फलम् कुतः यतः दर्शपूर्ण-मासाभ्यां स्वर्गकामो यजेतेत्यनेन वाक्येन सर्वाण्येकेन दर्शपूर्णमासशब्देनोपादाय तेषां फलसम्बन्धः कृतः · अतः समुदितेभ्यः फलं गम्यते न भेदेन · यथा ग्रामेण कूपः खेयो ग्रामेण तडागः खेय इति ग्रामशब्देन समुदायवचनेन संयुज्य

१) ? तदर्थं.

विधायमानः कूपः समुदितैः पुरुषैरेकः खन्यते न प्रतिपुरुषं कूपभेदः एवमिहापि · नात्र यागमुद्दिश्य फलं विधीयते स्वर्गेण यागं कुर्यादित्येव किं तर्हि फलमुद्दिश्य यागो विधीयते स्वर्गं यागेन कुर्यादिति · तस्मात्फलोद्देशेन विधीयमानानां विवक्षितं साहित्यमिति सिद्धं संहत्यकारित्वम् । एवं सिद्धे संहत्यकारित्वे प्रस्तुतो विचारः किमेषां पृथक्पृथगङ्गानुष्ठानम् उत तन्त्रेणेति · तत्र प्रतिप्रधानं पृथक्पृथगनुष्ठानं प्राप्नोति यतः प्रधानानि बहूनि अङ्गवत्ता च प्रत्येकं सम्पाद्या न च पृथक्पृथगनुष्ठानं विना प्रत्येकमङ्गवत्ता सम्पद्यते · यतः षडप्याग्नेयादिभावनाः साध्यसाधनांशयुक्ता[1] उत्पत्तिप्रयोगवाक्याभ्यामवगताः परस्परानपेक्षा एव कथमितीत्थम्भावं[2] भेदेनैवापेक्षन्ते · तद्वशाच्च संनिधिसमाम्नातान्यङ्गानि प्रत्येकमेव तासु विनियुज्यन्ते[3] विनियोगानुसारेण चानुष्ठानम् · तस्मादेकैकं स्वाङ्गयुक्तं कर्तव्यमित्येकं साङ्गं कृत्वापरमपि तथैव कर्तव्यम् · तस्मात्प्रतिप्रधानं पृथगेवानुष्ठानं कार्यमिति प्राप्तऽआह ·

कर्मणां युगपद्भावस्तन्त्रम् ॥ १ ॥ यत्र प्रधानकर्मणां युगपद्भावः सहप्रयोगः तत्रारादुपकारकाणामङ्गानां तन्त्रं सकृदनुष्ठानं भवति न प्रतिप्रधानं पृथक्पृथक् · यद्धि सकृत्कृतं बहूनामुपकरोति तत्तन्त्रमित्युच्यते यथा बहूनां मध्ये कृतः प्रदीपः । कुतस्तन्त्रमिति हेत्वाकाङ्क्षायां त्रीन्हेतूनाह ·

शक्यपुरुषार्थकृतत्वैकार्थसमवायश्रुतिभ्यः ॥ २ ॥ प्रधानकर्मणां सह प्रयोगे सति यदङ्गानां सकृदनुष्ठानमुक्तम् तत्कुतः · शक्यत्वात् · सकृदप्यनुष्ठितैरारादुपकारकैरङ्गैर्बहूनामपि प्रधानानामुपकारस्य कर्तुं शक्यत्वात् · शक्नुवन्ति ह्यारादुपकारकाणि बहूनामुपकर्तुम् अगृह्यमाणविशेषत्वात् प्रदीपवत् यथा एक एव प्रदीपो बहूनां मध्ये कृतः सन्सर्वेषामुपकरोति एवमेतान्यपीति · यद्यप्यङ्गानां प्रत्येकमेव विनियोगस्तथापि विधानवदनुष्ठानं सकृदेवोपकारकं भवति · यथैव हि षट्सु भावनासु लिङ्पदेनैव[4] कथम्भावमपेक्षमाणास्वपि सकृदाम्नाता एवाङ्गविधयः[5] षण्णामपि प्रत्येकमङ्गानि समर्पयन्ति सत्यपि च कस्यचित्प्रधानो-

---

1) ? °धनसंयुक्ता Çâstradîp. at Jaim. ११. १. १. 2) °भाव २. 3) वियुज्यन्ते २.
4) ? षड्गु भावतासु लि° २. षड्गू भावतासूभेल्लि° २. 5) °विषयः २.

त्पत्तिविधिसंनिधौ प्रकरणवशेन संनिधिर्बाध्यते · तथैव संहृतानां प्रधानानां फलसाधनत्वात्कर्तृदेशकालैक्याच्च युगपत्सर्वेष्वनुष्ठातुं प्रारब्धेषु सकृत्कृतमिवाङ्गं सर्वचिकीर्षया कृतत्वात्सत्त्वमपि केनचित्संनिधिं बाधित्वा प्रकरणवशेन[१] सर्वार्थं भवति · किं च पौर्णमास्यां-पौर्णमास्यां यजेतेति त्रयाणां युगपदनुष्ठानमवगतं पृथक्पृथक्स्वाङ्गेष्वनुष्ठीयमानेषु बाध्येत · तस्मात्सकृदेवाङ्गानामनुष्ठानम् । तथा पुरुषार्थकृतत्वाच्च · यतः सकृदनुष्ठितैरप्यङ्गैः पुरुषार्थः कृत एव भवति पुरुषार्थः पुरुषस्याभीष्टं फलम् तद्धि आग्नेयादिभिरङ्गोपकृतैः क्रियते · आराडुपकारकाणि चाङ्गान्यनेकघटादिप्रकाशप्रदीपवत्सर्वेषां[२] सहैवोपकुर्वन्ति सकृत्कृतैरपि पुरुषार्थः कृत एव भवति । तथा एकार्थसमवायश्रुतेश्चाङ्गानां तन्त्रं भवति · एकोऽर्थो यस्य एकार्थः[३] एकफलो यः प्रधानानां समवायः समूहः स एकार्थसमवायः तत्र एकार्थे समवाये एकफले प्रधानसमूहे अङ्गानां तन्त्रश्रुतेः अङ्गानां सकृदनुष्ठानं श्रूयते यतः · तथा हि ता एकविंशतिराहुतयो द्वावाघारौ पञ्च प्रयाजा द्वावाज्यभागावाग्नेयः पुरोडाशस्तद्दशाग्नीषोमीय उपांशुयाजोऽग्नीषोमीयः पुरोडाशोऽग्निः स्विष्टकृदिडा त्रयोऽनुयाजाः सूक्तवाकश्च शम्योर्वाकश्चाथ यदेवादः पत्नीसंयाजेषु सम्प्रगृह्णाति समिष्टयजुश्चेति (११. २. ६. १०.) · तत्राग्नेयोपांशुयाजाग्नीषोमीयलक्षणे एकफले प्रधानसमवाये आहुतीनामेकविंशतिसंख्या श्रूयते सा चाङ्गानां सकृत्करणपक्ष एवोपपद्यते न प्रतिप्रधानं पृथगनुष्ठानपक्षे । तस्मात्प्रधानानां सह प्रयोगे सकृदेवाराडुपकारकाणां क्रिया · संनिपत्योपकारकाणां प्रतिप्रधानमावृत्तिरिति तु प्रागुक्तमेव (१. ५. १०.) · अथ प्रधानानां सहप्रयोगे कारणान्याह ·

फलकर्मदेशकालद्रव्यदेवतागुणसामान्ये ॥ ३ ॥ यत्रैकेन वाक्येन बहूनि प्रधानकर्माणि एकफलसाधनत्वेन विधीयन्ते तत्र तेषामितरेतरापेक्षाणां साधनत्वेन विधानात्सहप्रयोगः · तद्यथा मित्रविन्दा श्रीराष्ट्रमित्रायुष्कामस्येति (५. १२. १.) वैश्वदेवेन प्रजाकामं याजयेदिति · अत्र मित्रविन्दाशब्देन समुदाय-

१) ? बाधित्वात् प्र॰ २. बाधित्वानुष्ठानक्रियाप्रारम्भाद्यप्रकरण॰ Çâstr. २) ?? अनेकघटावि-प्रकाश॰ २. अनेकघटादिप्र॰ २. ३) ?? यस्यांचैकार्था २.

वचनेन दशानां हविषां सहप्रयोगः वैश्वदेवशब्देन च समुदायवचनेनाष्टानां हविषाम्। सूत्रार्थस्तु · सामान्यशब्दः प्रत्येकं सम्बध्यते फलसामान्ये कर्मसामान्ये देशसामान्ये कालसामान्ये द्रव्यसामान्ये देवतागुणयोः सामान्य ऽइति · एकवाक्येनैकफलसाधनत्वेन विधानेऽपि फलादिसामान्ये सत्येव प्रधानानां सहप्रयोगो भवति · फलं स्वर्गादि कर्म पञ्चप्रयाजतात्र्यनुयाजतेत्यादि देशः समप्राचीनप्रवणादिः कालः पूर्वाह्णमध्याह्नापराह्णादिः द्रव्यं दक्षिणाद्रव्यम् न तु हविर्द्रव्यम् अनेकेषु प्रधानकर्मसु तद्भेदस्यावश्यम्भावात् देवता प्रजापतीन्द्रादिः तद्गुण[1] उपांशुत्वाश्राव्यत्वादिः · तस्मिन्सति प्रधानमपि सहैव भवति न पृथक्।

तद्भेदे भेदः ॥४॥ तेषां फलादीनां भेदस्तद्भेदः · तद्भेदे तेषां फलादीनां सहप्रयोगकारणानां भेदे सति प्रधानानां प्रयोगभेदो भवति · तत्र प्रयोगवचनभेदान्मित्रविन्दाप्रतिकामाग्नेययोर्न सहप्रयोगः · फलभेदाच्च श्रीकामराष्ट्रकाममित्रकामायुःकाममित्रविन्दानां पृथक्प्रयोगः। कर्मभेदेऽपि प्रयोगभेदो भवति · तद्यथा कस्यचित्पञ्चप्रयाजता कस्यचिन्नवप्रयाजता · यथा [च] क्रैडिनीयामहाहविषोः तन्त्रसहत्वे इतरेतरस्य[2] विगुणत्वं भवति। देशभेदेऽपि तन्त्रभेदो भवति · यथा वरुणप्रघासेषु मारुत्याः · क्रैडिनीमहाहविषोश्च क्रैडिन्याः समो देशः महाहविषस्तु प्राचीनप्रवणः। कालभेदेऽपि सहप्रयोगो न भवति · यथा दर्शस्य पौर्णमासस्य च पौर्णमास्यां पौर्णमास्या यजेताामावास्यायाममावास्यया यजेतेति वचनेन कालभेदेन तयोर्विधानात् · यथा वा आनीकवतीसांतपनीययोः[3] पूर्वाह्णमध्याह्नरूपकालभेदात्तन्त्रभेदः। दक्षिणाद्रव्यैक्ये सति सहप्रयोगो यथा राजसूये[4] त्रयाणां त्रिषंयुक्तानाम् · येषां मते च त्रिषंयुक्तानां त्रयाणामप्येकस्मिन्नेवाह्न्यनुष्ठानम् तेषां दक्षिणाद्रव्यभेदेन त्रयाणां-त्रयाणां पृथगनुष्ठानम् न सर्वेषां सहप्रयोगः · दक्षिणाभेदश्च त्रयाणां वामनः त्रयाणां श्यामः त्रयाणां बभ्रुरिति[5] · तत्र[6] दक्षिणाभेदादानतिभेदः तद्भेदात्तत्कृतस्य स्वरूपस्य भेदः

---

१) तत् गुण २. २) तत्रसहत्वे इतरेतस्यं २. ३) अलोकवतोसं° २. ४) ? सहप्रयोगा राज° २. ५) बभ्रूरिति २. See १५. २. १३. ६) ? तंत्र २.

वामनानतैर्हि पूर्वं कर्म कर्तव्यम् श्यामानतैरुत्तरम् तन्त्रत्वे तूभाभ्यामानता उभयं कुर्युः · तत्र दक्षिणाव्यवस्था गम्यमाना बाध्येत · तस्मात्प्रतिदक्षिणं तन्त्रभेदः · अत्र एकवाक्येनैकफलार्थमेव विधाने देशकालकर्मैक्ये सत्यपि दक्षिणाभेदात्तन्त्रभेदः । देवतायाः देवतागुणस्य च सामान्ये सति उच्चारणमपि तस्या देवताया आवाहनत्यागादौ तन्त्रेण भवति · यथा सप्तदशप्राजापत्येषु वाजपेये प्रजापतेर्देवतायाः समानत्वात्तद्गुणस्योपांशुत्वस्य च समानत्वादनुवाचनादौ तन्त्रेणोच्चारणं भवति यागोऽपि तन्त्रेणैव भवति · तथा च प्राजापत्यान्प्रकृत्य श्रूयते (५. १. ३. १४.) एकानुवाक्या भवत्येका याज्यैकदेवत्या हि प्रजापतयऽइत्युपाᳵशूक्ता छागानाᳵ हविषोऽनुब्रूहीति अत्रानुवाक्याद्येकत्वऽएकदेवत्यत्वं हेतुं ब्रुवती एकदेवताकानां सिद्धं तन्त्रोच्चारणं दर्शयति · दर्शपूर्णमासयोरेव द्रव्यभेदेऽपि दध्नः पयसश्च देवताया इन्द्रस्य तद्गुणस्य चाव्यवस्य[1] समानत्वात्तन्त्रेणैव यागऽउच्चारणं भवति · देवतायां समानायामपि देवतागुणस्योपांशुत्वादेर्भेदे सति सकृदुच्चारणं न भवति यथा प्रकृतावेवोपांशुयाजाग्नीषोमयोः पुरोडाशाग्नीषोमयोश्च · इह देवतातद्गुणयोः सामान्ये यागस्य तन्त्रेणानुष्ठानमुच्यते · अत्र सिद्धमेव देवतागुणसामान्ये तन्त्रेण यागानुष्ठानमुपजीव्य भेदो यागस्य भेदेनानुष्ठानपूर्वं निषिद्धः[2] न द्रव्यभेदे गुणयोगादिति वात्स्य इति (१. ५. १३.) न पुनरुक्तिदोषः ॥ देशैकत्वे कालैकत्वे च प्रधानानां सकृत्प्रयोग उक्तः · अथ तदेव देशकालैकत्वं चिन्त्यते । दर्शपूर्णमासयोराग्नेयादीनि प्रधानानि[3] · तत्र देशकालौ श्रूयेते[4] समे दर्शपूर्णमासाभ्यां यजेत पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्यया यजेतेति । तथा चातुर्मास्येषु प्राचीनप्रवणे वैश्वदेवेन यजेत वसन्ते वैश्वदेवेन यजेतेति । किमेतौ देशकालौ तन्त्रमुत[5] भेदेनेति · यस्मिन्नेव समे यस्यामेव च पौर्णमास्यामाग्नेयस्तस्मिन्नेव समे तस्यामेव पौर्णमास्यामग्नीषोमीय इति उत समान्तरे पौर्णमास्यन्तरऽइति । तत्र पूर्वपक्षमाह ·

देशकालौ विरोधे ॥५॥ एतौ देशकालौ अङ्गत्वाद्द्रव्यदेवतवदुत्पत्ति-

---

१) ? चश्राव्यवस्य २. २) °षिद्धं २. ३) प्रधानानि प्रधानानिः २. ४) श्रूयते २.
५) Thus the Çâstradîpikâ at ११. २. १. तन्त्रमुत २.

विधिशेषौ[१] सन्तौ प्रतिप्रधानं भिद्येते अतस्तत्त्वस्य अङ्गानां सकृदनुष्ठानस्य विरोधे वर्तेते[२] विरोधकावित्यर्थः · त्रयाणामङ्गानां भावनयैव सम्बन्धो न परस्परम् · अतो देशादिविधीनां फलवाक्यस्य च न मिथः सम्बन्धः किंतु फलवाक्यं देशादिवाक्यानि च सर्वाणि भावनोत्पत्तिवाक्येन सम्बध्यन्ते · उत्पत्तिवाक्येषु चाग्नेयादयोऽन्योऽन्यनिरपेक्षा एवावगता[३] इति तथाभूतैः सम्बध्यमानौ देशकालावपि निरपेक्षाणामेव भवतः। तस्माद्यथा य इष्ट्या पशुनेत्यस्मिन्वाक्ये[४] तत्ताभिर्द्विताभिरपीष्टिभिः प्रत्येकमेव कालः सम्बध्यतऽइति नैकस्यामेव पौर्णमास्यां सर्वाः क्रियन्ते तथा आग्नेयादिभिः प्रत्येकमेव कालादीनां सम्बन्धादेकस्यामेव पौर्णमास्यामाग्नेयं कृत्वापरस्यामग्नीषोमीयमित्येवं षट्सु पर्वसु षड्यागाः कर्तव्याः। न चैवं फलवाक्यावगतसाहित्यबाधः · तत्र ह्येतावदवगतम् एकमेव फलं सर्वैः साध्यते न प्रत्येकं फलस्य पृथङ्निष्पत्तिरिति न कालभेदाद्बाधः। यथा पौर्णमासीत्रिके अमावास्यात्रिके च द्वयोः पर्वणोः निष्कृष्यमाणेऽपि[५] न फलं प्रति साहित्यं बाध्यते तथा षण्णामपि निष्कर्षे द्रष्टव्यम्[६]। यदा चैवमुत्पत्तिवाक्यशेषत्वं कालादीनाम् तदोत्पत्तिवाक्ये प्रधानमात्राणां निरङ्गानां विधानात्तन्मात्राणामेवामू देशकालौ नाङ्गानां प्रधानदेशकालत्वम् · तानि तु कामं कालान्तरादिष्वपि कर्तव्यानीति प्राप्ते सिद्धान्तमाह ·

न कृत्स्नोपदेशात् ॥ ६॥ यदुक्तम् देशकालावुत्पत्तिविधिशेषत्वाद्द्रव्यदेवतवत्प्रतिप्रधानं भिद्येतेऽइति यच्चोक्तम् प्रधानमात्राणां निरङ्गानां देशादिविधानम् नाङ्गानामिति तन्न। कुतः कृत्स्नोपदेशात् कृत्स्नानां प्रधानानां साङ्गानां तस्मिन्देशे तस्मिन्काले वोपदेशात् प्रयोगविधानात्[७] · तथा हि दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्येकेन शब्देनाग्नेयादीनां पृथगुत्पन्नानामपि परस्परसहितानामेव फलसाधनत्वेन विधानादेकः प्रयोगो गम्यते · तमेवैकप्रयोगापादकं दर्शपूर्णमासशब्दमुपजीव्य देशकालविधानात्तावपि प्रयोगशेषावेव नोत्पत्तिशेषौ ·

---

१) विशेषौ २· २) वर्तते २· ३) Thus the Çâstradip. एवगता २· ४) य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वेत्यस्मिन्वाक्ये Çâstradip. ५) Thus the Çâstradip. निष्क॰ २· ६) इष्टव्यं २· and Çâstr. ७) ? विधानाविधानात् २·

यद्यपि भावनयैवाङ्गानां सम्बन्धो न परस्परम् तथापि नोत्पत्तिवेलायामङ्गसम्बन्धः · स हि प्रथमं भाव्यमपेक्षते तल्लाभश्च फलवाक्ये[1] तेन फलवाक्यावरुद्धानामुत्पत्तिवाक्यानामङ्गसम्बन्धः · फलवाक्ये च फलं प्रति विवक्षितसाहित्यानां विनियोगात्फलार्थिनां युगपत्सर्वेषु कर्तव्यतावगतिः[2] · यस्यां हि बुद्धावाग्नेयः कर्तव्यतयोपतिष्ठते तस्यामेवाग्नीषोमीयादयोऽपि प्रयोगविध्येकवाक्यत्वात् · तेन सर्वेषु कर्तव्यतयोपस्थितेषु[3] चिकीर्षितेषु च पौर्णमासीकालो विहित इति यैकैव पौर्णमास्युपात्ता सैवागृह्यमाणविशेषत्वात्सर्वथा[4] भवति । तथा देशोऽपि । तस्मात्तल्यं देशकालौ । सौर्यादीनां पुनः पृथक्पृथक्स्वफले विनियुक्तानां पृथगेव कर्तव्यतावगमो नानाविधिविधेयत्वात् · तेन तैरन्योऽन्यानपेक्षैरेव य इष्येत्येवमादिना कालः सम्बध्यतऽइति नास्ति तल्यत्वम् · यदा चैवं प्रयोगवाक्यशेषत्वं कालादीनाम् तदाङ्गानामपि[5] तत्कालत्वं सिध्यति · तथा हि साध्यसाधनांशयुक्तावगता[6] भावना कथमितीत्थम्भावमपेक्षते भावनागतश्च रूपविशेष इत्थम्भावः प्रज्ञातरूपा च भावना कालादीनपेक्षते · तेन प्रकारापेक्षायां भावनायाम् तत्प्रकारत्वेन प्रयाजादिष्ववगतेषु सामस्त्यरूपेण भावनाख्ये व्यापारे प्रयोगापरपर्यायेऽवगते तच्छेषत्वेन कालादयो विधीयन्तऽइत्यङ्गानामपि तऽएव देशादयो भवन्ति । द्रव्यदेवतं पुनर्न समस्तप्रयोगसम्बन्धित्वेन विधीयते अनपेक्षितत्वादयोग्यत्वाच्च · न ह्यग्न्वाधानबर्हिःस्तरणाद्यनुरक्तस्य प्रयोगस्य द्रव्यदेवतापेक्षा नापि तन्निष्पत्तौ द्रव्यदेवतं समर्थम् किंतु फलभावनावयवयागरूपनिष्पादनेन[7] द्रव्यदेवतमपेक्षितत्वाद्योग्यत्वाच्च सम्बध्यते । तस्मान्न प्रधानसम्बन्धि द्रव्यदेवतमङ्गानां भवति · कालाग्नयश्चाग्नेयादिकरणिकया[8] फलसाधनया[9] समग्ररूपया सम्बध्यमानास्तदन्तर्गतानामङ्गानामपि भवन्तीति विशेषः । अतः साधूक्तम् न कृत्स्नोपदेशादिति । एवं वैश्वदेवादिष्वपि प्रधानानामङ्गानां च देशे काले च कृत्स्नोपदेशो ज्ञेयः ॥ ॥ केचिदेवं व्याचक्षते । देशकालौ

---

1) Thus २. and Çâstradîp. °वाक्यैः २. 2) °ताचगतिः २. 3) ? °योरुप° २. कर्तव्यतयावगतेषु Çâstr. 4) सैवागृ° २. 5) ? तदङ्गा° २. 6) °शेयुक्ता २. 7) °फलभावयवयाग° २. 8) °यस्त्वाग्ने° Çâstr. 9) फलं साध° २. फलभावनया Çâstr.

विरोधे ॥५॥ कर्मादीनां सहत्वकरणानां परस्परं विरोधे सति देशकालौ बलवन्तौ नान्यानि। कुतः सहप्रयोगस्य शब्दादवगतत्वात् कर्मसामान्यादेरशाब्दत्वादिति · तथा हि ऐकाहिकचातुर्मास्येषु पर्वणां कर्मभेदे दक्षिणाद्रव्यभेदेऽपि देशकालैक्यात्सहप्रयोगः · यथा च फलभेदेन कर्मभेदेऽपि समानतन्त्रेऽग्राग्रयणे शुनासीरीयेऽपि सौर्यस्य दक्षिणाभेदेऽपि देशकालैक्यादेव सहप्रयोगः। तस्माद्विरोधे देशकालौ बलवन्तौ · तौ चेत्समानौ तर्हि कर्मादिष्वसमानेष्वपि तन्त्रैक्यं भवत्येवेति। अस्मिन्व्याख्याने न कृत्स्नोपदेशादित्येतत्सूत्रं [1] पूर्वपक्षमुत्थाप्य पूर्ववदेव व्याख्येयम् ॥ ॥ अथेदं चिन्त्यते। प्रकृतौ ज्योतिष्टोमे सोमक्रयोत्तरकाले आतिथ्यान्ते [2] उपसदन्ते च सुब्रह्मण्याह्वानं श्रूयते। तत्र चैवं निगदोऽस्ति इत्यहे सुत्यामागच्छ मघवन्निति ब्रूयादिति [3] · इतिकरणेन च संख्योच्यते त्र्यहे सुत्यामागच्छ द्व्यहे सुत्यामागच्छेत्येवं ब्रूयादित्यर्थः। तदिदमप्रधानकालत्वाद्द्वादशाहे तन्त्रं भवति अप्रधानकाले सकृदसंनिपातादिति (१.७.१५.) वक्ष्यमाणन्यायात् · न हीदं प्रधानकालम् [4] · उपसत्काले तु सकृदनुष्ठितमेव सर्वेषामुपकरोतीति तन्त्रमेव भवति · सुत्याकालीनं तु प्रधानकालत्वात्प्रतिसुत्यमावर्तते · तत्रोपसदातिथ्यक्रयकालीने तन्त्रेण क्रियमाणे सुब्रह्मण्याह्वाने संदेहः किं सर्वेषामह्नां पृथक्पृथगुपलक्षणम् [5] द्वादशाहे त्रयोदशाहऽइत्येवम् उत तन्त्रेण द्वादशाहऽइत्येवम् · तत्र पूर्वपक्षमाह ·

अहर्गणे सुब्रह्मण्यायाः सर्वोपलक्षणं प्रकृतिवत् ॥७॥ अहर्गणे द्वादशाहादौ उपसत्कालीनायाः सुब्रह्मण्यायाः निगदे सर्वेषां [6] सौत्यानामह्नामुपलक्षणं कर्तव्यम्। प्रकृतिवत् यथा प्रकृतौ त्र्यहे सुत्यामित्युक्तम् इह तूपसदह्नां द्वादशसंख्यया विवृद्धत्वाद्द्वादशाहऽइति वक्तव्यम् · तत्र प्रकृतावेकं सौत्यमहः तदुपलक्षितम् हे इन्द्र त्वं त्र्यहेऽतीते [7] सुत्यां प्रत्यागच्छेति · इह तु द्वादश सौत्यान्यहानि · तेनेहापि प्रकृतिवदेव तानि सर्वाण्युपलक्षणीयानि न चाहः-

---

1) ? °दित्येतत्सूत्रं पूर्ववद्धःऽत्सूत्रं २. 2) °थ्यंते २. 3) See ३. ३. ४. १३. 4) °नं कालं २. 5) Thus the Çâstradîp. at ११. ४. २२. °मह्नां पृथक्व उप° २. 6) सर्वासां २. 7) ? त्र्यहनीते २.

शब्देनागृह्यमाणविशेषत्वात्सर्वोपलक्षणं सिध्यतीति वाच्यम् · संख्याशब्देन विशेषग्रहणात् द्वादशाहेऽग्नागछेत्युक्ते प्रथमस्यैव सौत्यस्याह्न उपलक्षणम् न द्वितीयादेः तस्माद्वितीयसौत्यस्यार्थे त्रयोदशाहेऽइत्येवं प्रयोज्यम् तृतीयस्यार्थे चतुर्दशाहेऽइति एवं द्वादशार्थे त्रयोविंशाहे सुत्यामिति · एवं सर्वेषां सौत्यानामुपलक्षणे प्राप्ते सिद्धान्तमाह ·

तन्त्रकालकर्म प्रत्यहमविधानात् ॥ ८॥ तन्त्रेत्यविभक्तिको निर्देशः तन्त्रेणेत्यर्थे · कालसंयुक्तं कर्म कालकर्म तत् द्वादशाहे सुत्यामागछेत्येवं तन्त्रेण सकृत्सुत्याशब्दोच्चारणेनैव कर्तव्यम् न तु प्रतिसुत्यं त्रयोदशाहेऽइत्यादिना पृथक्सुत्याशब्दोच्चारणेन । कुतः प्रत्यहमविधानात् न ह्येवं विधानमस्ति यत्प्रत्यहं प्रतिसुत्यमुच्चारणं कार्यमिति । ननु प्रकृतिवद्विकृतिः कर्तव्येति चोदकेन विधानं भविष्यति प्रकृतावेकं सौत्यमहस्तस्योपलक्षणं कृतम् त्र्यहे सुत्यामागछेति अतः प्रकृतिवदेव विकृतावपि सर्वाणि सौत्यान्यहान्युपलक्षणीयानीति · अत्रोच्यते · न हि प्रकृतौ सुत्योपलक्षणं चिकीर्षितम् न हि तयोपलक्षितया किंचिद्दृष्टं प्रयोजनमस्ति अतो दृष्टमेव कल्प्यम् · अत्र तु सुत्यामागछ मघवन्नित्येवं सुत्यासम्बन्धिदेवतेन्द्रस्य स्मरणादुपसंस्कारमात्रं विवक्षितम् · संख्याशब्दोऽहःशब्दश्चार्थसिद्धत्वादविवक्षितनिर्देशमात्रम् · तच्च स्मरणमुपसत्कालीनानामह्नामुच्चारणद्वारेण[1] · तेनार्ह्गणे येन केनचिदह्ना कृतं स्मरणमिति नाहरन्तरप्रकाशनेनार्थः । तच्च प्रधानकाले क्रियमाणमगृह्यमाणविशेषत्वात्सर्वार्थं भवति · तत्र च मुख्यत्वात्प्रथमेनाह्नोपलक्षणमुचितम् । तच्चात्मपक्षाविशेषितमह्नां[2] गणनमकर्मकालवाच्चागृह्यमाणविशेष सर्वेषामुपकरोति · तस्मादाद्ये क्रयणीये ऽहनि द्वादशाहे सुत्यामागछेति वक्तव्यम् द्वितीये तु एकादशाहेऽइति तृतीये तु दशाहेऽइति एवं सर्वेषु । हे मघवन् हे इन्द्र द्वादशाहेऽतीते सति सुत्यां प्रति भवतागन्तव्यमिति एवमेतदिन्द्रस्य सुत्यां प्रत्यामन्त्रणम् । ननु चास्मिन्नपि पक्षेऽदृष्टमेव प्रयोजनम् दृष्टस्याभावात् यत इन्द्र आमन्त्रणं न शृणोति न च श्रुत्वा सुत्यामागछति[3] देवतानां विग्रहवत्त्वस्य मीमांसकैर-

1) ? °लीनामह्ना° २. 2) ? तच्चात्मेप° २. 3) ? श्रुत्यासत्याग° २.

नङ्गीकारात् इन्द्रशब्दस्यैवात्र देवतात्वम् न च शब्दस्यामन्त्रणाश्रवणामागमनं वा घटते · सत्यम् · अनेन प्रकारेण याग एव स्तूयते[1] · येन तस्याधनान्यचेतनान्यपि[2] चेतनवत्संस्तूयन्ते · यथा श्रोतारो ग्रावाण इति न हि ग्रावाणः शृण्वन्ति · तथा स्तुत्यर्थमेवमुच्यते · यथा तथा शृणोतु देवः सविता हवं म ऽइति च एवमनागच्छन्नपीन्द्र आगच्छतीव अशृण्वन्नपि सविता शृणोतीवेति । ननु यागस्तुत्या किं प्रयोजनम् · उच्यते · दृष्टमेव[3] यजमानस्योत्साहोत्सादनम् । स्तुत्योपलक्षणे पुनर्दृष्टस्य लेशोऽपि नास्तीति देवतास्मरणपक्ष एव श्रेयान् ॥ ॥ अथेदं विचार्यते । ब्रह्म दृꣳहेति मैत्रावरुणदण्डेन समन्तं त्रिः पर्युषति (६. ३. ११.) स्फ्येन पदं त्रिः परिलिखति अस्मे रमस्वेति (७. ६. १३.) त्रिरग्निं संमार्ष्टीति तत्र क्रियावृत्तौ सत्याम् किं प्रतिक्रियं मन्त्रावृत्तिः उत सकृदेव सर्वादाविति । तत्र क्रियायाः प्रधानत्वान्मन्त्रस्य तदङ्गत्वात्प्रधानभूतायाः क्रियाया आवृत्तौ सत्यां मन्त्रस्याप्यावृत्तिप्राप्तौ सिद्धान्तमाह ·

एकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रवचनं कृतत्वात् ॥ १ ॥ एकस्मिन्द्रव्ये यूपावटपदाग्न्यादिके कर्मावृत्तौ क्रियाया आवृत्तौ अभ्यासे[4] सकृदेकवारमेवादौ मन्त्रवचनं मन्त्रपठनं कार्यम् न प्रतिक्रियम् । कुतः कृतत्वात् मन्त्रेण यत्कर्तव्यं पदार्थस्मारणं तस्य च कृतत्वात् · अपि च वस्तुतश्च क्रियाभेद[5] एव नास्ति किं तर्हि साभ्यासा इयमेकैव क्रिया तस्या आदौ च मन्त्रवचनमुक्तम् तेन सर्वावृत्तीनामादावेव कर्तव्यम् ॥ ॥ अथेदं चिन्त्यते । दर्शपूर्णमासयोः श्रूयते चतुरो मुष्टीन्निर्वपतीति अयुजो मुष्टीन् लुनाति त्रिधातु पञ्चधातु वा वेदिं[6] स्तृणाति चतुर्जुह्वामाज्यं गृह्णातीति च · तत्र च मन्त्राः देवस्य त्वेति (१. १०.) बर्हिर्देवसदनं संदामीति[7] ऊर्णम्रदसं त्वा स्तृणामीति (२. २.) धाम नामासीति (१. ३१.) च · ते किं सकृत्प्रयोक्तव्याः उत निर्वापे लवने च प्रतिमुष्टि स्तरणे प्रतिधातु आज्यग्रहणे प्रतिस्रुवं[8] भेदेनेति संशये सति[9] संख्यानामेकक-

---

1) ? श्रूयते २. 2) ? तस्माधनान्यचे° २. 3) ? इष्टमेव २. 4) °सेन २. 5) ? वस्तुतस्त्वक्रि° २. 6) वेदं २. 7) Thus २. °नं दा° Çâstradîp. at Jaim. ११. ४. ३६. 8) °स्तुवं २. 9) स २. संदेहे ससंख्यातां Çâstradîp.

र्मत्वात्पूर्वाधिकरणान्ययेन तदारम्भे मन्त्राणां सकृत्प्रयोगे प्राप्ते सिद्धान्तमाह ·

न ग्रहणलवनस्तरणाज्यग्रहणेषु[1] तु ॥ १० ॥ तुशब्दोऽवधारणे । हविर्ग्रहणे बर्हिषो लवने बर्हिःस्तरणे आज्यग्रहणे च नैव सकृन्मन्त्रवचनम् · किंतु हविर्ग्रहणे बर्हिषो लवने च प्रतिमुष्टि मन्त्रप्रयोगः पृथक्कार्यः बर्हिष स्तरणे च प्रतिधातु आज्यग्रहणे च प्रतिस्रुवमिति । ननु किंकारणं मन्त्रस्य कृतत्वं[2] नास्ति ग्रहणादिषु · ग्रहणे तावदन्यऽएव व्रीहयः प्रतिमुष्टि निरुप्यन्ते लवने चान्यऽएव दर्भाः प्रतिमुष्टि लूयन्ते बर्हिःस्तरणे च प्रतिधातु अन्यदेव स्तीर्यते आज्यग्रहणे च प्रतिस्रुवमन्यदेवाज्यं गृह्यतऽइति · तेन यत्रैव मन्त्रः प्रयुक्तस्तत्रैव[3] कृतसंस्कारलाभो ज्ञातः अतः सर्वेषां तत्संस्कारलाभाय मुष्ट्यादिषु भेदेनैव मन्त्रप्रयोगो न सकृदिति । यद्यप्येकः पदार्थो निर्वापादिः तथापि प्रत्यभ्यासं संस्कारभेदो विद्यते मन्त्रवता निर्वापेण द्रव्यं संस्कर्तव्यम् अतो यस्मिन्नेव मुष्टौ मन्त्रो नोच्यते तस्यैव मन्त्रकृतेन संस्कारेण हीनं स्यात् · कार्यप्रयुक्तो हि संस्कारो न क्रियास्वरूपयुक्तः कार्यं चात्र भिन्नम् · तस्मात्प्रतिमुष्टि मन्त्रावृत्तिरिति · एवं लवनस्तरणाज्यग्रहणेष्वपि ज्ञेयम् ।

वचनादाज्ये ॥ ११ ॥ आज्ये इत्याज्यग्रहणे द्वितीयादिग्रहणेषु चतुर्थादिग्रहणेषु वा वचनान्मन्त्रनिवृत्तिर्भवति । स एतेन यजुषा सकृज्जुह्वां गृह्णाति त्रिस्तूष्णीमितेनैव यजुषा सकृदुपभृति गृह्णाति सप्त कृत्वस्तूष्णीमितेनैव यजुषा सकृद्ध्रुवायां गृह्णाति त्रिस्तूष्णीमित्येकं पक्षमभिधाय पक्षान्तरमप्याह तदाहुस्त्रिस्त्रिरेव यजुषा गृह्णीयात्त्रिवृद्धि यज्ञ इति पुनरपि प्रथमं पक्षमुपसंहरति तद्व नु सकृत्सकृदेवात्रो ह्येव त्रिर्गृहीतं सम्पद्यतऽइति (१. ३. २. १८.) ।

मुष्टौ चोत्तमे ॥ १२ ॥ हविर्ग्रहणे उत्तमे चतुर्थे मुष्टौ चकाराद्वचनादेव मन्त्रनिवृत्तिः · श्रूयते हि शाखान्तरे चतुर्थं तूष्णीमिति ॥ ॥ ज्योतिष्टोमे स्वप्नार्थ मन्त्रः अग्ने त्वं सु जागृहीति (४. १४.) · तथा नदीतरणे उदकं चेत्तरेत्तदभिमन्त्रयेतोन्दतीर्बलं धत्तेति (२५. ११. २२.) · तथावर्षणेऽप्ययमेवोन्दतीरिति मन्त्रो ऽववृष्टश्चेत्युक्तत्वात् (२५. ११. २३.) · अमेध्यदर्शने सूर्योपस्थानमन्त्रः

1) °लवनस्तर° १. and Jaim., लवनास्तर° २. 2) ?? °त्वमिति यत्कारणमंत्रह° २.
3) Thus the Çâstradîp. तथैव २.

अबद्धं मन इति (२५. ११. २४.) · तथा दीक्षितस्य वनीवाहने प्रयाणमन्त्रः प्रेदग्ने ज्योतिष्मानिति (१२. ३२.) । तत्र संशयः · यदा दीक्षितः प्रबुद्धः पुनः स्वपिति अनेकस्रोतसं वा नदीं तरति संतरन्नभिवृष्यते [1] युगपच्चानेकमेध्यानि पश्यति पुनः विश्रम्य प्रयाति च तदा किमेषां मन्त्राणामावृत्तिः उत सकृत्प्रयोग इति · तत्र निद्रा मध्ये प्रबोधैरल्पैर्व्यवधीयते नदी च बहुस्रोतोयुक्ता द्वीपैः वृष्टिश्च विच्छेदैः अमेध्यानि च देशैः प्रयाणं विश्रामैः · तदा एतैरन्तरायैर्निमित्तेषु भिद्यमानेषु विशेषग्रहणान्नैमित्तिका मन्त्रा आवर्तनीया इति प्राप्ते सिद्धान्तमाह ·

स्वप्ननदीतरणाववर्षणामेध्यदर्शनप्रयाणेषु तु सकृत्कालद्रव्यैकार्यत्वात् ॥१३॥ अत्र त्रयो हेतवः कालैकत्वात् द्रव्यैकत्वात् अर्थैकत्वात् इति । तत्र यथासम्भवं विभागः । तत्र पुनः स्वप्ने एकार्थत्वात् सर्वरात्रिगतां कृत्स्नां निद्रामुद्दिश्य मन्त्राभिधानादेकमेव निमित्तम् अतः सकृदेव मन्त्रप्रयोगः · केचित् दीक्षितोऽमनोज्ञं स्वप्नं दृष्ट्वा जपेदित्येतदुदाहरन्ति (२५. ११. २०.) तत्र युगपदनेकस्वप्नदर्शने कालैकत्वात्सकृन्मन्त्रवचनमिति व्याचक्षते च । तथा नदीं वृष्टिं च कृत्स्नामेवाभिसंधाय [2] मन्त्रं प्रयुङ्क्ते [3] न चावान्तरनिद्राम् नाप्येकं स्रोतः [4] नाप्येकां वर्षधाराम् · तस्मात्सकृत्प्रयोगः · तत्र नदीसंतरणे स्रोतसां भेदेऽपि नदीद्रव्यस्यैकत्वात्सकृन्मन्त्रः अववर्षणे कालैकत्वात् । अमेध्यदर्शनेऽपि कालैकत्वादेव । प्रयाणेऽप्या समीहितप्राप्तेरेकं प्रयाणमिति तदर्थस्य मन्त्रस्य सकृदेव प्रयोगः एकार्थत्वात् ॥ अथ यत्र कालभेदेन पुनस्तदेव निमित्तमापतति तत्रापि सकृन्मन्त्रवचनम् उत भेदेनेति · अभिहितमेव तदिति कृत्वा सकृन्मन्त्रवचने प्राप्तेऽआह ·

न निमित्तभेदात् ॥१४॥ कालान्तरे पुनरेषु निमित्तेषु जातेषु पुनर्मन्त्रवचनं कर्तव्यम् न पूर्वाभिहितेन मन्त्रेण कार्यसिद्धिः · भिन्नं [5] ह्यत्र निमित्तं तत् भेदाच्च नैमित्तिकस्यावृत्तिर्भवत्येव ।

---

1) ? नदीं तरभिसतरंनभिदृश्यंते २. The Çâstradîp. at Jaim. ११. ४. ४३. reads तरतिं संतानेन चाभिवृष्यते. 2) ° तिसंधाय Çâstradîp. 3) Thus the Çâstradîp. प्रयुक्तां २. 4) नाप्ये स्रोतः २. 5) भिनन्ते २.

अप्रधानकालत्व सकृदसंनिपातात् ॥ १५ ॥ वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यनारभ्याधीतमप्याधानमग्निहोत्रादीनामङ्गमिति [1] कृत्वा चिन्त्यते किमङ्गं सदाधानं प्रतिकर्म प्रतिप्रयोगं च भेदेन कर्तव्यम् उत सर्वप्रयोगानां साधारणं सकृदिति । तत्र कर्माङ्गत्वे प्रयाजाद्यन्याङ्गवत्प्रतिकर्म भेदेन कर्तव्यम् · न च बहिःकालत्वेनागृह्यमाणविशेषता यद्यस्यानन्तरं क्रियते तत्तदर्थमित्यानन्तर्येण विशेषग्रहणात् । तस्मात्प्रतिकर्म भेदेनाधानप्राप्ताविदमुच्यते अप्रधानकालं यदङ्गमाधानसदृशम् [2] तत्सकृदेव कर्तव्यम् न भेदेन कर्मणाः-कर्मणा आदौ । कुतः असंनिपातात् न चैतत्कस्यचित्कर्मणः प्रक्रमे कर्ममध्ये वा संनिपतितम् येन विशेषग्रहणं स्यात् · किंतु यदेव किंचिदग्निकार्यं निमित्तवशात्कामवशाद्वा यथाकामं प्राप्तम् तदर्थमाधास्येऽग्नीनिति [3] · न तु [4] कंचिदेव कर्मविशेषमभिसंधायाधानम् · एवमनभिसंहितकर्मविशेषेण सर्वोद्देशेनाधाने कृते यद्यपि कारणवशात्किंचित्कर्म प्रथममापतति तथापि न तादर्थ्यमेव भवति प्रथमावस्थायामेव सर्वार्थत्वावधारणात् · तस्मादप्रधानकालीनत्वात्सकृदेव कार्यम् ।

यूपः ॥ १६ ॥ अप्रधानकालत्व सकृदित्यनुवर्तते । ज्योतिष्टोमेऽग्नीषोमीये यूप उपदिष्टः [5] सवनीयानुबन्ध्ययोस्त्वतिदिष्टः स किं त्रयाणामपि पशूनां तन्त्रम् उत प्रतिपशु भेदेन यूप उत्पादनीय इति । तत्र मुख्यत्वादग्नीषोमीयार्थस्यैव यूपस्यापकर्षो दीक्षासु यूपं छिनत्तीति · नेतरयोः · अतस्तयोः स्वकाले भेदेनोत्पादनीयो यूप इति प्राप्ते सिद्धान्त उच्यते । यूपोऽप्यग्न्याधेयवदप्रधानकालत्वात्त्रयाणां पशूनां साधारणः सकृदेवोत्पाद्यो न प्रतिपशु भेदेन · न हि मुख्यत्वमात्रेण श्रुतेः संकोचो ऽतोऽविशेषात्सर्वयूपापकर्षे [6] सत्यप्रधानकालत्वादगृह्यमाणविशेषो [7] यूपस्त्रयाणामेक एव साधारणो भवति । अग्नीषोमीयकाले क्रियमाणा अपि (ये) प्रोक्षणादयः संस्काराः यूपद्वारत्वात्तस्य च साधारणत्वात्तेऽपि तन्त्रेणैव भवन्ति न प्रतिपश्वावर्तन्ते ।

---

1) °तमथाधा° २. 2) °कालं पवृदंग° २. 3) तदा त्वेवमतिसंधायासावाधत्ते (°मभिसं°!) यदेव किंचिन्निमित्तवशात्कामनावशाद्वा कर्तव्यं कर्मोपस्थास्यते तदर्थमाधास्येऽग्नीनिति Çâstrad. at Jaim. ११. ३. २. 4) Thus Çâstrad. ननु २. 5) ? ज्योतिष्टोमेऽग्नीषोमीये (प)शावुपदिष्टो यूपः Çâstradîp. at Jaim. ११. ३. ३. ज्योतिष्टोमेऽग्निष्टोमे यूप उ° २. 6) तस्मादविशेषात्स° Çâstr. 7) °धानकालादगृ° २.

स्वरुश्च संस्थावचनात् ॥ १७ ॥ यूपस्य स्वरुं करोतीति स्वरुः किमेकयूपानां[1] पशूनां तन्त्रम् उत प्रतिपशु भिद्यतऽइति संदेहः[2] · अञ्जनकालेऽस्योपादानात्तदपवर्गेऽपवर्गादञ्जनान्तरेऽन्यशकलोपादानम्[3] · यः प्रथमः शकलः स स्वरुरिति एकस्मिन्प्रहरणे यः प्रथम इति शास्त्रार्थः तेनैकस्मिन्नपि यूपे प्रहरणानां बहुत्वात्सम्भवन्ति बहवः प्रथमशकलाः · तेन भेदप्राप्तौ सिद्धान्त उच्यते । स्वरुरपि त्रयाणां पशूनामग्नीषोमीयसवनीयानूबन्ध्यानां साधारण एव न प्रतिपशु भिद्येत । कुतः संस्थावचनात् संस्थावचनं हि भवति स्वरुहोमेन यूपः संतिष्ठतऽइति · यदि च प्रथममेव हूयेत यूप एव साधारणो न भवेत् ।

तन्निर्वृत्तेश्च ॥ १८ ॥ तस्मादेव यूपात्स्वरोर्निर्वृत्तेश्च निष्पत्तेश्च तस्य यः प्रथमः शकलः परापतेत्स स्वरुः कार्य इति · अतोऽपि साधारण एव · तत्र प्रहरणस्यानुपात्तत्वात् शकलशब्दोपात्तानां सर्वेषां शकलानां यः प्रथमः स उपादेयः · तेनैकस्मिन्यूपे एक एव प्रथमशकल इति · सोऽपि एकयूपानां सर्वेषां पशूनां यूपवत्साधारण एव स्यात् । अपि च छेदनकालऽएव व्यामोहनिवृत्त्यर्थं तन्नाशापहारपरिहाराय चावश्यमुपादाय रक्षितव्यः शकल इत्यगृह्यमाणविशेषत्वादपि साधारण एव ॥ ॥ अथ दर्शपूर्णमासादिषु फलदक्षिणावत्सु कर्मसु चिन्त्यते । किं यजमानेनैव सर्वं कर्तव्यम् उत द्रव्योत्सर्गदक्षिणादानादिके यजमाननियमोऽन्यत्रानियमो यजमानो वान्यो वा अथवोत्सर्गऽएव यजमानोऽन्यत्रान्य एवेति । किं प्राप्तम् · सर्वं यजमानेनैव कर्तव्यमिति · कुतः प्रयोगवचनस्थं ह्यात्मनेपदं साङ्गायां भावनायां फलार्थित्वं कर्तृत्वेन विनियुङ्क्ते · स यत्रैव कर्ता न स्यात् तत्कृतमेवोपकारं न प्राप्नुयात् · तस्मात्साङ्गं स्वयं कुर्यादिति · फलस्य[4] चोत्पद्यमानस्योत्पादयितृत्वेन प्रयोक्ता यजमान एवोच्यते होत्रादिसमाख्याश्च तथैव तत्तत्कुर्वाणस्यैकस्य वा कर्मभेदादित्यनेन न्यायेन भविष्यन्तीति । तस्मात्सर्वं यजमानेनैव कर्तव्यमिति प्राप्तऽआह ·

---

1) Thus Çâstrad. at Jaim. ११. ३. ७. यूपाणां २. 2) संदेह २. संदेहे Çâstrad. 3) Thus Çâstr. °नांतके २. 4) फल्यस्य २.

कर्मणि [1] पुरुषाणाम् ॥ १९ ॥ दर्शपूर्णमासादिकर्मणि [2] पुरुषाणां होत्रध्वर्य्वादीनां कर्तव्यं भवति न स्वयं यजमानस्य । कुतः परिक्रयाम्नानात् · श्रूयते हि परिक्रयः दर्शपूर्णमासयोर्श्चैवैषा दक्षिणा यदन्वाहार्य इति [3] (११. १. ३. ७.) · ज्योतिष्टोमे च तऽ शतेनैव दक्षयतीति (४. ३. ४. ३.) · स्वभावतश्च परिक्रयः परत्र क्रियते नात्मनि विरोधात् न ह्यात्मैवात्मानं परिक्रीणीते · तत्र यदि स्वयमेव यजमानः कुर्यात्ततः परिक्रयासम्भवेन परिक्रयो न क्रियेत तत्रास्य नित्यवदाम्नानं विरुध्येत । यच्चार्थिनः साङ्गं [4] कर्तव्यम् तत्तु प्रयोजकत्वेनापि सम्भवति · तत्रासति परम्पराप्रमाणे साक्षादेव कर्तृत्वं स्यात् · अस्ति तु प्रमाणं परिक्रयवचनम् तच्च कर्त्रन्तरसद्भावऽएव दृष्टार्थं भवति नान्यथा · तस्मात्प्रयोजकत्वेनापि कर्तृत्वसम्भवे सति परिक्रयस्य नित्यवदाम्नातस्य पाक्षिकत्वायोगात्तं नित्यमुपसंहर्तुमन्येषां पुरुषाणामेव कर्मणि [5] कर्तृत्वं सिद्धम् । एवं सर्वत्रापि पुरुषाणामेव कर्तृत्वे प्राप्तऽआह ·

प्रधानऽ स्वामी फलयोगात् ॥ २० ॥ यत्प्रधानं द्रव्योत्सर्गरूपहविस्त्यागदक्षिणादानात्मकम् तत्स्वामी यजमानः करोति अन्यानि चाङ्गानि पुरुषाः कुर्वन्ति । कुत एतत् फलयोगात् प्रधानानुष्ठायिनो हि फलयोगो भवति प्रधानफलं च यजमानो भुङ्क्ते नाङ्गफलम् तस्य कर्त्रर्थत्वात् · तेन प्रधानमात्रवाचिनो धातोः परेण प्रत्ययेन तस्मात्तस्यैव फलार्थिकत्वं नियम्यते शेषस्य निर्वृत्तिमात्रं प्रतीयते न कर्तृविशेषः । ननु च प्रधानसमकर्तृकत्वादङ्गानामपि स एव कर्ता सेत्स्यति न तत्र प्रयोजकत्वेनापि कर्तृत्वानुग्रहात् · द्रव्योत्सर्गे ह्यक्रियमाणे न किंचिद्यजमानेन कृतं स्यादिति तं करोति · न ह्यात्मनेपदे फलार्थिकर्तृकत्वं गम्यते किं तर्हि भावनाक्षिप्तकर्तृत्वस्य सतः फलसम्बन्धित्वम् · अतश्च फलेन कर्तुरन्यत्र न गन्तव्यम् न तु [6] फलार्थिनोऽन्येन व्यापारकरणं [7] विरुध्यते तावता च सिद्धोऽङ्गेष्वनियम इति · अतोऽङ्गेष्वन्यकर्तृत्वं प्रधानमात्रे च स्वामिकर्तृत्वमिति । अन्येष्वपि कर्म कुर्वत्सु यजमानेन यत्नेन कृताकृतप्रत्यवेक्षणं

---

1) ? कर्माणि १. २. कर्माणि २. and thus also the quotation at १. २. ७. 2) ? कर्माणि २. 3) °र्यमिति २. 4) ? साङ्गे २. 5) Thus २. 6) ननु २. 7) न्येतव्यापारकर्णं २.

कर्तव्यमेव · अन्यथा ह्यृत्विजः कर्मकर्तृत्वात्प्रमादेन सर्वं कर्म साधनतया यथाश्रुतं न कुर्वन्ति वैगुण्येऽपि तेषां स्वार्थविनाशाभावात् · तदुक्तं भट्टाचार्यैः यथै-वाध्वर्युणा पदार्थाः कर्तव्यास्तथैव यजमानेनाप्रमादार्थं प्रत्यवेक्षितव्या इति । कि-मेतावदेव स्वामी करोति · नेत्याह ·

पुरुषयोगिमन्त्रसंस्कारयोस्त्यागे सामर्थ्यात् ॥२१॥ पुरुषयोगी यो मन्त्रः तनूपा अग्नेऽसि तन्वं मे पाहीत्यादिकः (३. १७.) प्रत्यगाशीर्युक्तः संस्कारश्च पावनमुण्डनाधःशयनपयोव्रतादिरूपः[1] तयोः पुरुषयोगिमन्त्रसंस्कारयोः त्यागे लक्षणया त्यागकर्तरि यजमानेऽधिकारः । इच्छाकरणभूताः प्रत्यगाशिषो मन्त्रा उदाहरणम् ते च समाख्यया अध्वर्योः प्राप्नुवन्ति · तत्रोच्यते · कर्मफलमत्राशा-स्यम्[2] नऽर्त्विक्फलम् अक्रत्वर्थत्वप्रसङ्गात् · यजमानाच्च फलं दक्षिणालाभात्मकं प्रार्थनीयम् नाग्नेः · कर्मफलं च यजमानगामि तच्चात्र प्रत्यक् आत्मविषयत्वेन प्रा-र्थ्यतऽइति लिङ्गात्समाख्यां बाधित्वा यजमान एव प्रयुञ्जीत यतः स एवाशीःप्रार्थनं कर्तुं समर्थो नान्यः । संस्काराश्च केवलं प्रधानार्था भोक्तृत्वांशपातिनश्च न त्वङ्ग-प्रधानार्थाः कर्तृत्वांशपातिनो वा · ते तु तादृशं संस्कारं[3] यजमाने कुर्वन्ति येन याजमानेन[4] प्रधानं स्वं फलं जनयितुं समर्थं भवति · तेन क्षेत्रसंस्काराणां यथा वीजावपनार्थत्वम्[5] एवं प्रधानार्थत्वं संस्काराणाम् नाङ्गार्थत्वम् · प्रधानफलं हि यजमानो भुङ्क्ते नाङ्गफलम् तस्य क्रत्वर्थत्वात् · अतो भोक्तृत्वांशस्थाः सन्तो यस्यैव फलं भुङ्क्ते तस्यैवोपकारका इति प्रधानार्थता · प्रयोजनम् अग्नीषोमीयवि-कारे[6] च नाभ्यञ्जनादियजमानसंस्काराणामप्रवृत्तिः । ब्रह्मचर्यव्रत्याशनरूपस्य[7] तपसोऽपि दुःखात्मकत्वात् दुःफलं कार्यविरोधिनमधर्मं क्षपयितुं[8] योग्यतास्तीति क्रतुप्रतिबन्धकपापक्षयणेनैवास्य क्रत्वर्थो लिङ्गप्रकरणाभ्यामवगम्यते[9] यजमा-नाय[10] च फलेनोत्पत्तव्यम् अतोऽपि फलसंस्कारत्वाद्याजमानत्वम् ।

वचनादन्यत् ॥२२॥ वचनाच्चान्यदुक्तव्यतिरिक्तमपि यजमानस्य भवति

---

१) ?? पावमानमुंडनाधः° २. २) ?°लमंत्रा° २. ३) तादृशंस्कारं २. ४) ?? यजमा-नेन २. ५) व्रीजावनार्थत्वं २. ६) ? प्रधानार्थता ॥ प्रयोजंगमग्निषोमीयतिकारे २. ७) ब्रह्माशन° २. ८) चययितुं २. ९) ? क्रत्वर्थलिंगप्रक° २. १०) ? यजमान्ये.

प्रधानयोगिमन्त्रसंस्कारिभ्योऽन्यदपीत्यर्थः । तद्यथा यजमानो वेदं करोति (१. ३. २२.) यजमान आज्यमवेक्षते (२. ७. १०.) यजमान उखां करोति (१६. ३. २३.) इत्यादि । वचनादृत्विजामपि संस्कारा भवन्ति हिरण्यमालिनो वाजपेयेन चरन्तीति [1] लोहितोष्णीषाः प्रचरन्तीति (२२. ३. २४.) ।

शेषमितरे यथाख्यम् ॥ २३ ॥ यावद्यजमानस्य कर्तव्यमुक्तम् प्रधानं स्वामीत्यादिना (२०.) वचनादन्यदित्यन्तेन (२२.) ततः शेषमवशिष्टं कर्म इतरे स्वामिव्यतिरिक्ता होत्रध्वर्य्वादयो यथाख्यं कुर्वन्ति आख्याः अनतिक्रम्य यावत्य आख्यास्तावतीनामनतिक्रमो यथाख्यम् । तद्यथा होता होत्रम् उद्गातौद्गात्रम् अध्वर्युराध्वर्यवम् ब्रह्मा ब्रह्मत्वमिति समाख्ययैव तेषां विनियोगः । तच्च प्राक्प्रपञ्चितम् कर्मणि पुरुषाणामिति (१२.) · अनेन [2] अन्येषां पुरुषाणां कर्तृत्वे सिद्धेऽपि कति तेऽन्यऽइति संशये सति विशेषाभावादनियमः प्राप्नोति सर्वथा परिक्रयसिद्धेः अथवात्मनेपदाद्यजमानस्यैव कर्तृत्वे प्राप्ते परिक्रयवशादन्योपादानम् स चैकेनापि सिध्यतीत्येक एवान्यः स्यात् अध्वर्य्वादिसंज्ञास्तु कर्मनिमित्ता एकस्यापि पाचकलावकवद्भविष्यन्तीति अनेन सूत्रेण यथाख्यं यावत्संज्ञं कर्तृभेद उच्यते । कर्मनिमित्ता एताः संज्ञास्तदा स्युः यदि प्रवृत्तिसमये तदुत्तरकालं वा एताः श्रूयेरन् · वरणं त्वप्रवृत्ताभ्यर्थनम् · तत्रैताः श्रूयन्ते ब्रह्माणं वृणीते (२. १. १८.) उद्गातारं वृणीते होतारंवृणीते अध्वर्युं वृणीते एवमुन्नेतारं वृणीते . एवम् [3] · न च तदा कर्मनिमित्तत्वं सम्भवतीति वरणनिमित्तत्वम् । भिन्नानि च वरणानि · न चैकस्मिन्बहूनि वरणानि युज्यन्ते ऽदृष्टार्थत्वात् न हि वृतस्य वरणं दृष्टार्थम् · तेन वरणानां तन्निमित्तसंज्ञानां चासंकीर्णविषयत्वाद्यावद्वरणं [4] यावत्संज्ञं च कर्तृभेदः कर्माङ्गम् । अतो यस्मिन्कर्मणि यावत्यः संज्ञाः तावत्संख्यैः कर्तृभिस्तत्कर्म कर्तव्यम् · अतश्चतुर्भिर्दर्शपूर्णमासौ षड्भिः पशुबन्धः [5] पञ्चभिश्चातुर्मास्यानि षोडशभिर्ज्योतिष्टोम इति यथाख्यमित्यनेन सिध्यति · तेन न पुनरुक्तता [6] । ननु किमिदं वरणम् उक्तम् अप्रवृत्तस्य प्रार्थनमिति · तच्च

---

1) See १४. १. २३. 2) इत्यनेन २. 3) एतत्. २. 4) ? चासंकी° २. 5) ? पशुःसंबंधः २. 6) ? °क्तमा २.

मन्त्रविंशां होतृकाणां च मन्त्रेण अग्निर्मे होता त्वं मानुष इत्यादिना लौकिकया वा[चा] च अध्वर्युर्मे भवानस्त्वित्यादिकया · किमेतावतां होत्रादित्वं भवति को दोषः न ह्येताः संज्ञाः प्राग्दृश्यन्ते · वरणोत्तरकालं च य एवं वृतः स्वयं चैवमसानीति [1] मनसा संकल्पयति तत्र होत्रादिसंज्ञाः प्रसिद्धवद्वेदे याज्ञिकप्रयोगे च व्यवह्रियमाणा दृष्टाः · तस्माद्य एवं वृत एवं च संकल्पयति स एव होत्रादिसमाख्यां लभते · सर्वेषु च दृष्टार्थत्वाद्वरणस्यार्थलोपान्निवृत्तिः तदलाभे वाध्वर्युर्गृहपतिं दीक्षयित्वेत्यादिव्यवहारदर्शनात्संकल्पादेव होत्रादित्वसिद्धिः · प्रकृतावपि संकल्पो निमित्तमेव यो हि व्रियमाणो नेच्छति न स होतेत्युच्यते । तस्मात्प्रकृतौ वरणविधानात्तन्मिश्रः संकल्पो निमित्तम् सत्त्रेषु तु संकल्पमात्रम् प्रयोगदर्शनात् · न चैवं वैरूप्यादशोभनं मन्तव्यम् प्रमाणबलादीदृशस्यैव शोभनत्वात् · न हि सत्त्रे होत्रादिशब्दानां गौणत्वे किंचित्प्रमाणमस्ति · अथाप्यत्यन्तमेकरूप्येण कार्यम् ततः संकल्प एव निमित्तम् · य एव क्रतुमेतदौपयिकं होत्रादिभावमात्मनः संकल्पयति स एव होत्रादिशब्दैरुच्यते । तथा चोक्तम् सत्त्रे तु स्वयंकर्तृकत्वाद्वरणभरणयोरग्रहणाद्विनैव ताभ्यामवैगुण्यमिति योग्यतामात्रेणाध्वर्युत्वादिसिद्धिरिति ।

उपवीतिनः ॥२४॥ सर्वऽऋत्विग्यजमाना उपवीतिनः सव्यस्कन्धस्थितयज्ञोपवीतधारिणः कर्म कुर्वन्तीति शेषः · उद्धृते दक्षिणे पाणाऽउपवीत्युच्यते [2] बुधैरिति स्मरणात् (मनु॰ २. ६३.) · तथा सूत्रान्तरे यज्ञोपवीती देवकर्माणि करोतीति (शाङ्खायनश्रौत॰ १. १. ६.) ।

प्राग्युदग्वा ॥२५॥ सर्वाणि कर्माणि प्राञ्चि प्राक्संस्थान्युदगुदञ्चि उदक्संस्थानि वा कर्तव्यानि [3] · तं प्राञ्चमनुसमस्यति प्राची हि देवानां दिगथो ऽउदञ्चमुदीची हि मनुष्याणां दिगिति (१. ८. ३. १८.) · तथो ह्यस्यैतत्प्रागेव कर्म कृतं भवति [4] तद्धि प्राङ्दिध्यात् अथोदक् प्राङेव यज्ञोऽनुसंतिष्ठाताऽइति तथो ह्यस्योदगेव कर्मानुसंतिष्ठतऽइति प्राञ्चुदञ्चि च कर्माणि संतिष्ठेरन्निति श्रुतेः पात्राणामासादनं दक्षिणात आरभ्योदक्संस्थम् पश्चादारभ्य प्राक्संस्थं वा कार्यम् ·

---

१) ? चैवमनसानीति २. २) पाणावुच्य॰ Manu. ३) कर्तव्यं २. ४) ? ॰तीति २.

परिस्तरणापर्युक्षणादिकमप्युत्तरतः समापनीयम् · त्रिरुल्लेखनाद्यपि प्राक्संस्थम् उदक्संस्थं वा · एवं सर्वत्रोहनीयम् · दक्षिणतस्त्वेवोदङ्ङोक्तेत्तथा क्युदग्भवती-ति[1] (५. २. १. १.) दक्षिणतः परीत्य पूर्णपात्रं निनयति तथा क्युदग्भवतीत्यादिः (१. १. ३. १.) प्राङ्मुखैरुदङ्मुखैश्च कर्तृभिः कर्माणि कार्याणीति गम्यते ।

आवृत्तिः सामन्तेषु प्रदक्षिणम् ॥ २६ ॥ अथावर्तते सूर्यस्यावृतमन्वावर्त ऽइति (१. १. ३. १७-२०.) अथ स्तीर्णां वेदिमुपावर्तते (१. ३. ४. १०.) ग्रहणप्रति-गरहोमेषु च तुष्णीम् (३. ८. २०.) इत्येवमादौ यत्रावृत्तिः आवर्तनं भ्रमणं श्रूयते तत्रावृत्तौ प्रदक्षिणमावर्तनं कर्तव्यम् । यानि च परिस्तरणपर्युक्षणनित्यपरिषेक-पदपरिलेखपिण्डपरिलेखनादीनि समन्ततः सर्वतः सर्वेषु पूर्वदक्षिणपश्चिमोत्त-रपार्श्वेषु विधीयन्ते तानि सामन्तशब्देनात्रोच्यन्ते · तेषु सामन्तेषु च प्रदक्षिणं तत्परिस्तरणादिकं भवति पूर्वत आरभ्योदक्संस्थम्[2] । तद्याऽएतदेव पुरश्च-रणं य एष तपति स एतस्यैवावृता चरेद्धं गृह्णीवेतस्यैवावृतमन्वावर्तेतेति (४. ६. ७. २१.) तथा अथावर्तते सूर्यस्यावृतमन्वावर्तऽइति तद्वेतां गतिमेतां प्रतिष्ठां गवेतस्यैवावृतमन्वावर्ततऽइत्येवमादौ (१. १. ३. १७-२०.) सर्वत्र सूर्यावर्तन-वत्प्रदक्षिणावर्तनश्रवणात् · अथ दक्षिणान्वाह्ननन्वावर्तन्तऽइति च (२. ६. २. १८.) ।

विपर्यस्य पित्र्येषु तु सकृद्दक्षिणा च ॥ २७ ॥ तुशब्दो भेदे · पूर्वप्रतिपा-दिताद्विदमाह । पित्र्येषु पितृदेवत्येषु पितृयज्ञादिकर्मसु विपर्यस्य पूर्वोक्तविपर्यासेन सर्वं भवति · यज्ञोपवीतिनः कर्म कुर्युरित्युक्तम् पित्र्यं तु प्राचीनावीतिनः कृता-पसव्याः सन्तः कुर्वन्ति दक्षिणस्कन्धधृतयज्ञोपवीतिन इत्यर्थः · तथा चोक्तम् प्राचीनावीती पित्र्याणीति । यच्च परिस्तरणावर्तनादि प्रदक्षिणमुक्तम् तत्पित्र्ये अप्रदक्षिणं भवति । यच्च देवेभ्यः स्वल्पं क्रियते परिसमूहनोपलेपनोल्लेखनोद्ध-रणाभ्युक्षणादिकम् तदत्र सकृदेकवारं भवति । यच्च दैवे दिग्द्वयमुक्तम् प्राग्वु-दग्वेति (२५.) तत्र विपर्यासेन दक्षिणा प्रतीची वेति द्वयं प्राप्नोति · तत्राह दक्षिणा चेति पित्र्ये कर्मणि दिगेकैव दक्षिणेति · तेन सर्वं पिण्डादानावनेज-नोल्लेखनपात्र्यासादनादिकं[3] दक्षिणसंस्थं दक्षिणाभिमुखेन च कर्तव्यम् · एषा

1) °वतितं २. 2) ? °आस्योद° २. 3) ? °जनाछेखाकरनपा° २.

वै दिक्पितॄणामिति (२. ६. १. १.) या दक्षिणा दिक्सा पितॄणामिति श्रुतेः ।

प्रधानद्रव्यव्यापत्तौ साङ्गावृत्तिस्तदादेशात् ॥ २८ ॥　प्रधानं यागः तत्साधनभूतं द्रव्यं पुरोडाशचरुधानापयोदधिपश्वादि　तस्य व्यापत्तौ विनाशे　साङ्गावृत्तिः साङ्गस्य संनिपत्योपकारकाङ्गैः सहितस्यावृत्तिः पुनःकरणं भवति । कुतः तदादेशात् तस्य द्रव्यस्य संस्करणार्थमेव निष्पादनार्थमेव तेषामङ्गानामादेशात् उपदेशात् · पुरोडाशादिनिष्पत्त्यर्थमेव हि निर्वपनप्रोक्षणावघातपेषणसंयवनश्रपणादीन्यादिष्टानि विहितानि · तदुक्तमापस्तम्बेन　यद्यप्रत्तदेवतं हविर्व्यापद्येतान्यद्धविः संस्कृत्य प्रयच्छेद्देवतायाऽइति ॥　॥ सप्तमी कण्डिका ॥ ७ ॥

अथ पद्धतिः ॥

यत्र एकेन वाक्येन बहूनि प्रधानान्येकफलार्थं विधीयन्ते　यथा　वैश्वदेवेन प्रजाकामं याजयेदिति　मित्रविन्दया आयुष्कामो यजेतेत्यादौ　तत्र तेषां सहप्रयोगो भवति । यदि च तेषां देशकालफलकर्मादि समानं भवति　तदा तेषां प्रधानानां यान्याराडुपकारकाणि आघारप्रयाजाज्यभागादीन्यङ्गानि तानि सकृदेव भवन्ति　न प्रतिप्रधानं पृथक्क्रियन्ते · देशभेदे च कालभेदे च तद्भेद एव भवति　न सहक्रिया　यथा दर्शपूर्णमासयोः कालभेदे　वरुणप्रघासेषु च मारुत्या देशभेदे । अवर्गणे सुब्रह्मण्यानिगदे द्वादशाहे सुत्यामागच्छेत्येतत्कालसंयुक्तं कर्म तन्त्रेणैव सकृत्सुत्याशब्दोच्चारणेनैव भवति　न प्रतिसुत्यं त्रयोदशाहे चतुर्दशाहऽइत्येवम् ॥　एकद्रव्ये कर्मावृत्तौ सत्यां मन्त्रवचनं सकृदेव कर्तव्यम् न प्रतिक्रियम् · यथा　स्फ्येन पदं त्रिः परिलिखत्यस्मे रमस्वेत्यत्रैकवारं (७. ६. १२.) मन्त्रेण वारद्वयं तूष्णीम् · यथा वा　दिवि धा इति त्रिरुत्कम्पयतीत्यत्रैकवारं (२६. ६. ५.) मन्त्रेणोत्कम्पनम् वारद्वयं तूष्णीम् · एवं सर्वत्र ज्ञेयम् । हविर्ग्रहणे बर्हिषो लवने तस्यैव स्तरणे आज्यग्रहणे च प्रतिक्रियं मन्त्रावृत्तिर्भवति　न सकृत् · आज्यग्रहणे तु वचनात्सकृत्त्रिर्वा मन्त्रेण ग्रहणम् शेषं तूष्णीम् · हविर्ग्रहणे च चतुर्थं तूष्णीमिति वचनादुत्तमे मुष्टौ मन्त्रनिवृत्तिः ॥　दीक्षितस्य युगपदनेकामनोज्ञस्वप्नदर्शने पर्यावर्ते दुःष्वप्न्यादिति (२५. ११. २०.) मन्त्रं सकृदेव पठेत्　कालैकत्वात् : तथा एकस्या नद्या अनेकप्रवाहतरणे उन्दतीरिति (२५. ११. २२.) अनु-

मन्त्रणां सकृदेव  स्रोतसां भेदेऽपि नदीद्रव्यस्यैकत्वात् · अववर्षणे युगपदनेकवृ-
ष्टिधारासंयोगेऽपि उन्दतीरित्यनुमन्त्रणं सकृदेव भवति  कालैकत्वात् · युगपद-
नेकामेध्यदर्शने अबद्धं[1] मन इति (२५. ११. २४.) सूर्योपस्थानं सकृदेव  कालै-
कत्वात् · वनीवाहने तु विश्रम्य-विश्रम्य पुनःप्रयाणे च प्रेदग्नेऽइति (१६. ६. २८.)
मन्त्रवचनं सकृत् आदिमे प्रयाणऽएव भवति  न प्रतिप्रयाणम्  कुतः  अर्थै-
कत्वात् प्रयोजनैकत्वादित्यर्थः · तथा अग्ने त्वं सु जागृहीत्ययमपि मन्त्रः (४. १४.)
सकृदेव प्रयोज्यः  नैकरात्रिमध्ये पुनः-पुनः स्वापादौ · अमेध्यदर्शनादिषु कालभेदे
भेदेनैव भवति  न सकृत् ॥  अप्रधानकालीनमङ्गं सकृदेव भवति  न प्रति-
प्रधानमावर्तते · यथाग्न्याधेयम् · परमार्थतस्त्वग्न्याधेयमुत्तरकर्माङ्गं न भवतीति कृत्वा
चिन्त्यम् । तथा यूपोऽप्यप्रधानकालीनत्वादग्नीषोमीयसवनीयानूबन्ध्यपशूनां सा-
धारण एव  स्वरुरपि यूपवत्सर्वपशुसाधारण एव ॥  आधानादिसर्वकर्मसु पुरुषा
एव कर्तारो भवन्ति  न स्वयं यजमानः · केवलं यत्प्रधानकर्म देवतोद्देशेन
द्रव्यत्यागात्मकम् तत्स्वामी करोति  फलयोगात् · पुरुषयोगिमन्त्रान् तनूपा
अग्नेऽसि तन्वं मे पाहि (३. १७.) रायस्पोषस्य ददितारः स्यामेत्येवमादीन् (७. १४.)
यजमानो जपेत् · संस्काराश्च वपनाभ्यञ्जनादयो यजमानस्यैव भवन्ति  वचना-
भावे · वचनेनऽर्त्विजामपि संस्कारा भवन्ति  यथा  हिरण्यमालिनो वाजपेयेन
चरन्ति · उक्तव्यतिरिक्तमपि वचनाद्यजमानस्य भवति  यथा  यजमानो वसोर्धा-
रां जुहोति (१८. ५. १.)  यजमानः पात्राण्यासादयतीत्यादि । शेषं कर्माध्वर्य्वादयो
यथासमाख्यम्  अध्वर्युराध्वर्यवम् होता हौत्रम् उद्गातौद्गात्रम् ब्रह्मा ब्रह्मत्वमित्येवं
यथाख्यं कुर्वन्ति । यज्ञोपवीतिनः सर्वाणि कर्माणि प्राक्संस्थान्युदक्संस्थानि वा
कुर्वन्ति · यत्र-यत्रावृत्तिर्विधीयते सूर्यस्येत्यावर्ततऽइत्यादौ (३. ८. २३.)  यच्च कर्म
सर्वतो विधीयते यथा परिस्तरणम् पर्युक्षणम् समन्तं त्रिः पर्यृषतीत्यादौ (६. ३. ११.)
तत्र सर्वत्र प्रदक्षिणं कर्तव्यम् । पितृदेवत्येषु कर्मसु विपर्यासेनापसव्येनाप्रदक्षिणं
च · यद्दैवे आवृत्त्या क्रियते तच्च पित्र्ये सकृत् यथा परिसमुह्येत्यादि फलीकर-
णादि च · दक्षिणा च दिक्पित्र्ये  यद्दैवे प्राक्संस्थमुदक्संस्थं वा  पित्र्ये तद्द-

१) ? आबर्जं १. २. ३.  अबर्जं १.

क्षिणसंस्थं भवति ॥ प्रधानद्रव्यविनाशे संनिपत्योपकाराङ्गसहितस्यैव तस्यावृत्तिर्भवति नाराडुपकारकसहितस्य ॥ ॥७॥

इति प्रथमस्य सप्तमी कण्डिका ॥ ॥

इदं श्रूयते व्रीहिभिर्यजेत यवैर्यजेतेति · तत्र सर्वाङ्गोपसंहारिप्रयोगवचनानुग्रहायाष्टदोषदुष्टविकल्पपरिहाराय [1] चोभाभ्यां व्रीहियवाभ्यां समुच्चयेन यागः कर्तव्यः · सम्भवति च सोमयागस्येव प्रधानमस्यापि यागस्याभ्यासमाश्रित्य समुच्चयः मिश्रैर्वा क्रियेतेति उत विकल्पो व्रीहिभिर्वा यवैर्वेति । तत्र पूर्वपक्षमाह ·

गुणानामेकार्थानां सर्वारम्भश्चोदितत्वात् ॥१॥ एकोऽर्थः प्रयोजनं कार्यं येषां त एकार्थाः एकपुरोडाशनिष्पत्त्यर्था व्रीहियवादय एतेषां एकार्थानाम् गुणानां पुरोडाशाद्यर्थानां व्रीहियवानां सर्वारम्भः कर्तव्यः सर्वैर्व्रीहियवादिभिस्तत्कार्यं [2] पुरोडाशादिकं निष्पाद्य यागः साधनीय इति । कुत एतत् चोदितत्वात् यजेतेत्येवमुभयोर्यागसाधनत्वेन विहितत्वात् · यागे साधनत्वं च यागसाधनभूतपुरोडाशप्रकृतिद्रव्यत्वेन · अत उभयोर्यागसाधनत्वेन चोदितत्वात् यैर्यागो न क्रियते तेषां विधानं व्यर्थमेव स्यात् · तस्माद्व्रीहिभिर्यवैश्च पुरोडाशो निष्पादनीय इत्येवं प्राप्तेऽयाह ·

न कृतत्वात् ॥२॥ यदुक्तम् सर्वारम्भः सर्वैस्तत्कर्मानुष्ठेयमिति तन्न । कुतः कृतत्वात् एकेनैव पुरोडाशद्रूपस्य कार्यस्य कृतत्वात् द्वितीयोपादानं व्यर्थमेव स्यात् · सर्वारम्भो हि मिश्राभ्याममिश्राभ्यां वा यागावृत्त्या · न तावन्मिश्राभ्याम् मिश्रेण हि द्रव्यान्तरोपात्त्यैकस्यापि साधनत्वाभावात् · न च यागावृत्तिः यागस्य कृतत्वात् ।

अनारभ्यत्वात् ॥३॥ अस्यार्थस्यानारभ्यत्वात् नैवारम्भणीयोऽयमर्थः यद्गुणभूतस्य द्रव्यस्यानुरोधेन प्रधानभूतस्य यागस्यावृत्तिः · तस्माद्विकल्प एव न समुच्चयः ।

---

[1] ? °हायाष्टदोषंदुष्ट° २. °ष्टदोषनिदानविकल्प° Çâstradîpikâ at Jaim. १२. ३. १०.
[2] ? °सर्वैर्व्री° २.

दर्शनाच्च ॥४॥ व्रीहियवयोर्विकल्पो भवतीत्ययमर्थः श्रुतौ दृश्यते च · हविरुद्वपनं प्रकृत्य श्रूयते (१. १. ४. २०.) वर्षवृद्धा उ ह्येवैते यदि व्रीहयो यदि यवा[1] इति । ज्योतिष्टोमे हि द्रव्यदेवतासंयोगानामदृष्टानामपर्यायविधानात्प्रकरणेन युगपद्ग्रहणात्सर्वसम्पादनाय युक्तं[2] यदभ्यस्यते · व्रीहियवौ तु द्वाभ्यां वाक्या[भ्या]मन्योऽन्यनिरपेक्षौ यागद्रव्यपुरोडाशप्रकृतितया विधीयमानौ तद्द्वारेण प्रयोगवचनो गृह्णन्पर्यायेणैव गृह्णाति न युगपत् येन बलात्प्रधानाभ्यासः स्यात् ज्योतिष्टोमवत् । मिश्रत्वमपि निरपेक्षविधानादयुक्तमेव · समुच्चित्ययजनया हि[3] वाक्यद्वयमपि बाधितं स्यात् द्वाभ्यामपि वाक्याभ्यां द्वयोरपि निरपेक्षयोः प्रकृतित्वेन विधानात्तद्बलेन द्रव्यान्तरनिवृत्तिप्रतीतेः । तस्माद्विकल्पः · ततो व्रीहिप्रयोगे तैरेव कार्यसिद्धेर्न यवानामुपादानम् यथा पांशुकैरङ्गैः कार्यसिद्धेः पौरोडाशिकानाम् ।

श्रुत्यानर्थक्यमिति चेत् ॥५॥ ननु व्रीहियवयोर्विकल्पे सत्यन्यतरश्रुतेरानर्थक्यं भविष्यतीति चेत्कथयति तत्रोत्तरमाह ·

कालान्तरेऽर्थवत्त्वं स्यात् ॥६॥ कालान्तरे द्वितीयाया अपि श्रुतेरर्थवत्त्वं सार्थकत्वं[4] भवति · अतो व्यवस्थितविकल्पोऽयम् । तथा च शाखान्तरे श्रूयते व्रीहिभिरिष्ट्वा व्रीहिभिर्यजेता यवेभ्यो यवैरिष्ट्वा यवैर्यजेता व्रीहिभ्यो दर्शपूर्णमासाविति · अतो व्रीह्याग्रयणानन्तरं प्राग्यवाग्रयणाद्व्रीहिभिरेव दर्शपूर्णमासयागः यवाग्रयणानन्तरं प्राग्व्रीह्याग्रयणाद्यवैरिति · अत्र दर्शपूर्णमासावित्यनेन दर्शपूर्णमासयोरेवायं द्रव्यनियम उक्तः तेनान्यासु विकृतिषु नायं द्रव्यनियम इति धूर्तस्वामिनः ॥ ॥ आघारौ प्रकृत्य श्रूयते ऋजुमाघारयति संततमाघारयति प्राञ्चमाघारयति दीर्घमाघारयतीति · एतेषामपि ऋजुत्वादिधर्माणामेकार्थत्वाद्व्रीहियववद्विकल्पे प्राप्तेऽआह ·

धर्ममात्रेषु समुच्चयोऽविरोधे ॥७॥ ये गुणा धर्ममात्रा अदृष्टार्थास्तेषु समुच्चयो भवति न विकल्पः । यतस्तेऽविरोधे वर्तन्ते · कथम् · न हि ऋजुः प्राञ्चं संततं दीर्घं वा विरुणद्धि न च संततः ऋज्वादीन् · अदृष्टान्यपि तेषां

1) यदि यदि यवा २. 2) ? सर्वसंपादनापयु° २. 3) ? यजनतापि २. 4) ? सार्थवत्वं २.

भिन्नान्येव · तस्मात्परस्पराविरोधित्वाद्दृष्वादीनां समुच्चयः । यदुक्तम् एककार्यत्वात्[1] समुच्चय इति · अत्रोच्यते · सत्यम् परमेककार्यम् अवान्तरकार्याणि[2] तु भिन्नानि · यदृजुना क्रियते न तत्संततेन यत्संततेन न तदृजुना यद्दीर्घेण न तत्प्राचा यत्प्राचा न तद्दीर्घेणेति ॥ ॥ अथेदं विचार्यते । अग्निप्रणयनाग्निमन्थनादिषु क्रियमाणानुवादिनो होतुर्मन्त्राः सन्ति प्र देवं देव्या धिया अभि त्वा देव सवितः इत्यादयः · तथा अग्न्याधानमन्त्रा भूर्भुवः स्वरिति आदित्यानां त्वेत्यादयः · किं तेषां विकल्पः उत समुच्चय इति । मन्त्राणां स्मारकत्वेन दृष्टार्थत्वात्करणवदेकार्थत्वाद्व्रीहियववद्विकल्पे प्राप्तऽआह ·

हौत्राधानयोः ॥ ८॥ समुच्चयोऽविरोधऽइत्यनुवर्तते । होतुरिमे हौत्राः · होतृमन्त्राणामाधानमन्त्राणां च समुच्चयो भवति न विकल्पः अविरोधादेव । हौत्राधानशब्देनात्र तत्सम्बद्धा मन्त्रा लक्ष्यन्ते · करणमन्त्रा हि कर्मानुष्ठानकरणभूतां स्मृतिं पूर्वक्षणवर्तिनीं कुर्वन्ति · न चैकेन[3] सिद्धावितरेण कार्यमस्तीति युक्तस्तत्र विकल्पः · क्रियमाणानुवादिनस्त्वध्वर्युणा क्रियमाणस्य कर्मणः स्मृत्यविच्छेदार्थाः · अविच्छेदश्चात्यादपेक्षित इति सर्वेषां समुच्चयः । समुच्चयश्च दृश्यते श्रुतौ त्रिः प्रथमामन्वाह त्रिरुत्तमामिति (१. ३. ५. ६.) आग्नेयीरन्वाह (४.) एकादशान्वाह (५.) नवान्वाह दशान्वाहेत्यादि अनेकसंनिपाते वै तद्भवति · प्रथमा उत्तमेति च संख्योपबन्धश्च · तस्मात्समुच्चयः । आधानमन्त्राणां च वचनात्समुच्चयः त्रिभिरक्षरैर्गार्हपत्यमुपदधाति[4] पञ्चभिराहवनीयमिति । एवं सर्वत्र होममन्त्राणां समुच्चये प्राप्तऽआह ·

न याज्यानुवाक्यासु विरोधे ॥ ९॥ एकस्मिन्नेव प्रकरणे क्वचिद्बह्व्यो याज्यानुवाक्या एकदेवत्याः पठिताः सन्ति तासु च न समुच्चयः किंतु विकल्प एव । कुतः विरोधात् यतः पुरोऽनुवाक्या देवतास्मरणार्था याज्या च हविःप्रदानार्था · ह्वयति वाऽअनुवाक्यया प्रयच्छति याज्ययेति (१. ७. २. १७.) · ततश्च दृष्टार्थत्वाद्विकल्पः ।

---

1) ? यदुक्तमेवका° २. 2) ? आवांत° २. 3) Thus Çâstradîp. at Jaim. १२. ३. ३६. वैकेन २. 4) ?? त्रिभिरचतिर्गाहप° २.

दर्शनाच्च ॥ १० ॥ श्रुतावप्येवं दृश्यते यदेकदेवत्यऽएकैव [1] याज्या पुरोऽनुवाक्या च भवति न समुच्चयः । यतो वाजपेये प्राजापत्यान्पशून्प्रकृत्य श्रूयते (५.१.३.१७.) एकानुवाक्या भवत्येका याज्यैकदेवत्या ह्येति देवतैकत्वं हेतुं ब्रुवन्नेकदेवत्ये याज्यापुरोऽनुवाक्ययोरेकत्वं दर्शयति । तथा महापितृयज्ञे पुरोऽनुवाक्याप्रस्तावे श्रूयते (२.६.१.२६.) स द्वे पुरोऽनुवाक्ये अन्वाहैकया वै देवान्प्रच्यावयन्ति द्वाभ्यां पितॄनिति · अत्र पुरोऽनुवाक्याद्वित्वविधिपरे वाक्ये अन्यत्र तस्या एकत्वं सिद्धं दर्शयति · तस्मान्न याज्यानुवाक्यासमुच्चयः किंतु विकल्प एव ।

प्रायश्चित्तेषु दोषनाशात् ॥ ११ ॥ यज्ञाङ्गायथाक्रियायां विहितानि [2] प्रायश्चित्तानि · यथा यद्युक्तो यज्ञ आर्तिमियाद्भूः स्वाहेति गार्हपत्ये जुहुयात् आर्तिमियाद्विनाशमियादित्यर्थः विहितस्याक्रिया[याः] प्रतिषिद्धकरणाद्वात्र [3] विनाशः · योऽमावास्यां पौर्णमासीं वातिपातयेदग्नये पथिकृतेऽष्टाकपालं पुरोडाशं निर्वपेत् · तथा योऽमावास्यां पौर्णमासीं वातिपातयेद्वैश्वानरं [4] द्वादशकपालं निर्वपेदित्यादीनि तत्समाधित्सायां विहितानि तत्समाधानार्थानि भवन्ति · समाधानं चादृष्टमेकेन कृतमिति शक्यं वक्तुम् · तेन प्रयाजादिवदेषां समुच्चये प्राप्ते उच्यते प्रायश्चित्तेषु न समुच्चयः । कुतः दोषनाशात् यतस्तानि दोषनाशार्थं विधीयन्ते · कथं पुनरेतत् · उच्यते · दोषनाशार्थान्येतानीति [5] वाक्यादेव [6] यद्यार्तिमियादिदं कुर्यादिति कर्मस्वयथाकरणादिना दोषे विनाशे सति तानि विधीयन्ते · यदि तेषु कृतेष्वपि तद्विनष्टमेव कोऽर्थस्तेन कृतेन अतो दोषनिर्घातायैव तेषां प्रयोजनम् · तत्रैकेन निर्हृतदोषेण प्रयोजनमस्ति [7] । प्रयाजादिषु तु युक्तः समुच्चयः भिन्नकार्यत्वात् न हि समिधा [8] यत्क्रियते तत्तनूनपातेति प्रमाणमस्ति · ननु सर्वे करणानुग्रहार्थाः सत्यम् सर्वेषां युगपदेकेन प्रमाणेन साधनमवगम्यते न पर्यायेण · प्रधानविधिना हि तेषां विधानम् तत्र

---

1) ? °देकवत्ये एकैव २. 2) ?? यज्ञागायथाक्रियामिहितानि २. 3) ? °करणांद्वात्र २. 4) Thus the Çâstradîp. at १२.३.१४. वातिपादये° २. 5) ?? पुनारेत ˉयते दोषनाशार्थान्यतान्येतानीति २. 6) ? °देवं २. 7) ? निर्हृतिदोषेण प्राजोजन° २. 8) समिद्धा २.

द्वारैक्यावगमात् युगपदेव सर्वे सम्बध्यन्ते तद्वशेन च सर्वतन्त्र्यावान्तरकार्यैः करणानुग्रहः सिध्यतीति कल्प्यते। प्रायश्चित्तानि तु वैगुण्यमेकं निमित्तीकृत्य वाक्येन पत्नेण विधीयमानानि प्रत्येकमेव तत्समाधानार्थानि विज्ञायन्ते · तत्र यान्येकस्मिन्वैगुण्ये विधीयन्ते पथिकृद्वैश्वानरादीनि तेषां विकल्पसमुच्चयचिन्तायामदृष्टार्थत्वात्समुच्चयप्राप्तावेकैकेन [1] वाक्येन वैगुण्यसमाधानाय निरपेक्षविधानाद्व्रीहियवद्विकल्प एव न समुच्चयः। तदुक्तं जैमिनिना (१२. ३. १४.) प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात्सर्वस्य निर्घात इति · अस्यार्थः · प्रायश्चित्तेषु विकल्पः स्यात् कुतः ऐकार्थ्यात् · कथमैकार्थ्यम् · यत एकेषां निष्पन्नेन दोषेण केवलस्य तस्याभिसंयोगो यद्यृक्तो यज्ञ आर्तिमियाद्भूः स्वाहेति गार्हपत्ये जुहुयादिति · तस्मात्सर्वस्य दोषस्यैकेन निर्घातः एकेन चेन्निर्हृतो [2] दोषस्तर्हि द्वितीयादीनि प्रयोगान्तरार्थानि भवन्ति · एवं स्मार्तेष्वपि द्रष्टव्यम्। तत्र द्वितीयं सूत्रम् (१२. ३. २५.) समुच्चयस्त्वदोषार्थेषु · यानि तु न दोषनिर्घातार्थानि [3] तेषु समुच्चयः · कानि पुनस्तानि यानि न शिष्टस्याक्रियायां प्रतिषिद्धस्य करणे वा [4] विधीयन्ते · यथा यस्याकृतमग्निहोत्रं सूर्योऽभ्युदियान्मैत्रं चरुं [5] निर्वपेत्सौर्यमेककपालम् तथा यस्याकृतमग्निहोत्रं [6] सूर्योऽभ्युदियादग्निं समाधाय वाचं यत्वा दम्पती सर्वाहमुपासीयातामिति [7] · तत्र दोषो न दृश्यते दोषस्याभावान्निर्घातार्थता [च] नास्ति केवलमभ्युदये निमित्ते कर्म विधीयते तन्नैमित्तिकं [च] कर्मणः प्रकरणे उत्पन्नत्वात्कर्माङ्गं विज्ञायते · तत्र यावन्ति चोद्यन्ते तानि सर्वाणि प्रयोगवचनेन संगृह्यन्ते अतस्तेषां समुच्चयः। तदेवं जैमिनेः सिद्धान्तः प्रमादापतितस्य वैगुण्यस्य समाधानार्थानां विकल्पः निमित्ते सति कर्माङ्गानां समुच्चय इति। कात्यायनस्तु · प्रायश्चित्तेषु दोषनाशात् · प्रायश्चित्तेषु विकल्पो भवति कुतः दोषनाशात् दोषनिर्घातार्थत्वात् प्रायश्चित्तस्य · तत्र [8] [च] एकेन दोषनिर्घाते कृते नास्ति द्वितीयस्य कार्यमित्येवं प्राप्तऽआह ·

---

1) ? Thus २. °प्तावेकेन Çâstradîp. 2) ? चेन्निस्तो २. 3) ? तु दोषनिर्घाता° २. 4) ? यानिनशिष्टस्याक्रियांया प्रतिषिजस्येवनेव २. 5) ? मैत्रं बक्षं २. 6) ? ययास्याज्ञ° २. 7) ? दयंती संवाहमुपासीयाजामिति २. 8) ? गत्र २.

नाश्रुतेः ॥ १२ ॥ प्रायश्चित्तैर्दोषनाशः क्रियतऽइत्येवंविधा श्रुतिर्नास्ति · किं च ·

प्रत्यक्षाच्च ॥ १३ ॥ न केवलमेवंविधश्रुत्यभावः प्रत्यक्षादप्येवं न ज्ञायते [1] यत्प्रायश्चित्तैर्दोषनाशो भवतीति · कथम् · भिन्ने जुहोति स्कन्ने जुहोतीति भेदने स्कन्दने च संजाते होमरूपं प्रायश्चित्तं विधीयते न च होमे कृते भिन्नमभिन्नं स्कन्नमस्कन्नं संजायते [2] किंतु तथैवावतिष्ठते · तस्मात्प्रायश्चित्तमदृष्टार्थमेव न दोषनिर्घातार्थम् · तस्मात्समुच्चयः ।

स्याद्वा दर्शनात् ॥ १४ ॥ अथवा कैश्चित्प्रायश्चित्तैर्दोषनाशः स्यात् । कुतः श्रुतौ दर्शनात् · महाव्याहृतिहोमेषु दोषनिर्घातो दृश्यते (१२. ५. १. ६.) तद्यद्धुर्यग्युक्तो [3] भूरिति चतुर्गृहीतमाज्यं गृहीत्वा गार्हपत्ये जुहवथेत्यादि प्रकृत्य स यथा पर्वणा पर्व संदध्यादेवच्छैव स संदधाति य एताभिर्भिषज्यतीति विनष्टस्य कर्मणः संधानं भेषज्यं च दर्शयति · तथा · पथिकृतो वार्क्यशेषे श्रूयते अग्निर्वै देवानां पथिकृत्स्वेन भागधेयेनोपासीरन्नेतं पन्थानमपिनयति य एवं व्रतमालम्भयतीति [4] । तस्मात्प्रायश्चित्तैर्दोषनिर्घातः स्यादिति प्राप्तऽआह ·

नान्यार्थत्वात् ॥ १५ ॥ नैतस्माद्दर्शनादेवं कल्प्यम् यत्प्रायश्चित्तैर्दोषनाशोऽस्तीति । कुतः दर्शनस्यान्यार्थत्वात् · कोऽन्योऽर्थ इति चेत् उच्यते महाव्याहृतिस्तुत्यर्थं चैतद्दर्शनम् इत्थं प्रशस्तो [5] होमो येन विच्छिन्नस्य [6] संधानं क्रियतऽइति । तस्माददृष्टार्थत्वमेव प्रायश्चित्तानाम् ततः समुच्चय एवेति ॥ ॥

अपरा व्याख्या । स्याद्वा दर्शनात् । प्रायश्चित्तानि द्विविधानि कानिचिद्वैगुण्यस्य प्रमादापतितस्य समाधानार्थानि कानिचिन्निमित्ते कर्माङ्गानि । तत्र यानि वैगुण्यसमाधानार्थानि तेषु दोषनिर्घातः स्यात् प्रमादापतितस्य [7] वैगुण्यस्य समाधानं भवेत् · कुतः दर्शनात् स यथा पर्वणेत्यादि तदुदाहृतं पूर्वव्याख्याने · एकेन च निर्हृते [8] दोषे न द्वितीयस्य प्रयोजनमित्येकमेव किंचिद्वि-

---

1) ? गम्यायते २. 2) ? कृते भिन्नमभिस्कन्न संज्ञा° २. 3) sic! स होवाच! 4) ?? °येनोयासीरन्नेवं पथानमपिनमि स एव व्रतमालंभवन्नीति २. 5) ? प्राशस्ते २. 6) विछत्रस्य २. 7) ? प्रमादादपितस्य २. 8) ? निह्वदे २.

कृत्स्नेन कर्तव्यमिति सिद्धान्तः। एवमेव सर्वेषु प्राप्तेऽस्माह · नान्यार्थत्वात्। प्रायश्चित्तानि न दोषनिर्घातार्थानि किंतु भेदनादिनिमित्ते सति कर्माङ्गानि · तेषु दोषेऽसति न तन्निर्घातार्थता [1]। कुतः अन्यार्थत्वात् तत्र हि न प्रायश्चित्तस्य विनष्टसमाधानं कार्यम् · किं च स एवार्थो दृष्टः [2] न च होमादिना भिन्नं स्कन्नं वा अभिन्नमस्कन्नं च कर्तुं शक्यते · अत एवंविधे निमित्ते यानि विधीयन्ते तान्यदृष्टार्थान्येव · तस्मात्तेषु समुच्चय इति · एवं च जैमिनिसिद्धान्तेनाविरोधि व्याख्यानं भवति अतो युक्तमेवेति ॥ ॥ ॥ अथेदं चिन्त्यते। ये मन्त्रा मन्त्रसमाम्नाये स्वरान्तरेण समाम्नाताः ब्राह्मणे तु स्वरान्तरेणोपात्तास्ते किं स्वयमेव प्रसिद्धेन स्वरेण उत ब्राह्मणस्वरेण उत एकश्रुत्या तानेनेति। तत्र प्रथमं पक्षं तावदाह ·

मन्त्रे स्वरक्रिया यथाम्नातमविशेषात् ॥१६॥ कर्मसु प्रयुज्यते यो मन्त्रः तस्मिन्स्वरक्रिया यथाम्नातं भवति · येन स्वरेण संहितायामाम्नायते तेनैव स्वरेणेत्यर्थः। कुतः अविशेषात् यतो विशेष उपदिष्टो नास्ति अनेन स्वरेण कर्मणि मन्त्रः प्रयुज्यतऽइति · तेन यथाम्नातस्वर एव भवति इति प्राप्ते द्वितीयं पक्षमाह ·

भाषिकस्वरो वोपपन्नमन्त्रोपदेशात् ॥१७॥ वाशब्दः पूर्वपक्षनिरासार्थः। भाषिकस्वरः ब्राह्मणस्वरः। अथवा कर्मणि प्रयुज्यमानानां मन्त्राणां भाषिकस्वरो भवति न संहितास्वरः ब्राह्मणस्वरेण मन्त्राः प्रयुज्यन्तऽइत्यर्थः। कुतः उपपन्नमन्त्रोपदेशात् संहितास्वरेणोपपन्नस्य प्रयुक्तस्यैव मन्त्रस्य ब्राह्मणे स्वरान्तरेणोपदेशात् · तस्मात्कर्मणि [3] प्रयोगे मन्त्राणां भाषिकस्वरो भवतीति प्राप्ते सिद्धान्तमाह ·

तानो वा नित्यत्वात् ॥१८॥ वाशब्दः पक्षव्यावृत्तौ। तान एव मन्त्राणां स्वरो भवति न भाषिकस्वरः · तान एकश्रुतिरित्यर्थः · तेनोदात्तादिस्वररहित एवैकश्रुत्या मन्त्राणां प्रयोगः कार्यः। कुतः नित्यत्वात् नित्यो हि तानः

---

1) ?? तेषु दोष इति निर्घार्थता २· 2) ? दृष्टं २· 3) Thus also the Çâstradîp. at Jaim. १२· ३· २०·

वर्णस्वरूपमन्त्रोच्चारणादिना[1] भूतत्वात् । स्वरान्तरं चानियतम् उभयथा मन्त्रस्य[2] स्वरसम्बन्धदर्शनात् न ज्ञायते संहितास्वरेण वा ब्राह्मणस्वरेण वेति[3] । तस्मात्तान एव स्वरो मन्त्राणामिति · उक्तेऽर्थे व्याकरणस्मृतिं दर्शयति ·

एकश्रुति दूरात्सम्बुद्धौ यज्ञकर्मणि सुब्रह्मण्यासामजपन्यूङ्खयाजमानवर्जम्[4] ॥१९॥ एकश्रुति दूरात्सम्बुद्धावित्यनुवर्तमाने[5] यज्ञकर्मणि मन्त्राणामेकश्रुतिर्भवति न केनचित्स्वरेण प्रयोगः । किं सर्वत्र · सुब्रह्मण्यासामजपन्यूङ्खयाजमानवर्जम् · एतानि वर्जयित्वा अन्येषु मन्त्रेष्वेकश्रुतिर्भवति । सुब्रह्मण्यो३मिन्द्रागच्छेत्यादिर्निगदः सुब्रह्मण्या · सामानि उद्गातृभिर्यज्ञे गीयमानानि · जपाश्च धूरसि (१. ८.) इन्द्रस्य बाहुरसि (१. २४.) मर्यादित्याद्या (२. ८.) जपतीति शब्देन (२. ३. २१. २. ६. १३. ३. ४. २१.) चोदिता मन्त्राः · न्यूङ्खास्तु पृष्ठे षडहे होतृवेदे प्रसिद्धा ओकारा द्वादश पिबा[6] सोममिन्द्र मन्दतु त्वा यं तो ओ ओ ओ३ ओ ओ ओ ओ३ ओ ओ ओ ओ३ सुषाव हर्यश्वाद्रिरित्यादयः[7] · याजमानं च सर्वं विष्णुक्रमादिकम्[8] तत्सम्बन्धिनो ये मन्त्रा दिवि विष्णुरित्याद्याः (२. २५.) अथवा यजमानस्येमे याजमानाः · एषु सुब्रह्मण्यादिषु याजमानान्तेषु यथाप्राप्त एव संहितास्वरो भवति नैकश्रुतिः ॥ ॥ आधाने श्रूयते (२. २. २. ३.) ता वै षड्दद्यात् [द्वादश दद्यात् (४.)] चतुर्विंशतिं दद्यादिति (५.) · तत्रायं संदेहः · किं षड् द्वादश[9] चतुर्विंशतिश्च समुच्चिता देयाः उत विकल्पः षड्वा द्वादश वा चतुर्विंशतिर्वेति · तत्र सर्वासामाम्नातत्वाद्विकल्पस्याश्रवणाच्च अङ्गभूयस्त्वाय सर्वाङ्गग्राहिणा[10] प्रयोगवचनेन सर्वाः समुच्चिता देया इति प्राप्तेऽआह ·

---

1) ? °मत्रोच्चारणाविना २. 2) मत्रस्थ २. 3) ? °स्वरेणेति २. 4) °न्यूङ्खयाजमानवर्जं ए १. न्यूषयाजमानवर्जमिति २. The ए in १. refers to the beginning ए of the next sûtra. The इति is an addition of the Commentator, who considers this sûtra as a quotation taken from Pâṇini १. २. ३३-३४. 5) viz. in Pâṇ. १. २. ३४. from ibid. ३३. 6) ओंकारा द्वादशामिवा २. 7) मंदनु त्वामत्तो । ङे. ङे ङे३ ङे ङे ङे ङे३ ङे ङे ङे ङे३ त्युषाव हपश्वाद्रि° २. The origin of these ङे lyes in that obsolete form of ओ, where it is given by an उ marked above with a semicircular stroke. — The न्यूङ्ख explained here is the वैराजन्यूङ्ख, see Çânkhây. çrauta sûtra १०. ५. २३. The quoted ṛic is taken from Ṛiksamh. ७. २२. १. Sâmasamh. १. ५. १. १. ८. 8) ? °दिक च २. 9) ? किं च षड्द्वा° २. 10) अगभूयस्त्वाय सर्वगग्रा° २.

संख्याविकल्पो दानसंयोगे कृतत्वात् ॥२०॥ तनूहविःषु दक्षिणादानसंयोगे संख्याविकल्पो भवति संख्यानां षडादीनां विकल्पः ता वै षड्देयादित्यादि श्रूयमाणानां षडादिसंख्यानां विकल्पो भवतीत्यर्थः न समुच्चयः । कुतः कृतत्वात्[१] ऋत्विग्मानत्यर्थं हि दक्षिणादानम् नादृष्टार्थम् सा चानतिरेकेनैव कृतेति न पक्षान्तरेण प्रयोजनम् · अपि [च] समुच्चये सति संख्याश्रुतिर्विरुध्यते[२] संख्यान्तरोपजननाच्छुतसंख्याहानिप्रसङ्गात्[३] यदि च षट्[४] द्वादश चतुर्विंशतिश्च समुच्चिता दीयन्ते तदा अश्रुता द्वाचत्वारिंशत्संख्या प्रसज्येत · तस्माद्विकल्पः ॥ ॥ अथेदं विचार्यते · अग्नीषोमीये पशौ श्रूयते श्यभ्रऽऊवध्यमवदधाति वसां जुहोति अध्यूध्नीं होत्रे प्रयच्छति वनिष्ठुमग्नीधे प्रददातीति[५] · तच्चोदकेन स्तोमायनवाजपेयादौ[६] पशुगणे प्राप्नोति[७] · तत्र संदेहः किमूवध्यादीनां सर्वपशुसम्बन्धिनां समुच्चयः उत विकल्पो यस्य कस्यचिदेकस्य पशोरिति · तत्र एकपशुसम्बन्धिभिरेव तस्यास्तस्याः क्रियाया निष्पत्तेः प्राप्ते विकल्पऽआह[८] ·

ऊवध्यवसाध्यूध्नीवनिष्ठुषु समुच्चयो द्रव्यसंस्कारतद्भेदाभ्याम् ॥२१॥ अनेकपाशुकेषूवध्यवसाध्यूध्नीवनिष्ठुषु समुच्चयो भवति सर्वेषां पशूनां सम्बन्धीनि ऊवध्यादीनि गृह्णीयादित्यर्थः । कुतः द्रव्यसंस्कारतद्भेदाभ्याम् द्रव्यसंस्कारात् तद्भेदाच्च · द्रव्याणि ह्यूवध्यादीनि तया-तया क्रियया संस्क्रियन्ते प्रतिपाद्यन्ते · नात्र द्रव्यं क्रियार्थम् अथ तु क्रियैव द्रव्यार्था[९] · यागादनन्तरं कृतार्थस्य प्रतिपत्तिसंस्कारः · तत्र संस्कार्याणि भिन्नानि · यस्यैव पशोरूवध्यादीनि न प्रतिपाद्यन्ते तस्यैव प्रतिपत्तिरूपसंस्कारलोपाद्वैगुण्यं स्यात् · तस्मात्समुच्चय ऊवध्यादीनाम् । एवमेव गुदजाघनीष्वपि समुच्चयः एवं समानन्यायात् · यत्र च भूतभव्यसमुच्चारणान्यायेन द्रव्यं क्रियार्थं भवति तत्र बहुष्वेकत्र प्राप्तेष्वेकेनैव क्रियासिद्धेर्न द्वितीयेन प्रयोजनमिति · तत्र विकल्पो भवति · यत्र तु क्रिया द्रव्यार्था तत्र समुच्चय एवेति ॥ ॥ ज्योतिष्टोमे सोमक्रये श्रूयते हिरण्येन क्रीणाति

---

१) ? सकृत्वात् २. २) ? विंध्यते २. ३) Thus the Çâstradîp. at Jaim. १२. ४. १. ? °रोयोजमानात्श्रुत° २. ४) षड्ढ २. ५) ? तदादातीति २. See ६. १. ४. ६) ? स्तोयाय° २. ७) प्राप्ता २. ८) ? निष्पत्ते प्राप्तेर्वि° २. ९) ? क्रिया अथ तु क्रियैव द्रव्यार्थे २.

वाससा क्रीणाति गवा क्रीणाति अजया क्रीणातीत्यादीनि दश क्रयद्रव्याणि · तत्र संदेहः · किमेषां हिरण्यादीनां विकल्पः एकेन केनचित्सोमः क्रेतव्य इति · उत समुच्चयः सर्वैः क्रेतव्य इति । तत्र व्रीहियवन्यायेनैकार्थत्वाद्विकल्पः । कथं पुनरेकार्थत्वम् · भिन्ना एव हि प्रतिवाक्यं क्रयाः न ह्येकेन वाक्येन विहितं क्रयमनूद्य वाक्यान्तरैर्द्रव्यान्तरविधानं सम्भवति उत्पत्तिशिष्टद्रव्यविरोधात् · तस्मात्सर्वाणि क्रयविधानानि विधिभेदाच्च क्रयभेदः · तस्मान्नानाक्रयसाधनत्वाद्द्रव्याणां नास्त्यैकार्थ्यम् · सत्यम् · साक्षान्नास्ति · क्रयद्वारेण त्वस्त्येव[1] · सर्वे [हि] क्रयाः सोमप्राप्त्यर्थत्वादेकार्थाः[2] · तद्द्वारेण द्रव्याण्यप्येकार्थानि · तदनेन प्रकारेण क्रयाणामेवात्र विकल्पसमुच्चयौ चिन्त्येते · व्रीहियववद्विकल्पप्राप्तावाह ·

· चोदनागुणेषु च प्रक्लृप्त्युपबन्धाभ्याम्[3] ॥२२॥ चकारेण समुच्चयपदमाकृष्यते । क्रयचोदनागुणेषु समुच्चयो भवति न विकल्पः हिरण्यादिसाधनकाः सर्वेऽपि क्रयाः कर्तव्या इत्यर्थः । कुतः प्रक्लृप्त्युपबन्धाभ्याम्[4] सोमस्य प्रक्लृप्तेः[5] उपबन्धाच्च । यतः प्रक्लृप्ते उपक्लृप्ते विद्यमाने[6] एव सोमे कर्ममध्ये क्रयो विहितः तेनादृष्टार्थः न त्वप्राप्तसोमप्राप्त्यर्थः · अतो यथा विहितस्तथैव कार्यो विधानं च सर्वेषां द्रव्याणाम् · तस्मात्समुच्चयः । दृष्टार्थत्वेऽपि विक्रेतुरानतिरत्र साध्या · सा च बहुभिः सुकरा · अतः कार्यप्रधानत्वात्पदार्थानां कार्यसौकर्यमालोक्य समुच्चयाश्रयणं[7] न्याय्यम् · व्रीहियवादीनां तु नैव किंचित्कारणमस्ति येन पृथक् श्रुतानामपि[8] सापेक्षत्वं कल्पते अत्र तु कार्यविशेषात्सापेक्षत्वकल्पनमिति वैषम्यम् । अपि च संख्योपबन्धः श्रूयते (३. ३. ३. १८.) तं वै दशभिरेव क्रीणीयान्नादशभिरिति · तस्मादपि समुच्चयः ।

गार्हपत्याहवनीयौ न व्यवेयात् ॥२३॥ विना वचनं गार्हपत्याहव-

---

1) Thus the Çâstradîp. at Jaim. १२. ४. ६. त्वन्नूपव २. 2) ?सोमक्रमप्राध्यर्थ° २. सोमपास्पर्थ° Çâstradîpikâ. 3) ?प्रकृत्युप° १. क्लृस्युप° २. प्रक्लृह्युप° २. and Ananta (E. I. H. 759). 4) ?प्रकृत्युप° २. 5) ?प्रकृप्तेः २. 6) प्रकृत्य विद्यमाने B (a separate leaf, bound together with २.). विधमाने २. विधयमाने २. 7) Thus Çâstr. °याग्रयणं २. 8) Thus Çâstr. कृतानामपि २.

नीयौ न व्यवेयात् तयोर्व्यवायं न कुर्यात् तयोरन्तरालेन न गच्छेत् · नापि स्फ्यो-दपात्रादिकमन्तरालेन नयेत् ।

विवृत्यावृत्य वेतरथावृत्तिः ॥ २४ ॥ विवृत्य अप्रदक्षिणमावृत्य आ-वृत्य [1] आवर्तनं कृत्वा प्रदक्षिणमावृत्य वा इतरथावृत्तिः प्रत्यावृत्तिः कर्तव्या · यत्र शास्त्रतः प्रदक्षिणावृत्तिः कृता तत्रेदानीमेवाप्रदक्षिणावृत्तिरविहितापि सर्वत्र कार्या यत्र चाप्रदक्षिणावृत्तिः शास्त्रतः कृता तत्र तदानीमेव प्रदक्षिणावृत्ति-रिति · यथा अथ प्रणीता दक्षिणतः परीत्य निनयतीति (१. ३. २. ३२.) तत्र निनयनानन्तरमप्रदक्षिणावृत्तिः एवं पूर्णपात्रनिनयनेऽपि · तथा महापितृयज्ञे अप्रदक्षिणं वेदिं परिषिच्य प्रदक्षिणमितरथावृत्तिः प्रदक्षिणपरिषेके त्वप्रदक्षि-णमिति ।

अतीत्य निष्क्रमणम् ॥ २५ ॥ यत्र कर्मणि अग्निहोत्रेष्ट्यादौ अन्तरेणाप-राग्नी गवेत्यादिशास्त्रोपदिष्टमार्गेण (४. १३. १२.) प्रवेशनं कृतम् तत्रातीत्य तत्क-र्मातिक्रम्य समाप्य तेनैव मार्गेण निष्क्रमणं कर्तव्यम् · होमे पुनराचमनोत्तर-कालम् इष्टौ च व्रतविसर्गोत्तरकालमिति ।

उत्तरतउपचारो यज्ञः ॥ २६ ॥ यज्ञ उत्तरतउपचारो भवति उत्तरतः विहाराडुत्तरदेशे उपचरणं कर्म करणं यस्यासावुत्तरतउपचारः · सर्वं कर्म वि-हाराडुत्तरदेशे कर्तव्यमित्यर्थः उत्तरतउपचारो वै यज्ञ इति श्रुतेः (३. ४. ३. १३.) · यत्र शास्त्रेण देशान्तरमुपदिष्टं भवति यथा स जघनेन गार्हपत्यमाहवनीयस्य पुरस्तान्मत्या चतुरश्रे श्वभ्रऽइति [2] तत्र तथैव भवति । अस्यापवादमाह ·

दक्षिणतो ब्रह्मयजमानयोरासने ॥ २७ ॥ ब्रह्मयजमानयोरासने वेदेर्द-क्षिणतो भवतः · ब्रह्मा वै यज्ञस्य दक्षिणत आस्तेऽभिगोप्तेति (१. ७. ४. १८.) ब्रह्म-णः · अथ हैषैव तुला यद्दक्षिणो वेद्यन्त इति प्रकृत्य (११. २. ७. ३३.) तस्माद्दक्षिणं वेद्यन्तमधिस्पृश्येवासीतेति श्रुतेर्यजमानस्य ।

पश्चाद्यजमानो वेदिस्पृक् ॥ २८ ॥ तयोर्ब्रह्मयजमानयोर्मध्ये यजमानो ब्रह्मणः पश्चादुपविशति · उभावप्युदङ्मुखौ · यजमानस्तु वेदिस्पृक् दक्षिणस्य

---

१) Thus B., the second आवृत्य being wanting in २. २) See १६. २. २.

वेद्यन्तस्योपरि वेदिमध्ये पादौ निधायोपविशतीत्यर्थः । अत एवोक्तम् (११. २. ७. ३३.) अथ हैषैव तुला यद्दक्षिणो वेद्यन्तः स यत्साधु करोति तदन्तर्वेद्यथ यदसाधु तद्बहिर्वेदि तस्माद्दक्षिणं वेद्यन्तमधिस्पृश्येवासीतेति · वेदिप्रान्तस्योपरि पादौ बहिरासनम् · एवमुपविष्टः सन्यत्किंचित्साधु शोभनं कर्म द्रव्यत्यागादिकं करोति तदन्तर्वेदि करोति · अथ यदसाधु अशोभनमधोवायुसमुत्सर्गादि तद्बहिर्वेदि करोति ।

अध्वर्युः कर्मसु वेदयोगात् ॥ २९ ॥ यजुर्वेदविहितेषु कर्मसु कर्त्रन्तरस्यावचने अध्वर्युः कर्ता स्यात् । कुतः वेदयोगात् वेदेन योगो वेदयोगः तस्मात् अध्वर्योर्वेदेन सम्बन्धात् अध्वर्युणा हि वेदो युज्यते समाख्यायते अध्वर्युवेद इति · यद्येतद्विहितेषु कर्मस्वध्वर्युः कर्ता भवति तदैवेदमुपपद्यते नान्यथा ।

वचनविरोधाभ्यामन्यः ॥ ३० ॥ वचनाद्विरोधाच्चाध्वर्योरन्योऽपि यजुर्वेदविहितस्य कर्मणः कर्ता भवति । वचनात्तावत् मन्थिनं प्रतिप्रस्थातेति (४. २. १. १३.) तदेको दृषदुपले समाहन्तीति (१. १. ४. १३.) अग्निअयत्यसावान्यमिति (१. २. २. ४.) अग्नीदिन्द्रमेकादशकपालं निर्वपति (१. १. १५.) नेष्टा तोत इत्येनां वाचयति (७. ६. २५.) तस्योन्नेताश्रावयति (४. ४. ३. ८.) यजमानो वसोर्धारां जुहोति (१८. ५. १.) ब्रह्मा प्रायश्चित्तानि जुहुयादनादिष्टानीति (२५. १४. ३५.) । विरोधाच्च · पेषणोपधानयोर्युगपद्विरोधात् यथा कपालोपधाने अग्नीत् तथा घर्मे रौहिणयोर्निर्वपनाद्यासादनान्तं प्रतिप्रस्थातुः वसाहोमः[1] ध्रुवग्रहस्य होतृचमसेऽवनयनम् चयने सीरयोजनं च ।

हविष्पात्रस्वाम्यृत्विजां पूर्वं-पूर्वमन्तरम् ॥ ३१ ॥ हविर्व्रीहियवादि[2] पात्राणि स्फ्यादीनि स्वामी कर्मफलभोक्ता यजमानः पत्नी वा ऋत्विजो ब्रह्माद्याः एतेषामेकत्र समावेशे[3] सति पूर्वं-पूर्वम् अस्मिन्सूत्रे प्रथमं-प्रथममुपदिष्टम् अन्तरमग्निसंनिकृष्टं भवति अर्थात् पश्चात्पश्चादुपदिष्टं तदपेक्षया बहिर्भवति । पात्रहविरादीनामितस्ततो नयने ऋत्विग्यजमानानां चेतस्ततो गमनागमने कर्मार्थमुपप्रवेशने सर्वत्रायमन्तर्बहिर्भावो ज्ञेयः ।

---

1) °होमं २. 2) ? °वाल्पादि २. वाद्याल्पादि २. 3) ? ससामवेशे २.

ऋत्विजां च यथापूर्वम् ॥ ३२ ॥ ऋत्विजामपि ब्रह्मादीनामुन्नेत्रन्तानां मध्ये एकत्र समावेशे सति यथापूर्वमिति यो-यः पूर्वः स-सोऽन्तरः अग्निसमीपः यो-य उत्तरतः स-स बहिर्भवतीति [1] पूर्वपूर्वापेक्षा · सर्वेषामितस्ततो गमनागमने अवस्थाने च अयमन्तर्बहिर्भावनियमः । चकाराद्धविषामपि यथापूर्वम् · तदर्थपात्राणामपि · सत्त्रगणयज्ञादौ [2] स्वामिनामप्येवमेव यथापूर्वमन्तर्बहिर्भावो द्रष्टव्यः ।

न वाचोदितत्वात् ॥ ३३ ॥ अचोदितत्वादयमन्तर्बहिर्भावो न स्यात् यदि न चोद्यते · चोद्यते च [3] तस्मादयमन्तर्बहिर्भावः स्यादेव । तद्यथा तामन्तरेण यूपं चाग्निं च हरन्तीति (३. ८. २. २०.) प्रत्याहृत्य वा सोमाहवनीययोरव्यवाया-दित्यादि (८. ८. ५.) · अन्तर्बहिर्भावश्चात्राग्न्यवधिकः · तेन वपा [4] अग्नेरव्यवहिता यूपस्तु पात्रत्वाद्वपापेक्षया बहिः · प्रतिप्रस्थाता तु ऋत्विक्त्वाद्यूपादपि बहिर्भवति ।

गार्हपत्ये संस्काराः ॥ ३४ ॥ अधिश्रयणपर्यग्निकरणपात्रप्रतपनादयः संस्काराः वचनाभावे गार्हपत्येऽग्नौ भवन्ति · तद्यथा शूर्पाग्निहोत्रहवण्योः प्रतपनम् स्रुक्स्रुवादीनाम् वरुणप्रघासे करम्भपात्रयवानां दक्षिणाग्नौ श्रपणेऽपि पर्यग्निकरणं गार्हपत्यादेव पितृयज्ञे च धानानाम् पर्णकषायोदकस्य तु दक्षिणाग्नावेव पाकः इष्टकापाकार्थत्वात् तत्पाकस्य दक्षिणाग्निना विधानात् ।

श्रपणं वाहवनीये ॥ ३५ ॥ हविषां श्रपणमाहवनीये वा स्यात् गार्हपत्ये वा उभयथा श्रुतत्वात् · तदाहुराहवनीये हवींषि श्रपयेयुरिति (१. ७. ३. २६.) उतो गार्हपत्यऽएव श्रपयन्तीति (२७.) च । आदिविकल्पोऽयम् नेच्छाविकल्पः तच्छायिण इति (२. ५. १८.) तच्छायित्वस्य नियतत्वेनानुवादात् । तदुक्तम् रूपं कालो ऽनुनिर्वाप्य(ः) श्रपणं देवतास्तथा आदौ ये विधृताः पक्षास्तऽइमे सर्वदा स्मृता इति · रूपं कर्मस्वरूपम् दाक्षायणदर्शपूर्णमासादिकम् · काल उदितानुदितादिः · अनुनिर्वाप्यो वैमृधादित्यौ · श्रपणं हविःश्रपणम् गार्हपत्ये वाहवनीये वेति · देवता ऐन्द्रं भवति माहेन्द्रं वेति (४. २. १०.) · एतेषां विकल्पानां मध्ये यः प्रथमं स्वीकृतः स एव यावज्जीवं कर्तव्यः न पक्षान्तरम् · एवमेव [5] ते पञ्चैवादिविकल्पाः अन्ये सर्वेऽपीच्छाविकल्पाः ।

---

1) ?भवति २. 2) सत्त्र° २. 3) वा २. च २. 4) ?चया २. 5) ?एकमेव २.

घृतमाज्ये ॥३६॥ आज्येन यूपमनक्ति आज्यमासिच्योद्गात्रे सौम्यं प्रयच्छतीत्यादौ किमाज्यशब्दो निर्वापादिसंस्कारनिमित्त उत जातिनिमित्त इति । तत्र संस्कृतेऽआज्ये प्रायेणाज्यशब्दप्रयोगदर्शनात् संस्कारनिमित्त इत्येवं प्राप्त इदमुच्यते आज्ये विहिते घृतं प्रतीयात् असंस्कृतमेव घृतं गृह्णीयात् · जातिनिमित्तोऽयमाज्यशब्दो न संस्कारनिमित्त इत्यर्थः । यतोऽसंस्कृतेऽपि [1] जातिमात्रे प्रयोगो लोके वेदे च दृश्यते क्रय्यमाज्यम् क्षीणमाज्यम् तैलमुपसेचने [2] वर्तते · जातिं विना लोके वेदे च प्रयोगो नास्ति विना संस्कारं लोके प्रयोगोऽस्ति · अतो जातिनिमित्त एवेति । प्रयोजनम् आज्येन यूपमनक्ति आज्यमासिच्योद्गात्रे सौम्यं प्रयच्छतीत्येवमादौ संस्कारा न कर्तव्याः ।

लिङ्गात् ॥३७॥ मन्त्रलिङ्गादाज्यं गव्यं [3] भवति गवां सम्बन्धि भवति । किं लिङ्गम् मह्रीनां पयोऽसीति (४. ३.) मह्य इति [ह] वाऽएतासामेकं नाम यद्गवामिति (३. १. ३. १.) । अतश्चोक्तं [4] मण्डनमिश्रैः घृतार्थे गोघृतं ग्राह्यं तदभावे तु माहिषम् आज्यं वा तदभावे तु साक्षात्तैलं ग्रहीष्यते तैलाभावे ग्रहीतव्यं तैलं जर्तिलसम्भवम् तदभावेऽतसीस्नेहः कौसुम्भः सर्षपोद्भवम् वृक्षस्नेहोऽथवा ग्राह्यः पूर्वालाभे परः परः तदभावे यवव्रीहिश्यामाकान्यतरोद्भवम् पिष्टमालोड्य [5] तोयेन घृतार्थे योजयेत्सुधीः वृक्षतैलेषु पुंनागनिम्बैरण्डोद्भवं त्यजेत् । यद्वा गव्यघृताभावे छागमाहिष्यादेर्घृतं क्रमात् तदलाभे गवादीनां क्रमात्क्षीरं विधीयते तदलाभे दधि ग्राह्यमभावे तैलमिष्यते यत्राज्यम[ङ्ग]नाद्यर्थं न लभ्येत कथं चन तत्र क्षीराद्यनादृत्य साक्षात्तैलं ग्रहीष्यते यत्र मुख्यं दधि क्षीरं तत्रापि तदलाभतः अजादेः क्षीरदध्यादि तदलाभे तु गोघृतम् मुख्यासन्नोऽथवा ग्राह्यः कार्यकारणसंततौ अत एव घृताभावे पूर्वं दधि ततः पय इति । तथा येषां केषांचिदन्येषां हविषामप्यसम्भवे सर्वत्राज्यमुपादेयं भरद्वाजमुनेर्मतादिति ।

तस्य होमोऽनादेशे ॥३८॥ अनादेशऽइति जुहोतीत्युक्ते द्रव्यान्तरस्या-

---

[1] °स्कृतोपि २. [2] ?? क्षीणमातैलमुपसेवने २. °णमाज्यं तै° २. [3] ? °दाज्यं लिंगंव्यं २. °दाज्यं लिंगं गव्यं २. [4] ? अतचोक्तं २. [5] °ड्यं २.

नादेशे ऽनुक्तौ तस्याज्यस्य होमः कर्तव्यः । तद्यथा सव्येनावृत्य दक्षिणाग्नौ जुहोत्यग्नय ऽइति सरस्वत्या इति चेति (३. ७. १८.) नमः कृतायेति जुहोतीति च (२. २. २३.) स्वाहा देवेभ्य इति जुहोति (६. ५. २२.) देवेभ्यः स्वाहेति जुहोति (६. ५. २४.) अयं न इति जुहोत्यस्मिन्नित्यादौ (८. ७. १.) सर्वत्राज्यस्य होमः कार्यः · अत्र तस्येत्यवयवलक्षणा [1] षष्ठी ।

चात्वालात्पुरीषम् ॥ ३९ ॥ धिष्ण्यनिवपनादौ [2] यत्र पुरीषेण प्रयोजनम् तत्र तत्पुरीषं चात्वालाद्ग्राह्यम् ।

आहवनीययजतयो ध्रुवायाः ॥ ४० ॥ आहवनीये ये यजतयो यागा भवन्ति आज्यहविष्का उपांशुयाजाग्रयणद्यावापृथिवीयपथ्यास्वस्त्याद्यास्ते ध्रुवायाः सकाशादाज्यमवदाय कार्याः उपस्तृणन्नभिघारयन्नाज्यस्य यजन्ध्रुवाया [3] गृह्णातीति आज्ययागार्थत्वेन ध्रौवस्य श्रवणात् · अत एव श्रुतेरुपस्तराभिघारार्थमप्याज्यं सर्वत्र ध्रुवाया एव ग्राह्यम् । तेन कर्कोक्तं स्थाल्या एवोपस्तराभिघारकरणं मन्दम् तत्र वचनाभावात् । सूत्रकारो ऽपि इडाप्राशित्राघारांश्चैके ऽइत्यनेन (४१.) इडाप्राशित्रयोर्गौणयज्ञशब्ददर्शनात्तदुपस्तरणाघारयोर्ध्रौवं विकल्पेनोपदिशन्मुख्ययज्ञेषूपस्तरणाभिघारणे ध्रौवादेव सिद्धे ज्ञापयति [4] तस्माद्ध्रुवाया एव सर्वो यज्ञः प्रभवतीति श्रुतेश्च (१. ३. २. २.) । आहवनीययजतय इत्यत्राहवनीयग्रहणं गार्हपत्ययजतिव्युदासार्थम् तेन पत्नीसंयाजेषु स्थाल्या एवाज्यं ग्राह्यम् न ध्रुवाया इति ।

इडाप्राशित्राघारांश्चैके ॥ ४१ ॥ एके शाखिनः इडायां प्राशित्रे च यदाज्यमुपस्तराभिघारार्थम् आघारौ च पूर्वोत्तरौ तदर्थं चाज्यम् ध्रुवाया एव गृह्णन्ति तत्रापि यज्ञशब्दश्रवणात् · इडायां तावत् पाकयज्ञियेव वा ऽएतदिडयाचारिषुरिति (१. ८. १. ४३.) · प्राशित्रे च तद्यथैव यज्ञस्यावदानमेवमेतदिति (१. ७. ४. ११.) · आघारयोश्च शिरो ह वै यज्ञस्येतयोरन्यतर आघारयोर्मूलमन्यतर इति [5] । अपरे त्वत्र यज्ञशब्दप्रयोगस्य स्तुतिपरत्वात्स्थाल्या एवेच्छन्ति ।

प्राञ्चावाघारौ ॥ ४२ ॥ पूर्वाघार उत्तराघारश्चैतौ द्वावप्याघारौ प्राञ्चौ

---

1) ? °यवाल° २. 2) ? धिष्ण्यविपन्नादौ २. 3) ? °यां २. 4) ? सिद्धेर्ज्ञाप° २.
5) see १. ४. ४. ३. and १०.

प्राक्संस्थौ होतव्यौ ऋजू संततौ दीर्घौ च · ऋजुमाघारयति [संततमाघारयति] दीर्घमाघारयति प्राञ्चमाघारयतीति श्रुतेः · प्राञ्चौ इति सर्वेषां धर्माणामुपलक्षणार्थम् ।

विदिशावेके ॥४३॥ एके शाखिनः आघारौ विदिशौ जुह्वति आहवनीयस्योत्तरश्रोणेरारभ्य दक्षिणांसपर्यन्तं पूर्वाघारम् दक्षिणश्रोणेरारभ्योत्तरांसपर्यन्तमुत्तराघारमिति । तथा च सूत्रान्तरम् उत्तरपश्चार्धादग्नेरारभ्याविच्छिन्नं दक्षिणातो जुहोति · तथा दक्षिणपश्चार्धादारभ्याविच्छिन्नमुत्तरतो जुहोतीति ।

आहवनीये होमाः श्रुतिसमाख्यानाभ्याम् ॥४४॥ वचनाभावे सर्वे होमाः आहवनीये कर्तव्याः । कुतः श्रुतेः यदाहवनीये जुहोतीति होममात्राधिकरणत्वेनाहवनीयस्य श्रवणात् · समाख्यानाच्च आ समन्तात् आरभ्य वास्मिन्हूयतऽइत्याहवनीय इत्यन्वर्थसंज्ञाविज्ञानादित्यर्थः । तद्यथा यूपाहुतिं जुहोति (६. १. ४.) षड्ढोतारं जुहोतीत्यादौ (६. १. ३६.) । वचनेनान्यत्रापि भवन्ति · तथा दक्षिणाग्नौ जुहोति (३. ७. १८.) आग्नी[ध्री]ये जुहोतीति (१०. २. ७.) ।

जुह्वावचने ॥४५॥ होमसाधनान्तरस्यावचने जुह्वा होमः कार्यः · तद्यथा सव्येनावृत्य दक्षिणाग्नौ जुहोति (३. ७. १८.) नमः कृतायेति कर्मापवर्गे जुहोतीत्यादौ (२. २. २३.) । कुतः समाख्यानादेव हूयतेऽनयेति जुहूरिति । एतच्च यत्र दर्शपूर्णमासतद्विकारादौ जुहूरस्ति तत्रैव जुह्वा होतव्यम् नान्यत्रेति कर्कः · परिभाषायामुपदेशात्सर्वत्रेति याज्ञिका हरिस्वामिनश्च ।

सकृद्गृहीतार्थावाप्तेः ॥४६॥ सकृद्गृहीतेत्यविभक्तिकोऽयं निर्देशः · अवचनऽइत्यनुवर्तते । अवचने सर्वत्र सकृद्गृहीतमाज्यं जुहुयात् । कुतः अर्थावाप्तेः अर्थस्य होमलक्षणस्य कार्यस्यावाप्तेः सिद्धेः सकृद्गृहीतेनाप्याज्येन होमः सिध्यत्येव · तद्यथा दक्षिणाग्नौ जुहोत्यग्नयऽइति सरस्वत्याऽइति चेति (३. ७. १८.) नमः कृतायेति जुहोतीत्यादौ (२. २. २३.) । वचनेन त्वन्यथापि भवति · यथा यूपाहुतौ चतुर्गृहीतऽ स्रुवेण वेति (६. १. ४.) षड्ढोतारं पञ्चगृहीतमित्यादि (६. १. ३५.) ।

अवषट्कारातिरेकाच्च ॥४७॥ अवषट्काराहुतौ द्वितीयस्यावदानस्यैवातिरेकात् अतिरेकप्रत्ययात् सकृद्गृहीतमेव होतव्यमिति · कथम् · तद्धि चतुरवत्तं

भवतीदं वाऽअनुवाक्याथ याज्याथ वषट्कारोऽथ सा देवता चतुर्थी यस्यै देवतायै हविर्भवतीति (१. ७. २. ७.) प्रकृत्याहातिरिक्तौ ह तदवदानं[1] यत्पञ्चममिति ज्ञापयन्नवषट्कारास्वाहुतिषु[2] पुरोऽनुवाक्याद्यभावादुक्तमध्ये एकस्या देवताया एव सद्भावात् द्वितीयमेवावदानमतिरिक्तं ज्ञापयति । तथा अग्निहोत्रे यच्चतुरुन्नेषी-द्विरुह्यैषीरथ[3] के ते द्वेऽआहुतीऽइति द्वयोरतिरेकं दर्शयति ॥ ॥ अष्टमी कण्डिका ॥८॥ ॥

अथ पद्धतिः ॥

एकप्रयोजनार्थं यत्र द्रव्यद्वयं श्रूयते यथा व्रीहिभिर्यजेत यवैर्यजेतेति तत्रो-भयोरेककार्यत्वादेकेन तस्मिन्कार्ये कृते द्वितीयेन तस्यैव करणासम्भवाद्विकल्पो व्रीहिभिर्वा यवैर्वेति । अदृष्टार्थेषु बहुषु विहितेषु सर्वेषां समुच्चयो भवति · कुतः अविरोधात् · यथाघारे ऋजुप्राग्दीर्घसंततेषु । होतृमन्त्राणामग्निमन्थनीयादी-नामदृष्टार्थत्वात्समुच्चयो भवति · अग्निस्थापनमन्त्राणां च भूर्भुवः स्वरित्येवमादीनां वचनेन समुच्चयः · होतृमन्त्रत्वेऽपि याज्यानुवाकासु समुच्चयो न भवति पुरो-ऽनुवाक्या[4] याज्या च एकस्मिन्यागे एकैका एव भवति · एकस्मिन्निमित्ते पठि-तानां सर्वेषां प्रायश्चित्तानां समुच्चयो भवति ॥ यज्ञकर्मणि प्रयुज्यमानानां मन्त्राणां तानेन एकश्रुत्यैव प्रयोगो न संहितास्वरेण नापि ब्राह्मणस्वरेण · सुब्रह्म-ण्यासामजपन्यूङ्ख्याजमानानां कर्मणि प्रयुज्यमानानामपि संहितावदेव स्वरो नैकश्रुतिः ॥ आधाने ता वै षट् दद्यात् द्वादश दद्यात् चतुर्विंशतिं दद्यादि-त्येवमाद्या दक्षिणा विकल्पेन भवन्ति न समुच्चयेन एकयैव दक्षिणाकार्यस्य कृतत्वात् । अनेकपशुसाधनके कर्मण्यूवध्यवसाधूध्रीवनिष्ठुपुरीतत्प्लीहक्लोमादीनां समुच्चयो भवति सर्वपशूनामेतानि सर्वाण्यपि प्रतिपाद्यानीत्यर्थः । सोमक्रये यानि गवादीनि दश द्रव्याणि श्रूयन्ते तेषामपि समुच्चयो भवति क्रयस्यादृष्टार्थ-त्वात् · दशभिरिति संख्योपबन्धाच्च ॥ गार्हपत्याहवनीयौ न व्यवेयात् । सर्वत्र प्रदक्षिणीकृत्याप्रदक्षिणामावृत्तिः कार्या अप्रदक्षिणीकृत्य च प्रदक्षिणामावृत्तिः

---

१) ह वदानं २· ह ववदानं २· २) ? हुत — तमव° २· ३) ? °न्नेर्षां द्विहैषी° २· ४) ? सानुवाक्या १· २· ३·

कार्येति । सर्वकर्म विहारस्योत्तरतः कार्यम् · ब्रह्मयजमानयोरासने विहारस्य दक्षिणतो भवतः · तयोर्मध्ये यजमानो वेदिं स्पृष्ट्वा पश्चादुपविशति वेदिमध्ये पादाग्रे निधायेत्यर्थः · पुरस्ताद्ब्रह्मोपविशति ॥ अनादेशे यजुर्वेदविहितस्य कर्मणोऽध्वर्युरेव कर्ता · वचनादन्योऽपि भवति यथा प्रतिप्रस्थाता मन्थिनं जुहोति · विरोधाच्चाध्वर्योरन्यः कर्ता भवति यथा पेषणेऽध्वर्योर्व्यापृतत्वाद्धिरोधात्कपालोपधानेऽग्नीत् ॥ हविष्पात्रस्वाम्यृत्विजामेकत्र समावेशे यत्पूर्वं-पूर्वम् तत्तदुत्तरं भवति यच्चदुत्तरम् तद्बहिर्भवति · ऋत्विजामपि मध्ये एकत्र समावेशे पूर्वः-पूर्वोऽत्तरो भवति उत्तर-उत्तरो बहिर्भवति · हविषामपि मध्ये पूर्वं-पूर्वं हविरुत्तरं कार्यम् उत्तरमुत्तरं बहिः ॥ प्रतपनादयोऽग्निसाध्याः संस्कारा गार्हपत्ये भवन्ति · हविःश्रपणं सर्वकर्मस्वाहवनीये गार्हपत्ये वा भवति ॥ आज्यशब्दे श्रुते सर्वत्र संस्काररहितं घृतमात्रं ग्राह्यम् · तच्चाज्यं गव्यं ग्राह्यम् कुतः मह्वीनां पयोऽसीति (४. ३.) मन्त्रलिङ्गात् । यत्र सूत्रमध्ये जुहोतीत्येतावदेवोच्यते द्रव्यं किंचिन्नोच्यते तत्र सर्वत्राज्यस्य होमः कार्यः । यत्र मध्ये पुरीषं निवपतीत्येवमादौ (८. १. ४. १०.) पुरीषेण कार्यम् तत्र पुरीषं चावालाद्ग्राह्यम् । आहवनीये (ये) यजतयः आज्यभागोपांशुयाजपथ्यास्वस्त्यादियागादयः आज्यहविष्कास्ते ध्रुवायाः सकाशादाज्यं चतुरवदायावदाय कार्याः · इडाप्राशित्राघारानप्येके ध्रुवायाः कुर्वन्ति । आघारौ प्राञ्चौ विदिशौ वा होतव्यौ · उभयपक्षेऽपि ऋजू दीर्घौ संततौ च ॥ अनादेशे सर्वे होमा आहवनीय एव कर्तव्याः · वचनादन्यत्रापि । वचनाभावे सर्वत्र होमो जुह्वा कर्तव्यः । वचनाभावे सर्वत्र सकृद्गृहीतमेव होतव्यम् ॥ ॥१॥ ,

इति प्रथमस्याष्टमी कण्डिका ॥ ॥

व्रीहीन्यवान्वा हविषि ॥१॥ हविषि विहिते सति व्रीहीन्यवान्वा प्रतीयात् ।

तस्य द्विरवघ्नति ॥२॥ तस्य हविषः पुरोडाशचरुधानासांनाय्यादिरूपस्य द्विरवघ्नति यागार्थं द्विरवखण्डयति । तस्येत्यवयवषष्ठीयम् ।

त्रिर्जमदग्नीनाम् ॥३॥ जमदग्निः प्रवरो येषां ते जमदग्नय इत्युच्यन्ते । तेषां जमदग्नीनां पञ्चार्षेयाणां त्रिरवद्यति · तथा चोपस्ताराभिघाराभ्यां पञ्चावत्तं सम्पद्यते · किं बहुना यत्र-यत्रान्येषां चतुरवत्तमाज्यभागपत्नीसंयाजप्रधानयागादौ तत्र सर्वत्र जमदग्नीनां पञ्चावत्तमेव कर्तव्यम् · पञ्चावत्तं जमदग्नीनामिति शाखान्तरात् · अग्निहोत्रहोमेऽपि तेषां पञ्चावत्तमेव पठ्यते मानवे चतुः पञ्चकृत्वो वेति · आपस्तम्बोऽपि पञ्च जमदग्नीनामिति । पित्र्यायां च प्रधानयागेषु स्वीयस्वीयहविषोर्द्विर्द्विरवदेयम् अन्येभ्यस्तु सकृत्सकृत् · कव्यवाहनयागे तु द्विरुपस्तारणं कार्यम् हविर्भ्यो वा द्विर्द्विरवदेयम् · पञ्चवदानेभ्योऽपि त्रिरवदेयमिति विशेषस्तूपरिष्टात्तत्र-तत्र[1] वक्ष्यते । अत्र त्रिर्जमदग्नीनामिति जमदग्निग्रहणमुपलक्षणार्थम् अन्येषामपि पञ्चावत्तं स्मर्यते · तथा हि जमदग्निवत्सविदा वार्ष्टिषेणास्तथैव[2] च पञ्चावत्तिन एतेऽन्ये सर्वे चतुरवत्तिन इति ।

पश्चात्तृतीयम् ॥४॥ तत्तृतीयमवदानं हविषः पश्चाद्भागादवदेयम् प्रथमद्वितीये तु मध्यात्पूर्वार्धादिति वक्ष्यते (६.) ।

सर्वेषां वोभयमविधानात् ॥५॥ वा विकल्पे । सर्वेषामिति जमदग्नीनां तद्व्यतिरिक्तानां चोभयं चतुरवत्तं पञ्चावत्तं वा भवति । कुतः अविधानात् जमदग्नीनामेव पञ्चावत्तं भवतीति नियमस्याविधानात् । अविशेषेण हि श्रूयते (१. ७. २. ७.) तद्धि चतुरवत्तं भवतीति अतो पञ्चावत्तमेव भवतीति (८.) । शाखान्तरे तु पञ्चावत्तं जमदग्नीनामिति · तेन जमदग्नीनां पञ्चावत्तमेव नियतम् इतरेषां चतुरवत्तं वा पञ्चावत्तं वेति ।

मध्यात्पूर्वार्धाच्चासम्भिन्दन्नङ्गुष्ठपर्वमात्रमवदानम् ॥६॥ हविषो मध्याद्धविषः पूर्वार्धाच्चाङ्गुष्ठमात्रमङ्गुष्ठपर्वप्रमाणं तिरश्चीनमवदानमवद्यति · किं कुर्वन् असम्भिन्दन् अवदानयोः परस्परं सम्भेदं संगतिं मर्यादाभङ्गमकुर्वन्नित्यर्थः · अवदानयोः सम्भेदे कृते मर्यादाभङ्गः तद्भङ्गे च मध्यपूर्वार्धसंमोहो मा भूदिति यत्नः कार्यः ।

मात्रावद्दधिपयसोः ॥७॥ दधिपयसोरपि अवदानं मात्रावदवदेयम् अङ्गु-

---

1) ? °त्तत्रतत्र २. 2) sic! आर्ष्टि°?

ष्ठमात्रमेवेत्यर्थः · तयोर्हि द्रवत्वात्स्रुवेणावदानम् सामर्थ्यात् स्रुवपुष्करस्यैतावन्मात्रपरिमाणत्वात् ।

आद्यन्तयोराज्यम् ॥ ८॥ हविराद्यवदानस्याद्यन्तयोरित्यादौ अन्ते चाज्यमवदेयम् स आज्यस्योपस्तीर्य द्विर्हविषोऽवदायाथोपरिष्टादाज्यस्याभिघारयति सैषाज्येन मिश्राहुतिर्हूयतऽइति (१. ६. १. २१.) श्रुतेः · तच्च ध्रुवाया अवदेयम् उपस्तृणन्नभिघारयन्नाज्यस्य यजन्ध्रुवायां गृह्णातीति वचनात् ।

एकप्रत्यवायश्च स्विष्टकृतः ॥ ९॥ एकप्रत्यवायं प्रधानावदानापेक्षयैकेनावदानेनोनं हीनं स्विष्टकृद्यागस्यावदानं भवति · यस्य प्रधानयागे द्विरवदानम् तस्यैकं स्विष्टकृद्यागे यस्य त्रिस्तस्य द्वेऽइति ।

द्विश्चाभिघारणम् ॥ १०॥ स्विष्टकृति अवदानानन्तरमुपरिष्टाद्द्विरभिघारणं भवति · वरुणप्रघासादौ तथानुवादात् स सर्वेषामेव हविषामध्वर्युः सकृत्सकृदवद्यत्यथैतस्याऽएव पयस्यायै प्रतिप्रस्थाता सकृदवद्यत्यथोपरिष्टाद्द्विराज्यस्याभिघारयतीति (२. ५. २. ३१.) · गृहमेधीयेऽपि स्थालीपक्षे अथास्य चरोः सकृदवद्यत्यथोपरिष्टाद्द्विराज्यस्याभिघारयतीति (२. ५. ३. १५.) च ।

अवदाय पत्यभिघारणं प्राक्स्विष्टकृतः ॥ ११॥ अवदाय प्रधानार्थं हविषोऽवदानं गृहीत्वा हविषो यावद्भ्यः प्रदेशेभ्योऽवदानग्रहणं कृतं भवति तत्र प्रत्यभिघारणमाज्येन कर्तव्यम् · स्विष्टकृतः प्राक् स्विष्टकृदर्थावदानानन्तरं तु हविषः प्रत्यभिघारणं न भवति · तस्माद्यस्य कस्य च हविषोऽवद्यति पुनरेव तदभिघारयति स्विष्टकृतऽएव तत्पुनराप्याययत्ययातयाम करोत्यथ यदा स्विष्टकृतेऽवद्यति न ततः पुनरभिघारयति नो हि ततः कां चन हविषोऽग्नावाहुतिश्च होष्यन्भवतीति (१. ५. ३. २५.) श्रुतत्वात् · तथा वरुणप्रघासेषु वारुण्याद्यवदानानन्तरं श्रूयते (२. ५. २. ३७.) प्रत्यनक्त्यवदानेऽअतिक्रामतीति · न प्रत्यनक्त्यवदानानि नातिक्रामतीति (२. ६. १. ३१.) श्रवणात्प्रत्यवदानमभिघारणं[1] कार्यम् ।

सर्वहुत एककपालः ॥ १२॥ एकस्मिन्कपाले संस्कृतः एककपालः द्यावापृथिवीयकायवैश्वकर्मणसौर्यादिकः स सर्वहुतः कर्तव्यः । अथैतश्च सर्वमेव

---

1) ? °त्प्रसंत्यंतदानं २. °त्प्रत्यंतदानं २. Are we perhaps to read: °त्प्रसङ्गेन प्रत्यवदान°?

जुह्वोति न स्विष्टकृतेऽवद्यतीति (२. ४. ३. १.) द्यावापृथिवीयस्य सर्वहुतत्वश्रवणात् तत्प्रकृतिद्याविककपालानाम् · तत्र चतुरवत्तत्वसम्पत्तये ऽपरिष्टाद्विरभिघारणं कर्तव्यम् पञ्चावत्तिनां तु द्विरुपस्तरणं द्विरभिघारणं च ।

अनुवाचनप्रैषो यथादेवतममुष्मा अनुब्रूहीति ॥१३॥ अनुवाचनार्थं प्रैषोऽनुवाचनप्रैषः पुरोऽनुवाक्यार्थः प्रैषः · स यथादेवतम् या-या देवता यस्मिंस्त्यागे भवति तद्वाचिपदममुष्मा इति-वच्चतुर्थ्यन्तं[1] प्रयुज्यानुब्रूहीति एवं प्रैषः कर्तव्यः · अग्नयेऽनुब्रूहि सोमायानुब्रूहीत्येवम् ।

आश्राव्यप्रैषे च ॥१४॥ आश्राव्येत्याश्रावणानन्तरं यत्र मैत्रावरुणस्य प्रैषः क्रियते तत्रापि देवतापदं चकारादमुष्मै इत्येवं चतुर्थ्यन्तमेव प्रयोज्यम् · अग्नये प्रेष्य सोमाय प्रेष्येत्येवम् ।

अमुं यजेति ॥१५॥ यत्राश्रावणानन्तरं मैत्रावरुणस्य प्रैषो न भवति तत्रामुं यजेत्येवं द्वितीयान्तं देवतापदं प्रयोज्यम् · तद्यथा अग्निं यज सोमं यजेति ।

प्रैषानुवाचने षष्ठी वपायै धानासोमेभ्य इति परिहाप्य ॥१६॥ प्रैषसम्बन्ध्यनुवाचनं प्रैषानुवाचनम् · यत्र पुरोऽनुवाक्यानन्तरं मैत्रावरुणस्य प्रैषो भवति तत्र पुरोऽनुवाक्याप्रैषे द्रव्यवाचिनि शब्दे षष्ठी विभक्तिर्भवति देवतावा[चिनि] चतुर्थी उक्तैव · तद्यथा अग्नीषोमाभ्यां छागस्य हविषोऽनुब्रूहीति । किं सर्वत्राप्येवम् · नेत्याह वपायै धानासोमेभ्य इति परिहाप्य · इमौ प्रैषौ (३. ८. २. २६. ४. ४. ३. १.) वर्जयित्वा · अत्रानुवाचने द्रव्यवाचिनि शब्दे चतुर्थी विभक्तिः इतोऽन्यत्र षष्ठीति ।

असावित्यपनोदे ॥१७॥ यत्र प्रैषे असाविति यष्टुर्नामपदं भवति यथा पुनरभ्युन्नीतेषु नामग्राहं यज-यजेति प्रशास्त्रादीनिति (१. ११. ७.) प्रशास्तर्यज ब्रह्मन्यजेत्यादि तत्र देवताविभक्तिरपनोदे अपनये वर्तते देवताविभक्तिस्तस्मात्प्रैषादपनीयते न प्रयुज्यत इत्यर्थः । अथवा यत्र मन्त्रमध्ये असावित्येवं सर्वनामपदं पठितं भवति यथा सम्राडयमसाविति (१४. ५. २५.) बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसाविति (१. ३०.) इममुष्य पुत्रममुष्यै पुत्रमित्यादि (१. ४०.)

---

[1] ? इति कचतु° २. इति चतु° २.

च तत्र सर्वनामपदमपनोदे अपनये वर्तते · तस्यापनोदमपनयं निष्काशनं कृत्वा तत्स्थाने१) यद्विवक्षितं तस्य नाम्नः प्रक्षेपः कार्यः · तद्यथा सम्राडयं यज्ञदत्तशर्मा साम्राज्येनाभिषिञ्चामि यज्ञदत्तशर्माणमिति इममसुष्य पुत्रमित्यत्र रामं दशरथस्य पुत्रं कौशल्यायाः पुत्रमित्येवं प्रयोज्यम् ।

सवषट्कारासु तिष्ठन्दक्षिणात उदङ्प्राङ्वषट्कृते ॥१८॥ वषट्कारेण सह वर्तन्त इति सवषट्काराः · तास्वाहुतिषु अध्वर्युर्दक्षिणतो वेदेर्दक्षिणभागे उदङ्प्राङ् इत्यैशानदिगभिमुखोऽवस्थितो वषट्कृते होत्रा वौषडित्युक्ते सति जुहोति आहवनीयमध्ये हविः प्रक्षिपति न तु वषट्कारात्पुरा ।

सह वा ॥१९॥ अथवा वषट्कारेण सहैव जुहोति युगपदित्यर्थः · तस्मादु सह वैव वषट्कारेण जुहुयाद्वषट्कृते२) वेति (१. ७. २. १२.) उभयथा श्रवणात् । वषट्कारात्पूर्वं होमे निन्दा च श्रूयते (१. ७. २. १३.) देवपात्रं वा एष यद्वषट्कारस्तद्यथा पात्र उद्धृत्य प्रयच्छेदेवं तदथ यत्पुरा वषट्काराज्जुहुयाद्यथाधो भूमौ निदिग्धं३) तदमुया स्यादेवं तदिति · तथा४) तद्यथा योनौ रेतः सिञ्चेदेवं तदथ यत्पुरा वषट्काराज्जुहुयाद्यथायोनौ रेतः सिक्तं तदमुया स्यादेवं तदिति (१४.) · अमुयेति वृथेत्यर्थः । तस्माद्वषट्कारेण सह वा होमो वषट्कारानन्तरं वेति सिद्धम् । यत्र वरुणप्रघासगृहमेधीयशुक्रामन्थिप्रचारादौ पुनर्वचनम् वषट्कृते जुहुतो (२. ५. २. ३१.) वषट्कृते जुहोतीति (२. ५. ३. ७.) तत्र तस्यैव नियमो न सहेति ।

उभयत आज्यं हविषः ॥२०॥ होमकाले हविष उभयतः आज्यं होतव्यम् पूर्वमल्पमाज्यं हुत्वा ततो हविर्हूयते पुनश्चोपर्याज्यमित्यर्थः ।

सह वा ॥२१॥ अथवा आज्यं हविश्चोभयं सहैव युगपदेव हूयते नोभयत आज्यमिति · प्रदग्धाहुतिर्ह वाऽअन्योऽध्वर्युरिति (११. ४. २. १६.) प्रकृत्य अथ हैना एष संतर्पयति योऽयमाज्यं हुत्वावदानानि जुहोत्यथ पुनरन्तत आज्येनाभिजुहोत्येष हैनाः संतर्पयतीति · तथा तदु होवाच याज्ञवल्क्यो यद्दा

१) ? °ष्कारानं कवात्‍यस्याने २. २) जुह्वते वेत २. ३) ! यथायोनौ रेतः सिक्तं २. ४) तद्यथा २.

ऽउपस्तीर्यावदायाभिघारयति[1] तदेवैनाः संतर्पयतीति (१७.) च श्रवणात् ॥ ॥

नवमी कण्डिका ॥ १ ॥

अथ पद्धतिः ॥

व्रीहीणां यवानां वा हविः सर्वत्र भवति · व्रीह्याग्रयणानन्तरं यवाग्रयणा-दर्वाग्व्रीहिभिरेव दर्शपूर्णमासौ कार्यौ यवाग्रयणानन्तरं च प्राग्व्रीह्याग्रयणाद्य-वैरेव · अथवा सदा व्रीहिभिरेवेत्यापस्तम्बः · दर्शपूर्णमासयोरेवायं द्रव्यनियमः विकृतिष्वनियमः । तस्य हविषो द्विरवद्यति · पुरोडाशचर्वादेर्मध्यप्रदेशादेकमङ्गु-ष्ठपर्वमात्रं तिरश्चीनमवदानमवद्यति तथैव द्वितीयं हविःपूर्वभागात् · कथम् असम्भिन्दन् अवदानयोर्मर्यादाभङ्गमकुर्वन्नित्यर्थः । पञ्चार्षेयाणां जमदग्नीनां जमद-ग्निप्रवराणां च हविषस्त्रिरवद्यति एवं मध्यात् द्वितीयं पूर्वभागात् तृतीयं पश्चा-द्भागात् · यत्र-यत्र चतुरवत्तं दृश्यते आज्यभागपत्नीसंयाजोपांशुयाजाग्निहोत्रहो-मादावपि तत्र सर्वत्र जमदग्नीनां पञ्चावत्तमेव भवति · अथवा जमदग्नीनां पञ्चा-वत्तमेव इतरेषां चतुरवत्तं पञ्चावत्तं वा । दधिपयसोरपि स्रुवेणावदानग्रहणम् अतस्तदवदानमप्यङ्गुष्ठपर्वमात्रमेव भवति । हविषोऽवदानात्प्रथममाज्यं सकृदव-दाय ततो हविरवदेयम् पुनरप्यन्ते आज्यं सकृदेवावदेयम् । स्विष्टकृति तु प्रधानावदानादेकोनं हविषोऽवदानं भवति · येषां प्रधानयागे अवदानद्वयम् तेषां स्विष्टकृत्येकमवदानम् येषामवदानत्रयं प्रधानयागे तेषां हविष उत्तरार्धादेव स्विष्टकृत्यवदानद्वयम् · उपस्तारः सकृत् उपर्यभिघारणं द्विवारं भवति । हविषो ऽवदायावदानयोः प्रत्यभिघारणम् · स्विष्टकृदवदानानन्तरं हविषः प्रत्यभिघारणं न भवति । एककपालः पुरोडाशः सर्वहुतः कर्तव्यः ॥ चतुर्थ्यन्तेन देवतापदे-नानुवाचनप्रैषः कर्तव्यः अग्नयेऽनुब्रूहीत्येवं सोमायानुब्रूहि । आश्रावणानन्तरं यत्र मैत्रावरुणः प्रेष्यते तत्रापि चतुर्थ्यन्तमेव देवतापदं प्रयोज्यम् अग्नये प्रेष्य सोमाय प्रेष्येत्येवम् · आश्रावणानन्तरं यत्र मैत्रावरुणस्य प्रैषाभावस्तत्र द्वितीयान्तं देवतापदमुच्चारणीयम् अग्निं यज सोमं यजेत्येवम् । प्रैषसम्बन्धिन्यनुवाचने द्रव्ये षष्ठी विभक्तिर्भवति यथेन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहीति (६. ८. १४.)

1) °दायाघा° २.

वपायै धानासोमेभ्य इति प्रैषद्वयं वर्जयित्वा ॥ यत्रासौ यजेति विहितं भवति यथा नामग्राहं यज-यजेति प्रशास्त्रादीनिति (१. ११.७.) तत्र देवतापदं न प्रयोज्यम् प्रशास्तर्यज पोतर्यज नेष्टर्यजेत्येव वक्तव्यम् · अथवा यत्र-यत्र मन्त्रे असाविति सर्वनामपदं श्रूयते तत्र-तत्र तत्तत्पदमपनीय तस्य स्थाने तद्वाच्यस्य नामोच्चारणीयम् यथेमममुष्य पुत्रमित्यादौ (१.४०.) ॥ सवषट्कारास्वाहुतिषु वेदेर्दक्षिणाभागे उदङ्प्राङ् इतीशानाभिमुखस्तिष्ठन्वषट्कारानन्तरं वषट्कारेण सह वा जुहुयात् ॥ यत्राज्यमिश्रं हविस्तत्र पूर्वमाज्यं हुत्वा ततो मध्ये हविर्हुत्वा पुनरुपर्याज्यं जुहुयात् · अथवा सहैव सर्वमाज्यं हविश्च जुहुयात् ॥ ॥९॥

इति प्रथमस्य नवमी कण्डिका ॥

अथेदं विचार्यते । अग्नयेऽनुब्रूहि (३. १.१.) प्रोक्षणीरासादय (२. ६.३४.) अग्नीदग्नीन्विहर बर्हि स्तृणीहीत्येवमादयः (१. ७.५.) श्रूयन्ते · ते किं कर्मचोदका विधय उत मन्त्रा इति · प्रैषाणां प्रस्तुतत्वात्तद्विषयत्वमेव [1] चिन्त्यते । नन्वेषां मन्त्रत्वं प्रागुक्तमेव ऋचो यजूंषि सामानि निगदा मन्त्रा इति (१.३.१.) · सत्यम् · उक्तम् तथापि निगदानामितरमन्त्रेभ्यः किंचिद्वैलक्षण्यमस्ति · तेन तदेवाक्षिप्य स्थिरीक्रियते · किं वैलक्षण्यमिति चेत् तदभिधीयते ·

वर्तमानोपदेशाच्चोदनाशब्दाच्छ्रुत्यर्थाभावात्तवै [2] चेति [3] वचनान्निर्देशात्कर्मचोदकः ॥१॥ अग्नीदग्नीनित्यादिः कर्मचोदकः कर्मविधायकः विधिवाक्यमित्यर्थः न तु मन्त्रः । कुतः वर्तमानोपदेशात् एवमादयो वर्तमानमर्थमनुष्ठेयत्वेन यत उपदिशन्ति · अग्निविहरणं कर्तव्यं स्तरणं च कर्तव्यमित्येवमुपदिश्यते । किं च चोदनाशब्दात् · अपि च एषु प्रैषेषु चोदनाशब्दो विधिशब्दोऽस्ति · विधौ हि लोट् स्मर्यते लोट्चेति (पाणि॰ ३. ३. १६२.) · लोण्मध्यमपुरुषवचनानि चैतानि विहर स्तृणीहि आसादयेत्यादीनि · तस्मादपि कर्मचोदका एते । श्रुत्यर्थाभावात् · अपि च विधिविभक्तिश्रवणेऽपि यदि विधित्वं नाश्रीयते तर्हि श्रुत्यर्थाभावः श्रुतार्थहानिः स्यात् । तवै चेति वचनात् · अपि

[1] °षयमेव २. [2] ?? वर्तमानाप° १. २. [3] Thus १. त्वेति २.

च इदमपरं मन्त्रतो [1] वैलक्षण्यम् यत्प्रैषास्तवैवचनाः पठ्यन्ते ब्राह्मणं तर्पयितवै (१. ७. ३. २८.) अश्वमानेतवै (२. १. ४. १६.) प्राश्चं कर्तवै (१२. ४. ३. ६.) इत्यादयः · मन्त्राश्च इतिवचनाः कर्मणे वां वेषाय वामिति (२. ३. १०.) उरु वातायेति (२. ३. १६.) इषे त्वेति ऊर्जे त्वेत्यादयः (४. २. १.) · अतोऽप्यमन्त्रत्वम् [2]। निर्देशात् · अपि च मन्त्रास्तु वेदे निर्दिष्टा एव परिगणिता एव अग्ने बुध्य मन्त्रं मे गोपाय यमृषयस्त्रैविदा [3] विदुः ऋचः सामानि यजूंषीति · निगदास्तत्रानिर्दिष्टाः [4] तस्मादमन्त्रत्वम् · अथवा निर्देशात् विधिविभक्तियोगाछकुवन्त्येते कर्म निर्देष्टुं विधातुम्। तस्मादेवंजातीयकः कर्मचोदकः इति पूर्वः पक्षः। सिद्धान्तमाह ·

मन्त्रो वा समभिव्याहारात् ॥२॥ अग्नीदग्नीनित्येवमादिको मन्त्र एव प्रत्येतव्यो न कर्मचोदकः। वाशब्दः पूर्वपक्षनिरासे। कुतः समभिव्याहारात् य एभिरर्थोऽभिधीयते तस्य वाक्यान्तरेण समभिव्याहारात् विधानादित्यर्थः विहृत्यग्नीदग्नीन्स्तृणाति बर्हिरित्यादिना (४. २. ५. ११.) · यद्येते कर्मचोदका भवेयुस्तदा वाक्यान्तरैरेषामर्थो न विधीयेत विधीयते च तस्मान्मन्त्रा एवैते न कर्मचोदका इति · न च विहितस्य पुनर्विधानं युज्यते अभिधानं तु सम्भवति तस्मान्मन्त्रा एव। अथवा अयमर्थः · समभिव्याहारात् · प्रयोगकाल एषां समभिव्याहार उच्चारणं विधीयते अथाह प्रोक्षणीरासादयेति (१. २. ५. २१.) अथ स्तुत एतां वाचं वदत्यग्नीदग्नीन्विहरेत्यादि (४. २. ५. ११.) · यद्येते विधयः स्युस्तर्ह्युच्चारणमेषां न विदधीत विधत्ते च तस्मान्मन्त्रा इति। वर्तमानोपदेशकत्वं [5] च मन्त्रत्वेऽपि न विरुध्यते। यदुक्तम् चोदनाशब्दाच्छ्रुत्यर्थाभावादिति तन्मन्त्रत्वेऽपि न विरुध्यते · न चायं विधौ लोट् किंतु प्राप्तकाले अग्नीधं प्रत्यध्वर्युर्ब्रूते [6] हे अग्नीत् त्वमग्नीन्विहर तव अग्निविहरणस्य प्राप्तः काल इति। तवै चेतिवचनत्वं चानैकान्तिकम् · मन्त्रा अपि तवैवचनाः सन्ति कन्या-इव वहतुमेतवा उ इति (१७. ३७.) · मन्त्राश्चानितिवचनाः स जुहोत्येष स्य वाजीत्यादयः (५. १. ५. १२.) · अतस्तद्वैलक्षण्यं नास्तीति। यजुषां निर्देशान्निगदा

[1] मंत्रो २. मंत्रेतो २. [2] ? अथोतोयम॰ २. अतोयम॰ २. [3] ॰विदो २. [4] ? स्तत्र निर्दि॰ २. [5] ? ॰नापदे॰ २. [6] ? ॰र्ब्रूते २.

अपि निर्दिष्टा एव · तेन निगदानां पृथगनिर्देशादमन्त्रत्वमित्येतदपि निरस्तम् । तस्मादेवंजातीयका मन्त्रा एवेति सिद्धम् ।

अर्थप्रसंख्यया द्रव्योपकल्पनम् ॥ ३ ॥ अर्थः प्रयोजनं कार्यमित्यर्थः प्रकर्षेण संख्यानं गणनं प्रसंख्या अर्थस्य प्रसंख्या अर्थप्रसंख्या · तया अर्थप्रसंख्यया प्रयोजनपरिगणनया द्रव्योपकल्पनम् द्रव्याणां शूर्पाग्निहोत्रहवण्यादीनामुप समीपे कल्प[नं] स्थापनं कर्तव्यम् · करिष्यमाणे कर्मणि उपयोक्ष्यमाणानि सर्वाणि द्रव्याणि हृदि विमृश्य गणयित्वा कर्मारम्भात्प्रागेवानीय समीपे स्थापनीयानि अन्यथा कालविलम्बेन प्रधानकालबाधः स्यादिति ।

चर्माण्युत्तरलोमानि प्राग्ग्रीवाणि ॥ ४ ॥ चर्माणि कृष्णाजिनाधिषवणशार्दूलचर्मादीनि उत्तरलोमानि प्राग्ग्रीवाणि च स्तरणीयानि · पितृयज्ञे पित्र्यायां चोदग्ग्रीवाणि [1] दिग्विपर्ययात् । उत्तराणि उपरिष्टाद्भागवर्तीनि लोमानि येषां तान्युत्तरलोमानि · प्राची ग्रीवा येषां तानि प्राग्ग्रीवाणि · तदुत्तरतः पुरस्तादुत्तरलोम प्राचीनग्रीवमुपस्तृणातीत्येवं तत्र-तत्र श्रुतत्वात् (१. ३. ४. १४.) ।

अवरोक्तमुत्तरं हविषि ॥ ५ ॥ यदवरोक्तं पश्चादुक्तम् तद्देशतः कालतश्चोत्तरं प्रत्येतव्यम् · यत्पूर्वं पठितं तस्य पूर्वं ग्रहणम् दक्षिणतः अर्पणम् आसादनं च यच्च पश्चात्पठितं तस्य पश्चाद्ग्रहणम् उत्तरतः अर्पणम् आसादनं चेति विकृतौ तथैवानुवादात् · तथा च महापितृयज्ञे (२. ६. १. १७.) स तत्र जुहूमासादयत्यथ पूर्वामुपभृतमथ ध्रुवामथ पुरोडाशमथ धाना अथ मन्थमिति अत्र दिग्विपर्ययेण प्राच्येवोत्तरा तेनैवमनूच्यते ।

एकद्रव्ये साज्ये वेदेनोपग्रहणम् ॥ ६ ॥ साज्ये आज्यसंयुक्ते एकद्रव्ये एकस्मिन्स्रुक्स्रुवाज्यस्थाल्यादिके द्रव्ये दक्षिणहस्तेन गृहीते सति तस्य सव्येन वेदेनोपग्रहणं कर्तव्यम् । दक्षिणहस्तस्थस्य साज्यस्यैकद्रव्यस्य हस्तकम्पनादिनाज्यस्कन्दनवारणार्थं सव्यहस्तगृहीतवेदेनाधारकरणमुपग्रहणमुच्यते · यथा दशापवित्रेणोपगृह्णाति [2] (४. २. २. ११.) यथा च घर्मे (१४. २. १. १७.) उपयमन्योपगृह्णातीति । एकद्रव्यऽइत्युपदेशाज्जुहूपभृतोर्द्वयोर्ग्रहणे द्वयोरपि हस्तयोस्तत्र व्या-

1) ?? पित्र्यायांचोदग्ग्रीवा २. 2) °णाग्रयणमुप° २.

पृतत्वेन स्थिरत्वात्कम्पनस्कन्दनशङ्काभावान्न सव्येन वेदोपग्रहः · अत एकद्रव्य ऽइत्यनेनानेकद्रव्ये वेदोपग्रहणं वार्यते ।

स्फ्येनान्यत्र ॥७॥ आज्यादन्यत्रान्येनोदकपुरोडाशादिद्रव्येण द्रव्यवत्येकद्रव्ये प्रोक्षणीप्रणीताचमसपुरोडाशपात्र्यादौ दक्षिणहस्तस्थे स्फ्येन सव्येन उपग्रहणं कर्तव्यम् स्कन्दनवारणार्थमाधारः कर्तव्यः । अत्र केचिदेवं व्याचक्षते · एकद्रव्ये साज्यऽइत्येवंविधविषयादन्यत्र सर्वत्र स्फ्येनोपग्रहणं कर्तव्यम् · परिस्तरणपर्युक्षणोपस्थानजपव्रतग्रहणादौ कर्ममात्रे यत्राज्यसम्बन्धो नास्ति ।

कुशैरसत्सु ॥८॥ असत्सु स्फ्यवेदद्वितीयद्रव्यलक्षणेषूपग्रहेषु कुशैरुपग्रहणं सर्वत्र कर्तव्यम् · तदुक्तम् सव्यः सोमग्रहः कार्यो दक्षिणः सपवित्रक इति · तद्यथा ग्रहहोमादौ स्फ्यस्य वचनेनाग्नीद्धस्तस्थत्वादध्वर्योः कुशैरुपग्रहणम् । वेदस्यासद्भावस्तु करणात्प्राग्वा विमोकादूर्ध्वं वा अन्यत्रव्यापाराद्वा · स्फ्यस्यान्यत्रव्यापारादेव · द्वितीयद्रव्यं तु वाचनिकं क्वचिद्भवति । केचित्तु स्फ्यस्यापि जुह्वा-इव दर्शपूर्णमासतद्विकारेष्वेव विनियोगमिच्छन्ति तत्रैव स्फ्यस्य दृष्टत्वात् नान्यकर्मस्वग्निहोत्रादिष्विति · अपरे त्वेवं व्याचक्षते असत्सु द्रव्येषु कुशैरुपग्रहणमिति ।

पाणिभ्यां जुहूं परिगृह्योपभृत्याधानमादानकालेऽसञ्ह्लादयन्[1] ॥९॥ स्रुचोरादानकाले पाणिभ्यां द्वाभ्यां हस्ताभ्यां जुहूं परिगृह्याग्रमार्गेणानीयोपभृति उपभृत उपरि आधानं निधानं स्थापनं करोति · किं कुर्वन् असंह्लादयन् असंशिञ्जयन् परस्परं संघट्टनेन शब्दमकारयन्नित्यर्थः · अथातः स्रुचोरादानस्येति (११. ४. २. १.) प्रकृत्य इत्थमेव कुर्यादुभाभ्यामेव पाणिभ्यां जुहूं परिगृह्योपभृत्यधिनिदध्यादिति (२.) · तथा तेऽअसञ्शिञ्जयन्नाददीतेति (२.) च श्रवणात् ।

वाच्यफलेषु स्वर्गः सामर्थ्यात् ॥१०॥ वाच्यं वक्तव्यं फलं येषु तानि वाच्यफलानि अनुक्तफलानि विश्वजिता यजेताभिजिता यजेतेत्यादीनि । तेषु चिन्त्यते · किमेषु फलमस्ति उत नास्ति यदा चास्ति तदा यत्किंचिदुत स्वर्ग इति संदेहे फलाश्रवणान्नास्ति फलमिति प्राप्ते इदमुच्यते । वाच्यफलेषु

1) Thus १. °ह्लदे° २. °ह्लाद° २.

अश्रुतफलेषु विश्वजिदादिषु स्वर्गः फलत्वेन कल्पनीयः । कुतः सामर्थ्यात् एव-मेतानि वाक्यानि समर्थानि संगतार्थानि भवन्ति · इतरथा साकाङ्क्षाण्यनर्थान्येव स्युः · न च वेदे मात्रस्य वैयर्थ्यमिष्यते · यच्च साकाङ्क्षं वाक्यं भवति तत्पदान्त-रमध्याहृत्यानुषज्य वा निराकाङ्क्षीकरणीयम् . ततश्च तत्सार्थकं भवति · तेनैषु वाक्येषु स्वर्गकामपदानुषङ्गः कार्यः विश्वजिता यजेत स्वर्गकाम इति । ननु पुत्रकामादिपदानुषङ्गः किमिति न क्रियते · उच्यते · यद्धि सर्वैरभिलष्यते तस्यै-वानुषङ्गो युज्यते स्वर्गश्च सर्वैरप्यभिलष्यते · अतस्तदेवानुषज्यते नान्यानि पुत्रकामादिपदानि ।

एककर्मणि गुणविशेषे फलविशेषः ॥११॥ एकस्मिन्कर्मणि गुणविशेषे वैकल्पिके अङ्गाधिक्ये कृते सति फलविशेषो भवति । तद्यथा · अग्न्याधेयं पूर्णा-हुत्यन्तमिष्ट्यन्तं च · तत्र पूर्णाहुत्यन्तपक्षादिष्ट्यन्तपक्षे फलभूयस्त्वम् · इष्ट्यन्तपक्षे ऽपि षड्दक्षिणापक्षाद्द्वादशदक्षिणापक्षे फलभूयस्त्वम् · तस्मादपि चतुर्विंशतिद-क्षिणापक्षे फलाधिक्यमिति · अत्र च फलाधिक्यमग्नीनां महावीर्यत्वम् तेषु च क्रियमाणानामुत्तरकर्मणामपि वीर्यवत्तरत्वमिति · एवं सर्वत्राङ्गाधिक्ये फलाधिक्यं द्रष्टव्यम् अन्यथाधिकगुणाम्नानस्य वैकल्यप्रसङ्गात् · असति च विशेषे को नामाधिके क्लेशावहेऽङ्गसंघे प्रवर्तेत · तस्मादङ्गभूयस्त्वात्फलभूयस्त्वं भवत्येव ।

दानवाचनान्वारम्भणवरवरणव्रतप्रमाणेषु यजमानं प्रतीयात् ॥१२॥ एतेषु दानादिषु प्रमाणान्तेषु यजमानं कर्तारं प्रतीयात् । दाने तावत् अन्वाहार्यं ददा-ति तस्मादग्नीधे प्रथमाय दक्षिणां ददातीत्यादौ (४. ३. ४. २०.) । आ वो देवास इति वाचयति (७. ३. ६.) रेवति यजमानऽइति वाचयतीत्यादौ (६. ५. ११.) सर्वत्र यज-मानं वाचयतीति ज्ञेयम् । आश्विनं गृह्णात्यन्वारब्धे वा (१. ७. ८.) पुरीषं निवपति स्फ्येनान्वारब्धे (८. ६. १५.) इत्यादावन्वारब्धे [यजमानऽ] इति ज्ञेयम् । वर[वर]णं वरप्रार्थनम् · वरं वृत्वा ददाति चेत्यादौ (१. ४. ३६.) तत्र वरवरणम् इदं स्यादित्य-भीष्टस्य प्रार्थनं यजमानः करोति · अथवा वरशब्देन वरवरणम् वरणशब्देन ऽर्त्विग्वरणम् तदपि यजमानः करोति । व्रतशब्देन शास्त्रतो नियम उच्यते सत्यवदनाधःशयनपयोव्रतादिकः · तस्यापि यजमान एव कर्ता । प्रमाणं चाग्नि-

खरवेदिशालासदोहविर्धानाग्निचित्रप्रभृतीनाम् · तदपि यजमानसम्बन्धिनारत्न्यादिना कर्तव्यम् ।

खातलूनछिन्नावहतपिष्टदुग्धदग्धेषु यजुष्क्रियासम्भवात्[1] ॥ १३ ॥ खाते यूपावटोपरवादौ लूने बर्हिषि छिन्ने यूपे अवहतेषु व्रीहिषु[2] पिष्टेषु तण्डुलधानादिषु दुग्धे पयसि दग्धेषु महावीरेष्टकोखादिषु · एतेषु खातादिषु लोकसिद्धेषूपादीयमानेषु यजुःक्रिया न भवति · कुतः द्वाराभावात् क्रियाद्वारको हि मन्त्र इति एतच्चासम्भवविषयं द्रष्टव्यमिति कर्काचार्याः ॥ नारायणभाष्ये एतेषु यजुःक्रिया कर्तव्या · कुतः असम्भवात् · यदा दैवान्मानुषाद्वा प्रतिबन्धादेतेषां यथाश्रुतं करणं न भवति तदा सगुणासम्भवे नित्यानां यथाशक्तिगुणोपेतानामप्यवश्यकर्तव्यत्वादेतानि लोकसिद्धान्यप्युपादेयानि · तदेतेषु यजुःक्रिया कर्तव्या यजुर्युक्ता क्रिया यजुःक्रिया तावन्मात्रस्य लोकसिद्धत्वाभावात् ॥ · याज्ञिकास्त्वेवमाहुः · एतेषु लोकसिद्धेषु गृहीतेष्वपि यजुःक्रिया यजुर्युक्ता क्रिया पुनर्यथा कथंचित्कर्तव्या · कुतः [सम्भवात्] सम्भवति हि यथा कथंचिद्यजुःक्रिया · अथवा असम्भवात् अन्यस्याः क्रियायाः कर्ममध्ये असम्भवात् · यदा च पशौ यूपाहरणार्थं संनिकृष्टेऽलाभात् देशान्तरे विप्रकृष्टे गम्यते तदा प्रधानकालविरोधो भवति · यदा चैकदीक्षापन्नः तदा महावीरोखादिकमेकेनाह्ना निष्पादयितुं न शक्यते · एवमाद्यसम्भव उदाहरणीयः ॥ तदुक्तं मण्डनमिश्रैः छिन्नं लूनं च पिष्टं च सांनाय्यं मृन्मयं तथा लोकसिद्धं गृहीतं चेन्मन्त्रा जाप्याः[3] कठाशयात् छिन्नादि लोकसिद्धं चेदाह्रियेत क्रतुं प्रति तत्तन्मन्त्रजपं प्राह भरद्वाजः कृताकृतम् · तथा छिन्ने चावहते पिष्टे दग्धे लूने च मृन्मये खाते च लौकिके प्राप्ते जपो नास्त्येव वाजिनामिति ।

रौद्रं राक्षसमासुरमाभिचरणिकं मन्त्रमुक्त्वा पित्र्यमात्मानं चालभ्योपस्पृशेदपः उपस्पृशेदपः ॥ १४ ॥ रौद्रो रुद्रदेवताकः · अव रुद्रं रौद्र्यावित्यादिकः[4] (३. ५८-६३.) । राक्षसो रक्षोदेवताकः · प्रत्युष्टं निष्टप्तं[5] द्वे राक्षसे (१. ७.) रक्षसां

1) °जुःक्रि° १. २. 2) छिन्नेषू व्रीहिषु २. 3) ज्याप्याः २. 4) These quotations (रौद्र्यौ etc.) are taken from Kâtyâyana's Anukramaṇî to the Vâjasaneyi-Saṃhitâ. 5) ? प्रत्युष्टं द्वेष्टं २.

राक्षसमित्यादिकः (२. २३.)। आसुरोऽसुरदेवताकः · अपहृतम्[1] आसुरम् (१. ७.) अपारुम् अररो आसुरे (१. १६.) इत्यादिकः। अभिचारः प्रयोजनमस्य मन्त्रस्यासावाभिचरणिकः · प्रयोजनमित्यर्थे (पाणि ५. १. १०२.) ठञ्[2] · अतश्च तमतो मा मौक् (१. २५.) द्विषतो बधोऽसीत्यादिः (१. २८.) अत्रुनामादेशसंयुक्तः अभिचारार्थमेव प्रयुज्यमान आभिचरणिक इत्युच्यते · तेनाभिचरणबुद्ध्यभावे मन्त्रस्याभिचरणप्रयोजनाभावान्नाभिचरणिकत्वम् अतस्तदुच्चारणे उदकोपस्पर्शनाभावः। रौद्रादिकं मन्त्रमुक्त्वा पठित्वा पित्र्यं पितृदेवत्यं च मन्त्रम् शुन्धन्ताम् पित्र्ये[3] (५. २६.) इत्यादिकमुक्त्वा चकाराद्रुद्रादिदेवत्यममन्त्रकं कर्म च कृत्वा आत्मानं चालभ्याप उदकानि उपस्पृशेत् आलभेत् क्वचित्पात्रे स्थिता अपो हस्तेन स्पृशतीत्यर्थः · क्वचिच्च श्रुतिरपि अपामुपस्पर्शनं दर्शयति स यत्प्राशित्रमवद्यति यदेवात्राविद्धं यज्ञस्य यद्रुद्रियं तदेवैतन्निर्मिमीतेऽथाप उपस्पृशति शान्तिरापस्तदद्भिः शमयतीति (१. ७. ४. १.) · तथा त्र्यम्बकानन्तरम् पुनरेत्याप उपस्पृशन्ति रुद्रियेणेव वा ऽएतदचारिषुः शान्तिरापस्तदद्भिः शान्त्या शमयन्तऽइति (२. ६. २. १८.) ॥ द्विरभ्यासोऽध्यायपरिसमाप्तिसूचनार्थः ॥ ॥ दशमी कण्डिका ॥ १० ॥

इति कात्यायनसूत्रव्याख्याने सम्राड्नृपतिमहायाज्ञिकश्रीश्रीप्रजापतिसुतमहायाज्ञिकश्रीश्रीदेवकृते प्रथमोऽध्यायः समाप्तः ॥ ॥

अथ पद्धतिः ॥

यदाग्नेयोऽष्टाकपालो भवतीत्येवमादिः पञ्चमलकारपरिकल्पनया कर्मविधायको भवति[4] ॥ दर्शपूर्णमासपश्वादौ कर्मणि करिष्यमाणे एतावद्भिर्द्रव्यैरत्र प्रयोजनमस्तीत्येवं पात्रहविःप्रभृतिद्रव्याणां प्रयोजनं विचिन्त्य कर्मारम्भात्प्रागेव तेषामुपकल्पनम् आनीय समीपे कर्मकरणप्रदेशे स्थापनं कर्तव्यम् ॥ चर्मा-

---

1) अपहता २. 2) ठञ् २. 3) पित्र्य २. 4) **This sentence is rather puzzling, as it does not agree in the least with the corresponding rules (१. and २.) at the beginning of the 10th ka*nd*ikâ. Its meaning too itself is not clear to me. The fifth la*k*âra is le*t*, not lo*t*.** भवत्येवमादिः २. ३.

एयुत्तरलोमानि प्राग्ग्रीवाणि सर्वत्रास्तरणीयानि यथा नीडे कृष्णाजिनमास्तृणातीत्यादौ (३. ३. ४. १.) ॥ हविषां मध्ये यत्पश्चात्पठितम् तद्देशतः कालतश्चोत्तरं कर्तव्यम् । ग्रहणादिकं पूर्वपठितस्य पूर्वम् उत्तरपठितस्योत्तरम् । अधिश्रयणासादनाद्यपि पूर्वपठितस्य दक्षिणतः पश्चात्पठितस्योत्तरत इति ॥ एकद्रव्ये स्थालीस्रुवादौ साज्ये दक्षिणहस्तेन गृहीते सति सव्येन वेदस्योपग्रहणं[1] कर्तव्यम् · एकद्रव्य इत्युक्तत्वादुपभृदादौ द्वितीयद्रव्ये सति वेदोपग्रहणाभावः । अन्यत्र सर्वत्र स्फ्येन अन्यद्रव्येण द्रव्यवति जपोपस्थानादौ च । असत्सु वेदवद्द्वितीयद्रव्येषु कुशैरुपग्रहणम् · यथा समिष्टयजुर्होमे वेदाभावे कुशैः वेदबन्धनात्प्राक् प्रायश्चित्ताहुतौ च · यथा वा स्फ्ये अन्यत्र व्यापृते सोमे ग्रहहोमादौ द्वितीयद्रव्याभावे च कुशोपग्रहणम् ॥ स्रुचोरादानकाले आसादितां स्रुचं जुहूं पाणिभ्यां परिगृह्योपभृत[2] उपरि निदध्यात् परस्परसंस्पर्शनशब्दमनुत्पादयन् ॥ उद्भिदा यजेत बलभिदा यजेतेत्येवमादौ यत्र फलं न श्रूयते तत्रापि न्यायेन स्वर्गः फलत्वेन कल्प्यते तस्य सर्वेषामपीष्टत्वात् । एकस्मिन्कर्मणि वैकल्पिकेष्वङ्गेष्वाम्नातेष्वधिकाङ्गानुष्ठानपक्षे फलाधिक्यं भवति · यथा पौर्णमासादौ वैकल्पिकवैमृधाद्यधिकाङ्गानुष्ठाने फलाधिक्यं भवति · यथा वा तनूहविःष्वधिकाधिकदक्षिणादानपक्षाग्रयणे · बृहस्पतिसवे च · एवं सर्वत्र ॥ अन्वाहार्यादिदक्षिणादाने आ वो देवास इत्यादिवाचने (७. ३. ६.) स्थाल्यन्वारब्ध इत्यादावन्वारम्भणे (४. २. २३.) वरप्रार्थने ऋत्विग्वरणे सत्यवादी स्यात् पयोव्रतो दीक्षितः स्यादित्यादौ (१. ५. १. १.) व्रते त्वरत्निश्चतुररत्निरस्त्वित्यादिप्रमाणे[3] च सर्वत्रानुक्तमपि यजमानं कर्तारं जानीयात् ॥ खाते यूपावटोपरवादौ लूने बर्हिषि छिन्ने शाखायूपादौ अवहतेषु व्रीहिषु पिष्टेषु तण्डुलेषु दुग्धे पयसि दग्धे महावीरोखादौ असम्भवाल्लोकनिष्पत्तेर्गृहीते[4] यजुःक्रिया भवति यजुर्युक्तं क्रियामात्रं भवति · तावन्मात्रस्यासिद्धत्वात् · लौकिकक्रियामात्रस्य[5] सिद्ध-

---

1) Thus १. ३. वेदस्याग्रे° २. 2) प्रतिगृह्यो° २. ३. 3) °अतुररत्स्वित्या° १. °तुरत्न्यस्वित्या° २. तुरआत्स्वित्या° ३. See ११. ७. ४. १. 4) ? पक्षे गृहीते १. २. ३ (°हिते). 5) Thus १. लौकिकस्य क्रिया° २. ३.

त्वात् ॥ रुद्रदेवतं रक्षोदेवतमसुरदेवतमाभिचरणिकं पितृदेवत्यं च मन्त्रमुक्त्वा एतद्देवत्यममन्त्रकं कर्म च कृत्वात्मानमालभ्यापां स्पर्शनं हस्तेन कुर्यात् ॥ ॥१०॥

इति प्रथमस्य दशमी कण्डिका ॥ ॥

इति श्रीयाज्ञिकदेवकृतायां कात्यायनसूत्रपद्धतौ आदिमोऽध्यायः समाप्तः ॥ ॥

इति कातीये श्रौतसूत्रे प्रथमोऽध्यायः ॥१॥ ॥

उक्ताः परिभाषाः । इदानीं श्रुतिक्रमं मन्त्रक्रमं चानुसरन्नाचार्यः प्रथमं पौर्णमासेष्टिमुपदिदिक्षुस्तस्या उपक्रमकालमाह ·

पूर्वां पौर्णमासीमुत्तरां चोपवसेत् ॥ १॥ द्वे पौर्णमास्यौ पूर्वा उत्तरा च · तत्र पञ्चदशी पूर्वा प्रतिपदुत्तरा · कुतः एषा ह संवत्सरस्य प्रथमा रात्रिर्यत्फाल्गुनी पौर्णमासी योत्तरैषोत्तमा या पूर्वेति (६. २; २. १८.) श्रवणात् । तत्र पञ्चदशी मुख्या प्रतिपद्गौणी · कुतः अनेकशक्तिविकल्पनादिदोषप्रसङ्गादुभयोर्मुख्यार्थत्वानुपपत्तेः । उपवसेदित्यनेनात्रानशनं न विधीयते · कुतः अपराह्णे व्रतोपायनीयमश्नीत इत्यनेन (२. १. १०.) विरोधात् · किं तर्हि चान्द्रायणमुपवसतीत्यादौ नियतद्रव्यकालपरिमाणावदशनसत्यवादनक्रोधलाभादिवर्जनादियमनियमकारिण्यप्युपवसतीत्यस्य प्रयोगस्य दृष्टत्वादत्रापि पूर्वापरविरोधपरिहाराय स एवार्थोऽवसीयते । ततश्चायमर्थः पूर्वां पौर्णमासीं पञ्चदशीं तिथिमुपवसेत् उत्तरां वा प्रतिपदम् शास्त्रिताशनमांसमैथुनवर्जनादियमनियमकारी भवेत् यागोपक्रमं कुर्यादिति तात्पर्यार्थः । पूर्वां पौर्णमासीमित्यत्रोपान्वध्याङ्वस इत्यनेन (पा° १. ४. ४८.) उपपूर्वस्य वसतेराधारस्य कर्मसंज्ञत्वात् कर्मणि द्वितीयेति (पा° २. ३. २.) द्वितीया · अत एवायमभोजनार्थस्योपवसतेः प्रयोगो न भवति तदाधारस्य कर्मसंज्ञानिषेधात् तथा च वार्त्तिकम्[१] अभुक्त्यर्थस्य प्रतिषेध इति । तत्रोत्तरोपवासपक्षे च सद्य एव यागं वक्ष्यति सद्यो वा प्रातरिति (२. १. १६.) । माः चन्द्रमाः पूर्णो माः पूर्णमासः इयं पौर्णमासी पूर्णचन्द्रा · तिथिद्वैधे सति पूर्वा उत्तरा वा या पौर्णमासी पूर्णचन्द्रा तामुपवसेत् तस्यां यागोपक्रमं कुर्यात् न त्वपूर्णचन्द्रायाम् । काठके पूर्णे पौर्णमासीमुपवसेद्द-

[१]) See Pâṇ. १. ४. ४८.

र्शनेऽमावास्यामिति । मानवे च तन्निर्णयश्चैवम् यज्ञकालस्तिथिद्वैधे षट्कलो यदि विद्यते पर्व तत्रोत्तरं कार्यं हीने पूर्वमुपक्रमेदिति षट्कलः षड्घटिकापरिमाणः ॥ काल उक्तो विधिमुपदिशति ·

अग्न्यन्वाधानमध्वर्युर्यजमानो वा ॥२॥ अध्वर्युः प्राप्त एव किमर्थमध्वर्युग्रहणम् अतो यजमानो वेत्येतावदेव वक्तव्यम् · सत्यम् · एतावत्युच्यमाने होतृवेदविहितमग्न्यन्वाधानं समाख्यया होतुः प्राप्नोति तस्याप्यध्वर्युकर्तृकतासिद्ध्यर्थमध्वर्युग्रहणमित्यदोषः [1] ।

ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेमेत्याहवनीये [2] समिधमादधाति ॥३॥ गार्हपत्यात्तमाहवनीयमुद्धृत्य दक्षिणाग्निं चाहृत्य तस्मिन्नुद्धृते आहवनीये समिधमग्नेरुपरि प्रागग्रां स्थापयति । उद्धरणं च पूर्वं खरे पञ्च भूसंस्कारान्कृत्वा अध्वर्युणा कर्तव्यम् समाख्यानात् समिदाधानमात्रे वचनाद्यजमानस्योपदेशात् । अनेकयजमानके [3] द्वियज्ञसत्त्राहीनगणयज्ञादौ मन्त्रस्योहः आवयोरग्ने वर्चः आवाभ्यां नमन्ताम् अस्माकमग्ने वर्चः अस्मभ्यं नमन्तामिति · तच्चाग्न्यन्वाधानं मुख्य एवेतरान्वारब्धः करोति · अध्वर्युकर्तृयज्ञे त्वनूहः [4] । मन्त्रादौ च सर्वत्रोङ्कारः प्रयोज्यः · तदुक्तम् ब्रह्मारम्भे विरामे च यागहोमार्चनादिष्विति ।

तूष्णीं द्वितीयाम् ॥४॥ [5]

एवमितरयोरग्न्योः ॥५॥ प्रथमं गार्हपत्ये ततो दक्षिणाग्नौ । पक्षान्तरमाह ·

महाव्याहृतिभिर्वा प्राक्संस्थम् ॥६॥ भूर्भुवः स्वरित्येतासां महाव्याहृतय इति संज्ञा । तत्र प्रथमं गार्हपत्ये ततो दक्षिणाग्नौ तत आहवनीये इत्ययं क्रमः प्राक्संस्थमित्यर्थः [6] । तृतीयं पक्षमाह ·

तूष्णीं वा यथापूर्वम् ॥७॥ यथापूर्वमिति यो-यः पूर्वमुत्पन्नोऽग्निस्तस्मिन्न-

---

1) अग्न्यन्वाधानमिति कर्मणो नामधेयं षड्समिदाधानरूपस्य Mahâd. 2) Thus १. यजेमे° ३. 3) सत्त्रेषु यजमानकर्तृकेऽग्न्यन्वाधाने यजमानाभिधायीनि पदानि विपरिणम्यन्ते Mahâd. 4) कर्मणः परार्थत्वात् यां वै कां च यज्ञऽऋत्विज आशिषमाशासते यजमानस्यैव सेति (१. ३. १. २६.) लिङ्गाच्च Mahâd. 5) अधिकारान्मन्त्रोऽपि प्राप्नोति · स प्रतिषिध्यते Ss. 6) प्रतिमहाव्याहृति अग्न्यन्वाधानं गार्हपत्यदक्षिणाग्न्याहवनीयेषु न समस्ताभिः Mahâd.

ग्नौ पूर्वम्   तेन प्रथमं गार्हपत्ये तत आहवनीये ततो दक्षिणाग्नौ ।

अहनि मांसमैथुने वर्जयेत् ॥ ८॥     अस्मिन्प्रकृते व्रत्येऽहनि । ननु चाहनि सदा मैथुनं प्रतिषिद्धमेव   पर्वणि तु रात्रावपि   तत्किमर्थं पुनः प्रतिषिध्यते · सत्यम् · स तु स्मार्तः प्रतिषेधः पुरुषार्थः   इह तु दर्शपूर्णमासप्रकरणे विधानात्कर्मधर्मार्थमिति · अनयोश्च प्रायश्चित्तविशेषः ।

केशश्मश्रु वपते   वाशिखम् ॥ ९॥     वपते वापयते अन्तर्भूतण्यर्थः ॥ केचिद्वाशब्दमशिखमित्यनेन सह योजयन्ति अशिखं वा सशिखं वेति · तन्मते केशश्मश्रुवपनं नित्यमेव सूत्रकारप्रस्थानादप्ययमर्थोऽवसीयते · येनाधाने पौर्णमासवद्वपनमित्युक्त्वा (४. ७. ११.) ऋतुनक्षत्रसम्भारसामवपनेत्यादिना (४. १०. ३.) वपनस्य विकल्पमाह · यदि पौर्णमासे वपनं विकल्पेन स्यात्तदा पौर्णमासवदित्यनेनैवाधानेऽपि विकल्पस्य सिद्धत्वात्पुनर्विकल्पो न वक्तव्यः स्यात्   उक्तश्च अत एवं ज्ञायते पौर्णमासे वपनस्य विकल्पो नास्तीति ।

अपराह्णे व्रतोपायनीयमश्नीतः सर्पिषासुहितौ ॥ १०॥     अह्नोऽपरभागे पत्नीयजमानौ सर्पिषा युक्तं घृतोपसिक्तं व्रतोपायनीयमन्नमसुहितावतृप्तौ यथा भवतस्तथा भुञ्जाते । व्रतं भोजनं येनान्नेनोपेयते क्रियते अमाषमांसालवणादिना तद्व्रतोपायनीयमन्नम् [1] । सकृत्पर्वणि सर्पिष्मद्धविष्यं लघुभोजनम्   न सायं नोपवासः स्यात्तैलामिषविवर्जितमिति पुलस्त्यः । बौधायनः   सर्वमेवैतदहः कौशीधान्यं विवर्जयेदन्यत्र तिलेभ्य इति । सर्पिषेत्यनेन नियमः क्रियते   सर्पिर्युक्तमेव · अतोऽर्थात्तैलादि निवारितं भवति ।

अन्तरेणापराग्नी गत्वापरेणाहवनीयं प्राङ्तिष्ठन्नग्निमीक्षमाणोऽप उपस्पृश्य व्रतमुपैत्यग्ने व्रतपतऽइदमहमिति वा (१. ५.) सत्यवाग्व्रतः ॥ ११॥     व्रतशब्देन कर्माङ्गभूता शास्त्रतो नियमा उच्यन्ते · कर्माङ्गभूताः यमनियमाः व्रतम् तदुपगमार्थोऽग्ने व्रतपतऽइत्ययं मन्त्र इति तन्त्रान्तरेऽउक्तम् [2] ।

कर्माङ्गमुत्तरे सत्यवदनम् ॥ १२॥     व्रतोपायनादुत्तरे काले यत्सत्यवदनम्

---

1) व्रीहिमुद्गयवादि माषचणककोद्रवादिरहितं श्वोयक्ष्यमाणपुरोडाशद्रव्यरहितमौपासनाग्निपक्वं दम्पती अश्नीतः Mahâd.   2) अत इति व्रतग्रहणोत्तरं सत्यवादी स्यात् Mahâd.

तत्कर्माङ्गम्[१] यच्चोपनयोत्तरकालीनमग्न्याधेयोत्तरकालीनं [च वक्ष्यते][२] तत्पुरुषधर्मः · यदीदमपि पुरुषधर्मत्वेनोपदिश्येत तत उपदिष्टस्योपदेशो [वक्ष्यमाणो]ऽनर्थकः स्यात् ॥ क्रत्वर्थपुरुषार्थयोश्चायं विशेषः पुरुषधर्मे सत्यवदने सति तदपचारे क्रतोः किमपि वैगुण्यं न भवति वैपरीत्ये च न सगुणत्वम् · क्रतुधर्मे पुनः सत्यवदने सति तदपचारे प्रयाजाद्यपचारऽइव क्रतोर्वैगुण्यं भवति अनपचारे च सगुणत्वम् । प्रायश्चित्तगतश्च विशेषः कर्माङ्गत्वे कर्माङ्गापचारनिमित्तं श्रौतं प्रायश्चित्तं भवति पुरुषार्थे स्मार्तसत्यवदनापचारे स्मार्तमेवेति । नन्वग्न्याधानोत्तरकालीनं यत्सत्यवदनम् तदपचारे श्रौतमपि प्रायश्चित्तं भवत्येव न तदर्थं पुनरेतत्सूत्रं कर्तव्यम् · सत्यम् · कर्मगतो य आग्वैदिकयाजुर्वैदिकत्वादिविशेषः तद्विनाशनिमित्तं विशिष्टं प्रायश्चित्तं यथा स्यादित्येवमर्थः पुनः कर्माङ्गत्वेनोपदेशः · तथा चाग्वैदिके सामिधेन्यनुवचनादौ कर्मणि क्रियमाणे यदि सत्यवदनापचारः स्यात् तदा होतृकं भूः स्वाहेति प्रायश्चित्तं भवति · याजुर्वैदिके प्रणीताप्रणयनपरिस्तरणादौ क्रियमाणे सत्यवदनापचारे तु भुवः स्वाहेति · सामवेदविहिते ब्रह्मत्वादिकर्मणि क्रियमाणे सत्यवदनापचारे तु स्वः स्वाहेति · पुरुषधर्मे पुनः स्वकर्ममध्ये तदपचारनिमित्तं प्रायश्चित्तं नैव प्राप्नोति क्रतुवैगुण्याभावात् व्यवधानाच्च ।

वृक्षारण्यौषधीनामश्नीयाद्वा ॥१३॥ अहर्भोजने नियमविशेष उक्तः इदानीमवसरे प्राप्ते सायाशने विशेष उच्यते । सायं वृक्षाणामाम्रादीनाम् आरण्यौषधीनां श्यामाककङ्ग्वादिप्रभृतीनां सम्बन्धि किंचिदश्नीयाद्वा यजमानः न वाश्नीयादिति विकल्पः[३] । प्रातर्होष्यमाणस्य द्रव्यस्य प्रतिषेधः मध्याशनेऽपि दृश्यते शाङ्खायनसूत्रात् (शा॰ ४. १. ३.) ।

आहवनीयगृहेशाय्यधः ॥१४॥[४] रात्रौ सपत्नीको यजमानो भूमौ [शयीत] ।

गार्हपत्यस्य वा ॥१५॥ एतच्चाधःशय्यान्तं व्रतं यजमानस्य स्यात् तपस्त्वात्[५] ।

---

१) अन्यद्वपनादि सर्वं पुरुषाङ्गम् · अत्र कर्माङ्गपुरुषाङ्गयोः प्रायश्चित्ते विशेषः क्रत्वङ्गापचारे श्रौतम् पुरुषाङ्गापचारे स्मार्तम् Mahâd. २) See ४. १५. ४. ३) अश्नीयादित्येकवचनाद्यजमानो न पत्नी · दिवा द्वितीयाशनस्य निषिद्धत्वादिदं सायाशनम् Mahâd. ४) नित्यखट्वाद्यपेक्षया अधः Ss. ५) सद्यःपक्षे गार्हपत्यगृहे शयनम् Mahâd.

सद्यो वा ॥ १६ ॥ पौर्णमासे यद्व्यहकर्तव्यमुक्तम् तदेकस्मिन्नेवाहन्यग्न्य-न्वाधानादि कर्मापवर्गान्तं भवति [1] ।

प्रातः ॥ १७ ॥ [अस्मिन्पक्षे प्रातः] प्रतिपद्दिनऽएव सर्वमग्न्यन्वाधानादि कर्मापवर्गान्तं कर्तव्यम् न पूर्वेद्युरग्न्यन्वाधानदिने प्रतिपदः प्रधानकालत्वात् अङ्गानां प्रधानकालस्य न्याय्यत्वात् । तत्र च व्रतोपायनीयाशनारण्याशनान्यतरा-गारशयनानि न भवन्ति भक्तकालाभावात् · रागप्राप्तेष्वेवैतेषु द्रव्यादिनियम-मात्रविधानाच्च न हि रागतस्तदानीमशनादीनि प्राप्नुवन्ति · अन्यद्वपनादि सर्वं भवत्येव । व्यवस्थितविकल्पोऽयमिति केचित् · तथा च कात्यायनः संधिश्चे-त्संगवादूर्ध्वं प्राक्पर्यावर्तनाद्रवेः सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथि-रिति [2] ॥ अथवा एकमेवेदं सूत्रम् सद्यो वा प्रातः यदा प्रातः उत्तरोप-वासपक्षस्तदा समानेऽहन्येव सर्वं कर्तव्यम् ।

अग्निहोत्रं हुत्वा ब्रह्माणं वृणीते ब्रह्मिष्ठ भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमहऽइति ॥ १८ ॥ यो वेदत्रयविहितं कर्म सम्यग्जा-नाति सोऽत्र ब्रह्मिष्ठशब्देनोच्यते तादृशस्यैव वेदत्रयविहितकर्मणां कृताकृ-तप्रत्यवेक्षणेऽधिकारात् ॥ वरणं चाचारादेवं कर्तव्यम् वितानस्योत्तरतः [3] प्राङ्मुखोपविष्टं ब्रह्माणमुदङ्मुखोपविष्टो यजमानः स्फ्यं सव्येन गृहीत्वा दक्षिणेन यवसहितेन ब्रह्मणो जान्वालभ्य वृणीते अमुकसगोत्र अमुकशर्मन् पौर्णमा-स्येष्ट्या वयं यक्ष्यामहे तत्र भूपतऽइत्यादिना मन्त्रेण · एतच्च वरणमप्रवृत्तस्य ब्रह्मणः कर्मणि प्रवर्तनार्थम् तेनाग्न्याधेये ब्रह्मणः पूर्वमेव वृतत्वात्पवमाने-ष्ट्यादिषु ब्रह्मवरणाभावः सोमयागे च दीक्षणीयाप्रायणीयादिषु पुनराधेये चाग्नेये पञ्चकपाले ।

---

1) सद्य एव समानेऽहनि सर्वम् Ss. 2) Thus Mahâd. °स्कालतिथौ विधिरि-ति २. — संधिः प्रतिपत्पर्वसंधिः · पञ्चधा विभक्तस्य दिनस्य द्वितीयो भागः संगवः · पर्या-वर्तनं पूर्वाह्णापराह्णसंधिः ॥ खर्विकां तृतीयां वाजसनेयिनः समामनन्तीति बौधायनसूत्रव्या-ख्यावसरे कपर्दिस्वामिभिरुक्तखर्विकां पूर्वां संधिमतीं चोपन्यस्य या त्वेषा खर्विका यस्याश्च पूर्वाह्णे संधिः पर्वकालस्तयोः सद्यस्कालेति संज्ञोक्तेः संगवादूर्ध्वमा षोडशघटिकाभ्यः संधिमती सद्यस्काला · सोत्तरस्याः पौर्णमास्या एव भेदः · तस्यां सद्य एव याग इति · इतरासु पौर्णमा-सीषु अग्न्यन्वाधानादि शयनान्तम् Mahâd. 3) औपासनपरिचरणोत्तरमग्निहोत्रं हुत्वानुदिते Mah.

वृतो जपत्यहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्भूर्भुवः स्वर्देव[1] सवितरेतं त्वा वृणते बृहस्पतिं ब्रह्माणम् तदहं मनसे प्रब्रवीमि मनो गायत्र्यै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभेऽनुष्टुप्प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणामिति ॥ १९ ॥ वृतग्रहणं वरणजपयोः संनियोगसिद्ध्यर्थम् · वरणाभावे पवमानेष्ट्यादौ दीक्षणीयादौ च जपस्याप्यभावः सिध्यति ।

वाचस्पते यज्ञं गोपायेत्याह ॥ २० ॥ ततो ब्रह्मा तत्रोपविष्ट एव वाचस्पते यज्ञं गोपायेति ब्रवीति । केचिद्यजमानमेतदिच्छन्ति · तन्न · काण्वानां ह्येतत्पठ्यते देव सवितरित्युक्त्वा वाचस्पते यज्ञं गोपायेत्याहेति · अतो ब्रह्मैवाहेति जपशेषत्वात् जपे सत्यस्य प्रवृत्तिः जपशेषता चास्मादेव काण्वीयादिति याज्ञिकाः · सूत्रकारेणाप्ययमेवाभिप्रायो येन वक्ष्यति एतद्ब्रह्मत्वमिष्टिपश्वोरिति (२. २. २४.) · एवं च सति यद्यत्र यजमानः कर्ताभिमतोऽभविष्यत् तदा तद्ग्रहणमकरिष्यत् न च कृतम् तस्माद्ब्रह्मणा एवात्र कर्तृत्वमिति ।

अपरेण वाहवनीयं दक्षिणातिक्रामति ॥ २१ ॥ ब्रह्मासनं दक्षिणतो ब्रह्मवरणमुत्तरतः · अत उपवेशनायावश्यं दक्षिणतो ब्रह्मणा गन्तव्यम् · तत्र मार्गविकल्पमाह आहवनीयं पूर्वेणेति वा ।

अहे दैधिषव्योदतस्तिष्ठान्यस्य[2] सदने सीद योऽस्मत्पाकतर इति ब्रह्मसदनमीक्षते ॥ २२ ॥ वारणादिवृक्षोद्भवं कुशास्तृतं प्रागग्रमासनम्[3] ।

ब्रह्मसदनात्तृणं निरस्यति निरस्तः पाप्मा सह तेन यं द्विष्म इति ॥ २३ ॥ नैर्ऋत्यां दिशि प्रक्षिपति शाङ्खायने दर्शनात् समानं होत्रा तृणनिरसनमिति (शा° ४. ६. ५.) · होतुश्च पठितम् होतृषदनात्कुष्कं तृणमुभयतः प्रतिछिद्य[4] दक्षिणापरमवान्तरदेशं[5] निरस्येति (शा° १. ६. ६.) ।

इदमहं बृहस्पतेः सदसि सीदामि प्रसूतो देवेन सवित्रा तदग्नये प्रब्रवीमि तद्वायवे तत्पृथिव्याऽइति ॥ २४ ॥ ॥ प्रथमा कण्डिका ॥ १ ॥

---

1) Kâṇva, see Vâj. S. pag. ५७-५८. 2) °व्योदतिष्ठान्यस्य ३. 3) आसनं वारणकाष्ठमयपीठम् तच्च कुशास्तृतं तृणनिरसनवात् Mahâd. 4) प्रछिद्य २. 5) °देशे २.

अथ पद्धतिः ॥

अथ दर्शपूर्णमासयोः पद्धतिर्लिख्यते ॥ कृताधानस्याधानानन्तरं प्रथमपौर्णमास्यां मातृपूजापूर्वकमाभ्युदयिकं श्राद्धम् · ततो मुख्यायामेव पौर्णमास्यां सद्योऽन्वारम्भणीयेष्टिः · तदनन्तरं पौर्णमासस्यारम्भः । समूह्लत्यग्न्यगारम् उपलिम्पन्त्यायतनान्यलंकुर्वतऽइत्यापस्तम्बसूत्रे विशेषः · तत्र पूर्वमाहवनीयखरे पञ्च भूसंस्काराः कर्तव्याः · तद्यथा दर्भैः खरं प्राक्संस्थमुदक्संस्थं वा त्रिः परिसमुह्य गोमयेन त्रिरुपलिप्य स्फ्येन प्रागायता उदक्संस्था उदगायताः प्राक्संस्था वा तिस्रो लेखाः खरप्रमाणाः कृत्वा अनामिकाङ्गुष्ठेन ताभ्यो लेखाभ्यः पांशूनुद्धृत्याद्भिरभ्युक्षेत् · एवमेव दक्षिणाग्नेः खरे पञ्च भूसंस्काराः कार्याः । ततो गार्हपत्यादाहवनीयस्योद्धरणम् · तत्र पौर्णमासेष्ट्यर्थं गार्हपत्यादाहवनीयमुद्धरामीति मनसि संकल्प्य गार्हपत्यात्कर्परेण ज्वलन्तमग्निं कर्परादिनादायाहवनीयखरे प्राञ्चं स्थापयेत् · ततः पौर्णमासेष्ट्यर्थं गार्हपत्याद्दक्षिणाग्निमाहरामीति संकल्प्य गार्हपत्यात्कर्परेणाग्निमादाय दक्षिणाग्नेः खरे स्थापयेत् ॥ अथाग्न्यन्वाधानमुच्यते । तत्र षट् समिधो हस्ते गृहीत्वा स्फ्यं सव्ये हस्ते धृत्वा ममाग्नऽइति मन्त्रेणाहवनीयऽएकां समिधमादधाति ततस्तूष्णीं द्वितीयां समिधमादधाति · एवमेव गार्हपत्ये दक्षिणाग्नौ च द्वे-द्वे समिधावादधाति · एकोऽयं पक्षः । अथवा भूरित्येतावता मन्त्रेण प्रथमं गार्हपत्यऽएकां समिधमादधाति तूष्णीं द्वितीयाम् · ततो भुवरिति दक्षिणाग्नावेकाम् तूष्णीं द्वितीयाम् · ततः स्वरित्याहवनीयऽएकाम् तूष्णीं द्वितीयाम् · अयं द्वितीयः पक्षः । अथवा तूष्णीमेव युगपत्समिद्द्वयं गार्हपत्ये तत आहवनीये ततो दक्षिणाग्नाविति तृतीयः पक्षः । प्रयोगकाले सर्वत्र मन्त्रादौ ओंकारोच्चारणं कर्तव्यम् एतच्चाग्न्यन्वाधानपक्षेऽपि । यजमानस्य सपत्नीकस्य मांसमैथुनवर्जनसंकल्पः । केशश्मश्रुवपनं शिखां वर्जयित्वा · कर्कमते वपनस्य विकल्पः · भर्तृयज्ञमते वपनं नियमेन अशिखं वा सशिखं वेति विकल्पः · मानवे विशेषः केशश्मश्रू यजमानो वापयते दक्षिणोपक्रमान्केशान्सव्योपक्रमान्नखानध्यात्मकं कनिष्ठिकातः कारयते न कक्षौ पत्नी नखांश्च कारयीतेति । अपराह्णे पत्नीयजमानौ माषमांसलवणप्रातर्होष्यमाणद्रव्यव्यतिरिक्तं घृतसंयुक्तमल्प-

मश्नीतो न तृप्तिपर्यन्तम् · परिशिष्टे शाकं मांसं मसूरं च चणकं कोरदूषकान् माषान्मधु परान्नं च वर्जयेदौपवस्तके · तथा (कर्मप्रदीप° ३. ८. ६.) लवणं मधु मांसं च क्षारान् यो येन हूयते उपवासे न भुञ्जीत नोहरात्रौ न किंचनेति · तथा तिलमुद्गादृते शैव्यं सस्यं¹⁾ गोधूमकोद्रवौ चीणकं देवधान्यं च सर्वशाकं तथैक्षवम् सर्जीक्षारं यवक्षारं टङ्कणंक्षारमेव च व्रतस्थो वर्जयेन्नित्यं सामुद्रं लवणं तथेति · अत एव सामुद्रविशेषणात्सैन्धवमानसादेर्लवणस्य न निषेध इति केचिदाहुः · हविष्यमपि तस्योक्तं स्मृतौ (मनु° ३. २५७.) मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम् अक्षारलवणं चैव प्रकृत्या हविरुच्यत ऽइति अक्षारलवणं सैन्धवमिति सर्वे निबन्धकारा व्याख्यातवन्तः · तथा सैन्धवं लवणं यच्च यच्च मानससम्भवम् पवित्रे परमे ह्येते प्रत्यक्षमपि सर्वश इति । व्रत्याशनानन्तरं यजमानः स्फ्यमादाय गार्हपत्यदक्षिणाग्न्योरन्तरालेन गत्वा आहवनीयस्य पश्चात्समीपे पूर्वाभिमुखस्तिष्ठन्नाहवनीयं विलोकयन्नुदकं दक्षिणहस्तेन स्पृष्ट्वा अग्ने व्रतपते व्रतमिति मन्त्रेण व्रतमुपैति सत्यवदनादिनियममङ्गीकरोतीत्यर्थः · अथवा इदमहमनृतादित्यनेन मन्त्रेण व्रतमुपैति न पूर्वोक्तेन · अतः प्रभृति क्रियमाणकर्माङ्गभूतो यजमानस्य सत्यवदननियमः । रात्रौ तस्मिन्नेव विहारे स्वयमेवाग्निहोत्रहोमः । सायाशनेच्छायां सत्यां होमानन्तरमारण्यौषधीनां नीवारश्यामाककङ्ग्वादीनामन्नं वा आरण्यवृक्षाणामाम्रराजादनादीनां फलानि वाश्नीयात् · नाश्नीयाद्वा । रात्रावाहवनीयागारे गार्हपत्यागारे वा पत्नीयजमानाभ्यां खट्वाद्यपेक्षया अधो नीचं शयनं कर्तव्यम् आस्तरणस्य न निषेधः । व्रतग्रहणे कृते अयमारण्याशनशय्यानियमो नापरथेति हरिस्वामिनः · आपस्तम्बोऽपि अमावास्यायां जागर्त्यपि वा सुप्यादुपरि त्वेव न शयीतापि वोपरि शयीत ब्रह्मचारी त्वेव स्यादुभयत्र जागरणमेके समामनन्तीति ॥ प्रातरपि तस्मिन्नेव विहारे स्वयमेवाग्निहोत्रहोमः । तत उदिते सूर्ये ब्रह्मवरणाद्युपक्रमः · ततः पूर्वं षडासनान्युपकल्पयेत् · ब्रह्मवरणार्थं ब्रह्मयजमानयोर्द्वेऽआसने विहारस्योत्तरतो दर्भास्तृते स्थापनीये · आहवनीयस्य दक्षिणतो ब्रह्मोपवेशनार्थमेकं

---

1) शैव्यं सस्ये १.

दर्भास्तृतमासनम् तथैव पश्चाद्द्वितीयम् यजमानस्योपवेशनार्थम् · तथा गार्हपत्यस्योत्तरत एकमध्वर्योरुपवेशनार्थम् आहवनीयस्योत्तरतो द्वितीयं च एतदासनद्वयं प्रणीताप्रणयनार्थम् । ततो ब्रह्मवरणम् · विहारस्योत्तरत उदङ्मुखोपविष्टो यजमानः प्राङ्मुखोपविष्टं ब्रह्माणं वृणीते · तत्रैवमाचारः · साङ्गुष्ठेन दक्षिणहस्तेन ब्रह्मणो दक्षिणं जान्वालभ्यामुकसगोत्रामुकशर्मन्पौर्णमासेष्ट्या वयं यक्ष्यामहे तत्र भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमह ऽइति अनेन मन्त्रेण वृणीते । ततो वृतो ब्रह्मा अहं भूपतिरित्यादि मनुष्याणामित्यन्तं जपति · सूत्रे वृतग्रहणाच्च यत्राधानेष्टिदीक्षणीयादौ वरणाभावस्तत्राहं भूपतिरिति जपस्याप्यभावः । ततो ब्रह्मैव वाचस्पते यज्ञं गोपायेति मन्त्रं पठति । ततो ब्रह्मा वरणस्थानादुत्थायाहवनीयात्पूर्वमार्गेणापरमार्गेण वा वेदेर्दक्षिणतः स्थापितं ब्रह्मासनं प्रति गच्छति · तत्समीपे उत्तरतः प्राङ्मुखः स्थित्वा अहे दैधिषव्येति मन्त्रेण ब्रह्मसदनमीक्षते · ततो ब्रह्मसदनादेकं तृणं गृहीत्वा नैर्ऋत्यां दिशि निरस्यति निरस्तः पाप्मेति · समानं होत्रा तृणनिरसनमिति शाङ्खायनः (४. ६. ५.) · काठके तस्मात्तृणमादायोभयतः प्रतिछिद्य दक्षिणा प्रत्यक्तृणं निरस्यतीति · मानवेऽप्येवमेवास्ति ॥ ॥ १ ॥

इति द्वितीयस्य प्रथमा कण्डिका ॥ ॥

ब्रह्मसदनऽआहवनीयमभिमुख उपविशति ॥ १ ॥ छन्दोगसूत्रे तु परिध्योर्वा संधिं स्रुचां वाग्राणि उत्करं वाभिमुखः ।

वाग्यत आनुयाजप्रसवात् ॥ २ ॥ ब्रह्मा वाग्यतः स्यात् ब्रह्मन्प्रस्थास्यामीत्येतत्प्रैषपर्यन्तम्[1] (१. ७. ४. १९.) ।

भागपरिहरणादि[2] वा ॥ ३ ॥ वावधारणे · भागपरिहरणादि एव ब्रह्मा वाग्यतः स्यात्[3] · मर्यादायामाङ् न त्वभिविधौ ।

आवृतावषट्कारासु ॥ ४ ॥ पूर्णाहुतियूपाहुतिषड्ढोत्राहुतिसावित्र्याहुत्या-

---

१) एतं तऽइति समिदामन्त्रितः प्रसौतीत्यनुयाजप्रसवः (२. २. २१.) Mahâd. २) °णाद्यादि ३. ३) भागमस्मै परिहरतीत्यारभ्य (३. ४. २८.) आनुयाजप्रसवात् Mahâd.

व्याहृतयः अवषट्काराः · तासु ब्रह्मवरणाद्युपवेशनान्तमावृता तूष्णीममन्त्रकं क्रियामात्रेण सर्वं कर्तव्यम्। आवृच्छब्दः समस्तममन्त्रकं विधिमाह · शाखान्तरे तूष्णींश्रवणादाचार्यप्रयत्नाच्च तूष्णीमिति गम्यते।

अत्र वा व्रतोपायनम् ॥५॥ वा पूर्वदिनऽएव · विकल्पः।

व्याहृत्य वैष्णवं मन्त्रं जपेत् ॥६॥ व्याहृत्य भ्रान्त्या मानुषीं वाचं वेदिकान्तरव्यतिरिक्तामुच्चार्य ब्रह्मा प्रायश्चित्तार्थं वैष्णवं मन्त्रं जपेत्[१)]।

अध्वर्युश्च ॥७॥ अध्वर्युरपि वाग्यमने सति व्याहृत्य वैष्णवं मन्त्रं जपेत् प्रायश्चित्तार्थम् · केचिच्चकारेण यजमानश्चेति व्याचक्षते।

प्रणय यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानोऽअस्तु सप्तऽऋषीणाᳲ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेह्योंᳵ प्रणयेति प्रणीताः प्रसौति ॥८॥ ब्रह्मजपः प्रणेष्यामीत्यामन्त्रितो ब्रह्मा प्रणय यज्ञमित्यमुं मन्त्रं पठित्वा ओंᳵ प्रणयेत्यनेन प्रणीयमानाः अनुजानाति। अनेकयजमानकऽऊहो यजमानौ स्ताम् यजमानौ च धेहीति द्वियजमानके अह्नीनेन्द्राग्न्कुलायादौ यजमानाः सन्तु यजमानांश्च धेहीति बहुयजमानकेऽहीनसत्त्रगणयज्ञादौ।

एवमामन्त्रित ओंकारेण ॥९॥ वक्ष्यमाणेषु हविःप्रोक्षणपरिग्रहेध्मबर्हिःप्रोक्षणसामिधेन्यनुवचनेषु आमन्त्रितः इदं करिष्यामीति एवं पृष्टो ब्रह्मा एवममुनैव प्रकारेण लोण्मध्यमपुरुषैकवचनेन ओंकारेण ओंकारप्रयुक्तेन प्रसौति· ततश्च ओंᳵप्रोक्ष ओंᳵ परिगृहाण ओंᳵमनुब्रूहीत्येवंशब्दस्यार्थः।

प्रोक्ष यज्ञमिति हविषि ॥१०॥ हविःप्रोक्षणे अध्वर्युणा बर्हिः प्रोक्षिष्यामीत्येवमामन्त्रितो ब्रह्मा प्रोक्ष यज्ञमिति मन्त्रेण प्रसौति।

इध्माबर्हिषोश्च ॥११॥ प्रोक्षणे।

बृहस्पते परिगृहाण वेदिᳲ सुगा वो देवाः सदनानि सन्त्वस्यां बर्हिः प्रथताᳲ साध्वन्तरहिᳲसा[२)] पृथिवी देवी देव्यस्त्विति वेदिं परिगृह्णन्तम् ॥१२॥ अध्वर्युं प्रसौति।

---

१) वाग्यतं इत्यनुवर्तते · वाग्यमकाले वाचमुच्चार्य वैष्णवं मन्त्रम् उरु विष्णवित्यृचं वा विष्णो हव्यं रक्षेत्यादि यजुर्वा जपेत् सस्वरम् Mahâd. २) Thus Mahâd. °ध्वंतरहिᳲसा १. ३.

प्रजापतेऽनुब्रूहि यज्ञमिति सामिधेनीरनुवक्ष्यन्तम् ॥१३॥ होतारं प्रसौति।

देवता वर्धय त्वमिति सर्वत्रानुषजति ॥१४॥ पूर्वोक्तेषु प्रोक्ष यज्ञमित्यादिकेषु सर्वेष्वपि मन्त्रेषु देवता वर्धय त्वं नाकस्येत्यादिकं यजमानं च धेहीत्यन्तं मन्त्रमनुषजति। वरुणप्रघासेष्वध्वर्युद्वित्वे अध्वर्युपरं वचनं द्विवचनान्तमूह्यम् ब्रह्मन्हविः प्रोक्षिष्याव इति प्रोक्षतं यज्ञं देवता वर्धयतं युवाम् यजमानं च धत्तम् ओं३ प्रोक्षतमिति। अनेकयजमानके सत्राहीनादौ नानागार्हपत्यपक्षे प्रत्यग्नि सवनीयपुरोडाशेषु उदयनीयासु च बहवोऽध्वर्यवो भवन्ति विरोधात्· तत्र ब्रह्मन्हविः प्रोक्षिष्याम इति प्रोक्षत यज्ञं देवता वर्धयत यूयम् यजमानाः सन्तु यजमानांश्च धत्त ओं३ प्रोक्षतेति। वरुणप्रघासेषु अध्वर्युपरं वेदिपरं च वचनं द्विवचनान्तमूह्यम् ब्रह्मन् पूर्वौ (उत्तरौ) परिग्रहौ परिग्रहिष्याव इति बृहस्पती परिगृह्णीतं वेदी सुगा वो देवाः सदनानि सन्त्वनयोर्बर्हिषी प्रथेताम् साधन्तरहितास्मे पृथिव्यौ देव्यौ देव्यौ स्ताम् देवता वर्धयतं युवाम् यजमानं च धत्तम् ओं३ परिगृह्णीतमिति। कुण्डपायिनामयने यजमानपरं च· इध्माबर्हिषोः प्रोक्षणे हविःप्रोक्षणवदूहाः। अनेकयजमानके बह्वीषूदयनीयासु बह्वध्वर्युषु परिग्रहे बृहस्पतयः परिगृह्णीत वेदीः सुगा वो देवाः सदनानि सन्त्वासु बर्हींषि प्रथन्ताम् साधन्तरहितास्माः पृथिव्यो देव्यो देव्यः सन्तु देवता वर्धयत यूयम् यजमानाः सन्तु यजमानांश्च धत्त ओं परिगृह्णीतेति · इध्माबर्हिषोः प्रोक्षणे हविःप्रोक्षणवत्। सुगा वो देवाः पितरः सदनानीति महापितृयज्ञे तूह इति अनन्तयाज्ञिका आहुः · हरिस्वामिमते वरुणप्रघासेषु कुत्राप्यूहो न भवति · याज्ञिकानां मते ब्रह्मत्वमन्त्रेषु वरुणप्रघासेषूहाभावः[1]।

मित्रस्य त्वा चक्षुषा प्रतीक्ष इति[2] प्राशित्रं प्रतीक्षते ॥१५॥ प्राशित्रमवदीयमानमाह्रियमाणं च। प्राशित्रं ब्रह्मणो भागः यवमात्रं पिप्पलमात्रं वावत्तः।

---

१) ?? °सेतूहा° २. २) Kâṇva, see Vâj. S. pag. ५८.

देवस्य त्वेति (२. ११.) प्रतिगृह्णाति ॥१६॥ तदध्वर्युणा समर्प्यमाणं विलोक्य अञ्जलिना सपात्रं प्रतिगृह्णाति ।

पृथिव्यास्त्वेति सादयत्यपोह्य बर्हींषि ॥१७॥ ब्रह्मा तत्प्रतिगृह्य वेदेर्दक्षिणांसदेशे स्तृतानि बर्हींषि अपसार्य प्रागदण्डं सादयति [1] आश्वलायनादिसूत्रेषु तद्दर्शनात् ।

पुनरादाय देवस्य [2] त्वेत्यनामिकाङ्गुष्ठाभ्यामग्नेष्ट्वेति (२. ११.) प्राश्नाति दन्तैरनुपस्पृशन्नत्र चेत् ॥१८॥ अत्रास्मिन्नवसरे चेत्प्राशित्रं ब्रह्मा प्राश्नाति तदा पुनरनामिकाङ्गुष्ठाभ्यां पात्राद्द्रव्यमादाय प्राशित्रं प्राश्नाति ।

निदधाति वाऽंसदेशे ॥१९॥ वा विकल्पे · यदि कालान्तरे प्राशनम् तदा प्रतिगृह्यांसदेशे निदधाति । एवं च सादनपक्षे उपरिष्टादेव प्राशनं नात्र · एवं सादनस्य दृष्टार्थता भवति इतरथा हि अदृष्टार्थता स्यात् · कालान्तरे प्राशनं वक्ष्यते (३. ४. २७.) । तेनात्र भक्षणपक्षे प्रतिगृह्य सादनमकृत्वैव पुनर्द्रव्यमनामिकाङ्गुष्ठाभ्यामादाय भक्षः कालान्तरे भक्षणपक्षे त्वंसदेशे आसादनमिति पितृभूतिः कर्कश्च · अन्ये त्वत्र भक्षणपक्षेऽप्यनियतदेशे सादनम् उपरिष्टाद्भक्षणपक्षे तु अंसदेशे निधानं प्रयत्नतः स्थापनं रक्षार्थं कर्तव्यमित्याहुः · तथा च वैतानसूत्रेऽत्र भक्षणपक्षेऽप्यासादनमुक्तम् श्रुतौ हि प्रतिग्रहणानन्तरमेव भक्षणम् तदनन्तरं भागपरिहरणात्प्राग्वा प्राशित्रहरणं रक्षणीयम् [3] · अत एव सूत्रकृता विकल्प उक्तः ।

प्रक्षाल्य पात्रं नाभिमालभते या अप्स्वन्तर्देवतास्ता इदꣳ शमयन्तु स्वाहाकृतं जठरमिन्द्रस्य गच्छ घसिना मे मा सम्पृक्था ऊर्ध्वं मे नाभेः सीदेन्द्रस्य त्वा जठरे सादयामीति [4] ॥२०॥ पात्रं प्राशित्रहरणमुत्करे प्रक्षाल्य मन्त्रान्ते स्पृशति ब्रह्मा · पात्रमित्येकवचनं जात्यपेक्षम् कर्णयोः प्राशित्रहरणेऽइति (२५. ७. २७.) प्रतिपत्तौ द्वयोः श्रवणात् · अत एकेन पात्रेणापिधानं कार्यम् अपर-

१) पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थऽइति काण्वीयेन मन्त्रेण वेद्यां बर्हींषि अपसार्य इतस्ततः कृत्वा भूमौ सादयति Mahâd. २) देवस्य त्वेत्याददऽइत्यन्तेन काण्वीयेन मन्त्रेण Mahâd. See Vâj. S. pag. ५८. ३) ? भक्षणो॰ २. ४) Kâṇva, see Vâj. S. pag. ५८.

स्मिन्नवदानमिति द्वयोरप्यत्र प्रक्षालनम् । भक्षणानन्तरमाचमनमर्थात्प्राप्तमिति न सूत्रितम् ।

एतं तऽइति (२. १२-१३.) समिदामन्त्रितः प्रसौति ॥२१॥ समिदामन्त्रितः समिधमादायाध्वर्युणा ब्रह्मन्प्रस्थास्यामीत्येवमामन्त्रितो ब्रह्मा प्रसौति[1] ।

प्रतिष्ठेति (२. १३.) ब्रूयाद्वा ॥२२॥ विकल्पेन · वरुणप्रघासे वों३ प्रतिष्ठतमिति प्रयोगः सत्त्रेषु उदवसानीयासु प्रतिष्ठतेति ।

कर्मापवर्गे समिधमादधाति जुहोत्युपतिष्ठते वा नमः कृताय कर्मणेऽअकृताय कर्मणे नमः अयाश्चाग्ने जातवेदा अन्तरः पूर्वो अस्मिन्निषद्य स त्वं सनिं सुविमुचा[2] विमुञ्च धेह्यस्मभ्यं द्रविणं जातवेदः स्वाहेति यथेतमेत्य ॥२३॥ कर्मणोऽपवर्गः समाप्तिः · कर्मापवर्गे ब्राह्मणतर्पणानन्तरम् । वरणोत्तरकालं स्वासनऽउपवेशनार्थं येन मार्गेण गतो भवति आहवनीयमपरेण वा पूर्वेण वा तेनैव मार्गेण प्रत्यागत्य नमः कृतायेति मन्त्रेण आहवनीये समिधमादधाति अथवाज्यस्थाल्याः स्रुवेण जुह्वां सकृद्गृहीतमाज्यं गृहीत्वा जुहोति अथवा आहवनीयमुपतिष्ठते[3] । होमपक्षे इदं जातवेदसऽइति त्यागः ।

एतद्ब्रह्मत्वमिष्टिपश्वोः ॥२४॥ एतत्प्रागुक्तं व्रतजपादिकमिष्टिपश्वोः ब्रह्मणः कर्म · अतः परं प्रणीताप्रणयनाद्याध्वर्यवमुपदिशति ॥ ॥ द्वितीया कण्डिका ॥२॥

अथ पद्धतिः ।

तत इदमहं बृहस्पतेरिति मन्त्रेण ब्रह्मसदने आहवनीयाभिमुखो ब्रह्मा उपविशति · मानवे विशेषः ब्रह्मण्युपचरत्यन्यस्य वा कर्म कुर्वाणे यो नेदिष्ठं विन्दात् स्यात्स उपासीतापि वा दर्भमुष्टिमुदपात्रं वा ब्रह्मासने न्यस्येदशून्यासनमेवं स्यादिति । अत्र वा यथोक्तं व्रतग्रहणं यजमानः करोति । अथवा सद्य एव प्रतिपद्युद्धरणाद्यन्वाधानादि सर्वं कर्तव्यम् · अस्मिन्पक्षे यावद्व्रतोपायनीयाशनशयनयोरभावः रागप्राप्तऽएवाशने सर्पिरादिगुणविधानात् यागात्प्राक् भोजनशयनकालाभावाच्च · अन्यत्सर्वं वपनादि भवत्येव ॥ ॥२॥

इति द्वितीयस्य द्वितीया कण्डिका ॥

---

१) समिधं गृहीत्वा यदामन्त्रणं तत्समिदामन्त्रणम् । सत्त्रे यज्ञपतिशब्दस्य मन्त्रे विपरिणाम्यते Mahâd. २) सुविमुंचा ३. ३) यावदुक्तात्तापक्लिन्नेषु कर्मस्वयं पदार्थो निवर्तते M.

गार्हपत्यमुत्तरेणोदपात्रं निधायालभते भूतस्त्वा भूत करिष्यामीति ॥ १ ॥ अध्वर्युर्गार्हपत्यस्योत्तरतः समीपे उदपात्रं स्थापयित्वा मन्त्रान्ते हस्तेन स्पृशति । उदकपात्रं वारणचमसरूपम् चमसेनापः प्रणयतीति शाङ्खायनात् · स्वशाखायामपि प्रतिपत्तौ श्रूयते · स च चमसश्चतुरस्रो द्वादशाङ्गुलदीर्घश्चतुरङ्गुलखातः सवृन्तश्च भवति परिशिष्टात् · सूत्रकारप्रस्थानाच्च चमसवत्स्रुवेणेति (१८.५.४.) स्रुवस्य चतुरस्रतां विधातुं चमसवदित्यनेन चमसस्य सिद्धां चतुरस्रतामाह । आलम्भेऽपि विप्रतिपत्तिः पात्रस्येति कर्कः उदकस्येति याज्ञिकाः ।

ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेत्याह ॥ २ ॥ यदा च प्रणीतानां सर्वार्थत्वं संयवनार्थत्वं वा तदा यस्मिन्कर्मणि चरुश्रपणार्थं पयो घृतं वा विहितम् यथा वैश्वदेवश्चरुः पयसि वेति (४.६.२-३.) घृते चरुरादित्येभ्य इति (१६.४.२१.) च तत्र पयसो घृतस्य च प्रणयनं [मन्थाद्यर्थं च दध्नः] कर्तव्यम् · तत्र ब्रह्मन्पयांसि अवघृतानि [अब्दधानि] प्रणेष्यामीत्यूहः । पित्र्यायामपि प्रणयनात्पूर्वमेव निवान्यां दुग्ध्वा तद्दुग्धस्य प्रणयनं कर्तव्यम् । जैमिनेर्मते प्रणीताः संयवनार्था एव कर्काचार्याणां मते सर्वार्था एव इतरेषामदृष्टार्था एवेति । अनेकयजमानके यजमानौ वाचं यच्छतम् यजमाना वाचं यच्छतेत्यूहः [1] ।

अनुज्ञात उत्तरेणाहवनीयं सम्प्रति निदधाति कस्त्वेति (१.६.) ॥ ३ ॥ प्रणीताः प्रणीय गार्हपत्यसमीपादाहवनीयसमीपं नीत्वा सम्प्रति आर्जव्येन बहिर्वेदि निदधाति · सम्प्रतीति नाहवनीयमतिक्रम्य न चाप्राप्य । प्रणयतिरत्र निधानार्थः तेन निधानऽएव मन्त्रः । सम्प्रतिशब्द ऋज्वर्थः सम्प्राप्य तिष्ठत्यस्मिन्नातिक्रामतीति सम्प्रति । प्रणीतानां दर्भेषु सादनं दर्भैरपिधानं च कर्तव्यम् । ब्रह्मानुज्ञात इति ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेत्यस्यानन्तरमेव प्रणय यज्ञमिति पठनीयम् न ब्रह्मन्नपः प्रणेष्यामीत्यस्यानन्तरम् ।

नान्तरेण गच्छेयुः ॥ ४ ॥ प्रणीताहवनीययोरन्तरालेन ।

कांस्यवानस्पत्यमार्त्तिकैरभिचारब्रह्मवर्चसप्रतिष्ठाकामा यथासंख्यम् ॥ ५ ॥ अभिकामा यजमानाः कांस्यकैः पात्रैः यथासंख्यं प्रणयन्ति · अत्र तु गुणादेवैतत्फलम् न तु क्रतोः कांस्यादीनामेव फलसम्बन्धश्रवणात् · अतश्च विकारे

[1] प्रैषोऽयमसत्यपि प्रणयने प्रवर्तते सत्त्रे च विपरिणाम्यते Mahâd.

एषामप्रवृत्तिः पुरुषार्थत्वात् प्रकृतौ यत्क्रत्वर्थमङ्गजातं तदेव विकारेष्वतिदि-
शेन गच्छति ।

तृणैरग्नीन्परिस्तीर्य पुरस्तात्प्रथमं द्विशः पात्राणि सादयति ॥६॥ दर्भ-
तृणैः प्रागुदगग्रैराहवनीयगार्हपत्यदक्षिणाग्नीन्क्रमेण परिस्तीर्य · तत्रापि प्रथमं
पुरस्तात्प्राच्यां दिशि परिस्तरणम् ततः प्रदक्षिणक्रमेणोदक्संस्थम् । एकेन प्रयत्नेन
द्वयोर्द्वयोः सहैव निधानं करोति । पान्ति रक्षन्ति हविरादिभिरिति पात्राणि · ननु
पिबन्त्येभिरिति किं न विगृह्यते नैतदेवम् अस्यामेव व्युत्पत्तौ स्रुवस्यैव स्रु-
चाञ्च पात्रत्वं स्यान्न शूर्पादीनाम् · नन्वेवमृत्विगादिष्वपि पात्रत्वप्रसङ्गः नैष दोषः
तेषां करणत्वेनानिर्देशात् तच्चैषामत्राशुद्धस्तच्चा वान्यो वामेध्य इति (१.१.३.१२.)
वाक्यशेषविरोधाच्च · शूर्पादीनि हि याज्ञिकानां प्रसिद्धानि ।

यजमानो वा ॥७॥ [१]

शूर्पाग्निहोत्रहवणि स्फ्यकपालं शम्याकृष्णाजिनमुलूखलमुसलं दृषदुपलमर्थ-
वच्च ॥८॥ स्फ्यकपालमित्येकवद्भावादिदमेकं द्वन्द्वम् तेन बहुभिरपि कपा-
लैरेकमेव पात्रमिति द्रष्टव्यम् · कपालानि च भिन्नस्य घटादेर्ग्राह्याणि · अभिन्ना-
न्यपि रौहिणकपालवत् निर्मितानि भवन्तीत्येकेऽइति धूर्तस्वामिनः । शूर्पं च
नडतृणमयमिषीकानिर्मितं वेणुदलनिर्मितं वा भवति । अर्थवच्च येन-येन पा-
त्रेणात्र प्रयोजनं तेषां सर्वेषामुपयोगक्रमेणासादनम् · तथा च कात्यायनः प्राञ्च-
प्राञ्चमुदगग्रैरुदगग्रं समीपतः तत्तथा सादयेद्द्रव्यं यद्यथा विनियुज्यतेऽइति · तच्चै-
वम् अनो वा पात्री वा व्रीहयो यवा वा · ततश्चैवम् अनो व्रीहयश्चानो
यवाश्च पात्री व्रीहयः पात्री यवाश्चेति वा · पवित्रच्छेदनानि पवित्रे च · उपवेषः
संयवनार्थमुदकं च · आज्यस्थाली आज्यं च · अमावास्यायां दोहनचतुष्टयम् · वेदार्थः
कुशमुष्टि(ः) दक्षिणार्था अन्वाहार्यतण्डुलाश्च · दर्भतृणमग्निश्च · इध्मो बर्हिश्च ·
स्रुवो जुहूश्च · उपभृद्ध्रुवा च · प्राशित्रहरणे शृतावदानं च · द्वे पुरोडाशपात्र्यौ
इति कर्कादयः · तदयुक्तमिति केचित् स्वसूत्रशाखान्तरसूत्रेषु सादनप्रतपनोप-
स्तरणादिष्वेकस्या एव दर्शनात् · यच्चेडापात्रीपिष्टपात्र्योरभेदमाहुस्तदपि अयुक्तम्

[१] अध्वर्युर्वा Mahâd.

शाखान्तरसूत्रेषु तयोर्भेददर्शनात् तथा तैत्तिरीयसूत्रम् प्राशित्रहरणं चेडापात्रं च मेक्षणं च पिष्टपात्री चेति · विकृतौ चातुर्मास्यादौ यत्र चर्वादिभिर्व्यवहिताः पुरोडाशाः तत्र भवतु पुरोडाशपात्रीभेदः · योक्रं यूनकुशाश्च · परिधयः कुशास्तीर्णं होतृषदनं च · इडापात्री षडवत्तं च · अन्तर्धानकटः पूर्णपात्रं च · पक्षे कर्मापवर्गा समिद्ध्यासाद्यते [1] · परिधीनामपि पृथगासादनमष्टादशकाष्ठकेध्मपक्षे एकविंशतिकाष्ठकेध्मपक्षे तस्मादेवेध्मात्त्रीणि काष्ठान्यादाय विकल्पेन परिधिपरिधानविधानात् । एवमत्र पात्राणामुपादानक्रमेणासादनमुक्तम् । यस्य-यस्य पात्रस्य येन क्रमेण प्रथमं कार्यार्थं हस्तेनोपादानम् तेनैव क्रमेण तस्यासादनम् · एवं च सुतरां दृष्टार्थता भवति लाघवं च · विनियोगक्रमेणासादने च तथा न स्यात् हविर्ग्रहणे पात्र्याः हविर्द्रव्यस्य च देशविप्रकर्षात् आज्यनिर्वापे स्थाल्या (आ)ज्यस्य च · तस्मादुपादानक्रम एव पितृभूतियाज्ञिकसंमतः पात्रासादने युक्तः कर्काचार्यास्तु विनियोगक्रमेणासादनमाहुः ॥ अथ पात्राणामासादनस्थानमाह ·

श्रपणस्य पश्चादुत्तरतो वा ॥ ९ ॥ श्रप्यन्तेऽनेन हवींषि इति श्रपणो गार्हपत्यो वाहवनीयो वा · तस्य पश्चात् प्राक्संस्थान्युदगग्राणि (उत्तरतः उदक्संस्थानि) प्रागग्राणि वा पात्राण्यासादयति · तदुक्तं कारिकायाम् उत्तरे चेदुदक्संस्थं प्राक्संस्थं पश्चिमे भवेत् ।

कर्मणे वामिति (१. ६.) शूर्पाग्निहोत्रहवण्यादाय वाचं यच्छति ॥ १० ॥ अध्वर्युः शूर्पमग्निहोत्रहवणीं च हविर्ग्रहणार्थमादाय वा° य° । मन्त्रश्चोभयार्थः द्विवचनान्तत्वात् · ततश्चैकस्यादानविस्मरणे पुनरपि द्विवचनान्त एव प्रयुज्यते । हविर्ग्रहणाभावे पयस्यापश्चादौ तयोरादानं न भवति [2] ।

प्रतपनं प्रत्युष्टं निष्टप्तमिति (१. ७.) वा ॥ ११ ॥ तयोरान्तयोः । मन्त्रयो राक्षसवात्तदुच्चारणानन्तरमप उपस्पृशेत् । प्रतपनं हविर्ग्रहणार्थः संस्कारः अतस्तदभावे न भवति ।

---

1) ? °वर्गसमि° २. कर्मवगी समित् Chambers 196. 2) वाग्यमस्य पदार्थधर्मत्वात् हविर्ग्रहणाभावेऽपि वाग्यमनं भवत्येव Mahâd.

गच्छत्युर्वन्तरिक्षमिति (१. ७.) अपपास्य पश्चादनस्तिष्ठत्समङ्गि [१] ॥१२॥ अध्वर्युः शकटं प्रति गच्छति गार्हपत्यादपरस्मिन्देशे स्थितम् [२]।

धूरसीति (१. ८.) धूरभिमर्शनम् ॥१३॥ युगस्य प्रान्तौ धूःशब्देनोच्येते यौ अनडुत्स्कन्धयोरुपरि निधीयेते [३]। प्रथमं दक्षिणस्या धुरस्तत उत्तरस्या अभिमर्शनमध्वर्युः करोति । अथवा एकस्या एव धुरोऽभिमर्शनं युक्तं दक्षिणस्या उत्तरस्या वा स्वशाखायामप्येकवचनश्रुतेः (१. १. २. १०.) ।

देवानामित्युपस्तम्भनस्य (१. ८-९.) पश्चादीषाम् ॥१४॥ अभिमृशति [४]। पितृयज्ञे पितॄणामसि वह्नितमं पितृहूतममित्यूहः [५] एकदेवत्ये आतिथ्यापवमानेष्ट्यादौ देवस्यासीति स्त्रीदेवत्ये प्रायणीयादौ देव्या असि द्विदेवत्ये देवयोरसीति यथायथमूहः कार्य इति कर्काचार्याः. केचिदत्र [मन्त्रे] लिङ्गवचनयोरनूहमिच्छन्ति प्रकृतावपि सांनाय्यवत्यां दर्शेष्टावसमवेतत्वात् अतो यथाश्रुत एव सर्वत्र प्रयोज्यः । अनेकयाजमानके यज्ञपती ह्वार्ष्टम् यज्ञपतयो ह्वार्षुरिति ।

विष्णुस्त्वेत्यारोहणम् (१. ९.) ॥१५॥ पश्चात्परीत्य दक्षिणचक्रस्योपर्यारोहणं करोति ।

प्रेक्षतऽउरु वातायेति (१. ९.) हविष्यान् ॥१६॥ व्रीहीन्यवान्वा । एतच्च प्रेक्षणं हविःसंस्कारः. अतश्च नानावीजेषु देवसूहविःषु चातुर्मास्यादिषु च प्रतिवीजमीक्षणम् ।

अपहृतमिति (१. ९.) निरस्यत्यन्यत् ॥१७॥ हविष्येभ्योऽन्यद्यत्तन्मध्ये पतितं भवति तृणलोष्टादिकं युगपन्नीचैः क्षिपति ।

अविद्यमानेऽभिमृशेत् ॥१८॥ नानावीजेषु प्रतिवीजं मन्त्रेण. हस्तेन स्पृशेत् [६]।

---

१) °ष्ठंत्समंगि १. °ष्ठत्समगि ३. °ष्ठंत्समगि ३. २) सहविष्यमासादितमेव तिष्ठतीत्यर्थः. संगतांगमनडुद्दहितं (!) सर्वावयवयुक्तम्. तत्प्रति हविर्ग्रहणार्थं गच्छति Mahâd. ३) धूरिति युगशम्यान्तरालदेशः Mahâd. ४) कस्तम्भीमिति कुत्सितोऽत्यल्पत्वात् २. कस्तम्भी शकटस्याधः पतनं वारयितुमीषाग्रोत्तम्भना मेथी उपस्तम्भनी. तस्योपस्तम्भनस्य पश्चादुत्तरामीषामभिमृश्य Ss. ५) अत्र विकृतौ यथार्थविपरिणामः Mahâd. ६) अविद्यमाने अपद्रव्ये तेनैव मन्त्रेण हविष्यानभिमृशेत्. भेदेन नानावीजेषु Mahâd.

यच्छन्तामित्यालभते (१. ९.) ॥ १९ ॥ [1]

देवस्य त्वेति (१. १०.) गृह्णात्याग्नेयं चतुरो मुष्टीन् ॥ २० ॥ अग्निहोत्रहवण्यां प्रक्षिपति । मुष्टित्रयं मन्त्रेण चतुर्थं तूष्णीम् · एवमेव सर्वेषु सूत्रेषु । ग्रहणानन्तरं च अग्निहोत्रहवण्याः शूर्पे हविः पृथक्पृथक्प्रक्षेपणीयम् · एवं शूर्पादानस्यापि (१०.) दृष्टार्थता भवति अग्निहोत्रहवण्यां च रिक्तायां हविरन्तरं ग्रहीष्यते आपश्च तत्र करिष्यन्त इति ।

एवमग्नीषोमीयम् ॥ २१ ॥ यथादेवतमन्यत् ॥ २२ ॥ [2]

भूताय त्वेति (१. ११.) शेषाभिमर्शनम् ॥ २३ ॥ नानाबीजेषु च प्रत्येकं समन्त्रकमभिमर्शनम् [3] ।

स्वरिति (१. ११.) प्राङ्गीक्षते ॥ २४ ॥ प्राच्यां दिशि विलोकनं करोति दृष्टिनिरोधसंजात श्रमापनयनार्थम् · हविर्ग्रहणाभावे प्राङ्गीक्षणाभावः श्रमाभावात् · पित्र्यायां तु दक्षिणाया दिश एवेक्षणम् दिग्विपर्यये तस्यास्तत्र प्राचीत्वात् ।

दृꣳहन्तामित्यवरोहति (१. ११.) ॥ २५ ॥ [4]

गच्छत्युर्वन्तरिक्षमिति (१. ११.) ॥ २६ ॥ उत्तरदेशं प्रति ।

श्रपणस्य पश्चात्सादयति पृथिव्यास्त्वेति (१. ११.) ॥ २७ ॥ गार्हपत्यस्य वाहवनीयस्य वा यस्मिन् श्रपणं करिष्यन्भवति तस्य पश्चात् शूर्पस्थानि गृहीतानि हवींषि सादयति । वरुणप्रघासेषु च पूर्वेद्युर्मेषमिथुनकरम्भपात्रार्थं गृहीतानां यवानां दक्षिणाग्नेः पश्चादासादनम् तस्यैव तत्र श्रपणत्वात् · पित्र्यायां च दिग्विपर्ययाद्गार्हपत्यदक्षिणाग्न्योरुत्तरतो हविषामासादनम् · त्र्यम्बकेषु गार्हपत्यस्य दक्षिणतः ।

---

१) हविष्यान्स्पृशति · भेदेन नानाबीजेषु Mahâd. २) एवं यथादेवतं हविर्भवति तथान्यद्गृह्णीयात् Mahâd. अन्यदप्यैन्द्राग्नादिकम् · या-या देवता यथादेवतम् Ss. ३) साकाङ्क्षत्वात्परिशेषयामीत्यध्याहार इति कर्कः · परं तु अभिमृशतीति विधेरभिमृशामीति युक्तम् । एकवाक्यत्वाच्च अत्र भूतशब्देन देवादीन्युच्यन्ते प्रजापतिं वै भूतान्युपासीदन्निति श्रुतेः (२. ४. २. १.) · तस्मै भूताय नारातये किंतु रातये दानार्थम् रातेर्दानकर्मणा इति यास्कोक्तेः (४. १७.) त्वामभिमृशामीति Mahâd. ४) अनसः सकाशात् · प्राङित्यनुवर्तते हविःसादनार्थम् Mahâd.

पात्र्यां वा स्फ्योपहितायाम् ॥२८॥ विकल्पे · अथवा स्फ्योपहितायां[1] पात्र्यामेतदनःसम्बद्धं सर्वं कर्म प्रत्येतव्यम् । पात्र्यै गृह्णातीति (१. १. २. ८.) पञ्चम्यर्थे चतुर्थी पात्र्याः · स्फ्यं पात्र्या अधस्तात्प्रेरयित्वा । अत्र विशेषमाह ·

धूरीषारोहणानि पात्रीबिले जपति ॥२९॥ अत्र धूरीषारोहणैस्तत्सम्बद्धा मन्त्रा लक्ष्यन्ते (तान्) पात्रीतो ग्रहणपक्षे पात्र्या मुखे गर्ते खाते जपति । अनन्तरायम् (१. १. २. ८.) अविच्छेदम् धूरीषारोहणानामभावेऽपि तदभिवादीनि यजूंष्यनन्तरित्य नान्तरा मुक्त्वा न परित्यज्य नान्येषामपहृतमित्यादीनां समवेतार्थानां केवलानां प्रयोगः · एषां च मन्त्राणां तऽएवार्था भवन्ति येऽनसि कथम् धूस्तावद्धूर्वतेर्बधकर्मण इति सापि (पात्री) किंचिदागच्छद्धिनस्ति तत्राप्यग्निरस्ति सर्वगतत्वात् हविर्ग्रहीष्यन्नध्वर्युस्तामतिक्रामति तस्याऽअपि निह्नुते धूरसीत्यादिना अनोवच्च पात्र्यपि हविष्यान्धारयतीति वह्नितममित्यादिशब्दैरुच्यते विष्णुश्चाध्वर्य्वात्मकस्तत्र पादेन क्रमते अत्र तु हस्तेनेति विशेषः · तस्मात्सिद्धप्रयोगाणां पात्र्यामपि तऽएवार्था इति हरिस्वामी · यदि तु[2] पात्र्यां गृह्णीयात्तदा धूरीषाद्यभावेन तदननुष्ठानकृतं[3] व्यवधानमन्तरायमन्तरेण तत्प्रकाशकयजूंषि[4] जपेदिति माधवाचार्याः । पात्रीतः पश्चाद्देशे उत्तरस्मिन्वोपविश्य प्राङ्मुखो ग्रहणं कुर्यात् पित्र्यायां दक्षिणासीनः त्र्यम्बकेषूदङ्ङासीनः · पित्र्यायां हि दक्षिणा प्राची त्र्यम्बकेषु उत्तरा प्राची · आसनाय स्थानासम्भवे पात्रीमपरेणैव गत्वा दक्षिणतः प्राङुपविष्टेनैव ग्रहणं कार्यम् पात्रीगार्हपत्ययोरन्तराले गमनस्यासिद्धत्वात् · अनस्यपि प्राङ्मुखोपविष्टेनैव ग्रहणं कर्तव्यम् ।

दृꣳहन्तामित्युत्थानम् (१. ११.) ॥३०॥ पात्रीपक्षे अवरोहणमन्त्रेण आसनादुत्तिष्ठति ।

कुशौ समावप्रशीर्णाग्रावनन्तर्गर्भौ कुशैश्छिनत्ति पवित्रे स्थ (१. १२.) इति ॥३१॥ मूलच्छेदनेन प्रादेशप्रमाणौ करोति · कुशशब्देनैकं तृणमुच्यते ।

---

१) स्फ्य उपहितो यस्याः । उपोहनं च ग्रहणकाले पात्र्या अधः स्फ्योदगग्रप्रेरणम् · पात्र्या दक्षिणतः प्रागग्रं स्फ्यं निधायेति गुरुचरणाः Mahād. २) उतो अपि तु यदि Sāy. at १. १. २. ८. ३) ?तदनुष्ठा॰ २. तड स्थानविरहादननुष्ठानकृतं Sāy. ४) ॰शक्यन्न (!) धूरसि देवानामसीत्यादीनि Sāy.

समौ मूलादारभ्याग्रपर्यन्तं तुल्यप्रमाणौ अन्तरिताग्रौ [1] अग्रवन्तौ अनन्तर्गर्भौ [2] गर्भे हि सति संख्यान्तरं स्यात् ।

त्रीन्वा ॥३२॥ पवित्रे स्थ इति मन्त्रश्चानूहित एव पवित्रत्रयपक्षेऽपि प्रवर्तत इति कर्कः · द्वयोश्चरितार्थत्वादनभिधानाच्च त्रिषु न प्रवर्तत इति पितृभूतिः । तुल्यविशेषणात् ।

हविर्ग्रहण्यामपः कृत्वा ताभ्यामुत्पुनाति सवितुर्व इति (१. १२.) ॥३३॥ हविर्गृह्यतेऽस्यामिति हविर्ग्रहणी अग्निहोत्रहवणी · पवित्राभ्यामेताः प्रोक्षणीः इत्क्षिप्योत्पूय ताभिः प्रोक्षति । अग्निहोत्रहवण्या हवींषि निर्वपतीति शाखान्तरात् · तेन हविर्ग्रहण्यामित्यग्निहोत्रहवण्यामित्यर्थः तेन पश्चादौ हविर्ग्रहणाभावेऽपि पात्रप्रोक्षणार्थे अग्निहोत्रहवण्यामेवापः क्रियन्ते ।

ता स्थानं तयोः ॥३४॥ अत ऊर्ध्वं पवित्रे तास्वेवाग्निहोत्रहवण्यां स्थितासु प्रोक्षणीषु स्थाप्येते यावत्तासां सद्भावः [3] ।

सव्ये कृत्वा दक्षिणेनोदिङ्गयति देवीराप इति (१. १२.) ॥३५॥ सोदकामग्निहोत्रहवणीं सव्यहस्ते निधाय दक्षिणेन ऊर्ध्वामुद्गृह्णाति अप ऊर्ध्वं चालयति । अत्र दक्षिणेनेति न वक्तव्यम् स्मृतित एव प्राप्तत्वात् वाच्यं वा सव्यहस्तस्थितानामेव प्रोक्षणीनामुदिङ्गनं यथा स्यादिति । अनेकयजमानके यज्ञपती सुधातू यज्ञपती देवयुवौ यज्ञपतीन्सुधातून्यज्ञपतीन्देवयून् · पितृयज्ञे च यज्ञपतिं देवपितृयुवमिति ।

प्रोक्षिता स्थेति (१. १३.) तासां प्रोक्षणम् ॥३६॥ तासामेवाग्निहोत्रहवणीस्थानामपामेकदेशेन तासामेव प्रोक्षणं कुर्यात् ।

हविश्चाग्नये त्वाग्नीषोमाभ्यां त्वेति (१. १३.) ॥३७॥ [4]

यथादेवतमन्यत् ॥३८॥

पात्राणि दैव्यायेति (१. १३.) ॥३९॥ [5] शुन्धध्वमिति प्रोक्षणमन्त्रगतबहु-

---

१) अत्रुटिताग्रौ Mahâd. २) न विद्यतेऽन्तर्मध्ये गर्भो ययोः Ss. ३) मूलावसेकान्तम् Mahâd. ४) हविश्च प्रोक्षति · अग्नये त्वेत्याग्नेयम् अग्नीषोमाभ्यां त्वेत्यग्नीषोमीयम् Mahâd. ५) दशगणसम्बन्धीनि पात्राणि दक्षिणेन प्रोक्षति Mahâd.

वचनसामर्थ्यात्सर्वाणि पात्राण्येकत्र राशीकृत्य प्रोक्षणं कर्तव्यम् · कर्काचार्यास्तु प्रोक्षणस्य पात्रोद्देशेन विधानात्समुदायस्य चाचोदितत्वात्प्रतिसंस्कार्य [१] संस्कारावृत्तेर्न्याय्यत्वाच्च प्रतिपात्रं प्रोक्षणं कर्तव्यम् बहुवचनं पूजार्थमित्याहुः · [तदसत् [२] · यथा व्रीहिप्रोक्षणे जातेः प्रोक्षणं न व्यक्तिप्रोक्षणम् तद्वत्पात्रप्रोक्षणेऽपि जातिप्रोक्षणं न व्यक्तिप्रोक्षणम् · अनेन बहुवचनमप्युपपन्नम्] । पितृयज्ञे च दैव्याय पित्र्याय कर्मणे शुन्धध्वं देवपितृयज्यायाऽइत्यूहः । प्रतिपात्रंप्रोक्षणपक्षे च केवलप्रधानार्थेषु पात्रेषु शूर्पकपालकृष्णाजिनोलूखलमुसलशृतावदानोपसर्जन्यादिषु पित्र्याय कर्मणऽइति प्रयोगः अङ्गप्रधानार्थेषु दैव्याय पित्र्यायेति केवलदेवकर्मार्थे दैव्यायेति ।

असंचरे प्रोक्षणीर्निधाय ॥४०॥ [३] यस्मिन्स्थाने कोऽपि न गच्छति प्रणीताहवनीययोरन्तराले (१.१.१.२१.) तत्र । याभिरद्भिर्हविषः पात्राणां च प्रोक्षणं कृतम् ताः प्रोक्षण्यः अग्निहोत्रहवणीस्थाः । यद्यपि गार्हपत्याहवनीयौ न व्यवेयादित्ययमपि (१. ८.२३.) असंचर एव स त्वप्रकृतत्वान्न गृह्यतऽइति कर्कः । प्रोक्षणीरिति यौगिक(ः) शब्दो न संस्कारनिमित्तो जातिनिमित्तो वा असंस्कृतास्वप्यप्सु प्रयोगात् ॥ ॥ तृतीया कण्डिका ॥ ३ ॥

अथ पद्धतिः ॥

ततोऽध्वर्युर्वारणं चमसं सव्यहस्ते कृत्वा दक्षिणहस्तस्थेनोदपात्रेण स्वयं तस्मिन्नुदकमासिच्य दक्षिणहस्तेन चमसं गार्हपत्यस्योत्तरतो निधाय तदनन्तरं भूतस्त्वेति मन्त्रेण हस्तेन चमसस्थमुदकमालभते · चमसस्यालम्भ इति कर्कः उदकस्यालम्भ इति याज्ञिकाः । ततो ब्रह्मन्नपः प्रणेष्यामीति ब्रह्माणं पृच्छति वाचं यच्छेति यजमानं प्रेष्यति · सर्वेषु प्रैषेषु कृतेषु ब्रह्मा प्रणय यज्ञमित्यादि (२.२.८.) यजमानं च धेहीत्यन्तमुपांशु पठित्वा ओं३ प्रणयेत्युच्चैरनुज्ञां करोति यथाध्वर्युः शृणोति · ततोऽध्वर्युश्चमसं गृहीत्वाहवनीयादुत्तरस्यां दिशि बर्हिर्वेदि दर्भेषु प्रणीताचमसं

१) वाचोदितत्वात्प्रतिसंस्कार्यं च २. २) The words given in crochets are added by a second hand at the margin. ३) २. draws this sûtra over to the next kaṇḍikâ, joining it with the there beginning sûtra, whereas Mahâd. and Ananta proceed in the just opposite way, closing this kaṇḍikâ by the first sûtra of the next.

निदधाति कस्त्वा युनक्तीति (१. ६.) मन्त्रेण · नाहवनीयमतिक्रम्य न चाप्राप्य किं त्वाहवनीयमुत्तरेणार्जवेन समतयैवासादयेत् · तत उपरिष्टादपि दर्भैराच्छादयेत्। तत आहवनीयस्य प्रागग्रैरुदगग्रैश्च दर्भैः परिस्तरणम् प्रथमं पुरस्तादुदगग्रैः ततो दक्षिणतः प्रागग्रैः पश्चादुदगग्रैः उत्तरतः प्रागग्रैः · एवं गार्हपत्यस्य परिस्तरणम् ततो दक्षिणाग्नेरप्येवमेव · आपस्तम्बः उदगग्रैः प्रागग्रैश्च दर्भैरग्नीन्परिस्तृणात्यु- दगग्राः पश्चात्पुरस्ताच्चेति ॥ ततोऽध्वर्युर्यजमानो वा द्विशः पात्राण्यासादयति विनियोगक्रमेण · आहवनीये गार्हपत्ये वा यत्र हविःश्रपणं करिष्यन्भवति तस्योत्तरतः पश्चाद्वा · उत्तरतश्चेत् उदक्संस्थम् असम्भवे प्राक्संस्थमपि पश्चाच्चेत् प्राक्संस्थम् असम्भवऽउदक्संस्थमपि · द्विश इत्येकेन प्रयत्नेन द्वे-द्वे पात्रे गृहीत्वा निदधातीत्यर्थः · आसादनं च समीपे निधानम्। तथा हि · शूर्पाग्निहोत्रहवणी स्फ्यकपालं शम्याकृष्णाजिनमुलूखलमुसलं दृषदुपलम् · अनो वा पात्री वा · धा- न्यमिति व्रीहयो वा यवा वा तत्र व्रीह्याग्रयणानन्तरं यवाग्रयणात्प्राग्व्रीहय एव तथा यवाग्रयणानन्तरं प्राग्व्रीह्याग्रयणाद्यवा एव अयं नियमो दर्शपूर्ण- मासयोरेव न तद्विकारेषु · तथा चाहापस्तम्बः व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेता यवेभ्यो दर्शपूर्णमासावेवं यवैरा व्रीहिभ्योऽपि वा व्रीहिभिरेवोभयत्रैते ह वै सूपचरतमा भवन्तीति बह्वृचब्राह्मणऽइति · पवित्रच्छेदनानि पवित्रे च · धृष्टिः संयवनोदकम् · स्थाली आज्यं च · वेदो दक्षिणार्थश्च · उदकतृणमग्निः[१] · इध्माबर्हिः · स्रुचश्चेत्यत्र स्रुवो जुहूः उपभृत् ध्रुवा · संमार्गार्हाणि यानि चेत्यत्र द्वे प्राशित्रहरणे शृतावदानम् द्वयोः पुरोडाशयोः साधारणी एका पुरोडाश- पात्री · योक्त्रं यूनकुशाश्च · पक्षे परिधयस्त्रयः पीठं कुशास्तीर्णम् · इडापात्री षड- वत्तम् · अन्तर्धानकठः पूर्णपात्रम् · पक्षे कर्मापवर्गा समित् ॥ एवं पात्राण्या- साद्य हविष्यसहितमनो गार्हपत्यस्य पश्चात्प्राग्रीषमवस्थापयेत् · अनः शकटम् तच्च युगयोक्त्रसंयुक्तं वस्त्रापरिवेष्टितं च स्थापनीयम्। ततः कर्मणे वामिति (१. ६.) मन्त्रेणाध्वर्युः शूर्पाग्निहोत्रहवण्योरादानं करोति। तत आरभ्य हविरावपनपर्यन्तं हविष्कृदाह्वानपर्यन्तं वाध्वर्योर्वाग्यमनम्। ततः प्रत्युष्टं रक्ष इति (१. ७.) मन्त्रेण

१) ? उदकतृण° २. and Chamb. 390. उदकतृण° Chamb. 196. दर्भतृण° Chamb. 635.

शूर्पाग्निहोत्रहवण्योर्गार्हपत्ये प्रतपनम्  निष्टप्तमिति (१. ७.) मन्त्रेण वा · तत उदकोपस्पर्शनम् । तत उर्वन्तरिक्षमिति (१. ७.) शकटं प्रति गच्छति । शकटाग्रसमीपेऽउपविश्य धूरसीति (१. ७.) मन्त्रेण तस्य दक्षिणामुत्तरां वा एकां धुरमभिमृशति । ततस्तत्र स्थित एवोपस्तम्भनस्य पश्चादुत्तरामीषामालभ्य देवानामसीति (१. ८-९.) मन्त्रं जपति । ततः शकटस्य पश्चान्मार्गेण दक्षिणतो गत्वा विष्णुस्त्वा क्रमतामिति (१. ९.) मन्त्रेण दक्षिणचक्रस्योपर्यारोहति · आरुह्योरु वातायेति (१. ९.) हविष्यान्व्रीहियवादीन्प्रेक्षते · ततो हविर्मध्ये यदि किंचित्तृणलोष्टाद्यन्यत्पतितं भवति तदा ततस्तदृष्टीवापहतमिति (१. ९.) निरस्यति  अन्यस्याभावेऽनेनैव मन्त्रेण हविरालभते · ततोऽपः स्पृशति · ततो यच्छन्तामिति (१. ९.) हविरालभते · ततः सव्यहस्ते शूर्पं निधाय तस्योपर्यग्निहोत्रहवणीमुत्तानां निधाय प्राङासीनो देवस्य त्वेति (१. १०.) मुष्ट्या प्रक्षिपति  एवमपरं मुष्टिद्वयमनेनैव मन्त्रेण प्रक्षिप्य चतुर्थं मुष्टिं तूष्णीं प्रक्षिपति · ततो गृहीतं हविः शूर्पमध्ये दक्षिणपार्श्वे प्रक्षेपणीयम् यथा हविरन्तरेण संकरो न भवति · ततोऽग्नीषोमीयपुरोडाशार्थं देवस्य त्वा अग्नीषोमाभ्यां जुष्टमिति (१. १०.) मन्त्रेण त्रिर्गृह्णाति चतुर्थं तूष्णीम् · ततः शूर्पमध्ये पृथगुत्तरतस्तद्धविः प्रक्षिप्य भूताय त्वेति (१. ११.) मन्त्रेण शकटे यत्परिशिष्टं हविस्तदभिमृशति  तच्च गृहीतहविर्मध्ये न मिश्रणीयम् · ततोऽनस्युपविष्ट एव स्वरभिविख्येषमिति (१. ११.) प्राचीमीक्षते । ततो दृंहन्तामिति (१. ११.) मन्त्रेण शकटादवरोहति । तत उर्वन्तरिक्षमिति (१. ११.) मन्त्रेण गार्हपत्यसमीपेऽउत्तरस्यां गच्छति । ततस्तच्छूर्पं सहविष्कं पृथिव्यास्त्वेति (१. ११.) मन्त्रेण श्रपणस्य पश्चात्सादयति निदधाति · श्रपणशब्देनात्र यस्मिन्हविःश्रपणं क्रियते गार्हपत्यो वा आहवनीयो वा सोऽभिधीयते ॥  अथवा अनसः कार्यं पात्र्या कर्तव्यम् । अस्मिन्पक्षे अनस आसादनाभावः  तत्स्थाने पात्री आसादनीया । तदा पात्र्यासादनानन्तरं सहविष्कां पात्रीं गार्हपत्यस्य पश्चात्प्रागग्रामुदगग्रां वा स्थापयित्वा तस्या अधस्तात्स्फ्यं प्रागग्रमुदगग्रं वा प्रेरयित्वोपधेयम् · ततः शूर्पाग्निहोत्रहवण्योरादानादि । अस्मिन्पक्षे उर्वन्तरिक्षमिति पात्रीसमीपे गत्वा धूरसि देवानामसि विष्णुस्त्वा क्रमतामित्येतान् त्रीन्मन्त्रान्पात्रीबिले जपति पात्र्याः पूर्वा-

र्धमभिमृश्य जपति बिलं पात्रीमुखम् । तैत्तिरीयसूत्रे यच्चु वै नानो भवति जघनेन गार्हपत्यं स्फ्यं निदधाति स्फ्यऽउपरि पात्रीं पात्र्यां पुरोडाशीयानावपत्यथ पूर्वार्धे पात्र्या अभिमृशति धूरसीत्यादि । पात्र्या उत्तरतः पश्चाद्वा दक्षिणतो वा यथासम्भवं प्राङ्मुख उपविष्टो हविरीक्षणमपद्रव्यनिरसनमालम्भनं वा कृत्वाप उपस्पृश्य हविरालभ्य ग्रहणं शेषाभिमर्शनं प्राङ्गीक्षणं च कृत्वा दृच्छन्तामित्यनेन मन्त्रेणोत्तिष्ठति · तत उत्तरतो गत्वा अपणास्य पश्चादासादयति ॥ ततः समप्रमाणौ साग्रौ अनन्तर्गर्भौ अच्छरिताग्रौ कुशौ पवित्रे स्थ इति (१. १२.) मन्त्रेण कुशैः क्षुरिकास्थानीयैश्छिनत्ति · अथवा एवंविधांस्त्रीन्कुशाननेनैव मन्त्रेणानूदितेन कुशैश्छिनत्ति । ततोऽग्निहोत्रहवण्यां सशूकायामनिर्मृष्टायां स्वयमेवोदकमासिच्य सवितुर्व इति (१. १२.) मन्त्रेण ताभ्यां पवित्राभ्यामुत्पुनाति उत्क्षिपति । पवित्रयोः हविर्ग्रहण्यां स्थापनम् । ततः सव्यहस्तेऽग्निहोत्रहवणीं निधाय सव्यहस्तस्थामेव संलग्नामेव दक्षिणहस्तेनोदिङ्गयति ऊर्ध्वं चालयति । ततः प्रोक्षिता स्थेति (१. १३.) ताभिरेव स्रुक्स्थाभिस्तासामेव प्रोक्षणं हस्तेनैव कार्यम् · ततो ब्रह्मन्हविः प्रोक्षिष्यामीति ब्रह्माणं पृच्छति · ततो ब्रह्मा प्रोक्ष यज्ञं धेहीत्यन्तमुपांशूक्त्वा ओं प्रोक्षेत्युच्चैः प्रसौति (२. २. १०.) · ततोऽध्वर्युरग्निहोत्रहवण्याः सकाशादुदकं हस्तेनादाय शूर्पस्थे हविषी प्रोक्षति अग्नये त्वा जुष्टमिति (१. १३.) प्रथमम् अग्नीषोमाभ्यां त्वा जुष्टमिति द्वितीयम् । ततः सर्वाणि पात्राण्येकत्र राशीकृत्य दैव्याय कर्मणऽइति (१. १३.) मन्त्रेण सर्वाणि सहैव प्रोक्षति अत्र बहु उदकमादाय तथा प्रोक्षणं कार्यं यथा सर्वेषां प्रोक्षणीबिन्दवः स्पृशन्ति · प्रतिपात्रं तु प्रोक्षणावृत्तिपक्षस्तु युक्ततरः प्रोक्षणस्य पात्रसंस्कारत्वात् प्रतिसंस्कार्यं च संस्कारावृत्तेर्न्याय्यत्वादिति · मन्त्रे तु बहुवचनं पूजार्थम् · पात्राणि न्युब्जान्यासादनीयानि उत्तानानि कृत्वा त्रिः प्रोक्षतीति सर्वेषु सूत्रान्तरेषु तत्र सकृन्मन्त्रः द्विस्तूष्णीम् ॥ ततोऽसंचरे प्रणीताहवनीयान्तराले गार्हपत्याहवनीयान्तराले वा प्रोक्षणीनां निधानं कर्तव्यम् · आपस्तम्बः प्रोक्षणीशेषमग्रेण गार्हपत्यं निधायेति · अयमप्यसंचरो भवति गार्हपत्याहवनीयौ न व्यवेयादित्यनयोरन्तराले संचरणप्रतिषेधात् (१. ८. २३.) · पवित्रयोः प्रोक्षणीष्वेव निधानम् ॥ ॥३॥ इति द्वितीयस्य तृतीया कण्डिका ॥

शर्मासीति (१. १४.) कृष्णाजिनादानम् ॥ १ ॥ कृष्णमृगस्य चर्मणो हस्तेन ग्रहणम् · कृष्णस्याजिनमिति तत्पुरुषो न कर्मधारयः कृष्णं च तदजिनं चेति · तदेतत्कृष्णाजिनादानमवघातार्थम् अतश्चावघाताभावे पश्चादौ न भवति ।

अपेत्य पात्रेभ्योऽवधूनोत्यवधूतमिति (१. १४.) ॥ २ ॥ तत्कृष्णाजिनं पात्रेभ्योऽपेत्य अतिनीय परं नीत्वा यत्संलग्नममेध्यमयज्ञियं तत्कम्पयित्वाधः पातयति । अत्र कृष्णाजिनस्यैवापनयनं न कर्तुरिति कर्कः अतिनत्येव पात्राण्यवधूनोतीति (१. १. ४. ४.) श्रुतेः · हरिस्वामिनस्त्वध्वर्योरेवातिक्रमणं व्याख्यातवन्तः अतिनत्य अतिक्रम्य पात्राण्यतीत्य न हि पात्राणि मेध्यानि सन्ति [1] पुनरमेध्यानि कर्तुं युक्तमित्यभिप्रायेणाध्वर्युः पात्राण्यतिक्रम्य कृष्णाजिनं सकृदवधूनोति · शाखान्तरेषु त्रिरवधूनोतीत्युक्तमस्ति ।

प्रत्यग्ग्रीवमास्तृणात्यदित्यास्त्वगिति (१. १४.) ॥ ३ ॥ चर्मणः प्राग्ग्रीवतायां परिभाषया (१. १०. ४.) प्राप्तायां सत्यां तस्या अयमपवादः · प्रतीच्यां ग्रीवा यस्य तत्प्रत्यग्ग्रीवम् । तैत्तिरीये कृष्णाजिनमवधूनोत्यूर्ध्वग्रीवमुदक्कावृत्यावधूतमित्यथैतत्पुरस्तात्प्रतीचीनग्रीवमुत्तरलोमोपस्तृणातीति । विहाराद्रुत्तरदेशे पश्चाद्रुत्करस्य उत्तरेण गार्हपत्यं वा ।

सव्याशून्ये निदधात्युलूखलमद्रिरसि ग्रावासीति वा (१. १४.) ॥ ४ ॥ सव्यहस्तेनाशून्ये अमुक्ते कृष्णाजिने ।

प्रति त्वेत्युभयोः (१. १४.) ॥ ५ ॥ मन्त्रयोः शेषः कर्तव्य इति शेषः ।

हविरावपत्यग्नेस्तनूरिति (१. १५.) ॥ ६ ॥ कण्डनार्थमुलूखलमध्ये प्रक्षिपति । पितृयज्ञे पितृवीतयऽइत्यूहः [2] ।

वाचं विसृजते ॥ ७ ॥ [3] यजमानश्च ॥ ८ ॥

हविष्कृता वा ॥ ९ ॥ विकल्पे · हविष्कृच्छब्देन सह हविष्कृदाह्वानकाले ।

नानाबीजेष्वन्त्ये सामर्थ्यात् ॥ १० ॥ [4] अन्त्यऽएव हविष्युलूखलं प्राप्ते ।

---

१) Accus. Plur. Neutr. २) दार्षद्वतावभृथेऽपां तनूरिति Mahâd. ३) अध्वर्युः
४) नानाबीजेषु हविःषु अन्त्ये हविरावपने · वाग्यमनेन (हि) सर्वाणि हवींषि समर्थानि भवन्ति Mahâd.

अस्ति हि चोदकस्य सामर्थ्यमनियमं बाधितुम् · मुसलादानादयो वाग्यमेनाविसृष्टवाचा क्रियमाणा विगुणा[१] एव  हविषस्तु विसृष्टवाचा प्रक्षिप्यमाणस्य वैगुण्यम् · तस्माद्यथोभयोरवैगुण्यं स पक्षः स्वीकार्यः ।

बृहद्ग्रावेति (१.१५.) मुसलमादत्ते ॥११॥

स इदमित्यवदधाति (१.१५.) ॥१२॥[२]  कर्कमते स इदं देवेभ्य इत्यत्र देवाभ्यां देवाय देव्यै इत्येवं देवानामसीतिवत् निर्णयः  पितृयज्ञे च स इदं पितृभ्य इत्यूहः ।

हविष्कृदेहीति (१.१५.) त्रिराह्वयति ॥१३॥  अध्वर्युरवघ्नन्हविःकण्डनं कुर्वन्पत्नीमाग्नीध्रं वा आकारयति

अतः पत्न्यवहन्त्यन्यो वा ॥१४॥[३]  अत इति ग्रहणात् पूर्वमध्वर्युरवघाते प्रवृत्तोऽस्तीति गम्यते  शाखान्तरश्रुतेश्च । अन्य इति आग्नीध्रः ।

आह्वयत्याहन्त्यन्यो दृषदुपले कुक्कुटोऽसीति (१.१६.) त्रिः शम्यया द्विर्दृषदं सकृदुपलाम् ॥१६॥  हविःकण्डनकर्त्रीं पत्नीं हविःकर्तारमग्नीध्रं वा अध्वर्यौ आकारयति सति  अन्यः आग्नीध्रो विहारस्योत्तरत उपविष्टः दृषदुपले आहन्ति[४] · तीक्ष्णीकरणार्थत्वमाहननस्य । ननु सूत्रे दृषदुपलेऽइति न वाच्यम् द्विर्दृषदं सकृदुपलामित्यनेन सिद्धत्वात् · सत्यम् · उभयत्र सूत्रेणैतज्ज्ञापयति यत्सामान्यस्य शाखान्तरीयेणापि विशेषेणैकवाक्यता[५] भवति · तेन यद्यपि सापि माध्यन्दिनीयायां सामान्योपदेशाद्दृषदुपले समाहन्तीति (१.१.४.२३.)  तथापि तदाहननमात्रेणाशास्त्रार्थानुष्ठानसिद्धिः  किं तु द्विर्दृषदं सकृदुपलामिति विधिविशेषेण · अत एकवाक्यताप्रसाधनार्थमुभयस्य सूत्रणम् । पश्चादौ निर्व्यापारेऽप्यध्वर्यावग्नीध एवाहननम् ।

वर्षवृद्धमसीति (१.१६.) शूर्पमादत्ते ॥१६॥  अध्वर्युस्तुषेषु विमुक्तेषु शूर्पं हस्तेन गृह्णाति[६] ।

---

१) ? अविगुणा २.  २) तं मुसलमुलूखलहविष्ये स्थापयति Mahâd.  ३) पितृयज्ञे त्वग्नीदेव पितृयज्ञस्यापत्नीकत्वात् Mahâd.  ४) कुट्टयति Mahâd.  ५) ?°षणैक° २.  ६) अग्नीद्वा पत्नी वा Mahâd.

प्रति त्वेति (१. १६.) हविरुद्वपति ॥१७॥ उलूखलाद्धविर्निष्काश्य शूर्पे निर्वपति ।

परापूतमिति (१. १६.) निष्पुनाति ॥१८॥ तुषान्पृथक्कृत्याधः पातयति ।

अपहतमिति (१. १६.) तुषान्निरस्यति ॥१९॥ आग्नेयस्य मध्यमे कपाले तुषानोप्य कृष्णाजिनस्याधस्तान्निरस्यति उत्करदेशे ।

वायुर्व इति (१. १६.) विविनक्ति ॥२०॥ सतुषान्निस्तुषांश्च पृथक्करोति · अकण्डितान्पृथक्कृत्वाग्रतः कण्डितान्करोति ॥ हविरावपनमुसलयोजनकण्डनहविरुद्वपननिष्पवनविवेकीकरणपुनःकण्डनतुषनिरसनाभिमन्त्रणफलीकरणकणनिधानानि सर्वेषां हविषां ग्रहणक्रमेण पृथक्पृथक् मन्त्रवन्ति कर्तव्यानि अन्यत्सर्वं तन्त्रेण[1] ।

देवो व इति (१. १६.) पात्र्यामोप्याभिमन्त्रयते ॥२१॥ तान्पृथक्कृतांस्तण्डुलानध्वर्युस्तूष्णीं पात्र्यामोप्य तण्डुलान्स्पृष्ट्वा विलोकयित्वा मन्त्रं पठति । नानाबीजेषु पृथगेवाभिमन्त्रणम् कालस्य भिन्नत्वात्[2] ।

त्रिः फलीकरोति ॥२२॥ तण्डुलानवहत्यावहत्य सूक्ष्मतुषेभ्यो वियोज्य निष्पूय-निष्पूय च नीरजस्कानुज्ज्वलान्करोति वारत्रयम् तूष्णीम्[3] ।

देवेभ्यः शुन्धध्वं देवेभ्यः शुन्धध्वमित्येके ॥२३॥ वीप्सा प्रतिपर्यायं सकृन्मन्त्रप्राप्त्यर्था । कर्कमते देवाभ्यां देवाय देव्यै पितृभ्य इत्यूहः ।

फलीकृत्य कणान्निदधाति ॥२४॥ तण्डुलान्फलीकृत्य कणान्सूक्ष्मतून्प्रान्सुगुप्तान्स्थापयति[4] सप्रयोजनत्वात् वक्ष्यते हि पुरोडाशकपालेन कणानपास्यतीति (३. ८. ७.) · तेनैव च तेषां कणसंज्ञा संव्यवहारार्था ।

पेषणोपधाने युगपत् ॥२५॥ तण्डुलानां पेषणं कपालानामुपधानम्[5] ।

---

[1] स्थूलानामणिष्ठानां विवेचनं पृथक्करणम् · ऊर्ध्वशूर्पेण निष्पवनम् तिर्यक्शूर्पेण विवेचनमिति प्रसिद्धेः । नानाबीजेष्ट्यां हविरावपनमुसलयोजनहविरुद्वपननिष्पवनविवेकीकरणानि भेदेन · तुषनिरसनं तु सहैव Mahâd. [2] आभिमुख्येन मन्त्रपाठोऽभिमन्त्रणम् · नानाबीजेष्ट्यां तन्त्रेण संनिपातात् Mahâd. [3] उलूखले हविष्यकरणं कण्डनमुद्वापो निष्पवनं विवेचनं कणनिष्काशनमिति फलीकरणम् Mahâd. [4] अपासनार्थं Mahâd. [5] पेषणोपधानयोः कपालानामुपधानं बहिरङ्गत्वादग्नीधः तण्डुलानां पिष्टकरणमन्तरङ्गत्वादध्वर्योः । एवं युगपत्कृतः Mahâd.

विरोधादेव कपालोपधानेऽग्नीधः कर्तृत्वम् न वचनात् · ततश्च यत्र विरोधो नास्ति वरुणप्रघासेऽध्वर्योर्मेषकरणे प्रतिप्रस्थातुः करम्भपात्रमेषीकरणे च तत्र अध्वर्योः प्रतिप्रस्थातुश्च यथास्वं स्वयमेव दक्षिणाग्नौ कर्परोपधानम् नाग्नीध इति ॥

तत्र प्राचः क्रमवर्तिप्राक्छ्रुतिमन्त्रक्रमानुसारेण पूर्वमुपधानमुपदिशति ।

धृष्टिरसीत्युपवेषमादायापाग्नऽइत्यङ्गारान्प्राचः करोति (१. १७.) ॥२६॥ उपवेषोऽङ्गारापोहनसमर्थं हस्ताकृति काष्ठम् · तदादाय तेन खरस्थानपरभागाद्गार्हपत्याङ्गारान्खरस्य प्राग्भागे करोति पश्चाद्भागस्य कपालोपधानार्थं रिक्तीकरणाय · अतश्चर्विष्ट्यां तदभावः धानाभर्जनोपधाने च उभयोरप्यङ्गारेष्वेवाधिश्रयणप्रसिद्धेः [1] । पितृयज्ञे च दक्षिणार्धादुत्तरार्धे उद्वहनम् दक्षिणार्धे कपालोपधानविधानात् · त्र्यम्बकेषु चोत्तरार्धाद्दक्षिणार्धेऽङ्गारप्रेरणम् उत्तरार्धे कपालोपधानविधानात् ।

आ देवयज्ञमित्यङ्गारमाहृत्य कपालेनावच्छादयति ध्रुवमसीति (१. १८.) ॥२७॥ उपवेषेण दूरेभ्योऽङ्गारेभ्यः सकाशादेकमङ्गारं पुरोडाशश्रपणस्थाने आहृत्य आनीय कपालेन अवच्छादयति । अयं पदार्थो भर्जने चरुस्थाल्यां च न भवति [2] ।

अमुष्येति द्विषच्छब्देऽभिचरन् ॥२८॥

अन्यत्रापि ॥२९॥ [3] न केवलमत्र द्विषच्छब्दे अमुष्येत्यादेशः [4] । अभिचारबुद्ध्यभावे मन्त्रस्याभिचरणप्रयोजनाभावान्नाभिचारणिकत्वम् अतस्तदुच्चारणे उदकोपस्पर्शनाभावः ।

सव्याङ्गुल्याशून्येऽङ्गारं निदधात्यग्ने ब्रह्मेति (१. १८.) ॥३०॥ [5] मध्यमकपालोपधानानन्तरं सव्याङ्गुल्याशून्ये अविमुक्ते मध्यमकपाले अ° नि° । धानाभर्जनस्यापि प्रथमकपालधर्मा भवन्ति · तेन ध्रुवमसीत्युपधानम् अग्नेरुपरीति विशेषः ।

---

1) चर्विष्ट्यां धानेष्ट्यां चापोहनाभावः · अपोहनस्योपधानधर्मत्वं देशरेचनार्थत्वात् Mahâd. 2) प्रथमकपालधर्मोऽयम् न द्वितीयादिकपालानाम् तं मध्यमेन कपालेनाभ्युपदधातीति (१. २. १. ६.) श्रुतेः Mahâd. 3) अमुष्येति द्विषच्छब्देऽभिचरन्ब्रूयात् यथा द्विषतो बधोऽसीत्यादि Mahâd. 4) शत्रुनामादेशः 5) सव्यहस्तस्य प्रदेशिन्याशून्ये क° अ° उपवेषेण नि° । इत्यपि प्रथमकपालधर्मोऽयम् न द्वितीयादिकपालानाम् कुतः अधस्तादङ्गाराभावात् प्रथमकपाले उपरिष्टादङ्गारनिधाने (°न Cod.) मन्त्रपाठात् Mahâd.

सव्याशुन्ये कपालेऽग्ने ब्रह्मेति मन्त्रेणाङ्गारनिधानं प्रतिकपालं भवतीति कर्कः ।

धरुणमिति (१. १८.) पश्चात् ॥ ३१ ॥ मध्यमकपालस्य [1] पश्चाद्धरुणमसीति मन्त्रेण द्वितीयं कपालमुपदधाति ।

पुरस्ताद्धर्त्रमिति (१. १८.) ॥ ३२ ॥ [2]

विश्वाभ्य इति (१. १८.) दक्षिणतः ॥ ३३ ॥ [3]

समं विभज्य द्वे दक्षिणत एवमुत्तरतश्चित स्थेति (१. १८.) ॥ ३४ ॥ अवशिष्टानि चत्वारि समं विभज्य । चित स्थ इति तेषां सर्वेषां प्रत्येकमुपधानमन्त्रः · तेषु च स्मार्तेन प्राद्क्षिण्येन उपधानक्रमः [4] · उत्तरतो यत्कपालद्वयं तदध्यर्धप्रमाणम् ।

एवमेकादशाग्नीषोमीयस्य ॥ ३६ ॥

अधिकं दक्षिणतः ॥ ३७ ॥ चतुर्णामुपधानानन्तरमवशिष्टानां सप्तानां समविभागे यदधिकं विभक्तुं न शक्यते तद्दक्षिणत उपदधाति ॥ एतानि सर्वाणि कपालानि निरन्तराणि संश्लिष्टानि समानि चोपधेयानि यथान्तरा भूमिर्न दृश्यते · अत्र मध्यमपङ्क्तिकपालानि द्व्यङ्गुलानि समचतुरस्राणि एवं च षडङ्गुलदीर्घा मध्यमा पङ्क्तिः · दक्षिणोत्तरपङ्क्ती तु किंचित्ततो न्यूने पुरोडाशस्य कूर्माकारोक्त्या वृत्ताकारत्वप्रसिद्धेर्यावत्कपालं प्रथनविधेश्च तदर्थकपालचितेरपि अर्थाद्वृत्ताकारताया गम्यमानत्वात् । ऐन्द्राग्ने चतुर्थोपधानानन्तरं समविभागेन चत्वारि दक्षिणतश्चत्वार्येवोत्तरतः ॥ अत्र कपालचितिक्षेत्रं मध्यमाश्वशफप्रमाणं षडङ्गुलं वृत्तं कृत्वा [5] ततः प्रागपच्छेदेन समं त्रेधा विभज्य मध्यमभागस्य तिर्यगपच्छेदेन त्रेधा विभागः कार्यः दक्षिणोत्तरभागयोस्तु खण्डचन्द्राकारयोः पुरोडाशकपालसंख्यानुरोधेन तिर्यक् विभागः · तत्र षट्कपाले दक्षिणो भागो द्वेधा उत्तरे त्वेकमेव कपालं खण्डचन्द्राकारमुत्तरभागप्रमाणम् · सप्तकपाले दक्षिणो भागस्त्रेधा उत्तर एकधा ·

---

१) प्रथमस्य Mahâd. २) प्रथमस्य पुरस्तात्तृतीयम् Mahâd. ३) प्रथमस्य दक्षिणतश्चतुर्थम् Mahâd. ४) प्राद्क्षिण्यक्रमस्त्ववचनेन न भवति किंतु वचनेनैव भवति · यथा ६. ३. ५. १७. २. १३. · अपि चावृत्तिसामन्तवचनेन प्राद्क्षिण्यक्रमो भवति · न ज्ञानेऽत्र याज्ञिका अवचनेन कथं प्राद्क्षिण्यक्रममाश्रियन्ते Mahâd. ५) एककपालमारभ्य त्रयोदशकपालान्तं षडङ्गुलं चयनक्षेत्रम् तत्कपालकल्पनेन पूरणीयम् Mahâd.

अष्टाकपाले दक्षिणो भागस्त्रेधा उत्तरो द्वेधा · नवकपाले दक्षिणश्चतुर्धा उत्तरो द्वेधा · दशकपाले दक्षिणश्चतुर्धा मध्यमोत्तरौ त्रेधा · एकादशकपाले दक्षिणः पञ्चधा इतरौ त्रेधा · द्वादशकपाले दक्षिणः पञ्चधा मध्ये त्रेधा उत्तरश्चतुर्धा · त्रयोदशकपाले दक्षिणः षड्धा उत्तरश्चतुर्धा · मध्यमः सर्वत्र त्रेधैव। एकं कपालं चेत् तत्पाणिसंमितम् · द्विकपाले वृत्तस्य तिर्यगपच्छेदेन द्वेधा विभागः · त्रिकपाले वृत्तस्य तिर्यक्समं त्रेधा विभागः · चतुष्कपाले वृत्तं समं[1] प्राञ्चमपच्छिद्योत्तरभागस्य त्रेधा विभागः दक्षिणत एकम् · पञ्चकपालेऽपि वृत्तं प्राञ्चं द्वेधापच्छिद्योत्तरभागस्य त्रेधा विभागः दक्षिणस्य द्वेधा। कपालानि तु घर्षणाद्युपायेन[2] तथा करणीयानि यथा कपालचितिक्षेत्रं वृत्तं सम्पूर्यते।

भृगूणामित्यङ्गारैरभ्यूहति (१. १८.) ॥३८॥ तानि कपालानि गार्हपत्याङ्गारैराच्छादयति। एककपाले तप्यस्व द्विकपाले तप्येथामित्यूहः। एतच्च कपालानां सुतप्तताकरणार्थम् सुतप्तेष्वधिश्रितः पुरोडाशोऽधस्तात्पच्यते[3] · एवं च कपालधर्मग्राहिणोऽपि धानाभर्जनस्याङ्गारैरभ्यूहनं न भवति भर्जनस्याधस्तात्तापनप्रसिद्धत्वात्॥ ॥ चतुर्थी कण्डिका ॥४॥

अथ पद्धतिः॥

ततोऽध्वर्युः शर्मासीति (१. १४.) मन्त्रेण कृष्णाजिनं हस्तेन गृह्णाति · तत आसादितपात्रेभ्यः परतो गत्वा कृष्णाजिनमवधूनोत्यवधूतमिति (१. १४.) मन्त्रेण · उदकोपस्पर्शनम् · तत उत्तरेण गार्हपत्यमुत्करदेशे वा प्रत्यग्ग्रीवं कृष्णाजिनमास्तृणाति अदित्यास्त्वगसीति (१. १४.) द्वाभ्यां हस्ताभ्यां विस्तारयति। सव्येन हस्तेनाविमुक्ते कृष्णाजिने दक्षिणेन हस्तेनोलूखलमाहृत्य कृष्णाजिनस्योपरि निदधाति अद्रिरसि वानस्पत्य इत्यनेन मन्त्रेण (१. १४.) ग्रावासि पृथुबुध्न इत्यनेन वा प्रति त्वादित्यास्त्वग्वेत्त्वित्युभयोर्मन्त्रयोः शेषः कार्यः। ततः शूर्पे पृथक्स्थापितं हविर्द्वयं मिश्रीकृत्य सव्येनाविमुक्तोलूखलमध्ये अग्नेस्तनूरसीति (१. १५.) मन्त्रेण शूर्पेणैव हविरावपति। ततोऽध्वर्युयजमानयोर्वाग्विसर्गः। ततोऽध्वर्युर्बृहद्ग्रावेति (१. १५.)

---

१) ? सं २. २) ? घर्ष° २. ३) पुरोडाशाधिश्रयणकाले चितिस्थानङ्गारानपसार्याधिश्रयणम् Mahâd.

मुसलं हस्तेन गृह्णाति · स इदं देवेभ्य इत्युलूखलमध्ये (१. १५) मुसलं प्रवेशयति · ततः स्वयमेव कण्डने प्रवृत्तः कण्डनं कुर्वन्नेव हविष्कृदेहीति त्रिर्हविःकण्डनकर्त्रीं पत्नीं हविषः कण्डनकर्तारमग्नीधं वा कण्डनार्थमाह्वयति । अत्र वाध्वर्युयजमानयोर्वाग्विसर्गः । यस्मिन्कालेऽध्वर्युर्हविष्कृदेहीत्याह्वयति तस्मिन्नेव काले सहैवाग्नीध्रः कुक्कुटोऽसीति (१. १६.) मन्त्रेण शम्यया दृषदं कुट्टयति · मन्त्रावृत्तिः · उपलां शम्यया एकवारं कुट्टयति अनेनैव मन्त्रेण । तदनन्तरं पत्नी वा आग्नीध्रो वा कण्डनं करोति · वितुषीभूतेषु व्रीहिषु अध्वर्युर्वर्षवृद्धमिति (१. १६.) मन्त्रेण हस्तेन शूर्पं गृह्णाति · ततः प्रति त्वा वर्षवृद्धमिति मन्त्रेण कण्डितं हविरुलूखलमध्याद्धविर्निष्काश्य तूष्णीं शूर्पे निदधाति · ततः परापूतमिति (१. १६.) मन्त्रेण शूर्पेण निष्पुनाति तुषान्पृथक्करोति · ततोऽप उपस्पृश्य वायुर्व इति (१. १६.) मन्त्रेण तण्डुलानकण्डितांश्च विविनक्ति पृथक्पृथक्करोति · ततः कण्डितान्निधायाकण्डितान्पुनरुलूखलमध्ये प्रवेश्य कण्डनं कृत्वा पुनर्निष्काश्य शूर्पे कृत्वा तुषान्पृथक्कुर्यात् · ततः सर्वांस्तुषानपहतमिति (१. १६.) मन्त्रेणोत्करदेशे निरस्येत् · अत्र शाखान्तरेषु पुरोडाशकपालेनाधः कृष्णाजिनमिति कणावन्निरसनमुक्तमस्ति । तुषनिरसनानन्तरमुदकस्पर्शनम् · ततः शूर्पस्थांस्तण्डुलान्पात्र्यां प्रक्षिप्य देवो वः सवितेत्यभिमन्त्रयते तण्डुलाननामिकाग्रेण स्पृशन्विलोकयन्वा मन्त्रं पठतीत्यर्थः · तथा चोक्तं कात्यायनेन (कर्म° ३. १. ११.) स्पृशन्ननामिकाग्रेण क्वचिदालोकयन्नपि अनुमन्त्रणीयं सर्वत्र सदैवमनुमन्त्रयेदिति । ततस्त्रिः फलीकरोति त्रिःकण्डनेन सूक्ष्मकणिकाभ्यो वियोज्योज्ज्वलान्करोतीत्यर्थः · तच्चैवम् पूर्वं हविरुलूखलमध्ये न्युप्य कण्डनं कृत्वा निष्काश्य शूर्पेण निष्पूय कणान्निदधाति · एवमेव वारद्वयं कर्तव्यम् प्रतिफलीकरणं च कणनिधानं कर्तव्यम् ॥ ॥ ततः पेषणोपधाने सह भवतः · तत्र विरोधादध्वर्युः पेषणं करोति अग्नीच्च कपालोपधानम् · तत्र सूत्रक्रमेण प्रथमं कपालोपधानमुच्यते ॥ तत्राग्नीत्प्रथमं कपालानि प्रक्षालयति । तैत्तिरीयसूत्रे अथैतानि कपालानि प्रक्षालितानि जघनेन गार्हपत्यमुपसादयत्यष्टौ दक्षिणत एकादशोत्तरतो जघनेन गार्हपत्यमुपविश्य धृष्टिमादत्ते धृष्टिरसीति · अतो गार्हपत्यस्य पश्चादुपविश्य कपालोपधानं कार्यम् वचनात् · तत्र

धृष्टिरसीत्यनेनोपवेषं (१. १७.) हस्तेन गृह्णाति · ततोऽपाग्नेऽग्निमिति (१. १७.) मन्त्रेणोपवेषेण अपणस्याङ्गारान्स्वस्थानात्प्राच्यां प्रेरयति खरमध्य एव यथाङ्गारस्थानेऽतितप्तभूमौ कपालान्युपधीयन्ते · तत आ देवयज्ञमित्युपवेषेणैव (१. १७.) प्राक्प्रेरिताङ्गारमध्यादेकमङ्गारं गार्हपत्यखरस्य पश्चाद्भागे दक्षिणपुरोडाशस्थानस्य मध्ये आनयति । ततो ध्रुवमसीत्यनेन (१. १७.) मन्त्रेण तस्यानीतस्याङ्गारस्योपर्युत्तानं मध्यमं कपालमुपदधाति · तत्राभिचारं कुर्वन् भ्रातृव्यस्य बधायेत्यत्र भ्रातृव्यस्येति पदस्य स्थाने अमुकस्य बधायेति शत्रोर्नाम गृह्णीयात् तदा चोदकस्पर्शनम् अभिचारबुद्ध्यभावे उदकोपस्पर्शनाभावः मन्त्रस्यानाभिचरणिकत्वात् । ततः सव्यहस्तस्याङ्गुल्या अशून्ये स्पृष्टे मध्यमकपाले एकमङ्गारं निदधाति अग्ने ब्रह्मेति (१. १८.) । ततो धरुणमसीति (१. १८.) मन्त्रेण मध्यमकपालस्य पश्चाद्द्वितीयं कपालमुपदधाति · मध्यमकपालस्य पुरस्तात्तृतीयं कपालमुपदधाति धर्त्रमसीति (१. १८.) मन्त्रेण · ततो विश्वाभ्यस्त्वाशाभ्य इति (१. १८.) मन्त्रेण मध्यमकपालस्य दक्षिणतश्चतुर्थं कपालमुपदधाति · ततश्चित स्थेति (१. १८.) चतुर्थात्पूर्वं पञ्चमं कपालमुपदधाति चतुर्थादपरं षष्ठम् उत्तरतो द्वे प्राक्संस्थे · पञ्चमप्रभृतीनां सर्वेषां चित स्थेत्युपधानमन्त्रः तूष्णीं वा पञ्चमादीनामुपधानम् न चित स्थेति । एवमेकादश कपालान्यग्नीषोमीयस्योपदधाति तैरेव मन्त्रैः · अत्रैवम् पूर्वं मध्यममुपदधाति ततः पश्चाद्द्वितीयम् ततः पुरस्तात्तृतीयम् मध्यमाद्दक्षिणं चतुर्थम् चतुर्थात्पूर्वमेकस्य कपालस्यान्तरालं परिशिष्य पञ्चमम् चतुर्थपञ्चमयोरन्तराले षष्ठम् चतुर्थस्य पश्चात्सप्तमम् तस्य पश्चादष्टमम् सर्वेभ्य उत्तरतो नवमदशमैकादशानि प्राक्संस्थानि । ततो भृगूणामित्यनेन (१. १८.) ज्वलद्भिरङ्गारैः सर्वाणि कपालान्याच्छादयति । प्रतिचिति मन्त्रभेदः ॥ ॥४॥

इति द्वितीयस्य चतुर्थी कण्डिका ॥ ॥

उपसर्जनीरधिश्रयति ॥१॥ अग्नीद्गार्हपत्ये पिष्टसंयवनार्था अप अधिश्रयति · तप्ताभिर्हि संयवनं यदा क्रियते तदा पिष्टानां मार्दवं भवति · एवं च पुरोडाशपाकार्था एवैताः । यदा आहवनीये हविःश्रपणं क्रियते तदोपसर्जन्य-

धिश्रयणं कपालोपधानं चाहवनीयऽएव कर्तव्यम् [१] · (यदा तु गार्हपत्ये तस्मिन्नेव) · पितृयज्ञे दक्षिणाग्नौ । उपधानवत्पेषणेन सहोपसर्जन्यधिश्रयणस्यापि यौगपद्यप्राप्त्यर्थमेतत्सूत्रम् ततश्चोपसर्जन्यधिश्रयणेऽपि विरोधादेवाग्नीत्कर्तृत्वम् · तेन विरोधाभावे चर्विष्ट्यामुपसर्जन्यधिश्रयणमध्वर्युणैव कर्तव्यम् [२] ॥ अथ पेषणमाह ·

कृष्णाजिनमादत्ते पूर्ववत्प्रति कृष्णाजिनम् ॥२॥ कृष्णाजिनं प्रति च पूर्ववद्विधिर्भवति · पूर्ववदित्यादानमवधूननमास्तरणं सव्याशून्यकरणं चेति सव्याशून्यकरणं शाखान्तरात् ।

तस्मिन्दृषदं धिषणासीति (१. १९.) ॥३॥ [३]

पश्चाच्छम्यामुपोहत्युदीचीं दिव इति (१. १९.) ॥४॥ दृषदः पश्चाद्भागे उदग्रां श॰ उ॰ दृषदोऽधस्तात्प्रवेशयति · सा च तदा दृषदः प्राक्प्रवणतां करोति निश्चलतां च ।

दृषद्युपलां धिषणासीति (१. १९.) ॥५॥ न शम्याया इति नियमार्थं प्राप्तोपलाग्रहणस्यादोषः ।

धान्यमसीति (१. २०.) तण्डुलानोप्य पिनष्टि प्राणाय त्वेति (१. २०.) प्रतिमन्त्रम् ॥६॥ पितृयज्ञे पितॄन्धिनुहि [४] । मनुः प्राणाय त्वेति प्राचीमुपलां प्रोहत्यपानाय त्वेति प्रतीचीं प्रकर्षति व्यानाय त्वेति मध्यदेशे व्यवगृह्णाति दीर्घामिति संततं प्राचीं दीर्घं पिनष्टीति ।

दीर्घामिति (१. २०.) कृष्णाजिने प्रोहति ॥७॥ [५] सर्वेषु तण्डुलेषु पिष्टीभूतेषु तानि पिष्टानि उपलया प्रेरयित्वा प्राच्यां कृष्णाजिनस्योपरि पातयति प्रस्कन्दयतीति शाखान्तरात् । आपस्तम्बे दासी पिनष्टि पत्नी वा अपि वा पत्न्यवहन्ति शूद्रा पिनष्टीति ।

---

१) यत्र पुरोडाशश्रपणं तत्रैवाधिश्रयणम् पाकार्थत्वात् चर्विष्ट्यामपि च · न च मन्थकरम्भार्थमुपसर्जन्यधिश्रयणम् यथा पिष्टानां पाक उपजन्यते न तथा सक्तूनाम् Mahâd.
२) उपधानोपसर्जन्यधिश्रयणपेषणानां यौगपद्यात्स्वयं पिनष्टि · अन्ये द्वयं कुर्युरिति रामवाजपेयी बृहस्पतिसवे marg. in ५. ३) तस्मिन्कृष्णाजिने दृषदं निदधाति Mahâd. ४) शाक्यानामयने धान्यमसीत्यत्र तरसमसीत्यूहः Mahâd. See २४. ५. २०. Roer Taitt. p. 126.
५) नानाबीजेष्वेकैकस्य हविषः प्रोहणम् Mahâd.

चक्षुषे त्वेतीक्षते [१] (१.२०.) ॥ ८ ॥ कृष्णाजिने पतितानि पिष्टानि चक्षुषा पश्यति · ईक्षऽइति [२] चाध्याहारः साकाङ्क्षत्वात् । यागसाधनभूतद्रव्यसंस्कारोऽयम् · ततश्च पेषणाभावे चर्वर्थानां तण्डुलानामीक्षणं भवति वाजप्रसवीयजुहोतौ चयने वाजपेये च सर्वौषधीनामिति [३] ।

पिष्यमाणेषु निर्वपत्यन्यो महीनामित्याज्यम् (१.२०.) ॥ ९ ॥ [४] आज्यमाज्यस्थाल्यां निर्वपति पात्रान्तरात्प्रक्षिपति · आज्यस्थालीलक्षणमुक्तं छन्दोगपरिशिष्टे (कर्मप्रदीप° २.५.१.) आज्यस्थाली च कर्तव्या तैजसद्रव्यसम्भवा महीमयी वा कर्तव्या सर्वास्वाज्याहुतीषु च । आज्यनिर्वापं कृत्वा यजमानो वेदं करोति कुशमुष्टिं सव्यावृत्तं वत्सजानुतुल्यं मूतवत्क्रियमाणं वा [५] · यत्र धान्यं निधीयते स मूत इति ।

पात्र्याꣳ सपवित्रायां पिष्टान्यावपति देवस्य त्वेति (१.२१.) ॥ १० ॥ कृष्णाजिनमुत्पाद्य [६] तेनैव पात्र्यां प्रक्षिपतीति हरिस्वामिनः · पात्र्यामित्याकारविशेषवति महति पात्रे । आवपनं च संयवनार्थम् · अतश्चरुतण्डुलेषु न भवति · सपवित्रता तु चरावपि वर्तते अदृष्टार्थत्वात् ।

श्रपणस्य पश्चादुपविशत्यन्तर्वेदि वा ॥ ११ ॥ [७] सपिष्टां पात्रीमादायेत उत्थाय गार्हपत्यस्य पश्चादुपविशति · अथवा अन्तर्वेदि वेद्याः करिष्यमाणायाः प्रदेशो लक्ष्यते तस्य देशस्याभ्यन्तरे उपविशति तामेव तत्रासादयतीत्यर्थः सौकर्यादेवोपवेशनम् ।

उपसर्जनीरानयत्यन्यः ॥ १२ ॥ आग्नीध्रः उपसर्जनीरुदास्यानीय उपविश्य पात्रीस्थपिष्टानामुपरि निनयति · उपशमार्थं संसृज्यते संमिश्र्यते हविराभिरित्युपसर्जन्यः आपः मन्त्रलिङ्गात् समाप ओषधीभिरिति · शाखान्तरात्तु तप्ताभिः सह ।

पवित्राभ्यां प्रतिगृह्णाति समाप इति (१.२१.) ॥ १३ ॥ [८] अध्वर्युः ।

१) ?त्वेति १· त्वेतोक्षते Mahâd. Mahîdh. Ananta. २) ईक्षत इति २· ३) ईक्षणं चरावपि प्रवर्तते द्रव्यसंस्कारत्वात् · तत्त्रेणोक्षणं नानाबीजेषु Mahâd. ४) अन्यशब्देन यजमानोऽभिधातुं शक्यते · कुतः · निरुप्याज्यं वेदोऽसीति यजमानो वेदं करोतीत्येककर्तृत्वात् (१. ३. २२.) Mahâd. ५) See १. ३. २३. ६) ?°त्पाद्य २. ७) अन्तर्वेदि माध्यन्दिनानाम् अथान्तर्वेद्युपविशतीति (१. २. २. २.) श्रुतेः · श्रपणस्य पश्चात्काण्वानाम् जघनेन गार्हपत्यमिति श्रुतेः Mahâd. ८) पयसि दधनि घृते च मन्त्रो विपरिणाम्यते · यथा सं पयः (दधि) (घृतं)° साꣳ रेवत्° मं मधुमत्° पृच्यताम् Mahâd.

संयौति जनयत्यै त्वेति (१.२२.) ॥१४॥ अध्वर्युः पिष्टान्यद्भिः सम्यक् मिश्रयति । चरावप्युपसर्जनीनिनयनं भवत्येव तत्राप्युदकार्थस्य विद्यमानत्वात् · संयवनं तु न भवति कार्यलोपात् ।

समं विभज्यासऽन्हरिष्यन्नालभतऽइदमग्नेरिदमग्नीषोमयोरिति (१.२२.) ॥१५॥ [१] संयवनानन्तरं समं विभज्य द्वौ पिण्डौ कृत्वा असं॰ पुनर्मिश्रणमकरिष्यन् क्रमेणैतौ पिण्डावालभते उदक्संस्थौ पात्र्यां निहितौ अवरोक्तमुत्तरऽ हविषीत्युक्तेः (१.१०.५.) दक्षिणमाग्नेयम् उत्तरमग्नीषोमीयम् ।

यथादेवतमन्यत् ॥१६॥ इदमग्नेरिदमिन्द्राग्न्योरित्येवमादिना अन्यत् ऐन्द्राग्नादिकं हविरभिमृशति ।

इषे त्वेत्याज्यमधिश्रयत्यन्यः (१.२२.) ॥१७॥ [२] अधिश्रयामीत्यध्याहारः सांकाङ्क्षत्वात् ।

अपत्नीकस्याहवनीये तच्छ्रापिणः ॥१८॥ अपत्नीकस्य रजोदोषप्रसवप्रवासादिना असंनिहितपत्नीकस्य तच्छ्रापिणः आहवनीयश्रापिणः आहवनीये हविःश्रपणं कुर्वतो यजमानस्य आहवनीये आज्यमधिश्रयति · आहवनीयश्रापिणोऽपि संनिहितायां पत्न्यां गार्हपत्यऽएव आज्यमधिश्रयति । शाखान्तरे चैवं श्रूयते यस्य व्रत्येऽहनि पत्न्यनालंभुका [३] स्यात्तामपरुध्य यजेतेति । केचित् अपत्नीको मृतपत्नीक इत्याहुः तस्याप्येकाकिन एवाधानं श्रूयते आश्वलायनब्राह्मणे · पत्न्यां मृतायामग्निभिर्दग्धायां पुनर्विवाहासम्भवे आत्मार्थमग्न्याधानमाहापस्तम्बो दर्शपौर्णमासाग्रयणार्थम् शेषाणि कर्माणि न भवन्तीति · तथा त्रिकाण्डे मण्डनः तस्मान्नैकदेशेन दग्धव्या पर्वमारिणी पत्नी ज्येष्ठेतरा वापि यज्ञपार्श्वे निरूपितम् · कात्यायनः (कर्मप्रदीप॰ ३.१.१.) मृतायामपि भार्यायां वैदिकाग्नीन्न [४] हि त्यजेत् उपाधिनापि तत्कर्म यावज्जीवं समापयेदिति ।

घर्मोऽसीति (१.२२.) पुरोडाशं युगपत् ॥१९॥ अध्वर्युः पुरोडाशं कपाले-

---

१) चरूणां फलीकरणान्ते पौष्णस्येक्षणात्तऽआलम्भः Mahâd. २) गार्हपत्ये । आज्यनिर्वापादन्यत्र अन्यशब्देनाग्नीदभिधीयते Mahâd. ३) ? रजस्वला marg. ४) °काग्निं न Kâty.

ऽधिश्रयति आज्येन सहैव आग्नीध्राधिश्रीयमाणेन [१] · पुरोडाशाधिश्रयणं वेदेन कपालेभ्योऽङ्गारान्पराकृत्य कर्तव्यम् ।

उरुप्रथा इति (१.२२.) प्रथयति यावत्कपालमनतिपृथुम् ॥२०॥ अधिश्रितं पुरोडाशपिण्डं यावन्ति यत्परिमाणपृथूनि कपालानि तावन्ति पृथुं करोति नातिविपुलं लौकिकापूपसदृशमिति [२] । एकस्यैव पुरोडाशस्याज्यस्य च सहाधिश्रयणम् द्वितीयादीनां तु क्रमेणैव सर्वेषु सूत्रेषु पुरोडाशयोः क्रमेणाधिश्रयणविधानात् । षडङ्गुलवृत्ता कपालचितिर्यथा सम्पद्यते तथा कपालपरिमाणमाश्रयणीयम् । अनेकयजमानके यज्ञपती प्रथेताम् यज्ञपतयः प्रथन्तामित्यूहः । चरौ कार्याभावात्प्रथनाभावः । अत्राधिश्रयणं प्रथनमद्भिरभिमर्शनं चेति त्रयमेकैकस्य कृत्वापरस्य कर्तव्यम् ।

अग्निष्टऽइत्यद्भिरभिमृशति (१.२२.) सकृत्त्रिर्वा ॥२१॥ तं पृथुं कृतं पुरोडाशं सोदकेन हस्तेन सर्वतः स्पृशति · प्रथने क्रियमाणे यत्र-यत्र विदीर्णं भवति तदद्भिः संदधाति संयोजयति · सकृन्मन्त्रेण द्विस्तूष्णीम् [३] । पिष्टलेपेनाविक्षारयंस्त्रिः परिमार्ष्टीति मानवे · अद्भिः श्लक्ष्णीकरोत्यनतिक्षारयन्नित्यापस्तम्बः । एतच्चरौ न स्यात् ।

पर्यग्निकरोत्यन्तरितꣳ रक्षोऽन्तरिता अरातय इति [४] सहाज्यम् ॥२२॥ पुरोडाशमुल्मुकेन पर्यग्निकरोति · सांनाय्ये तदभावः । पिष्टलेपापनयनं पात्र्यङ्गुलिप्रक्षालनं च पर्यग्निकरणात्प्रागेव कर्तव्यम् सामर्थ्यात् अन्यथाग्निसंयोगात्कालविलम्बाच्च शोषणे सति प्रतिपत्तिकाले क्षालनमतिदुःकरं स्यादिति · प्रतिपत्तिश्च चोदिता पात्र्यङ्गुलिप्रक्षालनमाप्त्येभ्यो निनयति (२.५.२६.) पिष्टलेपान्जुहोतीति (३.७.१९.) · उत्पत्तिश्च न चोदिता अतः सामर्थ्यादुत्पत्तिरवसीयते ।

देवस्त्वेति (१.२२.) श्रपणम् ॥२३॥ पुरोडाशस्य । मनुः देवस्त्वेत्युल्मु-

---

[१] आज्यमाग्नेयं च पुरोडाशं युगपदधिश्रयतः ततोऽग्नीषोमीयमध्वर्युः Mahâd. [२] कपालादतिविस्तारं न कुर्यात् · प्रथनेनापूपो भवति कुतः यद्योदनीयन्ति यद्यपूपीयन्तीति श्रुतेः Mahâd. [३] पक्षे सकृन्मन्त्रवचनम् · अत्रैव पिष्टलेपापनयनं पात्र्यङ्गुलिप्रक्षालनं च सामर्थ्यात् (°र्थ्यादिति कर्कः sec. h.) Mahâd. [४] See Taitt. S. १. १. ८. १. (Roer p. 135.).

केनाभितापयति दर्भैस्त्वचं ग्राहयतीति । एतच्च श्रपणं सामर्थ्याच्चरोरधस्तादुल्मुकप्रेरणेन कर्तव्यम्[१] धानानां च पुरोडाशस्य तूपरीति ।

मा भेरित्यालभते (१. २३.) ॥ २४ ॥ तौ पुरोडाशौ प्रत्येकमालभते शृताशृतज्ञानार्थम् । चर्वादावपि धानासु[२] च मा भैष्टम् मा संविग्धमित्यूहः अधिश्रयणमन्त्रे च (१. २२.) घर्मा स्थ विश्वायुष इति ।

अन्तमेरुरिति (१. २३.) शृतावभिवासयति भस्मना वेदेनोपवेषेण वा ॥ २५ ॥[३] अशृतयोः पुनः श्रपणप्रदानार्थं शृतग्रहणम् शृताविति । साङ्गारेण भस्मनेति काठके ।

पात्र्यङ्गुलिप्रक्षालनमाप्त्येभ्यो निनयत्यभितप्य प्रत्यगसंस्यन्दमानं त्रिताय त्वेति (१. २३.) प्रतिमन्त्रम् ॥ २६ ॥ पिष्टलिप्तपात्रीप्रक्षालनं पिष्टलिप्ताङ्गुलिप्रक्षालनं चाभितप्य पात्रीस्थमेव ज्वलतोल्मुकेन तापयित्वा प्रत्यक्संस्थमसंस्यन्दमानं[४] परस्परं संगतिमप्राप्नुवदाप्त्येभ्यो देवताभूतेभ्यो निनयति । स्विष्टकृद्वदुभयरूपमेतत्कर्म प्रतिपत्तिरूपमपूर्वोत्पादकं च तेन द्रव्यविनाशेऽपि स्विष्टकृद्वच्च द्रव्यान्तरेणापि निनयनं कर्तव्यम् अपरे तु द्रव्यप्रधानत्वात्तद्विनाशे नोत्पत्तिमिच्छन्ति ।

अन्वाहार्यं दक्षिणाग्नावधिश्रयति ॥ २७ ॥ हीनं यज्ञस्यान्वाहरतीत्यन्वाहार्यः । अध्वर्युरन्वाहार्यसंज्ञकं दक्षिणार्थं तण्डुलरूपमोदनं द॰ अ॰ चतुर्णामृत्विजां तृप्तिर्यावता सम्भाव्यते तत्परिमाणं ततोऽधिकं वान्वाहार्यमोदनं कुर्यात् ।

अत्र वा व्रतोपायनम् ॥ २८ ॥ शाखान्तरात् ॥ ॥ पञ्चमी कण्डिका ॥ ५ ॥

अथ पद्धतिः ॥

ततस्तदेवोपसर्जनीरग्नीदेव गार्हपत्येऽधिश्रयति पिष्टसंयवनार्था आप उपसर्जनीशब्देनोच्यन्ते ॥ अथ पेषणमुच्यते ॥ तत्राध्वर्युः शर्मासीति (१. १३.) कृष्णाजिनमादाय अवधूतमिति (१. १३.) पूर्ववदवधूनोति ततोऽप उपस्पृश्य प्रत्यग्ग्रीवमदित्या इत्यास्तीर्य (१. १३.) सव्यहस्तेनाविमुक्ते कृष्णाजिने दक्षिणेन हस्तेन

---

१) सामर्थ्याच्चरुधानानामधस्तात्तापनम् Mahâd. २) धानानां दर्शनात्पाकसंवित्तेः संमर्शनाभावः Mahâd. ३) आलम्भनेन शृतौ ज्ञातौ भस्मना आच्छादयति सत्त्रे यजमानानामित्यूहः Mahâd. ४) प्रत्यक्संस्थं गार्हपत्यस्योत्तरतः Mahâd.

प्रागग्रां दृषदं कृष्णाजिनस्योपरि निदधाति धिषणासीति (१. १९.) ततो दिव स्कम्भनीरिति (१. १९.) दृषदः पश्चाद्भागे अधस्तादुदगग्रां शम्यां प्रेरयति यथा दृषदः प्राचीनप्रवणता जायते ततो धिषणासि पार्वतेयीत्युपलां (१. १९.) दृषद उपर्युदगग्रामुपदधाति ततो धान्यमसीति (१. २०.) दृषदि तण्डुलानोप्य प्राणाय त्वेति (१. २०.) प्रतिमन्त्रं पिनष्टि ॥ पिष्यमाणेषु तण्डुलेषु कपालेषु च भृगूणामिति (१. १८.) ताप्यमानेषु यजमानो मह्लीनामिति (१. २०.) पात्रान्तरादाज्यमाज्यस्थाल्यां प्रक्षिपति । ततो वेदोऽसीति (२. २१.)[१] मन्त्रेण वेदं करोति तत्र पशुकामो यजमानः कुशमुष्टिं प्रदक्षिणावृत्तं वत्सज्ञानुसदृशं प्रादेशमात्रं वेदं करोति ब्रह्मवर्चसकामस्त्रिवृतं त्रिगुणाम् अन्नाद्यकामो मूताकारम् काठके[२] वेदं करोति दर्भमुष्टिं प्रसव्यमावेष्ट्योपभुज्याग्राणा७ शुल्वं कृत्वा त्रिः परिहृत्य गुणेषु शुल्वान्तमवकृष्यायम्य शुल्वात्प्रादेशे छित्वाग्राणीध्मे निधायोत्करे मूलानीति वत्सज्ञानुर्वत्सज्ञानुतुल्यः मूतकार्यी मूतवत्क्रियते मूतस्तृणावर्त्यादिनिर्मितं धान्यावपनस्थानम् कामाभावेऽप्येतऽएव वेदस्याकारा भवन्ति निष्कामस्याकारान्तरानुपदेशादिति धूर्तस्वामिनः[३] । ततोऽध्वर्युर्दर्घामनु प्रसितिमिति (१. २०.) दृषद उपरि वर्तमानानि पिष्टान्युपलयैव कृष्णाजिने प्रोक्षति प्रेरणायाधः पातयति । ततश्चक्षुषे त्वेति (१. २०.) कृष्णाजिने पतितानि पिष्टानि विलोकयति । ततः पवित्रे पात्र्यां कृत्वा कृष्णाजिनात्पिष्टान्यादाय सपवित्रायां पात्र्यामावपति कृष्णाजिनमुत्पाद्य[४] तेनैवावपेदिति हरिस्वामिनः देवस्य त्वेति (१. २१.) संवपामीत्यन्तेन मन्त्रेण संवापः । तत उत्थाय गार्हपत्यस्य पश्चादुपविशति वेदिमध्ये वा । तत आग्नीध्रः स्फ्यं सव्ये गृहीत्वोपसर्जनीरुद्धास्याधर्योर्दक्षिणेनानीय[५] पिष्टानामुपरि धृतस्य सपवित्रस्याधर्योर्हस्तस्योपरि निनयति ततोऽध्वर्युरग्नीधा निनीयमाना उपसर्जनीर्दक्षिणाहस्तधृताभ्यां पवित्राभ्यां प्रतिगृह्णाति समाप ओषधीभिरिति (१. २१.) अग्नीधा च तथा निनयनं कार्यम् यथाधर्योर्मन्त्रान्ते ग्रहणं सम्पद्यते । जनयत्यै त्वेति (१. २२.)

---

१) Kâṇva, see Vâj. S. pag. ३५. २) See the vyâkhyâ at १. ३. २३., where this same passage is quoted from Laugâxi. ३) This quotation is not accurate: the very words of Dhûrtasvâmin see at १. ३. २३. pag. ५५. and ५६. ४) ? °त्पाद्य १. ५) ? °र्युर्दक्षि° १.

मन्त्रेणोदकं पिष्टानि च संयौति मिश्रयति · समं विभज्य द्वौ पिण्डौ कृत्वा पात्र्यामुदक्संस्थौ निधाय क्रमेणालभते [१] इदमग्नेरिति (१. २२.) प्रथमम् इदमग्नीषोमयोरिति (१. २२.) द्वितीयम् । ततोऽग्नीद्विदं सव्यहस्ते गृहीत्वा इषे त्वेति (१. २२.) मन्त्रेण दक्षिणात आज्यमधिश्रयति अग्नेरुपर्याज्यस्थालीं निदधातीत्यर्थः । अध्वर्युः सद्वैवाष्टासु कपालेषु प्रथमं पुरोडाशमधिश्रयति घर्मोऽसीति (१. २२.) स्फ्योपग्रहेण तत एकादशसु कपालेषु द्वितीयं पुरोडाशमधिश्रयति घर्मोऽसीति । तत उरुप्रथा इति (१. २२.) मन्त्रेण यावत्कपालं पुरोडाशं प्रथयति · अतुङ्गमनपूपाकृतिं कूर्मस्येव प्रतिकृतिमित्यापस्तम्बः · अतिपृथुं न करोति · एवमेव द्वितीयमपि पुरोडाशं प्रथयति । ततोऽग्निष्टे त्वचमिति (१. २२.) मन्त्रेण पुरोडाशमद्भिरभिमृशति सकृद्वा त्रिर्वा · त्रिःपक्षेऽपि मन्त्रः सकृदेव · एवं द्वितीयमपि अद्भिरभिमृशति श्लक्ष्णयति [२] प्रथने क्रियमाणे यत्र क्व चन विदीर्णं भवति तत्संदधातीत्यर्थः । ततः पात्र्या अङ्गुलीनां च प्रक्षालनम् । ततो गार्हपत्यादङ्गारमादायान्तरितं रक्ष इति मन्त्रेण पर्यग्निकरणं करोति आज्यस्थालीपुरोडाशान्परितः प्रदक्षिणमङ्गारं परिहरतीत्यर्थः · ततोऽङ्गारं गार्हपत्ये प्रक्षिप्य हस्तस्याप्रादक्षिण्येनानयनम् · तत उदकस्पर्शः । ततो देवस्त्वेति (१. २२.) मन्त्रेण ज्वलद्भिर्दर्भतृणैः प्रथमं पुरोडाशं श्रपयति · एवमेव द्वितीयम् · दर्भतृणैरभिज्वालयतीत्यापस्तम्बः । ततः शृताशृतज्ञानाय मा भेर्मा संविक्था इति (१. २३.) मन्त्रेण क्रमेण द्वौ पुरोडाशावालभते · अशृतौ चेत् पुनः श्रपणाप्रक्षेपः · शृतौ चेत् अतमेरुरिति (१. २३.) वेदेनोपवेषेण वा तप्ततरेणाङ्गारमिश्रेण भस्मनाच्छादयति । ततः पात्र्यङ्गुलिप्रक्षालनजलं पात्रीस्थमेव गार्हपत्यादीप्तैस्तृणैर्ज्वलद्भिस्तापयित्वा विहारस्योत्तरतः स्फ्येन तिस्रो लेखाः प्राक्संस्थाः कृत्वा तासु लेखासु प्रत्यक्संस्थं परस्परं संसर्गमप्राप्नुवन्त्रिताय त्वेति (१. २३.) प्रतिमन्त्रं निनयति · इदं त्रिताय।प्त्याय इदं द्विताया।प्त्याय इदमेकताया।प्त्यायेति त्रयस्त्यागाः · तथा च स्मृतिः आदौ द्रव्यपरित्यागः पश्चाद्धोमो विधीयते प्रयोग इदमिन्द्राय न ममेति यथार्थतः अवत्तं तु त्यजेद्द्रव्यं मनसा वाचयापि च ततश्च प्रक्षिपेदग्नाविति धर्मः सनातनः अत्यक्ता जुहुयाद्यस्तु

१) यत्क्रमेणा° १. २) श्लक्ष्णयेति १.

मोहेनान्वितमानमः देवा हव्यं न गृह्णन्ति कव्यं च पितरस्तथा यत्किं च जुहुयादग्नौ तत्सर्वं त्यागपूर्वकम् अन्यथा जुहुयाद्यस्तु नरकं स नु गच्छति इति · सर्वत्र त्यागादौ ओंकारप्रयोगः कार्यः यागहोमादिष्विति वचनात् · शाट्यायनः दानयज्ञतपःस्वाध्यायजपध्यानसंध्योपासनप्राणायामहोमदेवपित्र्यमन्त्रोच्चारणब्रह्मारम्भादीनि प्रणवमुच्चार्य प्रवर्तयेदिति · दाल्भ्यपरिशिष्टे च ब्रह्मयज्ञो जपो होमो देवर्षिपितृकर्म च अनोंकृत्य कृतं सर्वं न भवेत्सिद्धिकारकमिति । ततोऽन्वाहार्यं दक्षिणार्थमोदनं[1] चतुर्णामृत्विजां तृप्तिपर्यन्तभोजनसमर्थं दक्षिणाग्नावधिश्रयति अपणार्थम् । अत्रावसरे वा व्रतग्रहणम् ॥ ॥५॥

इति द्वितीयस्य पञ्चमी कण्डिका ॥ ॥

अपरेणाहवनीयं वेदिं खनति ॥१॥ [2]

त्र्यङ्गुलखाताम् ॥२॥ त्र्यङ्गुलं खातमस्याः ।

व्याममात्रीं पश्चात् ॥३॥ अपरस्यां दिशि तिर्यक्प्रमाणेन चतुररत्निमात्राम् । [3]

त्र्यरत्निं प्राचीम् ॥४॥ त्र्य° प्रा° पूर्वापरायतां दीर्घाम्[4] । पुरस्तात् (पूर्वपार्श्वे) तिर्यक्प्रमाणं यद्यपि नोक्तम् तथाप्यरत्नित्रयात्मकमेव दर्शनात् (१.२.५.१६.)।

अपरिमितां वा ॥५॥ अस्मिन्सूत्रग्रन्थे द्वावेवापरिमितशब्दौ श्रुतिवाक्यानुसरणादपरिमाणवाचिनौ अपरिमितां वा अपरिमितेष्टको वेति (१७.७.२८.) च अन्ये तु अपरिमितं प्रमाणाद्भूय इत्युक्तत्वात्पूर्वोक्तपरिमाणादतिशयेनाधिकपरिमाणवाचकाः ।

प्राक्प्रवणामुदग्वा ॥६॥ प्रवन्तेऽस्मिन्नापोऽनेन वेति प्रवणं नीचम् प्रवर्तते वा वनमुदकमस्मिन्निति तदेव निम्नम् ।

---

१) °र्थं यदक्षि° १. २) विकृतौ गार्हपत्यचितिमपरेण अग्रे Mahâd. सर्वशाखाप्रत्ययत्वेन मैत्रायणीयोक्तमन्तराहवनीयं गार्हपत्यं चानियतस्थानं वेदिकरणं मा भूत् Ananta. ३) आहवनीयस्य पश्चात्त्र्यरत्न्यन्तरालं हित्वा व्याममात्रीमुदीचीम् Mahâd. ४) उदीचीरेखायाः प्रा° त्र्य° आहवनीयान्तम् विकृतौ गार्हपत्यचित्यन्तम् · पुरुषसंमिता हि त्र्यरत्निः प्राचीति श्रुतेः (१.२.५.१४.) · पुरुषसंमिता त्र्यरत्निस्तु (°रत्निः प्राची तु sec. h.) विष्णुवामनसंमिता वामनो ह विष्णुरासेत्युपक्रमात् (१.२.५.५.) Mahâd.

मध्यसंगृहीताम् ॥ ७ ॥ [1] संग्रहसाधनप्रकारश्च परिशिष्टेऽउक्तः आनीय रज्जुं पूर्वार्धात्पश्चार्धं यावदेव तु द्विगुणीकृत्य तां रज्जुमन्ते तस्यास्तु शङ्कौ भ्रामयेत्तेन मानेन तया रज्ज्वाष्टभागया वा पृथुचतुरीयेण भागेनालिख्य संग्रहाविति · क्वचित् वेदिश्रोण्यंसयोर्मध्ये तया रज्ज्वाष्टभागयेति पाठः ।

अग्निमभितोऽंसौ ॥ ८ ॥ अंसौ आग्नेयैशानकोणौ आहवनीयमुभयतो भवतः अंसयोर्मध्ये आहवनीयो भवतीत्यर्थः · अतोऽंसावपि वेदेरेवावयवौ श्रोणिवत् खननस्तरणादयश्च वेदिसम्बन्धाः संस्कारास्तयोरपि प्रवर्तन्ते ॥ षडरत्निं रज्जुं मित्वा द्वितीयारत्न्यन्ते लक्षणं श्रोण्यङ्कनार्थम् ततोऽरत्नेश्चतुर्थे भागे लक्षणमाकर्षणार्थम् तृतीयारत्न्यन्ते प्राच्यन्ताङ्कनार्थम् ततश्चतुर्थभागोने (ऽरत्नौ) अंसाङ्कनार्थम् ततः सार्धेऽरत्नौ पाश इति अयं च पाशाविपर्यासेन साधनोपायः · विपर्यासपक्षे तु षडरत्निं रज्जुमुभयतः पाशौ कृत्वा प्रथमं सार्धारत्न्यन्ते अंसाङ्कनार्थम् ततोऽर्धारत्नौ श्रोण्यङ्कनार्थम् ततोऽरत्नेश्चतुर्थे भागे [2] आकर्षणार्थम् अरत्नित्रये च प्राच्यन्ताङ्कनार्थमिति · अपरिमितपक्षाश्रयणे च प्राचीप्रमाणं पुरस्तात्तिर्यक्प्रमाणं च तुल्यम् पश्चात्तिर्यक्प्रमाणं च प्राचीप्रमाणात्तृतीयभागेनाधिकमिति युक्त्या कल्पनीयम् · तत्र च प्राचीप्रमाणां रज्जुं द्विगुणां कृत्वा रज्जोर्मूलात्पुरस्तात्तिर्यक्प्रमाणस्यार्धे मूलरज्जोश्चान्तिमचतुर्थभागस्यादौ आकर्षणार्थं लक्षणमिति ॥ अथ खननप्रमाणे पक्षान्तरमाह ·

आ मूलोच्छेदनादोषधीनाम् ॥ ९ ॥ [3] प्राक्प्रवणामुदग्वेत्यस्मात्सूत्रान्मण्डूकप्लुतिन्यायेन वाशब्दोऽत्रानुवर्तते अध्याह्रियते वा । अस्मिन्पक्षेऽएव विशेषमाह ·

ओषधीनां मूलान्युच्छेत्तवै ब्रूयात् ॥ १० ॥ इमं प्रैषमध्वर्युरग्नीधं प्रति ब्रूयात् । मूलानि च भूमिमध्ये दूरमपि यावत्प्रसरन्ति तावत्पर्यन्तम् ।

आहार्यपुरीषां पशुकामस्य ॥ ११ ॥ [4] प्रागनुमार्जनाद्वेदेः सकाशाद्वेदिपु-

---

1) मध्ये संकुचिताम् Mahâd. 2) ? °श्चतुर्भागे २. 3) त्र्यङ्गुलान्तं वा Mahâd.
4) वेदिं कुर्यात् Mahâd. आहार्यमन्यस्मात्प्रदेशादाहरणीयं पुरीषं यस्याः सा Ss.

रीषमपसार्यान्यत्पुरीषमानीय [१] वेदिमध्ये प्रक्षेपणीयम् · एतच्च पुरुषार्थम् प्रणयने कांस्यादिवत् अतश्च विकृतौ न भवति । निष्कामेणापि वेदिः पुरीषवत्येव कार्या · वेदिपुरीषं तत्रैव तिष्ठति न ततो निष्काश्यते वचनाभावात् । खाता वेदिः नाद्भिः श्लक्ष्णीकरणीया किंतु पांशुलैव कार्या ।

वेदिं परिसमुह्य वितृतीयेऽग्नीदुत्तरत उत्करं करोति ॥१२॥ अन्वाहार्याधिश्रयणानन्तरं प्रथमं वेदिमानमध्वर्युः करोति यथोक्तम् · ततोऽग्नीद्दर्भैर्वेदिमध्यपतितं तृणपुरीषादिकमपसार्य वेदेरुत्तरतः परिसमूह्नापसारितस्य तृणपुरीषादेरुत्करं राशिं करोति · उत्कीर्यतऽइत्युत्करः । वितृतीयं च वेदेः प्रकृतत्वात्तदीयमेव · गार्हपत्याहवनीयान्तरालं वितृतीयं च शुल्वकृतोक्तम् गार्हपत्याहवनीययोरन्तरऽ षड्ढा [२] सप्तधा वागन्तुसमं त्रेधा विभज्यापरवितृतीयलक्षणेन दक्षिणायम्य तस्मिन्नग्निर्विपर्यस्योत्तरत उत्कर इत्येकः प्रकारः अपि [३] वान्तरत्रिभागोनया रज्ज्वा पूर्वार्धे समचतुरश्रं कृत्वा श्रोण्यामग्निर्विपर्यस्योत्तराऽसऽउत्कर इति · विपर्यासश्चैवम् पूर्वतृतीयलक्षणेनोत्तरत आयम्येति प्रथमे प्रकारे गार्हपत्याहवनीययोरन्तरत्रिभागोनया रज्ज्वापरार्धे समचतुरश्रं कृत्वा तस्य चतुरश्रस्योत्तरांसे उत्कर इति द्वितीयः प्रकारः । चात्वालोत्करावन्तरेण संचरः [४] · संनिहितो हि चात्वालस्योत्करः पूर्ववितृतीये भवतीति कर्कः ।

देवस्य त्वेति (१. २४.) स्फ्यमादाय सतृणाऽ सव्ये कृत्वा दक्षिणेनालभ्य जपतीन्द्रस्य बाहुरिति (१. २४.) ॥१३॥ [५] एतदश्चादानं स्तम्बयजुर्हरणार्थम् अतश्च तदभावेऽभावः ।

नोपस्पृशेत्पृथिव्यात्मानौ तेन स्तम्बयजुर्हरिष्यन् ॥१४॥ स्तम्बयजुर्हरणात्प्राक् [६] तेनाभिमृष्टेन वज्रेण पृ° नौ नोपस्पृशेत् ।

वेद्यां तृणं निदधात्युदक्पृथिव्यै वर्मासीति ॥१५॥ [७]

---

१) °द्वेदिपुरुष° २. २) ? षोढा २. and Çulvapar. (Chambers 66a.) second hand. षड्ढा ibid. first hand. ३) °त्तरत उत्करोऽपि Çulvapar. ४) ततः प्रणीतोत्करयोरन्तराले आर्थिकं संचरणम् Mahâd. ५) संहितास्वरेण जपति · पितृयज्ञे आददेऽध्वरकृतं देवपितृभ्य इत्यूहोऽङ्गप्रधानत्वात् Mahâd. ६) स्तम्बयजुर्हरणमिति करिष्यमाणकर्मसंज्ञा Mahâd. ७) तदात्तं तृणमुदगग्रं शाखान्तरीयेण मन्त्रेण वे° नि° Mahâd. — See Kâṇva-Vâj. S. pag. ३५.

पृथिवि देवयजनीति (१.२५.) तृणेऽन्तर्हिते प्रहरति ॥१६॥ [1] अध्वर्युः तृणेऽन्तर्हिते भूप्रदेशे तृणस्याधस्ताद्भूमौ स्फ्येन प्रहरति । तृणमन्तर्धाय तस्योपरि प्रहर्तव्यमिति माधवाचार्याः · तथा च पितृभूत्याचार्या अपि · कर्काचार्यास्तु प्रहरणं च वेद्याम् न तृणे इतरथा हि तृणे प्रहरतीत्यवक्ष्यत् न तृणेऽन्तर्हिते अथ पुनरन्तर्धायवचनात्तादर्थ्यमेव तृणस्य न प्रहरणाधिकरणता तृणऽएव प्रहरणमिति सम्प्रदाय इति ।

व्रजं गच्छेति (१.२५.) पुरीषमादत्ते ॥१७॥ यत्र स्फ्येन प्रहारः कृतः तस्माद्वेदिस्थानात्स्फ्येनोत्खातं पुरीषमुत्खातान्पांसून्हस्तेन गृह्णाति ।

वर्षतु तऽइति (१.२५.) वेदिं प्रेक्षते ॥१८॥ यतः स्थानात्पुरीषं गृहीतं तं वेदेः प्रदेशं विलोकयति ।

बधानेत्युत्करे (१.२५.) करोति ॥१९॥ [2]

प्रहरणशेषो वाविशेषोपदेशात् ॥२०॥ प्रक्रियतेऽनेन मन्त्रेणेति प्रहरणमन्त्रः प्रहरणशब्देनाभिधीयते · व्रजं गच्छेत्यादिर्मा मौगित्यन्तो मन्त्रः · तस्य पृथिवि देवयजनीत्येव शेषो भवति अविशेषेण प्रहरणे उपदिश्यते यतः स प्रहरति पृथिवीत्यादिना (१.२.४.१६.) । अथवा एवं योजना · अविशेषोपदेशात् व्रजं गच्छेत्यनेन पुरीषमादत्ते वर्षतु तऽइति वेदिं प्रेक्षते बधानेत्युत्करे करोति एवंविधं विशेषविधानं शतपथे नास्ति केवलम् स प्रहरति पृथिवीत्येवमेव (१.२.४.१६.) सर्वोऽपि प्रहरणमुपक्रम्य पठितोऽस्ति · अत एवं ज्ञायते प्रहरणमन्त्रस्यैवायं शेष इति । अपरे त्वेवमाहुः · यद्यपि शतपथे विशेषोपदेशो नास्ति तथापि शाखान्तरे विशेषोपदेशोऽस्ति · अविशेषस्य च विशेषपरतैव न्यायात् · तस्माद्वेदेनैवावयवशः पुरीषादानादौ यथोक्तो विनियोगः ।

अपाररुमिति (१.२६.) द्वितीयं प्रहरणादि ॥२१॥ अपाररुम् अररो आसुरे इति कात्यायनवचनात् (अनुक्रमणी १.७.) आसुरोऽयं मन्त्रः तत उच्चारणानन्तरमपामुपस्पर्शनम् । पितृयज्ञे च देवपितृयजनादित्यूहः ।

---

[1]) देवपितृयजनीति पितृयज्ञेऽऊहः Mahâd. [2]) आत्तं पुरीषमुत्करे प्रक्षिपति Mahâd.

अभिन्यस्यत्यग्नीदुत्करमररो दिवमिति (१.२६.) ॥२२॥[१] अभिनिदधाति पाणिभ्यामुत्करस्य पिधानं करोति उत्कराभिमुखौ हस्तौ निदधाति हस्ताभ्यामुत्करस्यावबाधनं[२] नीचैराक्रमणं कर्तव्यम् ।

द्रप्सस्तऽइति (१.२६.) तृतीयम् ॥२३॥[३]

तूष्णीं चतुर्थं सतृणम् ॥२४॥ सतृणं शाखान्तरात् · उदङ्गिर्द्धितेन तृणेन सहितं पुरीषमुत्क[रे क]रोति ।

पूर्वं परिग्रहं परिगृह्णाति दक्षिणतः पश्चादुत्तरतश्च स्फ्येन गायत्रेणेति (१.२७.) प्रतिमन्त्रम् ॥२५॥ अध्वर्युर्ब्रह्मन्पूर्वं परिग्रहं परिग्रहीष्यामीति ब्रह्माणमामन्त्र्यौं परिगृह्णाणेति तेनानुज्ञातः स्फ्येन क्रमेण दक्षिणतः पश्चादुत्तरतश्च वेदिं परिगृह्णाति परि समन्तात्स्फ्येन रेखाकरणादि(ना) इयती वेदिरिति ज्ञापनार्थं परिगृह्णाति । पूर्वं परिग्रहमित्यस्य कर्मणः संज्ञा संव्यवहारार्था । प्रतिमन्त्रमिति गायत्रेणेति दक्षिणतः दक्षिणपार्श्वे नैर्ऋतकोणादारभ्य पुरस्ताद्वेदिमध्यात् स्फ्येन लेखां करोति त्रैष्टुभेनेति पश्चात् अपरपार्श्वे दक्षिणश्रोणेरारभ्य उत्तरश्रोणिपर्यन्तम् जागतेनेत्युत्तरतः उत्तरश्रोणेरारभ्य उत्तरपार्श्वे पुरस्ताद्वेदिमध्यं यावत् । अंसपर्यन्तमाहवनीयखरपर्यन्तं वा परिग्रहणं कार्यम् ।

वेद्यां त्रिरुल्लिख्याह हर त्रिरिति ॥२६॥[४] वेदिमध्ये स्फ्येन तिस्रो लेखाः प्राचीरुदक्संस्था उदीचीर्वा प्राक्संस्थाः कृत्वाग्नीधं प्रत्यध्वर्युराह ।

हृत्वाग्नील्लेखाः संमृशति ॥२७॥ एवं प्रेषितोऽग्नीत्ताभ्यो लेखाभ्यः पांसून् त्रिर्हृत्वा उत्करे प्रक्षिप्य तदा लेखाः संमर्शनेन समीकरोति ।

पितृयज्ञाग्निचित्ययोः ॥२८॥ एतदुक्तं लेखाकरणं हर त्रिरिति प्रैषो ऽग्नीधस्त्रिर्हरणं संमर्शनं च पितृयज्ञाग्निचित्ययोरेव भवति तत्रैव श्रुतवात् · न दर्शपूर्णमासयोः अश्रुतवात् । पितृयज्ञाग्निचित्ययोरिति ततश्च तयोरेव वेदेरेतत्संस्काराधिक्यं वचनादिति प्राप्तऽआह ·

---

१) हस्तेन हस्ताभ्यां वा पीडयति Mahâd. २) ? ऽस्याववाधानं २. ३) प्रहरणादि उत्करे-करणान्तं कर्म Mahâd. ४) सकृदुल्लेखनं महापितृयज्ञे · वरुणप्रघासेष्वयं त्रिःशब्दो ऽभ्यसितव्यः वेदिद्वित्वात् Mahâd.

वा तत्रदर्शनादत्र ॥२९॥ वा पूर्वपक्षनिरासे · न पितृयज्ञाग्निचित्ययो-रेव तत्संस्काराधिक्यम् किं तर्हि अत्रापि दर्शपूर्णमासयोर्भवति । कुतः तत्र-दर्शनात् तयोरेव तत्र पितृयज्ञाग्निचित्ययोर्हि अन्यविधिपरे वाक्ये लेखाकरणा-दीनि दृश्यन्ते यतस्तत्र प्रकृतितः प्राप्तानां दर्शनमेव न तु विधानम् · कुतः वाक्यस्यान्यपरत्वात् · कथमन्यपरता · पितृयज्ञे तावत् स यज्ञोपवीती भूत्वा-ज्यानि गृह्णातीति (२. ६. १. १२.) आज्यग्रहणे यज्ञोपवीतित्वविधानपरं वचनम् यतः कर्मणः पित्र्यत्वेन प्राचीनावीतित्वमेव प्राप्नोति तत्र वचनाद्यज्ञोपवीतित्वं विधी-यते अन्यत्स्तम्बयजुर्हरणादि सर्वं प्राप्तमेवानूद्यते · अग्निचित्यायाम् महावेदेः स्फ्यादिसंमर्शनात्तस्य कर्मणोऽवसरविधानार्थं वचनम् तत्र हि सौमिका वेदेरौ-पवसथ्यात्पूर्वेऽहनि स्फ्यादानादि कर्म प्रकृतितः प्राप्नोति प्रायणीयहविष्कृदन्ते च वचनेन विधीयते अतस्तत्र प्रकृतितः प्राप्तानां दर्शनमेव (न) विधानम् · अतो दर्शपूर्णमासयोरपि लेखाकरणादि भवतीति सिद्धम् ।

वेदिकरणं यथोक्तम् ॥३०॥ [अत्रेत्यनुवर्तते] · यथोक्तं यथा पूर्वमुक्तं[1] वेदिकरणम् तदत्रास्मिन्नवसरे लेखासंमर्शनानन्तरं भवति ।

उत्तरं परिग्रहं परिगृह्णाति सुक्ष्मा स्योनोर्जस्वतीति (१. २७.) प्रतिमन्त्रं पूर्व-वत् ॥३१॥[2] अत्रापि ब्रह्मनुत्तरं परिग्रहं परिग्रहीष्यामीति ब्रह्माणमा-मन्त्र्यों परिगृहाणेति तेनानुज्ञातः ।

पुरा क्रूरस्येत्यनुमार्ष्टि (१. २८.) ॥३२॥ तां प्रतिमार्ष्टीति (१. २. ५. १८.) श्रुतेः · प्रति पूर्वक्रियाविपर्यये वर्तते · पूर्वं खनित्रा विषमा कृता अधुना तां समीकरोतीत्यर्थः[3] । पुरस्तादारभ्य प्रत्यक्संस्थमनुमार्जनं कार्यम् स्वश्रुतौ सूत्रे च विशेषानुपदेशात् ।

अथधि वेदिं प्रोक्षणीर्धारयत्यन्यः ॥३३॥ पूर्वमुक्तम् (२. ३. ४०.) असंचरे प्रोक्षणीर्निधायेति · ता एवेदानीं तत उत्पाद्य वेदेरुपरिष्टाद्धारयति[4] ।

---

१) यथोक्तमिति व्याममात्रीं पश्चादित्याद्यंसकरणात्तमन्यूनातिरिक्तकरणं Mahâd. २) अत्र यत्प्रतीकोच्चारणम् तद्वाक्यावसानप्रज्ञप्त्यर्थम् Mahâd. ३) लोष्टादिनिष्काशनेन वा काष्ठादिना भङ्क्त्वा वा भूसमीकरणम् Mahâd. ४) वेदेरुपरिष्टादत्यन्तसमीपऽएव अतिनीचैः Ss.

अथ स्फ्यमुद्यम्याह प्रोक्षणीरासादयेध्मं बर्हिरुपसादय स्रुचः संमृड्ढि[1] पत्नीं संनह्याज्येनोदेहीति यदीच्छेत् ॥ ३४ ॥ अथ अग्नीत्कर्तृकप्रोक्षणीधारणानन्तरमध्वर्युर्यदि प्रैषवचनमिच्छेत् तदा प्रोक्षणीषु वेदिमध्येऽग्नीधा धार्यमाणासु वेदेः सकाशात्स्फ्यमुद्यम्य हस्तेनोर्धमुत्याग्याग्नीध्रं प्रति प्रोक्षणीरासादयेत्यादिमाज्येनोदेहीत्यन्तं प्रैषं ब्रूयात् · यदि प्रैषं दातुं नेच्छेत् ततो न ब्रूयात् स्वयमेवाग्नीध्रो ऽप्रेषितोऽपि आहननादिवत्प्रोक्षण्यासादनादि[2] कुर्यात् तेषामग्नीध एव कर्तृत्वमिति हरिस्वामिनः · अन्ये त्वप्रैषपक्षे अध्वर्युकर्तृत्वमाहुः स्वयमेवाध्वर्युर्वेदिमतः कर्म कर्तव्यमिति काण्वपाठात् । पत्नीशब्दस्यानेकपत्नीकेऽप्यनूहः एकवचनान्तस्यैव समाम्नानात् न प्रकृतावपूर्वत्वादिति न्यायात् । अथशब्दो धार्यमाणास्वेव प्रोक्षणीषु सर्वप्रैषाणां प्रापणार्थः अन्यथा (एकैक)प्रैषसमनन्तरमेव (एकैक)प्रैषार्थानुष्ठानस्य सर्वत्र न्याय्यत्वात् · तन्मा भूत् · सर्वप्रैषानन्तरमासादनं यथा स्यादित्येवमर्थोऽथशब्दः[3] । वरुणप्रघासेषूहः इध्मौ बर्हिषी आज्याभ्याम् · गृहमेधीयायाम् स्रुचम् · उपसदि स्रुचौ · अनेकयजमानके बह्वीषूदवसानीयासु इध्मान्बर्हींषि आज्यैः ।

यथाप्रेषितमन्यः पराधिकारात् ॥ ३५ ॥ अन्यश्च प्रैषं करोति पश्चात् परमन्यमेवाधिकृत्य प्रैषः प्रवर्तते न हि कश्चिदात्मानं प्रेषयतीदं कुर्विति । अध्वर्युः प्रैषार्थ आग्नीध्रश्च प्रैष इति प्राप्त आह ·

स्वयं वाविरोधात् ॥ ३६ ॥ स्वयं वा अध्वर्युरेव प्रैषे स्यात् अर्थादग्नीत्प्रैषार्थे[4] · न ह्येवं क्रियमाणेऽपि समाख्या विरुध्यते · कुतः तत्प्रयोजको हेतुश्च चकारात्कर्ता चेति प्रयोजकत्वस्यापि कर्तृत्वस्मरणात् इतरथा तु पदार्थमात्रकर्तृत्वात्प्रैषे समाख्या बाध्येत ।

सम्प्रैषावचनाच्च ॥ ३७ ॥ सम्प्रैषेषु अध्वर्योरवचनाच्चाध्वर्युरेव प्रैषे स्यात् · यदि चाग्नीदग्नीन्विहरेत्यादौ (६. ७. ५.) अपि चाध्वर्यो प्रोक्षणीरासादयेत्येवं सम्प्रैष-

---

1) °मृड्ढि 1. 3. 2) °णीरासा° 2. 3) प्रोक्षणीधारणानन्तर्यप्रज्ञप्त्यर्थोऽथशब्दः · पञ्च प्रैषाः सावसाना इति वैद्यनाथमिश्राः Mahâd. 4) अप्रैषं कर्म स्वयमेव कुर्यात् Mahâd. यच्च कर्काचार्येणाभ्यधायि प्रैषार्थेऽध्वर्युः प्रैषेऽग्नीदिति तदत्यन्तत्वावहूकस्वभावतयाचिरंतनव्याख्या (? विरंतनव्याख्या Cod.) Ananta.

मध्यऽएवाध्वर्योर्वचनं स्यात् तदा वचनादध्वर्युः प्रैषार्थे स्यादपि · न चैवम् · तस्मादध्वर्युरेव प्रैषे । उत्कृष्टोऽध्वर्युः निकृष्टमग्नीधं प्रेष्यति ।

प्राक्स्तरणाद्वेदिं नावमृशेत् ॥ ३८ ॥ [1)]

शृतानि च हवींष्या प्रचरणात् ॥ ३९ ॥ [2)] शृतानीति क्लृप्तेति (१. २. ५. २६.) च विशेषोपादानाच्छ्रप्यमाणेषु हविःषु संस्क्रियमाणायां च वेदौ स्पर्शो न दोषः ।

अङ्गुष्ठाङ्गुलिभ्यां मांसमसंहिताभ्यामवद्यन्त्येके ॥ ४० ॥ अवमर्शननिषेध-प्रसङ्गात्तत्प्रति प्रसवार्थमेतत् । शाखिनो मांसोपलक्षितान्तःप्रदेशसम्बन्धाभ्यामङ्गु-ष्ठाङ्गुलिभ्यां [3)] नखाभ्यामस्पृशन्तो हवींष्यवद्यन्ति अन्ये तु शृतावदानसंज्ञकेन वारणेन प्रादेशमात्रेण काष्ठेन · उक्तम् सामर्थ्यात्स्वधितिर्मांसे द्रवेषु स्यात्स्रुव-स्तथा हस्तकाष्ठे पुरोडाशमवदातुं प्रकल्पत इति स्रुवेण स्वधितिना हस्तेन काष्ठेन चत्वार्यवदानसाधनानि ।

आपन्नं स्तृणन्निरस्येत् ॥ ४१ ॥ [4)] स्तरणात्प्राक् पतिततृणाद्यपसारणार्थं हस्तेनापि न स्पृशेत् स्तरणे क्रियमाणे तु पादेनाप्यभिष्ठानं न दोषायेत्यर्थः ।

द्विषतो वध इति (१. २८.) स्फ्यमुदञ्चं प्रहरति ॥ ४२ ॥ अध्वर्युः प्रैषार्थमु-द्यतं वज्रं प्रैषान्ते उदगग्रमुत्करे प्रक्षिपति · उदकोपस्पर्शनं चाभिचारपक्षे ।

अवनिज्य पाणीऽअपरेण प्रणीता स्फ्यं निदधाति ॥ ४३ ॥ हस्तावुत्करेऽद्भिः प्रक्षाल्य प्रणीतानां पश्चात्समीपऽएव स्फ्यमासादयत्यध्वर्युः [5)] ।

इध्माबर्हिश्च पूर्वमिध्मम् ॥ ४४ ॥ चकारेण अपरेण प्रणीता निदधात्या-ग्नीध्रः उपविश्यासादयति · इध्मं पूर्वं प्रागग्रम् ततो बर्हिरपि प्रागग्रमेवेध्मादुत्तरम् ।

प्रणीता दक्षिणेन वाहृत्य ॥ ४५ ॥ प्रणीतानामाहवनीयस्य चान्तरालेन प्र-दक्षिणमिध्माबर्हिराहृत्य निदधाति प्रणीतानां पश्चादेव । अव्यवायार्थोऽयं प्रयत्नः ।

स्रुवं प्रतप्य पूर्ववद्वेदाग्रैरन्तरतः प्राक्संमार्ष्ठिनिशित इति (१. २९.) विपर्यस्य

---

१) अनुमार्जनादूर्ध्वं प्रा॰ णात् वेदिं न स्पृशेत् Mahâd. २) प्रचरणं प्रधानविषयम् · प्रधानयागान्तं शृ॰ ह॰ न स्पृशेत् Mahâd. ३) अङ्गुलिशब्देन प्रदेशिनी Mahâd. ४) (बर्हिःस्तरणात्प्राक्) वेदिमध्ये तृणकाष्ठपर्णादि यदापन्नं पतितं भवति (तदध्वर्युरुत्करे निरस्येत्) Ss. ५) अवनेजनं दृष्टार्थम् येन धूलिधवलावमलौ क्रियेते · अतो वेदिखननाभावऽएतस्याप्यभावः Mahâd.

बर्हिर्मूलैः प्राङुत्क्रम्य ॥४६॥ अग्नीत्स्रुवं प्रतप्य अप उपस्पृश्य ततोऽग्निदेशात्प्राङुत्क्रम्य प्राच्यां गत्वा वेदाग्रैः अग्रे प्रतिपत्तिविधानाद्वेदात्पृथक्कृतैः अन्तरतो मुखप्रदेशे [1] स्रुवं प्राक्संमार्ष्टि वेदाग्रैर्मूलादारभ्याग्रपर्यन्तमुपरिप्रदेशे प्राञ्चं संमार्ष्टि मार्जनेन तत्संलग्नं रजः पातयतीत्यर्थः · तत एव स्रुवं बर्हिर्बुध्नप्रदेशे वेदस्य मूलैर्विपर्यस्य संमार्ष्टि [2] देशभेदात्पुनरप्यनेनैव मन्त्रेण प्रत्यक् अग्रादारभ्य बुध्नपर्यन्तम् · देशभेदाच्च मन्त्रावृत्तिः । प्राङुत्क्रमणं संमार्गमात्रे न प्रतपने · प्रतपनं तु पश्चात्स्वस्थानमागत्यैव कार्यम् · अतः पूर्ववदित्यनेन प्रत्युष्टं निष्टप्तमिति वेति (२.३.११.) वैकल्पिको मन्त्रो [ऽति]दिश्यते ।

प्रतप्य-प्रतप्य प्रयच्छति ॥४७॥ यस्य-यस्य स्रुवादेः संमार्गो विहितो विधास्यते तस्य-तस्य संमार्गानन्तरं तत्तत्प्रतप्य-प्रतप्याध्वर्यवे प्रयच्छति समर्पयति · ततश्च स्रुवस्य पूर्वं प्रतपनम् ततः प्राङुत्क्रम्य यथोक्तः संमार्गः पुनः प्रत्यागत्य प्रतपनम् उदकस्पर्शः समर्पणमिति क्रमः । अप्रैषपक्षे अध्वर्योः प्रतपनपक्षे चार्थादग्नीधे समर्पणम् ।

अनिशितेति (१.२१.) स्रुचः ॥४८॥ जुह्वाद्याः संमार्ष्टि समर्पणपर्यन्तम् ।

तूष्णीं प्राशित्रहरणे शृतावदानं पात्रीं च ॥४९॥ तदनन्तरं प्राशित्रहरणम् अविशेषाद्द्वयोरपि संमार्गः एकवचनं तु जात्यपेक्षम् · ततः शृतावदानम् · ततः पात्रीम् । अविशेषोपदेशात्पुरोडाशपात्र्योरिडापात्र्याश्च क्रमेण तूष्णीं संमार्गप्रतपनसमर्पणानीति कर्कः · तदयुक्तम् · एकवचनादत्रैकैव पात्री द्वयोः पुरोडाशयोरासादनार्था भवति शाखान्तरीयसर्वसूत्रेषु आसादनोपस्तारादौ चैकस्या एव दर्शनात् · इडापात्र्यास्तु संमार्गप्रतपने कुत्रापि सूत्रे विहिते न स्तः तेन इडापात्रीषडवत्तयोः संमार्गप्रतपनकल्पनं निर्मूलमेव · अत एव पितृभूत्याचार्यैरनयोर्न संमार्गार्हतेत्युक्तम् । तूष्णीं प्रतपने चोदकस्पर्शनाभावः रक्षोदेवतमन्त्रोच्चारणाभावात् । चकारात्षडवत्तस्यापि संमार्गादि भवति प्राशित्रेडासमानन्यायात् । पशौ सांनाय्यपयोधर्मप्रवृत्तेः सांनाय्यस्य च स्रुवेणावदानविधानात्

---

1) अन्तरत इति खातमध्ये Mahâd. 2) पुष्कराद्बहिर्दण्डे मूलैर्वेदाग्रमूलैः । अर्थात्पूर्वं वेदाग्रनिष्पत्तिः ततः प्रतपनादि Mahâd.

पशुमांसावदानार्थस्यासेः स्थानापत्त्या स्रुवधर्मलाभः · ततश्च स्रुवसंमार्गानन्तरमसेः पूर्वं स्रुवमन्त्रेण प्रतपनम् अनिशितोऽसीति संमार्गः पुनः प्रतप्याप उपस्पृश्य समर्पणमिति । वसाहोमहवन्याः प्रचरण्याश्च जुहूवत्तूष्णीं संमार्गप्रतपने · अन्येषामपि जुहूस्थानापन्नानां शूर्पार्कपर्णादोहनौडुम्बरस्रुवादीनां जुहूवदेव संमार्गप्रतपनसमर्पणानि · पृषदाज्योपभृतश्चोपभृद्वत् · मेक्षणस्य शृतावदानवत् · वाजिनभाण्डस्य पुरोडाशपात्रीवदिति सम्प्रदायः · तत्तु विचारणीयम् उपदेशातिदेशयोरभावात् । कर्कस्य (मते) मूलैरिति वेदाग्रमूलैः · अन्ये तु वेदाग्रैर्वेदमूलैरिति ।

संमार्जनान्यपास्यति ॥५०॥ सर्वसंमार्गानन्तरं संमार्जनसाधनानि वेदाग्रमूलानि उत्करे प्रक्षिपति ।

आहवनीये प्रासनमेके ॥५१॥ आहवनीये वा · आपस्तम्बः संमार्जनान्यद्भिः संस्पृश्याग्नौ प्रहरति यस्मिन्प्रतपत्युत्करे वेति ॥ ॥ षष्ठी कण्डिका ॥६॥

अथ पद्धतिः ॥

ततो वेदिमानम् · प्रथमं पश्चात्तिर्यक् व्याममात्रीं मिमीते चतुर्भिररत्निभिर्व्यामो भवति · ततो मध्ये त्र्यरत्निं प्राचीं मिमीते · ततः पुरस्तात्तिर्यक् त्र्यरत्निं मिमीते पुनः पुरस्तादुर्वीति (१.२.५.१६.) वचनात् वरुणप्रघासेषु त्रयः पुरस्तादिति (५.३.२३.) पुरस्तान्माने त्र्यरत्निदर्शनाच्च · ततः श्रोणिरारभ्य दक्षिणात उत्तरतश्च वेदिं मध्यसंगृहीतां कुर्यात् · ततोऽग्निमभितोऽसौ च कुर्यात् । वेदिकरणोपायो लिख्यते [1] षडरत्निर्द्विपाशा च मध्ये पञ्चसु लक्षिता द्विहस्तेऽङ्गुलषट्के च त्रिघ्नष्टादशकेषु [2] च सार्धहस्ते च पाशः स्याद्वेदिः स्यात्पौर्णमासिकी [3] आनीय रज्जुं पूर्वार्धात्पश्चार्धं यावदेव तु द्विगुणीकृत्य तां रज्जुमन्ते तस्यास्तु शङ्कौ भ्रामयेत्तेन मानेन तया रज्ज्वाष्टभागया वा पृथुवतुरीयेण भागेनालिख्य [4] संग्रहौ इति · अथवा वेदिश्रोण्यंसयोर्मध्ये तया रज्ज्वाष्टभागया विलिखेन्मध्यतो वेदौ स ज्ञेयो मध्यसंग्रह इति । ततोऽग्नीद्वेदेः परिसमूहनं कृत्वा गार्ह-

---

1) See pag. २०६. 2) Thus १. and Chamb. 622. 630. त्रिः षष्टादशकेषु Chamb. 196. त्रिघ्नष्टादशेषु Chamb. 792 s 5. 3) This hemistich is found in the Çulvapariçishṭa. 4) मध्येनालिष्य Chamb. 792 s 5.

पत्याहवनीययोरन्तरालस्योत्तरपूर्वत्रितृतीये उत्करं तृणधूल्यादिराशिं करोति तच्च[१] गार्हपत्याहवनीययोरन्तरं षड्ढा[२] सप्तधा वागन्तुसमं त्रेधा विभज्य पूर्वत्रितृतीयलक्षणेनोत्तरत आयम्य तत्रोत्करं कुर्यात् विपर्यस्योत्तरत उत्कर इति वचनात् · प्रकारान्तरं चोक्तम् अपि वान्तरत्रिभागोनया रज्ज्वा पूर्वार्धे समचतुरश्रं कृत्वा तस्य चतुरश्रस्योत्तरांसऽउत्करो भवति विपर्यस्योत्तराऽसऽउत्कर इति वचनात् · वेदिपूर्वापरायामस्यैव पूर्वत्रितृतीये उत्तरत उत्करो भवतीति कर्कः । ततोऽध्वर्युर्देवस्य त्वा॰ आददेऽध्वरकृतमिति (१. २४.) मन्त्रेणासादिततृणसहितं स्फ्यमादाय सव्ये हस्ते सतृणं स्फ्यं निधाय दक्षिणेन हस्तेनालभ्येन्द्रस्य बाहुरिति (१. २४.) स्वरेण जपति · अत्र हस्तमार्जनेन स्फ्यस्य तीक्ष्णीकरणं कार्यम् सऽश्यत्येवैनमेतदिति (१. २. ४. ७.) श्रुतेः · तेन वज्रेण स्तम्बयजुर्हरणादर्वाक् पृथिव्यात्मनोः स्पर्शो न कर्तव्यः · अभिचरतो द्विषत इत्यस्य स्थाने अमुष्य बध इति शत्रोर्नाम गृह्णीयात् तत उदकोपस्पर्शनम् अभिचाराभावे उदकोपस्पर्शनाभावः । ततः पृथिव्यै वर्मासीति मन्त्रेण तत्तृणं वेद्यामुदगग्रं निदधाति · पृथिवि देवयजनीति (१. २५.) मन्त्रेण तृणस्याधस्ताद्भुवि स्फ्येन प्रहरति · ततो व्रजं गच्छेति (१. २५.) प्रहरणेनोत्खातं पुरीषं हस्तेन गृह्णाति · ततो वर्षतुतऽइति (१. २५.) मन्त्रेण वेदिं प्रहरणदेशे प्रेक्षते । ततो बधान देवेत्यनेन (१. २५.) तद्गृहीतं पुरीषमुत्करे प्रक्षिपति · अत्राप्यभिचरतः तमतो मा मौगित्यत्र तमित्यस्य पदस्य स्थानेऽमुकमिति शत्रुनाम गृह्णीयात् तत उदकोपस्पर्शनम् अभिचाराभावऽउदकोपस्पर्शनाभावः । ततोऽपाररुमिति (१. २६.) मन्त्रेण पूर्वप्रहृतादुत्तरतस्तृणस्याधस्तात्स्फ्येन द्वितीयं प्रहरति · मन्त्रस्यासुरत्वादुदकस्पर्शः · ततः पूर्ववत्पुरीषादानवेदिप्रेक्षणपुरीषप्रक्षेपणानि । ततोऽग्नीत्स्फ्यं गृहीत्वा द्वाभ्यां पाणिभ्यामुत्करमभिन्यस्यति पाणिभ्यामधः पीडयतीत्यर्थः · उदकोपस्पर्शनम् । ततो ऽप्सस्तऽइति (१. २६.) मन्त्रेण द्वितीयप्रहृतादुत्तरतस्तृणस्याधस्तात्तृतीयं प्रहरति · अत्रापि पुरीषादानवेदिप्रेक्षणपुरीषनिरसनानि पूर्ववत् । ततस्तृतीयप्रहृतादुत्तरतस्तृणस्याधस्तात्तूष्णीं चतुर्थं प्रहरति · तूष्णीमेव सतृणपुरीषादानम् तूष्णीमेवो-

१) See pag. २१०. २) षड्ढा Chamb. 622. 630.

त्खातप्रदेशप्रेक्षणम् सतृणस्य पुरीषस्योत्करे प्रक्षेपस्तूष्णीमेव । ततो ब्रह्मन्पूर्वं परिग्रहं परिग्रहीष्यामीति ब्रह्माणं पृच्छति · ततो ब्रह्मा बृहस्पते परिगृह्णाणेतीमं मन्त्रं धेहीत्यन्तमुपांशु पठित्वा[1] ओं३ परिगृह्णाणेत्युच्चैरध्वर्युमनुजानाति · ततो ऽनुज्ञातोऽध्वर्युः स्फ्येन श्रोणेरारभ्य दक्षिणतो गायत्रेण त्वेति (१.२७.) वेदिं परिगृह्णाति आहवनीयखरपर्यन्तां रेखां करोतीत्यर्थः · त्रैष्टुभेनेति (१.२७.) दक्षिणाश्रोणेरारभ्योत्तरश्रोणिं यावत् परिगृह्णाति · ततो जागतेनेत्यनेनोत्तरश्रोणेरारभ्योत्तरपार्श्वे परिगृह्णाति आहवनीयखरं यावत् । ततो वेद्यां प्रागायता उदक्संस्थास्तिस्रो लेखास्तूष्णीं स्फ्येन लिखित्वा हर त्रिरित्यग्नीधं प्रति ब्रूयात् · ततो ऽग्नीत्ताभ्यो लेखाभ्यः पांसूनुद्धृत्योत्करे प्रक्षिप्य ता लेखाः संमृशेत् मार्जनेन स्फोटयेत्[2] । ततोऽग्निमादाय प्रदक्षिणं सर्वतो वेदिं खनति त्र्यङ्गुलम् ओषधिमूलोच्छेदपर्यन्तं वा · अस्मिन्पक्षे ओषधीनां मूलान्युच्छेत्तवाऽइति प्रैषमध्वर्युराग्नीध्रं प्रति ब्रूयात् स च प्रेषितो[3] मूलच्छेदनपर्यन्तं खननं करोति । ततो ब्रह्मन्नुत्तरं परिग्रहं परिग्रहीष्यामीति ब्रह्माणं पृच्छति · ब्रह्मा च पूर्ववद्बृहस्पते परिगृह्णाणेति पठित्वा ओं३ परिगृह्णाणेति प्रसौति · ततः पूर्ववत्स्फ्येन दक्षिणपश्चिमोत्तरपार्श्वेषु वेदिं परिगृह्णाति सुक्ष्मा चासीति (१.२७.) दक्षिणतः स्योना चासीति पश्चात् ऊर्जस्वतीत्युत्तरतः । ततः स्फ्येन दक्षिणां दिशं प्रति वेदिपुरीषमुद्धृत्य पुरा क्रूरस्येति (१.२८.) मन्त्रेणानुमार्ष्टि प्रत्यक्संस्थम् पुरस्तादारभ्य प्रतीचीं दिशं प्रति पुरा क्रूरस्येत्यनुमार्ष्टि · शाखान्तरसूत्रेषु सर्वेषु प्रत्यक्संस्थमेवानुमार्जनमुक्तमस्तीति तथैवानुष्ठेयम् स्वशाखायां विशेषानुपदेशात् · अनुमार्जनं चात्र खननेन विषमस्य समीकरणम् · पशुकामस्य यजमानस्य प्रागनुमार्जनाद्वेदिपुरीषं निष्काश्योत्करे प्रक्षिप्यान्यत्पुरीषमानीय वेदेः पूरणम् ततो ऽनुमार्जनेन समीकरणम् । ततोऽग्नीत्प्रोक्षणीर्गृहीत्वा वेदेरुपरिष्टात्समीपऽएव धारयति · ततो धार्यमाणासु प्रोक्षणीष्वध्वर्युः स्फ्यमुद्यम्य सर्वं प्रैषजातमाह प्रोक्षणीरासादयेध्मं बर्हिरुपसादय स्रुचः संमृड्ढि पत्नीं संनह्याज्येनोदेहीति । अनेकपत्नीकेऽपि पत्नीशब्दस्य नोहः । यदि प्रेषणेच्छा भवति तदा प्रेषणं कुर्यात्

1) See २. २. ८-१२. 2) ? स्फोटयेत् १. 3) ? समप्रेषितो १.

यदि नेच्छत् तदा अप्रेषितोऽप्याग्नीध्र एव कुक्कुटाहननादिवत्प्रोक्षण्यासादनादि-पदार्थान्कुर्यादिति हरिस्वामिनः · अप्रैषपक्षेऽध्वर्युः पदार्थान्करोतीत्यपरे । ततो द्विषतो वध इति (१.२८.) मन्त्रेण स्फ्यमुदगग्रमुत्करे प्रक्षिपति · अभिचरतोऽमुष्मै त्वा वज्रं[१] प्रहरामीति विशेषः अमुष्मै इत्यत्र[२] शत्रोश्चतुर्थ्येकवचनान्तं नामग्रहणम् ततोऽपामुपस्पर्शनम् · अभिचाराभावे उदकोपस्पर्शनाभावः । ततोऽध्वर्युः स्फ्यं गृहीत्वोत्करे पाणी प्रक्षाल्य प्रणीतानां पश्चात्प्रागग्रमुदगग्रं वा स्फ्यं निदधाति · ततोऽग्नीद्वेदिमध्ये उदगग्रामग्निहोत्रहवणीमासाद्य प्रणीतानां पश्चात्स्फ्यस्योत्तरतः प्रागग्रमिध्ममासाद्येध्माडुत्तरतो बर्हिः प्रागग्रमासादयति · अथवा इध्मं प्रणीता दक्षिणेन प्रदक्षिणाहृत्य प्रणीतानां पश्चादेव प्रथममासादयति ततो बर्हिः । तत आग्नीध्रः खादिरं स्रुवमादाय प्रत्युष्टमिति (१.२९.) वा निष्टप्तमिति वा मन्त्रेण गार्हपत्ये प्रतप्याप उपस्पृश्याग्निसमीपात्प्राच्यां गत्वा वेदग्रैरन्तरतः प्राञ्चं संमार्ष्टि मूलादारभ्याग्रपर्यन्तम् अनिशितोऽसीति (१.२९.) मन्त्रेण · ततो वेदमूलैर्बहिःप्रदेशे स्रुवपुष्करस्य बुध्नादारभ्य मूलपर्यन्तं प्रत्यञ्चं संमार्ष्टि अनेनैव मन्त्रेण · ततोऽग्निसमीपे गत्वा पूर्ववत्प्रतप्याप उपस्पृश्याध्वर्यवे समर्पयति । ततो जुहूमादाय प्राङुत्क्रम्यानिशितासीति (१.२९.) स्रुववदन्तरतो बाह्यतश्च मन्त्रेण संमृज्य पूर्ववत्प्रतप्याप उपस्पृश्याध्वर्यवे प्रयच्छति · एवमेवोपभृतम् ध्रुवां च संमृज्य प्रतप्य प्रयच्छति । ततस्तूष्णीं प्राशित्रहरणे शृतावदानं पुरोडाशपात्रीं च प्रत्येकं प्राङुत्क्रम्य तूष्णीमन्तर्बहिश्च संमृज्याग्निसमीपमागत्य तूष्णीं प्रतप्याध्वर्यवे समर्पयति · तत्र रक्षोदेवतमन्त्रोच्चारणाभावादुदकोपस्पर्शनाभावः । ततः संमार्जनान्युत्करे प्रक्षिपत्याहवनीये वा । उत्ताना धारयमाणः स्रुचः संमार्ष्टि न संमृष्टान्यसंमृष्टैः स्पर्शयति प्रतप्याग्रेणोत्करं दर्भेषु सादयति जघनेन वा यथास्थानमुत्तानाः स्रुचः सादयतीति शाखान्तरीया अत्र विशेषाः । इडापात्रीषडवत्तयोस्तु न संमार्गः क्वचिदपि सूत्रेऽदर्शनात् · पुरोडाशपात्री च द्वयोः पुरोडाशयोः साधारणी एकैव भवति पात्रीमित्येकवचनात् ॥ ॥ ६॥

इति द्वितीयस्य षष्ठी कण्डिका ॥

---

१) ? °मुष्यै (°ष्य ५.) त्वा चद्रां १. See १.२.५.२२. २) अमुष्यै इत्यत्र १. अमुष्येत्यत्र ५.

पत्नीं संनह्यति प्रत्यग्दक्षिणात उपविष्टां गार्हपत्यस्य मुञ्जयोक्त्रेण त्रिवृता परिहरत्यधीवासोऽदित्यै रास्नेति (१. ३०.) ॥ १ ॥ अग्नीत् गार्हपत्यस्य प्रत्यग्दक्षिणतो नैर्ऋत्यां दिश्यैशानदिङ्मुखीमुपविष्टां यजमानस्य भार्यां त्रिगुणेन मुञ्जमयेन योक्त्रेण संनह्यति बध्नाति । अदित्यै रास्नासीति मन्त्रेण वाससो बहिः परितो वेष्टयति [1]। अनेकपत्नीके सर्वासाम् । तच्चैतत्संनहनं नाभेरधः कटिप्रदेशे कर्तव्यम् अस्ति वै पत्न्या अमेध्यं यदवाचीनं नाभेरित्यादिश्रुतेः (१. ३. १. १३.) ।

दक्षिणं पाशमुत्तरे प्रतिमुच्योर्ध्वमुद्गूहति विष्णोर्वेष्य इति (१. ३०.) ॥ २ ॥ अग्नीदेव तस्य योक्त्रस्य दक्षिणं पाशमुत्तरे पाशे शङ्कुस्थानीये [2] प्रतिमुच्य प्रोतयित्वा ततः सामर्थ्याद्द्विगुणं वेष्टयित्वा तं दक्षिणं योक्त्रपाशमूर्ध्वमुद्गूहति वेष्टिते योक्त्रऽएव मध्ये प्रेरयति · ऊर्ध्वमेवोद्गूहनसामर्थ्याद्द्विर्वेष्टनम् एकवेष्टने उद्गूहनस्याशक्यत्वात् ।

न ग्रन्थिं करोति ॥ ३ ॥ [3]

ऊर्जे त्वेत्याज्यमुद्वास्य (१. ३०.) पत्नीमवेक्षयत्यदब्धेनेति (१. ३०.) ॥ ४ ॥ वेदं सव्येन गृहीत्वा आज्यमुद्वास्य पुरोडाशाभ्यां पूर्वत आनीयोत्तरतो भूमौ निधाय पत्नीं पत्न्याज्यमवेक्षस्वेति प्रेष्यति सा च वेदं हस्ते गृहीत्वा अदब्धेनेत्याज्यमवेक्षते · आपस्तम्बः सा निमील्य वीक्ष्यानुच्छ्वसन्ती वीक्षतऽइति । अनेकपत्नीके एकैवेति कर्कः सर्वा अपीति तु गम्यते [4]। पितृयज्ञे अध्वर्युरेवावेक्षते आज्यसंस्कारस्याप्रतिषिद्धत्वात् [5] · एवं रजस्वलायां प्रसूतायां प्रोषितायां वा · पितृयज्ञे सुहृर्देवपितृभ्यः ।

वेद्यां करोत्यपरं प्रोक्षणीभ्यः ॥ ५ ॥ अग्नीत्तदाज्यं नीत्वा आसादितानां प्रोक्षणीनां पश्चाद्वेद्यां करोति ।

आहवनीये वा कृत्वा तच्छ्रापिणः ॥ ६ ॥ आहवनीयश्रापिणो यजमानस्य आज्यमाहवनीये कृत्वा आहवनीयेऽधिश्रित्य पुनरुद्वास्य प्रोक्षणीभ्योऽपरं वेद्यां करोति · वा व्यवस्थायाम् आहवनीयश्रापिण एवमेव कर्तव्यम् गार्हपत्यश्रापिणस्तु प्रागुक्तमेव ।

---

१) पाशं बहिर्वासो वेष्टयति Mahâd. २) उत्तरे प्रान्ते शङ्कुसदृशे · उत्तरो न पाशः पाशशब्दाभावात् Mah. ३) योक्त्रस्य Mah. ४) बहुपत्नीकेऽप्येकैवाज्यावेक्षणं कुर्यात् आज्यसंस्कारत्वात् · संनहनमप्येकस्या एवाज्यावेक्षणार्थत्वात् Mah. ५) द्रव्यसंस्कारानपायात् Mah.

सवितुस्त्वेत्याज्यमुत्पुनाति (१. ३१.) ॥ ७ ॥ वेदमुपगृह्य · वेद्यामासादितमाज्यम् ।

प्रोक्षणीश्च पूर्ववत् ॥ ८ ॥ [1] चकारः उत्पुनातीत्यस्यानुकर्षणार्थः · कर्काचार्यास्तु चकारादाज्यं च पूर्ववदेव न ह्यन्यथा आज्योत्पवने पवित्रे प्राप्येते ऽइति व्याख्यातवन्तः । प्रोक्षणीनां पुनरुत्पवनमिध्माबर्हिषोः प्रोक्षणार्थम् अतश्च तदभावे न भवति ।

आज्यमवेक्षते तेजोऽसीति (१. ३१.) ॥ ९ ॥ [2]

यजमानो वा ॥ १० ॥ स्रुवेणाज्यग्रहणम् ॥ ११ ॥

चतुर्जुह्वां धाम नामेति (१. ३१.) सकृन्मन्त्रः ॥ १२ ॥ [3] चतुरः स्रुवान्पूर्णान्गृह्णीयात् · धाम नामेति मन्त्रः सकृत्प्रयोज्यः प्रथमस्रुवग्रहण एव ।

अष्टाऽउपभृत्यल्पीयोऽनुयाजाश्चेत् ॥ १३ ॥ अनुयाजाश्चेद्भवन्ति तदा उपभृति अष्टौ[कृत्वः] स्रुवाज्यं गृह्णीयात् · तच्च उपभृति आज्यमल्पीयः जौहवादाज्यादतिशयेनाल्पं ग्राह्यम् · सकृदेव मन्त्रः [4] । इहानुयाजानां नित्यत्वाच्चेच्छब्दो विकृतिविषयः ।

चतुरन्यत्र प्रतिविभागात् ॥ १४ ॥ अन्यत्र अनुयाजवत्कर्मणोऽन्यस्मिन्कर्मणि अनुयाजाभाववति अन्यद्रव्यानुयाजके च उपभृति चतुरेव [गृह्णीयात् · कुतः प्रतिविभागात्] औपभृतस्याज्यस्य प्रयाजेष्वनुयाजेषु च यतः प्रतिविभागेनोपयोगो दृश्यते अर्धं प्रयाजेषूपयुज्यतेऽर्धमनुयाजेषु ।

पश्वातिथ्यादर्शनाच्च ॥ १५ ॥ पशावातिथ्यायां च उपभृति चतुर्गृहीतस्य दर्शनाच्चैवं गम्यते यदनुयाजाभावे अन्यद्रव्यकेष्वनुयाजेषु [5] चोपभृति चतुर्गृहीतमेव गृह्णीयादिति ।

न कृत्स्नोपदेशात् ॥ १६ ॥ [6] संक्षि॰ नैतदेवम् यदुक्तम् उभयार्थमेतदिति · कुतः कृत्स्नोपदेशात् कृत्स्नस्य समग्रस्याप्यष्टगृहीतस्यानुयाजार्थत्वेन श्रुता-

---

१) पूर्ववदिति पवित्राभ्याम् सवितुरिति (१. ३१.) मन्त्रेण Ss. २) अध्वर्युः Mahâd. ३) त्रिस्तूष्णीम् Mah. ४) सकृत्त्रिर्वा सप्तकृत्वो वा मन्त्रः Mah. ५) पशौ पृषदाज्यानुयाजद्रव्ये चतुर्गृहीतं दर्शयति अथोत्पूयेति (३. ६. ३. ६.) · तथा चाननुयाजे कर्मण्यातिथ्यायाम् (३. ४. १. १८.) Mah. ६) नोपभृति चतुर्गृहीतग्रहणम् सम्पूर्णस्याष्टगृहीतस्यानुयाजार्थत्वेनोपदिष्टत्वात् Mah.

वुपदेशात् [अथ यदष्टौ कृत्व उपभृति गृह्णातीति प्रकृत्य (१. ३. २. १.) अनुयाजेभ्यो हि तद्गृह्णातीति]।

पश्वातिथ्ययोर्वचनात् ॥१७॥ [1] यदा वाक्येन कृत्स्नस्यौपभृतस्यानुयाजार्थत्वम् तदा पशावातिथ्यायां चाष्टगृहीतमेवोपभृति प्राप्नोति · अतो वचनात्तत्र चतुर्गृहीतं विधीयते · अतो विधानमेतत् न दर्शनम् तद्धि प्राप्तिपूर्वकं भवति प्राप्तिश्च नास्तीत्युक्तमेवास्मिन्सिद्धान्ते। वरुणप्रघासेषु महाहविषि च अनुयाजार्थं पृथगुपभृति न गृह्यते।

ध्रुवायां च स्रुग्वत् ॥१८॥ आज्यं गृह्णीयात् · स्रुग्वदिति चतुर्गृहीतम् सकृन्मन्त्रवचनम् · चकारादुपभृत्यपि सकृन्मन्त्रवचनम् · त्रिर्मन्त्रवचनपक्षे चतुर्थं तूष्णीम्।

इध्मं प्रोक्षति विस्रस्य वेदिं च बर्हिः प्रतिगृह्य वेद्यां कृत्वा पुरस्ताद्ग्रन्थि कृष्णोऽसीति (२. १.) प्रतिमन्त्रम् ॥१९॥ [2] इध्मं वेदिं बर्हिश्च प्रोक्षति · बर्हिः प्रतिगृह्य आग्नीध्रात्समर्पितं हस्तेनादाय। ब्रह्मन्निध्मं (ब्रह्मन्बर्हिः) प्रोक्षिष्यामीत्यामन्त्रणम् ओं प्रोक्षेत्यनुज्ञातस्य प्रोक्षणम् वेदिप्रोक्षणे तु आमन्त्रणानुज्ञे न भवतः अविहितत्वात्। वरुणप्रघासेषु इध्मौ बर्हिषी। इध्मस्याग्निसमिन्धनार्थस्यैव प्रोक्षणं (अग्नये) मेध्यीकरणार्थम् · अतश्च शतरुद्रिये परिध्युपस्पर्शनार्थस्येध्मकाष्ठस्य न प्रोक्षणम् अग्न्यर्थत्वाभावात्। वेदेरपि स्तरणार्थमेव प्रोक्षणम् बर्हिषे मेध्यीकरणार्थम् · अतश्च पयस्यायां स्तरणाभावे वेदिप्रोक्षणाभावः।

शेषं मूलेषूपसिञ्चत्यदित्यै व्युन्दनमिति (२. २.) ॥२०॥ बर्हिषः प्रोक्षणानन्तरं प्रोक्षणीशेषं बर्हिर्मूलेषु निनयति।

पवित्रे निधाय प्रणीतासु बर्हिर्विस्रस्य पुरस्तात्प्रस्तरग्रहणं विष्णोरिति (२. २.) ॥२१॥ अध्वर्युर्हस्तेन प॰ प्र॰ नि॰ बर्हिर्विस्रंस्य [3] तस्य बर्हिषः पूर्वभागात्प्रस्तरग्रहणं निष्काशनं करोति · स चायं पूलकात्प्रस्तरस्य पृथक्करणे मन्त्रः [4]।

---

१) पश्वातिथ्ययोरुपभृति यच्चतुर्गृहीतमुक्तम् न तद्दर्शनात् किं तु वचनात् प्राप्तिपूर्वकं हि दर्शनं भवति न चेह प्राप्तिरस्तीत्यतो वचनमिदमिति Mahâd. २) इध्मं प्रोक्षत्यग्न्यर्थम् वेदिं बर्हिरर्थम् बर्हिः स्रुगर्थम् Mahâd. ३) विस्रंसनं संनहनविस्रंसनेन भवति Mahâd. ४) ग्रहणं व्यवच्छेदो बर्हिषः पृथक्करणम् · तेन पितृयज्ञे पृथक्करणाभावान्न मन्त्रः Mahâd.

ब्रह्मणे प्रदाय संनहनं विस्रस्य दक्षिणस्यां वेदिश्रोणौ निधायान्यैरवछाद्य वेदिꣳ स्तृणात्यूर्णम्रदसमिति (२. २.) त्रिवृत् ॥ २२ ॥ तं गृहीतं प्रस्तरमाहवनीयं पूर्वेण तूष्णीं ब्रह्मणे समर्प्य बर्हिषः संनहनं बन्धनरज्जुं विस्रस्य विमुच्य रज्जुरूपवं परित्याज्य दक्षिणस्यां वेदिश्रोणौ प्रागग्रमुदगग्रं वा यथासम्भवं निधाय प्रस्तुताद्बर्हिषोऽन्यैर्बर्हिस्तृणैस्तं स्तृतं संनहनं प्रछाद्य त्रिधातुबर्हिषा वेदिमाछादयति । पितृयज्ञे देवपितृभ्यः ।

उपपत्त्या वा ॥ २३ ॥ वा विकल्पे · न त्रिवृत् · उपपत्त्यावृद्धा यावतीभिरावृद्भिर्वेदेः स्तरणमाछादनमुपपद्यते पञ्चधा सप्तधा · अयुग्मा आवृतो भवन्ति ।

बहुलम् ॥ २४ ॥ निविडम् घनम् यथा भूमिर्न दृश्यते ।

अधरमूलम् ॥ २५ ॥ [1] पूर्वस्तृतस्य बर्हिषो मूलानि पश्चात्स्तीर्यमाणबर्हिषोऽग्रैः प्रछादनीयानि ।

पश्चादपवर्गम् ॥ २६ ॥ पश्चात्समाप्तिर्यस्य तत्पश्चादपवर्गम् वेदेः पूर्वभागादारभ्य पश्चिमभागे समाप्तिर्यथा भवति · एकं मुष्टिं वेदेः पूर्वभागे स्तीर्त्वा द्वितीयं मुष्टिं वेदेः मध्यमभागे पूर्वस्तृतबर्हिषो मूलान्यग्रैश्छादयन्स्तृणाति ततस्तृतीयं मुष्टिं वेदेः पश्चिमप्रान्ते पूर्ववत् द्वितीयमुष्टिस्तरणेन सम्बद्धं स्तृणीयात् · इत्येवं स्तरणस्य प्रत्यक्परिसमाप्तिरित्येकः पक्षः । पक्षान्तरमाह ·

प्रवृहन्वा ॥ २७ ॥ एवं च प्रागपवर्गमेव स्तरणं कृतं भवति · वेदेः पश्चिमपार्श्वे स्तीर्त्वा तस्याग्राणि यष्ट्यादिनोत्पाट्य तेषामधस्तादन्यस्य बर्हिषो यथा मूलानि भवन्ति तथा स्तृणीयात् [2] ।

अत्रोद्वासनमाहवनीयश्रापिणः ॥ २८ ॥ अत्रास्मिन्काले श्राणो यजमानस्य हविषां [कपालानां च] उद्वासनम् इतरथाहवनीयकल्पने कृते सति हवींषि दह्येरन् [3] ।

---

१) अधराणि अधस्तान्मूलानि यस्य तदधरमूलम् Ss. २) पूर्वपूर्वस्तृतबर्हिषोऽग्राणि प्रवृहन् ऊर्ध्वमुत्पाटयन् तेषामग्राणामधस्ताद्द्वितीयं मुष्टिं स्तृणाति Ss. See १. ३. ३. १०.
३) कुतः विरोधात् यदिदानीमुद्वासनं न क्रियेत तदाहवनीयकल्पने कृते हवींषि दह्येत (!) Ss.

इध्मात्समिधमादायाहवनीयं कल्पयत्युपर्युपरि प्रस्तरं धारयन् ॥२९॥ इध्मादेकां समिधमादाय ततो ब्रह्मणः सकाशात्प्रस्तरं चार्थादादाय आहवनीयस्योपरिष्टात्समीपऽएव प्रस्तरं धारयन् गृहीतया समिधा आहवनीयं कल्पयति [1] समिदाधानेन क्लृप्तमिन्धनेध्मादेर्ज्वालनसमर्थं करोति · लोकेऽपि काष्ठादिना पूर्वमग्निमाहृत्य पश्चात्संधुक्षणं क्रियते एवमत्रापि करोति ।

उल्मुकेऽउदूहत्यनुयाजाश्चेत् ॥३०॥ यदि अनुयाजाः प्रकृते कर्मणि भवन्ति तदाहवनीयाद्वेऽउल्मुकेऽउदूहति [2] अपसार्य पृथक्स्थापयति भूमिसंलग्नावेव पुरस्तात्प्रेरयति । इह ह्यनुयाजा नित्यं भवन्त्येव चेष्ट्यब्दस्यातिथ्योपसद्गृहमेधीयपयस्यादिविकृतिविषयः । अनुयाजानामभावे उल्मुकोदूहनाभावः अतोऽनुयाजार्थमेवैतदुल्मुकोदूहनम् आहवनीयायातयामताकरणार्थं च ॥ ॥ सप्तमी कण्डिका ॥७॥

अथ पद्धतिः ॥

ततः पत्नीसंनहनम् · तत्राग्नीध्रो योक्त्रमादाय गार्हपत्यान्नैर्ऋत्यां दिशीशानाभिमुखीमूर्ध्वज्ञुमुपविष्टां पत्नीं परिधानवस्त्राद्बहिर्योक्त्रेण प्रदक्षिणं वेष्टयति अदित्यै रास्नासीति (१. ३०.) मन्त्रेण · ततो दक्षिणं पाशमुत्तरे शङ्कुस्थानीये प्रतिमुच्य सामर्थ्याद्द्विर्वेष्टयित्वा योक्त्रस्यान्तमूर्ध्वमुदूहति विष्णोर्वेष्योऽसीति (१. ३०.) मन्त्रेण · ग्रन्थिं न करोति । ततो वेदोपयह्णेणोर्जे त्वेत्याज्यस्थालीमुत्तरत (१. ३०.) उद्वास्य पत्न्या अग्रे निधाय पत्न्याज्यमवेक्षस्वेति वक्ति · सा पत्नी अदब्धेनेति (१. ३०.) मन्त्रेणाज्यमवेक्षते । अनेकासु पत्नीषु सर्वासां योक्त्रबन्धनम् पत्नीसंस्कारत्वात् · आज्यावेक्षणमपि सर्वासाम् अथ यत्पत्नीं नावकाशयेदन्तरियाद्ध यज्ञात्पत्नीमिति (१. ३. १. २०.) अनवेक्षणे निन्दार्थवाददर्शनात् · एकस्या एवेत्यपरे आज्यसंस्कारत्वात् । ततोऽग्नीत्पत्न्या अग्रत आज्यं गृहीत्वा वेदिमध्ये प्रोक्षणीभ्योऽपरं सादयत्युपविश्य · ततोऽध्वर्युर्वेदं गृहीत्वा प्रोक्षणीभ्यः पवित्रेऽआदाय सवितुस्त्वा प्रसवऽइत्याज्यमुत्पुनाति (१. ३१.) · ततः स्फ्यं गृहीत्वा आज्यलिप्ताभ्यामेव पवित्राभ्यां सवितुर्वः प्रसवऽइति मन्त्रेण प्रोक्षणीरुत्पुनाति · ततस्तेजोऽसि शुक्रमसीत्यनेन (१. ३१.)

1) See १. ३. ३. १२. 2) See १. ८. २. १.

मन्त्रेणाज्यमवेक्षतेऽध्वर्युर्यजमानो वा वेदोपग्रहेण । ततोऽध्वर्युः सव्येन जुहूं वेदं च गृहीत्वा दक्षिणेन स्रुवमादाय तेनाज्यस्थाल्याः सकाशात्तूष्णीमाज्यमादाय जुह्वां निनयति धाम नामासीति (१. ३१.) मन्त्रेण · जुह्वां चतुरः स्रुवान्गृह्णाति · तत्र एकवारं मन्त्रः त्रिस्तूष्णीम् अथवा त्रिर्मन्त्रः सकृत्तूष्णीम् । तत उपभृत्यष्टकृत्वो घृतं गृह्णाति · अत्रापि सकृद्धाम नामेति मन्त्रः सप्तकृत्वस्तूष्णीम् · अथवा त्रिर्मन्त्रः पञ्चकृत्वस्तूष्णीम् · अष्टकृत्वो गृह्णन्नपि जौहवादाज्यादल्पतरं यथा स्यात्तथा गृह्णीयात् । ततो ध्रुवायां चतुराज्यं गृह्णाति · अत्रापि धाम नामेति सकृन्मन्त्रेण त्रिस्तूष्णीम् · अथवा त्रिर्मन्त्रेण सकृत्तूष्णीमिति । ततो वेदिमध्यादाज्यस्थालीमादाय क्वचित्सुगुप्ते निदधाति । तत इध्मं विस्रंस्य ब्रह्मन्निध्मं प्रोक्षिष्यामीति ब्रह्माणं पृच्छति · ततो ब्रह्मा प्रोक्ष यज्ञमित्युक्त्वा प्रोक्षेत्यनुजानाति । ततोऽध्वर्युः प्रोक्षणीरादाय कृष्णोऽस्याखरेष्ठ इतीध्मं (२. १.) प्रोक्षणीभिः प्रोक्षति । ततो वेदिरसीति (२. १.) वेदिं प्रोक्षति । ततोऽग्नीत्समर्पितं बर्हिः प्रतिगृह्य प्रणीताहवनीयान्तरालेन प्रागनाहृतं चेत् इदानीं तेन मार्गेणाहृत्य वेद्यां प्राग्ग्रन्थि आसाद्य ब्रह्मन्बर्हिः प्रोक्षिष्यामीति ब्रह्माणं पृष्ट्वा प्रोक्ष यज्ञमिति तेन पूर्ववदनुज्ञातो बर्हिरसीति (२. १.) बर्हिः प्रोक्ष्य प्रोक्षणीशेषं समस्तं बर्हिर्मूलेषु निनयेत् ।
ततः पवित्रे प्रणीतासु निधाय बर्हिर्विस्रंस्य विष्णो स्तुप इति (२. २.) बर्हिःपूलकस्य पूर्वस्मात्प्रदेशात्प्रस्तरं गृह्णाति · ततस्तं प्रस्तरं तूष्णीं ब्रह्मणि प्रदाय बर्हिःसंनहनं विस्रंस्य दक्षिणस्यां वेदिश्रोणौ निधायान्यैर्बर्हिस्तृणैराछाद्य वेद्यां पतितं तृणपर्णकाष्ठादिकं हस्तेनैवादायोत्करे निरस्येत् । ततो वेदिं त्रिवृत्स्तृणाति · उपपत्त्यावृद्धा अयुग्धातु पञ्चवृत्सप्तवृद्धा । तच्चैवम् · स्फ्यं निधाय दर्भपूलकात्तृतीयं भागमादायोर्णम्रदसमिति (२. २.) दक्षिणादंसादारभ्योत्तरांसं यावत्स्तृणाति · ततो द्वितीयं भागमादाय पूर्वस्तृतस्य बर्हिषो मूलान्याछादयंस्ततः पश्चात्स्तृणाति · ततस्तृतीयं भागमादाय तथैव वेदेः पश्चिमान्ते स्तृणाति · एतत्त्रिवृत्स्तरणम् । पञ्चवृत्पक्षे एवमेव तृतीयस्तृतस्य पश्चाच्चतुर्थम् ततः पश्चात्पञ्चममिति · एवं सप्तवृदादिपक्षेऽपि ज्ञेयम् · सर्वपक्षेष्वन्तिमस्तरणे स्फ्योपग्रहः कार्यः । बहुलं स्तृणाति · यथा वेदिभूमिर्न दृश्यते तथा बर्हिषाछादयतीत्यर्थः । एवं पश्चादपवर्गं

स्तरणमुक्तम्  अथ प्रागपवर्गमुच्यते · अथवा पूर्वं वेदेः पश्चात्प्रदेशे तृतीयं भागं स्तीर्त्वा तदग्राणि पश्चादिनोत्पाद्य तदग्राणामधस्ताद्द्वितीयं भागं स्तृणाति  पुनरपि तथैव · एवं प्रागपवर्गं वा स्तरणम् ।  तत इध्मात्समिधमादाय ब्रह्मणो हस्तात्प्रस्तरं चादायाहवनीयस्योपरि समीपऽएव प्रस्तरं धारयन्त्समिधाहवनीयं कल्पयति  हविर्दहनसमर्थं करोति · तत्र मतद्वयम् केचित्काष्ठप्रक्षेपणेन केचिदिध्मकाष्ठेनाहृत्य । तत आहवनीयादुल्मुकद्वयमुद्धृत्य प्राञ्चं प्रेरयित्वा खरप्रान्ते निदधातीत्यर्थः  · अनुयाजार्थं प्राचीऽउल्मुकेऽउद्धरतीति वाजसनेयकमित्यापस्तम्बः ॥  ॥७॥

इति द्वितीयस्य सप्तमी कण्डिका ॥

परिधीन्परिदधात्यार्द्रानेकवृक्षीयान्बाहुमात्रान्पालाशवैकङ्कतकार्ष्मर्यबैल्वान्पूर्वालाभे-पूर्वालाभऽउत्तरान्खादिरौदुम्बरान्वा मध्यमदक्षिणोत्तरान्गन्धर्व इति (२.३.) प्रतिमन्त्रम् ॥१॥ [१]  अशुष्कान् · एकजातीयवृक्षसम्बन्धिनः  त्रीनपि पालाशान् अथवा कार्ष्मर्यान् श्रीपर्णीवृक्षावयवान्  न तु मुख्यद्रव्यालाभेनैको द्वौ वा पालाशौ एको द्वौ वा वैकङ्कतौ · यजमानबाहुप्रमाणान् बाहुः प्रसारिताङ्गुलिर्हस्त आ स्कन्धात् · पूर्वपूर्वोक्तवृक्षजातीयानामलाभे अप्राप्तौ उत्तरोत्तरान्परिदधाति  कार्ष्मर्यालाभे त्रयाणामपि बैल्वखादिरौदुम्बराणां तुल्यविकल्पता पालाशादीनां पूर्वालाभे-पूर्वालाभे उत्तरोत्तरोपादाने प्रायश्चित्ताभावः पूतीकावत्प्रतिनिधिनियमाभावात् प्रतिनिधित्वे तु प्रायश्चित्तं भवति । परितः समन्ततः स्थाप्यन्तऽइति परिधयः  ततश्च यौगिकोऽयं शब्दो न संस्कारनिमित्तो जातिनिमित्तो वा · तल्लक्षणमाह कात्यायनः  (कर्मप्रदीप॰ २. ५. १३.) बाहुमात्राः परिधय ऋजवः सत्वचोऽव्रणाः  त्रयो भवन्त्यशीर्णाग्रा एकेषां तु चतुर्दिशमिति · परितो निधानाच्चेत्परिधय इति नाम तर्हि यदि त्रयाणां वचनं नास्ति तत्र चत्वारोऽपि भव[न्ती]ति कर्कः  नेति सम्प्रदायः ।

---

[१]) पितृयज्ञे मित्रावरुणौ त्वोत्तरत इत्यत्र युक्तावूपो विपरिणाम इति कर्कः · तेन मित्रावरुणौ त्वा पुरस्तात्परिधत्तामित्यूहः Mahâd.

प्रथमं परिधिं समिधोपस्पृश्य वीतिहोत्रमित्यादधाति (२.४.) ॥२॥ इध्मा-द्गृहीता या पूर्वं समित् तया प्र॰ प॰ उपस्पृश्य उपविष्ट एव स्पृष्ट्वा तत उत्थाय तां समिधमाहवनीये प्रक्षिपति · उपस्पर्शनं च परिधिः संस्कारः परिधिमिति द्वितीयाश्रवणात् ।

अनुपस्पृश्य द्वितीयां समिदसीति (२.५.) ॥३॥ परिधिमनुपस्पृश्यैव इध्मा-देवादाय द्वितीयां समिधम् ।

सूर्यस्त्वेति (२.५.) जपत्याहवनीयमीक्षमाणस्तद्वचनत्वात्[1] ॥४॥ अध्वर्यु-रुपविश्य आहवनीयं विलोकयन्संहितास्वरेण जपति । आहवनीयमीक्षमाण इति सूर्यस्त्वेति मन्त्रस्य आहवनीयवाचित्वात्[2] हे अग्ने सूर्यस्त्वां पुरस्तात्प्राच्यां दिशि पातु · पितृयज्ञे दक्षिणत इत्यूहः सम्प्रदायकारमतेऽनूहः पुरस्ताच्छब्दो ऽग्रवचनो न दिग्वचन इति । परिधिपरिधानाद्याहवनीयेक्षणान्तमिदमेकं कर्म · एकं हि कार्यम् अग्निसंस्कारः परिधयश्चाग्निरक्षणार्थाः · सूर्येक्षणजपोऽपि तदर्थ एव सूर्यमेव पुरस्ताद्गोप्तारं करोतीति (१.३.४.८.) प्रयोजनम् ।

आवृत्य वेदिं बर्हिषस्तृणे तिरश्ची निदधाति सवितुरिति (२.५.) ॥५॥ अध्वर्युर्वेदिं प्रत्यावृत्य आहवनीयसमीपाद्वेदिसमीपं प्रत्यागत्य स्तृतस्यैव बर्हिषो द्वे तृणेऽआदाय मध्ये स्तृतस्य बर्हिष उपरि आहवनीयस्य पश्चात्प्रदेशे तिरश्ची उदगग्रे निदधाति स्थापयति । आपस्तम्बः समावनन्तर्गर्भौ दर्भौ विधृती कुरुत ऽइति · तथा अन्तर्वेद्युदगग्रे निधायेति च · तथा अरत्निमात्रे विधृती करो-तीति श्रूयते · काठके च पुरस्तात्प्रस्तरादनन्तर्गर्भौ विधृतीऽआदाय वेद्यामुदञ्चौ निधायेति · काण्वीयायां तु तस्या द्वे तृणेऽआदायेति पठ्यते तेन बर्हिषस्तृणे इति सूत्रितम् । तिरश्चीऽइत्युदगग्रे · अत एव वेदिस्तरणं प्रागग्रैर्बर्हिर्भिः कर्तव्यम् ।

अन्ये वायुक्तत्वात् ॥६॥ अन्येऽएव वा तृणेऽआदाय तिरश्ची निधेये न स्तृतस्य बर्हिषस्तृणे · कुतः अयुक्तत्वात् अन्ययोरविनियुक्तत्वात् अन्ये हि

---

1) ॰स्त्वेति च जपत्या॰ Ss. 2) तद्वचनतादाहवनीयवाचित्वात्सूर्यमन्त्रस्य Ss. सूर्यस्त्वेति वाशब्दस्याग्निपरत्वादवभृथे (॰शब्दोग्निप॰ Cod.) सूर्यो वः पुरस्तादिति · मन्त्रस्तमग्निं वक्तीति तद्वचनः Mahâd.

अविनियुक्ते · बर्हिषस्तृणे च वेदिस्तरणे विनियुक्ते न च विनियुक्तयोः वचनं विना अन्यत्र विनियोगो युक्तः · अत्र तु वचनमप्यस्ति काण्वीयायाम् अथ स्तीर्णां वेदिमुपावर्तते तस्या द्वे तृणेऽआदायेति · तर्हि अत्रापि भवतु वेदितृणयोरेवोपादानम् · अधिकरणं तु कृत्वा-चिन्ता वचने सति न्यायस्य दुर्बलत्वात् · तस्मादत्र प्रकृते बर्हिषस्तृणेऽएवादाय वेद्यां निधेये · तथा च हरिस्वामिनः अथ स्तीर्णां वेदिमुपावर्ततऽइत्युपावर्तनस्य (१. ३. ४. १०.) दृष्टार्थत्वात् काण्वानां च तस्या द्वे तृणेऽआदयिति वचनात्स्तीर्णाया एव वेदेर्बर्हिषस्तृणे ग्राह्येऽइति । उक्तन्यायमन्यत्रादिशति ·

अन्यत्रापि तृणार्थे ॥ ७ ॥ अतोऽन्यत्रापि पवित्रपशूपकरणाग्रक्षोपस्पर्शनअपणाग्निमन्थनादौ तृणार्थे तृणकार्ये प्रस्तुताद्बर्हिषोऽन्यान्येव तृणानि ग्राह्याणि अयुक्तत्वादेव · यतः श्रुतिरेव विनियुक्तविनियोगे यत्नं करोति तस्या द्वे तृणेऽआदायेति अथ स्तीर्णायै वेदेरिति अतो वचनाभावे अन्यदेव ग्राह्यम् । अत्र प्रसङ्गादिदं चिन्त्यते यूपाञ्जने च सर्पिः किं प्रकृतं [1] स्थाल्यां गृहीताज्यम् उताप्रकृतं लौकिकमिति · किं तावत्प्राप्तम् आज्यस्थाल्याज्यम् प्रकृतौ यावदाज्यकार्यं [2] तत्सर्वं तेन कृतम् अतः पशावपि सर्वमाज्यकार्यं तेनैव कर्तव्यमिति प्राप्तऽआह ·

यूपाञ्जने च सर्पिः ॥ ८ ॥ घृतमन्यदेव ग्राह्यम् न तु प्रकृतं स्थाल्याज्यम् यद्यपि तत्प्रकृतावसंयुक्तमुत्पन्नम् तथापि यानि प्रकृतावाज्यकार्याणि तदर्थमेव अतः प्रकृतिवत्पशावपि तेन तदर्थेनैव भवितव्यम् न च प्रकृतौ यूपाञ्जनमस्ति तस्मान्नात्र [3] तदाज्यस्थाल्याज्यस्य प्रयोजकम् अतो लौकिकमेवोपादाय यूपाञ्जनं कर्तव्यम् ।

पुरोडाशपयस्याधानासु चेच्छन् ॥ ९ ॥ [4] ज्योतिष्टोमे पु॰नासु इच्छन्प्रकृतानि गृह्णीयात् इच्छन्नप्रकृतानि लौकिकानीति विकल्पः । पितृभूत्याचार्यास्त्वेवं व्याचक्षते · चशब्दस्तुशब्दस्यार्थे पु॰नासु तु योऽप्रकृतान्युपादद्यात् स इच्छन् स्वे-

१) प्राकृतं २ २) ॰दाज्यं कार्यं २ ३) तस्मान्न २ ४) इच्छया प्राकरणिकानि (? प्राकरिकाणि Cod.) · सोमे पुरोडाशमात्रामैन्द्रवायवे प्रास्यति पयस्यां मैत्रावरुणे आश्विने धाना इत्यत्र (९. ११.२६—२८.) Mahád.

इयैवोपादद्यात् न तु शास्त्रतः · अशास्त्रार्थ एवायम् यदप्रकृतस्योपादानम् [१]) कुतः पुरोडाशादिषु द्वितीयादर्शनात्पुरोडाशादीनामेवायं प्रतिपत्तिरूपः संस्कारो न ग्रहाणाम् · प्रतिपत्तिश्च विद्यमानानां क्वचिदुपयुक्तानां च भवति न प्रतिपत्त्यर्थमुत्पाद्यन्ते · अपि चावयवश्रवणान्येतानि विद्यमानानां चावयवा गृह्यन्ते नावयवार्थमुत्पाद्यन्ते · तस्माद्विदेवत्यपात्रेषु प्रतिपादितशेषं यजमानेन भक्षितव्यमिति । जैमिनेरप्ययमेव सिद्धान्तः (३. ८. ३४.) अपनयस्त्वेकदेशस्य विद्यमानसंयोगादिति · अत इदं व्याख्यानं युक्तम् ।

तयोः प्रस्तरऽ स्तृणात्यूर्णाम्रदसमिति (२. ५) ॥ १० ॥ तयोः उदगग्रस्तीर्णविधृत्योरुपरि प्रागग्रं प्रस्तरं स्तृणाति · अत्र प्रस्तरस्याङ्गप्रधानार्थजुहूधारणार्थत्वम् अतस्तत्स्तरणम् · मन्त्रे पितृयज्ञे स्वासस्थं देवपितृभ्य इत्यूहः ।

अभिनिदधात्या वा वसव इति (२. ५) ॥ ११ ॥ अध्वर्युर्हाभ्यामपि हस्ताभ्यां प्रस्तरमभिनिदधाति आक्रामति प्रस्तराभिमुखौ पाणी निदधाति · नात्रोदकस्पर्शनम् मन्त्रस्य प्रस्तरो देवता यतः ।

सव्याशून्ये जुहूं प्रतिगृह्य निदधाति घृताचीति (२. ६.) ॥ १२ ॥ [२]) अध्वर्युर्जुहूमग्नीधा समर्पितां प्रतिगृह्य आदाय सव्येन हस्तेनाविमुक्ते प्रस्तरे तस्योपरि प्रागग्रामासादयति ।

एवमितरेऽउत्तराभ्यां प्रतिमन्त्रं बर्हिष्युपभृतं ध्रुवां चावकृष्टेऽनुपूर्वम् [३]) ॥ १३ ॥ इतरे जुह्वा अन्ये द्वे स्रुचौ बर्हिष्यासादयति · एवमिति प्रतिगृह्य · उपभृतं ध्रुवां च अनुक्रमेण अवकृष्टे अपकृष्टे जुह्वपेक्षया उपभृतमवकृष्टाम् उपभृदपेक्षया च ध्रुवामवकृष्टाम् [४]) · उत्तराभ्यां मन्त्राभ्यां प्रतिमन्त्रमेकैकामासादयति ।

पुरोडाशावभिघार्योद्वास्योपस्तीर्णे निधायानक्ति यस्ते प्राणः पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे आत्मन्वान्त्सोम घृतवान्हि भूत्वाग्निं गच्छ स्वर्यजमानाय विन्देति ॥ १४ ॥ [५]) ध्रुवासादनानन्तरं गार्हपत्यसमीपे गत्वा पुरोडा-

---

[१]) यदप्राक् ० २ [२]) गृहमेधीयायामनाज्यस्रुगासादने घृताच्यसीति पदद्वयं निवर्तते Mahâd.
[३]) We expect ऽअनुपूर्वम्, as the *e* of अवकृष्टे is *pragrihya*, See Pâṇini १. १. ११.
[४]) जुह्वा नीचां बर्हिष्युपभृतम् उपभृतो नीचां ध्रुवाम् Mahâd. [५]) Kâṇva, see Vâj. S. pag. ३५.

शावभिघार्य उत्तरत उद्वास्य पूर्वतरमुपस्तीर्णे पात्रे निधाय अनक्ति · उपस्तीर्ण इति पूर्वतरमुपस्तरणम् यत उद्वास्योपस्तरणं कर्तुमशक्यम् पुरोडाशेन रुद्धहस्तत्वात् । एतदभिघारणं हविर्मात्रस्य भवति · पुरोडाशग्रहणमुपलक्षणार्थम् · सूर्येत्याग्नेयं पुरोडाशमभिघारयति तूष्णीमुत्तरम् । एकैव पुरोडाशपात्री तस्यां दक्षिणोत्तरप्रदेशे निम्नस्थानद्वयं कृत्वा तत्रोपस्तीर्य पुरोडाशौ स्थापनीयौ । अयं क्रमः · प्रथमं वेदेन पुरोडाशविभस्मीकरणम् ततः पात्र्याः[1] स्थापनम् पुरोडाशयोरभिघारः पात्र्याः स्थानद्वयऽउपस्तारः अथवा प्रथमं पात्र्यामुपस्तारः ततः पुरोडाशयोरभिघारः उदगुद्वासनम् वेदेन पुनर्विरजस्करणम् स्थापनं पात्र्या[2] उपरि प्राणदानमिति । अनेकयजमानके यजमानाभ्यां यजमानेभ्यो विन्देति · महापितृयज्ञे च पशुषु प्रविष्टः पितॄणां विष्ठामनु इत्यूहः ।

यथादेवतमन्यत् ॥ १५ ॥ [3] अञ्जनमन्त्रे अग्निं गच्छेत्यस्य स्थाने यथादेवतम् अग्नीषोमीये पुरोडाशे अग्नीषोमौ गच्छ दोहयोरिन्द्रं गच्छ ।

प्रत्यनक्ति कपालानि यानि घर्मे कपालान्युपचिन्वन्ति वेधसः पूष्णस्तान्यपि व्रतऽइन्द्रवायू विमुञ्चतामिति ॥ १६ ॥ स्रुवेण कपालानि अनक्ति प्रत्येकमुपधानक्रमेण · प्रतिकपालं च मन्त्रप्रयोगः · बहुवचनं तु पूजार्थम् ।

तूष्णीं वा ॥ १७ ॥ [4] शाखान्तरात् मन्त्रं विनैव कपालान्यनक्ति प्रत्येकमुपधानक्रमेण ।

संख्ययोद्वासयति ॥ १८ ॥ [5] संख्यया संख्यावाचिना पूरणप्रत्ययान्तेन शब्देन करणमन्त्रभूतेन प्रथमं द्वितीयमित्यनेन गणयन् उपधानक्रमेणैव कपालानि उद्वासयति · यावत्कपालं प्रयोगः · विकृतौ कर्परस्यापि कपालस्थानीयस्याञ्जनोद्वासने भवतः ।

प्रियेण धाम्नेति (२. ६.) हवींऽषि वेद्यां कृत्वा ध्रुवा असदन्निति (२. ६.) सर्वाण्यालभते ॥ १९ ॥ आज्यस्थालीपुरोडाशादीनि हवींषि उदक्संस्थानि ध्रुवा-

---

1) ? पात्र्योः २ 2) ? पात्र्योः २ 3) हविरनक्ति Mahâd. 4) तूष्णीं वा कपालान्यनक्ति सहैवेति श्रीअनन्तः Mahâd. 5) संख्याशब्देन करणभूतेन प्रथममुद्वासयामि द्वितीयमुद्वासयामीत्यादिप्रयोगेण Mahâd.

या उत्तरतो वेद्यामासाद्य उपयोगक्रमेण आलभते · तेन प्रथममाज्यस्थाल्याज्यस्य ततो जुहूपभृद्ध्रुवास्थस्याज्यस्य ततः पुरोडाशादेरिति । अनेकयजमानके पाहि यज्ञपती यज्ञपतीन् । पशौ ध्रुवालम्भनादुत्तरं पृषदाज्यालम्भनम् ।

पाहि मामित्यात्मानम् (२.६) ॥२०॥ हृदयदेशं हस्तेन स्पृशति उपनिषत्सु हि अत्र हृदयऽआत्मानं पश्येदिति कथ्यते · ततोऽप उपस्पृशति च । स चायमालम्भ आत्मसंस्कारः करिष्यमाणकर्मार्थमाराडुपकारः · ततश्च पशौ सुत्यायां च पुनः पुनर्हविरासादने कृते न भवति प्रथमत एव सकृत्कृतेनात्मनः कर्मसमाप्तिपर्यन्तं संस्कृतत्वादिति ।

अत्र वा व्रतोपायनमत्र वा व्रतोपायनम् ॥२१॥[1] शाखान्तरात् ॥ ॥ अष्टमी कण्डिका ॥८॥

इति कात्यायनसूत्रव्याख्याने महायाज्ञिकदेवकृते द्वितीयोऽध्यायः ॥ ॥

अथ पद्धतिः ॥

ततो गन्धर्वस्त्वा विश्वावसुरिति (२.३.) मन्त्रेणाहवनीयस्य पश्चादुदगग्रं स्थूलं मध्यमं परिधिं परिदधाति · तत इन्द्रस्य बाहुरसीति (२.३.) दक्षिणतः प्रागग्रमणिष्ठं द्वितीयं परिधिं निदधाति · ततो मित्रावरुणौ त्वेति (२.३.) उत्तरतस्तृतीयमणिष्ठतरं प्रागग्रं परिधिं परिदधाति । ततः स इध्माद्गृहीतया समिधा तूष्णीं प्रथमं परिधिं स्पृष्ट्वोत्थाय तां समिधं वीतिहोत्रमिति (२.४.) आहवनीयेऽभ्यादधाति · तत इध्मादेव द्वितीयां समिधमादाय परिधिमस्पृष्ट्वैव समिदसीति (२.५.) अनेन मन्त्रेणादधाति । तत उपविश्याहवनीयमीक्षमाणः सूर्यस्त्वेति (२.५.) जपति स्वरेण । ततः प्रादक्षिण्येन वेदिं प्रत्यावृत्यागत्य स्तीर्णायां एव वेदेर्द्वे तृणे साग्रेऽरत्निमात्रेऽआदाय वेदिमध्यऽउत्तराग्रे निदधाति सवितुर्बाहू स्थ इति (२.५.) · तत ऊर्णम्रदसमिति (२.५.) तयोस्तृणयोरुपरि मूलभागे प्रागग्रं प्रस्तरं स्तृणाति अभिहततराणि प्रस्तरमूलानि बर्हिर्मूलेभ्यः करोतीत्यापस्तम्बः · तत आ त्वा वसव इति (२.५.) उभाभ्यां हस्ताभ्यां प्रस्तरमभिनिदधाति अधः पीडयतीत्यर्थः । ततोऽग्नीधा समर्पितां जुहूं दक्षिणेन पाणिना प्रतिगृह्य सव्यहस्तेनाविमुक्ते प्रस्तरे

---

1) अकृतं चेत् अत्रैव कर्तव्यम् तुल्यशास्त्रत्वात् Mahâd.

प्रागग्रां सादयति घृताच्यसि जुहूरिति (२. ६.) समं मूलैर्जुह्वा दण्डं करोतीति सूत्रम् · ततः सव्येन वेदं गृहीत्वोपभृतं तथैव प्रतिगृह्य घृताच्यस्युपभृदिति (२.६.) बर्हिष्येव जुह्वा उत्तरत आसादयति जुहूतोऽवकृष्टां पश्चाद्वर्तमानामसंस्पृष्टाम् · ततो घृताच्यसि ध्रुवेति (२. ६.) मन्त्रेण ध्रुवामुपभृत उत्तरतो विधृत्यग्रयोरुपर्यासादयति उपभृद्पेक्षया अवकृष्टामसंस्पृष्टां च · अनूचीरसंस्पृष्टाः स्रुचः सादयतीति सूत्रम् · तथा उत्तरेण जुहूमुपभृतमासादयत्यधस्ताद्विधृत्योः प्रतिकृष्टतरामिव उत्तरेणोपभृतं ध्रुवां प्रतिकृष्टतरामिवोपरिष्टाद्विधृत्योरिति च · तथा

दक्षिणेन जुहूꣳ स्रुवꣳ सादयत्युत्तरेण वा ध्रुवामिति। अथ दक्षिणेनाज्यस्थालीं स्रुवं चादाय सव्ये पुरोडाशपात्रीं वेदं चादाय प्रदक्षिणमावृत्य प्रत्यगागत्य गार्हपत्यस्य पश्चादुपविश्य गार्हपत्यस्योत्तरत आज्यस्थालीं निधाय तस्या उत्तरतः पुरोडाशपात्रीमुदक्सं[स्थं] स्थापयित्वा वेदेन पुरोडाशाभ्यां भस्म पराकृत्य स्थाल्याः स्रुवेण पुरोडाशौ तूष्णीमभिघार्यैकस्यामेव पात्र्यां दक्षिणत उत्तरतश्च द्वयोः स्थानयोरुपस्तृणाति पात्र्या उपर्युभयत्रैकैकस्रुवं निनयतीत्यर्थः · तित्तिरिसूत्रे अथादत्ते दक्षिणेनाज्यस्थालीं स्रुवं च सव्येन पात्रीं वेदमित्येतत्समादाय प्रदक्षिणमावृत्य प्रत्यङ्ङागत्य जघनेन गार्हपत्यमुपविश्य पात्र्यां द्विधोपस्तृणीतऽइति · अन्येष्वपि सूत्रेषु पात्र्यामुपस्तृणातीत्येकवचनमेवास्ति। ततः पुरोडाशावपर्यावर्तयन्नुद्वास्योपस्तीर्णायाः पात्र्या उपरि क्रमेण निदधाति · तत्र प्रथमं पुरोडाशमपर्यावर्तयन्हस्तेन स्पर्शमकुर्वन्काष्ठाद्युपायेनादायोत्तरं पुरोडाशं पूर्वेणाज्यस्थालीमपरेण नीत्वा पात्र्यां स्थापयेत् द्वितीयं पुरोडाशमाज्यस्थालीं प्रथमं पुरोडाशं चापरेण नीत्वा पात्र्यां स्थापयेत् · मानवे वेदेन पुरोडाशयोर्भस्मापोह्यति वेदोपयाम आज्यस्थाल्याः स्रुवेणाभिघारयति पात्र्यामुपस्तृणात्युदगुद्वासयति वेदेनापभस्मानं करोत्यनभिघ्नन्पाणिना वेदशिरसा च तत उपस्तीर्णे सादयति यस्तऽइत्यनक्ति अपर्यावर्तयन्नधस्ताच्चोपानक्तीति · तित्तिरिसूत्रे चायमपि क्रमोऽस्ति[1] पुरोडाशविभस्मीकरणम् पात्रीस्थापनम् तयोरुपस्तारः कपालस्थयोरेव पुरोडाशयोरभिघारः उद्वासनमिति उभयोः पुरोडाशयोः। ततः कपालानि गण-

---

१) ? तैत्ति॰ ॰मधिक्रमोस्ति १

यित्वा वेदोपग्रहः स्रुवेणाज्यस्थाल्या घृतमादाय पुरोडाशावनक्ति यस्ते प्राण इति मन्त्रेण अग्निं गच्छेति प्रथमम् अग्नीषोमौ गच्छेति द्वितीयम् यथास्वं मन्त्रे अयं विशेषः · ततः स्रुवेण सर्वाणि कपालान्याज्येनाभ्यनक्ति उपधानक्रमेण तूष्णीम् यानि घर्मे कपालानीति मन्त्रेण वा प्रतिकपालं मन्त्रावृत्तिः । ततः स्फ्यमादाय प्रथममुद्वासयामीति प्रथमं कपालमुत्तरत उद्वासयति · एवं सर्वाणि द्वितीयमुद्वासयामि तृतीयम् चतुर्थम् पञ्चमम् षष्ठम् सप्तमम् अष्टममिति प्रथमस्य · द्वितीयस्याष्टावेवमेवोद्वास्य नवमम् दशमम् एकादशम् उद्वासयामीति सर्वत्र शेषः · अनेन प्रकारेण पूरणप्रत्ययान्तेन संख्याशब्देन करणमन्त्रभूतेन कपालान्युद्वासयति । ततः सर्वाणि हवींषि वेदिसमीपे नीत्वा वेदोपग्रहेणाज्यस्थालीं ध्रुवाया उत्तरतो बर्हिष्यासाद्य स्फ्योपग्रहेण तस्या उत्तरतः पुरोडाशावुदक्संस्थावासादयेत् · प्रियेण धाम्नेति (२.६) अयमेव सर्वेषामासादनमन्त्रः । ततो वेदं गृहीत्वा ध्रुवा असदन्नृतस्येति (२.६) आज्यस्थाल्याज्यमालभते ततो जौहवम् तत औपभृतम् ततो ध्रौवम् · ततो वेदं ध्रुवायाः पुरस्तान्निधाय स्फ्योपग्रहेण प्रत्येकं पुरोडाशावालभते · ध्रुवा असदन्नित्ययमेव सर्वेषामालम्भे मन्त्रः · ततोऽध्वर्युः पाहि मामिति (२.६) स्वमात्मानं हृदयऽआलभते तत उदकोपस्पर्शः अस्मिन्काले वा यजमानस्य व्रतग्रहणम् ॥ ॥ ८ ॥

इति द्वितीयस्याष्टमी कण्डिका ॥ ॥

इति श्रोत्रियाग्निचित्सम्राट्स्थपतित्रिंशत्क्रतुकृन्महायाज्ञिकश्रीप्रजापतिसुतयाज्ञिकदेवकृतायां कात्यायनसूत्रपद्धतौ द्वितीयोऽध्यायः समाप्तः ॥ ॥

इति कातीये श्रौतसूत्रे द्वितीयोऽध्यायः ॥ २ ॥ ॥



होतृषदनं कृत्वापरेण वेदिं श्रोणिं वोत्तरेणेध्मात्समिधमादायाग्नये समिध्यमानायानुब्रूहीत्याह ॥ १ ॥ अध्वर्युर्वेदिमपरेण वेदेः पश्चाद्गार्हपत्याहवनीययोरन्तराले होतुरुपवेशनार्थं वारणादिवृक्षजं शुष्ककुशैरास्तीर्णमासनं स्थापयित्वा अथवा वेदिश्रोणिमुत्तरेण स्थापयित्वा तत एहि होतरित्येवं होतारमामन्त्र्य होतरि तत्रागते सति इध्मादेकां समिधं हस्ते गृहीत्वाग्नये समिध्यमानायानुब्रूहीत्येवं होतारं प्रति ब्रवीति · होतुरामन्त्रणं शाङ्खायनसूत्रात् (१.४.४.)। वरुणप्रघासेषु अग्निभ्यां समिध्यमानाभ्याम् · अनेकयजमानके उदयनीयाबहुत्वपक्षे ऽग्निभ्यः समिध्यमानेभ्योऽनुब्रूहीत्यूहः ।

होतरिति चैके ॥ २ ॥ शाखिनोऽग्नये समिध्यमानाय होतरनुब्रूहीत्येवंविधं प्रैषं कुर्वन्ति ।

प्रथमस्थानेन प्राक्स्विष्टकृतः ॥ ३ ॥ [1] सर्वे मन्त्राः स्विष्टकृतः प्राक् स्विष्टकृत्प्रैषा अपि उपांश्वपेक्षया किंचिदुच्चैर्भवता स्वरेण प्रयोक्तव्याः ।

मध्यमेनेडायाः ॥ ४ ॥ [2] स्विष्टकृत आरभ्य आ इडायाः मध्यमेन स्वरेण सर्वं मन्त्रजातं प्रयोक्तव्यम् ।

शेषमुत्तमेन ॥ ५ ॥ [3] इडात आरभ्य कर्मापवर्गान्तं सर्वे मन्त्रा उत्तमेन । अत उपांशु प्रयोगः श्रुतेरित्यस्य (१.३.१०.) दर्शपूर्णमासयोरप्रवृत्तिः स्वरान्तरविधानात् ।

---

१) प्रातःसवनेन (!) मन्द्रस्वरेण प्रधानान्तं सम्प्रैषा भवन्ति Mahâd. See १.६.१६. ff.
२) मध्यमेन स्वरेण माध्यन्दिनेन सवनेन (!) स्विष्टकृत्प्रभृतीडान्तम् · न सम्प्रैषा इत्युच्चैः प्राप्ते (१.३.११) स्थानानि नियम्यन्ते Mahâd. ३) अनुयाजप्रभृति शेषमुत्तमेन तृतीयसवनेन (!) Mahâd.

संतन्वन्निव मेऽनुब्रूहीत्याह यजमानः ॥ ६ ॥ यजमानोऽनेन मन्त्रेण संतन्वन्निवेत्यादिना होतारं सम्बोधयति । यजमाने प्रोषितेऽध्वर्युः । अनेकयजमानके एक एव· संतन्वन्निव नावनुब्रूहि नोऽनुब्रूहीत्यूहः ।

अङ्गुष्ठाभ्यां चावबाधते पाद्याभ्यां वेदमहममुमवबाधऽइति द्वेष्यम् ॥ ७ ॥ चकाराद्यजमान एव· इदमहमिति द्वेषार्हं वैरिणमवबाधते अङ्गुष्ठाभ्यां भूमिमाक्रामति भूमौ पीडयतीत्यर्थः द्वेष्यस्य संनिधावभावात् । वाशब्दोऽवधारणे पाद्याभ्यामेव न हस्ताङ्गुष्ठाभ्याम् काण्वानाम् पाद्याभ्यामङ्गुष्ठाभ्यामिति विशेषश्रवणात् सामान्यस्य विशेषपरताया न्याय्यत्वात् [१]। अवबाधनं च प्र वो वाजा इत्याद्यासु (१.४.१.७.) सामिधेनीषृक्षु पठ्यमानासु कर्तव्यम् । प्रोषिते यजमानेऽध्वर्युः ।

अभावे द्विषन्तं भ्रातृव्यमिति वा ॥ ८ ॥ अमुमित्यस्य स्थाने द्वेष्यस्य नाम प्रयोज्यम् · तदभावे द्विषन्तमिति भ्रातृव्यमिति वा शाखान्तराद्विकल्पः ।

यावत्सामिधेनि वेदेदमहं तावतिथेन वज्रेणेति ॥ ९ ॥ इदमहममुमवबाधऽइति मन्त्रे अयमधिको विशेषः · इदमहमित्यस्यानन्तरम् यावत्संख्याः सामिधेन्योऽस्मिन्कर्मणि तद्यावत्सामिधेनि प्रस्तुतं कर्म यावत्संख्यसामिधेनीकं जानीयात् तावतिथेन वज्रेण द्विषन्तमवबाधऽइत्येवंविधमन्त्रप्रयोगेणावबाधते · यत्पञ्चदशसामिधेनीकं कर्म सप्तदशसामिधेनीकं वा तत्रेदमहं पञ्चदशेन वज्रेणेति सप्तदशेनेति वा ब्रूयात् · पित्र्यायाम् इदमहं तृतीयेन उपसत्सु नवमेन इष्टकापशौ चतुर्विंशेन प्राजापत्यपशुपक्षे एकविंशेन ।

प्रतिप्रणवमाधानम् ॥ १० ॥ सामिधेन्यनुवचनं कुर्वन्होता पञ्चदशानामपि सामिधेनीनामन्तेषु प्रत्यृचं प्रणवं पठति · तत्राध्वर्युः प्रतिप्रणवम् प्रणवे-प्रणवे एकैकस्येध्मस्याहवनीये आधानं प्रक्षेपं करोति । स चायं कालार्थः संयोगो नाङ्गाङ्गिभावः उभयोरप्यग्न्यर्थत्वात् इध्मो ह्यग्नीन्धनार्थः सामिधेन्योऽपि पठ्यमाना अग्न्यनुवादिन्यः · प्रयोजनम् सामिधेन्यामनुक्तायामिध्मकाष्ठे प्रक्षिप्ते सामिधेनी अनूच्यतऽएव । सामिधेन्यभावेऽपि पयस्यायामिध्मकाष्ठानां प्रक्षेपो भवति

---

[१]) सामान्यस्य विशेषपरतात्रैवोचितेति कर्कः · पाद्याभ्यामिति काण्वीयानां नियमः पाद्याभ्यामङ्गुष्ठाभ्यामिति श्रुतेः **Mahâd.**

अग्नीन्धनार्थत्वात् उपवाजनसंमार्गादिवदग्निसंस्कारकत्वात् । सौत्रामण्यां च प्रतिप्रस्थातुरपि दक्षिणाग्नौ ।

समिद्ध इति प्रागतः सर्वमिध्मम् एकवर्जमनुयाजाश्चेत् ॥११॥ समिद्धो अग्न आहुतेत्यतः (१.४.१.३८.) प्रतीकात्प्राक् यः प्रणवस्तस्मिन्प्रणवे[1] एकवर्जम् एकां समिधं[2] वर्जयित्वा अवशिष्टं सर्वमिध्मं प्रक्षिपेत् यदि अनुयाजा भवन्ति । अनुयाजाश्चेदिति तद्विकृतिविषयम् आतिथ्यादावनुयाजाभावे समित्परिशेषणं न भवति ।

अनुवचनान्ते वेदेनाहवनीयं त्रिरुपवाज्य स्रुवेण पूर्वमाघारमाघार्याहाग्निमग्नीत्संमृड्ढीति ॥१२॥ त्रिरेव प्रथमां त्रिरुत्तमामनवानन्ननुब्रूयादिति[3] प्रकृत्यैतदनुवचनमिति (१.३.५.१३.) श्रुतेः अतोऽनुवचनान्तः सामिधेन्यन्तः · तस्मिन्सामिधेनीनामन्ते[4] अध्वर्युः वेदेन आहवनीयं त्रिर्वाजयित्वा आज्यस्थाल्याः सकाशादाज्यं गृहीत्वा स्रुवेण आहवनीये उत्तरे भागे ऋजुं दीर्घं संततं प्राञ्चं तूष्णीमेव पूर्वमाघारमाघार्य ततोऽग्नीधं प्रति अग्निमग्नीत्संमृड्ढीति प्रैषमाह · प्रजापतिदेवता तेन स्वाहाकाराभावः । वरुणप्रघासेषु सौत्रामण्यां च अग्नीऽग्नीत्संमृड्ढीत्यूहः क्रमेणोभयोः संमार्गः । दशाहुतिपक्षेऽवभृथेष्याम् अपोऽग्नीत्संमृड्ढीत्यूहः । षडाहुतिपक्षे तु संमार्ग एव न भवति · पूर्वाघारस्तु अदृष्टार्थ आरादुपकारकः अतश्च यावदुक्तो गृहमेधीयपयस्यादौ न भवति उपवाजनं तु प्रवर्तत एवाग्नेरदृष्टसंस्कारत्वात् ।

इध्मसंनहनैरनुपरिधि संमार्ष्ट्यग्ने वाजजिदिति (२.७.) त्रिस्त्रिः परिक्रामम् ॥१३॥[5] इध्मबन्धनार्थैस्तृणैरनुपरिधि परिधिसंनिकृष्टेषु त्रिष्वग्निप्रदेशेषु प्रदक्षिणं क्रमेणैकैकस्मिन्प्रदेशे आहवनीयमग्निं त्रिस्त्रिः संमार्ष्टि संमार्जनेन विरजस्कमुज्ज्वलं करोति · परिक्रम्य-परिक्रम्य तत्तत्परिधिदेशं गत्वा तदायामानुसारेण पार्श्वतोऽग्निं संमार्ष्टि ।

---

१) शोचिष्केशस्तमीमहेऽ३मिति प्रणवे Mahâd. २) ? सामिधेनीं २. ३) °वानमनु° २. ४) अग्ने महाँ३ असि ब्राह्मण भारतेति (१.४.२.२.) पठ्यमाने Mahâd. ५) अवभृथेष्यां विपरिणाम्यते आपो वाजजितो वाजं वः सरिष्यन्तीर्वाजजितः संमार्ज्मीति Mah.

तूष्णीमुपरि ॥ १४ ॥ [1] परिक्रम्याहवनीयस्योपरि मध्यप्रदेशे तूष्णीं त्रिः संमार्ष्टि · तूष्णीमिति यत्नादन्यासु तिसृषु दिक्षु प्रतिदिशं मन्त्रावृत्तिर्भवतीति ज्ञायते ।

अपरमाहवनीयादञ्जलिं करोति नमो देवेभ्यः स्वधा पितृभ्य इति (२. ६.) दक्षिणत उत्तानम् ॥ १५ ॥ आहवनीयस्य पश्चाज्जुहूपभृतोः पुरस्तात् अञ्जलिं करोति नमस्कारार्थत्वाच्च पुटाञ्जलिः · ततः स्वधा पितृभ्य इत्यनेन मन्त्रेण तस्मादञ्जलेर्दक्षिणतो द्वितीयमञ्जलिमुत्तानं करोति पूर्वाभिमुखो [2] यज्ञोपवीत्येव। तदञ्जलिकरणमुत्तराघारार्थम् अतश्च तदभावे न भवति ।

अप उपस्पृश्य सुयमे मऽइति (२. ७-८.) जुहूपभृतावादायोत्तरां जुहूं कृत्वा दक्षिणातिक्रामत्यङ्घ्रिणा विष्णाविति (२. ८.) ॥ १६ ॥ उदकं स्पृष्ट्वा प्रथमं पाणिभ्यां जुहूमादाय उत्तरां कृत्वा उपभृत उपरि निधाय ततः सुयमे मऽइति द्वेऽअपि स्रुचौ सहैवादाय अङ्घ्रिणा विष्णाविति दक्षिणस्यां दिशि गच्छति । महापितृयज्ञे देवपितृभ्य इत्यूक्तः । अपामुपस्पर्शनस्य पित्र्यं मन्त्रमुक्त्वा इति (१. १०. १४.) प्राप्तस्य प्राचीनावीतिवद्दक्षिणामुखत्वयोर्व्युदासार्थं पुनरुक्तमित्यदोषः । अङ्घ्रिणा विष्णावित्ययं यजतिस्थानं प्रति गमने मन्त्रः ।

परिधीनपरेण संचरो होष्यतः ॥ १७ ॥ परिधीनां पश्चात्स्रुचां पूर्वेण होमं करिष्यतोऽध्वर्योर्गमनागमनमार्गः · सर्वार्थोऽयं संचरः नोत्तराघारमात्रे ।

सव्येनेतो दक्षिणेनामुतः ॥ १८ ॥ सव्येन पादेन इतोऽस्मात्स्थानाद्यजतिदेशं गच्छति यजतिदेशात्प्रत्यागच्छन्दक्षिणेन पादेन गच्छति । एतदपि सर्वार्थमेव ।

वसुमतीमित्यवस्थाय (२. ८) ॥ १९ ॥ [3] वसुमतीमिति मन्त्रेण यजतिदेशे उदङ्प्राङ् अवस्थाय ईशानाभिमुखः स्थित्वा ॥ ॥ प्रथमा कण्डिका ॥ १ ॥

अथ यजतिः ॥

अथाध्वर्युर्होतुरासनं दर्भास्तृतं गार्हपत्याहवनीययोरन्तरालेऽंशस्य मध्यभागे [4]

---

[1] मध्यमदक्षिणोत्तरपरिधिपरिधानक्रमेण · परिक्रम्य-परिक्रम्योत्तरत उपविश्य · सकृन्मन्त्रवचनम् । महापितृयज्ञे सकृत्सकृत्संमार्जनम् Mahâd. [2] °भुख २. [3] २ joins this sûtra with the beginning of the next kaṇḍikâ. [4] ? °राले शस्यम° १.

वेदेः पश्चात्स्थापयित्वा एहि होतरिति होतुरामन्त्रणं करोति · ततो होतर्याच-
म्यागते सति अध्वर्युरिध्मादेकां समिधमादाय होतारं प्रति अग्नये समिध्यमानाया-
नुब्रूहीति ब्रवीति · होता च ब्रह्मन्त्सामिधेनीरनुवक्ष्यामीति ब्रह्माणं पृच्छति ·
ब्रह्मा च प्रजापतेऽनुब्रूहि धेहीत्यन्तमुपांशु पठित्वा ओ३मनुब्रूहीति होतारं प्र-
सौति · ततो होता कं प्रपद्यऽइत्यादि[1] जपति · अस्यान्ते यजमानः स्फ्यं गृही-
त्वा संतन्वन्निव मेऽनुब्रूहीति होतारं प्रेष्यति[2]। अस्मिन्कर्मण्यादित आरभ्य स्वि-
ष्टकृतः प्राक् सर्वं मन्त्रजातं प्रथमस्थानेन प्रयोज्यम्  स्विष्टकृत आरभ्येडामार्ज-
नान्तं मध्यमस्वरेण  ततः शेषं समाप्तिपर्यन्तमुत्तमेन स्वरेणेति तन्त्रटीकायाम् ·
प्रैषाणामिवायं धर्मो  न मन्त्रान्तराणामिति[3] कर्कादयः सर्वे। ततो होत्रा उ-
पांशु त्रिर्हिंकृत्य प्र वो वाजा इत्यासु ऋक्षु मध्यमस्वरेणानूच्यमानासु यजमानः
पादाङ्गुष्ठाभ्यां भूमिमधः पीडयति इदमहं पञ्चदशेन वज्रेणामुकमवबाधऽइति वैरि-
नाम द्वितीयान्तं गृहीत्वा · शत्रोरभावे  इदमहं पञ्चदशेन वज्रेण द्विषन्तमवबा-
धऽइति प्रयोगः  वज्रेण भ्रातृव्यमवबाधऽइति वा  नात्रापां स्पर्शः अभिचारा-
भावात् · पाप्मानमिति पदं तु स्वश्रुतौ सूत्रे च नास्ति  शाङ्खायने (१.५.२.)
होतुर्वेद्यभिमर्शने पठितमस्ति। अध्वर्युः स्फ्यमादाय तिष्ठन्सामिधेनीनां प्रणवे-प्र-
णवऽ एकैकमिध्मकाष्ठमाहवनीयेऽभ्यादधाति · समिध्यमानोऽअध्वर इत्यस्या ऋचः
प्रणवे समिद्धोऽअग्नऽइत्यतः प्राक् एकमिध्मकाष्ठं परिशिष्यावशिष्टानां पञ्चानां
काष्ठानां सहैव प्रक्षेपं कुर्यात्। तत उत्तरत उपविश्य दक्षिणं जान्वाच्य वृणी-
ध्वꣳ हव्यवाहनो३म् अग्ने[4] महां असीत्येतस्मिन्होत्रा पठ्यमाने वेदेनाहवनीयं
त्रिरुपवाज्य वेदोपयहः स्रुवेणाज्यस्थाल्या आज्यं गृहीत्वोत्तरं परिधिसंधिमन्वव-
हृत्य प्रजापतिं मनसा ध्यायन्नग्नेरुत्तरप्रदेशे ऋजुं दीर्घं संततं प्राञ्चं पूर्वमाघार[मा-
घार]यति  इदं प्रजापतये। ततोऽग्नीधे स्फ्यमिध्मसंनहनं च समर्पयन्नग्निमग्नी-
त्संमृड्ढीति अग्नीधं प्रेष्यति · ततोऽग्नीत्स्फ्यं सव्ये गृहीत्वाग्निं प्रदक्षिणीकृत्य दक्षि-
णपरिधिसंनिधौ स्थित्वा इध्मसंनहनैर्दक्षिणपरिधिसमीपपार्श्वेऽग्निं त्रिः प्राक्संमार्ष्टि

---

1) See Çânkhây. १.४.५.  2) ? प्रेषयति १  3) ? मन्त्रान्तरामीं इति १.  4) ? °वा-
हना३अग्ने १ See १.४.१.३१—२.२.

अग्ने वाजजिदिति मन्त्रेण सकृत् द्विस्तूष्णीम् · ततस्तत्रैवावस्थितो मध्यमपरिधिसंनिहितपार्श्वेऽग्निं त्रिरुदकसंमार्ष्टि अत्राप्यग्ने वाजजिदिति सकृन्मन्त्रेण द्विस्तूष्णीम् · ततो दक्षिणपार्श्वादुत्तरपार्श्वं गत्वोत्तरपरिधिसंनिहितपार्श्वेऽग्निं त्रिः प्राक्संमार्ष्टि सकृन्मन्त्रेण द्विस्तूष्णीम् स एव मन्त्रः · ततस्तत्रैवावस्थितो मध्ये प्राञ्चं तूष्णीं त्रिः संमार्ष्टीति हरिस्वामिनः · अन्ये तु उत्तरपार्श्वाद्दक्षिणपार्श्वं गत्वा दक्षिणपरिधिसंनिधौ संमृज्योत्तरपार्श्वं गत्वा मध्यमपरिधिसंधावग्निं संमृज्य पुनर्दक्षिणपार्श्वं गत्वोत्तरपरिधिसंनिधावग्निं संमृज्य पुनः प्रादक्षिण्येन उत्तरतो गत्वा मध्ये तूष्णीं त्रिः संमार्गः कार्य इत्याहुः । ततो जुहूपभृतोः पुरस्तादाहवनीयमपरेण भूमौ पुटाञ्जलिं निदधाति नमो देवेभ्य इति (२.७.) मन्त्रेण · ततस्तस्मादञ्जलिकरणस्थानाद्दक्षिणस्यां द्वितीयमञ्जलिमुत्तानं करोति स्वधा पितृभ्य इति मन्त्रेण · तत उदकोपस्पर्शनम् नात्रापसव्यम् नापि दक्षिणामुखता । तत उभाभ्यां पाणिभ्यां जुहूं परिगृह्योपभृतोऽग्रस्योपरिमार्गेणानीयोपभृत उपरि निदधाति · ततः सुयमे मऽइति (२.७-८.) मन्त्रेण ते सहैव जुहूपभृतावादायोत्थायाङ्घ्रिणा विष्णाविति (२.८.) मन्त्रेण सव्येन पादेनाग्रतोऽग्रतश्चालितेन वेदेर्दक्षिणभागं प्रति गच्छति · तत्र स्रुचः पूर्वेण परिधीनपरेण प्रस्तराग्रमनाक्रामतो गमनागमनमार्गः · एवमनेन मार्गेण गत्वा वेदेर्दक्षिणभागे वसुमतीमग्नऽइति (२.८.) मन्त्रेणावस्थानं कृत्वेशानाभिमुखस्तिष्ठति ॥ ॥१॥

इति तृतीयस्य प्रथमा कण्डिका ॥

इत इन्द्र इति (२.८-९.) जुहोत्युत्तराघारम् ॥१॥ जुहूमवतार्य इत इति मन्त्रेण आहवनीयस्य दक्षिणभागे ऋजुं दीर्घं संततं प्राञ्चं जौहवेनाज्येन उत्तराघारं जुहोति । मन्त्रवर्णादिन्द्रो देवता [1] · इदमिन्द्रायेति त्यागः · यागे होमे च प्रक्षेपात्पूर्वमवश्यं सर्वत्र त्यागः कर्तव्यः · तथा च कारिकायाम् आदौ द्रव्यपरित्यागः पश्चाद्धोमो विधीयते · तथा च त्रिकाण्डे मण्डनः तुल्य एवाधिकारः

[1] वाचो देवतात्वम् वाचे वाऽएतमाघारमाघारयतीति श्रुतेः (१.४.५.४.) · परं तु इन्द्रो वागित्यु वाऽआहुरिति (ibid.) श्रुतेः इन्द्रस्यैव देवतात्वम् · अत एवेत ऐन्द्रमित्यनुक्रमणिकाकारेणोक्तम् (१.६.) Mahâd.

स्याद्दम्पत्योरुभयोर्मिथः कर्तृत्वं च तयोस्तुल्यं द्रव्यत्यागे प्रचक्षते · त्यागवाक्यस्यादावोंकारश्च कर्तव्यः यागहोमादिष्विति सर्वानुक्रमण्यामुक्तत्वात् । स चायमुत्तराघार आराडुपकारकोऽदृष्टार्थः ततश्च गृहमेधीयोपसत्पयस्यादौ यावदुक्ते निवर्तते · वचनाच्च प्रयाजार्थेन चतुर्गृहीतेन जौहवेन क्रियते अतश्च दर्विहोमेषु प्रयाजाभावेन तदर्थजौहवाभावेऽप्याघारस्यावश्यकर्तव्यत्वात्स्थाल्याः सकृद्गृहीतेन इन्द्राय स्वाहेति मन्त्रेण तिष्ठतैव होतव्यः । महापितृयज्ञे देवपितृभ्यः ।

आघार्यासंस्पर्शयन्स्रुचावेत्य जुह्वा ध्रुवां समनक्ति सं ज्योतिषेति (२.१.) ॥२॥ आघारानन्तरं स्रुचौ परस्परमसंस्पर्शयन् एत्य यजतिस्थानाद्वेदेः पश्चादागत्य उपविश्य जौहवेनाज्येन ध्रौवं समनक्ति जौहवं ध्रौवमध्ये जुह्वैव ह्रारयति । अत्र गच्छतामित्यध्याहारः ।

निधायेध्मसंनहनान्यादायाश्रावयेत्याह ॥३॥ ततः स्रुचौ स्वस्थाने सादयित्वा होतारमुत्तरेण गत्वा उत्करस्य पश्चात्प्राङ्मुखोऽवस्थाय इध्मसंनहनानि हस्ते गृहीत्वा प्रवराया आश्रावयति ।

अस्तु श्रौषडित्यग्नीत् ॥४॥ अध्वर्योरुत्तरतो दक्षिणामुखोऽवस्थितोऽस्तु श्रौषडित्येवमग्नीत्प्रत्याश्रावयति ।

वेदिबर्हिरिध्मशकलमपछिद्यैके ॥५॥ शाखिनो वेदौ स्तृतं बर्हिरादाय इध्मशकलं वापछिद्यादायाश्रावयन्ति[1] · अभिपद्येति (१.५.१.२) अस्य आदाय गृहीत्वेत्यर्थः सर्वत्र सूत्रकारेण स्वीकृतः ।

एवं सर्वत्राश्रुतेषु ॥६॥ एवमित्याश्रावणेऽध्वर्युः प्रत्याश्रावणेऽग्नीत् । आथर्वणे आग्नीध्रस्योत्तरत उपचारः स्फ्यसंमार्गपाणेस्तिष्ठतो दक्षिणामुखस्य यथास्वरमस्तु श्रौषदिति प्रत्याश्रावणमिति ।

अथ प्रवृणीतेऽग्निर्देवो दैव्यो होता देवान्यक्षद्विद्वांश्चिकित्वान्मनुष्वद्भरतवदमुवदमुवदिति यजमानार्षेयाण्याह परस्तादर्वाञ्चि त्रीणि ॥७॥ क्रमस्य पाठादेव प्राप्तत्वादथशब्द उपग्रह इत्यस्योत्तरत्रानुकर्षणार्थः अथ गृहीतेनैवेध्मसंन-

---

१) इध्मं भङ्क्त्वा तच्छकलं गृहीत्वा Mahâd.

हनादिना होतारं प्रवृणीते[1] · अथवाश्रुतप्रत्याश्रुतयोः प्रवरणार्थत्वज्ञापनायाथ-शब्दः । अमुवदमुवदित्यत्र[2] सर्वनामस्थाने यजमानसम्बन्धीनि पूर्वजभूतानि परस्तात् पितृस्थानीयादर्वाक्च पितृतत्पुत्रतत्पौत्ररूपाणि त्रीणि आर्षेयाणि ऋषेरपत्यानि वृणीते साम्ना कर्मणि प्रवर्तयति यजतु चावहतु चेति । त्रीणीति कुतः त्रीन्वृणीतऽइति शाखान्तरात् । यजमानग्रहणमृत्विगार्षेयव्युदासार्थम् यजमानस्य य ऋषिस्तत्पूर्वजो मन्त्रदृक् तस्यापत्यमार्षेयं प्रवृणीतऽइति हरिस्वामिनः ।

यावन्तो वा मन्त्रकृतः ॥ ८ ॥ अथवा यजमानस्य वंशसम्बन्धिनामृषीणां मध्ये यावन्तः ऋषयो मन्त्रकृतः मन्त्राणां द्रष्टारो भवेयुस्तान्वृणीते न त्रीण्येवेति नियमः · ते च प्रवराध्याये गोत्रविशेषेण सर्वेषां कथिताः सन्ति केषांचिदेकः केषांचिद्द्वौ केषांचित्त्रयः केषांचित्पञ्च · तेन यद्गोत्रस्य यावन्तस्तत्र उक्ताः तस्य तावन्तो वरीतव्या इत्यर्थः । आपस्तम्बः ऊर्ध्वज्ञुमासीनं होतारं वृणीते मनुष्वद्भरतवदमुवदिति यथार्षेयो यजमानस्त्रीन्यथऽऋषि मन्त्रकृतो वृणीतेऽपि वा एकं द्वौ त्रीन्पञ्च न पञ्चातिवृणीतऽइति ।

पुरोहितार्षेयेण वा ॥ ९ ॥[3] राज्ञो यजमानस्य पुरोहितार्षेयेण वा · पुरोहितस्य गुरोरार्षेयाणि वा वृणीते स्वकीयानि वेति विकल्पः ।

क्षत्रियवैश्ययोश्च नित्यम् ॥ १० ॥ अभिषेकादिरहितस्य क्षत्रियमात्रस्य[4] वैश्यस्य च नित्यं पुरोहितार्षेयोच्चारणेनार्षेयं वृणीते ।

मनुवदिति वा सर्वेषाम् ॥ ११ ॥ अथवा सर्वेषां ब्राह्मणक्षत्रियविशां मनुवदित्येतत्पदं सकृदेवार्षेयस्थाने प्रयोज्यम् अभ्यासे कारणाभावात् । आपस्तम्बः पुरोहितस्य प्रवरेण राजा वृणीतऽइति अपि वा नार्षेयं वृणीते मनुवदित्येव ब्रूयादिति च · मनुः यद्यब्राह्मणो यजेत पुरोहितस्य प्रवरेण प्रवृणीयादिति ।

ब्रह्मण्वदा च वक्षद्ब्राह्मणा अस्य यज्ञस्य प्राविताराऽसौ मानुष इति होतृनामग्रहणम् ॥ १२ ॥ आर्षेयोच्चारणादनन्तरं ब्रह्मण्वदित्यादिकं मन्त्रशेषं ब्रू-

---

1) अथशब्दो यजमानव्युदासे यजमानस्य परिभाषितत्वात् होतारं प्रवृणीतऽइति Mah. 2) अमुवदमुवदित्यार्षेयोच्चारणम् भृगुवत् च्यवनवत् अप्नवानवदित्यादि Mah. 3) अयमपि ब्राह्मणविषयः Mahâd. 4) अत्र राजन्यक्षत्रिययोरभेदः Mahâd.

यात् · तद्वले ऽसौ मानुष इत्यत्रासावित्यस्य पदस्य स्थाने ऽमुकशर्मेति होतुर्नामग्रहणं कुर्यात् ।

उपांशु वा ॥ १३ ॥ उच्चैर्वा । अग्निर्दैव इत्यादेरयमर्थः । अग्निरयं देवः न मानुषः न भूतमात्रमचेतनम् दैव्यो देवैरपि पुरस्कृतः सम्भावितशक्तिः होता साधुह्वाता · य ईदृशो होता स देवान्यक्षत् यजतु आवक्षतु च तमहं होतारं वृण इत्यर्थः · विद्वान् जानानः यथा यत्र च यष्टव्यो ऽनादौ संसारे ऽभ्यस्तकर्मेत्यर्थः · कथम् चिकित्वान् चेतनावानविस्मरणशीलः · सो ऽधुनाप्यप्रमत्तः सन् मनुष्वत् मनोरिव यथा स्वायम्भुवादेर्मनोर्यज्ञे ऽग्निना देवा इष्टास्तथास्यापि यजमानस्य यज्ञे यजत्वित्यर्थः · भरतवत् भरतो मानवो वर्षाधिपतिस्तस्येव · वसिष्ठादिर्यजमानस्य पूर्वजो मन्त्रदृक् तस्येव · ब्रह्मा सर्वेषां पूर्वजः तस्येव · आ च वक्षत् आवक्षतु च · यद्यपि चैवमग्निरेवात्र होता तथापि ब्राह्मणा अस्य यज्ञस्य प्रकर्षेण अवितारः रक्षितारः ते होमं तन्वानाः प्रत्यक्षमुपलभ्यन्ते अग्निस्तु आगमात् · सो ऽपि च सति ब्राह्मणशरीरे तदेवाधिष्ठाय होत्रं करोति न तस्माद्विना · ततश्चैव न मन्तव्यम् यदि तावदग्निर्होता ततः किं मानुषेण अथ मानुषस्ततः किमग्निनेति · तयोः संहृत्यकारिताख्यापनायाह ब्राह्मणा इति · संहृत्यकारित्वे विशेषमाह असौ देवदत्तो यज्ञदत्तो वा मानुषो होता देवान्यक्षदा च वक्षदिति वर्तते तमग्निं यजत्तमन्वयमपि यथाशक्ति आरम्भमात्ररूपेण यजत्वित्यर्थः · एष तावान्प्रकाश्यो मन्त्रार्थः ।

संमृष्टा ऽउपविशतः ॥ १४ ॥ वरणानन्तरं होता उत्थाय अध्वर्युमग्नीधं चांसयोः संमृशति तौ च संमृष्टावुपविशतः ।

अग्निर्होतेति स्रुगादापनं प्रयाजेषु संनिधेः ॥ १५ ॥[1] अग्निर्होतेत्येतत्स्रुगादापनं प्रयाजेषु भवति · स्रुचावध्वर्युणा आदाप्येते अनेन पठितेनेति स्रुगादापनम् · प्रयाजेष्वेव कुतः संनिधेः प्रयाजसंनिधौ स्रुगादापनस्य पाठात् । पशावेकादशप्रयाजोत्कर्षे पुनरप्युच्चारणम् · अन्वर्थसंज्ञाविज्ञानात्सर्वत्र प्राप्नोति तेन प्रयाजे-

---

१) स्रुगादापनमग्निर्होतेत्यस्य संज्ञा प्रयाजार्थस्रुगादापनविषया संनिधेरित्युक्तत्वात् (? °षयात्सं° Cod.) · प्रयोजनम् प्रयाजोत्कर्षे पुनरुच्चारणम् Mahâd. — See १.५.२.१.

ष्विति नियम्यते समाख्यातः संनिधेर्बलवत्त्वादिति ।

घृतवतीमित्युक्ते स्रुचावादायातिक्रम्याश्राव्याह समिधो यजेति ॥ १६ ॥ होत्रा घृतवतीमित्येतस्मिन्पदे उक्ते अध्वर्युर्जुहूपभृतावादाय अतिक्रम्य वेदेरपरस्माद्देशात्परिधीनपरेण सव्येन पादेन यजतिदेशं गत्वा आश्राव्य समिधो यजेत्याह [1]. प्राप्तमेवातिक्रमणमनुवाक्यापरिसंख्यानार्थमुच्यते [2]. घृतवतीमध्वर्यो स्रुचमास्यस्वेति तदध्वर्युं प्रसौतीति श्रुतेः (१.५.२.१.) · आपस्तम्बः पञ्च प्रयाजान्प्राचः प्रतिदिशं वा समिधः पुरस्तात्तनूनपातं दक्षिणत इडः पश्चाद्बर्हिरुत्तरतः स्वाहाकारं मध्ये ।

पञ्च प्रयाजान् ॥ १७ ॥ सकृदतिक्रान्त एव पञ्च प्रयाजान्यजति · संज्ञा पञ्चग्रहणात्पञ्चैतानि कर्माणीति ज्ञायते ।

समिद्धतमे ॥ १८ ॥ताननतिशयेन समिद्धे वह्निप्रदेशे जुहुयात् । आपस्तम्बः सर्वान्विकध्यमिति · सर्वानपि प्रयाजानेकस्मिन्नेव स्थाने जुहुयादित्यस्यार्थः ।

यज-यजेति शेषम् ॥ १९ ॥ समिधो यजेति हि प्रथमे प्रयाजऽउक्तम् · शेषं प्रयाजचतुष्कं प्रति यज-यजेत्येव प्रैषो भवति (१.५.३.८.) ।

ध्रुवस्तिष्ठन् ॥ २० ॥ एकस्मिन्नेव स्थाने स्तम्भ-इव तिष्ठन् पञ्च प्रयाजान्यजति · अपक्रमणाकारणे सत्यपि नापक्रामेत् ।

पूर्वं-पूर्वं वाभिक्रामम् ॥ २१ ॥ पक्षान्तरमाह · वा विकल्पे · अभिक्रम्याभिक्रम्याहवनीयसंमुखं गमनं कृत्वा पूर्वं-पूर्वं प्राक्संस्थपङ्क्त्या पञ्चापि प्रयाजान्पृथक्पृथक्स्थाने जुहोति ध्रुवपक्षे तु समिद्धतमे । सर्वयजतिषु होम ईशानदिङ्मुखेन वेदेर्दक्षिणभागेऽवस्थितेन च कर्तव्यः वषट्कारेण सह वा वषट्कृते वेति ।

उपभृतो जुह्वामानयत्यनवमृशंश्चतुर्थम् ॥ २२ ॥ उपभृति गृहीतस्य मध्येऽर्धाज्यस्य प्रयाजार्थत्वाच्चतुर्थं प्रयाजं प्रति उपभृतः सकाशादर्धमाज्यं जुह्वामासिञ्चति उपभृता जुह्वाः स्पर्शमकुर्वन् । आपस्तम्बः त्रीनिष्ट्वार्धमौपभृतस्य जुह्वा-

---

[1] ओऽश्रावयेत्युक्त्वा समिधो यजेति प्रेष्यति Mahâd. [2] यजतित्वात्पुरोऽनुवाक्याप्राप्तेः अथ यदपुरोऽनुवाक्यकाः प्रयाजा भवन्तीति (११.४.१.१२.) श्रुतेः पुरोरुगभावः Mahâd.

मानीय प्रत्याक्रम्य शेषेण ध्रुवामभिघार्यानुपूर्वं जुहूमभिघारयत्युपभृतमन्तत इति ।

एवं प्रवृद्धौ ॥२३॥ प्रयाजप्रवृद्धावेवमेव चतुर्थे-चतुर्थे समानयनं कार्यम् · वरुणप्रघासेषु नवभिः प्रयाजैः · पशौ दशभिः चतुर्थे समानीय चतुर्थमारभ्य पुनश्चतुर्थे सप्तमे तमारभ्य चतुर्थे दशमे · अत एव याज्ञिका वदन्ति चतुर्थसप्तमदशमेषु समानयनमिति ।

अनुयाजेषु च ॥२४॥ अनुयाजेष्वपि प्रवृद्धौ एवं ज्ञेयम् · वरुणप्रघासेषु पशौ शाखान्तरात् ।

उत्तरां जुहूमध्युह्य प्राचीमवहृत्य जुहोति ॥२५॥ जुहूमुत्तरामुपरिमार्गेणैव प्राचीमवहृत्य उपभृदग्रेणावतार्य [1] जुहोति प्रथमं प्रयाजम् पुनरप्यध्युह्य तेनैव मार्गेण उपभृत उपरि निधाय पुनस्तथैवावहृत्य जुहोति · एवं प्रतिप्रयाजम् न सकृदवतारितया सर्वानिति । उपभृदग्रप्रदेशेनैव जुह्वा अवहरणाध्यूहने कार्ये न पार्श्वमार्गेण ।

एवं सर्वत्र ॥२६॥ न केवलं प्रयाजेषु सर्वहोमेष्वेवं ज्ञेयम् जुह्वा अवतारणाध्यूहने प्रतिहोमम् ॥ ॥ द्वितीया कण्डिका ॥२॥ ॥

अथ पद्धतिः ॥

ततो जुहूमुपभृतोऽग्रस्योपरिमार्गेण प्राचीमिवावतार्य दक्षिणपरिधिसं[नि]धिमन्ववहृत्येत इन्द्रो वीर्यमिति (२.८-३.) मन्त्रेणाग्नेर्दक्षिणपार्श्वे समिद्धे ऽजुं दीर्घं संततं प्राञ्चमुत्तराघारं जुहोति ओ३मिदमिन्द्राय न ममेति त्यागः । ततः स्रुचोः परस्परं स्पर्शमकुर्वन्नेव दक्षिणेन पादेनाग्रतोऽग्रतः प्रेरितेन प्रत्यागत्य जुहूस्थेनाज्येन ध्रुवास्थमाज्यं जुह्वेव समनक्ति सं ज्योतिषेति (२.१.) मन्त्रेण जुह्वा ध्रौवाज्यमध्ये विन्दुं पातयतीत्यर्थः · तत उपभृतं सव्ये गृहीत्वा दक्षिणेन जुहूं प्रस्तरस्योपरि निधाय वेदं सव्येन गृहीत्वोपभृतं जुह्वा उत्तरतः स्वस्थाने निदध्यात् । ततो होतारं प्रादक्षिण्येन मुक्त्वोत्करमपरेण प्राङ्मुखोऽध्वर्युरिध्मसंनहनान्यादायो३श्रावयेत्याह · ततोऽग्नीद्दक्षिणामुखोऽध्वर्युमुत्तरेण स्थितः स्फ्यसंनहने पाणौ

[1] उपभृदुपरि कृत्वा प्रागग्रामवतार्य Mahâd.

गृहीत्वैवास्तु श्रौ३षडिति प्रत्याह · आपस्तम्बः अस्तु श्रौषडित्याग्नीध्रोऽपरेणोत्करं दक्षिणामुखस्तिष्ठन् स्फ्यसंमार्गांश्च धारयन्प्रत्याश्रावयत्याग्नीध्रे सोमे सर्वत्रैवमाश्रुतप्रत्याश्रुते भवत इति । ततोऽध्वर्युर्गृहीतसंनहन एवाह · अग्निर्देवो दैव्यो होता देवान्यक्षद्विद्वांश्चिकित्वान्मनुष्वद्भरतवदित्युक्त्वा परस्तादर्वाञ्चि यजमानस्य त्रीणि प्रवरनामधेयान्याह तद्यथा कश्यपवदवत्सारवन्नैध्रुववदिति[1] · तदनन्तरम् ब्रह्मण्वदा च वक्षद्ब्राह्मणा अस्य यज्ञस्य प्रावितारोऽमुकशर्मा होता मानुष इति होतृनामग्रहणमुच्चैरुपांशु वा कर्तव्यम् । ततो होता देव सवितरित्यादिकं (१.५.१.१५) जपित्वोत्थायाध्वर्युमग्नीधं चांसयोः प्रादेशेन संमृशति · ततस्तौ होत्रा संमृष्टौ सन्तावुपविशतः तावत्पर्यन्तं तिष्ठत एव । ततो यदा होता अग्निर्होता वेत्विति स्रुगादापनं पठति तदाध्वर्युरुभाभ्यां पाणिभ्यां जुहूमुपभृत उपरि पूर्ववन्निधाय घृतवतीमित्यस्मिञ्छब्दे होत्रा उक्ते जुहूपभृतावादाय हवींष्युत्तरेण परिधीनपरेण सव्येन पादेन वेदेर्दक्षिणभागे गत्वा ईशानाभिमुखः स्थित्वाश्राव्यास्तु श्रौषडिति प्रत्युक्ते समिधो यजेति होतारं प्रति ब्रूयात् · ततो जुहूं प्राचीमवतार्य वषट्कारेण सह वा वषट्कारे कृते वा समिद्धतमे वह्नेः प्रदेशे जुह्वास्य[तृतीयांशं जुहोति][2] ॥ ॥२॥

इति तृतीयस्य द्वितीया कण्डिका ॥ ॥

नाभिदेशे धारणम् ॥१॥ अध्वर्युः स्वनाभिसमीपे स्रुचोर्धारणं कुर्यात् · वषट्कारान्ते होमविधानादा वषट्कारात्प्रतीक्षणीयम् तत्रानियमेन स्रुचोर्धारणे प्राप्ते नियमोऽयम् नाभिदेशे धारणमिति । प्रगृह्य बाहू (११.४.२.४) स्रुचोर्धारणं वर्थवादत्वान्न सूत्रितम् · एवमत्र ब्राह्मणे तद्व तथा न कुर्यादित्येवं निषिद्धाः पक्षाः सर्वे अर्थवादा ज्ञेयाः ।

प्रयाजानुमन्त्रणम् ॥२॥[3] प्रयाजानां प्रत्येकमनुमन्त्रणमभिधास्यतऽइति शेषः । एको ममैका तस्य योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्येवं मिथुनैर्यथासंख्यम्

---

[1] अङ्गिरोवद्बार्हस्पत्यवद्भरद्वाजवत् श्यैतवत् गार्गवत् Chamb. 196. [2] ?? Thus Chambers 196. जुह्वस्थद्रव्यस्यघृतवति १ (!). [3] ज्ञतस्य प्रयाजस्यानुमन्त्रणं यजमानेन कर्तव्यम् आत्मगामिवाक्यत्वात् Mahâd.

॥३॥ [1] एवंप्रकारैर्यथासंख्यं मिथुनैः स्त्रीलिङ्गपुंलिङ्गशब्दवद्भिर्मन्त्रैः क्रमेण प्रयाजानामनुमन्त्रणं करोति । किमुक्तं भवति · यथा एकः एकेति मिथुनं प्रथममुक्तम् यथासंख्यं मिथुनैरित्युक्तत्वादेवंशब्दाच्च द्वौ द्वे त्रयस्तिस्रः चत्वारश्चतस्र इत्युक्तं भवति [2] ।

न तस्य किं चनेति पञ्चमे ॥४॥ पञ्चमे प्रयाजे पञ्च ममेत्यस्यानन्तरम् न तस्य किं चन योऽस्मान्द्वेष्टीति मन्त्रेणानुमन्त्रणं कुर्यात् · एतच्चानुमन्त्रणं त्यागानन्तरं हविःप्रक्षेपे च कृते कर्तव्यम् । त्यागाश्च मान्त्रवर्णिकीभ्यः समिदादिदेवताभ्यः कार्याः · प्रथमे इदं समिद्भ्यो न मम एको ममेत्यादि · द्वितीये इदं तनूनपाते नराशंसाय वा न मम द्वौ मम द्वे तस्येति · तृतीये इदमिड्भ्यो न मम त्रयो मम तिस्रस्तस्येति · चतुर्थे इदं बर्हिषे न मम चत्वारो मम चतस्रस्तस्येति · पञ्चमे इदमग्नये सोमायाग्नयेऽग्नीषोमाभ्यामग्नीषोमाभ्यां देवेभ्य आज्यपेभ्यो न मम पञ्च ममेत्यादि · अमावास्यायां तु इदमग्नयेऽग्नीषोमाभ्यामिन्द्राय देवेभ्य इति संनयतः इदमग्नये विष्णावऽइन्द्राग्निभ्यां देवेभ्य इत्यसंनयत इति ।

विषिमानपचितिमान्यशस्वी ब्रह्मवर्चस्यन्नाद इति च ॥५॥ चकारः पूर्वोक्तानुमन्त्रणैः सह समुच्चयार्थः [3] · विषिमानित्यादिभिः पञ्चभिर्मन्त्रैः यथासंख्यं पञ्च प्रयाजाननुमन्त्रयते प्रथमेन प्रथमम् · भूयासमिति प्रतिपदमध्याह्रियते । पूर्वस्मादनुमन्त्रणादिदं भिद्यते पृथग्विधानात् · प्रयोजनम् सावसानं द्वयोः प्रयोगः । अनेकयजमानके एक एवानुमन्त्रणं करोति क्रत्वर्थत्वात् · तत्र एको ममेत्यत्र ऊहाभावः आशीर्योगाभावात् विषिमानित्यादौ तु ऊहः आशीर्योगात् विषिमन्तौ भूयास्व विषिमन्तो भूयास्मेति · अन्ये तु विपरीतमिच्छन्ति ।

आगन्तूनां चतुर्थपञ्चमाभ्यां स्थानात् ॥६॥ चातुर्मास्येषु पशौ च प्रयाजप्रवृद्धौ [4] चतुर्थपञ्चमयोरन्तराले आगन्तवो द्वारादय इज्यन्ते · तत्रानुमन्त्रणाद्वा-

---

1) द्विष्म इत्यन्ते भूयादित्यध्याहारः Mahâd. 2) अध्याहारोऽपि द्वितीये द्विवचनेन ततो बहुवचनेन Mahâd. 3) अनुमन्त्रणस्यासंनिपातात्प्रोषितोऽपि यजमानः करोति Mah. 4) नवैकादशद्वादशप्रयाजकर्मसु Mahâd. — See २.५.२.३० ३.८.१.३.

मस्थानादिधर्मजातं प्रति संदेहः किं यस्य-कस्यचित्प्रयाजस्य धर्माः उत नियम इति · प्रयाजत्वसामान्यस्याविशेषाद्यस्य-कस्यचिदिति प्राप्ते आग॰ चतु॰ इत्याह आगन्तूनां प्रयाजानां चतुर्थपञ्चमाभ्यां प्रयाजाभ्यां सकाशाद्धर्मा भवन्ति यतस्त-योर्मध्ये क्रमादागन्तवः पठ्यन्ते · अतश्च संनिधानात्तयोरेव धर्मा आगन्तुषु भवन्ति यतो धर्मापेक्षायां संनिहितव्यतिक्रमे कारणं नास्ति ।

प्रथमचतुर्थाभ्यां वा यथालिङ्गम् ॥७॥ यथालिङ्गं प्रथमाच्चतुर्थाच्चागन्तूनां धर्मा भवन्ति · यथालिङ्गमिति योऽनेकदेवत्यः [पञ्चमः षष्ठोऽष्टमश्च] तस्य प्रथम-धर्माः यश्चैकदेवत्यः [सप्तमो नवमो दशमश्च] तस्य चतुर्थधर्माः · लिङ्गमेवात्र धर्माणां पर्युपस्थापनम् । सिद्धान्तमाह ·

सर्वान्वोत्तमेनोपायित्वात् ॥ ८ ॥ अथवा सर्वानागन्तूनुत्तमप्रयाजधर्मेण सम्बध्नीयात् योजयेत् · आगन्तूनामुपायित्वात् यतस्तं पञ्चममुत्कृष्यागन्तव उपयन्ति उपगच्छन्ति चतुर्थस्तु स्वस्थानएव भवति पञ्चमे पुनरननुष्ठितऽआगच्छन्त आ-गन्तवस्तस्य स्थाने भवन्ति तत्स्थानाच्च तद्धर्मता तेषां न्याय्या । अत एतस्यैवो-त्तमस्याभ्यासेन विकृतिषु नवसंख्यैकादशसंख्या च श्रूयमाणा प्रयाजानां पूरणी-या । यतः पञ्च प्रयाजान्यजतीति इयं पञ्चसंख्या प्रयाजानामुत्पत्तिशिष्टा नव प्रयाजान्यजतीति एकादश प्रयाजान्यजतीति इयं वैकृती संख्या चोत्पत्तिशिष्टा उत्पत्तिशिष्टायाश्च पञ्चसंख्यायाः उत्पत्तिशिष्टया नवैकादशसंख्यया बाधायोगाद्वि-कृती संख्याभ्यासेनैव पूरणीया · तत्राभ्यासेऽवश्यं कर्तव्ये न्यायात्पञ्चमस्यैवाभ्या-सः प्राप्नोति पूर्वेषां स्थाने आगन्तूनां यागाभावात् · तेन तद्धर्मा एवागन्तुषु भवन्तीति सिद्धान्तः । अतश्च द्वाःप्रभृतीनां पञ्चमस्थाने होमः पञ्च मम न त-स्येत्याद्यनुमन्त्रणम् अन्नादो भूयासमिति च सर्वेषां भवति । अभ्यासविनाशे च साभ्यासः पञ्चम आवर्तते आध्वर्यवं कुर्वेति गदाधरकर्काचार्या[दय]ः विनष्टस्यै-कैकस्यावृत्तिरिति याज्ञिकाः · अनुयाजेषु समिष्टयजुःषु अनूबन्ध्यासु चैवमेव द्रष्ट-व्यम्[१] द्रव्याभावे च द्रव्यमप्युत्पादनीयम्॥ अत्र यद्यपि शतपथे अविशेषेण श्रुतम् अथ तनूनपातं यजतीति (१.५.४.२.) परं तु शाखान्तरे विशेषः श्रूयते

१) ? इष्टव्यं २

राजन्यात्रिबध्र्यश्ववसिष्ठवैश्यशुनकानां कण्वकश्यपसंकृतीनां नराशंसो द्वितीयः प्रयाजस्तनूनपादन्येषामिति [१] · एवं मानवसूत्रेऽपि · वसिष्ठादिकं गोत्रं येषां ते वसिष्ठादय इति केचिदाहुः अन्ये तु वसिष्ठादिप्रवरवन्तो वसिष्ठा इति · ये तु कश्यपसगोत्राः [२] कश्यपप्रवरवन्तश्च तेषां निःसंदिग्धं नराशंस एव भवति ।

एत्य जुह्वाभिघारणं ध्रुवाया हविष उपभृतश्च ॥ ९ ॥ . पञ्चप्रयाजहोमानन्तरं यजतिस्थानादेत्य वेदेः पश्चादागत्योपविश्य जुहूस्थेनैव प्रयाजशेषेण [३] ध्रुवायाः ध्रौवस्याज्यस्य हविषः आज्यस्थाल्याज्यस्य पुरोडाशयोश्च उपभृतः उपभृत्स्थस्याज्यस्य अध्वर्युरभिघारणं करोति उपयोगक्रमेण · अयं च हविःसंस्कारो न प्रयाजशेषप्रतिपत्तिः हवीꣳषीति (१.५.३.२५) द्वितीयया श्रुतेर्हविषः संस्कार्यत्वावगमात् · अतः संनिहितानि सर्वाणि हवींषि शेषेणाभिघारणीयानि शेषविनाशे च द्रव्यमात्रमुत्पाद्य तेनाभिघारणीयानि · प्रयाजशेषप्रतिपत्तिरेवेयमिति कर्काचार्याः मीमांसकाश्च [४] ।

आज्यभागाभ्यां चरत्याग्नेयेन सौम्येन ॥ १० ॥ आज्यभागावनुतिष्ठति एकमाग्नेयमपरं सौम्यम् · अग्निर्यं द्रव्यं यस्मिन्नाज्यभागे स आग्नेयः ।

चतुरवत्तꣳ सवषट्कारासु ॥ ११ ॥ · सवषट्कारासु आहुतिषु चतुरवत्तं होतव्यम् [५] ।

अनिधायावदायावदाय ध्रुवामभिघारयत्याप्यायतां ध्रुवा हविषा घृतेन यज्ञं-यज्ञं प्रति देवयद्भ्यः सूर्याया ऊधोऽदित्या उपस्थऽउरुधारा यज्ञेऽअस्मिन्निति [६] ॥ १२ ॥ स्रुचावनिधाय हस्तधृतयोरेव तयोर्जुह्वां ध्रुवात आज्यमवदायावदाय आप्यायतामिति स्थालीतो ध्रुवामभिघारयति यदवत्तं तत्पूरयति । आज्यभागावित्यन्वर्थसंज्ञयैवाज्यद्रव्यकत्वमवगतम् · तच्चाज्यं ध्रुवाया एवावदेयम् · तेन प्रत्यवदानमिह ध्रुवाया आप्यायनं विधीयते । अवदायावदायेति वीप्सा प्रतिस्रुच-

---

१) See ११.६.८-९. and Çânkhây. १.७.३: नराशंसोऽग्नऽआज्यस्य वेत्विति द्वितीयो वसिष्ठशुनकानामत्रिवध्र्यश्वानां कण्वसंकृतीनां राजन्यानां प्रजाकामानां च · २) ? काश्यपस्यगोत्रँ २· ३) जुह्वा करणभूतया स्वाज्येन Mahâd. ४) °सकाश्च २ ५) पश्चावत्तिनामपि च चतुरवत्तमिति वचनसामर्थ्यात् Mahâd. ६) See Kâṇva-Vâj. S. pag. ५८.

माप्यायनविधानार्था · अन्यथा चतुरवदानात्ते सकृदाप्यायनं प्राप्नोति · तच्च नोपपद्यते मूलक्षयात् । तत्पुरस्तादाज्यभागावग्नीषोमाभ्यां यजतीति (१.६.३.११) आज्यभागयोर्यजतित्वात् याज्यापुरोऽनुवाक्यावत्त्वम् · तां चानुवाक्यां याज्यां च प्रेषित एव होता पठति सम्प्रेषितोऽन्वाह तथा यजतीति शाङ्खायनोक्तेः (१.२.२८) अतश्चानुवाक्यापाठनार्थमग्नयेऽनुब्रूहीत्येवं प्रैषः कर्तव्यः · आश्रावणानन्तरं चाग्निं यजेति एवं प्रैषः कार्यः । अनुवाक्याप्रैषश्चावदानात्प्राग्देयः [१] वरुणप्रघासे तथैव दर्शनात् · अतश्च सर्वयागेष्वप्ययं क्रमः अनुवाचनम् अवदानम् अतिक्रम्याश्राव्य याज्यार्थः प्रैष इति · वाजिने पशुयागेऽवदानोत्तरकालमनुवाचनम् वचनात् · पशुपुरोडाशयागे वपायागेऽवभृथे वारुणयागे सवनीययागे वचनात्सहानुवाचनम् · अवभृथस्विष्टकृद्यागे जुह्वां पुरोडाशशेषमवदधतो [२]ऽनुवाचनम् वचनादपि · अन्यत्र यजतिमात्रे पूर्वमनुवाचनम् । आपस्तम्बः आग्नेयः सौम्यश्चाज्यहविषा चाज्यभागौ चतुर्गृहीताभ्यां जामदग्नीनां तु पञ्चावत्ताभ्यामथ जामदग्न्यो जामदग्न्यमामन्त्र्य पञ्चावत्तं कुर्वीति सर्वत्रावद्यन्नमुष्माऽअनुब्रूहीति पुरोऽनुवाक्यां सम्प्रेष्यत्यवदायावदाय स्रुवेण प्रस्तरबर्हिः समज्य जुहूपभृतावादाय दक्षिणातिक्रम्याश्राव्य प्रत्याश्राविते ऽमुं यजेति याज्यामिति सार्वत्रिकमिति ।

अनुब्रूहीत्युक्त्वा नापव्याहरेद्धोता चाश्रावणात् ॥ १३ ॥ [३] अनुवाक्याव्यतिरिक्तं किमपि न ब्रूयात् ।

आश्राविते ऽग्नीदा प्रत्याश्रावणात् ॥ १४ ॥ अस्तु श्रौषडित्येतस्मादन्यत्किमपि न ब्रूयात् · अस्तु श्रौषडित्यस्य प्रत्याश्रावणसंज्ञा ।

प्रत्याश्राविते ऽध्वर्युरा होतृप्रैषात् ॥ १५ ॥ [४] यजेति होतृप्रैषाद्यतिरिक्तं किमपि न ब्रूयात् ।

होता वषट्कारात् ॥ १६ ॥ यजेति प्रैषश्रवणानन्तरं याज्यावषट्कारव्यतिरिक्तं किमपि न ब्रूयात् । प्रसङ्गादाह ·

---

[१] अवदानात्पूर्वमनुवाचनं प्रतिपत्तव्यम् यजतित्वात् Mahâd. [२] Thus २. °वद्यतो?

[३] अपव्याहारो लौकिकवदनम् Mah. अध्वर्युर्होता च न व्याहरेत् आश्रावणं यावत् Ss.

[४] अग्नीधास्तु श्रौषडिति प्रत्याश्राविते Mahâd.

सोमे च ग्रहं गृहीत्वोपाकरणात् ॥ १७ ॥ सोमयागे ज्योतिष्टोमेऽध्वर्युर्ग्रहं गृहीत्वा आत्तस्य तृणाभ्यां ग्रहमुपस्पृश्य स्तोत्रोपाकरणान्नापव्याहरेत् · उपावर्तध्वमित्ययं स्तोत्रप्रैष उपाकरणशब्देनोच्यते तद्व्यतिरिक्तं किमपि न ब्रूयात् · तेन [उपाकरणेन] अध्वर्युरुद्गातृभ्यो यज्ञं प्रयच्छति ।

उपाकृतऽउद्गातार आ होतृप्रैषात् ॥ १८ ॥[1] एषोत्तमेति (१.५.२.१३.) प्रस्तोतृकर्तृको होतृप्रैषः तत्पर्यन्तम् · प्रस्तोता सर्वेषु स्तोत्रेषु उत्तमाया ऋचः प्रस्तावादनन्तरं शस्त्रकर्तारं प्रेष्यति एषोत्तमेति · तेन होत्रे यज्ञं प्रयच्छति ।

होता वषट्कारात् ॥ १९ ॥ होतृग्रहणमन्येषामपि शस्त्रकर्तृणामुपलक्षणार्थम् · तेन प्रशास्त्राद्योऽपि एषोत्तमेति प्रैषं श्रुत्वा शस्त्रव्यतिरिक्तं किमपि न ब्रूयुः ।

आग्नेयमुत्तरपूर्वार्धे ॥ २० ॥ आग्नेयमाज्यभागमाहवनीयस्य उत्तरपूर्वार्धे ईशानभागे जुहोति ।

दक्षिणपूर्वार्धे सौम्यम् ॥ २१ ॥ आहवनीयस्य आग्नेयभागे ।

समिद्धतमे वा ॥ २२ ॥ अथवा उभावपि समिद्धतमे ।

हविर्भ्यां च ॥ २३ ॥[2] समिद्धतमे वह्निप्रदेशे प्रचरति ।

पुरोडाशावन्तरेणाग्नीषोमाऽउपांश्वाज्यस्य ॥ २४ ॥ पुरोडाशसाध्ययोर्यागयोरन्तराले मध्ये आज्यस्य द्रव्यस्य उपांशु अग्नीषोमाभ्यां यजति । अयं क्रमः · आग्नेय आज्यभागो ध्रुवातश्चतुर्गृहीतेन · सौम्य आज्यभागोऽपि · आग्नेयेन पुरोडाशेन यागः तत्राग्नयेऽनुब्रूहीत्यनुवाचनम् जुह्वां ध्रुवायाः स्रुवेणाज्यं गृहीत्वोपस्तारः आज्यस्थाल्याः सकाशाद्ध्रुवाया अभिघारणम् पुरोडाशमध्यादङ्गुष्ठपर्वमात्रं तिरश्चीनमवदानं ग्राह्यम् द्वितीयं पूर्वार्धात् पञ्चावत्तिनस्तृतीयं पश्चार्धात् ध्रौवेणोपर्यभिघारः पुनर्ध्रुवाया आप्यायनम् आज्यस्थाल्याज्येनावत्तस्य हविषोऽवदानयोः प्रत्यभिघारः अतिक्रम्याश्राव्याग्निं यजेत्युक्त्वा वषट्कृते सह वा स्रुक्पार्श्वेन होमः · आज्यभागवत् ध्रुवातश्चतुः पञ्चकृत्वो वावदायोपांशुयागः ·

---

१) उद्गातृप्रस्तोतृप्रतिहर्तार इत्युद्गातारः Mahâd. २) पुरोडाशाभ्याम् Mahâd. चरतीति शेषः Ss.

अग्नेययागवत् द्वितीयेन पुरोडाशेनाग्नीषोमीययागः · स्विष्टकृदिति ।

विष्णुर्वामावास्यायाᳬ होत्राम्नानात् ॥ २५ ॥ अमावास्यायां विष्णुर्वा उपांशुयाजस्याज्यभागस्य देवता भवति · एवं हि हौत्रे आम्नायते वैष्णवश्चेदिदं विष्णुर्वषट्कृते विष्णावासऽइति याज्यापुरोऽनुवाक्येऽइति [1] । व्यवस्थितोऽयं विकल्पः संनयतोऽग्नीषोमौ असंनयतो विष्णुरिति होतृवशादेव · शाङ्खायनः (१.३.१६-१८.) ऐन्द्रं सांनाय्यं संनयतो माहेन्द्रं वा वैष्णवं त्वसंनयन्नुपांशुयाजमिति· उपांशुयाजधर्माः शाङ्खायनेनोक्ताः (१.१.३६-३७.) प्रणवो ये-यजामहो वषट्कारः सम्प्रैषाः प्रैषाश्चोच्चैरुपांशुहविःषु देवतानामधेयं चोपांश्विति ।

यावद्धविरुत्तरार्धात्स्विष्टकृतः ॥ २६ ॥ यावन्ति हवींषि भवन्ति तेषां सर्वेषामुत्तरार्धादुत्तरस्मात्प्रदेशात् स्विष्टकृतः स्विष्टकृद्यागार्थमवद्यति [2] · तत्र जमदग्नीनां द्वेऽअवदाने इतरेषां त्वेकम् · अभिघारणं चोपरिष्टाद्द्विर्भवति · सर्वेषां हविषामुत्तरार्धादवदाय सकृदेवैकं प्रदानं कर्तव्यम् ।

तत एव होमः ॥ २७ ॥ ततः अग्नेरुत्तरार्धे एव स्विष्टकृदवदानानां होमो भवति । उपांशुयाजशेषाद्ध्रौवादपि स्विष्टकृदवदाने प्राप्तऽआह ·

नाज्यादशेषात् ॥ २८ ॥ [3] आज्यात् ध्रौवाज्यात्स्विष्टकृतो नावद्यति · न ह्येतदुपांशुयाजस्य शेषः सर्वार्थत्वात् तथा हि उपस्तृणन्नभिघारयन्नाज्यस्य यजन्ध्रुवायां गृह्णातीति । अपरा व्याख्या [4] · न ह्याज्यं शेषरूपमस्ति शेषस्य हि कृतार्थस्य प्रतिपत्त्यपेक्षस्य स्थितस्य प्रतिपत्त्यर्थानि शेषकार्याणि · न चाज्यमेवंविधमस्ति · न ह्युपांशुयाजार्थं [5] पूर्वं पृथक्प्रकल्पितमस्ति यस्य शेषो भवति · अतः साधारणादेव ध्रौवाद्वचनेनोपांशुयाजार्थं गृह्यते · यत्तावद्ध्रुवायामुपांशुयाजार्थं गृहीतेऽवशिष्टमाज्यम् तत्पश्चाद्वाव्युपस्तरणाभिघारणाद्युपयोगीत्यकृतार्थम् न प्रतिपत्त्यर्हम् · सर्वान्ते च तेन निःशेषेण समिष्टयजुर्हूयतऽइति न

---

1) See Çânkh. १.८.८. इदं विष्णुर्वषट्कृते विष्णाविति वैष्णवस्य· 2) प्रतिपत्त्यर्थं कर्म चैतत् Mahâd. 3) न ध्रौवाज्यात्स्विष्टकृतेऽवद्यति आज्यस्य शेषभावरहितत्वात् · आज्यभागादिस्विष्टकृदन्ता [आहवनीय]यजतयो ध्रुवाया भवन्तीत्युक्तम् Mahâd. 4) अथवा आज्यात्स्विष्टकृतो नावदेयम् · कुतः अशेषात् न हि आज्यं शेषरूपमस्ति Ss. 5) ?तह्युपांशु° २.

ततः शेषकार्यम् · यज्जुह्वां चतुर्गृहीतं तन्निःशेषं हुतमिति शेषाभावादेव तत्सम्बन्धिकार्यस्याभावः ।

असंसृष्टामाहुतिभिः ॥२९॥　स्विष्टकृदाहुतिं जुहुयात्　इतराभिराज्यभागप्रधानाहुतिभिः सह असृष्टाम् · अभ्यर्धः (१.१.३.२१.) पृथगसृष्टः ॥

निधाय ॥३०॥　स्विष्टकृद्धोमानन्तरमप उपस्पृश्य स्रुचौ निधाय स्थाने सादयित्वा ॥　॥ तृतीया कण्डिका ॥३॥

अथ पद्धतिः ॥

आश्रावणकाले स्रुचोर्नाभिदेशे धारणं कुर्यात् · यजमानश्च इदं समिद्भ्यो न ममेति त्यागं विधाय एको ममेति त्विषिमानिति च द्वेऽनुमन्त्रणे कुर्यात् । ततोऽध्वर्युः पुनराश्राव्य यजेति प्रेष्यति · पूर्ववद्धोमः · इदं तनूनपातऽइति　इदं नराशंसायेति वा द्वितीयप्रयाजस्य त्यागः · तत्रेयं व्यवस्था　वसिष्ठशुनकात्रिवध्र्यश्वकण्वकश्यपसंकृतिप्रवराणां यजमानानां नराशंसः　एभ्योऽन्येषां तनूनपादिति · त्यागानन्तरं द्वौ ममेति अपचितिमानिति चानुमन्त्रणे । ततः पुनरपि जुह्वमध्युक्त्वाश्राव्य यजेति प्रेष्यति · ततो जुह्वं प्राचीमवतार्य पूर्ववत्सर्वं घृतं जुहोति　इदमिड्भ्यो न ममेति त्यागः · त्रयो ममेति यशस्वीति चानुमन्त्रणे । ततो जुह्वमध्युक्त्वा सव्येन जुह्वं गृहीत्वा दक्षिणेनोपभृतमधोविद्यमानजुह्वग्रमार्गेणोपरिष्टादानीयोपभृता जुह्वाः स्पर्शमकुर्वन्नुपभृतः सकाशादर्धमाज्यं जुह्वां निनयति · ततः पुनरुपभृतमधस्तात्कृत्वा पुनरप्याश्राव्य यजेति होतारं ब्रूयात् · समिद्धे जुहोति　इदं बर्हिषे न ममेति त्यागः · चत्वारो मम　ब्रह्मवर्चसीति चानुमन्त्रणे　पुनर्जुह्वमध्युक्त्वाश्राव्य यजेति प्रेष्य वषट्कृते जुहोति　इदमग्नये सोमायाग्नयेऽग्नीषोमाभ्यामग्नीषोमाभ्यां देवेभ्य आज्यपेभ्यो न ममेति त्यागः · पञ्च मम न तस्येति अन्नादो भूयासमिति चानुमन्त्रणे । ध्रुवो निश्चलः एकस्मिन्नेव स्थाने स्थितः सर्वान्प्रयाजाननतिप्रदीप्तेऽग्निप्रदेशे जुहोति · अथवा प्रतिलोममाहवनीयसंमुखं स्तोकं-स्तोकं गत्वा-गत्वा प्राक्संस्थान्पञ्चसु स्थानेषु प्रयाजान्जुहुयात् ।　ततो दक्षिणपादेन हविःसमीपे प्रत्यागत्योपविश्य जुह्वस्थेन प्रयाजशेषेण जुह्वेव ध्रुवाया आज्यस्थाल्याः पुरोडाशयोरुपभृतश्च क्रमेणाभिघारणं करोति · तत उपविष्ट ए

वाग्नयेऽनुब्रूहीति होतारं प्रेष्यति · ततो ध्रुवायाः स्रुवेणाज्यं जुह्वामवद्यति तूष्णीमिव · तत आज्यस्थाल्यास्तूष्णीं स्रुवेणाज्यं गृहीत्वा आप्यायतामिति मन्त्रान्ते ध्रुवामभिघारयति · एवं चतुरवत्तिनश्चतुर्वारं कुर्यात् पञ्चावत्तिनस्तु पञ्चकृत्वः · एवं चतुरवत्तं कृत्वोत्थायातिक्रम्याश्राव्याग्निं यजेति होतारं प्रेष्यति · उत्तरपूर्वार्धे होमः इदमग्नये । अत्र सर्वत्रानुब्रूहीत्येवमुक्ताध्वर्युविहितमन्त्रादिव्यतिरिक्तं किमपि न वदेत् · होतापि न वदेत् आश्रावणं यावत् · आश्रावणानन्तरं प्रत्याश्रावणात्प्राक् अग्नीदपि नापव्याहरेत् प्रत्याश्रावणव्यतिरिक्तं किमपि न वदेत् · प्रत्याश्रावणानन्तरमध्वर्युः प्राग्यजेति प्रैषात्तद्व्यतिरिक्तं न वदेत् · यजेत्यनन्तरं होता वषट्कारपर्यन्तं याज्यादिव्यतिरिक्तं किमपि न वदेत् यद्यपव्याहरेत्पुनरप्याश्रावणादि कुर्याद्व्याहृतीर्वा जपेदित्यापस्तम्बः । आग्नेयाज्यभागहोमानन्तरं दक्षिणेन पादेन हविःसमीपे आगत्योपविश्य सोमायानुब्रूहीति प्रैषः · पूर्ववच्चतुरवत्तमाज्यं ध्रुवाया गृहीत्वातिक्रम्याश्राव्य सोमं यजेति प्रैषः · दक्षिणपूर्वार्धे होमः इदं सोमायेति त्यागः । अथवा समिद्धतमे अतिशयेन प्रदीप्तऽएवाग्निप्रदेशे आज्यभागयोर्होमः अन्यासामाहुतीनां च । सर्वत्र सव्येन पादेनाग्रतोऽग्रतश्चालितेन होमार्थं गमनम् हुत्वा च तथैव दक्षिणेन पादेन प्रत्यागमनम् । ततः प्रधानहविर्यागः । आगत्योपविश्याग्नयेऽनुब्रूहीति प्रैषः · ध्रुवातः सकृत्स्रुवेणाज्यं गृहीत्वा जुह्वामुपस्तारः · आप्यायतामिति ध्रुवाया अभिघारः · ततः प्रथमपुरोडाशस्य मध्यात्पूर्वार्धाच्च शृतावदानेनाङ्गुष्ठपर्वमात्रं तिर्यक् अवदानद्वयं क्रमेणावदाय पुनर्ध्रुवायाः स्रुवेणोपरिष्टादभिघार्य ध्रुवामाप्याय्य हविषि कृते अवदानस्थाने आज्यस्थालीतः स्रुवेण प्रत्यभिघारयेत् · पञ्चावत्तिनो हविषः पश्चाद्भागात्तृतीयमवदानं गृहीत्वा पञ्चावत्तं सम्पादनीयम् · ततोऽतिक्रम्याश्राव्याग्निं यजेति प्रैषः मध्ये समिद्धतमे होमः इदमग्नयऽइति त्यागः । प्रत्यागत्याग्नीषोमाभ्यामित्युपांशु उक्त्वा अनुब्रूहीति प्रथमस्वरेण प्रैषः · आज्यभागवत् ध्रुवायाश्चतुर्ग्रहणम् पञ्चावत्तिनः पञ्चकृत्वः · अतिक्रम्याश्राव्य अग्नीषोमौ उपांशु यजेति प्रथमस्वरेण मध्ये होमः इदमग्नीषोमाभ्याम् । प्रत्यागत्याग्नीषोमाभ्याम-नुब्रूहीति प्रथमस्वरेण प्रैषः ध्रुवाया जुह्वामुपस्तारः ध्रुवाभिघारणम् द्विती-

यपुरोडाशस्य पूर्ववदवदानम् उपरिष्टादभिघारः ध्रुवाभिघारणम् ज्ञाताभ्यङ्गः · अतिक्रम्याश्राव्याग्नीषोमौ यजेति प्रैषः · प्रदीप्ते मध्ये होमः इदमग्नीषोमाभ्याम् । ततः प्रत्यागत्याग्नये स्विष्टकृतेऽनुब्रूहीति मध्यमस्वरेण प्रैषः · स्रुक्यामुपस्तारः · द्वयोरपि पुरोडाशयोरुत्तरार्धादेकैकमवदानम् पञ्चावत्तिनो द्विर्द्विः · उपरिष्टाद्विरभिघारः · ज्ञाते प्रत्यभिघारणाभावः · उत्थायातिक्रम्याश्राव्याग्निं स्विष्टकृतं यजेति प्रैषः · अग्नेरुत्तरार्धे समिद्धे होमः · स्विष्टकृदाहुतेरितराभिराहुतिभिरग्निमध्ये संसर्गो न कार्यः · ततोऽपामुपस्पर्शनम् · प्रत्यागत्य स्वस्थाने स्रुचोरासादनम् । पञ्चार्षेयाणां जमदग्नीनामाज्यभागादिषु सर्वत्र पञ्चावत्तं भवति · प्रधानयागे तु पुरोडाशस्य पश्चाद्भागात्तृतीयमवदानम् उत्तरार्धात्स्विष्टकृत्यवदानद्वयम् पत्नीसंयाजेष्वपि पञ्चावत्तम् इति विशेषः अन्यत्सर्वं समानम् ॥ ॥३॥

इति तृतीयस्य तृतीया कण्डिका ॥ ॥

संचरमभ्युद्त्य प्राशित्रमवद्यति यवमात्रं पिप्पलमात्रं वा ॥१॥ परिधीनपरेण संचरमद्भिरभ्युद्त्य प्राशित्रहरणे प्राशित्रं ब्रह्मणो भागमध्वर्युर्द्विरवद्यति तच्च पुरोडाशस्य मध्यात् यवप्रमाणं पिप्पलप्रमाणं वा । संचरस्याभ्युक्षणमनुयाजार्थम् अतोऽनुयाजाभावे आतिथ्योपसत्पयस्यागृहमेधीयादौ न भवति · पशौ तु भवति च अङ्गस्विष्टकृद्यागानन्तरम् · सुत्यायां च तृतीयसवनसम्बन्धिसवनीयपुरोडाशस्विष्टकृद्यागानन्तरम् ।

अन्यतरत आज्यम् ॥२॥ तस्य प्राशित्रस्य अन्यतरतः आज्यं भवति उपस्तृणाति वा अभिघारयति वेति · अधस्ताद्वा उपरिष्टाद्वा ।

उभयतो वा ॥३॥[1] उपस्तारेऽभिघारे च · प्राशित्रावदाने उभयत आज्यमवद्यति ।

आग्नेयात् ॥४॥[2] पुरोडाशात्प्राशित्रमवद्यति ।

भागांश्च ॥५॥[3] षडवत्तब्रह्मभागयजमानभागान् आग्नेयादवद्येत् · भा-

---

१) अधस्ताच्चोपरिष्टाच्च · आज्ययोरित्यर्थः Mahâd. २) आग्नेयग्रहणं प्रथमहविष उपलक्षणार्थम् न त्वेकदेवत्योपलक्षणार्थम् · सर्वेभ्यो हविर्भ्य इति कर्कः Mahâd. ३) बहुवचनमग्नीद्ब्रह्मयजमानविषयम् Mahâd.

गानामत्र कीर्तनमात्रम् तेषामवदानक्रममुपरिष्टाद्वक्ष्यति · अयं च तेषां पूर्वपक्ष एव सिद्धान्तस्त्वग्रे भविष्यति ।

अध्वर्युसंचरेण ब्रह्मणे प्रदाय पूर्वेणैकेऽप उपस्पृश्येडां पञ्चावत्तां दक्षिणतो मध्याच्च यावद्धविः स्विष्टकृद्वदाज्यम् ॥ ६ ॥ प्राशित्रमवत्तमध्वर्युसंचरेण परिधीनपरेण ब्रह्मणे समर्प्य आहवनीयं पूर्वेण शाखिनः ततोऽध्वर्युरप उपस्पृश्य पञ्चावत्तामिडामवद्यति यावन्ति हवींषि भवन्ति तेषां सर्वेषाम् प्रथमं दक्षिणस्मात्प्रदेशात् मध्याच्च सर्वहविषां मध्यप्रदेशाच्च · तत्राज्यं स्विष्टकृद्वद्भवति सकृदुपस्तृणाति द्विरभिघारयतीति [1] । इडावदानस्य हविःशेषप्रतिपत्तित्वात् यावद्धविरित्युक्तम् · अप उपस्पृश्येति प्राशित्रस्य रुद्रियत्वादुक्तम् · इडेति संज्ञा ।

यजमानभागं पूर्वार्धाद्दीर्घं प्रशीर्य पुरस्ताद्ध्रुवायाः करोति ॥ ७ ॥ इडावदानानन्तरं भागावदानावसरः । ततश्च पूर्वमग्नीधः षडवत्तमवद्यति तत्र एकस्मिन्वारणे पात्रे उभयत्राघातवति उभयत्रोपस्तीर्यैकैकमवदानमवदायोपरिष्टादभिघार्य षडवत्तं सम्पादनीयम् · ततः पुरोडाशस्यानियतप्रदेशाद्ब्रह्मभागमवद्यति · ततः पुरोडाशस्य पूर्वार्धात् पूर्वस्मात्प्रदेशादणुं दीर्घं च यजमानभागं प्रशीर्य पुरोडाशात्पृथक्कृत्य ध्रुवायाः पुरस्ताद्बर्हिषि करोति निदधाति ।

इडां होत्रे प्रदायाविसृजन्दक्षिणातिक्रामति [2] ॥ ८ ॥ तामवत्तामिडां होत्रे समर्प्य अध्वर्युरविसृजन् तामिडां हस्तेनाविमुञ्चन् होतारं दक्षिणेनातिक्रम्य प्रदक्षिणमुक्तोत्तरपार्श्वेन होतुः पुरस्तादागत्योपविशति प्रत्यङ्मुखः ।

इडां प्रतिगृह्य होतुरङ्गुलीपर्वणीऽअनक्ति ॥ ९ ॥ [3] उपविष्टोऽध्वर्युर्होत्रा समर्पितामिडामादाय इडास्थेनैवाज्येन होतुरङ्गुलीपर्वणी अनक्ति उत्तमं मध्यमं च · पर्वशब्दः संधिवाची काण्डवाची वा ।

अवान्तरेडामादधाति पूर्ववत् ॥ १० ॥ [4] होतुः पाणौ पूर्ववदवान्तरेडामादधाति अवद्यति · तां चेडाया एव · पुरोडाशावदानादेव पञ्चावत्तता · न

---

1) See १.७.४.११. 2) °सृजं दक्षि°१. °सृज दक्षि°३ °सृजन् दक्षि°२. 3) अङ्गुल्यास्तर्जन्याः संधी Mahâd. 4) पूर्ववदित्युपस्तारो द्विरवदानं द्विश्चाभिघारणं चेति पञ्चावत्तस्वरूपसामर्थ्यात् Mahâd.

- ह्याज्यं संसृष्टरूपत्वाद्विवेकेन ग्रहीतुं शक्यतऽइति कर्कः। लेपादुपस्तीर्य लेपाद्भिघारयतीति मानवे।

इडां च ॥ ११ ॥ होतुर्हस्ते आदधाति समर्पयति।

सर्वेऽन्वारभन्ते ॥ १२ ॥ उपहूयमानामिडामिडाशब्दवाच्यं पुरोडाशादिद्रव्यं यत्पात्र्यामवत्तम् तत्सर्वे ऋत्विग्यजमाना अन्वारभन्ते · आपस्तम्बादिसूत्रेष्विडामेव तस्या एव प्रकृतत्वात्[1]।

इडोपहूतेत्युच्यमान[2]ऽआग्नेयं बर्हिषदं करोति ब्रध्न पिन्वस्वायुर्मे धुक्ष्व प्रजां मे धुक्ष्व पशून्मे धुक्ष्व ब्रह्म मे धुक्ष्व क्षत्रं मे धुक्ष्व विशो मे धुक्ष्व योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तस्य प्रजया पशुभिराप्यायस्वेति तं चतुर्धा कृत्वा ॥ १३ ॥[3] तमाग्नेयं पुरोडाशं चतुर्धा कृत्वा बर्हिषदं करोति मन्त्रान्ते बर्हिषि प्रक्षिपति[4]। आग्नेयमेव शाखान्तरात् नाग्नीषोमीयम्।

बर्हिष्दृत्विग्भ्य आदिशति ॥ १४ ॥ पितॄणां संविभागार्थं कृतान् तांश्चतु[र]ः पुरोडाशखण्डान्बर्हिष्यवस्थितानेव यजमानः ऋत्विग्भ्यः आदिशति इदं ब्रह्मण इदं होतुरिदमध्वर्योरिदमग्नीध इति प्रकाशयति · एतच्चाग्नेयकोणास्था[ना]दारभ्य प्रदक्षिणम् · सत्रेषु व्यादेशाभावाच्चतुर्धाकरणाभाव इति कर्कः।

उभौ वाविशेषात् ॥ १५ ॥[5] वा पूर्वपक्षनिरासे · उभावपि पुरोडाशौ प्राशित्रावदानेन भागावदानेन च प्रतिपाद्यौ अविशेषेण हविर्मात्रात्प्राशित्रं भागाश्च श्रूयन्ते यतः। पुरोडाशसंयोगाद्भागाः सांनाय्यस्य न भवन्ति चतुर्धाकरणमपि सांनाय्यस्य न भवति · अत एव तत्सिद्धम् प्राशित्रं हविर्मात्रात् भागाश्च पुरोडाशमात्रात् न चतुर्धाकरणमाग्नेयस्यैवेति · विकृतिष्वपि आग्नेयविकारस्यैव

---

१) होत्रान्वारम्भस्तु शाखान्तरीयः Mahâd. २) viz. होत्रा उच्यमाने See १. ८. १. २४.
३) See Çânkhây. ४. १. २. ४) तूष्णीं बर्हिषि आदधाति Mahâd. See १. ८. १. ४०.
५) उभौ वा पुरोडाशौ चतुर्धा करोति अविशेषश्रवणात् चरितार्थत्वाविशेषात् संस्कारार्थत्वाविशेषात् प्रतिपत्तिसव्यपेक्षत्वादिति याज्ञिकाः। तस्मान्माध्यन्दिनानां स्वश्रुतिसूत्रपरित्यागे शाखान्तरपरिग्रहे मानाभावादुभयोश्चतुर्धाकरणं भवति · आग्नेयं चतुर्धा करोतीत्यादि कर्कलिखनम् तच्छाखान्तरविषयमिति स्पष्टम्। न प्राशित्रभागचतुर्धाकरणानि सांनाय्यस्य तद्विकारस्य [पशोः] च। आह च प्राशित्रभागानाग्नेयाद्धविर्मात्रादिडां तथा सर्वेषां चतुर्धा कुर्याद्धुतिसूत्राशयो यत इति Mahâd.

एकदेवत्यस्य चतुर्धाकरणम् नानेकदेवत्यस्य भागास्तु सांनाय्यव्यतिरिक्तसर्वहविषां भवन्ति । ब्रह्मभागादयोऽप्रतिषिद्धत्वादिडावदवदेयाः · आग्नेयादेव भागा इति मानवे तैत्तिरिसूत्रे च · अनेकयजमानके एक एव यजमानभागः ।

अत्र पितर इति (२.३१.) यजमानो जपति ॥ १६ ॥ अग्रिमसूत्रे (१७) विसर्गस्य वक्ष्यमाणत्वात् तस्य चान्वारम्भपूर्वकत्वात् अन्वारम्भस्य च याजमानत्वात् चतुर्धाकृतं पुरोडाशमालभ्य यजमानोऽत्र पितरो मादयध्वमिति संहितास्वरेण जपति पित्र्यत्वान्मन्त्रस्य प्राचीनावीतं कृत्वा ।

विसृज्यामीमदन्तेति (२.३१.) ॥ १७ ॥ [1] चतुर्धाकृतं पुरोडाशं विसृज्य मुक्त्वा प्राचीनावीत्येव अमीमदन्तेति मन्त्रस्वरेण जपति · अनयोर्मन्त्रयोरुच्चारणानन्तरं सव्यं कृत्वापामुपस्पर्शनम् पित्र्यत्वात् ।

एकैकमाहरति ॥ १८ ॥ एकैकं भागं भागिने आहरति आदेशक्रमेण समर्पयति इदं ब्रह्मणे इदं होत्रे इदमध्वर्यवे इदमग्नीधऽइति · भक्षणार्थम् न परिक्रयार्थम् · पक्वान्नोपहारस्य भक्षणार्थत्वप्रसिद्धेः ।

द्यावापृथिव्योरुपह्वानेऽग्नीधे षडवत्तम् ॥ १९ ॥ होत्रा उपहूते द्यावापृथिवीऽइत्येवं पठ्यमाने यजमानोऽग्नीधे षडवत्तं ददाति · आङ्पूर्वो दधातिः (१.८.१.४१.) अन्यत्र स्थापने प्रयुक्तः अत्र त्वर्पणे द्रष्टव्यः । न चैष इडाभागः किं तर्ह्यन्य एवायमग्नीद्भागः · ब्रह्मभागयजमानभागयोरपीडाभेदः प्रसिद्धः ।

प्राश्नात्युपहूता पृथिवीति (२.१०.) ॥ २० ॥ [2] तत्षडवत्तमग्नीत्प्राश्नाति । अथ द्वितीयमुपहूतो द्यौरित्येवं शाखान्तरे श्रुतमपि [3] सूत्रकृता नोपबद्धम् वाक्यभेदानामस्यार्थस्य सिद्धत्वात् तेनैवानुष्ठेयम् ।

आशासाने मयीदमिति (२.१०.) यजमानो जपति ॥ २१ ॥ [4] भूयसि हविष्करणऽउपहूत इत्येवमाशीःप्रार्थनमाशासनम् (१.८.१.३३.) एषा वाऽआशीरित्युक्तत्वात् (१.८.१.३६.) · आशासाने होतरि यजमानो मयीदमिति स्वरेण जपति । अनेकयजमानके सर्वेषां जपः प्रत्येकं जपेऽनूहः ।

[1] प्रोषिते यजमानेऽध्वर्युरेव कर्तृत्वम् Mahâd. [2] न्यायेन एक एव मन्त्रः प्राशने · एवमनुक्रमणिकाकारोऽपि उपहूता द्यावापृथिव्यमिति Mahâd. [3] but it is found also in the Mâdhyandina school at २. ११. [4] उपहूतोऽयं यजमान इति पठ्यमाने Mah.

उपहूतां प्राश्नन्ति युक्ताः ॥ २२ ॥ उपहूतामिडां सर्वे ऋत्विजः प्राश्नन्ति ।

यजमानश्च ॥ २३ ॥ इडां प्राश्नाति ।

पवित्रयोर्मार्जयन्तेऽपरेण वेदिं सुमित्रिया न इति (६.२२.) ॥ २४ ॥ वेदिमपरेण उपविष्टाः पवित्रयोरेव स्थिताभिरद्भिरात्मानं शोधयन्ति · आधारभूते पवित्रे तत्राधेयभूता आपः आप इति मन्त्रलिङ्गात् शाखान्तराच्च · शाङ्खायनब्राह्मणे वैतानसूत्रे च अद्भिः · अपरे तु तृतीयार्थे सप्तमी पवित्राभ्यां पूता इति कर्काचार्या हरिस्वामिनश्च [1) ।

यजमानस्य प्राणापानौ पातमिति प्रस्तरे ते करोति ॥ २५ ॥ ते पवित्रे प्रस्तरमध्ये प्रवेशयति · अनेकयजमानके यजमानयोः यजमानानाम् ।

तूष्णीं वा ॥ २६ ॥ अत्र वा ब्रह्मा प्राश्नाति ॥ २७ ॥ [2)

भागमस्मै परिहरति ॥ २८ ॥ [3) परिहरणं चाहवनीयं पूर्वेण प्रदक्षिणं नयनम् · अयं च चतुर्धाकरणभागव्यतिरिक्तः तेषां दानस्य पूर्वमेव विहितत्वात् ।

यजमानभागं चाप्रोषिते ॥ २९ ॥ [4) गार्हपत्यमपरेण नीत्वा व्यवायपरिहाराय · ब्रह्मा चाध्वर्युसमर्पितं भागं प्रतिगृह्य प्राशित्रे निदधाति लाट्यायने दर्शनात् । प्रोषिते यजमाने तद्भागो वेदिमध्य एव तावत्तिष्ठति यावत्प्रस्तरहोमः तदनन्तरं हूयते ।

अन्वाहार्यमभिघार्योद्वास्यान्तरा ब्रह्मयजमानौ हृत्वा वेद्यां निधायालभते प्रजापतेर्भागोऽस्यूर्जस्वान्पयस्वान्प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाह्यूर्गस्यूर्जं मे धेह्यक्षितिरसि मा मे क्षेष्ठा अमुत्रामुष्मिंलोकऽइह चेति ॥ ३० ॥ [5) भागपरिहरणानन्तरमध्वर्युरन्वाहार्यमभिघार्य स्थालीस्थेनाज्येनोपरि निक्त्वा [6) उत्तरत उद्वास्य दक्षिणाग्नेरुपरिष्टादुत्तार्य गार्हपत्यदक्षिणाग्न्योरन्तरालेन

---

1) At १.८.१.४३. See Edit. pag. १२७. 2) अथ वास्मिन्काले ब्रह्मा प्राशित्रं प्राश्नाति · भक्षार्थं पूर्वं निहितं चेत् (२.२.१९.) अत्राग्नेऽइति (२. ११.) ब्रह्मा प्राश्नाति · माध्यन्दिनानामत्रैव प्राशनं युक्तं शाखानुग्रहात् Mah. 3) आहवनीयं पूर्वेण ब्रह्मभागं परिहृत्य अस्मै समर्पयति भक्षार्थम् Mahâd. 4) अप्रोषिते अकृतप्रवासे Ss. यजमानाय परिहृत्य प्रयच्छेत् भक्षस्तु व्रतविसर्गान्ते Mah. 5) Kâṇva, see Vâj. S. pag. ५८. Çâṅkhây ४. ९. ४. 6) अन्वाहार्यं दक्षिणाग्निपक्वं चरुं स्थाल्याज्ये नाभिघार्य Mahâd.

प्रत्यङ्गीत्वा दक्षिणाग्नेर्दक्षिणेन अन्तरा ब्र॰नौ कृत्वा ब्रह्मयजमानयोरन्तरालेन नीत्वा[1] तत्रापि यजमानं दक्षिणेन ब्रह्माणमुत्तरेण पूर्वेणाहवनीयम् प्रणीतोत्कराबन्तरा कृत्वा वेदिमध्ये आसाद्य आलभतेऽध्वर्युः । अत्रऽविकृतौ ऊर्गसीत्यस्य स्थाने दक्षिणाद्रव्यवाचिपदप्रयोगः कर्तव्यः आग्रयणे प्रथमजो गौरसीति दाक्षायणे च हिरण्यमसीति · बहुष्वपि द्रव्येषु द्वन्द्वैकवद्भावेनैकवचनान्तस्यैव प्रयोगः प्रथमजगवधेन्वृषभौष्टाराश्वमसीति · द्विगुसमासैकवद्भावेन वा त्रिगवमसीति । अभिघारणं त्वन्वाहार्यस्यैव अन्येषामनुपयोगात् · स्वादिम्नेत्योदनोऽभिघार्यते न चान्येषां स्वादिम्ना प्रयोजनम् । आलम्भस्तु गवादेरपि भवति । गोस्तु ब्रह्मयजमानयोरन्तरा हरणं न भवति विरोधात् · वासस्तु प्रवर्तते विरोधाभावादिति कर्कः ।

सा दक्षिणा ॥ ३१ ॥[2] एषोऽन्वाहार्य उक्तः सात्र दर्शपूर्णमासयोर्दक्षिणा ज्ञेया · समविभागेन ऋत्विग्भ्यो दानम् · ब्राह्मणा अयं व ओदनः प्रतिगृह्णीतेति दानमन्त्रः । दानमात्रं कार्यम् न दर्भाक्षतोदकपूर्वम् · प्रतिग्रहस्तूष्णीम् ओंकारेण वा द्यौस्त्वा ददात्विति गृह्योक्तेन वा (पारस्कर॰ ३.१५.) ।

उदगुद्वासयति ॥ ३२ ॥ दानानन्तरं वेदिमध्यादन्वाहार्यमुदीच्यां दिश्युद्वासयति बहिर्निष्काशयति शाखान्तरात् ।

हविश्च ॥ ३३ ॥[3] यदग्नीषोमीयसांनाय्यादिकं शेषभूतम् चतुर्धाकरणं यस्य न भवति तद्धिष्टं वेदेर्बहिर्निष्काशयति ॥ ॥ चतुर्थी कण्डिका ॥ ४ ॥

अथ पद्धतिः ॥

ततः स्फ्यं गृहीत्वाद्भिः संचरं होमार्थगमनागमनमार्गमभ्युक्ष्य प्राशित्रहरणे प्राशित्रमवद्यति · तत्र प्राशित्रहरणं सव्ये गृहीत्वा आज्यस्थाल्या उपस्तीर्य पुरोडाशमस्तकाद्वे शकले यवमात्रे पिप्पलमात्रे वा अवदाय द्वितीयपुरोडाशस्यापि तथैवावदायोपरिष्टादभिघारयेत् · अत्रोपस्ताराभिघारयोरेकं[4] कुर्यात् उभयं वा ।

---

[1] यजमानस्य बहिर्भावेन ब्र॰नयोर्मध्ये कृत्वा Mahâd. [2] स दक्षिणेति वक्तव्ये सेत्युक्तम् दक्षिणागतलिङ्गान्तर्भावेन Mahâd. [3] पुरोडाशादि Mahâd. [4] ?॰स्ताराद-भिघा॰ ?

ततः प्राशित्रं द्वितीयेन पात्रेणापिधायाध्वर्युसंचरेण होमार्थगमनागमनमार्गेणैव तत्प्राशित्रं ब्रह्मणे प्रदायाहवनीयं पूर्वेण वा प्रदायाप उपस्पृशेत् । ब्रह्मा चाध्वर्युणावदीयमानं समर्प्यमाणं वा प्राशित्रं मित्रस्य त्वा चक्षुषेति[1] प्रतीक्षते · ततः सपात्रं प्राशित्रं देवस्य त्वा॰भ्यां प्रतिगृह्णामीति (२.११) अञ्जलिना प्रतिगृह्णाति · अवदीयमानं प्रेक्षतऽइत्यापस्तम्बः समर्प्यमाणमिति मानवे अञ्जलिना प्रतिगृह्य प्राग्दण्डं सादयतीत्याश्वलायनः · ततो दक्षिणांसे स्तृतानि बर्हींष्यपोह्य पृथिव्यास्त्वा नाभाविति मन्त्रेणानास्तृतभूमौ सपात्रं सादयति · पुनरनामिकाङ्गुष्ठाभ्यां देवस्य त्वेति प्राशित्रहरणादवत्तं द्रव्यमादायाग्नेष्ट्वास्येनेति (२.११) दन्तैरचर्वयन्प्राश्नाति · आचम्य प्राशित्रहरणे पात्रेऽअद्भिरुत्करे प्रक्षाल्य या अप्स्वन्तरिति[2] मन्त्रेण नाभिमालभते । ततोऽध्वर्युरिडापात्रीं गार्हपत्ये प्रतप्य तस्यां स्थाल्या एवोपस्तीर्य पुरोडाशस्य दक्षिणतो मध्याच्चावद्यति · एवमेव द्वितीयपुरोडाशस्य दक्षिणतो मध्याच्चावदाय स्थाल्या एवोपरिष्टाद्द्विरभिघारयति · ततः षडवत्ते स्थानद्वये स्थाल्या एवोपस्तीर्याग्नेयपुरोडाशस्यानियतप्रदेशादेकैकमवदाननमुभयत्रावदाय स्थाल्या एवोपरिष्टादभिघारयति · तत आग्नेयपुरोडाशादेवानियतस्थानाद्ब्रह्मभागमवदाय ध्रुवायां निदधाति · तत आग्नेयपुरोडाशस्य पूर्वार्धाद्यजमानभागमणुं दीर्घं प्रशीर्य शेषयित्वा[3] ध्रुवायाः पुरस्ताद्बर्हिषि निदधाति ध्रुवाग्रस्योपरि निदधातीति कर्कः । प्रधानावदानापेक्षया महत्स्विष्टकृदवदानम्[4] तदपेक्षया महदिडावदानम् ऐडापेक्षया महच्चतुर्धाकरणानाम् दैवतसौविष्टकृतैडचातुर्धाकरणिकानामुत्तरमुत्तरं ज्याय इति वचनात् । ततः प्रत्यङ्मुखो भूत्वा होत्रे इडां प्रदाय हस्तेनापिमुञ्चन्होतारं प्रदक्षिणीकृत्य होतुरग्रे प्रत्यङ्मुख उपविश्य होत्रा समर्पितामिडां प्रतिगृह्येडाया एव स्रुवेणाज्यमादाय होतुः प्रादेशिन्या उत्तमे पर्वणि मध्यमे च स्रुवेणैवानक्ति · पर्वशब्दः संधिवाची काण्डवाचीति केचित् । ततो होतुर्हस्ते इडाया एव पञ्चावत्तमवद्यति · होता च पञ्चममवदानं स्वयमेवादत्ते · अत्र पुरोडाशावदानादेव पञ्चावदानानि ग्राह्याणीति कर्कः · शाखान्तर-

1) Kâṇva, see Vâj. S. pag. ५८.—The paddhati gives here what it has omitted at २.२.१५ foll. 2) Kâṇva 3) ?? शेषयित्वा १ 4) महास्वि॰ १

सूत्रेषु लेपादुपस्तारः द्विरवदानम् लेपाद्भिरभिघारणमिति · काठके च लेपाद्भिरुपस्तारः सकृत्पुरोडाशावदानं लेपाद्भिरभिघारणमिति । तत इडां पुनर्होत्रे ददाति · उपह्वयमानायां सर्वेऽन्वारभन्ते होतारमिति कर्कः इडामित्यन्ये शाखान्तरसूत्रेषु च · इडाशब्देनेडापात्र्यामवत्तं पुरोडाशादि द्रव्यमुच्यते न तु पात्री । तत इडोपहूतेति होत्रा पठ्यमाने आग्नेयं पुरोडाशं चतुर्धा कृत्वा ब्रध्न पिन्वस्वेति मन्त्रान्तेऽध्वर्युर्बर्हिषि निदधाति । ततो यजमान आग्नेयादिविदिक्षु चतुरो भागान्निधाय प्रदक्षिणमाग्नेयस्थानादारभ्य इदं ब्रह्मणः इदं होतुः इदमध्वर्योः इदमाग्नीध्रस्येति ऋत्विग्भ्य आदिशति ऋत्विक्सम्बन्धित्वेन प्रकाशयतीत्यर्थः · ततो यजमानोऽपसव्यं कृत्वा दक्षिणाभिमुखो भागानालभ्यात्र पितर इति (२.३१) स्वरेण जपति · ततो भागान्विसृज्यापसव्येनैवामीमदन्तेति (२.३१) स्वरेण जपति · ततः सव्यं कृत्वाप उपस्पृश्य ऋत्विग्भ्यो भागान्यथादिष्टं समर्पयति इदं ब्रह्मणे इदं होत्रे इदमध्वर्यवे इदमाग्नीध्रायेति । तत उपहूते द्यावापृथिवीऽइति होत्रा पठ्यमानेऽग्नीधे षडवत्तं समर्पयति · उपहूतोऽयं यजमान इत्यस्मिन्होत्रा पठ्यमाने मयीदमिति (२.१०) मन्त्रं स्वरेण यजमानो जपति । अत्र चतुर्धाकरणमाग्नेयादेव अन्यत् प्राशित्रेडाषडवत्तब्रह्मयजमानभागानुभाभ्यामप्यवद्येदिति कर्कः · इडाप्राशित्रयोरवदानमुभाभ्याम्[1] तद्व्यतिरिक्तं सर्वमाग्नेयादेवेत्यन्ये सर्वेषु शाखान्तरसूत्रेषु च । ततः सर्वे प्रणीतोत्करावन्तरेण निष्क्रम्य समर्पणक्रमेण भक्षयन्ति · अग्नीत्प्रथमं चतुर्धाकरणभागं प्राश्याचम्योपहूता पृथिवीति (२.११) मन्त्रेण प्रथमावत्तं षडवत्तभागं प्राश्नाति तत आचम्य द्वितीयमुपहूतो द्यौरिति (२.१२) तत इडां भक्षयति · अन्येऽपि सर्वे प्रथम चतुर्धाकरणभागं प्राश्येडां प्राश्नन्ति · यजमानोऽपीडायामवत्तस्य पञ्चमं भागं भक्षयति न न्यूनाधिकम् · ततः सर्वे आचम्य यथागतं प्रत्यागत्य वेदेः पश्चादुपविश्य ब्रह्मादिक्रमेण सुमित्रिया न इति (६.२२) पवित्रयोरवस्थिताभिरद्भिर्मार्जयन्ते · ततोऽध्वर्युर्यजमानस्य प्राणापानाविति पवित्रे प्रस्तरमध्ये प्रवेशयति तूष्णीं वा प्रस्तरे करोति । अत्रावसरे वा ब्रह्मा प्राशित्रप्राशनं नाभ्यालम्भनान्तं करोति । ततोऽध्वर्युर्ब्रह्मभागमाहवनीयं पूर्वेण प-

1) ? इडापात्र्यो॰ ?

रिहृत्य ब्रह्मणे समर्पयति · ब्रह्मा च तं भागं प्रतिगृह्य प्राशित्रे निदधाति · ततोऽध्वर्युर्यजमानभागमपरेणा गार्हपत्यं परिहृत्य यजमानाय परिसमर्पयति अप्रोषिते यजमाने · प्रोषिते तत्रैव तिष्ठति · यजमानस्तु तं भागं बर्हिष्येव निदधाति · तथा चाश्वलायनः मार्जयित्वास्मिन्ब्रह्मभागमवदधाति पश्चात्कुशेषु यजमानभगमिति । ततोऽध्वर्युरन्वाहार्यं स्थाल्याः स्रुवेणाभिघार्योदगुद्वास्य गार्हपत्यदक्षिणाग्न्योरन्तरालेन दक्षिणाग्नेर्दक्षिणेन च नीवा ब्रह्मयजमानयोरन्तरालेन हृत्वा तत्रापि यजमानाद्बहिर्ब्रह्माणामन्तरेणाहवनीयं पूर्वेण संचरेणानीय वेद्यां निधाय प्रजापतेर्भागोऽसीत्यालभते । ततो यजमानो ऽस्याः पौर्णमासेष्टेः समृद्ध्यर्थमन्वाहार्यं दक्षिणां ब्रह्मणे होत्रे अध्वर्यवे अग्नीधे च समविभागेनाहं सम्प्रददे ब्रह्मन्यस्ते भागः स प्रतिगृह्यताम् होतर्य॰ह्यताम् अध्वर्यो य॰ह्यताम् अग्नीद्य॰ह्यताम् · द्यौस्त्वा ददावितिति सर्वेषां प्रतिग्रहणमन्त्रः · ब्राह्मणा अयमोदनः प्रतिगृह्णीतेति शाखान्तरे दानमन्त्रः पठितोऽस्ति । ततस्तमन्वाहार्यमुदगुद्वासयति पात्र्यादिस्थं हविरुच्छिष्टं चोदगुद्वासयति ॥ ॥४॥

इति तृतीयस्य चतुर्थी कण्डिका ॥

समस्योल्मुके समिधमादायाह ब्रह्मन्प्रस्थास्यामि समिधमाधायाग्निमग्नीत्संमृड्ढीति ॥१॥ अध्वर्युरुल्मुके समस्य आहवनीयमध्य एव प्रक्षिप्याहवनीयेन मिश्रयित्वा[1] ततः प्राक्परिशेषितां समिधमादाय[2] ब्रह्मन्प्रस्थास्यामीति ब्रह्माणं प्रत्याह ब्रवीति · ततः समिधमाधायेत्यादिकमग्नीधं प्रत्याह · अत एव प्रैष्यभेदात् ब्रह्मन्प्रस्थास्यामीत्यत्रावसानम् ततः समिधमाधायेत्यादिकम् · एवं चैतौ द्वौ प्रैषौ · तत्र एकोऽनुयाजार्थः ततश्च अनुयाजाभावे आतिथ्यापयस्यागृहमेधीयोपसदादौ न भवति · अग्निसंमार्गस्त्वनुयाजाभावेऽप्यग्निसंस्कारकत्वादातिथ्यादौ प्रवर्तत एव तदर्थश्च प्रैषोऽपि । गृहमेधीये तु न प्रवर्तते सांतपनीयातन्त्रमध्यपातात् । समिदादानमाधानार्थम् न तु प्रैषार्थोऽयमुपग्रहः ततश्चानुयाजाभावे तस्या अभावादेवादानाभावः । उल्मुकसमासश्चानुयाजार्थ आहवनीय-

---

१) आहवनीये एकीकृत्य Mahâd. २) उपवेषेण परिशेषितां Mahâd. See ३.१.११.

संस्कारः · अतश्च समासविस्मरणे अनुयाजसमाप्त्यनन्तरं पुनरसमासः । वरुणप्रघासेषु ब्रह्मन्प्रस्थास्यावः समिधावाधायाग्नीऽ अग्नीत्संमृड्ढीत्यूह्यः [1] · दशाङ्कतिपन्ने ऽवभृथेष्टावपोऽग्नीत्संमृड्ढीत्यूह्यः · षडाङ्कतिपन्ने च संमार्ग एव न भवति ।

एषा तऽइति (२.१४) होतानुमन्त्रयते ॥ २ ॥ [2] होता तां समिधमनुमन्त्रयते । प्रैषश्रवणानन्तरं चाग्नीत्तां समिधमिध्मकाष्ठवदुपामाहवनीयेऽभ्याद्धाति · ततस्तस्या अनुमन्त्रणम् ।

अज्ञानति यजमानः ॥ ३ ॥ अनुमन्त्रणं कर्तुं होतरि अज्ञानति यजमानः एषा तऽइति समिधमनुमन्त्रयते । अनेकयजमानके प्रस्थास्यामः अग्नीनग्नी॰ प्रतिष्ठत एता वोऽग्नयः समिधस्ताभिर्वर्धध्वं चा च प्यायध्वमित्यूह्यः · वरुणप्रघासेषु एते वामग्नी समिधौ ताभ्यां वर्धेथां चा च प्यायेथामिति · कर्कमते त्वम्निपदस्य कुत्राप्यूह्यो न भवति [3] ।

संमार्ष्टि पूर्ववदपरिक्रामꣳ सकृत्सकृत्ससृवाꣳसमिति (२.१४) ॥ ४ ॥ [4] अग्नीदग्निम् दक्षिणपश्चिमोत्तरमध्येषु चतुर्ष्वप्यग्निप्रदेशेषु · तेन च तं विरजस्कमुज्ज्वलं करोति · अपरिक्रामम् एकत्र उत्तरत स्थित एव । अग्ने वाजजिदिति तत्र मन्त्रे ससृवांसमिति विशेषः · दशाङ्कतिपन्ने अवभृथे पूर्ववदूह्यः आपो वाजजितो वाजं वः सस्नुषीर्वाजजित इति ॥

ब्रह्मानुज्ञातोऽनुयाजैस्त्रिभिश्चरत्यौपभृतꣳ समानीय ॥ ५ ॥ ब्रह्मणा ओं प्रतिष्ठेत्येवमनुज्ञातोऽध्वर्युरौपभृतमाज्यं सशेषं जुह्वां समानीय त्रिभिरनुयाजैः चरति ।

अतिक्रम्याश्राव्याह देवान्यजेति ॥ ६ ॥ [5] समानयनानन्तरं जुहूमध्युह्य अतिक्रम्य यजतिदेशं गत्वा · अतिक्रम्याश्राव्येत्यनेन यजतित्वेन प्राप्तपुरोऽनुवाक्यानिरासः ।

यज-यजेत्युत्तरौ ॥ ७ ॥ उत्तरौ द्वावनुयाजौ यज-यजेत्येवं प्रेष्यति · प्रथम ऽएव देवान्यजेति ।

---

[1] वरुणप्रघासे ब्रह्मन्प्रस्थास्यावः समिधावाधायेति सम्प्रदायः न कर्कः · अग्नीऽ अग्नीत्संमृड्ढीति कर्को न सम्प्रदायः · सम्प्रदायमतेऽवभृथेष्टावपोऽग्नीदित्यूहः Mah. [2] वरुणप्रघासेषु एते तेऽअग्ने समिधौ ताभ्यामित्यूहः Mahâd. [3] ? ॰व्यूहेन २ [4] इध्मसंनहनैरनुपरिधि · न त्रिस्त्रिः Mahâd. See ३.१.१३. [5] अतिक्रम्यादिग्रहणमनुवाचनव्युदासार्थम् अथ यदपुरोऽनुवाक्यका अनुयाजा भवन्तीति श्रुतेः (११.४.१.१२.) Mahâd.

देवान्देवानिति वा सर्वत्र[1] नियमशब्दात् ॥ ८ ॥[2] देवान्यजेत्येवाध्वर्युरा-हेति (१.८.२.१४.) नियमात् नियमप्रतिपादकस्यैवशब्दस्य श्रवणात् ।

विकृतिदर्शनाच्च ॥ ९ ॥ विकृतावुत्तरयोरप्यनुयाजयोर्देवान्यजेत्यस्य दर्श-नात् प्रकृतावपि सर्वेष्वेवं प्रैषो भवतीत्यवसीयते · यत्तु वरुणप्रघासेषु यज-य-जेति श्रवणम् तद्गुणविधानार्थमेकदेशानुवाद इति पितृभूतिः · प्रकृतौ शाखान्त-राद्विकल्पः[3] वरुणप्रघासेषु पुनर्यज-यजेति वचनं तस्यैव प्रयोगनियमार्थमि-ति कर्कः ।

प्रतीचो जुहोति ॥ १० ॥ एतांस्त्रीननुयाजानध्वर्युः प्रत्यक्संस्थाञ्जुहोति । अनुवृत्तिलोभेन प्रसङ्गादाह ·

उपसत्सु च ॥ ११ ॥ ज्योतिष्टोमे उपसत्संज्ञास्विष्टिषु चाग्निसोमविष्णुदे-वतयागेषु प्रत्यक्संस्थान्होमान्करोति[4] । प्रयाजवत्कर्तुरप्यपसरणे प्राप्ते सत्याह ·

ध्रुवः ॥ १२ ॥ अध्वर्युर्निश्चल एकत्र स्थित एव त्रीनप्यनुयाजान्प्रत्यक्सं-स्थाञ्जुहोति न प्रतिहोमं प्रत्यगपसरणम् ।

चतुर्थं समानीय प्राचीम् ॥ १३ ॥ तृतीयानुयाजहोमानन्तरमुपविश्यौप-भृतं सर्वं जुह्वां समानीय चतुर्थहोमं करोति · प्राक्संस्थामाहुतिम् · यजतिस्था-नादित्योत्तरत उपविश्य तद्धि जुहोतीनां स्थानम् । तच्चतुर्थग्रहणमस्य होमस्या-नुयाजाङ्गत्वप्रज्ञप्त्यर्थम् · अन्यथा पूर्वाघारवदपूर्वोत्पादके स्वतन्त्रं होमान्तरं स्यात् · अङ्गत्वे तु सत्यनुयाजसद्भावे भवति तदभावे च न भवति । अनुयाजान्ते स्वरुं जुहोतीति (६.१.१२) स्वरुहोमोऽपि साङ्गानुयाजोत्तरकालं भवति । अथवा देवा-नामेव देवतात्वमस्मिन्होमे यथा स्यादित्येवमर्थं चतुर्थग्रहणम् · मन्त्राभावेऽपि स्वाहाकारेण होमः कर्तव्यः ।

अभिचरन्ननुयाजानुमन्त्रणमशन्यमुं जहि ह्राद्वन्यमुं जह्युल्कुष्यमुं जहीति ॥ १४ ॥ अध्वर्युरेव समाख्यानात् पुरुषयोगाभावाच्च ।

---

१) देवादेवा॰३ देवांदेवान्सर्वत्र १.२.　२) त्रिष्वप्यनुयाजेषु Mahâd. देवान्यजेत्येव देवं देवमिति सर्वेषु होतेति (१.८.२.१४.) Ss.　३) ? शाखान्त॰ २.　४) प्रधानहोमान् Mahâd.　५) प्रत्यग्घोमेऽभिक्राम्याभिक्राम्ये(ति) प्राप्ते ध्रुव इति नियम उच्यते Mahâd.

एवं प्रवृद्धौ समं विभजेत् ॥ १५ ॥ [1] विकृतौ वरुणप्रघासेषु पशौ चानुयाजप्रवृद्धौ एतानि त्रीण्यनुमन्त्रणानि समं विभजेत् ।

स्वस्थानान्त्येन वोपायित्वात् ॥ १६ ॥ वा पूर्वपक्षनिरासे · स्वस्थाने यो ऽन्त्यः स स्वस्थानान्त्यः तेनागन्तूनामनुमन्त्रणं कुर्यात् तस्य स्वस्थानान्त्यस्य हि स्थानमुपयन्त्यागच्छन्त्यागन्तवः अतस्तत्स्थानमापन्नास्तद्धर्मं लभन्ते । प्रथमानुयाजबर्हिषोऽनन्तरं द्वितीयस्य नराशंसस्य स्थानम् तस्मिन्द्वितीयस्य स्थाने देवीर्द्वार इत्यादयः षडागन्तवः पठिताः [2] ततः सप्तमो नराशंसः · तेनैष नराशंसो द्वाःप्रभृतीनां सप्तानामन्त्यः · अत एतेषां नराशंसानुमन्त्रणेन ह्वाउनीत्यनेनानुमन्त्रणम् · द्वितीये स्थाने एकत्र सप्तानां होमश्च कार्यः । ततस्तृतीयस्य स्विष्टकृतः स्थाने देवो वनस्पतिर्देवं बर्हिरिति द्वौ वैकृतौ पठितौ भवतो देवोऽग्निः स्विष्टकृदिति प्रकृतोऽन्त्यः अतो वनस्पतिप्रभृतीनामसौ स्वस्थानान्त्यः · अत एतेषां तृतीयस्यानुमन्त्रणेनोल्कुषीत्यनेनानुमन्त्रणम् तृतीयस्थाने होमश्चेति सिद्धम् । विकृतौ चानुयाजसंख्या प्राकृतानुयाजाभ्यासेनैव पूरणीया तस्या उत्पन्नशिष्टत्वेनोत्पत्तिशिष्टया त्रिसंख्यया सह विकल्पसमुच्चयबाधानुपपत्तेः · अतो ऽभ्यासेनैव पूरणीया · तस्मादत्र द्वितीयतृतीययोरभ्यासेन पूरणं युक्तम् । तदुक्तम् · अनुत्पत्तौ तु या संख्या साभ्यासेनैव पूर्यते इष्टस्तेनानुयाजानामभ्यासो विकृताविति तत्रान्त्याभ्यास इष्येत तस्मात्पाठो यदान्तरा [3] सति त्वन्तरापाठे तु नान्त्यस्याभ्यास इष्यते · यतो वैकृतानां सप्तानां पठनादनन्तरं मध्ये नराशंसः पठितः अतस्तत्पूर्वेषां नराशंसधर्मसम्बन्धस्तत्स्थानापन्नत्वात् ततः परेषां तूत्तमस्येति · प्रयाजेषु तु वैकृतमध्ये प्राकृतस्य पाठो नास्ति किंतु चतुर्थानन्तरं सर्वे वैकृताः पठिताः ततोऽन्ते स्वाहाकारः पञ्चमः पठितः तेन तत्रान्त्यस्यैवाभ्यासो युक्तः सर्वेषां तत्स्थानापन्नत्वादिति सर्वमनवद्यम् । अत्रेयं कृत्वा-चिन्ता · अनुमन्त्रणं हि विकृतौ न प्राप्नोत्येव तस्याक्रत्वर्थत्वेन विकृतावनपेक्षितत्वात् · न च वानस्पत्यचमसन्यायः तत्र हि वानस्पत्यचमसः क्रत्वपेक्षयैव प्र-

---

[1] यथा प्रथमत्रिके तथा द्वितीये तथा तृतीयेऽनुमन्त्रणमित्यर्थः Mahâd. [2] ? पतिताः २ [3] ? यन्नान्तरा ?

वृत्तः इह त्वनुमन्त्रणानिबन्धनोऽभिचारो नानुयाजनिबन्धनः अनुमन्त्रणं च पुरुषार्थत्वान्न क्रत्वपेक्षया गृह्यते · अतो न्यायोपप्रदर्शनार्थं कृत्वा-चिन्तैवेयम् । अथवाभ्यस्यमानानां होमस्थानादिसम्बन्धनिर्णयार्थमिदमधिकरणम् · तेन द्विती-यप्रभृतीनां नराशंसान्तानां द्वितीयस्थाने होमः ततो वनस्पतिप्रभृतीनामन्त्यस्य स्थानऽइति सिद्धम् । अत्राहुः पितृभूत्याचार्याः अनुमन्त्रणस्य पुरुषार्थत्वाद्विकृता-वप्रवृत्तेर्वचनात्प्रवृत्तिः कृत्वा-चिन्ता वेति ।

एत्य जुहूपभृतौ व्यूहति ॥ १७॥ यजतिस्थानादागत्य स्रुचौ स्वस्थाने सा-दयत्यध्वर्युः ततो यजमान एत्य स्वस्थानाद्वेदेः पश्चादागत्य जुहूपभृतौ व्यूहति · ऊह वितर्के अत्र प्रेरणे द्रष्टव्यः विविधम् अन्योऽन्यविपरीतं प्रेरयति · जु-हूमन्यस्यां दिशि उपभृतमन्यस्यामिति विशब्दस्यार्थः । अनेकयजमानके इतरा-न्वारब्ध एक एव ।

अग्नीषोमयोरिति (२.१५) जुहूं प्राचीं दक्षिणेनोत्तानेन ॥ १८॥ प्रस्तरा-त्प्राचीं प्रेरयति · अत्राग्नीषोमग्रहणं मन्त्रे न्यायप्राप्तप्रधानदेवतामात्रोपलक्ष-णार्थम् ।

अग्नीषोमौ तमितीतरेणेतरां (२.१५) नीचा प्रतीचीम् ॥ १९ ॥ सव्येन न्युब्जेन प्रतीच्यां दिशि बहिर्वेदि प्रेरयति प्रत्यगग्रामेव[1] सतीमित्यर्थः । अत्रैवा-ग्नीषोमग्रहणं मन्त्रे न्यायप्राप्तप्रधानदेवतामात्रोपलक्षणार्थम् · ततश्चैवं प्रयोगः अग्नेरग्नीषोमयोरग्नीषोमयोरुज्जितिमिति अग्निरग्नीषोमावग्नीषोमौ तमपनुदन्त्वि-ति । अत्र मतभेदः · प्रैषव्यतिरिक्तस्य सर्वस्योपांशुत्वपक्षे उपांशुयाजपुरोडाशदेव-ताभूतयोर्द्वयोरग्नीषोमयोस्तन्त्रेणोच्चारणम् गुणाभेदाभावात् · शेषमुत्तमेनेत्यनेन (३. १.५) अनुयाजप्रभृतिमन्त्रमात्रस्योत्तमस्वरविधानपक्षे च गुणभेदाद्भेदेनोच्चारणम् तदा चोपांशुयाजाग्नीषोमयोरुपांशूच्चारणम् पुरोडाशदेवतयोस्तूच्चैरिति · एवं सर्व-त्रोपांशुदेवतेषु अन्यदेवतासक्तितेषु ज्ञेयम् ।

यथादेवतमन्यत् ॥ २० ॥ अग्नीषोमयोरित्येवं व्यूहनप्रकारप्रदर्शनार्थमु-

---

१) ? प्रागग्रा° २

क्रम् · अन्यदपि यथादेवतं व्यूहति एकैकस्या देवतायाः षष्ठ्यन्तं नाम कीर्तयित्वा जुहूं व्यूहति प्रथमान्तं च कीर्तयित्वा उपभृतमिति ।

अध्वर्युर्वा ॥२१॥ स्रुचौ व्यूहति न स्वयं यजमानः । तत्पक्षे व्यूहनमन्त्रे विशेषमाह ·

अनूज्जयवयं यजमानो वाजस्यैनमिति पूर्वे ॥२२॥ [1] पूर्वे जुहूव्यूहनमन्त्रे ।

यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टीत्युत्तरे ॥२३॥ ऊहः । जुहूस्थानापन्नानां च शूर्पार्कपर्णदोहनौदुम्बरस्रुवादीनामपि व्यूहनं भवति · वसाहोमहवन्याश्च · पृषदाज्योपभृतश्चोपभृत्स्थानापन्नत्वात् ।

अभ्युद्य जुह्वा परिधीननक्ति यथापूर्वं वसुभ्य इति (२.१६) प्रतिमन्त्रम् ॥२४॥ व्यूहनानन्तरं ते स्रुचावभ्युद्य स्वस्थाने प्रत्यानीय जुह्वा यथापूर्वमिति उपधानक्रमेण परिधीननक्ति वसुभ्य इति प्रतिमन्त्रमेकैकम् · अञ्जनं च वेदोपग्रहणेन । त्र च रुद्रेभ्यस्त्वेत्यत्रापामुपस्पर्शनम् मन्त्रस्यारौद्रत्वात् वसुभ्यस्त्रयाणां परिधय इति कात्यायनेन (अनुक्रमणी° १.७) परिधिदेवतत्वस्योक्तत्वाच्च ॥ ॥ पञ्चमी कण्डिका ॥५॥

अथ पद्धतिः ॥

ततोऽध्वर्युरुल्मुकेऽआहवनीयमध्यऽआनीय परिशेषितमिध्मकाष्ठं हस्तेन गृहीत्वा प्रेष्यति ब्रह्मन्प्रस्थास्यामीति ब्रह्माणं पृच्छति समिधमाधायाग्निमग्नीत्संमृड्ढीत्यग्नीधं प्रति प्रैषः · ततो ब्रह्मा एतं ते देव सवितरित्यादि मादयन्तामित्यन्तं (२.१२-१३) पठित्वा ओं३ प्रतिष्ठेति (२.१३) ब्रूयाद्वानुब्रूयात् [2] · ततोऽग्नीदुत्तरतस्तिष्ठन्त्समिधमाहवनीयेऽभ्याधायोत्तरपार्श्वे स्थित एवाग्ने वाजजिद्वाजं त्वा ससृवाꣳसमिति (२.१४) मन्त्रेणानुपरिधि दक्षिणपश्चिमोत्तरपार्श्वेषु अग्निं सकृत्सकृत्संमार्ष्टि प्रतिदिशं मन्त्रावृत्तिः ततः सकृत्तूष्णीं मध्ये उपरिष्टात्संमार्ष्टि । ततो होता आहवनीयेऽभ्याहितां तां समिधमेषा तेऽअग्ने इत्यनुमन्त्रयते (२.१४) · होतर्यनुमन्त्रणं कर्तुमजानति यजमानोऽनुमन्त्रयते । ततो ब्रह्मणा प्रतिष्ठेत्यनुज्ञातोऽध्वर्यु-

---

[1] पूर्वमन्त्रे अनूज्जयवयं यजमानो वाजस्यैनमिति अनूज्जेषं वाजस्य मेति स्थाने Mah.
[2] See २.२.२१—२२.

रौपभृतं सशेषं जुह्वां समानीय स्रुचावादायातिक्रम्याश्राव्य देवान्यजेति होतारं प्रेष्यति । ततो जुहूमवतार्य प्रदीप्तायाः समिधः पूर्वार्धे प्रथमं तृतीयं भागं जुहोति इदं देवाय बर्हिषऽइति त्यागः । पुनर्जुहूमध्युह्याश्राव्य देवान्यजेति प्रैषः · जुहूमवतार्य पूर्वहुतात्प्रतीच्याः [1]) समिध उपरि मध्यभागे होमः इदं देवाय नराशंसायेति त्यागः । पुनर्जुहूमध्युह्याश्राव्य देवान्यजेति प्रैषः · अवतार्य द्वितीयवारहुतापेक्षया पश्चात्समिधो [2]) मूलभागे होमः इदं देवायाग्नये स्विष्टकृतऽइति त्यागः । एवं प्रत्यक्संस्था एते होतव्याः · स्वयं तु ध्रुव एकत्राविचलः स्थित एव जुहोति । अभिचारं कुर्वन्नशन्यमुं जहीति प्रथममनुयाजमनुमन्त्रयते ह्वाडुनीति द्वितीयम् उल्कुषीति तृतीयम् · ततं उदकस्पर्शः · अभिचाराभावे उदकस्पर्शाभावः । ततः प्रत्यागत्योत्तरत उपविश्यौपभृतं जुह्वां सर्वं समानीय देवेभ्यः स्वाहेति प्राचीमाहुतिं जुहोति अनया आहुत्या समिधि प्रत्यक्संस्थान्हुतांस्त्रीननुयाजान्सम्भिनत्तीति सूत्रान्तरेषु · इदं देवेभ्य इति त्यागः । ततः प्रत्यागत्य स्वस्थाने स्रुचावासाद्य व्यूहति । तत्राध्वर्युः सव्येन वेदं गृहीत्वा दक्षिणेन पाणिनोत्तानेन जुहूं प्रस्तरात्प्राचीं प्रेरयति · तन्मन्त्रः अग्नेः अग्नीषोमयोः उपांशु अग्नीषोमयोरुज्जितिमनूज्जयत्वयं यजमानो वाजस्यैनं प्रसवेन प्रोहामीति । ततो दक्षिणेन वेदमादाय सव्यहस्तेनाधोमुखेनोपभृतं प्रतीचीं बहिर्वेदि प्रेरयति · अग्निः अग्नीषोमौ उपांशु · अग्नीषोमौ तमपनुदतु यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टि वाजस्यैनमिति मन्त्रेण । यजमानो वा स्वस्थानाद्वेदेः पश्चादागत्य स्रुचावेवमेव व्यूहति · मन्त्रमात्रे विशेषः · अग्नेः अग्नीषोमयोः अग्नीषोमयोरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामीति (२.१५) जुह्वाः · अग्निः अग्नीषोमौ अग्नीषोमौ तमपनुदतु योऽस्मान्द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामीत्युपभृतः (२.१५) । ततोऽध्वर्युः स्रुचावभ्युद्य स्वस्थाने प्रत्यासादयति । मानवे विषूची व्यूहति प्राचीं जुहूं प्रस्तरात्प्रतीचीमुपभृतं बहिर्वेदेर्निरस्याभ्युद्य प्रत्यासादयति न जुहूं प्रस्तरऽइति · एवं सर्वेषु ॥ ॥५॥

इति तृतीयस्य पञ्चमी कण्डिका ॥ ॥

---

१) ? ॰तीच्यां १ २) ? ॰मिधि १

प्रथमं परिधिं गृहीत्वाश्राव्याहेषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहीति ॥ १ ॥[1] होतारं प्रत्याह । आश्रावणार्थमेतत्परिधिग्रहणम् ततश्चाश्रावणाभावे दर्विहोमेषु न भवति ।

पशौ प्रेष्येति ॥ २ ॥ पशौ सूक्ता ब्रूहीत्येतस्य स्थाने सूक्ता प्रेष्येत्येवं मैत्रावरुणं प्रत्याह · न सूक्ता ब्रूहीत्येवं होतारं प्रति ।

संज्ञानाथामिति (२. १६) प्रस्तरादानम् ॥ ३ ॥ प्रैषानन्तरमध्वर्युः हस्तेन प्रस्तरस्य ग्रहणं कुर्यात् ।

विधृती स्थाने कृत्वानक्त्येनं व्यन्तु वय इति (२. १६) ॥ ४ ॥[2] विधृती तृणे स्थाने कृत्वा बर्हिषो यस्मात्स्थानादृहीते तत्रैव निधाय तत एनं प्रस्तरमग्रमध्यमूलेष्वनक्ति ।

अग्रं जुह्वाम् ॥ ५ ॥ उपभृति मध्यम् ॥ ६ ॥

मूलमितरस्याम् ॥ ७ ॥ ध्रुवायाम् · त्रिष्वपि स्थानेषु व्यन्तु वय इत्ययमेवाञ्जनमन्त्रः ।

मरुतामिति (२. १६) नीचैर्हृत्वा तृणमादायानुप्रहरति ॥ ८ ॥ मरुतामिति तमक्तं प्रस्तरं स्रुचो दक्षिणेन चापरेण चानीयाहवनीयं प्रति नीचैर्भूमिसंलग्नमिव हृत्वा आहवनीयसमीपमानीय ततः प्रस्तरादेकं तृणमादाय पृथक्कृत्वा जुह्वा प्रस्तरमनुप्रहरति प्रागग्रमुदगग्रं वा आहवनीयऽएव प्रक्षिपति · अञ्जनानन्तरं प्रस्तरः स्रुचां दक्षिणतः पश्चाच्च नेयः स्रुक्षु वर्तमानस्याज्यस्य हविष्ट्वात् प्रस्तरस्य पात्रत्वात् हविष्पात्रस्वाम्यृत्विज्ञामित्यनेन (१. ८. ३१) पात्रस्य हविष्टो बहिर्भावोपदेशात् ।

हस्तेनाचरति ॥ ९ ॥[3] आचरणं चोपसमूहनमग्निमध्ये प्रेरणम् · अग्नौ हुतं प्रस्तरं हस्तेन प्रेरयति अङ्गुलिभिरेव न पाणितलेन तमङ्गुलिभिरेव योयुप्येरन्निति श्रुतेः (१. ८. ३. १८) · युप विमोहने पुनः पुनः संमूर्छयेयुः ।

---

1) See १. ८. ३. १. — प्रथमं मध्यमम् · प्रैषाभावे परिधिग्रहणाभावः Mahâd. 2) विधृत्योः स्थानमाहवनीय इति कर्कः उत्कर इति वैद्यनाथमिश्राः उत्करो वाऽअतिरिक्तस्य प्रतिष्ठेति श्रुतेः (८. ७. २. २६) · तत्र विधृती प्रक्षिप्य Mahâd. 3) होत्रा पठ्यमाने सूक्तवाके प्रस्तरं हस्तेन प्रेरयति Mahâd.

यजमानभागं च प्रोषिते ॥१०॥ हस्तेन जुहोति · कृतप्रवासे यजमाने ।

क्षत्रियवैश्ययोश्च नित्यम् ॥११॥[१] क्षत्र्योः यजमानयोः प्रोषिते चाप्रोषिते च यजमानभागं हस्तेन जुहोति ।

अहं त्वदस्मि मदसि त्वमेतन्मम त्वं योनिस्तव योनिरस्मि ममैव सन्दिवि[२] देवेष्वधि पुत्रः पित्रे लोककृज्जातवेदः स्वाहेति ॥१२॥ अयं सर्वेषां ब्राह्मणादीनां भागहोममन्त्रः स्वाहाकारान्तत्वात् संनिधानाच्च · जातवेदा देवता इदं जातवेदसऽइति त्यागः ।

सूक्तवाकान्ते ॥१३॥[३] प्रस्तरानुप्रहरणं यजमानभागहवनं चैतदुभयं सूक्तवाकान्ते भवति सूक्तवाकेन प्रस्तरं प्रहरतीति शाखान्तरात् । तत्रायं यागः प्रस्तरद्रव्यको देवताकश्च अग्न्यादयो ह्यत्र संकीर्त्यन्ते · अयमेव जैमिनेरपि सिद्धान्तः · तेन सूक्तवाकान्ते जुह्वा प्रस्तरमाहवनीये जुहोति इदमग्नये सोमायाग्नयेऽग्नीषोमाभ्यामग्नीषोमाभ्यां देवेभ्य आज्यपेभ्योऽग्नये होत्रायेत्येवं त्यागश्च कर्तव्यः । आतिथ्योपसत्पित्र्यादौ च प्रस्तरप्रहरणाभावेऽपि वचनात्सूक्तवाकस्य प्रयोगः · कर्कमते तु विपरीतम् कालार्थोऽयं संयोगः प्रस्तरस्य हस्तेनैवाहवनीये प्रक्षेपमात्रम् त्यागाभावश्चेति । प्रस्तरहोमानन्तरमेव हस्तेन यजमानभागो होतव्यः · केचित्तु यजमानस्य भक्षणकालऽएव तद्भागस्य होममिच्छन्ति ।

अग्नीदाहानुप्रहरेति ॥१४॥ अध्वर्यु प्रति । वरुणप्रघासेष्वनुप्रहरतम् बहुसूद्वसानीयासु अनुप्रहरतेति ।

प्रास्य तृणं चक्षुष्पा इत्यात्मानमालभते (२. १६) ॥१५॥ अध्वर्युः प्रस्तराद्गृहीतं तृणमाहवनीये प्रक्षिप्य आत्मानं हृदयदेशे स्पृशति[४] ततोऽप उपस्पृशति च ।

संवदस्वागानग्नीदगञ्छ्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शम्योर्ब्रूहीत्येतेषाᳮ संवदस्वागञ्छ्रौषडित्यग्नीदिष्यमितरो व्यत्यासं ब्रूतः ॥१६॥[५] अग्नीदध्वर्युं प्रेष्यति संवदस्व त्वं मया सह शम्युवाकप्रेषार्थमिति । तमध्वर्युः

---

१) भागं हस्तेनाचरति नित्यं नियमेन भक्षप्रतिषेधात् Mahâd. २) संदिवि १. ३..
३) होतुः सूक्तवाकपाठान्ते Mahâd. ४) चक्षुषीऽआलभतऽइति वैद्यनाथमिश्राः Mahâd.
५) संवादश्च शम्योरङ्गम् Mahâd.

पृच्छति अगानग्नीत् हे अग्नीत् किमगमत्प्रस्तरशरीरो यजमानः स्वर्गं लोकम् किं दग्धः प्रस्तर इत्यर्थः । अग्नीत्तु अगन्निति प्रतिवचनं ददाति गतो यजमानः दग्धः प्रस्तर इत्यर्थः । अध्वर्युस्त्वाह यद्येवम् ततः शम्युवाकपरिधिप्रहरणायोः कालो वर्तते ततश्च श्रावय होतारमाकर्णयेत्यर्थः । अग्नीत्वाह श्रौषट् शृणोत्येवायमवहितो ब्रूहि त्वं यद्विवक्षितमिति । स्वगा दैव्या होतृभ्य इति शम्युवाकप्रैषः · हे होतः शम्योर्बार्हस्पत्यस्य ऋषेरार्षं ब्रूहि · स्वगा स्वस्थानगामित्वं देवेभ्यो होतृभ्यः परिधिशरीरेभ्यो हूयन्तां परिधय इत्यर्थः मानुषेभ्यः तु होतृभ्यः स्वस्तिरविनाशोऽस्त्वित्येवंरूपं वाक्यं ब्रूहि । अयं तावद्वाक्योऽर्थः श्रुतिस्तु गूढमर्थान्तरमाह अथाह संवदस्वेतीत्यादिना (१.८.३.२०)।

परिधीननुप्रहरति यं परिधिमिति (२.१७) प्रथममितरौ च युगपदग्नेः प्रियमिति (२.१७) ॥१७॥[1] ततोऽध्वर्युर्हस्तेनैव परिधीनाहवनीये प्रक्षिपति ।

स्रुचौ प्रगृह्णाति सञ्स्रवभागा इति (२.१८) सञ्स्रवान्जुहोति ॥१८॥ अध्वर्युर्जुहूपभृतौ उभाभ्यां हस्ताभ्यां गृह्णाति ताभ्यामुभाभ्यामपि च संस्रवान्जुहोति · विश्वे देवा देवता । संस्रवाणामविशेषि[त]वान्नाज्यसाधनकयागाङ्गता ततश्च सर्वत्र प्रवृत्तिः ।

घृताचीऽइति (२.१९) धुरि निदधात्यनसि चेद्ग्रहणम् ॥१९॥ अध्वर्युरनसो धुरि स्रुचौ स्थापयति यदि अनसि हविर्ग्रहणं प्राक्कृतं भवति । पशौ सर्वाः स्रुचः घृताच्य स्थ धुर्यौ पात सुम्ना स्थ सुम्ने मा धत्तेति · गृहमेधीयायामेकस्यां जुह्वाम् घृताच्यसि धुर्यौ पाहि सुम्नासि सुम्ने मा धेहि ।

स्फ्ये पात्र्यां चेत् ॥२०॥[2] स्फ्ये वेद्य उत्तरांसदेशे उदगग्रे निहिते स्रुचौ प्रागग्रेऽएव निदधाति ।

यज्ञ नमश्च तऽइति (२.१९) वेदिमालभते ॥२१॥[3] आपस्तम्बसूत्रेऽयं पदार्थो याजमानकाण्डे पठितोऽस्ति । अनेकयजमानके एक एवेतरैरन्वारब्धः · स्विष्टं नः संतिष्ठस्वेत्यूहः कर्कमते त्वध्वर्युकर्तृकत्वादूहाभावः ।

---

१) प्रथमं मध्यमम् दक्षिणोत्तरौ सहैव · अवभृथे अपां प्रियं पाथोऽपीतमित्यूहः Mah.
२) तदांसदेशे स्फ्ये निदधाति न च अपपास्य पश्चादनःस्थाने Mahâd. ३) यजमानः · वेद्यालम्भनमिदं शम्योरङ्गम् Mahâd.

वेद७ होता स्रुक्स्रुवमध्वर्युराज्यस्थालीमग्नीदादाय ॥ २२ ॥ [1] ॥ षष्ठी कण्डिका ॥ ६ ॥

अथ पद्धतिः ॥

ततो जुहूमादाय वसुभ्यस्त्वेति (२.१६) मध्यमं परिधिं जुह्वा अनक्ति रुद्रेभ्यस्त्वेति दक्षिणाम् आदित्येभ्यस्त्वेत्युत्तरम् · ततो जुहूं प्रस्तराडुत्तरतः सादयति न प्रस्तरे · ततः प्रथमं परिधिमालभ्याश्राव्येषिता दैव्या होतार इति प्रैषं होतारं प्रत्याह । ततः संजानाथामिति (२.१६) सपवित्रं प्रस्तरमादाय विधृती यतः प्रदेशादृहीतं तत्रैव निधाय व्यन्तु वय इति (२.१६) प्रस्तरस्याग्रं जुह्वामनक्ति मध्यमुपभृति मूलं ध्रुवायाम् ते तेनैव मन्त्रेणानक्ति · ततः स्फ्यं गृहीत्वा प्रस्तरं स्रुचो दक्षिणेनानीय नीचैर्भूमिलग्नमिव होमार्थमाहवनीयं प्रति हरति मरुतां पृषतीरिति मन्त्रेण (२.१६) · ततः प्रस्तरादेकं तृणं पृथगादाय सूक्तवाकान्ते जुह्वा प्रस्तरं प्रागग्रमुदगग्रं वा जुहुयात् तं प्राञ्चमनुसमस्यति अथोऽउदञ्चमित्युभयथा श्रुतेः (१.८.३.१८) · तत्र इदमग्नये सोमायाग्नयेऽग्नीषोमाभ्यामग्नीषोमाभ्यां देवेभ्य आज्यपेभ्योऽग्नये होत्रायेति त्यागः · ततो हुतं प्रस्तरमध्वर्युरङ्गुलीभिरग्नौ प्रेरयेत् । यजमानः प्रोषितश्चेत् सूक्तवाकान्तेऽध्वर्युर्हस्तेनैव यजमानभागमाहवनीये जुहुयात् इदं जातवेदसऽइति त्यागः । ततोऽग्नीदनुप्रहरेत्यध्वर्युं प्रति ब्रूयात् · ततोऽध्वर्युः प्रस्तरादृहीतं तृणमग्नावनुप्रहृत्य चक्षुष्पा इत्यात्मानमालभते (२.१६) उदकस्पर्शः । ततोऽग्नीत्संवदस्वेत्याह · अगानग्नीदित्यध्वर्युः · अगन्नित्यग्नीत् · आश्रावयेत्यध्वर्युः · श्रौश्षडित्यग्नीत् · स्वगा दैव्येत्यध्वर्युः । ततोऽध्वर्युः यं परिधिमिति (२.१७) प्रथमं परिधिं हस्तेनैवानुप्रहरति दक्षिणोत्तरौ परिधीऽअग्नेः प्रियमित्यनुप्रहरति (२.१७) । ततो जुहूपभृतावादाय सछस्रवभागा इति (२.१८) संस्रवानुभाभ्यां स्रुग्भ्यां जुहोति इदं विश्वेभ्यो देवेभ्य इति त्यागः । ततो घृताची स्थो धुर्याविति (२.१९) मन्त्रेण स्रुचौ अनसो धुरि निदधाति अनडुहोर्योजनस्थाने य-

---

[1] Mahâd. closes the sixth kaṇḍikâ by the beginning sûtra of the seventh: but १.२.३.४. agree in breaking off here, and in the paddhati the contents of this sûtra are given in the seventh kaṇḍikâ.

यजमानः पूर्वं हविर्ग्रहणं कृतं भवति · अथ यदि पात्र्याः सकाशाद्धविर्ग्रहणं कृतम् तदोत्तरांसे स्फ्यमुदगग्रं निधाय तस्योपरि प्रागग्रे जुहूपभृतौ निदधाति घृताची ऽइति मन्त्रेण (२. १९) । ततो लिङ्गाद्यजमानो यज्ञ नमश्च तऽइति (२. १९) वेदिमालभते स्फ्योपग्रहणेन ॥ ॥ ६ ॥

इति तृतीयस्य षष्ठी कण्डिका ॥

पत्नीसंयाजेभ्यो गार्हपत्यं गच्छन्ति ॥ १ ॥ पत्नीसंयाजान्कर्तुम् । अध्वर्योर्गमनाय मार्गमाह ·

अध्वर्युः पूर्वदक्षिणेन गार्हपत्यमेत्य ॥ २ ॥ [1] गार्हपत्यदक्षिणाग्न्योरन्तरालेनागत्य पत्नीसंयाजैश्चरति ।

पूर्वेण ॥ ३ ॥ अथवा अध्वर्युराहवनीयं पूर्वेण परीत्य दक्षिणतो वितानं गार्हपत्यं गच्छति ।

अपरेणान्तरेण पत्नीमेकेषाम् ॥ ४ ॥ अथवा अध्वर्युरपरेण गार्हपत्यं यजतिदेशं प्रति गच्छति । तत्रापि मार्गद्वयम् एकेषां मते पत्नीमन्तरेण [गार्हपत्यात्] नैर्ऋतदिगुपविष्टां पत्नीमग्निं चान्तरेण दक्षिणतो यजतिस्थानं गच्छति अर्थात् अन्येषां मते पत्न्या बाह्यतः · अध्वर्युणा गार्हपत्यस्य दक्षिणतो गन्तव्यम् गार्हपत्यमपरेण च अतो विकल्पः अन्तरेण बाह्येन वा पत्नीमिति । स्रुक्स्रुवग्रहणमुपभरणार्थं प्राप्ताया उपभृतो निरासार्थम् ।

उपविश्य दक्षिणं जान्वाच्य ॥ ५ ॥ अध्वर्युर्गार्हपत्यस्य दक्षिणत ईशानाभिमुखः दक्षिणं जानु भूमौ पातयित्वा सोमादीन्यजति · यजतिष्वातिष्ठद्धोमे प्राप्ते (१. २. ६) उपविश्येत्याह ।

एवꣳ सर्वत्रोपविष्टहोमेषु ॥ ६ ॥ एवमिति उपविश्य दक्षिणं जान्वाच्येति गृह्यते · न केवलमत्रैवम् किंतु सर्वत्र सर्वेषु उपविष्टहोमेषु पूर्वाघारदक्षिणाग्निहोमकर्मापवर्गहोमयूपाहुतिसावित्रहोमादिषु ।

उपाꣳशु चरन्ति ॥ ७ ॥ [2] पत्नीसंयाजैः ।

---

[1] अपराग्न्योर्मध्ये यजतिदेशमेत्य · पत्नीसंयाजान्यजतीति शेषः · प्रथमपक्ष एव श्रेयान् पूर्वेण गार्हपत्यमन्तरेणाहवनीयम् Mahâd. [2] शनैरुच्चारयन्मन्त्रानोषदोष्ठौ प्रचालयेत् किंचिच्छब्दं स्वयं विद्यादुपांशु स जपः स्मृत इति Mahâd.

चरणशब्दे सर्वम् ॥ ८ ॥ यत्र चरणशब्दो विधिवाक्ये तत्र सर्वमुपांशु भवति ।

देवतान्यत्र ॥ ९ ॥ यत्र चरणशब्दो न भवति तत्र देवता उपांशु भवति नान्यत् ।

यजति सोमं त्वष्टारं देवानां पत्नीरग्निं गृहपतिमिति ॥ १० ॥ स्थालीस्थेनाज्येन चतस्रो देवता यजति ।

तृतीयेऽन्तर्धानं पुरस्तात् ॥ ११ ॥ तृतीये पत्नीसंयाजे पुरस्तात्कटादिना अन्तर्धानं करोति ।

पत्न्यन्वारभतेऽध्वर्युम् ॥ १२ ॥[१] अधिकारात्तृतीय एव पत्नीसंयाजे · स चायमध्वर्युसंस्कारो द्वितीयानिर्देशात् अतः पत्न्यभावेऽपि येन केनचित्कर्तव्यः ।

शम्य्वन्तं भवतीडान्तं वा ॥ १३ ॥ वाशब्दस्य शम्य्वन्तेन सम्बन्धः · तेनायमर्थः तदिदं पत्नीसंयाजाख्यं कर्म इडान्तं भवत्येव शम्य्वन्तं वा भवति शम्युर्भवति न वेत्यर्थः । नियमेनैडान्तं श्रूयते तदिडान्तं भवतीत्यादिना (१.३.२.१४) · तथा उतो प्रस्तरस्यैव रूपं क्रियते स यदि प्रस्तरस्य रूपं कुर्यादित्येवमादिकं (१.३.२.१४-१५) कर्म यदिशब्दाद्विकल्पेन विधीयते । ततश्च गृहपतियागानन्तरं पूर्ववदिडां पञ्चावत्तामाज्येनावदायेडां होत्रे प्रदायाविसृजन्दक्षिणातिक्रामतीडां प्रतिगृह्य होतुरङ्गुलिपर्वणीऽअनन्तर्यवान्तरेडामादधाति पूर्ववदिडां च सर्वेऽन्वारभन्ते मयीदमिति यजमानो जपत्युपहूतां प्राश्नन्ति युक्ता यजमानश्च पवित्रयोरभावाद्दर्भैर्मार्जयन्तेऽपरेण वेदिं सुमित्रिया न इत्येतावत् इडान्तं भवतीत्यनेन गृह्यत ऽइति कर्काचार्यः ।

शम्य्वन्ते वेदतृणमादायानक्ति प्रस्तरवत्स्रुचि स्रुवे स्थाल्यां च ॥ १४ ॥[२] शम्य्वन्ते कर्मणि क्रियमाणे एष विशेषः · वेदतृणं वेदस्य तृणम् । एकेषां प्रस्तरवदित्यनेन मन्त्रो न गृह्यते अश्रुतत्वादिति · युक्तं चैतत् ।

---

[०] चरणशब्दादन्यत्र देवतापदमुपांशु भवति Ss. [१] पत्नीसंयाजे येन प्रविष्टस्तेन निष्क्रामेत् Mahâd. [२] अग्रं जुह्वाम् मध्यं स्रुवे मूलं स्थाल्याम् व्यन्तु वय इति मन्त्रेण Mahâd. See ३. ६. ४-७.

अग्नीदाहानुप्रहरेति ॥ १५ ॥ [१]) अध्वर्युं प्रति ।

प्रास्य तृणादि पूर्ववत् ॥ १६ ॥ [२])

शम्य्वन्ते स्रुक्स्रुवं प्रगृह्यात्यग्नेऽदब्धायविति (२.२०) ॥ १७ ॥ शम्य्वन्ते कर्मणि कृते सति अध्वर्युः स्रुक्स्रुवमुभयं गृह्णाति होमार्थम् अग्नेऽदब्धायविति संस्रवान्जुहोति । एतत्तृणाञ्जनादि होमान्तं गार्हपत्यस्योत्तरत उपविष्टेन कर्तव्यम् · मन्त्रवर्णादग्निरदब्धायुरशीतमो देवता तस्मै त्यागः · एतदपि गार्हपत्यऽएव जुहोति । प्रतिपत्त्यर्थं कर्म चैतत् पत्नीसंयाजशेषसाध्यत्वाच्च तदभावे न भवति · पशावपि न भवति संस्रवाभावेनार्थलोपात् [३]) · अदब्धाहुत्यभावेऽपि पशौ शम्योर्वाको भवतीति युक्तमिति याज्ञिकाः · पत्नीसंयाजानामर्थकर्मत्वाच्चावदुक्तान्तापछिन्नेषु निवृत्तिः ।

सव्येनावृत्य दक्षिणाग्नौ जुहोत्यग्नयऽइति (२.२०) सरस्वत्याऽइति (२.२०) च ॥ १८ ॥ तं प्रकृतं गार्हपत्यमग्निं सव्येनावृत्य प्रदक्षिणं परीत्य दक्षिणाग्नेः पश्चादुपविश्य दक्षिणाग्नौ सकृद्गृहीतमाज्यं जुह्वा जुहोति समिदाधानपूर्वकम् अग्नये संवेशपतयऽइति प्रथमाहुतिम् सरस्वत्याऽइति द्वितीयाम् । एतदप्यर्थकर्म ततश्च यावदुक्तान्तापछिन्नेषु न भवति · सव्येनावृत्येत्येतत्साङ्गपत्नीसंयाजान्ते अतीत्य निष्क्रमणम् तेन यदि गार्हपत्यदक्षिणाग्न्योरन्तरालेनागतस्तदेव तद्भवति नान्यमार्गेणागमने ।

उलूखले मुसले यच्च शूर्पऽआशिश्लेष दृषदि यत्कपाले उत्प्रुषो विप्रुषः संजुहोमि सत्याः सन्तु यजमानस्य कामाः स्वाहेति पिष्टलेपान्जुहोति ॥ १९ ॥ [४]) अनेन मन्त्रेणाध्वर्युः पिष्टलेपामाहुतिं [५]) जुहोति अधिकाराद्दक्षिणाग्नावेव । अत्र विप्रतिपत्तिः केचिदाज्यं जुह्वति केचिच्च पिष्टसम्बन्धिनो लेपानिति [६]) · आ-

---

१) अञ्जनान्ते Mah. २) शम्युप्रैषान्तं कर्म कुर्यात् Mah. See ३.६.१५-१६. ३) पशौ संस्रवाभावान्न प्रग्रहहोमः · एतस्य प्रग्रहसंज्ञा जुहोतिशब्दाभावात् · सम्प्रगृह्णाति समिष्टयजुश्चेति (११.२.१.५.) समिष्टयजुःसाहचर्याद्यथा समिष्टयजुरिति संज्ञा तथा प्रग्रह इति संज्ञा · संस्रवहोमस्यापि पाक्षिकी प्रग्रहसंज्ञा Mahâd. ४) स्वाहेति ॥ ७ ॥ पिष्टलेपां जुहोति १.३.५. Thus also the paddhati.—Kâṇva, see Vâj. S. pag. ५८. ५) संज्ञा marg. ६) पिष्टलेपानेकीकृत्य दक्षिणाग्नौ जुहोतीति याज्ञिकाः पिष्टलेपाहुतिमाहवनीयऽइति पितृभूतिः · अत्र पुरोडाशद्वयसम्बन्धाद्द्वे देवते प्राप्ते तत्र मुख्यत्वादग्निरेव देवता · विकृतावग्निरेव देवतेति कर्कसिद्धान्तः Mahâd.

ज्यसाधनत्वं चोक्तं तैत्तिरिसूत्रे मन्त्रलिङ्गाद्विश्वेभ्यो देवेभ्य इति त्यागः · ये तु पिष्टलेपानां होममिच्छन्ति तेषां पिष्टलेपानिति द्वितीयाबहुवचनम् होमविधानादेव च पात्र्यङ्गुलीसंलग्नान्पिष्टलेपानुपादाय होमार्थं स्थापयित्वा पात्र्यङ्गुलीप्रक्षालनं कार्यम् · तन्मते च प्रतिपत्त्यर्थकर्मैव पुरोडाशसाधनकऽएव कर्मणि भवति नाज्यादिसाधनके । पिष्टलेपहोमप्रकारस्तु शाखान्तरे आपस्तम्बे मानवे च । सर्वसूत्रेषु विश्वदेवलिङ्गस्य होममन्त्रे [1] दर्शनात्तदुद्देशेनैव त्यागः कार्यः · स्वसूत्रेऽपि आज्यहोमपक्षे पक्षान्तरे च होमस्य अङ्गप्रधानभूतप्रस्तुतसर्वदेवताहविषां क्वचित्संश्लिष्टानां स्वावयवहीनतानिमित्तप्रत्यवायपरिहारार्थं तत्प्रतिनिधिभूतेनाज्येन क्रियमाणत्वाद्देवतान्तरस्यानुपदेशाच्च प्रस्तुतसर्वदेवताकत्वम् तत्सम्बन्धिद्रव्यस्य ताभ्य एव होतुमुचितत्वात् · अत एव विश्वेभ्यो देवेभ्य उद्देशः विश्वे देवाः सर्वे देवा इति यास्कोक्तेः (१२.३९) · किं च अनादिष्टदेवतानां मन्त्राणां प्रस्तुतदेवताकत्वमेव युक्तम् कुतः तद्येऽनादिष्टा मन्त्रास्तेषु देवतोपपरीक्षा यद्देवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवन्तीति यास्कोक्तेः (७.४) · अत्र यज्ञाङ्गस्य हूयमानस्याज्यादिद्रव्यस्य मन्त्रलिङ्गेन प्रस्तुतबहुदेवतासम्बन्धित्वं गम्यते बहव्यश्चात्राङ्गप्रधानदेवताः प्रस्तुताः अतश्च बहुदेवतत्वाद्विश्वेषां देवानां देवतात्वं युज्यतऽएव यत्तु किंचिद्बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यतऽइति च यास्कोक्तेः (१२.४०) · याज्ञिका अपि आज्याहुतिं प्रस्तुतसर्वप्रधानदेवताकामाहुः [2] · कर्काचार्यास्त्वेवमूचुः [3] एकस्यैव देवस्य सिद्धत्वात्किमर्थमनेकदेवतत्वं कल्प्यतऽइति प्राथम्यादेकैवात्राग्निर्देवतेति अतस्तन्मते प्रकृतिविकृतिरूपसर्वकर्मसु इदमग्नयऽइत्येवास्य त्यागः । वैतानसूत्रे पिष्टलेपहोमानन्तरं पठ्यते आग्नीध्रः संमार्गमग्नौ प्रहरतीति · संमार्गमिध्मसंनहनम् अग्नौ आहवनीये ॥ ॥ सप्तमो कण्डिका ॥७॥

अथ पद्धतिः ॥

ततो होता वेदमादायाध्वर्युराज्यलिप्तां जुहूं स्रुवं च प्रक्षाल्यादायाग्नीदाज्यस्था-

---

1) ? °देवस्यलिंगहोम° २ 2) ? अपि मनोज्याज्ञतिप्रस्तुतसर्वेप्रधान° २ 3) See the scholion at १.२.२. pag. २१.

लीमादायाग्नीध्रप्रथमाः पत्नीसंयाजान्कर्तुं गार्हपत्यं प्रति गच्छन्ति · आपस्तम्बः आज्यलेपान्प्रक्षाल्य स्रुवे जुहूपभृतावादायेति · तथा आग्नीध्रप्रथमाः प्रत्यञ्चो यन्ति अपरेण गार्हपत्यमूर्ध्वज्ञव आसते दक्षिणोऽध्वर्युरुत्तरत आग्नीध्रो मध्ये होतेति वेदमुपभृतं कृत्वा जुह्वा स्रुवेण चेत्येकऽइति । तत्राध्वर्युर्गार्हपत्यदक्षिणाग्नीऽअन्तरेण गत्वा पत्न्या अग्रे गार्हपत्यस्य दक्षिणत ईशानाभिमुख उपविशति अथवा आहवनीयं पूर्वेणेत्य दक्षिणाग्निं दक्षिणेनैवागत्य पूर्वोक्तस्थानऽउपविशति अथवा गार्हपत्यमुत्तरेण च गत्वा पत्नीमन्तरेण पत्नीं बाह्यतो वा गत्वा पूर्वोक्तस्थाने तथैवोपविशति इत्यध्वर्योः संचरचतुष्टयं विकल्पेन · गार्हपत्यस्य पश्चाद्धोता ऊर्ध्वज्ञानुरास्ते तस्योत्तरतो दक्षिणामुखोऽग्नीत् । ततोऽध्वर्युर्वेदं गृहीत्वा सोमायानुब्रूहीत्युक्त्वा आज्यस्थाल्या जुह्वां चतुर्गृहीतमाज्यं गृहीत्वाश्राव्य सोमं यजेत्याह इदं सोमायेति त्यक्ते जुहोति · ततस्त्वष्ट्रेऽनुब्रूहीत्युक्त्वा पुनश्चतुर्गृहीतं गृहीत्वाश्राव्य त्वष्टारं यजेत्याह इदं त्वष्ट्रे · हुत्वा अन्तर्धानं गार्हपत्यस्य पुरस्तात्कृत्वा पत्न्यध्वर्योरन्वारम्भे कृते देवानां पत्नीभ्योऽनुब्रूहीत्युक्त्वा जुह्वां चतुर्गृहीतं गृहीत्वाश्राव्य देवानां पत्नीर्यजेत्याह इदं देवानां पत्नीभ्यः · हुत्वान्तर्धानं हस्तेन पराकरोति · अन्वारम्भश्चानुवचनादि होमान्तः पत्न्या असंनिधाने येन केनचिदध्वर्योरन्वारम्भः कार्यः अध्वर्युसंस्कारत्वात् · ततोऽग्नये गृहपतयेऽनुब्रूहीत्युक्त्वा जुह्वां चतुर्गृहीतं गृहीत्वाश्राव्याग्निं गृहपतिं यजेत्याह इदमग्नये गृहपतयऽइति त्यक्ते जुहोति । ततः स्रुचं भूमौ निधायेडापात्र्यां पञ्चकृत्व आज्यमवदाय प्रत्यङ्मुखो होत्रे इडां प्रदायाविसृजन्होतारं पत्नीं च प्रदक्षिणीकृत्य होतुः पुरस्तात्प्रत्यङ्मुख उपविश्य होत्रार्पितामिडां प्रतिगृह्येडायाः सकाशात्स्रुवेणाज्यमवदाय होतुरङ्गुलिपर्वणीऽउत्तममध्यमे स्रुवेणाक्त्वा होतुर्हस्ते चतुष्कृत्वोऽध्वर्युराज्यमवद्यति होता स्वयं पञ्चमं गृह्णीयात् · तत उपहूयमानायामिडायां सर्वऽऋत्विजो यजमानश्च होतारमन्वारभन्ते इडां वा · उपहूतोऽयं यजमान इति होत्रा पठ्यमाने यजमानो मयीदमिति (२. १०) जपति · सर्वे संचरेण निष्क्रम्येडां भक्षयित्वा पुनस्तथैवागत्यापरेण वेदिमुपविश्य ब्रह्मादिक्रमेण दर्भैरुदकमादाय सुमित्रिया न इति (६. २२) मार्जयन्ते · ततः सर्वे यथास्थानमुपविशन्ति ।

अध्वर्युर्गार्हपत्यस्योत्तरत उपविश्य वेदस्यैकं तृणमाच्छिद्य तस्य तृणस्याग्रं जुहूामनक्ति मध्यं स्रुवे मूलं स्थाल्याम् · अक्त्वा [1] अग्नीदनुप्रहरेत्याह · अध्वर्युस्तदक्तं तृणं गार्हपत्ये प्रक्षिप्य चक्षुष्पा इत्यात्मानमालभ्य (२.१६) अप उपस्पृशति । ततोऽग्नीत्संवदस्वेत्याह · अध्वर्युरगानग्नीदित्याह · अग्नीदगन्निति प्रत्याह · आश्रवयेत्यध्वर्युः · श्रौषडित्यग्नीत् · स्वगा दैव्या होतृभ्य इत्यध्वर्युर्होतारं प्रेषयेत् । ततो जुहूं स्रुवं च सम्प्रगृह्याग्नेऽदब्धायवित्येनेन (२.२०) उभाभ्यां संस्रवान्जुहोति इदमग्नयेऽदब्धायवेऽशीतमायेति त्यागः · ततो गार्हपत्यदक्षिणाग्नी अन्तरेण निष्क्रम्याप्रदक्षिणं गार्हपत्यं परीत्य दक्षिणाग्नेरुत्तरतः उपविश्य समिदाधानपूर्वं सकृद्गृहीतमाज्यं जुहूा दक्षिणाग्नौ अग्नये संवेशपतये स्वाहेति (२.२०) जुहोति इदमग्नये संवेशपतये · पुनः सकृद्गृहीतं गृहीत्वा सरस्वत्यै यशोभगिन्याऽइति (२.२०) इदं सरस्वत्यै यशोभगिन्यै ॥ ॥७॥

इति तृतीयस्य सप्तमी कण्डिका ॥ ॥

पत्नी वेदं प्रमुञ्चति वेदोऽसीति (२.२१) ॥१॥ विस्रंसयति । पित्र्यायां चास्य मन्त्रस्य वेदबन्धने विमोके चोहः देवपितृभ्यः · अनेकयजमानके आवाभ्याम् अस्मभ्यम् · अनेकपत्नीके एकैव परार्थत्वात् ।

योक्त्रं च प्र मा मुञ्चामि वरुणस्य पाशाद्येन माबध्नात्सविता सुशेवः ऋतस्य योनौ सुकृतस्य लोकेऽरिष्टां मा सह पत्या दधात्विति ॥२॥ [2] योक्त्रविमोको यावदुक्तेऽन्तापच्छिन्ने च भवति · वेदविमोकश्च कृतप्रयोजनत्वेन प्रतिपत्तिरूपत्वात् ।

स्तृणात्या वेदेः ॥३॥ [3] वेदं होता गार्हपत्यस्योत्तरप्रदेशादारभ्य वेदिपर्यन्तं स्तृणाति · आङत्र मर्यादायाम् । आङत्राभिविधौ वेदिं व्याप्येति हरिस्वामिनः (१.३.२.२४) · शाङ्खायने तूत्तरेण गार्हपत्यमा बर्हिष स्तीर्त्वेति (१.१५.१५) · शाखान्तरवशादा वेदेरित्ययमाङभिविधौ व्याख्येयः ।

---

1) sic! i. e. अञ्जनानन्तरम्. 2) चशब्दात्पत्नी प्रमुञ्चति योक्त्रमत्रैव वेदविमोकान्ते Mahâd. 3) वेदिपर्यन्तं वेदतृणानि Mahâd.

ध्रौवꣳ समिष्टयजुर्जुहोति देवा गातुविद इति (२.२१) ॥ ४ ॥ ध्रौवमाज्यं[१] देवा गातुविद इति सꣳजुर्जुहोति · समिष्टयजुरिति कर्मणः संज्ञा संव्यवहारार्था · वेदस्य विमुक्तत्वात्कुशोपग्रहेण । वातश्चात्र देवता स्वाहा वाते धा इति मन्त्रलिङ्गात् ततश्च जुहोतौ वाताय स्वाहेति होमः । अर्थकर्मैतदिति कर्कः ततश्चात्तापछिन्नयावदुक्तेषु निवृत्तिः · प्रतिपत्तिरिति तन्त्रटीकायाम् तानि वा ऽएतानि नव समिष्टयजूꣳषि जुहोतीत्यत्र (४.४.४.१) हरिस्वामिभाष्येऽपि प्रतिपत्तिर्हि समिष्टयजुरित्युक्तम् ततश्चात्तापछिन्नादिष्वपि भवति । आपस्तम्बः पूर्ववद्ध्रुवामाप्याय्य देवा गातुविद इत्यन्तर्वेद्यूर्धस्तिष्ठन्ध्रुवया समिष्टयजुर्जुहोतीति । संततं यजमानभागं च प्रवसतः समिष्टयजुषा सह प्रवसति जुहोतीति (४.१३.१) शाङ्खायनः ।

बर्हिः सम्बर्हिरिति (२.२२) ॥ ५ ॥ जुह्वा जुहोति । प्रतिपत्तिरियम् चरितार्थत्वात् ततश्चात्तापछिन्ने यावदुक्ते च प्रवर्तते · नाशदोषादौ सकृद्धर्हितिनान्येन होमः ।

वेद्यां प्रणीता निनयति परीत्य कस्त्वेति (२.२३) ॥ ६ ॥ अध्वर्युः स्वयमाहवनीयं परीत्य वेदेर्दक्षिणभागे उदङ्मुख उपविश्य प्रणीता आदाय वेदिमध्ये आसाद्य तत्रैव निनयति · अत एव पूर्वं वेदिमध्ये अनासादनं गम्यते । प्रतिपत्तिरियम् चरितार्थत्वात् ततश्चात्तापछिन्नेऽपि भवति · नाशदोषादौ च प्रायश्चित्तमात्रम् ।

पुरोडाशकपालेन कपानपास्यत्यधःकृष्णाजिनꣳ रक्षसामिति (२.२३) ॥ ७ ॥[२] पुंलेन मुख्यत्वात्प्रथमेन अधꣳनं कृष्णाजिनस्याधस्तात्समीपऽएव[३] कपानुत्करे प्रक्षिपति । एभ्य इति चतुर्थ्या (१.१.२.३५) रक्षसामत्र देवतात्वम् रक्षसां राक्षसमिति कात्यायनोक्तेश्च (अनुक्र° १.७) · इदं रक्षोभ्य इति त्यागः अपां स्पर्शश्च । इयमपि प्रतिपत्तिः ततश्चात्तापछिन्नादौ भवति ।

---

१) ध्रुवायां भवमाज्यं Mahâd. २) कपान्फलीकृत्य स्थापितान् Mahâd. See २.४.२४.
३) यथा कृष्णाजिनस्याधो भवन्ति उपरि कृष्णाजिनं कर्वेत्यर्थः । चर्विष्यां भूतपुरोडाशकपालमुपादेयम् Mahâd.

पूर्णपात्रं निनयति परीत्य संततम् ॥ ८ ॥ अध्वर्युराहवनीयं परीत्य दक्षिणात उदङ्मुखोऽवस्थितः संततं पूर्णं निनयति · पूर्णं च तत् पात्रं च पूर्णपात्रम् अद्भिः पूर्णम् शान्तिराप इति वाक्यशेषात् (१.३.३.४) ।

यजमानोऽञ्जलिना प्रतिगृह्णाति सं वर्चसेति (२.२४) ॥ ९ ॥[1] तदध्वर्युणा संततं निनीयमानं पूर्णपात्रम् । तत्र ग्रहणं प्रधानम् निनयनं तदर्थम् · तेन प्रोषिते यजमाने [यत्र] यजमानस्तत्रैव पूर्णपात्रस्य निनयनं केनचित्कारणीयम् यजमानेनाञ्जलिना प्रतिग्रहश्च कार्यः ।

मुखं विमृष्टे ॥ १० ॥ ग्रहणानन्तरं यजमानस्तूष्णीमेव तेन गृहीतोदकेन मुखं विमृष्टे उपस्पृशति शोधयति । एतच्चार्थकर्म ततश्चान्तापच्छिन्नादौ न भवति । अनेकयजमानके उपर्युपर्यञ्जलीन्कृत्वा सर्वैः पूर्णपात्रजलं ग्राह्यम् · विष्णुक्रमणं च सर्वैः कर्तव्यम् ।

विष्णुक्रमान्क्रमते दिवि विष्णुरिति (२.२५) प्रतिमन्त्रम् ॥ ११ ॥[2] यजमानः स्वासनादुत्थाय दक्षिणाद्वेदिश्रोणिदेशादारभ्याहवनीयं यावद्विष्णुक्रमसंज्ञान्क्रमणान्करोति । एतदप्यर्थकर्म तेनान्तापच्छिन्नादौ न भवति ।

पृथिव्यामितीत ऊर्ध्वा वा ॥ १२ ॥ अथवा पृथिव्यां विष्णुरिति प्रथमं क्रमति अन्तरिक्षे विष्णुरिति द्वितीयम् दिवि विष्णुरिति तृतीयम् · इतः पृथिवीलोकात् ऊर्ध्वः आरोहणक्रमेण · उभयथा श्रवणाद्विकल्पः परस्तादर्वाग्वा · अवरोहणक्रमेण दिवि अन्तरिक्षे पृथिव्याम् ।

अस्मादन्नादिति (२.२५) भागमवेक्षते ॥ १३ ॥[3] यजमानः स्वस्थानऽउपविष्ट एव स्वं भागमवेक्षते । अयं च भागसंस्कारः तेनान्तापच्छिन्नादौ भवति । अनेकयजमानके एकः सर्वैरन्वारब्धः · सर्वैर्वा स्वांशावेक्षणम् ।

अस्यै प्रतिष्ठायाऽइति (२.२५) भूमिम् ॥ १४ ॥ वेदिभूमिम् · उपविष्ट एव । उतदर्थकर्म ततश्चान्तापच्छिन्ने न भवति ।

---

१) इतः प्रभृति सर्वमर्थकर्म याजमानं च · ग्रहणस्य प्राधान्यात् प्रोषिते यजमाने तत्रैव निनयनम् · सत्रे सर्वैर्ग्राह्यं पूर्णपात्रम् Mahâd. २) क्रमणादि याजमानं स्वासनऽएव कर्तव्यम् Mahâd. ३) अवाचीनेन मुखेनेक्षते · साकाङ्क्षत्वान्निर्भक्त इत्यनुषङ्गः Mahâd.

अगन्म स्वरिति (२.२५) प्राक् ॥ १५ ॥ प्राचीं दिशं प्रेक्षते । एतदप्यर्थकर्म ।

सं ज्योतिषेत्याहवनीयम् (२.२५) ॥ १६ ॥ एतदप्यर्थकर्म अप्रतिपत्तिरूपत्वात् · ज्योतिषा हि सम्भवनमत्र प्रार्थ्यते · तेनाहवनीयसंस्कारकल्पनं न कार्यम् · ततश्चान्तलुप्ते निवृत्तिरिति कर्कः · वरुणप्रघासेषु तु वेदिद्वयस्याप्यवेक्षणमग्न्योश्चेति सम्प्रदायः ।

स्वयम्भूरिति (२.२६) सूर्यम् ॥ १७ ॥

वर्चोदा इति (२.२६) यं वा कामं कामयते ॥ १८ ॥ सूर्योदीक्षणानन्तरं वर्चोदा इति सूर्यं प्रार्थयेत् · अथवा यजमानो यं काममभिलाषं पुत्रपश्वादिकं वाञ्छेत तं ब्रूयात् गोदा धनदा पुत्रदा वर्चोदा इति ।

सूर्यस्येत्यावर्तते (२.२६) प्रदक्षिणम् ॥ १९ ॥[1] यजमानः प्रदक्षिणमावृत्तिं भ्रमणं करोति । प्रसङ्गादाह ·

ग्रहग्रहणप्रतिगरहोमेषु च तूष्णीम् ॥ २० ॥ ग्रहग्रहणानन्तरं प्रागासादनात्प्रदक्षिणावर्तनं कर्त्रा कार्यम् प्रतिगरदानानन्तरं च शस्त्रसमाप्तौ ग्रहहोमानन्तरं च · सशस्त्रग्रहेष्वेवायं धर्मः न शस्त्रमात्रे प्रतिगीर्य न ग्रहग्रहणमात्रे न होममात्रऽइति · प्रदक्षिणक्रियाशेषत्वान्मन्त्रोऽपि प्राप्तस्तूष्णीमित्यनेन व्यावर्त्यते ।

गार्हपत्यमुपतिष्ठतेऽग्ने गृहपतऽइति (२.२७) ॥ २१ ॥ यजमानः गार्हपत्यमुपतिष्ठते गार्हपत्यसमीपे स्थित्वाग्ने गृहपतऽइति तं प्रकाशयति । एतदप्यर्थकर्मैव · ततश्चान्तलुप्तापौ न भवति ।

शतं हिमा इति ब्रूयाद्वा ॥ २२ ॥ गार्हपत्यमुपस्थाय शतं हिमा इतीमं मन्त्रं[2] यजमानो ब्रूयाद्वा न ब्रूयाद्वेति विकल्पः ।

सूर्यस्येत्यावर्वर्ते (२.२७) प्रदक्षिणम् ॥ २३ ॥ गार्हपत्योपस्थानानन्तरं पुनरपि सूर्यस्येति प्रदक्षिणमावर्तते पुनरपि मन्त्रपाठात् श्रुतावपि पुनर्विधानात् (१.३.३.२०) ।

गच्छति प्राङुरु विष्णाविति (५.३८) ॥ २४ ॥[3] एतदप्यर्थकर्म ।

---

1) दक्षिणाङ्गमन्तरं कृत्वावर्तनं कुर्यात् Mahâd. 2) i. e. मन्त्रस्यांशम्. See the paddhati, and Kâṇva Vâj. S. pag. ५१. 3) Kâṇva, see Vâj. S. pag. ५१. — स्वासने प्राङ्मुखो गच्छति Mahâd.

ततोऽसि तन्तुरस्यनु मा तनुह्यस्मिन्यज्ञेऽस्याः साधुकृत्यायामस्मिन्नन्नेऽस्मिं-ल्लोकऽइदं मे कर्मेदं वीर्यं पुत्रोऽनुसंतनोत्विति पुत्रस्य नाम गृह्णाति ॥ २५ ॥[1] पुत्र इत्यत्र पुत्रस्य नाम प्रथमैकवचनान्तं गृह्णाति इदं॰ पुत्रोऽमुकशर्मानुसंतनोतु · ततोऽसि तन्तुरसीत्येतस्मिन्मन्त्रे तत्पदैरेकवाक्यभूतं गृह्णाति कुतः काण्वसमाम्नानात् इदं मे कर्मेदं वीर्यं पुत्रो देवदत्तोऽनुसंतनोत्विति हरिस्वामिनः (१.१.३.२१)। अनेकेषु पुत्रेषु सर्वेषाम्[2] · ज्येष्ठस्य पुत्रस्य नामाभिव्याहृत्य यावन्तो वा भवन्तीति शाङ्खायनः (२.१२.११) · प्रियस्य पुत्रस्य नाम गृह्णातीत्यापस्तम्बः।

आत्मनोऽविद्यमाने ॥ २६ ॥ कथंचित्पुत्ररहितश्चेन्मृतपुत्रो वा तदा आत्मनो नाम गृह्णीयात् इदं मे कर्मेदं वीर्यं देवदत्तोऽहं संतनवानीति हरिस्वामिनः[3]।

तन्त्वे वा ज्योतिषे वेति वा ॥ २७ ॥ अथवा अविद्यमाने पुत्रे इदं मे कर्मेदं वीर्यं तन्त्वे वा ज्योतिषे वानुसंतनोत्विति प्रयोगो भवति[4]। एतदप्यर्थकर्म। अनेकयजमानके विष्णुक्रमणभागभूमिप्राक्सूर्यावेक्षणप्रदक्षिणावर्तनप्राग्गमनेष्वन्वारम्भः · आहवनीयवीक्षणगार्हपत्योपस्थानपुत्रनामग्रहणतूष्णीमाहवनीयोपस्थानव्रतविसर्गभागप्राशनानि भेदेनेति सम्प्रदायः।

आहवनीयमुपतिष्ठते तूष्णीम् ॥ २८ ॥ समीपे स्थित्वा तं विलोकयति तूष्णीमिति लौकिकवागुच्चारणनिषेधः क्रियते मन्त्राभावात्। दिवि विष्णुरिति क्रमणप्रभृत्याहवनीयोपस्थानान्तं कर्म विष्णुक्रमसंज्ञं भवति।

व्रतं विसृजते येनोपेयात् ॥ २९ ॥ यजमानः शास्त्रितं सत्यवदनादिनियमं मुञ्चति तेन मन्त्रेण येन व्रतमुपेयात् · पूर्वं हि व्रतग्रहणे द्वौ मन्त्रावुक्तौ (२.१.११) अग्ने व्रतपतऽइदमहमिति वेति · अत्र इदमहमित्येव मन्त्रः श्रुत्यभिमत इति हरिस्वामिनः (१.१.३.२३)।

---

1) Kâṇva, see Vâj. S. pag. ५६. 2) प्रतिपुत्रं मन्त्रावृत्त्या नामग्रहणम् · सत्त्रे सर्वैः पुत्रनामग्रहणं कर्तव्यम् Mah. 3) See १.१.३.२१. Edit. pag. १३०.— अविद्यमाने अजाते वा मृते वा यजमान आत्मनो नाम गृह्णीयात् Ss. 4) मन्त्रान्तेऽनुसंतनोमीति Mahâd.

सं यज्ञपतिराशिषेति भागं प्राश्नाति ॥३०॥[१] स्वभागम् · अनेकयजमानके सर्वे विभज्य प्राशनं कुर्युः । व्रतविसर्गभागप्राशनयोरन्तापच्छिन्नेऽपि प्रवृत्तिः प्रतिपत्तिरूपत्वात् ।

ब्राह्मणं तर्पयितवै ब्रयाद्यज्ञमेवैतत्तर्पयतीति श्रुतेः (१.७.३.२८) तर्पयतीति श्रुतेः ॥३१॥ भागप्राशनानन्तरमध्वर्युः ब्राह्मणं तर्पयितवाऽइतीमं प्रैषं यजमानं प्रति ब्रूयात्[२] उपविष्ट एव · प्रैषानन्तरमेवात्र ब्राह्मणस्तृप्तिपर्यन्तं भोजयितव्यः । ब्राह्मणतर्पणेनैव यज्ञस्तृप्तो भवति नान्यथा · अतश्च प्रैषार्थानुष्ठानं ब्राह्मणभोजनरूपमत्र पदार्थो न प्रैषमात्रमित्येवं ज्ञापयितुमत्र श्रुत्युपादानम् । अयं च प्रयाजादिसदृश आराडुपकारकोऽदृष्टोत्पादकः पदार्थः क्रतोरङ्गम् तेन प्रयाजाद्यकरणऽइवास्याकरणे क्रतोर्वैगुण्यं भवति · अकृते च तस्मिन्निष्टेरसमाप्तत्वादिष्ट्यन्तरारम्भो न कार्यः · ब्राह्मणभोजनानन्तरं च नमः कृतायेत्यनेन (२.२.२३) समिदाधानोपस्थानहोमानामन्यतमद्ध्वा करोति । द्विरभ्यासोऽध्यायपरिसमाप्तिसूचनार्थः ॥ ॥ समाप्तोऽयं पौर्णमासः सर्वास्विष्टिषु पशुबन्धेषु यागेषु सौत्रामण्यां च प्रकृतिभूतः । यद्यप्ययं कृताधानस्य भवति तथाप्याधानेष्टीनां तनूहविःसंज्ञकानां पौर्णमासयागः प्रकृतिः तस्मात्पूर्वमुपदेश्यः · तनूहविषामेव सर्वेष्टिप्रकृतित्वं कृत्वापि तथापि तेष्विति कर्तव्यताविकृत्यदर्शनात्सर्वप्रकृतित्वं न सम्भवति तस्मात्पौर्णमासयाग एव पूर्वमुपदिष्टः ॥ ॥ अष्टमी कण्डिका ॥८॥

इति कात्यायनसूत्रव्याख्याने श्रीदेवकृते तृतीयोऽध्यायः समाप्तः ॥ ॥

अथ पद्धतिः ॥

ततो जुहूां चतुर्गृहीतं गृहीत्वा केवलमाज्यं प्रायश्चित्तार्थं जुहोति · अथवा चतुर्गृहीतं गृहीत्वा तत्र पिष्टलेपं निधाय वा · अथवोपस्तीर्य पिष्टलेपं द्विरवदा-

१) युज्यताम् गच्छतामित्यध्याहारः Mahâd. २) प्रैषस्तु भोजनार्थो न संकल्पार्थः · भोजनं तु स्त्रीसाध्यम् पाकपरिवेषणयोः स्त्र्यधिकारात् · अतः प्रैषसमनन्तरमेव यथारुचि परिवेषणेन ब्राह्मणं तर्पयेत् · तस्मादत्र प्रैषे यजमानस्याधिकारः सर्वोत्कृष्टत्वात् प्रैषस्य स्वकाण्डे पठितत्वाच्च प्रैषार्थे स्त्रिया अधिकारः परिवेषणार्थत्वात् । प्रैषोऽध्वर्योर्यजमानेन संकल्प इति सम्प्रदायः । कर्कस्त्वस्पष्ट एवात्र पाकाभावे गोः पयोऽधिश्रयितवै ब्रूयादित्यत्र (४.१३.१०) प्रैषे यजमान इति कर्केणालेखि Mahâd.

याभिघार्योलूखले मुसलऽइति जुहोति · तैत्तिरीयसूत्रे अथ स्रुचि चतुर्गृहीतं गृहीत्वापसलवि पर्यावृत्यान्वाहार्यपचने प्रायश्चित्तं जुहोत्युलूखले मुसलऽइत्यादिना · मानवे तस्यां पुनर्गृहीत्वा पिष्टलेपं द्विरवत्तमभिघार्योलूखलऽइत्यादि · आपस्तम्बः चतुर्गृहीतऽआज्ये पिष्टलेपानोप्य जुहोत्युलूखलऽइत्यादि · त्यागश्च प्रकृतौ विकृतौ च इदं विश्वेभ्यो देवेभ्य इत्येव कार्यः । ततो वेदोऽसीति (२.२१) मन्त्रेण पत्नी वेदं विमुञ्चति · ततः प्र मा मुञ्चामीति योक्त्रं पत्नी विमुञ्चति · ततो होता वेदयोक्त्रे परिषिच्य पत्नीं वाचयित्वा गार्हपत्यस्योत्तरत आरभ्य वेदेः पूर्वान्तं यावद्वेदं स्तृणाति । ततोऽध्वर्युर्ध्रौवमाज्यं विलाप्य बर्हिषः सकाशात्कुशमुष्टिं सव्ये पाणौ गृहीत्वोर्धस्तिष्ठन्देवा गातुविद इति (२.२१) मन्त्रेण संततं ध्रुवयैव समिष्टयजुर्जुहोति इदं वाताय न ममेति त्यागः · दर्भमुष्टिमनुप्रहरति । ततः सर्वं बर्हिर्जुह्वामवधाय सं बर्हिरित्याहवनीये (२.२२) जुहोति इदं दिव्याय नभसे इदं बर्हिषे न ममेति केचित् । ततः प्रणीता वेदिमध्यऽआसाद्याहवनीयं प्रदक्षिणीकृत्य वेदिमध्यऽउदङ्मुख उपविष्टो वेद्यां प्रणीता निनयति कस्त्वा विमुञ्चतीति मन्त्रेण (२.२३) · ततोऽप्रदक्षिणं प्रत्यागच्छति । ततः प्रथमकपाले फलीकरणानन्तरं स्थापितान्कणान्निधायोत्करस्योपरि समीपऽएव कृष्णाजिनं सव्येन धारयन्कृष्णाजिनस्याधस्तादुत्करे कपालेनैव कणान्प्रास्यति रक्षसां भागोऽसीति (२.२३) मन्त्रेण · उदकोपस्पर्शः । ततः पूर्णपात्रमादाय पूर्वेणाहवनीयं परीत्य दक्षिणात उत्तराभिमुखो यजमानस्याञ्जलौ संततं निनयति निनीयमानं पूर्णपात्रं यजमानोऽञ्जलिना प्रतिगृह्णाति सं वर्चसेति (२.२४) · ततस्तूष्णीं मुखं विमृष्टे · अत आरभ्य भागप्राशनान्तं सर्वं कर्म यजमानः करोति । तत उत्थाय दक्षिणवेदिश्रोणेरारभ्याहवनीयादर्वाग्विष्णुक्रमान्क्रमते । आपस्तम्बः दक्षिणवेद्यन्ते दक्षिणपदा चतुरो विष्णुक्रमान्प्राचः प्रक्रामत्युत्तरमुत्तरं ज्यायाꣳसमनतिहरन्सव्यं नाहवनीयमतिक्रामतीति · दक्षिणाद्वेदिश्रोणिप्रदेशादाहवनीयं यावदिति[1] शाङ्खायनः (४.१२.२) · तेन दक्षिणश्रोणेरारभ्य दिवि विष्णुरिति

[1]) This quotation is not verbatim: Çânkhâyana has: दक्षिणाद्वेदेः श्रोणिदेशादाहवनीयात् (i. e. °श्रात् आ आह°)

(२.२५) मन्त्रेण दक्षिणपादेन दक्षिणो वेद्यन्ते प्राच्यां गच्छति सव्यं पादं ततोऽर्वागेव स्थापयति ततोऽन्तरिक्षे विष्णुरिति ततः प्राच्यां द्वितीयम् पृथिव्यां विष्णुरिति ततोऽपि प्राच्यां तृतीयम् · अथवा प्रथमं पृथिव्यां विष्णुरिति मन्त्रेण क्रामति ततोऽन्तरिक्षऽइति ततो दिवि विष्णुरिति क्रमविकल्पः · क्रमणं कुर्वता आहवनीयस्यातिक्रमणं न कर्तव्यम् । ततोऽस्मादन्नान्निर्भक्त इति (२.२५) स्वं भागमवेक्षते उपविष्ट एव · ततोऽस्यै प्रतिष्ठायै निर्भक्तो योऽस्मानिति (२.२५) वेदिभूमिमवेक्षते · ततोऽगन्म स्वरिति (२.२५) प्राचीं दिशमीक्षते · ततः सं ज्योतिषाभूमेत्याहवनीयमीक्षते (२.२५) · स्वयम्भूरिति (२.२६) सूर्यमीक्षते · वर्चोदा इति (२.२६) सूर्यं प्रार्थयते अथवा वर्चोदा इत्यस्य स्थाने धनदा असि धनं मे देहि गोदा असि गा मे देहि पुत्रदा असि पुत्रान्मे देहीत्येवं यं कामं वाञ्छति तं याचते · ततः सूर्यस्यावृतमिति (२.२६) प्रदक्षिणमावर्तनं च करोति ततोऽप्रदक्षिणं चावर्तते । ततो गार्हपत्यसमीपे आगत्याग्ने गृहपतऽइति (२.२७) गार्हपत्यमुपतिष्ठते · अत्र मन्त्रे शतꣳ हिमा इत्ययमंशः पठनीयो न वा · पुनः सूर्यस्यावृतमिति (२.२७) प्रदक्षिणमावर्तते ततस्तूष्णीमप्रदक्षिणं चावर्तते । तत उरु विष्णाविति मन्त्रेण गार्हपत्यसमीपात्प्राच्यां गच्छति · ततो वेदिमध्यऽउपविष्टः पुत्राणां नाम गृह्णाति · तत्र मन्त्रः ततोऽसि तन्तुरस्यनु मा तनुहीति · अस्मिन्मन्त्रे इदं मे कर्मेदं वीर्यं पुत्रोऽनुसंतनोत्वित्यत्र वीर्यं पुत्रो यज्ञदत्तशर्मानुसंतनोत्वित्येवं पुत्रनाम गृह्णाति · अनेकेषु पुत्रेषु सर्वेषां ज्येष्ठानुक्रमेण नामग्रहणम् प्रतिपुत्रं च ततोऽसि तन्तुरसीत्यस्यावृत्तिः · ज्येष्ठस्य पुत्रस्य वेति यावन्तो वा भवन्ति तावतां नाम ग्राह्यमिति[१] शाङ्खायनः (२.१२.११) प्रियस्य पुत्रस्येत्यापस्तम्बः । अविद्यमाने पुत्रे इदं मे कर्मेदं वीर्यं विष्णुमित्रोऽनुसंतनोत्वित्यात्मनो नाम गृह्णाति इदं मे कर्मेदं वीर्यं देवदत्तोऽहं सतनवानीति हरिस्वामिनः प्रयोगं प्रदर्शितवन्तः । तत उत्थाय तूष्णीमाहवनीयमुपतिष्ठते · ततोऽग्ने व्रतपते इदमहमित्यनयोर्मध्ये येन मन्त्रेण पूर्वं व्रतं गृहीतं भवति तेनैवेदानीं विसृजते आहवनीयस्याग्रे स्थित्वा तं मन्त्रं पठतीत्यर्थः · यद्यग्ने व्रतपते व्रतं

---

१) The verbatim-quotation see at ३. ८. २५.

चरिष्यामीत्यनेन गृहीतम् तदाग्ने व्रतपते व्रतमचारिषमित्यनेन विसर्गः कार्यः· यदीदमहमनृतादित्यनेन प्राग्व्रतमुपेतम् तदा इदमहं य एवास्मि सोऽस्मीत्यनेन विसर्गः कार्यः। तदनन्तरं पूर्वेणाहवनीयं गत्वा दक्षिणाग्नेरुत्तरेण गत्वापराग्न्योरन्तरालेन निष्क्रामेत् · ततः सं यज्ञपतिराशिषेति मन्त्रेण स्वभागं प्राश्नाति। ब्रह्माप्यत्रैव स्वभागं प्राश्नाति तमिष्टौ संस्थितायां प्राश्नीयादिति छन्दोगसूत्रे (लाट्यायन ४.११.१८) . ब्रह्मा भागमाहरति नासंस्थिते तं भक्षयतीत्यापस्तम्बः · तं शम्य्वन्ते प्राश्नात्यूर्ध्वं वा समिष्टयजुष इति मानवे संस्थिते यत्प्राशनं तत्कर्मापवर्गान्ते कार्यम् ऊर्ध्वं वा समिष्टयजुष इत्यस्मिन्पक्षे समिष्टयजुषोऽनन्तरं यदेच्छा तदा प्राशनम्।

ततोऽध्वर्युर्ब्राह्मणं तर्पयितवाऽइत्येवं यजमानं प्रेष्यति ततो यजमानो वाग्रूपवयःश्रुतशीलवृत्तादिगुणवन्तं ब्राह्मणं तृप्तिपर्यन्तमन्नं भोजयति कर्मापवर्गे ब्राह्मणभोजनं वाग्रूपवयःश्रुतशीलवृत्तादिगुणाः श्रुतं तु सर्वानत्येति न श्रुतमतीयादिति बह्वृचगृह्ये (शाङ्खायनगृह्ये १.२) श्रुतत्वात्। ततो ब्राह्मणभोजनानन्तरं ब्रह्मा यथेतमेत्य[1] ब्रह्मवरणानन्तरं येन मार्गेण स्वासनं प्रत्यागतो भवति आहवनीयं पूर्वेण वापरेण वा तेनैव प्रत्यागत्य नमः कृतायेति स्वाहाकारान्तेन मन्त्रेणाहवनीये प्रादेशमात्रीं समिधमादधाति अथवा स्थाल्याः सकृद्गृहीतं जुह्वा अनेनैव मन्त्रेण जुहोति अथवानेनैवाहवनीयमुपतिष्ठते॥ ॥ इति पौर्णमासेष्टिः समाप्ता॥ ॥८॥

इति तृतीयस्याष्टमी कण्डिका॥

इति त्रिरग्निचित्सम्राट्स्थपतिमहायाज्ञिकश्रीप्रजापतिसुतयाज्ञिकदेवकृतायां कात्यायनसूत्रपद्धतौ तृतीयोऽध्यायः समाप्तः॥ ॥

इति कातीये श्रौतसूत्रे तृतीयोऽध्यायः॥३॥ ॥

1) See २. २. २३.

श्रुतिक्रमानुसारिणाचार्येण प्रथमं पौर्णमासमनुविहितम् अधुना दर्शस्यानुविधानं करिष्यंस्ततः प्राक्कालीनं पिण्डपितृयज्ञमनुविदधाति ·

अपराह्णे पिण्डपितृयज्ञश्चन्द्रादर्शनेऽमावास्यायाम् ॥ १ ॥ दिवसस्य समं द्वेधा विभक्तस्य द्वितीयो भागोऽपराह्णः समं त्रेधा विभक्तस्य तृतीय इत्यपरे पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणामपराह्णः पितॄणामिति (२.४.२.८)[1] · अह्नोऽदन्तादिति (पा° ८.४.७) णत्वम् । पिण्डपितृयज्ञ इति वक्ष्यमाणस्य कर्मणः समानसंज्ञा · सा च पिण्डदानपदार्थस्यैवार्थानुगमात् पिण्डैः पितॄणां यज्ञः पिण्डपितृयज्ञ इति अतश्च होमजपादयस्तदङ्गम् · प्रयोजनं चिन्तायाः पिण्डदानस्याकरणे अभ्यावृत्तिः न होमादेः । अमावास्यायामपराह्णे चन्द्रादर्शने पिण्डपितृयज्ञो भवतीत्यन्वयः · तत्र अमावास्यायामपराह्णे पिण्डपितृयज्ञ इत्येतावत्युक्ते दाक्षायणराजसूयकौण्डपायिनामयनसारस्वतसत्त्रादौ पक्षमध्येऽमावास्ये पिण्डपितृयज्ञप्राप्तेः तद्व्यावृत्त्यर्थं चन्द्रादर्शनऽइति विशेषणम् · चन्द्रस्यादर्शनमभ्रादिना द्वीपान्तरवर्तित्वादिनापि भवति तेन तच्चन्द्रादर्शनममावास्यापदेन विशेषयति[2] ·

---

[1]) पञ्चधा विभक्तस्याह्नश्चतुर्थो भागोऽपराह्णः Mahâd. [2]) चन्द्रादर्शनमभ्रादिनापि भवति · तन्मा भूदित्यमावास्यया विशेष्यते · तदेवोच्यतामिति चेत् न अमावास्याशब्दस्य कर्मविषयतापि दृश्यते चतुर्होत्रा पौर्णमासीमभिमृशेत्पञ्चहोत्रामावास्यायामिति (°स्याया° Cod.) · तत्र को दोषः · चतुर्दश्युपवासपक्षेऽपि प्राप्नोति · अस्तु तथेति चेत् न श्रुतिविरोधात् य-दैवैष न पुरस्तान्न पश्चाद्ददृशऽइति (२.४.२.७.) · अनेन च क्षयो लक्ष्यते तस्मिन्क्षीणे ददातीति (२.४.२.७.) हि श्रूयते · स च परमः क्षयः इतरस्तु प्रत्यहमेव भवति · एवं च सति परमक्षयविशिष्टऽएव काले पिण्डपितृयज्ञो नान्यत्रेति । यथा राजसूये पञ्चमध्यऽआमावास्ये (?अमा° Cod.) दाक्षायणे च खर्विकामावास्यायां दृष्टेऽपि चन्द्रमस्यपराह्णे परमक्षय इति क्रियतऽ एवं (?एव Cod.)- काले पिण्डपितृयज्ञः यदैवैष न पुरस्तान्न पश्चाद्ददृशऽइति क्षयोपलक्षणार्थत्वात् Karka.

चन्द्रादर्शनशब्देनात्र चन्द्रमसः परमक्षयो लक्ष्यते न क्षयमात्रम् तस्य प्रतिदिनं सद्भावात् · अतोऽमावास्यातिथौ अपराह्णे चन्द्रस्य परमक्षयविशिष्टऽएव काले पिण्डपितृयज्ञो भवतीति सूत्रार्थः · तेन दाक्षायणादौ पक्षमध्ये अमावास्यानुष्ठाने पिण्डपितृयज्ञस्य निमित्तभूतकालाभावाद[न]नुष्ठानं सिद्धम् । काल उक्तोऽथ विधिमुपदिशति ·

दक्षिणाग्नौ श्रपणम् ॥ २ ॥[१] चरोः । गार्हपत्याहवनीययोरपवादोऽयं शाखान्तरात् ।

होमश्च ॥ ३ ॥

परिस्तीर्य तं पूर्ववत्पात्रासादनमेकशः ॥ ४ ॥ पूर्ववदिति पौर्णमासवत्[२]· एकशो न द्वन्द्वम् · तच्चोपयोगक्रमेण दक्षिणाग्नेरुत्तरतो दक्षिणासंस्थम् · स्फ्यः शूर्पम् अग्निहोत्रहवणी वा चरुस्थाली वा कृष्णाजिनम् · शाखान्तरात् उलूखलम् मुसलम् व्रीहयः स्रुचि ग्रहणपक्षे अत्र चरुस्थाली चरुश्रपणार्थमुदकम् आज्यम् मेक्षणम् समित्त्रयम् उदकपात्रम् सकृदाच्छिन्नानि दर्भतृणानि सूत्रादीनामन्यतमदिति। परिस्तरणस्याकृतिमात्राङ्गत्वाद्धोमात्पूर्वं प्राप्तस्य अस्मिन्काले कार्यमिति पुनर्वचनम् · एतच्च परिस्तरणं होमाङ्गत्वाद्धोमस्य यज्ञोपवीतिना करणपक्षे इदमपि यजमानेनैव प्रागुदग्भिर्दर्भैः प्रागुदक्संस्थं प्राङ्मुखेन कार्यम् प्राचीनावीतिना करणपक्षे परिस्तरणमपि तथैव कर्तव्यम्[३]· अन्यत्तु[४] सर्वं कर्मापसव्येन दक्षिणाभिमुखेन कार्यम् · अत्र नीवीविस्रंसनविधानात् (१५) प्रथममेव नीवीबन्धनं कार्यम् ततः परिस्तरणादि ।

अपरेण गार्हपत्यं चरुमपूर्णां स्रुचं वा तूष्णीं गृहीत्वोत्तरेण दक्षिणाग्निमवहन्ति तिष्ठन् ॥ ५ ॥ गार्हपत्यादपरस्यां दिशि अपूर्णां चरुं चरुस्थालीम्[५] तूष्णीं मन्त्रस्याविधानाल्लौकिकवागुच्चारणवर्जम् व्रीहीन्न्युब्जेन मुष्टिना प्राचीनावी-

---

१) पिण्डपितृयज्ञार्थपाकः Mahâd. २) अनेन श्रपणस्य पश्चादुत्तरतो वा अर्थवच्चेति (२.३.८-९.) सर्वमतिदिश्यते · द्विश इति निवृत्त्यर्थमेकश इति Ss. ३) अप्रादक्षिण्येन दक्षिणाग्निं दर्भैः परिस्तीर्य Mahâd. ४) ? अत्र २. ५) चरुं मृन्मयपात्रम् चरुर्मृच्चयो भवतीति यास्कोक्तेः (६.११.) Mahâd.

ती दक्षिणामुखोऽध्वर्युर्गृह्णीयात् अथवा अपूर्णां स्रुचम्[1] · एवं गृहीत्वा दक्षिणाग्नेरुत्तरतो गार्हपत्यस्य पुरस्ताद्दक्षिणाभिमुखस्तिष्ठन्नवहन्ति अत्र शाखान्तराद्दक्षिणाग्नेरुत्तरत उदग्ग्रीवं कृष्णाजिनमास्तीर्य तत्रोलूखलं निधाय तस्मिन्व्रीहीणां प्रक्षेपं कृत्वा मुसलमादाय दक्षिणाभिमुखस्तिष्ठन्नवहननं कण्डनं व्रीहीणां करोति ततः शूर्पमादायोलूखलाद्व्रीहीन्निष्कास्य निष्पवनेन तुषान्निष्काशयेत्।

सकृत्फलीकरोति ॥ ६ ॥[2] लोके तस्य पुनः-पुनः क्रियमाणत्वात् सकृदित्युच्यते ।

सारतण्डुलमपूर्णां॑ श्रपयित्वाभिघार्योद्वास्य मेक्षणेन जुहोत्यग्नयऽइति (२.२९) सोमायेति च ॥ ७ ॥ इममेव चरुं सारतण्डुलमीषत्स्विन्नतण्डुलम्[3] अपूर्णां यथा शृतेन चरुणा स्थाल्याः पूरणं न भवति तथा श्रपयित्वा आसादितेनाज्येनाभिघार्य दक्षिणात उद्वास्य दक्षिणाग्नेः पूर्वमार्गेणाप्रदक्षिणमुत्तरत आनीय सव्यं कृत्वा तिष्ठंस्तिस्रः समिध आधायोपविश्य प्राङ्मुखो मेक्षणेन चरुं जुहोति दक्षिणाग्नौ । कात्यायनः (कर्मप्रदीप० २.८.१२) अग्नौ-करणहोमश्च कर्तव्य उपवीतिना प्राङ्मुखेनैव देवेभ्यो जुहोतीति श्रुतिः श्रुतेरिति · अत्र केचिदपसव्येन होमं कुर्वन्ति[4] तेषाम् स उद्वास्याग्नौ द्वेऽआहुती जुहोति देवेभ्य इति (२.४.२.११) श्रुतिविरोधः · अतस्तच्छाखान्तरीयं विधानम् · तथा च कात्यायनः (कर्म० २.८.१३) अपसव्येन वा कार्यो दक्षिणाभिमुखेन वेति । मेक्षणं च होमसाधनत्वाद्वैकङ्कतम् पालाशमपि भवति · कात्यायनः (कर्मप्र० २.५.१४) इध्मजातीयमिध्मार्धप्रमाणं मेक्षणं भवेत् वृत्तं चाङ्गुष्ठपृथ्वग्रमवदानक्रियाक्षममिति । हरिस्वामिनः एते

---

1) अपूर्णता चरोः स्रुचश्च अपूर्णां पितॄणामिति Karka. 2) तान्वितुषीकृतान्व्रीहीन् Mahâd. 3) ? °मीषत्खिन्न° २. सारतंडुलं ईषत्स्विन्नतंडुलं Ss. सारशब्दः सकलतण्डुलवाची प्रसिद्धेः · ईषश्विन्नता (!) वाक्यशेषात् शृताशृतं पितॄणामिति · प्रसिद्धिरनैकान्तिकी पुरुण्यपि सारशब्दप्रयोगात् Karka. सारतण्डुलद्रव्यं तुषकणादिरहितमीषत्स्विन्नं Mahâd. 4) होमश्च यज्ञोपवीतिना प्राङ्मुखेनैव दैवत्वात् (? देवङ्गत्वात् Cod.) स उद्वास्याग्नौ द्वेऽआहुती जुहोति देवेभ्य इति (२.४.२.११.) · न वा पित्र्यकर्माङ्गत्वात् प्रधानोपचारन्यायाच्चाङ्गानाम् महापितृयज्ञे च देवाज्यग्रहणे यज्ञोपवीतित्वविधानात् स यज्ञोपवीती भूत्वाज्यानि गृह्णातीति (२.६.१.१२.) · प्राप्तानुवाद इति चेत् न अनन्यपरत्वाद्वाक्यस्य · मन्त्रलिङ्गाच्च कव्यवाहनाय पितृमतऽइति (२.२९) कव्यवाहनः पितॄणामिति (२.६.१.३०) पितृसम्बन्धात् · तस्मात्पित्र्यवदेव होमः Karka.

आहुती पिण्डदानाङ्गभूते ततश्च विस्मृतयोर्न चरुरुत्पाद्यः किं तर्हि प्रायश्चित्तं कृत्वा आ समाप्तेराज्येन होतव्यमिति ।

प्रास्य तद्दक्षिणेनोल्लिखत्यपहता इत्यपरेण वा (२.२९) ॥८॥ तन्मेक्षणं दक्षिणाग्नौ प्रास्य प्रस्तुतत्वाद्दक्षिणाग्निं दक्षिणेन अथवा तमपरेण स्फ्येन दक्षिणासंस्थां लेखां करोति । सव्येन होमपक्षे मेक्षणप्रासनमपि सव्येनैव तदङ्गत्वश्रुतत्वात् · अपसव्येन तु होमपक्षे अपसव्येनैव मेक्षणप्रासनम् । स्फ्येनेति शाखान्तरात् ।

उल्मुकं परस्तात्करोति ये रूपाणीति (२.३०) ॥९॥[1] रेखायाः परस्ताद्दक्षिणप्रदेशे उल्मुकं दक्षिणाग्नेरेकदेशं निदधाति ।

उदपात्रेणावनेजयत्यपसव्यं सव्येन वोद्धरणसामर्थ्यादसाववनेनिक्ष्वेति[2] यजमानस्य पितृप्रभृति त्रीन् ॥१०॥ उदकस्य पात्रमुदपात्रं पूर्णपात्रादि · तेनाध्वर्युः यजमानस्य पितृप्रभृति पितुरारभ्य त्रीन्पुरुषान्पितृपितामहप्रपितामहान् अपसव्यं यथा स्याद्धस्तस्य सव्यप्रदेशाद्दक्षिणप्रदेशेनोदकनिनयनं यथा स्यात् तथाङ्गुष्ठप्रदेशिन्योरन्तरालेन अवनेजयति अवनिक्तान् शुचीन्करोति पिण्डदानाय । असाविति सम्बुद्ध्यन्तगोत्रनामादेशपूर्वकम् अमुकसगोत्र यजमानस्य पितरमुकशर्मन्नवनेनिक्ष्व । रेखाया मूलमध्याग्रप्रदेशेषु दक्षिणासंस्थमवनेजनं कार्यम् । अग्रेण[3] देवानां होमः कनिष्ठिकाप्रदेशेन मनुष्याणामुद्धरणं परिवेषणापरपर्यायम् अङ्गुष्ठप्रदेशिन्योरन्तरालमेव पितॄणां परिशिष्यते · अत इदमाह अपसव्यमिति ।

उपमूलं सकृदाच्छिन्नानि लेखायां कृत्वा यथावनिक्तं पिण्डान्ददात्यसावेतत्त इति ॥११॥ ततो मूलसमीपे एकेनैव प्रयत्नेन छिन्नानि दर्भतृणानि दक्षि-

---

१) परस्तादग्रे अर्वाक् · परस्तात्पश्चादिति गुरुचरणाः Mahâd. २) ?सव्येन वोद्ध° १.२. सव्येनोद्ध° ४. ३) सव्येनोद्धरणसामर्थ्यात् उद्धरन्ति मनुष्येभ्य इति कनिष्ठिकाप्रदेशेन मनुष्याणामुद्धरणं परिवेषणापरपर्यायम् Ss. अत्राभिनयश्रुतिरुद्घाटितोद्धरणसामर्थ्यादिति इतीव वै देवेभ्यो जुह्वत्युद्धरन्ति मनुष्येभ्योऽथैवं पितॄणामिति (२.४.२.१८) · पाणौ हि तीर्थचतुष्टयम् अग्रे देवतीर्थम् मूले मनुष्याणामिति अथैवमिति अङ्गुष्ठमूलं वा कनिष्ठिकाप्रदेशो वा तत्राङ्गुष्ठमूले पितृतीर्थं स्मर्यतऽइति कनिष्ठिकोद्देशे हि सव्यता भवति सा च पित्र्येऽनुचितेति Karka. कनिष्ठामूले सव्यता तेन सव्येनोद्धरणं परिवेषणम् · तर्जनीमूलेऽपसव्यता पितृतीर्थम् तेनावनेजनमित्यर्थः · एतद्विपरीतेनैवोद्धरणं समर्थं भवति Mahâd.

णाग्राणि रेखायामास्तीर्य यथावनिक्तम्[1] यत्र-यत्रावनेजनं यस्य-यस्य दत्तं तत्र-तत्र पिण्डान्ददाति · असावित्यस्य स्थानेऽमुकसगोत्रामुकशर्मन्निति[2] ।

ये च त्वामन्विति चैके ॥१२॥ एके एतत्ते ये च त्वामनु इत्येवं पिण्डदानमन्त्रशेषं कुर्वन्ति[3] । यदि द्विपितृकः स्यादेकैकस्मिन्पिण्डे द्वौ-द्वावुपलक्षयेदिति विशेषः · शौनकः नामान्यविद्वान्पितः पितामह प्रपितामहेति · व्याघ्रपात् गोत्राज्ञाने काश्यप इति · ततश्च काश्यपगोत्र पितः पृथिवीसत् अवनेनिक्ष्व पितामहान्तरिक्षसत् प्रपितामह दिविसदिति प्रयोज्यम् ।

अत्र पितर इत्युक्त्वोदङ्ङास्त (२.३१) ऽआ तमनात् ॥१३॥ पिण्डसंमुखः संहितास्वरेण पठित्वाप्रदक्षिणं पर्यावृत्य उदङ्मुखो भूत्वा श्वासधारणं कृत्वा उपविशेत् ग्लानिपर्यन्तम् · न चोदङ्मुखावस्थापनमात्रेण ग्लानिः सम्भवति अतः शाखान्तरोक्तं श्वासधारणमर्थात्कार्यम् · विष्णुः यथाशक्ति प्राणनिरोधं कृत्वासीतेति ।

आवृत्यामीमदन्तेति (२.३१) जपति ॥१४॥ प्रदक्षिणं प्रत्यावृत्य पिण्डसंमुखो भूत्वा ।

अवनेज्य पूर्ववन्नीविं विस्रस्य नमो व इत्यञ्जलिं (२.३२) करोति ॥१५॥[4] षड्भिर्मन्त्रैः षडञ्जलीन् । नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो व इति षष्ठो मन्त्रः · गृहाणां पत्नीनां वा पिण्डानां वावेक्षणं कुर्वता गृहान्नः पितर इति जपश्च महापितृयज्ञवदत्रापि कार्यः समानश्रवणात् ।

एतद्व इत्युपास्यति (२.३२) सूत्राणि प्रतिपिण्डम् ॥१६॥ प्रतिपिण्डं बहुवचनात्त्रीणि-त्रीणि सूत्राणि उपास्यति पिण्डानामुपरि निदधातीत्यर्थः ।

ऊर्णादशा वा ॥१७॥ ऊर्णा मेषरोमाणि तन्निर्मितवस्त्रदशा वा ब-

---

1) यथावनेजनं कृतम् पितृतीर्थेन लेखामूलमध्याग्रेषु Mahâd. 2) अन्नमिति चाध्याहारः Karka. 3) अन्नमित्यध्याहारान्ते Mahâd. 4) पूर्ववदिति उदपात्रेणापसव्येन यजमानस्य पितृप्रभृति त्रीनवनेज्य · भूमौ वा · नमो व इत्यारभ्य पितरो देष्म इत्यन्तेन Mah. विस्रंसनोपदेशात्पूर्वमिव नीविमत्परिधानम् । प्रतिनमस्कारं वाञ्जलिकरणम् षट्ट कृत्वो नमस्करोतीति वचनात् (२.४.२.२४) · षट्कृत्वो नमस्करोतीति सूत्रकारानुपदेशान्नेति चेत् स्यात् महापितृयज्ञऽउक्तत्वात् (५.१.२५) षड्कृत्वा-नमस्करोतिश्रुतेश्च तुल्यत्वात् (२.६.१.४२) Karka.

ङ्गवविशिष्टाः प्रतिपिण्डमेतद्व इत्युपास्यति । अथवा ऊर्णा वा दशा वेति पक्ष-द्वयम् · तथा च मानवे वाससः ऊर्णां दशा वेति ।

वयस्युत्तरे यजमानलोमानि वा ॥ १८ ॥ यजमानस्य पञ्चाशत्तमवर्षादूर्ध्वं यजमानलोमानि पलितानि हृदयस्थानि सूत्रस्थाने प्रतिपिण्डं प्रास्यति · उत्तर-शब्दोपादानात्पूर्वोत्तरभागेन शतवर्षरूपस्य वयसो द्वेधा विभागः · तथा च पारा-शरः पञ्चाशद्वार्षिको यस्तु दद्याल्लोम स्वयं शुकमिति · शाट्यायनिः पञ्चाश-दूर्ध्वमुरोलोम यजमानस्येति ।

ऊर्जमित्यपो (२.३४) निषिञ्चति ॥ १९ ॥ पितॄणामधिष्ठानं पिण्डाः · तेन ऊर्जं वहन्तीरित्यनेन मन्त्रेणोदपात्रेणावनेजनावशिष्टमुदकं पिण्डानामुपरि निषि-ञ्चति पिण्डसमीपे भूमौ वा उभयथा शाखान्तरे श्रवणात् स्वधा स्थ तर्प-यत मे पितॄनिति मन्त्रलिङ्गात् ।

अवधायावजिघ्रति यजमानः ॥ २० ॥ पिण्डानध्वर्युः स्थाल्यां प्रत्यवधाय स्थाल्यां पिण्डान्समाधायेत्यापस्तम्बः · ततो यजमानः सव्यं कृत्वा पिण्डान्स्थाली-स्थानवजिघ्रति । अवघ्राणं यजमानसंस्कारः स यजमानभाग इत्यर्थवादात् (२.४. २.२४) · ततश्च प्रोषिते यजमाने न भवति । अत्र ल्यबादेशः पूर्वकालतामात्रे न समानकर्तृकतायाम् निरुप्याज्यं प्रातर्दोहनमिति-वत् (४.२.३७) ।

उल्मुकसकृदाच्छिन्नान्यग्नौ ॥ २१ ॥ पूर्वं सकृदाच्छिन्नानि यानि रेखायामा-स्तृतान्यभूवन् तान्यग्नौ दक्षिणाग्नौ प्रक्षिप्य ततः उल्मुकं तत्रैव प्रक्षिपति अ-ग्नौ सकृदाच्छिन्नानीत्यादिश्रुतेः (२.४.२.२४) . सूत्रे चोल्मुकपदस्य प्रथमोच्चारणम् अ-ल्पाच्तरत्वात् · तेन प्रथमं सकृदाच्छिन्नप्रासनम् तत उल्मुकस्य ।

आधत्तेति (२.३३) मध्यमपिण्डं पत्नी प्राश्नाति पुत्रकामा ॥ २२ ॥ गर्भग्रह-णायोग्या ऋतुस्नाता पत्नी मध्यमपिण्डं पितामहस्य पिण्डं प्राश्नाति · पत्नीबहुत्वे पिण्डविभागो मन्त्रावृत्तिश्चेति धूर्तस्वामी · मानवे मध्यमपिण्डं पत्नी प्राश्नीया-दग्नावितरावादध्याद्ब्राह्मणोऽधिभक्षयेदप्सु वा गमयेदिति · पाराशरः पिण्डानां मध्यमं पिण्डं पितॄन्ध्यायन्समाहिता प्राशयेत्पुत्रकामा तु भार्या तं श्राद्धदस्य च स्नुषा वापि सगोत्रा वा पुत्रकामा द्विजाज्ञया आधत्त पितरो गर्भं व्या-

हरेयुर्द्विजातयः महारोगगृहीता वा तद्रोगोपशमाय च घ्नन्तु मे पितरो रोगमित्युक्त्वा प्राशयेच्च तम् अन्यानप्सु हुताशे वा क्षिपेद्गवे द्विजाय वा अजाय वा प्रदद्याच्च पश्चाद्विप्रविसर्जनमिति ।

प्रेतेभ्यो ददाति ॥२३॥ यत्पितृप्रभृतिभ्यो दानमुक्तम् तत्प्रेतेभ्यो मृतेभ्यः पितृपितामहप्रपितामहेभ्यो ददाति ।

जीवपितृकोऽपि ॥२४॥ पिण्डपितृयज्ञेऽधिक्रियते ।

जीवान्तर्हितेऽपि ॥२५॥ जीवपितृकस्य जीवेन पित्रादिना अन्तर्हितेऽपि व्यवहितेऽपि पितामहादौ पिण्डदानं भवति · सोमादाविव · येभ्य एव पिता दद्यात्तेभ्यो दद्यात्तथा सुत इति स्मृतेः ।

जीवपितृकस्य होमान्तमनारम्भो वा ॥२६॥ जीवस्य यजमानस्य होमान्तमेव पिण्डपितृयज्ञसंज्ञं कर्म भवति अथवानारम्भ एव पिण्डपितृयज्ञस्य · वाशब्दः पूर्वपक्षनिरासार्थः । अत्रानारम्भपक्ष एव युक्तः यतः पिण्डदानं प्रधानम् तदभावे होमस्याङ्गभूतस्यानुष्ठानं न घटते । एवं जीवान्तर्हितेऽपीति पक्षं दूषयित्वा जीवस्य होमान्तमित्यत्रोपपत्तिमाह ·

न व्यवेते जातूकर्ण्यो न जीवन्तमतिददातीति ॥२७॥ जीवपितृकस्य होमान्तकर्म कुर्वतः यतो जातूकर्ण्य आचार्यो न व्यवेते जीवता पित्रा व्यवहिते पितामहादौ पिण्डदानं न भवतीत्याह · कुतो न भवतीत्यत्र हेतुः न जीवन्तमतिददातीति शाखान्तरे श्रवणात् · अतः प्रधाने पिण्डदाने जीवपितृकस्य निषिद्धे अनारम्भ एव घटते न होमान्तता । आपस्तम्बः यदि जीवत्पिता न दद्यादा होमात्कृत्वा विरमेदिति · मानवे च यदि दद्याद्येभ्य एव पिता दद्यात्तेभ्यो दद्यादिति · काठके पितापुत्रौ चेदाहिताग्नी स्यातां येभ्यः पिता तेभ्यः पुत्रो दद्यात् पिता प्रेतः स्यात्पितामहो जीवेत्पित्रे पिण्डं निधाय पितामहात्पराभ्यां द्वाभ्यां दद्यादिति ॥ ॥ श्वो नोदेतेत्यदृष्टे वेति (४.२.१) पक्षे चतुर्दश्यामुपवासो विहितः · तदा चतुर्दश्यामग्न्यन्वाधानादि कृत्वा प्रातरमावास्यायां दर्शेष्टिः क्रियते · ततोऽपराह्णे पिण्डपितृयज्ञः प्राप्नोति अपराह्णे पिण्डपितृयज्ञश्चन्द्रादर्शनेऽमावास्यायामिति तत्कालस्य प्रागुक्तत्वात् (४.१.१) । अमावास्योपवा-

सपक्षे चामावास्यायां पूर्वाह्णे दर्शार्थमग्नी विहृत्याग्न्यन्वाधानं कृत्वा वैश्वदेवं च कृत्वा ततोऽपराह्णे पिण्डपितृयज्ञः प्राग्दर्शेष्टेः प्राप्नोति । एवं कदाचित्प्राक् कदाचित्पश्चादित्यनियमे प्राप्ते नियमार्थमाह ·

पूर्वो वाङ्गत्वात्पिण्डपितृयज्ञः [1] ॥ २८ ॥ पूर्व एव दर्शेष्टेः पिण्डपितृयज्ञः न पश्चात् अङ्गत्वप्रतिपादकवाक्यात् [2] । जीवपितृकस्यैव चतुर्दश्यामुपवासपक्षो न मृतपितृकस्य · तस्य हि पिण्डपितृयज्ञोऽवश्यं दर्शात्प्रागेव कर्तव्यः न चासौ चतुर्दश्यामुपवासपक्षे प्राग्दर्शात्सम्भवति विहितकालाभावात् · अतो मृतपितृकस्यामावास्यायामेव उपवासो जीवपितृकस्य चतुर्दश्याममावास्यायां वेति विकल्पः । [कर्क° इदमेव विचार्यते किं पिण्डपितृयज्ञो दर्शाङ्गमुतानङ्गमिति किं तावत्प्राप्तम् अनङ्गमिति ब्रूमः · ]

प्रकरणाकाललिङ्गानुग्रहवचनानाहिताग्निश्रुतिभ्योऽनङ्गम् ॥ २९ ॥ पिण्डपितृयज्ञो दर्शस्य अङ्गं न भवति प्रकरणादिभिन्नत्वात् । प्रकरणभेदात् · यस्य प्रकरणे यद्यत्पठ्यते तत्तदङ्गं भवति · न चायं दर्शप्रकरणे पठ्यते · अतोऽनङ्गम् । किं च कालभेदात् · अङ्गानां प्रधानकालता न्याय्येति न्यायादङ्गानां प्रधानानामेककालता भवति · अत्र च कालभेदो विद्यते दर्शस्य प्रतिपत् पूर्वाह्णश्च पिण्डपितृयज्ञस्यामावास्यापराह्णश्चेति । लिङ्गाच्च · यद्ब्रह्मणा गृहीतः पौर्णमासेन यजेत पितृयज्ञेनैवामावास्यामवरुन्धे [3] इत्यमावास्यां विनापि केवलं पितृयज्ञं दर्शयति · दर्शाङ्गं स्यात् तदा दर्शं प्रधानं विना केवलस्याङ्गमात्रस्यानुष्ठानदर्शनं न स्यात् अस्ति च अतोऽस्माल्लिङ्गादपि न दर्शाङ्गम् । अनुग्रहवचनाच्च अस्य पिण्डपितृयज्ञस्य गवामयनादौ संवत्सरसत्त्रे दर्शात्पृथगनुग्रहवचनमस्ति कथमेषां पितृयज्ञोऽनन्तरितो भवतीति (१२.३.५.५) · यद्यङ्गं स्यात् तदा कथमेषाममावास्यं हविरनन्तरितं भवतीति दध्ना च पुरोडाशेन चेति (१२.३.५.६) अमावास्यानुग्रहेणैव पितृयज्ञस्यापि प्रयाजादिवदनुग्रहसिद्धेः पृथगनुग्रहवचनं न स्यात् · अस्ति च पृथगनुग्रहवचनम् औपासनैरिति ब्रूयादिति (१२.३.५.५) अतो

---

[1] वाङ्गवात् Karka. [2] पूर्वेद्युः पितृभ्यो यज्ञं निष्क्रीय (? नियूनीय Cod.) प्रातर्देवेभ्यः प्रतनुत इति Karka. [3] Thus Karka. यजेतान्पितयज्ञेन चामा° २. यजते पितृयज्ञेनामा° Ss.

ऽप्यनङ्गम् । अनाहिताग्निश्रुतेश्च[१] . अनाहिताग्नेरपि पिण्डपितृयज्ञः श्रूयते अ-प्यनाहिताग्निना कार्य इति · यदि दर्शाङ्गं स्यात् तदा अनाहिताग्नेर्दर्शाभा-वान्न श्रूयेत ।

अङ्गं वा समभिव्याहारात् ॥ ३० ॥[२] अथवा दर्शाङ्गमेव पिण्डपितृयज्ञः समभिव्याहारात् समित्येकीभावे अभीत्याकाङ्क्षायाम् ततश्चाकाङ्क्षायोग्यतासंनिधि-मतां पदानामुच्चारणं समभिव्याहारो वाक्यम् तस्मात् पूर्वेद्युः पितृभ्यो यज्ञं नि-ष्क्रीय प्रातर्देवेभ्यः प्रतनुतऽइति[३] । प्रकरणान्तरपठितमप्यङ्गं भवति[४] यथा प्रवर्ग्यः सौत्रामणी चेति । भिन्नकाले विहितमपि वचनादङ्गं भवति यथाग्नि-होत्रदर्शपूर्णमासादावुद्धरणादि । यद्मणा गृह्णीत इत्यादि[५] यदनङ्गत्वे लिङ्गमु-क्तम् तत्तु वाचनिकं दर्शं विना पिण्डपितृयज्ञस्य केवलानुष्ठानम् नास्ति वचनस्यातिभारः · अतस्तदपि नानङ्गत्वे साधकम् । अनुग्रहवचनमर्थवादप्रापकम् अङ्गत्वेऽप्युपपद्यतऽएव । यच्चोक्तम् अनाहिताग्निश्रुतेश्चेति तदपि न्यायविरुद्धं वाचनिकमनाहिताग्नेः दर्शं विना पिण्डपितृयज्ञस्यानुष्ठानविधानम् · न हि वच-नप्रापितं न्यायसहस्रेणापि पराकर्तुं शक्यम् । तस्मादङ्गं पिण्डपितृयज्ञ इति । जैमिनेस्त्वनङ्गमेव · तथा चाह पितृयज्ञः स्वकालत्वादनङ्गं स्यादिति (४.४.१९) ।

अनाहिताग्नेरप्येषः ॥ ३१ ॥[६] ॥ प्रथमा कण्डिका ॥ १ ॥ ॥

अथ पद्धतिः ॥

पौर्णमासेष्टिरुक्ता अथ दर्शेष्टिरुच्यते । तत्र चतुर्दश्यां रात्रौ सायं प्रातर्दध्ना-ग्निहोत्रं हुत्वा स्थालीस्थस्य प्रातर्हुतशेषस्य सायंहुतस्य वातस्वनार्थं स्थापनम् · सांनाय्यवति दर्शयागे करिष्यमाणे चतुर्दश्यां दध्ना होमो नान्यथा । अमावा-स्यायां पञ्चभूसंस्कारपूर्वकं पूर्वाह्णऽएवाग्न्योरुद्धरणम् ततोऽग्न्यन्वाधानम् ततो

---

१) अनाहिताग्निश्रुतेरनाहिताग्नेरप्येष इत्यतोऽनङ्गम् Mahâd. २) वावधारणे Mahâd. ३) समभिव्याहारो वाक्यम् वाक्यादित्यर्थः · पूर्वेद्युः पितृभ्यो नि(ः)क्रयं कृत्वा प्रातर्देवेभ्यः प्रतननम् · यच्च येन विना न भवति तत्तदर्थम् · तादर्थ्यलक्षणं तु शेषत्वम् · तस्मादङ्ग-मिति Karka. ४) यत्तु प्रकरणभेदादनङ्गमिति प्रकरणान्तरे समधीतमप्यङ्गं भवत्येव Karka. ५) ? उत्पातादि २. ६) Thus १. Mahâdeva, and the paddhati. In २. and Karka this sûtra is wanting, and I consider it therefore as having been originally only a marginal gloss which has afterwards crept into the text itself.

मांसमैथुनवर्जनसंकल्पः वपनं वा ततो वैश्वदेवः ततोऽपराह्णे पिण्डपितृयज्ञः ततो दर्शश्राद्धम् । तदुक्तम् पक्षान्ते कर्म निर्वर्त्य वैश्वदेवं च साग्निकः पितृयज्ञं[१] प्रकुर्वीत ततोऽन्वाहार्यकं बुध इति · पक्षान्तं कर्माग्न्यन्वाधानम् ॥ ॥ अथ पिण्डपितृयज्ञ उच्यते । अस्य चाध्वर्युः कर्ता · स च त्रिधाविभक्तदिनतृतीयांशे भवतीति कर्कः[२] द्विधाविभक्तस्यैव द्वितीयभागऽइत्यपरे । तत्र पूर्वं नीविकरणम् तच्च कुशतिलसंयुक्तानां वस्त्रदशानां सव्यभागे परिहितवस्त्रेण संवेष्ट्यावगाहनम् । ततः सव्येनैव दक्षिणाग्नेः परिस्तरणम् इष्टिवत् होमस्य दैवत्वात् परिस्तरणस्य तदङ्गत्वात् · येषामपसव्येनाग्नौकरणहोमः तेषां परिस्तरणमप्यपसव्येन पित्र्यवत् · अत्र होमवर्जं सर्वं कर्मापसव्येन दक्षिणाभिमुखेन च कर्तव्यम् । ततोऽपसव्यं कृत्वा दक्षिणाग्नेरुत्तरतो दक्षिणासंस्थं दक्षिणाग्राणां पात्राणामेकैकेनासादनम् न द्विशः · स्फ्यः शूर्पम् अग्निहोत्रहवणी वा स्थाली वा व्रीहयः कृष्णाजिनम् उलूखलम् मुसलम् स्रुचिग्रहणपक्षे अत्र चरुस्थाली अपनार्थमुदकम् आज्यम् मेक्षणम् तिस्रः समिधः उदपात्रम् सकृदाछिन्नानि सूत्राणि च ऊर्णा वा वस्त्रदशा वा । ततो गार्हपत्यस्य पश्चाद्दक्षिणाग्रेषु कुशेषु स्फ्यं निधाय तस्योपरिष्टात्पात्र्यां व्रीहीन्निदध्यात् । ततः स्रुचि-ग्रहणपक्षे शूर्पेऽग्निहोत्रहवणीं निधाय चरुस्थाल्यां ग्रहणपक्षे शूर्पे चरुस्थालीं निधाय गार्हपत्यमपरेण दक्षिणामुख उपविश्य मनसोद्दिश्य तूष्णीमपूर्णां स्रुचं व्रीहीन्गृह्णीयात् अपूर्णां स्थालीं वा तूष्णीं गृह्णीयात् · अत्र स्थाल्येव ग्रहणम् सकृदेव स्रुक्पक्षे च स्रुचैव मुष्टिना वा नीचा मुष्टिना व्रीहीन्गृह्णातीति शाङ्खायनः (४.३.६) · आपस्तम्बः पितृभ्यो जुष्टं निर्वपामीति वा तूष्णीं वेति · मुष्टिना ग्रहणपक्षेऽपि तावदेव सकृद्ग्राह्यम् यावता स्रुक्स्थाली वा न पूर्यतऽइति । तत उत्थाय दक्षिणाग्नेरुत्तरत उदग्ग्रीवमुत्तरलोम कृष्णाजिनमास्तीर्य तस्मिन्नुलूखलं निधाय व्रीहीनोप्य मुसलमादायाव-

---

१) पिण्डपितृय॰१, against the metrum. २) This is not quite exact: Karka says: अह्नोऽपरो भागः अपराह्णः · तृतीयो भाग इत्यपरे वाक्यशेषात् पूर्वाह्णो वै देवानामित्युपक्रम्य (२.४.२.८) अपराह्णः पितॄणामिति ।

धाय दक्षिणाभिमुखस्तिष्ठन्नवहन्ति · ततो वितुषीभूतेषूलूखलान्निष्काश्य शूर्पे न्युप्य निष्पूय तुषान्पृथक्कृत्वा सकृत्फलीकृत्य निष्पवनेन कणान्पृथक्कुर्यात् · ततः स्थाल्यामोप्य सकृत्प्रक्षाल्य दक्षिणाग्नावधिश्रित्य श्रपयित्वाभिघार्य दक्षिणत उद्वास्य दक्षिणाग्निं पूर्वेणाप्रदक्षिणमानीय सव्यं कृत्वा तिस्रः समिधोऽभ्याधायोत्तरतः प्राङ्मुख उपविश्य दक्षिणं जान्वाच्य मेक्षणेन द्वेऽआहुती देवेभ्यो जुहोति ओमग्नये कव्यवाहनाय स्वाहा इदमग्नये कव्यवाहनाय ओं सोमाय पितृमते स्वाहा इदं सोमाय पितृमते । ततः सव्येनैवाग्नौ मेक्षणप्रक्षेपः होमाङ्गत्वात् । ततोऽपसव्यं कृत्वा दक्षिणाभिमुखो भूत्वा दक्षिणाग्नेर्दक्षिणतः पश्चाद्वा अपहता इति (२.२९) स्फ्येन दक्षिणासंस्थां लेखामुल्लिखेत् । ततो रेखायाः परस्तादग्नतो ये रूपाणीत्युल्मुकं (२.३०) निदधाति । तत उदपात्रमादाय लेखायां यजमानस्य पितृप्रभृति त्रीन्पुरुषानवनेजयति अमुकसगोत्र यजमानपितः अमुकशर्मन्नवनेनिक्ष्वेति रेखामूले अमुकसगोत्र यजमानपितामहामुकशर्मन्नवनेनिक्ष्वेति रेखामध्ये अमुकसगोत्र यजमानप्रपितामहामुकशर्मन्नवनेनिक्ष्वेति रेखान्ते । इति दक्षिणसंस्थं त्रयाणामवनेजनं कृत्वा मूलसमीपे एकप्रयत्नेनैव छिन्नानि दर्भतृणानि लेखायां दक्षिणाग्राण्यास्तीर्यावनेजनस्थाने पिण्डदानं करोति अमुकसगोत्र यजमानपितः अमुकशर्मन्नेतत्तऽइति मन्त्रेण ये च त्वामन्वितीमं मन्त्रशेषं च केचित्कुर्वन्ति · एवं रेखामूले पितुः पिण्डं निधाय ततः अमुकसगोत्र यजमानपितामह अमुकशर्मन्नेतत्तऽइति रेखामध्ये ततोऽमुकसगोत्र यजमानप्रपितामह अमुकशर्मन्नेतत्तऽइति रेखान्ते · आर्द्रामलकमात्रः प्रथमः पिण्डः तदपेक्षया द्वितीयः स्थूलः तृतीयः स्थूलतरः । एवं स्तीर्णेषु सकृदाछिन्नेषु मूलमध्याग्रदेशेषु दक्षिणसंस्थान् त्रीन्पिण्डान्दत्त्वा अत्र पितर इत्यमुं मन्त्रं (२.३१) पिण्डाभिमुखः स्वरेण जपेत् · ततो हस्तं प्रक्षाल्याप्रदक्षिणमुदङ् पर्यावृत्या तमनादास्ते पुनः प्रदक्षिणं पर्यावृत्य पिण्डाभिमुखोऽमीमदन्तेति (२.३१) स्वरेण जपति । ततः पूर्ववत्पिण्डानामुपर्यवनेज्य नीविं विस्रंस्य नमो व इति (२.३२) षडञ्जलीन्करोति नमस्कारार्थत्वाच्च पुटाञ्जलयः · तत्र नमो वः पितरो रसाय १ शोषाय २ जीवाय ३ स्वधायै ४ घोराय ५ नमो वः पितरो मन्यवे नमो वः

पितरः पितरो नमो व इत्येतावता मन्त्रेण षष्ठमञ्जलिं कुर्यात् ततो गृहान्नः पितर इति जपति । एतद्वः पितर इति (२.३३) प्रतिपिण्डं पृथक्पृथक्त्रीणि-त्रीणि सूत्राण्युपास्यति पञ्चाशद्वर्षादूर्ध्वं यजमानस्य हृदयाद्युत्तमस्थानलोमानि वा प्रतिपिण्डमुपास्यति · आपस्तम्बः वाससो दशां छित्त्वा निदधात्यूर्णास्तुकां वा पूर्वे[1] वयस्युत्तरऽआयुषि स्वं लोम वेति । तत ऊर्जं वहन्तीरिति (२.३४) मन्त्रेण उदपात्रस्थमवनेजनावशिष्टमुदकं पिण्डानामुपर्येव निषिञ्चति । ततः पिण्डान्स्थाल्यां प्रत्यवदधात्यध्वर्युः । ततो यजमानः स्थालीस्थान्पिण्डानवजिघ्रति । ततोऽध्वर्युः सकृदाछिन्नान्यग्नौ प्रक्षिप्य सव्यं कृत्वोल्मुकं दक्षिणाग्नौ प्रतिप्रास्यति । तत उदकोपस्पर्शनम् । पुत्रकामा गर्भग्रहणयोग्या ऋतुमती पत्नी आधत्त पितर इति (२.३३) मन्त्रेण मध्यमं पिण्डं प्राश्नाति · तस्मिन्पक्षे तस्यावघ्राणं न कार्यम् । ततः पार्वणं श्राद्धम् ॥ जीवपितृकस्य पितृयज्ञाभावः । पिण्डपितृयज्ञो दर्शाङ्गमिति कर्कादयः सर्वे भाष्यकाराः नेति सम्प्रदायः · पिण्डपितृयज्ञः स्वकालत्वादनङ्गं स्यादिति जैमिनिः (४.४.१९) । अनाहिताग्नेरप्ययं पिण्डपितृयज्ञो भवति ॥१॥ ॥

इति चतुर्थस्य प्रथमा कण्डिका ॥ ॥

पिण्डपितृयज्ञ उक्तः । इदानीं दर्शेष्टिमाह ·

श्वो नोदेतेत्यदृष्टे वा पर्णशाखां छिनत्ति शामीलीं[2] वेषे त्वोर्जे त्वेति (१.१) वा ॥१॥ श्व आगामिनि दिवसे नोदेता नोदेष्यति चन्द्रमा इति ज्ञात्वा चतुर्दश्याम् · अदृष्टे चन्द्रमसि वा अमावास्यायामित्यर्थः · पर्णस्य पलाशस्य शाखां वृक्षात् छिनत्ति शामीलीं वा शमीमयीं वा · शम्या अवयवः शामीली शम्याः ष्लन्[3] टिड्ढाणञिति ङीप् (पा० ४.१.१५) । उभयोर्मन्त्रयोः छेदने विधानात्करणमन्त्रत्वेन समुच्चयासम्भवाद्विकल्पः[4] ।

छिनद्मीति वोभयोः साकाङ्क्षत्वात् ॥२॥[5]

---

१) ? वापर्ये २ at ४.१.१७.  २) शामिलीं २  ३) sic! ष्लञ् see पा० ४.३.१४२.  ४) तामाछिनत्तीषे त्वोर्जे त्वेति हि श्रूयते (१७.१.२) · न चानयोर्मन्त्रयोः करणत्वात्समुच्चयः Karka.
५) छिनद्मीति उभाभ्यां सम्बध्यते · कुतः साकाङ्क्षत्वात् उभयोश्छेदने विनियुक्तत्वात् तामाछिनत्तीषे त्वोर्जे त्वेति Karka.

संनमयामीति वोत्तरे ॥ ३ ॥ [१] ऊर्ज्जे वेत्यनुमार्ष्टीति शाखान्तरात् अनुमार्जनं तत्पर्णादिपातनेन प्रगुणीकरणम् · तच्च मन्त्रलिङ्गादेव प्राप्तत्वादाचार्येण न सूत्रितम् · अतश्च माध्यन्दिनीयपाठाश्रयणाद्द्वयोर्मन्त्रयोर्विकल्पेन छेदने विनियोगः काण्वशाखापाठाश्रयणादुत्तरस्त्वनुमार्जनऽएव विनियुज्यते । तथा चापस्तम्बः ऊर्ज्जे वेति संनमयत्यनुमार्ष्टि वेति · संनमनमृजूकरणम् मूलादारभ्याग्रात्स्पर्शनमनुमार्जनमिति धूर्तस्वामी ।

बहुलपलाशामशुष्काग्रां प्रागुदीचीमन्यतमां वा ॥ ४ ॥ बहुपर्णाम् · अशुष्कमग्रं यस्याः · प्रागुदीचीं वृद्धदिशान्यां दिशि प्रसृताम् अन्यतमां वा प्राचीं वा उदीचीं वा ।

व्रतमुपैति ॥ ५ ॥ ततोऽन्तरेणापराग्नी गत्वापरेणाहवनीयं प्राङ्तिष्ठन्नग्निमीक्षमाणोऽप उपस्पृश्य व्रतमुपैति अग्ने व्रतपते इदमहमिति वा । अन्नातावसरस्य शाखाछेदनस्य कालविधानायेदमुक्तम् · व्रतोपायनीयाशनानन्तरं शाखां छित्वा प्रगुणीकृत्य व्रतोपायनं कर्तव्यम् · शाखां छित्वा व्रतमुपैतीति शाखान्तरात् ।

यथोक्तं वा ॥ ६ ॥ शाखाछेदस्त्वस्मिन्नेवावसरे नियमेन भवति · व्रतग्रहणं तु यथोक्तम् यस्मिन्काले वैकल्पिकं प्रागुक्तं तथैव तत्र-तत्र काले वा भवति वा इह । केचिदग्न्यन्वाधानानन्तरं पूर्वाह्णऽएव शाखाछेदः कर्तव्य इत्याहुः तेषां मते व्रतमुपैतीत्यनेन व्रतोपायनस्यापि कालान्तरविधिः क्रियतऽइति ।

मातृभिर्वत्सान्त्समवसृज्य वत्सं शाखयोपस्पृशति वायव स्थेति (१.१) ॥ ७ ॥ [२] मात्रा संगतं वत्सम् · प्रतिवत्सम् । षडवरार्ध्यान्वत्सान्मातृभ्यः पृथक्करोति दर्भैर्दर्भपिञ्जूलैर्वेत्यापस्तम्बः । लिङ्गस्याविवक्षितत्वात् स्त्रीवत्सा अपि गावः सांनाय्यार्थं दोह्याः · अग्निहोत्रे पुंवत्सामिति (४.१४.१) नियतदर्शनादन्यत्रापुंवत्सापि भवतीति प्रतीयते ।

---

१) तत्क्वतः ऊर्ज्जे वेत्यनुमार्ष्टीति वचनात् · अनुमार्ष्टीति च प्रगुणीकरणम् तच्च मन्त्रलिङ्गादेव प्राप्तमाचार्येण नाभिहितम् · एवं च सति द्वावपि मन्त्रौ माध्यन्दिनपाठाच्छेदने विनियुज्येते विकल्पेन उत्तरस्त्वनुमार्जनऽएव काण्वपाठात् Karka. २) प्रतिशब्दाभावान्मन्त्रस्य बहुवचनत्वाच्चैकस्यैवोपस्पर्शनम् इत्युवटः · कर्कस्तु प्रतिवत्सम् · उपस्पर्शनं वत्सपृथक्करणार्थम् Mahâd.

उपायव स्थेति चैके ॥ ८ ॥[1]

देवो व इति (१.१) मातॄणामेकां व्याकृत्य ॥ ९ ॥[2] अनेकयजमानके ध्रुवा अनयोर्गोपत्योरेषु गोपतिषु स्यात । एकस्या गोरुपस्पर्शनेन सर्वासां गवां संस्कारो भवति मन्त्रे आप्यायध्वमघ्न्या इति बहुवचनदर्शनात् · अतो वह्निनीदध्यैन्द्रमित्यत्र (१५.१.२८) आप्यायस्व अघ्न्येऽ इत्यूहः[3] · अपरे तु उपस्पर्शनस्य संनिपत्योपकारकत्वादेकस्या एव गोरयं संस्कार इत्याहुः बहुवचनं च पूजार्थम् ।

ऐन्द्रं भवति माहेन्द्रं वा ॥ १० ॥[4] तत्सांनाय्यं हविः । गोरुपस्पर्शनमन्त्रे इन्द्रस्यैव दर्शनादिन्द्रस्यैव देवत्वं मा भूदिति माहेन्द्रं वेत्युक्तम् ।

यजमानस्य पशूनित्यग्न्यगारस्यान्यतरस्य (१.१) पुरस्ताच्छाखामुपगूहति ॥ ११ ॥ द्वे ह्यग्न्यगारे आहवनीयागारं गार्हपत्यागारं च · पुरस्तात्प्रदेशे पूर्वभागे वा। अनेकयजमानके यजमानयोर्यजमानानाम् · पशुं पाहीति च वह्निनीदधनि राजसूये ।

मूलादुपवेषं करोति वेषोऽसीति[5] ॥ १२ ॥[6] प्रथमं तूष्णीं शाखामूलमरत्निप्रमाणादधिकप्रमाणं छित्वा पृथक्कार्यम् ततस्तस्मादुपवेषं करोति · उपवेषश्चारत्निमात्रः प्रादेशमात्रो वा परिशिष्टोक्तः · तस्य च कपालोपधानार्थत्वात्केवलपयोहविष्के केवलपयस्याहविष्के चोपधानाभावादुपवेषकरणाभावेऽपि तूष्णीं शाखामूलस्य परिवासनं भवत्येव ।

सांनाय्ये शाखासंयोगात् ॥ १३ ॥ इदं शाखोपवेषकरणं [स]सांनाय्यकदर्शे-

---

१) चशब्दात्समुच्चयः वायव स्थोपायव स्थ Mahâd. See १.७१.३. २) शाखयोपस्पृशति वत्सेन पृथक्कृत्य Mahâd. ३) वह्निनीदध्यैन्द्रमित्यत्रैकवचनविपरिणाम इति सम्प्रदायो. नेति कर्कः Mahâd., but Karka has: ततश्च व॰द्रमित्यत्र मन्त्रो विपरिणाम्यत ऽइति सम्प्रदायः · अपरे तु न्यायनिगदत्वाद्विपरिणाममिच्छन्ति यैवोपस्पृश्यते तस्या एव संस्कार इति · बहुवचनं पूजार्थम् एता उ त्या उषसः केतुमक्रतेति-वत् · ४) सांनाय्यमिति शेषः। इन्द्रस्तु मन्त्रलिङ्गात् महेन्द्रस्तु वचनात् (१.६.४.२१.) Mahâd. ५) वेषोऽस्युपवेष इति Karka. — Kâṇva, see Vâj. S. pag. ५८. ६) मूलतः शाखां परिवास्योपवेषं करोतीति वचनात् · उपवेषनिष्पत्तौ च मन्त्रः शाखायाश्च परिवासनसंस्कारः · ततश्च केवलायामामिक्षायां तूष्णीमेव शाखापरिवासनम् परिवासितया हि पयसोऽपाकरणमिति Karka.

ष्टावेव भवति नान्यत्रासांनाय्यकदर्शेष्टौ पौर्णमासे वा · शाखाया वत्सापाकरणार्थत्वादसांनाय्यके च वत्सापाकरणाभावे शाखाया अभावात्तत्सम्बद्धस्य तस्या उत्पाद्यमानस्योपवेषस्याभाव एव युक्तः ।

उपधानाद्वोभयोः ॥१४॥ वा पूर्वपक्षनिरासे · उपवेषस्य कपालोपधानार्थत्वात् तस्य च ससांनाय्यके असांनाय्यके च कर्मणि भावादुभयत्रोपवेषो भवत्येव · ततश्च शाखाया अभावे वारणो भवति यतस्तं विना तेन प्राचोऽङ्गारानुदूहतीत्यादि (१.२.१.४) न सिध्यति ।

वसोः पवित्रमिति (१.२) पवित्रमस्यां बध्नाति कुशौ ॥१५॥[1]

त्रिवृद्वा ॥१६॥ त्रिशलाकम् त्रीणि दर्भतृणानि[2] · हस्तप्रादेशमात्रं तु त्रिवृत्कृत्वा पवित्रकर्मित्यत्र त्रिवृत्त्रिशलाकमिति हेमाद्रिणाप्येवं व्याख्यातत्वात् · आपस्तम्बः त्रिवृद्दर्भमयं पवित्रं शाखायाग्रे शिथिलमवसजति मूले मूलान्यग्रेऽग्राणि न ग्रन्थिं करोतीति · नवभिस्त्रिगुणैः त्रिगुणमिति केचित् . वेण्याकारमिति केचित्[3] ।

यवाग्वाग्निहोत्रहोमः संनयतस्ताग्ं रात्रिम् ॥१७॥[4] संनयतः सांनाय्यं दुग्धदधिरूपं हविः कुर्वतो यजमानस्य तस्याममावास्यासम्बन्धिन्यां रात्रौ यवागूसंज्ञेन द्रव्येण अग्निहोत्रहोमः सायं प्रातर्भवति · तण्डुलैः शिथिलपक्का[5] यवागूरित्युच्यते । असंनयतो न यवाग्वा होमनियमः · नापि चरू सांनाय्यालाभ इति (२५.५.६) सांनाय्यस्थाने चरुकरणे । आपस्तम्बः स्वयं यजमानोऽग्निहोत्रं जुहोति अग्निहोत्रोच्छेषणमातञ्चनार्थं निदधातीति · पूर्वोपकॢप्तेन दध्ना आतञ्चनानन्तरं यवागूशेषस्य दोहमध्ये प्रक्षेप उक्तोऽस्ति तदर्थमवशेषणम् ।

हुतऽउपसृष्टां प्रब्रूतादित्याह ॥१८॥[6]

प्रोक्ते घौरसीति (१.२) स्थाल्यादानम् ॥१९॥ दोग्धुरध्वर्युं प्रति उपसृष्टे-

---

[1] द्वे साग्रे दर्भतृणे पवित्रं कर्तुं शाखायां बध्नाति · उपवेषपवित्रबन्धने शाखोपगूहनात्पूर्वमिति कर्कः पवित्रं कृत्वा शाखायां बन्धनमिति सम्प्रदायः Mahâd. [2] From Ss. [3] कुशत्रयस्य रज्ज्वाकारं कृत्वा वा बध्नाति · वेणीमिति कर्कः · नवकुशवेणीमिति श्रोऽग्ननन्तः Mahâd. [4] तां रात्रिमिति वचनात्पक्षमध्ये आमावास्ये राजसूये न यवागूनियमः Karka. [5] ? पक्वाः २ [6] अग्निहोत्रे हुते वत्सेन संगतां गां मां प्रति ब्रूहि इति दोग्धारमाह Mahâd.

ति प्रोक्ते प्रतिवचने अध्वर्युः द्यौरसीति स्थाल्या आदानं करोति · गौरुपसृष्टा वत्सेन संगता तव यत्स्थाल्यादानादि कर्तव्यं भवति तत्कुर्विति प्रैषार्थः । आदानं चाधिश्रयणार्थम् तेन वायव्ये पयसि अधिश्रयणाभावे न तदादानमिति कर्कः · तदयुक्तम् स्वेनैव वपाश्रपण्योरधिश्रयणाभावेऽपि तदादानमन्त्रे ऊहस्योक्तत्वात्स्वोक्तविरोधात्[1] अधिश्रयणाभावेऽपि क्वचित्प्रदेशे स्थापनमवश्यं कर्तव्यम् तदर्थमप्यादाने मन्त्रो भवत्येवेत्यपरे । स्थालीस्थानापत्त्या पशौ वपाश्रपण्योरादाने मन्त्रस्य द्यौ स्थ पृथिवी स्थ इत्यूहः · शूलादाने चोखादाने चानूहितस्यैव ।

मातरिश्वन इत्यधिश्रयति (१.२) ॥२०॥[2] स्थालीं गार्हपत्येऽधिश्रयति आहवनीयश्रापिण आहवनीये · अनेकयजमानके यज्ञपती ह्वार्ष्टाम् यज्ञपतयो ह्वार्षुः ।

वसोः पवित्रमिति (१.३) पवित्रमस्यां करोत्युदग्वा ॥२१॥[3] स्थाल्या उपरि स्थापयति प्रागग्रमुदगग्रं वा । केचित्पवित्रं शाखाया वियोज्य स्थाल्यां निदधति दोहानन्तरं च पुनः तस्यां बध्नन्ति अन्ये तु शाखाबद्धमेवोखायां निदधति ।

वाग्यतो दोहयत्यशूद्रेण ॥२२॥[4] दोहयतीति ण्यन्तोपदेशात् गां धुक्ष्वेति दोग्धारं प्रेष्यति स च दोग्धि ।

स्थाल्यन्वारब्धे देवस्त्वेत्यासिच्यमाने (१.३) जपति ॥२३॥ स्थाल्यामन्वारब्धे यजमाने दोहानन्तरं दोग्ध्रा दोहपात्रेणैव स्थाल्यामासिच्यमाने पयसि ।

कामधुक्ष इति (१.३) प्रश्नः ॥२४॥

प्रोक्ते सा विश्वायुरित्याह (१.४) ॥२५॥ दोग्ध्रा अमूमिति गोनाम्नि प्रोक्ते ।

एवमितरेऽउत्तराभ्यां प्रतिमन्त्रम् ॥२६॥[5] एवमिति दोहनप्रैषः दो-

---

१) Karka's words are: तच्चाधिश्रयणार्थम् अतश्च वायव्ये पयसि अधिश्रयणाभावादनादानम् एवं कार्यापत्त्या च वपाश्रपण्योरादाने विपरिणामः द्यौ स्थ पृथिवी स्थ इति ·
२) वायव्ये पयस्यधिश्रयणाभावः Mahâd. ३) प्राग्वेति विकल्पः · तच्चैतच्छ्रौतं प्रागुदग्ग्रहणाम् स्मार्तं हि वचनमन्तरेणापि प्राप्नोत्येव · प्रयोजनम् तदपचारे श्रौतं प्रायश्चित्तम् Karka.
४) त्रैवर्णिकेन Mahâd. शूद्रपर्युदासाच्च क्षत्रियवैश्ययोरभ्यनुज्ञा Karka. ५) एवमितरे द्वे गावौ दोहयति · उत्तराभ्यां मन्त्राभ्यां प्रतिमन्त्रमभिदधाति Mahâd.

हनम् स्थाल्यामन्वारब्धायामासेकः आसिच्यमाने जपः नामप्रश्नः तत्क-थनम् मन्त्राभिधानम् ।

विसृष्टवागुत्तरा अनन्वारब्धे ॥ २७ ॥[१] गाः धुक्ष्वेति प्रैषः आसेक-जपौ वारत्रयम् ।

यावत्स्वमधिकारात् ॥ २८ ॥ यावत्यः स्वा आत्मीया गावो भवन्ति त्रि-प्रभृति तावतीः सर्वा दोहयति तासां दोहनेऽधिकारोऽस्ति यतः ।

तिस्रो वा नित्यत्वात् ॥ २९ ॥ वा पक्षव्यावृत्तौ · तिस्र एव त्रित्वे ब-हुवचनस्य नित्यत्वात् नियतत्वात् ।

आदिसामर्थ्यात् ॥ ३० ॥ यद्यपि चतुष्ट्वादावपि बहुवचनं नियतमेव त-थाप्यादिसामर्थ्यात्त्रित्वगतमेव ग्राह्यम् प्रथमातिक्रमे कारणाभावादिति न्यायात् तिस्रो दुग्धा तावतैव शास्त्रार्थस्य कृतत्वात्किमर्थमधिकानां दोहनम् ।

दर्शनाच्च ॥ ३१ ॥ श्रुतौ चैवं दृश्यते यथा बहुवचनेन त्रित्वसंख्यैव प-रिगृह्यतऽइति · अश्वमेधे हि शतपथोक्तसंख्योपबन्धनं तदैवोपपद्यते यदा बहुव-चनेन त्रित्वसंख्याविशिष्टा एव गृह्यन्ते नाधिकाः[२] ।

परिक्षालनमानयति सम्पृच्यध्वमृतावरीरूर्मिणा मधुमत्तमाः पृञ्चतीर्मधुना प-यो मन्द्रा धनस्य सातयऽइति[३] ॥ ३२ ॥ दोहनपात्रस्य प्रक्षालनोदकं स्था-लीस्थदुग्धमध्ये निनयति ।

उद्वास्यातनक्ति प्राग्घुतशेषेणेन्द्रस्य त्वेति (१.४) ॥ ३३ ॥[४] तां दुग्धस्था-लीमुत्तरत उद्वास्य प्राग्घुतशेषेण पूर्वदिने कृताग्निहोत्रहोमशेषेण दध्ना दुग्धमात-नक्ति अवशिष्टं दधि दुग्धमध्ये प्रक्षिपति दधित्वसम्पत्त्यर्थम् । अत्र विप्रतिपत्तिः केचित्प्रातर्होमशेषेण केचित्प्राग्दिनस्य सायंहोमशेषेण केचिदुभयहोमशे-षेण[५] । शाखान्तरे चोपवसथस्य पुरस्तादेकाहे द्व्यहे चातञ्चनस्योपकल्पनमुक्त-

---

१) अध्वर्युः उत्तरास्तिस्रो गाः पूर्ववत् दोहयति अनन्वारब्धे यजमाने Mahâd. अन्वार-म्भवाग्यमयोश्च प्रतिषेधः Karka. २) See १३. २. ५. १-४. ३) See Taitt. Sanh. १. १. ३. १. ed. *Roer* pag. ६५. ४) पक्षे महेन्द्रस्य त्वेति · सरस्वत्यै-दध्यादौ विपरिणामः Mahâd. इन्द्रस्य त्वेति चोपलक्षणम् महेन्द्रस्यापि भावात् (१. ६. ४. २१) Karka. ५) प्रातर्हुतशेषे-णेति सम्प्रदायः · नेत्यपरे तदा प्रातर्हुतशेषेणेत्यवक्ष्यत् · अतः प्राक्शब्दस्य पूर्वकालवा-चित्वात् पूर्वं यद्धुतशेषं (? यद्भुत° Cod.) सायंहोमशेषमित्यर्थः Karka.

मस्ति अग्निहोत्रोच्छेषेण दध्नातनक्तीति · तद्दिने सायंहुतावशिष्टयवाग्वाः पिण्डमवदधातीति मानवे · आपस्तम्बः एकस्या द्वयोस्तिसृणां वैकाहे द्व्यहे त्र्यहे चतुरहे वा पुरस्ताडुपवसथादातञ्चनार्थं दोहयित्वा तेन शीतदुग्धेनातनक्तीति · अत एव चतुर्दश्यां रात्रौ दध्नाग्निहोत्रहोमः कार्य इति प्रतीयते । हुतशेषश्च स्थालीस्थो ग्राह्यो न स्रुग्गतः न चामावास्यायां सायं यवाग्वा हुताग्निहोत्रहोमशेषेण आतञ्चनार्थत्वाप्रसिद्धेः दध्ना इति श्रुतत्वाच्च । उच्छेषणाभावे तण्डुलैरोषधीभिर्वातञ्च्यात् पर्णवकुलकुवलवर्जम् ।

सोदकेनापिदधात्यमृन्मयेण विष्णो हव्यमिति (१.४) ॥३४॥ जलवतोत्तानेन पात्रेण दोहस्थालीं ढङ्कयति[1] · यदि मृन्मयं स्यात्तृणं दारु वान्तर्दधाति ।

निधाय वत्सापाकरणं पूर्ववत् ॥३५॥[2] तां दोहस्थालीं सुगुप्ते देशे निधाय · मातृभिर्वत्सान्संसृज्य शाखोपगूहनान्तम् · प्रातर्दोहार्थम् ।

प्रातराग्नेय ऐन्द्राग्नश्च द्वादशकपालोऽसंनयतः ॥३६॥ प्रातः प्रतिपदि दर्शेष्टौ विशेष उच्यते · आग्नेयोऽष्टाकपालः पुरोडाशो भवति असंनयतश्च सांनाय्यमकुर्वतो यजमानस्य द्वादशकपालः ऐन्द्राग्नः द्वितीयं हविर्भवति[3] ।

निरुप्याज्यं प्रातर्दोहनमन्यस्मिन् ॥३७॥ सायंदोहपात्रादन्यस्मिन्पात्रे ।

परिज्वालनान्तं कृत्वा सायंदोहमाहृत्य प्रातर्दोहं च अपयित्वाभिघार्योद्वास्योभावनक्ति ॥३८॥ उपसृष्टादि परिज्वालनान्तं (१८–३२) सायंहोमवत्कृत्वा प्रातर्दोहं देवस्त्वेति (१.२२) अपयित्वा[4] सायंदोहमाहृत्य प्रातर्दोहमेवाभिघार्य ततस्तमुद्वास्य पुरोडाशाञ्जनानन्तरं यस्ते प्राण इति उभौ सायंप्रातर्दोहौ क्रमेण अनक्ति । अभिघारणं तु पयस एव न दध्नः · अञ्जनं तु प्राणादानमेव प्रकृतावव्यनक्ति यस्ते प्राण इत्युक्तेः (२.८.१४) । अत्र प्राणादानादयः संस्काराः प्रथमं दध्नः कार्यास्ततः पयसः अवदानं तु पयसः पूर्वम् वचनात् (३१) ।

---

१) ढंक° २. २) पवित्रविशिष्टया शाखया Mahâd. ३) असांनाय्ययाजिनः हविर्द्वयम् Mahâd. ४) See २.५.२३. ५) दुग्धस्य पयस आदौ स्रुच्यवद्यति ततो दध्नः Mahâd. अपन्यायवाङ्कुतिग्रहणाम् दध्नो हि पूर्वं क्रम इति Karka.

शृतस्याग्रेऽवद्यतीति श्रुतेः ॥ ३९ ॥ [५] शाखान्तरीयायाः श्रुतेः · न्यायविरोधः · दधिपयसोः स्रुवेण द्विरवदानं प्रत्येकम् तन्त्रेणोपस्तराभिघारौ सह प्रदानं च देवतागुणयोरेकत्वात् · स्रुवेणाज्यसांनाय्ययोरेवावद्यतीत्यापस्तम्बः ।

समस्य मार्जनम् ॥ ४० ॥ [१] शाखापवित्रं प्रणीतासु निहिते पवित्रे च समस्य भक्षान्ते मार्जनम् तदनन्तरं च शाखापवित्रं शाखायामेव कर्तव्यम् प्रस्तरे करणं तु तस्य न भवति [२] ।

इन्द्राग्न्योरिति (२.१५) व्यूहनम् ॥ ४१ ॥ [३] एतद्वचनमिन्द्राग्न्योरिति मन्त्रस्यामावास्यायां विनियोगज्ञापनार्थत्वात् अन्यथा परादिना पूर्वान्त इति (१.३.१) परिभाषितत्वात्तस्य पूर्वमन्त्रशेषता स्यात् ।

सह शाखया प्रस्तरानुप्रहरणम् ॥ ४२ ॥ यदा सूक्तवाकान्ते प्रस्तरानुप्रहरणं क्रियते [४] तदा शाखया सह कार्यम् · प्रस्तरेण सह वत्सापाकरणार्थशाखाया अप्याहवनीये प्रक्षेपः ।

परिधिभिः सहोपवेषं जुहोति जुहोमि त्वा सुभग सौभगाय पुरूतमं पुरुहूत श्रवस्यन्निति [५] ॥ ४३ ॥ यदा परिध्यनुप्रहरणमध्वर्युः करोति [६] तदा परिधिभिः सहैव विरोधादग्नीच्छाखामूलादुत्पादितमुपवेषं जुहोति । प्रतिपत्तिरियम् चरितार्थत्वात् नाशदोषादौ सकृद्गृहीतेनाज्येन होमः · वारणस्योपवेषस्य न होमः पौर्णमासप्रकरणेऽउपवेषस्याविधानात् ।

पौर्णमासवदन्यदसद्यः ॥ ४४ ॥ उक्तादन्यत्सर्वं पौ॰वद्भवति · एतावान्विशेषः असद्यः पौर्णमासे तु सद्यो वा प्रातरिति (२.१.१६) पक्षे अग्न्यन्वाधानादिकर्मापवर्गान्तं यत्सद्यस्त्वमुक्तमस्ति तदिह न भवति ।

सोमयाजी संनयेत् ॥ ४५ ॥ सोमेनाग्निष्टोमादिना य इष्टवान् स सांनाय्यं दधिदुग्धरूपं हविर्द्वयममावास्यायां कुर्यात् ।

कामादितरः ॥ ४६ ॥

त्रिंशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत ॥ ४७ ॥ उक्ताभ्यां दर्श्यां त्रिंशद्-

---

१) See ३. ४. २४. २) See ३. ४. २५. ३) See ३. ५. १८. ४) See ३. ६. १४-१५.
५) *Kāṇya*, see Vāj. S. pag. ५९. ६) See ३. ६. १७.

र्षाण्येव यजेत तत ऊर्ध्वं न यजेत · सांनाय्यस्य प्रस्तुतत्वात्ससांनाय्ययोरेव द-र्शपूर्णमासयोरयं नियमः स्यात् तन्मा भूदिति तयोः प्रस्तावेऽपि पुनर्दर्शपूर्ण-मासग्रहणम् ।

पञ्चदश दाक्षायणयज्ञी ॥४८॥ दाक्षायणयज्ञसंज्ञकदर्शपूर्णमासयाजी पञ्च-दश वर्षाण्येव यजेत · दर्शपूर्णमासावेव गुणभूतौ दाक्षायणयज्ञो न ततः कर्मा-न्तरमित्यग्रेऽपि (४.४.३) वक्ष्यति ।

अग्निहोत्रमेव वा जुहुयात् ॥४९॥[१] प्राकृतदर्शपूर्णमासपक्षे त्रिंशद्वर्षा-नन्तरम् दाक्षायणगुणकपञ्चदशवर्षानन्तरम् केवलमग्निहोत्रमेव जुहुयाद्वा ना-न्यत्किंचित्कुर्यात् । केचिदेवशब्दमिवार्थे व्याचक्षते अग्निहोत्रमिव वा जुहु-यात् यथाग्निहोत्रं यावज्जीवं जुहुयात्तथा दर्शपूर्णमासावपीत्येव उभयत्र या-वज्जीवमनुष्ठानश्रवणात्[२] · अतश्च विकल्पः यावज्जीवं दर्शपूर्णमासयागः कार्यः त्रिंशद्वर्षाणि वा दाक्षायणपक्षे पञ्चदश वर्षाणि वेति । आपस्तम्बः स्वर्गकामो दर्शपूर्णमासावेवाकामः सर्वकामो वा युगपत्कामयेताहारपृथक्त्वे वा यावज्जीवं यजेत त्रिंशतं वर्षाणि जीर्णो वा विरमेदिति · अत्र यावज्जीवादिवि-कल्पः दर्शपूर्णमासोपरमे तद्विकाराणामप्युपरतिः तत्प्रकृतित्वात् दर्विहोमा-ग्रयणं क्रियते सोमानामपि निवृत्तिः केवलमग्निहोत्रमित्युपदेशः अग्निहो-त्रमेव जुहुयादिति कात्यायन इति[३] धूर्तस्वामी ॥ ॥ चतुर्थस्य द्वितीया कण्डिका ॥२॥ ॥

अथ पद्धतिः ॥

जीवपितृकस्य चतुर्दश्यां वा उद्धरणाद्युपक्रमः अमावास्यायां यागः · पिण्ड-पितृयज्ञस्यानङ्गत्वपक्षे मृतपितृकस्यापि विकल्पः अङ्गत्वपक्षे तु मृतपितृकस्या-मावास्यायामेवोपवासनियमः । श्राद्धानन्तरं पत्नीयजमानौ व्रत्यमश्नीतः । ततो ऽध्वर्युः पलाशशाखां छिनत्ति इषे त्वेति (१.१) शमीशाखां वा · या शाखा वृ-

---

१) एवेति नियमशब्दाज्जुहुयादिति विधेर्होममात्रमेव भवति · वाशब्दाद्दर्शपूर्णमासौ वा दाक्षायणयज्ञो वा अग्निहोत्रमेव वेति त्रयः पक्षाः Mahâd. २) Thus Karka: उभयो-स्तुल्यशास्त्रत्वात् यावज्जीवमग्निहोत्रं जुहोति यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति ३) °न-मिति २·

त्वात्प्राच्यां प्रसृता उदीच्यां वा ऐशान्यां वा सा छेत्तव्या इषे त्वा छिनद्मीति मन्त्रेण · ऊर्जे त्वा संनमयामीति मन्त्रेण तस्याः शाखायाः पर्णादि पातयति। ततो व्रतग्रहणं वा। ततः षड्भिर्गोभिः सह षड्वत्सांत्संसृज्य तान्वत्सान्प्रत्येकं शाखयोपस्पृशति वायव स्थेति (१.१) मन्त्रेण शाखोपस्पर्शनेन गोभ्यो वियोजयतीत्यर्थः · प्रतिवत्सं मन्त्रावृत्तिः · सांनाय्ये स्त्रीवत्सा अपि गावो भवन्ति · केचिद्वायव स्थोपायव स्थेत्येवं मन्त्रं पठन्ति। ततो मातृभ्यो वत्सान्वियोज्य षण्णां गवां मध्ये एकां गां देवो वः सवितेति (१.१) शाखयोपस्पृशति · आप्यायध्वमघ्न्या इन्द्राय भागम् महेन्द्राय भागमिति वा मन्त्रे विशेषः · सांनाय्यस्य दध्नो दुग्धस्य च इन्द्रो देवता महेन्द्रो वेत्यादिविकल्पः प्रथमे प्रयोगे याङ्गीकृता इन्द्रो वा महेन्द्रो वा सैव यावज्जीवं भवति · तत्रापि शाखान्तरे व्यवस्थोक्ता नागतश्रीर्महेन्द्रं यजेत त्रयो ह वै गतश्रिय इत्युक्तमौर्वो गौतमो भारद्वाजस्तेऽनन्तरं सोमेज्याया महेन्द्रं यजेरन्यो वा कश्चिदित्यापस्तम्बः · मानवे च सोमयाजिनां गतश्रीरौर्वो गौतमो भारद्वाजस्ते महेन्द्रं यजेरन्न् वितरे संवत्सरमिन्द्रमिष्ट्वाग्नये व्रतपतयेऽष्टाकपालं निरुप्य ते महेन्द्रं यजेरन्निति। ततो यजमानस्य पशूनिति (१.१) मन्त्रेण गार्हपत्यागारस्य पुरस्तादाहवनीयागारस्य पुरस्ताद्वा शाखामुपगूहति। ततः प्रादेशमात्रमधिकं वा शाखाया अग्रं परिशिष्य तूष्णीं छित्वा मूलं पृथक्कुर्यात् · ततस्तस्मान्मूलादरत्निमात्रं वेषोऽसीत्युपवेषं करोति प्रादेशमात्रं वा। ततो वसोः पवित्रमसीति (१.२) मन्त्रेण प्रादेशमात्री या शाखा परिशेषिता तस्यां साग्रौ द्वौ कुशौ पवित्रं बध्नाति त्रीन्वा कुशान्। तस्यां रात्रौ सायं प्रातश्च नियमेन यवाग्वा स्वयमग्निहोत्रहोमः सांनाय्यं कुर्वतो यजमानस्य भवति · तण्डुलशिथिलपक्वा यवागूरिति कर्कः[1] यवागूर्विरलद्रवा इत्यपरे यवागूरल्पतण्डुलचूर्णमिश्रं द्रवद्रूपमन्नमिति स्मृतिचन्द्रिकाकारः पेया यवागूरिति धूर्तस्वामिनः। ततोऽग्निहोत्रे हुते अध्वर्युरुपसृष्टां प्रब्रूतादिति दोग्धारं प्रति प्रेष्यति · दोग्धा उपसृष्टेति प्रत्युक्तेऽध्वर्युर्द्यौरसीति (१.२) स्थालीमादत्ते · मातरिश्वन इति (१.२) गार्हपत्ये स्थालीमधिश्रयति · वसोः पवित्रम-

---

1) but not here!

सीति (१.३) स्थाल्या उपर्युदगग्रं प्रागग्रं वा पवित्रं निदधाति । वाग्यतोऽध्वर्युस्तिस्रो गा अशूद्रेण दोहयति गां धुक्ष्वेति प्रैषेण · ततः प्रेषितो दोग्धा काष्ठमये दोहने प्रथमापाकृतां गां दोहयित्वा आनीय दोहनेनैव स्थाल्यां यजमानेनान्वारब्धायां पवित्रस्योपरि दुग्धमासिञ्चति · अध्वर्युरासिच्यमाने पयसि देवस्त्वा सवितेति (१.३) जपति · ततोऽध्वर्युः कामधुक्ष इति (१.३) दोग्धारं पृच्छति · दोग्धा अमूमिति गोनाम्नि द्वितीयैकवचनान्तेन प्रत्युक्ते सा विश्वायुरित्याह (१.४) । पुनर्गां धुक्ष्वेति दोग्धारं प्रेष्यति · ततः प्रेषितो दोग्धा द्वितीयां गां दुग्ध्वा पुनः स्थाल्यां यजमानेनान्वारब्धायां पवित्रस्योपरिनिनयति · अध्वर्युरपि निनीयमाने पयसि देवस्त्वेति जपति · ततः कामधु° · अमूमिति दोग्धा प्रत्युक्ते सा विश्वकर्मेत्यध्वर्युराह (१.४) । पुनर्गां° · ततः °तृतीयां गां दुग्ध्वा तत्पयः स्थाल्यां पूर्ववदासिञ्चति · ततः कामधु° · स प्रत्याह अमुकीमिति · ततोऽध्वर्युः सा विश्वधाया (१.४) इत्याह । अध्वर्युर्वाचं विसृज्यात ऊर्ध्वं तिस्रो गा दोहयति · अत ऊर्ध्वं यजमानस्य स्थाल्यन्वारम्भो न भवति · ततो गा धुक्ष्वेति अध्वर्युर्दोग्धारं प्रेष्यति · दोग्धा दुग्ध्वा-दुग्ध्वा आनीय स्थाल्यामासिञ्चति · आसिच्यमानेऽध्वर्युः पूर्ववज्जपति । षष्ठीं दोहयित्वा येन पात्रेण दोहयति तस्मिन्पात्रे स्तोकमुदकमासिच्य तत्पात्रं प्रक्षाल्य तत्प्रक्षालनजलं स्थाल्यां दुग्धमध्ये आसिञ्चति सम्पृच्यध्वमिति । ततः स्थालीमुद्वास्य स्थापितेन प्रातरग्निहोत्रशेषेण दध्ना स्थालीस्थेनातनक्ति इन्द्रस्य त्वेति (१.४) · महेन्द्रपक्षे महेन्द्रस्य त्वा भागमिति · ओषधयः पूतीकाः[1] कलास्तण्डुलाः पर्णावल्का इत्यातञ्चनविकल्पाः उक्तेषणाभावे तण्डुलैरातञ्च्यात्तण्डुलाभावऽओषधीभिरित्यापस्तम्बः । ततोऽमृन्मयेन पात्रेण सोदकेनोत्तानेन दोहस्थालीमपिदधाति विष्णो हव्यमिति (१.४) ततस्तां सुगुप्ते देशे निधाय प्रातर्दोहार्थं मातृभिर्वत्सान्संसृज्य तेषां पूर्ववदपाकरणं शाखोपगूहनान्तं कुर्यात् । रात्रौ आहवनीयागारे गार्हपत्यागारे वा यजमानः सपत्नीकः शयीत । प्रातः स्वयमेव यजमानोऽग्निहोत्रं हुत्वा अनुदितऽएव सूर्ये तल्लोपक्रमं कुर्यात् । पौर्णमासवद्ब्रह्मवरणादि कर्मापवर्गान्तं कुर्यात् । तत्र विशेषो लिख्यते · गोत्र °शर्मन्दर्शेष्ट्या[2] वयं

---

१) ? पूतिकाः°. २) ? गोत्रशर्मन्द°°.

यद्यामहऽ इति ब्रह्मणो वरणम् · व्रतग्रहणमत्र वा · प्रणीताप्रणयनम् · पात्रासादने अष्टौ कपालानि शाखोपवेषः वेदश्च दोहनचतुष्टयम् तत्र दोहनम् नियोजनम् शाखापवित्रम् स्थाली चेति पुरोडाशपात्र्येका शेषं पूर्ववत् · हविर्ग्रहणे एकस्याग्नेयपुरोडाशस्यैव ग्रहणम् · वेदबन्धनानन्तरं प्रोक्षणान्ते उपसृष्टादिपरिक्षालनान्तो दोहः पूर्ववत्कर्तव्यः · ततश्चक्षुषे त्वेति (१.२०) कृष्णाजिनस्थहविषः प्रेक्षणादि · पयसः पर्यग्निकरणाभावः · देवस्त्वेति (१.२२) मन्त्रेणाधः श्रपणं भवत्येव नोपरि श्रपणप्रक्षेपः · ध्रुवामासाद्य सायंदोहाहरणम् · ततः पुरोडाशविभस्मीकरणम् · पुरोडाशपात्रीस्थापनम् · तस्यामुपस्तारः पुरोडाशे पयसि च तत्रस्थाभिघारः न दधनि · उद्वास्य पुरोडाशं तस्योत्तरतो दध्नः स्थापनम् तस्योत्तरतः पयसः · ततः पुरोडाशदधिपयसां प्राणादानम् दधनि पयसि च इन्द्रं गच्छेति प्राणादानमन्त्रे विशेषः महेन्द्रपक्षे महेन्द्रं गच्छेति [1] · ततः कपालान्यभ्यज्योद्वास्याज्यस्थालीपुरोडाशदधिपयसां प्रियेण धाम्नेति (२.६) क्रमेणासादनम् · आज्यस्थाल्यादीनामालम्भः आत्मालम्भनऽउदकालम्भः [2] · होतुरामन्त्रणादि उत्तमप्रयाजान्तम् इदमग्नये सोमायाग्नयेऽग्नीषोमा[भ्यामग्नीषोमा]भ्यामिन्द्राय देवेभ्य आज्यपेभ्यो न मम पञ्च ममेत्यादि · आग्नेययागानन्तरमग्नीषोमीय उपांशुयाजः · ततो दधिपयोभ्यां तन्त्रेण यागः · तत्र इन्द्रायानुब्रूहीति होतारं सम्प्रेष्य जुह्वामुपस्तीर्य प्रथमं पयसो द्विरवदानम् मध्यात्पूर्वार्धाच्च ततो दध्नः · तत उपरि सकृदभिघारः दधिपयसोः प्रत्यभिघारः · उत्थायातिक्रम्याश्राव्येन्द्रं यजेति प्रैषः · इदमिन्द्रायेति त्यागः · महेन्द्रपक्षे च महेन्द्रायानुब्रूहि महेन्द्रं यज इदं महेन्द्रायेति विशेषः शेषं पूर्ववत् · ततः सर्वहविर्भ्यः स्विष्टकृद्यागादि · दधिपयसोः प्राशित्रहरणे इडायां चावद्येयम् नान्यत्र तत्रापि पूर्वं पयसः पश्चाद्दध्नः · ऐष्टिकं पवित्रं शाखापवित्रं चोभे समस्य मार्जनम् पुनः शाखायामेव तस्य पवित्रस्य करणम् यजमानस्येति [3] प्रस्तरे करणं शाखापवित्रयोर्न भवति · व्यूहने अग्नेः अग्नीषोमयोः इन्द्रस्योज्जितिमिति अग्निः अग्नीषोमौ उपांशु इन्द्रस्तमपनुदन्त्विति · प्रस्तरहोमकाले प्रस्तरेण सह शाखाया

1) See २.८.१५. 2) ? आज्यालंभन१. 3) See ३.४.२५.

होमः · इदमग्नये सोमायाग्नयेऽग्नीषोमाभ्या[मग्नीषोमाभ्या]मिन्द्राय देवेभ्य आज्यपेभ्योऽग्नये होत्रायेति त्यागः · शेषं सर्वं पौर्णमासवत्कर्मापवर्गान्तम् । इति सांनाय्ययाजिनः अमावास्येष्टिरुक्ता · अथासांनाय्ययाजिन उच्यते । उद्धरणादि पूर्ववत् · शाखाछेदादिवत्सापाकरणान्तस्याभावः · न च यवाग्वा होमनियमः · होमानन्तरमुपसृष्टप्रैषादिवत्सापाकरणस्याभावः · प्रातरनुदिते ब्रह्मवरणादि · पात्रासादने विंशतिः कपालानि द्वयोः पुरोडाशयोः साधारण्येकैव पुरोडाशपात्री दोहनचतुष्टयस्याभावः उपवेषो वारणः अन्यत्पौर्णमासवत् · हविर्ग्रहणे आग्नेयपुरोडाशग्रहणानन्तरमैन्द्राग्नस्य ग्रहणम् तत्र इन्द्राग्निभ्यां जुष्टं गृह्णामीति · विभज्यालम्भने इदमग्नेः इदमिन्द्राग्न्योरिति · कपालोपधाने आग्नेयस्याष्टौ कपालान्युपधायोत्तरत ऐन्द्राग्नस्य द्वादशकपालोपधानम् अग्नीषोमीयवत् उत्तरतश्चत्वारीति विशेषः · प्राणदाने अग्निं गछ इन्द्राग्नी गछेति · उत्तमप्रयाजत्यागे इदमग्नये सोमायाग्नये विष्णवऽइन्द्राग्निभ्यां देवेभ्य इत्यादि · आग्नेययागानन्तरं वैष्णव उपांशुयाजः तत्र विष्णवे उपांशु अनुब्रूहीत्युच्चैः ध्रुवातश्चतुरवत्तमाज्यमवदायोत्थायाश्राव्य विष्णुमुपांशु यजेति प्रथमस्वरेण प्रेष्यति इदं विष्णवऽइति त्यागः · तत इन्द्राग्निभ्यामनुब्रूहि जुह्वामुपस्तारः ऐन्द्राग्नस्य हविषो मध्यात्पूर्वार्धाच्चावदायाभिघार्यावदाने प्रत्यभिघार्योत्थायातिक्रम्याश्राव्येन्द्राग्नी यजेति सम्प्रेष्य मध्ये जुहोति इदमिन्द्राग्निभ्यामिति त्यागः ततः स्विष्टकृदादि ऐन्द्राग्नस्य प्राशित्रेडाव्यतिरिक्तं किमपि न भवति · व्यूहने अग्नेर्विष्णोरिन्द्राग्न्योरुज्जितिम् अग्निर्विष्णुरिन्द्राग्नी तमपनुदन्त्विति अत्राप्युपांशुयाजस्य देवताया विष्णोरुपांशूच्चारणम् · प्रस्तरहोमे इदमग्नये सोमायाग्नये विष्णवऽइन्द्राग्निभ्यां देवेभ्य इति विशेषः · अन्यत्सर्वं ससांनाय्यामावास्येष्टिवत् । सोमयाजिनो नियमेन सांनाय्यं भवति असोमयाजिनस्त्विच्छया सांनाय्यं भवति ।

त्रिंशतं वर्षाण्येव दर्शपूर्णमासाभ्यां यागो भवति यावज्जीवं वा · दाक्षायणयागपक्षश्चेत् पञ्चदश वर्षाण्येव यावज्जीवं वा । उत्सर्गपक्षेऽपि यावज्जीवमग्निहोत्रं हूयतऽएव · अन्यान्यपि सर्वाणि कर्माणि भवन्त्येव ॥ ॥२॥

इति चतुर्थस्य द्वितीया कण्डिका ॥

आचार्येण सधर्मकौ दर्शपूर्णमासावुक्तौ । अथ तदधिकारानिष्टिपश्वादीन्वदिष्यन् सौर्यं चरुं निर्वपेदग्नीषोमीयमजमालभेतेत्येवमाद्यानां वैकृतीनां चोदनानां यजतित्वनिरूपणपूर्वकं तदुपयुक्तान्सामान्यातिदेशविशेषातिदेशबाधान्विकृतिकालं [1] च निरूप्य दाक्षायणयज्ञं वक्ष्यति । ननु दाक्षायणयज्ञोऽनन्तरमतिदेशादि निरूपणीयम् तस्यापि गुणमात्रविकृतिदर्शपूर्णमासत्वेन प्रकृतित्वात् · सत्यम् · दाक्षायणयज्ञे पयस्या विद्यते अमावास्यायां पयस्या मैत्रावरुणीति (४.४.७) तस्याश्च सांनाय्यपयोविकारत्वादतिदेशादिनिरूपणाधीना तत्र पयोधर्माणां प्राप्तिः · तेन प्राग्दाक्षायणयज्ञादतिदेशादिनिरूपणं युक्तम् [2] । इदानीमिदं विचार्यते · सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः अथ बार्हस्पत्यं चरुं नैवारं सप्तदशशरावं निर्वपति (५.१.४.११) अथ सारस्वतं चरुं निर्वपति (५.४.५.७) अथैतं वायवे नियुत्वते शुक्लं तूपरमालभेत (६.२.२.६) तत्र अग्नीषोमीयमजमालभेतेत्येवमाद्यासु वैकृतीषु चोदनासु किं व्रीहीनवहन्ति-व्रीहीन्प्रोक्षतीति-वद्यावदुक्तनिर्वापालम्भरूपसंस्कारमात्रविधिः उत यागविधिरिति · तत्र धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यादिति न्यायेन निर्वापालम्भमात्रं प्राप्नोतीत्यत आह ·

कर्मशब्दो द्रव्यदेवतायुक्तो यजतिः ॥१॥ द्र° क° क्रियाशब्दः आख्यातप्रत्ययान्तो निर्वपत्यादिशब्दो यजतिः प्रत्येतव्यः यागो ज्ञेय इत्यर्थः न निर्वापालम्भादिरूपसंस्कारमात्रविधायकः · यजतिशब्दोऽत्र तदर्थयागपरः । एवं यागत्वे सिद्धेऽपि इदं संदिह्यते सौर्यं चरुं निर्वपेदग्नीषोमीयमजमालभेतेत्यादौ किं यागमात्रं भवति उत धर्मा अपि भवन्तीति · यदा च धर्मा भवन्तीति पक्षस्तदापि संदेहः किं पूर्णाहुतिसम्बन्धिनो धर्मा भवन्ति उताग्निहोत्रसम्बन्धिनः आहोस्विद्दर्शपूर्णमासयोः अथवा ज्योतिष्टोमस्येति अथवा दर्शपूर्णमासयोरेवेति । धर्माणामनाम्नानाद्यथाश्रुतं यागमात्रं कर्तव्यमिति प्राप्तेऽआह ·

---

1) ? °कालसा°बाधात् वि°२. 2) दर्शपूर्णमासयोः सांनाय्यवतोरसांनाय्यवतोश्चानुविधानं कृतम् इदानीं दाक्षायणगुणकयोः कर्तव्यम् · तत्र च पयस्या विद्यते सा च दधिपयोभ्यां भाव्यते · विकारत्वाच्च धर्मातिदेशं प्रत्यपेक्षा किमत्र दध्नो धर्मा उत पयस इति · अनेनातिदेशप्रसङ्गेन यावानतिदेशः स सर्वोऽभिधीयते तत्सर्वकत्वाच्च विशेषातिदेश ऊहो बाधश्चेति Karka.

दर्शपूर्णमासधर्मा इष्टिपशुषु सामर्थ्यात् ॥२॥ सौर्यादौ धर्मा भवन्ति न यागमात्रम् · एवमेतानि विधिवाक्यानि समर्थान्यर्थवन्ति सप्रयोजनानि भवन्ति अन्यथा साकाङ्क्षत्वादर्थप्रतिपादनाभावेन निरर्थकान्येव स्युः । तथा हि · सौर्येण यागेन ब्रह्मवर्चसं भावयेदित्यत्रांशत्रयवती भावना विधीयते किम् केन कथमिति · किमंशो ब्रह्मवर्चसम् केनांशः सौर्येणेति कथमंशस्तु वाक्यमध्ये नास्ति · तेन कथं भावयेदिति वाक्यं कथमंशसापेक्षम् · यच्च सापेक्षं भवति तदध्याहारेणानुषङ्गेण वा पूरयित्वा निराकाङ्क्षं कर्तव्यम् अन्यथा तस्यानर्थक्यापत्तेः न च वेदे मात्रामात्रस्य तदिष्यते · तस्मादत्र निराकाङ्क्षीकरणाय विध्यन्तेतिकर्तव्यतापरपर्यायः कथमंशोऽत्र कस्यचिदनुषञ्जनीय इति सिद्धे आह दर्श° र्थ्यादिति · सर्वासु इष्टिषु अग्नीषोमीये पशौ च दर्शपूर्णमासयोरेव धर्मा भवन्ति सामर्थ्यात् पूर्वोक्त एव हेतुरत्रापि योज्यः दर्श°धर्मा एव सौर्यादिविधीनां शेषीभवितुं समर्थाः चरुपुरोडाशादयो ह्यवघातादिभिरेव सिध्यन्ति नाभिषवादिभिरिति । इष्टिपशुष्विति इष्टिषु सर्वासु अग्नीषोमीये पशौ च पश्वन्तरेषु ह्यग्नीषोमीयधर्मा भवन्ति ।

दर्शनाच्च ॥३॥ सावित्रेष्टौ प्रयाजानां दर्शनात् (१३.४.२.८) अग्नीषोमीये पशावुत्तराघारदर्शनात्[1] । तदेवं प्रकृतिवद्विकृतिः कर्तव्येत्येवंरूपेणानुमानिकवचनेन सर्वेष्टिषु दर्श°र्मा भवन्तीत्युक्ते अधुना तदपवादत्वेन प्रत्यक्षशब्देन धर्मप्राप्तिमाह ·

वैश्वदेवधर्माश्चातुर्मास्येषु वचनप्रवृत्तिभ्याम् ॥४॥ चातुर्मास्येषु चत्वारि पर्वाणि सन्ति वैश्वदेवम् वरुणप्रघासाः साकमेधाः शुनासीरीयं चेति · तत्र प्रथमे वैश्वदेवे पर्वणि दर्शपूर्णमासधर्मा भवन्ति ततोऽतिरिक्ता औपदेशिका अपि धर्मा भवन्ति प्राचीनाप्रवणो त्रेधा बर्हिः कुशप्रस्वः प्रस्तरोऽहतवासाः पत्नी चेत्येवमादयः · तत्र वरुणप्रघासादिषु त्रिषु पर्वसु वैश्वदेवस्य धर्मा भवन्ति । कस्मात्

---

१) पशौ स उत्तरमाघारंसमनक्तीति (३.७.४.७) तत्र उत्तराघारो न विधीयते किंतु प्रकृतितः प्राप्ते उत्तराघारे पश्वञ्जनं विधीयते Ss.

वचनात् इत्ययमुपदेशो हेतुश्च[१]। तत्रैव नान्यत्र मारुत्यानीकवतीसांतपनीयागृहमेधीयाक्रीडिनीयापित्र्यासु[२] अतश्च मारुत्यादिषु प्राकृतमेव बर्हिरेकधा संनद्धम् न त्रेधा प्रस्तरोऽपि प्राकृत एव न कुशप्रस्वः · प्रत्यक्षवचनातिदेशोऽयम्। प्रवृत्तेश्च श्रुतौ शुनासीरीये धर्मप्रवृत्तिदर्शनाच्च (२.६.३.३-४)।

सोमाच्चावभृथे सामप्रतिषेधात् ॥ ५ ॥ वरुणप्रघाससम्बन्धिन्यवभृथसंज्ञके कर्मणि सौत्रामणीदार्षद्वताद्यवभृथे च सोमात् सौमिकादवभृथाद्धर्मा भवन्ति। कुतः सामप्रतिषेधात् तत्र न साम गीयतऽइति (२.५.२.४६) सामगानस्य प्रतिषेधात् सामगानं च सौमिकावभृथऽएव विहितमस्ति तत्प्रतिषेधश्च तदैवोपपद्यते यदि सौमिकादवभृथाद्वारुणप्रघासिकावभृथे धर्मा भवेयुः। चकारो वचनप्रवृत्तिभ्यामित्यस्य (४) हेतोरनुकर्षणार्थः · उच्यतेऽभिधीयतेऽनेन शब्देनेति वचनं नामधेयमुच्यते अवभृथ इत्येवंरूपम् तेनावभृथ इति नामसामान्येन तत्र सौमिकादवभृथाद्धर्मप्रवृत्तिर्भवति · धर्मप्रवृत्तिरपि सामप्रतिषेधाज्ज्ञायते तस्य प्राप्तिपूर्वकत्वात् तेनोरुं हीति वाचनादि सर्वं तदीयं भवति प्रतिषिद्धवर्जम् · एवं कुण्डपायिनामयने मासमग्निहोत्रं जुह्वति दर्शपूर्णमासाभ्यां मासम् (२४.४.२४-२५) वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेत्यादौ तत्र नामधेयाद्धर्मप्राप्तिर्ज्ञेया।

कणवत्पशौ न मन्त्रोपदेशात् ॥ ६ ॥ तथोऽएवासृक्पशोरिति (१.३.२.३५) वचनेन पशौ कणापासनवत्कपालेनाधोऽधः कृष्णाजिनं रुधिरापासनमाशङ्क्य निषेधति[३] पशौ कणवत् रुधिरापासनं न भवति। कुतः मन्त्रोपदेशात् यदि च तथोऽएवासृगित्यनेन सर्वस्याः कणापासनेतिकर्तव्यतायाः प्राप्तिः स्यात् तदा रक्षसां भागोऽसीति पुनर्मन्त्रोपदेशो न स्यात् मन्त्रस्यापि प्राप्तत्वात् · अस्ति च मन्त्रोपदेशः तथोऽएवासृक्पशो रक्षसां भागोऽसीति (१.३.२.३५) तस्माद्रुधिरापासनमात्रमेव भवति।

---

१) वचनादिति हेतुश्चायमुपदेशश्च · ततश्च यत्रैव वचनम् तत्रैव प्राप्तिः · प्रतिपर्व वचनं भवति अथैतान्येव पञ्च हवींषि भवन्तीति (२.५.२.७) तानि चाग्नेयादीनि वैश्वदेविकानि पञ्च चोच्यन्ते तेषां चापञ्चोणत्वात्तद्धर्मकाणीति गम्यते · धर्मप्रवृत्तिं च दर्शयति शुनासीरीये अथैतान्येव पञ्च हवींषि भवन्तीत्यभिधाय (२.६.३.४) तस्यावृन्नोपकिरन्त्युत्तरवेदिं न गृह्णन्ति पृषदाज्यं न मन्थन्त्यग्निमिति (२.६.३.३) प्रतिषेधति निषेधश्च प्राप्तिपूर्वको भवति अप्राप्तत्वाच्चोत्तरवेदिप्रतिषेधोऽनुवादकः Karka. २) मारुत्यनीकवतीसंतपनी॰ याक्रीडिनी॰२. ३) अशेषक्रियाविषयं वचनमित्याशङ्कानिवृत्त्यर्थमुक्तम् Karka.

विशये लौकिकमयुक्तत्वात् ॥७॥ यत्र-यत्र कर्मणि विशयः[1] संशयो भवति किमत्र लौकिकं वस्तु ग्राह्यमुत वैदिकमिति तत्र लौकिकं ग्राह्यम्[2] लौकिकस्य (अग्नेः) कुत्रापि वाक्येनाविनियुक्तत्वात् इतरस्य (गार्हपत्यादेः) वचनेन कार्यान्तरविनियुक्तत्वात् ॥ इष्टिपशुषु दर्शपूर्णमासधर्मा भवन्तीत्युक्तम्(२) दर्शपूर्णमासयोश्चाग्नेयादयः षट् प्रधानयागाः · तत्रायं संदेहः किं यतः कुतश्चिदाग्नेयादेर्धर्मा भवन्ति उतास्मिन्नस्मादेवेति नियम इति · तत्र नियमकाराभावादनियमे प्राप्तऽआह ·

विधिविशेषः कर्मण्येकद्विशब्दपरिमाणद्रव्यदेवतागुणसामान्येभ्यः ॥८॥ कर्मणि वैकृते प्रधानकर्मणि अस्मादेव प्राकृतात्प्रधानयागादस्मिन्वैकृते प्रधानकर्मणि धर्मा भवन्तीत्येवंविधो विधिविशेषो भवतीत्यर्थः । कुतः एक° न्येभ्यः · सामान्यशब्दः प्रत्येकमभिसम्बध्यते । एकद्वीति भावप्रधानो निर्देशः अतश्च एकत्वसामान्यात् द्वित्वसामान्यात् । यथासम्भवमेतेभ्यो हेतुभ्यो विशेषधर्माणां प्राप्तिर्भवति । तद्यथा । वैकृते एकदेवत्ये सौम्यसारस्वतपौष्णवारुणादौ यागे एकदेवत्यत्वेनावान्तरसामान्येन प्राकृताग्नेययागतः धर्मा भवन्ति · तेन सर्वेष्वेकदेवत्येषु चतुर्धाकरणाद्याग्नेयधर्मा भवन्ति · यद्यपि व्यक्तचोदनया[3] ओषधद्रव्यैकत्वादिसामान्यमग्नीषोमीयादिष्वप्यस्ति तथाप्याग्नेये एकदेवत्यत्वमवान्तरसामान्यमधिकम् · तेनैवं नियमः आग्नेयादेवेति नाग्नीषोमीयादेरिति · सदृशं हि दृष्ट्वा सदृशे प्रतीतिर्भवति तत्सादृश्यात्तद्धर्मत्वमनुमीयते । तथा द्विदेवत्यत्वसामान्यात् आग्नावैष्णावेऽग्नीषोमीयस्य धर्मा भवन्ति · ननु द्विदेवत्यत्वसामान्यमैन्द्राग्नेऽपि विद्यते ततश्चानियमो भविष्यत्यग्नीषोमीयादैन्द्राग्नाद्वेति · नैवम् · शब्दपरिमाणसामान्यमधिकमग्नीषोमीये ऐन्द्राग्नात् । शब्दपरिमाणसामान्यं च तुल्यसंख्याक्षरत्वम्[4] · अथ आग्नावैष्णावाग्नीषोमीययोरुभयोः पञ्चाक्षरत्वद्रूपावान्तरसामान्यात् अग्नीषोमीयादेवाग्नावैष्णावे धर्मा भवन्ति नैन्द्राग्नादिति · अनेनैव शब्दपरिमाणसामान्येन

---

१) विषयः२· २) उभयाभावऽउल्कुषमतीरिति (८·१·१०) · तथा गर्गत्रिरात्रे आज्यदोहे सामस्वग्निमुपसमाधाय स्तुवते Ss. यथाग्नीषोमीये पशौ अस्तमिते सूर्ये वसतीवरीग्रहणार्थमुल्कुषीकरणे लौकिकमग्निद्रव्यम् न वैदिकम् Mahâd. ३) ? व्यक्तनोदया२· ४) अविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयादिति यास्कोक्तेः Mahâd.

मारुतऽऐन्द्राग्नस्य धर्मा भवन्ति उभयोरपि अद्यत्वात् नाग्नीषोमीयात्। तथा द्रव्यसामान्यादपि तत्सदृशे वैकृते द्रव्यान्तरे धर्मप्राप्तिर्भवति · यथा ओषधसामान्यात्पुरोडाशस्य धर्माश्चरुधानामन्थादिषु भवन्ति सांनाय्याच्च सांनय्यपयस्यादिषु द्रवत्वसामान्यात् आज्यधर्मा मधूदकादिषु छागधर्मा मेषादिषु। देवतासामान्यादपि धर्मा भवन्ति · यथाग्नेये आग्नेयस्य ऐन्द्राग्ने ऐन्द्राग्नस्येति · नन्वेतत्पुनरुक्तम् दैवतैकवादिना सिद्धत्वात् सत्यम् द्रव्यदेवताविरोधे द्रव्यस्य समवायादिति वक्ष्यति (१) तदर्थं दैवतैक्यादित्युच्यते अन्यथा द्रव्यदेवताविरोधऽइत्येतस्य वक्तुमशक्यत्वात्। गुणसामान्यादपि वैकृते प्रधाने धर्मप्रवृत्तिर्भवति · यथा प्राकृतादुपांशुयाजाद्वैकृते सावित्रसौर्यादावुपांशुयागे तेन प्रणवो येयजामहो वषट्कारः सम्प्रैषाः प्रैषाश्चोच्चैरुपांशुहविःषु देवतानामधेयं चोपांश्वित्यादयो (शाङ्खायन० १.१.३६) धर्मास्तेषु भवन्ति · यथा वैश्वानरयागादौ पौर्णमास्यां क्रियमाणे पौर्णमासाग्नेयधर्मा उदिते-आरम्भादयो भवन्ति अमावास्यायां क्रियमाणे चामावास्याग्नेयधर्मा अनुदितारम्भादयो भवन्ति कालो ह्यत्र गुण इति कालस्यापि कर्मार्थत्वेन परार्थत्वादङ्गत्वं भवत्येव तदुक्तं जैमिनिना (३.१.२) शेषः परार्थत्वादिति · अथवा इदमुदाहरणम् द्वादशकपाले वैश्वदेवे अनेकदेवतात्वसामान्येनाग्नीषोमीयधर्मा ऐन्द्राग्नधर्मा वानियमेन प्राप्नुवन्ति तत्र द्वादशकपालत्वरूपगुणसामान्यादैन्द्राग्नस्यैव नाग्नीषोमीयस्येति शब्दपरिमाणसामान्यं त्वत्रैकस्यापि नास्ति॥ अथ द्रव्यदेवताविरोधे चिन्त्यते[1] · यथा आतिथ्यायां वैष्णवो नवकपालः पुरोडाशो विहितोऽस्ति तत्र द्रव्यसामान्यात्पौरोडाशिका धर्माः प्राप्नुवन्ति देवतासामान्याच्च वैष्णवे उपांशुयाजस्य धर्मा इति · अनियमे प्राप्ते आह ·

नियमो द्रव्यदेवताविरोधे द्रव्यस्य समवायात्॥१॥ द्रव्यदेवताविरोधे द्रव्यस्यैव द्रव्यसामान्यादेव धर्मा भवन्तीति नियमः द्रव्यसामान्यमेव बलीय इति। कुतः द्रव्यस्य यागे समवायात् द्रव्यं हि स्वरूपेण त्यज्यमानं (यागे समवैति) यागं निष्पादयति देवता तूद्देशमात्रेणाग्नयऽइत्याद्यक्षरमात्रोच्चारणेन तत्रोपकरोति न द्रव्यवत्स्वरूपेण · तेन यागस्य द्रव्यं संनिकृष्टम् देवता तु

---

1) किं द्रव्यसामान्येन विध्यन्तनियमोऽस्तु उत देवतासामान्येन Karka.

विप्रकृष्टा तेन द्रव्यं बलवत्[1] · अथवा वैष्णवादौ द्रव्यस्य हृदये विशेष्यत्वेन समवायो देवतायाश्च विशेषणत्वेन विशेषणविशेष्ययोर्मध्ये विशेष्यमेव बलीयः ॥ दाक्षायणे श्रूयते मैत्रावरुणी पयस्येति (२.४.४.१०) तथा चातुर्मास्येषु वैश्वदेवी पयस्येति (५.१.१८) पयस्ये वारुणी मारुती चेति (५.४.२३) · सा च पयस्या दधिपयोभ्यां निष्पाद्यते · तत्र संदेहः किमस्यामुभयोर्धर्मा उत दध्नः अथवा पयस एवेति · तत्राद्यं पक्षमुद्भावयति

आमिक्षायामुभयोस्तन्निर्वृत्तेः ॥ १० ॥ आमिक्षा पयस्येति चानर्थान्तरम् · आमिक्षायां पयस्यायामुभयोर्दधिपयसोर्धर्मा भवन्ति । कुतः तन्निर्वृत्तेः यतस्ताभ्यां निर्वर्त्यते निष्पाद्यते । तं पक्षं दूषयति ·

नैकचोदनात् ॥ ११ ॥ पूर्वं यदुक्तम् तन्न · कुतः एकचोदनात् यत इयमेकचोदना मैत्रावरुण्यामिक्षेति · एकं हि पयस्याद्रव्यं विधीयते एकवचनश्रवणात् · एकस्य चोभयधर्मत्वं न सम्भवति विरोधात् दधिधर्मत्वे हि अपरिवासितया शाखया वत्सापाकरणं प्राप्नोति पयोधर्मत्वे तु परिवासितया[2] । अथ द्वितीयं पक्षमुद्भावयति ·

दध्नः संघातात् ॥ १२ ॥ संघातः काठिन्यम् कठिनत्वसामान्यात् । सिद्धान्तमाह ·

पयसस्तद्भावात् ॥ १३ ॥ आमिक्षायां पयस एव धर्माः न दध्नः · कुतः तद्भावात् पयसो ह्यामिक्षा भवति । ननु दध्नोऽपि उभयोस्तन्निर्वृत्तेरिति (१०) तन्न घनत्वसम्पादनायैव दधिनिनयनं क्रियते पयस्या तु पयस एव भवति ॥ अथाग्नीषोमीये पशौ देवतासामान्यात्प्राकृताग्नीषोमीयपुरोडाशधर्मप्राप्तेराह ·

पशोः सांनाय्यस्य तदुक्तम् ॥ १४ ॥ अग्नीषोमीयस्य पशोः सांनाय्यस्य धर्मा भवन्ति · तदुक्तम् नियमो॰ मवायादिति (९) । अत्र कथं द्रव्यदेवतयोर्विरोधः इह हि पशुद्रव्यं विधीयते तच्च प्रकृतौ नास्ति · उच्यते · पशुस्तावत्प-

---

१) चन्द्र सांनाय्यालाभ इत्यत्र (२५.५.६) द्रव्यसामान्येन पुरोडाशस्यैव न देवतासामान्यात्स्थानापत्त्या वा सांनाय्यस्येति सिद्धम् Ss. २) पयोधर्मत्वे दोहनचतुष्टयस्यासादनम् न दधिधर्मत्वे Ss.

शोरुत्पद्यते पयोऽपि पशोरुत्पद्यते अतः पशुद्रव्ये प्रतीते सांनाय्यं बुद्धावागच्छति अतः पशुद्रव्यं सांनाय्यधर्माणां प्रापकम् अग्नीषोमदेवता तु अग्नीषोमीयपुरोडाशस्य · अतः करणादेव अयमपि द्रव्यदेवताविरोध एव भवति · अतः साधूक्तम् तदुक्तमिति न च पुनरुक्तम् · तत्र हि वैष्णवादौ साक्षात्प्राकृतमेव पुरोडाशादिद्रव्यं धर्माणां प्रापकम् इह तु [1] प्राकृतसांनाय्यद्रव्यसदृशं पशुद्रव्यमिति · व्यवधानात्पुनः सूत्रारम्भः [2] ।

प्रायश्चित्तश्रुतेश्च ॥ १५ ॥ पशूखा चेत्स्रवेत्सांनाय्योखा वा तामभिमन्त्रयेतेति (२५.२.१४) प्रायश्चित्तश्रुतेः · अस्यां हि श्रुतौ पशावुखा दृश्यते सा च तदैवोपपद्यते यदि पशौ सांनाय्यधर्मा भवन्ति नान्यथा [3] । सांनाय्यं द्विविधम् दधि च पयश्च · तत्र संघातसामान्यात्पशौ दध्नो धर्मप्राप्तौ आह ·

पयसः कालानन्तर्यधर्मानुग्रहेभ्यः ॥ १६ ॥ पशौ पयस एव धर्माः न दध्नः । कुतः काला° भ्यः । कालात् कालसामान्यं हि श्रूयते तस्माद्यदा योषा रेतो धत्तेऽथ पयो धत्तऽइति तत्र गर्भधारणं पयोधारणं चैककालमुच्यते · तथा यदा पशुर्जायतेऽथ पयो जायतऽइति · अथवा पशुः सद्यस्कालो य इद्येत्यादिवाक्यात् पयोऽपि सद्यस्कालम् न दधिवद्व्यहनिष्पाद्यम् । आनन्तर्यात् पशुरपि गोरजादेर्वा पशोः साक्षादुत्पद्यते पयश्च · दधि तु पयस उत्पद्यते न साक्षात्पशोः · अतः पशोः पयोऽनन्तरम् दधि तु पयसा व्यवहितम् · तेनानन्तर्यात्पशौ पयोविध्यन्त एव भवति । धर्मानुग्रहाच्च पयोधर्मत्वे सति पशुपात्राणां वपाश्रपणीशूलोखानामासादनप्रोक्षणादीनां प्राकृतानां धर्माणामनुग्रहः कृतो भवति न दधिधर्मत्वे · ततश्च वपा° खानामासादनप्रोक्षणे द्यौः स्थ पृथिवी स्थ इत्यूहितेन मन्त्रेण वपाश्रपण्योरादानम् विरोधादर्थलोपाच्चा-

---

[1] हि२.  [2] सांनाय्यधर्माणां पशुद्रव्यं पर्युपस्थापकम् देवता पैरोडाशिकानाम् अतो द्रव्यदेवताविरोध एवायम् · ननु तेनैव गतार्थत्वादवाच्यमेतत् न तत्राव्यवहितं द्रव्यम् इह पशुद्रव्येण व्यवधानादारम्भः Karka.  [3] ननु विपरीतमेतल्लिङ्गम् सांनाय्यविध्यन्ते हि सति तदुखास्रुत्यभिमन्त्रणं पशूखायां प्राप्नोत्येव विधाने तु सुतरामप्राप्तिर्गम्यते · सत्यम् · सांनाय्ये तु (व Cod.) प्रधानस्य स्रुतिः पशावुपसर्जनभूतस्योदकस्येति तेन द्व्यान्यत्वात्पुनरुच्यते Karka.

धिश्रयणाभावः अन्वारब्धे यजमाने वपाप्रोर्णवनम् वपाश्रपण्योः स्थिताया एव वपाया वेद्यामासादनम् इत्यादि ॥ दर्श° मर्थ्यादित्यनेन (२) आनुमानिकवचनेन प्राकृतं पदार्थमात्रं विकृतौ भवतीत्युक्तम् तेन प्रकृतौ या ह्यक्काललता कर्मणा उक्ता सापि विकृतौ प्राप्नोत्यत आह ·

सद्यस्त्वं काशकृत्स्नः ॥१७॥ विकृतीनां सद्यःकालत्वं ब्रवीति · य इष्ट्या पशुनाग्रयणेन सोमेन यक्ष्यमाणः स पौर्णमास्याममावास्यायां वा यजेतेति वचनात् ।

अनुवादः पूर्वस्येति वात्स्यबादरी ॥१८॥ वात्स्यश्च वादरिश्च वात्स्यवादरी · य इष्ट्येत्यनेन वाक्येन पौर्णमास्याममावास्यायां वा विकृतीनामनुष्ठानमुच्यते तच्च प्रकृतितः प्राप्तमेव · अतः कारणाच्च इष्ट्येत्याद्यनुवाद एव पूर्वस्य प्रकृतितः प्राप्तस्य नापूर्वविधिरिति । स्थितं तावदसिद्धान्तितमेतदधिकरणम्[1] अतश्च अन्यच्चिन्त्यते[2] ·

स्थानापत्तेर्द्रव्येषु धर्मलाभोऽविप्रतिषिद्धः ॥१९॥ श्रूयते मौद्गं चरुं निर्वपेच्छ्रियैकाम इति बार्हस्पत्यं चरुं नैवारं सप्तदशशरावं निर्वपति (५.१.४.१२) रुद्राय पशुपतये रौद्रं गावेधुकं चरुं निर्वपति (५.३.३.७) · तत्र किं मुद्गादिषु प्राकृतद्रव्यस्थानापन्नेषु प्राकृतव्रीह्यादिद्रव्यधर्मा भवन्ति उत न भवन्ति । तदर्थं चेदं चिन्त्यते किं प्रकृतौ धर्माणां व्रीहिस्वरूपं प्रयोजकम् अपूर्वसाधनत्वं वा[3] · किं चातः · यदि स्वरूपं प्रयोजकम् तदा स्वरूपस्य विकृतौ मुद्गादिष्वभावान्न तद्धर्मप्राप्तिः अपूर्वसाधनत्वस्य धर्मप्रयोजकत्वे तस्य मुद्गादिष्वपि भावात्तत्प्रयुक्तानां धर्माणामपि प्राप्तिर्भवतीति । तत्र व्रीहीनवहन्ति व्रीहीन्प्रोक्षतीति व्रीहिसंयोगेन धर्माणां श्रवणान्मुद्गादिषु न भवन्तीति प्राप्ते आह द्रव्येषु वैकृतेषु मुद्गादिषु प्राकृतद्रव्यधर्मलाभो आसादनग्रहणप्रोक्षणकण्डनादिर्भवति स्थानापत्तेः

---

१) See at २५. २) विकृतिविषयत्वेन पौर्णमासी वामावास्या वोच्यते · तच्च प्रकृतितोऽपि चोदकेन प्राप्तमेवातोऽनुवादोऽयमिति (प्त एवा Cod.) · स्थितं तावदपर्यवसितम् अन्यदतरा (र Cod.) चिन्त्यते · यन्नाम प्राकृतस्य द्रव्यस्य कार्ये वैकृतमन्यद्द्रव्यान्तरं विधीयते यथा मौद्गं चरुं निर्वपेच्छ्रियै श्रीकाम इति किं तत्प्राकृतद्रव्यधर्मान्लभते उत न लभतऽइति Karka. ३) ? प्रयोजनम°२.

कार्यापत्तेः वैकृतस्य द्रव्यस्य प्राकृतद्रव्यकार्यापन्नत्वात् यतः प्रकृतौ व्रीहीणामपूर्वसाधनत्वं धर्माणां प्रयोजकम् न व्रीहिस्वरूपम् व्रीहिस्वरूपस्य प्रयोजकत्वे धर्माणामानर्थक्यापत्तेः विना संस्कारान्व्रीहित्वस्यासिद्धत्वात् अतो व्रीहीन्प्रोक्षतीत्यादौ अपूर्वसाधनं प्रोक्षतीत्यर्थः · अपूर्वसाधनत्वं च वैकृतेष्वपि मुद्गेष्वस्तीति भवत्येव प्राकृतधर्मलाभः · कीदृशः अविप्रतिषिद्धः[1] यथा परिधौ पशुनियोजनमित्यत्र (२२.७.५) परिधेर्यूपकार्यापन्नस्य यूपधर्मप्राप्तौ उच्छ्रयणं न भवति परिधानेन विप्रतिषेधात् । एवं वैकृते द्रव्ये प्राकृतद्रव्यकार्यापन्ने प्राकृतद्रव्यधर्माः सर्वे भवन्तीत्युक्तम् · तेन प्राकृतद्रव्यसम्बन्धिमन्त्रैरपि तस्याभिधानं प्राप्तम् · तत्र किमूहितेन उत नोहितेन यथाश्रुतेन · विशेषानुपदेशाद्यथाश्रुतेनानूहितेनाभिधाने प्राप्तऽआह ·

यथार्थमूहश्चोदिते ॥ २० ॥[2] चोदिते विहिते वैकृते द्रव्ये यथार्थमूहः विपरिणामः यो-यो वैकृतो यथार्थः यस्यां विकृतौ यः प्राकृतद्रव्यस्थानापन्नो वैकृतोऽर्थः तस्यां तद्वाचिपदप्रयोगः कार्यः · यथा प्रकृतौ अग्नीषोमाभ्यां छागस्य वपायै मेदस इति (३.८.२.२६) छागस्य यागसाधनत्वे तस्याभिधानं कृतम् विकृतौ च सारस्वतो मेष ऐन्द्र ऋषभ इत्यादौ मेषर्षभयोर्यागसाधनत्वेन विधानात् छागस्य इत्यस्य स्थाने मेषस्य ऋषभस्य इति · चोदितऽइति विशेषोपादानान्मुख्यसादृश्येन गृहीते प्रतिनिधिभूते मेषादावूहो न भवति · तथा चोक्तम् (१.४.३) शब्दे अविप्रतिपत्तिरिति । एवं सर्वत्रोहे प्राप्ते क्वचिदपवादमाह ·

न प्रकृतावपूर्वत्वात् ॥ २१ ॥ प्रकृतौ पत्नीं संनह्य (२.६.३५) पत्नि वाचं विसृजस्व (७.४.१४) इत्येकवचनमेकपत्नीकप्रयोगे उपपन्नार्थम् अनेकपत्नीकप्रयोगे ऊहितव्यम् न वेति संदेहे निर्णीयते · प्रकृतौ ऊहो न भवति अपूर्वत्वात्प्रकृतेः यतः प्रकृतेरन्या प्रकृतिर्नास्ति · अतोऽनेकपत्नीकेऽपि पत्नीमिति · एवं पवित्रे स्थ इत्येतदपि पवित्रत्रयपक्षे (२.३.३२) । प्रकृतिवद्विकृतिः कर्तव्येत्यनेन प्रकृतितः सर्वे धर्मा विकृतौ प्राप्नुवन्ति · तत्र केषांचिद्धर्माणां बाधमाह ·

---

[1] प्राकृतद्रव्यधर्मो वैकृतेन धर्मेण न विरुध्यते Ss. [2] शाक्त्यानामयने तरसमये पुरोडाशे धान्यमसीति स्थाने तरसमसीत्यूहः Mahâd.

विकृतौ वचनार्थलोपविरोधेभ्योऽप्रवृत्तिः ॥ २२ ॥ विकृतौ प्राकृतधर्माणां वचनादप्रवृत्तिर्भवति न प्रस्तरं गृह्णाति न होतारं प्रवृ॰ न प्राशित्रमित्यादौ (२.६.१.१४-२३-३३) · तथा अर्थलोपादपि यथा मुद्गेषु कण्डनस्य · विरोधादपि यथा चरौ पेषणमभिवासनं च ।

परार्थोत्पत्तेस्तदभावेऽभावः ॥ २३ ॥[1] परार्थमन्यार्थमुत्पत्तिर्यस्यासौ परार्थोत्पत्तिः · तस्य परस्याभावे तस्य परार्थोत्पत्तेरप्यभावः । यथा प्रकृतौ तण्डुलनिष्पत्तिनिमित्तकणानामुत्पत्तिः परार्था तण्डुलार्था · अतः परार्थोत्पत्तेः कणादेः (तदभावे) तस्य परस्य तण्डुलादेरभावे पयस्यादौ (अभावः) तस्यापि कणादेरभावो भवति तदभावाच्च तदर्थस्यापासनस्याप्यभावः । एवं सर्वत्र · क्वचिद्विशेषमाह ·

चोदितत्वाद्वा भावः ॥ २४ ॥ यत्र परार्थोत्पन्नं द्रव्यं क्वचित्कार्यान्तरसाधनत्वेन चोदितं भवति तत्र परस्याभावेऽपि परार्थोत्पत्तेर्द्रव्यस्य भावो भवति · तद्यथा यूपशकलेन शुक्रौ संमार्ष्टीति[2] यूपे तक्ष्यमाणे उत्पन्नं शकलम् तस्य ग्रहसंमार्गसाधनत्वेन विहितत्वाद्यूपाभावेऽपि शकलमात्रं गृह्यते संमार्गसिद्ध्यर्थम् · यतः शकलादिद्रव्यं क्रियार्थम् तेन क्रिया प्रधानभूता तदङ्गभूतं शकलमात्रं स्वसिद्ध्यर्थमाक्षिपति · यत्र तु क्रिया द्रव्यार्था तत्र द्रव्यस्य साधनभूतस्याभावेऽङ्गभूतायाः क्रियाया अभाव एव प्रयुज्यते ॥ स्थिताद्युत्तरमुच्यते · तत्रैवं पूर्वपक्षः कृतोऽस्ति पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्यया यजेतेत्येवमादिना प्रकृतिविकृतिस्य प्रतिपल्लक्षणस्य यागकालस्य विकृतावपि प्राप्तत्वाच्च इष्येति वाक्ये अमावास्यायां पौर्णमास्यामित्यनुवाद एव नापूर्वकालविधिरिति (१८) · तत्र सिद्धान्तमाह ·

न विपक्षे क्रियाः स्युः समभिव्याहारात् ॥ २५ ॥[3] विपक्षशब्देन प्रति-

---

१) पुरोडाशश्रपणार्थं कपालोपधानम् पुरोडाशाभावे कपालोपधानस्याप्यभावः Mahâd.
२) See ४.२.१.१४. ३) पक्षः शुक्लपक्षः तस्य प्रतिपक्षो विपक्षो कृष्णपक्षः स एव विपक्षः कृष्णपक्षः · समभिव्याहारात् शुक्लपक्षे पञ्चमीं सप्तमीं वा प्रसुत इति (७.१.२६) अष्टम्यां नवम्यां वा फाल्गुनीशुक्लस्येत्यादि (२०.१.२) Mahâd.— विपक्षे प्रतिपदि Ss.— किंचिद्विगतं पक्षस्येति विपक्षः प्रतिपदुच्यते · तत्र च वैकृत्यः क्रिया न स्युः क्व तर्हि प-

पद्युच्यते · प्रतिपदि वैकृत्यः क्रियाः न स्युः किं तर्हि पौर्णमास्याममावास्यायामेव स्युः । कुतः समभिव्याहारात् समभिव्याहारो वाक्यम् तस्मात् न इष्ट्वेत्यादिवाक्यात् । ननु प्राकृतस्यैव कालस्यायमनुवाद इत्युक्तम् (१८) नानुवादः अनुवादे हि वाक्यानर्थक्यमेव स्यात् प्रवृत्तिविशेषकत्वाभावात् पौर्णमास्यमावास्याशब्दयोर्लक्षणाप्रसङ्गाच्च · अनुवादे हि पौर्णमास्यमावास्याशब्देन गौण्या वृत्त्या प्रतिपल्लक्ष्यते तथा च श्रुतार्थपरित्यागो भवति न चैतदुपपन्नम् यल्लक्षणानुरोधेन श्रुतिर्बाध्यते · किं च सोमस्येदमेव कालविधानम् न हि वाक्यान्तरेण तस्य कालो विहितोऽस्ति यस्यायमनुवाद इत्युच्यते · अतोऽपि नानुवादः । य इष्ट्वेत्यत्र वाक्ये इष्टिग्रहणेनैवाग्रयणग्रहणे सिद्धेऽनिष्टिरूपस्याग्रयणस्य पौर्णमास्यमावास्यालक्षणकालविधानाय पृथगाग्रयणग्रहणम् तेन दर्शपूर्णमासानीजानो दक्षिणाग्निपक्वचातुष्प्राश्यं ब्राह्मणान्भोजयेदित्यादावनिष्टिरूपेऽपि (४.६.१०) आग्रयणेऽयं कालः सिद्धो भवति ॥ ॥ तृतीया कण्डिका ॥ ३ ॥

अथ यज्ञतिः ॥

ऐन्द्राग्नं द्वादशकपालं निर्वपेत् सौर्यं चरुं निर्वपेत् अग्नीषोमीयं पशुमालभेतेत्येवमादिर्यत्र द्रव्यदेवतायुक्तः कर्मशब्दः आख्यातप्रत्ययान्तः शब्दो वेदवाक्ये दृश्यते स सर्वोऽपि यज्ञतिर्यागो ज्ञेयः । सर्वास्विष्टिषु अग्नीषोमीये पशौ च दर्शपूर्णमासयोर्धर्मा भवन्ति । चातुर्मास्येषु वैश्वदेवपर्वणो धर्मा वरुणप्रघासमहाहविःशुनासीरीयेष्वेव भवन्ति · तत्रैव अथैतान्येव पञ्च हवींषि भवन्तीति वचनात् अतो मारुत्यां पयस्यायामानीकवत्यादिषु[१] च न भवन्ति · सौमिकादवभृथाद्वारुणप्रघासिकावभृथे धर्मा भवन्ति । उल्कुषीमेवादायोपपरेयादित्यादौ (३.१.२१) यत्र संदेहो ज्ञायते किमत्र लौकिकोऽग्निर्ग्राह्य उत वैदिक आहवनीया-

---

क्वान्तऽएव स्युः · कुतः पौर्णमास्याममावास्यायां वा यजेतेति वचनात् । ननूक्तम् अयमनुवाद इति (१८) · नानुवादः · अनुवादे हि पौर्णमासीशब्देन गौण्या वृत्त्या प्रतिपल्लक्ष्यते तत्र श्रुतिः परित्यक्ता भवति न चैतद्युक्तम् यल्लक्षणानुरोधेन श्रुतिर्बाध्यते · सोमस्य चैतदेव कालविधानम् य इष्ट्वा सोमेन पशुनाग्रयणेन यक्ष्यमाणः स पौर्णमास्याममावास्यायां वा यजेतेति न ह्यन्यत्र सोमस्य पौर्णमास्यमावास्ये विहिते अतोऽपि नानुवादः **Karka.**

१) ? °यामनीक°१.

दिरिति तत्र सर्वत्र लौकिक एवाग्निरविनियुक्तत्वाद्वाक्यः · एवमन्यत्राप्यूह्यम् ॥
वैकृते कर्मण्येकदेवत्ये सर्वत्राग्नेयधर्मा भवन्ति अनेकदेवत्ये त्वग्नीषोमीयैन्द्राग्नादेः । तत्राप्याग्नावैष्णवादौ अग्नीषोमीयदैन्द्राग्नाद्वेति संदेहे उभयोः पञ्चाक्षरत्वलक्षणस्य शब्दपरिमाणस्य साम्यादग्नीषोमीयस्यैव नैन्द्राग्नस्येति निर्धार्यते तथा मारुतेष्वेवं संदेहे शब्दपरिमाणादैन्द्राग्नस्यैवेति निर्धार्यते । द्रव्यसामान्येनापि धर्मप्रवृत्तिर्भवति यथा पुरोडाशचरुधानासक्त्वादौ पुरोडाशस्य सांनाय्ये सांनाय्यस्य आज्ये आज्यस्येति । देवतागुणस्योपांशुत्वादेः साम्ये धर्मप्रवृत्तिर्भवति यथोपांशुयाजे उपांशुयाजस्य । ऐन्द्रपुरोडाशादौ देवतासामान्यात्सांनाय्यविध्यन्तः प्राप्नोति द्रव्यसामान्यात्पुरोडाशस्येति · एवं द्रव्यदेवताविरोधे द्रव्यसामान्यादेव धर्मा भवन्ति न देवतासामान्यादिति । पयस्यायां च पयस एव धर्मा भवन्ति न दध्नः · अतश्चातुर्मास्यादौ परिवासितया शाखया पवित्रबन्धनानन्तरं वत्सापाकरणं दोहनचतुष्टयासादनं च भवति । पशावपि पयस एव धर्मा भवन्ति न दध्नः अत एव सांनाय्योखास्थानापन्नानां वपाश्रपणीशूलोखानामासादनप्रोक्षणे भवतः । द्रव्येषु स्थानापत्तेर्धर्मा भवन्ति · यथा श्यामाकानां व्रीहियवस्थानापत्तेस्तद्धर्मानां ग्रहणासादनप्रोक्षणकण्डनादीनां प्रवृत्तिः · यथा च ऐन्द्रो वृष्णिः षोडशिनीत्यत्र (१.८.४) वृष्णेर्मेषस्य छागस्थानापन्नत्वात्तद्धर्माणामुपाकरणादीनां प्रवृत्तिर्भवति । प्राकृतद्रव्यस्थानापन्नस्यापि ये स्थानिनो धर्मा विरुध्यन्ते स्थानापन्ने द्रव्ये ते न भवन्ति यथा परिधौ पशुनियोजनमित्यत्र (२२.७.५) परिधेर्यूपस्थानापन्नस्यापि तक्षणाष्टाश्रिकरणादयो यूपधर्मा न भवन्ति विरुद्धत्वात् । विकृतौ यत्र प्राकृतद्रव्यदेवतादेः स्थानेऽन्यद्द्रव्यदेवतादि विधीयते तत्र प्राकृतमन्त्राणां यथार्थमूहो भवति यथा-यथा तं विकृतिविहितमर्थं प्रकाशयन्ति तथा-तथोहः कर्तव्यः · यथा ऐन्द्राग्नादौ अग्नये जुष्टमित्यस्य प्राकृतस्य मन्त्रस्येन्द्राग्निभ्यां जुष्टमित्यूहः · यथा ऐन्द्रो वृष्णिरित्यत्राग्नीषोमाभ्यां छागस्येत्यस्य (३.८.२.२६) मन्त्रस्य इन्द्राय मेषस्येत्यूहः · एवं सर्वत्र ज्ञेयम् । प्रकृतौ मन्त्राणामूहो न भवति प्रकृतेरपूर्वत्वात् · यथा एकपत्नीके प्रयोगे पत्नीं संनह्येत्येकवचनान्तो (२.६.३५) मन्त्रो यथार्थः अनेकपत्नीकप्रयोगेऽप्येकवचनान्त एव प्र-

युज्यते नोच्यते · तथा पवित्रे स्थ इत्यविकृत एव (२.३.३२) पवित्रत्रयपत्तेऽपि प्रयुज्यते न पवित्राणि स्थेत्येवमूह्यते । विकृतौ वचनात्प्राकृतधर्मा न भवन्ति · यथा पितृयज्ञे नार्षेयं वृणीते न होतारम् · यथा शुनासीरीये न मन्थन्त्यग्निमिति (२.६.३.३)। अर्थलोपात्प्रयोजनलोपादपि प्राकृता धर्मा न भवन्ति · यथा मौद्गे चरौ कण्डनस्य प्रकृतितः प्राप्तस्यापि प्रयोजनाभावादभावः यथा चरौ प्रथनाभिमर्शनसंयवनादेः यथा च पयस्यादौ कृष्णाजिनोलूखलमुसलादेरासादनादेः । तथा विरोधादपि प्राकृतधर्माणां विकृतावप्रवृत्तिर्भवति · यथा चरौ पेषणस्याभिवासनस्य च दध्युपसर्जनीनामधिश्रयणस्य च । यच्च प्रकृतौ परार्थमुत्पन्नं भवति विकृतौ तस्य परस्याभावे तस्याप्यभावो भवति · यथा प्रकृतौ प्रतिपत्तिकर्मणां परार्था प्रतिपाद्यद्रव्यार्था उत्पत्तिरस्ति अतो विकृतौ परस्य प्रतिपाद्यद्रव्यस्याभावे द्रव्यकर्मणामप्यभावो भवति । यत्र तु परार्थोत्पन्नं द्रव्यं क्वचित्कार्यान्तरसाधनत्वेन विहितं भवति तत्र परस्याभावेऽपि परार्थोत्पन्नस्य भावो भवति परार्थोत्पन्नेन द्रव्येण यत्कार्यम् तदन्येनापि येन केनचित्कर्तव्यमित्यर्थः · तद्यथा यूपशकलेन शुक्रौ संमार्ष्टीति यूपार्थं यूपे तक्ष्यमाणे उत्पन्नं शकलम् यूपाभावे तत्सम्बन्धिशकलाभावेऽपि ग्रहसंमार्गसाधनत्वेन विहितत्वाद्येन केनचिच्छकलेन शुक्रसंमार्जनं कर्तव्यम् · तत्रेदं रहस्यम् यत्र परार्थोत्पन्नं द्रव्यं क्रियार्थम् तत्र क्रिया प्रधानभूता स्वसिद्ध्यर्थं द्रव्यान्तरमाक्षिपति यत्र तु[1] क्रिया द्रव्यार्था तत्र द्रव्याभावे क्रियाया अभाव एव भवति । य इष्ट्या पशुनाग्रयणेन सोमेन वा यक्ष्यमाणः सोऽमावास्यायां पौर्णमास्यां यजेतेत्यनेन वाक्येन सर्वविकृतीनां साङ्गानां मुख्यायां पौर्णमास्याममावास्यायां च सद्योऽनुष्ठानं विधीयते · तेन सर्वा विकृतयः सद्यस्काला एव भवन्ति न प्रकृतिवद्व्यहकालाः । प्राकृतकालस्यैवायं य इष्ट्येत्यनुवाद इति वात्स्यबादरिमतनिराकरणार्थं न विपन्ने क्रियाः स्युरिति सूत्रम् · विपन्ने प्रतिपदि वैकृत्यः क्रिया न स्युः कस्मात् समभिव्याहारात् य इष्ट्येत्यादिवाक्यात् · ननु प्राकृतकालस्यैवायमनुवाद इत्युक्तम् नानुवादः अनुवादे हि वाक्यमनर्थकमेव भवेत् प्रवृ-

---

1) ? न१.

त्तिविशेषकत्वाभावात् पौर्णमास्यमावास्याशब्दयोर्लक्षणाप्रसङ्गाच्च न च मुख्यार्थे सम्भवति सा न्याय्या · किं च सोमस्येदमेव कालविधानम् न ह्यन्येन वाक्येन सोमस्य कालो विहितोऽस्ति तस्मादपि अपूर्वविधिरेवायम् नानुवादः · अत्रेष्टिग्रहणेनैवाग्रयणस्यापि (ग्रहणे) सिद्धे निष्टिरूपस्यापि तदाशिताया वा पयसेत्यादिरूपस्य (४.६.१२) आग्रयणस्यैतत्कालसिद्ध्यर्थं पृथगाग्रयणाग्रहणम् ॥ ॥ ३ ॥

इति चतुर्थस्य तृतीया कण्डिका ॥

अथ दाक्षायणयज्ञमुपनिबध्नाति ·

दाक्षायणयज्ञः प्रजापशन्नयशस्कामस्य ॥ १ ॥[1] पर्यायेणैकैकफलसिद्धिः सदेवतानि दार्शपौर्णमासिकान्येव हवींषि प्रत्यभिज्ञायन्ते केवलं तु अग्नीषोमीयैन्द्राग्नसांनाय्यानां तिथिक्रमभेदेन विकारः · अत्र संदेहः किं दार्शपौर्णमासिका एवैते यागा गुणमात्रविकृताः[2] उत यागान्तराण्येतानि तुल्यद्रव्यदेवताकानि विधीयन्त इति · तत्र सूत्रेणैव पूर्वपक्षयति ·

नामफलगुणयोगात्कर्मान्तरम् ॥ २ ॥ नामान्यत्वात् · फलभेदात् फलभेदे च फलिनोऽन्यत्वं भवति · गुणान्यत्वात् गुणान्यत्वं च दृश्यते मैत्रावरुणयामिक्षा अथ वाजिभ्यो वाजिनं जुहोतीत्यादि (२.४.४.२२) ।

गुणविधानं वा संनिधिसम्पद्वचनाभ्याम् ॥ ३ ॥ वा पक्षव्यावृत्तौ · न दर्शपूर्णमासतोऽन्यत्कर्मान्तरम् किं तर्हि गुणविकृतौ दर्शपूर्णमासावेवैतौ इति । संनिधिः दर्शपूर्णमाससंनिधावेव दाक्षायणयज्ञस्य पाठात् आर्तिं वा एते धावन्ति ये दर्शसाभ्यां यजन्त इति (११.१.२.१०) दर्शसौ प्रकृत्य तस्मादु त्रिंशतमेव वर्षाणि यजेतेत्यभिधायाह यद्यु दाक्षायणयज्ञी स्यादथोऽअपि पञ्चदशैव वर्षाणि यजेतेति (११.१.२.१३) । सम्पद्वचनाच्च अत्र ह्येव सा सम्पत्सम्पद्यते द्वे हि पौर्णमास्यौ यजते द्वेऽअमावास्येऽअत्रोऽएव खलु सा सम्पद्भवतीति (११.१.२.१३) · दर्शसयागपक्षे हि एकैकः पौर्णमास्यमावास्यायागः अत्र द्वौ-द्वौ पौर्णमास्य-

---

१) प्रत्येकं भवति Ss. २) °कृतात् २.

मावास्यायागौ तेन त्रिंशद्वर्षसम्पत्पञ्चदशभिरेव वर्षैः सिध्यति · एवं[1] श्रुति-र्दाक्षायणयज्ञस्य दर्शसन्द्रूपतां गमयति । यदुक्तम् नामान्तरत्वात्कर्मान्तरत्वमिति (२) तद्गुणसंयोगादेकस्यापि नामान्तरत्वं भवति यथा क्षत्रियो राजेति धर्मभेदादे-कस्यैव नामान्तरम् तथा अत्रापि पयस्यादिगुणान्तरयोगान्नामान्तरत्वान्न कर्मान्तर-साधकम् · गुणा एव फलसाधनत्वेन विधीयन्ते न तु यागाः अतो गुणफलं न कर्मणो भिन्नत्वं सम्पादयति · यथा चाग्निहोत्रऽएव दधिलक्षणगुणान्यत्वेऽपि न कर्मान्तरता तथात्रापि गुणमात्रविकृतौ दर्शपूर्णमासयागावेवैताविति सि-द्धम् । चिन्तायाः प्रयोजनम् दाक्षायणयज्ञानुष्ठानपक्षे दर्शसयोरननुष्ठानम् · अ-ञ्जसा ह वाऽअस्य दर्शसाभ्यामिष्टं भवतीति (२.४.४.१७) श्रुतिरप्यमुमेवार्थं प्रकाश-यति । अथ दर्शसतः कालक्रमभेदेन हवींष्युपदिशति ·

अग्नीषोमीयः पौर्णमास्याम् ॥४॥ मुख्यायां पौर्णमास्यामुद्धरणादिकर्माप-वर्गान्तोऽग्नीषोमीयः एकादशकपालः पुरोडाशो भवति · अथ यत्पूर्वेद्युरग्नीषोमी-येण यजते पौर्णमास्यामिति (२.४.४.७) केवलस्य विधानादाग्नेयोपांशुयाजयो-र्निवृत्तिः ।

ऐन्द्राग्नोऽमावास्यायाम् ॥५॥ मुख्यायाममावास्यायाम् । अत्राप्येकस्यैव विधानादाग्नेयोपांशुयाजयोर्निवृत्तिः · स वै द्वे पौर्णमास्यौ यजते द्वेऽअमावास्ये ऽइति (२.४.४.६) द्वयोर्मुख्यामुख्ययोर्यागं विधायाथ यत्पूर्वेद्युरिति (७) विधानादत्र पौर्णमास्यमावास्याशब्दौ मुख्यार्थौ ।

सांनाय्यवत्प्रातः ॥६॥ प्रातः पौर्णमासीप्रतिपदि सांनाय्यवत्कर्म भवति · तथा च तत्राग्नेयः पुरोडाशः दधिपयसी च हविषी इन्द्रश्च देवता एवमपि भव-तीत्यर्थः · ऐन्द्रमिति (२.४.४.६) श्रुतेः पाक्षिकस्य महेन्द्रस्य निवृत्तिः । अत्राग्नेयः स्वस्थाने स्थित एव उपांशुयाजस्थाने विदं सांनाय्यममावास्यायामपकृष्य वि-हितम् अग्नीषोमीयपुरोडाशस्तु पूर्वेद्युरपकृष्ट इत्येषोऽत्र गुणविकारः । ऐन्द्रं

1) ? सिद्ध्यतिवदतां २. 2) यत्तु नामान्तरत्वादीनि भवत्येकस्यापि नामान्तरम् हस्तः करः पाणिरिति · धर्मान्तरत्वाच्च नामान्यत्वम् ब्राह्मणपरिव्राजकवत् · फलं गुणाश्रयम् गुणा-न्यत्वेऽपि च न गुणिनोऽन्यता न हि देवदत्तस्योत्साहादिनान्यत्वं भवति · तस्मात्तदेवेदं कर्म गुणविकृतमिति · प्रयोजनम् दर्शसयोरक्रिया Karka.

सांनाय्यमित्यत्र (२.४.४.८) तु दध्येव केवलं भवति न पय इति केचित् पयस्त्वमावास्यायामेव मैत्रावरुणी भविष्यतीति · तथा च शाखान्तरे ऐन्द्रं दध्युत्तरस्यामिति श्रूयते · इतरथा त्वपूर्व एव मैत्रावरुणीयागः स्यात् न दार्शपौर्णमासिकस्य गुणविकारस्तस्मात्पौर्णमास्यां दध्येवैकं भवति न पय इत्याहुः · एवं चैकवचनमुपपद्यते इतरथा दधिपयसोर्द्वित्वाद्द्विवचनं स्यात् · सांनाय्यशब्दश्च संनीयते गोभिरिति सांनाय्यमिति यौगिकत्वात्प्रत्येकमेव वर्ततऽइति · न तु तद्युक्तमिव · शतपथे अग्नीषोमीय एव पौर्णमासऽ हविः सांनाय्यमामावास्यम् (१.६.२.६) ऐन्द्रं वा सांनाय्यमित्यादौ (११.२.६.५) समस्तयोरेव दधिपयसोरेकवचनान्तस्य सांनाय्यशब्दस्य दर्शनात् । तस्मात्पौर्णमास्यां प्रतिपदि आग्नेयः पुरोडाशो दधिपयसीऽइति त्रीणि हवींषि भवन्ति अमावास्यायां तु आग्नेयो मैत्रावरुणी पयस्या इति द्वेऽएव हविषी उपांशुयाजस्त्वेकत्रापि न भवति विधानाभावात् । अत्र मुख्यायां पौर्णमास्यामुद्धरणादिकर्मापवर्गान्तमग्नीषोमीयं सद्य एव प्रातः परिसमाप्य पुनरुद्धृत्याग्न्यन्वाधानव्रत्याशनशाखाछेददध्यर्थवत्सापाकरणोपवेषकरणपवित्रबन्धनानि यथाकालं कृत्वा सायंहोमानन्तरं दोहयित्वा निधानान्तं कृत्वा प्रातर्दोहार्थं वत्सापाकरणं शाखोपगूहनं च कुर्यात् ।

अमावास्यायां पयस्या मैत्रावरुणी ॥७॥ अमावास्यायां प्रातः प्रतिपदि मै॰ प॰ भवति · अत्राप्याग्नेयः स्वस्थाने स्थित एव पयस्या त्वपूर्वा उपांशुयाजस्थाने विधीयते ऐन्द्राग्नश्च पूर्वैर्युरपकृष्ट इति गुणविकारोऽत्र । अत्र मुख्यायाममावास्यायां प्रातःकाले सद्य एवोद्धरणादि कर्मापवर्गान्तमैन्द्राग्नयागं कृत्वा तदानीमेव पुनरुद्धृत्याग्न्यन्वाधानपिण्डपितृयज्ञव्रत्याशनशाखाछेदनसंनमनोपवेषकरणपवित्रबन्धनानि यथाकालं कृत्वा सायंहोमानन्तरं मैत्रावरुणपयस्यार्थं वत्सापाकरणं कुर्यात् अत्र मित्रावरुणाभ्यां भागमिति गोरूपस्पर्शने (४.२.१) विशेषः शाखोद्गूहनं च । प्रातर्विशेषमाह ·

तत्रैव दोहनऽ शृते वा दध्यानयति ॥८॥ तत्रैव तस्मिन्लौकिकदधन्येवाज्यनिर्वापानन्तरं पयस्यार्थं दोहनं कर्तव्यम् प्रथममुखायां लौकिकं घनीभूतं दध्यासिच्येत्यर्थः · अथवा पयसि शृते तप्ते सति पश्चाद्दध्यानयति न प्रथमम् ।

केचिदेवं व्याचक्षते · तत्रैव दोहनम् अमावास्यायां प्रातः प्रतिपदि मैत्राव-रुणी पयस्या भवति सांनाय्यवत्प्रातरिति (६) सायंदोहे प्रातर्दोहे च प्राप्ते सा-यंदोहनिवृत्त्यर्थमाह तत्रैव दोहनम् तत्रैवेति प्रातरेव न सायमिति · तथा शृते वा दध्यानयतीति वाशब्दादशृते वा पयसि लौकिकं दध्यानयति · एतदपि समीचीनं व्याख्यानम् । अपरे चैवं व्याचक्षते · सांनाय्यवत्प्रातरिति (६) उभयत्र दधिपयसी स्त एव तत्रैव दोहनं दोहनप्राप्तिरिति पयस्यायाः पयो-विकारवान्निरूप्याज्यं प्रातर्दोहनं कार्यम् अथवा शृते प्रातर्दोहे सायंदोहद्दधि आनयति एवं दधिपयोभ्यां पयस्या उत्पाद्यतऽइति · पूर्वेद्युर्दध्यपि मित्रावरु-णाभ्यां निष्पादनीयमस्मिन्पक्षे · शाखान्तरे च पयस्योत्पत्तावस्यैव प्रकारस्य दर्श-नादिदमपि न निर्मूलम् · तथा चापस्तम्बः तप्ते प्रातर्दोहे सायंदोहमानयती-ति · मानवे च · सर्वत्र पयस्योत्पादनस्यायमेव प्रकारः · तथा च न सम्प्रदायो व्यवस्थित इति स्वश्रुतौ पयस्यानिष्पादनप्रकारस्यानुपदेशात् शाखान्तरश्रु-तिनिर्णयः ।

वाजिनं निषिच्योत्करे करोति ॥ ९ ॥[1] तप्ते पयसि दधिनिनयने कृते दधिपयसोः सारभूतं यत्कठिनं सम्पद्यते सा पयस्या यच्च उदकं पृथग्भवति त-द्वाजिनम् · पयस्योद्वासनकाले तद्वाजिनं निषिच्य पात्रान्तरेऽवस्थाप्य तत्रस्थमु-त्करे करोति सर्वहविषामासादनानन्तरमुत्करे आसादयति · उत्करे वाजिन-मासादयतीति शाखान्तरे श्रूयते सूत्रकारस्तु आसादयतीत्यस्य स्थाने प्रायेण करोतेः प्रयोगं करोति ।

अनाज्यलिप्तं वा ॥ १० ॥ तत्रस्थाभिघारस्यायं विकल्पः · पयस्यायास्त-प्ताज्याभिघारे[2] कृते अकृते वा वाजिनं निषिञ्चेत् · यदा चाकृते तदा अनाज्य-लिप्तं निषिक्तं भवति तदा च वाजिननिषेकानन्तरं पयस्यावाजिनयोः पृथक्त-प्ताभिघारणम् · प्राणदानं चोभयपक्षेऽपि । अथवा अनाज्यलिप्तम् वाजिनस्याज्य-

---

[1]) प्राणदानं कुर्वोत्करे सादयति पयस्यासादनान्ते · वाजिनयागसम्बन्धायागधर्माः प्र-वर्तन्ते तेन वेद्यामासादने प्राप्ते उत्करे विधीयते · उत्करे विहितवान्नात्र वेदिधर्माः प्रव-र्तन्ते Mahâd. [2]) °स्तप्ताभि°२. °स्तप्तास्थाभि°२.

लेपो न कार्यः अस्मिन्पक्षे वाजिनस्य तप्ताभिघारप्राणदानोपस्ताराभिघारणानामभावः। वाजिनयागस्य कालमाह ·

प्रहृत्य तृणं तेन चरति ॥११॥[1] तृणं प्रहृत्य प्रस्तरहोमानन्तरं प्रस्तरमध्यादृहीततृणस्यानुप्रहरणं कृत्वात्मानमालभ्यापः स्पृष्ट्वा वाजिनेन चरति यागमनुतिष्ठति। कालान्तरमाह ·

विमुच्य वा स्रुचौ ॥१२॥ अथवा घृताचीऽइति[2] (२.१३) मन्त्रेण स्रुचोर्धुरि स्फ्ये वा निधानानन्तरं (३.६.१३) वाजिनेन चरति।

बर्हिरवसिञ्चन्गृह्णाति ॥१३॥ द्रववात्स्रुवेण ग्रहणे प्राप्ते बर्हिरवसिञ्चन्नित्युपदेशादेव प्रतीत्य श्रवणाच्च स्थालीमुखेनैव स्रुक्क्षां निनयति बर्हिषि स्कन्दनं कुर्वन् · न हि स्रुवेण सकृद्रहणे क्रियमाणे बर्हिरवसेचनवाजिनयागदिग्व्याघारणभक्षणपर्याप्तं वाजिनं सम्भवति। अत्र वाजिनस्याज्यनिषेधपक्षे नोपस्ताराभिघारौ शृताभिघारमात्रनिषेधपक्षे तु भवत एव। कस्मादेवमन्याय्यं हविष स्कन्दनमुच्यतऽइत्यत आह ·

तद्वृषभेषु रेतो दधातीति श्रुतेः ॥१४॥ शाखान्तरे यद्बर्हिरवसिञ्चन्गृह्णाति तद्वृषभेषु रेतो दधातीति · तेन श्रुतिबलादेवमन्याय्यमपि युक्तमेव नास्ति वचनस्यातिभार इति।

वाजिभ्योऽनुवाचयति ॥१५॥ ग्रहणानन्तरं वाजिभ्योऽनुब्रूहीत्यनुवाचयति होतारम् तदनन्तरमेवोपदेशात् न पूर्वम्।

प्रतिवषट्कारं हुत्वा वाजिनशेषेण दिशो व्याघारयति दिश इति (६.१३) प्रतिमन्त्रं प्रदक्षिणं पुरस्तात्प्रथमम् ॥१६॥ होतुर्हि तत्र द्वौ वषट्कारौ स्त वषट्कारोऽनुवषट्कारश्च प्रतिवषट्कारम् द्वयोरपि वषट्कारयोः हुत्वा यजतिस्थानाज्जुहोतिस्थानमागत्य स्रुक्स्थेन वाजिनशेषेण दिशः प्रदिश इत्यादिभिर्मन्त्रैः प्रतिमन्त्रं प्रतिदिशं सर्वासु दिक्षु आहवनीयस्याग्नेः प्रदक्षिणं दिशो व्याघारयति दिशः कर्मभूता अभिलक्षीकृत्य वाजिनशेषं क्षारयति · एवं चतुर्भिर्मन्त्रैश्चतसृषु दिक्षु व्याघारणे सिद्धे आह ·

---

1) अनुप्रहृत्येत्युक्ते Mahâd. See ३.६.१५. 2) ? घृताच्यसीति२·

उत्तमाभ्यां मध्ये पूर्वार्धे च ॥१७॥ दिश इत्यादीनां षणां मन्त्राणां मध्ये उत्तमाभ्याम् उद्दिशः दिग्भ्य इत्याभ्यां मन्त्राभ्यां यथाक्रममग्निमध्ये अग्नेः पूर्वभागे च व्याघारयति · वषट्कारानुवषट्कारयोर्होमस्तु आहवनीयस्य पूर्वभागएव कार्यः। अत्रैव विशेषमाह ·

स्वाहाकारः सर्वत्र साकाङ्क्षत्वात् ॥१८॥ सर्वत्र दिशः प्रदिश इत्यादिषु स्वाहाकारोऽप्यनुषञ्जनीयः · दिग्भ्यः स्वाहेत्यत्रैव पठितत्वादत्रैव प्राप्नोति नान्यत्रेत्यत उच्यते सर्वत्रेति · क्रियापदाभावे निराकाङ्क्षीकरणाय। ननु तर्हि स्वाहाकारयोगे दिग्भ्य इत्यादौ चतुर्थ्या भवितव्यम् नैवम् मन्त्रत्वात् · मन्त्रा ह्येते मन्त्राश्च यथाश्रुता एव प्रयुज्यन्ते सुपां सुपो[1] भवन्तीति (पा° ७.१.३९ वा°१.) प्रथमैव तत्र चतुर्थ्यर्थे भविष्यति[2]।

शेषमुपह्वयस्वेत्यामन्त्र्यामन्त्र्य भक्षणामुपहूत इति प्रसूतः ॥१९॥ शेषं स्रुक्स्थितं[3] हस्ते भक्षणार्थं गृहीत्वामुकोपह्वयस्व भक्षणार्थमनुजानीहीत्येवं होत्रादीन्सर्वानामन्त्र्यामन्त्र्य पृष्ट्वा-पृष्ट्वा उपहूत इति तेन पृष्टेन प्रसूतः अनुज्ञातः सन् तस्य शेषस्य भक्षणं करोति · शेषमित्यस्य द्वितीयान्तस्य भक्षणमित्यनेनान्वयाद्भक्षणार्थं हस्ते गृहीत्वेत्यध्याहृत्य योज्यम्। व्यावहारिकैर्नामभिर्होत्रादीनामामन्त्रणे प्राप्तआह ·

युक्तनामभिर्वा ॥२०॥ वावधारणे · युक्तनामानि च होत्रादीनि तैर्होत्रध्वर्य्वादिनामभिरेवामन्त्रणं[4] कर्तव्यम् न व्यावहारिकैर्यज्ञदत्त इत्यादिभिः[5] · तेन होतरध्वर्यउप ह्वयस्वेत्येवम्। प्रसङ्गात्सोमभक्षणेऽपीमं विधिमुपदिशति ·

सोमे च ॥२१॥ अग्निष्टोमादौ ग्रहचमसादिस्थस्य हुतशेषस्य सोमस्यैवमेव होतरुपह्वयस्वेति भागिन[6] आमन्त्र्योपहूत इति तैरनुज्ञातो[7] भक्षणं

---

[1] उपांशवोर॰ उपांशुयोर॰. [2] सुपां सुपो भवन्तीति यथाश्रुतमन्त्रेण प्रयोगो न चतुर्थ्यन्तेन यथा दिशः स्वाहेत्यादि · यदात्र स्वाहाकारो नोक्तः स्यात् तदा दिशः व्याघारयामीति स्यात् Mahâd. [3] स्रुचि शेषासम्भवात्स्थालीशेषं वाजिनं ग्राह्यम् · असम्भवात्कुतः वजिनशेषेण दिशो व्याघारयतीति (१५) Mahâd. [4] ? तैर्होता अध्वर्वादि॰र तैर्होता अध्वर्यवादि॰र. [5] न पितृकृतैर्नामभिः Mahâd. [6] ? भागिनार॰ [7] अध्वर्युसमनन्तरं प्रतिप्रस्थातुरुपह्वानं भक्षश्च होतृसमनन्तरं मैत्रावरुणस्य होतृविकारात् Mahâd.

कुर्यात् नानुपहूतः सोमः पातव्य इति वचनात् । अविशेषाद्धोमाभिषवत्रषट्कारसमाख्यादिनिमित्तेनानेकसाधारणेषु सोमेषु असाधारणेषु च सोपहवे भक्षणे प्राप्त आह ·

साधारणेषु वा सामर्थ्यात् ॥२२॥ वावधारणे साधारणेष्वेव हुतशेषसोमेषु सोपहवं भक्षणम् नासाधारणेषु नाराशंसचमसादिषु ·। कुतः सामर्थ्यात् साधारणेषु च सोमेषु अनुज्ञाप्रार्थनं समर्थं युक्तं भवति · अधिकपाने दोषाशङ्कायां हि भागिभ्यः अनुज्ञा प्रार्थ्यते अनुज्ञातस्याधिकपानेऽपि दोषो न भवतीति । अथ वाजिनभक्षणे मन्त्रानाह ·

ऋतूनां त्वा वाजिनां वाजिनं भक्षयामीति ॥२३॥ अनेन मन्त्रेण वाजिनशेषभक्षणं सर्वे कुर्वन्ति ।

वाज्यहं वाजिनस्योपहूतस्योपहूतो भक्षयामीति वा ॥२४॥

वाजे वाजी भूयासमिति वा ॥२५॥[1] अथ भक्षणक्रमं भक्षयितॄंश्चाह ·

होत्रध्वर्युब्रह्माग्नीध्रयजमानाः ॥२६॥

प्रथमो वोभयतस्तु यजमानः ॥२७॥[2] उभयत इति प्रथम उत्तमश्च · ततश्चोपहवप्रार्थने प्रथमं पश्चाच्च यजमानः सर्वैः प्रष्टव्यः ।

दाक्षायणं वा दक्षिणा ॥२८॥ दाक्षायणं सुवर्णमुच्यते · तेनात्र हिरण्यं दक्षिणा तच्च शतमानं रक्तिकाशतपरिमितम् हिरण्यपरिमाणेऽन्यत्रापीत्यश्वमेधे सूत्रणात् (२०.१.२५) · अन्वाहार्यो वेति विकल्पः ।

संवत्सरं वा यजेत ॥२९॥ यावज्जीवं वा पञ्चदश वर्षाणि वा यजेतेति प्रोक्तम् अधुना पक्षान्तरमभिधीयते · संवत्सरमिति कालाध्वनोरत्यन्तसंयोग इति (पा॰ २.३.५) द्वितीया साकल्येन संयोगश्चात्यन्तसंयोग इत्युच्यते तेन सकलं संवत्सरं दाक्षायणयज्ञेन व्याप्नुयात् · अत्र संवत्सरः सावनः परिगृह्यते[3] न चान्द्रादिः · यतोऽत्रापि पक्षे सैव सम्पत्कर्तव्या पञ्चदशभिर्वर्षैर्यावत्य इष्टयो भवन्ति तावत्य एव संवत्सरयागपक्षेऽपि सम्पादनीयाः तावत्यश्च सावन ए-

---

[1] ऋतूनां त्वेति मन्त्रान्ते वाज्यहमिति स्थाने वाजे वाजी भूयासमिति वा मन्त्रो भवति Mahâd. [2] उभयतस्त्विति प्राथम्यपक्षे उत्तमोऽपि भक्षयेत् अथोऽअप्युत्तम इति वचनात् (२.४.४.२५) Karka. [3] त्रिंशद्दिनं सावनमाहुः (viz. मासं) marg. in २.

व संवत्सरे सम्पद्यन्ते नान्यस्मिन्निति। तत्रैवम्[1] प्रथमपौर्णमास्यां श्राद्धान्वारम्भणीयापूर्वकोऽग्नीषोमीययागः पुनरुद्धृत्य सांनाय्यवदुपक्रमः · प्रतिपद्याग्नेयेन पुरोडाशेनैन्द्रेण दध्ना पयसा च यागः पत्ने वैमृधः मांसमैथुनवर्जनसंकल्पः पुनरुद्धृत्य तस्मिन्प्रतिपद्दिनऽएवैन्द्राग्नयागः पुनरुद्धृत्य मैत्रावरुण्याः पयस्याया उपक्रमः · प्रातर्द्वितीयायामाग्नेयेन मैत्रावरुण्या च यागो यथोक्तः पत्ने आदित्यश्चरुः तदानीमेव पुनरुद्धृत्याग्नीषोमीययागः ततः पुनरुद्धरणादिदधियागप्रक्रमः · प्रातस्तृतीयायामाग्नेयसांनाय्ययागः पत्ने वैमृधः तदानीमेवोद्धृतैन्द्राग्नयागः पुनरुद्धृत्य मैत्रावरुण्या उपक्रमः तदनन्तरमादित्यो वा इत्येवम्प्रकारेण संवत्सरं यावत्प्रत्यहं कर्तव्यम्।

माऽसस्त्र्यनृतमूत्रकृतवासाऽसि वर्जयेत् ॥ ३० ॥[2] मांसं न भक्षेत् स्त्रियं न गच्छेत् · अनृतं न वदेत् · मूत्रकृतं रजकधौतं वासश्च न परिदधीत · मूत्रकृतमिति कारुधौतम् तत्कृतवस्य परिहार्यत्वात्[3] तदधीनत्वादेव करणस्य। एतानि पौर्णमास्यमावास्ययोरन्तराले वर्जयेत् ॥ ॥ चतुर्थी कण्डिका ॥४॥ ॥

अथ पद्धतिः ॥

अथ दाक्षायणयज्ञ उच्यते · स च प्रजाकामपशुकामान्नाद्यकामयशस्कामानां भवति अत्र पर्यायेण सर्वफलसिद्धिर्न सह · दर्शपूर्णमासयाग एवायं गुणविकृतो न कर्मान्तरम्। तत्र प्रथमायां पौर्णमास्यां पूर्वाह्णे मातृपूजापूर्वकमाभ्युदयिकं श्राद्धमन्वारम्भणीयां च कृत्वा तदानीमेव पुनरुद्धृत्याग्नीषोमीयः पुरोडाशोऽग्न्यन्वाधानादिकर्मापवर्गान्तः पौर्णमासाग्नीषोमीयवद्भवति · हिरण्यं दक्षिणेति विशेषः तत्र प्रजापतेर्भागोऽसीति मन्त्रे (३.४.३०) ऊर्गसीत्यस्य स्थाने हिरण्यमसीति प्रयोगः अथवान्वाहार्य एव दक्षिणा · ततः पुनरुद्धरणम् अग्न्यन्वाधानम् मांसमैथुनवर्जनसंकल्पः वपनं वा अपराह्णे पत्नीयजमानयोर्व्रत्याशनम् शाखाछेदः ऊर्जे त्वेत्यनुमार्जनम् व्रतग्रहणमत्र वा वत्सापाकर-

[1] तत्र प्रतिदिनमिष्टी द्वे-द्वे कर्तव्ये Mahâd. [2] मूत्रकृतं रजकधौतं Ss. अहनि माऽसमैथुने वर्जयेदिति (२.१.८) तत्कर्मणि वर्तमाने द्रष्टव्यम् अहनीति वचनात् · एतत्पुनरा दर्शप्रयोगादन्तरालधर्मो (र्मे Cod.) वचनसामर्थ्यादिति Karka. [3] ? °त्वस्यत्वनिर्मितस्यापरि°२.

णम् इन्द्राय भागमिति देवतानियमः ऐन्द्रं सांनाय्यमिति श्रुतेः न पाक्षिको महेन्द्रः उद्धरणम् शाखापरिवासनम् मूलादुपवेषकरणम् पवित्रबन्धनम् · रात्रौ स्वयमेव यवाग्वाग्निहोत्रहोमः हुते उपसृष्टादि निधाय वत्सापाकरणं पूर्ववदित्यन्तम् आरण्याशनं वा अन्यतरागारशयनम् · प्रातर्यवाग्वा स्वयं होमः उदिते ब्रह्मवरणादि दाक्षायणयज्ञेनाहं यक्ष्यऽइति वा ससांनाय्यामावास्येष्टिवत्सर्वं भवति उपांशुयाजाभावः आग्नेयः पुरोडाशः ऐन्द्रं दधि ऐन्द्रं पय इति हविस्त्रयम् अन्वाहार्यो हिरण्यं वा दक्षिणा उत्तमे प्रयाजे इदमग्नये सोमायाग्नयऽइन्द्राय देवेभ्य आज्यपेभ्य इति प्रस्तरहोमे च व्यूहने अग्निरिन्द्रस्योज्जितिम् अग्निरिन्द्रस्तमपनुदतामिति सह शाखया प्रस्तरानुप्रहरणम् परिधिभिः सहोपवेषहोमः पक्षे वैमृधेष्टिरन्वाहार्यदक्षिणा : अमावास्यापर्यन्तं मांसस्त्र्यनृतक्षारधौतवाससां च वर्जनम् । अमावास्यायां पूर्वाह्णे ऐन्द्राग्नो द्वादशकपाल उद्धरणादिकर्मापवर्गान्तोऽमावास्येष्ट्यन्तर्गतेन्द्राग्नवत् दर्शेष्ट्यर्थं दर्शेष्ट्याहं यक्ष्यऽइत्येवं प्रयोगः अन्वाहार्यो दक्षिणा हिरण्यं वा · कर्मापवर्गान्ते पुनरुद्धरणम् अग्न्यन्वाधानम् मांसमैथुन[वर्जन]संकल्पः वपनं वा अपराह्णे पिण्डपितृयज्ञः दर्शश्राद्धम् व्रत्याशनम् शाखाच्छेदः संनमनम् व्रतग्रहणं वा शाखापरिवासनम् उपवेषनिष्पत्तिः पवित्रबन्धनम् · रात्रौ स्वयमग्निहोत्रहोमः हुते पयस्यार्थं षड्वत्सापाकारणम्[1] तत्र मित्रावरुणाभ्यां भागमिति विशेषः उद्धरणम् आरण्याशनं वा अन्यतरागारे शयनम् · प्रातः स्वयंहोमः अनुदिते ब्रह्मवरणादि दर्शेष्ट्याहं यक्ष्यऽइति पात्रासादनादि दर्शेष्टिवत्सर्वम् शृतावदानानन्तरं वाजिनभाण्डम् दक्षिणाहिरण्यं वा पयस्यार्थं दधि चेति · तत्रस्थाभिघारमदत्त्वा वा वाजिनस्यावस्रावणम् तत्रस्थाभिघारः यथाक्रममुद्वासनम् वाजिनस्य च यथाक्रमं प्राणदानम् अग्निं गच्छेति पुरोडाशे मित्रावरुणौ गच्छेति पयस्यायां वाजिनो गच्छेति वाजिने पुरोडाशपयस्ययोर्वेद्यामासादनम् उत्करे वाजिनस्यासादनम् सर्वाण्यालभ्यान्ते वाजिनस्यालम्भः उत्तमप्रयाजे इदमग्नये सोमायाग्नये मित्रावरुणाभ्यां देवेभ्य आज्यपेभ्यो वाजिभ्यश्च इति विशेषः · आग्नेयया-

१) ? षड्वर्गास्यापा॰१॰

गानन्तरं मित्रावरुणाभ्यामनुब्रूहीत्युक्त्वा जुह्वामुपस्तीर्य शृतावदानेन पयस्याया मध्यात्पूर्वार्धाच्च पयोविकारत्वात्स्रुवेण वा द्विरवदायोपरिष्टादभिघार्यावदाने प्रत्यभिघार्येत्यायातिक्रम्याश्राव्य मित्रावरुणौ यजेत्युक्त्वा वषट्कृते जुहोति इदं मित्रावरुणाभ्यामिति त्यागः · उपांशुयाजाभावः · ततः स्विष्टकृदादि · पयस्यायाः प्राशित्रेडयोरेवावदेयम् नान्यत्र · अन्वाहार्यो हिरण्यं वा दक्षिणा · व्यूहने अग्निर्मित्रावरुणयोरुज्जितिम् अग्निर्मित्रावरुणौ तमपनुदन्त्विति · प्रस्तरहोमे इदमग्नये सोमायाग्नये मित्रावरुणाभ्यां देवेभ्य आज्यपेभ्योऽग्नये होत्राय वाजिभ्य इति विशेषः । तृणं प्रास्यात्मानमालभ्याप उपस्पृश्य वाजिनयागः स्रुग्विमोकानन्तरं वा · तत्र बर्हिषि वाजिनमवसिञ्चन् स्थाल्यैव जुह्वां निनयति · ग्रहणानन्तरं वाजिभ्योऽनुब्रूहीत्यनुवाचनम् · उत्थायातिक्रम्याश्राव्य वाजिनो यजेत्युक्त्वा वषट्कृते अग्नेः पूर्वभागे जुहोति इदं वाजिभ्य इति त्यागः · अनुवषट्कृते पुनः पूर्वभागऽएव जुहोति स वै प्रागेव जुहोतीति (२.४.४.२३) श्रुतेः · ततोऽप उपस्पृश्याग्निरुत्तरत उपविश्य जुहूस्थेन वाजिनशेषेण दिशः स्वाहेति प्रतिमन्त्रं दिशो व्याघारयति दिशः स्वाहेत्यग्नेः पूर्वभागे इदं दिग्भ्यः प्रदिशः स्वाहेति दक्षिणात इदं प्रदिग्भ्यः आदिशः स्वाहेति पश्चात् इदमादिग्भ्यः विदिशः स्वाहेत्युत्तरतः इदं विदिग्भ्यः उद्दिशः स्वाहेति मध्ये इदमुद्दिग्भ्यः दिग्भ्यः स्वाहेति पूर्वार्धे इदं दिग्भ्यः · ततः स्रुक्स्थं वाजिनशेषमुपहवपूर्वकं होत्रध्वर्युब्रह्माग्नीध्रयजमानाः क्रमेण भक्षयन्ति तद्यथा होता वाजिनं हस्ते गृहीत्वा अध्वर्य उपह्वयस्व ब्रह्मनुपह्वयस्वाग्नीदुपह्वयस्व यजमानोपह्वयस्वेति पृष्ट्वा भक्षयति ततोऽध्वर्युर्वाजिनं भक्षार्थं हस्ते कृत्वा होतरुपह्वयस्व ब्रह्मनुपह्वयस्व अग्नीदुपह्वयस्व यजमानोपह्वयस्वेति पृष्ट्वा भक्षयति भक्षणे विकल्पेन त्रयो मन्त्राः ऋतूनां त्वेति वा वाज्यहं वाजिनस्येति वा वाजे वाजीति वा एवं ब्रह्मा होत्रध्वर्य्वग्नीध्रयजमानान्पृष्ट्वा तेनैव मन्त्रेण भक्षयति ततोऽग्नीद्धोतारमध्वर्युं ब्रह्माणं यजमानं च पृष्ट्वा भक्षयति ततो यजमानो होतारमध्वर्युं ब्रह्माणमग्नीधं च पृष्ट्वैवमेव भक्षयति एवं पञ्च भक्षयन्ति · अथवा सर्वेभ्यः पूर्वं पश्चाच्चोभयतो यजमानो भक्षयति तदा चोपहवेऽपि पूर्वं पश्चाच्चोभयतो यजमानोपह्वयस्वेति यज-

मानः प्रष्टव्यः · परिधिभिः सह्वोपवेषह्वोमः ततः पुनरुद्धृत्यादित्येष्टिर्वा । दा-
क्षायणयज्ञेन पञ्चदश वर्षाण्येव यजेत अथवा संवत्सरमेवान्वहं दाक्षायणय-
ज्ञेन यजेत न तत ऊर्ध्वम् · तत्र यस्यां पौर्णमास्यामारम्भः क्रियते तस्यां पूर्वा-
ह्णेऽग्नीषोमीयः पुरोडाश उद्धरणादिब्राह्मणतर्पणान्तः[१] ततस्तस्मिन्नेव दिने
पुनरुद्धरणादि सायंदोहातञ्चनान्तं कृत्वा प्रातर्दोहार्थं वत्सापाकरणं कुर्यात् · प्र-
तिपदि प्रातर्ब्रह्मवरणादि आग्नेयपुरोडाशेनैन्द्रेण सांनाय्येन दध्ना पयसा च या-
गो ब्राह्मणतर्पणान्तः पक्षे वैमृधेष्टिश्च ततस्तस्मिन्नेव दिने पुनरुद्धृत्य कर्मा-
पवर्गान्त ऐन्द्राग्नः कर्तव्यः ततस्तस्मिन्नेव दिने उत्तरेष्ट्युपक्रमः पयस्यार्थं वत्सा-
पाकरणान्तः · प्रातर्द्वितीयायां ब्रह्मवरणादि आग्नेयेन पुरोडाशेन मैत्रावरुण्या
पयस्यया च यागः कर्मापवर्गान्तः तत आदित्येष्टिर्वा· ततस्तस्मिन्नेव दिने
पुनरग्नीषोमीयः कर्मापवर्गान्तः पुनरुद्धरणाद्युत्तरेष्ट्युपक्रमश्च · एवं संवत्सरं
यावत्प्रतिदिनमिष्टिद्वयं भवति संवत्सरेण च पञ्चदशवर्षसंख्या सम्पद्यते · पञ्च-
दशभिर्वर्षैः सप्तशतानि विंशतिश्चेष्टयो भवन्ति संवत्सरे प्रतिदिनमिष्टिद्वयानु-
ष्ठाने चैतावत्य एवेष्टयो भवन्ति । अथवाग्निहोत्रहोमवद्यावज्जीवं दाक्षायण-
यज्ञेन यजेत ॥ ॥ ४ ॥

इति चतुर्थस्य चतुर्थी कण्डिका ॥ ॥

दर्शपूर्णमासप्रकरणऽ एव स एव उभयत्राच्युत आग्नेयोऽष्टाकपालः पुरोडाशो
भवतीत्युपक्रम्य (१.६.२.५) सैव[२] कामसंयोगं विदधाति यत्कामो ह वाऽएतेन
यज्ञेन यजते सोऽस्मै कामः समृध्यतऽइति (७) · इमनेव काम्यमाग्नेयं[३] प्रकृत्योपां-
शुत्वं विहितमस्ति स यदीष्टिं कुर्वीत सप्तदश सामिधेनीरनुब्रूयादुपांशु देवतां
यजति तद्धीष्टिरूपं मूर्धन्वत्यौ याज्यानुवाक्ये स्यातां वार्त्रघ्नावाज्यभागौ विराजौ
संयाज्येऽइति (१२) · अस्य चोपांशुत्वं सूत्रकारेणात्र वक्तव्यम् तत्प्रसङ्गेनान्यत्रापि
यस्य-यस्योपांशुत्वं भवति तस्य-तस्योच्यते ·

---

१) ? °णाद्याब्राह्म°१·   २) viz. श्रुतिः   ३) ? इदमेव काम्य आग्नेयं २·

उपांऽशु काम्यदेवता ॥ १ ॥ काम्यस्य कर्मणो देवता · यज्ञाथर्वणं[१] वै काम्या इष्टयस्तस्मात्ता उपांशु कार्या इति शाखान्तरात् ।

आग्रयणो वैश्वदेवः ॥ २ ॥[२] एककपालाश्चावारुणाः ॥ ३ ॥[३]

प्राजापत्यः ॥ ४ ॥[४] सावित्रश्चातुर्मास्येषु ॥ ५ ॥[५]

वैश्वदेवी ॥ ६ ॥ चातुर्मास्येषु वैश्वदेवपर्वणि वैश्वदेवी पयस्या ।

वायव्यम् ॥ ७ ॥ शुनासीरीये वायुदेवत्यं हविः ।

पयो [यवागूर्वा] ॥ ८ ॥[६] अत्रापि चातुर्मास्येष्वित्यनुवर्तते तेन प्राजापत्यं वायव्यमित्यादौ (१२.४.१.६) नोपांशुत्वम् । ननु वायव्यमिति नपुंसकनिर्देशात्पयःपक्षऽएव उपांशुत्वं भविष्यति न यवागूपक्षे नैवम् तेषां वै चतुर्णां द्वयोस्त्रीणि-त्रीणि हवींऽष्यनिरुक्तानि भवन्ति द्वे-द्वे द्वयोरिति (११.५.२.७) हविःसम्बन्धेनैवोपांशुत्वविधानात् · तेन वायव्यं हविरित्येव व्याख्येयम् · अतो यवागूपक्षेऽप्युपांशुत्वं भवत्येव · एवं वैश्वदेवे त्रीणि हवींष्युपांशु भवन्ति सावित्रो वैश्वदेवो द्यावापृथिवीयश्चेति वरुणप्रघासेषु द्वे सावित्रः कायश्च साकमेधेषु महाहविषी द्वे सावित्रो वैश्वकर्मणश्च शुनासीरीये त्रीणि सावित्रो वायव्यं सौर्यश्चेति[७] ।

तनूहवींऽषि ॥ ९ ॥ तानि च अग्नये पवमानाय प्रथमाग्नये पावकायाग्नये शुचये च द्वितीयादित्यै चरुस्तृतीयेत्येतानि (४.१०.१-१०) त्रीणि तनवो वा

---

१) sic!? आथर्वणा वै काम्यास्ता उपांशु कर्तव्या इति Müller in Zeitschrift der Deutschen Morg. Ges. IX, pag. I XV. २) चरुः Mahâd. ३) पुरोडाशाः Mahâd. ४) पशुः पुरोडाशश्चरुश्च Mahâd. ५) सावित्रः पुरोडाशः सर्वेषु चाऽषु Mahâd. ६) Thus २.–Mahâdeva reads वायव्यं पयः as one sûtra and omits the यवागूर्वा wholly: this latter is done also in १ and by Karka, who moreover omits even the पयः, which word may indeed have been originally merely a gloss belonging to वायव्यं and afterwards added to the text. यवागूर्वा is no doubt a still more modern addition. ७) सावित्रः चातुर्मास्येषु · उपांशु । तत्रैव वैश्वदेवी · पयस्या । वायव्यम् · पयः नपुंसकलिङ्गोपदेशात् · यवाग्वां तर्हि न प्राप्नोति · प्राप्स्यति यागधर्मत्वात् न हि द्रव्यधर्मोऽयम् अपूर्वप्रयुक्तत्वात् · दर्शयति च पर्वाणि प्रकृत्य तेषां वै चतुर्णां ऽद्वे द्वयोरिति वैश्वदेवशुनासीरीययोस्त्रयाणामनिरुक्ततां दर्शयति · तस्माद्यवाग्वामप्युपांशुत्वम् Karka.

ऽएता अग्न्याधेयस्येति श्रुतेः। देवताया एव उपांशुत्वम् न सकला इष्टयः तथा च मानवे आग्न्याधेयिक्य इष्टयः सद्यस्कालाः सर्वा उपांशुदेवता इति।

दीक्षणीयाप्रायणीयातिथ्यादेवताः ॥ १० ॥ उपांशु चरन्ति प्रागग्नीषोमीयादित्यस्मिन्पक्षे (७.२.३०) दीक्षणीयादीनां सकलानामिष्टीनां सदेवताकानामुपांशुत्वं सिद्धमेव · यदा तु वागन्तेन वा दीक्षणीयां नीचैस्तरांनीचैस्तरामितरे ऽइति (३१) पक्षस्तदा दीक्षणीयादिदेवतानामुपांशुत्वविधानार्थमिदं सूत्रम्।

देवसूदेविकाहवींषि ॥ ११ ॥[1] वायव्योऽग्नौ ॥ १२ ॥[2]

मैत्रावरुणी च ॥ १३ ॥[3] ऐन्द्रः सौत्रामण्यां प्रथमः ॥ १४ ॥[4]

वायोधसश्च ॥ १५ ॥[5] ॥ ॥

आग्नेयं प्रतिकाममाहरेत ॥ १६ ॥ आग्नेयमष्टाकपालं पुरोडाशं प्रतिकामं कुर्यात् यत्किंचित्कामयन्ते तस्य सर्वस्य साधकोऽयमित्यर्थः[6]

वर्षार्थे प्रकृतौ वा ब्रूयाद्वृष्टिकामोऽस्मीति ॥ १७ ॥ आग्नेयं प्रतिकाममाहरेतेत्युक्तम् तेन वृष्टिकामस्याग्नेयः प्राप्नोति तत्र विशेष उच्यते · वृष्ट्यर्थे आग्नेये क्रियमाणे यजमानः उद्धरणकाले ऋत्विजः प्रति एवं ब्रूयात् वृष्टिकामो ऽस्मीति · अथवा प्रकृतौ प्राकृतदर्शपूर्णमासेष्टावेवैवं ब्रूयात्[7]। तेनैवं सिद्धम् वृष्टिकामः पृथगाग्नेयीमिष्टिं[8] कुर्यात् प्रकृतावेव वा वृष्टिकामोऽस्मीत्यादिकमधिकं कुर्यादित्याग्नेय्याः प्राकृत्येष्ट्या[9] (सह) विकल्पः।

अध्वर्युं ब्रूयात्पुरोवातं च विद्युतं च मनसा ध्यायेति ॥ १८ ॥ प्राक् प्रयाजेभ्योऽध्वर्युं प्रति यजमानो ब्रूयात्।

अभ्राण्यग्नीधम् ॥ १९ ॥ स्तनयित्नुं च वर्षं चेति होतारम् ॥ २० ॥

सर्वाण्येतानीति ब्रह्माणम् ॥ २१ ॥[10] ॥ ॥

---

१) राजसूये चयने च Mahâd. २) चमने वायव्य इष्टकापशुः Mahâd. ३) पयस्या चयने Mahâd. ४) पशुः Mahâd. ५) पशुः सौत्रामण्याम् Mahâd. ६) आग्नेयं प्रकृत्य श्रूयते सोऽस्मै कामः समृध्यते यस्मै कामायेष्टिं निर्वपतीति (see १.३.५.१० and ६.२.७) Karka. ७) वर्षार्थे आग्नेययागोद्धरणकाले वृष्टिकामोऽस्मीति ऋत्विजं (!) प्रति ब्रूयात् अथवा प्रकृते (प्रा°?) आग्नेययागे इष्टावेवायं प्रैषो भवति Ss. See १.५.२.१९. ८) ? प्रथमाग्ने°२. ९) ? प्रकृत्येष्ट्या२. १०) सर्वाण्येतानीति चार्थनिर्देशो न शब्दनिर्देशः न ह्येतानीत्येतावता नैरुत्सुक्यं भवत्यतः प्रतिपदमुच्चारणम् Karka.

अन्वारम्भणीयाग्नावैष्णव एकादशकपालः सरस्वत्यै चरुः सरस्वते द्वादशकपालो दर्शपूर्णमासारम्भे ॥ २२ ॥ दर्शपूर्णमासारम्भे प्रथमप्रयोगे अन्वारम्भणीया इष्टिर्भवति उद्धरणादिकर्मापवर्गान्ता । चरुशब्देनानवस्नावितोऽन्तरूष्मपक्व ईषद्दग्धव्रीहितण्डुलसिद्ध[1] ओदन उच्यते · स्थाली तु तत्सम्बन्धाल्लक्ष्यते सलेपं चरुमित्यादौ (७.५.१७) · चरुलक्षणं छन्दोगपरिशिष्टे (कर्मप्रदीप° २.५.१३) स्वशाखोक्तश्च सुस्विन्नो ह्यदग्धोऽकठिनः शुभः न चातिशिथिलः पाच्यो न चरुश्चारसस्तथेति · स्थालीलक्षणमपि तत्रैवोक्तम् (२.५.१२) तिर्यगूर्ध्वं समिन्मात्रा दृढानातिबृहन्मुखी मृन्मय्यौदुम्बरी वापि चरुस्थाली प्रशस्यते · तथा मेक्षणेन चरोरवदानं कार्यम् लक्षणमपि तत्रैवोक्तम् (२.५.१४) इध्मजातीयमिध्मार्धप्रमाणं मेक्षणं भवेत् वृत्तं चाङ्गुष्ठपृथ्वग्रमवदानक्रियाक्षममिति । इयं चाधानानन्तरं प्रथमपौर्णमास्यां मातृश्राद्धानंतरं पूर्वाह्णऽएव सद्यो भवति · द्वादशरात्राद्यग्निधारणमध्ये चेत्पौर्णमासी भवति तदा तेष्वेव धृतेष्वग्निषु अन्वारम्भणीया पौर्णमासेष्टिश्च कार्या अन्यथा पृथक्पृथगुद्धृत्य । आरम्भऽइत्युक्तत्वात्[2] प्रथमप्रयोगऽएवान्वारम्भणीया शाखान्तरात् · इयं च दर्शपूर्णमासविकारेषु सर्वेष्वपि प्रथमारम्भे भवति · तत्र नित्यानामारम्भे सकृत् काम्यानां चारम्भे पुनः कार्या सोमसौत्रामणीवर्जम् · तथा चोक्तम् नित्यानां सकृदारम्भे काम्यानां च पुनः-पुनः सोमसौत्रामणीवर्जमन्वारम्भः प्रशस्यतऽइति ।

पष्ठौही दक्षिणा मिथुनौ वा ॥ २३ ॥ अस्यामन्वारम्भणीयायाम् · पष्ठौही बालगर्भिणीत्यमरः (२.९.६९) बालैव या गर्भिणी सा पष्ठौही[3] । मिथुनौ मिथुनार्हौ गावौ स्त्रीपुरुषरूपौ · ननु मिथुनशब्दे[न] स्त्री[पु]युग्ममुच्यते द्विवचने[4] तु द्वे स्त्रीपुंयुग्मे कुतो न भवतः · उच्यते · मिथुनौ ते गावौ तिस्रस्तेऽन्या इत्यत्र (३.३.३४) निश्चितम्[5]

---

१) ? °वितरंतरोष्मपक्वविषदग्धव्रीहि°२. २) दर्शपूर्णमासारम्भऽइति श्रुतत्वात्प्रथमप्रयोगऽएव भवति · एवं हि श्रूयते दर्शंसावारप्स्यमाणोऽन्वारम्भणीयया यजेतेति · आरम्भस्य च विद्यमानत्वाद्धिकारेऽपि प्रवृत्तिः यथा आग्रयणेष्ट्यां चातुर्मास्येषु चारम्भस्य एकत्वात्सकृदेव भवति क्षामवत्यादिषु वारम्भभेदात्पुनः-पुनः प्रयोगः Karka. ३) पृष्ठेन (!) या वृषभं वोढुं समर्था सा पष्ठौही Mahâd. and Karka. ४) ? °वचनं२. ५) मिथु-

इन्द्राय विमृधऽएकादशकपालः पौर्णमासमनु ॥२४॥ पौर्णमासेष्टिसमाप्त्यनन्तरम् । उद्धरणादिकर्मापवर्गान्तः ।

आदिविकल्पः ॥२५॥ आदावारम्भऽएव विकल्पो यस्य सः · आरभ्यते न वेति यद्यारभ्यते तदा यावज्जीवं क्रियतऽएव । तथा चोक्तम् द्रूपं कालोऽनुनिर्वापो देवता अपणं तथा आदौ ये विधृताः पश्चात्तऽइमे सर्वदा स्मृता इति · द्रूपं दर्शपूर्णमासदाक्षायणादि काल उदितानुदितादिः अनुनिर्वापो वैमृध आदित्यश्च देवता इन्द्रो महेन्द्रो वा अपणं गार्हपत्यऽआहवनीये वेति [1] ।

आदित्यश्चरुरामावास्यम् ॥२६॥ अमावास्येष्टिसमाप्त्यनन्तरम् · उद्धरणादि कर्मापवर्गान्तः । अन्वाहार्यो दक्षिणा एव · अयमप्यादिविकल्प एव ॥ इन्द्राय विमृधऽइत्यादि दाक्षायणेऽपि ॥ ॥ पञ्चमी कण्डिका ॥५॥

अथ पद्धतिः ॥

अथ सर्वकर्मसूपांशु देवताः कथ्यन्ते · काम्यस्य कर्मणो देवता उपांशु भवति · अत्राहुः कर्काचार्याः व्यक्तत्वे चोदनैकत्वे तन्त्रैक्ये यत्र कामना तादर्थ्येनैव चोत्पत्तिस्तत्रैव स्यादुपांशुतेति [2] । आग्रयणे वैश्वदेव उपांशु भवति । वारुणवर्जिताः सर्वऽएककपाला उपांशु भवन्ति । प्राजापत्यः सर्वत्रोपांशु भवति । चातुर्मा-

---

नयोरयौ गावौ स्त्रीपुमांसौ न मिथुने · कुतः तद्यन्मेषश्च मेषी च भवत इत्युपक्रम्य (२.५.२.१५) मिथुनौ भवत इति श्रुतेः (१६) · तूपरौ मिथुनौ दद्यादिति (१.५.१.५७) श्रुतेश्च · पुंलिङ्गत्वाच्च Mahâd.

1) See schol. at १.८.३५. pag. १४१. 2) This çloka is only quoted by Karka, not his own: his scholion on the first sûtra runs thus: काम्ये कर्मणि देवतानामुपांशुत्वं भवति । देवताग्रहणं न कर्तव्यम् चरणशब्दे सर्वे देवतान्यत्रेत्युक्तत्वादुपांशुत्वस्य (३.७.८-१) एवं चेत् व्यक्तचोदनादेवतास्वेवोपांशुत्वम् नाव्यक्तासु सोमविकारेष्विति देवताग्रहणम् · सौत्रामण्यां तर्हि व्यक्तत्वादुपांशुत्वमस्तु नैतदेवम् तन्त्रभेदस्तु तत्र · एकतन्त्रे चोपांशुत्वमित्याचार्याभिप्रायो येनैन्द्रवायोधसयोरुपांशुत्वं (१४.१५) विदधातीष्टिषु च · एवं च राजसूयेऽप्यनुमत्यादिषु नैवोपांशुत्वम् तन्त्रभेदात् · प्रजाकामवैश्वदेवे तर्ह्यस्तु उपांशुत्वम् व्यक्तत्वादेकतन्त्रत्वाच्चोदनैकत्वात्काम्यत्वाच्च · तथा पञ्चबिले नैतदेवम् न हि तत्र काम्यतयैवोत्पत्तिः · तेन यत्र व्यक्तत्वं चोदनैकत्वं चैकतन्त्र्यं च कामार्थे चोत्पत्तिस्तत्रैवोपांशुत्वम् यथा मित्रविन्दायाम् । आह च व्यक्तत्वेऽपांशुता ।

स्येषु चतुर्ष्वपि पर्वसु सावित्र उपांशु भवति · चातुर्मास्येष्वेव वैश्वदेवपर्वणि वैश्वदेवी पयस्योपांशु भवति वैश्वदेवीति स्त्रीलिङ्गनिर्देशात्पाशुकेषु वैश्वदेवः पशुः पुरोडाशो वा नोपांशु · शुनासीरीये वायव्यं पय उपांशु भवति यवागूपक्षेऽपि वायोरुपांशुत्वं भवति तेषां वै चतुर्णां द्वयोस्त्रीणि-त्रीणि हवींष्यनिरुक्तानि भवन्तीति (११.५.२.७) श्रुतत्वात् । अग्न्याधेये तनूहविषां देवता उपांशु भवन्ति न सकला इष्टयः चरणशब्दाभावात् · यत्रोपांशु चरन्तीत्येवं चरणशब्दस्तत्रैव सर्वमुपांशु भवति चरणशब्दे सर्वमित्युक्तत्वात् (३.७.८) · आदित्येष्ट्यास्तनूहविष्ट्वाभावेऽपि बह्वृचवशादुपांशुत्वम् [1] । दीक्षणीयाप्रायणीयातिथ्येष्टीनां देवता उपांशु भवन्ति । अग्नौ [2] चयने वायव्य इष्टकापशुरुपांशु भवति · चयन एवान्ते या मैत्रावरुणी पयस्या सोपांशु भवति अग्नाविति विशेषोक्तेर्दाक्षायणाग्निष्टोमादौ मैत्रावरुण्याः पयस्याया नोपांशुता । सौत्रामण्यां प्रथम ऐन्द्रः पशुरुपांशु प्रथमग्रहणात्त्रिपशौ ऐन्द्र ऋषभ इत्यत्र (११.३.३) नोपांशुत्वम् · वायोधसोऽपि सौत्रामण्यामन्ते भवति सोऽप्युपांशु । अत्र बह्वृचानां विशेष उक्तः (शाङ्खायन° १.८.३६-३७) प्रणवो ये-यजामहो वषट्कारः सम्प्रैषाः प्रैषाश्चोच्चैरुपांशुहविःषु देवतानामधेयं चोपांश्विति ॥ ॥ सर्वकामावाप्त्यर्थमाग्नेयोऽष्टाकपालः काम्यो भवति · तत्रापि देवता उपांशु भवति । वृष्ट्यर्थे आग्नेये क्रियमाणे विशेषः · आग्नेयस्यारम्भे वृष्टिकामोऽस्मीत्येवं यजमानो ब्रूयात् · अथ यजमान एव पुरोवातं च विद्युतं च मनसा ध्यायेत्यध्वर्युं प्रति ब्रूयात् ततोऽभ्राणि मनसा ध्यायेत्यग्नीधं प्रति ब्रूयात् ततः स्तनयित्नुं च वर्षं च मनसा ध्यायेति होतारं प्रति ब्रूयात् ततः पुरोवातं च विद्युतं चाभ्राणि च स्तनयित्नुं च वर्षं च मनसा ध्यायेति ब्रह्माणं प्रति ब्रूयात् · एवं कृते आग्नेययागाद्वृष्टिलक्षणं फलं भवति । अथवा वृष्टिकामो यजमानः प्रकृतौ दर्शपूर्णमासेष्टावेवोद्धरणकालऽएवं ब्रूयात् · न पृथगाग्नेयेष्टिः कार्या ॥ ॥ अथान्वारम्भणीयेष्टिरुच्यते · सा च दर्शपूर्णमासयोरारम्भे मातृश्राद्धानन्तरं पौर्णमास्यां भवति श्वःपक्षे · सद्यः पौर्णमासानुष्ठानं चेत् प्रतिपद्येवान्वारम्भणीया भवतीति सम्प्रदायः । तस्यां त्रीणि ह-

[1] See Çânkh. २.३.१५. [2] the देवसूदेविकाहवींषि are here erroneousty omitted!

वींषि भवन्ति आग्नावैष्णव एकादशकपालः पुरोडाशः सरस्वत्यै चरुः सर-
स्वते द्वादशकपालः पुरोडाशः । उद्धरणादिकर्मापवर्गान्ता पौर्णमासेष्टिवत् । वि-
शेषः · अन्वारम्भणीयेष्ट्यर्थमित्युद्धरणे · अन्वारम्भणीयेष्ट्या वयं यक्ष्यामहे ऽ इति
वरणे · पात्रासादने दशगणे[1] शूर्पाग्निहोत्रहवणी स्फ्यः कपालानि त्रयोविंश-
तिः चरुस्थाल्येका शम्यादि अर्थवति अन्वाहार्यस्थाने पष्ठौही दक्षिणा प-
ष्ठौही बालगर्भिणी मिथुनौ मिथुनार्हौ गावौ स्त्रीगवी पुंगवश्च विंशति-
काष्ठक इध्मः शृतावदानानन्तरं मेक्षणम् अन्यत्पूर्ववत् · ग्रहणे अग्नावि-
ष्णूभ्यां जुष्टं गृह्णामि पुरो° सरस्वत्यै जुष्टम् चरुः सरस्वते जुष्टम् पुरो° · प्रो-
क्षणे अग्नाविष्णूभ्यां त्वा जुष्टं प्रोक्षामि सरस्वत्यै त्वा जुष्टम् सरस्वते त्वा
जुष्टम् · कणान्ते चरोस्तण्डुलान्विभज्यालम्भः इदमग्नाविष्णवोः सरस्वतश्च इदं
सरस्वत्याः · एतच्च व्रीहिमयपुरोडाशपक्षे · यवपुरोडाशपक्षे चरुर्व्रीहिमय एव
तदा नानाबीजपक्षे उरु वातायेतीक्षणं (२.३.१६) भेदेन अपद्रव्यनिरसनं (१७)
भेदेन अभिमर्शनं चेत् (१८) भेदेन यक्ष्यामिति (१९) भेदेन शेषाभिमर्शनं
(२३) च भेदेन · अवघाते फलीकरणान्तमेकस्य कृत्वा ततो द्वितीयस्य मन्त्रेणाव-
पनम् मुसलं तु गृहीतमेव (२.४.११) स इदं तु भवति (१२) न शूर्पादानमन्त्रः
(१६) प्रति त्वेत्युद्वपनम् (१७) पूर्वस्य तुषैः सह तुषनिरसनम् (१९) भेदेन वा
निष्पवणादि फलीकरणान्तं (१८-२२) भेदेन । चरोः पेषणसंयवनपात्र्यांसंवापो-
पधानभृगूणामितितापनप्रथनाद्भिरभिमर्शनज्वालयोपरिश्रपणाभिवासनस्थाल्याउ-
द्धृत्यपात्र्यामासादनानि[2] न भवन्ति अन्यत्सर्वं भवति · तथा चोक्तम् पे-
षणं यवनं वापस्तापश्चोपहितिः प्रथा मार्जनाभ्यूहनज्वालास्तथा व्युद्धृत्य-साद-
नमिति पेषणं चूर्णनम् यवनं पिष्टस्योदकमिश्रणम् वापः उदकमिश्रणाय पा-
त्र्यां प्रक्षेपः तापः कपालानामङ्गारैः प्रतापनम् उपहितिः अङ्गारेषु कपालस्था-
पनम् प्रथा कपालेष्ववस्थापितस्य पुरोडाशस्य हस्तसंघट्टनेन सर्वेषु कपालेषु
प्रसारणम् मार्जनं श्लक्ष्णीकरणम् अभ्यूहनं भस्मनाङ्गारैश्चोपर्याच्छादनम् ज्वाला दर्भै-
रवज्वालनम् व्युद्धृत्य-सादनं कपालेभ्यः पुरोडाशं पृथक्कृत्यान्तर्वेद्यवस्थापनम् ।

---

1) See २.३.८-९  2) a very ungrammatical compound!

पिष्टानामीक्षणं कृत्वा चरोस्तण्डुलानामीक्षणम् · पिष्टानि पात्र्यामोप्य सपवित्रे चरुपात्रे तण्डुलावापः ततस्त्रिः प्रक्षालनम् तत उपसर्जन्यानयनम् · पिष्टेषूपसर्जनीर्निनीय चरावपि निनयति · संयवनानन्तरं विभज्य पुरोडाशयोरालम्भः इदममाविष्णवोः इदं सरस्वतः · प्रथमपुरोडाशस्योत्तरतश्चरोरधिश्रयणम् चरोरुत्तरतो द्वितीयस्य पुरोडाशस्य · कपालोपधानकालऽएव प्रथमस्य कपालान्युपधाय तस्योत्तरतश्चरोः स्थानं परिकल्प्य तस्योत्तरतो द्वितीयपुरोडाशकपालानामुपधानं कर्तव्यम् · चरोरधस्तादुपस्तरणादानम् प्रसिद्धेः नोपरि · प्राणदाने (२.८.१४) अग्नाविष्णू गच्छ सरस्वतीं गच्छ सरस्वन्तं गच्छेति · अवबाधने सप्तदशेन वज्रेणेति · उत्तमप्रयाजत्यागे इदमग्नये सोमायाग्नाविष्णुभ्यां सरस्वत्यै सरस्वते देवेभ्य इत्यादि · आज्यभागानन्तरं प्रधानयागे अग्नाविष्णुभ्यामनुब्रूहि अग्नाविष्णू यज सरस्वत्याऽअनुब्रूहि सरस्वतीं यज सरस्वतेऽनुब्रूहि सरस्वन्तं यज · ततः स्विष्टकृदादि आग्नावैष्णावस्य चतुर्धाकरणभागानामभावः इतरयोस्तु सर्वं भवति [१] · दक्षिणालम्भे प्रजापतेर्भागोऽसीति-मन्त्रे ऊर्गसीत्यस्य स्थाने पष्ठौही गौरस्यूर्जमित्यादि अस्या अन्वारम्भणीयेष्टेः समृद्ध्यर्थं पष्ठौहीं गां दक्षिणां ब्रह्मणे होत्रऽइत्यादि ब्राह्मणा इयं वः पष्ठौही गौः प्रतिगृह्णीतेति द्यौस्त्वा ददात्वित्येव प्रतिग्रहमन्त्रः सर्वेषाम् · मिथुनौ वेति-पक्षे गोमिथुनमस्यूर्गिति ब्राह्मणा इदं वो गोमिथुनं प्रतिगृह्यतामिति · व्यूहने अग्नाविष्णवोः सरस्वत्याः सरस्वत उज्जितिम् अग्नाविष्णू सरस्वती सरस्वांस्तमपनुदन्त्विति · प्रस्तरे होमत्यागे इदमग्नये सोमायाग्नाविष्णुभ्यां सरस्वत्यै सरस्वते देवेभ्य इति · पिष्टलेपहुतौ इदं विश्वेभ्यो देवेभ्य इति त्यागः । अन्यत्सर्वं कर्मापवर्गान्तं प्रकृतिवत् । इयं च दर्शपूर्णमासप्रकृतिषु सर्वास्विष्टिषु आरम्भे भवति · व्रीह्याग्रयणायवाग्रयणयोः साधारणी एकैव एकस्यैवाग्रयणस्याग्निहोत्रवदभ्यस्यमानत्वात् · याज्ञिकानां मते पशोरप्यारम्भे भवति कर्कमते [२] ॥ ॥ पौर्णमासेष्ट्यनन्तरं विकल्पेन तत्कालमेवोद्धरणादिकर्मापवर्गान्त इन्द्राय विमृधऽएकादशकपालः पुरोडाशो भवति · अन्वाहार्यो दक्षिणा । ग्रहणादौ विशेषः इन्द्राय विमृधे जुष्टम्

---

[१] चरोर्मेक्षणेनावदानम् marg. in १.

[२] Some words seem to be missing here.

इन्द्राय विमृधे त्वा जुष्टम् इन्द्रं विमृधं गच्छ इन्द्राय विमृधेऽनुब्रूहि इन्द्रं विमृधं यज · चतुर्धाकरणादि सर्वं भवति इन्द्रस्य विमृध उज्जितिम् इन्द्रो विमृत्तमपनुदतु · शेषं पौर्णमासवत् ॥ दर्शेष्टयनन्तरं विकल्पेनादित्यै चरुर्भवति · तत्र चरुधर्मा अन्वारम्भणीयायामुक्ताः · उद्धरणादि कर्मापवर्गान्तमाग्नेयवत् · अन्वाहार्यो दक्षिणा । ग्रहणे अदित्यै जुष्टम् · प्रोक्षणे अदित्यै त्वा जुष्टम् · अदितिं गच्छ अदित्याऽअनुब्रूहि अदितिं यज अदित्या उज्जितिम् अदितिस्तमपनुदतु · प्राशित्रादि सर्वं भवति ॥ अनयोरिष्ट्योरादिविकल्पः · दर्शपूर्णमासारम्भऽएकवारं यदि कृते तदा यावज्जीवं कर्तव्ये · यदि न कृते तदा यावज्जीवं न क्रियेतेऽएव ॥ ॥५॥

इति चतुर्थस्य पञ्चमी कण्डिका ॥ ॥

आग्रयणमैन्द्राग्नमग्रपाकस्य व्रीहीणां यवानां च ॥१॥ व्रीहीणां यवानां च अग्रपाकस्य आग्रयणसंज्ञं कर्म भवति · तत्र च प्रथमं हविरैन्द्राग्नम् ऐन्द्राग्नः एकादशकपालः पुरोडाशो भवति । शरदि व्रीह्याग्रयणं वसन्ते च यवाग्रयणमिति केचित् केचिदग्रपाकस्येत्यनुरोधात्प्रथमप्रवृत्तव्रीहियवादिसम्पत्तिकालऽएव कुर्वन्ति । वैश्वदेवश्चरुरिति तस्य यवमयत्वस्यापि सिद्ध्यर्थं यवानामित्युक्तम् अन्यथा ओदनशब्दस्य व्रीहितण्डुलसिद्धान्ने रूढत्वात् चरोरोदनत्वं च ।

वैश्वदेवश्चरुः ॥२॥ द्वितीयं हविः · उपांशु (४.५.२) ।

पयसि वा ॥३॥ वैश्वदेवश्चरुः पयसि दुग्धे वा श्रप्यते वा उदके · तत्र पयःपक्षे दुग्धोपसर्जनीनिनयने मन्त्र (१.२१) ऊहनीयः सं पय ओषधीभिः समोषधयो रसेन स७ रेवज्जगतीभिः पृच्यता७ सं मधुमन्मधुमतीभिः पृच्यतामिति ।

द्यावापृथिवीय एककपालः ॥४॥[1] उपांशु (४.५.३) ।

---

१) अयं सर्वेषामेककपालानां प्रकृतिः Mahâd. अस्य च वैश्वदेविकद्यावापृथिवीयप्रकृतित्वम् (५.१.१३) लिङ्गदर्शनात् · तस्य हि सर्वहुतं करोति अपर्यावर्तं जुहोतीति चाम्नायते · ते चैते सर्वहोमापरिवृत्तीऽआज्ययागविधिपरे वाक्येऽनुवदति तस्य परिचक्षाऽथैत७ सर्वमेव जुहोति न स्विष्टकृतेऽवद्यति सा परिचक्षोतो ज्ञतः पर्यावर्ततऽइति (२.४.३.१) सा द्विती-

उद्वास्यात्तांश्छादयेदाज्येन ॥ ५ ॥ द्यावापृथिवीयमुद्वास्य प्राणदानानन्तरमस्यात्तानाज्येन लौकिकघृतेनाछादयेत् । द्यावापृथिवीयस्य सर्वस्यावदानम् उपरिष्टाद्धिरभिघारणम् चतुरवत्तत्वसम्पादनाय पञ्चावत्तत्वसम्पादनाय तु उपस्तारोऽपि द्विः कर्तव्यः छन्दोगगृह्ये (गोभिल १.८.१४) तथा दर्शनात् · सर्वहोमः[1] · तथा होमः कर्तव्यो यथा न पर्यावर्तते उत्तानो न भवति । अस्य वैश्वदेविकद्यावापृथिवीयप्रकृतित्वं जैमिनिनोक्तम् (७.१.११) एककपालानां वैश्वदेविकः प्रकृतिराग्रयणे सर्वहोमापर्यावृत्तिदर्शनादिति[2] । पक्षान्तरमाह ·

आज्यस्य वा यजेत् ॥ ६ ॥ अथवा द्यावापृथिवीयमाज्यस्य यजेत् आज्यमेव ध्रुवायाश्चतुरवत्तमवदाय यागः कर्तव्यः न पुरोडाशेन · आज्ययागत्वेऽप्युपांशुत्वं भवत्येव शाखान्तरे यागसम्बन्धेनैवोपांशुत्वस्य दर्शनात्[3] ।

पुराणानां वा चरुः ॥ ७ ॥ अथवा वैश्वदेवश्चरुः जीर्णानां यवानां व्रीहीणां च कर्तव्यः वा नवानामिति तुल्यो विकल्पः । ऐन्द्राग्नद्यावापृथिवीयौ पुरोडाशौ नवानामेव चरुग्रहणात् ·

प्रथमजो गौर्दक्षिणा ॥ ८ ॥ अस्मिन्नाग्रयणे तस्मिन्वर्षे जायमानानां वत्सानां यजमानस्य गोष्ठे यः प्रथमो जातो वत्सः स दक्षिणा · ये प्राचीनमेकाष्टकाया[4] वत्सा जायन्ते तेषां प्रथमं ददातीत्यापस्तम्बः । इदं चाग्रयणमेकमेव शरद्वसन्तयोरभ्यस्यते तेन द्वयोरेकैवान्वारम्भणीया भवति ॥ अधिकारमुपजीवन्नाह ·

वैश्वदेवस्य च ॥ ९ ॥ वैश्वदेवस्य चातुर्मास्यानां प्रथमस्य पर्वणः चकारात्प्रथमजो गौर्दक्षिणा ।

---

या परिचक्षा तच्चैतदुभयमप्यनिष्टमित्याज्यस्यैव यागः कर्तव्य इति · तस्माद्वैश्वदेविकैककपालप्रकृतित्वमिति । एवं च सति त्रेधा बर्हिः (५.१.२५) अहतवासःपरिधानं (२२) चेहापि भवति · नवप्रयाजाद्यपीति (५.२.७) चेत् न ऐन्द्राग्नवैश्वदेवविरोधात् । आज्ययागेऽपि उपांशुत्वं भवत्विति (? वासःपरिधानवत्विति Cod.) चेत् नैतदेवम् पुरोडाशेन हि तत्पर्कपस्थाप्यते न चाज्यस्यासौ धर्मः तस्मादप्रवृत्तिरिति · यत्तु वायव्ये पयसि द्रव्यान्यत्वेऽप्युपांशुत्वं भवति युक्तं तत्र प्रत्यक्षो ह्यसौ धर्मः (४.५.७-८) इह पुनश्चोदकत(?)इति Karka.

1) एतस्मात्स्विष्टकृदादि किमपि न भवति किंतु सर्वहुतो भवति Mahâd. 2) ? °मपर्येव° २. 3) पुरोडाशपक्षे उपांशुयागो नाज्यपक्षे Mahâd. 4) ? °ष्टकया २.

दर्शपूर्णमासानीजानो दक्षिणाग्निपक्वं चातुष्प्राश्यं ब्राह्मणान्भोजयेत्किंचिद्दद्यात् ॥ १० ॥[१] सूतकशुक्रास्तादिनिमित्तवशाद्दर्शपूर्णमासारम्भोत्कर्षे सति आग्रयणकाले आगते तदतिक्रमणाशङ्कायामयं प्रकारः · निमित्तवशाद्दर्शंसाम्यामनिष्ट्वान्यजमानो नवमन्नं व्रीहियवद्रूपं दक्षिणाग्नौ पक्वा चातुष्प्राश्यं चतुर्णां तृप्तिपर्यन्तं चतुरो ब्राह्मणान्भोजयेत् तेभ्यो भुक्तवद्भ्यो यथाशक्ति किंचिद्दक्षिणां दद्यात् · अत्र ब्राह्मणानामशनेनैवाग्रयणं[२] सिध्यतीत्यभिप्रायः । एतच्चैत्र्यां दर्शंसारम्भाभावे ज्ञेयम् चैत्र्यामारम्भे ततो[३] दर्शेष्ट्यनन्तरं वैशाखे आग्रयणस्य कर्तुं शक्यत्वात् · वैशाख्यां दर्शंसारम्भे च तदनन्तरं ज्येष्ठे[४] वसन्ताभावादाग्रयणकालातिक्रमः स्यादित्ययं प्रकारोऽनुष्ठेयः · अस्याग्रयणत्वात्पौर्णमास्याममावास्यायां वानुष्ठानमिति य इष्ट्याग्रयणेन (इत्यादौ) आग्रयणग्रहणस्यैवमर्थत्वात् इष्टिरूपस्याग्रयणस्य[५] य इष्ट्येत्यनेनैव कालस्य सिद्धत्वात् ।

अग्निहोत्रायणिनो नवैः सायम्प्रातरग्निहोत्रहोमः ॥ ११ ॥[६] दर्शपूर्णमासोत्सर्गे कृते (४.२.४१) अग्निहोत्रमेव जुह्वतः आग्रयणस्य प्रकारमाह · अग्निहोत्रमेवायनं [यस्य] नान्यानि कर्माणि सोऽग्निहोत्रायणी तस्य नवैः व्रीहियवान्नैः सायम्प्रातरग्निहोत्रहोमो भवति आग्रयणकाले । अपरे अग्निहोत्रेणैव अग्निहोत्रहोमेनैव (अयनं) आग्रयणप्राप्तिमाग्रयणसिद्धिं य इच्छति सोऽग्निहोत्रायणी तस्यैवं कर्तव्यम् अनुत्सृष्टदर्शपूर्णमासस्यापि · एतदपि युक्तम् शाखान्तरे सामान्येनैवोक्तत्वात् ।

तदाशिताया वा पयसा ॥ १२ ॥[७] तन्नवमाशिता तदाशिता तस्या नवान्नं खादिताया गोः पयसा वा सायम्प्रातरग्निहोत्रहोमः ।

दीक्षितव्रतं च ॥ १३ ॥[८] संवत्सरदीक्षादौ यज्ञे प्रारब्धे आग्रयणकाला-

---

१) दर्शंसाभ्यां त्रिंशतं वर्षाणीष्ट्वानिदानीं यः अनीजानः न यजते स दर्शंजानः । शक्त्यनुसारदक्षिणा किंचिच्छब्देनोच्यते अष्टमुष्टि भवेत्किंचिदिति स्मृतेः Mah. २) ? ब्राह्मणानाशने° २. ३) ? °रभेन्नतो २. ४) ? ज्येष्ठे २. ५) ? इष्टरू° २. ६) अग्निहोत्रेणैवायनं गमनं कालयापनं करोति सोऽग्निहोत्रायणी · सायम्प्रातर्ग्रहणमेककर्मज्ञापनार्थम् · तत्पर्वणि वा शुक्लपक्षे वा Mahâd. ७) तन्नवद्रव्यमाशितं यस्याः सा तदाशिता Mah. ८) न पत्नीव्रतम् दीक्षितग्रहणात् Mahâd.

तिक्रमणाशङ्कायां नवान्नेन दीक्षितव्रतं कर्तव्यम् · तेनैवाग्रयणसिद्धिः · एतदप्या-ग्रयणकालऽ एव ।

उपसत्सु रौहिणौ कुर्वीत ॥ १४॥ संवत्सरोपसत्कादौ यज्ञे उपसत्सु आ-ग्रयणकालऽएव प्रवर्ग्ये[1]) नवान्नेन रौहिणौ पुरोडाशौ कुर्वीत · ताभ्यामेवा-ग्रयणसिद्धिः ।

सुत्यासु सवनीयान्[2]) ॥ १५॥ संवत्सरसुत्यादौ आग्रयणकाले नवान्नेन सवनीयान्पुरोडाशान्कुर्वीत ।

सौम्यः श्यामाकचरुरारण्यस्य ॥ १६ ॥[3]) आरण्यस्य धान्यस्याग्रयणं सो-मदेवताकः श्यामाकश्चरुर्भवति · एतच्च वर्षासु शरदि वा भवति शाखान्तरात् श्यामाकाग्रपाकस्य तदानीमेव भावाच्च । आपस्तम्बसूत्रे चायं समानतन्त्र उक्तो ऽस्ति · भिन्नतन्त्रोऽपि विकल्पेन तेन चोक्तः यदि नानातन्त्रां श्यामाकेष्टिं कुर्वीतेति ।

वैणवो ग्रीष्मे ॥ १७॥ ग्रीष्मे ऋतौ वंशमयः सौम्यः चरुर्भवति · आपस्तम्बः वेणुयवानामिष्टिमेके समामनन्तीति । श्यामाकवैणवाग्रयणयोर्द-क्षिणामाह ·

पुनःसँस्कृतो रथो दक्षिणा क्षौमं मधुपर्को वर्षाधृतं वा वासः ॥ १८॥ वा-शब्दः प्रत्येकं योज्यः · यो रथो भग्नः सन्पुनः सज्जीकृतः स पुनःसंस्कृतः · क्षुमा अतसी तत्तन्तुनिर्मितं क्षौमम् · मधुपर्कशब्देन दधिमधुघृतान्युच्यन्ते · वर्षा[सु] ऋ-तौ यजमानेन परिहितं तद्वर्षाधृतं वासः । शाखान्तरात्तु आग्रयणस्य पक्षान्त-राण्यपि सन्ति ॥ ॥ षष्ठी कण्डिका ॥ ६॥ ॥

अथ पद्धतिः ॥

अथाग्रयणमुच्यते । तच्च शरद्वसन्तयोर्भवति नवधान्यस्य प्रथमप्राप्तौ वा · तदुक्तम् (कर्मप्रदीप° ३.७.१) शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते धान्यपाकव-शादन्ये श्यामाको वनिनः स्मृत इति । एतदाग्रयणं पौर्णमास्यामावास्यायां वा

---

1) ? प्रवर्ग्ये २. 2) सवनीयाः Karka. (कर्तव्याः) · 3) आरण्यस्य अरण्यवासिनः आरण्यं (!) श्यामाकनीवारादीति कर्कः Mahâd. आरण्याग्रयणं (!) श्या°शादि Karka.

भवति शुक्लपक्षे वा पुण्ये नक्षत्रे बह्वृचब्राह्मणे श्रवणात् · यदि पूर्वाह्णे पर्वान्तस्तदा सद्यस्कालपौर्णमासेष्टेः पूर्वमाग्रयणेष्टिः ततः पौर्णमासेष्टिः अमावास्येष्ट्यनन्तरं चाग्रयणेष्टिः · तदा च वचनादमावास्येष्टिरमावास्यामध्यऽएव समापनीया · तदुक्तम् अथो पूर्वाह्णपर्वपक्षे दर्शेष्ट्याः परमुक्तमाग्रयणाकम् प्राक्पौर्णमासाच्च तदिति · अथो पूर्वाह्णपर्वपक्षे चान्या इष्टिपश्वाद्या विकृतय उभयत्र प्राकृतेष्टेरनन्तरमेव[1] भवन्ति । अत्रोक्तकाले नवानां व्रीहीणां नवानां यवानां चाग्रयणासंज्ञकेष्टिर्भवति । तत्र त्रीणि हवींषि भवन्ति ऐन्द्राग्नो द्वादशकपालः पुरोडाशः वैश्वदेवश्चरुर्यवकाले यवानाम् व्रीहिकाले व्रीहीणाम् नवानां वा पुराणानां वा पुराणा जीर्णाः द्यावापृथिवीय एककपालः पुरोडाशो वा आज्ययागो वोपांशुयाजवत् · एतानि त्रीणि हवींषि व्रीहिकाले नवानां व्रीहीणां भवन्ति यवकाले नवानां यवानाम् चरुस्तु विकल्पेन नवानां जीर्णानां वा । तत्रोद्धरणे व्रीह्याग्रयणेष्ट्यर्थं यवाग्रयणेष्ट्यर्थं वा · ब्रह्मवरणे व्रीह्याग्रयणेष्ट्या वयं यक्ष्यामहे यवाग्रयणेष्ट्या वा · पात्रासादने ऐन्द्राग्नस्य द्वादश कपालानि एका चरुस्थाली द्यावापृथिवीयपुरोडाशपक्षे तस्यैकं कपालं पाणिसंमितम् द्वितीया दुग्धोपसर्जनी विकल्पेन वैश्वदेवचरुश्रपणार्था दक्षिणार्थे प्रथमजो वत्सः विंशतिरिध्मकाष्ठानि द्वे पात्र्यौ एका वा शृतावदानानन्तरं मेक्षणम् अन्यत्सर्वं प्रकृतिवत् · ग्रहणे इन्द्राग्निभ्यां जुष्टम् विश्वेभ्यो देवेभ्यो जुष्टम् द्यावापृथिवीभ्यां जुष्टम् · प्रोक्षणे इन्द्राग्निभ्यां त्वा जुष्टम् विश्वेभ्यस्त्वा देवेभ्यो जुष्टम् द्यावापृथिवीभ्यां त्वा जुष्टम् · कणनिधानान्ते चरोस्तण्डुलान्पृथक्कृत्यालम्भः इदमिन्द्राग्न्योर्द्यावापृथिव्योश्च इदं विश्वेषां देवानाम् · कपालोपधाने ऐन्द्राग्नस्य द्वादश कपालान्युपधाय तस्योत्तरतश्चरुस्थानं कृत्वा तस्योत्तरत एककपालस्य प्रथमकपालधर्मेणोपधानम् · तपसा तप्यस्वेत्यभ्यूहनम् · पयसि वेति वैश्वदेवचरोः पयसा श्रपणपक्षे पयस उपसर्जनीमधिश्रित्योद्वास्य चरौ निनयति तत्र प्रतिग्रहमन्त्रऽऊहः सं पय ओषधीभिः समोषधयो रसेन स७ रेवतीर्जगतीभिः पृच्यता७ सं मधुमन्मधुमतीभिः पृच्यतामिति · उदकेन श्रपणपक्षे प्रकृतिवत् · च-

१) ? प्रकृते० १.

रुधर्मा अन्वारम्भणीयायामुक्ताः · पुनरपि संयवनानन्तरं समं विभज्यालम्भः इ-दमिन्द्राग्न्योः इदं द्यावापृथिव्योः · पुरोडाशयोर्मध्ये चरोरधिश्रयणम् · द्यावापृथि-वीयस्य प्राणदानं कृत्वा लौकिकेनाज्येन तस्यान्तांश्छादयेत् · प्राणदाने इन्द्रा-ग्नी गछ विश्वान्देवान्गछ द्यावापृथिव्यौ गछ प्राकृतं च विकृताविति न्यायात् · अवबाधने सप्तदशेन वज्रेणेति · उत्तमप्रयाजे इदमग्नये सोमायेन्द्राग्निभ्यां वि-श्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यां देवेभ्य आज्यपेभ्यः · आज्यभागौ प्रधानयागे इ-न्द्राग्निभ्यामनुब्रूहि इन्द्राग्नी यज विश्वेभ्यो देवेभ्यः उपांशु अनुब्रूहीति प्रथ-मेन चरोर्मेक्षणेनावदानम् विश्वान्देवान् उपांशु यज द्यावापृथिवीभ्याम् उपांशु अनुब्रूहि द्यावापृथिव्यौ उपांशु यज · सकृदुपस्तीर्य सर्वमपि पुरो-डाशमखण्डमेव जुह्वां निधायोपरिष्टाद्द्विरभिघारयति · मानवे एककपालमन्य-स्यां पात्र्यामलंकुर्वन्नभिपूरयति प्रचरणवेलायां बर्हिषि सादयित्वोपस्तीर्यैकक-पालं सकृत्सर्वमवद्यत्याशयस्यान्वासिच्य द्विरभिघार्योपांश्वेककपालेन प्रचर्य वष-ट्कृते मध्ये पाणिना जुह्वोत्यूतुं प्रतिष्ठितमाशयेनाभिजुहोतीति · अथवोपांशुया-जवत् ध्रुवायाश्चतुरवदाय द्यावापृथिवीययागः कर्तव्यः · ततः स्विष्टकृदादि प्रा-शित्रेडाव्यतिरिक्तं किमपि न भवति कर्कमते[१] चतुर्धाकरणवर्जं सर्वं भवत्ये-व · दक्षिणायाम् ऊर्गसीत्यस्य स्थाने प्रथमजो गौरस्यूर्जमिति अस्या इष्टेः समृद्ध्यर्थं प्रथमजं गां दक्षिणां ब्रह्मणऽइत्यादि पूर्ववत् ब्राह्मणा अयं वः प्रथ-मजो गौः प्रतिगृह्णीतेति द्यौस्त्वा ददात्वित्ययमेव प्रतिग्रहणमन्त्रः · व्यूहने इन्द्राग्न्योर्विश्वेषां देवानां द्यावापृथिव्योरुज्जितिम् इन्द्राग्नी विश्वे देवा द्यावापृ-थिव्यौ तमपनुदन्त्विति · प्रस्तरत्यागे इदमग्नये सोमायेन्द्राग्निभ्यां विश्वेभ्यो दे-वेभ्यो द्यावापृथिवीभ्यां देवेभ्य इत्यादि · कर्मापवर्गात्तमन्यत्प्रकृतिवत् ॥ ॥

दर्शपूर्णमासेष्वनन्तरमेवाग्रयणाद्या विकृतयो भवन्ति न ततः पूर्वम् ॥ ॥ तत्र कृताधानस्य सूतकशुक्रास्तादिनिमित्तवशेनानिष्टदर्शपूर्णमासस्य यजमानस्याग्रयण-कालऽआगते कालातिक्रमे जायमने आग्रयणकालऽएव मातृश्राद्धं कृत्वा दक्षि-णाग्नौ नवान्नं चातुष्प्राश्यं पक्त्वा ब्राह्मणान्भोजयेत् तेभ्यो भुक्तवद्भ्यो यथाशक्ति

१) Karka's commentary gives here nothing the like.

किंचिद्दक्षिणां दद्यात् । दर्शपूर्णमासोत्सर्गानन्तरं केवलाग्निहोत्रहोमिनो यजमानस्य नवान्नेन सायम्प्रातरग्निहोत्रहोमः कर्तव्यः · अथवा पूर्वदिनेऽग्निहोत्रीं गां नवान्नं खादयित्वा तस्यां गोः पयसा सायम्प्रातरग्निहोत्रं जुहुयादाग्रयणकाल ऽएव · तेनैवाग्रयणसिद्धिः । गवामयनादिमध्ये आग्रयणकालऽआयाते नवान्नाशितायाः पयसा दीक्षितव्रतं कार्यम् · तेनैवाग्रयणसिद्धिः । संवत्सरोपसत्कादौ उपसत्स्वाग्रयणकालऽआगते नवान्नेन रौहिणौ पुरोडाशौ कार्यौ । सुत्यास्वाग्रयणकाले नवान्नेन सवनीयाः कार्याः ॥ आपस्तम्बसूत्रे बह्वृचब्राह्मणे च दर्शपूर्णमासाभ्यां समानतन्त्रमाग्रयणं पठितमस्ति · तत्र पूर्वं प्राकृतानि हवींषि पश्चादाग्रयणस्य · सामिधेन्यः प्राकृतसंख्या एव · दक्षिणापि प्राकृत्येव ॥ ॥

अथ श्यामाकाग्रयणमुच्यते · तच्च वर्षासु शरदि वा यज्ञनीयेऽहनि शुक्लपक्षे पुण्ये नक्षत्रे वा भवति । तत्र प्रथमप्रयोगे मातृश्राद्धमन्वारम्भणीयां च कृत्वा श्यामाकेष्टिः कार्या । तत्र सोमदेवत्यः श्यामाकानां चरुर्भवति · तत्र श्यामाकाग्रयणेष्ट्यर्थमित्युद्धरणे · श्यामाकाग्रयणेष्ट्याहमिति वरणे · पात्रासादने कपालस्थाने चरुस्थाली उपवेषाभावः दक्षिणार्थे पुनःसंकृतो रथः क्षौमं वा मधुपर्को वा दधिमधुघृतानि वर्षाकाले धृतं परिहितं वासो वा एते दक्षिणाविकल्पाः हविः श्यामाकाः विंशतिरिध्मकाष्ठानि शृतावदानस्थाने मेक्षणम् अन्यत्प्रकृतिवत् · ग्रहणे सोमाय जुष्टम् · प्रोक्षणे सोमाय त्वा जुष्टम् · चरुधर्मा अन्वारम्भणीयायामुक्ताः · कणनिधानान्ते अध्वर्योः स्वयमेवोपसर्जन्यधिश्रयणम् यजमानस्याज्यनिर्वापो वेदबन्धश्च तण्डुलानामीक्षणम् सपवित्रे चरौ तण्डुलावापः उपसर्जन्यानयनादि पात्र्यङ्गुलिप्रक्षालननिनयनाभावः · प्राणदाने सोमं गच्छ · इदमहं७ सप्तदशेनेत्यवबाधनम् · उत्तमप्रयाजे इदमग्नये सोमाय सोमाय देवेभ्य इति त्यागः · प्रधानयागे इदं सोमाय मेक्षणेन चरोरवदानग्रहणम् चतुर्धाकरणादि सर्वं भवति · दक्षिणालम्भमन्त्रे ऊर्गसीत्यस्य स्थाने पुनःसंस्कृतो रथोऽसीति क्षौममसीति वा मधुपर्कोऽसीति वा वर्षाधृतं वासोऽसीति वा ब्राह्मणा [अयं वः पुनःसंस्कृतो रथः प्रतिगृह्णीतेति] इदं वः क्षौमं प्रतिगृह्णीतेति अयं वो मधुपर्कः इदं वो वर्षाधृतं वास इति · व्यू-

ह्ने सोमस्योज्जितिम् सोमस्तमपनुदत्विति · प्रस्तरहोमे इदमग्नये सोमाय [सोमाय] देवेभ्य इति · शेषं प्रकृतिवत् । ग्रीष्मे ऋतौ वेणुयवानामिष्टिमेके समामनन्ति वेणुयवेषु पक्वेषु वेणुयवानुद्धर्तवाऽइति सम्प्रेष्यति तस्या एतदेव तन्त्रमेषा देवता आग्नेयी मैत्रावरुणी प्राजापत्या वेति · एतत्तन्त्रमेषा देवतेति श्यामाकेष्टौ यदुक्तम् तस्यादेशः · अत्र देवतान्तरपक्षे आरम्भे वृद्धिश्राद्धान्वारम्भणीये भवतः देवतान्यत्वे कर्मान्यत्वात् सोमदेवतापक्षे तु न भवतः[1] · श्यामाकेष्टिस्तु आपस्तम्बसूत्रे वैतानसूत्रे च व्रीह्याग्रयणेन समानतन्त्रतयाप्युक्तास्ति ॥ ॥६॥

इति चतुर्थस्य षष्ठी कण्डिका ॥ ॥

अमावास्यायामग्न्याधेयम् ॥१॥[2] अग्न्याधेयमिति संज्ञा कुरुक्षेत्रे परीणाहि स्थलेऽग्न्याधेयमित्यादौ (२४.६.३४) अग्न्यगारकरणादीष्ट्यन्तस्य कर्मसमुदायस्य संज्ञा मन्थनमात्र[स्य] स्थापनमात्रस्य वा । तत्र चामावास्याशब्देन गौण्या वृत्त्या प्रतिपदुच्यते श्रुतौ तथा दर्शनात् · स योऽमावास्यायामग्नीऽआधत्तऽइति प्रकृत्य (११.१.१.२) यदहरेवैष न पुरस्तान्न पश्चाद्ददृश्येत तदहरुपवसेत्तर्हि ह्येष इमं लोकमागच्छतीति (४) मुख्यामावास्यायामुपवासं दर्शयति · अत्रोपवासशब्देन यमनियमयुक्तावस्थानमुच्यते यदहरस्य श्वोऽग्न्याधेयं स्याद्दिवैवाश्नीयात् (२.१.४.१) अथ जाग्रति जाग्रति देवा इत्यादिकम् (७) तेनोपवसेत् यमनियमयुक्तो भवेदित्यर्थः · तस्मान्मुख्यामावास्यायामग्न्यगारादि ब्रह्मौदनान्तमुपक्रम्य प्रतिपद्याधानं कार्यम् । नक्षत्राधानपक्षे तु पूर्वदिने उपक्रमः नक्षत्रदिने मन्थनम् । श्वोऽग्नीनाधास्यमान उपवसेत्पूर्वां पौर्णमासीमुत्तराममावास्यां नक्षत्रं वेति[3] शाखान्तरम् · अतश्च पौर्णमास्याधाने चतुर्दश्यामुपवासाद्युपक्रमः पौर्णमास्यामग्न्युत्पत्तिरिष्टयश्च श्वोऽन्वारम्भणीया पौर्णमासं चेति पूर्वदिने वा पौर्णमास्यामन्वारम्भणीयेति सिद्धम् · कठसूत्रे पौर्णमास्यामादधानः पूर्वामुपोष्याधायाग्न्याधेये-

---

1) ? भवति १. 2) एतदग्न्याधेयं वर्णविभागान्तं भवति · यावद्वर्णविभागोऽस्ति यावद्वेदाः प्रवर्तन्ते संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगऽइति स्मृतेः Mahâd. 3) नक्षत्रे चेति २. but see the paddhati, where the same passage is quoted from the Mânavam.

ष्टिभिरिष्ट्वा जुह्वदग्निहोत्रमुपतिष्ठमानो वसति श्वोऽन्वारम्भणीया पौर्णमासं चेति मानवे पौर्णमास्यामाधाय सोपवासमन्वारम्भणीयां कृत्वा सद्यस्कालया पौर्णमास्या[1] यजेतामावास्या[यामा]धाय नक्षत्रे वा पौर्णमासीमुपोष्यारम्भणीयां कुर्वीतोत्तरामुपोष्य पौर्णमास्या यजेतेति ।

कृत्तिकारोहिणीमृगशिरःफल्गुनीषु ॥ २ ॥[2] कृत्तिकासु रोहिण्यां मृगशिरसि फल्गुनीषु च · अयममावास्यया सह विकल्पः · न समुच्चयः अमावास्यायामेवैतेषु नक्षत्रेष्विति[3] ।

हस्तो लाभकामस्य ॥ ३ ॥[4] य इच्छेत्प्र मे दीयेतेति (२.१.२.१२) प्रकर्षार्थप्रशब्दप्रयोगाल्लाभशब्देन प्रतिग्रहेणार्थप्राप्तिरुच्यते · तेनायं ब्राह्मणस्यैव कालः प्रतिग्रहस्य ब्राह्मणस्यैव व्रतत्वात् ।

चित्रा च क्षत्रियस्य ॥ ४ ॥[5] चकाराल्लाभकामस्य ॥ व्यवहारसारे अग्न्याधानं द्विजेन्द्राणां स्यात्कृत्तिकाविशाखयोः रेवतीरोहिणीपुष्यमृगज्येष्ठोत्तरात्रये । शाखान्तरेष्वन्येष्वपि नक्षत्रेष्वाधानं श्रूयते · तथा अमावास्यायां पौर्णमास्यां वा आधेय इति ।

वसन्तो ब्राह्मणब्रह्मवर्चसकामयोः ॥ ५ ॥ ब्राह्मणस्य निष्कामस्य ब्रह्मवर्चसकामस्यापि ब्राह्मणस्यैव युक्तम् ।

ग्रीष्मः क्षत्रियश्रीकामयोः ॥ ६ ॥ निष्कामस्य क्षत्रियस्य · श्रीकामस्य त्रैवर्णिकस्यापि अक्षत्रियजातिरपि श्रिया सम्पदा कीर्त्या च क्षत्रात्मकः स्यामिति कामयमानस्य ब्राह्मणादेः (२.१.३.७) ।

वर्षाः प्रजापशुकामवैश्यरथकृताम् ॥ ७ ॥ प्रजाकामस्य पशुकामस्य त्रैवर्णिकस्य वैश्यस्य निष्कामस्यापि रथकृतश्च निष्कामस्य । शाखान्तरे शिशिरः सर्ववर्णानाम् तथा च शिशिरः सार्ववर्णिक[6] इति । एवं कालमुक्त्वा कर्तव्यमाह[7] ·

---

१) ? °मप्यार° °लायाः पौ° स्या २. २) शुद्धं नक्षत्राधानं क्षत्रियविषयम् Mahâd. ३) एवं हि समामनन्ति स योऽमावा° मियादेवं तदित्यमावास्यायां विधाय (११.१.१.२.) नक्षत्रनिषेधेन संस्तौति अथ यो नक्षत्रऽ °देवं तदिति (३) · तस्मादत्रापि नक्षत्रविकल्पः Karka. ४) स हस्तोऽमावास्याविशिष्ट आश्विने भवति Mahâd. ५) सा चित्रामावास्याविशिष्टा कार्त्तिके भवति Mahâd. ६) ? सर्व° २. ७) इदानीं पूर्वेष्टुरुपक्रममाह Karka.

अग्न्यगारे कुर्वन्ति ॥ ८ ॥[1] अगारं गृहम् अग्न्योरगारे गृहे अग्न्यगारे अर्थात्परिमाणे अग्न्युत्पत्तिक्रमेण कुर्वन्ति चत्वारः अध्वर्य्वादयः पूर्वं गार्हपत्यगृहम् पश्चादाहवनीयगृहम् ।

उदग्वंशं वापरम् ॥ ९ ॥ अपरं गार्हपत्यागारमुदग्वंशं वा वा प्राग्वंशम् · आहवनीयागारं तु प्राग्वंशमेव ।

दक्षिणपूर्वे द्वारे ॥ १० ॥ उत्पत्तिक्रमेण गार्हपत्यागारस्य दक्षिणं द्वारम् आहवनीयागारस्य प्राच्याम् । अर्थाद्गार्हपत्यागारे पूर्वद्वारम् आहवनीयागारे अपरद्वारम् तस्मान्न विहिते · न ह्यन्यथा गार्हपत्याहवनीयपर्यन्तं धारानिनयनविधानं गार्हपत्यावेक्षणं च सम्भवति ।

पौर्णमासवद्वपनम् ॥ ११ ॥ यजमानस्य पौ॰वत्केशश्मश्रुवपनं भवति · शाखान्तरे नखनिकृन्तनमपि ।

क्षौमे वस्तेऽहते ॥ १२ ॥[2] यजमानोऽहते अधौते सकृत्प्रक्षालिते वा क्षौमे परिधत्ते · क्षुमा अतसी तद्विकारे क्षौमे ।

पत्नी च ॥ १३ ॥ अहते क्षौमे वाससी परिधत्ते ।

संस्थितेऽध्वर्यवे देये ॥ १४ ॥[3]

गार्हपत्यागारे निर्मथ्याभ्यादधाति ॥ १५ ॥[4] अर्थाद्विसकाष्ठाभ्यामग्निं निर्मथ्य · गा॰गारे गार्हपत्यखरस्य मध्ये अग्नेः स्थानमुल्लिख्य ।

वैश्यकुलाम्बरीषमहानसाद्वा ॥ १६ ॥ अग्निमाहृत्य गार्हपत्यागारेऽभ्यादधातीति शेषः । वैश्यकुलाच्च लौकिकोऽग्निर्हुतोच्छिष्टो वा ग्राह्यः न तु परिगृहीत आवसथ्यादिः · अथवा अम्बरीषात् भ्राष्ट्रात् कन्दुकगृहात्[5] · महानस-

---

1) दशदशहस्तपरिमाणे · अग्निहोत्रशालाव्यवहारात् विमितं परिमितमेकैकमगारं भवति · तथा विंशत्यरत्नि(:) शाला स्यात्तदर्धेन तु विस्तृता विमितं चतुरस्रं स्याद्दशारत्निप्रमाणत इति · नवहस्तमितमेकैकमिति शाखान्तरात् । कुर्वन्तीति बहुवचनसामर्थ्यादप्राकृताः Mahâd. 2) नवं श्वेतं सकृद्धौतं नान्यपुरुषधारितम् अहतं तद्विजानीयात्पवित्रं सर्वकर्मसु इति स्मृतिः · यत्नमुक्तोऽइति कर्कः Mahâd. but Karka says here merely: क्षौमे ऽवाससेऽअहतेऽअधौते · 3) संस्थिते कर्मणि Mahâd. 4) मन्थनं संनिधानात्प्रकृताभ्यामेवारणिभ्याम् अनयोर्हि संनिधानात् Karka. 5) अम्बरीषात्कन्दुगृहात् Ss. अम्बरीषो भ्राष्ट्रः कन्दुरिति यः प्रसिद्धः Mahâd.

शब्देन धान्यादिपाकार्थं गृहमुच्यते यत्रानवरतबहुपाकवशाद्दीयमाणोऽग्निर्भवति। स चाग्निः पञ्च भूसंस्कारान्कृत्वा स्थापनीयः।

दिवाश्नाति रात्रौ वा ॥ १७ ॥[1] यजमानः।

उपास्तमयम् देवाः पितरः पितरो देवा योऽहमस्मि स सन्यजे यस्याहमस्मि न तमन्तरयामि स्वं मऽइष्टꣳ स्वꣳ श्रान्तꣳ स्वꣳ हुतमस्त्विति ॥ १८ ॥ अस्तमयसमीपकाले आहवनीयागारस्य पुरस्तादुपविष्टो यजमानः देवाः पितर इति देवान्पितॄंश्चाह्वयति · पत्न्यपि तत्र दक्षिणतस्तिष्ठति।

पूर्वेण प्रविशति ॥ १९ ॥ ततो यजमानः पूर्वेणाहवनीयागारद्वारेणाग्न्यगारयोः प्रविशति।

दक्षिणेन पत्नी ॥ २० ॥ गार्हपत्यागारस्य दक्षिणेन द्वारेण पत्न्यग्न्यगारे प्रविशति।

पश्चादग्नेरुपविशतो दक्षिणतः पत्नी ॥ २१ ॥ स्थापितस्याग्नेः पश्चात् · तयोर्मध्ये पत्नी दक्षिणतः अर्थाद्यजमान उत्तरतः।

अश्वत्थशमीगर्भारणी प्रयच्छति ॥ २२ ॥ शमीमध्यऽउत्पन्नोऽश्वत्थः शमीगर्भ इत्युच्यते शम्या गर्भः शमीगर्भः · अश्वत्थश्चासौ शमीगर्भश्च अश्वत्थशमीगर्भः · तन्निर्मिते द्वे अरणी अध्वर्युर्यजमानाय समर्पयति। तल्लक्षणं चैवम् · शमीगर्भस्याश्वत्थस्य प्राङ्मुख्या उदङ्मुख्या वा ऊर्ध्वगाया[2] वा शाखायाः छेदं कृत्वा तन्मय्यौ अरणी कार्ये · ते चतुर्विंशत्यङ्गुष्ठदीर्घे षडङ्गुष्ठविस्तारे[3] चतुरङ्गुष्ठोच्छ्राये भवतः मानं मध्यमेनाङ्गुष्ठपर्वणा कर्तव्यम् · एवंविधा एका अधरारणिः द्वितीया उत्तरारणिरिति · ते चैते अरणी अग्निमन्थनार्थं परिगृह्येते। तेऽएव सदा धार्ये अन्ते प्रतिपत्तिविधानात् अरणी वृषणयोरिति (२५.७.३०) · अत एव कात्यायनेनोक्तम् (कर्मप्रदीप° ३.१.१८) अरण्योरल्पमप्यङ्गं यावत्तिष्ठति पूर्वयोः न तावत्पुनराधानमन्यारण्योर्विधीयतऽइति[4] · नाशक्षयदाहादिनिमित्तेष्वन्ययोः परिग्रहोपदेशाच्च अरण्योर्दग्धयोर्वापि नष्टयोः क्षीणयोस्तथा आहृत्यान्ये समा-

---

१) न चायं दिवसनियमः किं तर्हि रात्र्यशनविकल्पार्थमिदमुक्तम् Karka. See २.१.४.२.
२) ? ऊर्ध्वगायतावा २. ३) ? षडंगुल° २. ४) See also the Yajnapârçva २११.

रोप्य पुनस्तत्रैव निर्मथेदिति · तथा च कात्यायनः (कर्मप्रदीप° ३.१.३) अरण्योः क्षयनाशाग्निदाहेष्वग्निं समाहितः पालयेदुपशान्तेऽस्मिन्पुनराधानमिष्यत इति · एवं च निमित्ताभावे परिगृहीतयोः अरण्योरात्मेच्छया तावन्न परित्यागो यावत्कथमपि अग्निमन्थनसम्भवः ।

अभावेऽगर्भस्य ॥ २३ ॥ शमीगर्भस्याश्वत्थस्याभावे अगर्भस्य अश्वत्थमात्रस्य । कात्यायनः (कर्मप्रदीप° १.७.३) अलाभे त्वशमीगर्भाद्धरेदेवाविलम्बित [१]) इति ।

वाचं यच्छा पूर्णाहुतेरित्याहास्तमिते निशायाम् ॥ २४ ॥ अस्तमिते सूर्ये तदानीमेव निशायां यजमानं प्रति अध्वर्युराह · शाखान्तरात् ।

पर्युदयं वा प्रधानकालत्वात् ॥ २५ ॥ वा पक्षव्यावृत्तौ · सूर्योदयसमीपे वा रात्रावेवाग्न्युपशमनानन्तरम् नास्तमितमात्रे । कुतः प्रधानकालत्वात् वाग्यमो हि पदार्थाङ्गम् पदार्थाश्च व्युष्टायामुपशमय्येत्येवमादयो (४.८.१५) व्युष्टायां रात्रौ पर्युदयं विधीयन्ते · अतोऽङ्गानां प्रधानकालता न्याय्येति न्यायाद्वाग्यमनस्य तदर्थप्रैषस्य च पर्युदयकालतैव घटते · एवं वाग्यमनस्य दृष्टार्थता भवति यतवाक्केन हि पदार्थाः सुखेन कर्तुं शक्यन्ते अन्यथा अदृष्टार्थता भवेत् · तस्मात्पर्युदयमेवेत्यवधारणा । केचिच्च स्वरसंस्कारानन्तरं प्रागश्वानयनप्रैषादिमं प्रैषमिच्छन्ति ॥ सप्तमी कण्डिका ॥ ७ ॥

अथ पद्धतिः ॥

अथाग्न्याधेयमुच्यते ॥ तच्चामावास्यायां भवति शाखान्तरात्पौर्णमास्यां च · तथा कृत्तिकासु वा रोहिण्यां वा मृगशिरसि वा पूर्वोत्तरफाल्गुनीषु वा · लाभकामस्य ब्राह्मणस्य हस्तनक्षत्रे वा क्षत्रियस्य लाभकामस्य चित्रानक्षत्रे वा · वसन्ततौ ब्राह्मणस्य निष्कामस्य ब्रह्मवर्चसकामस्यापि · ग्रीष्मे क्षत्रियस्य निष्कामस्य श्रीकामानां सर्वेषामपि · वर्षासु प्रजाकामस्य पशुकामस्य च त्रैवर्णिकस्य वैश्यस्य निष्कामस्यापि रथकारस्य च · यदहरेवैनं श्रद्धोपनमेत्तदहरादधीतेति श्रुतेर्यदा श्रद्धोत्पद्यते तदैवाधानम् नात्र कस्यापि कालस्य नियमः । आपस्तम्बः हस्ते यः कामयेत प्र मे दीयेतेति चित्रायां राजन्यो भ्रातृ-

---

[१]) Thus Kâty. अभावे °जरेद्वा अवि° २.

व्यवान्विशाखयोः प्रजाकामो ऽनुराधेषृद्धिकामः श्रवणे पुष्टिकाम उत्तरेषु प्रोष्ठपदेषु प्रतिष्ठाकामः सर्वाणि नित्यवदेके [१] समामनन्तीति · ज्योतिःशास्त्रे अग्नेः परिग्रहं कुर्याद्विशाखाकृत्तिकामृगे रेवतीरोहिणीपुष्ये ज्येष्ठायामुत्तरात्रये [२] · कार्त्तिकायाम् माघादिपञ्चमासेषु श्रावणे चाश्विने तथा कुर्यान्मृगोत्तमाङ्गे वा आधानं शुक्लपक्षतः हस्तद्वये विशाखासु कृत्तिकादित्रये तथा पुनर्वसुद्वये तद्वद्रेवतीषूत्तरासु च भौमार्किवर्जिते वारे माधिमासे तथा क्षये चन्द्रे ऽनुकूले पूर्वाह्णे रिक्ताविष्टिविवर्जिते · मानवे श्वो ऽग्नीनाधास्यमान उपवसेत्पूर्वां पौर्णमासीमुत्तराममावास्यां नक्षत्रं वेति · आपस्तम्बः पौर्णमास्यां तु पूर्वस्मिन्पर्वणि सेष्टि सान्वारम्भणीयमपवृज्य श्वो भूते पौर्णमासेन यजत ऽइति · काठके च आधानं चेत्पौर्णमास्यां पूर्वां तनूर्देवताभ्य उपवसेदुत्तरामन्वारम्भणीयायै पर्वणे चेति · लौगाक्षिः [३] पौर्णमास्यामादधानः पूर्वामुपोष्याधायाग्न्यधेयेष्टिभिरिष्ट्वा [४] जुह्वदग्निहोत्रमुपतिष्ठमानो वसति श्वो ऽन्वारम्भणीया पौर्णमासं चेति । अतश्चामावास्यायामाधाने अमावास्यायामुपक्रमः प्रतिपदि मन्थनादीष्ट्यन्तम् · पौर्णमास्यां चेत् चतुर्दश्यामुपक्रमः पौर्णमास्यां मन्थनादि इष्ट्यन्तम् · पक्षपक्षे तस्मिन्नेव दिने ऽन्वारम्भणीया पौर्णमासार्थमुद्धरणाग्न्यन्वाधानाद्युपक्रमश्च प्रतिपदि पौर्णमासयागः · सद्यश्चेत्पौर्णमासं तदा प्रतिपद्येवान्वारम्भणीया पौर्णमासं चेति · नक्षत्राधानपक्षे ऽपि पूर्वेद्युरुपक्रमः नक्षत्रदिने मन्थनादि · त्रिरात्रषड्रात्राद्यग्निधारणमध्ये चेत्पौर्णमासेष्ट्यारम्भः तदा तेषु नित्यधृतेष्वेवाग्निष्वन्वारम्भणीया पौर्णमासेष्टिश्च कार्या न पृथगुद्धरणम् [५] ॥ ॥ अथात्र पदार्थक्रमः । तत्र देहशुद्धये कृतप्रायश्चित्तो यजमानो मातृपूजापूर्वकं मातृश्राद्धं [६] कृत्वा ऋत्विजो वृणीते · तत्र स्फ्योपग्रहो यवानादाय ऋत्विजो दक्षिणं जान्वालभ्य अमुकसगोत्रामुकशर्मन्नित्यनैमित्तिककाम्यकर्मानुष्ठानार्थं श्रौतानग्नीनहमाधास्ये तत्र मे त्वं ब्रह्मा भव होता भव अध्वर्युर्भव अग्नीद्भवेति वृत्वा तानभ्यर्च्य [७] सुप्रोक्षिता-

---

१) °देव २ at ४.७.४. २) °त्तरे त्रये १. but see schol. at ४.७.४. ३) This same passage appears in २. at ४.७.१. as quoted from the कठसूत्र. ४) °धेये° १. ५) See pag. २३८,१२. ६) ? °कमाभ्युदयिकं श्राद्धं Chamb. 622. ७) वृत्वा गंधपुष्पवस्त्रादिभिर्यथासंभवं तानर्चयेत् Chamb. 622.

दि · यजमानस्य तिलकादि माङ्गल्यम् · आशीर्वादाः[१]। अरण्यादेर्लक्षणमुच्यते · शमीगर्भस्याश्वत्थस्य या प्राङ्मुखी शाखा भवति उदङ्मुखी वा ऊर्ध्वगा वा तां छित्वोभेऽअरणी कुर्यात् अरणिश्चतुर्विंशत्यङ्गुष्ठदीर्घा षडङ्गुष्ठविस्तारा चतुरङ्गुष्ठोच्छ्राया च भवति एवंविधा अधरारणिरुत्तरारणिश्च कार्या · अष्टाङ्गुलदीर्घा द्व्यङ्गुलोत्सेधविस्तार[२] उत्तरारण्या ईशानदिग्भागस्थितः प्रमन्थो[३] गृह्यते · द्वादशाङ्गुलं खादिरं चात्रं[४] वृत्तमष्टाश्रि मूलेऽग्रे च[५] लोहपट्टिकया नद्धम् तस्याग्रे लोहमयः कीलकः कार्यः मूले च चतुरस्रो गर्तः प्रमन्थाग्रप्रवयणार्थः कार्यः · ओवीली[६] च खादिरी द्वादशाङ्गुला अधोभागे लोहपट्टिकायुक्ता च कार्या · तस्यां पट्टिकायां कीलकस्योपरि स्थापनार्थानि निम्नानि स्थानानि[७] कार्याणि · गोवालैः शणमिश्रैस्त्रिगुणं वृत्तं व्यामप्रमाणं च नेत्रं कार्यम् । अत्र पूर्वं द्वेऽअग्निगृहेऽअर्थपरिमाणे कर्तव्ये · तत्राहवनीयगृहमध्ये वेदिराहवनीयखरसंयुक्ता गार्हपत्यगृहमध्ये गार्हपत्यखरो दक्षिणाग्निखरश्च कार्यः । तत्साधनोपाय एवम् पूर्वं केनचिदुपायेन प्राचीं निश्चित्याग्न्यगारयोर्मध्ये पूर्वापरायतां रज्जुदण्डरेखां कृत्वा गार्हपत्यागारस्यापरभागे यथासम्भवं भूमिं परित्यज्य चतुर्दशाङ्गुलैर्वृत्तं गार्हपत्यखरं कुर्यात् । अत्रारत्नेश्चतुर्विंशो भागोऽङ्गुलम् न त्वङ्गुष्ठबृहत्पर्वप्रमाणम् षड्यवप्रमाणं वा[८] · कुतः · परिशिष्टेषु सर्वखराणामरत्निप्रमाणवोक्तेः · तथा हि अरत्निश्चतुरश्रस्तु पूर्वस्याग्नेः खरो भवेत् रथचक्राकृतिः पश्चाच्चन्द्रार्ध एव दक्षिण इति यज्ञपार्श्वे[९] · निगमेऽपि (२३) परिमण्डलं गार्हपत्यस्य धिष्ण्यमरत्निमात्रं चतुरश्रमाहवनीयस्यार्धचन्द्रवद्दक्षिणाग्नेः सभ्यावसथ्ययोर्गार्हपत्यवदिति । एवमरत्निमात्रक्षेत्रफलं गार्हपत्यखरं साधयित्वा

---

१) आशीर्वादांश्च ऋत्विजः पठेयुः Chamb. 622. २) °त्सेधविपुल Chamb. 622. ३) उत्तरारणिसमुत्थेन येन काष्ठेनोत्पत्त्यर्थं मथ्यते स प्रमन्थः स च प्रमन्थो यत्र लग्नं भवति तच्चात्रम् तदपि चात्रं यत्र प्रोतं क्रियते सा ओवीली Âçârka at the कर्मप्रदीप १. ७. ५. ४) चत्रं Chamb. 622. ५) वृत्तं मूलेऽग्रे च Chamb. 622. ६) Thus १. and Chamb. 622. ओवीली चात्रप्रोतकाष्ठविशेषः Âçârka. ७) कीलकप्रोतनार्थं स्थानानि Chamb. 622. ८) See Çulvapar. çloka २४. अङ्गुलस्य प्रमाणं हि षड्यवाः पार्श्वसंस्थिताः चतुर्विंशाङ्गुलोऽरत्निर्वितस्तिर्द्वादशाङ्गुलः । ९) I do not find there this passage, but it occurs in the çloka-part of the Çulvapariçishta (२०b and २१a).

तस्या मध्यादारभ्याष्टासु प्रक्रमेष्वेकादशसु द्वादशसु मत्या वेति (४.८.१३) उक्तप्रमाणादधिकेषु वा न्यूनेषु वा प्रक्रमेषु आहवनीयखरस्य मध्यं कुर्यात् · ततो यावत्प्रमाणा रज्जुः स्यात्तावानेवागमो भवेत् आगमार्धे भवेच्छङ्कुस्तदन्ते च निरञ्छनमित्यनेनोपायेनारत्निमात्रं[1] चतुरश्रमाहवनीयखरं[2] साधयेत् । ततो गार्हपत्याहवनीययोरन्तरं षड्ढा सप्तधा वागन्तुसमं त्रेधा विभज्यापरवितृतीयलक्षणेन दक्षिणायम्य तस्मिन्नग्निरित्यनेनोपायेन[3] दक्षिणाग्निखरस्य मध्यमङ्कयित्वा विपर्यस्योत्तरत उत्कर इत्युत्करस्थानमप्यङ्कयेत्[3] · प्रकारान्तरमप्युच्यते अपि वान्तरत्रिभागोनया रज्ज्वा पूर्वार्धे समचतुरश्रं[4] कृत्वा श्रोण्यामग्निरित्यनेनोपायेन[3] दक्षिणाग्निस्थानमध्यमङ्कयित्वा विपर्यस्योत्तरातोऽस उत्कर इत्युत्करस्थानं[3] कुर्यात् · ततः सयवैरङ्गुलैः षड्भिरर्थ्यै वृत्तमालिखेत्. चतुर्भिः सयवैस्त्रिंशद्धरेन्मण्डलकं तत इति दक्षिणाग्निखरमर्धचन्द्राकारं साधयेत् · अथवा षोडशाङ्गुलतार्त्नीये[5] वृत्तं स्यात्षोडशाङ्गुलम् तावदेव ततो गत्वा हरेद्वृत्तमथर्यके इत्युपायेन वा दक्षिणाग्निखरं साधयेत् · अत्राप्यरत्नेश्चतुर्विंशो भागोऽङ्गुलम् अतोऽरत्निप्रमाणरज्जोस्तृतीयं भागं परित्यज्य भागद्वयेन षोडशाङ्गुलं[6] वृत्तं कुर्यात् । वेदिसाधनोपायस्तु दर्शपूर्णमासेष्टावेवोक्तः (२.६.१-१०) । सभ्यस्य खरोऽपि गार्हपत्यखरवद्वृत्तः कार्यः ॥ ॥ अत्रायं पदार्थक्रमः । पूर्वं गार्हपत्यागारकरणम् तच्चार्थात्परिमाणम् पूर्वदक्षिणद्वारम् प्रागंशमुदगंशं वा कार्यम् · तत आहवनीयागारं नियमेन प्रागंशं पूर्वापरद्वारं च कार्यम् । सर्वे ऋत्विग्यजमानाः सम्भूयाग्न्यगारे कुर्वन्ति बहुवचनात् । ततः पौर्णमासवद्वपनम् · अत्राहापस्तम्बः केशश्मश्रु वपते नखानि निकृन्तते स्नात्येवं पत्नी केशवर्जमिति । ततः क्षौमेऽअहते वाससी यजमानः परिधत्ते · पत्नी च · तत्र यजमानस्य परिधास्ये[7] यश इति परिधानमन्त्रः[8] यशसा मेत्युत्तरीयस्य · द्विराचमनम् · पत्न्याश्च । ततो

---

१) °छंकुरतदंते निरं° २. From the Çulvapar. çloka ३२b. ३३a, where we read °छंकुस्तदर्धे च निरंछनं · Chamb. 622 has: भवेछंकुं तदर्धेन नि°. २) समचतुरश्रमा° Chamb. 622. ३) From the Çulvapariçishta, see pag. २१०,१० ff. ४) पूर्वार्धे चतुरश्रं Chamb. 622. ५) Thus Chamb. 622. तार्त्नीये १. ६) °शांगुले Chamb. 622. ७) Thus Chamb. 622. परिधास्यै १. ८) परिधानवस्त्रस्य मन्त्रः Chamb. 622.

ऽध्वर्युर्गार्हपत्यागारे अर्थाद्विहितकाष्ठाभ्यामग्निं निर्मथ्य गार्हपत्यागारमध्ये गार्हपत्य-खरे पञ्चभूसंस्कारपूर्वकं स्थापयति · अथवा वैश्यकुलादग्निमाहृत्याम्बरीषाद्वाभ्रा-द्वाहृत्य अथवा महानसादाहृत्य महानसं नित्यपाकार्थं गृहम् । ततो यजमानो दिवाश्नात्येव रात्रौ चेद्दया[1] · ततोऽस्तमयसमीपे आहवनीयागारात्पूर्वस्यां दिश्युपविश्य स्फ्योपयम्हो देवाः पितर इति मन्त्रेण देवान्पितॄंश्चाह्वयति पत्न्य-पि तत्र संनिधावुपविशति अग्रे उभयोः प्रवेशविधानात् । ततो यजमानः पू-र्वेणाहवनीयागारद्वारेण प्रविशति गार्हपत्यस्य दक्षिणद्वारेण पत्नी प्रविशति · गार्हपत्यागारमध्ये स्थापितस्याग्नेः पश्चात्पत्नीयजमानौ प्राङ्मुखावुपविशतः त-योर्मध्ये पत्नी दक्षिणत उपविशति । ततोऽध्वर्युः पूर्वोक्तलक्षणेऽरणीऽआचारा-दहतवस्त्राच्छादिते यजमानाय समर्पयति । पत्नी तु यजमानहस्तादधरारणिं गृही-त्वाङ्के निदधाति यजमानोऽप्यङ्केऽउत्तरारणिं निदधाति · उभावप्यरण्योः कुङ्कु-मचन्दनपुष्पादिभिः पूजां कुरुतः । ततस्तिलकादि माङ्गल्यम् आशीर्वादाश्च[2] । ततो दम्पती आचम्य देवान्ब्राह्मणांश्च नमस्कृत्य पीठाद्युपर्यरणी निधत्तः ॥ ॥७॥

इति चतुर्थस्य सप्तमी कण्डिका ॥ ॥

गार्हपत्यागारेऽजं बध्नाति न वा ॥ १ ॥ अरणिप्रदानानन्तरं गा॰रे स्वकीयं परकीयं वा छागं बध्नन्ति · अथवा न वा बध्नन्तीति विकल्पः · अ-स्तमयसमयकालमेव ।

विद्यमानं प्रातरग्नीधे दद्यात् ॥ २ ॥ यजमानस्य गृहे स्वत्वेन विद्यमान-मजम् अबन्धनपक्षेऽपि संस्थिते कर्मणि अग्नीधे दद्यात् · स॰स्थितऽइति च का-ण्वपाठात् । यदि स्वीयोऽजो नास्ति तर्ह्यवश्यं परकीयोऽप्यानीयः यदि तु गृहे स्वीयोऽजो भवति तर्ह्यबद्धैव प्रातरग्नीधे देय इति केचित् · अपरे तु स्वकीयः परकीयो विकल्पेन बन्धनीयः अत्र स्वकीयस्य बन्धनपक्षे प्रातर-ग्नीधे दानम् नान्यबन्धनपक्षऽइति ।

---

१) Thus Chamb. 622. वेद्दया १. २) ब्राह्मणास्तु आशीर्मन्त्रान्पठित्वा तिलकादि-माङ्गल्यपूर्वं पत्नीयजमानयोरक्षतैर्वर्धापनं कुर्वन्ति Chamb. 622.

अस्तमिते[1]) रोहिते चर्मण्यानडुहे चत्वारि हविष्यपात्राणि मिमीते ॥३॥ अस्तमिते सूर्ये रोहिते रक्तत्वमापादिते आनडुहे बलीवर्दसम्बन्धिनि चर्मणि उत्तरलोम्नि प्राग्ग्रीवे अधिकरणभूते चत्वारि हविष्यस्य तण्डुलरूपस्य पात्राणि मिमीते प्रक्षिपति । अत्र हविष्यशब्देन व्रीहितण्डुला एवोच्यन्ते न व्रीहयो यवा वा कण्डनस्यानुक्तत्वात् अथ चातुष्प्राश्यमोदनं पचतीत्योदनश्रवणात् (२.१.४.४) तस्य च व्रीहितण्डुलसिद्धान्ने रूढत्वात् । पात्राणि प्रसृतित्रयपरिमाणानि ओदनस्य चतुर्णां प्राशनार्थत्वात् प्राशनस्य च तृप्त्यर्थत्वात् तृप्तेश्च प्रसृतित्रयपरिमिततण्डुलौदनेन सम्भाव्यमानत्वादिति ।

तं चातुष्प्राश्यं पचति ॥४॥ तं चतुर्भिः पात्रैश्चर्मणि प्रक्षिप्तं हविष्यं चातुष्प्राश्यं चतुर्णां प्राशनार्हं तृप्तिजननसमर्थमोदनं तस्मिन्गार्हपत्यागारे स्थापितेऽग्नौ पचति । तमिति मितमात्रस्यैव निर्देशः संस्कारान्तरशङ्कानिरासार्थम् तेन सिद्धानेव तण्डुलान्मित्वा प्रक्षाल्य पचेत् ।

उद्वास्यासेचनं मध्ये कृत्वा सर्पिरासिच्याश्वत्थीस्तिस्रः समिधो घृताक्ता आदधाति समिधाग्निमिति (३.१) प्रत्यृचम् ॥५॥ तं शृतमोदनमुत्तरत उद्वास्य तस्य मध्ये आसेचनं गर्तं कृत्वा तस्मिन्नसंस्कृतमेव सर्पिर्घृतमासिच्य घृताक्तास्तेन गर्तसिक्तेनैवाज्येनाक्ताः तस्मिन्नेव स्थापितेऽग्नौ आदधाति ।

उप त्वेति (३.४) जपति ॥६॥ यजमानः उत्तरसूत्रेऽध्वर्युग्रहणात् शाखान्तरादाद्यैस्त्रिभिर्मन्त्रैः समिदाधानम् चतुर्थीं जपति ।

द्वितीयां वाध्वर्युः ॥७॥ अथवा न उपत्वेति जपतीति किंतु द्वितीयां सुसमिद्धायेतीमामृचम् (३.२) अध्वर्युर्जपति स्वस्थानस्थितामेव केचिदग्ने स्थिताम् समिद्वतीभिर्घृतवतीभिर्ऋग्भिरभ्यादधातीति श्रुतेः (२.१.४.५) समिच्छब्दवतीभिः घृत[शब्द]वतीभिश्चाधानम् द्वितीयायां च समिच्छब्दो नास्ति तेन नास्याः समिदाधाने विनियोगः ।

चत्वार ऋत्विजः प्राश्नन्ति ॥८॥[2])

---

१) Karka joins अस्तमिते to the two preceding sûtras, which he gives as but one. एतां रात्रिमजं बध्नातीति चास्तमितग्रहणम् २) तमोदनम् Karka.

राद्धस्ते ब्रह्मौदन इत्याह ॥ ९ ॥ ब्रह्मौदनप्राशनानन्तरम् राद्धस्ते ब्रह्मौदन इति प्रैषमध्वर्युर्यजमानं प्रत्याह ।

वरं ददाति ॥ १० ॥ तत एवमुक्तो यजमानः ऋत्विग्भ्यो वरं ददाति · वरशब्देन येभ्यो दीयते तदभिलषितं स्वाधीनं वस्तु यथासम्पन्नं हिरण्यादिकमुच्यते · तदत्र चतुर्भ्योऽपि ददाति ।

संवत्सरं वा पुरस्तात्कुर्यात्ततः सर्वानादधीत ॥ ११ ॥ इदमन्यत्पक्षान्तरम् · आधानस्य पुरस्तात्संवत्सरं मानादिवरदानान्तमोदनं प्रत्यहं कुर्यात् ततः एवंविधसंवत्सरसमिदाधानेन संस्कृतादग्नेः सकाशात् सर्वानग्नीन्गार्हपत्याहवनीयदक्षिणाग्निसभ्यानादधीत । अस्मिंश्च पक्षे संवत्सरस्य प्रथमदिने अग्न्यगारकरणाद्युपात्तमयं जपान्तं कर्तव्यम् · ततः पूर्णे संवत्सरे उत्तमेऽहनि चत्वारः पदार्था भवन्ति दिवा अशननियमोऽजबन्धनं जागरणं वाग्बन्धश्चेति एतेषामाधानात्पूर्वाह्नोरात्रऽएव श्रवणात् । अस्मिन्पक्षे अग्निहोत्रकाले गार्हपत्यशमने सति प्रायश्चित्तमाह ·

गार्हपत्येऽनुगते ग्रामाग्निमाहृत्य चातुष्प्राश्यं पक्का विहरेत् ॥ १२ ॥ [1] होमकाले गार्हपत्येऽनुगते उपशान्ते ग्रामाग्निं लौकिकाग्निमाहृत्य तस्मिंश्चातुष्प्राश्यमोदनं पक्का चातुष्प्राश्यमिति शब्दसामर्थ्यात्तेन चतुरो ब्राह्मणान्भोजयित्वा तस्मादग्नेः अग्निहोत्रहोमार्थं विहरेत् ।

रात्रिं जागरणधारणे ॥ १३ ॥ सपत्नीकेन यजमानेन तस्यां रात्रौ जागरणमग्निधारणं च कर्तव्ये । तत्र धारणे करणनियममाह ·

शकलैर्वा ॥ १४ ॥ शकलैः काष्ठखण्डैर्वा सामर्थ्याद्गोमयपिण्डैर्वा स्थापितस्याग्नेर्धारणं कर्तव्यम् ।

व्युष्टायामुपशमय्य दक्षिणा वा संहरेदन्वाहार्यपचनश्चेत् ॥ १५ ॥ व्युष्टायां रात्रौ तं गार्हपत्यागारे स्थापितमग्निमुपशमय्य अनुगमयित्वा वक्ष्यमाणं कुर्यात् अथवा तमग्निं दक्षिणा संहरेत् तत उत्पाद्य दक्षिणस्यां दिश्यदूरे स्थापयेत्

---

[1] चातुष्प्राश्यपचनोपदेशादिदमादिष्टम् · गुणविधित्वाच्च नात्र मानादि भवति Mahâd.

यदि सोऽग्निः अन्वाहार्यपचनं कर्तुमिष्टो भवति · अस्मिन्पक्षे दक्षिणाग्निमादधातीत्यस्मिन्काले तमेव दक्षिणा संहृतमग्निमाहृत्य दक्षिणाग्निखरे भुव इति स्थापयेत् न गार्हपत्यादाहृत्य ।

स्थानमुल्लिख्याभ्युद्यान्वारब्धे हिरण्यं निधायोषाखूत्करान्निवपत्यन्तेषु शर्कराः ॥१६॥[1] उपशमितस्याग्नेः स्थानं भूप्रदेशं स्फ्येन उल्लिख्य यजमानेऽन्वारब्धे उदकेनाभ्युक्ष्य तत्र भूमौ हिरण्यशकलं निधाय तत्रैवोषामाखूत्करं च निवपति · ऊषाशब्देन[2] च क्षारमृत्तिका अभिधीयते आखूत्करशब्देन चाखुभिरुत्कीर्णाः पांसवः · ऊषाखूत्करनिवापानन्तरं चोषाखूत्करैररत्निमात्रक्षेत्रफलो वृत्ताकारः[3] खरः कर्तव्यः · ततस्तस्य खरस्य अन्तेषु प्रान्तेषु शर्कराः परितो निदधाति ताश्च पञ्चाशत्[4] पञ्चाशच्छर्करा नर्यऽइति परिशिष्टोक्तेः · अथ च प्रथममग्निस्थापनाङ्गभूताः पञ्च भूसंस्काराः पूर्वतरं कर्तव्याः ।

हिरण्यमुपर्येके ॥१७॥ एके उपरिष्टात्सम्भाराणां सर्वेषां हिरण्यनिधानमिच्छन्ति एके पुरस्तादिति ।

एवमितरयोः ॥१८॥ इतरयोः आहवनीयदक्षिणाग्न्योरेवमेव स्थाने कर्तव्ये । तत्राहवनीयस्थानमाह ·

पुरस्तादाहवनीयस्याष्टासु प्रक्रमेष्वेकादशसु द्वादशसु मत्या वा ॥१९॥[5] गार्हपत्यस्य खरस्य मध्यात्प्राच्यां दिशि अष्टासु पदिकेषु प्रक्रमेषु आहवनीयख-

---

1) अत्र चोल्लेखनोपलक्षिताः स्मार्ता अपि पदार्थाः परिसमूहनादयः पूर्वं कर्तव्याः अभ्युक्षणं तु तन्त्रेणैव भवति Karka. 2) तत्रैवोक्षामा° उक्षाशब्देन २. 3) उक्षाखू° चोक्षाखू° वृत्तिकारः २. वृत्ताकारः २. 4) तेषां (!) प्रमाणाम् (Yajnap. ५३) पञ्चाशच्छर्कराः पश्चात्पूर्वे दद्यात्त्रिसप्ततिम् दक्षिणे तु खरस्थाने दश सप्त च पञ्च च Mahâd. 5) संख्योक्ता प्रक्रमस्य नोक्तं प्रमाणाम् । कैश्चिद्द्वादशाङ्गुलः प्रक्रम इति · तदयुक्तम् · तत्र द्वयोरगारयोः कर्तुमशक्यत्वात् तथा चाष्टप्रक्रमपक्षे वेदिरेव न सम्भवति दक्षिणाग्निनावरुद्धत्वात् तत्रागारयोस्तु सुतरामसम्भवः तस्मादिदं न च प्रक्रमप्रमाणाम् । तर्हि प्रक्रमस्त्रिपद इत्यग्नौ (१६. ८. २१.) पठितत्वात्त्रिपद एवास्तु सर्वत्र · नैवम् · अग्निचित्प्रकरणे पठितत्वात्तस्यैवाङ्गम् त्रिपदः प्रक्रम इति । तस्मादाधानसोमयोः प्रत्यक्षवचनाभावाद्यौगिकः प्रक्रमो ग्राह्यः · योगस्तु क्रमु पादविक्षेपे प्रकर्षेण क्रमणं प्रक्रमः क्रमणेनारत्निमात्रः प्रक्रमो भवति तस्मात्प्राङ् प्रक्रामति त्रीन्विक्रमामित्यादिश्रुतेः (३.५.१.१.) · अरत्निस्तु पुरुषपञ्चमांशः तस्माद्द्विपदः प्रक्रमः Mahâd.

रस्य मध्यं कुर्यात् · मत्या वा उक्तसंख्यातो न्यूनेष्वपि सप्तसु षडादिषु । अत्राह्वनीयखरे पञ्च भूसंस्कारान्कृत्वा पुनरुल्लिख्यान्वारब्धे यजमानेऽभ्युक्षणादि शर्करानिधानान्तं कुर्यात् · अत्र ऊषाखूत्करैः अरत्निमात्रश्चतुरस्रः खरः कार्यः · अन्तेषु त्रिसप्ततिसंख्याः शर्करा निधेयाः पूर्वे दद्यात्त्रिसप्ततिमिति [1] वचनात् (यज्ञपार्श्व ५३)।

इतरस्य वितृतीये दक्षिणतः ॥२०॥ इतरस्य दक्षिणाग्नेः दक्षिणातो वितृतीये स्थानम् । तस्य साधनोपायः शुल्वकारेणोक्तः [2] गार्हपत्याह्वनी° तस्मिन्नग्निरित्येकः प्रकारः · अपि वान्तर° श्रोण्यामग्निरिति द्वितीयः प्रकारः · एवमन्यतरोपायेन स्थानं कृत्वा ततः षोडशाङ्गुलतार्तीये °मर्धयक्र° इत्यनेनोपायेनारत्निक्षेत्रफलमर्धचन्द्राकारं क्षेत्रं कार्यम् · अत्रोपलेपनादि शर्करानिधानान्तं पूर्ववत् · ऊषाखूत्करैरर्धचन्द्राकारः कार्यः · ततः प्रान्तेषु द्वाविंशतिः शर्करा निधेयाः ॥ सभ्यावसथ्ययोर्गार्हपत्यवदाधानमिति परिशिष्टोक्तेः (निगम° २३) गार्हपत्यखरवत्सभ्यस्यापि वृत्तः खर उपलेपनादिपञ्चाशच्छर्करानिधानान्तैः संस्कारैः कर्तव्यः ।

उत्सृष्टेऽग्निमन्थनम् ॥२१॥ [3] गार्हपत्यस्य ।

अनुत्सृष्टऽएके ॥२२॥

उदिते तूद्धरणम् ॥२३॥ उभयपक्षेऽपि ।

अपरेण गार्हपत्यायतनम् ॥२४॥ [4] गार्हपत्यखरस्य पश्चात्प्रदेशे ।

अश्वमानयेति ब्रूयात् ॥२५॥ [5] अध्वर्युरग्नीधं प्रति ।

स्थितेऽश्वे पुरस्तात् ॥२६॥ अश्वे पुरस्तात्प्रत्यङ्मुखे स्थिते मन्थनं कुर्यात् । तत्र च प्रथममधरारणिमुत्तरायां निधाय उत्तरारण्या ईशानदिग्भागादष्टाङ्गुलदीर्घं षडङ्गुलविपुलं प्रमन्थं [6] छित्त्वा तस्य मूलं चात्रबुध्ने [7] प्रवेश्य अधरारण्या मूलादष्टाङ्गुलं त्यक्त्वा अग्राच्च द्वादशाङ्गुलं त्यक्त्वा तदन्तराले अङ्गुल-

---

1) °तिरिति २· 2) See pag. २१०,१. ff. and ३५७,५. ff. 3) उदिते सूर्ये गृहीताभ्यामरणिभ्यां मन्थनं कर्तव्यम् Mahâd. 4) मन्थनं भवतीति शेषः Ss. 5) तस्माद्यत्राग्निं मन्थिष्यन्स्यात्तदश्वमानेतवै ब्रूयादिति (२.१.४.१६) · अतश्च यो मन्थिष्यन् स प्रैषं ददाति · स चाध्वर्युः शाखान्तरे विहितः तस्मादध्वर्युः प्रत्यङ्मुखो मन्थतीति · अग्नीत्तु प्रैषार्थं करोति Karka. 6) Thus २. प्रथमं २· 7) ? तत्रबुध्ने २·

चतुष्टयपरिमिते पूर्वेऽरण्यन्ते मन्थनस्थानं कृत्वा चात्रबुध्नप्रोतस्य प्रमन्थस्याग्रं तत्र निधाय चात्राग्रकीलकाग्रस्योपर्युदगग्रामौवीलीं[1] निधाय पत्नीं धारयित्वा चात्रं नेत्रेण प्रदक्षिणं त्रिर्वेष्टयित्वा तथा मन्थनं कुर्यात् यथा जातोऽग्निः प्राच्यां पतति · तत्र यजमानः प्राङ्मुखो पत्नीधारणं करोति पत्नी चात्रं नेत्रेण त्रिर्वेष्टयित्वा मन्थनं करोति · ततः शाखान्तरादध्वर्युश्च तस्मादध्वर्युः प्रत्यङ्मुखोऽभिमन्थतीति। चात्रं[2] च खादिरं द्वादशाङ्गुलदीर्घं वर्तुलम् अग्रे लोहकीलयुक्तम् बुध्ने प्रमन्थाग्रप्रवयणार्थगर्तयुक्तम् मूलेऽग्रे च लोहपट्टिकया संयुक्तं कार्यम्। औवीलीं[1] च खादिरीं द्वादशाङ्गुलदीर्घां चतुरङ्गुलविपुलामधोभागे समां चात्राग्रस्थितकीलकोपरिस्थापनार्थलोहपट्टिकायुक्ताम्[3] उपरिभागे वर्तुला च कार्या। नेत्रं च गोवालशणसूत्रैस्त्रिवृत् व्याममात्रं कार्यम्। केचित्प्रमन्थाग्रेण मन्थन्ति अपरे तु मूलेन। मन्थनं कात्यायनेनोक्तम् गृह्यकारिकायां च · तद्यथा (कर्मप्रदीप १.८.२-४) चात्रबुध्ने प्रमन्थाग्रं गाढं कृत्वा विचक्षणः कृत्वोत्तरारणिं तद्बुध्नमुपरि न्यसेत् चात्रायःकीलकाग्रस्तामोवीलीमुदगग्रकाम् विष्टम्भाद्धारयेद्यत्नं निष्कम्पं प्रयतः शुचिः त्रिरुद्वेष्ट्याथ नेत्रेण चात्रं पत्न्योऽहतांशुकाः पूर्वे मन्थन्त्यरण्यन्ते प्राच्यग्नेः स्याद्यथा च्युतिरिति।

जाते वरदानम्॥२७॥[4]

मनसैके॥२८॥ एके इदानीमहमिदं वस्तु अध्वर्यवे दास्यामीति मनसा संकल्प्य पश्चात् कर्मसमाप्त्यनन्तरं ददति[5] नेदानीम्।

तस्याभिश्वासः प्राणममृते दधऽइति॥२९॥[6] यजमानेन अग्निमभिलक्षीकृत्य मुखेन श्वासस्य प्रेरणम् फूत्कारकरणम्।

---

1) °मौविलीं २. 2) See Karmapradîpa १.७.२ सारवद्दारवं चात्रमोवीली च प्रशस्यते · ibid. ५ अष्टाङ्गुलः प्रमन्थः स्याच्चात्रं स्याद्द्वादशाङ्गुलम् ओवीली द्वादशैव स्यादेतन्मन्थनयन्त्रकम् 3) ? समा चात्राग्र्यस्थि° २. 4) मन्थनादग्नौ जाते ऽध्वर्यवे वरदानम् Mahâd. सूत्रक्रमस्त्वेवमपेक्षितः २५. २४. २६. २१. २२. २३. २७. इति idem. 5) ददाति २. (and Ss). 6) अभिश्वासेन च प्राणयते अग्निः समर्थीक्रियते · ततश्च मुखेनाभिश्वासः क्रियते Karka.

उच्छ्वासोऽमृतं प्राणऽआदधऽइति ॥ ३० ॥[१] वह्निज्वालाया ऊर्ध्वश्वासेन मुखमध्ये ग्रहणमुच्छ्वासः · यजमानेन आत्मसंस्कारत्वात् ॥ ॥ अष्टमी कण्डिका ॥ ८ ॥ ॥

अथ पद्धतिः ॥

ततोऽस्तमयादारभ्य सकलां रात्रिं स्वकीयं परकीयं वा अजं गार्हपत्यागारे बध्नाति न बध्नाति वा · यदि बद्धः स्वकीयो भवति तदा प्रातः कर्मणि संस्थिते तमजमग्नीधे दद्यात् स्वकीयाभावे दानाभावः । ततोऽस्तमिते सूर्येऽध्वर्युः रक्ते आनडुहे चर्मणि चत्वारि तण्डुलपात्राणि प्रक्षिपति · प्रसृतित्रयपरिमितं चैकैकं पात्रम् एवंविधानि चत्वारि · ततस्तांस्तण्डुलान्स्थाल्यामोप्य द्विः प्रक्षाल्य स्थापितेऽग्नावधिश्रित्य तं चातुष्प्राश्यसंज्ञकमोदनं पचति । तत उद्वास्य पक्वस्यौदनस्य मध्ये गर्तं कृत्वा तत्र गर्ते घृतमासिच्य तेन घृतेनाक्ता आश्वत्थीस्तिस्रः समिधः प्रादेशमात्रीर्हस्ते कृत्वोत्थाय तस्मिन्नग्नौ समिधाग्निमित्यनेन (३. १) मन्त्रेण तासां समिधां मध्यादेकामादधाति · तत उपविश्य सुसमिद्धायेति (३. २) स्वरेण जपति · तत उत्थाय तं त्वा समिद्भिरित्यनेन (३. ३) द्वितीयां समिधमादधाति · तत उप त्वाग्नेरिति (३. ४) तृतीयां समिधमादधाति । ततो यजमानश्चतुर्णामृत्विजां ब्रह्मादिक्रमेण पादौ प्रक्षाल्योपवेश्य तान्गन्धमाल्यादिभिरभ्यर्च्यान्नं संकल्प्य भोजयेत्[२] · तत्र छन्दांसि एतद्वः पाद्यम् छन्दोभ्य इदमासनम् इदमर्चनं छन्दोभ्यः स्वाहा इदमन्नं परिविष्टं परिवेक्ष्यमाणं चा तृप्तेः छन्दोभ्यः स्वाहा छन्दांसि प्रीयन्ताम् छन्दांस्यनेन[३] प्रीणामि इति (२. १. ४. ४) श्रवणादत्रैवं कुर्वन्ति · ततस्ते ब्रह्मादयश्चत्वार ऋत्विजस्तमोदनं प्राश्नन्ति · ततोऽशनानन्तरं स्मृतिशुद्धो भूत्वाध्वर्युः स्फ्यं गृहीत्वा राद्धस्ते ब्रह्मौदन इत्याह । ततो यजमान ऋत्विग्भ्यो वरं ददाति · अस्य चातुष्प्राश्यपचनकर्मणः समृद्ध्यर्थमिमं[४] वरं ब्रह्मादिभ्य ऋत्विग्भ्यो

[१] वायूपादानमुच्छ्वासः सैव चापाननक्रिया · यजमानसंस्कारोऽयमिति तत्कर्तृकः अतश्च पुनराधेये न भवति अग्निसंस्कारत्वात् अभिश्वासस्तु भवत्येव · द्वावपि चैतावेककर्तृकौ स पुनरपानितीति वचनात् · अभिश्वासः पुनर्जातसंयोगात् ततः सर्वानादधीतेत्यत्र न भवति उच्छ्वासस्त्वात्मसंस्कार[त्व]ाद्भवत्येवेति Karka. [२] °र्च्यान्नं संकल्पयेत् Chamb. 622. [३] °वेक्ष्यमाणं छंदोभ्यः स्वाहा इदं छंदोभ्य इति त्यागः । छंदांस्यनेन Chamb. 622. [४] ? °र्थं इमं १.

ऽर्हं सम्प्रददे ब्रह्मन्यो विभाग इत्यादि[१] वरशब्देनात्र येभ्यो दीयते तदभीष्टं यच्चजमानेन दातुं शक्यते हिरण्यवस्त्रधान्यादि तदुच्यते । अथवैतच्चातुष्प्राश्यमाधानदिनात्पूर्वं संवत्सरं प्रतिदिनमुक्तविधिना कृत्वा संवत्सरे पूर्णे वर्षं यावत्समिदाधानसंस्कृतात्तस्मादग्नेः सकाशात्सर्वानगार्हपत्याहवनीयदक्षिणाग्निसभ्यानादधीत · अत्र संवत्सरस्यान्त्यरात्रौ अशनमन्नबन्धनं जागरणं वाग्बन्धप्रैष[२] इत्येतानि भवन्ति पूर्वेद्युर्विधानात् । अयं श्रौताग्नीनामरणी विनैवोत्पादनप्रकारः · अस्मिन्पक्षे यदा गार्हपत्योऽनुगच्छति तदा लौकिकाग्निमाहृत्य चातुष्प्राश्यं पक्त्वा चतुर्थ्यां दत्वा ततोऽग्निहोत्रार्थं[३] विहरेत् · पुनः स्वयोनेराहरणमिति सम्प्रदायः ॥ अथ प्रकृतमुच्यते[४] । रात्रौ यजमानस्य जागरणम् । स्थापितस्याग्नेः सकलायां रात्रौ शकलैरेव धारणम् गोमयपिण्डैरेव वा न समुच्चितैः । ततोऽन्ये वाससी परिधाय परिहिते वाससी क्षालयित्वा शोषणार्थं विस्तार्येते[५] · तत उषसि स्नात्वा पुनः परिदधीयाताम् । रात्रौ विभातायामरुणोदये कालेऽध्वर्युः स्नात्वा तं स्थापितमग्निं स्वप्रयत्नेनोपशमयेत् · अथवा यदीममेवाग्निमन्वाहार्यपचनं करिष्यन्भवति तदैनमग्निं तत उत्सार्य दक्षिणाग्निस्थापनावसरं यावद्दक्षिणस्यां दिशि क्वचित्सुगुप्ते धारयेत्[६] नोपशमयेत् । ततोऽध्वर्युर्वाचं यच्छ पूर्णाहुतेरिति यजमानं प्रेष्यति · ततो यजमानः पूर्णाहुतिहोमपर्यन्तं वाग्यतो भवति । ततोऽध्वर्युर्गार्हपत्यखरे पञ्च भूसंस्कारान्कृत्वा पुनस्त्रिरुल्लिख्य यजमानेऽन्वारब्धे पुनरभ्युक्ष्य हिरण्यशकलं मध्ये निधाय ऊषान्मध्ये निवपति · ततस्तैरूषैर्वृत्तः खरः कार्यः ऊषाः क्षारमृत्तिकाः · ततो मध्ये आखूत्कराणाम् आखुभिर्मूषिकैरुत्खातानां पांसूनां निवापं कृत्वा वृत्तं सम्पादनीयम् · ततः खरस्य परितः पञ्चाशतं शर्कराः संलग्ना निदधाति · एके सम्भाराणामुपरि हिरण्यनिधानं कुर्वन्ति । ततो गार्हपत्यखरमध्यादष्टासु प्रक्रमेषु पदप्रमाणेषु एकादशसु द्वादशसु वा मत्या वा आहवनीयखरस्य मध्यं कर्तव्यम् · तत्रापि पूर्ववदेव परिसमूहनादीन्पञ्च भूसंस्कारान्कृत्वा पुनरुल्लिख्य यजमानेऽन्वारब्धेऽभ्युक्ष्य हिरण्यश-

---

१) ?? Thus Chamb. 622. संप्रपदे ब्रह्मन्नयोविभाग १. २) ? जागरणं वा । वाग्ब° १. ३) °त्रार्थं Chamb. 622. ४) ? प्राकृत° Chamb. 622. ५) Thus Chamb. 622. विर्येते १. ६) धारयेत १. स्थापयेत् Chamb. 622.

कलं निधायोषाखूत्कराणामावापं च कृत्वा तैश्चतुरश्रमाहवनीयस्य खरं स्थण्डि-
लं कुर्यात् · ततस्त्रिसप्ततिसंख्याभिः शर्कराभिः परितः खरस्य तथा संलग्नं वेष्टनं
कुर्यात् यथोषाखूत्करा निःसृत्य न यान्ति  एवं सर्वखरेषु ज्ञेयम् । ततो दक्षि-
णाग्निखरे पञ्च भूसंस्कारान्कृत्वा तत उल्लिख्यान्वारब्धेऽभ्युक्ष्य हिरण्यं निधायो-
षाखूत्करनिवापं कृत्वा तैरर्धचन्द्राकारं खरं कुर्यात् · ततो द्वाविंशतिं शर्कराः
परितः संलग्ना निदधाति । ततो गार्हपत्यखरवत्सभ्यस्य खरं संस्कुर्यात् · तत्रापि
पञ्चाशच्छर्कराः ।   तत उदितेऽनुदिते वाग्निमन्थनं कुर्यात् । तत्र पूर्वमश्वमा-
नयेति प्रैषमग्नीधं प्रति ब्रूयात् · ततोऽग्नीदश्वमानीय पुरस्तात्प्रत्यङ्मुखं स्थापयति ·
अश्वस्तरुणो भवति  तदभावेऽतरुणः  तदभावेऽनड्वान् · अश्वाभावे प्रैषाभावः
अनभिधानात्  प्रकृतावूहस्य निषिद्धत्वाच्चोहोऽपि न भवति । ततो गार्हप-
त्यायतनमपरेण दर्भाच्छास्तृतायां भूमौ अधरारणिमुत्तराग्रां निधायोत्तरारणेरीशा-
नदिक्स्थमष्टाङ्गुलं प्रमन्थं[1] छित्त्वा तस्य प्रमन्थस्याग्रं श्लक्ष्णं कृत्वा चात्रबुध्नगतग-
र्तमध्ये[2] प्रवयति[3] · ततोऽधरारणेर्मूलादष्टाङ्गुलं त्यक्त्वा अग्राच्च द्वादशाङ्गुलं त्य-
क्त्वा तत्र यच्चतुरङ्गुलमन्तराले भवति तन्मध्येऽग्निमन्थनार्थं तीर्थं कृत्वा प्राच्याम-
ग्निनिःसरणाय वाहिनीं कृत्वा चात्रयुक्तं प्रमन्थं तीर्थस्योपरि निदध्यात् · ततो
यजमानः प्राङ्मुख उपविश्य चात्राग्रे यो लोहकीलको भवति तस्योपर्यौवीलीमु-
दगग्रां[4] निधायावष्टभ्य यन्त्रं कम्परहितं धारयेत् · ततः पत्नी चात्रं नेत्रेण त्रि-
र्वेष्टयित्वा मन्थति · ततोऽध्वर्युः प्रत्यङ्मुखो मन्थति । अग्नौ जाते यजमानोऽध्वर्युवे
वरं ददाति  अध्वर्यो वरं तुभ्यमहं सम्प्रददऽइति वाचा · मनसैके संकल्पं कुर्व-
न्ति । ततस्तमग्निं शुष्कगोमयचूर्णाकीर्णे कर्परे निधाय तं जातमग्निमभिलक्षीकृत्य
यजमानो मुखेन श्वासं प्रेरयति फूत्कारं करोति प्राणममृते दधऽइति मन्त्रेण ·
ततः सुसमिद्धेऽग्नौ जातेऽग्नेर्ज्वालामूर्ध्वश्वासेन मुखमध्ये गृह्णाति अमृतं प्राणऽआ-
दधऽइति मन्त्रेण ॥  ॥८॥

इति चतुर्थस्याष्टमी कण्डिका ॥ ॥

---

१) ? प्रथमं १. and Chamb. 622.  २) चत्र° Chamb. 622. here and throughout.  ३) प्रोतयेत् Chamb. 622.  ४) तदुपर्यौवाली° Chamb. 622.

दारुभिर्ज्वलन्तमादधाति भूर्भुव इति (३.५)[१] सम्भारेष्वमुष्य त्वा व्रतपते व्रतेनादधऽइति यथर्षि ॥ १ ॥[२] तं जातमग्निं दारुभिर्यज्ञियवृक्षकाष्ठैः ज्वलन्तं दीप्यमानं सम्भारेषु सम्भाराणां हिरण्यादीनामुपरि भूर्भुव इति मन्त्रेण अमुष्य त्वेति मन्त्रेण च स्थापयति यथर्षि[३] यस्य य ऋषिर्भवति तस्यामुष्येति स्थाने तदृषिवाचि पदं षष्ठ्यन्तं प्रयोज्यम् · तद्यथा अङ्गिरसां त्वा देवानामित्यङ्गिरसाम् भृगूणां त्वा देवानामिति भार्गवाणाम् भार्गवाङ्गिरसव्यतिरिक्तानां सर्वेषाम् आदित्यानां त्वा देवानामित्येव · एवं हि शाखान्तरे पठ्यते · तथा चापस्तम्बः भृगूणां त्वा देवानामिति यो भार्गव स्यात् अङ्गिरसां त्वा देवानामिति यो ब्राह्मण आङ्गिरस स्यात् आदित्यानां त्वा देवानामित्यन्यासां प्रजानाम् वरुणस्य त्वा राज्ञो व्रतपतऽइति राज्ञ इन्द्रस्य त्वेन्द्रियेण व्रतपतऽइति राजन्यस्य मनोष्ट्वा ग्रामण्यो व्रतपतऽइति वैश्यानाम् आदित्यानां त्वेति रथकारस्येति यथर्ष्याधानमिति ।

वरुणस्य त्वेति क्षत्रियस्य ॥ २ ॥ इन्द्रस्य त्वेति राजन्यस्य ॥ ३ ॥[४]

मनोष्ट्वा ग्रामण्य इति वैश्यस्य ॥ ४ ॥

ऋभूणां त्वेति रथकृतः ॥ ५ ॥[५] माहिष्येण करण्यां जातो रथकृत् इति केचित् · ऋभुसौधन्वनसात्वतापरपर्यायस्त्रैवर्णिकेभ्यो हीनो नियतः कश्चिज्जातिविशेष इति पार्थसारथिमिश्राः[६] ।

---

१) आदधामीत्यध्याहारः Mahâd. २) Mahâdeva divides this sûtra into two, closing the first of them by सम्भारेषु · — वसिष्ठस्य त्वा व्रतपते व्रतेनादधऽइतीमं मन्त्रं यजमानो जपति आदधऽइत्यात्मनेपदसामर्थ्यात् क्रियाशून्यत्वाच्च · यथर्षि यथा यस्य ऋषिस्तथा तस्य प्रयोगः · कश्यपगोत्रिणः कश्यपस्य त्वा व्रतपते भृगुगोत्रिणः भृगोष्टेति भृगूणां त्वेति वा · न भृगूणां त्वा देवानां व्रतपते सूत्रे देवानामित्यपठितत्वात् । अध्वर्योर्मन्त्रद्वयमित्यन्ये · तन्न · सम्भारेष्विति सूत्रेण व्यवधानात् क्रियापदस्यात्मगामित्वात् अकर्मकरणस्य मन्त्रस्य जपसंज्ञत्वाच्च Mahâd. ३) यथर्षिग्रहणेन शाखान्तरपरिपठितमार्षेयं गृह्यते · यद्यङ्गिरा अङ्गिरसां त्वा देवानां व्रतपते व्रतेनादधऽइति यदि भृगवः भृगूणां त्वा देवानां व्रतपते व्रतेनादधऽइति भार्गवाङ्गिरसव्यतिरिक्तानाम् आदित्यानां त्वा देवानामिति · एवं हि शाखान्तरे पठ्यते Karka. ४) राजन्यशब्देन मूर्धाभिषिक्तो गृह्यते Mahâd. राजन्यग्रहणेन च कैश्चिदभिषिक्तो गृह्यते अनभिषिक्तः क्षत्रिय इति · तच्चायुक्तम् यत्कारणं क्षत्रियायां ब्राह्मणाज्जातो राजन्य इति स्मर्यते तस्मात्स एव ग्रहीतव्यः Karka. ५) देवानामित्यत्रापि हि पठ्यते Karka. ६) See schol. at १. १. ११. pag. १४, २४.

रथन्तरं गायेति प्रेष्यति ॥ ६ ॥[१] न ज्ञायते कः प्रैषे को वा प्रैषार्थ ऽइत्यत आह ·

गानमध्वर्योः ॥ ७ ॥[२] अत्राधाने सामगानमध्वर्योः स्यात् समाख्यानात् यतो[३]ऽध्वर्युवेदे सामगानं विहितम् सामवेदस्तु उत्पत्तिमात्रम् · प्रैषार्थस्य प्रधानभूतत्वाच्च । एवं प्राप्तऽआह ·

ब्रह्मा वा वेदयोगात् ॥ ८ ॥ वा निरासे · नाध्वर्युः किं तु ब्रह्मा सामानि गायति । कुतः वेदयोगात् ब्रह्मणो हि सामवेदेन योगोऽस्ति[४] ग्रहणाधारणारूपेण यतस्त्रिवेदस्यैव ब्रह्मत्वे विनियोगः ।

युक्तत्वाच्चाध्वर्योः ॥ ९ ॥ अध्वर्योः पदार्थान्तरेषु युक्तत्वाच्च ब्रह्मैव गायति सामगानेऽधिक्रियते[५] · अत एव सूत्रान्तरम् प्रस्तोता परिसामानि गायति अग्न्याधेये सौत्रामण्यां च ब्रह्मेति[६] ।

इध्मेनोद्धरणमुपयम्य ॥ १० ॥ पालाशवैकङ्कतादिपरिधिवृक्षसम्बन्धिसप्तविंशतिकाष्ठप्रभृत्यपरिमितकाष्ठकेन त्रियूनबद्धेन इध्मेन गार्हपत्ये प्रदीप्तेन आहवनीयस्य उद्धरणं कर्तव्यम् · उपयम्य उपयमनीभिर्मृत्तिकाभिः क्वचित्पात्रान्तरस्थाभिः प्रदीप्तस्येध्मस्याधस्तादुपगृह्य[७] तं मृत्तिकासहिते कर्परे आधाय । अग्रे- (१७) इध्मपूर्वार्धस्य ग्रहणाविधानादत्र मूलस्यादीपनं कार्यम् ।

यथैनं धूम उपेयात् ॥ ११ ॥ यथा धूम एनं यजमानमुपगच्छेत् · अनेन प्रकारेण यजमानो धूममनुगच्छेदिति विधीयते · अथवा व्यजनादिना तथा यत्नः कर्तव्यः ।

वामदेव्यमिति प्रेष्यति ॥ १२ ॥ प्रदीप्तमिध्ममुपयम्य वामदेव्यं गायेति ब्रह्माणमध्वर्युः प्रेष्यति ।

अश्वः पुरस्ताद्युवा तदभावेऽयुवाश्वाभावेऽनड्वान् ॥ १३ ॥ उद्धरणे क्रियमाणे अश्वः अग्नेः पुरस्तादग्रतो याति · युवा तरुणः पूर्ववाट् · मन्थनकाले य

---

[१] कर्तृभेदात्प्रैषे यजमानः Mahâd. [२] स्ववेदविहितत्वात् Mahâd. [३] ? ततो २.
[४] ब्रह्मणोऽपि ह्यध्वर्युवेदविहितकर्मयोगोऽस्ति · वेदत्रयविहितं हि ब्रह्मणः अतः समाख्यातस्तत्रापि घटते Karka. [५] ? गायति । अत एव साम° २. [६] ? Thus Karka, who quotes the same passage. ब्रह्मणेति २. [७] °गृहीत्वा २.

आहृतोऽश्वः स एवात्रापि प्रकृतत्वात् · तेन मन्थनकालऽएवैतत्पदत्रयम् तदा चानुत्पन्ने[1] अश्वमानयेति प्रैषाभावः अनभिधानात् न चोक्तः प्रकृतित्वादिति ।

सम्भारानधिष्ठाप्य दक्षिणपूर्वपादेन प्राञ्चं नीत्वावर्त्य स्थापयति ॥ १४ ॥ एवं प्राङ्मुखेऽश्वे अग्रतो नीयमाने आहवनीयखरसमीपं प्राप्य प्राङ्मुखस्यैवाश्वस्य दक्षिणपूर्वपादेनाग्निमदक्षिणचरणेनाहवनीयखरस्थान्हिरण्यादिसम्भारानधिष्ठाप्य अश्वपादेनाक्रमय्य तमश्वं प्राञ्चं नीत्वा तत आवर्त्य प्रदक्षिणावर्तनेन प्रत्यङ्मुखं कृत्वा संमुखं स्थापयति । अत्र हि उत्तरतोऽश्वस्य नीयमानत्वाद्दक्षिणेन पादेनाक्रमणमुक्तम् अत एवोखासम्भरणे (१६.२.१८) अश्वस्य दक्षिणेन नीयमानत्वादग्निमः सव्यपादः संनिहित इति सव्येनैव पिण्डस्याक्रमणं कर्तव्यम् ।

बृहदिति प्रैष्यति ॥ १५ ॥ अश्वं प्रत्यङ्मुखमवस्थाप्याध्वर्युर्बृहद्गायेति ब्रह्माणं प्रैष्यति ।

अग्निना पदं द्विरुपस्पृश्य तृतीयेनादधाति द्वितीयेन प्रथमेन वा भूर्भुवः स्वरिति (३.५) पूर्ववत् ॥ १६ ॥ इध्मस्थेनाग्निना खरमध्ये सम्भारस्योपरि कृतमश्वस्य पदं पदमुद्रां द्विवारं स्पृष्ट्वा तृतीयेनोपस्पर्शनेन तमग्निं तत्राश्वपदे स्थापयति अथवाश्वपदं सकृदुपस्पृश्य अथवा प्रथमेनैवोपस्पर्शनेन सह । पूर्ववदिति[2] अमुष्य त्वेत्यादि (८) लभ्यते ।

पुरस्तात्परिक्रम्येध्मपूर्वार्धं[3] गृहीत्वा द्यौरिव भूम्नेत्याह (३.५) ॥ १७ ॥[4] ततः स्थापनानन्तरं यजमानोऽग्नेः पुरस्तात्परिक्रम्य इध्मस्याग्रभागं हस्तेनालभ्यादाय जपति ।

आयं गौरिति (३.६) चोपनिष्ठते सार्पराज्ञीभिः ॥ १८ ॥[5] चशब्दाद्यजमान एव · तिसृभिः सर्पराज्ञ्या दृष्टाभिः ।

---

1) ? °नङ्गान्पत्ते२ 2) पूर्ववच्छब्देन च यथर्षीति लभ्यते Karka. पूर्ववद्गार्हपत्यवत् Mahâd. 3) पूर्वार्ध्यं Karka. 4) तच्चैतद्यजमानः करोति इध्मपूर्वार्धान्वारम्भण इति (४.१०.३) अन्वारम्भोपदेशात् तस्य च याजमानत्वात् (१.१०.१२) · मन्त्रलिङ्गाच्च अग्निमन्नादमन्नाद्यायादधऽइति Karka. 5) आहवनीयम् · सार्पराज्ञीसंज्ञकाभिर्ऋग्भिः Mahâd. सार्पराज्ञीग्रहणं च संव्यवहारार्थम् सार्पराज्ञीर्न वा कुर्यादिति (४.१०.३) Karka.

दक्षिणाग्निमादधाति ॥ १९ ॥ गार्हपत्यादग्नेरेकदेशमादाय दारुभिर्ज्वलन्तं दक्षिणाग्निखरे स्थापयति · अत्र शाखान्तराद्धुत्वः अमुष्य त्वेति च भवति · आपस्तम्बः लौकिकमग्निमाहृत्य मथित्वा वा द्वितीयया व्याहृत्या दक्षिणाग्निमादधातीति । यदि च गार्हपत्यागारे पूर्वदिने स्थापितोऽग्निर्दक्षिणा संहृतो भवति अन्वाहार्यपचनोऽयं करिष्यतऽइति बुद्ध्या तदा तमेवानीय भुव इत्यादिना दक्षिणाग्निखरे स्थापयति · तदुक्तम् (४. ८. १५) दक्षिणा वा सञ्चरेदन्वाहार्यपचनश्चेदिति · अस्मिन्पक्षे स एव नित्यो दक्षिणाग्निः सर्वदा धार्यते ।

सभ्यं च निर्मथ्य ॥ २० ॥ [1] ततो गार्हपत्यवत्सभ्यसंज्ञमग्निं निर्मथ्य चकारादादधाति सभायां स्थापयति · सभ्यावसथ्ययोर्गार्हपत्यवदाधानमिति परिशिष्टोक्तेः (निगम° २३) · सभायां भवः सभ्यः ।

गां दीव्यध्वमित्याह ॥ २१ ॥ यजमान ऋत्विजः प्रति प्रैषमाह । इदं द्यूतं सभ्याङ्गम् [2] सभ्यस्य प्रस्तावात् धारणोपस्थानमत इत्यग्रेऽपि (२२) सभ्याङ्गस्यैवोपदेशाच्च · अतः पुनराधेये न भवति तत्र सभ्यस्य विद्यमानत्वादिति कर्कः [3] तत्रापि सभ्यस्योत्सर्गे कृते भवत्येव ।

---

१) क्षत्रियस्य नियतसभाकार्यत्वात्क्षत्रियविषयं सभ्याधानमिति श्रीश्रनन्तः Mah. २) दीव्यति(:) क्रीडार्थः · गां पणं कृत्वा द्यूतं रमध्वमित्यर्थः · बहुवचनोपदेशात्प्रकृतत्वाच्च ऋत्विजोऽभिधीयन्ते द्यूतस्य कर्तृत्वेन · तच्चैतद्द्यूतं सभ्याङ्गम् सभ्यस्य प्रकृतत्वात् (घततत्वात् Cod.) उपरितनसूत्रे च (मूचेव Cod.) तद्धर्मोपदेशात् Karka. बहुवचनत्वादृत्विज एव प्रति (अतो Cod.) प्रैषो यजमानस्येति प्राप्ते दीवनं ब्राह्मणानां न भवति नाक्षैः क्रीडेदिति याज्ञवल्क्यनिषेधात् (१. १३८) · द्यूतप्रकृतौ राजसूयद्यूते ब्राह्मणानामदृष्टत्वाच्च तच्च राजा राजभ्रात्रऽइत्यादौ (५. ४. ४. १६-१९) राजा राजभ्राता सूतो वा स्थपतिर्वा ग्रामणीः सजातश्च तेषामेकैकस्माऽएकैकं युगं निदध्यात् कृतयुगादिक्रमेण तेन सजाताय कलियुगं भवति · [अत] एते द्यूतकर्तारश्च क्षत्रियादयो न ब्राह्मणाः क्षत्रियाणामुचितत्वात् · क्षत्रियाणामृत्विक्कर्मण्यनधिकाराद्प्रकृता द्यूतकर्तारो (? °राद्प्राकृताद्द्यूत° Cod.) भवन्ति ऋत्विजो द्यूतं कुर्वन्तीत्यादिवचनाभावात् · सभाद्यूतस्य च (? समाद्यूतं च Cod.) क्षत्रियाणामेव दृष्टत्वात्सभ्याधानं क्षत्रियस्यैवात्र भवतीति गम्यते · अक्षनिवपनोत्तरं गां दीव्यध्वमिति प्रकृतौ (५. ४. ४. २३) दृष्टत्वादत्रापि तथैव भवतीति युक्तम् अतः सभ्यमन्थनादारभ्य स्थापनान्तं द्यूतं भवति द्यूतस्य सभ्याङ्गत्वात् । अथवा गां दीव्यध्वमित्यत्र गोशब्दस्त्वग्निवाची · दिवुधातोः स्तुत्यर्थत्वात् अग्नेः स्तुतिरेव भवति · तत्रायं गौरिति तृचेन (३. ६-८) अग्न्युपस्थानं यजमानेन कर्तव्यम् प्रैषस्वधर्म्णा कतव्य इति · अर्हार्थेऽप्येकस्मिन्साधु बहुवचनम् यजमानस्येष्टत्वात् एकस्या एव पूजनार्थे बहुवचनं स्यादिति यास्कोक्तेश्च Mah. ३) सभ्याङ्गत्वं (? °त्वे Cod.) च पुनराधेये न भवत्ये-

धारणोपस्थानमतः ॥ २२ ॥ अत एवारभ्य सभ्यस्य धारणमुपस्थानं च यावज्जीवं कर्तव्यम् । अत इत्युक्तत्वात् तनूहविषां संवत्सरषण्मासादिकालान्तरेऽनुष्ठानेऽपि सभ्यस्य धारणम् अनशित्वा प्रातर्मुहूर्तः सभ्यस्येत्येतदुपस्थानं (४. १५. ३३) च ॥ ॥ नवमी कण्डिका ॥ ९ ॥ ॥

अथ पद्धतिः ॥

ततोऽग्निं यज्ञियदारुभिर्ज्वलन्तं कृत्वा गार्हपत्यखरे स्थापयति · तत्र मन्त्रः ओं भूर्भुवः आदित्यानां त्वा देवानां व्रतपते व्रतेनादधऽइति · येषामङ्गिराः प्रवरो भवति तेषाम् अङ्गिरसां त्वा देवानामिति स्थापनमन्त्रः येषां च भृगुः प्रवरस्तेषाम् भृगूणां त्वा देवानामिति भृग्वङ्गिरोव्यतिरिक्तानाम् आदित्यानां त्वा देवानामित्येव भवति · वरुणस्य त्वेति क्षत्रियमात्रस्य मन्त्रः · इन्द्रस्य त्वा व्रतपतऽइति राज्ञः क्षत्रियस्य · मनोष्ट्वा ग्रामण्यो व्रतपतऽइति वैश्यस्य · ऋभूणां त्वा देवानां व्रतपतऽइति रथकृतो मन्त्रः । ततो रथन्तरं गायेति ब्रह्माणं प्रेष्यति · ततो ब्रह्मा रथन्तरं साम गायति । ततोऽपरिमितकाष्ठं त्रियूनबद्धमिध्मं गार्हपत्ये मूलभागेऽधिश्रयेत् · ततः प्रदीप्तमिध्ममुद्यम्योपयमनीभिर्मृद्भिः कर्परस्थाभिरधस्तादुपयम्याहवनीयखरं प्रति नयति · अश्वश्च पुरस्तादग्रतो नीयते · यजमानश्च धूममनुगच्छति · गमनप्रारम्भऽएव वामदेव्यं गायेति प्रैषः ब्रह्मणो वामदेव्यगानम् । तत आहवनीयखरसमीपे गत्वोपविश्याश्वस्य पूर्वदक्षिणपादेनाहवनीयखरे न्युप्तान्सम्भारानधिष्ठाप्याक्रमय्य ततोऽश्वं प्राञ्चं नीत्वा प्रदक्षिणमावर्त्य संमुखं स्थापयति · ततो बृहद्गायेति प्रैषः ब्रह्मणो बृहत्सामगानम् · ततोऽध्वर्युरग्निनाश्वस्य पदं द्विर्वारमुपस्पृश्य तृतीयेनोपस्पर्शनेनाग्निं स्थापयति द्वितीयेन वा प्रथमेन वा · तत्र मन्त्रः ओं भूर्भुवः स्वः आदित्यानां त्वेति · तत्संनिधावेवोपयमनीरुपनिवपति · ततो यजमानोऽग्नेः पुरस्तात्परिक्रम्योपविश्येध्मस्य पूर्वार्धं गृहीत्वा द्यौरिव भूम्नेति (३. ५) मन्त्रं जपति · तत उत्थायायं गौरित्याद्याभिस्तिसृभिः (३. ६-८) सार्पराज्ञीभिरुपतिष्ठते · अत एवेध्मपूर्वार्धस्य ग्रहणा-

---

व विद्यमानत्वादेव सभ्यस्य · यद्यपि च तनूंहवींषि कालान्तरे क्रियन्ते तथापि तु सभासनमत एवारभ्य कर्तव्यम् Karka.

विधानादिध्ममूलस्यादीपनम् । ततोऽध्वर्युर्गार्हपत्यात्कर्परेणाग्निमादाय ज्वलन्तं दक्षिणाग्निं खरे स्थापयति भुवः आदित्यानां त्वेति । ततो गार्हपत्यवदेव सभ्यस्य मन्थनम् · ततो यजमानो गां दीव्यध्वमित्यृत्विजः प्रेष्यति · ततो ब्रह्मादय ऋत्विजो विहारस्योत्तरत[1] आनडुहं चर्मास्तीर्य तस्योपर्यधोमुखं कांस्यपात्रं निधाय पञ्च कपर्दकान्हस्ते गृहीत्वा समेन जयामि विषमेण जीयसऽइत्युक्त्वा कांस्यपात्रस्योपरि चतुर्वारं प्रक्षिपन्ति · तदलाभे शलाकादिभिर्वा द्यूतं कुर्वन्ति · ऋत्विज एव दीव्यन्ति न यजमानः तस्य प्रेषणे कर्तृत्वात् · ततस्तां गां तेभ्य ऋत्विग्भ्यो दद्यात् अस्मिन्द्यूते पणीकृतां गां ब्रह्मणे होत्रे अध्वर्यवे अग्नीधे च समविभागेनाहं सम्प्रददऽइति द्यौस्त्वेति प्रतिग्रहमन्त्रः · ततो दारुभिर्ज्वलन्तं सभ्यं स्थापयति भूर्भुवः आदित्यानां त्वेति · अतः प्रभृति सभ्यस्य धारणमुपस्थानं च सदा कार्यम् ॥ ॥ १ ॥

इति चतुर्थस्य नवमी कण्डिका ॥ ॥

श्यैतवारवन्तीययज्ञायज्ञियानीति च प्रेष्यति ॥ १ ॥ चकारात्सभ्याधानानन्तरम् श्यैथानि गायेति ब्रह्माणमध्वर्युः प्रेष्यति · एवमेकवारमेव त्रयाणां प्रेष इति केचित् · अपरे तु श्यैतं गाय वारवन्तीयं गाय यज्ञायज्ञियं गायेति क्रमेण तत्तद्गानानां प्रेषत्रयमाहुः तथा सति प्रेषप्रेषार्थयोरानन्तर्यमनुगृहीतं भवति ।

दक्षिणेनाग्नीन्परीत्योदगुत्सृजति ॥ २ ॥ अध्वर्युः प्रदक्षिणं सर्वानग्नीन्परिक्रम्य परिगत्याश्वमुदक् उदीच्यां दिश्युत्सृजति · दक्षिणेनेति ग्रहणान्नेतरथावृत्तिः ।

ऋतुनक्षत्रसम्भारसामवपनचातुष्प्राश्यजागरणेध्मपूर्वाधान्वारम्भणसार्पराज्ञीर्न वा कुर्यात् ॥ ३ ॥[2] एतानि अग्न्याधेये कुर्यात् न कुर्याद्वेति विकल्पः स-

---

१) °जः अग्निभ्य उत्तरत Chamb. 622. २) ऋत्वादिविकल्पार्थमिदमुक्तम् । ऋतौ तावत् ते वाऽएतऽऋतव इति प्रकृत्याह तस्माद्यदैवैनं कदा च यज्ञ उपनमेदथाग्नीऽआदधीतेति (२. १. ३. ९) तथा यदि वैनं अजोपनमेदथादधातीति ऋत्वनादरः · तस्मात् नक्षत्र ऽआदधीतेति नक्षत्रविषयोऽनादरः · नक्षत्रानादरे चामावास्यायां नियम इति सम्प्रदायः तत्पुनर्नातीव युक्तारूपम् यत्कारणममावास्या नक्षत्रं च भेदेन विहिते · कृत्तिकादिष्वादधीतेति नक्षत्रविधानम् तदनादरे चाकृत्तिकादिष्वपीति गम्यते · तथा चाह यद्यु° तदुपेत्सेत (२. १. २. १९) · एवं सति अमावास्यायामकृत्तिकादिष्वप्याधानं भवत्येव । सम्भारेषु

वेषां विहितप्रतिषिद्धत्वात् · सामसु वपने च शाखान्तराद्विकल्पः । अग्निहोत्रस्य वैकल्पिकत्वमाशङ्क्य निराकरोति ·

**अग्निहोत्रं च तूष्णीं-श्रुतेः पूर्णाहुत्यन्ते ॥४॥** अत्राग्निहोत्रशब्दः सायंप्रातर्विहितनित्याग्निहोत्रधर्मातिदेशार्थः · चकारो न वा कुर्यादित्यस्यानुकर्षणार्थः तेनाग्निहोत्रं च जुहुयात् न वा जुहुयात् होतव्यमग्निहोत्रं न होतव्यमग्निहोत्रमिति शाखान्तरे विधिप्रतिषेधयोः श्रवणात् · तदनुपपन्नम् तूष्णीं-श्रुतेः तूष्णीमेवात्राग्निहोत्रहोमस्य श्रुतत्वात्[1] यदि जुहोत्ययथा कुर्यादथ न जुहोत्यग्निः परापतेत्तस्मात्तूष्णीं जुहुयादिति · अतो न विकल्पः । तदिदमग्निहोत्रं नित्यात्कर्मान्तरमाधानाङ्गम् नाम्ना तद्धर्मकम् ततश्च तद्वदेव सायमादि प्रातरन्तमेकं कर्म प्रचक्षत ऽ इत्यादिवचनात्सायारम्भं प्रातरपवर्गमिदमेकं कर्म · ततश्चात्रैकस्मिन्नेव काले सायम्प्रातर्विहितस्य प्रयोगद्वयस्य विधानात्कालभेदाभावादङ्गानि परिस्तरणपर्युक्षणादीनि सकृदेव कर्तव्यानि प्रधानाहुतयश्च भेदेन[2] । तत्रैवं कर्तव्यम् प्रातर्होमकालसंनिकर्षात्तत्र प्रातर्होमधर्माः होमश्चात्राध्वर्युकर्तृकः । तत्रायं क्रमः (४.१३.१२-१४.२६) · यजमानस्य संचरेण प्रवेशनम् तूष्णीमेवाचमनम् अध्वर्योः कूर्चनिधानम्[3] त्रयाणामग्नीनां परिस्तरणम् प्राक्संस्थं पर्युक्षणम् धारा च संज्ञयैवाग्निहोत्र्या दोहनम् अङ्गाराणामुत्तरतो निरूहणम् पूर्वेणाहवनीयं दुग्धानयनम् अधिश्रयणम् अवज्योतनम् अपामासेकः पुनरवज्योतनम् उत्तरतो निधाय त्रिरुद्वासनम् वैकङ्कतस्रुक्स्रुवप्रतपनम् पाणिना संमार्गः पुनः प्रतपनम्

---

विहितप्रतिषेधाद्विकल्पः नैवैकं चनेति वचनात् (२. १. १. १४) । सामस्वपि वालोऽग्निस्तेजो-वन्ति सामानि तस्मान्न गेयानीति । वपनेऽपि शाखान्तराद्विकल्पः । चातुष्प्राश्येऽपि चातुष्प्राश्यमोदनमिति विधाय यद्वा अस्य ब्राह्मणा इति (२. १. ४. ४) विकल्पः । जागरणमपि विधायोच्यते तद्वपि काममेव स्वप्यादिति (२. १. ४. ७) । इध्मपूर्वार्धान्वारम्भणे च पूर्वार्धमुल्मुकानामित्युक्त्वाह स यद्दीति (२. १. ४. २८) । सर्पराज्ञ्युपस्थानमपि अथ सर्पराज्ञ्या इति विधायाह तस्मान्न सर्पराज्ञ्या इति (२. १. ४. २९) Karka.

1) न स्येतौ विधिप्रतिषेधौ · तूष्णींहोमप्रशंसैषा यदि जुहो°ष्णीं जुहुयादिति Karka.
2) तच्चैतदग्निहोत्रं सायारम्भं प्रातरपवर्गं प्रयोगद्वयपरिसमापनम् · आग्नेयो सायमाहुतिः सौरी प्रातराहुतिः प्रधानभूते · अत्र चैककालत्वादङ्गानि तन्त्रेण · प्रधानाहुती तु चतुर्गृहीतेनाग्नेयीं हुत्वा पात्रान्तरे तदुन्नीय चतुर्गृहीतान्तरेण सौरीं शेषमेकीकृत्योत्तराहुतिरिति · तच्चैतत्पूर्णाहुत्यन्ते भवति Karka. 3) ? पूर्वनि° २.

संज्ञयैव यजमानं पृच्छति तथैवानुज्ञा चतुर्गृहीतस्योन्नयनम् जमदग्नीनां पञ्चावत्तस्योन्नयनम् समिध उपरिधारणम् स्रुचमादाय गार्हपत्यस्योपरिष्टान्नीत्वा मध्ये निगृह्योदृह्योपविश्य तूष्णीं समिदाधानम् अग्निं ध्यात्वा पूर्वाहुतिहोमः शेषस्य पात्रान्तरे तत्रैव स्थापनम् · गार्हपत्यं प्रत्यागत्य ततः पूर्ववदेव चतुः पञ्चकृत्वो वोन्नीय तथैवागत्य पुनः समिधं हुत्वा सूर्यं ध्यात्वा मध्ये होमः उभयशेषं[1] समासिच्य तत्रेणोत्तराहुतिः तूष्णीं कूर्चे निमार्जनम् दक्षिणात उत्तानहस्तनिधानं च अपां स्पर्शः · गार्हपत्यहोमे समिधमाधाय एकैकं स्रुचं पात्रान्तरऽउन्नीय तृतीयं स्रुवं गृहीत्वा प्रथमोन्नीतेन सह तूष्णीं प्रथमाहुतिं जुहोति ततश्चतुर्थं गृहीत्वा द्वितीयोन्नीतेन सह द्वितीयां जुहोति · एवं दक्षिणाग्नाविति · शेषभक्षादिकं च पर्युक्षणान्तं सर्वं सकृदेव तूष्णीमध्वर्युः करोति · नाग्न्युपस्थानम् होममात्रोपदेशात् आचमनम् अतीत्य निष्क्रमणमिति । तदेवंविधमग्निहोत्रं पूर्णाहुत्यन्ते पूर्णाहुतिहोमानन्तरं भवति नेदानीम् । तामेव पूर्णाहुतिमाह ·

पूर्णाहुतिं जुहोति निरुप्याज्यं गार्हपत्येऽधिश्रित्य स्रुक्स्रुवं च संमृज्योद्वास्योत्पूयावेक्ष्य गृहीत्वान्वारब्धऽएवत्‍ सर्वत्र स्वाहेति ॥५॥ पूर्णया स्रुचा आहुतिः पूर्णाहुतिः वक्ष्यमाणाया आहुतेः संज्ञा · घृतेन स्रुचं पूरयित्वा होतव्या। प्रथममाज्यं निरुप्य पात्रान्तरादाज्यस्थाल्यां प्रक्षिप्य ततो गार्हपत्यस्योपरि तामाज्यस्थालीं निधाय । ततः स्रुक्स्रुवं संमृज्य चं अग्रे[2] दर्भैः स्रुवम् ततः स्रुचः ·न सह · सूत्रे च अल्पाक्षरत्वात्स्रुचः पूर्वं निर्देशः · स्रुगत्र पालाशी जुहूः[3] स्रुवश्च खादिरः · संमार्गश्च[4] यथा दर्शपूर्णमासयोर्वेदाग्रैरन्तरतः प्राक् मूलैर्बाह्यैः प्रत्यगिति (२.६.४६) । तत उद्वास्य गार्हपत्यस्योपरिष्टादाज्यस्थालीं गृहीत्वोत्तरतः खराद्बहिर्भूमौ निधाय । उत्पूय साग्राभ्यां दर्भपवित्राभ्यामाज्यस्थालीस्थमाज्यमुत्पूतं कृत्वा । अवेक्ष्य तस्याज्यस्यावेक्षणं कृत्वा । गृहीत्वा आज्यस्थाल्याः स्रुवेण[5] गृहीत्वा स्रुचः पूरणं कर्तव्यम् । ततोऽन्वारब्धे यजमाने स्वाहेत्येतेन मन्त्रेणा-

---

1) ? उभयसशेषं २. 2) ? चात्र २. 3) होमसम्बन्धाद्वैकङ्कती स्रुक् स्रुवस्त्वविशेषितत्वात्खादिर एव Karka. 4) ? र्गस्य २. 5) स्रुवस्य संमार्जनविधानाद्ग्रहणार्थता Karka.

हवनीये पूर्णाहुतिं जुहोति · ग्रहणान्तं गार्हपत्यसमीपऽएव कर्तव्यम् · ततः एकां समिधमुपसंगृह्याहवनीयसमीपमागत्य परिस्तरणासमिदाधाने कृत्वा होमः कार्यः　पूर्णाहुतेः प्रकृतिभूतायामनुद्धृताभ्यस्तमयाहुतौ तथा दर्शनात्　गार्हपत्यऽआज्यमधिश्रित्येत्यादौ (१२.४.४.६) · सूत्रे दक्षिणं जान्वाच्येति तु प्रागभिहितत्वान्नोक्तम्[1] . एवं सर्वत्रोपविष्टहोमेष्वपि · अत्र चाग्निर्देवता तेनाग्निं ध्यात्वा स्वाहाकारेण होमः ।　एवं सर्वत्र · यत्र-यत्राव्यक्तं जुहोतीति विधानम् यथा　यूपाहुतिं जुहोति (६.१.४) षड्ढोतारं जुहोति (६.१.३६) सावित्राणि जुहोतीति　तत्र सर्वत्र एवम् निरुप्याज्यमित्यादि सर्वं भवति ।

वरं ददामीति वाग्विसर्जनम् ॥६॥　पूर्णाहुतिहोमानन्तरं यजमानः · ततोऽध्वर्यवे वरं ददाति ब्रह्मणे च　तयोरत्रोपयुक्तत्वात् ।　आचार्येण पूर्णाहुतितोऽन्यास्वाहुतिषु धर्मप्राप्तिरभिहिता　श्रुतौ तु अनुद्धृताभ्यस्तमयाहुतावेते धर्माः पठिताः सन्ति (१२.४.४.६) ।

द्वादशाहान्ते तनूहवींषि निर्वपति मासे द्वितीये तृतीये षण्मास्ये संवत्सरे सद्यो वा न वा ॥७॥　आधानदिवसात् द्वादशेऽहनि तनूहवींषि अग्नये पवमानायेत्यादीनि निर्वपति · सद्यो वा पूर्णाहुत्यनन्तरं तस्मिन्नेवाहनि · एते सर्वे समविकल्पाः · शाखान्तरे द्व्यहे त्र्यहे चतुरहेऽर्धमासेऽपि · द्वादशाहान्तऽइत्यत्रान्तग्रहणात्सर्वत्र द्व्यहान्ते मासान्ते इति ज्ञेयम् न्यायस्य समत्वादिति । अथवा तनूहवींषि न निर्वपति पूर्णाहुत्यन्तमेव करोति । तनूहवींषि वक्ष्यमाणानां हविषां संज्ञा · तान्याह ·

अग्नये पवमानाय प्रथमा ॥८॥[2]　इष्टिः　अष्टाकपाला · अग्न्यन्वाधानादि कर्मापवर्गान्तम् · तत्र ब्रह्मवरणाभावः　अन्यत्सर्वं भवति　पूर्वमेव ब्रह्मणः प्रकृतत्वात्[3] ।

अग्नये पावकायाग्नये शुचये च[4] द्वितीया ॥९॥　द्वितीया इष्टिर्द्विहवि-

---

१) see ३.७.५.　२) नात्र ब्रह्मवरणमिति केचित् तदयुक्तम् ब्रह्मवरणस्य दर्शपूर्णमासाङ्गत्वात् Mahâd.　३) ? प्रकृतत्वात् २.　४) च is wanting with Karka.

ष्का भवति · अष्टाकपालौ । केवलबर्हिः प्रथमं हविर्भवति समानबर्हिषी ऽउत्तरे (२. २. १. १६) ।

अदित्यै चरुस्तृतीया ॥ १० ॥[1] शाङ्खायनसूत्रादाद्ययोरिध्मयोरष्टादशेध्मकाष्ठकानि तृतीयायां विंशतिरिति · तथा च शाङ्खायनः (२. ३. १६-१७) पाञ्चदश्यं च सामिधेनीनाम् सप्तदशादित्यायामिति । एकस्तनूहविषामयं पक्षः · पक्षान्तरमाह ·

आग्नेय एव वा पुरस्तादादित्यस्य ॥ ११ ॥ अथवा आदित्यस्य चरोः पुरस्तादाग्नेय एव केवलो भवति न प्रागुक्ते द्वेऽइष्टी · तस्मिन्पक्षे द्वेऽएवेष्टी न त्रिष्टित्रयम् । शाङ्खायने आदित्येऽप्युपांशुत्वं पठ्यते (शा॰ २. ३. १५) · कात्यायनेन तनूहविषामेवोपांशुत्वमुक्तमस्ति (४. ५. १) तनूहविष्ट्वं च पवमानादीनां त्रयाणामेव नादित्यस्य स एतास्तिस्रस्तनूरित्यादिश्रवणात् (२. २. १. १४) । अधुना उभयपक्षेऽपि तनूहविषां दक्षिणामाह ·

षड्दक्षिणाः प्रतिविभज्य ददाति द्वादश चतुर्विंशतिं वा ॥ १२ ॥ षड्गाः प्रतीष्टि विभज्य ददाति न तु प्रतीष्टि समुदिताः[2] । द्वयोः तिसृस्तिसृः षट्षट् द्वादश-द्वादश · केवलाग्नेयपक्षे विभागासम्भवात्सर्वासां तत्रैव दानम् ।

भूयसीश्च यथाश्रद्धम् ॥ १३ ॥ यावतीषु श्रद्धा भवति · ततश्चतुर्विंशतेरूर्ध्वमा परार्ध्यात्[3] यावतीर्दातुमिच्छेत् · गुणविशेषे फलविशेष इति (१. १०. ११) फलभूयस्त्वं कामयमानस्य भवत्येवाधिकदानेऽपि श्रद्धा तथा सति अधिकदानगुणातिशयादग्नयो महावीर्या स्युस्तेषु क्रियमाणानि सर्वाणि कर्माणि महाफलानि स्युरिति ।

धेनुरादित्यस्य ॥ १४ ॥[4] ता एताः षडादिदक्षिणाः इध्मङ्गम् न त्वाधानाङ्गम् उलूखलमुसलादिवत्तस्य समृद्ध्यर्थमेव दक्षिणायाः श्रुतत्वात् (२. २. २. १-२) तेन इध्मकरणपक्षे दक्षिणाया अप्यभावः ।

---

१) न चेयं तनूहविषां मध्ये पठ्यते तेनास्या उपांशुत्वं न भवतीति सम्प्रदायः · शाङ्खायनशाखायां तूपांशुत्वमस्याः पठ्यते (शा॰ २. ३. १५) Karka. अदितेरुपांशुत्वं सम्प्रदाये शाङ्खायनपाठात् न कर्के इयं तनूहविःसंज्ञका भवति तृतीयेत्युक्ते Mahâd. (!) २) ? ॰दिताः २. ३) ॰र्धात् ? see Vâj. S. १७. २. ४) सवत्सा गौर्धेनुरुच्यते Mahâd

अनृतातिथ्यपनोदपूतिदार्वाधानर्बीसपक्वनाव्युदकानि वर्जयेत् ॥ १५ ॥ [1] सायंकाले समागतस्य अतिथेर्निराकरणम् । दुर्गन्धिदारूणामग्नौ प्रक्षेपणम् पूतिशब्दस्य दुर्गन्धिवाचित्वदर्शनात् · अथवा पूति क्लिन्नम् न क्लिन्नं दार्वादध्यादिति शाखान्तरात् । ऋबीसपक्वम् ऋबीसशब्दः पृथिवीवाची यो ऽयमृबीसे पृथिव्यामिति यास्कोक्तेः (६. ३६) पृथिव्यां यत्पक्वम् तिन्दुकादि । नाव्युदकम् · नौशब्देन नौर्ह वा ऽएषा स्वर्ग्या यदग्निहोत्रमिति (२. ३. ३. १५) श्रुतेरग्निहोत्रमुच्यते तेन अग्निहोत्रार्थमुद्धरणे कृते तत्समाप्तिं यावत् उदकपानं न कुर्यादित्यर्थः [2] · अथवा नावि नौकायां यदुदकम् तस्य पानं न कुर्यादिति · मानवे या अन्तर्नाव्यापः स्युर्न तासामाचामेन्न क्लिन्नं दार्वादध्यादिति । यजमान आधानानन्तरमेतानि यावज्जीवं वर्जयेत् · अनृतम् तस्य वा ऽएतस्याग्न्याधेयस्य सत्यमेवोपचार इति श्रुतेः (२. २. २. १२) तदपराधे श्रौतं प्रायश्चित्तम् · इतरच्छाखान्तरात् । अधिकारित्वाविशेषात्पत्न्या अप्येते नियमा भवन्त्येव ।

ब्रह्मचार्यग्निनित्यधारी क्षीरहोम्यग्निमुपशायी द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः ॥ १६ ॥ यजमान आधानानन्तरं द्वादशरात्रम् अथवा षड्रात्रम् अथवा अन्ततः अन्तिमपक्षे त्रिरात्रम् ब्रह्मचारी भवत् · अग्निनित्यधारी गार्हपत्याहवनीयदक्षिणाग्निसभ्यान्नित्यं धारयेत् · क्षीरहोमी दुग्धेनैवाग्निहोत्रं जुहुयात् · अग्निमुपशायी अग्निसमीप ऽएव भूमौ शयीत । एते नियमाः पुरुषार्थाः · तेन सोमाधाने समारोह्याग्नी ऽइति (७. १. ३६) समारोपस्य क्रत्वर्थत्वात् तेन पुरुषधर्मो

---

१) अनृतातिथ्यपनोद[प्रतिषेध]ः स्मृतिप्राप्त एवानूद्यते नानृतं वदेदिति स्मृतिः (मनु॰ ३.२२१) अप्रणोद्यो ऽतिथिरिति च (याज्ञवल्क्य १.१०७) तदनुवादो ऽयम् न वा ऽआहिताग्निनानृतं वदितव्यमिति (२. २. २. २०) तदेतन्नातीव युक्तरूपम् यतो ऽनुवादमात्रमनर्थकम् विधौ च प्रवृत्तिविशेषकरत्वम् · तस्मादेवायं सत्यवदननियमः · एवं च तदपचारे श्रौतं स्मार्तं च प्रायश्चित्तम् Karka. २) ऊष्मापक्वमिति केचित् ऋबीसं पिष्टपचनं कंसो ऽस्त्री पानभाजनमित्यमरः (२. १. ३२) marg. २. but the text of Amara has ऋजीषं! — पृथिव्यां यो ऽग्निः स ऋबीसशब्देनोच्यते यो ऽयमृबीसे पृथिव्यामग्निरिति यास्कोक्तेः (६. ३६) Mah. ऋबीसपक्वम् यत्पृथिव्यां गर्ते तिन्दुकादि पाचितम् ऋबीसशब्दश्च पृथिवीवचनो नैरुक्ताभिप्रायात् यो ऽयमृ॰ग्निरिति Karka. ३) अग्निहोत्रार्थमुद्धृते ऽग्नावुदकदानप्रतिषेधः स यदुद्धृते ऽग्नावभ्यागताय नोदकं यावन्न(?) इति · नौशब्दश्चात्र अग्निहोत्रविषयो नौर्ह॰त्रमिति Karka.

ऽग्निनित्यधारित्वं बाध्यते · ततश्च तयोरेव नित्यधृतयोर्गार्हपत्याहवनीययोस्त-त्रारण्योः समारोपः क्रियते अनपवृक्तत्वात् · अत एव पुनराधाने कृते त्रिरात्रादिमध्ये अमावास्यापाते यवाग्वा हवर्थया[1] क्षीरहोमित्वस्य पुरुषार्थस्य बाधः · वरुणप्रघासादिपाते (५.३.१) समारोपेणाग्निनित्यधारित्वस्य च · अत एव नित्यधारित्वविधानात्सायम्प्रातर्होमदर्शपूर्णामासतदन्वारम्भणीयादि सर्वं प्रसङ्गात्तस्मिन्नेव नित्यधृते विहारे कर्तव्यम् प्रतिकर्मोद्धरणमप्रसङ्गऽइत्युक्तत्वात् ॥ ॥ दशमी कण्डिका ॥१०॥ ॥

अथ पद्धतिः ॥

ततः श्यैतं गायेति प्रैषः तद्गानम् · ततो वारवन्तीयं गायेति प्रैषः तद्गानम् · ततो यज्ञायज्ञियं गायेति प्रैषः ततस्तद्गानम् · अथवा समुदित एव यथासूत्रितं प्रैषः[2] श्यैतवारवन्तीययज्ञायज्ञियानि गायेति ब्रह्मणः क्रमेण गानम् । ततः सर्वानग्नीन्प्रदक्षिणं परीत्याश्वमुदगुत्सृजति अनस्तु प्रातरुत्सृष्ट एव । अत्र वसन्तादीनामृतूनां कृत्तिकादीनां नक्षत्राणामभ्युक्षणादीनां सम्भाराणां रथन्तरादिसाम्नां वपनस्य चातुष्प्राश्यस्य जागरणस्येध्मपूर्वाधान्वारम्भणस्य सार्पराज्ञीनां च विकल्पः ॥ ॥ ततः पूर्णाहुतिहोमः । तत्र विधिः । पात्रान्तरादाज्यस्थाल्यमाज्यनिर्वापः गार्हपत्येऽधिश्रयणम् · खादिरस्रुवस्य दर्भैः संमार्गः जुह्वाश्च अग्रैरन्तरतः प्राक् मूलैर्बाह्यतः प्रत्यक् · आज्यस्योद्वासनम् पवित्राभ्यामुत्पवनम् अवेक्षणम् स्रुवेणाज्यं गृहीत्वा स्रुक्पूरणम् स्रुचोऽधस्ताद्द्वाजनादिनिधानं यथा स्कन्दनं न भवति · तत एकां पालाशीं प्रादेशमात्रीं समिधमुपसंगृह्योत्थाय गत्वाहवनीयस्योत्तरत उपविश्याहवनीयं परिस्तीर्योत्थाय समिधमाधायोपविश्य दक्षिणं जान्वाच्याग्निं मनसा ध्यायन्स्वाहाकारेण यजमानेऽन्वारब्धे जुहोति इदमग्नयऽइति त्यागः । ततो यजमानो वरं ददामीति मन्त्रेण वाचं विसृजते · ततो यजमानोऽध्वर्यवे वरं ददाति अस्याः पूर्णाहुतेः समृद्ध्ये वरं दक्षिणां ब्रह्मणेऽध्वर्यवे चाहं सम्प्रददऽइति · वरशब्देनात्र यस्मै दीयते तदभि-

---

1) ? ॰ग्न्यहवर्थवा २. ॰ग्वाहवर्थवस्य २. 2) समुदितानामेव प्रैषः Chamb. 622.

लक्षितं यद्यजमानेन दातुं शक्यते वस्त्रहिरण्यधान्यादि तदुच्यतऽइति हरिस्वामिनः ॥ ततोऽध्वर्युरेव तूष्णीमग्निहोत्रं जुहोति[1] । तत्र पूर्वं यजमानो गार्हपत्यदक्षिणाग्न्योरन्तरालेनाहवनीयसमीपऽआगत्याप्रदक्षिणमाहवनीयं परीत्य स्वस्थानऽउपविश्य तूष्णीमाचामति पत्न्यप्येवमेवागत्य स्वस्थानऽउपविश्याचामति । ततोऽध्वर्युरपरेणाहवनीयं कूर्चं प्रागग्रमुदगग्रं वा निदधाति · तत आहवनीयस्य परिस्तरणम् पुरस्तात्पश्चाच्चोदगग्रैर्दर्भैः दक्षिणत उत्तरतश्च प्रागग्रैः पुरस्तात्प्रथमम् ततः प्रदक्षिणमुदक्संस्थम् · ततो गार्हपत्यस्य परिस्तरणम् ततो दक्षिणाग्नेः । ततो गार्हपत्यस्य पर्युक्षणम् · ततो दक्षिणाग्नेः · ततो गार्हपत्यादारभ्याहवनीयं यावदुदकधारां संततां निनयति · तत आहवनीयस्य पर्युक्षणम् । ततोऽशूद्रेण पुंवत्सामग्निहोत्रीं गां दोहयति संकेतादिना दोहने प्रेरयति · सा च गौर्विहारं दक्षिणेन प्राङ्मुखी वोदङ्मुखी वा स्थाल्यां त्रैवर्णिककृतायामूर्ध्वकपालायां मार्त्तिक्यां दोह्यते । ततोऽध्वर्युर्गार्हपत्यस्य कतिपयानङ्गारानुत्तरतः पृथक्कृत्वा तत आहवनीयं पूर्वेण तद्दुग्धमन्तरतः कुर्वन्नाहृत्य[2] तेषूत्तरतः कृतेष्वङ्गारेष्वधिश्रयति · ततो ज्वलता एकेन दर्भतृणेन स्थाल्या उपरि धृतेन दुग्धमवज्योत्य स्रुवेण दुग्धमध्ये उदकमवनीय पुनस्तथैवावज्योत्योत्तरत उद्वास्य निदधाति हस्तं विमुच्य पुनरादाय तत उत्तरतो निदधाति पुनरप्यादाय ततोऽप्युत्तरतो निदधाति · एवं त्रिरुदगुद्वास्य वैकङ्कतं स्रुक्स्रुवं प्रतप्य पाणिना संमृज्य पुनः प्रतप्य यजमानं संकेतादिना पृष्ट्वा तिष्ठता यजमानेन तथैवानुज्ञातोऽग्निहोत्रहवण्यां सव्यहस्तगृहीतायां स्रुवेण चतुरुन्नयति पञ्चावत्तिनः पञ्च स्रुवानुन्नयति · ततः स्रुवं स्थाल्यां[3] मुक्त्वा पालाशादियज्ञियवृक्षसम्बन्धिनीं प्रादेशमात्रीं समिधं प्रागग्रां स्रुग्दण्डस्योपरि अङ्गुल्याद्यन्तरितां धारयन्गार्हपत्यस्योपरि समीपऽएव स्रुचं धृत्वा ततो मुखमात्रे स्रुचं धारयन्नाहवनीयं प्रति हरति · ततो गार्हपत्याहवनीययोर्मध्ये स्रुचं नीचैः कृत्वा पुनर्मुखमात्रऽएव धारयित्वाहवनीयं प्राप्य तत्समीपऽउत्तरत उपविश्य सव्यहस्ते स्रुचं कृत्वा तूष्णीं समिधमाधाय प्रदीप्तायां समिधि द्व्यङ्गुलं समिधो मूलादतिहृत्याग्निं ध्यात्वा गृहीतस्य चतुर्थांशं तूष्णीं जुहो-

---

1) see ४. १३. १२—१४. २७. 2) °न्नाहृत्य Chamb. 622. 3) ? स्थाल्या १.

ति इदमग्नयऽइति यजमानस्य त्यागः । ततः स्रुक्स्थमवशिष्टं पयः पात्रान्तरे कृत्वा तत्रैव निधाय प्रत्यागत्य पुनः संकेतादिना यजमानं पृष्ट्वा तथैव तिष्ठता यजमानेनानुज्ञातः पुनश्चतुरुन्नीय तथैव समिधमुपरि धारयंस्तथैवाहवनीये पुनः समिधमभ्याधाय सूर्यं मनसा ध्यायंश्चतुर्थांशं हुत्वा पूर्वमन्यत्र पात्रान्तरे कृतं पयः स्रुचि निनीय तां स्रुचं कूर्चे निधाय गार्हपत्यमवेक्षते · पुनः स्रुचमादाय पूर्णाहुतेरुत्तरतः स्रुवत्रयपर्याप्तामाहुतिं प्रजापतिमुद्दिश्य जुहुयात् इदं प्रजापतयऽइति यजमानस्य त्यागः । ततः स्रुचं द्विरूर्ध्वामुत्क्षिप्य कूर्चे निदधाति · ततः स्रुगग्रं प्राक्प्रत्यक्चोपमृज्य कूर्चे निमार्ष्टि तूष्णीम् · पुनरुत्तानेन हस्तेन तथैव द्विरुपमृज्य कूर्चस्य दक्षिणतो भूमौ पाणिमुत्तानं निदधाति · ततः उदकं स्पृष्ट्वा गार्हपत्यं गत्वा तत्र समिधमाधाय क्वचित्पात्रऽएकं स्रुवं गृहीत्वा पात्रान्तरे द्वितीयं स्रुवं स्थापयित्वा तृतीयं स्रुवं गृहीत्वा पूर्वगृहीतेन सह तूष्णीं गार्हपत्ये जुहोति इदमग्नये गृहपतये रयिमते पुष्टिपतयऽइति मनसा त्यागः · ततश्चतुर्थं स्रुवं गृहीत्वा द्वितीयवारं पात्रान्तरस्थापितेन सह जुहोति इदं प्रजापतयऽइति त्यागः · ततो दक्षिणाग्नावेवमेव वारद्वयं जुहोति इदमग्नयेऽन्नादायान्नपतय ऽइदं प्रजापतयऽइति त्यागौ · ततः स्रुचं गृहीत्वा बहिर्निष्क्रम्यानामिकया स्रुक्स्थं दुग्धं गृहीत्वा प्राश्याचम्य पुनरनामिकयैव गृहीत्वा प्राश्नाति · तत आचम्य स्रुचः सकाशात्सर्वं पयो हस्तेन गृहीत्वा प्राश्य दुग्धलिप्तं हस्तं जिह्वया सकृन्निर्लेढि आस्वादयति · तत आचम्याहवनीयसमीपऽआगत्य स्रुचि दक्षिणहस्तेनोदकं निनीय स्रुचोत्तरत उदकमुत्सिञ्चति तूष्णीम् ततोऽपसव्यं कृत्वा स्रुचमुदकेन पूरयित्वा दक्षिणत उत्सिञ्चति पितृतीर्थेन तूष्णीम् · ततः सव्यं कृत्वाप उपस्पृश्य पुनस्तृतीयवारं स्रुचं पूरयित्वा प्रागुदीच्यां दिश्यूर्ध्वमुदकमुत्क्षिपति · पुनः स्रुचं पूरयित्वा कूर्चस्थानऽआहवनीयमपरेण प्राक्संस्थं त्रिर्निषिञ्चति · ततः स्रुक्स्रुवमाहवनीये प्रतप्य वेदिमध्ये निधाय गार्हपत्यदक्षिणाग्न्याहवनीयेषु क्रमेण तिस्रस्तिस्रः समिध आदधाति तूष्णीम् · अत्राग्न्योरुपस्थानं न भवति · ततो गार्हपत्यदक्षिणाग्न्याहवनीयानां क्रमेण पर्युक्षणम् · ततः पत्नीयजमानौ वाचं विसृज्याचम्याहवनीयं प्रदक्षिणं परीत्य गार्हपत्यदक्षिणाग्नीऽअन्तरेण यथाप्रविष्टं नि-

ष्क्रामतः । इति तूष्णीमग्निहोत्रहोमः समाप्तः ॥ ॥ अथ तनूहवींषि लिख्यन्ते ॥ तत्राग्नये पवमानाय प्रथमा इष्टिर्भवति । तत्र विशेषः । उद्धरणाभावः · त्रिष्वप्यग्निष्वग्न्यन्वाधानम् · ब्रह्मवरणाभावः तदभावाद्धुतजपस्याप्यभावः · चतुरासनम् · ब्रह्मा समन्त्रकमहे दैधिषव्य इत्यादिनासनं संस्कृत्योपविशति · ततो यजमानस्य व्रतग्रहणम् · प्रणीताप्रणयनम् · पात्रासादने अष्टौ कपालानि दक्षिणार्थे तिस्रो गावः षड्वा द्वादश वा त्रयोदशप्रभृति परार्धपर्यन्तमिच्छासंख्या [1] वा अष्टादशेध्मकाष्ठानि पञ्चदश्यं च सामिधेनीनामिति (२. ३. १६) शाङ्खायनोक्तेः अन्यत्सर्वं प्रकृतिवत् · ग्रहणे अग्नये पवमानाय जुष्टम् · प्रोक्षणे अग्नये पवमानाय त्वा जुष्टम् · प्राशादाने अग्निं पवमानं गच्छ · अवबाधने इदमहं पञ्चदशेन वज्रेणेति · उत्तमप्रयाजत्यागे इदमग्नये सोमायाग्नये पवमानाय देवेभ्य इत्यादि · प्रधानयागे. देवतापदमात्रमुपांशु अग्नये पवमानाय उपांशु अनुब्रूहीति प्रथमस्थानेन अग्निं पवमानम् उपांशु यजेति प्रथमस्वरेण इदमग्नये पवमानाय · ततः स्विष्टकृदादि · प्राशित्रादि सर्वम् [2] · दक्षिणालम्भमन्त्रे ऊर्गसीति पदस्य स्थाने त्रिगवमसीति वा षड्गवमसीति वा द्वादशगवमसीति वा त्रयोदशगवम् पञ्चदशगवम् शतगवम् सहस्रगवमित्यादि परार्धपर्यन्तं [3] विकल्पेन ज्ञेयम् अन्यत्प्रकृतिवत् ब्राह्मणा इमा वस्तिस्रो गावः प्रतिगृह्णीतेति एवं षट्पक्षे षड्गाः दक्षिणाः द्वादश गाः दक्षिणाः शतं गाः सहस्रं गा इत्यादि अत्र भूयसीदानं चतुर्थं पक्षान्तरमेव न तु भूयसीनां षडादिभिः सह समुच्चयः · व्यूहने अग्नेः पवमानस्योज्जितिम् अग्निः पवमानस्तमपनुदत्विति · प्रस्तरत्यागे इदमग्नये सोमायाग्नये पवमानाय देवेभ्य इत्यादि · शेषं प्रकृतिवत्कर्मापवर्गान्तम् । इति प्रथमेष्टिः ॥ अथ द्वितीया द्विहविष्का । अग्नये पावकायाष्टाकपालः पुरोडाशः अग्नये शुचयेऽष्टाकपालः । तत्र विशेषः । अग्न्यन्वाधानम् चतुरासनम् समन्त्रकं ब्रह्मोपवेशनम् व्रतग्रहणम् प्रणीतादि · पात्रासादने षोडश कपालानि दक्षिणापक्षाः पूर्वेष्टिवत् अष्टादशेध्मकाष्ठानि पञ्चदश्यं च सामिधे-

---

[1]) परार्ध्य Chamb. 622. [2]) सर्वं चतुर्धाकरणसहितं Chamb. 622. [3]) ? परार्ध्य° I.

नीनामिति शाङ्खायनवचनात् (२. ३. १६)[१] अन्यत्प्रकृतिवत् · ग्रहणे अग्नये पावकाय जुष्टम् अग्नये शुचये जुष्टम् · प्रोक्षणे अग्नये पावकाय त्वा जुष्टम् अग्नये शुचये त्वा जुष्टम् · विभज्यालम्भे इदमग्नेः पावकस्य इदमग्नेः शुचेः · प्राणदाने अग्निं पावकं गच्छ अग्निं शुचिं गच · अवबाधने इदमहं पञ्चदशेन वज्रेणेति · उत्तमप्रयाजत्यागे इदमग्नये सोमायाग्नये पावकायाग्नये शुचये देवेभ्य इत्यादि · प्रधानयागे द्वयोरपि यागयोरुपांशु देवतापदम् अन्यदुच्चैः अग्नये पावकाय उपांशु अनुब्रूहि अग्निं पावकम् यज अग्नये शुचये अनुब्रूहि अग्निं शुचिम् यज इदमग्नये [पावकाय इदमग्नये] शुचये · स्विष्टकृदादि · प्राशित्रादि सर्वम् · दक्षिणालम्भे दाने च पूर्वेष्टिवत् · व्यूहने अग्नेः पावकस्याग्नेः शुचेरुज्जितिमित्यादि · शेषं कर्मापवर्गान्तं प्रकृतिवत् । इति द्वितीयेष्टिः ॥ अथ तृतीयोच्यते । तत्रादित्यै चरुरेकं हविः । तत्र विशेषः । अग्न्यन्वाधानम् ब्रह्मवरणाभावः चतुरासनम् ब्रह्मोपवेशनं समन्त्रकम् व्रतग्रहणाम् प्रणीताप्रणयनादि · पात्रासादने कपालस्थाने चरुस्थाली उपवेषाभावः दक्षिणार्थे धेनुः विंशतिरिध्मकाष्ठानि सप्तदशादित्याधामिति शाङ्खायनसूत्रात् (२. ३. १७) पात्र्या अभावः मेक्षणम्[२] शेषं प्रकृतिवत् · ग्रहणे अदित्यै जुष्टम् · प्रोक्षणे अदित्यै त्वा जुष्टम् · चरुधर्मा अन्वारम्भणीयायामुक्ताः · पात्र्यङ्गुलिप्रक्षालननिनयनयोरभावः · प्राणदाने अदितिं गच्छ · [अवबाधने सप्तदशेन वज्रेणेति · उत्तमप्रयाजत्यागे इदमग्नये सोमायादित्या ऽइति][३] · प्रधानयागे शाङ्खायनसूत्राद्देवतापदमुपांशु (२. ३. १५) अदित्यै अनुब्रूहि अदितिं यज इदमदित्यै · ततः स्विष्टकृदादि · भागचतुर्धाकरणादि सर्वं भवति · दक्षिणालम्भे धेनुरस्यूर्जमिति अस्या इष्टेः समृद्ध्यै धेनुं दक्षिणां ब्रह्मणे इत्यादि ब्राह्मणा इयं वो धेनुः प्रतिगृह्णीतेति · व्यूहने अदित्या उज्जितिम् अदितिस्तमपनुदत्विति · प्रस्तरत्यागे इदमग्नये सोमायादित्यै देवेभ्य इत्यादि · अन्यत्कर्मापवर्गान्तं सर्वं प्रकृतिवत् ॥ उद्धरणाब्रह्मवरणावर्जमग्न्यन्वाधानादि कर्मापवर्गान्तं सर्वेष्टिषु सर्वं भवति । कर्माप-

---

१) द्वे पात्र्यौ is added in Chamb. 622. २) शृतावदानस्थाने मेक्षणं Chamb. 622. ३) From Chamb. 622., deest in १.

वर्गान्ते शतं ब्राह्मणान्भोजयेत् आधाने च पशौ शतमिति परिशिष्टात् · अस्य श्रौताग्नीनामाधानकर्मणः समृद्ध्यर्थं यथासम्पन्नेन तृप्तिपर्यन्तभोजनपर्याप्तेनान्नेन शतं ब्राह्मणानहं तर्पयामीति प्रयोगः । ततोऽन्यानि वस्त्राणि परिधाय परिहिता न्यक्तवासांस्यध्वर्यवे ददाति यजमानः आत्मवाससी पत्नीवाससी चाध्वर्यो तुभ्यमिति । ततो गृहे विद्यमानस्याजस्याग्नीधे दानम् संस्थिते दद्यादिति कण्वपाठात् इममजमग्नीत्तुभ्यमिति । ततो यजमानस्य तिलकादिमाङ्गल्यम् आशीर्वादादि ॥ ॥ अथवा त्रयाणां तनूहविषां स्थाने केवल आग्नेयोऽष्टाकपालः पुरोडाशो भवति · तत्र षड्वा द्वादश वा चतुर्विंशतिर्वा पञ्चविंशतिप्रभृतिपरार्ध्यसंख्या वा यथाश्रद्धं गावो दक्षिणा भवन्ति · अत्रापि देवतापदमुपांशु अन्यत्सर्वं तनूहविर्वत् · इत्येका इष्टिः । अथ द्वितीयेष्टिः · अदित्यै चरुः पूर्ववद्भवति न कोऽपि विशेषः · शाङ्खायनसूत्रे त्वस्मिन्पक्षे आग्नेय्यां प्रथमायामिष्टौ वैकल्पिकोऽयं विशेषः · तथा च सूत्रम् (२.३.१-१०) आग्नेयी वा द्वयोः पूर्वाज्येन तनूर्देवताः पुरस्तात्पुरोडाशस्याग्निं पवमानं पावकं च शुचिं चोपरिष्टादिति तेनात्राज्यभागानन्तरं प्रधानयागात्पूर्वमग्नये पवमानाय यागः उपांशुयागवत् प्राक्स्विष्टकृतोऽग्नये पावकायाग्नये शुचये चाज्येन यागद्वयम् · उपांशु देवतापदम् उपांशुयाजवत् · ततः स्विष्टकृदादि · अस्मिन्पक्षे अनेनैव क्रमेणोत्तमप्रयाजादिषु देवतानां संकीर्तनं कर्तव्यम् अग्नेः पवमानस्याग्नेः[1] पावकस्याग्नेः शुचेरुज्जितिम् अग्निः पवमानो ऽग्निः[2] पावको ऽग्निः शुचिस्तमपनुदन्विति व्यूहने · शेषं पूर्ववत् · इदमग्नये सोमायाग्नये पवमानायाग्नये पावकायाग्नये शुचये देवेभ्य इत्युत्तमप्रयाजे प्रस्तरहोमे च त्यागः । शाङ्खायनानां दक्षिणाविशेषः षड्दक्षिणा द्वादश वा[3] अश्वः शतमानरथवासोऽजाश्वेति (२.३.१८-२१) एतासु तिसृष्विष्टिषु समं विभज्य दीयन्त इति तद्भाष्ये · छन्दोगानां तु विशेषः धेनुमनड्वाहं वत्सतरीं वत्सतरमजं पूर्णपात्रं तत्प्रथमायामिष्टौ दद्यादेवमितरयोरन्यत्राजपूर्णपात्राभ्यामिति[4] · तत्र द्वन्द्वैकवद्भावेनैकवचनान्तं दक्षिणापदमूर्गसीत्यस्य स्थाने प्रयोज्यम् धेन्वनडु-

---

१) °ग्नेरग्नेः Chamb. 622. २) °ग्निरग्निः Chamb. 622. ३) चतुर्विंशतिर्दक्षिणा द्वादश षड्वाश्वः शत° Çânkh. ४) दद्यात्तथोत्तरयोरन्यत्रा° Lâṭyâyana ४. १२. ११-१२.

द्वत्सतरीवत्सतराजपूर्णपात्रमसीति [१]) प्रथमायाम् धेन्वनडुद्वत्सतरीवत्सतरमसीत्यु-त्तरयोः · शाङ्खायनानामपि द्विगवाश्वशतमानमसीति प्रथमायाम् द्विगवरथवा-सोऽसीति द्वितीयायाम् द्विगवाजमसीति तृतीयायामिति ॥ ॥ अथ यजमानस्य नियमा उच्यन्ते । आधानानन्तरं यजमानो यावज्जीवमनृतं न वदेत् · अतिथि-मागतं नापनुदेत् · दुर्गन्धिकाष्ठस्याग्नौ प्रक्षेपं न कुर्यात् अथवा पूतिदारुशब्देन क्लिन्नं दारु कथ्यते न क्लिन्नं दार्वादध्यादिति शाखान्तरात् · पृथिव्यां गर्ते पक्कं तिन्दुकादि नाश्नीयात् · अग्निहोत्रार्थमुद्धृतेषूदकदानं पानं च वर्जयेदिति कर्कः अथवा नावि नौकामध्ये यदुदकम् तस्य पानं यजमानो न कुर्यात् या अन्तर्नाव्यापः स्युर्न तासामाचामेदिति तथा अन्तर्नाव्यपां नाश्नीयादिति च सूत्रान्तरे · एता-वद्यावज्जीवम् । ततो द्वादशरात्रं वा षड्रात्रं वा त्रिरात्रं वा यजमानो ब्रह्मचारी स्यात् गार्हपत्याहवनीयदक्षिणाग्नीनां नित्यं धारणं कुर्यात् दुग्धेनैवाग्निहोत्रं जुहुयात् अग्निसमीपे भूमौ शयीत । एते नियमास्त्रिरात्रादिकालपर्यन्तं शक्त्यपे-क्षया ज्ञेयाः · तत्राधिककालपक्षाश्रयणे फलाधिक्यं भवति ॥ पुनराधाने चाधानवत्सर्वं भवति · तत्र केनचिन्निमित्तेन विनष्टेष्वग्निषु विनष्टानग्नीनुत्सृज्य [२]) पुनराधानं कुर्यात् · ब्रह्मचर्याग्निधारणाद्यो नियमा अपि भवन्त्येव ॥ ॥१०॥

इति चतुर्थस्य दशमी कण्डिका ॥ ॥

अग्न्याधेयमुक्तम् । इदानीं श्रुतिक्रमानुसारेण पुनराधेयमुच्यते ·

पुनराधेयमाधानाप्रतिज्ञातस्य ॥ १ ॥ [३]) आधानेन लक्षणेन यस्याप्रतिज्ञा-तमप्रकाश्यमुपजायते स आधानाप्रतिज्ञात इति भर्तृयज्ञाचार्याः । यस्याधानान-न्तरमेव [४]) प्रतिज्ञातमपगतं स आधानाप्रतिज्ञात इति कर्कः [५]) । अत्र एवं श्रूयते यस्याधानमपार्थकं [६]) स्यात्स पुनरादधीतेति ततो योऽग्नीऽआधाय सर्वज्यानिं जीयते स पुनरादधीतेति । सूत्रार्थस्तु · प्रतीतः प्रसिद्धो ज्ञातः प्रतिज्ञातः प्रादयो

---

१) ? °दुद्वत्स° १. २) °ग्निषु स्थितानुत्सृज्य Chamb. 622. ३) अग्नीनामाधा-नमप्रतिज्ञातं नष्टं यस्य स आधानाप्रतिज्ञातः Mahâd. ४) Thus Karka. °मेवा २. ५) °मनर्थकं Karka.

गताद्यर्थे प्रथमयेति समासः · यो धनवृत्ताध्ययनादिमत्तयातिप्रसिद्धः पुरुषः स प्रतिज्ञात इत्युच्यते न प्रतिज्ञातोऽप्रतिज्ञातः आधानलक्षणेन निमित्तेनाप्रतिज्ञातः आधानाप्रतिज्ञातः यः प्रागाधानाल्लब्धप्रतिष्ठोऽपि अग्न्याधानसमनन्तरं संवत्सरादर्वागेव वित्तमानादिहानेर्लाभाभावाद्वाप्रतिष्ठितोऽप्रसिद्ध-इव स्यात् अप्रतिष्ठ-इव भवेत् तस्येदं दुष्टाग्न्युत्सर्गपूर्वकमदुष्टाग्न्युत्पादकं पुनराधेयसंज्ञकं कर्म भवति। तथाथर्वणे पठ्यते आधानाद्वृद्धिहानिश्चेदर्वाक्संवत्सराद्गोह्निरण्यामग्निहोत्रमुत्सृज्य पुनर्वस्वोः पुनरादधीतेति। शाङ्खायनश्च (२.५.१) काम्यं पुनराधेयमज्ञानानस्येति आधानसंस्कृतेष्वग्निषु पुत्रादिकामप्राप्त्यर्थानि कर्माणि कुर्वन्नपि अग्निदोषाद्यः कामान्न प्राप्नोति सोऽज्ञानानः तस्य दुष्टाग्निपरित्यागेनादुष्टाग्न्युत्पादकतया काम्यं कामेभ्यो हितं पुनराधेयं भवतीत्यर्थः। तेन भर्तृयज्ञकृतं व्याख्यानं युक्तमिवाभाति। अथवा अयमर्थः। प्रतिज्ञातशब्दः प्रियवचनः एतद्वास्य प्रतिज्ञाततमं धामेति (८.६.३.२४. १.१.१.२२) दर्शनात् हरिस्वामिभिर्माधवाचार्यैश्च तथैव व्याख्यातत्वाच्च · अतः प्रतिज्ञातं प्रियम् न प्रतिज्ञातमप्रतिज्ञातमप्रियम् आधानसमनन्तरमेव सर्वस्वहानिपुत्रमरणप्रतिष्ठाहान्याद्यनिष्टदर्शनेनाधानमप्रतिष्ठितमप्रियमनिष्टफलत्वादवलम्भं यस्य स आधानाप्रतिज्ञातः तस्य। अयमेवोज्ज्वल(:) सूत्रार्थः। फलान्तरमाह ·

राज्ययशस्कामस्य वा ॥२॥

त्रिरात्रावरमग्नीनुत्सृज्य ॥३॥ त्रिरात्रमवरं निकृष्टमन्तिमपक्षभूतं यस्य स त्रिरात्रावरः कालः · तेनान्तिमपक्षे त्रिरात्रमग्नीन्गार्हपत्याहवनीयदक्षिणाग्निसभ्यानुत्सृज्य पुनराधेयं भवति · अत एव त्रिरात्रावरमित्युपदेशाच्चतूरात्रपञ्चरात्रषड्रात्रादि संवत्सरपर्यन्तं पुनराधेयस्य पुरस्तादग्नीनामुत्सर्गः। बहुवचनस्य त्रिष्वग्निषूत्सृष्टेषु चरितार्थत्वात्त्रयाणामेवोत्सर्गः न सभ्यस्येति कर्कः[1] · सर्वानिति युक्तमविशेषात् · शंस्यावसथ्ययोस्तूष्णीमुत्सर्गः कार्यः बहुवचनोपदेशात्।

सद्यो वा ॥४॥ अथवा समानेऽहन्येव यस्मिन्नहनि पुनराधेयं क्रियते

---

१) अतश्च सभ्यस्यानुत्सर्गः Karka.

तस्मिन्नेवाह्नि प्रातरग्नीनुत्सृज्य पुनरादधीतेति · अस्मिन्पक्षे विशेषं वक्ष्यति व्रीह्यपूपम° सद्यश्चेदिति (८)।

पुनर्वस्वोः ॥५॥ पुनर्वसुनक्षत्रे पुनराधेयं भवति ।

वर्षासु मध्यन्दिने वा ॥६॥ वर्षासु ऋतौ · अथवा मध्यन्दिने मध्याह्नकाले · मध्यन्दिनस्य वर्षाभिः सह विकल्पो न समुच्चयः यदा मध्यन्दिनोऽथ वर्षा इति (२.२.३.१) मध्यन्दिनस्य वर्षाकालत्वसम्भवात् ।

कुशैराधानम् ॥७॥ न दारुभिः (४.१.१) · नेध्मेन (४.१.१०)।

व्रीह्यपूपमर्कपलाशयोः पक्वं गार्हपत्यस्थाने निदधात्येवमाहवनीयस्य यावत् सद्यश्चेत् ॥८॥ चेद्यदि सद्योऽग्नय उत्सृष्टाः (४) तदायं विशेषः · व्रीहिमयमपूपमर्कपत्रयोः कपालस्थानीययोर्लौकिकाग्निना वा आवसथ्याग्निना वा पक्वं शृतं गार्हपत्यस्थाने निदधाति एवं यावं यवमयमपूपमाहवनीयस्थाने · स्मार्तान्यच भूसंस्कारान् श्रौतमुल्लेखनं च कृत्वापूपस्थापनं कार्यम्[1] ततोऽन्वारब्धेऽभ्युक्षणादि । रात्र्यन्तर्धानपक्षेऽपूपनिधाननिषेधात्सद्यश्चेदित्युक्तम् ।

आग्नेयः पञ्चकपाल उपांशु प्रागुत्तमादनुयाजात् ॥९॥[2] अत्र पूर्णाहुत्यनन्तरतनूहविषां स्थाने इदमुच्यते · आग्नेयमेवेति (२.२.३.१४) एवकारकरणादन्येषां तनूहविषां निरासः ।

तद्वर्जं वा ॥१०॥[3] अथवा उत्तमानुयाजं वर्जयित्वान्यत्सर्वं कर्मोपांशु भवति उत्तमानुयाजमात्रस्यैवोच्चैष्ट्वविधानात् (२.२.३.१७) तस्माद्यमेव पक्षः ।

अग्नीनिति वा प्रथमे प्रयाजेऽनुयाजे च ॥११॥[4] अग्नीन्यजेति वा प्रयोज्यम् वा समिधो यजेति देवान्यजेति वा ।

---

[1]) स चायमपूपः प्राक् सम्भारेभ्यः स्थाप्यते · सम्भारेषु ह्यग्निनिधानं विहितम् भूर्भुव इति सम्भारेष्विति (४.१.१) · न चापूपस्य सम्भारैः सह विकल्पो धर्ममात्रत्वात् · अतः परिसमूहनादीन्पञ्च पदार्थान्कृत्वा अपूपस्थापनम् · सद्यःपक्षे चापूपौ भवतः न रात्र्यन्तरपक्षे · अपूपं प्रकृत्याह पूर्वाभ्यामे°र्द्धम इति (२.२.३.१३) पुनस्तन्निराकरणायाह रात्रिभिर्व्यैवान्तरितौ भवत इति (ibid). Karka. [2]) उत्तमानुयाजवर्जं स आग्नेय उपांशु भवति Ss. [3]) उत्तमानुयाजवर्जं सर्वं कर्मोपांशु भवति Ss. तेनोपांशु चरन्तीति (२.२.३.१६) · चरणशब्दे च सर्वस्योपांशुताचार्येणोक्ता चरणशब्दे सर्वमिति (३.७.८) Karka. [4]) एवं श्रूयते प्रयाजान्प्रकृत्य स आश्राव्याह समिधो यजेति अग्नीन्यजेति त्वेव ब्रूयात् (२.२.३.१८) तेन

आज्यभागो द्वितीयोऽग्नये पवमानायेन्दुमते वा ॥ १२ ॥[1] प्रथम आज्यभाग आग्नेय एव · द्वितीयस्तु अग्नये पवमानाय अग्नये इन्दुमते वा कर्तव्यः न सोमायेति ।

हिरण्यं दक्षिणानड्वान्वाग्न्याधेयिकीश्चेहछ्रुतेः ॥ १३ ॥ अस्मिन्नाग्नेये हिरण्यं दक्षिणा अनड्वान्बलीवर्दो वा इह्चन्नग्न्याधेयिकीः अग्न्याधेयसम्बन्धिनीः[2] ता वै षड्‌द्द्यादित्यादिकाश्च (२.२.२.३) ददाति अग्न्याधेयिकीर्दत्त्वा पौनराधेयिकीर्ददातीति शाखान्तरेऽउभयीनां श्रवणात् · तत्पुनर्नोपपद्यते यतोऽस्मिन्वाक्ये अग्न्याधेयिकीर्दत्त्वेत्यनुवाद एवायमिति पूर्वमीमांसकैः सिद्धान्तितमस्ति अग्न्याधेयिक्यो यतः पूर्वं दत्ताः[3] अतः पौनराधेयिक्य इति तेनात्र श्रुतिग्रहणं विध्याशङ्कानिरासार्थम् अन्यथा अग्न्याधेयिकीश्चेत्युक्ते शाखान्तरीयवचनमूलं विधित्वमाश्रयणीयं स्यात्[4] ।

अग्न्याधेयवदन्यत्सद्यः ॥ १४ ॥ वासःपरिधानादि पूर्णाहुत्यन्तम् · विशेषमाह इदं च सद्य एव समाने एकस्मिन्नेवाहनि भवति नाग्न्याधेयवद्‌द्यहम् । अत्राग्न्यगारकरणं न भवति तयोर्विद्यमानत्वात्[5] · अत एवारणिप्रदानं च · उक्लासोऽपि न भवतीत्यग्निसंस्कारत्वादिति केचित् · सर्वमेव पुनर्भवतीत्यपरे अदृष्टार्थत्वात् वचनं विना परित्यक्तुमशक्यत्वाच्च । अधुना पुनराधेयस्य पक्षान्तरमाह ·

अपराह्णे मैत्रावरुणी वशानस्तमिते पुरोडाशेडान्तं कृत्वा रात्रिशृतया प्रातश्च-

---

विकल्पाशङ्कया अग्नेनिति वेत्युक्तम् · यद्येवम् अग्नेनित्येवेत्यवधारयितव्यम् स चायं वाचनिको देवताविकल्पः Karka.

1) this sûtra is wanting in Karka's gloss! 2) ? आग्नेयसंब° २. · 3) दत्तः २. 4) श्रुतिग्रहणं (अति° Cod.) समुच्चयविधानार्थमिति केचित् · तदयुक्तम् · अग्न्याधेयिकीर्दत्वा पुनराधेयिकीर्ददा[ती]त्ययमनुवाद एव · अग्न्याधेयिक्यो (आग्न्या° Cod.) हि पूर्वं दत्तास्ततः पुनराधेयिक्यः · श्रुतिग्रहणं च विध्याशङ्कानिवृत्त्यर्थम् Karka. च समुच्चयार्थः · अग्न्याधेयसम्बन्धिनीर्दक्षिणा दद्यान्न वा · दद्याच्छाखान्तरश्रुतेः Mahâd. 5) अग्न्यगारकरणमरणिप्रदानमुक्लासश्च न भवति अनग्निसंस्कारात् Karka. नाग्न्यगारकरणारणिप्रदाने विद्यमानत्वात् · उक्लासोऽपि न भवति संस्कारस्य ज्ञातत्वात् Mahâd.

रन्ति तत आधानम् ॥ १५ ॥ [1] पुनराधेयदिवसात्पूर्वदिनेऽपराह्णे मैत्रावरुणी वशा वन्ध्या गौरालभ्यते : तस्याश्च सूर्यास्तमयात्प्राक् पशुपुरोडाशेडान्तं कर्म कृत्वा रात्रिशृतया वशया रात्रौ विशसनादि अपणान्तं कृत्वा उद्वासनादि प्रातः प्रचरन्ति · ततो वशासमाप्त्यनन्तरं सद्योऽग्नीनुत्सृज्याधानम् पुनराधेयसंज्ञं कर्तव्यम् प्रागुक्तेष्वेव कालेषु । अस्मिन्पक्षे पूर्वदिने मैत्रावरुण्या वशायाः करणविधानात्त्रिरात्रावरमग्न्युत्सर्गो न भवति तत्स्थानमपूपान्तर्धानमपि न भवतीति केचित् सद्यश्चेदित्युक्तत्वाद्भवत्येवेत्यन्ये ॥ ॥ एकादशी कण्डिका ॥ ११ ॥ ॥

अथ पद्धतिः ॥

समाप्तमग्न्याधेयम् अथ पुनराधेयमुच्यते । आधानानन्तरं संवत्सरादर्वागेव यस्य महत्त्वस्य कीर्तिर्हानिर्भवति धनधान्यादिहानिर्वा [2] तस्य पुनराधेयं भवति । पुनराधेयमाधानाप्रतिज्ञातस्येति सूत्रम् · प्रतीतः प्रसिद्धो विख्यातो ज्ञातः प्रतिज्ञातः न प्रतिज्ञातः अप्रतिज्ञातः आधानेन निमित्तेनाप्रतिज्ञातः अप्रसिद्धो ज्ञातः अप्रतिष्ठ-इव ज्ञातः आधानाप्रतिज्ञातः तस्येदं भवतीत्यर्थः · अथवा प्रतिज्ञातं प्रियम् एतद्वास्य प्रतिज्ञाततमं धाम यथा प्रियो वा पुत्रो हृदयं वेत्यत्र (१.१.१.२२) तथा दर्शनात् न प्रतिज्ञातमप्रतिज्ञातम् पुत्रमरणसर्वस्वहानिप्रतिष्ठाहान्याद्यनिष्टफलत्वादाधानमप्रतिज्ञातमप्रियं यस्यासावाधानाप्रतिज्ञातः तस्य पुनराधेयं भवतीत्यर्थः । तथा राज्यकामस्य यशस्कामस्य वा पुनराधेयं भवति । तत्र पुनराधेयकरणदिनात्पूर्वं त्रिरात्रचतूरात्रप्रभृति संवत्सरपर्यन्तमग्नीनामुत्सर्गः कर्तव्यः संवत्सरपरार्ध्यमुत्सृष्टाग्निर्भवतीत्यापस्तम्बः · अथवा सद्योऽग्नीनुत्सृज्य पुनराधेयं कर्तव्यम् । तत्र सभ्यस्योत्सर्गो न भवति · अग्नीनुत्सृज्येति बहुवचनस्य त्रिष्वप्युत्सृष्टेषु चरितार्थत्वादिति कर्कः · अविशेषात्सभ्यस्याप्युत्सर्ग इत्यपरे । तच्च पुनराधेयं वर्षास्वृतौ भवति मध्यन्दिने वा · पुनर्वसुनक्षत्रे भवति । तत्राग्न्याधेयवत्सर्वः सर्वं भवति न ब्रह्म । अमुकनिमित्तं पुनराधेयमहं करिष्य इति

---

1) इदं पश्चात्तरमुच्यते नोत्सर्गो नापूपौ Mahâd. अपराह्णे मैत्रावरुणीं वशामालभ्य रात्रौ श्रपयित्वा प्रातः प्रचारः तत आदधीत · पुनर्वस्वोरेव नान्यत्र · न त्रिरात्रावरमुत्सर्गो नापूपाविति Karka. 2) ? धनाधान्या° 1.

वरणे । तत्राग्न्यगारकरणम् वपनम् अहतक्षौमपरिधानम् गार्हपत्यागारेऽग्नेः स्थापनम् देवाः पितर इति जपः यजमानस्य पूर्वद्वारेण प्रवेशनम् दक्षिणद्वारेण पत्न्याः अग्नेः पश्चात्तयोरुपवेशनम् अरणिप्रदानम् अजबन्धनं वा मानादि वरदानान्तं चातुष्प्राश्यं वा स्थापितस्याग्नेरुपशमनम् वाचं यच्छ पूर्णाहुतेरिति प्रैषः वाग्यमनं यजमानस्य · ततो गार्हपत्यखरे पञ्च भूसंस्काराः पुनस्त्रिरुल्लेखनम् · सभ्योऽग्नय उत्सृष्टाश्चेद्व्रीहिमयमपूपमर्कपर्णयोः कपालस्थानीययोर्लौकिकाग्निपक्वमावसथ्याग्निना वा गार्हपत्यस्थानेऽस्मिन्नवसरे निदधाति · ततोऽन्वारब्धेऽभ्युक्षणादि शर्करान्तम् · तत आहवनीयखरे पञ्च भूसंस्कारान्कृत्वा पुनरुल्लिख्य यवमयमपूपं पूर्वापूपवत्पक्वमाहवनीयस्थाने निधायान्वारब्धेऽभ्युक्षणादि शर्करान्तम् त्रिरात्राग्युत्सर्गपक्षेऽपूपाभावः · ततो दक्षिणाग्निखरे प्रकृतिवच्छर्करान्तम् · सभ्यखरे गार्हपत्यवदपूपवर्जम् · ततो मन्थनादि उद्धासो भवत्येव · कुशैर्ज्वलतोऽग्नेः स्थापनम् इध्मस्थाने कुशैरेवोद्धरणम् · सभ्यमन्थनादि स्थापनान्तं भवत्येव · अन्यदग्निहोत्रहोमान्तं सर्वमग्न्याधेयवत् । ततस्तनूहविषां स्थाने आग्नेयः पञ्चकपालः पुरोडाशो भवति · तत्राग्न्यन्वाधानादि कर्मापवर्गान्तं सर्वमुपांशु भवति उत्तममनुयाजं वर्जयित्वा स तूच्चैर्भवति · तत्र विशेषः · अग्न्यन्वाधानम् ब्रह्मवरणाभावः ब्रह्मणः समन्त्रकमासनसंस्कारपूर्वकमुपवेशनम् व्रतग्रहणम् प्रणीतादि · पात्रासादने पञ्च कपालानि दक्षिणार्थे हिरण्यमनड्वान्वा अष्टादशेध्मकाष्ठानि · ग्रहणे अग्नये जुष्टम् · प्रोक्षणे अग्नये त्वा जुष्टम् · कपालोपधाने आद्यानि चत्वार्युपधाय चतुर्थस्य पश्चात्पञ्चममुपदध्यात् · प्राणदाने अग्निं गच्छ · प्रथमप्रयाजे आश्राव्याग्नीन्यजेत्येव प्रैषः द्वितीयादिषु यज-यजेत्येव · प्रथमे इदमग्निभ्य इति त्यागः इदमग्नयऽइति द्वितीयादिषु त्यागः · त्यागे इदमग्नये अग्नये पवमानायाग्नये अग्निभ्य आज्यपेभ्य इति · शाङ्खायनमते[1] देवेभ्य आज्यपेभ्य इत्येव न त्वग्निभ्य आज्यपेभ्य इति विशेषः · पूर्वेऽपि त्यागाः प्रकृतिवदेव तन्मते · अन्ये त्यागाः प्रकृतिवत् · प्रथम आज्यभाग आग्नेयः द्वितीये अग्नये पवमानायानुब्रूहि अग्निं पवमानं यज इदम-

1) See Çánkh. २.५.११ and २१.

ग्नये पवमानाय अथवा अग्नयऽइन्दुमतेऽनुब्रूहि अग्निमिन्दुमन्तं यज इदमग्नय ऽइन्दुमते · प्रधानयागे अग्नयेऽनुब्रूहि अग्निं यज इदमग्नये · ततः स्विष्टकृदादि · प्राशित्रादि सर्वं भवति · दक्षिणालम्भे हिरण्यमसीति अनड्वानसीति वा ब्राह्मणा इदं वो हिरण्यम् प्रतिगृह्णीत अयं वोऽनड्वान् प्रतिगृह्णीतेति वा · प्रथमानुयाजे अग्नीन्यजेत्येव प्रैषः द्वितीयतृतीययोर्य[ज-य]जेत्येव इदमग्निभ्य इति त्यागाः · व्यूहने अग्नेरुज्जितिम् अग्निस्तमपनुदत्विति · प्रस्तरहोमे इदमग्नयेऽग्नये पवमानाय वा अग्नयऽइन्दुमते वा अग्नये अग्निभ्य आज्यपेभ्योऽग्नये होत्रायेति · अन्यत्कर्मापवर्गान्तं प्रकृतिवत् । तदन्ते शतब्राह्मणभोजनम् · परिहिताहतवस्त्रदानमध्वर्यवे · ब्रह्मचर्याग्निधारणादिनियमा भवन्ति ॥ ॥ अत्र शतपथोक्तं (२.२.३.११-२७) हौत्रं लिख्यते । आचमनादि · आवाहने आवह देवान्यजमानाय अग्निमग्नऽआवह अग्निं पवमानमावह अग्निमिन्दुमन्तमावहेति वा अग्निमावह अग्नीनाज्यपानावह अग्निं होत्रायावहेत्यादि प्राकृतम् । प्रयाजेषु · प्रथमे अग्नीन्यजेत्युक्ते ये यजामहे अग्नऽआज्यस्य व्यन्तू३ वौ३षट् १ ये यजामहेऽग्निमाज्यस्य वेतू३ वौ३षट् २ ये यजामहेऽग्निनाज्यस्य व्यन्तू३ वौ३षट् ३ ये यजामहेऽग्निराज्यस्य वेतू३ वौ३षट् ४ ये यजामहे स्वाहाग्निम् स्वाहाग्निं पवमानम् स्वाहाग्निमिन्दुमन्तमिति वा स्वाहाग्निं स्वाहाग्नीनाज्यपान् जुषाणोऽअग्निराज्यस्य वेतू[३] वौ[३]षट् । अग्निꣳ स्तोमेन बोधयेत्याग्नेयाज्यभागस्य पुरोऽनुवाक्या ये यजामहेऽग्निम् जुषाणोऽअग्निराज्यस्य वेतू३ वौ३षट् · द्वितीय आज्यभागोऽग्नये पवमानाय वा अग्नयऽइन्दुमते वा तत्र प्रथमपक्षे अग्नऽआयूꣳषि पव° हुनो३म् [ये यजाम]हेऽग्निं पवमानम् जुषाणोऽअग्निः पवमान आज्यस्य वेतू३ वौ३षट् द्वितीये पक्षे एह्यू षु ब्रवाणि° डुभो३म् ये यजामहेऽग्निमिन्दुमन्तम् जुषाणोऽअग्निरिन्दुमानाज्यस्य वेतू३ वौ[३]षट् । आग्नेययागे अग्निं तं मन्ये° भरो३म् पुरोऽनुवाक्या ये °हेऽग्निम् सो अग्निर्यो° भरो३म्[1] (१५.४२) वौ३षट् याज्या । स्विष्टकृति[2] अग्ने तमद्या° ओहो३म् (१५.४४) पुरोऽनुवाक्या · ये° हेऽग्निं स्विष्टकृतम् अयाडग्निरग्नेः प्रि[या

---

१) भरा३ १. २) See १.७.३.१०.

धामा]न्ययाऽग्नेः पवमानस्य प्रि° अथवा अयाडग्नेरिन्दुमतः प्रियेति [धामा]न्यया-ऽग्नेः प्रिया° याऽग्नीनामाज्यपानां प्रिया धामानि यक्षद[ग्नेर्होतुः प्रिया° जुषतां] हविः अधा ह्यग्ने क्रतो° भूयो३म्[1] (१५.४५) वौ३षट् [याज्या] । अनुयाजेषु[2] देवं बर्हिरग्नेर्वसुवने वसुधेयस्य वेतू३ वौ[३] कक् १ देवो नराशंसोऽग्नाऽ३[3] वसुव[नि वसुधेयस्य वे]तू३ वौ[३]कक् २ देवोऽग्निः स्विष्टकृदिति प्रकृति-वत् ३ अयमनुयाज उच्चैः अन्यत्सर्वमुपांशु । सूक्तवाके[4]' अग्निर्हविः °कृत अग्निः पवमानो ह[वि] °ष[ता° ध]त °कृत अथवाग्निरिन्दुमान्हवि° षता° धत° कृत अग्निर्ह° कृत अग्नय आज्यपा हविरजुषन्ता° धत्त °क्रत अग्निर्होत्रेणेत्यादि ॥ ॥

एकोऽयं पुनराधेयस्य पक्ष उक्तः · अथ पुनराधेयस्य पक्षान्तरमुच्यते । पूर्वेद्युरप-राह्णे मैत्रावरुणीं वशामालभ्यास्तमयात्पूर्वं पुरोडाशेडान्तं कर्म कृत्वा रात्रौ पशु-विशसनादि श्रपणान्तं कुर्यात् · प्रातर्हुत्वा पृषदाज्यमादयेत्यारभ्य प्रचरणादि कर्मापवर्गान्तं कुर्यात् · ततः सद्योऽग्नीनुत्सृज्य यथोक्तं पुनराधेयमिष्ट्यन्तं कुर्यात् नात्र त्रिरात्रावरमुत्सर्गो नापूपाविति कर्कः । मैत्रावरुण्यां वशायां विशेषः · नि-रूढपशुवद्विगूरणादि कर्मापवर्गान्ता · मित्रावरुणाभ्यां जुष्टं[5] नियुनज्मि मित्राव-रुणाभ्यां त्वा जुष्टमिति प्रोक्षामि · मित्रावरुणाभ्यामुस्राया वपायै मेदसोऽनुब्रू-हि मित्रावरुणाभ्यामुस्राया वपां मेदः प्रेष्य · वपायामाज्यभागौ · पशुपुरोडा-शयागे मैत्रावरुण एकादशकपालः मित्रावरुणाभ्यां पुरोडाशस्यानुब्रूहि मि-त्रावरुणाभ्यां पुरोडाशं प्रेष्य · हविर्यागे मित्रावरुणाभ्यामुस्राया हविषोऽनु-ब्रूहि मित्रावरुणाभ्यामुस्राया हविः प्रेष्य · मित्रावरुणयोर्वनस्पतेरुज्जितिम् मित्रावरुणौ वनस्पतिस्तमपनुदन्त्विति · शेषमनुक्तं निरूढवत् ॥ ॥११॥

इति चतुर्थस्यैकादशी कण्डिका ॥ ॥

पुनराधेयमुक्तम् । इदानीं श्रुतिक्रमानुसारेणाग्निहोत्रं कर्तव्यम् तदनादृत्य शाखान्तरदृष्टक्रमेण तदङ्गभूतमुपस्थानमाह ·

---

१) भूया३ १. २) See १.८.२.११. ३) ग्ना १. ४) See १.१.१.१. ५) जुष्टां ?

सायमाहुत्याऽ हुतायां यजमानोऽग्नीऽउपतिष्ठते वात्सप्रेण ॥ १ ॥ [१] सायमाहुत्यां हुतायां सत्याम् शाखान्तरात् समिदसीति समिदाधानानन्तरम् यजमानो वात्सप्रेण वक्ष्यमाणेन वात्सप्रसंज्ञकेन उपस्थानेन अग्नीऽउपतिष्ठते · काण्वानां [२] समिदसीति समिदाधानमन्त्रसमनन्तरमुपप्रयन्त इत्याद्युपस्थानमन्त्राणां पाठादयं क्रमोऽवसीयते पर्युक्षणात्प्राक् तस्याग्निविसर्गार्थत्वादविसृष्टस्य चोपस्थानार्हत्वात् · अत एव वाग्विसर्गात्पूर्वमुक्तम् वाग्यमस्य कर्तृधर्मस्य सकलप्रयोगार्थत्वादिति ।

न वा ॥ २ ॥ अथवा वात्सप्रेण नोपतिष्ठते · विकल्पः विहितप्रतिषिद्धत्वात् [३]। अत्रोपप्रयन्तोऽअध्वरमित्यत (३. ११) आरभ्य परि ते दूडभ इत्यन्तं (३. ३६) वात्सप्रोपस्थानं समाम्नायक्रमेणैव कर्तव्यम् · तत्र विशेषमाह ·

तिस्रस्त्रिरुपप्रयन्तो (३. ११) ऽस्य प्रत्नाम् (३. १६) परि ते (३. ३६) चित्रावसविति च (३. १८) ॥ ३ ॥ तिस्र ऋचो यथास्थानस्थिता एव त्रिर्जपति · चित्रावसो स्वस्ति तऽइत्यपि स्वस्थानपठितमेव त्रिर्जप्तव्यम् · नामग्रहणादेव त्रित्वे सिद्धे तिस्र इति यद्ग्रहणं स्वस्थानपठितानामेव त्रिर्जपप्राप्त्यर्थम् ।

सं त्वमित्युपविश्य (३. १९) ॥ ४ ॥ उपप्रयन्त इत्यारभ्य (३. ११) स्वस्ति ते पारमशीयेत्यन्तपर्यन्तम् (३. १८) आहवनीयसमीपे तिष्ठञ्जपित्वा अथ चाहवनीयसमीपऽएवोपविश्य सं त्वमग्ने सूर्यस्येति जपति ।

गां गच्छत्यन्ध स्थेति (३. २०-२१) ॥ ५ ॥ मापगातेत्यन्तेन यजमानो गां प्रति गच्छति । गौश्चाग्निहोत्र्येव संनिधानादिति केचित् अन्यापीत्यन्ये · अग्निहोत्रीपक्षे तु पयोहोमपक्षऽएवैतदुपस्थानम् नान्यद्रव्यवाग्वादिहोमपक्षऽइति [४]· अन्यपक्षे सर्वदापीति विशेषः । गोष्ठमुपतिष्ठन्तऽइत्यापस्तम्बः तत्साधुतरम् मन्त्रे बहुवचनस्य दर्शनात् गामित्येकवचनस्य जात्यपेक्षयाप्युपपत्तेः ।

---

[१]) आग्नेयी सायमाहुतिः सौरी प्रातराहुतिरिति · उभयोरप्यग्निहोत्रसंज्ञा · नैते द्वे कर्मणी अग्निहोत्रं जुहोत्येकवचननिर्देशात् · सायमारम्भं प्रातरपवर्गमिदमेकं कर्म Mahâd. यद्यपि च हुतायामित्युक्तम् तथापि तु समिदाधानमन्त्रक्रमानन्तर्यात्तदनन्तरमेव कर्तव्यम् · हुतशब्दश्च हुतप्रायविषयः तथा हुते च धारावर्जमिति (४. १३. १९) Karka. [२]) See Vâj. S. pag. ९५ [३]) See २. ३. ४. ५—६. [४]) एते गमनाभिमर्शने उत्तरे च (८ and ९) पयोहोमपक्षे Mahâd.

संहितेत्यालभते (३. २२) ॥ ६ ॥ गोष्ठे गत्वा गां हस्तेन गृह्णाति ।

गार्हपत्यं गत्वोपतिष्ठतऽउप त्वेति (३. २२-२६) ॥ ७ ॥ ततो गार्हपत्यं प्रति गत्वा अघायतः समस्मादित्यन्तेन मन्त्रगणेन गार्हपत्यमुपतिष्ठते । अत्र गार्हपत्यमुपतिष्ठतऽइति (२. ३. ४. २८) विशेषोपादानात्पूर्वोक्तमुपस्थानमाहवनीयस्येति ज्ञायते अग्नीऽइत्युभयोरग्न्योरुपस्थानविधानात् (१) ।

गां गच्छतीडऽएहीति (३. २७) ॥ ८ ॥ पुनस्तामेव गां प्रति गच्छति ।

काम्या एतेत्यालभते (३. २७) ॥ ९ ॥[1] तां गाम् । अत्र शाङ्खायनः (२. १४. ७) अग्न्युपस्थानस्यानर्थलुप्तं प्रवसञ्जपेदिति · यजमानं जपेत्सर्वम् न वन्ध स्थ न संहिता नेले न काम्या नो दैवः प्रोषितो यच्चनातुरः इति तद्भाष्ये[2] ।

सोमानमित्यनुद्रकं (३. २८-३६) व्रतोपायनवत् ॥ १० ॥ व्रतोपायनवत् इत्यनेन अपरेणाहवनीयं प्राङ् तिष्ठन्नग्निमीक्षमाण इत्येतावदतिदिश्यते (२. १. ११) · तत्र चाप उपस्पृश्येत्येतदपि (२. १. ११) प्राप्नोति तन्निषेधत्यनुद्रकमिति । येन रक्षसि दाशुष इत्यन्तम् · त्रिरेतज्जपति । अन्तरेणापराग्नी गत्वेत्यस्याप्यत्रानतिदेशः (२. १. ११) अत्राश्रुतत्वात् पूर्वमेवानेन यथाप्रविष्टत्वाच्च ।

पौर्णमासवत्पुत्रनामग्रहणम् ॥ ११ ॥ पौर्णमासवत् ततोऽसीत्यादि (३. ८. २५) । पुत्रस्य नाम गृह्णाति पुत्रयोः पुत्राणां वा प्रियतमस्येति लौगाक्षिरिति[3] [काठके] · ज्येष्ठपुत्रस्य नामाभिव्याहृत्य यावन्तो वा भवन्तीति शाङ्खायनः (२. १२. ११) ॥ अस्यैवोपस्थानस्य स्थाने वैकल्पिकं जुल्लकोपस्थानमाह ·

भूर्भुवः स्वरिति वोभौ (३. ३७) ॥ १२ ॥ [यजमान उपतिष्ठते] · समिदाधानानन्तरं पूर्वमाहवनीयम् ततो गार्हपत्यम् ॥ अथोपस्थानप्रसङ्गात् श्रुतिमन्त्रक्रमानुसाराच्च प्रवत्स्यदुपस्थानमाह ·

प्रवत्स्यन्सर्वान्नर्येति (३. ३७) प्रतिमन्त्रम् ॥ १३ ॥ स्वाग्निसमन्वितग्रामात्सीमामतिक्रम्यान्यत्र रात्रौ वासं करिष्यन्यजमानः प्रवत्स्यदुपस्थानार्थमग्नीनुपतिष्ठते नर्य प्रजां मऽइति प्रतिमन्त्रं सर्वानग्नीन्गार्हपत्याहवनीयदक्षिणाग्नीन्ज्वलत

---

[1] एतेति Karka's gloss. [2] न वम्भ स्थ (see Çâṅkh. २. ११. ५) schol. at Çâṅkh. For दैवः see Çâṅkh. २. १२. १०. [3] लौगा° २.

उत्पत्तिक्रमेणोपतिष्ठते प्रवत्स्यन्ज्वलत उपतिष्ठेतेति मानवे · गार्हपत्यमेवाग्रे परिशेषादन्ते दक्षिणाग्निम् शंस्येत्याहवनीयम् अथर्वेति दक्षिणाग्निम् ।

गच्छति ॥ १४ ॥ ततः सभ्यावसथ्यौ तूष्णीमग्नये नम इति वा नमस्कृत्य यथार्थं गच्छति गृहाच्चलति · वाहनरहितश्चेत् पद्भ्याम् वाहनसहितश्चेदश्वरथादीन्प्रधावयति ।

मत्या वाग्विसर्जनम् ॥ १५ ॥[1] यत्र वाग्विसर्गस्येच्छा ज्ञायते तत्र ॥

प्रोषितस्य यजमानस्य कर्तव्यमाह ·

प्रवसन्याजमानं कुर्याद्यथाकालमात्मसंस्काराद्धर्ममात्रत्वाच्छ्रुतेश्च ॥ १६ ॥ प्रवसन्यजमानो यथाकालं याजमानं कुर्यात् · अग्निहोत्रकाले अग्निहोत्रसम्बन्धि उदकभक्षणादि पौर्णमासकाले तदीयं वपनफलमूलादिव्रत्याशनव्रतग्रहणादिकम् · एवं सर्वेष्वपि नित्यकर्मसु ज्ञेयम् । कुतः आत्मसंस्कारात् अयं हेतुरुपदेशश्च याजमानमपि न सर्वम् किंतु यद्यदात्मसंस्कारकं मुण्डनव्रत्याशनाधःशयनव्रतग्रहणादिकम् येन फलप्राप्तियोग्यः क्रियते · तथा धर्ममात्रत्वात् अयमपि हेतुरुपदेशश्च यद्यद्धर्ममात्रं याजमानमाराडुपकारकम् विष्णुक्रमणं मयीदमिति जपादिकम् तत्कर्तव्यम् न संनिपत्योपकारकं वेदबन्धनादि इत्युपदेशः · श्रुतेश्च तदप्येते श्लोकाः कि७ स्विद्विद्वानित्यादिः (११. ३. १. ५-६) । अतः प्रवसता नित्यं कर्म यथाकालं सर्वं मनसा चिन्तनीयम् याजमानं चाराडुपकारकमात्मसंस्कारकं च देवतोद्देशेन द्रव्यत्यागरूपं च विहाराभिमुखेन कर्तव्यमिति · व्रत्याशने विशेषः स्मृतावुक्तः इक्षुं क्षीरेत्यादि तथा नोपवासः प्रवासे स्यात्पत्नी धारयते व्रतम् असामर्थ्ये शरीरस्य भक्षद्रव्याद्यभावतः स्वसत्तया पचेदन्नमग्नीयात्प्रोषितोऽपि सन्निति · त्यागे विशेषः स्मृतावुक्तः संनिधौ यजमानः स्यादुद्देशत्यागकारकः असंनिधौ तु पत्नी स्यादुद्देशत्यागकारिका असंनिधौ तु पत्न्याः स्यादध्वर्युस्तदनुज्ञया उन्मादे प्रसवे चऽर्तौ कुर्वीतानुज्ञया विना सर्वदा यजमानो वा त्यजेत्तद्दिङ्मुखः शुचिरिति ॥ आगतोपस्थानमाह

---

[1] वाग्विसर्गोऽवसरविधित्सयोच्यते वाग्यमस्तूपस्थानसमनन्तरमेव भवति अवसरान्तराविधानात् Karka.

एत्य च मत्या वाग्यमनम् ॥१७॥ मत्या इच्छाकल्पिते देशे प्रवासाद्ग्रामसमीपमागत्य · वेलाशब्देन (२.४.१.१२) स्वनिवासग्राममर्यादाभिधीयत इति केचित् ।

समित्पाणिरनुपेत्य कंचिदुपतिष्ठत आहवनीयगार्हपत्यदक्षिणाग्नीनागन्मेति (३.३८-४०) प्रतिमन्त्रम् ॥१८॥ कंचिद्गुरुपितृराजादिकमनुपेत्य तत्समीपमग्निगतमनस्क अग्रतैव स्नात्वा आगतोपस्थानार्थमग्नीनुद्धृत्य आहवनीयेऽग्नीन् उपदेशक्रमेण उपतिष्ठते · एतत्प्रसङ्गादग्निहोत्रार्थ्यर्थे अग्नयो विहृताश्चेत् तत्रैव कर्तव्यम् अन्यथा तूद्धृत्यैव ।

समित्परिसमूहनानि चोपविश्य ॥१९॥[1] उपविश्य तूष्णीं समिदाधानम् परिसमूहनं [तृणानामपलुम्पनं] च काण्डानुसमयेन सर्वेषु कर्तव्यम् । तृणान्यपलुम्पतीति (२.४.१.१३) अपनयतीति हरिस्वामिनः · अग्नेस्तृणान्यपचिनोतीति शाखान्तरे च · परितः पतितानि तृणोपलक्षितानि समिदादीनि प्रक्षिप्याग्निमध्ये प्रक्षिपतीति माधवः ॥ अधुना प्रवत्स्यदुपस्थाने आगतोपस्थाने च पक्षान्तरमाह ·

तूष्णीं वोपस्थानं पूर्ववत् ॥२०॥ अथवा प्रवत्स्यंस्तूष्णीमेव गार्हपत्याहवनीयदक्षिणाग्नींस्तेनैव क्रमेणोपतिष्ठते न मन्त्रेण ।

एत्य च ॥२१॥

गृहा मा बिभीतेति (३.४१) गृहानुपैति ॥२२॥ ततो यजमानः सभ्यावसथ्यौ नमस्कृत्य गृहेषु न इत्यन्तेन (३.४३) गृहान्स्वनिवासं गृहमुपगच्छति उपतिष्ठते प्रोष्येत्य गृहानुपतिष्ठते पूर्ववदिति गृह्यकारेण (पारस्कर° १.१८) उपस्थानस्योक्तत्वात् ।

क्षेमाय व इति (३.४३) प्रविशति ॥२३॥ गृहान् । अतः परं गृह्योक्तं (पार° १.१८) पुत्रदर्शनजपादि · तत्र पुत्रदर्शनेऽङ्गादङ्गादिति जपः · तच्छिरोऽवघ्राणं प्रजापतेरिति अत्र मन्त्रे सावित्यस्य स्थाने सम्बुद्ध्यन्तपुत्रनामग्रहणम् ·

---

[1] चशब्दादनन्तरमेव · तिष्ठन्त्समिधः सर्वत्रेत्युक्ते (१८.४.१०) सतिध्युपवेशनं वाचनिकम् Karka.

गवां वेति च सकृत्पुत्रशिरोऽवघ्राणम् द्विस्तूष्णीम् · पुत्रस्य दक्षिणे कर्णे अस्मे प्रयंधीति जपः सव्ये कर्णे इन्द्र श्रेष्ठानीति · एवं प्रतिपुत्रमावर्तनीयम् पुत्र्यास्तु शिरोऽवघ्राणमात्रमिति ।

न हिंस्यादृह्यान्कामं¹ श्वः ॥२४॥ तस्मिन्गृहागमनदिवसे गृह्यान्गृहे भवान्भार्यापुत्रभृत्यादीनपराधे सत्यपि न हिंस्यात् अनिष्टविद्रूपभाषणताडनादिना नोच्चाटयेत् ॥ ॥ द्वादशी कण्डिका ॥१२॥ ॥

अथ पद्धतिः ॥

अत्र सूत्रक्रमेणाग्निहोत्राङ्गं वात्सप्रोपस्थानमुच्यते । सायमग्निहोत्रहोमे समिदसीति समिदाधानानन्तरं यजमानो वात्सप्रेणाग्नीऽउपतिष्ठते नोपतिष्ठते वा । तत्रोपस्थानपक्षे आहवनीयसमीपे स्थित्वोपप्रयन्त इति (३. ११) त्रिः पठित्वा अग्निर्मूर्धा (१२) उभा वाम् (१३) अयं ते (१४) अयमिहेत्येता (१५) ऋचो जपित्वास्य प्रजामिति (१६) त्रिर्जपेत् · ततस्तनूपा अग्नेऽसि (१७) इन्धानास्त्वेति (१८) सकृज्जपित्वा चित्रावसो (१८) इति त्रिर्जपेत् · अथाहवनीयसमीपऽएवोपविश्य सं त्वमग्नऽइति (१९) जपेत् · ततोऽन्ध स्थेति (२०-२१) गां प्रति गच्छति · ततः संहितासीति (२२) गामालभते · ततो गार्हपत्यसमीपऽआगत्य गार्हपत्यमुपतिष्ठते उप त्वाग्नऽइत्यत (२२) आरभ्याघायतः समस्मादित्यन्तेन (२६) · तत इडऽएहीति (२७) पुनर्गां प्रति गच्छति · ततः काम्या एतेति (२७) गामालभते · तत आगत्यापरेणाहवनीयं प्राङ् तिष्ठन्नग्निमीक्षमाणः सोमानं² स्वरणमित्यारभ्य (२८) तत्सवितुरित्यन्तं (३५) जपित्वा परि ते दूडभ इति (३६) त्रिर्जपेत् · ततस्ततोऽसि तन्तुरसीति (३. ८. २५) पठित्वा इदं मे कर्मेदं वीर्यं पुत्रो यज्ञदत्तशर्मानुसंतनोत्वित्येवं पुत्रनाम गृह्णाति · अविद्यमाने पुत्रे इदं मे कर्मेदं वीर्यममुकशर्मानुसंतनोत्विति स्वं नाम गृह्णीयात् अथवा इदं मे कर्मेदं वीर्यममुकशर्माहमनुसंतनवानीति प्रयोगः तन्तवे त्वा ज्योतिषे त्वानुसंतनोत्विति वा (३. ८. २७) । एतद्वात्सप्रोपस्थानम् । अथवास्योपस्थानस्य स्थाने भूर्भुव स्वः सुप्रजा इत्यनेन (३. ३७) आहवनीयमुपस्थाय गार्हपत्यमप्यनेनैवोपतिष्ठेत · एतदुपस्थानद्वय सायमेव भवति

¹) परदिने इच्छया क्रोधादि Mahâd.

न प्रातः ॥ ॥ अथोपस्थानप्रसङ्गात्प्रवत्स्यदुपस्थानं प्रवासधर्मा आगतोपस्थान चाभिधीयते · तत्र प्रवासशब्दार्थमाह कारिकाकारः ग्रामान्तरे नगर्यां वा पल्ल्यां वान्यत्र वा क्वचित् सीमामतीत्य चेद्रात्रौ वासः प्रवसनं स्मृतमिति । तत्र प्रवासं करिष्यन्यजमानो भूसंस्कारपूर्वकम् प्रवत्स्यदुपस्थानार्थमिति गार्हपत्यादाहवनीयदक्षिणाग्नी उद्धृत्य प्रदीप्तान्कृत्वा नर्य प्रजामिति (३.३७) गार्हपत्यमुपतिष्ठते शंस्य पशूनित्याहवनीयम् अथर्य पितुमिति दक्षिणाग्निम् ततः सभ्याय नम इति सभ्यम् तत आवसथ्याय नम इत्यावसथ्यम् · ततो वाग्यमनम् · यथार्थं गमनम् · अग्निसम्बन्धिगृहस्य छदिषां दर्शनं यावत् गतस्य वाग्यमनं भवति तत ऊर्ध्वं गत्वा वाग्विसर्गः · तथा चोक्तम्[1] अग्न्यन्तिकं समारभ्य तावन्मौनी प्रतिष्ठते यावच्छदींषि दृश्यन्ते हव्यवाहनसद्मन इति · अनलादर्शनं यावत्तावच्छाङ्खायनश्रुतेः[2] स्वबुद्धिकल्पितो देश इति वाजसनेयिनः । बलाद्राजादिपुरुषा[3] यजमानं नयन्ति चेत् न प्रयच्छन्त्युपस्थानावसरं क्रूरचेष्टिताः तदा कुर्यादुपस्थानं तद्देशगत[4] एव सन् · तत्र प्रकारद्वयम् होमाद्यर्थमुद्धृतान्सम्भाव्य प्रवत्स्यदुपस्थानेनैवोपस्थानमिति कठसूत्रे · अनेन वा मन्त्रेण इहैव संस्तत्र सन्तं त्वाग्ने हृदा वाचा मनसा वा बिभर्मि तिरो मा सन्तमायुर्मा प्रहासीर्ज्योतिषा वैश्वानरेणोपतिष्ठऽइति मन्त्रेणाग्नीनुपतिष्ठेत । शाङ्खायनोऽपि (३.२१.७-८) अनुपस्थाय प्रसर्गे प्रतिदिशमुपस्थानम् उपस्थायाप्रसर्गे यथा प्रोष्येति · आगमिष्यामि[5] चाद्यैवेत्यनुपस्थाय निर्गतः दैवात्तत्र स्थितः कुर्यादिदमेवेति केचन विस्मृत्याबुद्धिपूर्वं वा यातेऽप्येष विधिर्भवेत् वाग्यमनस्य लोपोऽत्र भाष्यकारेण दर्शितः अरण्यारोपिते वह्नौ प्रवसेद्वा व्रजेत्तु वा उभयत्राप्युपस्थानं नास्ति कौषीतकिस्मृतेरिति ॥ ॥ अथ प्रोषितस्य यजमानस्य कर्तव्यमुच्यते । प्रवसन्नग्निहोत्रकालेऽग्निहोत्रस्य विहाराभिमुखो भूत्वा सर्वं याजमानं करोति पौर्णमासकाले पौर्णमासस्य दर्शकाले दर्शस्य · याजमानमपि न सर्वम् किंतु यदा-

---

1) कारिकायाम् schol. at ४. १२. १५. 2) See Çânkh. २. १४. ६. 3) From the कारिका, according to the schol. at ४. १२. २१. 4) Thus १. तद्देश्यगत the schol. at ४. १२. २१. 5) From the कारिका, according to the same.

त्मसंस्कारकम् धर्ममात्रं च तदेव यथा वपनविष्णुक्रमणव्रतग्रहणमयीदमि-
तिजपादि नान्यत् यथा वेदबन्धनपात्रासादनादि · अन्यत्सर्वं कर्माध्वर्य्वादिभि-
र्गृहे क्रियमाणं मनसा चिन्तनीयम् । तथा च कात्यायनः (कर्मप्रदीप° २. १०. १-२)
निक्षिप्याग्निं स्वदारेषु परिकल्प्यऽर्त्विजं तथा प्रवसेत्कार्यवान्विप्रो मृषैव न
चिरं क्वचित् मनसा नैत्यकं कर्म प्रवसन्नप्यतन्द्रितः उपविश्य शुचिः सर्वं
यथाकालमनुद्रवेदिति · तेन प्रवसताग्निहोत्रादि नित्यं कर्म स्वस्वकाले सर्वं
चिन्तनीयम् । तत्राग्निहोत्रे मन्त्रेणाचमनम् यथादेवतं त्यागाः उपस्थानम् पुनरा-
चमनम् एतावत्समन्त्रकं कर्तव्यम् अन्यत्सर्वं मनसा चिन्तनीयम् । दर्शपूर्णमा-
सयोरपि पर्वणि इक्षुक्षीरविकारांश्च भ्राष्ट्रभृष्टान्यवांस्तथा[1] फलमूलानि
चाश्नीयात्पर्वणि प्रोषितोऽग्निमान् तथा पराग्निपक्वं नाश्नीयाद्गुडगोरसमन्तरा
इत्याद्युक्तानुसारेण व्रतं कुर्यात् · रात्रौ भूमौ शयीत · तथा असामर्थ्ये शरी-
रस्य भक्ष्यद्रव्याद्यभावतः[2] स्वसत्तया पचेदन्नमश्नीयात्प्रोषितोऽग्निमानिति[3] ·
प्रातरिष्टिकाले सर्वं कर्म मनसा चिन्तयेत् प्राङ्मुखो व्रतग्रहणं कुर्यात् पूर्णपा-
त्रमासाद्य दैव्यायेति प्रोक्षेत् इदं त्रितायाप्ययेत्यारभ्य सर्वांस्त्यागान्कुर्यात् प्रया-
जानुमन्त्रणानि च वारद्वयं मयीदमिति जपश्च स्वस्वकाले ततः सं वर्चसेति
केनचिन्निनीयमानं पूर्णपात्रं प्रतिगृह्य मुखं विमृष्टे ततो विष्णुक्रमणादि व्रत-
विसर्गान्तं कुर्यात् · प्राञ्च एव विष्णुक्रमाः न विहाराभिमुखाः तथा चापस्तम्बः
प्रवसन्विहाराभिमुखो याजमानं जपति प्राचो विष्णुक्रमान्क्रमतीति · तत्र भा-
गभूम्याहवनीयदक्षिणागार्हपत्योपस्थानानां[4] मनसैव चिन्तनम् नानुष्ठानम् । एव-
मिष्टिगतानामपि वेदबन्धनावबाधनात्रपितरोवेद्यालम्भादीनां च मनसैव चिन्त-
नम् । एवं पश्वादिकर्मणोऽपि याजमानं कार्यम् · याजमाने कृतेऽपि यदा गृहे
इष्टिपश्वादिकर्मणः समाप्तिं चित्ते जानाति तदनन्तरं भुञ्जीत न ततः प्राक् ।
एवं पितृयज्ञाष्टकादेरपि नित्यस्य गृहे क्रियमाणस्य याजमानं मनसा चिन्तनं च
कार्यम् । बह्वृचानां शाङ्खायनसूत्रभाष्ये च सर्वेषां नित्यकर्मणामाग्रयणचातु-

---

1) ? °ष्ट्रभ्र° १. 2) °व्याग्निभावतः १. but see pag. ३६४,२०. 3) Thus १.
4) ? भूमि आह° १.

र्मास्यपशुबन्धाग्निष्टोमानां प्रवसति यजमाने[1] याजमानं च प्रवसता कर्तव्य-
मित्युक्तमस्ति ॥ ॥ आगच्छता यजमानेन यथालाभं यज्ञियवृक्षसमिधो हस्ते
गृहीत्वा छदिर्दर्शने वाग्यतेन सता आगन्तव्यम् । उपस्थानादर्वाक्पितरं गुरुं
वा राजानं वा नोपगच्छेत् स्वयमेव समीपमागतानामेषां नमस्कारादिकं न
कुर्यात् । तत्कालमेव स्नात्वा शुचिर्भूत्वा भूसंस्कारपूर्वकमाहवनीयदक्षिणाग्नी
ऽआगतोपस्थानार्थमिति विहृत्य समिधो हस्ते गृहीत्वा स्फ्योपग्रह आगन्मेति
(३.३८) मन्त्रेणाहवनीयमुपस्थायोपविश्य तूष्णीं समिधमाधाय परितः पतितानि
तृणान्यपसार्याग्निमध्ये प्रक्षिपेत् · ततोऽयमग्निर्गृहपतिरिति (३.३९) गार्हपत्यमुप-
स्थायोपविश्य तूष्णीं समिधमाधाय परितः पतितानि तृणानि परिसमुह्याग्नौ
प्रक्षिपेत् · ततोऽयमग्निः पुरीष्य इति (३.४०) दक्षिणाग्निमुपस्थायोपविश्य तूष्णीं
समिधमाधाय तृणानि परिसमुह्याग्नौ प्रक्षिपेत् · ततः सभ्याय नम इति सभ्यं
नमस्कुर्यात् · आवसथ्याय नम इत्यावसथ्यं नमस्कुर्यात् । ततो गृहा मा बिभी-
तेति (३.४१) वासार्थान्गृहानुपतिष्ठते क्षेमाय व इति (३.४३) गृहान्प्रविशति ।
तत्र पुत्रं दृष्ट्वा अङ्गादङ्गात्सम्भवसीति जपति · ततोऽस्य पुत्रस्य मस्तकमवजिघ्रति
प्रजापतेष्ट्वेति असावित्यस्य स्थाने अमुकशर्मन्निति सम्बुद्ध्यन्तं पुत्रस्य नाम
गृह्णाति · ततो गवां त्वा हिंकारेणावजिघ्रामि सहस्रायुषाममुकशर्मञ्जीव शरदः
शतमिति मन्त्रेण सकृत्पुत्रशिरोऽवघ्राय तूष्णीं द्विरवजिघ्रति · ततः पुत्रस्य दक्षिणे
कर्णेऽस्मे प्रयंधीति जपति · ततः सव्ये कर्णे इन्द्र श्रेष्ठानीति जपति · पुत्रदर्शन--
जपादि प्रतिपुत्रमावर्तनीयम् पुत्रस्याशीःप्रार्थनार्थत्वात् · पुत्र्याश्च तूष्णीं मूर्धावघ्रा-
णमात्रमेव ॥ ॥ कठसूत्रे विशेषः प्रवसत उपस्थानं याजमानं चेत्येके नेति
लौगाक्षिः प्रवसन्यदा हुतं मन्येताथ भुञ्जीत पर्वण्युपोष्य यदा सꣳस्थितं मन्ये-
ताथ भुञ्जीतेति · तथा अनुपस्थाय प्रवसन्प्रवत्स्यदुपस्थानेन प्रतिदिशमुपति-
ष्ठेतेति · तथा यदाग्निहोत्रे सꣳस्थिते वा तन्त्र[2]ऽआगच्छेदागतोपस्थानमेवास्य
तदहः स्यान्न नित्यमग्न्युपस्थानं न याजमानमित्येके विसꣳस्थिते[3] वा तन्त्र
ऽआगच्छेदागतोपस्थानेनोपस्थाय यदतीतं याजमानं तज्जपेन्नातीतं जपेदिति लौगा-

---

१) ? °मानेन यथालाभं I. २) तंत्रे I. ३) ?? विचिसंस्थिते I.

क्षिरिति ॥ ॥ अथवा प्रवत्स्यता प्रवासादागच्छता चाग्नीनामुपस्थानं तूष्णीमेव कर्तव्यम् · गृहा मेत्यादि तूष्णींपक्षेऽपि भवत्येव । प्रवासादागमनदिने गृह्याणां पुत्रभार्याभृत्यादीनामपराधे सत्यपि क्रोधादिकं न कर्तव्यम् किमपि न वक्तव्यम् सति कारणे श्वः सर्वं कर्तव्यम् ॥ ॥१२॥

इति चतुर्थस्य द्वादशी कण्डिका ॥ ॥

अथाग्निहोत्रमुच्यते [1] ·

उद्धरेति यजमानो ब्रूयात्सायम्प्रातरग्निहोत्रे ॥१॥ अग्निहोत्रसंज्ञके कर्मणि सायंकाले प्रातःकाले च यजमानः उद्धरेतीमं प्रैषमध्वर्युं प्रति ब्रूयात् · एतच्चान्यकर्तृकहोमपक्षे स्वयंहोमपक्षे तु प्रैषाभावः । अग्निहोत्रऽइत्युक्तत्वादिष्ट्यर्थोद्धरणे नायं प्रैषः [2] । सत्यप्येककर्मत्वे कालभेदात्सायं प्रातश्चाज्ञावृत्तिर्भवतीति सायम्प्रातर्ग्रहणम् ।

गार्हपत्यादाहवनीयस्योद्धरणमनस्तमितानुदितयोः ॥२॥ [3] अनस्तमिते अनुदिते च सूर्ये गार्हपत्यादग्निहोत्रहोमार्थं ज्वलत आहवनीयस्योद्धरणं कृत्वा प्राङ्नीत्वाहवनीयखरे स्थापनं कर्तव्यम् ततः पूर्वं स्मार्तान्परिसमूहनादीन्पञ्च भूसंस्कारानाहवनीयखरे कृत्वा ।

प्रत्यङ्मुखो वा सायं निदध्यात्तस्मिन्सायम्प्रातर्होममेके ॥३॥ अथवा सायंकाले प्रातर्वा प्रत्यङ्मुख एव स्थापयेत् · तथा तस्मिन्प्रत्यङ्मुखस्थापिते आहवनीये एके सायम्प्रातर्होममिच्छन्ति तदा च प्रातर्होमार्थं तस्य धारणं कर्तव्यम् अन्ये प्रातर्होमार्थं पुनरुद्धरन्ति ।

नित्यो दक्षिणाग्निः ॥४॥ दक्षिणा वा सञ्चरेदन्वाहार्यपचनश्चेदित्यस्मिन्पक्षे (४. ८. १५) दक्षिणाग्निर्नित्यो भवति सर्वदा स एव भवति न प्रतिकर्म आह्रियते । नित्यपदानुवृत्तिलोभेनाह [4] ·

---

[1] शाखान्तरपाठक्रमाद्वात्सप्रोपस्थानमुक्तम् इदानीमवसरप्राप्तमाग्निहोत्रमनुविधीयते Karka. [2] सत्यप्युद्धरणे पौर्णमासादिषु न भवति Karka. [3] अनंयोरिति शाखात् उदितहोमिनामपि अनुदितऽएवोद्धरणम् Karka. उद्धरणाशब्दस्त्वाहवनीयस्थापनऽएव प्रवर्तते Mahâd. [4] नित्याधिकारोपजिजीविषयेदमाह Karka.

सर्वे गतश्रियः ॥ ५ ॥ गता प्राप्ता श्रीर्येनासौ गता श्रीर्यमिति वा तस्य गतश्रियः प्राप्तसमृद्धेः यजमानस्य सर्वेऽग्नयो नित्या भवन्ति आहवनीयदक्षिणाग्नी अपि गार्हपत्यवत्सदा धार्यौ । नित्यधृतानामपि प्रादुष्करणमनस्तमित एव कर्तव्यम् · तदुक्तम् (कर्मप्रदीप° १. ६. १) सूर्येऽस्तशैलमप्राप्ते षट्त्रिंशद्भिः सदाङ्गुलैः प्रादुष्करणमग्नीनां प्रातर्भासां च दर्शनादिति · पुरा छायानां संसर्गात् उद्धरणम् प्रादुष्करणं नित्यधृत इति शाङ्खायनः (२. ६. २-४) ।

सदा वाहरणम् ॥ ६ ॥ दक्षिणाग्नेः सदा[1] वा आहरणमाहवनीयवदेव कर्तव्यम् ।

एकेषामुपवसथे ॥ ७ ॥ एकेषां मते (२. ३. २. ७) उपवसथे पौर्णमास्याममावास्यायां वा दक्षिणाग्नेराहरणम् न सर्वदा · अस्मिन्पक्षेऽर्थादुपवसथान्तराले तस्य धारणं कार्यम् ।

नवावसिते वा ॥ ८ ॥ नवगृहे वा (२. ३. २. ८) एनं दक्षिणाग्निमाहरेयुः अस्मिन्नपि पक्षे तस्य धारणं तद्गृहवासं यावत् ।

तस्मिन्पचेयुरमांसम् ॥ ९ ॥ तस्मिन्नवावसिताहृते दक्षिणाग्नौ सर्वमन्नं पाकयोग्यं पचेयुः · पाकानन्तरं तत्पक्वमन्नं ब्राह्मणाः प्राश्नीयुः ।

पाक्याभावे गोः पयो ऽधिश्रयितवै ब्रूयात् ॥ १० ॥ पचनार्हस्य तण्डुलपिष्टादेरभावे यजमानोऽध्वर्युं[2] प्रति गोः पयोऽधिश्रयितवाऽइति प्रैषं ब्रूयात् ततोऽध्वर्युस्तत्पयो दक्षिणाग्नौ अधिश्रयेत्[3]

तद्ब्राह्मणं पाययितवै ब्रूयात् ॥ ११ ॥[4] ततोऽध्वर्युः यजमानं प्रत्याह तद्ब्राह्मणं पाययितवाऽइति · एवमध्वर्युणा प्रेषितस्तत्पयो ब्राह्मणं पाययेत् ॥ ॥ अधुना प्रकृतमुच्यते ।

अन्तरेणापराग्नी गत्वा दक्षिणेन वापदक्षिणमाहवनीयं[5] परीत्योपविशति यजमानः ॥ १२ ॥[5] यजमानः संध्यावन्दनानन्तरमपराग्नी गार्हपत्यदक्षिणाग्नी

---

१) प्रतिदिनम् · सायम्प्रातरित्यनुवर्तते · आहरणाशब्दस्तु दक्षिणाग्निस्थापनऽएव प्रवर्तते Mahâd. २) पत्नीं Mahâd. ३) °पयेत् २. ४) पत्नीं प्रति स्त्रिया अधिकारात् Mah. ५) ? Thus २., M., Karka, and Sâyana (at २. ३. ३. १३), वाप्रदक्षि° १., Mahâd. and the paddhati. ६) दक्षिणेन वा इति माध्यन्दिनानामवधारणा युक्ता Karka.

अन्तरेण गत्वा तयोर्मध्येनान्तरालेन गत्वा अथवा तौ दक्षिणेन गत्वा अपदक्षिणमाहवनीयं परीत्य[1] स्वस्थानऽउपविशति · पूर्वेणाहवनीयं परीत्यान्तरेण गार्हपत्यं चैतीति श्रुतेः (२. ३. ३. १३) अपदक्षिणमाहवनीयं परीत्य गार्हपत्याहवनीययोरन्तरालेन दक्षिणतः स्वासनं प्रति गच्छतीत्यर्थः · अयं स्वश्रुत्योक्तः संचरः वक्ष्यमाणस्तु (४. १५. २) शाखान्तरीयः । दक्षिणेन प्रवेशनमग्निहोत्रेष्टिष्विति (४. १५. २१) वचनात् पूर्वं गार्हपत्यागारस्य दक्षिणेन द्वारेण प्रविश्यैतत्कर्तव्यम् । संध्यावन्दनानन्तरं पूर्वमग्निहोत्रहोमः ततः स्मार्तेऽग्नौ · तदुक्तम् होमं वैतानिके कृत्वा स्मार्ते कुर्याद्विचक्षणः स्मृतीनां वेदमूलत्वात्स्मार्ते केचित्पुरा विदुरिति ।

पत्नी च पूर्ववत् ॥ १३ ॥ पत्न्यपि पूर्ववदुपविशति पूर्ववदिति प्रत्यग्दक्षिणतो गार्हपत्यस्येति (२. ७. १) । चशब्दाद्यजमानोऽपि पूर्ववदिति तेन दक्षिणतो ब्रह्मयजमानयोरासनेऽइति (१. ८. २७) दर्शपूर्णमासविषयं परिभाषितं वतिनातिदिश्यते[2] · अपरेषां तु यजमान[स्य] परिभाषिकमुपवेशनं सिद्धमेव तेन चशब्दात् अन्तरेणापराग्नी गत्वा दक्षिणेन वाप्रदक्षिणमाहवनीयं[3] परीत्योपविशतीत्याकृष्यते युक्तरूपमिव चैतत् ।

अपरेणाहवनीयं कूर्चं निदधाति कुशान्वा ॥ १४ ॥ प्रागग्रमुदगग्रं वा कूर्चम् अथवा कुशानेव न कूर्चम् · कूर्चशब्देन आसनपट्ट[4] उच्यते अत्र च स्रुच एतदासनम् तेन बाहुप्रमाणो वारण आसनपट्टसदृशः कूर्चो भवति ।

परिस्तरणं वा सर्वेषां प्रागुदग्भिरुदगग्रान्दक्षिणाग्रान्करोतीति श्रुतेः ॥ १५ ॥[5] श्रुतेरुदगग्रतानुवादस्तदेवोपपद्यते यदाग्निहोत्रे प्रागुदगग्रैः स्तरणं भवति · मृताग्निहोत्रे आहवनीयस्यैव परिस्तरणादर्शनात्परिस्तरणादिकमपि तस्यैव भवती-

---

1) अप्रदक्षिणं परिगमनम् Karka. अप्रदक्षिणेन Ss. 2) ? चेतिनाति° २.
3) Thus २, not वापद° 4) ? °पद् २. 5) परिस्तरणमाहवनीयस्य प्रागुदग्भिर्दर्भैः प्रागग्रैरुदगग्रैश्च । एवं हि मृतकाग्निहोत्रऽआहवनीयं प्रकृत्य श्रूयते अथ यान्यमून्युदीचीनाग्राणि तानि करोतीति वचनात् (१२.५.२.१२) अमूनीति चाग्निहोत्रतृणान्युच्यन्ते · तद्यदि तत्र प्रागुदग्भिस्तदैतदुपपद्यतऽइति । मृतकाग्निहोत्रे आहवनीयस्यैव दृष्टम् (दृष्टं Cod.) इहापि तस्यैव परिस्तरणमित्याशङ्क्य वा सर्वेषामित्युच्यते सर्वेषामेवैतत्परिस्तरणम् कार्याविशेषात् Karka.

त्याशङ्क्य वा सर्वेषामित्युच्यते सर्वेषामेवैतत्परिस्तरणाम् होमस्य सर्वेषु विहितत्वात् परिस्तरणस्य होमार्थत्वाच्च ।

आहवनीयं पर्युक्ष्योदधारां निनयत्या गार्हपत्यात् ॥१६॥ आहवनीयं गार्हपत्यं दक्षिणाग्निं परिस्तीर्य ततस्तेनैव क्रमेण प्रथममाहवनीयं पर्युक्ष्य हस्तगृहीतेनोदकेन समन्तात्सिक्त्वा तत्र आहवनीयादारभ्य उदधारामुदकस्य धारां गार्हपत्यं यावत्प्रत्यकसंस्थां निनयति ।

तं च ॥१७॥　　　　ततो दक्षिणाग्निम् ॥१८॥[1]

हुते च धारावर्जम् ॥१९॥[2] हुते चाग्निहोत्रे यजमानस्योपस्थानाचमनानन्तरं प्राग्विसर्गादेवमेवाग्नीन्पर्युक्षति धारां वर्जयित्वा वाग्यमस्य कर्तृधर्मत्वेन पदार्थाङ्गत्वात् पर्युक्षणमपि पदार्थ इति ॥ ॥ त्रयोदशी कण्डिका ॥१३॥ ॥

अथ पद्धतिः ॥

अथाग्निहोत्रमुच्यते । तत्र सायम्प्रातर्यजमानो होमकर्तारं प्रत्युद्धरेति प्रैषं ब्रूयात् स्वयंकर्तृत्वे प्रैषाभावः । अनस्तमिते सूर्ये उद्धरणं कर्तव्यम् तत्र सायमग्निहोत्रहोमार्थं गार्हपत्यादाहवनीयमुद्धरामीति संकल्प्याहवनीयं ज्वलन्तमुद्धरति सायमग्निहोत्रहोमार्थं गार्हपत्याद्दक्षिणाग्निमाहरामीति संकल्प्य दक्षिणाग्निमुद्धरति । सायंकाले प्रत्यङ्मुखो वा आहवनीयं स्थापयेत् अस्मिन्पक्षे सायमुद्धृतऽएव प्रातर्होममप्येके कुर्वन्ति एके प्रातः पुनरुद्धरन्ति । दक्षिणा संहृतो दक्षिणाग्निश्चेत् सर्वदा नित्य एव न कदापि तस्योद्धरणाम् अनुगतस्य च स्वयोनेराहरणाम् । गतश्रियस्तु सर्वेऽग्नयः सदा धार्यन्ते त्रयो ह वै गतश्रियः शुश्रुवान्ब्राह्मणः क्षत्रियो विजयी राजा वैश्यो ग्रामणीरिति । अथवा सदाहवनीयवदेव दक्षिणाग्नेरप्याहरणमेव कर्तव्यम् केषांचिन्मते पौर्णमास्यमावास्ययोरेवाहरणाम् न सर्वदा उपवसथान्तरं यावत् तस्यैव धारणाम् । अथवा यदा नवगृहं कृतं भवति तदा तत्र नवगृहे दक्षिणाग्निराहरणीयः न सर्वदा नाप्युपवसथे

---

१) प्राक्संस्थेऽपि पर्युक्षणे गार्हपत्यसमनन्तरमेव दक्षिणाग्नेः पर्युक्षणम् अतस्ततो दक्षिणाग्निमित्युक्तम् Karka.　२) पर्युक्षतीति वाक्यशेषः तच्च प्राग्व्रतविसर्गात् व्रतस्य हि पदार्थधर्मत्वात् पर्युक्षणमपि हि पदार्थ इति Karka.

अस्मिन्पत्ने तस्मिन्नवगृहाहृते दक्षिणाग्नौ यत्किंचित्सम्पद्यते तत्सर्वं पचेन्मांसवर्जम् पक्का च ब्राह्मणान्भोजयेत् · पाकद्रव्याभावे गोः पयोऽधिश्रयितवाऽइति यजमानोऽध्वर्युं प्रेष्यति ततोऽध्वर्योर्दक्षिणाग्नौ गोदुग्धस्याधिश्रयणाम् ततस्तद्ब्राह्मणां पाययितवाऽइति प्रैषं यजमानं प्रति ब्रूयात् ततस्तत्पयो ब्राह्मणांस्त्रीन्पाययेत् । अन्यार्थमुद्धृतेष्वग्निहोत्रकालऽआगते तेष्वेवाग्निहोत्रहोमः · पशुवरुणप्रघासादावुत्तरवेदावाहवनीये प्रणीते होमकालऽआगतेऽतिप्रणीतऽएव होमः[1] · तथा चापस्तम्बः प्रणीते चेदग्निहोत्रस्य काल एतस्मिन्नेवाग्निहोत्रं जुहुयादेवमन्यत्रेति पशुप्रकरणे सूत्रम्[2] ॥ ॥ अथ प्रकृतमुच्यते । अनस्तमिते आहवनीयदक्षिणाग्न्योरुद्धरणानन्तरं संध्यावन्दनं कृत्वा प्रथ[म]मग्निहोत्रं जुहुयात् । तत्र यजमानो गार्हपत्यदक्षिणाग्न्योरन्तरालमार्गेणाहवनीयं प्रति गत्वा अथवा अनयोर्दक्षिणतो गत्वा अप्रदक्षिणमाहवनीयं परीत्य स्वस्थानऽउपविश्याचामति वृष्टिरसीति (४. १५. ४) · ततो वाग्यमनम् पुनराचमनं यावत् · पत्न्यपि यजमानवदेव संचरेण प्रविश्य गार्हपत्यस्य प्रत्यग्दक्षिणात ईशानाभिमुखी उपविश्य तूष्णीमेवाप आचम्य वाचं यच्छति उपवेशनव्यतिरिक्तं पत्नी किमपि न करोतीति सम्प्रदायः तच्च साधुतरम् । ततोऽध्वर्युराहवनीयस्य पश्चात्प्रागग्रमुदगग्रं वा बाहुमात्रमासनपट्टसदृशं कूर्चं निधाय प्रदक्षिणमाहवनीयस्य परिस्तरणं दर्भतृणैः कुर्यात् · तानि दर्भतृणानि पुरस्तात्पश्चाच्चोदगग्राणि दक्षिणोत्तरयोः प्रागग्राणि · प्रथमं पुरस्तात्परिस्तरणम् ततो दक्षिणतः पश्चादुदगिति क्रमः · तत एवमेव गार्हपत्यस्य परिस्तरणम् ततो दक्षिणाग्नेः । ततो हस्तेनोदकमादाय प्रथममाहवनीयस्य पर्युक्षणम् ईशानदिश आरभ्य प्रदक्षिणमुदक्संस्थम् · तत आहवनीयादारभ्य गार्हपत्यं यावत्प्रतीचीमुदधारां निनयन्गच्छति · ततो गार्हपत्यस्य प्रदक्षिणं पर्युक्षणम् ततो दक्षिणाग्नेः पर्युक्षणम् · अथवा पूर्वं गार्हपत्यं दक्षिणाग्निं च पर्युक्ष्य गार्हपत्यादारभ्याहवनीयं यावत्प्राचीमुदधारां संततां निन-

---

1) The schol. at ४. १३. २. reads: ऽतिप्रणीते वाग्निहोत्रं होतव्यम् 2) The schol. at ४. १३. २. proceeds thus: सम्प्रदायपद्धतौ त्वन्यथोक्तम् अतिप्रणीते नाग्निहोत्रहोमः अनङ्गत्वादग्निहोत्रहोमस्येति · तत्तु युक्तिमात्रम् इदं तु वचनम् नास्ति वचनस्य किंचिद्दुष्करम् तस्मादतिप्रणीतऽएव होतव्यम् ।

यन्गछति   तत आहवनीयस्य[1] पर्युक्षणं कुर्यात् · उदस्थालीं वैवोदकमण्डलुं वादाय गार्हपत्यादग्रऽआहवनीयान्निनयन्नियादिति (१२.४.१.५) प्रायश्चित्तप्रकरणे गच्छतो धारानिनयनदर्शनादिहापि तथैव कल्पना[2] ॥   ॥१३॥

इति चतुर्थस्य त्रयोदशी कण्डिका ॥ ॥

अग्निहोत्रीं दोहयति पुंवत्सामशूद्रेण स्थाल्यामार्यकृत्यामूर्ध्वकपालायां दक्षिणतः प्राचीमुदीचीं वा ॥१॥   अग्निहोत्रशब्देन कर्मवाचिना तत्साधनं पयो लक्ष्यते · तदस्यां गव्यस्तीति गौरग्निहोत्रिणी · तत इनिप्रत्ययलोपे कृते अग्निहोत्रीति सिध्यति · पुमान्वत्सो यस्याः (११.३.२.१) · विहाराद्दक्षिणस्यां[3] प्राङ्मुखीमुदङ्मुखीं वा स्थिताम् । आर्यस्य त्रैवर्णिकस्य कृतिः आर्यकृतिः[4] · ऊर्ध्व-कपालायाम् न तिर्यक्कपालायाम् · यदि वा भिद्येतेति (१२.४.१.६) लिङ्गात् मृत्ति-कामाय्याम् । अत्र गोर्दिङ्नियमविधानात् सांनाय्ये गवां दिङ्नियमो न भवति ।

पूर्वेणाहवनीयमाहृत्य गार्हपत्येऽधिश्रयत्युत्तरतो निरूह्याङ्गारान् ॥२॥ तद्दोग्धा दुग्धस्थालीस्थं पयो हस्ते गृहीत्वा आहवनीयं पूर्वेण आहृत्य आ-हरणात्पूर्वमेव गार्हपत्यस्याङ्गारानुत्तरतो निरूह्योद्धृत्य श्रपणार्थं पृथक्कृत्वा ततः पयस्तेष्वधिश्रयति ।

एवमन्यत्रापि होमार्थस्याहरणम् ॥३॥   इतोऽन्यत्रापि पञ्चवातीयहो-मादौ होमार्थस्याज्यादिगव्यस्यैवमेव पूर्वेणाहवनीयमाहरणं कार्यम् ।

दक्षिणेन वौषधम् ॥४॥   औषधं व्रीहियवादिकम् तदाहवनीयं दक्षिणेन वानीयते   आहवनीयं पूर्वेण वा   उत्तरेण वा ।

तृणेनावज्योत्यासिच्यापः पुनरवज्योत्य निधायं त्रिरुद्वासयत्युदक् ॥५॥ तदधिश्रितं पय एकेन ज्वालायुक्तेन दर्भाग्रेणावाङ्मुखं प्रकाशयेत् · तच्च तृणं परिस्तृततृणेभ्योऽन्यदेव ग्राह्यम् · ततः स्रुवेणापो गृहीत्वा पयोमध्यऽआसिञ्चेत् तस्य शमनाय · ततः पुनरवज्योत्य   निधायम् निधाय-निधाय मुक्त्वा-मुक्त्वा त्रिरुद्वास-

१) ? यन्गाह्वाहव° १.   २) नात् १.   ३) आहवनीयागाराद्दक्षिणतः Mahâd.   ४) but see Pâṇini ८. १. ३०.

यत्युदक्। प्रथममवज्योतनं दृष्टार्थम् शृतं वेदानीति (२. ३. १. १६) · अतोऽत्राधिश्रयणं श्रपणार्थमेव · शृतं कथं ज्ञायतऽइत्यत आह यर्ह्युदन्तं तर्हि जुहुयादिति (२. ३. १. १४) यस्मिन्काले तत्पय उदन्तं पावकवशादुद्गतान्तं[1] बुद्बुदवद्भवति तर्हि तस्मिन्काले तच्छृतं भवति तदवस्थापन्नेन पयसा जुहुयादित्यर्थः · इमं पक्षं निषेधति तद्वै नोदन्तं कुर्यादिति (२ ३. १. १४) · कथं तर्हि जुहुयादिति अधिश्रित्यैव जुहुयादिति (२. ३. १. १६) अधिश्रयणमात्रेणैव तच्छृतम् तादृशेनैव होमः कार्य इत्यर्थः · अतश्च विकल्पः उदन्तं कुर्यान्न वेति · अवज्योतनस्य च शृतवेदनार्थत्वात्तण्डुलदध्यादावभावः[2]। उदकासेचनमपि दृष्टार्थम् तापेन उदकस्यैव क्षयो यथा स्यान्न पयस इति · अतस्तण्डुलादावासेचनाभावः। पुनरवज्योतनमप्यासिक्तस्योदकस्य क्षयज्ञानार्थम् अतस्तस्यापि तण्डुलादावभावः · यवाग्वा[दी]नां प्रथमावज्योतनमेव भवति · घृतेऽप्युदकासेको न भवति अवज्योतनं तु भवति[3]। निधायमिति णमुलयम् ततश्च निधाय-निधायेत्यर्थः · अत एव मृताग्निहोत्रे प्रतिषेधो न त्रिः प्रतिष्ठापᳫ हरतीति (१२. ५. १. ८) तत्र निषेधादत्र विधिरुन्नीयते। उद्वासनानन्तरं पृथक्कृतानामधिश्रयणार्थानामङ्गाराणां गार्हपत्यमध्ये प्रेरणम् शाखान्तरात्।

अस्तमिते जुहोति ॥६॥ अस्तमिते सूर्ये सायमग्निहोत्रं जुहोति · अत्रास्तमितऽइत्युक्तत्वात्प्राचीनमनस्तमितऽइति न शङ्कनीयम्[4] अङ्गानां प्रधानकालत्वस्य न्याय्यत्वादुद्धरणादूर्ध्वमस्तमितऽएव कर्तव्यम् उद्धरणमात्रस्यैवानस्तमिते श्रवणात् · अस्तमितलक्षणमाह कात्यायनः (कर्मप्रदीप° १. १. ३) यावत्सम्यङ्न भाव्यन्ते नभस्यृक्षाणि सर्वतः न च लोहितिमापैति तावत्सायं च हूयतऽइति।

वैकङ्कतᳫ स्रुक्स्रुवं प्रतप्य पाणिना संमार्ष्टि ॥७॥ शोधयति हस्तस्पर्शनेन तत्संलग्नं रजोऽपनीय निर्मलीकरोति · पूर्वं स्रुवस्य संमार्गप्रतपने पश्चा-

---

1) °उद्गतं २. 2) अधिश्रयणाभावे तण्डुलादावनवज्योतनम् Karka. 3) न च यवाग्वामुदकासेको विरोधात् अवज्योतनं तु तन्त्रेण भवति · घृते पुनरुदकासेको न भवत्येव विरोधात् Karka. 4) Thus Mahâdeva: अस्तमितऽइति ग्रहणात् पूर्वं सर्वमनस्तमितऽएव प्रत्येतव्यम्· 5) होमार्थत्वाद्वैकङ्कती स्रुक्प्राप्नोत्येव स्रुवार्थोऽयमारम्भः Karka.

त्स्रुचः · आपस्तम्बसूत्रे विशेषः वैकङ्कत्यग्निहोत्रहवणी बाहुमात्र्यरत्निमात्री वा प्रसृताकृतिरिति ।

पुनः प्रतप्योन्नेष्यामीत्याह ॥ ८ ॥ यजमानं पृच्छेत् ।

ओ३मुन्नयेति यजमानस्तिष्ठन् ॥ ९ ॥

चतुरः स्रुवानुन्नयति ॥ १० ॥ स्थाल्याः सकाशाच्चतुरः स्रुवान् स्रुच्युन्नयति । इदं चतुर्गृहीतमाहुतिद्वयार्थम् · अतश्च पूर्वाहुत्यनन्तरं द्रव्यनाशादौ उत्तराहुत्यर्थं पुनश्चतुर्गृहीतं ग्राह्यम् · भक्षार्थस्य नाशादौ भक्षलोप एव न तदर्थं पुनर्ग्रहणम् । पञ्चावत्तिनां पञ्च स्रुवानुन्नयति पञ्च जमदग्नीनामित्यापस्तम्बवचनात् ।

स्थाल्यां परिशिनष्टि तद्ब्राह्मणः पिबेत् ॥ ११ ॥[1] नायं ब्राह्मणस्य पाने नियमः किं तर्ह्यब्राह्मणस्य प्रतिषेधोऽयम् (२. ३. ८. ३३) ।

उपरि समिधं धारयन्वाहीमिध्यधि गार्हपत्यादाहवनीयं हरति मुखमात्रे धारयन् ॥ १२ ॥ स्रुग्दण्डस्योपरि[2] चतुर्गृहीतपयस उपरि पालाशादिवृक्षोद्भवां[3] प्रादेशमात्रीं समिधमङ्गुल्याद्यन्तरितां धारयन् · अध्यधिशब्दः सामीप्ये उपरिभावे च · तेन स्रुचं हस्ते गृहीत्वा प्रथमं गार्हपत्यस्योपरि समीपऽएव धारयति ततो मुखमात्रे स्रुचं धारयन् आहवनीयं प्रति होमार्थं हरति · स्रुग्दण्डे समिधमुपसंगृह्येति शाखान्तरात्समिध उपरि धारणम् उपरिष्टात्स्रुग्दण्डे समिधमुपसंयम्येति मनुः ।

मध्ये निगृह्योदृह्योपविश्य समिधमादधात्यग्निज्योतिषं त्वा वायुमतीं प्राणवतीं स्वर्ग्यां स्वर्गायोपदधामि भास्वतीमिति ॥ २३ ॥[4] गार्हपत्याहवनीययोर्मध्ये अन्तराले स्रुचं मुखमात्रधृतां नाभिप्रदेशं यावन्निगृह्य नीचैर्गृहीत्वा पुनरुद्धृत्य मुखमात्रऽएव पुनर्धृत्वा आहवनीयसमीपं प्राप्य उपविश्य आहवनीयमध्ये समिधमादधाति कूर्चे स्रुचमनुपसाद्यैव सव्यहस्ते स्रुचं धृत्वा · दृष्टार्थमेतत्समिदाधानम् इन्धनार्थत्वात् अतो ब्राह्मणहस्तादिष्वर्थलोपादस्याभावः[5] ।

---

१) न क्षत्रियवैश्यौ स्वगृहेऽपि Mahâd. २) अस्पर्शयन् Mahâd. ३) वृक्षग्रहणं गुल्मलताव्युदासार्थम् Mah. ४) See Kâṇva Vâj. S. pag. १४. ५) See २५. ४. २. — अतश्च नैमित्तिकेषु हुताशस्तम्बादिषु (२५. ४. ६) न भवति Karka.

प्रदीप्तामभिजुहोत्यग्निर्ज्योतिरिति (३. ९) सजूरिति (३. १०) वा ॥ १४ ॥ प्रकर्षेण दीप्तायाः समिध उपरि शाखान्तरात्समिधो मूलाद्व्यङ्गुलं परित्यज्य मध्यभागे प्रथमाहुतिमग्निर्ज्योतिरित्यल्पेन द्रव्येण जुहोति · अथवा सजूर्देवेनेति मन्त्रेण रात्रिपदयुक्तेन[1]।

अग्निर्वर्च इति (३. ९) ब्रह्मवर्चसकामस्य ॥ १५ ॥ अयं मन्त्रगतस्तृतीयो विकल्पः काम्यः · सत्कर्मानुष्ठानवेदाध्ययनादिजनितं ब्राह्मं तेजो ब्रह्मवर्चसम्।

कूर्चे निधाय गार्हपत्यमवेक्षते होष्यन्नस्मिन् ॥ १६ ॥[2] अस्मिन्गार्हपत्ये होमं करिष्यन्पूर्वाहुतिहोमानन्तरं स्रुचं कूर्चे मुक्त्वा गार्हपत्यमवेक्षते · होष्यन्नस्मिन्नित्यपराग्निहोमस्य पाक्षिकतां दर्शयति · तथा शाखान्तरे आहवनीयऽएव जुहुयादिति सर्वेषु चैव जुहुयादिति च। होष्यन्नित्युक्तवान्मृताग्निहोत्रे अग्निहोत्रावृता हुत्वेत्यत्र (२६.६.२०) वचनात् न गार्हपत्यावेक्षणम्।

तूष्णीमुत्तरां भूयसीम् ॥ १७ ॥ उत्तरामिति कालतो देशतश्च व्याख्येयम् द्वितीयाम् पूर्वाहुतिहोमस्थानादुत्तरस्मिन्नग्निप्रदेशे[3] · मन्त्रस्याविधानादप्राप्तः तेन तूष्णीमिति स्वाहाकारनिवृत्त्यर्थम्। शाखान्तरात् पूर्वाहुत्या असंसृष्टामिति च · तथा शाङ्खायनः (२. ९. ४) उपसाद्योत्तरामसंसृजंस्तूष्णीं भूयसीं पूर्वस्या इति · अथ योत्तरा स्विष्टकृद्भाजनमेव सेति (२. ३. १. २३) स्विष्टकृद्भाजनत्वोक्तेरेवासंस्पृष्टत्वमपि शाखान्तरीयं सूचितम्। अत्र प्रजापतिर्देवता यदग्नये च प्रजापतये च सायं जुहोति यत्सूर्याय च प्रजापतये च प्रातरिति शाखान्तरात्।

भूयिष्ठꣳ स्रुचि ॥ १८ ॥ भक्षार्थं परिशिनष्टि।

द्विः प्रकम्प्य निदधाति ॥ १९ ॥ स्रुचं द्विरुत्क्षिप्य कूर्चे निदधाति · प्रकम्पनमत्रोदिङ्गनम् मृताग्निहोत्रे नोदिङ्गयतीति (१२.५.१.१२) प्रतिषेधात् · तथा च शाङ्खायनः (२. ९. ६) द्विरुदीचीं स्रुचमुद्यम्योपसादयतीति।

उपमृज्य स्रुचं कूर्चे निमार्ष्टि नमो देवेभ्यः ॥ २० ॥[4] स्रुक्प्रणालिकां[5]

---

1) ? रात्रिप्रयु° २. 2) कालद्वयोपादानसामर्थ्याद्विकल्पः होष्यन्वास्मिन्वा कालऽइति (!) · होष्यतः अवेक्षणम् अनुपसाद्यैव स्रुचम् (२.३.१.१७) Karka. होष्यन्निति शब्दसामर्थ्याद्होष्यन्नावेक्षतऽइत्यार्थिको व्यतिरेकः इति ज्ञापितं सम्प्रदायेनापि प्रवर्ग्ये Mahâd. 3) उत्तराशब्दस्य देशपरोऽपि द्रष्टव्यः अथ योत्तराधें जुहोतीति (२. ३. १. २३) Karka. 4) कूर्चस्योत्तरदेशे हस्तं निमार्ष्टि प्रोञ्छति Mahâd. 5) स्रुगग्रं Karka.

हस्तेन उपमृज्य तद्द्रव्यलिप्तं हस्तं कूर्चे निमार्ष्टि निमार्जनेन तद्धस्तलिप्तं द्रव्यं कूर्चेन योजयति ।

स्वधा पितृभ्य इति दक्षिणात उत्तानम् ॥२१॥ पाणिं निदधाति · उत्तानेनैव हस्तेन पुनः स्रुगग्रमुपमृज्य हस्तस्याधोभागमेव द्रव्यलिप्तं कृत्वा कूर्चस्य दक्षिणतो भूमावेवोत्तानं पाणिं निदधाति । उपमार्जनमपि सायं मुखात्प्रत्यक् प्रातः प्राक्संस्थम् · तथा चापस्तम्बः मुखादर्वाचीनꣳ सायं लेपमवमार्ष्ट्यूर्ध्वं प्रातरिति ।

अप उपस्पृश्येतरयोश्च पुष्टिकामः ॥२२॥[1] पित्र्यं मन्त्रमुक्त्वेति (१.१०.१४) प्राप्तमप्यपामुपस्पर्शनं पुनरुच्यते अपसव्यदक्षिणामुखतादिधर्मनिरासार्थम् । तत इतरयोः गार्हपत्यदक्षिणाग्न्योः पुष्टिकामः जुहोति · चकारादपुष्टिकामोऽपि[2] । तत्र गार्हपत्ये होममाह ·

स्थाल्याः स्रुवेणेह पुष्टिं पुष्टिपतिर्दधात्विह प्रजाꣳ रमयतु प्रजापतिः अग्नये गृहपतये रयिमते पुष्टिपतये स्वाहेति गार्हपत्ये ॥२३॥[3] स्थाल्याः सकाशात्स्रुवेण पयो गृहीत्वेह पुष्टिमिति गार्हपत्येऽग्नौ स्रुवेणैव जुहोति · तिष्ठत्समिधः सर्वत्र मध्यऽइति (१८.४.१०) पूर्वं तिष्ठता अग्नेर्मध्यप्रदेशे समिदाधानं कर्तव्यम् ततस्तस्याः पार्श्वे आहुतिहोमः अन्तेष्वाहुतीरुपविश्येति (१८.४.११) वचनात् अन्तराः समिधो भवन्ति बाह्या आहुतय इति श्रुतेश्च (६.२.३.४६) ।

तूष्णीं द्वितीयाम् ॥२४॥ स्थाल्याः सकाशात्स्रुवेणैव जुहोति · तूष्णीमिति स्वाहाकाराभावः ।

अग्नयेऽन्नादायान्नपतये स्वाहेति दक्षिणाग्नौ तूष्णीं द्वितीयाम् ॥२५॥[4] गार्हपत्यहोमानन्तरं दक्षिणाग्नौ समिधमाधाय स्थाल्याः स्रुवेण पयो गृहीत्वा अग्नयेऽन्नादायेति प्रथमामाहुतिं जुहोति ।

---

1) अपामुपस्पर्शनं पित्र्यत्वेऽपि सति अन्यधर्मव्युदासार्थम् । चकारात् जुहोति · अपुष्टिकामश्चेति केचित् तन्नातीव युक्तम् [तदा स्यवक्ष्यत्] पुष्टिकामश्चेति Mahâd. 2) Thus also Karka: चशब्दादपुष्टिकामस्य · 3) See Kâṇva, Vâj. S. pag. ६४. 4) See Kâṇva, Vâj. S. pag. ६४.

अनामिकया द्विः प्राश्नाति ॥ २६ ॥ अनामिकया स्रुक्स्थं हुतशेषं[1] द्विवारं प्राश्नाति एकवारं गृहीत्वा प्राश्याचम्य पुनरप्येवं करोतीत्यर्थः ।

उत्सृप्य निर्लेढ्याचम्योत्सिञ्चति देवान्जिन्व पितॄन्जिन्व तृतीयामुद्गृह्णाति सप्त ऽऋषीन्जिन्वेति ॥ २७ ॥[2] स्रुक्स्थं हुतशेषमुत्सृप्य पात्रान्तरे नीत्वा हस्ते वा कृत्वा आचम्य भक्षयित्वा ततस्तत्पात्रं हस्तं वा निर्लेढि जिह्वयासकृदास्वादयति · उत्सृप्य बहिर्निर्गम्येति माधवः तदा पानमर्थाद्धस्ते कृत्वा द्रवत्वात्पात्रान्तरे कृत्वा वा · किं पूर्वं प्राशीः किं द्वितीयं किमुत्सृप्यापा इति श्रुतेः (११. ५. ३. ४) उत्सृप्य वेदिसमीपादुत्सर्पणं कृत्वा किमपाः[3] पानं कृतवानसीत्यर्थः । ततः प्राशनानन्तरमग्निहोत्रहवणीं स्रुचमुदकेन पूरयित्वा उत्सिञ्चति स्रुचैवोर्ध्वं सिञ्चति देवान्जिन्वेति मन्त्रेण उत्तरतः ततो द्वितीयवारं तामग्निहोत्रहवणीं पूरयित्वा पित्र्यत्वाद्दक्षिणात उत्सिञ्चति प्राचीनावीती दक्षिणामुखः पितॄन्जिन्वेति मन्त्रेण ततो यज्ञोपवीत्यपः स्पृष्ट्वा तृतीयवारमग्निहोत्रहवणीं पूरयित्वा तृतीयां[3] स्रुचं प्रागुदीच्यामैशान्यामुद्गृह्णाति ऊर्ध्वमुद्यम्योदकमूर्ध्वमुच्चालयति[4] ।

चतुर्थीं कूर्चस्थाने त्रिर्निषिञ्चत्यग्नये पृथिवीक्षिते स्वाहा पृथिव्याऽअमृतं जुहोमि स्वाहामृतेऽअमृतं जुहोमि स्वाहेति ॥ २८ ॥ चतुर्थीं स्रुचं पूरयित्वा कूर्चस्थाने कूर्चमपसार्यैव आहवनीयस्य पश्चात्प्राक्संस्थमुदक्संस्थं वा त्रिवारमपो नीचैर्निनयति · शाखान्तरे अप्रक्षालितयैव स्रुचोद्ग्रहणपात्रयं कृत्वा ततः स्रुचं दर्भैः प्रक्षाल्याग्नयऽइति निनयनं विहितमस्ति ।

स्रुक्स्रुवमाहवनीये प्रतप्य निदधाति ॥ २९ ॥ स्रुक्स्रुवं शाखान्तरादाहवनीये[5] सहैव प्रतप्य कूर्चे निदधाति अथवा निदधाति सुगुप्ते देशे स्थापयति कृतकार्यत्वात् ।

समिध आदधाति सर्वेषु यथापर्युक्षितं समिदसि समिद्धो मेऽअग्ने दीदि-

---

1) स्रौचं होमावशिष्टम् Mahâd. 2) उत्सृप्य स्रौचं मुखेनोपरि वायुबलेन पीत्वा निर्लेढि जिह्वयास्वादयति तत आचम्य स्रुचोदकमुत्सिञ्चति देवानिति प्रथमाम् पितॄनिति द्वितीयाम् तृतीयां स्रुचं पूरयित्वोद्गृह्णाति ऊर्ध्वं क्षिपति Mahâd. उत्सृप्येति पात्रान्तरे नीत्वा · चमु भक्षने भक्षयित्वा द्रव्यपात्रं निर्लेढि · तत उत्सिञ्चति Karka. 3) तृतीयं २. 4) ? °मुच्छालयति २. See *Westergaard* sub शल्. 5) प्रतपनस्य संस्कारत्वाद्गार्हपत्ये प्राप्ते आहवनीये विधीयते Mahâd.

हि समेद्धा तेऽग्ने दीद्यासमिति ॥ ३० ॥ [1] ततो यथापर्युक्षितं होमारम्भे कृतपर्युक्षणक्रमेण आहवनीयगार्हपत्यदक्षिणाग्निषु गार्हपत्यदक्षिणाग्न्याहवनीयेष्विति क्रमेण वा [सर्वेषु] समिध आदधाति · एकैकेन मन्त्रेण एकैकां समिधं प्रत्यग्नि [2] ॥ अत ऊर्ध्वं यजमानस्य वात्सप्रोपस्थानं क्षुल्लकोपस्थानं वा · ततस्तूष्णीमाहवनीयस्योपस्थानम् तत्समीपेऽसनं च · ततो गार्हपत्यसमीपे शयनमासनं वा · ततः सर्वेषामग्नीनां पर्युक्षणं प्राग्वत् · ततो वाग्विसर्ग आचमनं च · ततोऽतीत्य निष्क्रमणं कुर्वतो दक्षिणाग्नेर्मनसा ध्यानम् । अथाध्वर्योर्होमे वाग्यमनकालं सावधिमाह ·

वाग्यतो दोहप्रभृत्या होमात्क्षीरहोता चेत् ॥ ३१ ॥ [3] क्षीरहोता चेद्यदि वाग्यतो जुहोति तदा गोदोहप्रभृति आ होमाद्वाग्यतो भवेत् · क्षीरहोतेति योगमनपेक्ष्यैव रूढ्याध्वर्युरुच्यते [4] · तेनाध्वर्युकर्तृकहोमपक्षे तस्य दोहप्रभृत्या होमाद्वाग्यमस्य विकल्पः । अथवा यदि क्षीरहोता जुहोति तदा दोहप्रभृत्या होमात् वाग्यतो भवतीत्येवं योजना · यजमानस्य तु प्रथमाचमनानन्तरं वाग्यमो वाचं विसृज्य द्वितीयमाचमनमिति · अस्मिन्पक्षे क्षीरहोतुर्वाग्यमनम् ॥

॥ चतुर्दशी कण्डिका ॥ १४ ॥

अथ पद्धतिः ॥

ततोऽग्निहोत्रीं धुक्ष्वेति दोग्धारं प्रति प्रैषः दोग्धा च शूद्रव्यतिरिक्तो भवति · ततः प्रेषितो दोग्धा वितानस्य दक्षिणतः प्राङ्मुखीं वोदङ्मुखीं वाग्निहोत्रीं गामवस्थाप्य वत्सं संसृज्यापनीय च त्रैवर्णिकघटितायामूर्ध्वकपालायां मृन्मय्यां स्थाल्यां पयो दोग्धि · अध्वर्योर्दोहप्रभृति होमसमाप्तिपर्यन्तं विकल्पेन

---

1) See Kâṇva, Vâj. S. pag. ६५. 2) समिध इति बहुवचनसामर्थ्यात्तिस्रस्तिस्र एकैकस्मिन्निति देवः कर्काशयोऽपि · ब्राह्मणहस्तादिषु (२५. ४. २) न समिदाधानम् अश्रय-भावात् ऊहितेन समिदाधानमिति कर्कः Mahâd. स चायं मन्त्रो ब्राह्मणहस्तादिषु समवेतवचनत्वाद्विपरिणाम्यते · ननु च प्रकृतौ विपरिणामो न युज्यते यागसाधनभूताग्निविकारत्वाददोषः Karka. 3) यद्यध्वर्युः क्षीरहोता भवति तदा दो॰मात् वाग्यतो भवेत् Mah. 4) क्षीरहोता प्रत्यस्तमितावयवार्थवृत्तितयाध्वर्युरुच्यते · चेच्छब्दो यद्यर्थः यदि वाग्यतो यद्यवाग्यत इति अतश्चाध्वर्योर्दोहप्रभृति वाग्यमविकल्पः Karka.

त्राग्यमनं भवति नियमेनेति केचित् दक्षिणाग्निहोमानन्तरं वाग्विसर्गः। ततोऽध्वर्युर्गार्हपत्यात्कतिपयानङ्गारान्दुग्धश्रपणार्थमुत्तरतः पृथक्करोति खरमध्य एवोत्तरतो भूमिसंलग्नानेव प्रेरयति न तूत्पाद्य · ततो गोः समीपे गत्वा दुग्धस्थालीमादाय तामभ्यन्तरे[1] कुर्वन्नाहवनीयं पूर्वेणाहृत्य गार्हपत्यस्य पश्चादुपविश्य पृथक्कृतेष्वङ्गारेषु तां दुग्धस्थालीमधिश्रयति · ततो गार्हपत्ये परिस्तृतेभ्योऽन्यदर्भतृणमेकं प्रदीप्तं कृत्वा तेन तृणेन स्थालीस्थं पयोऽवज्योत्य स्रुवेणापः प्रत्यानीय पुनस्तथैवावज्योत्योदगुद्वास्य निदधाति · ततो हस्तं विसृज्य पुनः स्थालीमादाय तत उत्तरतो निदधाति पुनरपि स्थालीमादाय ततोऽप्युत्तरतो निदधाति। एतच्चिरुद्वास्य वैकङ्कतं स्रुक्स्रुवं गार्हपत्ये प्रतप्य हस्तेनोभयं सहैव तथा संमार्ष्टि यथोभयोरप्युपरि अधस्ताच्च सर्वहस्तेन संमर्शनं भवति · अथवा पूर्वं स्रुवमन्तर्बहिश्च हस्तेन संमृज्य पश्चात्स्रुचमपि तथैव संमार्ष्टि। ततः पुनः स्रुक्स्रुवं गार्हपत्ये प्रतप्योन्नेष्यामीति यजमानं पृच्छति · यजमानश्च तिष्ठन्नोमुन्नयेत्यध्वर्युमनुजानाति · ततोऽध्वर्युः सव्ये हस्तेऽग्निहोत्रहवणीमुत्तानां निधाय दक्षिणेन स्रुवमादाय[2] स्थालीतोऽग्निहोत्रहवण्यां चतुरुन्नीय स्रुवं[3] स्थाल्यामेव निदधाति पञ्चावत्तिनः पञ्चकृत्व उन्नयनं कार्यम्। ततः प्रादेशमात्रीं पालाशादियज्ञियवृक्षोद्भवां समिधं स्रुग्दण्डस्योपर्यङ्गुल्याद्यन्तरितां धारयंस्तां स्रुचं गार्हपत्यस्योपरि समीप एव नीचैः कृत्वा ततो मुखमात्रे स्रुचं धारयन्नाहवनीयं प्रति हरति · गार्हपत्याहवनीययोर्मध्यदेशे स्रुचं नीचैर्गृहीत्वा पुनरप्युद्धृत्य मुखमात्र एव धारयित्वाहवनीयं गत्वा तत्समीपे वायव्यां प्राङुपविश्य दक्षिणं जान्वाच्य सव्येन स्रुचं गृहीत्वा दक्षिणेन समिधमादधाति अग्निज्योतिषमिति। ततो दक्षिणेन स्रुचमादायाग्निं प्रदीप्तं कृत्वा प्रदीप्तायां समिधि समिधो मूलभागादङ्गुलद्वयं त्यक्त्वा समिध उपर्याहुतिं जुहोति · अग्निर्ज्योतिरिति (३. ९) मन्त्रेण गृहीतस्य पयसश्चतुर्थांशं जुहोति इदमग्नय इति त्यागः · अथवा सजूर्देवेनेति (३. १०) मन्त्रेण रात्र्यग्निपदयुक्तेन पूर्वामाहुतिं जुहोति · ब्रह्मवर्चसकामस्याग्निर्वर्च इति (३. ९) मन्त्रेण पूर्वामाहुतिं जुहोति · इति पूर्वाहुतौ त्रयो मन्त्रविकल्पाः। एवं पूर्वा-

[1] तमाभ्यं° १. [2] ? स्रुचमा° १. [3] च चतुरुन्नीय १

हुतिं स्वल्पां हुत्वा स्रुचं कूर्चे निधाय हस्तं विसृज्य गार्हपत्यमवेक्षते · पुनः स्रुचमादाय प्रजा[प]तिं मनसा ध्यायन् तूष्णीमुत्तराहुतिमग्नेरुत्तरभागे पूर्वाहुत्या संसर्गमकुर्वन्पूर्वाहुतितो भूयसीं जुहोति तूष्णीमिति श्रुतेः स्वाहाकारस्याप्यत्राभावः इदं प्रजापतयऽइति त्यागः · भक्षार्थं द्वितीयाहुतितोऽप्यतिबहु पयः स्रुचि परिशेषयेत् · ततः स्रुचमुदीचीं द्विरुत्क्षिप्य कूर्चे निदधाति। ततः स्रुगग्रमधोमुखेन हस्तेन प्रत्यगुपमृज्य कूर्चस्योत्तरभागे पयोलेपं निमार्ष्टि नमो देवेभ्य इति · तत उत्तानेनैव हस्तेनाङ्गुल्यधोभागेनैव पुनः स्रुगग्रं प्रत्यक्परिमृज्य कूर्चस्य दक्षिणतो भूमावुत्तानं पाणिं निदधाति स्वधा पितृभ्य इति ततः केवलमुदकोपस्पर्शनम् नात्रापसव्यम् न दक्षिणामुखता। ततो गार्हपत्यं गत्वा तिष्ठन्त्समिधमाधाय वायव्यां प्राङुपविश्य दक्षिणं जान्वाच्य स्थाल्याः स्रुवेण पयो गृहीत्वेह पुष्टिमिति समित्पार्श्वे जुहोति गार्हपत्येऽग्नौ इदमग्नये गृहपतये रयिमते पुष्टिपतये · ततो द्वितीयं स्रुवं गृहीत्वा तूष्णीं द्वितीयामाहुतिमुत्तरतो जुहोति इदं प्रजापतये। तत उत्थायापरेण गार्हपत्यं दक्षिणाग्निं गत्वा तस्माद्वायव्यां स्थितः समिधमाधाय तत्रैवोपविश्य स्थाल्याः स्रुवेण पयो गृहीत्वा दक्षिणाग्नौ समित्पार्श्वे जुहोति अग्नयेऽन्नादायेति मन्त्रेण इदमग्नयेऽन्नादायान्नपतये · पुनः स्थाल्याः स्रुवेण पयो गृहीत्वा द्वितीयामाहुतिमुत्तरतस्तूष्णीं जुहोति इदं प्रजापतये। सर्वत्र होमः प्रदीप्तेऽग्नौ कर्तव्यः · योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः मन्दाग्निरामयावी च दरिद्रश्च स जायतऽइति दोषस्मरणात् (कर्मप्रदीप° १. २. १२) · समिद्धहोमेन होव समृद्धा आहुतय इति श्रुतेश्च (१. ५. ३. ७)। ततः स्रुचमादाय भक्षार्थं बहिरागत्योपविश्यानामिकया स्रुक्स्थं पयो गृहीत्वा भक्षयित्वाचम्य पुनरनामिकयैव गृहीत्वा भक्षयित्वाचामति · ततः सर्वं पयो दक्षिणहस्ते कृत्वा प्राश्य पयोलिप्तं हस्तं सकृदेव निर्लेढि जिह्वयास्वादयतीत्यर्थः। ततो हस्तं प्रक्षाल्य द्विराचम्य गत्वाहवनीयसमीपऽउपविश्य दक्षिणहस्तेनोदपात्रमादाय स्रुचमुदकेन पूरयित्वा तदुदकमाहवनीयादुत्तरस्यां दिशि स्रुचोत्सिञ्चति देवाञ्जिन्वेति · ततः पुनः स्रुचमुदकेन पूरयित्वाहवनीयस्य दक्षिणतः स्रुचा तदुदकमुत्सिञ्चति पितृतीर्थेन प्राचीनावीती दक्षिणामुखः पितॄञ्जिन्वेति · ततो

ऽप उपस्पृश्य पुनस्तृतीयवारं स्रुचं पूरयित्वा प्रागुदीच्यां दिश्यूर्ध्वमुदकमुत्सिञ्चति · ततश्चतुर्थीं स्रुचं पूरयित्वाहवनीयस्य पश्चात्कूर्चस्थाने प्राक्संस्थमुदक्संस्थं वा त्रिर्निषिञ्चति निनयति अग्नये पृथिवीक्षितऽइत्यादिभिस्त्रिभिर्मन्त्रैः स्वाहान्तैः · ततः स्रुक्स्रुवमाहवनीये प्रतप्य कूर्चे निदधाति । ततः पर्युक्षणाक्रमेण सर्वेष्वप्यग्निषु तिस्रस्तिस्रः समिध आदधाति · पर्युक्षणस्य प्राक् द्वौ पक्षावुक्तौ पूर्वमाहवनीये ततो गार्हपत्ये ततो दक्षिणाग्नाविति अथवा गार्हपत्ये दक्षिणाग्नौ आहवनीये चेति · अतो येन क्रमेणादौ पर्युक्षणं कृतम् तेनैव क्रमेण समिध आदधातीत्यर्थः तत्र समिदसीत्येतावता मन्त्रेण प्रथमाम् समिद्धो मेऽअग्ने दीदिहीति द्वितीयाम् समेद्धा तेऽअग्ने दीद्यासमिति तृतीयाम् अथवा सकृदेव तिस्रस्तिस्रः समिधः सर्वेष्वप्यग्निषु आदधाति तदा समिदसि समिद्धो मेऽअग्ने दीदिहि समेद्धा तेऽअग्ने दीद्यासमित्येतावता मन्त्रेण ॥ ततो यजमानः पूर्वोक्तेन वात्सप्रेणाग्नीऽउपतिष्ठते न. वा · अथवा वात्सप्रोपस्थाने भूर्भुवः स्वरित्यनेनैवाहवनीयं गार्हपत्यं चोपतिष्ठते पूर्वमाहवनीयम् ततो गार्हपत्यमिति । ततः पुनराहवनीयं तूष्णीमुपस्थाय तत्समीपे क्षणमुपविशति इन्द्रायाहवनीयाय नम इति चाह · तत उत्थाय गार्हपत्यसमीपे शयीत उपविशति वा यमाय राज्ञे गार्हपत्याय नम इति चाह । ततोऽध्वर्युः पूर्वपर्युक्षणाक्रमेण सर्वेषामग्नीनां पर्युक्षणं करोति · ततो यजमानो वाचं विसृज्य विद्युदसीत्यप आचामति[1] पत्न्यपि तूष्णीमाचामति । ततो यजमानो यथाप्रविष्टं निष्क्रामति · तत्र यद्यपराग्नीऽअन्तरेण प्रविष्टस्तदाहवनीयं प्रदक्षिणं परीत्य दक्षिणाग्निमुत्तरेण गत्वा गार्हपत्यदक्षिणाग्न्योरन्तरालेन प्रत्यङ्निष्क्रामेत् · अथ यद्यपराग्नी दक्षिणेन प्रविष्टस्तदाहवनीयं प्रदक्षिणीकृत्यापराग्नी दक्षिणेनैव प्रत्यङ्निष्क्रामेत् · तत्र निष्क्रमणं कुर्वन्नडाय नैषिधायान्वाहार्यपचनाय नम इति मनसा दक्षिणाग्निमुपस्मरेत् । तत आवसथ्येऽग्नौ होमं कुर्यात् । ततो वैश्वदेवम् । तदुक्तम् होमं वैतानिके कृत्वा स्मार्तं कुर्याद्विचक्षणः स्मृतीनां वेदमूलत्वात्स्मार्तं केचित्पुरा विदुः · तथा पालाश्यः समिधः कार्याः खादिर्यस्तदभावतः शमीरोहितकाश्वत्थास्तदभावे

---

[1] See ४. १५. ५.

ऽर्कवेतसौ · तथा पालाशखदिराश्वत्थशम्युदुम्बरजा अपि अपामार्गार्कदूर्वाश्च कुशाश्चेत्यपरे विदुरिति। होमद्रव्याण्याह कात्यायनः[1] तैलं दधि पयः सोमो यवागूरोदनं[2] घृतम् तण्डुला मांसमापश्च दश द्रव्याण्यकाम[त] इति॥ ॥ इति सायंहोम उक्तः॥ ॥१४॥

इति चतुर्थस्य चतुर्दशी कण्डिका॥ ॥

प्रातर्जुहोत्यनुदिते॥१॥[3] अग्निहोत्रम् · अनुदितस्तु द्विविधः अनुदितश्च समयाध्युषितश्च · मनुः (२. १५) उदितेऽनुदिते चैव समयाध्युषिते तथेति · कात्यायनः[4] रात्रेश्च षोडशे भागे ग्रहनक्षत्रभूषिते कालं त्वनुदितं ज्ञात्वा होमं कुर्याद्विचक्षणः तथा प्रभातसमये नष्टे नक्षत्रमण्डले रविर्यावन्न दृश्येत समयाध्युषितं च तत्। अस्यां कण्डिकायां यत्र-यत्र प्रातरित्युच्यते तत्प्रातर्होमऽएव भवति अन्यत्सर्वं साधारणं सायम्प्रातर्होमयोः[5] कर्मैकत्वज्ञपनाय सायारम्भं प्रातरपवर्गमिदमेकं कर्मेति · उक्तम् (कर्मप्रदीप° २. ३. १) सायमादि प्रातरन्तमेकं कर्म प्रचक्षते दर्शान्तं पौर्णमासादि एकमेव मनीषिण इति।

अन्तरेणापराग्नी गत्वा दक्षिणेन वा प्रदक्षिणं गार्हपत्यं परीत्योपविशति यजमानः॥२॥ यजमानः[6] पूर्वेणाहवनीयं प्रदक्षिणमागत्य दक्षिणाग्नेरुत्तरेण अपराग्नी अन्तरेण गार्हपत्यदक्षिणाग्न्योरन्तरालेन प्रत्यङ् गत्वा अथवा तौ दक्षिणेन गत्वा गार्हपत्यं प्रदक्षिणं परीत्य स्वस्थानऽउपविशति · अयं संचरः सायम्प्रातर्होमयोः साधारणः प्रागुक्तसंचरेण · (४. १३. १२) सहास्य विकल्पः।

पत्नी च यथादेशम्॥३॥ पत्न्यपि एवमेव प्रविश्य यथादेशमादेशस्यानतिक्रमेण उपविशति तत्र गार्हपत्यान्नैऋत्यां दिशीशानाभिमुखीत्यर्थः[7]।

---

१) not in the Karmapradîpa. २) °रोचनं Cod., but see schol. at ४. १५. २६. ३) सायंहोमोऽनुविहितः इदानीं प्रातर्होमस्य विशेषानुकथनम् Karka. ४) not in the Karmapradîpa. ५) केचिद्धर्माः सायंहोमसंनिधौ विहिताः केचित्प्रातर्होमसंनिधाविति कर्मैकत्वज्ञापनायैव Karka. ६) यजमानग्रहणं सायम्प्रातरुभयत्राचमनकालप्रापणार्थम् Mahâd. ७) ? °शानामभि° २.

अप आचामति वृष्टिरसि वृश्च मे पाप्मानꣳ सत्येन व्रतमुपैम्यापः सत्यं मयि व्रतमिति ॥ ४ ॥ यजमानोऽन्यतरेण संचरेण विहारं प्रविश्य स्वस्थान उपविश्याप आचामति उदकं भक्षयतीत्यर्थः · अग्रे (५) विसर्गोपदेशादाचमनानन्तरं यजमानस्य वाग्यमनम् · पत्न्यपि तूष्णीमाचामति ।

वाचं विसृज्य पुनराचामति विद्युदसि वि मे पाप्मानं जह्यपोऽवभृथमभ्युपैमि मयि सत्यं गोषु मे व्रतमिति ॥ ५ ॥ हुते च धारावर्जमित्येतत्पर्युक्षणानन्तरं (४. १३. १२) यजमानो वाचं विसृज्य[1] विद्युदसीति पुनरप आचामति[2] · वाग्यमस्य पदार्थधर्मत्वात्तदन्ते विसर्गः । सत्येन व्रतमुपैमीति (४) व्रतशब्देन वाङ्नियम उच्यते · अतो मन्त्रलिङ्गादेवं ज्ञायते यदाचमनानन्तरं वाग्यमनमिति ।

उन्नयामीत्याह प्रातः ॥ ६ ॥ उन्नेष्यामीत्यस्य स्थाने उन्नयामीत्याह यजमानं प्रति क्षीरहोता ।

प्राक्सꣳस्थꣳ समित्पर्युक्षणं धारा च ॥ ७ ॥ प्रातरित्यनुवर्तते[3] · समिदसीत्येतत्समिदाधानम् (४. १४. ३०) होमात्पूर्वभावि पश्चाद्भावि पर्युक्षणं च धारा च (४. १३. १६-१९) प्राक्संस्थं भवति प्रथमं गार्हपत्यस्य पर्युक्षणं ततो दक्षिणाग्निः ततः प्राक्संस्था धारा तत आहवनीयस्य पर्युक्षणमिति · एवं प्राच्यां संस्था भवति · तथोदकधारा प्राक्संस्थैव गार्हपत्यादारभ्याहवनीयं यावन्निनेया ।

उभयत्र वा ॥ ८ ॥[4] सायं प्रातश्च विकल्पेन ।

अग्निशब्दे सूर्यः ॥ ९ ॥ सायंहोममन्त्रेषु यत्र-यत्राग्निशब्दः प्रातर्होममन्त्रेषु तत्स्थाने सूर्यशब्दः प्रयोज्यः । अनेन सूत्रेण मन्त्रसमाम्नायः प्रकटीक्रियते अग्निहोत्रमन्त्रप्रकरणे ये सूर्यलिङ्गका मन्त्रास्ते प्रातर्होमे प्रयोक्तव्या इति · तेन गार्हपत्यदक्षिणाग्निपदस्थाने सूर्यपदप्रयोगो न भवति समाम्नायाभावात् · सूर्यज्योतिषम्[5] सूर्यो ज्योतिः सूर्यो वर्च इति ।

रात्र्युषसाङ्केति वा ॥ १० ॥[6] सजूꣳ रात्र्येन्द्रवत्येत्यत्र (३. १०) रात्र्येत्यस्य

---

[1] विष्णुशब्दोच्चारणादिना Mahâd. [2] आचमनम् अवभृथमभ्युपैमीति मन्त्रलिङ्गात् ततोऽतीत्य निष्क्रमणम् Mahâd. [3] चकारात्प्रातः Mahâd. [4] उभयत्र वा प्राक्संस्थं Karka. [5] See Kâṇva Vâj. S. pag. ६४. [6] रात्रिशब्दे उषसेति वा प्रयोगः अङ्केति वा Karka. We expect रात्रा (i. e. रात्रिशब्दे) ऽउष° !

स्थाने सजूरूषसेन्द्रवत्येति वा सजूरग्नेति वा प्रातर्होमे प्रयोज्यम् ।

ज्योतिः सूर्य इति वा (३. १) प्रातः ॥ ११ ॥[1] अथवा प्रातर्होमे ज्योतिः सूर्य इत्यनेन मन्त्रेण वा आहवनीये पूर्वामाहुतिं जुहोति · सूर्यो ज्योतिरिति वा ॥ ॥ अथ काम्यान्होमकालानाह ·

प्रथमास्तमिते पर्युदयं च स्वर्गकामस्य ॥ १२ ॥[2] अस्तमितमात्र एव सायं जुहुयात् सूर्योदयसमीप एव प्रातः · कालादेवैतत्फलम् न त्वग्निहोत्रात्[3] ।

तमोऽभ्यये सायं जुहुयाद्वियति प्रातरायुष्कामस्य ॥ १३ ॥[4] तमसोऽन्धकारस्यागमे · विगच्छति तमसि ।

अन्तःपशौ पशुकामस्य सायम्प्रातः ॥ १४ ॥ अन्तःपशौ काले ग्राममध्ये पशवो यस्मिन्काले · सायम् पशुषु ग्राममध्य आगतेषु · प्रातश्च ग्रामाद्निःसृतेषु ।

शयाने श्रीकामस्य प्रातः ॥ १५ ॥ शयाने सुप्त एव समस्तलोके अप्रबुद्धे ।
[एवं काम्या होमकाला उक्ताः अधुना काम्या अग्न्यवस्था आह ·]

प्रथमसमिद्धे धूप्यमाने प्रजासु निहत्येव सहसान्नमत्स्यतः ॥ १६ ॥ यो यजमानः प्रजासु स्वदेशनिवासिषु लोकेषु निहत्य-इव नितरां प्रजाः हत्वा-इव अत्यर्थं ताडयित्वा-इव ताभ्यः सकाशात्सहसा बलेनान्नमत्तुमिच्छति[5] धनधान्यादि ग्रहीतुमिच्छति तस्य प्रथमसमिद्धे प्रथममेव ज्वालाप्रादुर्भावे धूप्यमाने सधूमेऽग्नौ[6] जुहोति · तच्चैतत्क्षत्रियविषयम् ब्राह्मणवैश्ययोर्जनपदासम्भवात् ।

भूयिष्ठार्चिषि गृहीत्वेव सहसा ॥ १७ ॥ यो यजमानः प्रजाः गृहीत्वा-इव उपरुध्य-इव लोहकटकादिना बद्ध्वा-इव न तु निहत्य सहसा बलेन ताभ्यः अन्नं धनधान्यादि स्वीकर्तुमिच्छति · तस्य बहुलज्वालायुक्ते वह्नौ जुहोति · एतदपि क्षत्रियविषयम् ।

---

[1] सायमग्निर्ज्योतिरिति पक्षे प्रातः ज्योतिः सूर्य इति · वाशब्दात्सूर्यो ज्योतिरिति Mah. See २. ३. १. ३४. [2] यजमानस्य · षष्ठ्यन्तत्वाज्ज्ञाताध्वर्युरेव Mahâd. [3] स चायं गुणफलसम्बन्धो न कर्मफलसम्बन्धः Karka. [4] अध्वर्युरायुष्कामस्य गृहे Mahâd. [5] Thus Ss. बलात्स्वन्न° २. [6] Thus Ss. समिध्येऽग्नौ २.

प्रदीप्ततमे श्रीयशस्कामस्य ॥ १८ ॥ श्रीकामस्य च यशस्कामस्य च · एतच्च ब्राह्मणादीनां त्रयाणां वर्णानां साधारणम् ।

अर्चिःप्रत्यवाये मैत्रेणान्नमत्स्यतः ॥ १९ ॥ ज्वालापसरणे जायमाने · एतदपि त्रैवर्णिकस्य साधारणम् ।

अङ्गारेषु चाकश्यमानेषु ब्रह्मवर्चसकामस्य ॥ २० ॥[१] देदीप्यमानेषु · ब्राह्मणस्यैव ॥ एवं काम्या अग्न्यवस्था उक्ताः अधुना काम्यानि होमद्रव्याण्याह ·

पयसा स्वर्गकामः पशुकामो वा ॥ २१ ॥[२]

यवाग्वा ग्रामकामः ॥ २२ ॥ तण्डुलैः[३] शिथिलपक्का यवागूरित्युच्यते[४] · पेया यवागूरिति धूर्तस्वामिनः ।

तण्डुलैर्बलकामः ॥ २३ ॥ व्रीहियवश्यामादिहविष्यान्नतण्डुलैः ।

दध्नेन्द्रियकामः ॥ २४ ॥[५] इन्द्रियं चक्षुःश्रोत्रादि तत्कामः ।

अनधिश्रयणं च श्रुतिसामर्थ्याभ्याम् ॥ २५ ॥[६] न दध्यधिश्रयतीति श्रुतेः · तथा सामर्थ्यात् यदि दध्नोऽधिश्रयणं क्रियते तर्हि तापसंयोगाद्दधित्वमेवापगच्छति आमिक्षात्वं सम्पद्यते ।

घृतेन तेजस्कामः ॥ २६ ॥ स्मृत्यन्तरे दश द्रव्याणि नित्यान्युक्तानि तैलं दधि पयः सोमो यवागूरोदनं घृतम् तण्डुला मांसमापश्च दश द्रव्याण्यकामत इति ।

संवत्सरं जुहुयादेतेषामेकैकेन कामसंयोगे ॥ २७ ॥ एतेषां प्रथमास्तमिते पर्युदयं चेत्यादिसूत्रोक्तानां (१२) कालाग्न्यवस्थाद्रव्याणां मध्ये कामसंयोगे कामसम्बन्धनिमित्तं स्वर्गादिकामसिद्ध्यर्थमेकैकेन संवत्सरं जुहुयात् · संवत्सरेणैकैकस्य कामसिद्धिर्भवतीत्यर्थः[७] ।

---

१) अग्निर्वर्च इति मन्त्रेण सायम् सूर्यो वर्च इति प्रातः Mahâd. २) दुग्धेन अग्निहोत्रं जुहुयात् Mahâd. ३) °लै २. °लाः Mahâd. ४) Thus २. यवागूशब्देनोच्यते Mahâd. ५) इन्द्रियाणां पाट[व]कामः Mahâd. ६) तण्डुलानां च सामर्थ्यात् Mahâd. श्रुत्युपादाने सति सामर्थ्यग्रहणं क्रियमाणं तण्डुलार्थं भवति Karka. ७) संवत्सरसंमिता वै व्रतचर्येति श्रुतत्वात् (५. ५. ३. २) Karka.

सायम्प्रातर्वा ॥ २८ ॥ अथवा कामसंयोगे सति एकैकेन कामादिना सायम्प्रातर्होमः कर्तव्यो न संवत्सरम् · सायारम्भे प्रातरपवर्गे इदमेकमग्निहोत्रम्[१] तत्र चायं गुणफलसम्बन्धः तस्मात्सायम्प्रातरेवेति · तत्राप्यग्निव्यवस्थासु[२] एकैकेन कामेन संवत्सरमेव होतव्यम् । अथ काम्यहोमद्रव्यपक्षेऽपि सायंहोमे येन द्रव्येण हुतम् तेनैव प्रातर्होमः कार्यः · अलाभे तत्प्रतिनिधिभूतं सदृशं द्रव्यान्तरम् न तु वैकल्पिकम् ।

दक्षिणेन प्रवेशनमग्निहोत्रेष्टिषु ॥ २९ ॥ अग्निहोत्रे सायम्प्रातर्होमे इष्टिषु च सर्वासु[३] दक्षिणेन द्वारेण गार्हपत्यागारे कर्मार्थं प्रवेशनम् ।

सायम्प्रातराहवनीयस्यासनोपस्थाने ॥ ३० ॥[४] आहवनीयस्योपस्थानं तूष्णीं कर्तव्यम् ततस्तत्समीप एवोपवेशनं च · सूत्रे तु अल्पाक्षरत्वादासनपदस्य पूर्वनिपातः ।

शय्यासनं वा गार्हपत्ये ॥ ३१ ॥ ततो गार्हपत्यं प्रत्यागत्य तत्समीपे शय्या शयनं कर्तव्यम् आसनमुपवेशनं वा कर्तव्यम् · तच्च पर्युक्षणात्पूर्वं भवति हुते हि पर्युक्षणमुक्तम् हुते च धारावर्जमिति (४. १३. १९) · वात्सप्रोपस्थानं च सायमस्मादपि पूर्वतरं भवतीति प्रागुक्तम् ।

संव्रजन्मनसोपस्मृत्य दक्षिणाग्निम् ॥ ३२ ॥[५] अत्रायं क्रमः · आहवनीयगार्हपत्योपस्थानानन्तरं पर्युक्षणम् वाग्विसर्गः विद्युदसीत्याचमनम् प्रागुक्तसंचरद्वयमध्ये येन संचरेणादौ प्रविष्टो भवति अतीत्य निष्क्रमणमिति वचनात् (१. ८. २५) तेनैव संचरेण संव्रजन्निष्क्रामन्दक्षिणाग्निं मनसा उपस्मृत्य मनसैव ध्यात्वोपतिष्ठेतेति अथ यत्रैव संव्रजन्नित्यादिश्रुतेः (२. ३. २. ४) ।

अनशित्वा प्रातर्मुहूर्तं सभासन्नं सभ्यस्य ॥ ३३ ॥ यजमानः सभायां तस्य समीपे उपवेशनं करोति[६] ।

---

१) अग्निहोत्रं हि सायम्प्रातःपरिसमापनम् Karka. २) अग्निविकल्पेषु संवत्सर इष्यते · तत्र ह्यग्निविकल्पान्प्रकृत्याह एतेषामेकं संवत्सरमुपेत्सेदिति (२. ३. २. १४) Karka. ३) अयं च द्वारनियमोऽग्निहोत्रेष्ट्यां च तत्रैव हि श्रूयते Karka. यस्य कस्य चित् ऋत्विग्यजमानपत्नीद्रव्यादीनाम् Mahâd. ४) पूर्वमुपस्थानं श्रुतौ (२. ३. २. ४) आसनं सूत्रे · एतदुपस्थानं तुष्णीकोपस्थानोत्तरं भवति Mahâd. ५) अनाहरणपक्षेऽपि मनसोपस्मरणं तु भवत्येव Mahâd. ६) See २. ३. २. ५.

भस्मोद्धृतमुपेयात् ॥ ३४ ॥[1] गार्हपत्यादिभ्यो भस्मोद्धृत्य यत्र राशिः कृतो भवति तत्समीपं गच्छेत् । अत्रोपस्थानं चोपस्थेयस्य मनसा वाचा कर्मणा चाराधनम् · ततश्चात्रोपस्थानस्योपक्रमे ब्राह्मणे आहवनीयादीनां यदिन्द्रादिरूपत्वमुक्तम् तद्यथाऽएष एवेन्द्र इत्यादिना (२. ३. २. २) तदत्रोपस्थानकाले एतेषामिन्द्रादिरूपत्वेन चिन्तनार्थम् · दक्षिणाग्नेर्मनसोपस्मरणविधानादितरेषां वाचापि आराधनं कार्यमिति प्रतीयते ततश्चेन्द्रायाहवनीयाय नम इत्युक्त्वाहवनीयं नमस्कुर्यात् यमाय राज्ञे गार्हपत्याय नम इति गार्हपत्यं नमस्कुर्यात् नडाय नैषिधायान्वाहार्यपचनाय[2] नम इति दक्षिणाग्निं मनसैव न तु वाचा अनश्नते सांगमनाय सभ्याय नम इति सभ्यम् असते पांसवाय भस्मोद्वापाय नम इति भस्मराशिं नमस्कुर्यादिति एतच्च तत्तदुपस्थानकालऽएव ।

स्वयं वा जुहुयात् ॥ ३५ ॥[3] सर्वदा स्वयमेव वाग्निहोत्रं जुहुयात् अन्यो वा विकल्पेन ।

उपवसथे नियमः ॥ ३६ ॥ उपवसथशब्देन पौर्णमास्यमावस्येऽउच्येते[4] · तत्र स्वयमेव एते रात्री अग्निहोत्रं जुहुयादित्ययं नियमः[5] । सूतके मृतकेऽपि तत्कालमेव स्नात्वा स्वयमेव होमः कार्यः ॥ ॥ पञ्चदशी कण्डिका ॥ १५ ॥

इति श्रीश्रीत्रिरग्निचित्सम्राट्स्थपतिमहायाज्ञिकश्रीप्रजापतिसुतेन याज्ञिकदेवदत्तकृते कात्यायनसूत्रव्याख्याने चतुर्थोऽध्यायः समाप्तः ॥ ॥

अथ पद्धतिः ॥

अथ प्रातर्होमे विशेष उच्यते । यजमानेनोद्धरेत्युक्ते अनुदिते प्रातरग्निहोत्रहोमार्थं गार्हपत्यादितराग्न्योरुद्धरणम्[6] · अनुदितऽएव संध्यामुपास्य होमः कर्तव्यः · य एव रात्रौ संचरो गृहीतः स एव प्रातरिति सम्प्रदायः · पर्युक्षणं प्राक्संस्थमेव धारापि प्राक्संस्थैव न सायंहोमवत्प्रत्यक्संस्थमेतद्द्वयम् · उन्नेष्यामीत्यस्य

---

1) सायम्प्रातः प्रातःशब्दाभावात् · प्रातरेवेति कर्कः Mahâd. 2) नैषधाया° २. 3) यावज्जीवमग्निहोत्रम् · वाध्वर्युरिति Mahâd. 4) Thus Mahâd. °स्या उच्यते २. See ११. १. ७. ४. 5) सामगे यजमानेऽध्वर्युरेव जुहुयात् तच्छाखायामनाम्नातत्वात् Mahâd. 6) °त्यादित्यग्न्यो° १.

स्थाने उन्नयामीति वक्तव्यम् · सूर्यज्योतिषं त्वेत्याहवनीये समिदाधानम् · सूर्यो ज्योतिरितिं पूर्वाहुतिहोममन्त्रः सजूर्देवेनेत्ययं वा उषःसूर्यपदयुक्तः अथवोषसेत्यस्य स्थाने अग्नेन्द्रवत्येति[1] प्रातः प्रयोज्यम् ब्रह्मवर्चसकामस्य सूर्यो वर्च इति वा · इति चत्वारो मन्त्रविकल्पाः प्रातः पूर्वाहुतौ इदं सूर्यायेति त्यागः · स्रुगग्रस्योपमार्जनं प्राक्संस्थमेव वारद्वयमपि · समिदसीति समिदाधानम् · भूर्भुव इत्युपस्थानं च प्रातर्न भवत्येव केवलं तूष्णीमाहवनीयस्योपस्थानं तत्समीप ऽआसनं च इन्द्रायाहवनीयाय नम इति च · ततो गार्हपत्यं प्रति गत्वा तत्समीपे शयनमासनं वा यमाय राज्ञऽइति च · ततः प्राक्संस्थमेव पर्युक्षणम् वाचं विसृज्याचमनम् अतीत्य निष्क्रामतो दक्षिणाग्नेर्मनसा ध्यानम् · ततो भोजनात्प्राक्सभ्यसमीपे मुहूर्तमुपविश्यानश्नते सांगमनाय सभ्याय नम इति वदेत् · ततः सर्वाग्निभ्यो भस्मोद्धृत्य यत्र राशिः कृतो भवति तत्समीपं गच्छेत् असते पांसवाय भस्मोद्वापाय नम इति च वदेत् अथ यत्रैव भस्मोद्धृतमुपनिगच्छेदिति श्रुतेः (२. ३. २. ५) भस्मोद्धृतमुपेयादिति सूत्राच्च (४. १५. ३४) · तत आवसथ्येऽग्नौ प्रातर्होमं कुर्यात् ॥ ॥ अथ सायम्प्रातर्होमे वैकल्पिकं संचरान्तरमुच्यते · उत्तरतः सकाशात्पूर्वेणाहवनीयं प्रदक्षिणमागत्य दक्षिणाग्नेरुत्तरतो गार्हपत्यदक्षिणाग्न्योरन्तरालेन प्रत्यङ्गत्वा गार्हपत्यं प्रदक्षिणं परीत्य स्वस्थान ऽआगत्योपविश्याचामति · अथ वोत्तरतः सकाशादाहवनीयं पूर्वेण दक्षिणाग्निं गार्हपत्यं च दक्षिणेनागत्य गार्हपत्यं प्रदक्षिणं परीत्य अपराग्न्योरन्तरालेन प्रत्यङ्निष्क्रम्य स्वस्थाने गत्वोपविश्याचामति · होमान्ते च यथाप्रविष्टं निष्क्रमणम् · एवमग्निहोत्रे वैकल्पिकं संचरचतुष्टयमुक्तम् ॥ ॥ अथाग्निहोत्रहोमस्य काम्याः काला उच्यन्ते · स्वर्गकामस्यास्तमितमात्रे उदयसमीपे च होमकालः · आयुष्कामस्य सायमन्धकारागमे प्रातरन्धकारे विगच्छति होमकालः · पशुकामस्य सायं पशुषु ग्राममध्ये समागतेषु प्रातर्ग्रामादनिष्क्रान्तेषु होमकालः · श्रीकामस्य सर्वस्मिंल्लोके सुप्ते अप्रबुद्धऽएव प्रातर्होमकालः सायंहोमकालस्तु श्रीकामस्य प्राकृत एव · निष्कामस्य तु यावत्सम्यङ्न भाव्यन्ते नभस्यृक्षाणि सर्वतः न

[1] sic! Thus also Mahâd. at ४. १५. १०.

च लोहितिमापैति तावत्सायं च हूयतऽइत्यादि (कर्मप्रदीप° १.१.३) ॥ ॥ अथ काम्या अव्यवस्था अभिधीयन्ते · यो राजा प्रजाभ्यो बलात्कारेण प्रजा ह्वेवान्नादिकं ग्रहीतुमिच्छति तस्य प्रथमत एव समिद्धे धूममिश्रेऽग्नौ होमः · यो राजा प्रजा बलेन गृहीविवोपरुध्यैव ताभ्योऽन्नं ग्रहीतुमिच्छति तस्यातिबहुलज्वालायुक्ते प्रदीप्ततरेऽग्नौ होमः · सर्वेषां ब्राह्मणादीनां श्रीकामाणां यशस्कामानां वा प्रदीप्ततमेऽग्नौ होमः · यो मित्रभावेन प्रजाभ्योऽन्नादिकं ग्रहीतुमिच्छति तस्य ज्वालापसरणे जायमाने होमः · यो ब्रह्मवर्चसकामस्तस्य चाकश्यमानेषु देदीप्यमानेष्वङ्गारेषु होमः · निष्कामस्य तु समिद्धतमऽएव होमः यत्रोऽएव समिद्धतमं मन्येत तदाहुतीर्जुहुयादिति श्रुतेः (१.५.३.७) ॥ ॥ अथ काम्यानि होमद्रव्याण्युच्यन्ते · स्वर्गकामः पशुकामो वा पयसाग्निहोत्रं जुहोति · ग्रामकामो यवाग्वा · बलकामस्तण्डुलैः व्रीहिश्यामाकनीवारा यवगोधूमशालयः एतेषां तण्डुला होम्या यावनालाः प्रियङ्गवः · इन्द्रियकामो दध्ना तस्य दध्नोऽधिश्रयणाभावः तण्डुलानां च · यवाग्वां घृते चोदकासेकपुनरवज्योतनवर्जितं सर्वं भवति · तेजस्कामो घृतेन जुहोति ॥ ॥ एतेषां प्रागुक्तानां कालानामव्यवस्थानां होमद्रव्याणां च मध्ये एकैकेन कालादिनाङ्गेन संवत्सरं निरन्तरं होमे कृते उक्तफलसिद्धिः सायम्प्रातर्होममात्रेण वा · तत्राव्यवस्थानां संवत्सरनियमो नान्येषाम्। अग्निहोत्रहोमे सर्वास्विष्टिषु च गार्हपत्यागारस्य दक्षिणद्वारेण प्रवेशनं कर्तव्यम् · अयं प्रवेशने सदा नियमः ॥ ॥ सर्वदा यजमानः स्वयमग्निहोत्रं जुहुयात् अध्वर्युणा वा होमयेत् · तत्र स्वयंहोमपक्षे उन्नयने उद्धरणे च प्रैषाभावः अन्यत्समानम्। अमावास्यायां पौर्णमास्यां च नियमेन स्वयं होमः कर्तव्यः। तदुक्तम् संध्याकर्मावसाने तु स्वयं होमं समाचरेत् स्वयंहोमे फलं यत्स्यान्न तदन्येन जायते · किं तर्ह्यन्येन हुते फलमित्यपेक्षिते स एवाह होमे यत्फलमुद्दिष्टं जुह्वतः स्वयमेव तु हूयमाने तदन्येन फलमर्धं प्रपद्यतऽइति। तथा[1] ऋत्विक्पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः

---

1) From-Daxa, according to Mahâd. at ४. १५. ३५.: — quoted also in २, with the additional remark: भागिनेयः स्नुतापतिरिति वा पाठः, see pag. ४२३,१

एतैरेव हुतं यत्स्यात्तद्धुतं स्वयमेव तु · विट्पतिर्जामाता अन्यत्प्रसिद्धम् ।
स्मृत्यर्थसारे यजमानः प्रधानं स्यात्पत्नी पुत्रश्च कन्यका ऋत्विक्शिष्यो गुरु-
र्भ्राता भागिनेयः सुतापतिः एतैरेव हुतं यत्तु तद्धुतं स्वयमेव तु पत्नी कन्या
च जुहुयाद्विना पर्युक्षणक्रियामिति · न वै कन्या[1] न युवती नाल्पविद्यो न
बालिशः होता स्यादग्निहोत्रस्य नार्तो नासंस्कृतस्तथा नरकं हि पतन्त्येते
जुह्वतः स च यस्य तत् तस्माद्वैतानकुशलो होता स्याद्वेदपारगः · प्रोषिते
ऽप्यथवाशक्ते स्वामिन्यनधिकारिणि पुत्रो भ्राताथवा पत्नी शिष्यो वा जुहुया-
दिति · सूतके[2] च प्रवासे चाशक्तौ श्राद्धभोजने एवमादिनिमित्तेषु हावयेद्वेति
योजयेत्[3] · जन्महानौ[4] वितानस्य कर्मत्यागो न विद्यते शालाग्नौ केवलो
होमः कार्य एवान्यगोत्रजैः · शिवविष्ण्वर्चनं दीक्षा यस्य चाग्निपरिग्रहः स
तत्कर्माणि कुर्वीत स्नातः शुद्धिमवाप्नुयात् · सूतके[5] कर्मणां त्यागः संध्यादीनां
विधीयते होमः श्रौते तु कर्तव्यः शुष्कान्नेनापि वा फलैः · श्रौते[6] कर्मणि
तत्कालं स्नातः शुद्धिमवाप्नुयात् · वैतानौपासनाः[7] कार्याः क्रियाश्च श्रुतिचोदना-
दित्यादिवचनात् सूतकदिनके[8] च तत्कालं स्नात्वा श्रौतस्मार्तहोमः स्वयं
शुष्कान्नफलादिना कर्तव्यः दुग्धदध्यादिना त्वसगोत्रेणैव कारयितव्यः · न[9]
वर्धयेदघाहानि प्रत्यूहेन्नाग्निषु क्रियाः न च तत्कर्म कुर्वाणः सनाभ्योऽप्यशु-
चिर्भवेत् । शङ्खोऽपि अग्निहोत्राद्यर्थं स्नानोपस्पर्शनात्तत्कालं शौचमिति ॥
सुहुतान्यग्निहोत्राणि नयन्ति परमां गतिम् अत्र स्वर्गश्च मोक्षश्च यो यथा गन्तुमि-
च्छति संनिधौ[10] यजमानः स्यादुद्देशत्यागकारकः असंनिधौ तु पत्नी स्यादुद्देशत्या-

---

1) From Manu ११. ३६-३७. 2) From the Karmapradîpa ३. ५. ४. 3) ? See Mitâxarâ III fol. 7ᵇ lin. 9: बृहस्पतिनाप्युक्तम् सूतके मृतके चैव अशक्तौ श्राद्धभोजने प्रवासादिनिमित्तेषु हावयेन्न तु हापयेत् । 4) This hemistich belongs to Jâvâla, according to Kullûka at Manu ५. ८४. 5) From the Karmapradîpa ३. ५. १, quoted as the Chandogapariçishṭa by Kullûka l. cit. with the reading मृतके, but सूतके is the reading also of the Mitâxarâ III fol. 7ᵇ lin. 6. 6) This hemistich is quoted in the Mitâxarâ III fol. 7ᵃ lin. 15 as taken from Vaiyâghrapâda. 7) This hemistich is taken from Yâjnavalkya ३. १७. 8) ? सूतकादिनके १. 9) From Manu ५ ८४. 10) See schol. at ४. १२. १६. pag. ३१४,२१ foll.

गकारिका असंनिधौ तु पत्न्याः स्यादध्वर्युस्तदनुज्ञया उन्मादे प्रसवे च[ऽग्नौ] कुर्वीतानुज्ञया विना सर्वदा यजमानो वा त्यजेत्तद्दिङ्मुखः शुचिरिति · तथा चापस्तम्बः प्रवसन्विहाराभिमुखो याजमानं जपति प्राचो विष्णुक्रमान्क्राम-तीति · मण्डनः त्यागं तु सर्वथा कुर्यात्तत्राप्यन्यतरस्तयोः उभावप्यसमर्थौ चेन्नियुक्तः कश्चन त्यजेत् ॥ ॥१५॥ ॥

इति चतुर्थस्य पञ्चदशी कण्डिका ॥ ॥

इति श्रीत्रिरग्निचित्सम्राट्स्थपतित्रिंशत्क्रतुकृन्महायाज्ञिकश्रीप्रजापतिसुतेन याज्ञिकदेवेन कृतायां कात्यायनसूत्रपद्धतौ चतुर्थोऽध्यायः समाप्तः ॥ ॥

इति कातीये श्रौतसूत्रे चतुर्थोऽध्यायः ॥४॥ ॥



आचार्येण श्रुतिमन्त्रपाठक्रमेण पौर्णमासादीन्यग्निहोत्रान्तानि कर्माण्युक्तानि। इदानीं श्रुतिपाठक्रमेणैव चातुर्मास्यानि वक्तुं तेषामारम्भकालमाह ·

चातुर्मास्यप्रयोगः फाल्गुन्याम् ॥१॥ चातुर्मास्यशब्देन वक्ष्यमाणानि वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयसंज्ञानि चत्वारि पर्वाण्यभिधीयन्ते · चतुर्षु चतुर्षु मासेषु भवानि चातुर्मास्यानीति व्युत्पत्त्या · तत्रभवाधिकारे चतुर्मास्याण्णो यज्ञे ञ्यो वक्तव्य इति वार्त्तिकम् (पा° ४.३.५८)। तत्राप्याग्नेयादियागा एव चातुर्मास्यशब्देनाभिधीयन्ते न करम्भपात्रदर्विहोमत्र्यम्बकादयो जुहोतयः · अतश्चात्र यागा एव प्रधानम् जुहोतयश्च तदङ्गम् · [प्रयोजनम्] आग्नेयादिसौर्यान्तानां यागानां मध्ये यदि कश्चिद्विस्मृतः समाप्तेरूर्ध्वं ज्ञातः तदा तस्य विस्मृतस्य साङ्गोपेतस्य करणम् जुहोतीनां विस्मरणे तु समाप्तेरूर्ध्वं ज्ञाते तस्याकरणमिति · तदुक्तं कात्यायनेन (कर्मप्रदीप १.३.६) प्रधानस्याक्रिया यत्र साङ्गं तत्क्रियते पुनः तदङ्गस्याक्रियायां तु नावृत्तिर्नैव तत्क्रियेति · विस्मरितमङ्गमपि समाप्तेः पूर्वं क्रियत ऽएव तदुक्तं निदानसूत्रे अङ्गमपरिसमाप्ते प्रधाने क्रियत ऽइति अन्तरितं प्राक्समापनात्कुर्यादिति मानवे। तेषां चातुर्मास्यानां प्रयोगः प्रारम्भः फाल्गुन्यां पौर्णमास्यां भवति। अत्र फाल्गुनीशब्देन गौणी फाल्गुनी प्रतिपदुच्यते शाखान्तरे तथा दर्शनात् ऋतुमुख ऽऋतुमुखे चातुर्मास्यैर्यजेतेति प्रतिपदेव ऋतुमुखम् न पौर्णमासी · स्मृतावपि चैत्रप्रतिपदि वसन्तारम्भस्योक्तत्वात् · तथा च शाङ्खायनः (३.१३.१-५) फाल्गुन्यां पौर्णमास्यां प्रयोगश्चातुर्मास्यानां चैत्र्यां वा वैश्वानरपर्जन्येष्टिः[1] पूर्वस्यां पौर्णमास्याम् उत्तरस्यां

---

1) वैश्वानरीयपा° Çankh.

वैश्वदेवमिति · स्वशाखायामपि (२. ६. ३. १३) अथ पुनः प्रयुञ्जानस्य पूर्वेद्युः फाल्गुन्यै पौर्णमास्यै शुनासीर्येण यजेताथ प्रातर्वैश्वदेवेनाथ पौर्णमासेनेति प्रतिपद्येव पर्व विदधाति · कात्यायनाचार्या अप्याहुः (११. १७-१८) फाल्गुन्युपवसथे शुनासीरीयं प्रातर्वैश्वदेवमिति · वरुणप्रघाससाकमेधेषु च (२५. २. ४८ ६. २. १३) गृहीत्वा निर्मथ्याग्नी पौर्णमासेन यजतऽइति पर्वसमनन्तरमेव पौर्णमासानुष्ठानश्रुतेश्च · आपस्तम्बः फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा वैश्वदेवेन यजते पूर्वस्मिन्पर्वणि पञ्चहोतारं मनसानुद्रुत्याहवनीये स्रुवाहुतिं हुत्वारम्भणीयामिष्टिं निर्वपति वैश्वानरं द्वादशकपालं पार्जन्यं चरुमिति प्रकृत्य हिरण्यं वैश्वानरे ददाति धेनुं पार्जन्ये सिद्धेष्टिः संतिष्ठते प्राचीनप्रवणे वैश्वदेवेन यजेतेति पञ्चदश्यामेव वैश्वदेवमुपक्रम्य सायंदोहान्तं कृत्वा श्वो भूते पात्रसंसादनपूर्वकालऽइत्यादिना प्रतिपद्येव पर्वकरणमाह · मानवेऽपि चातुर्मास्यानारप्स्यमानः पूर्वां पौर्णमासीमुपोष्याग्नये वैश्वानराय द्वादशकपालं पुरोडाशं निर्वपति पार्जन्यं चरुमिति प्राचीनप्रवणे वैश्वदेवेन यजेत फाल्गुन्यां चैत्र्यां वसन्ते वा नोपवसथे चातुर्मास्येषु केशश्मश्रु यजमानो वापयतऽइति प्रकृत्यापस्तम्बसूत्रवत्प्रतिपद्येव वैश्वदेवविधानात् · कठसूत्रेऽप्येवमेवोक्तमस्ति श्वो भूते तुल्यमा निर्वपणादिति · अतः प्रतिपद्येव वैश्वदेवपर्व कर्तव्यम् ।

वैश्वानरपार्जन्यौ निरुप्येष्ट्वा ॥ २ ॥ इष्ट्वा वै॰न्यौ निरुप्य चातुर्मास्यानां प्रयोगः प्रारम्भः कर्तव्यः · अयमन्वारम्भणीयया सह विकल्पः इष्ट्या वै॰न्यौ इष्ट्यान्वारम्भणीयेति शाखान्तरात् ।

वैश्वानरो द्वादशकपालः ॥ ३ ॥ गुणिनी देवता अग्निरत्र द्रष्टव्यः शाखान्तरे तथा दर्शनात् · तथा काठके अग्नये वैश्वानराय द्वादशकपालमिति · मनुरपि पूर्वां पौर्णमासीमुपोष्याग्नये वै॰य द्वा॰लमिति · श्रुतावपि अभ्युदृष्टेष्याम् अग्नये वै॰य द्वा॰ लमिति (११. १. ५. ५) पठ्यते सूत्रकारेणात्रापि (२५. ४. ४६) इन्द्राय वृत्रघ्नऽएकादशकपालो वैश्वानरश्चेति निर्गुण एवोक्तः · एवं च सति यत्र-यत्र श्रुतौ सूत्रे वा निर्गुणं वैश्वानरपदश्रवणम् तत्र सर्वत्राग्निर्गुणिनी देवता अनुक्तापि ज्ञेया ।

चरुरुत्तरः ॥ ४ ॥ उत्तरः पार्जन्यः चरुर्भवति शाखान्तरात् । अस्यां चापस्तम्बसूत्रे दक्षिणा पठितास्ति हिरण्यं वैश्वानरे ददाति धेनुं पार्जन्य इति · चोदकप्राप्त्या चान्वाहार्यः प्राप्नोति · मानवे च धेनुरनड्वांश्च दक्षिणेति ॥ ॥

अथ वैश्वदेवपर्वणि हवींष्याह ·

आग्नेयः ॥ ५ ॥ अष्टाकपालः पुरोडाशः प्रथमं हविर्भवति ।

सौम्यश्चरुः ॥ ६ ॥ [२. ५. १. ३] ।

सावित्रो द्वादशकपालोऽष्टाकपालो वा ॥ ७ ॥ उपांशु (४. ५. ५) ।

सारस्वतश्चरुः ॥ ८ ॥ योषा वै सरस्वतीत्यर्थवादात् (२. ५. १. ११) · अत्र सरस्वत्या देवतात्वम् न तु सरस्वतः ।

पौष्णश्चरुः प्रपिष्टानाम् ॥ ९ ॥ प्रकर्षेण पिष्टानां व्रीहितण्डुलानाम् । यत्र पूषा तत्र पेषणं प्राप्यते । इदानीमिदं विचार्यते राजसूये त्रिषंयुक्तेष्वैन्द्रापौष्णश्चरुरस्ति (१५. २. १२) सोऽपि किं प्रपिष्टानां भवति उत नेति ·

द्विदेवतोऽपि नियमसामर्थ्यात् ॥ १० ॥ [द्विदेवतोऽपि[१] पौष्णश्चरुः प्रपिष्टानामेव भवति] · अत्र हीन्द्रसहितस्य पूष्णो देवतात्वम् तत्र पूष्णो नियमेन पिष्टं प्राप्नोति इतरस्येन्द्रस्यानियमः · तत्र कांस्यभोजिन्यायेन नियमानियमयोर्नियमस्य बलवत्त्वाद्द्विदेवत्यः प्रपिष्टानामेव भवति · इति प्राप्ते आह ·

अर्धपिष्टं वोभयसामर्थ्यात् ॥ ११ ॥ पूष्णः पिष्टम् इतरस्य चापिष्टमिति[२] · विक्लिन्नप्रायेषु तण्डुलेषु पिष्टानामावापः करिष्यते [अतः पाकवैषम्यं नाशङ्क्यम्] ।

सौमापौष्णादर्शनाच्च ॥ १२ ॥ [सौमापौष्णं चरुं निर्वपेन्नेमपिष्टानमिति] नेमपिष्टतादर्शनात् · त्वो नेम इत्यर्धस्येति यास्कोक्तेः (३. २०) ।

अपिष्टो वा देवतान्यत्वात् ॥ १३ ॥ वा पूर्वोक्तपक्षद्वयनिरासार्थः · केवलात्पूष्णः सकाशात्सद्वितीयस्य पूष्णो देवतान्यत्वात् · इति सिद्धान्तः[३] ।

---

१) द्वयोः समुदितयोर्देवतात्वं यस्मिन्नसौ द्विदेवतः Ss. २) उभयोरनुगृहीतौ भवति Ss. ३) वा सिद्धान्ते · द्विदेवतश्चरुः न प्रपिष्टानाम् कुतः देवतान्यत्वात् केवलोऽन्यः सद्वितीयोऽन्य एव Ss.

सौमापौष्णो वचनात् ॥१४॥ [सौम्यो या नेमपिष्टता सा वचनात्]।

एतानि सर्वत्र ॥१५॥ एतानि पञ्च हवींषि सर्वत्र सर्वेषु पर्वसु भवन्ति· सर्वशब्देन वरुणप्रघासमहाहविःशुनासीरीयं च गृह्यते।

मरुद्भ्यः स्वतवद्भ्यः सप्तकपालः ॥१६॥ षष्ठं हविः। स्वतवद्भ्यो विशेषणम् मरुद्भ्यो विशेष्यम्। स्वतवद्भ्य इति छान्दसं रूपम्[१]।

मारुतो वा ॥१७॥ सप्तकपालः पुरोडाशः

वैश्वदेवी पयस्या ॥१८॥ सप्तमं हविः। उपांशु (४. ५. ६)। अस्यां दाक्षायणपयस्याया धर्मप्रवृत्तिः (४. ४. ७)· अतोऽग्न्यन्वाधानानन्तरं शाखाच्छेदानुमार्जनपरिवासनोपवेषकरणपवित्रबन्धनवत्सापाकरणविश्वेभ्यो-देवेभ्यो-भागमिति-गोःस्पर्शनशाखोपगूहनानि कृत्वा ब्रह्मवरणादि· निरुप्याज्यं दोहं कृत्वा तप्ते पयसि दधिप्रक्षेपो दधनि वा दोहः· तत्रस्थाभिघारमदत्त्वा वा[२] वाजिननिषेकादि तस्योत्करे सादनम् वाजिनयागोऽपि भक्षान्तो भवति।

द्यावापृथिवीय एककपालः ॥१९॥ अष्टमं हविः। उपांशु (४. ५. ३)। अत्राहापस्तम्बः अलंकरणकालऽआज्येनैककपालमभिपूरयित्वा विपृष्ठं चेति· एतच्चाचार्येणाग्रयणऽउपनिबद्धम् (४. ६. ५) उद्वास्यान्तांश्छादयेद्द्रावयेदाज्येनेति।

एतद्वैश्वदेवम् ॥२०॥ एतदाग्नेयाद्यष्टहविष्कं कर्म वैश्वदेवसंज्ञकं भवति।

प्राचीनप्रवणे ॥२१॥ प्राचीनं प्रवणं निम्नं यस्मिन्नसौ प्राचीनप्रवणो देशः· तस्मिन्प्राचीनप्रवणे वैश्वदेवेन यजेतेति शाखान्तरात्।

अहतवासाः ॥२२॥ अस्मिन्वैश्वदेवपर्वणि यजमानोऽहतवासा भवति अहते वाससी यस्यासावहतवासाः एकं परिधानीयम् द्वितीयमुत्तरीयम्· परिधास्याऽइति परि[धानीयस्य परि]धानमन्त्रः यशसा मेत्युत्तरीयस्य[३]· परिधानानन्तरं द्विराचमनं च· उद्धरणात्प्रागेवैतत्परिधानं कर्तव्यम्।

पत्नी च ॥२३॥ अहतवासा भवति।

तेऽएव वरुणप्रघासेष्वपि ॥२४॥ तेऽएव वाससी· नाशदोषादावन्ययोरपि वर्त्सेषु परिधानम् दानं च।

---

१) The Brâhmaṇa has स्वतवोभ्यः (२. ५. १. १४) २) see ४. ४. १०. ३) See Pâraskara २. ६.

त्रेधा बर्हिः संनह्य पुनरेकधा ॥ २५ ॥ बर्हिः पूर्वं त्रेधा त्रिविधं संनह्य एकैकेन संनहनेन पृथक्पृथक्त्रीन्पूलकान्बद्ध्वा पुनरेकधा एकविधं संनह्य[ति] त्रीनपि पूलकानेकेन चतुर्थेन महता संनहनेनैकत्र बध्नीयादित्यर्थः ।

कुशप्रस्वः प्रस्तर उपसंनद्धः ॥ २६ ॥ कुशप्रस्वः प्रसूनाः[1] पुष्पिताः कुशाः दर्भमञ्जर्यः प्रस्तरोऽत्र भवति · कीदृशः उपसंनद्धः उप बर्हिषः समीपे संनद्धः बद्धो भवति चतुर्थसंनहनमध्ये सोऽपि बद्धो भवति · प्रस्व उपसंनद्धा भवन्ति तं प्रस्तरं गृह्णाति तस्मात्प्रसूः प्रस्तरं गृह्णातीति (२.५.१.१८) च श्रवणात् ।

आसाद्याग्निमन्थनम् ॥ २७ ॥ हवींष्यासाद्याग्निमन्थनं कर्तव्यम्[2] [तत्र हविरासादनोत्तरकालं पूर्वं प्राकृतानि] हविरालम्भात्मालम्भोदकस्पर्शनानि [पश्चाद्विकृतमग्निमन्थनम्] · तच्च प्राकृतं च विकृताविव्यनेन (१.५.४) न्यायेन[2] । अथाग्निमन्थनस्येतिकर्तव्यतामाह ·

अग्नेर्जनित्रमिति (५.२) शकलमादाय वेद्यां करोति ॥ २८ ॥ यज्ञियवृक्ष-शकलम् · तूष्णीं वेद्यामुदगग्रं करोति ।

वृषणाविति (५.२) कुशतरुणे तस्मिन् ॥ २९ ॥ दर्भतृणे प्रागग्रे तस्मिन् शकले निदधाति मानवे उत्तरस्य पश्चात्परिधिसंधेरग्नेर्जनित्रमसीत्यग्निमन्थनं शकलमवस्थापयति वृषणौ स्थ इति तत्र प्राञ्चावछिन्नप्रान्तौ दर्भावुर्वश्यसीति तयोरुदक्तूलामरणिं पश्चात्प्रजननां मूलत उत्तरारणिमायुरसीत्याज्यस्थाल्या बिले स्नेहयन् त्रिः समनक्तीत्यादि · आपस्तम्बोऽपि प्राञ्चौ दर्भाविति ।

उर्वश्यसीत्यधरारणिं (५.२) तयोः ॥ ३० ॥ एतयोः[3] कुशतृणयोरुपर्युत्त-राग्रामधरारणिं निदधाति ।

आयुरसीत्युत्तरयाज्यस्थालीं (५.२) संस्पृश्य पुरूरवा इत्यभिनिधानं (५.२) तया ॥ ३१ ॥ उत्तरयारण्या प्रमन्थमूलेन आज्यस्थालीस्थमाज्यं संस्पृश्य तया उत्तरारण्या अधरारणेरुपरि निधानं करोति ॥ ॥ प्रथमा कण्डिका ॥ १ ॥

अथ पद्धतिः ॥

अथ चातुर्मास्यानां पद्धतिर्लिख्यते ॥ ॥ तत्र प्रथमप्रयोगे मातृपूजापूर्वकमा-

---

१) Thus Ss. प्रसूताः २. २) See the schol. at १.५.४. pag. ८४. ३) ? स्तृतयोः २.

भ्युदयिकं श्राद्धम् । तेषां प्रारम्भः फाल्गुन्यां पौर्णमास्याम् शाखान्तरात्चैत्र्यां वैशाख्यां वा ॥ तत्र पौर्णमास्यामिष्ट्यान्वारम्भणीया इष्ट्या वैश्वानरपार्जन्येष्टिः · तत्र वैश्वानरो द्वादशकपालः पुरोडाशः पार्जन्यश्चरुरिति द्वे हविषी भवतः । उद्धरणादिकर्मापवर्गान्ते विशेषः · वैश्वानरपार्जन्येष्ट्यर्थमित्युद्धरणे वैश्वानरपार्जन्येष्ट्याहमिति वरणे · पात्रासादने द्वादश कपालानि एका चरुस्थाली दक्षिणान्वाहार्य एव विंशतिरिध्मकाष्ठानि एका पुरोडाशपात्री अन्यत्सर्वं प्रकृतिवत् · यवमयपुरोडाशपक्षे नानावीजधर्मा उक्ताः[१] · ग्रहणे अग्नये वैश्वानराय जुष्टं गृह्णामि पर्जन्याय जु° गृ° · प्रोक्षणे अग्नये वैश्वानराय त्वा जुष्टम् पर्जन्याय त्वा जुष्टमिति · व्रीहिमयपुरोडाशपक्षे कपान्ते विभज्यालम्भः इदमग्नेर्वैश्वानरस्य इदं पर्जन्यस्य · प्राणदाने अग्निं वैश्वानरं गच्छ पर्जन्यं गच्छ · इदमहं सप्तदशेन वज्रेणेत्यवबाधने · उत्तमप्रयाजे इदमग्नये सोमायाग्नये वैश्वानराय पर्जन्याय देवेभ्य इत्यादि · प्रधानयागे अग्नये वैश्वानरायानुब्रूहि अग्निं वैश्वानरं यज इदमग्नये वैश्वानराय पर्जन्यायानुब्रूहि पर्जन्यं यज इदं पर्जन्याय · ततः स्विष्टकृदादि · प्राशित्रचतुर्धाकरणात्तुभयोः सर्वम् · व्यूहने अग्नेर्वैश्वानरस्य पर्जन्यस्योज्जितिम् अग्निर्वैश्वानरः पर्जन्यस्तमपनुदतामिति · प्रस्तरत्यागे इदमग्नये सोमायाग्नये वैश्वानराय पर्जन्याय देवेभ्य इत्यादि ॥ एवं पूर्वस्यां पौर्णमास्यामिष्टिं कृत्वा प्रतिपदि प्राक्पौर्णमासाद्वैश्वदेवं पर्व भवति । तत्राष्टौ हवींषि भवन्ति आग्नेयोऽष्टाकपालः सौम्यश्चरुः सावित्रो द्वादशकपालोऽष्टाकपालो वा उपांशु सारस्वतश्चरुः पौष्णश्चरुः मरुद्भ्यः स्वतवद्भ्यः सप्तकपालः पुरोडाशः मारुतो वा वैश्वदेवी पयस्या उपांशु द्यावापृथिवीय एककपालः उपांशु। अत्र प्राचीनप्रवणायां भूमौ कर्तव्यम्[२] । पूर्वं पत्नीयजमानावहते वाससी परिदधाते · तत ऋत्विजां वरणम् अमुकगोत्र अमुकशर्मन् ऐष्टिकेन प्रथमजगवदक्षिणेन वैश्वदेवपर्वणाहं यक्ष्ये तत्र मे त्वं ब्रह्मा होता अध्वर्युराग्नीध्रो भवेति प्रत्येकं वरणम् ततो यथासम्भवं तानर्चयेत् · ततोऽध्वर्युः पञ्चभूसंस्कारपूर्वकमाहवनीय-

---

१) See the paddhati at ४. ५ pag. ३४१. ११. ff. २) वितानसाधनं B.

दक्षिणाग्नौ रैष्टिकवैश्वदेवपर्वार्थमिति विहरणं करोति ततोऽग्न्यन्वाधानम्[1] · ततः शाखाच्छेदः संनमनम् शाखापरिवासनं तूष्णीम् शाखामूलान्मन्त्रेणोपवेषकरणम् शाखायां पवित्रबन्धनं च · ततो वैश्वदेवपयस्यार्थं वत्सापाकरणम् विश्वेभ्यो देवेभ्यो भागमिति विशेषः · शाखोपगूहनम् · षडासनोपकल्पनम् · ब्रह्मवरणम् °गोत्र °शर्मन्नैष्टिकवैश्वदेवपर्वणाहं यक्ष्ये तत्र भूपतऽइति विशेषः · व्रतग्रहणमत्र वा · प्रणीताप्रणयनम् · परिस्तरणम् · पात्रासादने शूर्पाग्निहोत्रहवणी स्फ्यकपालम् तत्र कपालान्यष्टात्रिंशतिश्चतुर्विंशतिर्वा चरुस्थाल्यस्तिस्रः शम्याकृष्णाजिनम् उलूखलमुसलम् दृषदुपलम् पात्रीधान्यम् पवित्रच्छेदनानि पवित्रे शाखोपवेषः संयवनोदकम् दधिस्थाली आज्यं च वेदश्च दोहनचतुष्टयम्[2] दक्षिणार्थे प्रथमजगवः[3] उदक्तृणमश्रिः[4] विंशतिकाष्ठक इध्मः कुशप्रसूप्रस्तरेणोपसंनद्धं[5] त्रेधा बर्हिः तत्र पूर्वं त्रीन्पूलकानेकैकेन संनहनेन पृथक्पृथग्बद्ध्वा प्रस्तरमपि पृथग्बद्ध्वा पुनस्तान्सप्रस्तरांस्त्रीनपि दर्भपूलकान्महता एकेन[6] संनहनेनैकत्र बध्नीयात् स्रुवो जुहूः उपभृद्ध्रुवा च द्वे प्राशित्रहरणे शृतावदानम् मेक्षणं च वाजिनभाण्डम् चतस्रः पात्र्यः योक्त्रम् यूनकुशाश्च पक्षे परिधयः मन्थनचतुष्टयम् तत्राधरारणिः प्रमन्थः शकलं द्वे तृणे च कुशास्तीर्णपीठम्[7] इडापात्री षडवत्तं च अन्तर्धानकटः पूर्णपात्रम् कर्मापवर्गा च [समित्][8] क्षुरचतुष्टयं च पक्षे तत्र क्षुरः नवकुशतृणानि[9] श्येणी शलली आपश्चेति क्षुरचतुष्टयम् · ततः स्फ्योपहितपात्रीकरणम् शूर्पाग्निहोत्रहवण्योरादानम् वाग्यमनम् प्रतपनम् गमनम् पात्रीबिले जपः · नानावीजपक्षे उरु वातायेत्युभयोः प्रेक्षणम् उभयोरपद्रव्यमादाय तन्त्रेण निरसनम्

अन्यतरस्मिन्नपद्रव्याभावे तस्याभिमर्शनम् उभयोरपद्रव्याभावे पृथक्पृथङ्मन्त्रेणाभिमर्शनम् ततो यच्छन्तामित्यालम्भनं भेदेन । ग्रहणे अग्नये जुष्टम् [पुरो-

---

1) आह°णाग्निस्थाने भूसंस्काराः ऐ°र्थमिति द्वयोरुद्धरणम् अग्न्यन्वाधानं त्रिषु B.
2) i. e. शाखा उखा पवित्रं दोहनपात्रं च B. 3) ऋषभः marg. प्रथमजो गौः B. 4) ? उदक्तृणाम° १. उदक्तृणमश्रिः B. See pag. १६०, १७. where I now prefer this same reading. 5) ? कुशाप्रस्वप्र° १. कुशप्रस्वप्र° B. 6) ? एकैकेन १. 7) होतृपीठं B.
8) deest in १, but see pag. १६०,२१. 9) Thus B. नवकुशातृ° १.

डाशः] सोमाय जुष्टम् चरुः सवित्रे जुष्टम् पुरोडाशः सरस्वत्यै जुष्टम् चरुः पूष्णो जुष्टम् पिष्टानां चरुः मरुद्भ्यः स्वतवोभ्यो[1] जुष्टम् पुरोडाशः अथवा मरुद्भ्यो जुष्टमिति देवताविकल्पः द्यावापृथिवीभ्यां जुष्टम् पुरोडाशः · एवं सप्त हवींषि गृहीत्वा भूताय त्वेति शेषाभिमर्शनं भेदेन कुर्यात् · प्राङीक्षणम्[2] उत्थानम् उत्तरतो गमनम् हविरासादनम् पवित्रकरणम् · प्रोक्षण्युत्पवनम् सव्यहस्ते कृत्वा दक्षिणेनोदिङ्गनम् प्रोक्षणीनामेव प्रोक्षणम् ब्रह्मन्हविः प्रोक्षिष्यामीति प्रैषः प्रोक्षेत्यनुज्ञातः अग्नये त्वा जुष्टम् सोमाय त्वा जुष्टम् सवित्रे त्वा जुष्टम् सरस्वत्यै त्वा जुष्टम् पूष्णो त्वा जुष्टम् मरुद्भ्यः स्वतवोभ्यस्त्वा[3] जुष्टम् अथवा मरुद्भ्यस्त्वा जुष्टम् द्यावापृथिवीभ्यां त्वेति हवींषि प्रोक्ष्य दैव्यायेति सर्वाणि पात्राणि प्रोक्षति · ततोऽसंचरे[4] प्रोक्षणीनां निधानम् कृष्णाजिनादानम् अवधूननम् प्रत्यग्ग्रीवस्यास्तरणम् सव्याशून्यऽउलूखलनिधानम् · पुरोडाशसम्बन्धिनां यवानामावपनम् मुसलादानम् मुसलावधानम् कण्डनादि फलीकरणान्तं कण्डनम् तुषास्तु तावत्स्थाप्यन्ते · ततश्चरुसम्बन्धिनां व्रीहीणां मन्त्रेणोलूखलावपनम्[5] स इदमिति मुसलावधानम् अस्मिन्नवसरेऽध्वर्युयजमानयोर्वाग्विसर्गः वितुषीकरणम् शूर्पमात्तमेव प्रति त्वेति हविरुद्वपनादि स्थापितान्पूर्वांस्तुषानेकत्र कृत्वा सहैव तुषनिरसनम् भेदेन वा निष्पवनादि फलीकरणान्तं भेदेन पात्र्यामोप्याभिमन्त्रणादि कणनिधानान्तं कण्डनम् · व्रीहिमयपुरोडाशपक्षे पुरोडाशार्थचर्वर्थांश्च तण्डुलान्विभज्य तेषामालम्भनम् इदमग्नेः सवितुः पूष्णो मरुतां स्वतवसाम्[6] अथवा मरुताम् द्यावापृथिव्योश्च इदं सोमस्य सरस्वत्याश्च : ततोऽग्नीधः कपालोपधानम् अध्वर्योः पेषणम् · आग्नेयस्याष्टौ कपालानि तत एकं चरुस्थानं परिशिष्य सावित्रस्याष्टौ द्वादश वा कपालानि ततश्चरुस्थानद्वयम् ततो मरुद्भ्यः[7] सप्त कपालानि तत उत्तरत एकम् तत्पयस्यास्थानम्[8] ततो द्यावापृथिवीयस्यैककपालम् तच्च पाणिमात्रम् तत्र तपसा तप्यस्वेत्यूहः · उपसर्जन्यधिश्रयणम्

1) Thus १. and B. sec. m. °तवद्भ्यो B. pr. m. 2) Thus १! प्राङीक्षणादि प्राकृतं B. We expect प्रागी°; see २.१.११. 3) Thus १. °तवद्भ्यस्त्वा B. 4) ततः ऽसंचरे १. See २.३.४०. 5) °म्बन्धिनामुलूखले अग्नेस्तनूरावपनम् B. see २.४.६. 6) Thus B. also. 7) मरुद्भ्यः स्वतवद्भ्यः B. 8) ? ततोत्तरत एकं । ततः पयस्थानं । १.

यजमानस्याज्यनिर्वापो वेदबन्धश्च · प्रोक्षणान्ते उपसृष्टादिपरिक्षालनान्तो दोहः · तत ईक्षणादि नानावीजे उभयोरीक्षणम् · ईक्षणानन्तरं पूष्णः पिष्टानि पृथक्कृत्यालम्भः[1] इदमग्नेः सवितुर्मरुतां स्वतवसाम्[2] अथवा मरुताम् द्यावापृथिव्योश्च इदं पूष्णः पिष्टानि पृथक्कृत्यालम्भः[3] इदं सोमस्य इदं सरस्वत्याः · ततः पात्र्यां पिष्टानोप्य चरुपात्रे पवित्रं कृत्वा चर्वोः संवापः त्रिः प्रक्षालनम् · पूष्णश्चरोः पिष्टानां स्थाल्यामावापः प्रक्षालनाभावोऽर्थलोपाद्विरोधाच्च · तत उपसर्जन्यानयनादि · सर्वचरुषु भेदेनोपसर्जनीनां निनयनं क्रमेण · ततः पिष्टसंयवनम् · विभज्यालम्भः इदमग्नेः इदं सवितुः इदं मरुतां स्वतवसाम्[4] अथवा मरुताम् इदं द्यावापृथिव्योः · सवितुः पुरोडाश[5] इतरापेक्षया महान्कार्यः स वै वर्षिष्ठः पुरोडाशो भवतीति श्रवणात्.। ततः सर्वेषां क्रमेणाधिश्रयणादि चरूणां प्रथनाद्भिरभिमर्शनयोरभावः · पयोवर्जं पर्यग्निकरणम् श्रपणम् चरूणामधस्तादुपादानम् नोपरि पयस्यायाश्च · तप्ते पयसि दधिप्रक्षेपः · मा भेरित्यालम्भः · शृताभिवासनं पुरोडाशानामेव न चरूणाम् · आज्योदकनिनयनम् । वेदिमानादिप्राणदानान्ते विशेषः · सर्वाणि संनहनानि विसज्य[6] श्रोणौ निधेयानि · शृतावदानानन्तरं[7] मेक्षणस्य संमार्गप्रतपने · ततो वाजिनभाण्डस्य संमार्गः केचिदस्य संमार्गं नेच्छन्ति उपदेशातिदेशाभावात् · तत्रस्थाभिघारमदत्वा वा वाजिननिषेकः ततोऽभिघारादि · प्राणदाने अग्निं गच्छ सोमं गच्छ सवितारं गच्छ सरस्वतीं गच्छ पूषणं[8] गच्छ मरुतः स्वतवसो[9] गच्छ अथवा मरुतो गच्छ विश्वान्देवान्गच्छ द्यावापृथिव्यौ गच्छ वाजिनो महेति · प्राणदानानन्तरं द्यावापृथिवीयस्याज्येनान्ताच्छादनम् उत्करे वाजिनस्यासादनम् आलम्भश्च[10]। हवींष्यासाद्यालभ्यात्मानमालभ्यापः स्पृष्ट्वाग्निमन्थनं करोति · तत्राग्नेर्जनित्रमसीति (५. २) शकलं गृहीत्वा तूष्णीं वेदिमध्यऽउदगग्रं निदधाति · ततो वृषणाविति दर्भतृणे प्रागग्रे निदधाति · तत उर्वश्यसीति तयोस्तृणयोरुपर्यधरारणिमुत्तरायां

---

१) ईक्षणान्ते पूषपिष्टं प°म्भः B. २) Thus B. also. ३) इदं पूष्णः ततस्तण्डुलानां विभज्यालम्भः B. ४) Thus B. also. ५) °डाशो १. ६) i. e. विस्रंस्य see २. ७. २२. ७) पात्रप्रतपने शृतावदानम् मेक्षणम् वाजिनभाण्डमिति B. see २. ६. ४१. ८) Thus १. B. ९) Thus B. also. १०) आसादनक्रमेणालम्भः B.

निद्धाति · तत आयुरसीति प्रमन्थमुखेन स्थालीस्थमाज्यं स्पृष्ट्वा. पुरूरवा इति तीर्थस्योपरि प्रमन्थं निद्धाति [1] · ततश्चात्रफलकस्योपर्यौवीलीमुद्गग्रां [2] निधाय कश्चिदन्यो यत्नं धारयति ॥ ॥१॥

इति पञ्चमस्य प्रथमा कण्डिका ॥ ॥

अग्नये मथ्यमानायानुवाचयति ॥१॥ अनुवाचनं होत्रा कारयति अत्राह्यापस्तम्बः अग्नये मथ्यमानायानुब्रूहीति सम्प्रेष्यति मथ्यमानायानुब्रूही-ति वेति ।

मन्थति गायत्रेणेति (५. २) प्रतिमन्त्रं त्रिः प्रदक्षिणम् ॥२॥ अध्वर्युः ।

जाते जातायेति ॥३॥ अग्नौ जाते जातायानुब्रूहीत्यनुवाचयति ।

प्रह्रियमाणायेति प्रास्यन् ॥४॥ आहवनीयेऽग्नौ जातस्याग्नेः प्रक्षेपं करिष्यन्प्रह्रियमाणायानुब्रूहीत्यनुवाचनं होत्रा कारयति ।

भवतं न इति (५. ३) प्रास्यति ॥५॥ अत्र यज्ञपतिशब्दोऽनेकयजमानके विपरिणाम्यते यज्ञपती यज्ञपतीन् ।

अग्नावग्निरिति (५. ४) जुहोति स्थाल्याः स्रुवेण ॥६॥ प्रक्षिप्तस्याग्नेरुपरि स्थाल्याः सकाशात् आज्यं जुहोति · इदमग्निभ्यामिति त्यागः ॥ एवमन्तमग्नि-मन्थनम् । ततो होतुरामन्त्रणादि

नवप्रयाजं नवानुयाजम् ॥७॥ वैश्वदेवं भवति (२. ५. १. २०) । अत्र च पञ्चमप्रयाजस्याभ्यासेन नवसंख्या पूरणीया उत्पन्नशिष्टत्वात् ततश्च पञ्चमषष्ठस-प्तमाष्टमनवमानां पञ्च ममेत्यनेनैवानुमन्त्रणम् पञ्चमस्य स्थाने होम इति · पञ्च-मस्येदं बर्हिष इति त्यागः इदमुषासानक्ताभ्यामिति षष्ठस्य इदं दैव्याभ्यां हो-तृभ्यामिति सप्तमस्य इदं तिसृभ्यो देवीभ्य इत्यष्टमस्य नवमस्य तु अग्न्यादि-सर्वदेवताभ्यो याज्यामध्ये पठिताभ्य इति ।

वरुणप्रघासा महाहविश्च ॥८॥ उभयत्र तथा श्रुतत्वात् (२. ५. २. ४१. ४. २) ।

त्रीणि समिष्टयजूंषि जुहोति देवा गातुविदो (८. २१) यज्ञ यज्ञम् (८. २२)

---

1) विद° १. 2) °त्रफलकस्यौपर्यौपवीलीमुदग्रां १.

एष तऽइति (८. २२) ॥ ९ ॥　　त्रयाणां क्रमेण इदं वाताय इदं यज्ञाय इदं यज्ञपतयऽइति त्यागाः । अत्राभ्यासेन संख्यापूरणम् उत्पन्नयोगात्संख्यायाः । अनेकयजमानके चोक्तः　यज्ञपती गच्छ यज्ञपतीन्गच्छ　एष वां यज्ञो यज्ञपती ऽतं जुषेथाम् एष वो यज्ञो यज्ञपतयः ऽतं जुषध्वम् इति च ।

पशौ च ॥ १० ॥　　त्रीणि समिष्टयजूंषि जुहोति । विकल्पेन मन्त्रान्तरमाह

याँ३॥ऽआवह[1] इति (८. १९) वा पशौ ॥ ११ ॥　　यां आवह इत्यादिभिर्वा त्रिभिर्मन्त्रैः (८. १९-२१) · अत्र पूर्वयोरिदमग्नयऽइति　तृतीयस्येदं वातायेति [त्यागः] ।

एकं वा वैश्वदेवे ॥ १२ ॥　　[यद्वा] वैश्वदेवे पर्वणि एकं समिष्टयजुर्जुहोति · तच्च देवा गातुविद इत्यनेन मन्त्रेण (८. २१) · शुनासीरीयेऽप्येकमेव (२. ६. ३. ३) । अत्र　तस्य प्रथमजो गौर्दक्षिणेति (२. ५. १. २१) श्रूयते ।

पर्वसꣳस्थासु वपनं वा प्रागग्न्यात् ॥ १३ ॥　　पर्वसंस्थासु प्रागग्न्यात्पर्वणास्त्रयाणां संस्थासु समाप्तिषु कर्मापवर्गान्ते यजमानस्य वपनं वा भवति · तत्त्र्येनी[2] शलली भवति लोहः क्षुरस्तेन परिवर्तयतऽइति (२. ६. ४. ५-७) [वैश्वदेवे वरुणप्रघासेषु साकमेधेषु च श्रुतेः]　परिवर्तनं च केशश्मश्रूणां वपनं मुण्डनमुच्यते । शाखान्तरसूत्रेषु पौर्णमासेष्ट्यनन्तरं वपनं विहितम् · तथा काठके · मानवे च सद्यः पौर्णमासीं संस्थाप्य केशान्वपति श्मश्रूणीति　[तथा]　त्रिःश्वेतया शलल्या लोहायसेन क्षुरेण निवर्तयतीति · आपस्तम्बोऽपि　श्वो भूते पौर्णमासेष्ट्या ऽइत्युपोप्य[3] त्र्येण्या शलल्या काण्डेनेक्षुशलाकया वा लौहेन च क्षुरेणौदुम्बरेण केशान्निवर्तयते वपयते श्मश्रूणीति ।　अथ वपनस्येतिकर्तव्यतामाह ·

अपरेण दक्षिणाग्निं दक्षिणं गोदानमुन्दति　सवित्रा प्रसूता दैव्या आप उन्दन्तु ते तनूं दीर्घायुत्वाय वर्चसऽइति ॥ १४ ॥　　दक्षिणाग्नेरपरस्यां दिशि प्राङ्मुखोपविष्टस्य यजमानस्य दक्षिणं गोदानम्　शयनकाले गवि पृथिव्यां दीयते निधीयते स्थाप्यतऽइति गोदानम् दक्षिणकर्णसमीपवर्तिनं शिरःप्रदेशमित्यर्थः

१) यां३ आवह १. २.　२) तत्त्येणी २.　३) ? ऽष्ट्या प्रभूतर्नस इत्युपोप्य २.

तमुन्दति उन्दी क्लेदने अद्भिः क्लेदयति आर्द्रं करोति सवित्रेत्यादिना[१]) मन्त्रेणो-दङ्मुख उपविष्टोऽध्वर्युः ।

त्र्येण्या शलल्या विनीय त्रीणि कुशतरुणान्यन्तर्दधात्योषधऽइति (४. १) ॥ १५ ॥ त्र्येण्या शलल्या क्लिन्नान्केशान्विनीय पृथक्कृत्य विजटान्कृत्वा[२]) त्रीणि कुशानि दर्भतृणान्यन्तर्दधाति । त्रिषु स्थानेषु एनी श्वेता कर्बुरा त्र्येणी[३]) शलली सेधाशलाका श्वाविल्लोम · त्रिः श्वेतयेति सूत्रान्तरात्[४]) · वर्णादनुदात्तात्तोपधात्तो न इति (पा॰ ४. १. ३९) ङीप् तकरस्य च नकारः एतशब्दः कर्बुरवर्णवाची अनुदात्तान्तस्तोपधः ।

त्र्यायुषमिति (३. ६२) यजमानो जपति ॥ १६ ॥ स्वरेण ।

शिवो नामेति (३. ६३) लोहक्षुरमादाय निर्वर्तयामीति (३. ६३) वपति ॥ १७ ॥ अध्वर्युः लोहक्षुरं लोहेन ताम्रेण परिष्कृतमयोमयमेव क्षुरं हस्तेन गृहीत्वा कुशतृणान्तर्हितान्केशांश्छिनत्ति · तृणानामपि छेदनं कर्तव्यम् सकेशानि प्रच्छिद्येति (पारस्कर २. १) क्वचिद्दर्शनात् । लोहमत्र ताम्रमुच्यते लोहित इवाग्निरिति वचनात् (२. ६. ४. ५) · तद्वान् लोहः लोहपरिष्कृतः मरुदेशे तादृशस्यैव[५]) प्रसिद्धत्वाद्वपनसामर्थ्याच्च लोह इति मतुब्लोपेन निर्देश इति हरिस्वामिनः ।

एवं पश्चादुत्तरतश्च ॥ १८ ॥ यथा दक्षिणगोदानस्योन्दनादि वपनान्तमुक्तम् एवं पश्चाद्गोदाने शिरसः पश्चात्प्रदेशे उत्तरगोदाने उत्तरस्मिञ्छिरःप्रदेशे · जपक्षुरादानयोरभावः कृतत्वात् ।

गृहेषु पौर्णमासः समारूढनिर्मथितयोस्तथा चेत् ॥ १९ ॥ ततः पर्वकरणप्रदेशादागत्य[६]) गृहेषु समारूढयोः अग्न्योः पौर्णमासं कर्तव्यम् · चेद्यदि तथा कृतं भवति समारूढयोः पर्व कृतं[७]) भवति तदा पर्वसमाप्त्यनन्तरं समारूढयोः पौर्णमासं कर्तव्यम् नान्यथेत्यर्थः । तत्र चतुर्णां पर्वणां मध्ये वरुणप्रघासाः साकमेधाश्चोदवसाय समारूढयोः क्रियन्ते · तथा गृहानित्वा निर्मथ्याग्नी पौर्णमासेन यजतऽइति वरुणप्रघासान्ते (२. ५. २. ४८) साकमेधान्ते (२. ६. २. १९) च श्रुतम् न

---

१) See Pâraskara २. १. २) ? विवरान्कृत्वा २. ३) Thus Ss. त्र्येनी २. and the Brâhmaṇa throughout. ४) the Mânavam, see at १३. ५) ?? मरुदेशे ताद॰ २. ६) ? पर्वकर्णप्र॰ २. पर्वदेशादा॰ Ss. ७) Thus Ss. पूर्वकृतं २.

वैश्वदेवशुनासीरीययोरन्ते · अतो वरुणप्रघाससाकमेधसमाप्त्यनन्तरमेवाग्नी समारोह्य गृहमागत्य मथित्वा तत्कालमेव सद्यः पौर्णमासं कर्तव्यम् वैश्वदेवान्ते प्राचीनप्रवणाद्गार्हपत्यमेव स्वस्थाने नीत्वा पौर्णमासेष्टिः कर्तव्या साकमेधानन्तरं समारोह्य निर्मथ्य तत्रैव शुनासीरीयं कृत्वा गार्हपत्यं स्वस्थानमानीय पौर्णमासं कर्तव्यम् · फाल्गुन्युद्दृष्टे शुनासीरीययागेऽप्येवमेव पक्षान्तरेषु शुनासीरीयान्ते पौर्णमासस्य प्रसङ्ग एव नास्ति ।

प्रजाकामस्यापि वैश्वदेवम् ॥ २० ॥　　पर्व केवलं भवति ।

एकेऽधःप्राङ्शायी मध्वाश्यृतुजायोपायी माꣳसस्त्र्यनृतानि वर्जयेदुदकाभ्यवायं च प्रागवभृथात् ॥ २१ ॥　　एके शाखिन एवमाहुः · चातुर्मास्ययाजी वैश्वदेवानन्तरं यजमानोऽधःप्राङ्शायी स्यात् अध इति खट्वस्थितात्त्वपेक्षया नीचः न खनास्तृतायां भूमौ प्राक्शिराः शेते · मधुना मिश्रान्नमश्नीयात् · ऋतुकाल एव जायां स्वभार्यामुपगच्छेत् नान्यथा अथवा ऋतुकाले जायामुपेयादेव न कदाचित्प्रमादान्नोपेयात् · चातुर्मास्यपर्यन्तमेते नियमा भवन्ति · उदकमध्ये प्रवेशं च [वर्जयेत्] प्रागवभृथात् वरुणप्रघासान्ते ह्यवभृथो भवति · [एके-ग्रहणात्सर्वस्य विकल्पः]। केचि[दिक एक]इत्येतत्प्रजाकामस्यापि वैश्वदेवमित्यनेन योजयन्ति · तेषां मतेन एषां नियमानां] नियोगतोऽनुष्ठानं भवति · एतेन वै प्रजापतिरित्यस्यां कण्डिकायां (२.५.१.२२) धूर्तस्वामिभिरेवं व्याख्यातम् स यः प्रजाकाम[इत्यादि श्रुतेः (२. ५. १. ७)] प्रजाकामस्य पृथगेव वैश्वदेवं भवतीत्येके मन्यन्तऽइति सूत्रकार आह उत्तरैश्च पर्वभिः सहैकवाक्यतादर्शनादुत्तरेष्विव समुदायान्तर्गतस्यैवापृथग्भूतस्यैतत्फलमिति स्वयं मन्यते इदमेवात्र युक्तम् अन्यथा तु वरुणप्रघासा अपि प्रजानामारोग्याय पृथग्भूता एव स्युः साकमेधाश्च द्विषतां पराजयाय तस्मादयमनुवादमात्रमेतदिति [1] [मन्यतऽइति] । तथा चाहापस्तम्बः तस्य पर्वस्वन्तरालव्रतानि न माꣳसमश्नाति न स्त्रियमुपैत्यृतौ वा जायाम् नोपर्यास्ते जुगुप्सतेऽनृतात् प्राङ् शेते मध्वश्नाति मध्वशनः स्यादित्येकम् व्यञ्जनार्थमित्यपरम् ऋतुयाज्यन्यश्चातुर्मास्ययाज्यन्यो वसन्तोऽभूत्प्रावृडभूच्छरदभूदिति यजते स ऋतुयाजी अथ यश्चतुर्षु-चतुर्षु

---

[1] एतत् refers to २. ५. १. ७.

मासेषु स चातुर्मास्ययाजी वसन्ते वैश्वदेवेन यजेत प्रावृषि वरुणप्रघासैः शरदि साकमेधैरिति विज्ञायते · काठके च ब्रह्मचारिव्रतो भवत्या समापनादधःशायी माऽसं स्त्रियश्च वर्जयेत्काममृतौ जायामुपेयादिति लामकायनिनां ब्राह्मणमिति · मानवे च चतुरो मासान्न माऽसमश्नाति न स्त्रियमुपैति नोपर्यास्ते जुगुप्सेतानृतात्प्राङ् शेते मध्वश्नात्यृतौ भार्यामुपैतीति ॥ ॥ द्वितीया कण्डिका ॥ २॥

अथ पद्धतिः ॥

ततश्चात्रं नेत्रेण त्रिरुद्वेष्ट्याध्वर्युरग्नये मथ्यमानायानुब्रूहीति होतारं प्रत्युक्ता गायत्रेणेति (५. २) प्रतिमन्त्रं त्रिः प्रदक्षिणं मन्थति · तत ऊर्ध्वं प्रदक्षिणं चाप्रदक्षिणं चाग्निजन्मपर्यन्तं मन्थति · अग्नौ जाते जातायानुब्रूहीति होतारं प्रेष्यति[1]· तत आयं हस्तेनेति[2] होत्रोच्यमाने हस्तेनाग्निसंयुक्तेऽरणी गृहीत्वा प्रह्रियमाणायानुब्रूहीति होतारं प्रेष्य भवतं न इत्याहवनीये (५. ३) ऽग्निं प्रक्षिपति · ततः समिधमाधाय तस्मिन्प्रज्वलितेऽग्नावग्नाविरिति (५. ४) मन्त्रेण स्थाल्याः सकाशाद्गृहीत्वा स्रुवेणाज्यं जुहोति इदमग्निभ्याम् । ततः इन्द्रि होतरित्यामन्त्रणादि · इदमरुं सप्तदशेनेत्यववाधनम् · नव प्रयाजाः चतुर्थसप्तमयोः समानयनम् · चतुर्णां प्रयाजानां त्यागा अनुमन्त्रणानि च प्रकृतिवत् · पञ्चमप्रयाजे इदं ब्राह्मः पञ्च मम न तस्येति अन्नादो भूयासमिति चानुमन्त्रणे पञ्चमादीनां नवपर्यन्तानां सर्वेषाम् षष्ठे इदमुषासानक्ताभ्याम् सप्तमे इदं दैव्याभ्यां होतृभ्याम् अष्टमे इदं तिसृभ्यो देवीभ्यः नवमे इदमग्नये सोमायाग्नये सोमाय सवित्रे सरस्वत्यै पूष्णे मरुद्भ्यः स्वतवोभ्योऽथवा मरुद्भ्यो विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यां देवेभ्य आज्यपेभ्यो वाजिभ्यश्च न मम पञ्च ममेत्यादि पूर्ववत् · प्रत्येत्य वाजिनान्तानां हविषां प्रयाजशेषेणाभिघारणम् · तत आज्यभागौ । प्रधानयागे अग्नयेऽनुब्रूहि अग्निं यज इदमग्नये १ सोमायानुब्रूहि[3] सोमं यज इदं सोमाय २ सवित्रे उपांशु अनुब्रूहि[4] सवितारम् उपांशु यज इदं सवित्रे ३ सरस्वत्याऽनुब्रूहि[5] सरस्वतीं

---

[1] प्रेषयति I. [2] see शाङ्खायन ३. १३. २१. [3] Thus १. °ब्रूहि इहि I. [4] अनुब्रूइहि I. अनुब्रूऽहि १. (pluta!). [5] °ब्रूइहि I. here and in all the following cases; of course °ब्रूऽहि is meant, but I see no reason for the प्लवनम् ·

यज्ञ इद७ सरस्वत्यै ४ पूष्णोऽनुब्रूहि पूषणं[1] यज्ञ इदं पूष्णे ५ मरुद्भ्यः स्वतवोभ्यो ऽनुब्रूहि मरुतः स्वतवसो यज्ञ इदं मरुद्भ्यः स्वतवोभ्यः अथवा मरुद्भ्यो ऽनुब्रूहि मरुतो यज्ञ इदं मरुद्भ्यः ६ इदं विश्वेभ्यो देवेभ्यः उपांशु अनुब्रूहि विश्वान्देवान् उपांशु यज्ञ इदं विश्वेभ्यो देवेभ्यः ७ द्यावापृथिवीभ्याम् उपांशु अनुब्रूहि द्यावापृथिव्यौ उपांशु यज्ञ इदं द्यावापृथिवीभ्याम् ८ · द्यावापृथिवीयः सर्वहुतः कार्यः अप[र्या]वर्तनं च[2]। अग्नये स्विष्टकृतऽइत्यादि · सप्तकपालस्य पयस्यायाश्च चतुर्धाकरणभागानामभावः अन्येषां सर्वं[3] भवति · समस्य मार्जनम् · दक्षिणालम्भे ऊर्गसीत्यस्य स्थाने प्रथमजो गौरसीत्यूहः अस्यैष्टिकवैश्वदेपर्वणः समृद्ध्यर्थं प्रथमजं गां दक्षिणां ब्रह्मणे इत्यादि ब्राह्मणा अयं वः प्रथमजो गौः प्रतिगृह्णीतेति द्यौस्त्वा ददाविति प्रतिग्रहमन्त्रः। अनुयाजा नव · चतुर्थे सप्तमे चोपभृतः समानयनम् · प्रथमस्य पूर्वार्धे होमः इदं देवाय बर्हिषे १ द्वितीयप्रभृतिनाराशंसान्तानां मध्ये होमः अन्त्यस्य पश्चाद्धोमः · द्वितीये इदं देवीभ्यो द्वार्भ्यः २ इदं देवीभ्यामुषासानक्ताभ्याम् ३ इदं देवीभ्यां जोष्ट्रीभ्याम् ४ इदं देवीभ्यामूर्जाहुतिभ्याम् ५ इदं देवाभ्यां दैव्याभ्यां होतृभ्याम् ६ इदं देवीभ्यस्तिसृभ्यस्तिसृभ्यो देवीभ्यः ७ इदं देवाय नराशꣳसाय ८ इदं देवायाग्नये स्विष्टकृते ९ · ततो धारानुयाजः इदं देवेभ्यः। स्रुचोरासादनम् · व्यूहने अग्नेः सोमस्य सवितुः सरस्वत्याः पूष्णो मरुताꣳ स्वतवसाम् अथ वा मरुताम् विश्वेषां देवानां द्यावापृथिव्योरुज्जितिम °मि अग्निः सोमः सविता सरस्वती पूषा मरुतः स्वतवसः अथवा मरुतः विश्वे देवा द्यावापृथिव्यौ तमपनुदन्तु° उपांशुदेवतानामुपांशूच्चारणाम् अन्येषामुच्चैः। प्रस्तरहोमे इदमग्नये सोमायाग्नये सोमाय सवित्रे सरस्वत्यै पूष्णे मरुद्भ्यः स्वतवोभ्यः अथवा मरुद्भ्यो विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यां देवेभ्य आज्यपेभ्योऽग्नये होत्राय वाजिभ्यश्चेति · सह शाखया प्रस्तरानुप्रहरणम् · ततस्तृणं प्रास्यात्मानमालभ्यापः स्पृष्ट्वा वाजिनेन यागः कार्यः · तत्र वेदिमध्ये जुहूं[4] निधाय वाजिनस्थालीमुखेनैव बर्हिषि स्कन्दनं कुर्वन् जुह्वां वाजिनस्य निनयनं करोति · ततोऽनुवाचनम् वाजिभ्योऽनुब्रूहीति · उत्थायातिक्रम्याश्राव्य वाजिनो

[1] Thus १. B. [2] See schol. at ४. ६. ४. [3] ? सव १. [4] ? जुह्वां १.

यजेति प्रैषः अग्नेः पूर्वार्धे होमः स वै प्रागेवाग्रे जुहोतीति श्रुतेः (२. ४. ४. २३) · अनुवषट्कारेऽपि पूर्वार्धऽएव होमः स वै प्रागेव जुहोतीति श्रुतेः (२. ४. ४. २३) · तत उत्तरत उपविश्य स्रुक्स्थेन वाजिनशेषेण दिशो व्याघारयति दिशः स्वाहा अग्नेः पूर्वभागे इदं दिग्भ्यः प्रदिशः स्वाहा दक्षिणतः इदं प्रदिग्भ्यः आदिशः स्वाहा पश्चात् इदमादिग्भ्यः विदिशः स्वाहा उत्तरतः इदं विदिग्भ्यः उद्दिशः स्वाहा अग्निमध्ये इदमुद्दिग्भ्यः दिग्भ्यः स्वाहा पूर्वार्धे इदं दिग्भ्यः · ततो बहिर्गत्वा स्रुच्यवशिष्टं वाजिनशेषं भक्षार्थं हस्ते कृत्वा होता अध्वर्यऽउपह्वयस्व[1] ब्रह्मन्नुप॰ अग्नीदुप॰ यजमानोपह्वयस्वेत्येवं कर्मसम्बन्धिभिर्नामभिरेतान्पृष्ट्वा उपहूत इति तैरनुज्ञातो भक्षयति · ततोऽध्वर्युर्वाजिनमादायैवमेव होतारं ब्रह्माणमग्नीधं यजमानं च पृष्ट्वा ऋतूनां त्वा वाजिनामिति मन्त्रेण तं वाजिनशेषं भक्षयति वाज्यहं वाजिनस्येति वा वाजे वाजीति वा · ततो ब्रह्मा होतारमध्वर्युमग्नीधं यजमानं च पृष्ट्वा भक्षयति · ततोऽग्नीद्धोतारमध्वर्युं ब्रह्माणं यजमानं च पृष्ट्वा भक्षयति · ततो यजमानो वाजिनं हस्ते कृत्वा होतारमध्वर्युं ब्रह्माणमग्नीधं च पृष्ट्वा ऋतूनामिति भक्षयति · मन्त्रास्तु सर्वेषां पूर्वोक्ता एव · अथवा यजमानः प्रथमो भक्षयति उत्तमश्च अस्मिन्पक्षे सर्वैः यजमानः पूर्वं पश्चाच्च वा-एवं प्रष्टव्यः यजमानोपह्वयस्व होतरुपह्वयस्वेत्येवम् · ततः संवदस्वेत्यादि · स्रुग्विमोकानन्तरं वा वाजिनयागः परिधिभिः सहोपवेषहोमः । एकं समिष्टयजुः त्रीणि वा · अस्मिन्पक्षे देवा गातुविदो यज्ञ यज्ञम् एष तऽइति त्रयाणां क्रमेण मन्त्राः इदं वाताय इदं यज्ञाय इदं यज्ञपतयऽइति क्रमेण त्यागाश्च । नमः कृतायेति कर्मापवर्गान्ते वपनं वा · तत्र वपनपक्षे दक्षिणाग्निमपरेण प्राङ्मुखं यजमानमुपवेश्य स्वयमुदङ्मुखो यजमानस्य दक्षिणं गोदानं मस्तकस्य दक्षिणं प्रदेशं सवित्रा प्रसूता इत्यनेनाद्भिरार्द्रं करोति · ततस्त्र्येण्या शलल्या कतिपयकेशान्पृथक्कृत्वा त्रीणि कुशतृणान्यन्तर्दधाति ओषधऽइति · ततस्त्र्यायुषमिति यजमानो जपति · ततः शिवो नामेति ताम्ररचितं क्षुरमादाय निवर्तयामीति केशांश्छिनत्ति · एवं पश्चात् एवमेवोत्तरतः तत्र तु त्र्यायुषमिति[2] जपस्य क्षुरा-

[1] अध्वर्ळ उप॰ १.  [2] ? ततःस्त्र्यायु॰ १.

दानस्य चाभावः · ततो नापितो वपनं करोति । ततः शतं ब्राह्मणान्भोजयेत्
चातुर्मास्येषु चत्वारि शतं-शतं पर्वणि-पर्वणीति परिशिष्टात् · अस्य ऐष्टिकवै-
श्वदेवपर्वणः समृद्ध्यर्थं यथासम्पन्नेन तृप्तिपर्यन्तभोजनपर्याप्तेनान्नेन शतं ब्राह्मणानहं
तर्पयामीति संकल्पः ततः सद्यःपक्षेण पौर्णमासेष्टिः · ततः पक्षादिकर्म · ततो
वैश्वदेवादि नित्यं कर्म · ततो भोजनम् । अकृतवाससां वरुणप्रघासार्थे यत्नेन
रक्षणम् नाशादावन्येऽप्यकृते ग्राह्ये । प्रजाकामस्यापि केवलं वैश्वदेवं
पर्व भवतीति केचित् नेत्यपरे । अथ यजमानश्चातुर्मास्यसमाप्तिं यावत् भूमौ
प्राक्शिराः शयीत मध्वश्नीयात् ऋतुकाले स्त्रियं गच्छेदेव मांसं नाश्नीयात्
अनृतौ स्त्रियं न गच्छेत् अनृतं न वदेत् · वरुणप्रघासावभृथपर्यन्तमुदकमध्ये
प्रवेशमपि वर्जयेत् ॥ ॥२॥

इति पञ्चमस्य द्वितीया कण्डिका ॥ ॥

अधुना वरुणप्रघासानाह

आषाढ्यामयं ते योनिरिति (३.१४) समारोह्योदवसाय निर्मथ्य वरुणप्रघासाः
॥१॥ आषाढीशब्देनात्र गौणी प्रतिपदुच्यते ऋतुमुखऽऋतुमुखे चातुर्मा-
स्यैर्यजेतेति शाखान्तरे श्रुतत्वात् न पञ्चदशीति । आषाढ्यामाषाढशुक्लप्रतिपदि ·
गार्हपत्याहवनीयावग्नी अरण्योः समारोह्य प्रतपनेन अरण्योरारूढौ कृत्वा अर्था-
देव पूर्वतरमाहवनीयमुद्धृत्य · उदवसाय स्वस्थानात्प्राचीनप्रवणे गत्वा उत्पूर्वो
ऽवस्यतिः प्रदेशान्तरगमने वर्तते · तत्र गार्हपत्यं निर्मथ्य स्थापयित्वा तत आ-
हवनीयदक्षिणाग्नी च विहृत्य वरुणप्रघासाः कर्तव्याः । तत्र प्रथमं गार्हपत्यस्य
समारोपः सकृन्मन्त्रेण द्विस्तूष्णीम् तन एवमेवाहवनीयस्य शाङ्खायनसूत्रे
(२.१७.२ ४) ऽस्य विशेषस्य दर्शनात् ।

पूर्वेद्युर्दक्षिणाग्नौ निस्तुषामभृष्टयवानां करम्भपात्रकरणम् ॥२॥ पूर्वेद्यु-
र्यजनीयकालात्प्रतिपदः पूर्वस्मिन्दिने पञ्चदश्याम् · निर्मुक्तास्तुषा येभ्यो निस्तुषाः
अकृतफलीकरणाः · आमा अपक्वाः भृष्टाः पक्वाः आमाश्च ते भृष्टाश्चामभृष्टा
ईषद्भृष्टा इत्यर्थः · करम्भो दध्ना संयुताः सक्तवः तन्मयानां पात्राणां करणम् ।

दक्षिणाग्नेरेवात्र अपणावात्पात्रासादनमत्र तस्योत्तरत उदक्संस्थं कर्तव्यम् · ग्रहणं तु गार्हपत्यस्य पश्चादेव गृहीतानामासादनं तु दक्षिणाग्नेः पश्चादेव · भर्जनोपधानं वधर्योरेव दक्षिणाग्नौ विरोधाभावात् पर्यग्निकरणं तु गार्हपत्यादेव गार्हपत्ये संस्कारा इति (१. ८. ३४) वचनात् । पात्रेषु ह्यशनमश्यत ऽ इत्यर्थवादाद्यथाशनार्थानि पात्राणि भाजनानि भवन्ति तादृशान्येतान्यपि कर्तव्यानि आसादनादौ च पात्रीषूक्तानानि निधेयानि भाजनवदेव ।

यावन्तो यजमानगृह्या एकाधिकानि ॥ ३ ॥ या° य° तावन्ति करम्भपात्राणि ।

प्रजायां वा ज्ञातश्रुतेः ॥ ४ ॥ अत्र गृह्यशब्दः प्रजायां वर्तमानो ग्राह्यः न भृत्यभार्यपश्वादौ · या अस्य प्रजा ज्ञातास्ता वरुणपाशात्प्रमुञ्चतीति श्रुतेः (२. ५. २. २२) अपत्यानि यावन्ति पुत्रपौत्रपुत्रीपौत्र्यादिरूपाणि न च भृत्याः नात्मा[1] न च बन्धवः न च पुत्र्यः सुवासिन्यः ज्ञातवेऽप्यगृह्यत्वादिति हरिस्वामिनः ।

त्रीणि वा नित्यत्वात् ॥ ५ ॥ अनपत्यस्य एकापत्यस्य द्यपत्यस्य च त्रीण्येवैकाधिकानि कर्तव्यानि · करम्भपात्राणि कुर्वन्तीति (२. ५. २. १४) बहुवचनस्य नित्यमेव श्रवणात् नित्यं च बहुवचनं त्रिषु ।

मेषमिथुनं च ॥ ६ ॥ तदपि पूर्वेद्युरेव तत एव निस्तुषामभृष्टयवकरम्भ[शेष]स्यैव मेषं मेषाकारं प्रतिरूपकम् मेषीं मेष्याकारां प्रतिकृतिं च करोति · यवमयौ भवत इति श्रुतेः (२. ५. २. १६) । अत्र कठसूत्रम् आमयवपिष्टानां करम्भपात्राणि यावन्तो यजमानस्य पुत्रपौत्रा यजमानः पत्नी च प्रतिषिद्धेऽ एकमधिकम् शृङ्गिणं मेषमशृङ्गीं मेषीम्[2] शुक्लोर्णाभिरावेष्ट्येति · मानवे च विशेषः उत्तरतो गार्हपत्यस्य प्रतिप्रस्थाता आमयवपिष्टानां दध्ना करम्भपात्राणि करोत्येकोर्धान्यङ्गुष्ठपर्वमात्राणि[3] मेषं कृत्वा मेषीं च करोति यावन्ति पुंलिङ्गानि शक्नुयुरन् स्त्रीलिङ्गानि मेष्याः प्रतिप्रस्थाता प्रक्षाल्योर्णाः श्लेषयत इति · आपस्तम्बोऽपि एतस्मिन्काले प्रतिप्रस्थाता तूष्णीं करम्भपात्रार्थान्यवान्निर्वपति यजुषाध्वर्युर्मे-

---

1) Thus २. if नामात्याः? 2) °मशृंगां मेषीं च paddh. (५. ४) 3) करोत्यंगु°-त्राण्येकोध्वानि paddh. (५. ४)

षार्थान् मेष्यर्थान्प्रतिप्रस्थाता　तयोरामिक्षावद्दैवतम्　श्रामपिष्टयवानां पत्नी करम्भपात्राणि करोति यावन्तो यजमानस्यामात्याः सस्त्रीकास्तावन्त्येकातिरिक्तानि　श्रामपेष्याणां[1] मेषप्रतिकृती भवतो　मेषमध्वर्युः करोति मेषीं प्रतिप्रस्थाता　स्त्रियाः स्त्रीव्यञ्जनानि पुंसः पुंव्यञ्जनानि　अपि वा पूर्वेद्युरन्वाहार्यपचने वितुषानिव यवान्कृत्वा तेषामीषदुपतप्तानां पत्नी करम्भपात्राणि करोत्यत्रापि मेषं च मेषीं च करोतीति वाजसनेयकम्[2]　ऐन्द्राग्नपर्यन्तानधिश्रित्यैकादशसु कपालेषु मेषीमधिश्रयति अष्टासु मेषं कुम्भीपक्वौ वा भवत इति ।　एतेषां कठादीनां वारुणप्रघासिकहविर्ग्रहणकाल एवैन्द्राग्ननिर्वापानन्तरं करम्भपात्रादीनां निर्वपणं विहितमस्ति　माध्यन्दिनानां त्वथ पूर्वेद्युरिति (२. ५. २. १४) वचनात्पूर्वेद्युरेव । तत्र करम्भपात्रमेषीकरणं प्रतिप्रस्थातुः　मेषकरणमध्वर्योः · पूर्वं तूष्णीं करम्भपात्रार्थानां यवानामेकाधिकापत्तिसंख्यानां[3] चतुर्मुष्टिकानां ग्रहणम् करम्भपात्राणि जुहोतीति (५. ५. ११) जुहोतित्वात्तूष्णीम्　ततो वरुणाय जुष्टमिति मन्त्रेणाध्वर्योर्मेषार्थानाम्　ततो मरुद्भ्यो जुष्टमिति प्रतिप्रस्थातुर्मेष्यर्थानाम् · पृथक्पृथगुपयुक्तानि पात्राण्यासाम्योर्णाश्लेषणान्तं मेषमेष्योः समन्त्रकं सर्वं यथास्वमध्वर्युप्रतिप्रस्थातृभ्यां कर्तव्यम् · तत्र प्रतिप्रस्थात्रा करम्भपात्रमेषीसाधारणाः पदार्थाः समन्त्रकाः कर्तव्याः शूर्पाग्निहोत्रहवण्यादानाद्यासादनान्ताः[4] कण्डनश्रपणपेषणासंयवनान्ताश्च　करम्भपात्राणां यदसाधारणम् ग्रहणं प्रोक्षणमभिमर्शनाधिश्रयणाद्यालम्भनान्तं च तूष्णीमेव　कुक्कुटाहननं चात्र न भवत्येव · अदृष्टार्थत्वपक्षे न प्रणीताप्रणयनम्　यदा सर्वार्थत्वसंयवनार्थत्वपक्षस्तदा प्रणीताप्रणयनं भवत्येव · तत्र सर्वार्थत्वपक्षे अपां दध्नश्च समन्त्रकं प्रणयनम् ब्रह्मन्नब्दधिनी प्रणेष्यामीति चोक्तिः　संयवनार्थत्वपक्षे च केवलस्य दध्नः तत्र ब्रह्मन्दधि प्रणेष्यामीत्येतावदेव । अत्र पूर्वेद्युरग्नी समारोह्योदवसाय निर्मथ्य वरुणप्रघासार्थमाहवनीयदक्षिणाग्नी विहृत्य समन्त्रकमग्न्यन्वाधानं ब्रह्मवरणं च कृत्वा यजमान वाचं

---

1) ? Thus paddh. (५.४) · श्रापेषाणां २· श्रामयवाणां २·　2) ? कुर्वतीतिवा॰ paddh. (५. ४). ॰तीति । वाजस॰ २. A marginal gloss inserts अत्रापि before वाज॰　3) ? ॰पत्यसंख्यानां २·　4) ? ॰ण्यादानादेयासा॰ २·

यद्देति चोक्ताध्वर्युप्रतिप्रस्थातृभ्यां यथास्वं पात्रासादनाद्यास्योदकनिनयनादर्वाक्सर्वं कर्तव्यम् आस्योदकनिनयनं तु प्रातस्तनपाव्यङ्गुलिप्रक्षालनेन सह कर्तव्यम् नाद्य ।

अनैडकीर्दूर्णाः प्रक्षाल्याश्लेषयेत्तयोः ॥७॥ एडको नाम दक्षिणापथे मेषाकृतिः पशुः एडकस्येमा ऐडक्यः न ऐडक्यः अनैडक्यः अनैडकीर्दूर्णाः मेषरोमाणि[१] प्रकर्षेणाद्भिः क्षालयित्वा तयोः मेषमेष्योः पिष्टमययोः शरीरे आश्लेषयेत् संश्लेषयेत् यद्यनैडकीर्दूर्णा विन्देत्ताः प्रणिह्य निश्लेषयेदिति श्रुतेः (२. ५. २. १५) ।

कुशोर्णा वाभावे ॥८॥ दर्भाणां मञ्जरीतूलानि · तथा चापस्तम्बः उद्वासनकालेऽनैडकाभिर्दूर्णाभिर्मेषप्रतिकृती लोमशौ कुरुतस्तदभावे कुशोर्णाभिरिति ॥ एष वै प्रत्यक्षं वरुणस्य पशुर्यन्मेष इति (२. ५. २. १६) वाक्यशेषात् पयस्यावदानाभ्यां सह स्रुच्यवधानवचनाच्च (२. ५. २. ३७ ३८) मेषमेष्योर्यागार्थत्वमवसीयते तेन युक्तं तयोः समन्त्रकमेव निर्वपणादि कुर्वन्तीति (२. ५. २. १५) बहुवचनाच्चाध्वर्युप्रतिप्रस्थात्रग्नीदादिबहुकर्तृकतापि युक्ता · अथाहुः पितृभूत्याचार्याः यागद्रव्यसंस्कारैर्मेषमिथुनं संस्कुर्वन्त्येके एके न ये संस्कुर्वन्ति तेषामभिप्रायः पयस्यावदानेन सह मेषमिथुनमप्यवधीयते[२] अतस्तदपि देवतोद्देशेन त्यज्यतऽइति यागसाधनमेवेति ये तु न संस्कुर्वन्ति तेषामयमभिप्रायः नैव यागद्रव्यं मेषमिथुनम् वारुणो मेषो भवति मारुती मेषीत्यश्रुतत्वात् न च वरुणं मरुतश्चोद्दिश्य मेषमिथुनं त्यज्यते यदेव वारुणं मारुतं च हविस्तदर्थे नैव स देवतोद्देश इति मिश्रणे वदृष्टो हविषोः संस्कारः तस्मादधर्मकमिति · जुहोतिधर्मेण मेषमिथुनं संस्करणीयमिति श्रीअनन्तयाज्ञिकाः · हरिस्वाम्यभिमतश्चायं पक्षः यतः स एवाह अवदानेन सह मेषमवदधातीति (२. ५. २. ३७) होमसम्बन्धोऽवदानसम्बन्धान्मेषस्य होतव्यत्वाद्ध्यवदानस्य ततश्च सोऽपि वरुणायैव होतव्यः यागसम्बन्धाभावाच्च न यागहविर्धर्माः कार्या इति · कर्काचार्यसम्प्रदायकारादिमते यागसम्बन्ध एव तेषां मते समन्त्रकास्तयोर्यागधर्मा भवन्ति ।

---

१) मेषशिरोरोमाणि Ss. २) ? °वीयते २. See २. ५. २. ३७ and ३८.

आहवनीयस्य पुरस्ताद्वेदी करोति ॥ ९॥　　आहवनीयस्य पूर्वस्यां दिशि · एका दक्षिणतः　अपरा उत्तरतः · तत्र प्रधानत्वाद्बहूनां हविषां सादनार्थत्वाच्चोत्तरवेदिः पुरस्तादाहवनीयस्यार्जवेन । तथा च मानवे　अग्रेणाहवनीयं त्रिषु प्रक्रमेष्वपरिमिते वावकाशे पृष्ठ्याशङ्कुं[1] निहत्य वज्रादानप्रभृति वेदिं विदधाति षट्शयां प्राचीं चतुःशयां पश्चात्त्रिशयां पुरस्तात् पूर्वार्धे वेद्या वितृतीय[मा]त्रेऽरत्निमात्रीं चतुर्दिष्टिमुत्तरवेदिं[2] विधायाग्रेणोत्करं प्रक्रममात्रे वेदेरुद्धत्यावोक्ष्य चात्वालं शम्यया परिमिमीत इति ।

प्रादेशोऽन्तरा ॥ १०॥　　वेद्योरन्तरालं भवति · अङ्गुष्ठतर्जनीभ्यां प्रसारिताभ्यां प्रादेश उच्यते ।

पृथो वा ॥ ११॥　　शाखान्तरादेव · आहापस्तम्बः　द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं पृथमात्ररथवर्त्ममात्रसीतामात्रप्रादेशमात्रेण वा तिर्यक्सम्भिन्ने वेदी भवत इति · प्रसारिताङ्गुलिरा मणिबन्धनाद्धस्तः पृथशब्देनोच्यते । मानवे च　प्रतिप्रस्थाता दक्षिणां वेदिं करोत्योत्तरस्मात्परिग्रहादरत्निमात्रमन्तरा समे प्राची[3] भवतः यथा हवींषि सम्भवेयुस्तथा तिरश्ची[3] एक उत्करोऽपरेणोत्तरवेदिं स्तम्बयजुर्हरतीति ।

रथमात्र्युत्तरा ॥ १२॥　　दक्षिणा तु प्रकृतिवदपरिमितप्रमाणा वा व्याममात्रीं पश्चादित्यादिप्रमाणा (२. ६. ३) वा । रथप्रमाणं च स्पष्टं शुल्वकृतोक्तम् (२) अङ्गुले रथसंमितायाः प्रमाणम् तत्राष्टाशीतिशतमीषा १८८ चतुःशतमक्षः १०४ षडशीतिर्युगं ८६ चत्वारोऽष्टकाः शम्येति · अरत्नेश्चतुर्विंशो भागोऽङ्गुलम्　पुरुषस्य पञ्चमो भागोऽरत्निः अथवा कूर्परादारभ्य कनिष्ठिकाग्रान्तः · तेन चतुरङ्गुलाधिकं शताङ्गुलं पश्चात्तिर्यक्प्रमाणम्　अष्टाशीत्यङ्गुलैरधिकं शताङ्गुलं[4] प्राची षडशीत्यङ्गुलं पुरस्तात्तिर्यक्प्रमाणमिति · तत्रायं साधनोपायः　अष्टाशीतिशताङ्गुलां १८८ रज्जुं मित्वा तत्र लक्षणं कृत्वा ततश्चतुर्णवत्यङ्गुलां १४ रज्जुं मूलरज्ज्वा अर्धप्रमाणामभ्यस्य तस्या अभ्यस्ताया रज्जोरग्रे षष्ठे भागे अङ्गुलत्रिभागद्व-

---

१) ? Thus २. पृश्नीशंकुं २.　२) ? चातुर्दि° २. (त्रं अरत्नि°—°प्रक्रम at the margin.)
३) i. e. प्राच्यौ, तिरश्च्यौ !　४) ? °ला २.

याधिकपञ्चदशाङ्गुलप्रमाणे १५२/३ लक्षणमाकर्षणार्थं कर्तव्यम् ततोऽभ्यासरज्ज्वोरन्तात्त्रयश्चत्वारिंशत्तमे ४३ऽङ्गुलेऽंसाङ्कनार्थं द्वापञ्चाशत्तमे ५२ऽङ्गुले च श्रोण्यङ्कनार्थं लक्षणं कुर्यादिति । एतदेकमुत्तरवेदेः प्रमाणमुक्तम् · अथ द्वितीयं प्रमाणमाह ·

चतुररत्निर्वा पश्चात् सप्त प्राची षड्वा त्रयः पुरस्तात् ॥ १३ ॥ उत्तरवेदिः चतुररत्निः पश्चात्तिरश्ची भवति सप्तारत्निः षडरत्निर्वा प्राची प्रागायता त्रयोऽरत्नयः पुरस्तात्तिरश्ची भवति · शाखान्तरादेव । षडरत्निः प्राचीति पक्षे अयं साधनश्लोकः नवारत्निर्मिता रज्जुर्लक्षिता षट्स्वतः परम् अर्धेऽर्धे त्रिषु पाशः स्यात्पशुवेदेः प्रसाधनमिति · अस्यार्थः · नवभिररत्निभिर्मिता रज्जु षट्सु अरत्निषु लक्षिता चिह्नयुक्ता कार्या तच्च लक्षणं प्राच्या अङ्कनार्थम् अतः परम् अस्मात्षडरत्निमिते स्थाने[1] कृताल्लक्षणात्परम् त्रिषु स्थानेषु अर्धे-अर्धे अर्धारत्नावर्धारत्नौ लक्षणं कृत्वा पशुवेदेः प्रसाधनं कार्यमिति तत्र प्रथमेऽर्धारत्नौ आकर्षणार्थम् द्वितीयेऽर्धारत्नौ श्रोण्यङ्कनार्थम् तृतीयेऽर्धारत्नौ अंसाङ्कनार्थमिति पाशविपर्यासेनायं साधनोपायः · द्व्यरत्नौ २ लक्षणं कुर्यादर्धे १/२ सार्धत्रये ३१/२ तथा अर्धे १/२ ऽरत्नौ १ ततः सार्धे ११/२ पशुवेदेः प्रसाधनी[2] अयं च पाशाविपर्यासेन साधनोपायः । सप्तारत्निप्राच्यां पक्षे तु सप्तारत्निपरिमितां रज्जुं तत्र लक्षितां ७ तदर्धेनाभिवर्ध्य ३१/२ वर्धिताया आद्ये षष्ठे भागे १३/४ लक्षणमाकर्षणार्थं कृत्वा प्रान्तादरत्निद्वये ८१/२ प्रान्तात्सार्धारत्नौ १ च श्रोण्यंसाङ्कनार्थे लक्षणे कुर्यादिति ।

तेषां मध्ये शङ्कुः ॥ १४ ॥ त्रयः पुरस्तादिति प्रागुक्तम् (१३) तेषां त्रयाणामरत्नीनां मध्ये शङ्कुर्निहन्तव्यः · तत्र हि शङ्कुना कार्यमस्ति पूर्वार्धे शङ्कुसहितमित्यत्र (२८) ।

अपरिमिता वा ॥ १५ ॥ वा उत्तरवेदिरुक्तप्रमाणद्वयादतिशयेनाधिकप्रमाणा भवति अपरिमितं प्रमाणाद्भूय इति शुल्वकृतोक्तत्वात् (१) · अतश्चैकाहिकचातुर्मास्यादौ हविरासादनपर्याप्ता अपरिमिता वेदिराश्रयणीया अन्यथा हवि-

---

1) ? मितेस्थाने २· मितस्थाने २.  2) i. e. २ श्रोण्यङ्कनार्थम् १/२ आकर्षणार्थम् ३१/२ प्राच्यङ्कनार्थम् १/२ आकर्षणार्थम् १ अंसाङ्कनार्थम् ११/२ अत्रलक्षणारज्ज्वन्तपाशः ।

षामासादनासम्भवात् · अत्रापि यावती दीर्घा क्रियते तत्प्रमाणां रज्जुं मित्वा तत्र लक्षणं कृत्वा दीर्घप्रमाणार्धमभ्यस्य तस्याद्ये षष्ठे भागे लक्षणमाकर्षणार्थं कृत्वा पश्चात्तिर्यक्प्रमाणार्धे श्रोण्यङ्कनार्थं प्राक्तिर्यक्प्रमाणार्धेऽंसाङ्कनार्थं च लक्षणं कुर्यात् ।

स्फ्याद्या संमर्शनात्करोति ॥१६॥ अत्र द्वयोर्वेद्योः स्फ्यादि स्फ्यादाना-दारभ्य आ संमर्शनात् कृत्वाग्नीध्रोस्त्वाः संमृशतीत्येवमन्तं (२.६.१३-२७) करोति । तत्रायं क्रमः · तत्र यदि प्रागग्न्यन्वाधानात्करम्भपात्रकरणं कृतम् तदा इध्माग्न्य-न्वाधानम् · उभयोः शाखाच्छेदः संनमनम् शाखापरिवासनं च · अध्वर्योरिवोपवे-षकरणम् · पवित्रबन्धनमुभयोः · वत्सापाकरणमुभयोः वरुणाय भागमित्यध्वर्योः मरुद्भ्यो भागामिति प्रतिप्रस्थातुः · उपगूहनमुभयोः · ततो ब्रह्मवरणम् · यजमान वाचं यच्छेति प्रैषः वाग्यमनम् · पात्रासादनम् वज्रः पवित्रच्छेदनानि पवित्रे अग्निहोत्रहवणी अन्तर्धानतृणं शम्या चेति षट्कासादनमध्वर्योः शम्यावर्जितं पञ्चकासादनं प्रतिप्रस्थातुः अपणस्य पश्चादुत्तरतो वा · तत उभयोर्वाग्यमः · ततः पवित्रच्छेदनादिभिः प्रोक्षणीः संस्कृत्य वज्रान्तर्धानतृणयोः प्रोक्षणमुभयोः अध्वर्योः शम्याप्रोक्षणमधिकम् प्रोक्षणीनां स्थापनमुभयोः · तृणं गृहीत्वा यथोक्तं वेदिमानमुभयोः ततः स्फ्यादानादि संमर्शनान्तमुभयोरिति । केचिदध्वर्योश्चात्वा-लमानार्थायाः शम्याया आसादनं प्रोक्षणं च नेच्छन्ति अप्राकृतकार्यार्थत्वात् · मेषमेष्योर्यथास्वं समन्त्रकनिर्वपणं चाग्न्यन्वाधानं ब्रह्मवरणं च पूर्वं कृतमेव स्फ्याद्यासादनं च · प्रोक्षण्यः संस्कृता एव सन्ति केवलमत्र तृणशम्येऽआसाद्य तयोः प्रोक्षणमात्रं कार्यम् · ततो वेदिमानादि · यजमानस्य वाग्यमः संप्रैषो ऽत्रापि भवत्येव · पूर्वेद्युरेव छन्ना वसतीत्येतत्पर्यन्तस्यानुष्ठाने (५.४.१) तृण-शम्ययोरपि मेषमेषीनिर्वपणसम्बन्धिपात्रैः सहासादनप्रोक्षणे भवतो न पृथक् ।

उभयोरेक उत्करः ॥१७॥ उभयोर्वेद्योः · उत्तरस्या वेदेः समीपे ।

अपरेण वेदिं प्रतिप्रस्थातुः संचरः ॥१८॥ स्तम्बयजुर्हरणार्थमुत्करं प्रति गच्छतः प्रतिप्रस्थातुर्मार्गः · गोचरसंचरेत्यादिना (पा° ३.३.११९) संचरत्यनेनेति

संचरः तथा चाह्वापस्तम्बः अन्तरा वेदी प्रतिप्रस्थातुः संचरोऽपरेणोत्तरवेदिं स्तम्बयजुर्हरन्नाधर्युं परिहरत्युत्करे निवपति समान उत्कर इति[1]. मानवे च अन्तरेणोत्तरां स्तम्बयजुर्हरतीति. अतः स्तम्बयजुर्हरणायैवायं संचरनियमो नान्यत्रेति अन्यत्र त्वन्तरा वेदी। अत्राह्वापस्तम्बः अग्रेण गार्हपत्यं समे प्राची वेदी भवत उत्तरामधर्युः करोति दक्षिणां प्रतिप्रस्थातोत्तरे विहारेऽधर्युश्चरति दक्षिणे प्रतिप्रस्थातोभयत्र कृत्स्नं तन्त्रमपि पत्नीसंयाजा[2] एकवत्सप्रैषो द्विवद्दह्वानुज्ञानातीति. तथा यदेवाधर्युः करोति तत्प्रतिप्रस्थाता यत्किं च वाचा-कर्मीणमधर्युरेव तत्कुर्याद्युगपत्कालान्वा निगदात्साधारणाद्भव्यांश्च संस्कारानिति।

उत्तरवेदिं निवपत्युत्तरस्याम् ॥१९॥ वक्ष्यमाणेन प्रकारेण उत्तरस्यां वेदौ उ॰ दिं नि॰. उत्तरवेदिरिति वक्ष्यमाणसंस्कारसंकृतस्य चात्वालमृदा कृतस्य स्थण्डिलस्य नामधेयम्।

शम्यामादाय चात्वालं मिमीते पूर्वेणोत्करं संचरं परिहाप्य ॥२०॥ द्वात्रिंशदङ्गुलप्रमाणां शम्यां वारणीं हस्तेन गृहीत्वा उत्करात्पूर्वस्यां दिशि संचरणार्थं मार्गमन्तराले मुक्त्वा चात्वालं मिमीते. चात्वाल इति मानादिसंस्कारसंस्कृतस्य गर्तस्य नामधेयम् तच्च संव्यवहारार्थम् चात्वाले मार्जयन्तऽइत्यादौ (६. ६. २१). पूर्वं शम्याया आदानम् ततः स्फ्यस्यादानम् ततश्चात्वालमानम्। मानप्रकारमाह (२१–२४)

शम्यामुदीचीं निदधाति ॥२१॥ उत्तरस्माद्वेद्यन्तादुदीचीमुत्तराग्राम् तथा चापस्तम्बः उत्तरस्माद्वेद्यन्तादुदक्प्रक्रमे चात्वाल इति प्रकृत्य परिलिख्य तूष्णीं जानुदघ्नं त्रिवितस्तं[3] वा खात्वोत्तरवेद्यर्थान्पांसून्हरतीति. काठके च उत्तरतश्चात्वालं बहिर्वेदि सम्प्रत्युत्तरवेदेस्त्रिप्रक्रमेऽपरिमिते वेति जानुदघ्नं खात्वेति च।

पुरस्ताच्च ॥२२॥ शम्यामात्रमेवान्तरालं त्यक्त्वा वेद्यन्तादेव पुरस्तात्पूर्वस्यां दिशि उदगग्रां शम्यां निदधाति।

---

1) ? उत्करः। पंचज इति २. 2) ? ॰ज्या २. 3) ॰तस्तिं *Roer* Taitt. Saṁh. pag. ४१४.

दक्षिणतः प्राचीम् ॥२३॥ उत्तरवेद्यन्तमनुलक्षीकृत्य दक्षिणतो दक्षिणस्यां दिशि प्रागग्रां शम्यां निदधाति ।

उत्तरतश्च ॥२४॥ उत्तरस्यां दिशि प्राचीं श° नि° · एवं चतुर्दिक्षु शम्याया निधानेन चात्वालस्य मानमुक्तम् ।

स्फ्येनान्तर्लिखति तप्तायनीति (५. १) प्रतिमन्त्रम् ॥२५॥ प्रतिदिशं शम्यां निधाय निक्षितायाः शम्याया मध्यपार्श्वे अभ्यन्तरं स्फ्येन रेखां करोति · एवं द्वात्रिंशदङ्गुलः समचतुरस्रश्चात्वालः परिलिखितो भवति ।

विदेदग्निरिति (५. १) चात्वाले प्रहरति स्फ्येनान्वारब्धे ॥२६॥ अन्वारब्धे यजमाने[1] · अध्वर्युः प्रहरति प्रहारं करोति पुरीषोत्खननार्थम् · अन्वारम्भस्तु प्रहरणमात्र एव भवति ।

अग्नेऽअङ्गिर इति (५. १) पुरीषं हरति हस्तेन च ॥२७॥ उत्खातं पुरीषमध्वर्युर्वेदिपूर्वार्धे निक्षितशङ्कुसमीपे निवापाय नयति हस्तेन च स्फ्येन च ।

योऽस्यामिति (५. १) निवपति पूर्वार्धे शङ्कुसक्षितम् ॥२८॥ तद्धृतं पुरीषमुत्तरस्या वेदेः पूर्वभागे प्राङ्निक्षितशङ्कुसंलग्नं निवपति राशिं करोति · प्राङ्मुख उत्तरवेद्यां निवपतीति मानवे ।

अग्नीदुत्करवत्तूष्णीं हृतम् ॥२९॥ हृतं तत्पुरीषं पाणिद्वयेनाभिन्यस्यति (२. ६. २२) अभिनिदधाति हस्ताभ्यामवबाधते ।

एवं द्विरपरम् ॥३०॥ [प्रहरणादि] ।

द्वितीयस्यां तृतीयस्यामिति (५. १) विशेषः ॥३१॥ [मन्त्रस्य] ।

अनु त्वेति चतुर्थं यथार्थमाहृत्य सिंहासीति (५. १०) व्यूहत्युत्तरवेदिं शम्यामात्रीम् ॥३२॥ यथार्थं यावता पुरीषेणार्थः उत्तरवेदिनिष्पत्तिरूपं प्रयोजनम् तावत्पुरीषमाहृत्य शङ्कुसमीपेऽआनीय सिंहासीति मन्त्रेण कल्पस्वेति पदवता उत्तरवेदिं व्यूहति पुरीषं भूमिसंलग्नमेव हस्तेन सर्वतः प्रेरयित्वोत्तरवेदिं शम्यामात्रीं द्वात्रिंशदङ्गुलपरिमाणशम्याप्रमाणां निष्पादयति · व्यूहतीत्यस्यान्यत्रापि हस्तप्रेरणार्थस्यैव दृष्टार्थत्वात् स्रुचौ व्यूहतीत्यादौ (१. ८. ३. १) · अथा-

[1] अन्वारम्भश्च चात्वालस्य marg.

नुव्यूहतीति श्रुतत्वात् (३. ५. १. ३३) दिशं-दिशमनु विभागेनोहति प्रेरयति चतुरस्रामुत्तरवेदिं कर्तुमिति हरिस्वामिनः · तां वै युगशम्येन विमिमीतऽइति (३. ५. १. २४) श्रुतत्वात् शम्यामात्रीमित्युक्तम् [ततश्चोत्तरवेदिः] द्वात्रिंशदङ्गुला समचतुरस्रा । उत्तरवेदेः प्रमाणान्तरमाह ·

वितृतीयामपरिमितां युगमात्रीं यजमानदशपद्यां वा ॥ ३३ ॥ विकल्पे · वाशब्दः प्रत्येकमभिसम्बध्यते । वितृतीयामिति वेदेस्तृतीयभागसंमितामित्यर्थः · यत्प्रमाणायां वेदावुत्तरवेदिः क्रियते तद्वेदिक्षेत्रं सर्वं क्षेत्रफलेन चतुरस्रीकृत्य त्रिधापछिद्यैकं तृतीयं भागं पृथक्चतुरस्रीकृत्य तत्प्रमाणामुत्तरवेदिं कुर्यात् · तदुपायश्च शुल्वकृतोक्तः (२) पदं तिर्यङ्मानी त्रिपदा पार्श्वमानी तस्याक्ष्णाया रज्जुर्दशकरणीति · एवं च क्षेत्रफलेन दशपद्या भवति दशपद्येव दशपदेत्युच्यते पद्यापदयोः पर्यायत्वस्य दृष्टत्वात् द्वादशाङ्गुलं पदम् । केचिच्च दशपद्यामिति पुरुषप्रमाणां शतपदक्षेत्रफलामाहुः कुतः तां वै युगमात्रीं वा सर्वतः करोतीत्यतः सर्वत इत्यनुवर्तमाने यजमानस्य वा दश-दश पदानीति (३. ५. १. ३४) श्रुतेः अतश्च सर्वतः सर्वासु दिक्षु दश-दश पदानीत्यर्थो भवति परिशिष्टकारवचनस्य तु शाखान्तरप्रालम्बवचनं मूलं भविष्यति · हरिस्वामिनस्त्विमां श्रुतिं पदं तिर्यङ्मानीत्यादिपरिशिष्टकारवचनानुरोधेनैव व्याख्यातवन्तः तथा हि युगप्रमाणां चतुर्ष्वपि पार्श्वेषु करोति अथवा यजमानस्य दश-दश पदानि सर्वतः करोति कथम् पदं तिर्यङ्मानी त्रिपदा पार्श्वमानी यस्य क्षेत्रस्य तस्य याक्ष्णाया तया यन्मीयते रज्ज्वा तद्दशपदं भवति तानि च प्राच्यां पिण्ड्यमानानि दश भवन्ति दक्षिणातोऽपि प्रत्यगुदक्चेत्येवं यजमानस्य दश-दश पदानि सम्पाद्यानि एकशतविधेऽप्येवमेवाग्निवेदिमानं करिष्यति सा यावत्येषा सप्तविधस्य वेदिस्तावतीं चतुर्दश कृत्व एकशतविधस्य वेदिं विमिमीतऽइति (१०. २. ३. ७) अथाग्नेर्विधा अष्टाविंशतिः प्राञ्चः पुरुषा अष्टाविंशतिस्तिर्यञ्च इति (१०. २. ३. ११) चेति ॥ उत्तरवेदिः सधर्मिका सोमे समाम्नाता[१] · उत्तरवेदिशब्दश्च संस्कारवाची अतोऽत्र नामधेयेन ते सर्वऽउत्तरवेदिसंस्कारा इह प्राप्यन्ते · तत्र

१) See ३. ५. १. १२. ff.

यावन्त्युत्तरवेदिप्रमाणानि सोमे श्रुतानि तान्यपि सर्वाण्यत्र प्राप्नुवन्ति न च तानि सर्वाण्यपीष्यन्ते · अत आह ·

सोमे वोत्तरे व्यपस्फुरणश्रुतेः ॥ ३४ ॥ उत्तरे अन्तिमे द्वे सोमऽएव भवतो नान्यत्र · यतश्चातुर्मास्येषु वेद्युत्तरवेद्योर्व्यपस्फुरणं[१] श्रूयते यदि युगमात्रीं दशपदीं वोत्तरवेदिं कुर्याद्वेदिश्चोत्तरवेदिश्च व्यपस्फुरेयातामिति · अत उत्तरयोः प्रमाणयोरिह प्रतिषिद्धत्वात्परिशिष्टानि त्रीणि प्रमाणानीह भवन्ति ।

असम्भवाच्च ॥ ३५ ॥ उत्तरवेदिं निवपत्युत्तरस्यामित्युत्तरवेद्याधारत्वेन वेदिः श्रुता (५.३.११) न च महाप्रमाणाया अल्पप्रमाणा वेदिराधारत्वेन सम्भवति ।

मध्ये नाभिं करोति प्रादेशसमां चतुःस्रक्तिम् ॥ ३६ ॥ उत्तरवेदिमध्ये · प्रादेशप्रमाणां चतुःकोणाम् · अथास्या मध्ये प्रादेशमात्रीं गोपदमात्रीमश्वशफमात्रीं वोत्तरनाभिं चतुःस्रक्तिं कृत्वेत्यापस्तम्बः · काठके परिमण्डलां वेति ।

प्रोक्षत्युत्तरवेदिं सिकताश्च प्रकिरति सिंहीरसीति (५.१०) प्रतिमन्त्रम् ॥ ३७ ॥ अद्भिः प्रोक्षति शुन्धस्वेति मन्त्रेण सिकताः प्रकिरति शुम्भस्वेति मन्त्रेण · उत्तरवेदौ प्रकिरति उपरि क्षिपति ॥ ॥ तृतीया कण्डिका ॥ ३ ॥

अथ पद्धतिः ॥

अथ वरुणप्रघासा लिख्यन्ते · ते च फाल्गुन्यां प्रारम्भपक्षे आषाढ्याम् चैत्र्यारम्भपक्षे श्रावण्याम् वैशाख्यामारम्भे भाद्रपद्याम् । तत्र पूर्वेद्युः पौर्णमास्यां वैश्वदेवपर्वणि परिहितान्हतवस्त्राणि प्रक्षाल्य शोषयित्वा पत्नीयजमानौ परिदधाते । तत्र ऋत्विग्वरणम् ॰गोत्र॰शर्मन्निष्टिकेन धेनुदक्षिणेन वरुणप्रघासपर्वणाहं यक्ष्यऽइति अश्वदक्षिणेनेति वा षड्वदक्षिणेनेति वा । ततोऽध्वर्युः पञ्चभूसंस्कारपूर्वकं समारोपार्थमाहवनीयमुद्धृत्यारणी गृहीत्वायं तऽइति मन्त्रेण गार्हपत्ये प्रतपति ततो द्विस्तूष्णीम् सकृत्सकृन्मन्त्रेण द्विर्द्विस्तूष्णीमिति शाङ्खायनसूत्रात् (२.१७.२) · एवमाहवनीयेऽरणी प्रतप्योद्वसाय प्राचीनप्रवणे वितानं साधयित्वा गार्हपत्यखरे संस्कारः मन्थनम् स्थापनम् · ततो भूसंस्कारपूर्व-

१) व्यपस्फुरणं स्पर्धोच्यते Ss.

कमाहवनीयदक्षिणाग्न्योरुद्धरणम् ऐष्टिकवरुणप्रघासार्थमिति संकल्प्य · ततो वरुणप्रघासार्थमेव सर्वेष्वग्न्यन्वाधानं मन्त्रेण · तत उभयोः समन्त्रकः शाखाच्छेदः अनुमार्जनम् अग्नीनन्वाधाय पृथक्शाखेऽआहरत इत्यापस्तम्बवचनात् · अत्र वा व्रतग्रहणम् · चतुरासनम् · ब्रह्मवरणम् धेनुदक्षिणेनैष्टिकेन वरुणप्रघासपर्वणाहं यक्ष्ये तत्र भूपतऽइत्यादि · ब्रह्मणः समन्त्रकमुपवेशनम् · अत्र वा व्रतग्रहणम् । ततः करम्भपात्रकरणम् मेषमेषीकरणं च · तत्र मेषकरणमध्वर्योः समन्त्रकम् प्रतिप्रस्थातुः करम्भपात्रकरणं तूष्णीम् मन्त्रेण मेषीकरणं च · तत्र सर्वार्थव्रपक्षसंयवनार्थव्रपक्षयोरध्वर्योरेव प्रणीताप्रणयनम् नादृष्टार्थव्रपक्षे · दक्षिणाग्नेरुत्तरतो विप्रकृष्टमध्वर्योः पात्रासादनम् शूर्पाग्निहोत्रहवणी स्फ्यकर्परम् शम्याकृष्णाजिनम् उलूखलमुसलम् दृषदुपलम् पात्रीधान्यम् मेष्यर्था यवा एव पवित्रे पवित्रच्छेदनानि च धृष्टिः संयवनार्थं दधि ऊर्णाश्च · व्रहपक्षे उदकतृणं[1] शम्या च सव्यःपक्षे त्वनयोः स्व एवासादनप्रोक्षणे · प्रतिप्रस्थाताप्यासादितपात्राणां दक्षिणतो दक्षिणाग्नेरुत्तरत एवैतान्येव पात्राण्यासादयति विशेषस्तु महत्कर्परम् मेषीकरम्भपात्रनिष्पत्तिपर्याप्ता यवाः व्रहपक्षे उदकतृणम्[2] · उभयोः स्फ्योपहितपात्रीकरणम् । उभयोः शूर्पाग्निहोत्रहवण्यादानादि सर्वं समन्त्रकम् · प्रतिप्रस्थातुर्यदसाधारणं करम्भपात्रसम्बन्धि कर्म ग्रहणप्रोक्षणविभज्यालम्भप्राणादानासादनालम्भादिकं तत्सर्वं तूष्णीम् यच्च साधारणं मेष्या सह शूर्पाग्निहोत्रहवण्यादानप्रतपनपात्र्यादिसंस्कारकण्डनपेषणसंयवनादिकं तन्मन्त्रेणैव । तत्र प्रथमं प्रतिप्रस्थाता तूष्णीं करम्भपात्रार्थान्यवान्गृह्णाति यजमानस्य यावत्यपत्यानि पुत्रपुत्रीपौत्रप्रपौत्रादीनि तावत्संख्यान्येकाधिकानि करम्भपात्राणि भवन्ति · प्रत्येकं तूष्णीं चतुर्मुष्टिग्रहणम् प्रतिग्रहणं च शूर्पे निवापः · द्विप्रजाप्रजैकप्रजानां चत्वारि भवन्ति · ततोऽध्वर्युर्मेषार्थं यवान्गृह्णाति वरुणाय जुष्टमिति प्रतिप्रस्थाता मेष्यर्थान्यवान्गृह्णाति मरुद्भ्यो जुष्टमिति · गार्हपत्यस्य पश्चादेवोभयोर्ग्रहणम् पृथिव्यास्त्वेति सादनं तु दक्षिणाग्नेः पश्चात् तस्यात्र श्रपणत्वात्[3] · ततः पवित्रच्छेदनाद्युभयोः · प्रोक्षणीसंस्कारः · अध्वर्योरेव ब्रह्मन्हविषी

---

1) उदकतृणं १. उदकृतृणं B. 2) Thus (उदकृतृणं) १. B. 3) ? श्रवणात् १.

प्रोक्षिष्याव इति प्रैषः ओ३म् प्रोक्षतं यज्ञं देवता वर्धयतं युवां नाकस्य पृष्ठे यज्ञं यजमानं च धत्तम् ओ३म् प्रोक्षतमित्यूहः[1] हरिस्वामिमते वरुणप्रघासेषु क्वचिद्प्यूहो न भवति · वरुणाय त्वा जुष्टमित्यध्वर्योर्हविःप्रोक्षणम् · प्रतिप्रस्थाता तूष्णीं करम्भपात्रार्थान्यवान्प्रत्येकं ग्रहणसंख्यया प्रोक्ष्य मेष्यर्थान्प्रोक्षति मरुद्भ्यस्त्वा जुष्टमिति मन्त्रेण · उभयोः पात्रप्रोक्षणम् असंचरे निधानं च । कृष्णाजिनादानाद्युभयोः · नात्र कुक्कुटाहननम् अध्वर्युणाहूतैव पत्नी क्रमेणोभयत्र कण्डनं करोति अग्नीद्वा · शूर्पादानादि तुषनिरसनान्तमुभयोः फलीकरणं न भवत्येव · स्वयमेवोभयोर्दक्षिणाग्नौ कर्पराधिश्रयणं मन्त्रेण तत्र नाङ्गाराणां प्राकूरणम् स्वस्थानस्थेष्वेवाङ्गारेषु ध्रुवमसीति (१. १७) कर्परोपधानम् सव्याशून्ये ऽङ्गारनिधानम् अभ्यूहनाभावः · घर्मा स्थ विश्वायुष इति (१. २२) मन्त्रेणोभयोर्यवतण्डुलानामधिश्रयणम् · गार्हपत्यादङ्गारमादाय यथास्वमुभयोर्मन्त्रेण पर्यग्निकरणम् · अङ्गारस्य गार्हपत्ये प्रतिप्रक्षेपः · देवो वः सविता श्रपयतु वर्षिष्ठे ऽधि नाक ऽइत्युभयोः (१. २२) कर्परस्याधः श्रपणप्रेरणम् · ईषत्तप्तान्कृत्वा मा भेष्ट मा संविग्ध्वमित्युभयोरालम्भः (१. २३) · उद्वासनम् · पात्र्यामोप्याभिमन्त्रणादि कृष्णाजिनादानादि संयवनान्तमुभयोः । अध्वर्योर्मेषकरणम् मेषः सशृङ्ग आण्डयुग्मपुंलिङ्गयुक्तः · प्रतिप्रस्थातुर्यावद्गृहीतं करम्भपात्रकरणम् पत्न्या वा तानि चाङ्गुष्ठपर्वमात्राणि एकद्वीनि भाजनाकृतीनि कार्याणि उत्तानानि च निधेयानि पात्रत्वात् · ततो मेषीकरणम् मेषी अशृङ्गा द्विस्तनी पुच्छस्याधः स्त्रीप्रजननयुक्ता च कार्या · उभावप्यनैडकीरूर्णाः प्रक्षाल्य यथास्वं मेषमेष्योः शरीरे ऽआश्लेषयतः अनैडकीनामूर्णानामभावे दर्भमञ्जरीतूलानि प्रक्षाल्याश्लेषयतः · करम्भपात्राणां प्रत्येकं तूष्णीमालम्भः इदं वरुणायेति मेषस्य इदं मरुतामिति मेष्याः · पात्र्यङ्गुलिप्रक्षालनस्थापनम् · अग्रहपक्षे ततः शाखाछेद उभयोः प्रगुणीकरणं च शाखापरिवासनमुभयोः उपवेषकरणमध्वर्योरेव पवित्रबन्धनमुभयोः । तत आहवनीयस्य पुरस्ताद्वेदिमानमुभयोः · तत्र ब्रह्मयजमानयोर्दक्षिणवेदिं दक्षिणेनोपवेशनम् · तत्राध्वर्योरुत्तरा वेदिः प्रतिप्रस्थातुर्दक्षिणा · तत्रोत्तरा वेदिश्चतुररत्निः

---

[1] See २. २. ८ and १०.

पश्चात्तिर्यक् षडरत्निः सप्तारत्निर्वा प्राची दीर्घा त्र्यरत्निः पुरस्तात्तिर्यक् तेषां मध्ये शङ्कुः एतदेकं प्रमाणम् · अथवा चतुःशतमङ्गुलानि पश्चात्तिर्यक् अष्टाशीतिशतमङ्गुलानि प्राची दीर्घा षडशीत्यङ्गुलानि पुरस्तात्तिर्यक् अत्रारत्नेश्चतुर्विंशो भागोऽङ्गुलम् अत्रापि पुरस्तात्प्रमाणमध्ये शङ्कुः एतद्वेदेर्द्वितीयं प्रमाणम् · अथवोक्तमानद्वयादतिशयेनाधिकप्रमाणा सर्वतो वेदिर्भवति अयं तृतीयः प्रकारः प्रतिप्रस्थातुर्दर्शपूर्णमासवद्वेदेः प्रमाणम् · तत्र प्राचीनप्रवणे गार्हपत्याहवनीयदक्षिणाग्नीनां खरान्पूर्ववत्प्रसाध्याहवनीयस्य पुरस्तात्प्रक्रमत्रयमधिकं वा परित्यज्य ततः पुरस्तादध्वर्योरुत्तरा वेदिः कार्या · तस्याः साधनश्लोकः षडरत्निप्राचीपक्षे नवारत्निर्मिता रज्जुर्लक्षिता षट्स्वतः परम् अर्धेऽर्धे त्रिषु पाशः स्यात्पशुवेदेः प्रसाधनमिति साधयित्वा प्रकृतिवत्संग्रहौ साधनीयौ · तस्यां वेदावाहवनीयखरस्थाने समचतुरश्रा द्वात्रिंशदङ्गुलोत्तरवेदिः साधनीया यावत्प्रमाणेत्याद्युपायेन[1] · वेदिसाधने प्रकारान्तरं च द्व्यरत्नौ लक्षणं कुर्यादर्धे सार्धत्रये तथा अर्धेऽरत्नौ ततः सार्धे वेदिः सा पाशुकी म[ति]ति अयं पाशाविपर्यासेन साधनोपायः · ततस्तस्या वेदेः प्रादेशमात्रमन्तरालं पृथमात्रं[2] वा शाखान्तराद्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं रथवर्त्मसीतावर्त्माद्यन्तरालं परित्यज्य प्रतिप्रस्थातुरैष्टिकी वेदिः साधनीया तन्मध्येऽरत्निमात्रमाहवनीयखरं कुर्यात् · अत्र पूर्वमध्वर्युः कर्म करोति तमनु प्रतिप्रस्थाता समन्त्रकमेव सर्वम् । उभयोर्वेदिमानानन्तरमग्नीदुभयोर्वेद्योः परिसमूहनं करोति · उत्करकरणमुत्तरस्यामेव · उभयोः सतृणावघ्नादानादि सतृणपुरीषस्योत्करे प्रक्षेपान्तम् · प्रतिप्रस्थातुरुत्तरामध्वर्युवेदिमपरेण उत्करे पुरीषप्रक्षेपार्थः संचरो नान्यत्र · ततोऽध्वर्युरेवाह ब्रह्मन्पूर्वौ परिग्रहौ परिग्रहीष्याव इति ओं३ बृहस्पती परिगृह्णीतं वेदी सुगा वो देवाः सदनानि सन्त्वनयोर्बर्हिषी प्रथताꣳ साधन्तरक्षित्ते पृथिव्यौ देव्यौ-देव्यौ स्तां देवता वर्धयतं युवां नाकस्य पृष्ठे [यजमानौ]ऽस्तु सप्त॰ यजमानं च धत्तम् ओं३ परिगृह्णीतमित्यूहः[3] हरिस्वामिमते वरुणप्रघासेषूहाभावः · तत उभयोः पूर्वपरिग्रहः · उभयोर्वेद्योस्त्रिरुच्छोखनम्[4] · ततोऽध्वर्युरेवाह हर-

1) See pag. ४५५,२५. 2) ? पृथुमा॰ १. 3) See २. २. १२ and ८. 4) Thus B. र्वेद्या त्रि॰ १.

त्रिस्त्रिरिति · अग्नीदुभयत्र लेखाहरणसंमर्शनानि करोति पूर्वमध्वर्योर्हृत्वा संमृश्य तत इतरस्य हृत्वा संमृशति · अग्नीध उत्तरवेदिं पूर्वेण वेद्योरन्तरा च प्रतिप्रस्थातृवेदौ गमनागमनाय संचरः । ततोऽध्वर्युरेव शम्यां स्फ्यं चादायोत्करात्पूर्वदेशे गमनागमनायान्तराले मार्गं मुक्त्वा वेदिसंलग्नं चात्वालं मिमीते वेदेरुत्तरतः प्रक्रममात्रे प्रक्रमत्रये वाऽपरिमिते वेति शाखान्तरसूत्रेषु · तत्र प्रथमं पश्चादुदगग्रां शम्यां दक्षिणेन हस्तेन निधाय तदन्तरतः तप्तायनीति (५. १) स्फ्येनोदक्संस्थां लेखां परिलिखेत् · ततः शम्यामात्रमन्तरालं परित्यज्य पुरस्तादुदगग्रां शम्यां वेदिसंलग्नां निधाय वित्तायनीत्यन्तरतः (५. १) स्फ्येन परिलिखति तत[ः दक्षिण]पार्श्वे वेद्यन्तसंलग्नां प्रागग्रां शम्यां निधाय तदन्तरतोऽवतान्मा नाथितादिति (५. १) स्फ्येन परिलिखति · तत उत्तरपार्श्वे प्रागग्रां शम्यां निधाय तदन्तरतोऽवतान्मा व्यथितादिति (५. १) मन्त्रेण स्फ्येन प्राक्संस्थं परिलिखति · एवं शम्याप्रमाणं चतुष्कोणं चात्वालं परिलिख्य यजमानेऽन्वारब्धे विदेदग्निरिति (५. १) मन्त्रेण स्फ्येन चात्वाले प्रहारं कुर्यात् · प्रहरणानन्तरमेव विसर्गः · ततोऽध्वर्युर्हस्तेन स्फ्येन च पुरीषमादायाग्नेऽङ्गिर इत्युत्तरवेदिं (५. १) प्रति हरति हरणे मन्त्रः · ततो योऽस्यामिति (५. १) मन्त्रेण[१] शङ्कुसंनिधौ वेदेः पूर्वार्धे पुरीषं निवपति · अग्नीत्तन्निहितं पुरीषमुत्करवत्पाणिद्वयेन तूष्णीमभिनिदधाति हस्ताभ्यामधः पीडयतीत्यर्थः · ततः पुनः प्रत्यागत्य यजमानेऽन्वारब्धे विदेदग्निरिति चात्वाले प्रहृत्य हस्तेन च स्फ्येन च पुरीषमादायाग्नेऽङ्गिर इति हृत्वा यो द्वितीयस्यामिति वेदिपूर्वार्धे निवपति अग्नीदुत्करवत्तूष्णीमभिन्यस्यति · पुनरप्येवं प्रहरणं हरणं च कृत्वा यस्तृतीयस्यामिति निवपति अग्नीच्चाभिन्यस्यति । ततोऽभ्रिं गृहीत्वाध्वर्युश्चात्वालं खनति · ततश्चात्वालादुत्तरवेदिनिर्माणपर्याप्तं पुरीषं पिटकादौ गृहीत्वानु त्वेत्युत्तरवेदिं (५. १) प्रति हरति · ततो निवापमकृत्वैव तेन पुरीषेणोत्तरवेदिं शम्याप्रमाणां व्यूहति सिंहीरसीति मन्त्रेण कल्पस्वेत्यन्तेन (५. १०) सर्वतः पुरीषं प्रेरयित्वा निष्पादयतीत्यर्थः द्वात्रिंशदङ्गुला शम्या तन्मात्रीम् · वेदेस्तृतीयांशं खनित्रफलेन निष्काश्य समचतुरश्रीकृतं यावत्प्रमाणं

---

१) मंत्रे पूर्वार्द्धे १.

भवति तावतीं वा उक्तप्रमाणादधिकतरप्रमाणां वा · तत उत्तरवेदिमध्ये प्रादेशमात्रीं समचतुरस्रां नाभिं करोति · उत्तरवेद्या नाभिश्च पूर्वत आरभ्य प्रदक्षिणं शम्यया प्रादेशेन चतुर्ष्वपि पार्श्वेषु मानं कार्यम् · ततो लौकिकोदकेन सिञ्च्यसीति (५.१०) मन्त्रेण शुन्धस्वेत्यन्तेनोत्तरवेदिं प्रोक्षति · ततः सिकता उत्तरवेदौ प्रकिरति सिञ्च्यसीति मन्त्रेण (५.१०) शुम्भस्वेत्यन्तेन · तत उदुम्बरशाखाभिः प्लक्षशाखाभिर्वा दर्भैर्वा उत्तरवेदिं सकलां छादयेत् ॥ ॥३॥

इति पञ्चमस्य तृतीया कण्डिका ॥ ॥

छन्ना वसति ॥१॥ सा उत्तरवेदिर्दर्भतृणकटादिना यज्ञियेन छन्ना सती रात्रौ वसति । विकृतीनां सद्यस्कालत्वेऽपीह वचनाद्व्यहकालता भवति · तथा च काठके श्वोऽग्नी प्रणयत इति · एवमन्येष्वपि सूत्रेषु · आपस्तम्बसूत्रे तु विशेषः सद्यस्काला वा वरुणप्रघासा इति विकल्पेन सद्यस्त्वस्याप्युक्तत्वात् · उदुम्बरशाखाभिः प्लक्षशाखाभिर्वा प्रच्छाद्य वसति [यद्य]सद्यस्कालः[1] पशुर्भवतीत्यापस्तम्बः ।

प्रातः पञ्चगृहीतं गृहीत्वाग्नी प्रणयतीध्माभ्यामुपयम्य ॥२॥ श्वो भूते आज्यसंस्कारपूर्वकं जुह्वां पञ्चगृहीतमाज्यं गृहीत्वा अग्नी प्रणयति इध्माभ्याम् उपयम्योपयमनीभिरुपगृह्य संतापपरिहारार्थं क्वचित्पात्रस्थाभिरग्नेरधस्ताद्धारणं कृत्वा । अग्निप्रणयनं च सधर्मकं सोमउपदिष्टम् इध्ममभ्यादधत्युपयमनीरुपकल्पयन्तीत्यादौ (३.५.१.१) · [तत्र तु] एकोऽग्निः प्रणीयते [इह तु वेदिद्वित्वात्] द्वावग्नी [अतश्च इध्मद्वित्वम्] · अपरिमितं प्रणयनीयं त्रियूनमित्युक्तत्वात् (१.३.२.१) एकैक इध्मोऽपरिमितकाष्ठकस्त्रियूनबद्धश्च भवति ताविवंविधाविध्मौ मध्याह्वनीयेऽभ्याधत्तोऽध्वर्युप्रतिप्रस्थातारौ · उपयम्यतउपगृह्यतेऽग्निराभिरित्युपयमन्यः सिकता अभ्युद्धरणार्थे पात्रे संतापपरिहारायोप समीपे कल्पयन्ति स्थापयन्तीति हरिस्वामिनः । आपस्तम्बः उदुम्बरशाखाभिः प्लक्षशाखाभिर्वा प्रच्छाद्य वसति यद्यसद्यस्कालः पशुर्भवति आहवनीये प्रणयनीयमिध्ममादीप्य सिकताभिरुप-

---

[1]) यद्य deest here, but see the schol. at २.

यम्याग्नये प्रणीयमानायानुब्रूहीति सम्प्रेष्य प्रणीयमानायानुब्रूहीति वेति · मानवे च चात्वालादुपयमनीः कुरुते वेदिपुरीषात्प्रतिप्रस्थाताग्नये[1] प्रणीयमानायानुब्रूहीत्यनुवाचयत्यग्निभ्यां वेति · अत उपयमन्यः सिकता वा चात्वालमृत्तिका वा ग्राह्याः उभयीनामपि समूलत्वात् ।

सर्वं वा विभज्य प्राकृतत्वात् ॥ ३ ॥ सर्वं वाहवनीयं द्वेधा विभज्य कर्पराभ्यां प्रणयतः कुतः प्राकृतत्वात् तस्य प्रकृतितः प्राप्तत्वात् · प्रकृतौ हि दर्शपूर्णमासयोरेवमेव प्रणयनं दृष्टम् सोमे च धर्मवदिध्मेन प्रणयनमाम्नातम् न च वरुणप्रघासानां सोमः प्रकृतिः किं तु दर्शपूर्णमासावेव · अतः प्रकृतिवदेव कर्पराभ्यां सर्वमाहवनीयं विभज्य प्रणयनं कर्तव्यम् । अथवा सर्वमाहवनीयं विभज्य द्वेधा कृत्वा द्वयोर्वेद्योः प्रणयनं कर्तव्यम् कुतः अप्राकृतत्वात् अस्य प्रणयनस्यापूर्वत्वात् इत्यर्थः इत्यकारप्रश्लेषेण व्याख्येयम् शकन्ध्वादित्वाच्च (पा॰ ६. १. ९४) पररूपेण सूत्रे निर्देशः · यथाधिकं वा प्रकृत्यनुग्रहादित्यत्र (२२. १. १७) कर्काचार्यैरकारप्रश्लेषेण व्याख्यातम् सर्ववेदसं प्रकृत्य सहस्रेणानुग्रहदर्शनादिति[2] तथात्रापि व्याख्येयमिति । पक्षान्तरमाह ·

प्रणयनञ्च सोमाद्वाच्यत्वात् ॥ ४ ॥ अथवा सोमात् सौमिकधर्मेणात्राग्न्योः प्रणयनं भवेत् न प्राकृतम् · कुतः वाच्यत्वात् एवं ह्येतद्वाच्यं वक्तव्यं विधेयं भवति यदि सौमिकम् तस्याप्राप्तत्वात् · प्राकृतं तु चोदकेन प्राप्नोत्येव न विधेयम् · विधीयते च द्वयोः प्रणयन्तीति (११. ५. १. ८) · तस्माद्यन्न प्राप्नोति तदेवैतत्प्रणयनमिति · सौमिकमेव स्यादिति प्राप्तऽआह ·

प्रकृतेर्वानामत्वात् ॥ ५ ॥ वा पक्षव्यावृत्तौ · प्रकृतेः प्रकृतिवदेव गार्हपत्यादुद्धरणम् न सोमात् न सौमिकम् इध्माभ्यामाहवनीयादिति · कुतः अनामत्वात् नामधेय हि धर्मान्प्रापयति न चेतन्नामधेयम् तिङन्तत्वात् प्रणयन्तीति । ननु प्राकृतं चेदेतत्प्रणयनम् तर्हि तस्य चोदकादेव प्राप्तत्वात् किमिति पुनर्विधानम् द्वयोः प्रणयन्तीति · एवमाशङ्क्याह ·

---

1) वेदिं २. but see at ७. 2) Karka says l. c.: प्रकृत्य. हि सर्ववेदसं सहस्रेणानुग्रहं दर्शयति ·

ग्रहणं गुणार्थमुत्तरवेद्यग्निनिधानात् ॥ ६॥ प्रकृतितः प्राप्तस्यैव प्रणयनस्य [पत्] पुनर्ग्रहणं पुनर्विधानम् एतद्गुणार्थम् · को गुण इति चेत् अस्ति हि गुणः उत्तरवेद्यग्निनिधानात् प्रकृतौ हि आहवनीयखरेऽग्निर्निधीयते इह तूत्तरवेदौ · तेनोत्तरवेदिनिधानार्थमग्नेर्नयनस्य इतरनयनतूपाद्गुणात् द्वयोः प्रणयन्तीति (११.५.२.८) वचनम् द्वयोर्मध्यमयोः पर्वणोः प्रणयन्ति प्रकर्षेण दूरमग्निं नयन्ति उत्तरवेदौ निधानविधानादिति · तस्मात्प्राकृतमेवेदं प्रणयनमिति । सिद्धान्तस्तु ·

आज्यप्रोक्षणीरुद्यम्याग्नी चाह्वाग्निभ्यां प्रह्रियमाणाभ्यामनुब्रूह्येकस्फ्ययानूदेहीति ॥७॥ पञ्चगृहीतमाज्यं प्रोक्षणीश्चोद्यम्य ऊर्धमुत्पाद्य द्वावग्नी चोद्यम्य होतारं प्रेष्यति अग्निभ्यां प्रभ्यामनुब्रूहीति एकस्फ्ययानूदेहीत्येतच्च प्रतिप्रस्थातारं प्रत्याह · आज्यं चात्रेध्माधिश्रयणानन्तरं पूर्णाहुतिवत्संस्कृत्य स्रुचां पञ्चगृहीतं ग्राह्यम् प्रोक्षण्यश्चासंस्कृता आप एव क्वचित्पात्रस्थाः । अथोद्यहन्तीध्ममित्यादिश्रुतौ (३.५.२.२) उद्यच्छन्ति हस्ताभ्यामुत्क्षिपन्ति सामर्थ्यप्राप्तसहायापेक्षं बहुवचनम् तत्राध्वर्युः प्रधानत्वादग्निमुद्यच्छति आज्यप्रोक्षण्यादि सामर्थ्यादन्ये गृह्णीयुः । एकः स्फ्यः साधनमस्याः सेयमेकस्फ्या रेखा तया युक्तस्त्वं पश्चादुदेहि उत्शब्दो यज्ञस्योर्ध्वं भागं प्राचीं दिशं द्योतयति · इत्थम्भूतलक्षण इति (पा° २.३.२१) तृतीया तया युक्तः प्रतिप्रस्थाताग्निमनुगच्छति स्फ्येन भूमौ लेखां कुर्वन्नित्यर्थः । [एवं सिद्धान्तत्वेन] सौमिकं प्रणयनमुपदिशति · सूत्रकारस्याप्ययमेवाभिप्रायः येन सौत्रामण्याम् (१९.२.४) स्फ्यादि करोति दक्षिणस्यां वरुणप्रघासवदित्याह · तत्र हि श्रूयते (१२.९.३.१३) तद्यदेतावग्नी आहवनीयाद्विह्रियेतेऽइति एतच्च तदेवोपपद्यते यदा वरुणप्रघासेष्वपि प्रतिप्रस्थातुराहवनीयात्प्रणयनं भवतीति प्राकृतत्वे चैतन्न स्यादिति तस्मादत्र सधर्मकं सौमिकमेवाग्न्योः प्रणयनमिति सिद्धान्तः · ततश्चात्र सूत्रकारेणोपयमन्युपनिवपनान्तं (२०) तदेवोपनिबद्धम् । तथा चाह शाङ्खायनः (३.१४.८) आहवनीयाद्याग्नी प्रणयन्ति (११) इलायास्त्वेति साद्यमानयोरिध्मयोरिति च प्राकृते हि

सत्याहवनीयादिति इध्मयोरिति [च] वचनं [न] स्यात्[1] · काठके च श्वो भूते ऽग्नी प्रणयते यथा पशुबन्ध ऽइति · मानवे च आहवनीये ऽग्निप्रणयनानि प्रत्याधत्त इति प्रकृत्य चात्वालाडुपयमनीः कुरुते वेदिपुरीषात्प्रतिप्रस्थाताग्नये प्रणीयमानायानुब्रूहीत्यनुवाचयत्यग्निभ्यां वा त्रिरनूक्तायामग्निप्रणयनान्युद्यच्छत इति सधर्मकमेव सौमिकं प्रणयनमुक्तम् · आपस्तम्बसूत्रे विशेषः काले पशुबन्धवद्गार्हपत्यादग्नी प्रणयतो नोद्यतहोमौ जुहुतो ऽन्तरा वेदी प्रतिप्रस्थाता प्रतिपद्यत ऽउत्तरेणोत्तरां वेदिमध्वर्युः पूर्वो ऽध्वर्युरुत्तरवेद्यामग्निं प्रतिष्ठापयति जघन्यः प्रतिप्रस्थाता दक्षिणस्यामिति ।

त्रिरुक्तायां यथावेदि हरणम् ॥ ८ ॥ होत्रा प्रथमायामृचि त्रिरुक्तायां सत्यां स्वस्ववेदिं प्रत्यग्न्योर्हरणं कुरुतः ।

प्रतिप्रस्थाता स्फ्येन लिखत्या वेदिश्रोणेः ॥ ९ ॥ एकस्फ्ययानूद्धेहीत्येवमध्वर्युणा प्रेषितः प्रतिप्रस्थाता स्फ्येन आहवनीयादारभ्य दक्षिणां वेदिश्रोणिं यावल्लिखति लेखां करोति · अत्राह लाट्यायनः (५. १. ४–५) अध्वर्युश्चेद्ब्रूयाद्धस्तेनैकस्फ्ययोपसम्भिन्द्धीति स्फ्येनाहवनीयात्पांसून्समुद्धृत्योत्तरस्या[2] वेदेर्दक्षिणादन्तात्कर्षन्नियादावेदि मध्यादेका वेदिति · तेन वेदिद्वित्वे वरुणप्रघासेषु सौत्रामण्यां च दक्षिणवेदिश्रोणिं यावल्लेखाकरणम् एकवेदिके महाहविःपशुबन्धसोमादौ तु वेदिमध्यस्थापरशङ्कुपर्यन्तमेव · तथा च श्रुतावुक्तम् (३. ५. २. २) एतस्मान्मध्यमाच्छङ्कोर्य एष वेदेर्जघनार्धे भवतीति ।

उत्तरवेदेर्वा[3] ॥ १० ॥

वेद्यन्तरे स्थित्वोदङ्ङुत्तरवेदिं प्रोक्षतीन्द्रघोष इति (५. ११) प्रतिमन्त्रं प्रतिदिशं यथालिङ्गम् ॥ ११ ॥ अध्वर्युः स्वर्थादग्निमन्यस्मै प्रदाय वेद्योरन्तराले [अथवा] उत्तरवेदेर्दक्षिणपार्श्वे वेदिमध्ये उदङ् स्थित्वा उत्तरवेदिं प्रसिञ्चति मन्त्रलिङ्गक्रमेण पुरस्तादेवाग्र ऽइन्द्रघोष इति पश्चात्प्रचेता इति दक्षिणतो मनोजवा इति उत्तरतो विश्वकर्मेति ।

दक्षिणा ऽसंसक्तं बर्हिर्वेदि शेषं निषिञ्चतीदमहं तप्तं वारिति (५. ११) ॥ १२ ॥

---

1) ? हि स आहव॰रिति वचनस्यात्. २. 2) ॰यात्पांसूनुपहत्योत्त॰ Lāty. 3) श्रोत्त॰ ?.

ततोऽध्वर्युः प्रोक्षणीशेषमुत्तरवेदेर्दक्षिणांससंलग्नमेव वेदेर्बहिःप्रदेशऽएव निनयति। यदा तु चयने अग्न्यात्मन्युत्तरवेदिः संस्क्रियते तदा बहिर्वेद्येवोत्तरवेदेर्दक्षिणांसस्पार्शत्वेन निनयनम् ।

अमुमित्यभिचरन् ॥ १३ ॥ अमुमभि निःसृजामीति श्रुतिपठितेन (३.५.२.८) मन्त्रेणाभिचारं कुर्वन् बहिर्वेदि शेषं निषिञ्चति · कर्मबलेन परस्य पीडनमभिचारः।

नाभ्याः श्रोण्यंसेषु पञ्चगृहीतं जुहोत्यक्ष्णया दक्षिणेऽंसे श्रोण्यां श्रोण्यामंसे मध्ये च हिरण्यं पश्यन्त्सिंहासीति (५.१२) प्रतिमन्त्रम् ॥ १४ ॥ ततोऽध्वर्युरुत्तरवेदेरुत्तरत उपविश्य नाभ्याः श्रोण्यंसेषु द्वयोः श्रोण्योर्द्वयोरंसयोश्चाक्ष्णया कौटिल्येन तत्पञ्चगृहीतमाज्यं जुह्वां गृहीत्वा जुहोति · तत्र क्रममाह नाभेर्दक्षिणेऽंसे उत्तरश्रोण्याम् दक्षिणश्रोण्याम् उत्तरेऽंसे नाभिमध्ये · सुवर्णं विलोकयन्नध्वर्युर्जुहोति · हिरण्यमन्तर्धाय पञ्चगृहीतेन नाभिं व्याघारयतीति मानवे ।

भूतेभ्यस्त्वेति (५.१२) स्रुचमुद्यच्छति ॥ १५ ॥ होमार्थं नीचैः कृतामुद्गृह्णाति ऊर्ध्वां करोति ।

नाभिं पैतुदारवैः परिदधाति पूर्ववद्ध्रुवोऽसीति (५.१३) प्रतिमन्त्रम् ॥ १६ ॥ पैतुदारवैः देवदारुवृक्षजैः प्रादेशमात्रैः परिधिभिः · पूर्ववदिति मध्यमदक्षिणोत्तरैः (२.८.१) · तथा च काठके त्रीन्परिधीन्पैतुदारवान्प्रादेशमात्रांस्तैरुत्त[रवेदि]नाभिं परिदध्यादिति ।

अग्नेः पुरीषमिति (५.१३) निवपति गुल्गुलुसुगन्धितेजनवृष्णोस्तुकाश्चोपरि शीर्षण्या अभावेऽन्याः ॥ १७ ॥ निदधाति । गुल्गुलुः प्रसिद्धः : सुगन्धितेजनं रोहीतः । वृष्णो(ः)स्तुकाः शिरोरोमाणि · ताश्च शीर्षण्याः शीर्ष्णि भवाः शृङ्गयोरन्तराले भवानि मेषरोमाणि · अन्या अन्यस्मिन्मेषस्य शरीरप्रदेशे जाताः ।

तेष्वग्निं निदधाति ॥ १८ ॥ तेषु सम्भारेषु ।

उद्धतावोक्षिते दक्षिणम् ॥ १९ ॥ उद्धितेऽरत्निमात्रे चतुरस्रे खरे दक्षिणमग्निं निदधाति प्रतिप्रस्थाता · स्मार्ताः पञ्च भूसंस्काराः प्राप्नुवन्त्येव तेषामदृष्टार्थत्वात् · उद्धतमुल्लेखनम् अवोक्षितमभ्युक्षणम् एतत्संस्कारद्वयमत्र विधीयते।

केचित्स्मार्तानामुपलक्षणार्थमुद्धतावोक्षितग्रहणमिच्छन्ति · तत्रैकेनोपलक्षणसिद्धेः इतरवैयर्थ्यं स्यात् · अतोऽधिकविधानमेवेदमिति अग्निहोत्रदर्शपूर्णमासादावुपलक्षणं विनापि स्मार्तानां संस्काराणां सर्वैरादृतत्वाच्च ।

उपयमनीरुपनिवपति ॥२०॥　अग्नेरुपयमनऽउपयुक्ता मृत्तिकाः सिकता वा उप समीपे अग्नेर्नीचैः प्रक्षिपति · प्रतिपत्तिरियम् चरितार्थत्वात् । एतदिध्मादानाद्युपयमन्युपनिवपनान्तं सर्वं सौमिकं धर्मजातमत्र भवत्येव सर्वेषु शाखान्तरसूत्रेष्वत्रैव तस्योपदिष्टत्वात् ।

प्रणीताद्यतः ॥२१॥　प्रणीताप्रणयनादि । अत्र कर्कमते चोदकपरिप्राप्त्या ततः पूर्वमेवाग्न्यन्वाधानशाखाच्छेदनादि षड्गोपाकरणान्तमुभाभ्यां कर्तव्यम् · तत्र शाखाच्छेदनानुमार्जनशाखापरिवासनमुभयोः · उपवेषकरणमध्वर्योरेव न प्रतिप्रस्थातुः · ततः शाखायां पवित्रबन्धनमुभयोः · वत्सापाकरणमुभयोः वरुणाय भागमित्यध्वर्योः मरुद्भ्यो भागमिति प्रतिप्रस्थातुः · शाखोपगूहनं द्वयोः · अत्र प्रणीतादीत्युपदेशाद्ब्रह्मवरणं वैकल्पिकव्रतग्रहणान्तं पूर्वं कर्तव्यमिति प्रतीयते ।

व्रतोपायनं वाकृतं चेत् ॥२२॥　पूर्वदिने व्रत्याशनानन्तरं वा ब्रह्मवरणोत्तरकालं वा यदि व्रतोपायनमकृतम् कृतं चेन्न भवति तदा अतोऽग्निनिधानानन्तरम् न कृत्वा प्रणीताप्रणयनादि तत्कर्तव्यम् । अत्राह पितृभूतिः व्रतोपायनं पूर्वम् ततः प्रणीतादि यद्येष पक्षोऽङ्गीकृतः प्राक्प्रणीताप्रणयनाद्व्रतोपायनमिति प्राप्तस्यैव स्मरणार्थमिदमिति तदेतन्नोपपद्यते वैकल्पिकानामादाववधारितत्वात् · यदा च ब्रह्मवरणोत्तरकालता व्रतोपायनस्य निर्धारिता तदा तदुत्तरकालीनानां पदार्थानां व्रतोपायनमङ्गम् तेषु च वेदिकरणादिष्वपकृष्टेषु तदङ्गस्यापकर्षो भवत्येव ततस्तत्रैव व्रतोपायनं भवति नात्रेति · तस्मादिदमपूर्वं कालान्तरविधानं व्रतोपायनस्य वैकल्पिकम् । पूर्वेद्युरुत्तरवेदिच्छादनान्तकरणपक्षे शाखाच्छेदादि वत्सापाकरणान्तमपि पूर्वेद्युरेव कर्तव्यम् · तत्र वत्सापाकरणं रात्रौ पयोविकारत्वात्पयस्ययोः · तथा चाहापस्तम्बः अग्नीनन्वाधाय पृथक्शाखेऽआहरतस्तथेध्माबर्हिषी मारुत्याः प्रतिप्रस्थाता वत्सानपाकरोति

वारुण्या अध्वर्युः शमीमय्यो हिरण्मय्यो[1] वा स्रुचो भवन्ति यथादेवतं सायंदोहौ दोहयतः सद्यस्काला वा वरुणप्रघासा एवं सति लौकिकेन दध्नामिक्षाकर्म स्यात् प्रातर्दोहविकारमेकऽआमिक्षापयसमाङ्गरिति[2]।

नित्येभ्योऽधिकान्यैन्द्राग्नः पयस्ये वारुणी मारुती काय एककपालः ॥२३॥ अत्र प्रणीताप्रणयनानन्तरमुपयुक्तानि पात्राणि आसाद्य स्फ्योपहितपात्रीकरणादि क्रियते । तत्र हवींष्याह[3] · नित्येभ्यः आग्नेयादिभ्यः पञ्चभ्योऽधिकानि एतानि हवींष्यत्र भवन्ति · तत्र षष्ठं हविरैन्द्राग्नः द्वादशकपालः पुरोडाशो भवति । वारुणी अध्वर्योः मारुती प्रतिप्रस्थातुः । काय एककपालः उपांशु सावित्रश्च नित्येषूपांशु · कशब्दोऽकारान्तः प्रजापतिदेवताया वाचकः कस्येदिति (पा° ४.२.२५) रूपम् · अतश्चात्र सम्प्रैषादौ कायानुब्रूहि इदं कायेति चतुर्थ्यन्तं रूपं भवति न तु कस्माऽइति महाभाष्ये पदमञ्जर्यां च दर्शितम् · तथा चापस्तम्बः कायानुब्रूहि कं यजेत्येककपाले सम्प्रैषाविति । एवमष्टौ हवींष्यध्वर्योः एकं प्रतिप्रस्थातुः अतश्च प्रतिप्रस्थातुरपि तदुपयुक्तपात्रासादनादि सर्वं भवति । अत्राहापस्तम्बः निर्वपणकालऽआग्नेयमष्टाकपालमिति नवोत्तराणि हवीꣳषि निर्वपति सर्वे यावा भवन्त्यपि वा पौष्णाः करम्भपात्राणि मेषाविति यवानां व्रीहीणामितराणीति ।

नानाज्यनिर्वपणम् ॥२४॥ आज्यं नाना पृथग्भवति । देशभेदात्तन्त्रभेदे सत्यपि गार्हपत्यस्य साधारण्येनाज्यस्य पत्न्यवेक्षणं तन्त्रेण भविष्यतीति शङ्कानिवृत्त्यर्थमिदं सूत्रम् ।

दक्षिणं प्रतिप्रस्थातुः ॥२५॥ अध्वर्योराज्याद्दक्षिणमाज्यं प्रतिप्रस्थातुर्भवति · अवरोक्तमुत्तरमित्यस्यापवादो (१.१०.५) वचनात् · अतश्च मारुत्या अधिश्रयणादि वारुण्या दक्षिणत एव कर्तव्यम् । आज्यनिर्वापानन्तरं यथास्वं दोहौ · प्रथममध्वर्युः ततः प्रतिप्रस्थाता · तत्रोपसृष्टां प्रब्रूतात्रां धुक्ष्वेत्यादीन्प्रैषान्स्वयमेव कुर्यात् भिन्नकालत्वेन प्रसङ्गसिद्धेरभावात् · तथा च काठके अध्वर्युरेव सम्प्रै-

---

१) ? हिरण्मय्यो २. २) ? °पयःसमा° २. ३) See २.५.२.७–१३.

## NEW ABBREVIATIONS.

**I. For the text of the sûtra's and for the vyâkhyâ.**

२ my copy of E. I. H. 747 (adhy. II). 749 (adhy. III. IV). 750 (adhy. V). — २ sec. hand.

३ Chambers 790s (text of adhy. II. III). ३ sec. hand.

४ or Ss. Chambers 639, Sa*m*xiptasâra.

५ or Mah. E. I. H. 2714 Mahâdeva's commentary on adhy. II–IV.

Mahîdh. Mahîdhara's vedadîpa.

Karka, Codex Mill. in the Bodleyan library, adhyâya IV.

M. Codex Mill. in the Bodleyan library (text of the whole sûtra). To Dr. Aufrecht's kindness I am indebted for a passim comparison of this excellent copy.

**II. For the paddhati (Adhyâya V).**

१ Chambers $391^a$, 1. — १ sec. hand.

B. Chambers 737.

The passages or words given in crochets [ ] are my own addition; for a part they consist directly from what is given in Ss.: others have been composed out of fragmentary notes taken from the vyâkhyâ (२), where I had not copied the whole text of it: finally there are some, especially in the paddhati, supplied by mere conjecture, in order to render the connexion of the sentences more clear and intelligible or to make good for direct defects of the copies.

Berlin, April 1857.

## CORRECTIONS AND ADDITIONS.

Read: ८. ६ पितुः सत्यप्यनुज्ञाने. — १३. ११ तथा (१. १५). — २५ अभव इति (ऋक्संहि° १.११०.४). — १४. १ यथेति (ऋक्संहि° ४. ६४. ५). — ५२. २१ चोक्तम् (२. ६. ५) अपरिमितां वेति. — ५९. २० °र्विशेषः (कर्मप्रदीप° २. ५. १६). — २४ हविर्धारणी. — ६२. १२ तदुक्तम् (कर्मप्रदीप° १. ७. ६). — ९०. २४ °धानमगत्या. — १६९. १ परिभाषाः. — १७९. ११ °अह्नीष्याव. — १८२. १२ [अब्दधीनि]. — १८३. १७ कात्यायनः (कर्मप्रदीप° १. ८. १५). — १८६. १० and ११ प्राङीह्न°. — १८८. ३ हविर्ग्रहणयाम°. — १९०. १७ उदक्तृणा°. — २०५. ४ मा भैष्ट. — २५२. ६ माहेन्द्रं. — २८१. २३ एतदर्थकर्म. — २८२. १८ °च्छुप्रादौ. — २१ °वर्तते. — २८४. १७ पूर्वमुपदिष्टः. — ३३६. ८ (१२. ४. १५). —



षान्मारुतीवर्ज्जमिति · श्रापस्तम्बोऽपि युगपत्कालत्वान्निगदान्साधारणाद्रव्यांश्च संस्कारानध्वर्युरिति ।

ध्रुवायाः पुरस्तात्पृषदाज्यमाज्यं दधिमिश्रं पञ्चगृहीतं ज्योतिरसीति (५.३५) समिदन्तेन ॥२६॥ विश्वेषां देवानां समिदित्यन्तेन मन्त्रेण गृह्णाति । पृषदाज्यशब्दस्याप्रसिद्धत्वात्स्वयमेव पर्यायोपादानेन तं व्याचष्टे श्राज्यं दधिमिश्रमिति · अत्र दध्नो मिश्रणश्रवणात् न तस्य प्राधान्यम् प्राधान्यं त्वाज्यस्यैव · दध्ना तु तस्य पृषत्ता विचित्रता कर्बुरता क्रियते अतो गुणभूतं दधि · प्रयोजनम् केवलेन घृतेनानुयाजेषु कृतेषु नावृत्तिः । अत्रापि ज्योतिरसीति मन्त्रः सकृत्त्रिर्वा प्रयोज्यः प्रकृतिवत् अनुयाजस्याज्यप्रकृतावेवमेव दृष्टत्वात् · ज्योतिरसि विश्वरूपमित्यत्रैव वाक्यस्य परिसमाप्तत्वात्समिदन्तो मन्त्रो न प्राप्नोति तेन समिदन्तेनेत्युक्तम् · न चात्र परादिना पूर्वान्त इति (१.३.१) न्यायः अप्रकरणस्थत्वादिति चतुर्गृहीते जुह्वां चोपभृति च गृह्णाति पञ्चगृहीतं पृषदाज्यं ज्योतिरसीत्यादिश्रुतेः (३.६.३.७)· अतश्चात्र जुह्वामुपभृति च चतुर्गृहीतम् पञ्चगृहीतं पृषदाज्यम् ध्रुवायां चतुर्गृहीतमिति · तदुक्तम् चतुरन्यत्र प्रतिविभागादिति (२.७.१४) ।

अनुयाजार्थं सर्वत्र ॥२७॥ एतत्पृषदाज्यमनुयाजार्थं भवति न केवलमत्र किंतु सर्वत्र [यत्र क्व चन भवति] · अतश्चाश्वत्थ्यामुपभृति पृषदाज्यं ग्राह्यम् अनुयाजार्थद्रव्याधारतया तस्याः प्रकृतौ दृष्टत्वात् · प्रयाजार्थं चतुर्गृहीतमाज्यं ततोऽन्यस्यां ग्राह्यम् अन्यथा संकरः स्यादिति ।

औपभृतासादनम् ॥२८॥ अस्य पृषदाज्यस्याधारस्यौपभृतमुपभृत्सम्बन्ध्यासादन[१] भवति घृताच्यसुपभृदित्येतेन मन्त्रेण (२.६) ।

प्रियेण धाम्नेति वाविशेषोपदेशात् ॥२९॥ अथवा · प्रियेण धाम्नेत्यनेन मन्त्रेण पृषदाज्यस्यासादनं भवति यतोऽविशेषेणायं मन्त्र उपदिश्यते प्रियेण धाम्नेति यदन्यद्धविरिति (१.३.४.१४)। प्रकृतौ तिसृषु स्रुक्ष्वासादितास्वेतत्पठ्यते यदन्यद्धविरिति भवति च पृषदाज्यं ताभ्योऽन्यत् तस्मात्प्रियेण धाम्नेत्यासादनमित्येवं प्राप्तेऽनेनैव सूत्रेण परिक्रियते · अविशेषोपदेशात्प्रियेण धाम्नेति

१) ? Thus Ss. °दाज्याधार° २.

मन्त्रेण पृषदाज्यस्यासादनं स्यात् · न चात्राविशेषः अयं ह्यन्यशब्दः प्रकृतानामेव हविषां मध्ये अनासादितस्य पुरोडाशादेरेव वाचको न हविरन्तरमात्रस्य · तस्मात्प्रकृतस्थानापत्त्यौपभृतमेवासादनमिति स्थितम् । तथा चोक्तं मानवे समानं संमार्जनमुपभृतः पृषदाज्यधान्याश्चेति · आपस्तम्बोऽपि पात्रासादनेऽऽह पृषदाज्यधानीं द्वितीयामुपभृतमिति · तथा संमार्जने उपभृ[द्व]त्पृषदाज्यधानीमिति · तथा वेद्यामासादनेऽपि उपभृद्वत्पृषदाज्यधानीमिति · तथा पृषदाज्यं जुह्वामानीय पृषदाज्यधानीमुपभृतं कृत्वा तेनानुयाजान्यजतीति ।

उत्तरं वापरकालत्वात् ॥ ३० ॥ एतत्पृषदाज्यग्रहणं ध्रुवाया उत्तरं वा भवति · कुतः अपरत्वात् ध्रौवाज्यविनियोगादपरकाले पश्चात्पृषदाज्यस्यानुयाजेषूपयोगः · अत उपयोगक्रमेण ध्रौवग्रहणानन्तरं वा पृषदाज्यग्रहणमिति शङ्कामात्रम् · ध्रौवात्पूर्वमेव ग्राह्यम् न तु उत्तरम् वचनाभावे प्रकृतिवदित्यस्य बाधायोगात् · न हि प्रकृतावनुयाजार्थमाज्यं ध्रुवाया उत्तरं गृहीतम् किंतु पूर्वमेव ततोऽत्रापि पूर्वमेव ग्राह्यम् ।

प्रतिप्रस्थाता च ॥ ३१ ॥ प्रतिप्रस्थाताप्यत्र पृषदाज्यं गृह्णाति ।

न वा ॥ ३२ ॥ गृह्णाति । अथ देशभेदात्प्रतिप्रस्थातुः समग्रं तन्त्रस्य पृथक्प्राप्तावाह

प्रणीतापत्नीसंनहनाग्निमन्थनाश्रुतप्रत्याश्रुतप्रैषयजमानवाचनहोतृषदनवरणप्राशित्राङ्गुलिपर्वाञ्जनावान्तरेडाभागापराग्न्यवभृथान्न प्रतिप्रस्थाता ॥ ३३ ॥ सूत्रोक्तान्पदार्थान्प्रतिप्रस्थाता न करोति । प्रणीतानां दृष्टार्थत्वपक्षे अध्वर्युकृताभिरेव तस्यार्थस्य सिद्धेर्न पृथक्प्रणयनम् अदृष्टार्थत्वपक्षे तु प्रसङ्गन्यायादेवाभावः । पत्नीसंनहनस्य [अकरणम्] कृतत्वात् · एतच्च प्रोक्षण्यासादनादेः प्रैषार्थस्याध्वर्युकर्तृकत्वपक्षे पत्नीसंनहनेऽध्वर्युणा कृते कृतानुकरत्वेन प्रतिप्रस्थातुर्यत्प्राप्नोति तस्यायं निषेधः अग्नीत्कर्तृकत्वपक्षे तु द्विर्वारं पत्नीसंनहनस्य भावनापि नास्ति · ततश्च कृत्वा-चिन्तेयम् । अग्निमन्थनं तु प्रतिप्रस्थाता न करोति तस्य पञ्चहविःसम्बन्धात् प्रतिप्रस्थातुश्च तेषामभावात् । आश्रुतमाश्रावणम् प्रत्याश्रुतमस्तु श्रौषडिति ·

तदुभयं न करोति। प्रैषाः होतः त्रिरग्नये समिध्यमानायानुब्रूहीत्येवमादयः यत्किं च वाचा कर्तव्यं तदध्वर्युः करोति[1]। यजमानवाचनम् सपशुषु रेवति यजमान इति वाचयतीत्येतत् (६.५.११) कृतानुकरतया प्राप्तं प्रतिषिध्यते। होतृषदनमप्युत्तरस्यामेव। ब्रह्मवरणम्· संमर्शनं तु प्रतिप्रस्थातुरपि होत्रा कर्तव्यम्· संमृष्टस्योपवेशनं च। अध्वर्युः प्राशित्रमवद्यति। अध्वर्युर्होतुरङ्गुलिपर्वणीऽअनक्ति। होतुः पाणाववान्तरेडावदानं न करोति इडावदानऽउत्तरस्यापि पृथक्प्राप्तत्वात्। षडवत्तब्रह्मयजमानभागादीन्न करोति· अग्न्यनुगमनादिनिमित्तवशात्प्राप्तासु नैमित्तिकेष्टिष्वग्नयेऽग्निमतऽइत्यादिषु (१२.४.३.५) प्राप्तानां भागानामेष प्रतिषेधः। यद्वा अवान्तरेडारूपं भागमध्वर्युरेवावद्यति। अपराग्निहोमान् पत्नीसंयाजदक्षिणाग्निहोमानध्वर्युः। अवभृथं न करोति वारुणीशेषसाध्यत्वात्।

कृतानुकरोऽन्यत्र दक्षिणस्याम्॥३४॥ दक्षिणस्यां वेदौ· उक्तेभ्यः प्रणीतादिभ्योऽन्येषु पदार्थेषु अध्वर्युणा प्रथमं कृतस्य पदार्थस्य केवलमनुकर्तैव प्रतिप्रस्थाता भवति[2]॥ ॥ चतुर्थी कण्डिका॥४॥

अथ पद्धतिः॥

सा उत्तरवेदिरेवमाच्छादिता सकलां रात्रिं वसति। ततो रात्रौ स्वयमेवाग्निहोत्रहोमः पूर्वपरिवासितया शाखया पयस्यार्थं वत्सापाकरणमुभयोः वरुणाय भागमित्यध्वर्योः मरुद्भ्यो भागमिति प्रतिप्रस्थातुः· उभयोः शाखोपगूहनम्[3]। प्रातःकाले[4] अहतवस्त्रपरिधानम्· ततोऽष्टाविंशतिप्रभृतिकाष्ठकमिध्मं त्रियूनबद्धमध्वर्यराहवनीयेऽधिश्रयति प्रतिप्रस्थाता चैवंविधमेव दक्षिणतो द्वितीयमाहवनीयऽएवाधिश्रयति· उभयोश्चात्वालादाहृत्योपयमनीनामपकल्पनम्· ततोऽध्वर्युराज्यस्थाल्यां तूष्णीमाज्यं निरुप्य गार्हपत्येऽधिश्रित्य स्रुवं दर्भैरन्तरतो बाह्यतश्च संमृज्य जुहूमपि तथैव संमृज्याज्यमुद्वास्य पवित्राभ्यामुत्पूय जुह्वां पञ्चगृहीतं गृहीत्वा कस्यचिद्धस्ते धारणार्थं समर्पयेत्· देवदारुपरिधित्रयगुग्गुलुरोहीतथपुष्पमेष-

---

1) See २.५.२.३३. 2) See २.५.२.३४. 3) इति पूर्वेद्युःकर्म प्रतिपर्वपक्षे· पञ्चाहिकपक्षे वैश्वदेवपर्वसमाप्त्युत्तरं तस्मिन्दिने करम्भपात्रकरणाद्युत्तरवेदिछादनान्तम् B. 4) Thus B. ततः काले १.

शिरोरोममपि[1] कस्यचिद्धस्ते समर्पयेत् · एकस्मिन्पूर्णपात्रे प्रोक्षण्यर्थं लौकिक-मुदकं च कृत्वा तदपि कस्यचिद्धस्ते समर्पयेत् · ततः प्रदीप्ताविध्मौ यथास्वमुद्यम्यो-पयमनीभिः सिकताभिर्मृद्भिर्वा युक्तकर्परादिकमग्न्योरधस्ताद्धारयति दाहनिवारणाय · एवमाज्यप्रोक्षणीरग्नी चोद्यम्याध्वर्युरेव होतारं प्रत्याह अग्निभ्यां प्रह्रियमाणा-भ्यामनुब्रूहीति · तत एकस्फ्ययानूद्देहीति प्रतिप्रस्थातारं प्रेष्यति[2] · ततो होत्रा प्र देवं देव्येत्यस्यां[3] प्रथमायामृचि त्रिः पठितायां सत्यामध्वर्युः स्ववेदिं प्रति स्वमग्निं हरति प्रतिप्रस्थाता च स्ववेदिं प्रति स्वमग्निं हरति उभौ स्वस्व-वेदीऽउत्तरेण गच्छतः · ततः प्रतिप्रस्थाता स्वाग्निं हरन्नेव सव्यहस्ते कृत्वा आह-वनीयखरादारभ्याध्वर्युर्वेदिमध्यं यावत्स्फ्येन लेखां करोति अथवोत्तरवेदिं[4] यावत् उत्तरस्या वेदेर्दक्षिणां श्रोणिं यावद्वा[5] इति त्रयो विकल्पाः · ततो ऽध्वर्युरुत्तरवेदिसमीपे गत्वा विरोधादसामर्थ्यादग्निमन्यस्मै प्रदायान्यहस्तात्पूर्णपा-त्रादिस्थं प्रोक्षण्युदकमादायोत्तरवेदेर्दक्षिणतो वेदिमध्ये उत्तरामुखः स्थित्वा इन्द्र-घोषस्त्वा वसुभिरिति (५.११) मन्त्रेण तेन लौकिकेन प्रोक्षण्युदकेन पूर्वभागे उत्तरवेदिं प्रोक्षति ततः प्रचेतास्त्वेति पश्चात्प्रोक्षति मनोजवास्त्वेति दक्षि-णतः प्रोक्षति ततो विश्वकर्मा त्वेत्युत्तरतः प्रोक्षति · तत उत्तरवेदेर्दक्षिणांस-संलग्नं बहिर्वेदि इदमहमिति (५.११) प्रोक्षणीशेषं निनयति · अभिचरतः इद-महं तप्तं वारमुं वैरिणमभि निःसृजामीति मन्त्रे विशेषः अमुमित्यत्र शत्रोर्ना-मग्रहणम् · तत उदकस्पर्शः अभिचाराभावे उदकोपस्पर्शनाभावः · तत उत्तरत उपविश्य दक्षिणं जान्वाच्य नाभिं दर्भैः परिस्तीर्य यत्र क्वचन स्थितं हिरण्यं विलोकयन्नाभ्याः श्रोण्योरंसयोर्मध्ये च पञ्चसु स्थानेषु पञ्चगृहीतमाज्यं कुशोप-ग्रहोऽध्वर्युर्जुहोति सिꣳह्यसीति (५.१२) नाभेराग्नेयकोणे इदꣳ सिꣳह्यै १ सिꣳ-ह्यस्यादित्यवनिः स्वाहा उत्तरश्रोण्याम् इदꣳ सिꣳह्याऽआदित्यवन्यै २ सिꣳह्य-सि ब्रह्मवनिरिति दक्षिणश्रोणौ इदꣳ सिꣳह्यै ब्रह्मवन्यै ३ सिꣳह्यसि सुप्रजा-वनिरित्युत्तरेऽसे जुहोति इदꣳ सिꣳह्यै सुप्रजावन्यै रायस्पोषवन्यै ४ सिꣳह्य-

---

1) ? रोहीष्यमुष्यमेष्यशि॰ I. 2) प्रेषयति I. 3) See Çânkhây. ३.१४.३.
4) ॰दि I. 5) ? ॰णाश्रोणिया॰ I.

स्यावहेति नाभिमध्ये जुहोति इद७ सि७ह्यै ५ · ततो होमार्थं नीचैः कृतां स्रुच-
मूर्ध्वां करोति भूतेभ्यस्त्वेति (५. १२) · ततो नाभिं प्रादेशमात्रैर्देवदारुपरिधिभिः परि-
दधाति ध्रुवोऽसीति (५. १३) पश्चात् ध्रुवक्षिदसीति दक्षिणतः अच्युतक्षिदसी-
त्युत्तरतः · ततोऽग्नेः पुरीषमसीति (५. १३) मन्त्रेण गुग्गुलुसुगन्धितेजनवृष्णोस्तुका
[नाभ्यां निदधाति · वृष्णो स्तुका] मेषरोमाणि ताश्च मेषस्य शृङ्गान्तराले वर्तमाना
मस्तकाद्बाह्याः तदभावेऽन्यस्मात्प्रदेशात् · ततस्तेषु सम्भारेष्वग्निं स्थापयति ·
उपयमनीरग्निसंनिधावेवोत्तरत उत्तरवेदावेव निवपति · प्रतिप्रस्थाताप्याहवनी-
यखरे पञ्च भूसंस्कारान्कृत्वा पुनरुल्लेखनाभ्युक्षणे चाधिके कृत्वा तत्राग्निं स्थापयति ·
अग्निसंनिधौ खरस्योपर्येवोपयमनीर्निवपति ॥ सद्यस्काला वा वरुणप्रघासा
भवन्तीति आपस्तम्बवचनात्स्वशाखोक्तद्व्यहकालतासम्भवाभावे सद्यस्काला यदा
क्रियन्ते तदा पूर्वेद्युः करम्भपात्रमेषमेषीकरणान्तं कृत्वा वत्सप्रोक्षण्यादिकं सुगुप्ते
देशे निधाय प्रातरहतवस्त्रपरिधानादि · अध्वर्युप्रतिप्रस्थात्रोः शाखाच्छेदनादि उप-
गूहनान्तम् · ततो यजमान वाचं यच्छेति प्रैषः · अध्वर्योस्तृणाशम्ययोरासादनम्[1]
प्रतिप्रस्थातुस्तृणस्य · पूर्वसंस्कृतप्रोक्षणीभिर्दैव्यायेत्युभयोः प्रोक्षणम् · तृणाग्रह-
णम् · ततो वेदिमानाद्युपयमन्युपनिवपनान्तमिति विशेषः । अत्र कर्कमते पूर्वेद्युः
समारोपाद्यकृत्वैव करम्भपात्रकरणार्थमेव केवलं दक्षिणाग्निमुद्धृत्याध्वर्योस्तूष्णीं
करम्भपात्रकरणं निधानान्तम् · उदकेनैव संयवनम् · नेदानीं मेषमेष्योः करणम् ·
तदन्ते दक्षिणाग्निर्लौकिकः · प्रातः समारोपः केवलस्य गार्हपत्यस्य · ततो मन्थ-
नम् · नोद्धरणम् · ब्रह्मवरणम् · प्रणीताप्रणयनम् · पञ्चकासादनाद्युपयमन्युप-
निवपनान्तं कृत्वा दक्षिणाग्निमुद्धृत्याग्न्यन्वाधानशाखाच्छेदपरिस्तरणपात्रसादनादि ·
ऐन्द्राग्नानन्तरमध्वर्योर्मन्त्रेण मेषार्थयवग्रहणम् तमनु प्रतिप्रस्थातुर्मेष्यर्थं यवग्रह-
णम् · इतरहविर्भिः सहैव कण्डनपेषणसंयवनमेषमेषीकरणोर्णाश्लेषणानि कृत्वा
श्रपणकाले कुम्भ्योरुदकमध्येऽवधाय[2] श्रपणमिति विशेषः । मेषमेष्योर्यागसा-
धनत्वमेव कर्कमते शाखान्तरीयसर्वसूत्रेषु च हरिस्वामिश्रीअनन्तयाज्ञिकमते
च होमसाधनत्वम्[3] · उभयमतेऽपि मेषकर्तृत्वमध्वर्योरेव युज्यते · मेषीकर्तृत्वं च

---

1) ? °र्व्योः स्तृणाश° I. 2) ? कुम्भ्यो° I. 3) See schol. at ५. ३. ८.

प्रतिप्रस्थातुरेव समन्त्रकमात्रे विशेषः[1] · शाखान्तरीयस्पष्टवचनात्करम्भकर्तृत्वमपि प्रतिप्रस्थातुः पत्न्या वा · करम्भपात्राणां च निःसंदिग्धं होमसाधनत्वमेव तेन तूष्णीमेव · तत्रापि जुहोतीनामपूर्वत्वपक्षाश्रयणे निर्वपणवितुषीकरणोषत्तापनपेष[णा]संयवनानि कृत्वा पात्राणि कार्याणि प्रतिप्रस्थात्रा पत्न्या वा नाध्वर्युणा · पात्रनिर्वापे प्रतिप्रस्थातुः कर्तृत्वम् पात्रकरणे तु पत्न्या इत्यापस्तम्बः तन्मते पात्रघटनमात्रं पत्न्याः नाधिकम् · तत्र पयस्यया सह प्रदाने मेषमेष्योरपि यागसाधनत्वमेव युज्यते अन्यथैकस्यैव वारुणयागस्य यागत्वं होमत्वं चेत्युभयरूपतापत्तेः · अत्राहापस्तम्बः एतस्मिन्काले ॰कुम्भीपाकौ वा भवत इति[2] · काठके यावन्तो ॰वेष्येति[2] · मानवे उत्तरतो ॰ऽन्नेषय[त इ]ति[2] ॥ अथ प्रकृतमुच्यते । उपयमनीनां निवपनानन्तरमध्वर्युः प्रणीतार्थमासनद्वयमुपकल्प्य प्रणीताप्रणयनं करोति · ब्रह्मवरणोत्तरकालं ततः प्राग्वा व्रतग्रहणमकृतं चेदत्र कर्तव्यम् · प्रणीताप्रणयनात्पूर्वं यजमानः करोति · प्रतिप्रस्थातुः प्रणीतापत्नीसंनहनादीनां सूत्रोक्तानामभावः तद्वर्जितं सर्वमध्वर्युकरणानन्तरं समन्त्रकमेवं करोति · अध्वर्योर्मध्यमाहवनीयवर्जं त्रयाणामग्नीनां परिस्तरणम् प्रतिप्रस्थातुः स्वाहवनीयस्यैव · अध्वर्योः पात्रासादनम् शूर्पम् कपालानि त्रयस्त्रिंशदेकोनत्रिंशद्वा स्थाल्यस्तिस्रः[3] शम्याकृष्णाजिनम्[4] उलूखलमुसले दृषदुपलम् पात्रीधान्यम् शाखोपवेषः वन्याग्निहोत्रहवणीपवित्राणि पूर्वमेवासादितप्रोक्षितानि विद्यन्ते तेन नात्र पुनरासाद्यन्ते संयवनोदकम् स्थाली आज्यं च वेदश्च दोहनचतुष्टयम् दक्षिणार्थे धेनुर्वाश्वो वा षड्वा गावो द्वादश वा अश्वः विंशतिकाष्ठक इध्मः कुशप्रसूप्रस्तरोपसंनद्धं[5] त्रेधा बर्हिः स्रुवो जुहूः उपभृद्द्वयम् एका ध्रुवा संमार्गार्हाणि यानि चेत्यत्र प्राशित्रहरणे शृतावदानमेक्षणे वाजिनभाण्डम् चतस्रः पुरोडाशपात्र्यः योक्त्रम् पृषदाज्यार्थे दधि यूनकुशाः पक्षे परिधयः शमीपत्त्रमिश्राणि करीराणि मन्थनचतुष्टयम् कुशास्तृतं पीठम् इडापात्री षडवत्तं च अन्तर्धानकटः पूर्णपात्रम् पक्षे

---

1) See १. २. ५–७. 2) See schol. at ५. ३. ६. 3) Thus B. ॰स्त्रियः १. 4) Thus B. शेव्यांकृ॰ १. 5) ? कुशप्रस्वप्र॰ १. कुशप्रस्वप्रस्तर उप॰ B.

कर्मापवर्गा समिदिति जुहूचतुष्टयं वा · प्रतिप्रस्थातुः पात्रासादनमुच्यते
स्फ्याग्निहोत्रहवणीपवित्राणि सन्त्येव शेषमासाद्यते तद्यथा स्थाली आज्यं
च वेदश्च दोहनचतुष्टयम् अग्निः इध्मो विंशतिकाष्ठकः बर्हिः प्राकृतमेव न
त्रेधा स्रुवो जुहूः करम्भपात्रहोमार्थमैषीकं शूर्पम् अर्थपरिमाणादीर्घा एका
करम्भपात्री च उपभृद्ध्रुवा शृतावदानम् यूनकुशाश्च परिधयः वाजिन-
भाण्डम् शमीपलाशमिश्राणि करीराणि पक्षे पृषदाज्योपभृत् पृषदाज्यार्थं दधि ·
ततोऽध्वर्युः पात्रीमपरेण गार्हपत्यं प्रागग्रां निधायाधस्तादुदञ्चं स्फ्यं प्रेरयति · ततः
पात्रान्तरे प्रोक्षणीरुन्नीय शूर्पाग्निहोत्रहवण्यादानादि । नानाबीजधर्माश्चरुधर्माश्च
वैश्वदेवपर्वण्युक्ता एव[1] तेनात्र विशेषमात्रं लिख्यते । ग्रहणे अग्नये जुष्टम्
सोमाय जुष्टम् सवित्रे जुष्टम् सरस्वत्यै जुष्टम् पूष्णे जुष्टम् इन्द्राग्निभ्यां जुष्टम् काय
जुष्टमिति · प्रोक्षण्यः संस्कृता एव सन्त्युभयोरपि · पात्रान्तरात्प्रोक्षणीरग्निहोत्रह-
वण्यां कृत्वा हविषः प्रोक्षणम् तत्र चतुर्थ्यन्तदेवतापदोच्चारणानन्तरं वा जुष्ट-
मिति विशेषः · उभयोः पात्रप्रोक्षणादि · ततः कृष्णाजिनादानादि अध्वर्युतन्त्र
एव कुक्कुटाहननम् · कणान्ते विभज्यालम्भो व्रीहिमयपुरोडाशपक्षे इदमग्नेः
सवितुः पूष्ण इन्द्राग्न्योः कस्य च इदꣳ सोमस्य सरस्वत्याश्च · अग्नीधः कपालो-
पधाने आग्नेयस्याष्टौ सवितुर्द्वादशाष्टौ वा ऐन्द्राग्नस्य द्वादश कस्यैकम्
तस्मिंस्तप्यस्वेत्यूहः · पूर्वमध्वर्योराज्यं निरुप्य ततः प्रतिप्रस्थातुराज्यं निर्वपेत्
एवमेव क्रमेण वेदौ करोति · प्रोहणान्तेऽध्वर्योर्वारुणीपयस्यार्थमुपसृष्टादिपरिक्षा-
लनान्तो दोहः ततः प्रतिप्रस्थातुर्मारुत्यर्थमुपसृष्टादि परिक्षालनान्तो दोहः
तत्र उपसृष्टां प्रब्रूतादित्यादीन्प्रैषान्प्रतिप्रस्थातैव ब्रूयादित्यापस्तम्बसूत्रे · तत
ईक्षणं पिष्टानां तण्डुलानां च ईक्षणान्ते पौष्णविवेकः तत्र इदमग्नेः सवितु-
रिन्द्राग्न्योः कस्य च इदं पूष्णः · चर्वोर्विभज्यालम्भः इदꣳ सोमस्य इदꣳ
सरस्वत्याः · ततो यथाक्रमं संवापः · संयवनानन्तरं विभज्यालम्भे इदमग्नेः
इदꣳ सवितुः इदमिन्द्राग्न्योः इदं कस्येति · यथाक्रममधिश्रयणम् अग्नीदध्वर्योरा-
ज्यमधिश्रित्य दक्षिणतः प्रतिप्रस्थातुरधिश्रयति · ऐन्द्राग्नादुत्तरं वारुण्याः पयस्या-

---

1) See pag. ४३१,२० ff.

याः स्थानम् तदनन्तरं मारुत्याः प्रतिप्रस्थातुराज्याद्दक्षिणतः तदुत्तरं कायस्येति सम्प्रदायः · पयस्ये वर्जयित्वा पर्यग्निकरणम् · यथाक्रमं श्रपणमुभयोः · तप्ते पयसि दधिप्रक्षेप उभयोः · शृतालम्भनम् · पुरोडाशानामभिवासनम् पात्र्यङ्गुलिप्रक्षालनस्थापनपक्षे पूर्वस्थापितपात्र्यङ्गुलिप्रक्षालनेन सहोभयोः पृथगाप्योदकनिनयनम् · ततोऽग्निमादाय वेदिखननमुभयोः · ततोऽध्वर्योरेव ब्रह्मन्नुत्तरौ परिग्राहौ परिग्रहीष्याव इति प्रैषः ब्रह्मणः पूर्वपरिग्रहवदूहः हरिस्वामिमतऽऊहाभावः · परिगृहीतमित्यनुज्ञातौ उत्तरं परिग्रहं कुरुतः · दक्षिणतः पुरीषमुद्धृत्य प्रत्यक्संस्थमनुमार्जनमुभयोः · अग्नीदध्वर्योः प्रोक्षणीर्धारयति प्रतिप्रस्थाता च स्वयम्[१)]। ततोऽध्वर्युः स्फ्यमुद्यम्य प्रेष्यति तत्रोहः प्रोक्षणीरासादयेध्मौ[२)] बर्हिषी ऽउपसादय स्रुचः संमृड्ढि पत्नीः संनह्याज्याभ्यामुदेहीति । स्फ्योदकप्रहरणामुत्कर ऽउभयोः · अग्नीदुभयत्र प्रोक्षण्याद्यासादयति प्रतिप्रस्थातुर्दशस्फ्येध्माबर्हिषासादनं[३)] प्रणीताभावेऽपि । ततः पात्रसंमार्गः · उभयोर्वेद्योस्तृणाग्राणि मूलानि च गृहीत्वा पृथक्पृथक्स्थापयति · यथास्वं तृणैरुभयोः पात्राणि संमार्ष्टि पूर्वमध्वर्योः स्रुवम् ततः प्रतिप्रस्थातुः स्रुवम् पूर्वमध्वर्योर्जुहूम् ततः प्रतिप्रस्थातुर्जुहूम्[४)] तूष्णीं शूर्पं च ततोऽध्वर्योरुपभृतं च ततः प्रतिप्रस्थातुरुपभृतं पृषदाज्योपभृतं च[५)] ततो ऽध्वर्योर्ध्रुवाम् ततः प्रतिप्रस्थातुर्ध्रुवाम् ततस्तूष्णीं प्राशित्रहरणे शृतावदानं मेक्षणं चाध्वर्योः प्रतिप्रस्थातुः शृतावदानस्य[६)] ततः करम्भपात्र्याश्च ततो वाजिनभाण्डस्याध्वर्योः ततः प्रतिप्रस्थातुर्वाजिनभाण्डस्य ततः पुरोडाशपात्रीणाम् · ततः संमार्जनान्युत्करे निरस्यति आहवनीयप्रासनपक्षे यथास्वं प्रासनम् । ततः पत्नीसंनहनम् · आज्येऽउद्वास्य पत्न्याज्येऽअवेक्षस्वेति प्रैषेण द्वेऽआज्ये प्रदर्श्य यथास्वं वेद्योरासादयति । ततोऽध्वर्युराज्यमुत्पूय प्रोक्षणीश्चोत्पूयाज्यमवेक्षते · ईक्षणान्ते पृषदाज्यार्थं स्थाल्यन्तरे दधि प्रक्षिप्य दधन्येवाज्यं प्रक्षिपेत् दधन्याज्यमानीयेत्यापस्तम्बवचनात् ततो जुह्वामुपभृति च चतुर्गृहीतं गृहीत्वा पृषदाज्योपभृति पञ्चगृहीतं गृह्णीयात् ज्योतिरसि विश्वरूपं विश्वेषां देवानाᳮ

---

१) ? चसां १. २) Thus १. प्रोक्षण्यावा° B. ३) दश i. e. दशगण See २. ३. ८
४) ? °तुस्रुवंजुहूं १. ५) अध्वर्योरुपभृद्वयं प्रतिप्रस्थातुरुपभृत् B. ६) i. e. संमार्जनम्.

समिदित्यन्तेन अत्रापि सकृन्मन्त्रस्त्रिर्वा इति कर्कः अपूर्वस्यैव मन्त्रस्य संख्यायाश्च विधानात्पञ्चकृत्वोऽपि भवतीति याज्ञिकाः · ध्रुवायां चतुर्गृहीतमेव · प्रतिप्रस्थातुराज्योत्पवनादि प्राकृतमेवाज्यग्रहणाम् पृषदाज्यपक्षेऽध्वर्युवत् । अध्वर्योरिध्मविस्रंसनादि · ब्रह्मन्निध्मौ प्रोक्षिष्याव इत्यध्वर्योरेव प्रैषः · ब्रह्मा च प्रोक्षतं यज्ञं देवता वर्धयतं युवां नाकस्य॰ यजमानं च धत्तम् ओं३ प्रोक्षतमित्यूहितेन मन्त्रेणानुजानाति · यथास्वमिध्मावेद्योः प्रोक्षणाम् · उभयोर्बर्हिःसमर्पणाम् प्रतिगृह्य वेद्यां प्रागग्रन्थ्यासादनम् ब्रह्मन्बर्हिषी प्रोक्षिष्याव इति प्रैषः · बर्हिषः प्रोक्षणमुभयोः · मूलावसेक उभयोः · पवित्रयोः कृतचिह्नयोः प्रणीतासु स्थापनमुभयोः · चत्वार्यपि संनहनानि विस्रंस्य श्रोणी निधेयानि · पञ्चधातुभिर्वा वेदिं[1] स्तृणीयादध्वर्युः प्रतिप्रस्थाता च प्रकृतिवत् · तत इध्मात्समिधमादायोभयोः प्रस्तरादानादि प्रस्तराभिन्यासान्तम् । प्रतिप्रस्थाता जुहूमासाद्य दक्षिणवेदौ तूष्णीं शूर्पमासादयति प्रस्तर एव प्रतिग्रहपूर्वकं च · अग्नीद्भ्याभ्यां स्रुचोऽर्पयति · उपभृदनन्तरं तद्वदेव पृषदाज्योपभृतमासादयति उपभृद्वत्पृषदाज्यधानीमित्यापस्तम्बवचनात् · ततो ध्रुवासादनान्तमुभयोः · ततः पुरोडाशानां विभस्मीकरणम् · प्रतिप्रस्थातुः करम्भपात्र्याः स्थापनम् वाजिनपात्रस्य स्थापनमुभयोः पुरोडाशपात्रीणां स्थापनमध्वर्योः · एकस्यामेव[2] करम्भपात्रसंख्यस्थानेषूपस्तारः यथास्वं वाजिनपात्रयोः पुरोडाशपात्रीषु च · ततस्तत्रस्थाभिघारमद्त्वा वा वाजिननिषेक उभयोर्यथास्वम् ॥ ॥४॥

इति पञ्चमस्य चतुर्थी कण्डिका ॥ ॥

वाजिने निषिच्योभयोः[3] करीराण्यावपति शमीपलाशमिश्राणि ॥१॥ यथास्वं द्वयोः पयस्ययोः वाजिने निषिच्य पृथक्पात्रयोरवस्राव्य उभयोः पयस्ययोर्मध्ये । शमी नाम कण्टकी वृक्षः तस्य पर्णानि शमीपलाशानि · करीरोऽपि अपर्णाः कण्टकी वृक्षः तस्य फलानि करीराणि । शमीपर्णानां करीरफलानां च तुल्य-

1) ? विदि १. 2) sc. पात्र्यां B. 3) वाजिने निषिच्य ॥४॥ उभयोः १. and the paddhati.

त्वम् न तु[1] मिश्राणीति सूत्रणात्पलाशानां गौणत्वम् सहप्रक्षेपार्थं तु मिश्राणीति सूत्रितम् · तुल्यतायाः प्रयोजनम् पर्णावापविस्मरणे प्राक्पयस्यायागात्ते न्युप्यन्तऽएव · गुणाभावे तु तथा न स्यात् । वाजिने निषिच्यावपतीति ल्यबादेशात्तत्रस्थाभिघारात्प्रागेव निर्वापो यथास्वमेव · एतानि च पयस्ययोः संस्कारकाणि न प्रदेयद्रव्यभूतानि अतश्चैषां प्रदेयद्रव्यधर्मा न भवन्तीति ।

मेषमिथुनं च ॥ २ ॥ यथास्वं पयस्ययोरावपति । तत्र विभागार्थधर्ममाह ·

मारुत्यां मेषम् ॥ ३ ॥ अध्वर्युः · परिशेषात्प्रतिप्रस्थाता वारुण्यां मेषीम् । पुरोडाशधर्मप्राप्त्या पात्र्योरासादनं मेषमिथुनयोः प्राप्नोति वचनाच्च तत्पयस्ययोः क्रियते · ततश्च पूर्वं पयस्ययोरुपस्तीर्य यथास्वं मेषमेष्योरावापः पयस्ययोः प्राणदानानन्तरं यथास्वं प्राणदानं च · प्रदेयधर्मास्तु तयोर्भवन्त्येव पयस्यावदानेन सह तयोरवदानविधानेन तद्वदेव प्रदेयतानिश्चयात् ।

सर्वाणि हवींष्युत्तरस्यामासादयति ॥ ४ ॥ अध्वर्युराग्नेयादीनां तत्रस्थाभिघारादि कपालोद्वासनान्तं कृत्वा मारुतीकरम्भवर्जितानि सर्वाणि हवींषि आग्नेयादीन्यष्टौ कायपर्यन्तान्युत्तरस्यां वेदावासादयति वाजिनं चोत्करे सादयति ।

मारुतीः सहाज्यां प्रतिप्रस्थाता दक्षिणस्याम् ॥ ५ ॥ प्रतिप्रस्थाता स्वकीयपयस्यायास्तत्रस्थाभिघारादि वाजिनस्य प्राणदानान्तं कृत्वा आज्यस्थालीसहितां दक्षिणस्यां वेदावासादयति वाजिनमुत्करऽएव । करम्भपात्राणां तु पुरोडाशधर्मकत्वात्तत्पात्रीणां संमार्गोपस्तरणादिकं भवति · करम्भपात्राणामप्यभिघारणोपस्तीर्णासु-पात्रीषु-निधानप्राणदानदक्षिणस्यां-वेद्यामासादनालम्भास्तूष्णीं[2] भवन्ति प्रतिप्रस्थातृकर्तृकाः अध्वर्युकर्तृकनिर्वापपक्षेऽध्वर्युकर्तृकाः । मेषयोरपि यथास्वं प्राणदानं तूष्णीं मन्त्रेण वा यथाङ्गीकारं भवत्येव समन्त्रकपक्षे च प्रियाभ्यां धामभ्यामित्यूहितेन मन्त्रेण · पयस्ययोर्यथास्वमासादनम् यथास्वं [मेष]मेष्योरालम्भः ।

संमार्जनाय प्रेषितेऽसंमृष्टे प्रतिप्रस्थाता पत्नीमानेष्यन्नाह केन चरसीति ॥ ६ ॥ हविरासादना[लम्भात्मा]लम्भोदकालम्भान्तेऽग्निमन्थनहोतुरामन्त्रणादि · पूर्वाघा-

---

१) ? ननु २. २) °त्रापययाणामथभिघारणोपस्तीर्णापस्तीर्णासुपा° २.

रानन्तरं संमार्जनाय प्रेषिते अग्निसंमार्गार्थं प्रैषे दत्ते ऽसंमृष्टे अग्निसंमार्गे अकृते प्रतिप्रस्थाता गार्हपत्यसमीपे गत्वा करम्भपात्रहोमार्थं[1] पत्नीमानेष्यन्नाह · केन पुंसा सह त्वं चरसि   किमनेनैव भर्त्रा आहोस्विदन्येनापीत्यर्थ इति हरिस्वामिनः । केन जारेण सह त्वं चरसीति मानवे ।

सञ्संस्तुतानाचष्टे[2] ॥७॥   संस्तुताः[3] भर्तृव्यतिरेकेण ये संगताः परिज्ञाताः[4] जारा इत्यर्थः · पत्नी एतावन्तो मे जारा इति नामग्राहं वा कथयतीत्यर्थः · अमुना अमुना सह चरामीति   नो चेन्नान्येनेति पितृभूतिः ।

तृणानि वोद्गृह्णाति यथासञ्संस्तुतम् ॥८॥   यदि लज्जादिवशाद्वा संस्तुतान्जारान्न कथयति तदा प्रतिसंस्तुतं प्रतिजारं तृणानि उद्गृह्णाति भूमिस्थाद्दर्भपूलान्निष्काश्योर्ध्वानि गृह्णाति · प्रतिसंस्तुतमेकैकतृणोद्ग्रहणम् ।

अनाख्यातमहितं ज्ञातिभ्य इति श्रुतेः (२.५.२.२०) ॥९॥   तथा च मानवे प्रतिप्रस्थाता गार्हपत्यान्ते पृच्छति पत्नि कति ते कान्ता यदि मिथ्या वक्ष्यसि प्रियतमस्ते सञ्स्थास्यतीति   यं निर्दिशेत्तं वरुणो गृह्णात्विति ब्रूयादिति · काठके च   प्रतिप्रस्थाता पत्नीमाह कति ते कान्ता इति सत्यं वदेन्निर्दिष्टांस्तान्वरुणो गृह्णात्विति [ब्रूयादिति] · तैत्तिरीयके ऽपि   पृच्छति कति ते जारा इति यानाचष्टे तान्वरुणो गृह्णात्विति निर्दिशति   यज्जारञ्सन्तं न प्रब्रूयात्प्रियं[5] ज्ञातिञ्सञ्रुन्ध्यादसौ मे जार इति निर्दिश्यैवैनं वरुणपाशेन ग्राहयतीति विज्ञायत ऽइति ।

आख्याते प्रघासिन इत्येनां (३.४४) वाचयति नयन् ॥१०॥   आख्याते पत्न्या असौ मे जार इति प्रतिवचने दत्ते   तृणोद्ग्रहणे वा कृते   नो चेत् भर्तृव्यतिरेकेण न केनापि केवलेन स्वभर्त्रेत्याख्याते[6] । अस्याश्च [ऋचः] पुरोऽनुवाक्यास्थानीयत्वम् यथा पुरोऽनुवाक्येत्यादिना श्रुतत्वात् (२.५.२.२१) · ततश्च करम्भपात्रहोमे मरुतां देवतात्वम् तेनेदं मरुद्भ्य इति त्यागः ।

करम्भपात्राणि जुहोति शूर्पेण मूर्धनि कृत्वा दक्षिणेऽग्नौ प्रत्यङ्मुखी   जाया-

---

1) °पात्रकोसार्थं २·   2) Thus १. M. Ss. Sâyaṇa at २.५.२.२०. सञ्स्तुतान् २·
3) ? संस्तुता २·   4) ? परितेताः २· परिज्ञाताः Sâyaṇa l. c.   5) Thus Sâyaṇa l. c. न ब्रू° २·   6) ? न केनापीकेन स्वभर्वेत्या° २·

पत्नी वा दक्षिणेनाहृत्य तीर्थेन पूर्वेण वेदिमपरेण वा यद्ग्रामऽइति (३.४५) ॥११॥ क॰णि पत्नी जुहोति जुहूस्थानापन्नेन शूर्पेण मस्तकस्योपरि शूर्पं कृत्वा · यद्वा पत्नीयजमानौ जुहुतो नैकाकिनी पत्नी · उपस्तारसर्वावधानद्विरभिघारणसंस्कृतानि शूर्पस्थानि करम्भपात्राणि वितानं दक्षिणेन ब्रह्मयजमानयोरग्न्योश्चान्तरेणाग्न्योः पुरस्ताद्दक्षिणमाहृत्य आनीय तीर्थेन चात्वालोत्करावन्तरेण प्रवेश्य वेदिचात्वालयोरन्तरालेन पूर्वेणोत्तरवेदिं दक्षिणस्याग्नेः पुरस्तादाहृत्य अथवा तीर्थेन प्रवेशनानन्तरमुत्तरां वेदिमपरेण चानीय वेद्योरन्तरालेन दक्षिणस्याग्नेः पुरस्तदानीय जुहोति पत्नी · [जायापतीपक्षे] होममन्त्रपाठ उभयोः त्यागश्च पूर्वसूत्रऽएवोक्तः । अत्राहापस्तम्बः अन्तरा वेदी गत्वा यजमानः पत्नी चोत्तरेण वोत्तरां वेदिमैषीके[1] शूर्पे करम्भपात्राण्योप्य शीर्षन्नधिनिधाय पुरस्तात्प्रत्यञ्चौ तिष्ठन्तौ दक्षिणाग्नौ[2] शूर्पेण जुहुतो मो षू ण इन्द्रेति यजमानः पुरोऽनुवाक्यामन्वाह यद्ग्रामऽइत्युभौ याज्यामक्रन्कर्म कर्मकृत इति प्रतिपरायतो[3] ऽपि वाध्वर्युः प्रतिप्रस्थाता वा जुहुयादप्यग्रेण दक्षिणमग्निं पुरस्तात्प्रत्यञ्चाववतिष्ठेते[4] शूर्पं शिरसोरवधाय मो[5] षू ण इन्द्रेति जपति यजमान उत्तरस्तिष्ठन् यद्ग्रामे यदरण्यऽइति जुहुतः शूर्पेण करम्भपात्राण्यक्रन्कर्म कर्मकृत इति व्युत्क्रामत इति · काठके च तानि शूर्पेण शूर्पहस्ता पत्न्यादित्यमुपतिष्ठते नमस्तऽआतानेत्यन्तर्वेदि गच्छति अपरेण विहारं परिक्रम्य दक्षिणेन वेद्यन्तेन गत्वा पूर्वेण दक्षिणमग्निं प्रत्यञ्चौ तिष्ठन्तौ पत्नीयजमानौ शूर्पमन्वारभ्य जपं प्रधास्यान् इति द्वे[6] यद्ग्रामऽइति हुत्वाक्रन्निति जपित्वा यथार्थं प्रव्रजत इति । करम्भपात्रनिर्वपणमध्वर्युणा[7] कृतं चेत् तदाध्वर्युरेव स्वाज्याच्छूर्पे उपस्तारकरम्भपात्रावधानद्विरभिघारणानि कृत्वा शूर्पं पत्न्या हस्तेऽर्पयति · प्रतिप्रस्थात्रा चेदादितः[8] कृतम् तदात्रापि स एव तदा आज्यमपि तदीयमेवोपस्तारादौ । शूर्पस्य जुहूस्थानापत्त्या तूष्णीमासादनप्रोक्षणसंमार्जनप्रतपनप्रस्तरे-सादनव्यूहनादयः सर्वे जुहूसंस्काराः कार्याः ।

---

१) वोत्तरवेदिमै॰ quot. in paddh. २) दक्षिणेऽग्नौ paddh. ३) मो षू॰ रायतो deest in paddh. ४) जुहुयादन्वारभेयातामितराविति paddh. जुहुयादप्याग्रेण॰ प्रयैत्पंचाव॰ २. ५) ? भुमौ २. ६) ? स्यानिति द्वे २. ७) ? ॰र्वपणांध्व॰ २. ८) चेदादादितः २.

मो षू ण इति (३.४६) यजमानो जपति ॥ १२ ॥  त्यागानन्तरम् ।

अक्रन्कर्मेत्येनां वाचयति प्रतिनयन् ॥ १३ ॥  प्रतिप्रस्थाता · करम्भपात्रहोमदेशात्स्वस्थानं प्रतिनयन् तेनैव मार्गेण येन पूर्वमानीता प्रतिशब्दसामर्थ्यात् ।

आगते संमार्जनाद्याऽऽज्यभागाभ्याम् ॥ १४ ॥  स्ववेदिं प्रत्यागते प्रतिप्रस्थातरि अग्न्योः संमार्जनादि आज्यभागान्तम् । प्रतिपराणीयोदेति 'वषट्कृते जुहुत इति श्रुतत्वात् (२.५.२.३०-३१) · संमृजन्त्यग्निमित्यत्र यजमानादिहेतुकर्त्रपेक्षं बहुवचनम् अग्निमित्येकवचनम् देशभेदकृतस्याग्निभेदस्याविवक्षितत्वात् · आघारावित्येककर्मत्वेऽपि प्रयोगभेदाद्द्विवचनम् अथाध्वर्युरेवेति देशकर्त्रभेदादतन्त्रत्वे सति प्रसङ्गात्सिद्धार्थस्य प्रतिप्रस्थातुरवरणं दर्शयति · उत्तरस्यै वेदेर्होतृषदनऽउपविशतीति मुख्यत्वात्प्राप्तेऽनुवादः · उपविश्य प्रसौतीत्यध्वर्यू एकवचनेन घृतवतीमध्वर्यो स्रुचमास्यस्वेत्यनेनैव प्रतिप्रस्थातुः प्रासङ्गिकत्वात् · ताऽउभाविव प्रसूतावित्यत्रापि प्रासङ्गिकः प्रसवस्तस्यैवाभिप्रेतः अन्ये तत एवोभयप्रसववचनात्प्रसवमन्त्रमूहन्ति घृतवतीऽअध्वर्यू स्रुचावास्येथां देवयुवौ विश्ववारेऽइति [1]· चतुर्थे-चतुर्थऽइति वीप्सार्थे विधीयते सकृदेव सर्वसमानयनस्य प्राप्तत्वात् · ताऽउभाविवेत्यादि प्रसङ्गनिवृत्त्यर्थम् · अत्र वषट्कारानन्तरमेव होमः सर्वत्र वषट्कृते जुहुत इति (°३१) पुनः श्रुतत्वात् न तु वषट्कारेण सह पक्षान्तरे आदानस्येतरपक्षनिवृत्त्यर्थत्वात् · एवमाज्यभागान्तं यथोपदेशमुभाभ्यां कर्तव्यम् ।

स्रुक्पाणिरास्ते प्रतिप्रस्थाता ॥ १५ ॥  आज्यभागानन्तरं जुहूपभृतौ हस्ते कृत्वा।

हविर्भिश्चरति ॥ १६ ॥  ततोऽध्वर्युराग्नेयादिभिर्हविर्भिश्चरति ऐन्द्राग्नपर्यन्तैः क्रमेण ।

पयस्याप्रचरणकाले मेषौ व्यतिहरतः ॥ १७ ॥  पय॰काले अवसरे आयाते अध्वर्युप्रतिप्रस्थातारौ यथास्वं मेषौ व्य॰तः स्वस्वपयस्यामध्ये तौ निधत्तः स्थापयत इत्यर्थः · अध्वर्युर्मेषं वारुण्याम् प्रतिप्रस्थाता मेषीं मारुत्याम् ।

अन्यतरेणावदानेन सह मेषम् ॥ १८ ॥  स्रुच्यवदधाति · अध्वर्युर्वरुणाया-

---

1) See १.५.२.१ and ३.

नुब्रूहीत्युक्त्वा जुह्वामुपस्तीर्य द्वयोः पयस्यावदानयोर्मध्येऽन्यतरेण प्रथमेन द्वितीयेन वा पयस्यावदानेन सह कृत्स्नं मेषं जुह्वामवदधाति · ततः सकृदभिघार्यावदाने प्रत्यभिघार्येत्यायातिक्रम्याश्राव्य वरुणं यजेत्युक्त्वा वषट्कृते जुहोति[1]। आपस्तम्बः ऐन्द्राग्नपर्यन्तैः प्रचर्यारमत्यध्वर्युरथ प्रतिप्रस्थाता पूर्वेण सहावदानेन मारुत्याः सर्वां मेषीमवद्यत्युत्तरेण शमीपर्णकरीराण्यथ प्रचर्यारमत्यथाध्वर्युः पूर्वेण सहा[वदा]नेन वारुण्याः सर्वं मेषमवद्यत्युत्तरेण शमीपर्णकरीराण्यथ प्रचरतीति।

सव्येन स्रुचौ गृहीत्वा प्रतिप्रस्थातुर्वासो दक्षिणेन मरुद्भ्योऽनुवाचयति ॥१९॥ वारुणीयागानन्तरमध्वर्युः · सव्येन हस्तेन स्रुचावन्वारभ्य।

वारुणीवदवदानम् ॥२०॥ वारुणीवदित्यन्यतरेण पयस्यावदानेन सह मेषीं स्रुच्यवदध्यात्।

हविर्भिश्चरितेऽभौ स्विष्टकृत्प्रभृति ॥२१॥ अध्वर्युणा सर्वैः कायान्तैः हविर्भिश्चरिते उभौ प्रकृतिवत् स्वि॰ति कुरुतः।

इडामवदाय प्रतिप्रस्थात्रे प्र[यच्छ]ति ॥२२॥ अध्वर्युः · अनभिघार्येव।

तत्र प्रतिप्रस्थाता मारुत्याः ॥२३॥ तस्यामेव समवत्तायामिडायां प्र॰ता मारुत्याः द्विरवद्यति उपरिष्टाद्विरभिघारणं त्वध्वर्युरेव करोति · अत्रेडोपह्वाना-नन्तरं पूर्वं मार्जनम् तत इडादिभक्षणाम् गृहमेधीयायामेवमेव श्रुतेः[2]।

स्रुचो व्यूहतोऽध्वर्यू ॥२४॥ प्राशित्रेडादिभक्षणानन्तरं धेन्वादिदक्षिणां दत्वोल्मुकसमासादिनवानुयाजधारानुयाजान्ते कृते अध्वर्युप्रतिप्रस्थातारौ स्रुचो व्यूहतः[3]। अध्वर्युग्रहणं यजमानव्युदासार्थम् अतोऽत्र यजमानो व्यूहनं पत्नेऽपि न करोति। स्फ्ये सादयत इत्यनेन (२. ५. २. ४४) अत्र पात्र्या हविर्ग्रहणाम् नानस इति ज्ञायते · द्विवचनात्प्रतिप्रस्थातुरपि हविर्ग्रहणमस्तीति प्रतीयते तच्च करम्भपात्रमेष्यर्थमेव ना[न्य]स्यासम्भवात् · हविर्ग्रहणाभावे च तस्य देशऽएव निधानं स्यात् न स्फ्ये इति। परिधिभिः सहाध्वर्युसक्त उपवेषोऽपि होतव्यः प्रतिप्रस्थातुस्तु नास्त्येव।

समासिच्य वाजिनभक्षः ॥२५॥ आत्मालम्भोदकालम्भान्ते स्रुग्विमो-

---

[1] See २. ५. २. ३७. [2] See ५. ६. २६ and २७. [3] See २. ५. २. ४१ and ४२.

कान्ते वा यथास्वं वाजिनयागं व्याघारणान्तं कृत्वा स्रुक्स्थौ वाजिनशेषाविकस्यां जुह्वां समासिच्य संयोऽन्योत्तरस्या वेदेरुत्तरतः समीपे समुपहूय तन्त्रेण वाजिनयागः सर्वैः पूर्ववत्कर्तव्यः · तथा चापस्तम्बः उभौ वाजिनाभ्यां प्रचरतः शेषौ समवनीयोत्तरे विहारे पूर्ववद्भक्षयन्तीति ।

अध्वर्युविकारात्प्रतिप्रस्थाता भक्षेषु ॥२६॥ पश्विडादिभक्षेषु प्रकृता कर्ता अधिकारी भवति स ह्यध्वर्योर्विकारः तत्प[दार्थाव]दानस्य[1] तेन क्रियमाणत्वात् · यतोऽध्वर्युपदार्थमवदानं कुर्वन्नध्वर्युविकारो भवति अतस्तच्छेषभक्षेष्वप्यधिकारी भवति ।

मैत्रावरुणश्च होत्रध्वर्युविकारात् ॥२७॥ पशौ मैत्रावरुणोऽपि पुरोडाशेडापश्विडाभक्षेषु · पुरोऽनुवाक्यानुवचनेन हि स होतारं विकरोति होतृप्रेषणेन चाध्वर्युम् ।

समिष्टयजूंषि तूष्णीं दक्षिणस्याम् ॥२८॥ अत्र पूर्वं वेद्यालम्भपत्नीसंयाजदक्षिणाग्निहोमवेद्योक्त्रविमोकवेदस्तरणान्ते कृतेऽध्वर्युस्त्रीणि सं॰षि समन्त्रकाणि जुहोति प्रतिप्रस्थाता तु दक्षिणस्यां वेदौ दक्षिणेऽग्नौ ध्रौवेणाज्येन तूष्णीमेव त्रीणि सं॰षि जुहोति ।

वारुणीनिष्काषेणावभृथम् ॥२९॥ वारुण्याः निष्काषः तापवशादधःस्थालीतललग्नः पयस्याशेषः तेनावभृथं कर्तुमपः प्रति यन्ति · अथास्यै वारुण्यै पयस्यायै क्षामकर्षमिश्रमादायेति श्रुतेः (२.५.२.४६) पात्रे संसक्तः कृष्यते विश्लिष्यतऽइति कर्षः क्षामश्चासौ कर्षश्चेति क्षामकर्षः तेन मिश्रं हविरादायावभृथमुदकं यन्ति अविग्यजमानाः । अत्र च नाम्ना सौमिकादवभृथाद्धर्मप्राप्तिः · तत्रानेन निष्काषेण पुरोडाशस्य निवृत्तिः प्रत्याम्नानात् · तत्र न साम गीयतऽइति (२.५.२.४६) तत एव प्राप्तस्याग्निष्टपतीति साम्नः[2] प्रतिषेधः अतः सोमवदेवात्र सर्वं कर्तव्यम् · तेन प्रथमं चात्वालसमीपऽएवोरुं हीति वाचनम्[3] ततो निष्काषाज्यस्थालीस्रुक्समिद्बर्हिःशृतावदानस्फ्यपरिधानवस्त्राद्युपयोक्ष्यमाणमादाय चात्वालोत्करावन्तरेण निष्क्रम्योदकसमीपं गच्छति ।

---

1) ? तत्पदानस्य I. अवदानस्य Ss. 2) See ४.४.५.८. 3) See १०.८.१५.

तूष्णीमित्याभ्यवेत्य मज्जयत्यवभृथेति (३. ४८) ॥३०॥ तूष्णीं गृहादपः प्रत्यागत्येत्यनेन सामगानं प्रतिषिध्यते · अभ्यवेत्य तूष्णीमेवापः प्रविश्येत्यनेन चापोऽवक्रमणवाचनं प्रतिषिध्यते · ततश्चतुर्गृहीतग्रहणाद्यनुयाजान्तं दशाङ्गुतिकं षडाङ्गुतिकं वा स्विष्टकृदन्तं कर्म कृत्वा[1] निष्कासस्थालीं जलमध्ये मज्जयति बोलयति[2] ।

जायापती स्नातोऽमज्जन्तौ ॥३१॥ जलमध्ये शिरसः प्रवेशनं ब्रुडनमकुर्वन्तौ[3] स्नानमाचरतः · मज्जनप्रतिषेधेऽपि केनचित्पात्रेणाञ्जलिना [वा] जलमुद्धृत्य शिरः क्षालयत एव · तथा चापस्तम्बः अपः प्रगाह्य सशिरस्कावनुपमज्जन्तौ स्नातः पत्नी यजमानश्चेति ।

अन्योऽन्यस्य पृष्ठे धावतः ॥३२॥ शोधयतः अद्भिः क्षालयतः ।

अन्ये वाससी परिदधाते ॥३३॥ स्नानानन्तरम् · ततो जलमध्यान्निःसरतः ।

पूर्वे दद्यादधिकृतेभ्यो यस्माऽइच्छेत् ॥३४॥ ब्रह्मादिपञ्चभ्यः · एकस्मै ऋत्विजे · पूर्वकरणसमये वैश्वदेवपर्वसम्बन्धिनी पत्नीयजमानाभ्यां परिहिते वाससी[4] ।

यथेतमेत्याहवनीये समिदाधानं देवानाᳬ समिदसीति (८. २७) ॥३५॥ यथेतं यथागतं चात्वालोत्करावन्तरेण तूष्णीमेव एत्य गृहमागत्य तूष्णीमामहीयजपप्रतिषेधः[5] । समिदाधानमध्वर्योरिति केचित् पुनरेत्याहवनीये समिधमभ्यादधातीत्येकवचनात् (४. ४. ५. २३) समाख्यानात् यजमानमेवैतया समिन्द्धऽइति लिङ्गाच्च (४. ४. ५. २३) · यजमान एवेत्यन्ये पत्नी च गार्हपत्ये तूष्णीमिति (३६) पत्न्याः समिदाधानविधानेन तत्सहचरितस्य यजमानस्यैतत्समिदाधानमिति प्रतीतिः · सर्वेषामृत्विजां सयजमानानामाहवनीयऽएतत्समिदाधानमित्यन्ये च[6] स येनैव निष्क्रामन्ति तेन पुनरायन्ति पुनरेत्याहवनीये समिधमभ्यादधातीति श्रुतेः (४. ४. ५. २३) अत्रागमनं बहूनामुक्तागत्य च यत्समिदाधानमुच्यते तदपि

1) See ४. ४. ५. १८ and १९. 2) ? वोलयति २. Or are we to read चोलयति ? 3) See Westergaard s. r. ब्रुड्. 4) ? परिहितेऽभूताने वाससी २. 5) See १०. १. ७. 6) ? °त्ययवा २.

तेषामागमनकर्तृणां प्रतीयते · तथापस्तम्बः एधोऽसीति समिध आधायाहव-
नीयमुपतिष्ठन्तऽइति · एवमेव मानवकठसूत्रयोरपि अनपेक्षमाणा आयन्ति
समिधः समिन्द्ध[1] ऽएधोऽसीत्यग्नौ समिधमादधातीति काठके ।

पत्नी च गार्हपत्ये तूष्णीम् ॥ ३६ ॥ समिदाधानं करोति शाखान्तरात् ।

धेनुर्दक्षिणा ॥ ३७ ॥ सवत्सा गौः ।

अश्वः ॥ ३८ ॥ वा । षट् ॥ ३९ ॥ षड्गु ।

द्वादश वा ॥ ४० ॥ गावः · शाखान्तरीया एते दक्षिणाविशेषाः ॥ अत्र
मानवसूत्रेऽवभृथे विशेषः आज्यशेषे समानीय स्रुक्स्रुवमाज्यस्थालीमादत्ते प्रति-
प्रस्थाता तुषनिष्काषमाग्नीध्रः स्रुवमध्वर्युरुरुं हि राजा वरुणश्चकारेति वाचयति[2]
शतं ते राजन्नित्यपः परादृश्य तिष्ठन्तोऽवभृथे प्रचरन्ति स्थावरासु तृणं प्रास्याप्सु
जुहोत्यग्नेरनीकमिति चतुर्गृहीतस्य स्रौवमाघारयत्यपबर्हिषः प्रयाजानुयाजान्यज-
त्याज्यभागाभ्यां प्रचर्य तुषनिष्काषस्यावदाय वरुणं यजेति शेषेणाग्नीवरुणौ स्वि-
ष्टकृत्स्थाने तद्वन्ता संतिष्ठतऽइति । काठके च वारुण्या निष्काषेणावभृथं
यन्त्युदञ्चं प्राञ्चमुरुं[3] हि राजेति द्वाभ्यां स्थावरमुदकं गत्वा तस्य पश्चादुपवि-
श्याग्नेरनीकमित्यप्स्वाघारमाघारयति तृणे दारुणि वा शेषेण चतुरोऽपबर्हिषः
प्रयाजान्यजत्याज्यभागाविष्ट्वा निष्काषस्यावदाय वरुणं यजत्यग्नीवरुणौ स्विष्टकृ-
द्धर्मेणोत्तरावनुयाजाविष्ट्वा[4] देवौ यजेति प्रथमस्य सम्प्रैष आयन्ति यथा पशुबन्ध
ऽइति । आपस्तम्बोऽपि पूर्णपात्रवर्जं पूर्ववदिष्ट्वा सम्स्थापयतीति पूर्णपात्रस्य
स्थाने सौमिकोऽवभृथश्चतुर्गृहीतान्याज्यानि वारुण्ये निष्काषेण तुषैश्चावभृथम-
भ्यवयन्ति तुषा ऋजीषधर्मं लभन्ते वारुणमेककपालमेके समामनन्ति नायुर्दा-
नानि न प्रजननमत्र[5] न साम गायति सर्वा दिशो ऽवभृथगमनमाम्नातम् नो-
दीचीरभ्यवेयादित्येके[6] यां दिशं गच्छेयुस्तथामुखाः प्रचरेयुरित्येके वहन्तीनां
स्थावरा अभ्यवेत्या[प]स्तदभावे यथाकाम्युदकान्ते स्तरणान्तां[7] वेदिं कृत्वा तस्यां

---

१) ? संधिवा २. २) See १०. ८. १५ ff. ३) ? °दंवन्धाचमु° २. ४) ? °न्तरा अनुयाजा इष्ट्वा २. ५) ? नार्युर्दानानि प्रजननमंत्रं २. ६) ? गमनयाम्नानं नादाचीर° २. ७) ? °स्तरणातां २.

हवींषि सादयत्यपि वा न वेदि[ः] शतं ते राजन्भिषजः सहस्रमित्यपो दृष्ट्वा-
यमभिष्ठितो वरुणस्य पाश इत्युदकान्तमभितिष्ठन्तोऽप:[1] प्रगाह्य तिष्ठन्तोऽवभृ-
थेन चरन्ति तृणं प्रहृत्य स्रौवमाघारमाघारयति[2] यदि वा पुरा तृणं स्यात्त-
स्मिन्जुहुयात् अग्नीदपस्त्रिः संमृड्ढीति सम्प्रेष्यत्यापो वाजजितो वाजं वः सरि-
ष्यन्तीर्वाजं जेष्यन्तीर्वाजिनीर्वाजजितो वाजजित्यायै संमार्ज्म्यपामन्नादामन्नाद्यायेति[3]
मन्त्रं संनमत्यग्नेरनीकमप आविवेशेति स्रुच्य[ाघार]माघारयति वागस्याग्नेयी-
त्यनुमन्त्रयते यजमानो लुप्येत प्रवरान् अपबर्हिषः प्रयाजानिष्ट्वाप्सुमन्तावा-
ज्यभागौ यजत्यप्स्वग्नऽइत्येषाप्सु भेषजीरित्यप्सुमन्तौ निष्काषस्यावदाय वरुण-
मिष्ट्वा कृत्स्नं निष्काषमवदायाग्नीवरुणौ स्विष्टकृदर्थे यजति नोत्तरं क्रियते ऽपि
वोपभृज्जुह्वावानीयापबर्हिषावनूयाजौ[4] यजति देवौ यजेति प्रथमं सम्प्रेष्यति
यजेत्युत्तरमिति । हरिस्वामिनापि दशाहुतिपक्षऽएतावन्तः पदार्थाः क्रियन्त इत्यु-
क्तमस्ति षडाहुतिपक्षे तु यथाश्रुतमिति[5] ज्योतिष्टोमान्तऽएव प्रकटीकृत्य
वक्ष्यते ॥ अवभृथादागत्य समिदाधानानन्तरमुभयोर्बर्हिर्होमः · प्रणीताविमोको
ऽध्वर्योः · राक्षसभाग उभयोः प्रतिप्रस्थातुर्मेषीकरम्भपात्रकरणपक्षे · पूर्णपात्र-
निनयनमध्वर्योः · वेद्योरन्तराले विष्णुक्रमा इत्याथर्वणे पठ्यते · वेदिद्वयस्याप्यवे-
क्षणमध्वर्योश्च ब्रह्मणः कर्मापवर्गाधानाद्येकस्मिन्नेवौत्तरवेदिके[6] · तदन्ते यजमा-
नस्य वपनम् · ततोऽग्नी गार्हपत्याहवनीयौ समारोह्याग्निहोत्रशालायामागत्य
गार्हपत्यं मथित्वा पौर्णमासेष्टिः सद्य एव कर्तव्या अथ केशश्मश्रूप्त्वा° पौर्ण-
मासेन यजतऽइति श्रुतत्वात् (२. ५. २. ४८) · तथा चापस्तम्बः पौर्णमासवदुन्द-
नादि[7] पूर्ववन्निवर्तनं सर्वं वा वापयेदित्युक्त्वाह अपि वा स्नात्वोप्त्वा केश-
श्मश्रुरण्योरग्नीन्समारोप्योदवसाय निर्मथ्य पौर्णमासेन यजतऽ[उत्सन्न]यज्ञो[8] ह
वाऽएष यद्वरुणप्रघासा न ह्यवकल्पते यदुत्तरवेद्यामग्निहोत्रं जुहुयादिति वाज-
सनेयकमिति · समाप्त्यनन्तरमग्निहोत्रार्थमुत्तरवेद्यामुद्धृत्य होमेऽयं दोषः समाप्तेः

---

१) ? द्दृष्ट्वाजयमिष्टिनोवरुणस्यपा इत्युदकांतमितिष्ठंतोपिः २. २) ? स्रोचमा° २. ३) ? वाजतित्मायै संमार्ज्यपामन्नादा अन्नाधायेति २. ४) ? वोपभ्युह्मामानीयापबर्हिषावभूपातौ २. ५) ? यथास्तुत° २. — See १०. ८. २१ and the paddhati pag. ४८७,१० ff. ६) ? °न्योश्च । ब्राह्मणः कर्मा°दिको २. ७) ? स्येब्दोन्दनादि २. ८) ?? यजेतेयज्ञो २. See २. ५. २. ४८.

प्रागग्निहोत्रकालश्चेदायाति[१] तदा उत्तरवेदाविवाग्निहोत्रं होतव्यम् · तदाहापस्तम्बः प्रणीते चेदग्निहोत्रस्य काल एतस्मिन्नेवाग्निहोत्रं जुहुयादेवमन्यत्रापि प्रक्रान्तऽइति पशुबन्धप्रकरणे ॥ ॥ पञ्चमी कण्डिका ॥५॥ ॥

अथ पद्धतिः ॥

ततो यथास्वमुभयोः पयस्ययोः करीरावापः ततः शमीपत्त्राणां च यथास्वं मेषमिथुनस्य च · अध्वर्युर्मारुत्यामुपस्तीर्य मेषमवदधाति प्रतिप्रस्थाता वारुण्यामुपस्तीर्य मेषीमवदधाति · प्रतिप्रस्थातुः करम्भपात्राणामभिघारः अध्वर्योराग्नेयादीनामभिघारः यथास्वं पयस्ययोर्वाजिनयोश्च । ततो यथाक्रमं यथास्वं हवींष्युद्वास्य कपालानि गणयित्वा प्राणदानं कुर्यात् · पूर्वं तूष्णीं करम्भपात्राणां प्रत्येकं प्राणदानं प्रतिप्रस्थाता करोति · ततोऽध्वर्युराग्नेयादीनां प्राणदानं करोति अग्निं गच्छ सोमं गच्छ सवितारं गच्छ सरस्वतीं गच्छ पूषणं गच्छ इन्द्राग्नी गच्छ वरुणं गच्छ स्वपयस्याञ्जनानन्तरमध्वर्युर्मेषस्य[२] प्राणदानं करोति वरुणं गच्छेति · ततो मरुतो गच्छेत्युक्त्वा [प्रतिप्रस्थाता स्वपयस्यायाः प्राणदानं कृत्वा][३] अनेनैव मन्त्रेण मेषीमनक्ति · ततः कं गच्छेत्येककपालस्याध्वर्युः ततः कायस्य घृतेनान्ताछादनम् · ततो वाजिनो गच्छेत्युभयोर्वाजिनस्याञ्जनम् । कपालाञ्जनाद्यात्मालम्भनान्ते विशेषः · अध्वर्युरुत्तरस्यां वेदौ आज्यस्थाल्यादीनि सर्वाणि हवींष्यासादयति · प्रतिप्रस्थाता स्थालीमासाद्य करम्भपात्राण्यासादयति ततो मारुतीम् · मेषमेष्योः समन्त्रककरणपक्षे प्रियाभ्यां धामभ्यां प्रियऽ सद आसीदतमित्यूहितेन मन्त्रेण पयस्ययोर्यथास्वमासादनम्[४] · काले यथास्वं मेषमेष्योरालम्भः · तत उभावुत्करे वाजिनयोरासादनं कुरुतः · ततो ध्रुवा असदन्निति वाजिनान्तानामालम्भः · प्रतिप्रस्थाता आज्यस्थालीस्थमाज्यमालभ्य करम्भपात्राण्यालभते · ततो जौहवादीनि वाजिनान्तानि · तत आत्मालम्भोदकालम्भावुभयोः । ततोऽध्वर्योरेव शकलादानादि · अग्नावग्निरिति होमान्तमग्निमन्थनम् · ततो होतृषदनस्थापनमुत्तरस्या

---

१) ? श्चेदैवादायाति २. २) ? °र्योर्मे° १. ३) deest in १., supplied by conjecture. प्रतिप्रस्थाता पयस्याया मरुतो गच्छ । मेषीं मरुतो गच्छ । अध्वर्युः कं गच्छ । B. ४) ? यथास्वयोर्यथास्वं आ° १.

वेदेः पश्चात् · ततो होतुरामन्त्रणम् · इध्मात्समिदादानमुभयोः अध्वर्योरिवाग्नि-भ्याऽ समिध्यमानाभ्यामनुब्रूहीति प्रैषः · सप्तदशेनेत्यवबाधनम् उभयोः प्रतिप्रण-वमिध्मप्रक्षेपः · समित्परिशेषणमुभयोः · आहवनीयोपवाजनं पूर्वाघारश्चोभयोः · संमार्गप्रैषोऽध्वर्योरिव अग्नी अग्नीत्संमृड्ढीति । ततः संमार्गेऽकृतऽएव प्रतिप्र-स्थाता पत्नीसमीपे गत्वा पत्नीं पृच्छति केन चरसीति स्वभर्तृव्यतिरिक्तेन केन पुंसा सह त्वं मैथुनसुखमनुभवसीति प्रश्नार्थः · सा प्रत्याहामुकेनेति · यदि लज्जया जारस्य नाम न गृह्णाति तदा प्रतिजारमेकैकं तृणं हस्तेन गृह्णाति · जारश्चेन्न भवति तदा भर्तृव्यतिरिक्तेन न केनापि चरामीति कथयति · पत्न्या प्रचिवचने कृते प्रतिप्रस्थाता पत्नीमुत्थाप्य स्वाहवनीयं प्रति नयन्प्रघासिन इत्यमुं मन्त्रं वाचयति · ततः प्रतिप्रस्थाता स्वाया ध्रुवायाः[1] शूर्पऽउपस्तीर्य सर्वाणि करम्भ-पात्राण्यवधाय ध्रुवाया एवोपरिष्टाद्भिरभिघार्य पत्नीहस्ते समर्पयति सा च शूर्पं मूर्धनि निदधाति · जुहोतीनामपूर्ववपक्षाश्रयणे उपस्ताराद्यभावः यथाश्रुतमेव तदा क[र्त]व्यम् · ततः प्रतिप्रस्थात्रा[2] बाहुगृहीता पत्नी ब्रह्मयजमानयोरुत्तरतो ऽग्नेश्च दक्षिणत इत्येवमन्तरालमार्गेण नीत्वा स्वयं च ब्रह्मयजमानयोर्दक्षिणतो गत्वा द्वयोरप्याहवनीययोः पूर्वमार्गेण नीत्वा चात्वालोत्करयोरन्तरालेन वेदिमध्ये प्रवेश्य[3] चात्वालवेद्योरन्तरालेन पूर्वेणोत्तरवेदिं गत्वा अथवा तीर्थेन प्रवेश्यो-त्तरवेदिमपरेण[4] वेद्योरन्तरालेन प्राङ्नीत्वा दक्षिणेऽग्नौ पुरस्तात्प्रत्यङ्मुखी तिष्ठन्ती शूर्पमवतार्य हस्तेनादाय यद्ग्रामे यदरण्यऽइति मन्त्रेण शूर्पेणैव जुहोति · अथवा जायापती प्रत्यङ्मुखौ तिष्ठन्तौ अनेनैव मन्त्रेण जुहुतो नैकाकिनी पत्नी · मूर्ध-स्थितेनैव शूर्पेण होम इति मन्वापस्तम्बौ · इदं प्रघासिभ्यो मरुद्भ्यो रिशादोभ्यः करम्भेण सजोषोभ्य इति त्यागो मन्त्रवर्णात् इदं मरुद्भ्य इत्येव वा प्रघा-सिनो मारुती गायत्रीति कात्यायनोक्तेः (अनुक्रमणी° १. २०) · ततो यजमानस्य मो षू ण इति जपः · दम्पत्योर्होमपक्षे उभयोरपि संचरः · तदुक्तमापस्तम्बसूत्रे अन्तरा वेदी°शूर्पेण[5] जुहुतो ऽपि वाध्वर्युः प्रतिप्रस्थाता [वा] जुहुयादन्वारभेयाता-

---

1) ? स्वीया ध्रु° १. स्वद्ध्रु° B. 2) Thus B. °स्थाता १. 3) प्रविश्य B.
4) प्रविश्य उत्त° B. pr. m. प्रवे° sec. m. and १. 5) See schol. at ५. ५. ११.

मितराविति · तत्राध्वर्योर्होमपक्षे करम्भपात्राणामध्वर्युरेव निर्वपणादिहोमपर्यन्तं कर्तृत्वं निःसंदेहम् · ततो येन मार्गेण पत्नी होमार्थमानीता तेनैव मार्गेण प्रतिनयन्प्रतिप्रस्थाताक्रन्कर्मेत्यमुं मन्त्रं पत्नीं वाचयति · प्रतिगमने ब्रह्माणमन्तरा यजमानाद्दक्षिणश्च नेयेति विशेषः · ततः पत्नी स्वस्थानऽउपविशति । ततः प्रतिप्रस्थाता[1] वेदिसमीपमागते आग्नीध्रोऽध्वर्युसंनहनेनोत्तरवेदिकमाहवनीयं संमृज्य प्रतिप्रस्थात्रासक्तेनेध्मसंनहनेन दक्षिणमाहवनीयं प्रकृतिवत्संमार्ष्टि · ततोऽञ्जलिकरणमुभयोः · उत्तराघार उभयोः · ध्रुवासमञ्जनं च · स्रुक्सादनमुभयोः · होतृवरणमध्वर्युरेव · प्रतिप्रस्थाता अध्वर्योः पश्चात्तथा तिष्ठति यथा होता तस्योभयोरंससंमर्शनं कर्तुं शक्नोति[2] द्वयोरप्यंसयोरुपरि सहैव प्रादेशं निदधातीत्यर्थः · ततस्त्रयाणां संमृष्टानामुपवेशनम् । ततः स्रुगादापनादि · उभावपि जुहूपभृतावादाय होमार्थं गच्छतः · आश्रावणं प्रेषणं च सर्वत्राध्वर्युरेव करोति　न प्रतिप्रस्थाता · उभयोर्नव प्रयाजाः　चतुर्थसप्तमयोः समानयनमुभयोः · अध्वर्योः सप्तमे निःशेषं समानयनम्　पृषदाज्यग्रहणपक्षे प्रतिप्रस्थातुरपि · त्यागास्तु वैश्वदेवपर्वण्युक्ता एव · उत्तमप्रयाजे　इदमग्नये सोमायाग्नये सोमाय सवित्रे सरस्वत्यै पूष्णऽइन्द्राग्निभ्यां वरुणाय मरुद्भ्यः काय देवेभ्य आज्यपेभ्यो वाजिभ्यः पश्च मम न तस्येत्यादि · प्रत्येत्य वाजिनान्तानां प्रयाजशेषेणाभिघारणमुभयोः · तत आज्यभागौ　सर्वत्र वषट्कारानन्तरमेव क्रमेण होमो　न सह　वषट्कृते जुहुत इति पुनःश्रवणात् (२.५.२.३१) · आज्यभागानन्तरं प्रतिप्रस्थाता स्रुक्पाणिरास्ते　स्रुचौ हस्ते धारयित्वोपविशतीत्यर्थः ।　ततोऽध्वर्युर्हविर्भिः प्रचरति[3]

अग्नयेऽनुब्रूहि अग्निं यज इदमग्नये १ सोमायानुब्रूहि[4] सोमं यज इद७ सोमाय २ सवित्रे उपांशु अनुब्रूहीति प्रथमस्वरेण सवितारं यज इद७ सवित्रे ३ सरस्वत्याऽअनुब्रूहि सरस्वतीं यज इद७ सरस्वत्यै ४ पूष्णोऽनुब्रूहि पूषणं यज इदं पूष्णे ५ इन्द्राग्निभ्यामनुब्रूहि इन्द्राग्नी यज इदमिन्द्राग्निभ्याम् । ततोऽध्वर्युप्रतिप्रस्थातारौ मेषौ व्यतिहरतः · ततोऽध्वर्युः स्वपयस्यायाः सकाशान्मेषीं निष्काश्य प्रतिप्र-

---

१) ? °स्थाता १.　२) Thus B. कर्त्तुं without शक्नोति १.　३) ? अध्वर्युर्हविर्भिः प्रंति १.　४) here, and in the following cases, °ब्रूहि १.

स्थात्रे समर्पयति प्रतिप्रस्थाता च मेषमध्वर्यवे समर्पयति · ततोऽध्वर्युर्मेषं वारु-
ण्यामवदधाति प्रतिप्रस्थाता मारुत्यां मेषीम् · ततोऽध्वर्युर्वरुणायानुब्रूहीत्युक्त्वा[1]
जुह्वामुपस्तीर्य वारुण्याः पयस्याया द्विरवद्यति · तत्र प्रथमावदानेन सहाखण्डं
मेषमवदधाति द्वितीयावदानेन सह वा · अत्र जुह्वां प्रक्षेपऽएव साहित्यम्
ग्रहणे अनियमः · पुनरुपरिष्टात्सकृदभिघार्यावदाने प्रत्यभिघार्यातिक्रम्याश्राव्य
वरुणं यजेत्युक्त्वा वषट्कृते जुहोति इदं वरुणाय · ततोऽध्वर्युः सव्यहस्ते
स्रुचौ कृत्वा दक्षिणहस्तेन प्रतिप्रस्थातुरुत्तरीयं वस्त्रमन्वारभ्य मरुद्भ्योऽनुब्रूही-
त्याह[2] · ततः प्रतिप्रस्थाता जुह्वामुपस्तीर्य मारुत्या द्विरवद्यति · तत्र प्रथमेन
वा द्वितीयेन वावदानेन सहाखण्डां मेषीमवदधाति जुह्वां सह प्रक्षिपतीत्यर्थः ·
तत उपरिष्टात्सकृदभिघार्यावदाने प्रत्यभिघार्यातिक्रामति · अथाध्वर्युरेवाश्राव्य
मरुतो यजेत्याह · वषट्कृते प्रतिप्रस्थाता जुहोति इदं मरुद्भ्यः । ततोऽध्वर्युः
काय उपांशु अनुब्रूहीत्याह[3] उपस्तीर्य सर्वं पुरोडाशं जुह्वामवधाय द्विरभि-
घार्योत्थायाश्राव्याह कम् उपांशु यजेति प्रथमस्वरेण [इदं काय] · ततो
ध्वर्युरेवाग्नये स्विष्टकृतेऽनुब्रूहीत्याह · उभयोर्जुह्वामुपस्तारः · यथास्वं सर्वहवि-
षामुत्तरार्धादेकप्रत्यवायमवदानम् · द्विरभिघार उभयोः अतिक्रमणं च · ततो
ऽध्वर्युरेवाश्राव्याग्निं स्विष्टकृतं यजेत्याह · वषट्कृते उभौ जुहुतः अपां स्पर्शः ।
एत्य स्रुचावासाद्य संचराभ्युक्षणमुभयोः · ततोऽध्वर्युरेव सर्वहविर्भ्यः प्राशित्रम-
वद्यति न प्रतिप्रस्थाता · प्राशित्रं ब्रह्मणे दत्त्वा इडापात्र्यामुपस्तीर्य सर्वहविर्भ्य
इडामवदाय प्रतिप्रस्थात्रे समर्पयति · प्रतिप्रस्थाता स्वपयस्याया द्विरुपर्यवदाया-
ध्वर्यवे इडां प्रत्यर्पयति · ततोऽध्वर्युर्द्विरभिघार्य आद्येभ्यः पञ्चभ्यो हविर्भ्यः षडव-
त्तब्रह्मयजमानभागचतुर्धाकरणान्करोति नैन्द्राग्नपयस्ययोः · ततो होतुरिडास-
मर्पणादि मयीदमिति जपान्तम् · इडामुपहूय पवित्रे समस्य पूर्वं मार्जनम् तत
इडाभक्षणादि उपहूय मार्जयन्तऽइति गृहमेधीयवदत्रापि श्रवणात् (२. ५. २. ४०)
सूत्रकृता तु केनाभिप्रायेण[4] न सूत्रितमिति स एव वेद · प्रतिप्रस्थाता स्ववे-
दिमपरेण स्वकीये पवित्रे समस्य मार्जनं करोति तत इडाभक्षः · प्रस्तरे

---

1) ॰ब्रूश्ही॰ १. 2) ॰ब्रूश्ही॰ १. 3) ? ॰ब्रूश्ही १. 4) केनाप्यभि॰ १.

पवित्रकरणमुभयोः भागपरिहारोऽध्वर्योः । दक्षिणां चावालोत्करावन्तरेण वेद्यामानीयालभते · ऊर्गसीत्यस्य स्थाने धेनुरसीति विशेषः अश्वोऽसीति वा षड्गवमसीति वा द्वादशगवमसीति वा · अस्य वरुणप्रघासपर्वणः समृद्ध्यर्थं धेनुं दक्षिणां ब्रह्मणे॰ इत्यादि · ब्राह्मणा इयं वो धेनुः प्रतिगृह्णीतेति अयं वो ऽश्वः इदं वः षड्गवम् इदं वो द्वादशगवमिति वा । वारुण्याः स्थापनमवभृथार्थम् · ततो हविःशेषानुदगुद्वास्योल्मुकसमासाद्युभयोर्धारानुयाजान्तम् · तत्र विशेषः · ब्रह्मन्प्रस्थास्यावः समिधावाधायाग्नीऽग्नीत्संमृड्ढीति प्रैषः · अग्नीध उभयत्र समिदाधानम् संमार्गश्च · ओं प्रतिष्ठतमिति ब्रह्मणोऽनुज्ञाया ऊहः · यजमानस्य समिदनुमन्त्रणं चेत् एते वामग्नी समिधौ ताभ्यां वर्धेथां चा च प्यायिषामित्यूहः · पृषदाज्योपभृतः पृषदाज्यं जुह्वामुपभृति च विभज्यानीयाज्योपभृतमधः कृत्वानुयाजा यष्टव्या इति स स्रुचोरेवाध्वर्युः पृषदाज्यं व्यानयतऽइत्यादिस्वश्रुत्यर्थः (२. ५. २. ४१)· आपस्तम्बसूत्रे तु विशेषः पृषदाज्यं जुह्वामानीय पृषदाज्यधानीमुपभृतं कृत्वा तेन नवानुयाजान्यजतीति · उभयोर्नवानुयाजाः · चतुर्थसप्तमयोः समानयनम् · प्रतिप्रस्थातुः स्वाज्येनैवानुयाजाः पक्षे तस्यापि पृषदाज्येन भवति · द्वितीयानुयाजप्रभृति यज-यजेति प्रैषः अविशेषश्रवणादिति सम्प्रदायः नेति श्रीअनन्तयाज्ञिकाः · त्यागास्तु वैश्वदेवपर्वण्युक्ताः · धारानुयाज उभयोः । अत्र नियमेनाध्वर्योरेव स्रुग्व्यूहनम् न यजमानस्य अग्नेः सोमस्य सवितुः सरस्वत्याः पूष्ण इन्द्राग्न्योर्वरुणस्य कस्य उज्जितिमिति अग्निः सोमः सविता सरस्वती पूषेन्द्राग्नी वरुणः कः तमपनुदन्तु यमयमिति अत्रोपांशुदेवतानामुपांशूच्चारणम् अन्येषामुत्तमस्वरेण · शूर्पं जुह्वा उपरि[1] निधाय प्रतिप्रस्थातुर्व्यूहनम् मरुतामुज्जितिम् मरुतस्तमपनुदन्तु यमयम् · अभ्युह्य परिध्यञ्ज[नाद्युभयोः · सहशाखया प्रस्तरहोमान्तमुभयोः · इदमग्नये सोमायाग्नये सोमाय सवित्रे सरस्व]त्यै[2] पूष्णऽइन्द्राग्निभ्यां वरुणाय मरुद्भ्यः काय देवेभ्य आज्यपेभ्योऽग्नये होत्राय वाजिभ्यो न मम · तृणप्रहरणप्रैषोऽनुप्रहरतमिति · तृणप्रक्षेपात्मालम्भोदकालम्भा उभयोः । तत उभयोर्वाजिनयागो व्याघारणान्तः · उभौ वाजिनशेषावेकत्र कृत्वा तन्त्रेण वाजि-

---

1) Thus १. जुह्वामुपरि B. 2) Thus B. [ ] deest in १.

नभद्भः · अध्वर्योरनन्तरं प्रतिप्रस्थाता उपक्वे भन्नेषु च । ततः संवदस्वेत्यादि अध्वर्योरेव परिधिपक्षे उभयोः · अध्वर्युसक्तस्यैवोपवेषस्य होमः · संस्रवाहुति-रुभयोर्धुरि निधानं च · अध्वर्योस्तिसृभिः स्रुग्भिः संस्रवहोमः · तत्र धुरि निधाने घृताच्य स्थ धुर्यौ पात सुम्ना स्थ सुम्ने मा धत्तेति तिसृणामपि धुरि निधानम् · पृषदाज्यग्रहणपक्षे प्रतिप्रस्थातुरप्येवम् · यजमानस्योत्तरां वेदिमालभ्य दक्षिणस्या आलम्भः · प्रतिप्रस्थाता स्ववेदिसमीप एवोपविशति । अध्वर्युरेव गार्हपत्यं गत्वादब्धाहुतिपर्यन्तं[1] पत्नीसंयाजादि कृत्वा सव्येनावृत्य दक्षिणाग्नौ आहुतित्रयं जुहोति · पिष्टलेपहोमपक्षे पूर्वदिनस्थापितपिष्टलेपात्सर्वानद्यतनपिष्टलेपैः सहा-ध्वर्युरेव जुहोति प्रतिप्रस्थातुरपराग्निहोमप्रतिषेधात् · विश्वेभ्यो देवेभ्य इत्ये-वोच्चार्य त्यागः । ततो वेदयोक्त्रविमोकादि समिष्टयजुरन्तम् · अध्वर्युरुत्थाय ध्रुवया त्रीणि समिष्टयजूंषि जुहोति देवा गातुविद इति प्रथमम् इदं वाताय यज्ञ यज्ञं गच्छेति द्वितीयम् इदं यज्ञाय एष ते यज्ञ इति तृतीयम् इदं यज्ञपतये · प्रतिप्रस्थाता त्रीणि समिष्टयजूंषि तूष्णीमेव जुहोति ॥ ॥ ततोऽवभृथगमनार्थं चात्वालसमीपे आगत्योरुं हीति (८. २३) यजमानं वाचयति ऽविधश्चिदिति ब्रूहीत्येवम् यजमानः स्वरेण पठति · ततो वारुणीनिष्कासं जुहूं स्रुवमाज्य-स्थालीं समिधं[2] शृतावदानं स्फ्यं बर्हिर्मुष्टिं परिधानार्थानि वस्त्राणि चादाय तूष्णीमेव नद्यादिस्थवहदुदके यत्स्थावरोदकं तत्प्रति यन्ति नद्यादिस्थस्थाव-रोदकाभावेऽन्यदुदकमभि प्रतिगमनम् · नात्र सामगानम् · अत्र स्रुक्स्रुवाज्यादि पूर्वसंस्कृतमेव ग्राह्यम् अनपवृक्तत्वादिति हरिस्वामिनः अवभृथस्यापूर्वत्वादेव संस्काराभाव इत्यपरे । तत्राध्वर्युर्बाहुगृहीतं यजमानं तूष्णीमेवोदकमध्ये प्रवेश-यति · ततः स्वयमप्सु प्रविश्य हस्तगृहीताया एवाज्यस्थाल्याश्चतुर्गृहीतमाज्यं जुह्वां गृहीत्वापः परिस्तीर्य समिधमाधाय तस्या उपर्यग्नेरनीकमित्यप्स्वाहुतिं (८. २४) जुहोति इदमग्नये · पुनश्चतुर्गृहीतं गृहीत्वा स्रुगादापनान्ते जुहूमादा-याश्राव्य समिधो यजेत्याह ततो यज-यजेति बर्हिर्वर्जितांश्चतुरः प्रयाजान्यजति समानयनाभावः · षडाहुतिपक्षे उत्तमप्रयाजत्यागे इदं वरुणाय देवेभ्य आज्यपेभ्य

---

1) See ३. ७. १७. 2) ? समित् १.

इतिं पञ्च ममेति दशाहुतिपक्षे चेदमग्नये सोमाय वरुणाय देवेभ्य आज्यपेभ्य इति। ततो जुह्वामाज्यस्थाल्या एवोपस्तीर्य निष्काषं द्विरवद्यन्वरुणायानुब्रूहीति प्रेष्यति · सकृदुपरिष्टादभिघार्यावदानि प्रत्यभिघार्याश्राव्य वरुणं यजेत्युक्त्वा वषट्कृते जुहोति इदं वरुणाय · पुनर्जुह्वामुपस्तीर्य सर्वनिष्काषं जुह्वां प्रक्षिपन्नग्नीवरुणाभ्यामनुब्रूहीति प्रेष्यति · तत उपरिष्टाद्द्विरभिघार्याश्राव्याग्नीवरुणौ यजेत्युक्त्वा वषट्कृते जुहोति इदमग्नीवरुणाभ्याम्। अयं षडाहुतिपक्षो वाजसनेयिनां नियमेन इतरेषां तु यजमानेच्छया दशाहुतिपक्षोऽपि भवति · तत्र बर्हिर्वर्जिताश्चत्वारः प्रयाजाः ततो द्वावाज्यभागौ प्रकृतिवद्ध्रुवायाः तदर्थं ध्रुवाप्यत्र प्रयोज्या ततो वरुणाग्नीवरुणयागौ ततो द्वावनुयाजौ तावपि विशेषानुपदेशात्प्रकृतिवदौपभृतेन तदर्थमुपभृदपि प्रयोज्या एवं दशाहुतयः · अत्र हरिस्वामिभाष्ये विशेष उक्तः एतदङ्गिरसामयनमिति (४. ४. ५. २०) एतद्दशाहुत्यात्मकमयनमङ्गिरसाम् अङ्गिरसः पुत्रपौत्राणां मनुष्याणाम् अत्रापि संस्कृतैरेवाज्यपुरोडाशमात्रैरपो गत्वा चतुर्गृहीतं गृहीत्वा जुह्वामुपभृति ध्रुवायां च क्रमेण प्रकृतिवत्त्रीणि चतुर्गृहीतानि गृहीत्वा तिष्ठन्त एवाङ्गप्रधानसाधारणानग्निसंस्कारान्परिधिपरिवाजनसंमार्गानप्सु कुर्वन्तो हस्तधृतैरेवाज्यहविर्भिश्चरेयुस्तत्रापि चेध्मसामिधेनीहोत्रार्षेयवरणानि न कुर्युः शाखान्तरे तदभावस्य स्पष्टत्वात् अत्रापि (४. ४. ५. १३) तमेतया च समिधैतया चाहुत्या समिन्द्धे समिद्धे देवेभ्यो जुहवानीतीध्मसामिधेन्यर्थस्यान्यथासिद्धत्वादिति · तेनास्मिन्पक्षे प्रकृतिवद्ध्रौवेणाज्यभागौ औपभृतेनानुयाजौ प्रयाजप्रधानयागादिकं तूक्तप्रकारेण भवति। अनयोः पक्षयोर्यजमानेच्छया एकं कं चन पक्षं कृत्वा निष्काषस्थालीमवभृथेति (३. ४८) मन्त्रेणोदकमध्ये मज्जयति · ततः पत्नीयजमानौ मज्जनमकुर्वन्तौ स्नानं कुर्वाते अन्योऽन्यं पृष्ठशोधनं क्षालनं कुरुतः · ततोऽन्ये वाससी परिदधाते · पूर्वपरिहिते वाससी प्रक्षाल्य पञ्चानामृत्विजां मध्ये यस्मै दातुमिच्छति तस्मै दद्यात्। ततस्तूष्णीमेव प्रत्यागत्य चात्वालोत्करावन्तरेण प्रविश्याहवनीये देवानाᳬ समिदसीति (८. २७) मन्त्रेणैकां समिधमादधाति पत्नी च तूष्णीं गार्हपत्ये समिधमादधाति।

ततो बर्हिर्होम उभयोः · प्रणीताविमोकरात्तसभागावध्वर्योरेव[१] · पूर्णपात्रनि-नयनं चाध्वर्योरेव । वेद्योरन्तराले प्राञ्चो विष्णुक्रमाः अन्तरा वेदी विष्णुक्रमा इत्याथर्वणे दर्शनात् · एकस्या उत्तरस्या वेदेरस्यै प्रतिष्ठायै इत्यवेक्षणम् औत्त-रवेदिकाह्वनीयस्यैव सं ज्योतिषेति (२. २५) केचित् द्वयोरपि वेद्योर्द्वयोरप्य-ग्न्योरवेक्षणमिति युक्तम् · ब्राह्मणं तर्पयितवाऽइत्येव प्रैषः एकस्यैव तर्पणम् वचनं विना आराडुपकारकाङ्क्षस्य प्रतिप्रस्थातुरप्राप्तेः · औत्तरवेदिकऽएवाह्वनीये उपस्थानमाहुतिर्वा समिदाधानं चेति । ततः पाक्षिकं वपनम् · शतब्राह्मणासं-कल्पः । ततो गार्हपत्याह्वनीयौ समारोह्य स्वस्थानं गत्वा निर्मथ्य पुनरुद्धृत्य पौर्णमासेष्टिं कृत्वा पत्न्यादिकर्म वैश्वदेवादि नित्यं च कुर्यात् ॥ ॥५॥

इति पञ्चमस्य पञ्चमी कण्डिका ॥ ॥

अथ तृतीयं पर्व चातुर्मास्यानां साकमेधाख्यम् ॥

कार्त्तिक्याᳫ साकमेधा द्व्यहम् ॥१॥ कार्त्तिकीशब्देनात्र गौण्या वृत्त्या प्रतिपदुच्यते ऋतुमुखेऽऋतुमुखे चातुर्मास्यैर्यजतऽइत्युक्तत्वात् प्रतिपदश्चऽर्तुमु-खत्वाच्च । साकमेधा इति तदवयवभूतयागबहुत्वापेक्षं नाम्नि बहुवचनम् नाम च संव्यवहारार्थम् मासᳫ साकमेधैरिति साकमेधा दर्शपूर्णमासवदिति (२४. ४. ३१) च । ननु पूर्वेद्युः पूर्वाह्णऽइत्याद्युक्त्वा (२) प्रातर्हुत्वेति (३५) वक्ष्यमाणपर्यालोच-नयैव द्व्यहकालतासिद्धेः न वाच्यम् द्व्यहमिति · उच्यते · पूर्वेद्युः क्रियमाणाना-मानीकवत्यादीनामपि साकमेधसंज्ञा यथा स्यात् न महाहविष एव एतदर्थं द्व्यहमित्युक्तम् ।

पूर्वेद्युः पूर्वाह्णेऽग्नयेऽनीकवते पुरोडाशः ॥२॥ अष्टाकपालः · पूर्वेद्युः महाहविषः कालात्प्रतिपदः पूर्वदिने पञ्चदश्याम् त्रिधाविभक्तस्याह्नः पूर्वभागे · कार्त्तिक्यां पौर्णमास्यां पूर्वाह्णमध्याह्नसायाह्नेषु तिस्र इष्टयो विधीयन्तऽइति हरि-स्वामिनः । अग्नयेऽनीकवते अग्निमनीकवन्तम् अग्नेरनीकवतः अग्निरनीकवानिति विभक्तयः · चतुर्धाकरणादि सर्वं भवति · अत्र च प्रथममग्नी समारोह्योदवसाय

१) प्र॰कोऽध्वर्योः रा॰गश्च B. प्र॰कः । रा॰गाव॰ १.

निर्मथ्यानीकवदिष्ट्यर्थमित्यग्नी विहृत्येष्टिः कर्मापवर्गान्ता कर्तव्या ।

मरुद्भ्यः सांतपनेभ्यो मध्यन्दिने चरुः ॥३॥ ततः पुनः सांतपनेष्ट्यर्थमग्नी विहृत्य · मध्यन्दिनकालस्यातिसूक्ष्मत्वात्प्रधानयागमात्रं तत्र कर्तव्यम् · अथवा मध्यन्दिनशब्देन त्रिमुहूर्ता[त्मकालस्योक्तत्वा]त्सकलस्याप्यनुष्ठानम् अनेकदेवतत्वाच्चतुर्धाकरणाभावः अन्यत्सर्वं भवत्येव ।

समिष्टयजुरन्तं भवति ॥४॥ सांतपनीयाकर्म · गृहमेधीये (२.५.३.५) सैव स्तीर्णा वेदिर्भवतीति सांतपनीयाबर्हिषा स्तीर्णैव वेदिः श्रूयते अतोऽत्र बर्हिर्होम उत्क्रष्टव्यः · तदुत्कर्षे च तत ऊर्ध्वस्य प्रणीताविमोकादिकर्मापवर्गान्तस्यापि उत्कर्ष एव युक्तः क्रमानुरोधात् ।

बर्हिरनुप्रहरणवर्जं वा ॥५॥ अथवा बर्हिरनुप्रहरणं बर्हिर्होममात्रं वर्जयित्वान्यत्सर्वं ब्राह्मणतर्पणप्रैषतर्पणकर्मापवर्गान्तं समापनीयम् · आपस्तम्बकठमानवसूत्रेषु चायमेव पक्ष उक्तोऽस्ति । अत्र केचिदाहुः · सांतपनीयाᳵ सᳵस्थाप्येति (३१) सूत्रे गृहमेधीयान्ते [सं]स्थायुक्तपदार्थविधानाद्ब्राह्मणतर्पणं स्थाप्यते तदर्थः प्रैषोऽपि तदुत्तरकालीनत्वात्कर्मापवर्गा च · एवं च सति पदार्थचतुष्टयस्योत्कर्षो भवति बर्हिर्होमः ब्राह्मणतर्पणप्रैषः ब्राह्मणतर्पणम् नमः कृतायेति च । केचिच्च बर्हिर्होमवर्जितं प्रणीताविमोकादि नमः कृतायेत्यन्तं सर्वं कुर्वन्ति अपरे तु बर्हिर्होमादि सर्वमपि आपयन्ति ।

इध्मस्थाने शकलपरिधि निधाय मरुद्भ्यो गृहमेधिभ्यः सायं चरुः पयसि ॥६॥ इध्मस्थाने प्रणीताभ्योऽपरस्यां दिशि शकलपरिधि निधाय अनियतसंख्यान्पलाशादियज्ञियवृक्षशकलान्प्राकृतान्परिधींश्च सादयित्वा · पयसि श्रपणसाधनभूते । तस्यावृत्सैव स्तीर्णा॰ निदधतीति श्रुतेः (२.५.३.५) · अत्र हरिस्वामिनः · तस्य गृहमेधीयस्यावृत् परिकर्म वक्ष्यतऽइति शेषः · सैव स्तीर्णा वेदिरिति सांतपनीयवेद्यां गृहमेधीयं विदधत्सांतपनीयातन्त्रमध्ये गृहमेधीयविधिं दर्शयति एवं हि स्तीर्णायामेव वेदौ शक्यते गृहमेधीयं कर्तुम् वेदिबर्हिर्न हूयतऽइति तस्मिंश्चाहूयमानेऽपरेऽपि पदार्था उत्कृष्यन्ते ततश्च सामर्थ्यात्तन्त्रमध्ये विधानमेतदापद्यते · न च सांतपनीयाबर्हिःप्रहरणमात्रप्रतिषेध एवायं विज्ञायते प्रतिषेधाभावात्

अस्य च विधानस्यान्यथाप्युपपत्तेः अपवृक्तायाश्च समाप्ते सांतपनीये अचोदितत्वप्रसङ्गात् · तस्मात्सांतपनीयतन्त्रमध्ये गृहमेधीयं विधीयते · ततः सांतपनीयतन्त्रमेव गृहमेधीयस्य प्रसङ्गादुपाकरोतीति सामवायिकमात्रस्य निर्वापादेरावृत्तिः नारादुपकारकस्याघारादेर्नैव सामवायिकस्यापि लभ्यमानस्य वेद्यादेरिति प्राप्ते वचनात् (१३) यावदुच्यते तावद्भवत्येव सामवायिककर्मकम् इतरद्धा · जैमिनिना तु आज्यभागयोर्नैर्गुण्यात्पुनःश्रवणार्थत्वाच्चापूर्वत्वं[1] गृहमेधीयस्याभ्युपगतम् (१०. ७. ३१) अपूर्वतां तु दर्शयेद्ग्रहणस्यार्थवत्त्वादिति[2] न त्वेवं सति[3] प्रसङ्गकृतानामावृत्तिनिवृत्त्यर्थमर्थवादत्वमिति[4] नापूर्वतां कुर्यात् अपि चापूर्वे सति ग्रहणादयोऽपि हविर्धर्मा अत्र न स्युः तस्मात्प्रसङ्गऽएव प्राप्ते पुनर्वचनमावृत्त्यर्थमित्येतदेव युक्तम् । अत्र च पूर्वमिध्मस्थाने शकलपरिधिनिधानम् · आहवनीये ऽग्न्यन्वाधानमिति केचित् · शाखाछेदनं संनमनान्तम् पवित्रबन्धनम् तथैव यजमानसम्बन्धिनीनां गवां वत्सानामपाकरणम् · चतुरासनम् ब्रह्मोपवेशनम् · पात्रासादनादि · अत्राग्न्यन्वाधानब्रह्मवरणव्रतग्रहणप्रणीताप्रणयनपरिस्तरणादक्षिणासादनानामभावः सांतपनीयातन्त्रमध्यपातात् · आज्यनिर्वापानन्तरं हस्तगृहीतऽएव पवित्रवति चरुपात्रे यावत्स्वं गा दोहयित्वा तण्डुलानामीक्षणं प्रक्षालनं च कृत्वा दुग्धमध्ये संवापं कृत्वा घर्मोऽसीत्यधिश्रित्य पर्यग्निकुर्यात् । अत्रापवृक्तानां पात्रादिद्रव्याणामासादनप्रोक्षणादिसंस्कारा भवन्ति · कुतः · स्थालीपक्षे तदेव प्रतिवेशमाज्यमधिश्रयति (२. ५. ३. ११) स्थाल्यामाज्यमासादयतीति (०११) आज्यस्य चरुसंनिकृष्टाधिश्रयणविधिपरे वाक्ये आसादनक्रमविधिपरे वाक्ये [चा]धिश्रयणादिसंस्कारस्य दर्शनात् तथा स्रुवं च स्रुचं च संमार्ष्टीति (०११) संमार्गावसरविधिपरे वाक्ये स्रुक्स्रुवस्यापि संस्कारदर्शनात् · दक्षिणादानं तु न भवति तन्त्रान्तःपातात् · होत्रामन्त्रणवरणे तु पृथग्दक्षिणाभावेऽपि सोमान्तर्भूतेष्टिपशुष्विवाविरुद्धे । अत्राहापस्तम्बः मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायम् यत्सांतपनस्य बर्हिस्तद्गृहमेधीयस्यापि वा त्रेधा बर्हिर्भवति न सामिधेनीरन्वाह न प्रयाजा इज्यन्ते नानुयाजाः अयज्ञुष्केण वत्सानपाकृत्य पवित्रे गा दोहयति

[1] ? °योर्निर्पयन्पु° २. [2] Thus Jaimini. च दर्शयेद्गुण° २. [3] ? नचेवं सति २.
[4] ? °दत्वे सति २.

स वै[1] खलु पर्णशाखया वत्सानपाकृत्य पवित्रवति संदोह्य यथैतदमावास्यायां क्रियते तं चरुं श्रपयतीत्येके<sup></sup>ऽग्नीनन्वाधाय वेदं कृत्वाग्नीन्परिस्तीर्य प्रक्षालनादि कर्म प्रपद्यते यथार्थं पात्राणि प्रयुनक्ति स्थालीं कपालानां स्थाने निर्वपणकाले चतुरो मुष्टीन्निरुप्य बह्विवावपति[2] कपालानामुपधानकाले ध्रुवासीति[3] मन्त्रं संनमति पिष्टानामुत्पवनकाले तण्डुलानुत्पुनात्यधिश्रयणकाले प्रातर्दोहवत्सर्वा यजमानस्य गा दोहयित्वा तस्मिञ्छ्रपयति सम्प्रैषकाले यदन्यदिध्माबर्हिषस्तत्सम्प्रेष्यतीति · मानवसूत्रे हुते सायमग्निहोत्रे मरुद्भ्यो गृहमेधिभ्यः स सर्वासां दुग्धऽओदनं श्रपय[ती]ति · सायमिति काठके · मरुद्भ्यो गृहमेधिभ्योऽपराह्णे चरुरिति शाखान्तरे · माध्यन्दिनानां त्वग्निहोत्रहोमात्प्रागेव गृहमेधीया तदन्ते यवाग्वैतां रात्रिमग्निहोत्रं जुहोतीति (२.५.३.१६) श्रुतत्वात् तदन्तऽएव यवाग्वाग्निहोत्रहोम इति सूत्रकरणाच्च (३४)। अत्र हरिस्वामिनः शाखया यथा कथाचिद्वत्सान् तूष्णीमपाकृत्य (२.५.३.४) पवित्रवति पात्रे संदोह्य (०४) तत्राग्रे मातृभिर्वत्सान्समवार्जन्ति (०१६) यवाग्वैतां रात्रिमग्निहोत्रम् (०१६) यदि बहुरोदनः स्यादिति (०१६) वाक्यशेषेभ्यो यावत्स्वं गाः दोहयेत् तदनुरूपांश्च व्रीहीन्निर्वपेदिति गम्यते · तस्मिन्पयसि चरुं श्रपयति न पायसम् चरुरु हैवेति (२.५.३.४) पायसत्वाशङ्कां निवर्तयति · मानवे पलाशशाखया सर्वान्वत्सानपाकरोतीति · एवमन्येष्वपि सूत्रेषु। शकलानि च पूर्वापूर्वाण्येव विधीयन्ते नेध्मस्थाने[4] इध्मकार्यस्य सांतपनीयातन्त्रान्तःपातित्वेनैव सिद्धत्वात् · गृहमेधीयस्यापूर्वत्वपक्षे तु इध्मस्य प्राप्तिरेव नास्ति कुतस्तत्स्थानापत्तिः शकलानाम् अत एव तेषामासादनप्रोक्षणादेरपीध्मधर्मस्याभावः · शकलनिधानमप्येतदपूर्वमेव न प्राकृतम् तेनाप्रैषमेव तूष्णीं कर्तव्यम्। इदानीमिदं पयः सांनाय्यधर्मकम् उताधर्मकमिति · तत्र सूत्रकारः स्वयमेव पक्षं परिगृह्णाति ·

सांनाय्यवत् ॥७॥ तदेतत्पयः सांनाय्यवत् सांनाय्यधर्मकं भवति · कुतः प्रदेयत्वात् चरौ प्रदीयमाने पयोऽपि देवतोद्देशेनैव प्रदीयते · अतो धर्मवद्भवतीति प्राप्तऽआह ·

१) ? सावे २. २) ? विह्ववाव॰ २. ३) ? कपालामुपधानि ध्रुवोऽसीति २. – See २.४.२७. ४) ? नेध्मास्थाने २.

तूष्णीं वैकचोदनात् ॥ ८ ॥ वा पूर्वोक्तपक्षनिरासे · एतत्पयस्तूष्णीमेव संस्कर्तव्यम् न सांनाय्यवत् समन्त्रकं तद्धर्मकं वा · कुतः एकेनात् यतः कारणादियमेका चोदना अथ मरुद्भ्यो॰ पवित्रवति संदोह्य चरुं७ श्रपयतीति (२. ५. ३. ४) एका च सती नोभे विकर्तुमर्हति · तस्मादधर्मकमेवैतत्पयः · तथापि यावन्तो वाचनिकाः सांनाय्यधर्मास्तावन्तस्तूष्णीं कर्तव्याः शाखया वत्सानपाकृत्येत्यादयः · तथा च शाखान्तरे अयजुषा वत्सानपाकरोतीति ।

श्रुतेश्च ॥ ९ ॥ केषांचिद्धर्माणां पुनः श्रुतेश्चाधर्मकमेवैतत्पय इत्यवसीयते · सांनाय्यधर्मकत्वे तु सर्वधर्माणां प्राप्तेः केषांचित्पुनःश्रवणं न स्यात् अतोऽप्यधर्मकमेवैतत्पय इति ।

अपयित्वाभिघार्योद्वास्य शरावयोरुद्धरति ॥ १० ॥ ततस्तं चरुं अप॰द्वास्य प्राणादानानन्तरं शरावयोः द्वेधा विभज्य उद्धरति ।

पात्र्योर्वा ॥ ११ ॥ मह्रत्योर्निम्नयोः पात्र्योः । अथ द्वे पिशीले वा पात्र्यौ वा निर्णेनिक्तति तयोरेनं द्वेधोद्धरन्तीति वचनात् (२. ५. ३. ६) । निर्णेजनं संमार्ग उच्यते · स च गृहमेधिपिशीलकस्यैव प्राप्नोति न सौविष्टकृतस्य शेषकार्यार्थत्वेन धर्माणामप्रयोजकत्वात्[1] परं तु वचनादन्ये[2] क्रियन्ते · अथ निर्णेनिक्तति[3] प्रक्षालयतीत्यर्थ इति माधवः तच्च सामर्थ्यपरिप्राप्तत्वान्नोपनिबद्धम् ।

आसेचने मध्ये कृत्वा सर्पिरासिञ्चत्याज्यार्थम् ॥ १२ ॥ आसेचने घृतासेकार्थमर्तौ तयोः शरावस्थयोः पात्रीस्थयो[र्वा] मध्ये कृत्वा तत्र सर्पिः संस्कृतं घृतमाज्यभागोपस्तरणाद्याज्यकार्यार्थमासिञ्चति ।

यावदुक्तमतः ॥ १३ ॥ यतः कारणात् सैव स्तीर्णा वेदिरित्यादिना (२. ५. ३. ५) सांतपनीयातन्त्रमध्य एव गृहमेधीयं विधीयते अत एव कारणात् यावदुक्तं भवति यावदुच्यते तावदेव भवति न न्यूनाधिकं चोदकप्राप्तम् । अन्ये त्वेवं व्याचक्षते · येन प्रकृतितः प्राप्तावप्याज्यभागौ पुनर्विधीयेते तेनाज्यभागसदृशमारादुपकारकमन्यदत्र न भवति तद्यथा कुक्कुटाहननस्फ्योदकप्रहरणाघा-

---

1) ? कृतस्याशेषकार्यार्थनधर्मा॰ २. 2) ? वचनाद्वयोः क्रियन्ते २. 3) निर्णेजयति २.

रप्रयाजानुयाजपत्नीसंयाजदक्षिणाग्निहोमपूर्णपात्रब्राह्मणतर्पणकर्मापवर्गादिकम् द्रव्यसंस्कारास्तु भवन्त्येव प्रतिपत्तयश्च ।

स्तरणयजुषा वेदिमभिमृश्य तूष्णीं वा कृतत्वात् परिधिपरिधानम् ॥ १४॥ वेदिस्तरणयजुषा (२. २) तूष्णी वा · अतः पूर्वमोदनौ स्रुक्स्रुवौ चादाय वेदिसमीपे आगत्य तूष्णीमेव वेदिमभिमृश्य प्रागासादितप्रोक्षितमेकमिध्मकाष्ठं प्रस्तरं चादायाहवनीयेक्षणान्तं परिधिपरिधानं मन्त्रेण करोति · प्रथमं परिधिमुपस्पृश्य तस्येध्मस्य निरसनम् नाहवनीयेऽआधानम् तदर्थसिद्धत्वात् ।

शकलान्याधाय मत्योद्धृतावासादयति ॥ १५॥ मत्या इच्छासंख्यानि यज्ञियवृक्षशकलान्याहवनीये आधाय सूर्यस्त्वेति जपान्ते आहवनीये प्रक्षिप्य शरावयोः पिशीलकयोर्वा उद्धृतावोदनावासादयति · अतिक्रमेणैवासादनम् स्रुवासादनं तु वचनात् सम्प्रदायकारादयस्तु पूर्वं स्रुवासादनं तत ओदनयोरासादनमित्याहुः · सौविष्टकृतस्यौदनस्यानासादनम्[1] शेषकार्यार्थत्वेनाप्राप्तेः अतश्च वचनाभावे पशौ त्र्यङ्गानां प्राणदानासादनालम्भा न भवन्ति शेषकार्यार्थत्वादेव । अत्रोभयोरासादनमन्त्रस्योक्तः प्रियाभ्यां धामभ्यां प्रियेऽ सद आसीदतमिति आज्यौदनयोरुभयोरपि मन्त्रस्य प्रयोजकत्वात् ।

स्रुक्स्रुवं च संमार्ष्टि ॥ १६॥ अत्युक्तेऽवसरे · स्वशाखायामोदनयोः सर्पिरासेकानन्तरं स्रुक्स्रुवसंमार्जनमुक्तम् (२. ५. ३. ६) ।

अनुद्वास्य वा संमार्जनम् ॥ १७॥ वा अवधारणे · काण्वपाठाच्चरुमनुद्वास्यैव चोदकप्राप्ते काले स्रुक्स्रुवसंमार्जनं कर्तव्यम् · अतश्च प्राकृतऽएव काले स्रुवजुहूमेक्षणपिशीलकद्वयेडापात्रीणां संमार्गः ततः पत्नीसंनहनादि ।

आज्यभागाभ्यां चरति ॥ १८॥ आसादनानन्तरमात्मालम्भोदकस्पर्शौ कृत्वाहवनीयोपवाजनाग्निसंमार्गौ च कृत्वा समन्त्रकं होतृवरणं कर्तव्यमिति कर्कादिमतम् · हरिस्वामिमते त्वेतानि न भवन्ति सांतपनीयाकृतानामेवात्र प्रसङ्गात् · होत्रामन्त्रणवरणे तन्त्रमध्यपातेऽपि भवत एव होतुरपवृक्तत्वादित्यपरे । ततोऽध्वर्युराज्यभागाभ्यां चरति वचनात् · तत्प्रकारमाह ·

---

१) ? ॰ स्यौदनादासा॰ २.

अाग्नेयं दक्षिणात् ॥१९॥ दक्षिणौदनस्थात्सर्पिरासेचनात् घृतपूर्णाद्गर्तात् चतुराज्यमवदायाग्नेयमाज्यभागं करोति · अत्र च स्रुवं स्रुचं चाददानेनानुवाचनं कार्यम्[1] अत्रापि वषट्कारानन्तरमेव होमो न तु वषट्कारेण सह पुनर्वचनात् ।

सौम्यमुत्तरात् ॥२०॥ आज्यभागं यजति ।

गृहमेधिस्विष्टकृतौ चाज्यभागवत् समावदानौ ॥२१॥ गृहमेधियागस्विष्टकृद्यागौ च यथाक्रममाज्यभागवत् [दक्षिणादुत्तराच्च] भवतः · तुल्यसंख्यावदानौ स्विष्टकृत्यप्यवदानद्वयमेवावदेयम् उपरिष्टात्सकृदभिघारश्च इत्यर्थः · स्थालीपक्षे एकप्रत्यवायात् स्विष्टकृदित्ययं पक्षो भवति [अत्र तु] एकप्रत्यवायात् स्विष्टकृत इत्यस्यापवादः (१.१.१) पञ्चावत्तिनां तु त्रिस्त्रिरवदानमुभयत्र भवति ।

अप्रत्यभिघारणं च ॥२२॥ प्रधानयागावदानान्तरं स्विष्टकृदर्थावदानानन्तरं चावदाय यदवदानस्थानयोः प्रत्यभिघारणमुक्तम् तन्न · न संचराभ्युक्षणम् न प्राशित्रम् न चतुर्धाकरणम् · इडावदानं षडवत्तब्रह्मयजमानभागावदानं च दक्षिणादोदनात् अथेडामेवावद्यति न प्राशित्रमिति श्रुतेः (२.५.३.१०) · इडाग्रहणं भागानामुपलक्षणम् चोदकानुवृत्तेः प्राशित्रस्य तु वचनात्प्रतिषेधः · न यजमानभक्ष इत्यापस्तम्बः । एवं पिशीलकपक्ष उक्तः अधुना स्थालीपक्षमाह ·

अनुद्धृत्य वा ॥२३॥ विकल्पे · अथवा चरुं पिशीलकयोः पात्र्योर्वा अनुद्धृत्यैवासादनादि स्विष्टकृदन्तं करोति । तत्र विशेषमाह ·

सहितमाज्यमधिश्रयति ॥२४॥ अनुद्धरणपक्षे चरुसहितमेव चरुसंलग्नमेवाज्यमधिश्रयति · आहवनीय एवेत्यर्थः ।

उद्वास्योभयमासादयति ॥२५॥ चरुमभिघार्योद्वास्य प्राणदानं च कृत्वा उभयम् आज्यस्थालीं चरुं च वेदौ आसादयति · अस्मिन्पक्षे आज्यस्थाल्या एव चतुर्गृहीताभ्यामाज्यभागौ गृहमेधिस्विष्टकृद्यागौ च प्रकृतिवद्द्विसमावदानौ · प्रत्यभिघारणमपि भवति स्विष्टकृति द्विरभिघारणं च · अन्यत्सर्वं पूर्वपक्षवत् · पञ्चावत्तिनां तु प्रकृतिवदुभयत्र पञ्चावत्तता कार्या ।

न प्राशित्रम् ॥२६॥ अत्रोभयोः पक्षयोः प्राशित्रं न भवति उभयत्र

---

1) अत्र वस्तुवंद्धस्त्रेनाददानेना° २. See २.५.३.६.

अथेडामेवावद्यति न प्राशित्रमिति श्रुतेः (२.५.३.१० १६) · अत्र हरिस्वामिनः इडामेवावद्यतीत्ययमनुवादः अप्रासङ्गिकत्वाद्धि तस्याः प्राप्तमेवावदानम् न प्राशित्रमिति तु प्रासङ्गिकप्रतिषेधः ततश्च ब्रह्मभागादयोऽप्रतिषिद्धत्वादिडाव-द्वद्देया इति ।

इडान्तं भवति ॥२७॥ एतद्गृहमेधीयम् न्यायस्य प्रायणीयखण्डे[1] वक्ष्यमाणत्वात् ।

पूर्वं मार्जनमुपहूय ॥२८॥ पूर्वे पक्षे इडामुपहूय प्रथमं मार्जनं सर्वैः कार्यम् [ततो] भक्षणमिति · द्वितीये तु पक्षे भक्षणानन्तरमेव मार्जनम् पूर्वं इति विशेषोपादानात् ।

प्राश्नन्ति युक्ताः ॥२९॥ ब्रह्माद्याश्चत्वार ऋत्विजः इडां प्राश्नन्ति · युक्तग्रहणं यजमानस्येडाप्राशनवारणार्थम् ।

यजमानगृह्या हविरुच्छिष्टाशा ऋत्विजो ब्राह्मणाश्चान्ये बहुश्चेत् ॥३०॥ य०-ह्या हृंशाः ये कृतोपनयनास्ते तमोदनं शरावोद्धृतम् स्थालीपक्षे स्थालीस्थितं प्राश्नन्ति अनुपनीतस्य शूद्रतुल्यत्वेनाग्न्यधिश्रितहविःशेषभक्षणेऽधिकाराभावात् । बहुश्चेत् ओदनः स्यात् ।

अरिक्तां स्थालीं निदधाति ॥३१॥ अशेषां स्थालीं सुगुप्ते प्रदेशे क्वचि-त्स्थापयति । पूर्णदर्वायेति (२.५.३.१६) पूर्णा दर्वी यस्मिन्कर्मणि तत्पूर्णदर्वम् अर्शआदित्वान्मत्वर्थीयोऽच्प्रत्ययः ।

सांतपनीयां संस्थाप्य ॥३२॥ ततो गृहमेधीयाशेषसमाप्त्यनन्तरं सांप्य वक्ष्यमाणां कुर्यात् · सांतपनीयासमाप्तिश्च केषांचिद्बर्हिर्होममात्रेण केषांचिद्बर्हि-र्होमब्राह्मणतर्पणप्रैषब्राह्मणतर्पणकर्मापवर्गाधानरूपपदार्थचतुष्टयेन केषांचिद्ब-र्हिर्होमादि-नमः-कृतायेत्यन्तेन समस्तेनेति · [अथ ये बर्हिर्होममात्रेण] तेषां गृहमेधीयायां ब्रह्मवरणं दक्षिणादानमाहवनीयकल्पनमुपवाजनसंमार्गादि सर्वं पुनर्भवति [इतरेषाम्] एते न भवन्ति ।

प्रातर्वा शेषभावात् ॥३३॥ वा अवधारणे · प्रातः प्रतिपद्येव दर्विहो-

[1]) See ७. ५. २२ ff.

मानन्तरं सांतपनीयां संस्थापयेत् नेदानीम् · कुतः शेषभावात् गृहमेधीयाशेषस्य दर्विहोमस्य विद्यमानत्वात् ततो दर्विहोमे कृते गृहमेधीयासमाप्तिः प्राप्नोति तदन्ते च सांतपनीया समापनीयेति · अतश्च दर्विहोमस्यापि सांतपनीयातन्त्रम-ध्यपातित्वात्परतन्त्रोत्पत्तयो जुहोतिमात्रा इति (६. १०. २८) होममात्रं भवति ना-न्या जुहोतिसम्बन्धिनी दार्शपौर्णमासिकी इतिकर्तव्यतेति · येषां च बर्हिर्होम-मात्रोत्कर्षस्तेषां सर्वं भवत्येव दर्विहोमे ।

मातृभिर्वत्सान्त्सꣳसृज्य निवान्यावत्सं बध्नाति ॥ ३४ ॥ गृहमेधीयासमा-प्त्यनन्तरं निवान्याया गोर्वत्सं बध्नाति · तस्य रात्रौ संसर्गो न कर्तव्यः पितृयज्ञे तत्पयसा प्रयोजनमस्ति यतः । स्वयं नष्टवत्सा परकीयेण वत्सेन या गौर्दुह्यते सा निवान्येत्युच्यते । यजमानगृहवर्तिनां सर्वेषां वत्सानां संसर्जनप्राप्तौ प्रातः पितृयज्ञार्थं दोह्याया[1] निवान्याया गोर्वत्सस्य बन्धनं कर्तव्यम् वत्सांश्च रात्रौ[2] मातृभिः सह वासयेतेति छन्दोगसूत्रे (लाट्यायन ५. १. १२) । अग्निहोत्रहोमार्थ-मप्यस्यां रात्रौ पयो न दोग्धव्यमित्यभिप्रेत्य द्रव्यान्तरं विधत्ते ·

यवाग्वाग्निहोत्रहोमः ॥ ३५ ॥ अस्यां रात्रौ सायं प्रातः · तण्डुलैः शिथिलपक्वा यवागूः । अथ दर्विहोममाह ·

प्रातर्हुत्वाहुत्वा वा स्थाल्या दर्व्यादत्ते पूर्णा दर्वीति (३. ४१) ॥ ३६ ॥ प्रातः प्रतिपदि अग्निहोत्रं हुत्वा अहुत्वा वा सशेषायाः गृहमेधीयाचरोः स्थाल्याः सकाशात् स्थालीस्थमोदनं गृह्णाति · दर्व्याः चतुष्ककार्यापत्त्या संमार्गप्रतपने पूर्वं कार्ये ।

ऋषभमाह्वयितवै ब्रूयात् ॥ ३७ ॥ ग्रहणानन्तरमध्वर्युर्यजमानं प्रति ऋषभ-माह्वयितवाꣳइति प्रैषं ब्रूयात् · ऋषभो यथा रौति शब्दं करोति तथा त्वं तस्या-ह्वानं कुर्वित्यर्थः ।

रुते जुहोति ॥ ३८ ॥ रुते ऋषभे कृतशब्दे सति तयैव दर्व्याह्वव-नीये जुहोति ।

अव्याहरति ब्रह्मा जुहुधीत्याह ॥ ३९ ॥ अव्याहरति ऋषभे ।

---

1) See ५. ८. १८. 2) रात्रौ deest in Lâṭyâyana.

देहि मऽइति (३.५०) जुहोति ॥४०॥ दर्व्या गृहीतमोदनम् · इदमिन्द्रायेति त्यागः ।

ऋषभो दक्षिणा ॥४१॥ अध्वर्यवे । अहुते चेद्दर्विहोमः तदा दर्विहोमान्ते सांतपनीयां संस्थाप्य पुनरुद्धृत्याग्निहोत्रहोमः कार्यः · हुते चेत् तस्मिन्नेव विहारे ॥ ॥ षष्ठी कण्डिका ॥६॥

अथ पद्धतिः ॥

अथ साकमेधा उच्यन्ते · ते च फाल्गुन्यां प्रारम्भे कृते कार्त्तिक्यां भवन्ति चैत्र्यामारम्भे मार्गशीर्ष्याम् वैशाख्यामारम्भे पौष्याम् । तत्र पौर्णमास्यामृत्विग्वरणम् °गोत्र °शर्मन्नैष्टिकेन ऋषभदक्षिणेन साकमेधपर्वणाहं यक्ष्ये तत्र मे त्वं ब्रह्मा भवेत्यादिना ब्रह्महोत्रध्वर्य्वाग्नीध्राणां वरणम् । ततो गार्हपत्यात्समारोपार्थमाहवनीयमुद्धृत्यायं ते योनिरिति वरुणप्रघासवद्गार्हपत्याहवनीययोः समारोपः उदवसानम् देशान्तरे गमनम् मन्थनम् स्थापनम् साकमेधार्थमित्यग्न्योर्विहरणम् · अस्मिन्पक्षे तस्मिन्नेव विहारे त्र्यम्बकान्तं सकलं पर्व कार्यम् अग्न्यन्वाधानं तु प्रतीष्टि पृथगेव प्रतीष्टि पृथगेवोद्धरणमिति सम्प्रदायः । अत्र पूर्वाह्णे ऽग्नयेऽनीकवते पुरोडाशोऽष्टाकपाल उद्धरणादिकर्मापवर्गान्तः · अन्वाहार्यो दक्षिणा · तत्रानीकवदिष्ट्यर्थमित्युद्धरणे साकमेधार्थसाधारणोद्धरणपक्षे प्रतीष्ट्युद्धरणाभावः · अनीकवदिष्ट्याहं यक्ष्यऽइति[१] वरणे · पात्रासादनेऽष्टौ कपालानि विंशतिरिध्मकाष्ठानि अन्यत्सर्वं प्रकृतिवत् · ग्रहणे अग्नयेऽनीकवते जुष्टम् · प्रोक्षणे अग्नयेऽनीकवते त्वा जुष्टम् · अग्निमनीकवन्तं गच्छ · सप्तदशेन वज्रेणेत्यवबाधनम् · उत्तमप्रयाजे इदमग्नये सोमायाग्नयेऽनीकवते देवेभ्य आज्यपेभ्य इति · प्रधानयागे अग्नयेऽनीकवतेऽनुब्रूहि अग्निमनीकवन्तं यज · प्राशित्रादि सर्वम् · व्यूहने अग्नेरनीकवत उज्जितिम् अग्निरनीकवांस्तमपनुदत्विति · शेषं कर्मापवर्गान्तं प्रकृतिवत् · इत्यनीकवदिष्टिः । प्रतीष्टि विहारपक्षे पुनरुद्धृत्य मरुद्भ्यः सांतपनेभ्यो मध्यन्दिने चरुः · सांतपनीयेष्ट्यर्थमित्युद्धरणपक्षे · सांतपनीयेष्ट्याहं यक्ष्यऽइति वरणे · पात्रासादने कपालस्थाने चरुस्थाली दक्षिणा

[१]) Thus B. °ष्ट्यार्थं यक्ष्यामाह १·

अन्वाहार्यः नोपवेषः विंशतिरिध्मकाष्ठानि शृतावदानस्थाने मेक्षणम् पात्र्या अभावः शेषं प्रकृतिवत् · ग्रहणे मरुद्भ्यः सांतपनेभ्यो जुष्टम् · प्रोक्षणे मरुद्भ्यः सांतपनेभ्यस्त्वा जुष्टम् · मरुतः सांतपनान्गच्छ · सप्तदशेन वज्रेणेत्यवबाधने · उत्तमप्रयाजे इदमग्नये सोमाय मरुद्भ्यः सांतपनेभ्यो देवेभ्य इत्यादि · मध्यन्दिने प्रधानयागः मरुद्भ्यः सांतपनेभ्योऽनुब्रूहि मरुतः सांतपनान्यज इदं मरुद्भ्यः सांतपनेभ्यः · ततः स्विष्टकृदादि · चतुर्धाकरणानामभावः · व्यूहने मरुतां सांतपनानामुज्जितिम् मरुतः सांतपनास्तमपनुदन्त्विति · प्रस्तरहोमे इदमग्नये सोमाय मरुद्भ्यः सांतपनेभ्यो देवेभ्य इत्यादि · समिष्टयजुरन्तं कर्म स्थाप्यते बर्हिर्होमादि कर्मापवर्गान्तं श्वो भूते दर्विहोमानन्तरमेव भवति नेदानीम् · अथवा बर्हिर्होमो ब्राह्मणतर्पणप्रैषो ब्राह्मणतर्पणं नमः कृतायेति चेति पदार्थचतुष्टयवर्जमन्यत्सर्वं कार्यम् · बर्हिर्होममात्रवर्जं कर्मापवर्गान्तं समापनीयमिति कर्कः · तत्राद्य एव पक्षो युक्त इति हरिस्वामिभिरतिप्रबलयुक्तिभिर्दृढीकृतमस्तीति स एव पक्षोऽस्माभिराद्रियते · इति सांतपनीया समिष्टयजुरन्ता ॥ ॥ ततः सायंकाले प्रागग्निहोत्रहोमाद्गृहमेधीयेष्टिः · तत्र मरुद्भ्यो गृहमेधिभ्यश्चरुर्भवति · तत्र पूर्वम् इध्मस्थाने प्रणीतानां पश्चादनियतसंख्यानां यज्ञियवृक्षशकलानां परिधीनां च निधानम् · नाग्न्यन्वाधानम् पशुपुरोडाशवत्तन्त्रमध्यपातात् आहवनीयऽएवाग्न्यन्वाधानमित्यन्ये[1] · शाखां तूष्णीं छित्त्वा तया यावत्स्वं गवां वत्सानामपाकरणं तूष्णीम् · अमन्त्रकं ब्रह्मणा उपवेशनम् आसनस्य संस्कृतत्वात् · न व्रतग्रहणम् अविसृष्टत्वात् · परिस्तरणाभावः · पात्रासादने शूर्पाग्निहोत्रहवणी स्थालीकृष्णाजिनम् उलूखलमुसलम् पात्रीधान्यम् पवित्रच्छेदनानि पवित्रे स्थाली आज्यं च वेदश्च दोहनपवित्रम् एकमिध्मकाष्ठम् प्रस्तरमात्रं बर्हिः स्रुवो जुहूः मेक्षणम् द्वे शरावे पात्र्यौ वा योक्त्रम् यूनकुशाश्च परिधयः कुशास्तृतं पीठम् इडापात्री · स्फ्योपहितपात्रीकरणादि · ग्रहणे मरुद्भ्यो गृहमेधिभ्यो जुष्टम् पयोबाहुल्यापेक्षया बहूनां व्रीहीणां ग्रहणम् · प्रोक्षणे मरुद्भ्यो गृहमेधिभ्यस्त्वा जुष्टम् · कुक्कुटाहननवर्जितं कृष्णा-

---

[1] ? नाग्न्यन्वाधा आहन्ये नं पङ्ग्तात् १.

जिनादानादि कणनिधानान्तं कण्डनम् · आज्यनिर्वापवेदबन्धौ · ईक्षणान्ते चरु-
स्थालीमादाय तस्यां दोहनपवित्रं निधाय तत्रैव पवित्रवति चरुपात्रे यावत्स्वं
गा दोहयित्वा तण्डुलान्प्रक्षाल्य पवित्रवति चरुपात्रे पयोमध्ये संवापः · घर्मो
ऽसीत्यधिश्रयणम् · पर्यग्निकरणम् · उदकस्पर्शः[1] · देवस्त्वेति श्रपणम् · मा भेरि-
त्यालम्भः · स्फ्यमुद्यम्य प्रोक्षणीरासादयेध्मं बर्हिरुपसादय स्रुचः संमृड्ढीत्या-
दिप्रैषः · न स्फ्योदकप्रहारः · न पाण्योरवनेजनम् · अपरेण प्रणीतानां स्फ्येध्म-
बर्हिषां सादनम् · स्रुवजुहूमेक्षणसंमार्गः शरावयोः पात्र्योर्वा संमार्गः संमा-
र्जनापासनम् · पत्नीसंनहनाद्याज्यावेक्षणान्तम् · इध्मवेद्योः[2] प्रोक्षणम् · बर्हिः
प्रतिगृह्य वेद्यां निधाय ब्रह्मन्बर्हिः प्रोक्षिष्यामि बर्हिरसि स्रुचे त्वा जुष्टमिति
प्रस्तरमात्रबर्हिषः प्रोक्षणम् मूलावसेकः · प्रणीतासु पवित्रनिधानम् · बर्हि-
र्विस्रस्य तूष्णीं प्रस्तरग्रहणम् ब्रह्मणे समर्पणम् संनहनं विस्रस्य दक्षिणस्यां वेदि-
श्रोणौ निधायान्यैर्बर्हिर्भिरवच्छादयति । ततो गार्हपत्यसमीपे गत्वा शरावयोः
पात्र्योर्वा स्थापनम् · चरुमभिघार्योदगुद्वास्य प्राणदानम् मरुतो गृहमेधिनो गच्छेति
प्राकृतं च विकृताविति (१. ५. ४) न्यायात् ततः शरावयोः पात्र्योर्वा सशेषं
चरोरुद्धरणम् · उद्धृतयोर्मध्ये गर्तौ कृत्वा तयोराज्यस्थाल्याज्यस्य विभज्यासेकः ·
तत ओदनौ स्रुक्स्रुवं चादाय वेदिसमीपे आगत्य बर्हिर्वेदि ओदनादेः स्थापनम् ·
तूष्णीं स्तृताया एव वेदेरभिमर्शनम् · समित्प्रस्तरादानम् · कल्पनोल्मुकोदूह-
नाभावः · परिधिपरिधानं समन्त्रकम् · परिधिमुपस्पृश्य समिन्निरसनम् · सूर्यस्त्वेति
(२. ५) जपः · शकलाधानम् · आवृत्यौदनयोरासादनम् प्रियाभ्यां धामभ्यां प्रियः
सद आसीदतमिति प्रियेण धाम्नेत्येवमनूहितेनैवेत्यपरे · ततः स्तृताया एव
वेदेर्द्वे तृणेऽआदाय विधृत्योः[3] स्तरणम् सवितुरिति (२. ५) · प्रस्तरस्तरणम् ·
अभिन्यासः · प्रतिगृह्य सव्याशून्ये प्रस्तरे असि जुहूर्नाम्नेति (२. ६) स्फ्योपग्रहेण
जुह्वा आसादनम् · सर्वालम्भे पूर्वमोदनस्थयोराज्ययोरालम्भः ततो दक्षिणौ-
दनस्य[4] आत्मालम्भोदकालम्भौ[5] । होतृषदनस्थापनम् एहि होतरिति

---

1) उदकोपः B. (°कोपस्पर्शः ?) 2) ? Thus B. नध्म° १. 3) धृत्यो B. धृत्यौ १.
4) °णोद° १. B. 5) ? नात्मा° १. आत्मोदकालम्भौ B.

[होतु]रामन्त्रणम् समन्त्रकं होतृवरणम् होतुरपवृक्तत्वात् · होतुरामन्त्रणवरणे न भवत इति केचित् · होतर्यासनं संस्कृत्योपविष्टे सत्यध्वर्युः स्रुवं स्रुचं चाददान एवाग्नयेऽनुब्रूहीत्याह · ततो दक्षिणादोदनाच्चतुर्गृहीतमाज्यं जुह्वामवदायातिक्रम्याश्राव्याग्निं यजेत्युक्त्वा वषट्कृते जुहोति · ततः सोमायानुब्रूहीत्युक्त्वोत्तरौदनस्थादाज्याच्चतुर्जुह्वां गृहीत्वातिक्रम्याश्राव्य सोमं यजेत्युक्त्वा वषट्कृते जुहोति · ततो मरुद्भ्यो गृहमेधिभ्योऽनुब्रूहीत्युक्त्वा दक्षिणौदनस्थादाज्याज्जुह्वामुपस्तीर्य तत एव मध्यात्पूर्वार्धाच्चावदाय तत एव सकृदुपर्यभिघार्यातिक्रम्याश्राव्य मरुतो गृहमेधिनो यजेत्युक्त्वा वषट्कृते जुहोति इदं मरुद्भ्यो गृहमेधिभ्यः · ततोऽग्नये स्विष्टकृतेऽनुब्रूहीत्युक्त्वा उत्तरौदनस्थादाज्यादुपस्तीर्य उत्तरस्यैवौदनस्य द्विरवदाय तत्स्थदिवाज्यादुपरि सकृदभिघार्यातिक्रम्याश्राव्याग्निं स्विष्टकृतं यजेत्युक्त्वा वषट्कृते जुहोति इदमग्नये स्विष्टकृते · उदकस्पर्शः · एत्य जुह्वा आसादनम् · न संचराभ्युक्षणम् न प्राशित्रावदानम् · इडावदानम् षडवत्तस्य च ब्रह्मयजमानयोश्चेति[1] न इवाभाति[2] · ततश्च पवित्रप्रतिपत्त्यन्ते भागपरिहारः · राक्षसभागान्ते भागावेक्षणं भागप्राशनं च क्रियते · दक्षिणादोदनादिडापात्र्यामुपस्तारः · तत एव दक्षिणतो मध्याच्चावदानम् · तत एव द्विरभिघारः · नात्र चतुर्धाकरणभागादि · इडासमर्पणादि मयीदं-जपान्तम् · उपहूय पूर्वं मार्जनम् तत इडाभक्षणम् ऋत्विजामेव न यजमानस्य · तत उपनीतानां यजमानगृह्याणामृत्विजां च नियमेनौदनप्राशनम् बहुश्चेदोदनस्तदान्येषामपि ब्राह्मणानां प्राशनम् · ततः सशेषां स्थालीमपिधाय दर्विहोमार्थं सुगुप्तदेशे निदधाति। ततः पवित्रप्रतिपत्तिः नाग्निसंमार्गः · मरुतां गृहमेधिनामुज्जितिमिति जुह्वा एव व्यूहनम् · अभ्युक्ष्य परिध्यञ्जनम् · आश्राव्य सूक्तवाकप्रैषः · प्रस्तरग्रहणम् · मध्यमूलयोरपि जुह्वामेवाञ्जनम् · नीचैर्हरणम् · तृणाग्रहणम् · प्रस्तरहोमः · अग्नये सोमाय मरुद्भ्यो गृहमेधिभ्योऽग्नये होत्रायेति त्यागः · अनुप्रहरेति प्रैषः · तृणप्रक्षेपः · आत्मालम्भः · उदकालम्भः · संवदस्वेत्यादेरभावः · परिधिप्रक्षेपः · संस्रवाहुतिः · धुरि

---

1) इडाषडवत्तयोरवदानम् ब्रह्मयजमानभागौ च इदं सर्वं दक्षिणौदनात् न चतुर्धाकरणं B. 2) ? °श्चेति पुस्तकांरसमीतीर (पुस्तकान्तरसमधीतं ?) न इवाभाति १.

निधानमेकस्या एव घृताच्यसि धुर्यो पाहि सुम्नासि सुम्ने मा धेह्रीति विशेषः · न वेद्यालम्भः · वेदयोक्त्रविमोकः · आ वेदेः स्तरणम् · अन्यैरवच्छादनबर्हिर्होमः · रात्तसभागः · एवं पिशीलकपत्ते बर्हिरादिसर्वोत्कर्षपत्ते च गृहमेधीयोक्ता ।

अथ स्थालीपत्ते विशेष उच्यते · इध्मस्थाने शकलपरिधिनिधानादि चरोरुद्वासनान्तं पूर्ववत् · अत्राहवनीयश्रापिणा आहवनीयऽएव प्रथममेवाज्याधिश्रयणम् · उद्वास्य स्थालीस्थस्यैवौदनस्य प्राणदानम् नोद्धृत्य · ततश्चरुस्थालीमाज्यस्थालीं स्रुक्स्रुवं चादाय वेदिसमीपे आगत्य तूष्णीं वेदिमभिमृश्य समित्प्रस्तरादानपरिधिपरिधानसूर्यस्त्वेति-त्रपान्ते शकलानाधायावृत्य चरुस्थालीमाज्यस्थालीं स्रुवं चासाद्य स्तृताया एव वेदेर्द्वे तृणेऽआदाय विधृत्योः स्तरणम् · प्रस्तरस्तरणम् अभिन्यासः पूर्ववज्जुह्वा आसादनम् आज्यचर्वोरालम्भः · आत्मालम्भादि होतुरुपवेशनान्तं पूर्ववत् · स्थाल्या एव चतुर्गृहीत्वाज्यभागौ · गृहमेधियागे स्थाल्या एव जुह्वामुपस्तारः चरोर्मध्यात्पूर्वार्धाच्चावदानम् स्थाल्या एवोपर्यभिघारः त्तताभ्यङ्गः गृहमेधियागः · स्विष्टकृति स्थाल्या एवाभिघारः उत्तरार्धात्सकृदवदानम् द्विरभिघारः न त्तताभ्यङ्गः स्विष्टकृद्यागः · इडाभक्षणानन्तरं मार्जनम् चतुर्धाकरणानामभावः षडवत्तब्रह्मयजमानभाग-भागपरिहार-भागवेत्तणा-भागप्राशनानि[1] पूर्ववद्भवन्तीति · अरिक्तायाः स्थाल्या अपिधाय निधानम् · अन्यत्सर्वं पूर्ववत् । पदार्थचतुष्टयपरिशेषपत्ते व्रतग्रहणाम् सर्वार्थपत्ते प्रणीताप्रणयनं विमोचनं च भवति व्रतविसर्गश्च अन्यत्सर्वं सर्वोत्कर्षपत्तवत् तन्त्रमध्यपाताविशेषात् · बर्हिर्होममात्रपरिशेषपत्ते च सांतपनीयायाः समाप्तत्वेन तन्त्रमध्यपाताभावादग्न्यन्वाधानब्रह्मवरणासमन्त्रकासनसंस्कारोपवेशनव्रतग्रहणासर्वार्थप्रणीताप्रणयनव्रतग्रहणान्वाहार्यपचनाहवनीयकल्पनोपवाज्ञनसंमार्गाद्यग्निसंस्कारहोत्रामन्त्रणावरणादत्तिणादानसंमार्गप्रणीताविमोकव्रतविसर्गा भवन्ति । इति गृहमेधीया ॥ रात्री यवागवा सायम्प्रातरग्निहोत्रहोमः · वत्सानां स्वस्वमातृभिः संसर्गः · निवान्यावत्सस्य पृथग्बन्धनम् तस्याः पित्र्येष्टौ मन्थार्थदुग्धार्थत्वात् · या स्वयं मृतवत्सा परकीयेण[2] वत्सेन दुह्यते सा निवान्येत्युच्यते · प्रातर्हुते

1) ? प्राशीना । नीति १. 2) °कीयेन १.

ऽग्निहोत्रे हुते वा दर्विहोमः · तत्र ब्रह्मणास्तूष्णीमासनसंस्कारः · दक्षिणातो ब्रह्मयजमानयोरुपवेशनम् · वैकङ्कतदर्व्याः संमार्गप्रतपने · आहवनीयं परिस्तीर्य समिधमाधाय स्थाल्याः सकाशाद्दर्व्या ओदनं गृह्णाति पूर्णा दर्वीति · ऋषभमाह्वयितवाऽइति यजमानपुरुषं प्रति प्रैषः स प्रेषित ऋषभेण शब्दं कारयति · ऋषभेण शब्दे कृते जुहोति · ऋषभे[1] शब्दमकुर्वति ब्रह्मा जुहुधीत्याह · ततो यद्दर्व्या गृहीतम् तत् देहि मऽइति मन्त्रेण आहवनीये जुहोति इदमिन्द्राय · स एव ऋषभो दक्षिणा ब्रह्माध्वर्युभ्याम् अस्य दर्विहोमस्य समृद्ध्यर्थमृषभं दक्षिणां ब्रह्मणेऽध्वर्यवे चाह७ सम्प्रददे । तदेवमयं दर्विहोमो होममात्र एव भवति सांतपनीयतन्त्रान्तःपातात् परतन्त्रोत्पत्तयो जुहोतिमात्रा इत्युक्तवात् (६. १०. २८) · बर्हि[र्होम]मात्रोत्कर्षपक्षे तु सर्वजुहोतिधर्मयुक्तोऽयं दर्विहोमो भवति तन्त्रान्तःपाताभावात् । अतः परं सांतपनीयासमाप्तिः · बर्हिर्होमादि नमः कृतायेत्यन्तं सर्वम् पदार्थचतुष्टयं वा बर्हिर्होममात्रं वा कर्कमते । अहुतं चेत् उद्धृत्याग्निहोत्रहोमः प्रतीष्युद्धरणपक्षे । इति सांतपनीया ॥ ॥६॥

इति पञ्चमस्य षष्ठी कण्डिका ॥ ॥

मरुद्भ्यः क्रीडिभ्यः सप्तकपालः ॥१॥ ततः पुनरुद्धृत्य · चतुर्धाकरणावर्जं सर्वम् ।

अदित्यै चरुः ॥२॥ चतुर्धाकरणादि सर्वम् ।

अन्यत्रापि ॥३॥ न केवलमत्र अदित्यै चरुर्भवति अन्यत्रापि अदित्यै चरुस्तृतीयेत्यादौ (४. १०. १०) । अथवा अयमर्थः · अन्यस्मिन्नपि शाखान्तरोक्ते काले त्र्यम्बकान्ते अदित्यै चरुर्भवति · तदाह शाङ्खायनः (३. १७. १०–११) त्र्यम्बकान्तसंस्थाप्य मैत्रश्चरुरदितये वेति · एवमपि च मैत्रकठतैत्तिरिसूत्रेष्वपि उक्तमस्ति । अथवा यत्रादित्य इति चरुः श्रूयते तत्रादित्यै भवति न त्वादित्यायेत्येवं नियमः[2] अर्थात्[3] किमत्रादितेर्देवतात्वम् आदित्यस्य वेति संदेहः स्यात् आदित्यश्चरुरन्ते

1) वत्से B. 2) But see ६. ६. १. २. (Kâty. १६. ४. २१. आदित्येभ्यः) · 3) ? अथा २·

चेत्यादौ (११. १. ५–६) · यद्येवम् आदित्यै मल्हिष्या इत्यत्र (१५. ३. ६) कथं चरुत्वम् उच्यते अस्य सूत्रस्य श्रुतिवाक्योपलक्षणार्थत्वात् तत्र च आदित्यं चरुं निर्वपतीति (५. ३. १. ४) चरोः प्रकटितत्वादिति । अयमेवावाङ् प्राण आदित्येष्टिरिति (११. ५. २. ४) पृथगिष्टिव्यपदेशाद्भिन्नतन्त्रत्वे प्राप्तऽआह ·

समानबर्हिषी वा कालकर्मैकत्वात् ॥४॥ [कैडिनमादित्यश्चरुश्चेमे समानतन्त्रे भवतः · कुतः कालऽत्वात् एककालत्वात्][1] एकस्मिन्नेव प्रतिपदः प्रातःकाले द्वयोर्विधानात् कर्मणोऽपि पञ्चप्रयाजत्र्यनुयाजादेरेकत्वात् समानत्वात् ॥ ॥ अथ महाहविरुच्यते ·

महाहविरुदवसाय निर्मथ्य ॥५॥ कर्तव्यम् । निर्मथ्येत्युपदेशात् अर्थात् पूर्वमग्नी समारोह्योदवसायैव ह्येतेन यजतऽइति श्रुतेः (२. ६. २. १२) · एतेनेति साकमेधपर्वणा तच्छब्दवाच्यं च महाहविः · कुतः · न हि तदवकल्पते यदुत्तरवेदावग्निहोत्रं जुहुयादित्यग्निहोत्रस्योत्तरवेद्यधिकरणता मा भूदिति पुनस्तदन्तऽउदवसानमुच्यते उत्तरवेदिश्च महाहविष्येव तस्मात्पूर्वमप्युदवसानं महाहविष्येव तस्य संनिकृष्टत्वादित्यभिप्रायेणैतदुक्तम् । सिद्धान्तमाह ·

पूर्वेद्युर्वा ॥६॥ अथ वा पूर्वेद्युरेवानीकवत्याः पूर्वमेव समारोपोदवसानमन्थनानि कृत्वा पर्वारम्भणीयम् एतेनेति (२. ६. २. १२) शब्दस्य साकमेधाख्यसकलपर्ववाचित्वात् · आनीकवत्यादेः त्रैयम्बकान्तस्य हि साकमेधसंज्ञा न त्वेकस्य महाहविषः अथैतैः साकमेधैरिति प्रकृत्य (२. ५. ३. १) आनीकवत्यादीनां विधानात् तस्मात्तानि सर्वाणि साकमेधशब्दवाच्यानि · अतो वाशब्दोऽवधारणे पूर्वेद्युरेवेत्यर्थः · अयमेव सर्वेषां भाष्यकृतां सिद्धान्तः · अस्मिन्पक्षे केचिदेवमाहुः समारोप्योदवसाय गार्हपत्यं निर्मथ्य साकमेधार्थमेव साधारणावग्नी विहृत्यानीकवतीयादतिप्रणयनम् तावन्मात्रार्थत्वाच्च तदन्ते तस्यातिप्रणीतस्यैव लौकिकत्वम् ततश्च पित्र्यादिषु पूर्वो मध्याहवनीय एवोपस्थानादौ तस्य साधारणत्वात् अयमपि पक्षो युक्ततर एव दृश्यते अन्तेऽग्न्योः समारोपविधानात् अग्नी समारोह्येति । अथ महाहविषि हवींष्याह ·

---

1) [to] from Ss.

नित्येभ्योऽधिकानि ॥ ७॥ आग्नेयादिभ्यः पञ्चभ्यः ।

ऐन्द्राग्नः ॥ ८॥ द्वादशकपालः पुरोडाशः षष्ठं हविः · चतुर्धाकरणाभावः ।

माहेन्द्रश्चरुः ॥ ९॥ सप्तमं हविः ।

वैश्वकर्मण एककपालः ॥ १०॥ अष्टमं हविः · उपांशु सर्वहुतश्च भवति । सावित्रो नित्येषूपांशु ।

उत्तरवेद्यग्निप्रणयनमन्थनपृषदाज्यं च वरुणप्रघासवत् ॥ ११॥ अग्निमन्थनं पृषदाज्यग्रहणं च वैश्वदेविकमेव तद्वदेवात्रापि भविष्यति कथं वरुणप्रघासवत् · वरुणप्रघासेषु महाहविःषु चैन्द्राग्नादीनामधिकहविषां मन्थनसम्बन्धज्ञापनार्थमेतदुक्तम् इतरथाग्निमन्थनस्य पञ्चहविःसम्बन्धाद्धिकैः सह सम्बन्धो न स्यात् तथा च यदाधिकं हविर्विस्मृतं सत्स्वतन्त्रं क्रियते तदा मन्थनं न स्यात् ।

ऋषभो दक्षिणा ॥ १२॥ महाहविषि शाखान्तरात् · ततो महाहविः कर्मापवर्गान्तं समापनीयं सिद्धम् इष्टिः संतिष्ठतऽइत्यापस्तम्बवचनात् · केचित्तु महाहविषो व्रतविसर्गात्प्राक्पितृयज्ञं त्रैयम्बकांश्चेच्छन्ति तस्य किं मूलमिति तऽएव विदुः ॥ ॥ सप्तमी कण्डिका ॥ ७॥

अथ पद्धतिः ॥

अथ क्रीडिनीया[1] द्विहविष्केष्टिरुच्यते · तत्र मरुद्भ्यः क्रीडिभ्यः सप्तकपालः अदित्यै चरुः इमे हविषी समानतन्त्रे भवतः · प्रतीष्युद्धरणपक्षे क्रीडिन्यादित्येष्ट्यर्थमित्युद्धरणे · क्रीडिन्यादित्येष्टिभ्यामहं यक्ष्यऽइति वरणे · पात्रासादने सप्त कपालानि एका चरुस्थाली दक्षिणा अन्वाहार्यः शृतावदानानन्तरं मेक्षणम् विंशतिरिध्मकाष्ठानि पुरोडाशपात्र्येका अन्यत्सर्वं प्रकृतिवत् · ग्रहणे मरुद्भ्यः क्रीडिभ्यो जुष्टम् अदित्यै जुष्टम् · प्रोक्षणे मरुद्भ्यः क्रीडिभ्यस्त्वा जुष्टम् अदित्यै त्वा जुष्टम् · नानाबीजपक्षे तद्धर्मा उक्ताः एकबीजपक्षे कणान्ते विभज्यालम्भः इदं मरुतां क्रीडिनाम् इदमदित्याः · प्राणदाने मरुतः क्रीडिनो गच्छ अदितिं गच्छ · सप्तदशेन वज्रेणेत्यवबाधने · उत्तमप्रयाजे इदमग्नये सोमाय मरुद्भ्यः क्रीडिभ्योऽदित्यै देवेभ्य इत्यादि · प्रधानयागे मरुद्भ्यः क्रीडिभ्योऽनुब्रूहि

१) ? क्रीडनीया १.

मरुतः क्रीडिनो यज्ञ इदं मरुद्भ्यः क्रीडिभ्यः अदित्याऽअनुब्रूहि अदितिं यज्ञ इदमदित्यै · मेक्षणेन चरोरवदानम् · स्विष्टकृदादि पुरोडाशस्य प्राशित्रेडाव्यतिरिक्तं न भवति चरोस्तु सर्वं भवत्येव · व्यूहने मरुतां क्रीडिनामदित्या उज्जितिम् मरुतः क्रीडिनोऽदितिस्तमपनुदन्तु · प्रस्तरहोमे इदमग्नये सोमाय मरुद्भ्यः क्रीडिभ्योऽदित्यै देवेभ्य इति · अन्यत्कर्मापवर्गान्तं प्रकृतिवत् · इति क्रैडिन्यादित्येष्टी ॥ ॥ अथ महाहविरुच्यते । तत्राष्टौ हवींषि भवन्ति आग्नेयोऽष्टाकपालः पुरोडाशः सौम्यश्चरुः सावित्रो द्वादशकपालोऽष्टाकपालो वा उपांशुदेवतः सरस्वत्यै चरुः पूष्णे चरुः ऐन्द्राग्नो द्वादशकपालः माहेन्द्रश्चरुः वैश्वकर्मण एककपाल उपांशुदेवतः । तत्र पूर्वमहतवस्त्रपरिधानम् · प्राचीनप्रवणेऽग्नीनां नयनम् प्रतीच्युद्धरणपक्षे गार्हपत्यस्यैव नयनम् आहवनीयदक्षिणाग्न्योरुद्धरणम् तत्र महाहविरर्थं गार्हपत्यादिति संकल्पः · अग्न्यन्वाधानम् · व्रतग्रहणं वा · चतुरासनम् · ब्रह्मवरणम् महाहविषाहं यक्ष्ये तत्र भूपतऽइति · अत्र वा व्रतग्रहणम् · ततः षड्ढासादनाद्युपयमन्युपनिवपनान्तं वरुणप्रघासवत् · एकस्फ्ययेति प्रैषोऽग्नीधं प्रति · एकोत्तरा वेदिर्न दक्षिणा · एकस्यैवाग्नेः प्रणयनम् · तत्राग्नये प्रह्रियमाणायेति प्रैषः · ततो द्विरासनम् · प्रणीताप्रणयनम् पूर्वमकृतं चेत् प्रणीताप्रणयनात्पूर्वं व्रतग्रहणम् । पात्रासादनेऽग्निहोत्रहवणीस्फ्यपवित्राणि सन्त्येव अन्यदासाद्यते · शूर्पं कपालानि त्रयस्त्रिंशदेकोनत्रिंशद्वा चरुस्थाल्यश्चतस्रः शम्याकृष्णाजिनम् उलूखलमुसलम् दृषदुपलम् पात्रीधान्यम् धृष्टिः संयवनोदकम् स्थाली आज्यं च वेदश्च दक्षिणार्थ ऋषभः अग्निर्विंशतिरिध्मकाष्ठानि कुशप्रसूप्रस्तरोपसंनद्धं[1] त्रेधा बर्हिः स्रुवो जुहूः उपभृत्पृषदाज्योपभृच्च ध्रुवा संमार्गाहाणि यानि चेत्यत्र द्वे प्राशित्रहरणे शृतावदानम् मेक्षणम् पुरोडाशपात्र्यश्चतस्रः योक्त्रं यूनकुशाश्च पक्षे परिधयस्त्रयः मन्थनचतुष्टयम् कुशास्तृतं पीठम् इडापात्री षडवत्तं च अन्तर्धानकटः पूर्णपात्रम् पक्षे कर्मापवर्गा समित् वपनपक्षे क्षुरचतुष्टयं च · ततः स्फ्योपहितपात्रीकरणम् · पात्रान्तरे प्रोक्षणीः कृत्वा शूर्पाग्निहोत्रहव-

1) °प्रस्व° 1. °प्रस्वः B.

णयोरादानादि । ग्रहणे अग्नये जुष्टम् सोमाय जु° सवित्रे जु° सरस्वत्यै जु° पूष्णे जु° इन्द्राग्निभ्यां जु° महेन्द्राय जु° विश्वकर्मणे जुष्टम् । नानाबीजपक्षे तद्धर्मा वैश्वदेवपर्वण्युक्ताः · प्रोक्षण्यः संस्कृता एव · हविःप्रोक्षणे अग्नये त्वा जुष्टम् सोमाय° सवित्रे° सरस्वत्यै° पूष्णे° इन्द्राग्निभ्यां° महेन्द्राय° विश्वकर्मणे त्वा जुष्टम् · एकबीजपक्षे कणान्ते विभज्यालम्भः इदमग्नेः सवितुः पूष्ण इन्द्राग्न्योर्विश्वकर्मणश्च इद७ सोमस्य सरस्वत्या महेन्द्रस्य च । कपालोपधाने आग्नेयस्याष्टौ कपालानि सावित्रस्याष्टौ द्वादश वा ऐन्द्राग्नस्य द्वादश विश्वकर्मण एकम् तत्र तपसा तप्यस्वेत्यभ्यूहनम् · ईक्षणम् पिष्टानां तण्डुलानां च · ततः पूष्णे पिष्टानि पृथक्कृत्यालम्भः इदमग्नेः सवितुरिन्द्राग्न्योर्विश्वकर्मणश्च इदं पूष्णः · ततश्चरूणां तण्डुलान्विभज्य प्रत्येकमालम्भः इद७ सोमस्य इद७ सरस्वत्याः इदं महेन्द्रस्य · संयवनानन्तरं विभज्य पुरोडाशानामालम्भः इदमग्नेः इद७ सवितुः इदमिन्द्राग्न्योः इदं विश्वकर्मणः · सपृषदाज्यं वरुणप्रघासवदाज्यग्रहणम् · प्राणदाने अग्निं गच्छ सोमं° सवितारं° सरस्वतीं° पूषणं° इन्द्राग्नी° महेन्द्रं° विश्वकर्माणं गच्छेति · प्राणदानानन्तरं घृतेनैककपालान्ताच्छादनम् । हवींष्यासाद्यालम्भात्मालम्भोदकालम्भौ कृत्वाग्निमन्थनं शकलादानादि होमान्तं वैश्वदेववत् · ततो होतृषदनस्थापनहोतुरामन्त्रणादि · अवबाधने सप्तदशेन वज्रेणेति । नव प्रयाजा वैश्वदेववत् त्यागास्तत्रैवोक्ताः · उत्तमे प्रयाजे इदमग्नये सोमायाग्नये सोमाय सवित्रे सरस्वत्यै पूष्णऽइन्द्राग्निभ्यां महेन्द्राय विश्वकर्मणे देवेभ्य इत्यादि · तत आज्यभागौ · प्रधानयागे अग्नयेऽनुब्रूहि[१] अग्निं यज सोमाया° सोमं° सवित्रऽउपांशु अनु° सवितारं° सरस्वत्याऽअ° सरस्वतीं° पूष्णेऽनु° पूषणं° इन्द्राग्निभ्याम° इन्द्राग्नी° महेन्द्राया° महेन्द्रं° विश्वकर्मणऽउपांशु अनुब्रूहि जुह्वामुपस्तीर्य सर्वमवधाय द्विरभिघार्यातिक्रम्याश्राव्य विश्वकर्माणं यज सर्वहोमः अपर्यावर्तनं च इदं विश्वकर्मणे · ततः स्विष्टकृदादि ऐन्द्राग्नस्य चतुर्धाकरणभागषडवत्ताभावः अन्येषां सर्वं भवति · दक्षिणालम्भे ऋषभोऽसीति · अनुयाजा नव पृषदाज्येन त्यागा वैश्वदेवपर्वण्युक्ताः · व्यूहने अग्नेः सोमस्य

१) °ब्रूऽहि १ throughout.

सवितुः सरस्वत्याः पूष्ण इन्द्राग्न्योर्महेन्द्रस्य विश्वकर्मण उन्नितिमनू॰ अग्निः सोमः सविता सरस्वती पूषेन्द्राग्नी महेन्द्रो विश्वकर्मा तमपनुदन्त्विति उपांशुदेवतानामुपांशूच्चारणम् अन्येषामुच्चैः · प्रस्तरहोमे इदमग्नये सोमायाग्नये सोमाय सवित्रे सरस्वत्यै पूष्णऽइन्द्राग्निभ्यां महेन्द्राय विश्वकर्मणो देवेभ्य इत्यादि · त्रीणि समिष्टयजूंषि · उक्तादन्यत्सर्वमत्र वरुणप्रघासवत्कर्मापवर्गान्तम् । इति महाहविः ॥ ॥७॥

इति पञ्चमस्य सप्तमी कण्डिका ॥ ॥

अथ पितृयज्ञमाह ·

पितृयज्ञऽउपाꣳशु चरणम् ॥१॥ सर्वं प्रैषादिकमुपांशु भवति ।

पुरस्तादुपचारः ॥२॥ दिग्विपर्यासादिह पुरः [उत्तरत-उपचारो (१. ८. २६) बाध्यते] · आहवनीयस्य पुरस्तात् नोत्तरतः यथा ब्रह्मवरणम् आस्योदकनिनयनादिकं च · दक्षिणा दिक्प्राची अपरा दक्षिणा उत्तरा चापरा पूर्वा चोत्तरेति । तेन अपणस्य पश्चाद्यत्पात्रसादनं विहितम् तद्गार्हपत्यदक्षिणाग्न्योरुत्तरतः प्राक्संस्थं च कर्तव्यम् · हविरासादनमप्युत्तरत एव · ब्रह्मयजमानयोर्यद्दक्षिणतउपवेशनमुक्तम् (१. ८. २७) तत्पश्चाद्भवति । यत्र तु प्राग्ग्रन्थि बर्हिरित्येवमादौ (२८) दिश उद्दिश्यन्ते तत्राविपर्यस्ता एव मुख्या ग्राह्याः ।

ब्रह्मयजमानयोश्च ॥३॥ चकारात्पुरस्तादुपचारः · दक्षिणाग्नेः पुरस्तात्प्राच्यां दिशि प्रत्यङ्मुखावुपविशतः दक्षिणतो ब्रह्मा उत्तरतो यजमानः ।

पूर्ववद्वा ॥४॥ ब्रह्मयजमानयोरुपवेशनं भवति पूर्ववत् प्रकृतिवत् अपरस्यां प्राङ्मुखौ[1] ।

अपत्नीकः ॥५॥ पितृयज्ञो भवति · केवलस्यैकाकिनो यजमानस्यैवात्राधिकारो न तु पत्नीसहितस्य · अतोऽत्र पत्न्याः प्रतिषेधात् पत्नीꣳ संनह्येति प्रैषस्याभावः आज्यावेक्षणं त्वाज्यसंस्कारत्वादध्वर्युः करोति ।

दक्षिणाग्निराहवनीयवत् ॥६॥ तेनान्वाहार्याधिश्रयणं भुव इति नैमित्तिकहोमकर्मापि[2] (२५. १. ६) स्वकार्यमत्र भवति आहवनीयसम्बन्धि च ।

---

१) प्रकृतिवदेव दक्षिणतो विपर्यस्तायां दिशि अपरस्यामित्यर्थः S₃. २) ? ॰माकमपि २.

पूर्वेणाहवनीयं प्रणीताः परिहरति[1] ॥७॥ गार्हपत्यस्य पुरस्ताद्दक्षिणाग्रे चमसं निधायालभ्य दक्षिणाग्नेः पुरस्तान्निधानार्थं पूर्वेणाहवनीयं परिहरति गार्हपत्याहवनीययोर्व्यवायो मा भूदित्येवमर्थमिदमुच्यते[2]। ननु हविष्पात्रेत्यादिना (१. ८. ३१) सिद्धेः पुनरुक्तमिदम् सत्यम् पित्र्यत्वात्कर्मणोऽप्रादक्षिण्येन गार्हपत्यमपरेणैव हरणं प्राप्नोति नाहवनीयं पूर्वेण अनेन नियमः क्रियतऽइति न पुनरुक्तम्। अत्र च पूर्वं दक्षिणाग्नावग्न्यन्वाधानम् षडासनोपकल्पनम् ब्रह्मवरणम् तदुपवेशनं च · ब्रह्मवरणं चाहवनीयस्य पुरस्तात् दक्षिणाभिमुखो ब्रह्मा पूर्वाभिमुखो यजमानः · ततो व्रतग्रहणमन्तरेणापराग्नी गत्वा दक्षिणाग्नेरुत्तरतः स्थितो दक्षिणाग्निमीक्षमाणः प्राचीनावीती करोति ततः प्रणीताप्रणयनादि · प्राग्व्रतविसर्गात्पित्र्याकरणपक्षे ब्रह्मवरणव्रतग्रहणयोरभावः · अध्वर्युर्यजमानो वा यः पिण्डदानं करिष्यन्भवति तेन पूर्वं नीवीबन्धनं कर्तव्यम् अग्रे (१. २४) विस्रंसनोपदेशात् · पित्र्यत्वाच्च सर्वं कर्मापसव्येन दक्षिणाभिमुखैर्दक्षिणासंस्थं सर्वैर्यथास्वं कर्तव्यम् · प्रतीष्युद्धरणपक्षे यज्ञोपवीतिनाहवनीयस्योद्धरणं कर्तव्यम् प्राचीनावीतिना दक्षिणाग्नेः सर्वसाधारणार्थोद्धरणपक्षे तु तेष्वेव · आसनान्यपि सर्वेषां दक्षिणाग्राणि दक्षिणाग्रैर्दर्भैरास्तृतानि चेत्येवमादि सर्वमूह्यम्।

अर्थवच्च ॥८॥ पूर्वेणाहवनीयं परिहरतीति चकारेणानुकृष्यते · अर्थः प्रयोजनमस्यास्तीति अर्थवत्प्रयोजनवत् · यद्वस्तु स्फ्यस्रुक्स्रुवाज्यस्थाल्यादिकम् तत्सर्वमपि पूर्वेणाहवनीयं परिहरति दक्षिणवेदिं प्रति नयति अव्यवायार्थमेव। नन्वेतदवाच्यम् व्यवायनिषेधादेव प्राप्तेः · सत्यम् गार्हपत्यस्य पश्चात्परिहरन्ति तथा-परिहरणे च पित्र्यमप्रादक्षिण्यं चानुगृहीतं भवत्यव्यवायश्च · तन्मा भूदित्येवमर्थम् पूर्वेण परिहरतीति प्रादक्षिण्येन नयनं नियमेनोक्तम् न व्यवेयादिति (१. ८. २३) कर्तृव्यवायनिषेधात्पात्राणामन्तरालेन[3] नयनेऽव्यवायो न भविष्यतीति शङ्कानिरासार्थं च · पात्राणामन्तरालेन नयनेऽव्यवायो भवत्येव · तान्यपि गार्हपत्याहवनीययोरन्तरेण न नेयानीत्यर्थः।

---

1) Thus M. प्रहरति २, but परिह° at ८. 2) See १. ८. २३. 3) ? कर्त्रव्य° २.

पितृभ्यः सोमवद्भ्यः षट्कपालः ॥ ९ ॥ पश्चात्तरमाह

सोमाय पितृमते ॥ १० ॥ ग्रहणं गार्हपत्यस्य पश्चादुपविष्टेन दक्षिणामुखेन प्राचीनावीतिना कार्यम् ।

पितृभ्यो बर्हिषद्भ्यो धानाः ॥ ११ ॥ भृष्टयवाः · द्वितीयं हविः ।

पितृभ्योऽग्निष्वात्तेभ्यो मन्थः ॥ १२ ॥ निवान्यायै दुग्धे सकृदुपमथित एकशलाकया मन्थो भवति (२. ६. १. ६) । यदसकृद्देवानां तत्सकृत्पित्र्यऽइति पित्र्यत्वादत्र सकृद्ग्रहणे प्राप्तऽआह ·

चतुर्वा ग्रहणम् ॥ १३ ॥ वा निर्धारणे ।

गार्हपत्यस्य पुरस्तादवहननपेषणे ॥ १४ ॥ अध्वर्युणाग्नीध्रेण वावहननं दक्षिणामुखेन तिष्ठता कर्तव्यम् · फलीकरणं च सकृत् न त्रिः ।

दक्षिणार्धे कपालोपधानम् ॥ १५ ॥ गार्हपत्यस्य दक्षिणभागे · ततश्चोपवेषेणाङ्गारानुत्तरतः कृत्वा षण्णां कपालानामुपधानं दक्षिणामुखेन कर्तव्यम् ।

धानाभर्जनं दक्षिणाग्नौ ॥ १६ ॥ धानानां पचनम् · अतस्तदर्थं कर्परोपधानमपि दक्षिणाग्नौ कर्तव्यम् · प्रथमकपालधर्मेण तत्र नाङ्गाराणां प्राचां करणम् देशरेचनस्यानुपयोगात् । प्रकृतौ पूर्वं पेषणं ततः श्रपणमिति क्रमः ·

श्रपणपेषणविपर्यासेऽपि धर्माः ॥ १७ ॥ धानानां श्रपणपेषणयोर्विपर्यासे क्रमान्यत्वेऽपि धर्मा भवन्ति प्राकृताः मल्लेपाधिश्रयणपर्यग्निकरणाकृष्णाजिनास्तरणादृषदुपधानाद्यो भवन्त्येव कुतः यतो धर्माः प्रधानभूताः क्रमस्तु गुणभूतः ।

अभिमृश्यार्धाः पिष्ट्वा निवान्यादुग्धे सकृन्मथित एकशलाकया मन्थः ॥ १८ ॥ पुरोडाशधानाश्चाभिमृश्य मा भेरित्यभिमर्शनानन्तरं धाना उद्वास्य द्वेधा विभज्येदं पितृणां बर्हिषदाम् इदं पितृणामग्निष्वात्तानामित्यभिमृश्य अग्निष्वात्तसम्बन्धिनीरर्धा धानाः पिष्ट्वा प्रकृतिवत्पेषणेन चूर्णीकृत्य निवान्याया गोर्दुग्धे क्षीरमध्ये एकशलाकया सकृन्मथितः एकवारमेवाप्रदक्षिणं मथितो विलोडितो मन्थो निष्पादयितव्यः · स्वयं मृतवत्सा परकीयेण वत्सेन या गौर्दुह्यते सा निवान्या · मन्थ आडालिताः[1] सक्तवः · एका चासौ शलाका चैकशलाका शीर्षकरहिता

---

[1] मंथ अड्डा° २. See *Westergaard* s. v. ड्डल्.

इत्यर्थः पूर्वकालैकेति (पा° २. १. ४९) समासः। आपस्तम्बसूत्रेऽपि उद्वासनकाले धाना उद्वास्य विभागमन्त्रेण विभज्यार्धा आज्येन संयौत्यर्धाः पिष्टानामावृता सक्तून्कृत्वाभिवान्यायै दुग्धस्यार्धशरावे सक्तूनोप्यैकया शलाकयैलुकाण्डेन वा दक्षिणामुखस्त्रिः प्रसव्यमन्वारभ्योपमन्थति शलाकालोडितं[1] मन्थं कृत्वैकैकशो हवींष्यासादयतीति · काठके सपवित्रे निवान्या[या] गोर्दुग्धे सक्तूनैषीकया प्रसव्यमन्वारभ्योपमन्थतीति · मानवे अभिवान्यायाः पयस्यूर्धपात्रे प्रसव्यमिलुशलाकयाङ्गाल्य शलाकामुद्धरतीति · स्वश्रुतावपि (२. ६. १. ६) निवान्यायै दुग्धे सकृदुपमथित इति दुग्धे पयसि प्रक्षिप्तो[2] धानाचूर्णा इति माधवाचार्या व्याख्यातवन्तः[3]। इदानीमिदं विचार्यते किं मन्थस्य पृथग्ग्रहणम् उताग्रहणमिति · किं तावत्प्राप्तम् · तत्र सूत्रकार एव पक्षं परिगृह्णाति ·

अग्रहणं मन्थस्य ततोऽर्धाः पिंषन्तीति (२. ६. १. ५) श्रुतेः[4] ॥१९॥ ततो° श्रुतेरिति व्यवहितेन सम्बन्धः अत्रैव हेतुत्वेनान्वयात् · तत्र मन्थस्याग्रहणम् पृथगग्निष्वात्तोद्देशेन स्वतन्त्रं चतुर्मुष्टिकग्रहणं[5] न भवति। कुतः ततोऽर्धाः पिंषन्तीति श्रुतेः · यत एवं श्रूयते अथ पितृभ्यो बर्हिषद्भ्योऽन्वाहार्यपचने धानाः कुर्वन्ति ततोऽर्धाः पिंषन्तीति · अस्यार्थः · ततस्ताभ्यो बर्हिषद्भ्यो गृहीताभ्योऽन्वाहार्यपचने भृष्टाभ्यो धानाभ्यः सकाशात् अर्धाः धाना आदाय पिंषन्ति चूर्णयन्ति। ततो बर्हिषद्भ्यो गृहीतानामेव धानानां मध्यान्मन्थार्थमर्धानां पेषणस्य विधानात्तदर्थं पृथग्ग्रहणं न कर्तव्यमिति प्राप्तऽआह ·

ग्रहणं वा चोदितत्वात् ॥२०॥ वा पक्षव्यावृत्तौ[6] · पृथगेव मन्थस्य ग्रहणम् अग्निष्वात्तोद्देशेन स्वतन्त्रं चतुर्मुष्टिकग्रहणं[5] कर्तव्यमित्यर्थः · कुतः चोदितत्वात् शाखान्तरे पृथग्ग्रह[णा]स्य विहितत्वात् स्वशाखायामपि एतानि हवींषि भवन्तीति (२. ६. १. ६) त्रयाणां हविषां विधानात् · अवहननअपणयोः सह क्रियमाणत्वात् ततोऽर्धाः पिंषन्तीत्येतदर्थप्राप्तस्य प्रकृतितः प्राप्तस्य समवि-

---

1) ? °कालोस्थं २. 2) ? °थित इति दुग्धे इति समो दुग्धे प्र° २. 3) see Editio pag. २१७, lin. २०. 4) ? ततो° श्रुतेः deest in २. as part of the text, but see the scholion. M gives it not here, but between २० and २१. Ss. reads अग्रहणं° श्रुतेः। ग्रहणं° त्वात्. 5) ? ष्टीक° २. 6) सिद्धान्ते Ss.

भागस्यानुवादः अतो न तद्बलेन चोदकप्राप्तस्य ग्रहणस्याभावोऽवधारयितुं शक्यते · तस्मान्मन्थार्थं पृथग्ग्रहणं भवत्येव । तथा च मानवे प्राग्दक्षिणाचाराः पितृयज्ञेन चरन्त्युपमूलं बर्हिर्लावयन्प्रस्तराद्भूय[1] इध्माबर्हिः संनह्यापरेण[2] परिस्तीर्य एकैकं पात्राणि प्रयुनक्ति अन्यत्प्राशित्रहरणाद्दक्षिणतः पुरस्ताद्दक्षिणाग्नेः प्रणीताः सादयति दक्षिणाग्नौ निष्टपति दक्षिणतोऽग्निं भृष्टान्निर्वपति[3] सोमाय पितृमते षट्कपालं पितृभ्यो बर्हिषद्भ्यो यवान्धानाभ्यः पितृभ्योऽग्निष्वात्तेभ्यो यवान्मन्थाय सिद्धमाधिश्रयणाद्धूयमानासु पर्यग्निकरोति धानानामितरार्धं मन्था-[य] पिनष्टि सिद्धमाभिवासनादिति · आपस्तम्बे च समूलं बर्हिर्भवत्युपमूललूनं वा वर्षीयानर्थादिध्मो द्राघीयांश्चेति · काठके च उपमूललूनं बर्हिरिति पूर्वेण दक्षिणमग्निमेकैकं पात्रं प्रयुनक्त्यपरेण ब्रह्मयजमानाविति । अत्रायं पदार्थक्रमः त्रयाणामपि हविषां ग्रहणादि फलीकरणान्तं कृत्वा यवमन्थश्चेत्षट्कपालार्थान्यवान्पृथक्कृत्याभिमृश्य कृष्णाजिनादानादि प्रोक्षणान्तं षट्कपालार्थानामेव पेषणं कृत्वा ईक्षणसंवापसंयवनाधिश्रयणानि कृत्वा धानामन्थार्थानां यवानां दक्षिणाग्नौ कर्पराधिश्रयणम् गार्हपत्यादेवोभयोः पर्यग्निकरणम् यथाधिश्रितं श्रपणम् पुरोडाशस्य शृतालम्भो धानानां च ततो धाना उद्वास्य विभज्याभिमृश्य पूर्वोपहिताभ्यामेव दृषदुपलाभ्यामर्धानां पेषणं कृत्वेक्षणसंवापदुग्धोपसर्जनीनिनयनाङ्गालनानि कृत्वा पुरोडाशस्याभिवासनम् पात्र्यङ्गुलिप्रक्षालननिनयनं चाहवनीयं पूर्वेणोदक्संस्थं कुर्यात् पुरस्तादुपचार इत्युक्तत्वात् (२) तथा कृते दिग्विपर्ययेण[4] प्रत्यक्संस्थं निनयनं कृतं भवतीति ।

दक्षिणेन दक्षिणाग्निं परिवृतमुदग्द्वारं तन्मध्ये वेदिं करोत्यवान्तरदिक्स्रक्तिमाख्याते ॥ २१ ॥ त्रिताय त्वेत्यादिमन्त्रैरास्येभ्यः पात्र्यङ्गुलिप्रक्षालननिनयनान्ते कृते · अर्थात्परिमाणमुदग्द्वारं परिवृतम् समचतुरस्रं परि समन्ताद्वृतं कटपटादिनावृतम् · आग्नेयनैर्ऋतवायव्येशानीषवान्तरदिक्षु स्रक्तयः कोणा यस्याः सा अवान्तरदिक्स्रक्तिः ताम् शाखान्तरे हि दिक्स्रक्तिः पठ्यते तद्वारणायावान्तरमित्युक्तम् स्वश्रुतौ तथा श्रवणात् (२.६.१.१०) । तथा च मानवे अग्रेणान्वाहार्य-

१) ? °र्लान्यन्यन्प्रस्त° २· २) ? °परी २· ३) ? °ग्निं ष्टानि° २· ४) ? °पर्यायेण २·

पचनं दक्षिणाग्निं त्रिषु प्रक्रमेष्वपरिमिते वावकाशे पुरुषमात्रां दिक्काष्ठां[1] चतुरश्रां वेदिं करोतीति · आपस्तम्बोऽपि अग्रेणान्वाहार्यपचनं यजमानमात्रीं चतुःस्रक्तिं वेदिं करोति प्रतिदिशं स्रक्त्यो ऽवान्तरदेशान्प्रति मध्यानुद्धत्य खाता[2] भवति न प्राची वेदिरुद्धत्या[3] पितृयज्ञो हि न दक्षिणा यज्ञो ह्युभे दिशावन्तरोद्धत्योभयत्र[4] हि देवाश्च पितरश्चेज्यन्त ऽइति विज्ञायते ये के च देवसंयुक्ता मन्त्रा देवेभ्यः पितृभ्य इति तान्संनमति यथा भवति देवपितृयजनीत्यविकारो वेति । परिवृते चरन्तीति (२. ६. १. २०) श्रुतत्वात्परिवृतकरणमुक्तम् ।

दक्षिणाग्निं मध्येऽस्याः करोति ॥ २२ ॥ वेदिमानमुत्करकरणान्तं कृत्वा तन्मध्ये सकृत्सकृत्परिसमूहनादिपञ्चभूसंस्कारान्कृत्वा अस्या वेदेर्मध्ये गर्भे[5] [दक्षिणाग्निं सधानाभर्जनं] कर्परादिना आनीय स्थापयति · ततोऽन्वाहार्याधिश्रयणम् । आस्यान्त ऽएव परिवृतादिकरणस्योपदेशात् सामर्थ्यादौचित्याच्चानधिकृतान्वाहार्याधिश्रयणो[6] दक्षिणाग्निस्तत्सहित आनेतुं शक्यते घटते चेति ।

प्रणीतानुद्धरणम् ॥ २३ ॥ दक्षिणाग्नौ नीयमाने प्रणीतानामनुद्धरणम् पृष्ठतो नयनं कर्तव्यम् शाखान्तरात् ।

ब्रह्मयजमानौ चानुगच्छतः ॥ २४ ॥ दक्षिणाग्निं दक्षिणतो वेदिमध्ये नीयमानमनुगच्छतः यस्मिन्पार्श्वे · उपविष्टौ तत्पार्श्वस्थावेवानुगत्य तथैवोपविशतः पुरस्तात्पश्चाद्वेति ।

स्फ्यादानादि करोति ॥ २५ ॥ पूर्वमन्वाहार्यमधिश्रित्य ततः सतृणवज्रादानादि कर्माध्वर्युः करोति · अत्र रेखाहरणमग्नीदेव करोति नाध्वर्युः क्वचिदप्यनुक्तत्वात् । पत्नीं संनह्येति प्रैषस्याभावः पत्नीसंनहनस्य च · पत्न्या अभावादाज्यावेक्षणमध्वर्युः ।

यज्ञोपवीत्याज्यग्रहणे ॥ २६ ॥ अध्वर्युरेवैकः ।

द्विर्वोपभृति ॥ २७ ॥ द्वौ स्रुवौ वा उपभृति आज्यं गृह्णाति वा अष्टकृत्व

---

1) ? °दिक्कष्ठां २. 2) ? नुद्धृतास्वाना २. 3) ? °द्धृत्या २. 4) याज्ञो घ्नमे दि°न्ध्योभयेत्र २. 5) गर्भे अन्य २. 6) °च्चानहिक° २.

एव · जुह्वां ध्रुवायां च चतुर्गृहीतमेव । आज्यग्रहणानन्तरं पुनरपसव्यं कृत्वेध्मप्रोक्षणादि करोति ।

प्राग्ग्रन्थि बर्हिः ॥ २८ ॥ वेद्यां निदधाति प्रोक्षणार्थम् न तु दिग्विपर्ययवशेन दक्षिणाग्रम् ।

विस्रस्य यूनं चाग्रे गृहीत्वा त्रि स्तृणन्नग्निं पर्येति ॥ २९ ॥ संनहनबद्धं बर्हिर्विस्रस्य यूनं संनहनं बर्हिश्चोभयमग्रे गृहीत्वा वेदेरुत्तरापरकोणादारभ्य त्रिर्वारमप्रदक्षिणं वेदिं स्तृणन् अग्निं पर्येति परितः सर्वतो गच्छति · स्तरणं कुर्वता च संनहनं दक्षिणश्रोणौ स्तरणीयम् प्रकृतौ तस्य तत्र दृष्टत्वात् (२.७.२२) ।

प्रस्तरमात्रं शिष्ट्वा तावत्प्रतिपर्येति ॥ ३० ॥ मुष्टिमात्रं बर्हिः परिशेष्य त्रिरेव प्रदक्षिणं पर्येति ।

तं स्तृणात्यविधृतिम् ॥ ३१ ॥ शेषितं प्रस्तरमात्रं विधृतिव्यवधानरहितं विधृत्योरन्तराले निधानं विनैव दक्षिणाग्रं स्तृणाति ।

प्राक्संस्थं हविरासादनम् ॥ ३२ ॥ तथा सत्युदक्संस्थं सम्पद्यते दिग्विपर्ययेण प्राच्या उदीचीत्वात् ।

सामिधेनिप्रैषाद्याऽऽज्यभागाभ्यां यज्ञोपवीतिनः सर्वे ॥ ३३ ॥ अग्नये समिध्यमानायानुब्रूहीत्ययं प्रैषः तमारभ्य आ आज्यभागाभ्याम् आज्यभागपर्यन्तं सर्व एव यजमानर्त्विजो यज्ञोपवीतिनः कृतसव्याः कर्म कुर्वन्ति ।

पश्चात्परीतो ब्रह्मयजमानौ ॥ ३४ ॥ दक्षिणाग्नेः पूर्वदेशाद्दक्षिणपार्श्वमार्गेण पश्चादपरपार्श्वे परिक्रम्यागच्छतः प्रत्यङ्मुखौ उपविशतः ।

पुरस्तादग्नीत् ॥ ३५ ॥ पश्चिमपार्श्वाद्दक्षिणपार्श्वेन गत्वा परिक्रम्यागच्छति । अत्राहापस्तम्बः एकामनूयाजसमिधमवशेष्य समश इध्मं त्रेधं विभज्य त्रिरादधातीति · काठके च अनूच्यमानायां सामिधेन्यां त्रिरिध्ममादधातीति ।

आश्राव्य सीद होतरित्येव ब्रूयात् ॥ ३६ ॥ नाग्निर्देवो दैव्यो होतेति ।

अपबर्हिषः प्रयाजाः ॥ ३७ ॥ अपेति वर्जनार्थः अपपरी वर्जनऽइति (पा° १.४.८८) कर्मप्रवचनीयः · पञ्चम्यपाङ्परिभिरिति (पा° २.३.१०) पञ्चमी[1] ·

१) अपबर्हिषः is a compound, what is manifest from the accent, and from the

बर्हिःप्रयाजवर्जिताश्चत्वारः प्रयाजा भवन्ति तदभावात्तद्योगिनः चत्वारो ममेत्य-नुमन्त्रणस्याप्यभावः ।

अनुयाजाश्च ॥ ३८ ॥ अप बर्हिषः देवं बर्हिरित्येतद्वर्जिता भवन्ति ।

असमानयनं वा बर्हिःसंयोगात् ॥ ३९ ॥ चतुर्थे प्रयाजे यत्समानयनमुक्तम् तदत्र न भवति · [कुत एतत् तस्य बर्हिःसंयोगात् समानयति बर्हिषि] · अथ वा भवति तस्य चतुर्थसंयोगात् · समानयनं भवत्येवेति पितृभूतिः भव-त्ये[वे]ति कर्कः ।

प्रत्यगतीत्य जुहोति ॥ ४० ॥[2] तत्रोपभृति दिग्ग्रहणे प्रतीच्यां[3] दिश्य-तिक्रम्य प्रयाजाज्यभागौ जुहोति अनुयाजौ च · एवं च कृते प्रकृतिवत्कृतं भवति [दक्षिणायास्तु दिशः स्थाने दिग्विपर्यासेन प्रतीची] · प्रधानेषु स्विष्टकृति चा-तिक्रमणं प्रतिषिद्धम् ॥ ॥ पञ्चमस्याष्टमी कण्डिका ॥ ८ ॥

अथ पद्धतिः ।

अथ पित्र्येष्टिरुच्यते · सा चापराह्णे भवति । तत्र त्रीणि हवींषि भवन्ति · पितृभ्यः सोमवद्भ्यः षट्कपालः पुरोडाशः सोमाय वा पितृमते इति प्रथमह-विषि देवताविकल्पः · पितृभ्यो बर्हिषद्भ्यो धानाः · पितृभ्योऽग्निष्वात्तेभ्यो मन्थः । अपत्नीकः पत्नीकर्तृकपदार्थवर्जितोऽयं पितृयज्ञो भवतीत्यर्थः । दक्षिणाग्निरत्रा-हवनीयवद्भवति सर्वमाहवनीयकार्यं दक्षिणाग्नौ कार्यम् । तत्र पूर्वं सर्वेषा-मृत्विग्यजमानानामपसव्यकरणम् । प्रतीच्युद्धरणपक्षे प्राचोनावीती पञ्च भूसंस्का-रान्कृत्वा दक्षिणाग्निमुद्धरति पितृयज्ञार्थं गार्हपत्यादिति दक्षिणामुखः · ततो यज्ञोपवीती प्राङ्मुख आहवनीयमुद्धरति । अध्वर्युर्यजमानो वा यः पिण्डदानं करिष्यन्भवति तस्य नीविकरणम्[4] । दक्षिणाग्नौ दक्षिणामुखस्याग्न्यन्वाधानम् नान्यत्र । षडासनोपकल्पनम् · आहवनीयस्य पुरस्ताद्ब्रह्मवरणम् प्राङ्मुखो यजमानो दक्षिणामुखो ब्रह्मा पितृयज्ञेनाहं यक्ष्ये तत्र भूपतऽइति · ततो

---

dual अपबर्हिषौ २. ६. १. ४४.

1) This sûtra is given in १. and M. at the head of the next kaṇḍikâ, but २ (where however the text itself is not exhibited) closes by it the eight chapter. 2) ? प्राच्यां २. 3) Thus १. नीवीकरणं B.

ब्रह्मा उत्थाय दक्षिणेनाहवनीयमागत्य दक्षिणाग्नेः पुरस्तात्प्रत्यङ्मुखो दक्षिणा-
ग्न्यभिमुखः समन्त्रकं दक्षिणाग्रमासनं संस्कृत्योपविशति उत्तरेण यजमानः ·
अथवा ब्रह्मवरणस्थानादुत्थायाहवनीयं दक्षिणेन गत्वा दक्षिणाग्निमुत्तरेण दक्षि-
णेन वा गत्वा दक्षिणाग्नेः पश्चात्प्राङ्मुख उपविशति तत उत्तरतो यजमानः
प्राङ्मुख एव · एवं ब्रह्मयजमानयोरुपवेशनस्थानविकल्पः दक्षिणाग्नेः पुरस्ता-
त्पश्चाद्वा · यदा पुरस्तादुपविशतः तदा वक्ष्यमाणेषु कालेषु पुनःपुनर्विपर्यासं
कुरुतः यदा चादौ पश्चादुपविशतः तदा इष्टिसमाप्तिपर्यन्तं तत्रैवोपविशतः न
वक्ष्यमाणं विपर्यासं कुरुतः । ततो व्रतग्रहणम् · ततो गार्हपत्यदक्षिणाग्नीऽअ-
न्तरेण गत्वा दक्षिणाग्नेरुत्तरतो दक्षिणाभिमुखस्तिष्ठन्दक्षिणाग्निमीक्षमाणोऽप उप-
स्पृश्य व्रतमुपैत्यग्ने व्रतपतऽइदमहमिति वा · ततः स्वासनऽउपविशति · ततो
ऽध्वर्युश्चमसमुदकेन पूरयित्वा गार्हपत्यस्य पुरस्ताद्दक्षिणाग्रं निधाय दक्षिणामुख आ-
लभते भूतस्त्वेति ब्रह्मन्नप इत्यादि (२. ३. १) · अत्र सर्वमपसव्येन दक्षिणाभिमुखेनो-
पांशु च कर्तव्यम् । पूर्वेणाहवनीयं प्रणीताः परिहृत्य[1] दक्षिणाग्नेः पुरस्ताद्दक्षिणाग्रं
चमसं निदधाति · अत्राहवनीयात्पूर्वेण प्रणीतादिनयनं गार्हपत्याहवनीययोर-
व्यवायार्थम् · एवं यत्किंचिदत्रार्थवत्स्फ्यतृणाग्निस्रुक्स्रुवाज्यादि[2] दक्षिणाग्निं प्रति
नीयते तत्सर्वमाहवनीयं पूर्वेणैव नेयम् । अत्र दक्षिणा दिक्प्राची प्रतीची
दक्षिणा उत्तरा प्रतीची प्राची उदाचीत्येवं दिशां विपर्यासो ज्ञेयः · तेनात्र
दक्षिणां दिशं प्राचीं विचित्य तत आरभ्य प्रदक्षिणं प्राक्संस्थं परिस्तरणं कर्त-
व्यम् दक्षिणत उत्तरतश्च प्रागग्राणि तृणानि पूर्वापरयोर्दक्षिणाग्राणि · यच्चात्र
प्राक्संस्थं दक्षिणाग्रमित्येवमाद्युच्यते तत्र प्राकृता दिशो ज्ञेयाः न विपर्यस्ताः ·
एवमेकस्यैव दक्षिणाग्नेः परिस्तरणम् नेतरयोः । ततः पात्रासादनम् · गार्हपत्य-
दक्षिणाग्न्योरुत्तरतः प्राक्संस्थं दक्षिणाग्राणां पात्राणामासादनम् · शूर्पाग्निहोत्र-
हवणी स्फ्यः भर्जनसप्तमानि षट्कपालानि[3] शम्याकृष्णाजिनम् उलूखल-
मुसलम् दृषदुपलम् पात्रीधान्यम् यवाः पवित्रार्थौ धृष्टिः संयवनोदकम् संय-

---

१) Thus B. प्रहृत्य १. २) ? र्थवत्स्यतृणाभिस्रुक्स्रुवाभ्यदि १. ३) षट्कपालानि कर्परं च B.

वनार्थं निवान्यापयश्च तां पूर्वं दुग्ध्वा तत्पय आसाद्यते स्थाली आज्यं च वेदश्च दक्षिणार्थोऽन्वाहार्यः उदकतृणमग्नि[:] इध्मकाष्ठान्यष्टादशैव बर्हिः स्रुवो जुहूः उपभृद्ध्रुवा गोकर्णाकारं शृतावदानम् पुरोडाशपात्र्यस्तिस्रः एकैकशो हवींष्यासादयतीत्यापस्तम्बवचनात् परिधयस्त्रयः कुशास्तृतं पीठम् उदपात्रम् एकशलाका पक्षे प्राशित्रहरणेऽइडापात्री च । ततो गार्हपत्यस्य पश्चाद्दक्षिणाग्रां सहविष्कां पात्रीं निधाय दक्षिणाग्रं स्फ्यमधः प्रेरयेत् · ततः शूर्पाग्निहोत्रहवण्योरादानम् गार्हपत्ये प्रतपनम् उदकालम्भः गमनम् · गार्हपत्यस्य पश्चाद्दक्षिणामुख उपविश्य पात्रीबिले धूरसीत्यादि (१. ८) जपति तत्रोहः पितृणामसि वह्नितमं पितृहूतममिति · हविष ईक्षणम् अपहव्यनिरसनम् आलम्भनम् · ग्रहणे पितृभ्यः सोमवद्भ्यो जुष्टं गृह्णामि सोमाय पितृमते जुष्टं गृह्णामीति वा · अस्मिन्पक्षे एतत्सर्वमपसव्येन[1] कर्तव्यमिति शाङ्खायनः (३. १६. ११ १३) प्राचीनापवीत्येता देवता यजति पितृमन्तं परिहाप्येति · पितृभ्यो बर्हिषद्भ्यो जुष्टम् पितृभ्योऽग्निष्वात्तेभ्यो जुष्टम् · पितृतीर्थेनाग्निहोत्रहवण्यां प्रक्षेपः ग्रहणं प्रकृतिवत् त्रिर्मन्त्रेण चतुर्थं तूष्णीमिति · शेषाभिमर्शनम् दक्षिणाया ईक्षणम् उत्थानम् उत्तरतो गत्वा गार्हपत्यदक्षिणाग्न्योरुत्तरतो हविषामासादनं पृथिव्यास्त्वेति उभयोरत्र अपणावात् । प्रोक्षण्युदिङ्गने यज्ञपतिं देवपितृयुवमिति (१. १२) · प्रोक्षणे पितृभ्यः सोमवद्भ्यस्त्वा जुष्टम् सोमाय वा पितृमते त्वेति वा पितृभ्यो बर्हिषद्भ्यस्त्वा जुष्टम् पितृभ्योऽग्निष्वात्तेभ्यस्त्वा जुष्टम् · दैव्याय पित्र्याय कर्मणे शुन्धध्वं देवपितृयज्यायै इति (१. १३) पात्रप्रोक्षणेऽऊहः · प्रतिपात्र-प्रोक्षणपक्षे तु[2] यानि केवलप्रधानार्थानि पात्राणि तेषु पित्र्याय कर्मणे शुन्धध्वं पितृयज्यायै इति मन्त्रः · वत्साज्यस्थालीवेदवेदितृणाग्निस्रुवजुहूपभृद्ध्रुवा इध्मबर्हिः परिधय आज्यं होतृषदनमित्येतेषु दैव्याय पित्र्याय शेषेषु पित्र्यायेति · आहवनीयं पूर्वेण हवासंचरे प्रोक्षणीर्निदधाति । ततः कृष्णाजिनादानम् अवधूननम् अपां स्पर्शः · दक्षिणाग्नेरुत्तरतो गार्हपत्यस्य पुरस्तादुदग्ग्रीवस्य कृष्णाजिनस्यास्तरणम् सव्याशून्ये उलूखलनिधानम् · हविरावपने अग्नेस्तनूरसि वाचो

1) ? °क्षे एतसवंधसर्वमपि सव्येन १. 2) See pag. १८१, ६.

विसर्जनं पितृवीतये त्वा गृह्णामीति (१.१५) · बृहद्ग्रावेति (१.१५) मुसलादानम् स इदमित्यवधानम् (१.१५)[1] मन्त्रऽऊहः स इदं पितृभ्यो हविरिति · अध्वर्यरुत्थाय दक्षिणामुखोऽवहननं कुर्वन्हविष्कृदाह्वानं करोति · अग्नीत्कुक्कुटाहननं कृत्वा दक्षिणामुखस्तिष्ठन्नवहन्ति · शूर्पादानादि सकृत्फलीकरणान्तम्[2] · एकवीत्रपत्ते विभज्यालम्भः इदं पितृणा सोमवताम् इदं पितृणां बर्हिषदाम् पितृणामग्निष्वात्तानां च · अध्वर्योः पुनःकृष्णाजिनादानादि पेषणारम्भः तत्र धान्यमसि धिनुहि पितॄनिति (१.२०) विशेषः । अग्नीधो दक्षिणाभिमुखोपविष्टस्य कपालोपधानम् · स उपवेषमादाय[3] अङ्गारानुत्तरतः करोति · आ पितृयज्ञं वहेत्यङ्गारस्याहरणम् (१.१७) · गार्हपत्यस्य दक्षिणार्धे कपालोपधानम् ध्रुवमसीति (१.१७) मध्यमम् उत्तरतो द्वितीयम् दक्षिणातस्तृतीयम् मध्यमस्य पश्चाच्चतुर्थम् तस्मादुत्तरतः पञ्चमम् मध्यमात्पूर्वं षष्ठम् · ततो दक्षिणाग्नौ कर्परोपधानम् प्रथमकपालधर्मेणा तत्राङ्गाराणां प्राकूरणाभावः स्वस्थानस्थानामङ्गाराणामुपर्येव कर्परोपधानम् अग्ने ब्रह्मेत्यङ्गारस्य (१.१८) कर्परस्योपरि निधानम् अभ्यूहनाभावः कर्परे । उदकोपसर्जनीनां गार्हपत्येऽधिश्रयणम् निवान्यादुग्धस्य दक्षिणाग्नौ · यजमानस्याज्यनिर्वापः · वेदबन्धे ऊहः देवपितृभ्यो वेदोऽभव इति (२.२१) · अध्वर्युर्गार्हपत्यस्य पुरस्तादुदग्ग्रीवं कृष्णाजिनमास्तीर्य तत्र प्रोक्षणान्ते पेषणं कृत्वा पिष्टानामीक्षणं करोति ततः पात्र्यां संवापं कृत्वा केवलां पात्रीं गृहीत्वा पूर्वेणाहवनीयं गत्वा वेदिमध्यऽउपविशति गार्हपत्यस्योत्तरतो वा · अग्नीत्स्फ्यं गृहीत्वोपसर्जनीः प्रागुद्वास्यानीय निनयति · अध्वर्योः प्रतिग्रहणादि । आज्यस्य पुरोडाशस्य च गार्हपत्येऽधिश्रयणाम् धानार्थानां दक्षिणाग्नौ कर्परे तत्र घर्मा स्थ विश्वायुष इत्यूहः (१.२२) · ततो गार्हपत्यादङ्गारमादाय तेनैवाज्यपुरोडाशयोर्दक्षिणाग्यधिश्रितधानानां च पर्यग्निकरणम् गार्हपत्येऽङ्गारस्य प्रतिप्रक्षेप[4] उदकालम्भः · पुरोडाशश्रपणाम् देवस्त्वेति (१.२२) · दक्षिणाग्न्यादीप्तानां तृणानां कर्परस्याधस्तात्प्रेरणम् देवो वः सविता श्रपयत्विति · मा भेरिति (१.२३) पुरोडा-

---

१) ? °दानं । हविराश्रपने । स इद° १. २) °णान्ति १. ३) सोपवष° १. ४) Thus B. प्रतिक्षेपः १.

शस्यालम्भः मा भैष्ट मा संविग्धमिति धानानाम् · ततो धानानामुद्वासनम् · विभज्यालम्भः इदं पितॄणां बर्हिषदाम् इदं पितॄणामग्निष्वात्तानाम् । ततो धान्यमसि धिनुहि पितॄनिति (१.२०) अग्निष्वात्तानां भागं दृषद्योप्य तस्य पेषणं प्रोक्षणान्तम् · पिष्टानामीक्षणम् धानानां च · सपवित्रपात्र्यां संवापः पिष्टानाम् · ततोऽग्नीन्निवानीदुग्धं[1] प्रागुद्वास्य तत्रैवोपविष्टस्याध्वर्योर्हस्ते पवित्रयोरुपरि निनयति · प्रतिग्रहमन्त्रे ऊहः सं पय ओषधीभिः समोषधयो रसेन स७ रेवज्जगतीभिः पृच्यता७ सं मधुमन्मधुमतीभिः पृच्यतामिति (१.२१) · तत एकशलाकया सकृदप्रदक्षिणं मन्थनम् जनयत्यै त्वेति (१.२२) मन्त्रेणेति जीर्णाः सम्प्रदायः · मन्थ आड्वालिताः सक्तवः सकृदुपमथितः सकृदाड्वालितः · अतः पूर्णपात्रादौ पूर्वं दुग्धं निनीय तन्मध्ये धानापिष्टं[2] प्रक्षिप्यैकशलाकया सकृदाड्वालनं क्रियत इति रहस्यम् · एवंरूपमेवैतद्धविः अतो विहितं संयवनं कृत्वा पुरोडाशरूपः क्रियतऽइति न युक्तम् · अतः पूर्वं गर्तवति पात्रेऽग्नीधो निवान्यादुग्धनिनयनम् पवित्राभ्यां प्रतिग्रहणम् ततः पिष्टानां तत्र संवापः ततो जनयत्यै त्वेति (१.२२) शलाकयाड्वालनमिति क्रमो वचनात् । ततः पाण्यङ्गुलिप्रक्षालनम् · अतमेरुरिति (१.२३) पुरोडाशस्याभिवासनम् गार्हपत्यादभितपनम् · आहवनीयं पूर्वेण दक्षिणात आरभ्योदकसंस्थं निनयनम् । तत आहवनीयं पूर्वेण गत्वा दक्षिणेन दक्षिणाग्निमर्थात्परिमाणमुदग्द्वारं चतुःकोणं परिवृतं कृत्वा तन्मध्ये दार्शपौर्णमासिकीं वेदिं कुर्यात् · तत्र प्रकृतिवद्वेदिमानम् वेदिपरिसमूहनम् उत्करकरणम् · ततो वेदिमध्ये दक्षिणाग्निखरं कृत्वा तत्र सकृत्परिसमूहनादीन्पञ्च संस्कारान्कृत्वा कर्परादिनोपर्यधिष्ठितकर्परसहितमेव दक्षिणाग्निमानीय मध्ये स्थापयेत् · प्रणीतानामनुहरणं कृत्वा दक्षिणाग्नेः पुरस्तात्स्थापनम् ब्रह्मयजमानयोश्चानुगमनम् · ततो वेदिमध्ये स्थापिते दक्षिणाग्नावन्वाहार्याधिश्रयणम् । ततः सतृणवज्रादानम् तत्रोहः आददेऽधरकृतं देवपितृभ्य इति (१.२४) · ततो वेद्यां प्रागग्रस्य तृणस्य निधानम् · प्रहरणादि पृथिवि देवपितृयजनीति (१.२५) अपाररुं पृथिव्यै देवपितृयजनादित्यूहः (१.२६) सतृणपुरीषस्योत्करे-करणान्तम् ·

[1] Thus १. निवान्यादु° B. [2] ? °पित्रं १. अथवा पात्रे दुग्धं निनीय उपरि पिष्टप्रक्षेपः B.

पूर्वपरिग्रहः तत्र सुगा वो देवाः पितरः सदनानि सन्वस्यामित्यूहः[१] · लेखा-
करणमध्वर्योः हरणसंमर्शने अग्नीदेव करोति नाध्वर्युः · खननम् · उत्तरप-
रिग्रहः · दक्षिणात आरभ्योदक्संस्थमनुमार्जनम् · प्रोक्षणीप्रैषः · तत्र पत्नीं
संनह्येति न भवति · स्फ्योदक्प्रहरणम् · पाण्योरवनेजनम् · अपरेण प्रणीता-
नामध्वर्योः स्फ्यसादनम् · इध्माबर्हिषोर्दक्षिणाग्रयोरग्नीधः सादनम् तत्रापि पश्चा-
दिध्मः पूर्वं बर्हिः · स्रुवादीनां संमार्गः संमार्जनापासनम् । आज्योद्वासनम् ·
आहवनीयं पूर्वेणानीयाध्वर्योरग्रे निधानम् · अदब्धेनेत्यध्वर्युराज्यमवेक्षते (१. ३०)
आज्यसंस्कारस्यानिषेधात् तत्र सुहूर्देवपितृभ्य इत्यूहः कार्यः · ततोऽग्नीद्विध्मा-
माज्यमासादयति प्रोक्षणीनामुत्तरतः · तत आज्योत्पवनम् प्रोक्षण्युत्पवनम्
आज्यावेक्षणम् · अध्वर्युः सव्यं[२] कृत्वाज्यानि गृह्णाति · चतुर्जुह्वाम् उपभृत्य-
ष्टकृत्वो द्विर्वा चतुर्ध्रुवायाम् तत्रैव मन्त्रस्योहः प्रियं देवपितृणामनाधृष्टं देवपि-
तृयजनमसीति (१. ३१) ध्रौवा[ज्य]स्य देवपित्रर्थत्वात् । ततोऽध्वर्युरपसव्यं कृत्वेध्म-
वेदिप्रोक्षणं करोति · बर्हिषः प्रतिप्रहरणम् · दक्षिणाग्रं प्राग्ग्रन्थि वेद्यामासाद्य
प्रोक्षति · मूलावसेकः · प्रणीतासु पवित्रकरणम् । ततो बर्हिर्विस्रंस्य संनहनं
विस्रंस्योभयमग्रे गृहीत्वोत्तरापरकोणादारभ्याप्रदक्षिणं त्रिः परितः स्तृणन्नग्निं पर्येति
स्वासस्थां देवपितृभ्य इत्यूहः (२. २) · सकृदेवात्र मन्त्रः सकृदेव सर्वं बर्हि-
रादाय सांतत्येन स्तरणात् · विछिद्य-पुनरादाय-स्तरणे हि द्रव्यभेदान्मन्त्रावृत्ति-
रुक्ता नात्र तथा तस्मात्सकृदेव मन्त्रेण स्तरणम् द्विस्तूष्णीम् अत एवाह
सम्प्रदायकारः[३] सकृन्मन्त्र इति · अत्र स्तरणं कुर्वता संनहनं दक्षिणाग्रोपिदेशे
प्राकृते स्थाने स्तरणीयम् · एवमप्रदक्षिणं त्रिः परिस्तीर्य प्रस्तरमात्रं बर्हिः शिष्ट्वा
त्रिरेव प्रतिपर्येति · ततः सकृदितरथावृत्तिः । तत इध्मात्समिधमादायाहवनीयं
कल्पयति · उल्मुकोद्वहनम् · परिधिपरिधानम् मित्रावरुणौ त्वा पुरस्तात्परि-
धत्तामित्यूहः (२. ३) · स्पृश्यास्पृश्ययोराधानम् · सूर्यस्त्वा दक्षिणातः पात्विती-क्ष-
माणजपे (२. ५) ऊहः · सम्प्रदायपद्धतौ मित्रावरुणौ त्वा सूर्यस्त्वेत्यनयोरूहो नास्ति
कर्कभाष्ये तु लिखितोऽस्ति · आवृत्य विधृत्योः स्तरणं विनैव दक्षिणाग्रस्य

१) See २. २. १२. २) ? अध्वर्युरवसव्यं १. ३) ? ॰रणः १.

प्रस्तरस्य स्तरणम् तत्र जुह्वा आसादनम् ततः पूर्वामुपभृतम् ततः पूर्वां ध्रुवाम् । तत उत्थायाज्यस्थालीं स्रुवं चादाय पूर्वेणाहवनीयं गार्हपत्यसमीपे गत्वा पुरोडाशविभस्मीकरणादिकपालोद्वासनान्ते विशेषः यस्ते प्राणः पशु॰ष्टः पितॄणां विष्ठामन्वित्यूहः (२. ८. १४) पितॄन्त्सोमवतो[1] गच्छ सोमं पितृमन्तं गच्छेति वा पितॄन्बर्हिषदो गच्छ पितॄनग्निष्वात्तान्गच्छेति · ततः कपालाञ्जनम् आहवनीयं पूर्वेण गत्वा कर्पराञ्जनम् · प्रत्यागत्य कपालान्युद्वास्य तथैव गत्वा कर्परोद्वासनम् · हविरादि सर्वं प्रयोजनवत्पूर्वेणाहवनीयं नयेत् · तत आज्यस्थालीपुरोडाशादीनामासादनं प्राक्संस्थम् · सर्वेषामालम्भः आत्मालम्भः उदकालम्भः । उत्तरेण वेदिं होतृषदनस्थापनम् · एहि होतरित्यामन्त्रणम् · ततः सर्वेषां सव्यकरणम् · यदि[2] ब्रह्मयजमानौ पुरस्तादुपविष्टौ भवतः तर्हि तत उत्थाय वेदिं दक्षिणेन गत्वा पश्चात्प्राङ्मुखावुपविशतः · अग्नीत्पश्चिमपार्श्वाद्दक्षिणपार्श्वेनागत्य[3] पुरस्तात्तिष्ठते · ततोऽग्नये समिध्यमानायानुब्रूहीति प्रैषः (३. १. १) यजमानस्य संतन्वन्निति प्रैषः (३. १. ६) इदमहं तृतीयेनेत्यवबाधनम् (३. १. ९) · पञ्चदशानामिध्मकाष्ठानां समं त्रिधा विभक्तानां प्रतिप्रणवं प्रक्षेपः एकस्यानुयाजार्थं परिशेषणम् · वेदेनाग्नेरुपवाजनम् · पूर्वाघारः अग्निसंमार्गप्रैषः अग्निसंमार्गः अञ्जलिकरणम् · उत्तराघारः तत्रास्कन्नमद्य देवपितृभ्य आज्यं सम्भ्रियासम् (२. ८) देवपितृभ्य इन्द्र आज्येन हविषाभूत्स्वाहेत्यूहः (२. ९) · एत्य ध्रुवासमञ्जनम् · स्रुचोर्निधानम् । इध्मसंनहनान्यादायाश्राव्य सीद होतरित्येव प्रैषः न होतृवरणम् · स्रुगादापने पठिते जुहूपभृतावादाय प्रत्यगतिक्रम्याश्राव्य समिधो यजेत्याह · बर्हिर्वर्जिताश्चत्वारः प्रयाजाः · त्यागा अनुमन्त्रणानि च पूर्ववत् चत्वारो ममेत्यनुमन्त्रणस्याप्यभावः · उत्तमे प्रयाजे अष्टगृहीतपक्षे समानयनम् द्विर्गृहीतपक्षे जौहवशेषेणैव तत्र इदमग्नये सोमाय पितृभ्यः सोमवद्भ्यः पितृभ्यो बर्हिषद्भ्यः पितृभ्योऽग्निष्वात्तेभ्यो देवेभ्य आज्यपेभ्यः पञ्च मम न तस्येत्यादि । तत आज्यभागौ · आज्यभागानन्तरं सर्वे अपसव्यं कुर्वन्ति · यदि ब्रह्मयजमानौ पुरस्तादागत्य पश्चादुपविष्टौ भवतः तर्हि तथैव प्रत्यागत्य पुरस्तात्प्र-

---

1) पक्षत्सोवते १. 2) ? पदिपु १. 3) ? ॰श्वादक्षिणापा॰ १.

त्यङ्मुखावुपविशतः　अग्नीद्दक्षिणपार्श्वेन गत्वा वेदेः पश्चात्प्राङ्मुखस्तिष्ठति · यदि च प्रथमत एव पश्चादुपविष्टौ तर्हि तत्रैव तिष्ठतः　अग्नीदपि पुरस्तादेव तिष्ठति ॥　॥८॥

इति पञ्चमस्याष्टमी कण्डिका ॥　॥

हविर्भिश्चरिष्यन्तः प्रतिविपर्यन्ति ॥१॥[1)]　आज्यभागानन्तरं हन्तः ब्रह्म-यजमानाग्नीध्राः यत्र पूर्वमुपविष्टाः पुनस्तत्स्थानं प्रत्यागच्छन्ति · ब्रह्मयजमानौ त्वपसव्यं कृत्वा पश्चिमपार्श्वादुत्थाय दक्षिणपार्श्वेन गत्वा पुरस्तात्प्रत्यङ्मुखौ पूर्वव-दुपविशतः　अग्नीच्च पूर्वपार्श्वाद्दक्षिणपार्श्वेन पश्चाद्देशं गत्वा तिष्ठति · पित्र्यत्वाद-पसव्यं सर्वत्र प्राप्तमेव　सव्यस्य तु वाचनिकस्याज्यभागान्तस्यावधिः (८. ३३) पूर्णा इति प्राचीनावीतित्वं प्राप्तमेवेति पुनर्न सूत्रितम् ।

सर्वेभ्योऽवद्यति यथापूर्वं सोमवर्ज्यो मध्यात्सकृत्सकृत् ॥२॥　पितृभ्यः सोमवद्भ्योऽर्थे सर्वेभ्यो हविर्भ्यो मध्यात् हविषां मध्यप्रदेशात् एकैकमवदानम-वद्यति · यथापूर्वम् हविषां निर्वापक्रमेण　प्रथमं पुरोडाशात् ततो धानाभ्यः ततो मन्थादिति ।

सह्यावद्धाति ॥३॥·　गोकर्णाकृतिना शृतावदानेन त्रिभ्योऽपि हविर्भ्य एकैकमवदानमेकत्रैवावदाय स्रुचि सह्यावद्धाति जुह्वां त्रीण्यप्यवदानानि सहैव प्रक्षिपति ।

द्विरभिघारणम् ॥४॥　अवदानानन्तरमुपरिष्टात् द्विर्णां कर्तव्यम् अध-स्तात्तु सकृदेवोपस्तारः ।

अनतिक्रमणं च ॥५॥　यततिस्थाने अतिक्रमणं तत उपरिष्टादत्र न भवति[2)]।

सोमाय वा पितृमते ॥६॥　न सोमवद्भ्यः । एवमुपस्तारादि अवदानं कर्तव्यम् ।

एवं बर्हिषद्भ्य उत्तरतो धानामन्थपुरोडाशानाम् ॥७॥　उत्तरतो मुख्यात्

---

१) १. and M. give ५. ८. ४० as the first rule of this chapter, see pag. ५१४, not. १.
२) ? ॰णांतरमुपरिष्टावत्र २·

उत्तरस्माद्धविःप्रदेशादेकैकमवदानमवदायावदाय सद्भावदधाति · द्विरभिघारणम् अनतिक्रमणम् अवदानानां प्रत्यभिघारणं[1] च ।

अग्निष्वात्तेभ्यो दक्षिणतो मन्थपुरोडाशधानानाम् ॥ ८ ॥ एवम् ।

पुरस्तादग्नये कव्यवाहनाय यथापूर्वम् ॥ ९ ॥ एवम् · यथापूर्वम् हविषामुत्पत्तिक्रमेण सर्वहविषां पुरस्तात् मुख्यात्पूर्वप्रदेशात् · हविषां प्रत्यभिघारणं तु न भवति (२. ६. २. ३१) ।

स स्विष्टकृत् ॥ १० ॥ स कव्यवाहनयाग एव स्विष्टकृद्यागः अतस्तद्व्यतिरिक्तोऽचोदकप्राप्त्या पृथक्स्विष्टकृद्यागो न कर्तव्यः तत्स्विष्टकृतऽइति श्रुतत्वात् (२. ६. १. ३०) । केचिदत्राग्नये कव्यवाहनायेष्टकृतेऽनुब्रूहीति विशेषणं कुर्वन्ति तन्नोपपद्यते श्रुतौ तस्यादृष्टत्वात्[2] अतो यथाश्रुत एव प्रयोगः कर्तव्यः । अत्र सोमव[दादिप्रधानयागेषु प्रधानत्रयं] नास्ति केवलमवदानं[3] श्रूयते सोमवद्यागश्चोत्पत्तिसमये (८. १) षट्कपालावरुद्ध एवोत्पन्नः तेन धानामन्थयोः समुच्चयो विकल्पो बाध्यबाधकभावो वा वक्तुं न शक्यते उत्पत्तिशिष्टस्य बलवत्त्वात् इतरस्य च दुर्बलत्वात् अतश्च तयोरवदानं संस्कारार्थमेवेति · चिन्ताया एतत्प्रयोजनम् संस्कारकस्य ग्रहस्य विस्मरणे यागावृत्तिर्न भवति · एवं बर्हिषद्यागे धानावदानमेव प्रधानम् पुरोडाशमन्थावदाने संस्कारके · अग्निष्वात्तयागे च मन्थावदानमेव यागसाधनम् पुरोडाशधानावदाने तु संस्कारके · कव्यवाहनयागे तु त्रीण्यपि सदृशान्येव तत्रैकस्यैव विस्मरणे यागस्यावृत्तिरेव तदर्था भवति । पञ्चावत्तिनां तु विशेष आपस्तम्बेनोक्तः द्विः प्रथमस्यावद्येत्पञ्चावत्तिन इति · पञ्चावत्तिनः सर्वयागेषु यद्यत्प्रथमम् यद्यत्स्वकीयं हविस्ततो द्विरवद्यति इतराभ्यामेकैकमेव इत्यर्थः कव्यवाहनयागे च सर्वेभ्यो द्विरवद्यति सर्वेषां तुल्यत्वात् · एकप्रत्यवायत्‌ स्विष्टकृत इत्येतत्तु (१. १. १) चतुरवत्तिनोऽप्यत्र बाधितमेव वचनात् ।

ओ३ स्वधेत्यस्तु स्वधेति वाश्रुतप्रत्याश्रुते ॥ ११ ॥ अथवा अत्र प्रधान-

---

1) प्रतिघा° २. 2) ? तस्य दृष्टत्वात् २. 3) ??? अत्र सोमवतो नास्ति केवलम° २.

यागेषु स्विष्टकृद्यागे च ओं स्वधेत्याश्रुतम् ओ श्रावयेति स्थाने वक्तव्यम् अस्तु स्वधेति च प्रत्याश्रुतम् अस्तु श्रौषडित्यस्य स्थाने कर्तव्यम् (२.६.१.२४)।

स्वधा नम इति वषट्कारः ॥१२॥ पूर्वसूत्रे वाशब्दो विकल्पार्थः। ओ३ स्वधेत्यादिषु स्थानापत्त्या प्लुतो भवत्येवेति पदमञ्जरीकारः · तथा चाहाश्वलायनः नित्याः[1] प्लुतय इति · तेन ओ३ स्वधेत्यत्र ओकारः स्वशब्दगतोऽकारश्च प्लुतौ ओ३७ स्वा३धेति · तथा अस्तु स्वा३धेति · स्वा३धा[2] नम इति वा। एवं ये३ स्वधामहे इत्यपि ये यजामहेऽइत्यस्य[3] स्थाने भवति।

मन्थमुपहूय होताध्वर्युर्ब्रह्माग्नीदवघ्रायं निदधति ॥१३॥ इडोपहूतेत्यादिना इडानिगदेनैवोपहूय मन्थैकदेशम् · अग्नीदपि तमवघ्रायोत्करे निदधाति। स्विष्टकृद्यागानन्तरमप उपस्पृश्य स्रुचा संचरमभ्युद्धत्य होत्रे मन्थैकदेशसमर्पणं कार्यम्। अस्मिन्पक्षे एतावदेव कर्तव्यम् न प्राशित्रेडाषडवत्तभागाः · पक्षान्तरमाह ·

प्राशित्रमवदायेडां वा ॥१४॥ विकल्पे · प्रकृतिवत्प्राशित्रमिडां चावदाय उपहूयावघ्रायं निदधति होत्रादय इति पूर्वेण सह सम्बध्यते। अवघ्राणम् न तु प्राशनम् · प्राशनपक्षमथाह ·

सर्वे प्राश्नन्ति वा ॥१५॥ अथवा इडां प्राशित्रं चावदाय सर्वे ऋत्विग्यजमाना यथाविहितं प्रकृतिवत्प्राश्नन्ति। एवं चात्र पक्षत्रयम् · तृतीये पक्षे षडवत्तब्रह्मयजमानभागा अपि भवन्ति न पूर्वयोः · अवघ्राणपक्षेऽपि मार्जनं भवत्येव ततः पवित्रप्रतिपत्तिः · तृतीये पक्षे भागपरिहारः अन्वाहार्यादानम् उदगुद्वासनं च ततो वेदिपरिषेकादि अग्रे ब्रह्मामन्त्रणविधानात्[4] · ततः पूर्वभाविनां पदार्थानाम् प्राकृतं च विकृताविति (१.५.४) न्यायेन पूर्वमनुष्ठानम् ततो वैकृतानां वेदिपरिषेकादीनामिति।

वेदिं त्रिः परिषिञ्चत्युदपात्रेणाध्वर्युर्यजमानो वा ॥१६॥ अथ यतरो दास्यन्भवति यद्यध्वर्युर्वा यजमानो वा तमादायेत्यापस्तम्बः[5]।

स्रक्तिषु पित्रवनेजनं परिषिच्य-परिषिच्य पूर्ववत् ॥१७॥ वेदिकोणेषु

---

१) मित्याः २. २) ? स्वा३ धा३ in २. ३) °हेत्यस्य २. — See Çânkhây. ३. १६.१५.
४) ? °णार्विधा° २. ५) ? भमा° २.

प्रतिपरिषिकं पितृपितामहप्रपितामहानामवनेजनं करोति · पूर्ववदित्यनेन असावेवनेनिक्ष्वेत्युदपात्रेणापसव्यं यजमानस्य पितृप्रभृति त्रीनिति चेत्येतावल्लभ्यते (४. १. १०) · वेदिस्रक्तिषु इति शाखान्तरात् स्वशाखायां स्रक्तिषु पिण्डदानविधानाच्च (२. ६. १. ३६) । केचिदेवं व्याचक्षते त्रिः परिषिञ्चतीति (१६) त्रिरावृत्त एकोऽयं परिषिकः · तेनायमर्थः वेदिमप्रदक्षिणं त्रिः परिषिच्य पितुरवनेजनम् पुनस्त्रिः परिषिच्य पितामहस्य पुनस्त्रिः परिषिच्य प्रपितामहस्येति · प्रत्यवनेजनमितरथावृत्तिरिति सम्प्रदायः ।

उत्तरापरस्यां प्रथमम् ॥१८॥ उदस्यां स्रक्तौ वायव्यकोणे प्रथमं पितुरवनेजनम् ततोऽप्रादक्षिण्येन दक्षिणापरस्यां द्वितीयम् पूर्वदक्षिणस्यां तृतीयम् ।

सव्ये समवदाय सर्वेभ्यो यथावनिक्तं पिण्डान्ददात्यसावेतत्तऽइति ॥१९॥ सर्वेभ्यो हविर्भ्यः सकाशात् सव्ये पाणौ समवदाय मिश्रीकृत्य यथावनिक्तम् यस्यां स्रक्तौ यस्यावनेजनं कृतं तस्यां तस्यैकैकं पिण्डं ददाति · अवदायेति वचनादङ्गुष्ठपर्वमात्रमवदेयम् (१. ३. ६) ।

उत्तरपूर्वस्यां पाणी निमृष्टेऽत्र पितर इति (२. ३१) ॥२०॥ उदस्यां स्रक्तौ ईशानकोणागायां हस्तौ मार्जयति हस्तगतं लेपं तत्र निमार्ष्टि ।

यज्ञोपवीतिनः सर्वे निष्क्रम्योदञ्चोऽक्षन्नमीमदन्तेत्याहवनीयमुपतिष्ठन्ते (३. ५१–५२) द्वाभ्याम् ॥२१॥ कृतसव्या सर्वे ऋत्विग्यजमानाः परिवृतान्निष्क्रम्य उदङ्मुखाः आहवनीयस्य पूर्वपार्श्वेनाहवनीयस्योत्तरतः समीपे आगत्य आहुःष्ठन्ते । परिवृतस्योदग्द्वारत्वात्ततो निष्क्रामतामर्थादुदङ्मुखत्वे सिद्धे उदञ्च इति व्यर्थमिति चेत् न पृष्ठतोऽनवलोकनार्थमुदञ्च इत्युक्तमिति न दोषः · अथवा श्रुत्यनुवादस्यानुकरणमेवैतत् ।

मनो न्वाह्वामहऽइति (३. ५३–५५) गार्हपत्यं तिसृभिः ॥२२॥ आहवनीयसमीपाद्गार्हपत्यं प्रत्यागत्य गार्हपत्यसमीपे स्थित्वा तं विलोकयन्तस्तृचं पठन्ति · अवस्थानं च सर्वेषामन्तर्बहिर्भावेन अन्तरतः स्वामी यथापूर्वमृत्विजश्च (१. ८. ३२) ।

प्राचीनावीती प्रविश्यामीमदन्तेति (२. ३१) दाता जपति ॥२३॥ प्राचीनावीती कृतापसव्यः पुनः प्रविश्य पिण्डदाता स्वरेण जपति · उपस्थानानन्तरं

सर्वेऽप्यपसव्यं कृत्वा परिवृतं प्रविशेयुः कुतः अग्रे (२७) सर्वेषां यज्ञोपवीतित्वविधानात् ।

अवनेज्य पूर्ववत्प्रदक्षिणं नीविं विस्रस्य नमो व इत्यञ्जलिं (२.३२) करोति ॥२४॥ पूर्ववत् वेदिं परिषिच्य-परिषिच्य (१७) · तत्राप्ययं विशेषः प्रदक्षिणामत्र परिषेको न पूर्ववदप्रदक्षिणम् · अन्यत्सर्वं पूर्ववत् प्रत्यवनेजनमितरथावृत्तिश्च भवति · नमस्कारार्थत्वाच्च पुटाञ्जलिः कार्यः ।

षड्वा नमस्कारान् ॥२५॥ षट्कृत्वो नमस्करोतीति (२.६.१.४२) षण्णां नमस्काराणां श्रुतेः । तत्र नमो वः पितरो मन्यवे नमो वः पितरो नमो व इति (२.३२) षष्ठो मन्त्रः पूर्वे तु प्रसिद्धान्ताः · केचित्तु शोषायेति जीवायेतीमौ[1] वर्जयित्वा षडेव नमस्काराः कर्तव्या इत्याहुः क्वचिच्छाखान्तरे एतद्द्वयवर्जिताः षडेव नमस्काराः पठिता इति चाहुः ।

गृहान्नः पितरो दत्तेति (२.३२) च ॥२६॥ अयमपि च मन्त्रो नमस्काराणामन्ते पठितव्यः · जपोऽयमाशीःप्रार्थनार्थः ।

ब्रह्मामन्त्रणादि प्राक्स्रुग्व्यूहनात्प्रयाजवद्यज्ञोपवीतितिविपर्ययं कृत्वा ॥२७॥ सर्वऽएव प्रयाज्वा यज्ञोपवीतिनो भूत्वा (२.६.१.४३) देशविपर्ययं च प्रयाजवत्कृत्वा ब्र॰णादि ब्रह्मन्प्रस्थास्यामीत्यारभ्य प्रा॰नात् विकृतेन कर्मणा अव्यवहितं यथास्वं कुर्युः । प्रा॰नादित्युक्तत्वात् स्रुग्व्यूहनाद्यपसव्येनैव कुर्युः न देशविपर्ययो ऽविहितत्वादिति अपसव्यं तु पित्र्यत्वात्प्राप्तमेवेति न विधानमपेक्षते ।

न प्रस्तरमादत्ते ॥२८॥ अनुयाजौ धारानुयाजं च कृत्वा स्रुचावासाद्य व्यूहनपरिध्यञ्जनसूक्तवाकप्रैषानन्तरं प्रस्तरादानकाले प्रस्तरं न गृह्णाति ।

अनुप्रहरेत्युक्ते किं चनापि नानुप्रहरति ॥२९॥ अग्निमध्ये किमपि न प्रक्षिपति ।

तूष्णीमात्मानꣳ सꣳस्पृशति ॥३०॥ हृदयदेशे ।

उपस्पृश्य परिधीन्नानुप्रहरति ॥३१॥ परिधीनामनुप्रहरणकाले तूष्णीमेव परिधीनुपस्पृश्य हस्तेनालभ्य अग्निमध्ये न प्रक्षिपति ।

---

१) ? षायेति चेतीमौ २·

शम्ब्वन्तं भवति ॥ ३२ ॥ एतत्कर्म शाखान्तरोपदेशात् · स्वशाखायामपि · अतश्च पत्नीसंयाजदक्षिणाग्निहोमपूर्णपात्रनिनयनादि-नमः-कृतायेत्यन्तस्याभावः · प्रतिपत्तयस्तु प्रवर्तन्त एव शम्युप्रैषान्ते संस्रवाहुतिः धुरि निधानम् वेदविमोको होतुरेव पत्न्या अभावात् होतुश्च स्ववेदे विहितत्वाच्च वेदस्य परिषेकः स्तरणम् मन्त्रेण समिष्टयजुर्होमः[१]· प्रतिपत्तित्वाङ्गीकारात् ।

बर्हिःपरिध्यग्नौ प्रास्यति ॥ ३३ ॥ होमकाले बर्हिः परिधींश्च तूष्णीं सहैवाग्निमध्ये प्रक्षिपति । ततः प्रणीताविमोकः राक्षसभागः प्राशित्रादिप्राशनपक्षे भागावेक्षणम् व्रतगृहीतत्वात् व्रतं गृहीतं चेत् तस्य विसर्गः भागप्राशनमिति · आपस्तम्बः सूक्तवाकं प्रति निवीतानि कुर्वन्ते न पत्नीः संयाजयन्ति न समिष्टयजुर्जुहोति[१] सर्वमन्यत्क्रियते संतिष्ठते पितृयज्ञ इति ।

हविरुच्छिष्टं च ॥ ३४ ॥ चकारेणाग्नौ प्रास्यतीत्यनुकृष्यते · हविरुच्छिष्टम् यत्पिण्डदानार्थावदानानन्तरमवशिष्टं पुरोडाशधानामन्थशेषरूपं ध्रौवं च तत्सर्वं तस्मिन्नेवाग्नौ सर्वकर्मसमाप्त्यन्ते प्रास्यति ।

अप्सु ॥ ३५ ॥ अथवा अप्सु ।

प्राश्यं वा ॥ ३६ ॥ विकल्पे · अविज्ञो वा प्राश्नीयुरिति माधवः (२. ६. १. ४८) ॥ ॥ नवमी कण्डिका ॥ ९ ॥

अथ पद्धतिः ॥

ततोऽध्वर्युः पितृभ्यः सोमवद्भ्योऽनुब्रूहीत्याह · ततो जुह्वामुपस्तीर्य गोकर्णाकारेण शृतावदानेन पुरोडाशधानामन्थेभ्यः क्रमेण मध्यादेकैकमवदानं गृहीत्वा सहैव जुह्वां प्रक्षिप्योपरिष्टाद्धिरभिघारयति · ततः सर्वहविःष्ववदानक्रमेण प्रत्यभिघारणं कृत्वा तत एवोत्थायानतिक्रम्यो श्रावयेत्यस्य स्थाने ओं स्वा३धा[१] इत्याह अस्तु स्वा३धा[२] इत्यग्नीत्प्रत्याश्रावयति · ततः पितॄन्सोमवतो यजेत्यध्वर्युराह · स्वा३धा नम इति होत्रा वषट्कृते दक्षिणामुखो बर्हिर्वेदि स्थित एव जुहोति इदं पितृभ्यः सोमवद्भ्यो न मम · उपस्तरणमवधानं प्रत्यभिघारणं होमश्च सर्वं पितृतीर्थेन कर्तव्यम् · अथवा सोमाय पितृमतेऽनुब्रूहि सोमं पितृमन्तं

---

[१] the paddhati forbids the संज्ञुर्होम, see ५२१,२१. [२] स्वा३धा३ B. and १.

यजेति विकल्पः · सव्येन यागः । तत उपविश्य पितृभ्यो बर्हि[षद्भ्य] इत्याह · जुह्वामुपस्तारः · धानामन्थपुरोडाशानामुत्तरतोऽवदानग्रहणम्[1] · ततो द्विरभिघारः · अवदानक्रमेण प्रत्यभिघारः · नातिक्रमणम् · तत एवोपोत्थाय ओ३ स्वा३धा[2] अस्तु स्वा३धा[2] पितॄन्बर्हिषदो यज · वषट्कृते पितृतीर्थेन जुहोति इदं पितृभ्यो बर्हिषद्भ्यः । तत उपविश्य पितृभ्योऽग्निष्वात्तेभ्योऽनुब्रूहि · जुह्वामुपस्तीर्य मन्थपुरोडाशधानानां दक्षिणादेशादेकैकमवदानं क्रमेणावदाय सकृदेव स्रुच्यवधाय द्विरभिघार्यावदानक्रमेण हवींषि प्रत्यभिघार्य नातिक्रामति · तत एवोत्थाय ओ३७ स्वा३धा[2] अस्तु स्वा३धा पितॄनग्निष्वात्तान्यजेत्याह · वषट्कृते पितृतीर्थेन होमः इदं पितृभ्योऽग्निष्वात्तेभ्यः । ततोऽग्नये कव्यवाहनायानुब्रूहि · जुह्वामुपस्तीर्य पुरोडाशधानामन्थानां पूर्वस्मात्प्रदेशात्क्रमेणैकैकमवदानं शृतावदानेनावदाय सकृदेव स्रुच्यवदधाति · ततो द्विरभिघारयति · न हविषां प्रत्यभिघारः · तत एवोपोत्थाय ओ३ स्वा३धा अस्तु स्वा३धा अग्निं कव्यवाहनं यज · वषट्कृते पितृतीर्थेन पूर्वार्धऽइतराहुतिभिरसंसृजन्जुहोति । ततः स्रुचोर्निधानम् संचराभ्युक्षणम् । ततो मन्थैकदेशं होतुर्हस्ते समर्पयति · होता चेडोपह्वतेत्यादि तस्मिन्नुपहूत इत्यन्तं पठित्वा तं मन्थमवघ्रायाध्वर्यवे प्रयच्छति अध्वर्युस्तमवघ्राय ब्रह्मणे प्रयच्छति ब्रह्मा तमवघ्रायाग्नीधे प्रयच्छति अग्नीत्तमवघ्रायोत्करे प्रक्षिपति · एतावदेव कुर्वन्ति न प्राशित्रेडाषडवत्तभागानिति · अथवा प्राशित्रादि सर्वमवदाय भक्षणकालेऽवघ्राणमात्रं कुर्वन्ति न भक्षणम् · अथवा दर्शपूर्णमासवत्प्राशित्रमिडां चावद्यन्ति भक्षयन्ति चेति पक्षत्रयम् · ततो मार्जनम् अवघ्राणपक्षेऽपि । पवित्रयोः प्रस्तरे करणम् · अन्वाहार्यमभिघार्योद्वास्यान्तरा ब्रह्मयजमानौ हृत्वा वेद्यां निधायालभते · ततोऽपसव्येनैव दानम् अस्य पितृयज्ञस्य समृद्ध्यर्थमन्वाहार्यदक्षिणां ब्रह्मणे इत्यादि । ततोऽध्वर्युयजमानयोर्मध्ये येन पूर्वं नीवीकरणं कृतं भवति स इदानीमुदपात्रमादाय वेदेरुत्तरापरश्रोणेरारभ्याप्रदक्षिणं परिषिच्योपविश्योत्तरापरश्रोणौ यजमानस्य पितरमवनेजयति अमुकसगोत्र यजमानपितरमुकशर्मन्नवनेनिक्ष्वेति ·

1) Thus B. °स्तारः । धावधाति । १.　　2) स्वा३धा३ in १.

शम्य्वन्तं भवति ॥ ३२ ॥ एतत्कर्म शाखान्तरोपदेशात् · स्वशाखायामपि · अतश्च पत्नीसंयाजदक्षिणाग्निहोमपूर्णपात्रनिनयनादि-नमः-कृतायेत्यन्तस्याभावः · प्रतिपत्तयस्तु प्रवर्तन्त एव शम्युप्रैषान्ते संस्रवाहुतिः धुरि निधानम् वेदविमोको होतुरेव पत्न्या अभावात् होतुश्च स्ववेदे विहितत्वाच्च वेदस्य परिषेकः स्तरणम् मन्त्रेण समिष्टयजुर्होमः[1] प्रतिपत्तित्वाङ्गीकारात्।

बर्हिःपरिध्यग्नौ प्रास्यति ॥ ३३ ॥ होमकाले बर्हिः परिधींश्च तूष्णीं सहैवाग्निमध्ये प्रक्षिपति । ततः प्रणीताविमोकः राक्षसभागः प्राशित्रादिप्राशनपक्षे भागविक्षणम् व्रतगृहीतत्वात् व्रतं गृहीतं चेत् तस्य विसर्गः भागप्राशनमिति · आपस्तम्बः सूक्तवाकं प्रति निवीतानि कुर्वते न पत्नीः संयाजयन्ति न समिष्टयजुर्जुहोति[1] सर्वमन्यत्क्रियते संतिष्ठते पितृयज्ञ इति ।

· हविरुच्छिष्टं च ॥ ३४ ॥ चकारेणाग्नौ प्रास्यतीत्यनुकृष्यते · हविरुच्छिष्टम् यत्पिण्डदानार्थावदानानन्तरमवशिष्टं पुरोडाशधानामन्थशेषरूपं ध्रौवं च तत्सर्वं तस्मिन्नेवाग्नौ सर्वकर्मसमाप्त्यन्ते प्रास्यति ।

अप्सु ॥ ३५ ॥ अथवा अप्सु ।

प्राश्यं वा ॥ ३६ ॥ विकल्पे · ऋत्विजो वा प्राश्नीयुरिति माधवः (२. ६. १. ४८) ॥ ॥ नवमी कण्डिका ॥ ९ ॥

अथ पद्धतिः ॥

ततोऽध्वर्युः पितृभ्यः सोमवद्भ्योऽनुब्रूहीत्याह · ततो जुह्वामुपस्तीर्य गोकर्णाकारेण शृतावदानेन पुरोडाशधानामन्थेभ्यः क्रमेण मध्यादेकैकमवदानं गृहीत्वा सहैव जुह्वां प्रक्षिप्योपरिष्टाद्धृतेनाभिघारयति · ततः सर्वहविःष्ववदानक्रमेण प्रत्यभिघारणं कृत्वा तत एवोत्थायानतिक्रम्यो श्रावयेत्यस्य स्थाने ओं स्वा३धा[1] इत्याह अस्तु स्वा३धा[2] इत्यग्नीत्प्रत्याश्रावयति · ततः पितॄन्सोमवतो यजेत्यध्वर्युराह · स्वा३धा नम इति होत्रा वषट्कृते दक्षिणामुखो बर्हिर्वेदि स्थित एव जुहोति इदं पितृभ्यः सोमवद्भ्यो न मम · उपस्तरणमवधानं प्रत्यभिघारणं होमश्च सर्वं पितृतीर्थेन कर्तव्यम् · अथवा सोमाय पितृमतेऽनुब्रूहि सोमं पितृमन्तं

1) the paddhati forbids the संस्रुहोम, see ५२१,२१. 2) स्वा३धा३ B. and १.

यजेति विकल्पः · सव्येन यागः । तत उपविश्य पितृभ्यो बर्हिषद्भ्य इत्याह · जुह्वामुपस्तारः · धानामन्थपुरोडाशानामुत्तरतोऽवदानग्रहणम्[1] · ततो द्विरभिघारः · अवदानक्रमेण प्रत्यभिघारः · नातिक्रमणम् · तत एवोपोत्थाय ओ३ स्वा३धा[2] अस्तु स्वा३धा[2] पितॄन्बर्हिषदो यज · वषट्कृते पितृतीर्थेन जुहोति इदं पितृभ्यो बर्हिषद्भ्यः । तत उपविश्य पितृभ्योऽग्निष्वात्तेभ्योऽनुब्रूहि · जुह्वामुपस्तीर्य मन्थपुरोडाशधानानां दक्षिणादेशादेकैकमवदानं क्रमेणावदाय सकृदेव स्रुच्यवधाय द्विरभिघार्यावदानक्रमेण हवींषि प्रत्यभिघार्य नातिक्रामति · तत एवोत्थाय ओ३ स्वा३धा[2] अस्तु स्वा३धा पितॄनग्निष्वात्तान्यजेत्याह · वषट्कृते पितृतीर्थेन होमः इदं पितृभ्योऽग्निष्वात्तेभ्यः । ततोऽग्नये कव्यवाहनायानुब्रूहि · जुह्वामुपस्तीर्य पुरोडाशधानामन्थानां पूर्वस्मात्प्रदेशात्क्रमेणैकैकमवदानं शृतावदानेनावदाय सकृदेव स्रुच्यवदधाति · ततो द्विरभिघारयति · न हविषां प्रत्यभिघारः · तत एवोपोत्थाय ओ३ स्वा३धा अस्तु स्वा३धा अग्निं कव्यवाहनं यज · वषट्कृते पितृतीर्थेन पूर्वार्धऽइतराहुतिभिरसंसृजन्जुहोति । ततः स्रुचोर्निधानम् संचराभ्युक्षणम् । ततो मन्थैकदेशं होतुर्हस्ते समर्पयति · होता चेडोपह्वेत्यादि तस्मिन्नुपह्वूत इत्यन्तं पठित्वा तं मन्थमवघ्रायाध्वर्यवे प्रयच्छति अध्वर्युस्तमवघ्राय ब्रह्मणे प्रयच्छति ब्रह्मा तमवघ्रायाग्नीधे प्रयच्छति अग्नीत्तमवघ्रायोत्करे प्रक्षिपति · एतावदेव कुर्वन्ति न प्राशित्रेडाषडवत्तभागानिति · अथवा प्राशित्रादि सर्वमवदाय भक्षणकालेऽवघ्राणमात्रं कुर्वन्ति न भक्षणम् · अथवा दर्शपूर्णमासवत्प्राशित्रमिडां चावद्यन्ति भक्षयन्ति चेति पक्षत्रयम् · ततो मार्जनम् अवघ्राणपक्षेऽपि । पवित्रयोः प्रस्तरे करणम् · अन्वाहार्यमभिघार्योद्वास्यान्तरा ब्रह्मयजमानौ हृत्वा वेद्यां निधायालभते · ततोऽपसव्येनैव दानम् अस्य पितृयज्ञस्य समृद्ध्यर्थमन्वाहार्यदक्षिणां ब्रह्मणे इत्यादि । ततोऽध्वर्युयजमानयोर्मध्ये येन पूर्वं नीवीकरणं कृतं भवति स इदानीमुदपात्रमादाय वेदेरुत्तरापरश्रोणेरारभ्याप्रदक्षिणं परिषिच्योपविश्योत्तरापरश्रोणौ यजमानस्य पितरमवनेजयति अमुकसगोत्र यजमानपितरमुकशर्मन्नवनेनिक्ष्वेति ·

1) Thus B. °स्तारः । धाद्धाति । १. 2) स्वा३धा३ in १.

ततः प्रदक्षिणामितरथावृत्तिं कृत्वा पुनर्दक्षिणापरकोणादारभ्योदपात्रेणाप्रदक्षिणां वेदिं परिषिच्य दक्षिणापरकोणे यजमानस्य पितामहमवनेजयति [अमुकसगोत्र] यजमानपितामहामुकशर्मन्नवनेनिक्ष्वेति · ततः प्रदक्षिणमितरथावृत्तिं कृत्वा पुनः पूर्वदक्षिणाकोणादारभ्याप्रदक्षिणामुदपात्रेण वेदिं परिषिच्य पूर्वदक्षिणाकोणे यजमानप्रपितामहमवनेजयति अमुकसगोत्र यजमानप्रपितामहामुकशर्मन्नवनेनिक्ष्वेति · ततः प्रदक्षिणमितरथावृत्तिः । ततः पुरोडाशस्यावदानमात्रं गृहीत्वा सव्ये पाणौ कृत्वा पुनर्धानानामवदानमात्रं गृहीत्वा सव्ये पाणौ कृत्वा ततो मन्थस्यावदानमात्रं गृहीत्वा सव्ये पाणौ कृत्वा मिश्रीकृत्य पिण्डत्रयं बध्नीयात् · तत उत्तरापरस्यां स्रक्तौ यजमानस्य पित्रे पिण्डं ददाति दक्षिणामुख उपविष्टः अमुकसगोत्र यजमानपितरमुकशर्मन्नेतत्तऽइति इदममुकसगोत्राय पित्रेऽमुकशर्मणे · ततो दक्षिणापरस्रक्तौ यजमानपितामहस्य पिण्डदानम् अमुकसगोत्र यजमानपितामहामुकशर्मन्नेतत्तऽइति इदं पितामहायामुकशर्मणे · ततः पूर्वदक्षिणास्रक्तौ यजमानप्रपितामहस्य पिण्डदानम् अमुकसगोत्र यजमानप्रपितामहामुकशर्मन्नेतत्तऽइति इदं प्रपितामहायामुकशर्मणे · तत उत्तरपूर्वकोणे पाणी निमार्ष्टि अत्र पितर इति मन्त्रेण । ततः सर्वे सयजमाना ऋत्विजः सव्यं कृत्वोत्तरद्वारेण परिवृतमध्यान्निष्क्रम्य पश्चादवलोकनमकुर्वन्त आहवनीयं पूर्वेण गत्वोत्तरत आहवनीयसमीपे आगत्याक्षन्नमीमदन्तेति द्वाभ्यामृग्भ्यामाहवनीयमुपतिष्ठन्ते · साकमेधार्थोद्धरणपक्षे मध्यमाहवनीयस्यैवोपस्थानम् तस्यैव सर्वसाधारणत्वात् औत्तरवेदिकस्य महाहविरर्थमेव प्रणीतत्वेनापवृक्तत्वात् · ततो गार्हपत्यं प्रतिपरेत्य मनो न्वाह्वामहेऽइति तिसृभिः सर्वे ऋत्विजः सयजमाना गार्हपत्यमुपतिष्ठन्ते · ततः सर्वे अपसव्यं कृत्वा परिवृतं प्रविशन्ति · ततोऽध्वर्युर्वा यजमानो वा यः पिण्डदाता सोऽमीमदन्तेति जपति । तत उदकपात्रं गृहीत्वोत्तरापरश्रोणेरारभ्य प्रदक्षिणां वेदिं परिषिच्योत्तरापरश्रोणिपिण्डे पितरं पूर्ववदवनेजयति ततोऽप्रदक्षिणामितरथावृत्तिः · ततो दक्षिणापरकोणादारभ्य प्रदक्षिणां परिषिच्य पितामहं पूर्ववदवनेजयति ततोऽप्रदक्षिणामितरथावृत्तिः · ततः पूर्वदक्षिणाकोणादारभ्य प्रदक्षिणां वेदिं परिषिच्य प्रपितामहमवनेज्याप्रदक्षिणामितर-

थावृत्तिं कृत्वा नीविं विस्रंस्य नमो व इति प्रतिमन्त्रं षडञ्जलीन्कुर्यात् तत्र मन्त्र-
विभागः नमो वः पितरो रसायेत्येकः शोषायेति द्वितीयः जीवायेति
तृतीयः स्वधायाऽइत्यन्तश्चतुर्थः घोरायेति पञ्चमः नमो वः पितरो मन्यवे
नमो वः पितरः पितरो नमो व इत्येवमन्तः षष्ठः · ततो गृहान्नः पितर इति
देष्मेत्यन्तं जपति · जीवपितृकस्य महापितृयज्ञे पितुः पित्रादिभ्य एव पिण्डदानं
भवति उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे येभ्य एव पिता दद्यात्तेभ्यो
दद्यात्सदा सुत इति स्मृतेः । ततः सर्वे सव्यं कुर्वन्ति · ततो यदि ब्रह्मयजमानौ
हविःप्रचारकाले पुरस्तादागत्योपविष्टौ भवतस्तदेदानीमुत्थाय वेदिं दक्षिणेन
गत्वा पश्चात्प्राङ्मुखावुपविशतः नो चेत् तत्र स्थिताविव अग्नीत्पश्चिमपार्श्वाद्द-
क्षिणेनागत्य पूर्वपार्श्वे तिष्ठति · तत उल्मुके समस्य समिधमादाय ब्रह्मन्प्रस्था-
स्यामीत्याह · बर्हिर्वर्जितौ द्वावनुयाजौ देवान्यजेति प्रैषः · धारानुयाजहोमः ·
ततः स्रुचौ स्वस्थाने सादयति । ततः सर्वेऽपसव्यं कृत्वा समाप्तिपर्यन्तं कर्म कुर्व-
न्ति · व्यूहने पितृणाᳬ सोमवतां पितृणां बर्हिषदां पितृणामग्निष्वात्तानामु-
ज्जितिम् · पितरः सोमवन्तः पितरो बर्हिषदः पितरोऽग्निष्वात्तास्तमपनुदन्त्विति
विशेषः · पक्षे सोमस्य पितृमतः सोमः पितृमानिति सोमवतः स्थाने · जुहू-
मभ्युद्य तया परिध्यञ्जनम् · आलभ्याश्राव्य सूक्तवाकप्रैषः · न प्रस्तरयहणम् ·
सूक्तवाकान्तेऽग्नीदनुप्रहरेत्याह अध्वर्युः किमपि नानुप्रहरति प्रस्तरतृणादिकम् ·
तूष्णीमात्मालम्भः उदकालम्भः · ततः संवदस्वेत्यादि शम्योर्ब्रूहीत्यन्तम् · परि-
धिप्रहरणकाले परिधीनामुपस्पर्शनं तूष्णीमिव न प्रहरणम् · ततः संस्रवाहुतिः ·
धुरि निधानम् · वेद्यालम्भः · पिष्टलेपहोमपक्षे तद्धोमः आज्यहोमपक्षे लभाव
एव · होतुर्वेदविमोकः आ वेदेः स्तरणाम् · न समिष्टयजुर्होमः · बर्हिषः
तूष्णीं परिधीनां चाग्नौ प्रक्षेपः · प्रणीताविमोकः · राक्षसभागः · पक्षे भागावे-
क्षणम् · व्रतविसर्गः · हविरुच्छिष्टानां ध्रौवस्य चाग्नौ प्रक्षेपः उदके वा
प्राशनं वा · ततः सर्वेषां सव्यकरणमुदकोपस्पर्शनं च ॥ इति महापितृ-
यज्ञः ॥ ॥९॥

इति पञ्चमस्य नवमी कण्डिका ॥ ॥

पितृयज्ञ उक्तः । अथ त्रैयम्बकहोमः

त्रैयम्बकान् ॥१॥ वक्ष्यामि ।

निर्वपति रौद्रानेककपालान्यावन्तो यजमानगृह्या एकाधिकान् ॥२॥ एककपाले संस्कृतान्पुरोडाशान् । गृह्याः पुत्रपौत्रपुत्र्यादीन्यपत्यानि करम्भपात्रोक्तन्यायेन (३. ४) गृह्यशब्दः प्रजाविषयो ज्ञेयः · तथा च मानवे उत्तरतो गार्हपत्यस्यैककपालान्निर्वपति[1] यावन्ति करम्भपात्राणीति · आपस्तम्बः प्रतिपुरुषमेककपालान्निर्वपति यावन्तो यजमानस्यामात्याः सस्त्रीकास्तावत एकातिरिक्तानिति · यावन्तो यजमानस्य पुत्रपौत्रा इति काठके ।

चतुरो वा ॥३॥ वा अवधारणे · अनपत्यस्य एकापत्यस्य द्व्यपत्यस्य चतुर एव · अत एवैतेषां करम्भपात्राण्यपि चत्वार्येव कर्तव्यानि[2] ।

उदङ्मुखः सर्वम् ॥४॥ त्रैयम्बकेषु कुर्यात् । उदङ्मुखः सर्वम् उदङ्ङासीन एतान्गृह्णाति (२. ६. २. ५) उदङ् तिष्ठन्नवहन्तीत्यादिनात्र दिग्विपर्ययो ज्ञाप्यते उदीची दिगत्र प्राचीवद्भवति प्राची च दक्षिणा दक्षिणा च प्रतीची प्रतीची चोत्तरेति[3] · तेनात्र ब्रह्मयजमानौ दक्षिणाग्नेः पुरस्तात्प्रत्यङ्मुखावुदगग्रयोरासनयोरुपविशतः तत्राप्युत्तरतो ब्रह्मा दक्षिणतो यजमान इति · प्रणीतापरिहरणं च दक्षिणाग्नेः पश्चात् उदगग्रश्रमसः[4] । एतच्च दर्विहोमाणामपूर्वत्वं च[5] जैमिनिनोक्तम् तच्च त्रैयम्बकेषु शिष्टैरादृतम् · अतोऽत्र यावदुच्यते तावदेव भवति नाधिकं प्रकृतितः प्राप्तम् · एक एवाध्वर्युः सर्वं यथाश्रुतं करोति · तत्रश्चात्राग्न्यन्वाधानब्रह्मवरणप्रणीताप्रणयनपरिस्तरणाभावः · पात्राण्युपकल्प्य[6] अवहननं कण्डनं पेषणं कपालोपधानं श्रपणं पात्र्यामुद्वासनं च कृत्वोल्मुकमादाय यजमाना[ग्नीद्]ध्वर्यूणां त्रयाणां चतुष्पथगमनाद्यासञ्जनान्तम् तत आगत्योदकोपस्पर्शनमिति · प्रोक्षणीसंस्कारहविःपात्रप्रोक्षणाज्योदकनिनयनादे[र]नुक्तस्याभाव एव[7] · पात्रासादनं तु गार्हपत्यस्य दक्षिणातः पश्चाद्वा दक्षिणतश्चेत् उदक्संस्थान्युदगग्राणि प्रत्यगग्राणि वा पात्राण्यासादनीयानि प्रत्यक्संस्थानि वोदगग्रा-

---

1) ? लान् श्रपयति २. 2) See ५. ३. ५. 3) See at ५. ८. २. 4) See at ५. ८. ७. 5) See at ५. ६. ५. 6) ? ण्युकल्प्यं २. 7) but the paddhati mentions them all, see pag. ५३५, ८ ff.

एवेव पश्चाच्चेत् प्रत्यक्संस्थान्युदगग्राणि उदक्संस्थानि वा प्रत्यगग्राणीति · ग्रहणं तूदङ्मुखेन कर्तव्यम् कृष्णाजिनं दक्षिणाग्रीवं स्तरणीयम् कण्डनमध्वर्युरेवोदङ्मुखस्तिष्ठन्करोति दृषद्प्युदगग्रा कपालोपधानं च प्रत्यक्संस्थम् गार्हपत्यखरस्योत्तरभागे अङ्गाराणामुद्वहनं दक्षिणातः प्रथमकपालधर्मेण सर्वेषां कपालानामुपधानमिति । कपालान्युपदधातीति (२.६.२.५) बहुवचनात्प्रतिपुरोडाशमेकैकं कपालं भवति अन्यथा एककपाला इति (२.६.२.३) एकस्मिन्नेव महत्तरे कपाले सर्वेषां अपणादिककपाला भव[न्ती]त्येकमेव सर्वसाधारणं कपालं स्यात् ।

देशांश्च ॥ ५ ॥ देशानपि चतुष्पथाखूत्करस्थाणुवृक्षादीनुत्तरदिगवस्थितानेवात्राश्रयेत् ।

जुहोतयः ॥ ६ ॥ एते त्रैयम्बका जुहोतयो भवन्ति न यजतयः । अत्र हरिस्वामिनः त्रैयम्बका नाम पुरोडाशाः तानिह प्रस्तुत्य तेषां होमं वक्ष्यति तान्सार्धं जुहोतीति (२.६.२.७) तदेवेह कर्मणा उत्पत्तिवाक्यम् अनेकगुणत्वात् ततश्च होमसाधनमेवैते पुरोडाशा न यागसाधनमिति नैमित्तिकेष्टिका एव धर्माः स्युः यस्तु यत्त्र्यम्बकैरयजन्तेत्यादिव्यवहारः (२.६.२.१) स होमान्तर्गतयागाभिप्रायो द्रष्टव्य इति ।

अवषट्कारान् ॥ ७ ॥[1] जुहोतीत्युपदिष्टेऽपि (२.६.३.७) यत्त्र्यम्बकैरयजन्त (२.६.२.१) अथ यदेष एतैर्यजतऽइति (२.६.२.२) यजतिशब्दश्रवणात्क्रामन्थिवद्वषट्कृते[2] होमो भविष्यतीति शङ्कानिवृत्त्यर्थमिदमुक्तम् तस्माद्वषट्कारा एते जुहोतय एव उत्पत्तिवाक्ये जुहोतीत्युपदेशात् अन्यत्र गौणो यजतिशब्दः ।

अक्तान्वा ॥ ८ ॥ एतानक्तानानक्तान्वा कुर्यात् · अञ्जनं शृताभिघारः प्राणादानं च · तानभिघार्यानभिघार्य वोद्वास्येत्यापस्तम्बः ।

पात्र्यां कृत्वा दक्षिणाग्न्युल्मुकमादाय चतुष्पथे पलाशपत्त्रमध्यमेन होमः ॥ ९ ॥ सधर्मकत्वपक्षे अपणाभिवासनपात्र्यङ्गुलिप्रक्षालननिनयनान्ते पलाशपत्त्रशृतावदानपात्रीणां संमार्गे कृते तान्रौद्रान्पुरोडाशान्पात्र्यां कृत्वा एकस्यामेव पात्र्यामु-

---

1) न विद्यते वषट्कारो येषां ते Ss. 2) See १.५.२१.

द्धास्य दक्षिणाग्नेरेकमुल्मुकमादाय चतुष्पथे उल्मुकादानस्य दृष्टार्थत्वाय तं दक्षिणाग्न्युल्मुकं पञ्चभूसंस्कारपूर्वकमुपसमाधाय तस्मिन्नग्नौ पलाशपत्त्राणां यन्मध्यमम् तेन होमः कर्तव्यः अथवा पलाशपत्त्रं च तन्मध्यमं च तेन । अपूर्वत्वपक्षे तु यथाश्रुतमेव · चतुर्णां पथां समाहारः चतुष्पथः चतसृभ्यो दिग्भ्य आयाताश्चत्वारः पन्थानो यत्र संगच्छन्ते तत्राग्निमुपसमाधाय जुहुयात् ।

सर्वेषामवदान७ सकृत्सकृदतिरिक्तवर्जम् ॥ १० ॥ मध्यमपलाशपत्त्रे जुहूस्थानीये सर्वेषां रौद्राणां पुरोडाशानामुत्तरार्धात् सकृत्सकृदवदानम् । अत्राहापस्तम्बः चतुष्पथऽएवोल्मुकमुपसमाधाय सम्परिस्तीर्य सर्वेषां पुरोडाशानामुत्तरार्धात्सकृदवधाय मध्यमेनोत्तमेन वा पर्णेन जुहोतीति ।

अक्तेषु मिश्रणम् ॥ ११ ॥ अक्तेषु [कृत]शृताभिघारप्राणदानेष्विदानीं मिश्रणम् उपस्तरणमभिघारणं च भवति · प्राणदानाभावपक्षे तु न भवति ।

एष तऽइति (३. ५७) जुहोति ॥ १२ ॥ पूर्वमग्निं परिस्तीर्य समिधमाधायोदङ्मुख उपविष्टो यथोक्तमवदाय पलाशपत्त्रमध्यमेनैव एष ते रुद्र भाग इति मन्त्रेण स्वाहाकारान्तेन जुहोति · इद७ रुद्रायेति त्यागः । ब्रह्मयजमानावपि पुरस्तात्प्रत्यङ्मुखावुपविशतः पूर्वतरम् ।

अतिरिक्तमाखूत्करऽउपकिरत्येष इति (३. ५७) ॥ १३ ॥ मूषिकैरुत्कीर्णे पांसुराशौ उपगूहति पांसुभिरन्तर्हितं करोतीत्यर्थः ।

आगम्याव रुद्रमदीमहीति (३. ५८) जपन्ति ॥ १४ ॥ आखूत्करदेशादागम्य · सर्वे अधिकृता यजमानब्रह्माध्वर्य्वाग्नीध्राः · यदा त्वपूर्व एवायं दर्विहोमस्तदा आग्नीध्रोऽपि न विद्यते तेन विनेति अधिकृता जपेयुः । पुनरेत्येति (२. ६. २. ११) वचनादाखूत्करोपकिरणायापि सर्वऽएवेति गच्छेयुरिति हरिस्वामिनः · अत एव च पुनरागमनवचनात्स्वदेशस्थितऽएवोत्करऽउपकिरेत् न पुनस्तत आनीयेति गम्यते ।

अग्निं त्रिः परियन्ति पितृवत्सव्योरूनाघ्नानास्त्र्यम्बकमिति (३. ६०) ॥ १५ ॥ पितृवदित्यप्रदक्षिणम् · सव्यानूरून्दक्षिणेन पाणिना कुट्टयन्तो वादयमानाः । अथापसलवि त्रिः परियन्तीत्येतावत एव श्रुतत्वात् (२. ६. २. १२) पितृवदित्यनेनाप्रदक्षिणामात्रं प्रतीयते न पुनः प्राचीनावीतित्वम् तस्याविधानात् कर्मणः पित्र्यत्वाभावाच्च ।

देववच्चैतेनैव दक्षिणानाम्नानाः ॥१६॥  एतेनैव पूर्वेण त्र्यम्बकं यजामह इति मन्त्रेण दक्षिणानूरून्दक्षिणेन पाणिना कुट्टयन्तो देववदिति प्रदक्षिणं त्रिर्वारमग्निं परियन्ति ।

कुमार्यश्चोत्तरेणोभयत्र पतिकामा भगकामा वा ॥१७॥  यजमानस्य कुमार्योऽपरिणीताः पुत्र्यश्चोत्तरेण त्र्यम्बकमिति मन्त्रेण पतिवेदनमित्यनेन (३. ६०) उभयत्रेति पितृवद्देववच्च परिक्रमणे सक्दैव त्रिस्त्रिः परियन्ति पतिं सौभाग्यं कामयमाना वा ।

रौद्रान्यजमानोऽञ्जलिनोदस्यत्यगोःप्रापणम् ॥१८॥  हुतावशिष्टान्रौद्रान्पुरोडाशान्यजमानोऽञ्जलिनोत्क्षिपति अगोःप्रापणं देशम् यथा क्षिप्तानूर्ध्वमुखोऽपि गौर्न प्राप्नुयात् ।

प्रतिगृह्णात्येनान् ॥१९॥  अन्तरिक्षादधः पततः यजमान एव प्रतिगृह्णाति · तान्विलिप्सन्त उपस्पृशन्तीति (२. ६. २. १६) श्रुतेः यजमानऽएव नेच्छति इतरेऽपि वाञ्छन्तीति बहुवचनमिति हरिस्वामिनः ।

अशक्यऽउपस्पर्शनम् ॥२०॥  अशक्ये ग्रहणे भूमौ पतितानामुपस्पर्शनम् ।

मूतयोः कृत्वा वेणुयष्ट्यां कुपे वासज्योभयत स्थाणुवृक्षवंशवल्मीकानामन्यतमस्मिन्नुत्क्षेपणावदासजत्येतत्तऽइति (३. ६१) ॥२१॥  तान्रौद्रान्पुरोडाशान् मूतयोः कृत्वा अर्धाधिकया द्वयोर्मूतयोः शिक्याकारयोः रज्जुनिर्मितयोरोप्य[1] वेणुयष्ट्यां वा कुपे यज्ञियवृक्षजे तुलादण्डे वेणुनिर्मितभाजनद्वययुक्ते वा उभयतः आसज्य उभयतः प्रान्तयोर्बद्ध्वा स्थाणुवृक्षवंशवल्मीकानां मध्ये अन्यतमस्मिन्निति स्थाणौ वा वृक्षे वा वंशे वा वल्मीके वा एतत्ते रुद्रेति (३. ६१) मन्त्रेणोत्क्षेपणावदासजति अवलगयति · उत्क्षेपणावदित्यगोःप्रापणं देशम् · स्थाणु छिन्नाग्रं वृक्षमूलम् शुष्के स्थाणावित्यापस्तम्बः । यत्र तृणमयऽआवपने धान्यं बध्यते तन्मूतम् वेणुनिर्मितभाजनद्वययुक्तो दारुविशेषो वीवधापरपर्यायः कुपः तस्मिन्नुभयपार्श्वयोः वेणुमययोर्भाजनयोस्तान्रौद्रानाबध्य तेन सार्धमुदङ्मुखोऽदूरं गत्वा वृक्षस्थाण्वादावन्यतरस्मिन्नुपलब्धे वीवधमासजति आलगयति इति माधवः[2] ।

---

[1]) ? रज्जुनिर्मि° २.   [2]) At २. ६. २. १७. see Edit. pag. २१८, १७. ff.

अपि वा मृतयोः सवीवधं कृत्वा[1] शुष्के स्थाणौ वल्मीकवपायां वाव-धायेत्यापस्तम्बः ।

कृत्तिवासा इति (३.६१) ॥२२॥ क्रियान्तरस्यानुपदेशात् कृत्तिवासा इति जपेत् · निघ्नापयतीति (२.६.२.१७) श्रवणादासक्तस्य निश्चलीकरणमनेन कर्तव्यमिति केचित् ।

अनपेक्षमेत्योपस्पृशन्त्यपः ॥२३॥ ते पूर्वोक्ता यजमानादयो रौद्रान्स्था-एवादावासन्य प्रदक्षिणामावृत्य अनपेक्षमेत्य रौद्रपुरोडाशहोमस्थानं चतुष्पथं पश्चादवलोकयन्त एव साकमेधप्रदेशमागत्य अप उपस्पृशन्ति सर्वे उदकमा-लभन्ते । ततो गृहमागत्य प्रणीताविमोकः राक्षसभागं कृत्वोदकोपस्पर्शनं कुर्यात् अपूर्वा दर्विहोमा इति पक्षे प्रणीताविमोकराक्षसभागावपि न भवत एव · ततः प्राग्व्रतविसर्गात्पित्र्यादिकरणपक्षे व्रतविसर्गादि नमः-कृतायेत्यन्तं कृत्वा वपनं कुर्यात् अन्यथा वपनमेव ॥ ॥ उक्ताः साकमेधाः ॥ ॥ दशमी कण्डिका ॥१०॥

अथ पद्धतिः ।

अथ त्रैयम्बका जुहोतय उच्यन्ते · तत्र प्रतीष्टिविहारपक्षे एकस्यैव दक्षिणा-ग्नेरुद्धरणम् साधारणविहारपक्षे च यः पित्र्यायां वेदिमध्ये प्रणीतः स एवानीय स्वस्थाने स्थापनीयः । अत्रोदीची प्राचीवत् प्राची दक्षिणा दक्षिणा प्रतीची प्रतीची उत्तरेत्येवं दिग्विपर्ययः · अत्र सर्वं कर्मोदङ्मुखेन कर्तव्यम् । अत्र मत-द्वयम् दर्विहोमा दर्शपूर्णमासधर्मका इति कात्यायनः अपूर्वा इति जैमिनिः · तत्र दर्शपूर्णमासधर्मा दर्विहोमा इति पक्षाश्रयणे त्रैयम्बकेषु शतरुद्रियादिवद-ग्न्यन्वाधानादि कर्मापवर्गान्तं सर्वं तूष्णीं भवति यथा कर्कमतानुसारिणः कुर्व-न्ति अपूर्वपक्षे यावदुक्तमेव भवति नाधिकम् । तदा चाध्वर्युर्गार्हपत्यस्य दक्षि-णतः प्रत्यक्संस्थान्युदगग्राणि पात्राण्युपकल्पयति शूर्पाग्निहोत्रहवणी स्फ्यः प्रजासंख्याया एकाधिकानि कपालानि शम्याकृष्णाजिनम् उलूखलमुसलम् दृषदुपलम् पात्रीधान्यम् व्रीहयो यवा वा पवित्रार्थे धृष्टिः संयवनोदकम्

[1] ? सवीबंधकृत्वा २. Or are we to read: सर्वान्बन्धयित्वा ?

दृषदुपलम् पात्रीधान्यम् व्रीहयो यवा वा पवित्रार्थे धृष्टिः संयवनोदकम् मध्यमं पलाशपत्त्रम् शृतावदानम् महापात्री दण्डशिक्यादि · ततो गार्हपत्यस्य पश्चादुदगग्रां पात्रीं निधायोदगग्रं स्फ्यं तस्या अधः प्रेरयित्वा शूर्पाग्निहोत्रहवण्या-दानम् प्रतपनम् पात्रीसमीपे गमनम् पात्रीबिलालम्भः हविष ईक्षणम् · अपद्रव्यनिरसनम् अपद्रव्याभावे हविषोऽभिमर्शनं च · हविष आलम्भनम् प्रज्ञा-संख्यात एकाधिकानां चतुर्मुष्टिकानां[1] ग्रहणम् द्विप्रज्ञाप्रत्येकप्रज्ञानां चत्वारि चतुर्मु-ष्टिकानि[1] शेषाभिमर्शनम् · उत्तरत ईक्षणम्[2] उत्थानम् गार्हपत्यं दक्षिणेन हविरासादनम् · पवित्रकरणम् प्रोक्षणीसंस्कारः ब्रह्मणामीक्षणादिसंकेतेन[3] पृष्ट्वा तथैवानुज्ञातो हविः प्रोक्षति यावद्ग्रहणम् पात्रप्रोक्षणम् असंचरे प्रोक्ष-णीनां निधानम् · कृष्णाजिनादानम् अवधूननम् · गार्हपत्यमपरेण दक्षिणाग्रीव-स्यास्तरणम् सव्याशून्यऽउलूखलनिधानम् हविरावपनम् मुसलादानम् मुसला-वधानम् उत्तराभिमुखस्तिष्ठन्नवहन्ति अग्नीद्प्युदङ् तिष्ठन्नेवाघातं करोति · शूर्पा-दानम् हविरुद्वपनम् निष्पवनम् विवेचनम् पुनः कण्डनम् उद्वपनम् पुनर्निष्प-वनम् तुषनिरसनम् पात्र्यामावापः त्रिः फलीकरणम् कणनिधानम् · पुनः कृष्णाजिनादानादि गार्हपत्यस्य पश्चात्पूर्ववद्दक्षिणाग्रीवं कृष्णाजिनमास्तीर्य सव्या-शून्यऽउदगग्रां दृषदमुपधाय शम्यामधः प्रत्यगग्रां प्रेरयित्वोपर्युपलामुपधाय[4] हवि-रावापं कृत्वा पेषणं प्रोहणान्तम् · अग्नीडुपवेषमादाय गार्हपत्यस्य पश्चादुदङ्मुख उपविश्य गार्हपत्यस्योत्तरार्धे प्रत्यक्संस्थानि कपालानि प्रथमकपालधर्मेणोपद-धाति प्रतिपुरोडाशमेकैकम् · तत्राङ्गाराणां दक्षिणात उद्गूहनम् उत्तरतः कपा-लोपधानस्य विधानात् · कपालानामङ्गारैरभ्यूहनम् · उपसर्जन्यधिश्रयणम् · अध्वर्योः पिष्टानामीक्षणम् पात्र्यां संवापः · उपसर्जनीनिनयनादि संयवनान्तम् · यावद्गृहीतं पुरोडाशकरणम् विभज्यालम्भः · अधिश्रयणाद्यभिवासनान्तम् आप्योदकनिनयनम् । पलाशपत्त्रशृतावदानमहापात्रीणां संमार्गः · पुरोडाशानां विकल्पेन प्राणादानम् · ततः पात्री स्थापयित्वा तस्यामेकस्यामेव सर्वान्पुरोडाशा-

१) °मुष्टी° १. २) उत्तरस्य ई° १. उदङ्ङीक्षणं B. ३) ब्रह्मणामी° १. ब्राह्मणमी-क्षणं । हविःप्रोक्षणं यथागृहीतं B. ४) °त्वोपर्युपलमुप° १.

नुद्वास्य कपालान्युद्वासयेत् । ततो दक्षिणाग्नेरुल्मुकमादाय पात्रीशृतावदानपलाशपत्त्रनलिकासनदण्डशिक्याद्युपयुक्तं सर्वमादाय ब्रह्मयजमानाग्नीद्ध्वर्यवः सपत्नीका उदीच्यां दिशि चतुष्पथे गत्वा तत्र परिसमूहनादि कृत्वा तमानीतमुल्मुकमुदङ्मुख उपसमादधाति[1] · तस्य पुरस्तात्प्रत्यङ्मुखौ ब्रह्मयजमानौ पूर्ववदुपविशतः तयोरुत्तरतो ब्रह्मा दक्षिणो यजमानः · ततोऽध्वर्युरग्निं परिस्तीर्य समिधमाधाय पलाशपत्त्रे सर्वेषां पुरोडाशानामतिरिक्तवर्जितानामुत्तरार्धात्सकृत्सकृदवदाय प्राणदानं कृतं चेदत्रोपस्ताराभिघारावपि कृत्वा तस्मिन्नग्नौ जुहोति एष ते रुद्र भागः सह स्वस्नेति इदं रुद्राय · अक्तेषु मिश्रणामिति (११) अञ्जनं प्राणदानम् तद्धि प्राग्विकल्पेन विहितम् अक्तान्वेति (८) तत्राक्तेषु कृतप्राणदानेषु पुरोडाशेषु मिश्रणामुपस्तारप्रत्युपस्तार[णं] सर्वं कुर्यात् स आज्यस्योपस्तीर्येत्युपस्ताराभिघारौ प्रकृत्य सैषाज्येन मिश्राकृतिर्ह्रियतऽइति (१.६.१.२१) श्रुतेर्मिश्रणशब्देनोपस्ताराभिघारावुच्येते । ततोऽतिरिक्तं पुरोडाशमुत्तरस्यां दिशि गत्वा आखूत्करे करोति आखुभिरुत्कीर्णे पांसुराशौ प्रवेशयति अन्तर्हितं करोतीत्यर्थः एष ते रुद्र भाग आखुस्ते पशुरिति मन्त्रेण · सर्वेऽपि तत्र सह गच्छन्ति · ततः प्रत्यागम्याव रुद्रमदीमहीति सर्वे जपन्ति · ततः सर्वे दक्षिणपाणिना सव्यानूरून्कुट्टयन्तः सर्वेऽग्निं प्रदक्षिणं त्र्यम्बकमिति त्रिः परियन्ति सकृन्मन्त्रः वारद्वयं तूष्णीम् · ततोऽनेनैवं मन्त्रेण प्रदक्षिणं हस्तेनैव दक्षिणानूरून्कुट्टयन्तोऽग्निं त्रिः परियन्ति · नात्रापसव्यकरणम् अविहितत्वात् · यजमानकुमार्यश्चोत्तरेण त्र्यम्बकमिति मन्त्रेण पतिवेदनमित्यनेनोभयविधमपि परिगमनं सहैव कुर्वन्ति पतिकामाः सौभाग्यकामा वा वचनात्कुमार्या अपि मन्त्रपाठः । ततो रौद्रान्पुरोडाशान्यजमानोऽञ्जलौ कृत्वा ऊर्ध्वांस्तथा उत्क्षिपति यथोर्ध्वमुखोऽपि गौर्न प्राप्नोति · तान्क्षिप्तानधस्तात्पततो यजमानः पुनरञ्जलिना प्रतिगृह्णाति पततो धारयतीत्यर्थः यदा ग्रहीतुं न शक्नोति तदा यावन्तो भूमौ पतितास्तावतामुपस्पर्शनं करोति · ततः पुरोडाशान्समं विभज्य शिक्ययोः कृत्वा ते च शिक्ये वंशयष्ट्यां कुपे यज्ञियवृक्षदण्डे वंशपात्रद्वययुक्ते वेणुनिर्मितभाजनद्वययुक्तो

1) sic! गच्छन्ति तत्र परि° ?

दण्डविशेषः वीवधापरपर्यायः कुप इति भाव[ः तस्मिन्] वा[१] उभयतो बद्धो-त्तरस्यां दिशि गत्वा वृक्षे वा स्थाणौ वा वंशे वा वल्मीके वा एतत्तऽइति मन्त्रेण तच्छिक्यद्वयं तथोच्चमवलगयति यथा गौरुच्चमुखोऽपि न प्राप्नुयात् · कृत्तिवासा इत्यनेन निश्चलीकरोति · तत्रापि सर्वे आयान्ति । ततः सर्वे प्रदक्षिणमावृत्य पश्चादवलोकनमकुर्वन्तो गृहं प्रत्यागत्य पादप्रक्षालनादि कृत्वाचम्याप उपस्पृशन्ति । ततः पाक्षिकं यथोक्तं वपनम् · शतब्राह्मणभोजनसंकल्पः · साकमेधार्थसाधारणोद्धरणपक्षे गार्हपत्यमध्यमाहवनीयौ समारोप्य गृहान्गत्वा मथित्वा पौर्णमासेष्टिं पक्षादि च कृत्वा वैश्वदेवादि नित्यं च कृत्वा भोजनादि कुर्यात् · दैवात्सायंकालादर्वाग्यदि पर्वसमाप्तिर्न भवति तदाग्निहोत्रहोमः पौर्णमासेष्ट्यनन्तरमेव कर्तव्यः क्रमानुग्रहात् · प्रतीष्टिविहारपक्षे गार्हपत्यऽएव समारोप उद्धृत्य वा तदानीमुद्धृतस्यानपवृक्तस्याहवनीयस्याभावात् । केचिन्महाहविराहवनीयोपस्थानान्तं कृत्वा प्राग्व्रतविसर्गात्तस्मिन्नेव विहारे पित्र्यां त्र्यम्बकांश्च कृत्वा व्रतविसर्गादि कर्मापवर्गान्तं कुर्वन्ति · अस्मिन्पक्षे पित्र्यायां त्र्यम्बकेषु च ब्रह्मवरणं व्रतविसर्गश्च न भवति महाहविर्मध्यऽएवान्तर्भावात् · शाङ्खायनभाष्यकारस्य (३.१७) याज्ञिकानां चायमेव पक्षोऽभिमतः ॥ ॥ इति साकमेधाः समाप्ताः ॥ ॥

इति पञ्चमस्य दशमी कण्डिका ॥ ॥

अथ शुनासीरीयमुच्यते ॥

शुनासीरीयमतः ॥ १ ॥ अत इति साकमेधानन्तरम्[२] स यत्रैव साकमेधैर्यजते तच्छुनासीर्येण यजेतेति श्रुतिः (२.६.३.१०) · अत्र हरिस्वामिनः यस्मिन्काले साकमेधैर्यजते तत् तत्रैव शुनासीर्येणेति न तद्दिवसनियमोऽयम् किं तर्हि यत्पूर्वयोः पर्वणोरुक्तम् चतुर्थे मासीति (२.५.२.४ ३.१) तदाशङ्कानिवृत्त्यर्थम् साकमेधप्रत्यासन्ने यज्ञनीयेऽहनि यजेत नियमतश्चतुर्थं मासं नाद्रियेतेत्यर्थः कुत एतत् तस्माद्यदैव कदा चैतेन यजेतेत्युपसंहारात् · अत्र माधवः

१) ? भाव---वा १· २) साकमेधानन्तरं तत्कालं शुनासीरीयं भवतीत्यर्थः Sa.

यत्र यस्मिन्नेव काले साकमेधैर्यजते तत्तदानीं तदनन्तरकालऽएव यजमानः शुनासीर्येण यजेत ननु शुनासीर्यस्यापि चातुर्मास्यत्वान्मासचतुष्टयस्य व्यवधानमपेक्षितमित्याह यद्वाऽइति चतुर्षु-चतुर्षु मासेषु संवत्सरस्य मध्ये वैश्वदेववरुणप्रघाससाकमेधभेदेन त्रिस्त्रिवारं यजतऽइति यत्[1] तेनैव संवत्सरमाप्नोति वैश्वदेवादयः प्रत्येकं चतुर्मासयुक्ता[2] इति तदनुष्ठानेनैव तेषां द्वादशानामवाप्तत्वात् तत्समुदायरूपः संवत्सरोऽपि यजमानस्य स्वायत्तो जात इत्यर्थः उक्तमर्थं निगमयति तस्मादिति यस्माच्चतुर्थपर्वणः शुनासीर्यस्य संवत्सरातिरिक्तः प्रातिस्विकः कालो नास्ति तस्माद्यदा कदाचिदेव साकमेधानन्तरं यजेत इत्यर्थः एतदेवानन्तर्यं सूत्रकृताप्युक्तम् शुनासीरीयमत इति ।

यदेच्छेत्[3] ॥२॥ साकमेधानन्तरं यजमानो यदेच्छेत् तदानीमेव द्व्यहे त्र्यहे चतुरहे अर्धमासे मासि चतुर्षु मासेषु वा तदा शुनासीरीयं कुर्यात् ।

पौर्णमासधर्मा बर्हिर्वर्जम् ॥३॥ बर्हिस्तु वैश्वदेवपर्ववत्त्रेधासंनद्धं भवति। बर्हिर्ग्रहणं प्राचीनप्रवणदेशाहतवासःकुशप्रस्वः-प्रस्तर-इत्येवमादीनामुपलक्षणार्थम्[4] श्रुतौ तेषामप्रतिषिद्धत्वात् · तथा हि अथ यच्छुनासीर्येणेति (२. ६. ३. २) प्रकृत्य तस्यावृन्नोप·ष्टयजुरिति (०३) अत्रोत्तरवेदिपृषदाज्ययोरप्राप्तयोरेव प्रतिषेधान्नित्यानुवादः । अग्निमन्थनं त्वत्र प्रतिषिद्धम् न मन्थन्त्यग्निमिति · तेषां वै चतुर्थमग्निं मन्थन्तीति (११. ५. २. ८) विधानमपि मन्थनस्यास्ति · अतो विहितप्रतिषिद्धत्वान्मन्थनस्य शुनासीरीये विकल्पः तत्र यदा मन्थनपक्ष आश्रीयते तदा वैश्वदेववन्नवप्रयाजनवानुयाजादि भवति बह्वृचब्राह्मणे तत्सूत्रे च तथा दर्शनात्। पञ्च प्रयाजा इत्यादिना (२. ६. ३. ३) नवप्रयाजनवानुयाजानां त्रयाणां समिष्टयजुषाम् वैश्वदेवधर्माश्चातुर्मास्येष्वित्यनेन (४. ३. ४) प्राप्तानां निषेधः तद्व्यतिरिक्तानां वैश्वदेवधर्मा[णां] प्रतिषेधाभावात् त्रेधा बर्हिः कुशप्रस्वः प्रस्तरः प्राचीनप्रवणो देशोऽहतानि वासांसि चेत्येते वैश्वदेवधर्मा अत्र[5] भवन्त्येव ।

नित्येभ्योऽधिकानि ॥४॥ पञ्चभ्य आग्नेयादिपौष्णान्तेभ्योः हविर्भ्यः ।

---

1) Thus Mâdhava l. c. यजते २. 2) चातुर्मास्ययु॰ २. चातुर्मासयु॰ Mâdhava.
3) यदीच्छेत् Ss. 4) sic! a rather ungrammatical compound! 5) ? अवध २.

शुनासीराभ्यां द्वादशकपालः ॥५॥ [षष्ठं हविः] · शुनो वायुः सीर आदित्यः · अथ शुनासीराय द्वादशकपालः न शुनासीराभ्याम् शाखान्तरात् ।

वायव्यं पयः ॥६॥ [सप्तमं हविः] · उपांशु (४. ५. ७) । इदमिदानीं चिन्त्यते किमिदं पयो धर्मवद्भवत्युत लौकिकमिति · किं तावत्प्राप्तम् · सूत्रेणैव पक्षः ·

लौकिकं प्रतिधुक्श्रुतेः ॥७॥ तत्पयो लौकिकं भवति शाखान्तरे वायव्यं पयः प्रतिधुग्भवतीति श्रूयते · प्रतिधुक्शब्देन तत्कालदुग्धं धारोष्णं पयो ऽभिधीयते · यदि च धर्मवत्क्रियते तदा आज्यनिर्वापानन्तरं दोहः प्राप्नोति परिक्षालननिनयनं श्रपणं च अतश्च प्रतिधुक्त्वं विरुध्यते · अतो लौकिकमेवेति प्राप्त ऽआह ·

नाविरोधात् ॥८॥ एतत्पयो लौकिकमसंस्कृतं न भवति किंतु प्राकृतपयोधर्मकम् न हि धर्मेषु क्रियमाणेषु प्रतिधुक्त्वं विरुध्यते · नन्विदानीमेवोक्तम् कालश्रपणादयो विरुध्यन्त ऽइति सत्यम् प्रदानकाल ऽएव शुनासीरयागानन्तरं दोहः करिष्यते अधिश्रयणपरिक्षालननिनयनश्रपणवर्जिताः सर्वे धर्माः करिष्यन्ते तेन धर्मवद्भविष्यति प्रतिधुक्त्वस्यापि विरोधो न भविष्यतीति ।

प्रकृतिदर्शनाच्च ॥९॥ प्रकृतावपि प्रकरणपठितानां धर्माणां मध्ये यावन्तो न विरुध्यन्ते तावतां क्रिया दृष्टा यथा प्रातर्दोह ऽएवातञ्चनवर्जितानामिति · अतः शुनासीरयागानन्तरमेव[1] प्रतिधुक्त्वाविरोधिभिर्धर्मैरुपेतो दोहः कर्तव्य इति ।

यवागूर्वा ॥१०॥ यवागूर्वा वायव्या [सप्तमं हविः] न वायव्यं पयः · तण्डुलैः शिथिलपक्का · उपांशुत्वं (४. ५. ४) वायोर्भवत्येव ।

सौर्य एककपालः ॥११॥ [अष्टमं हविः] · उपांशु (४. ५. ३) · सर्वहुतः (१. २. १२) ।

सीरं षड्योगं दक्षिणा ॥१२॥ षड्भिरनडुद्भिर्युक्तं हलं दक्षिणा भवति शाखान्तरात् · युज्यन्त ऽइति योगाः बलीवर्दाः ।

श्रोष्टारौ[2] वा ॥१३॥ वोढारौ महान्तौ बलीवर्दौ न सीरम् ।

श्वेताश्वः सौर्यस्या ऽभावे गौः ॥१४॥ गौः श्वेतः ॥ ॥ अत्र

---

१) ? °सीरीयया° २. २) ? Thus Ss. twice., paddh.; उष्टारौ २. दक्षिणोष्टारौ M.

कृतवैश्वदेवपर्वणो वरुणप्रघाससाकमेधादिकालेषु प्रसवरजोदोषसूतकप्रवासादि-पातेऽपि नियतकालत्वाद्वरुणप्रघासादि कर्तव्यमेव कृते[1] पौर्णमासे दर्शेष्टिवत् ·
चातुर्मास्यानां पुनःप्रारम्भोऽपि सूतकादावपि कार्य एव दर्शपूर्णमासवदेव ·
अथोत्सर्गपक्षे शुनासीरीयस्य कालान्तरमाह ·

संवत्सरेप्सोः फाल्गुन्युद्दृष्टे शुनासीरीयेणेष्ट्वा सोमेन पशुनेष्ट्या वा यजेत पौर्णमास्याम् ॥ १५ ॥ यो यजमानश्चातुर्मास्यैः संवत्सरं[2] व्याप्तुमिच्छति स संवत्सरेप्सुः · तस्य संवत्सरेप्सोः फाल्गुन्युद्दृष्टे फाल्गुनशुक्लप्रतिपदि शुना[सीरीयेणेष्ट्वा आगामिन्यां फाल्गुन्यां सोमेन वा प]शुना वाग्नीषोमीयेण इष्ट्या वा आग्नेय्या यजेत · तद्धैके ˚˚ पर्येयादिति श्रुतेः (२. ६. ३. ११ १२) उद्दृष्टं शुक्लपक्षः तस्मिन्प्रतिपद्येव शुनासीर्येण यजेत अथानन्तरं तस्मिन्नन्यस्मिन्वा दिवसे[3] दीक्षानुसारेण दीक्षेतेति हरिस्वामिनः · काठके अ[थ] सद्योऽग्निष्टोमाय दीक्षते पशुना वेति · शाङ्खायनः (३. १८. २१) सोमेनोत्सर्गः पशुनेष्ट्या वेति । उत्सर्गपक्षे अयं कालः इति नूत्सृजमानस्येति (२. ६. ३. १२) श्रुतेः · द्विविधौ हि चातुर्मास्ययाजिनौ सकृदनुष्ठायोत्सृजमानः पुनः प्रयुञ्जानश्च · तत्रोत्सृजमानस्यायं पक्ष उक्तः अथ पुनः प्रयुञ्जानस्य पक्षमाह ·

आवृत्तिरनीजानस्य ॥ १६ ॥ फाल्गुन्यां सोमपश्विष्टीनामन्यतमेनानीजानस्यानिष्टवतो यजमानस्य चातुर्मास्यानामावृत्तिर्भवति । तत्रावृत्तिपक्षे शुनासीरीयस्य वैश्वदेवपर्वणश्च कालमाह ·

फाल्गुन्युपवसथे शुनासीरीयम् ॥ १७ ॥ आवृत्तिपक्षे फाल्गे मुख्यायां फाल्गुन्यां पञ्चदश्यां शु˚यं भवति ।

प्रातर्वैश्वदेवम् ॥ १८ ॥[4] प्रातः प्रतिपदि वैश्वदेवं पर्व भवति · प्रतिवर्षमेवमेव कर्तव्यम् अथ पुनः प्र˚ ˚नः प्रयुञ्जानस्येति (२. ६. ३. १३) श्रुतेः · पूर्वेद्युः पञ्चदश्याम् प्रातः प्रतिपदीति हरिस्वामिनः · षष्ठ्यर्थे चतुर्थी फाल्गुन्याः पौर्णमास्याः पूर्वेद्युः पञ्चदश्यां[5] शुनासीर्येण यजेत [अथानन्तरमेव प्रातःकाले पौर्णमास्यां वैश्व-

---

1) ? कृतो २. 2) „one year only". 3) हवि २. 4) प्रातर्वै˚ पदि Ss. 5) Thus २. but Mâdhava has: फाल्गुन्यै पौर्णमास्यै षष्ठ्यर्थे चतुर्थी तस्याः पूर्वेद्युः पूर्वदिवसे चतुर्दश्याम् !

देवेन यजेत]¹⁾ तदनन्तरं नित्येन पौर्णमासयागेनेत्ययं प्रयोगक्रम इति माधवाचार्याः। मानवे संवत्सरस्यान्ते या पूर्वा पौर्णमासी ताꣳ शुनासीर्यायोपवसति योत्तरा तां वैश्वदेवायेति · आपस्तम्बः चातुर्मास्यैरिष्ट्वा सोमेन पशुना वा यजते फाल्गुन्या उद्दृष्टे सोमाय दीक्षते तं ततो नानीजानमपरा फाल्गुनी पर्यवेयादिति वै खलूत्सृजमानस्याथ पुनरालभमानस्य फाल्गुन्याश्चतुर्दश्यां शुनासीरीयेणेष्ट्वा पञ्चदश्यां वैश्वदेवेन यजत इति पञ्चवार्षिकाणि पञ्चदशवार्षिकाणि एतान्येव द्विस्त्रिरपरिमितं वाभ्यस्येदिति पञ्चसांवत्सरादिकेषु वैश्वानरपार्जन्यौ²⁾ पञ्चहोता च नाभ्यावर्तेरन्नेकोपक्रमवाग्यथान्वारम्भणीयेति³⁾ ॥

त्रिविधानि चातुर्मास्यानि ऐष्टिकानि पाशुकानि सौमिकानि च । तत्रैष्टिकान्युक्तानि । सौमिकानि च अथैकाहा इत्यस्मिन्नध्याये (२२) वक्ष्यन्ते चातुर्मास्याः सोमा इत्यत्र (२२. ७. १) । अथ सपाशुकान्यभिधीयन्ते · तानि च शाखान्तरे समाम्नातानि · तेषु च पशुपुरोडाशमनु पर्वहविषां निर्वाप उक्तः (२३) · तत्र च पशुरपि प्रधानम् पर्वहवींष्यपि प्रधानभूतान्येव · तत्र पशुरेकः हवींषि बहूनि · तत्रायं संशयः सपशुषु किमैष्टिकं हविषां तन्त्रम् उत पाशुकमिति · तत्र विप्रतिषिद्धसम[वा]ये भूयसां स्यात्सधर्मत्वमिति न्यायादैष्टिके हविषां तन्त्रे प्राप्ते आह ·

सपशुषु पशुतन्त्रं प्राधान्यात् ॥१९॥ सपशुषु चातुर्मास्येषु पशुतन्त्रम् प्राधान्यात् प्रधानं प्रक्षेपः पशुतन्त्रमध्ये हविषां प्रक्षिप्तत्वात् · कथं प्रक्षेपः पशुपुरोडाशमनु विहितत्वात् (२३) · तस्मात्पशुतन्त्रमेव । केचिदाहुः प्राधान्यात् महत्त्वात् · प्रधानशब्दो महत्त्वात्पशुवाची शक्यते हि महति पशुतन्त्रेऽल्पं चातुर्मास्य[तन्त्रं] प्रधातुमिति · तथा हि पशोर्हि एकादश प्र[याजा अनु]याजाश्च तेषु ऐष्टिका नवान्तर्भवन्ति एवमुभयानुग्रहः कृतो भवति · तस्मात्पशुतन्त्रमेव · सह प्रवृत्तयोरेव च⁴⁾ तन्त्रयोर्वाचनिको निर्वापमात्रस्योत्कर्षः पशुपुरोडाशमन्विति (२३) ।

पूर्वेद्युर्वैश्वदेवे पाशुकम् ॥२०॥ वैश्वदेवे पर्वणि यत्पाशुकं पशुसम्बन्धि

---

१) [to] from Mâdhava. २) ? °जन्या २. ३) ? °र्तेतकोप° २. ४) ? °वृत्तैयोरेवव २.

कर्म तत्पूर्वेद्युः पूर्वदिने भवति यूपाञ्जन्याद्युत्तरवेदिछादनान्तम् · तद्धि ऐष्टिके वैश्वदेवे नास्ति अतस्तत्पाशुकमित्युच्यते । सिद्धान्तमाह ·

सद्यो वा ॥ २१ ॥ वा पक्षव्यावृत्तौ · सद्य एव पाशुकं स्यात् न पूर्वेद्युः विकृतीनां सद्यस्कालत्वस्य प्रत्यक्षवचनेनोपदिष्टत्वात् । केचिद्विकल्पार्थमेव वा-शब्दमिच्छन्ति · पशोरपि द्व्यहकालता वाचनिकी सद्यस्त्वमपि वाचनिकम् अत उभयोरौपदेशिकत्वाद्विरोधाच्च विकल्प एव युक्त इति ।

वैश्वदेवः पशुः ॥ २२ ॥ वैश्वदेवपर्वणि · स च श्राव्य एव न तूपांशु [विश्वदेवीत्यस्य (४. ५. ६) स्त्रीलिङ्गत्वात्] । तत्र वैश्वदेवः पशुपुरोडाशो द्वादशक-पालः · ऐन्द्राग्नाद्धर्मप्रवृत्तेः [1] विश्वेभ्यो देवेभ्यो जुष्टं नियुनज्मि विश्वेभ्यो देवे-भ्यश्छागस्य वपायै मेदसोऽनुब्रूहि वपां मेदः प्रेष्येति · एवम् हविषोऽनुब्रूहि हविः प्रेष्येति · विश्वेभ्यो देवेभ्यः पुरोडाशस्यानुब्रूहि पुरोडाशं प्रेष्येति च · अयं च पशुर्निरूढवद्भवति हविर्यज्ञपशुत्वात् अतोऽयमपि हविर्यज्ञविध एव तेन व्रतोपायनादीन्यत्र भवन्ति ।

पशुपुरोडाशमनु हवींषि निर्वपति ॥ २३ ॥ आग्नेयादीन्यष्टौ · तत्र पा-शुकस्य पूर्वेद्युःकरणपक्षे वपामार्जनान्त एव शाखाछेदनादि पवित्रबन्धनान्तं कृत्वा वैश्वदेवपयस्यार्थं वत्सापाकरणं कुर्यात् दोहश्च पशुपुरोडाशपर्वहविषां प्रोक्ष-णानन्तरं प्राक्जुषे त्वेतीक्षणात् आज्यनिर्वापस्य पूर्वतरं निर्वृत्तत्वादिति । इदा-नीमिदं विचार्यते · पशुपुरोडाशस्याग्नेयादिपर्वहविषां च समानकालत्वात् तन्त्रेण स्विष्टकृद्याग उत हविषां धर्मेणेति · किं चातः · यदि पशुपुरोडाशधर्मेण क्रि-यते तदा जुहूपभृतोरुपस्तीर्य पशुपुरोडाशादिनः [2] प्रत्यभिघारानन्तरमुपभृति स्वि-ष्टकृदर्थमवदायानभिघार्यातिक्रम्य पशुपुरोडाशयागं कृत्वा प्रत्यागत्यैवमेव प्रति-हविः स्विष्टकृदर्थमुपभृत्यवदानं कार्यम् अन्तिमहविरवदानानन्तरमुपभृति द्विरभि-घार्यान्तिमहविर्यागानन्तरमुपभृतः सकाशाज्जुह्वां समानीय निर्गुणाः प्रेष्यप्रैषश्च स्विष्टकृद्यागः प्राप्नोति · यदा च पर्वहविषां धर्मेण तदान्तिमहविर्यागानन्तरं

---

1) from the ऐन्द्राग्न, not from the अग्नीषोमीय, on account of the गुणसामा-न्यम् (४. ३. ८); see pag. ३१६, १५ ff. 2) °दिन २. Gen. neutr.

प्रकृतिवदेव प्रत्यागत्याग्नये स्विष्टकृतेऽनुब्रूहीत्युक्त्वा जुह्वामेवोपस्तीर्य जुह्वामेव सर्वहविर्भ्योऽवदाय सगुणो यज्ञप्रैषः इति · तत्र मुख्यत्वात्पशुपुरोडाशस्य इतरेषां तदनुविधानेन तद्वशत्वात्पशुपुरोडाशधर्मेण स्विष्टकृद्यागे प्राप्तेऽस्याह ·

तेषां च स्विष्टकृद्भूयस्त्वात् ॥२४॥ तेषामाग्नेयादीनां पर्वहविषां धर्मेण स्विष्टकृद्यागो भवति प्रकृतिवज्जुह्वामवदाय सगुणो यज्ञप्रैष इत्यर्थः · कुतः भूयस्त्वात् पर्वहवींषि भूयांसि प्रधानानि च पशुपुरोडाश एको गुणभूतश्च यतः स पश्वङ्गम्[1] प्रतिषिद्धसमवाये भूयसां स्यात्सधर्मत्वमिति न्यायेन बहूनामनुग्रहो न्याय्य इति। पर्वहविषां प[शु]तन्त्रमित्युक्तत्वात्सर्वस्मिन्पाशुके प्राप्तेऽस्याह·

यथोक्तमविरुद्धम् ॥२५॥ यद्य[द]विरुद्धम् यच्चातुर्मास्यहविषां सम्बन्धि क्रियमाणं पशुना सह न विरुध्यते पशोर्विरुद्धं न भवति तद्यथोक्तम् यथा चातुर्मास्यानामुक्तं तथा भवति · तद्यथा ऽहतवस्त्रपरिधानम् त्रेधा बर्हिः प्राचीनप्रवणो देशः पुष्पितानां काशानां प्रस्तरः एवमादि पशुना न विरुध्यते पशोरविशेषविधानात् हविषां चानुग्रहः कृतो भवति । यच्च विरुध्यते नवप्रयाजादि तत्पाशुकमेवेति । केचिद्दक्षिणाद्रव्यमत्रोदाहरन्ति पशुर्वरोऽवदीयमानः प्रथमजो गौरेव देयः उभयानुग्रहाय वरुणप्रघासे धेनुरेव[2] महाहविषि ऋषभ एव शुनासीरीये सीराद्येवेति · पाशुकेऽन्ते पर्वदक्षिणा देयेति सम्प्रदायकारः · एतच्च न्यायसूत्रं[3] शाङ्खायनसूत्रेण विरुध्यते तत्र ह्युक्तम् (२४. १०. २२ २३) सौमिकैः समानदक्षिणानि सर्वपशूनि चातुर्मास्यपशुदक्षिणैः पाशुकानीति पशुदक्षिणा चातुर्मास्यदक्षिणा चोभयी देया इत्यर्थः ।

हृदयशूलान्ते वपनम् ॥२६॥ पर्वसंस्थासु यद्वपनमुक्तं वैकल्पिकम् तत्सपशुषु हृदयशूलान्ते कर्तव्यम् हृदयशूलसमिदाधानान्तेऽइत्यर्थः । नियोगतो वपनं सपशुषु कर्तव्यमिति कर्कः · तदयुक्तम् कालपरत्वाद्वाक्यस्य अनेकगुणविधाने वाक्यभेदप्रसङ्गाच्च ।

वरुणप्रघासेषु वारुणः ॥२७॥ पशुर्भवति अष्टाकपालः पशुपुरोडाशः · तत्र वरुणाय जुष्टम् वरुणाय छागस्य वपां मेद इत्यादि वरुणाय पुरोडा-

१) ? ॰आयतः सपश्वंपां २. २) ? धिनुरेति २. ३) ? ॰व्ययुतं २.

शस्येति च । अन्यत्सर्वं वैश्वदेववत् · यत्तु पूर्वेद्युर्वैश्वदेवे पाशुकमिति (२०) तद्वचनाद्वैश्वदेवऽएवेति पितृभूतिः न्यायसामान्यात्सर्वत्रैवमित्यपरे ।

महाहविषि माहेन्द्रः ॥ २८ ॥ पशुर्भवति साकमेधपर्वणि अष्टाकपालपशुपुरोडाशमनु तद्धविषामेव निर्वापः ।

शुनासीराभ्यां चतुर्थः ॥ २९ ॥ पशुर्भवति शुनासीरीये · चतुर्थग्रहणेन चतुर्थं पर्व लक्ष्यते · कृतानुकरत्वेन प्रतिप्रस्थातुरपि[1] पशुर्मा भूदिति चतुर्थग्रहणम् · तत्र शुनासीराभ्यां जुष्टम् शुनासीरयोश्छागस्य शुनासीरयोः पुरोडाशस्येति ॥ अथ सपशूनां चातुर्मास्यानां प्रकारान्तरमाह ·

पुरस्ताद्वा पर्वणः-पर्वणः[2] ॥ ३० ॥ अथवा पर्वणः-पर्वणः[3] पुरस्तात्पृथक्तन्त्रः पशुर्भवति वैश्वदेवादिकः न सह · अस्मिन्पक्षे साकमेधेषु प्राङ्महाहविषः पशुः महाहविषि माहेन्द्र इत्युक्तत्वात् (२८) ततः प्रागेवेति युज्यते ।

अन्ते वा ॥ ३१ ॥ अथवा पर्वणः-पर्वणोऽन्ते[4] पर्वसमाप्त्यन्ते पृथक्तन्त्रोऽयं पशुर्वैश्वदेवादिको भवति नादौ नापि सह · अस्मिन्पक्षे महाहविरन्ते प्राक्पितृयज्ञात्पशुः वरुणप्रघासेषु च पशोरन्ते समारोप्य गृहगमनमप्यत्र[5] नास्ति ॥ ॥ एकादशी कण्डिका ॥ ११ ॥ ॥

अथ पद्धतिः ॥

अथ शुनासीरीयसंज्ञं चतुर्थं पर्व प्रदर्श्यते । तच्च चातुर्मास्यानामुत्सर्गपक्षे साकमेधसमाप्त्यनन्तरं तत्कालमेव भवति शाखान्तरात् द्व्यहे त्र्यहे चतुरहादौ वा[6] अथ वा मार्गशीर्ष्यां पौष्यां माघ्यां फाल्गुन्यां वा यदा इच्छा भवति · तथा चापस्तम्बः ततो द्व्यहे त्र्यहे चतुरहेऽर्धमासे मासि चतुर्षु वा मासेषु शुनासीर्येण यजेतेति · मानवे शुनासीर्यं चतुर्षु मासेषु सद्यश्चतुरहे वा मासि वा वैश्वदेवेन व्याख्यातमिति · काठके [तदहः][7] शुनासीर्यं चतुर्थ्यां मासि चतुर्षु वा मासेषु शुनासीर्येण यजेतेति । तत्राष्टौ हवींषि भवन्ति आग्नेयोऽष्टाकपालः सौम्यश्चरुः सावित्रो द्वादशकपालोऽष्टाकपालो वा सारस्वतश्चरुः पौष्णश्चरुः शुना-

---

१) ? °तुर्यदि २. २) Thus Ss. (पर्वणः २.) and M. ३) Thus (पर्वणः २.) Ss. ४) Thus (पर्वणो२ऽन्ते) Ss. ५) ? °नमथ २. ६) °तुरनहावा १. ७) from the schol. at ५.११.२, where the same passage is quoted.

सीराभ्यां द्वादशकपालः वायव्यं पयो यवागूर्वा सौर्य एककपाल इति । तत्र पूर्वमहतवस्त्रपरिधानं दम्पत्योः · प्राचीनप्रवणे वितानसाधनम् · ऋत्विग्वरणम् अश्वषड्योगसीरदक्षिणेन वा अश्वोष्टारद्वयदक्षिणेन[1] वा सीरगवदक्षिणेन वा ओष्टारगवदक्षिणेन वा शुनासीरीयपर्वणाहं यक्ष्यऽइति चतुर्णां वरणम् · शुनासीरीयपर्वार्थमित्याहवनीयदक्षिणाग्न्योरुद्धरणम् · अग्न्यन्वाधानम् · वायव्य-पयःपक्षे शाखाछेदः परिवासनम् उपवेषकरणम् पवित्रबन्धनम् वत्सापाकरणम् वायवे भागमिति गोः स्पर्शने विशेषः उपगूहनम् · षडासनोपकल्पनम् ब्रह्मवरणम् शुनासीरपर्वणाहं यक्ष्यऽइति · पात्रासादने शूर्पाग्निहोत्रहवणी स्फ्यः कपालानि त्रयस्त्रिंशत् एकोनत्रिंशद्वा [चरु]स्थाल्यस्तिस्रः शम्या-कृष्णाजिनम् उलूखलमुसलम् दृषदुपलम् पात्रीधान्यम् पवित्रार्थौ धृष्टिः संयव-नोदकम् स्थाली आज्यं च वेदश्च दोहनचतुष्टयम् दक्षिणार्थे षड्भिरनडु-द्भिर्युक्तं सीरं हलम् ओष्टारौ वोढारौ महान्तौ बलीवर्दौ सौर्यस्य श्वेतोऽश्वः तदभावे श्वेतो गौः उदकतृणमग्निः विंशतिकाष्ठ इध्मः कुशप्रसूप्रस्तरोप-संनद्धं[2] त्रेधा बर्हिः स्रुवो जुहूः उपभृद्ध्रुवा संमार्गाद्यर्हाणि यानि च तत्र शृतावदानमेक्षणे पुरोडाशपात्र्यश्चतस्र इति विशेषः योक्त्रम् यूनकुशाश्च परिधयः [होतृ]पीठम् इडापात्री षडवत्तम् अन्तर्धानकटः पूर्णपात्रम् पक्षे कर्मापवर्गा समिच्च · वपनाभावः · मन्थनं विकल्पेन न मन्थन्त्यग्निम् (२. ६. ३. ३) तेषां वै चतुर्थ्यग्निं मन्थन्तीति (११. ५. २. ८) विहितप्रतिषिद्धत्वात् तत्रामन्थनपक्षे सर्वं पौर्णमासवत् मन्थनपक्षे वैश्वदेववन्नवप्रयाजादि सर्वमिति बह्वृचब्राह्मणे श्रूयते तत्सूत्रे च तथा च ब्राह्मणे यद्वैश्वदेवस्य तन्त्रं तत्तन्त्रं यदि[3] न म-थ्यते पौर्णमासेनैव[4] तन्त्रं भवतीति सूत्रे च (शाङ्खायन॰ ३. १८. १२ १३) समा-नमन्यद्वैश्वदेवेन पौर्णमासं त्वमथ्यमानऽइति आश्वलायनः समाना वैश्वदे-व्येति · स्फ्योपहितपात्रीकरणादि · ग्रहणे विशेषः अग्नये जुष्टं गृह्णामि सो-

---

1) The author treats (here and throughout) ओष्टारौ in १३ as if it were a dual from ओष्टार, instead of ओष्टृ. Moreover the *o* is treated in the same way as the *o* of *oshṭha*, see Pân. ६. १. ९४, vârtt. ५. 2) ॰प्रस्वप्र॰ I. 3) ॰वस्यतत्रं तत्रं यदि I. ॰वस्य तंत्रं यत्तंत्रं यद्यु the schol. at ५. ११. ६. 4) पौर्णमासयमेव I. Thus the schol. l. cit.

माय सवित्रे सरस्वत्यै पूष्णे शुनासीराभ्यां जुष्टम् यवागूपक्षे वायवे जुष्टम् सूर्याय जुष्टम् · प्रोक्षणे अग्नये वा जुष्टमित्यादि · कणान्ते विभज्यालम्भः इदमग्नेः सवितुः पूष्णः शुनासीरयोः सूर्यस्य च इद७ सोमस्य सरस्वत्याश्च यवागूपक्षे वायोश्च · यथोक्तं कपालोपधानम् एककपाले तप्यस्वेत्यभ्यूहनम् ईक्षणान्ते पौष्णस्य · विभज्यालम्भः इदमग्नेः सवितुः शुनासीरयोः सूर्यस्य च इदं पूष्णः चर्वोर्विभज्यालम्भः इद७ सोमस्य इद७ सरस्वत्याः यवागूपक्षे इदं वायोः · संयवनानन्तरं पुरोडाशानां विभज्यालम्भः इदमग्नेः इद७ सवितुः इद७ शुनासीरयोः इद७ सूर्यस्य · प्राणदाने अग्निं गच्छ सोमं गच्छ सवितारं गच्छ सरस्वतीं गच्छ पूषणं गच्छ शुनासीरौ गच्छ यवागूपक्षे वायुं गच्छ सूर्यं गच्छ · एककपालस्याज्येनान्ताच्छादनम् · इदमह७ सपदशेन वज्रेणेत्यवबाधनम् । पञ्च प्रयाजाः अमन्थनपक्षे · उत्तमे प्रयाजे इदमग्नये सोमाय सवित्रे सरस्वत्यै पूष्णे शुनासीराभ्यां वायवे सूर्याय देवेभ्य इत्यादि · तत आज्यभागौ · प्रधानयागे अग्नयेऽनु° अग्निं यज सोमायानु° सोमं यज सवित्रे उपांशु अनु° सवितारं यज सरस्वत्याऽनु° सरस्वतीं यज पूष्णेऽनु° पूषणं यज शुनासीराभ्यामनु° शुनासीरौ यज वायोः पयोहविःपक्षे[1] इदानीमेव दोहः उपसृष्टाप्रैषः स्थाल्यादानम् अधिश्रयणस्याभावः पवित्रस्य स्थाल्यां निधानम् षड्वदोहः न परिक्षालनोदकासेकः न श्रपणम् वायुं गच्छेति प्राणदानम् आसादनं वेद्याम् आलम्भः वायवे उपांशु अनुब्रूहि वायुम् उपांशु यज इदं वायवे यवागूपक्षेऽप्येवमेव यागः सूर्याय उपांशु अनुब्रूहि तत्र जुहूमुपस्तीर्य कृत्स्नमेककपालमवधाय द्विरभिघार्यातिक्रम्याश्राव्य सूर्यम् [उपांशु] यज इदं सूर्याय · ततः स्विष्टकृदादि प्राशित्रादि सर्वं सर्वेषाम् शुनासीर्यस्य पयसश्च भागषडवत्तचतुर्धाकरणानामभावः · समस्य मार्जनम् · दक्षिणालम्भे सीराश्वमसीति सीरगवमसीति वा ओष्टारगवमसीति वा अस्य ऐष्टिकशुनासीरीयपर्वणः समृद्ध्यर्थं षड्भिरनडुद्भिर्युक्तं सीरं श्वेतमश्वं[2] च दक्षिणाम् अथवा ओष्टारौ अश्वं च दक्षिणाम् अश्वाभावे तस्य स्थाने श्वेतं गामिति प्रयोगः ब्राह्मणाः इदं वः सीराश्वं प्रतिगृह्णीत सीरगवं वा ओष्टाराश्वम् ओष्टारगवं

---

१) Thus B. तायोप्रयोह° १. २) ? सीराश्वतश्वं १.

वेति · अमन्थनपक्षे त्रयोऽनुयाजाः · व्यूहने अग्नेः सोमस्य सवितुः सरस्वत्याः पूष्णः शुनासीरयोर्वायोः सूर्यस्य उज्जितिम् अग्निः सोमः सविता सरस्वती पूषा · शुनासीरौ वायुः सूर्यः तमपनुदन्तु अत्रोपांशुदेवतानामुच्चारणमुपांशु कर्तव्यम् अन्यासामुच्चैः · प्रस्तरहोमे इदमग्नये सोमायाग्नये सोमाय सवित्रे सरस्वत्यै पूष्णे शुनासीराभ्यां वायवे सूर्याय देवेभ्य इत्यादि · परिधिभिः सहोपवेषहोमः · एकं समिष्टयजुः · कर्मापवर्गान्ते वपनाभावः · अन्ते शतब्राह्मणभोजनम् ॥ इति शुनासीरीयम् ॥ अथ यो यजमानः चातुर्मास्यैः संवत्सरं व्याप्तुमिच्छति तस्य फाल्गुनशुक्लप्रतिपदि शुनासीरीयम् · अत आगामिन्यां पौर्णमास्यामग्निष्टोमः कार्यः अग्नीषोमीयः पशुर्वा आग्नेयी इष्टिर्वा · एतच्च फाल्गुन्यां चातुर्मास्यारम्भपक्षे · चैत्र्यामारम्भे चैत्रशुक्लप्रतिपदि शुनासीरीयम् [चित्र्यां सोमादि][1] वैशाख्यामारम्भे वैशाखशुक्लप्रतिपदि शुनासीरीयम् वैशाख्यां सोमादि । एतत्सोमादिकमुत्सर्गपक्षऽएव · अथ चातुर्मास्यानामावृत्तिपक्षे विशेष उच्यते · आवृत्तिपक्षे फाल्गुन्यां पौर्णमास्यां शुनासीरीयं कृत्वा प्रातर्वैश्वदेवं पर्व कुर्यात् · चैत्र्यादावप्यारम्भे एवमेव ज्ञेयम् · एवं प्रतिवर्षं यावज्जीवं कर्तव्यम् आवृत्तिपक्षे इष्टिपशुसोमानामभावः[2] ॥ इत्यैष्टिकानि प्रतिपर्व चातुर्मास्यानि ॥ ॥

अथ पशुसहितानि चातुर्मास्यान्यभिधीयन्ते । तेषु चातुर्मास्यहविर्यागाः पशुयागाश्चोभयं प्र[धा]नमेव · तथापि महत्त्वात्पशोस्तन्त्रं भवति · तत्र यत्कर्म पशुना न विरुध्यते तच्चातुर्मास्यानां भवति यथाहतवस्त्रपरिधानादि विरोधे तु पाशुकमेव एकादशप्रयाजानुयाजादि ॥ तत्र वरणे विशेषः सपशुना वैश्वदेव पर्वणा चातुर्मास्यपशुदक्षिणेनाहं यक्ष्यऽइति ब्रह्महोत्रध्वर्युमैत्रावरुणप्रतिप्रस्थात्राग्नीधां वरणम् · ततः परिसमूहनादिपूर्वकमाहवनीयदक्षिणाग्न्योरुद्धरणम् सपशुवैश्वदेवपर्वार्थमिति · अग्न्यन्वाधानम् · चतुरासनम् · ब्रह्मवरणम् प्रथमजगवपशुदक्षिणेन सपशुवैश्वदेवपर्वणाहं यक्ष्ये तत्र भूपते · व्रतग्रहणम् । ततो यूपाङ्क्त्यादि कर्मापवर्गान्तं निरूढपशुवत्कर्तव्यम् · वैश्वदेवः पशुः सद्यो बहुकालीनो वा · संमार्गान्ते संमार्जनस्थापनम् · नियोजने विश्वेभ्यो देवेभ्यो जुष्टं नियुनज्मि ·

---

[1] From B. [2] Here B. is closing.

प्रोक्षणे विश्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि · विश्वान्देवान्गच्छेति वपाप्राणदाने · विश्वेभ्यो देवेभ्यश्छागस्य वपाये मेदसोऽनुब्रूहि विश्वेभ्यो देवेभ्यश्छागस्य वपां मेदः प्रेष्य । वैश्वदेवहविषां निर्वापः · तत्र वपामार्जनान्ते शाखाछेदनादि वैश्वदेवपयस्यार्थं वत्सापाकरणम् शाखोपगूहनान्तम् मानवे दर्शनात् · पशुपुरोडाशमनु पात्रासादने शूर्पम् कपालान्येकचत्वारिंशत् द्वात्रिंशद्वा चरुस्थाल्यस्तिस्रः कृष्णाजिनमुलूखलमुसलम् पात्रीधान्यम् शाखोपवेषः संयवनोदकम् दोहनचतुष्टयम् दक्षिणार्थः प्रथमजो गौः शृतावदानम् मेक्षणम् वाजिनभाण्डम् पुरोडाशपात्र्यः पञ्च · एतावदासाद्य पात्रान्तरे[1] प्रोक्षणीरुन्नीय शूर्पाग्निहोत्रहवण्योरादानादि · ग्रहणे पूर्वं पशुपुरोडाशस्य ग्रहणम् विश्वेभ्यो देवेभ्यो जुष्टं गृह्णामि तत आग्नेयादीनां वैश्वदेवपर्वहविषां द्यावापृथिवीयान्तानां ग्रहणं सादनान्तम्[2] · ततः पात्रान्तरात्प्रोक्षणीरादाय यथागृहीतं प्रोक्षणम् · कृष्णाजिनादानादि कण्डनं कपालान्तम् · सर्वत्र विभक्त्यालम्भे अग्नेरिति पदात्पूर्वं विश्वेषां देवानामिति पदप्रयोगः · अन्यदैष्टिकवत् । प्रोक्षणान्ते पयस्यार्थमुपसृष्टादिपरिक्षालनान्तो दोहः · कपालोपधाने वैश्वदेवस्य द्वादश कपालानि अन्येषामैष्टिकवत् · तप्ते पयसि दधिप्रक्षेपः · तत्रस्थामिधारमदत्त्वा वाजिननिषेकः · आज्यान्ते पूर्वस्थापितवेदमूलाग्रैः शृतावदानमेक्षणवाजिनपात्रपुरोडाशपात्रीणां संमार्गः · ततः संमार्जनापासनम् · प्राणदानं पूर्वं पशुपुरोडाशस्य विश्वान्देवान्गच्छेति तत आग्नेयादीनां वाजिनान्तानाम् · उत्करे वाजिनासादनम् । पशौ विकल्पादकृतं चेत् इह नियोगतो मन्थनम् · पशुपुरोडाशयागे विश्वेभ्यो देवेभ्यः पुरोडाशस्यानुब्रूहि विश्वेभ्यो देवेभ्यः पुरोडाशं प्रेष्य अत्र स्विष्टकृदर्थं पशुपुरोडाशस्योपभृति नावदेयम् · तत आग्नेयादीनां द्यावापृथिवीयान्तानां पूर्ववत्प्रचारः · ततोऽग्नये स्विष्टकृतेऽनुब्रूहीत्युक्त्वोपस्तीर्य पशुपुरोडाशादीनां सर्वेषामुत्तरार्धादेकप्रत्यवायमवदाय द्विरभिघार्यातिक्रम्याश्राव्याग्निं स्विष्टकृतं यजेति प्रेषः यज-प्रैषः स्विष्टकृत् । ततः प्राशित्रादि सर्वम् पशुपुरोडाशमारुतपयस्यानां भागखण्डवत्तचतुर्धाकरणाभावः · पशुपुरोडाशेडान्ते समस्य मार्जनम् । ततो दक्षिणादानम् पशु-

---

1) ? प्रोपात्र्यंत्रांतरे १. 2) ? ग्रहणं ह्यादानांतं १.

प्रथमजगवमसीति विशेषः अस्य सपशुवैश्वदेवपर्वणः समृद्ध्यर्थं पशुप्रथमजगवं[१] दक्षिणां ब्रह्मणऽइत्यादि ब्राह्मणा इदं वः पशुप्रथमजगवं प्रतिगृह्णीतेति द्यौस्त्वा ददात्विति प्रतिग्रहमन्त्रः · मानवे विशेषः पशुमद्भिश्चातुर्मास्यैर्यजते तेषां व्रतं कालदक्षिणां यथा हविर्यज्ञियानामिध्माबर्हिः पौर्णमासीनिवर्तनं[२] च तस्य-तस्य पुरस्तात्पाशुक्या चान्वारम्भणीयेति · अत एवाह सम्प्रदायकारः पाशुकेडान्ते पर्वदक्षिणेति · तेन केवला पर्वदक्षिणैव युक्ता · शाङ्खायनस्तूभयद-क्षिणामुक्तवान् (१४. १०. २२ २३)। ततः पशुविशसनादि · पशुयागे विश्वेभ्यो देवेभ्यश्छागस्य हविषोऽनुब्रूहि विश्वेभ्यो देवेभ्यश्छागस्य हविः प्रेष्येति · एका-दश प्रयाजा एकादशानुयाजाः प्रेष्य-प्रैषाश्च · बर्हिस्त्रेधा · पुष्पितानां काशानां प्रस्तरः · समिष्टयजूंषि त्रीण्येव · व्यूहने विश्वेषां देवानां वनस्पतेरुज्जितिम् विश्वे देवा वनस्पतिस्तमपनुदन्त्विति पशुदेवतावनस्पतिसंकीर्तनमात्रम् प्रास-ङ्गिकानामावाहनादिषु कीर्तनाभावस्त्वध्यूहनस्याप्यभाव[३] एव · सूक्तवाकान्ते श-म्योर्वाकान्ते वा वाजिनयागः मानवे दर्शनात् · सह शाखया[४] प्रस्तरानुप्रह-रणम् · परिधिभिः सहोपवेषहोमः · हृदयशूलान्ते वपनम् · अन्यत्सर्वं निरू-ढवत् ॥ इति सपशुवैश्वदेवपर्व ॥ ॥ अथ सपशुवरुणप्रघासा उच्यन्ते । तत्र सपशुवरुणप्रघासार्थमित्याहवनीयदक्षिणाग्न्योरुद्धरणम् · अग्न्यन्वाधानम् · अत्र वा व्रतग्रहणम् · ततो ब्रह्मवरणम् सपशुकवरुणप्रघासपर्वणाहं यक्ष्ये तत्र भूपत ऽइति · व्रतग्रहणमत्र वा · तत ऐष्टिकवदध्वर्युप्रतिप्रस्थात्रोर्यथास्वं करम्भपात्रमे-षमेषीकरणम्। ततो यूपाञ्जत्यादि स्वरुनिष्पत्त्यन्तम्[५] · ततः षड्ढोताराज्ञतिः[६] · ततो वेदिमानाद्युत्तरवेदिछादनान्तमध्वर्योः वेदिमानादि संमर्शनान्ते खरे सप्तभू-संस्कारान्तं प्रतिप्रस्थातुः · ततः श्वोभूते उभयोरिध्माधानम् पञ्चगृहीतग्रहणाद्युप-यमन्युपनिवपनान्तमुभयोः · अथवा वेदिमानादि उपयमन्युपनिवपनान्तं सर्वं श्वो भूतऽएव कर्तव्यम् पशोर्वरुणप्रघासानां च विकल्पेन सद्यस्कालवविधानात्। ऐष्टिकवदूहाः हरिस्वामिमते ऊहाभावः । ततः प्रणीताप्रणयनम् · अकृतं

---

१) ? °मजं गां च १· २) ?? सीतिव° १· ३) ? कीर्तनाभाववध्यूह° १· ४) ? शाखाय १· ५) स्वनूनिष्प्यत्यंतं १· ६) a mistake of the author, i. of षड्ढोत्राज्ञतिः'

चेत् व्रतग्रहणम् · मध्यमाहवनीयवर्जमध्वर्योः परिस्तरणम् प्रतिप्रस्थातुः स्वाग्नेः · अध्वर्योः पात्रासादनम् शम्यादृषदुपलम् स्थाली आज्यं च वेदश्च दक्षिणार्थः अग्निः इध्मचतुष्टयम् बर्हिश्चतुष्टयम् स्रुवपञ्चकम् पात्रीजनीसप्तकम् उखापञ्चकम् मन्थनचतुष्टयम् प्राशित्रहरणे षडवत्तम् योक्त्रम् यूनकुशाः कुशास्तीर्णा पीठम् इडापात्री अन्तर्धानकटः पूर्णपात्रम् स्रुचतुष्टयं च · प्रतिप्रस्थातुरपि कृतानुकरत्वादत्र कतिपयपात्राणामासादनम् स्थाली आज्यं च वेदश्च अग्निः इध्म[ा]बर्हिः स्रुवो स्रुक्ः करम्भपात्रहोमार्थं शूर्पम् उपभृद्ध्रुवा च करम्भपात्री च यूनकुशाः पालाशास्त्रयः परिधयः एतावदासादनीयम् । तत उभयोरपि पात्रप्रोक्षणादि · ततः प्रोक्षण्यः संस्कृता एव पात्रप्रोक्षणाम् असंचरनिधानम् । कुक्कुटाहननादि आत्मालम्भान्तमध्वर्योर्निरूढवत् · पात्रसंमार्गान्ते संमार्जनानां रक्षणम् · प्रतिप्रस्थातुर्ध्रुवासादनानन्तरमाज्यस्थालीं स्रुवं करम्भपात्रीं चादाय गार्हपत्यसमीपे गत्वा तस्योत्तरत आज्यस्थालीं करम्भपात्रीं च निधायोपस्तीर्य करम्भपात्राणि तत्रोत्तानानि निधाय प्रत्येकं तूष्णीं प्राणदानं कृत्वा स्ववेदावाज्यस्थालीमासाद्य करम्भपात्राणि चासाद्याज्यस्थाल्याज्यालम्भं कृत्वा तूष्णीं करम्भपात्राणां ततो जौहवदेरालम्भं कृत्वात्मालम्भोदकालम्भं च करोति । ततोऽग्निमादाय यूपावटपरिलेखनाद्यग्निमन्थनान्तम् · अत्र वारुणः पशुः तस्योपाकरणम् · नियोजने वरुणाय जुष्टं नियुनज्मि · प्रोक्षणे वरुणाय त्वा जुष्टम् · प्रोक्षणाद्यग्निसंमार्गप्रैषान्तम् · ततोऽकृतेऽग्निसंमार्गे केन चरसीति प्रश्नादि[ः] पत्न्याः प्रत्यानयनपर्यन्तः करम्भपात्रहोमः · तत उभयत्राग्निसंमार्गादि · होतृवरणानन्तरं पुनराश्राव्य यजमानवरणम् अग्निर्ह दैवीनामिति · दण्डप्रदानम् । एकादश प्रयाजाः प्रेष्य-प्रैषाः · प्रतिप्रस्थाता नवमदशमयोः प्रयाजयोर्नानुजुहोति तस्य पशोरभावेन तयोरप्राप्तेः अष्टावेव प्रयाजानिष्ट्वा तिष्ठति अध्वर्युणा सह स्रुचौ सादयति · उभयोः स्वाहाकृतियागाद्याज्यभागान्तम् अथवा पशोराज्यभागयोर्विकल्पात्प्रतिप्रस्थातुराज्यभागानन्तरं पाणौ स्रुग्धारणविधानाच्च पशुपुरोडाशऽएव यजप्रैषा[वा]ज्यभागौ कर्तव्यौ नेह । अध्वर्योर्वपायागो मार्जनान्तः तत्र वरुणाय छागस्य वपायै मेदसोऽनुब्रूहि

वरुणाय छागस्य वपां मेदः प्रेष्येति विशेषः इदं वरुणाय · वपामार्जनान्ते पशुपुरोडाशो वारुणो ऽष्टाकपालः · तमनु वरुणप्रघासहविषां निर्वापः · तत्र पूर्वमुभयोः शाखाच्छेदादि दैष्टिकवद्वारुणीमारुत्योः पयस्ययोरर्थे वत्सापाकरणादि शाखोपगूहनान्तम् हुतायां वपायां चात्वाले मार्जयित्वा वारुण्ये वत्सानपाकरोतीति मानवे दर्शनात् · ततो यजमान वाचं यच्छेति प्रैषः । ततोऽध्वर्योः पात्रासादनम् शूर्पम् कपालान्येकचत्वारिंशत् सप्तत्रिंशद्वा स्थाल्यस्तिस्रः उलूखलमुसलम् पात्रीधान्यम् शाखोपवेषः संयवनोदकम् दोहनचतुष्टयम् दक्षिणार्थे धेनुः शृतावदानम् मेक्षणम् वाजिनभाण्डम् पञ्च पुरोडाशपात्र्यः शमीपलाशमिश्राणि करीराणि पत्नी कर्मापवर्गा समित् · प्रतिप्रस्थातुः पात्रासादनम् दोहनचतुष्टयम् शृतावदानम् वाजिनभाण्डम् शमीपलाशमिश्राणि करीराणि · ततोऽध्वर्योः पात्रान्तरे प्रोक्षणीरुन्नीय शूर्पाग्निहोत्रहवण्योरादानादि · ग्रहणे पूर्वं पशुपुरोडाशस्य ग्रहणम् वरुणाय जुष्टं गृह्णामीति तत आग्नेयादीनामैष्टिकवत् · पात्रान्तरात्प्रोक्षणीः स्रुचि कृत्वा वरुणाय त्वा जुष्टमिति पशुपुरोडाशं प्रोक्ष्याग्नेयादीनां प्रोक्षणम् ततः पात्राणां प्रोक्षणमुभयोः · ततः कृष्णाजिनादानादि · विभज्यालम्भे सर्वत्रेदं वरुणस्याग्नेरित्येवमग्नेः पूर्वं वरुणपदोच्चारणम् · कपालोपधाने अष्टौ कपालानि वारुणस्य अन्येषामैष्टिकवत् · प्रोक्षणान्ते उभयोरुपसृष्टादिपरिक्षालनान्तौ दोहौ · ततश्चक्षुषे त्वेतोक्षणादि उभयोरात्मालम्भोदकालम्भान्तम् · आस्यान्ते स्थापितैर्वेदाग्रमूलैः शृतावदानमेक्षणवाजिनपात्रद्वयपुरोडाशपात्रीणां संमार्गः। पशावकृतं चेत् इह नियमेनाग्निमन्थनम् · तत एतत्‍ होतृमैत्रावरुणावित्यादि · अत्रोभयोर्जुह्वूपभृतोरादानादि यजप्रैषयोराज्यभागयोर्यागौ · ततः स्रुक्पाणिरास्ते प्रतिप्रस्थाता · ततोऽध्वर्युर्जुह्वामुपस्तीर्य पुरोडाशस्यावद्यन्नाह वरुणाय पुरोडाशस्यानुब्रूहीति · ततः सकृदभिघारः · नोपभृति स्विष्टकृदर्थमवदानम् · अतिक्रम्य वरुणाय पुरोडाशं प्रेष्येति प्रैषः · तत आग्नेयादीनां कायान्तानामैष्टिकवद्यागः प्रतिप्रस्थातुरपि तद्वन्मारुतीयागः · ततोऽध्वर्युरग्नये स्विष्टकृतेऽनुब्रूहीत्युक्त्वा जुह्वामेवोपस्तीर्य पशुपुरोडाशादीनां सर्वहविषामु-

त्तरार्धादवदाय द्विरभिघार्यातिक्रम्योभयोरपि ऐष्टिकवत्स्विष्टकृद्यागः [१] · प्रतिप्रस्था-
ताप्यत्रैष्टिकवत्स्विष्टकृदर्थमवदाय तथैव जुहोति · ततः प्राशित्रादि सर्वमैष्टि-
कवत् वारुणस्य चतुर्धाकरणादि सर्वं भवति · उपहूय मार्जनम् · तत इडा-
भक्षः · भागपरिहारः · ततो दक्षिणादानम् धेनुरसीति विशेषः · वरुणं गच्छेति
प्राणदाने · वरुणाय छागस्य हविषोऽनुब्रूहि वरुणाय छागस्य हविः प्रेष्य ·
व्यूहने वरुणस्य वनस्पतेरुज्जितिम् वरुणो वनस्पतिस्तमपनुदताम् अन्य-
हविर्देवतानामत्र संकीर्तनं न भवति आवाहनादाविव । अध्वर्योरेकादशानुयाजाः
प्रतिप्रस्थातुर्नवैव तस्य नराशंसादूर्ध्वं नवमदशमौ न भवतः अतस्तयोर्हू-
यमानयोस्तत्रैव तिष्ठति किमपि न करोति पुनरेकादशे हुतेऽध्वर्युमनु जुहोति
एवं तस्य नवानुयाजा भवन्ति · धारानुयाज उभयोः । समिष्टयजुरन्ते उरु७ हीति
वाचनाद्यवभृथः समिदाधानान्तः · तत उभयोर्बर्हिर्होमः · ततः शूलावभृथः
समिदाधानान्तः · ततो वपनम् · ततः प्रणीताविमोकाद्याहवनीयोपस्थानान्तम् ·
इह वा शूलावभृथो वपनं च · ततो व्रतविसर्गः · वैष्णव्याहुतिः · ततो भाग-
प्राशनादि कर्मापवर्गान्तम् · शतसंकल्पः · समारोप्य प्रवेशनम् · ततः पौर्णमा-
सम् ॥ इति सपशुवरुणप्रघासाः ॥ ॥ अथ सपशुसाकमेधा उच्यन्ते । तत्र
सपशुसाकमेधपर्वणाहं यक्ष्यऽइति वरणे समारोप्य क्रैडिन्या[द्या]दित्येष्यन्तमै-
ष्टिकवत् । महाहविषि माहेन्द्रः पशुः अष्टाकपालो माहेन्द्रः पशुपुरोडाशः ·
तत्र पाशुकवैश्वदेववत्सर्वम् नियोजने महेन्द्राय जुष्टं नियुनज्मि · महेन्द्राय
छागस्य वपायै॰ महेन्द्राय छागस्य वपां मेदः · पुरोडाशमनु आग्नेयादिविश्वक-
र्मणापर्यन्तानां महाहविर्हविषां निर्वापः · तत्र महेन्द्राय जुष्टम्॰ तत आग्नेयादी-
नि · विभज्यालम्भे इदं महेन्द्रस्याग्नेरित्येवं सर्वत्राग्निपदात्पूर्वं महेन्द्रपदम् ·
महेन्द्राय पुरोडाशस्यानु॰ महेन्द्राय पुरोडाशं प्रेष्य · ऋषभो दक्षिणा तस्य
पशुपुरोडाशपात्रासादनऽआसादनम् इडान्ते दानम् । पशुयागे महेन्द्राय छा-
गस्य हविषोऽनु॰ महेन्द्राय छागस्य हविः प्रेष्य · व्यूहने महेन्द्रस्य वनस्पते-
रुज्जितिम् महेन्द्रो वनस्पतिस्तमपनुदताम् अग्न्यादीनामत्र न कीर्तनम् · कर्मा-

[१]) the construction of this sentence is rather ungrammatical.

पर्वगतं निरूढवत् अत्रापि हृदयशूलान्त एव वपनम् । ततो यथोक्ता पित्र्या । ततस्त्रैयम्बका उदकोपस्पर्शनान्ताः · शतसंकल्पः · समारोप्य प्रवेशनम् · ततः पौर्णमासेष्ट्यादि ॥ इति सपशुसाकमेधाः ॥ ॥ अथ सपशुशुनासीरीयम् । सपशुशुनासीरीयेण पर्वणाहमिति वरणे · दक्षिणाकीर्तनमैष्टिकवत् । अत्र शुनासीराभ्यां पशुः · तत्र शुनासीराभ्यां जुष्टम्॰ शु॰राभ्यां छागस्य वपायै मेदसोऽनु॰ शु॰राभ्यां छागस्य वपां मेदः प्रेष्य · पशुपुरोडाशादिमनु आग्नेयादिसौर्यान्तानां शुनासीरीयहविषां निर्वापः · तत्र पूर्वं शाखाछेदादि वायव्यपयोऽर्थं वत्सापाकरणाद्युपगूहनान्तम् · ततो यजमान वाचं यच्छेति प्रैषः ततः पात्रासादनादि अत्र शुनासीरीयदक्षिणाया आसादनम् · ग्रहणे शु॰राभ्यां जुष्टमिति पशुपुरोडाशग्रहणम् · तत आग्नेयादीनां विभङ्ग्यालम्भे इद७ शु॰रयोरग्नेरित्येवं सर्वत्राग्निपदात्पूर्वं प्रयोज्यम् । प्रधानयागे शु॰राभ्यां पुरोडाशस्यानुब्रूहि शु॰राभ्यां पुरोडाशं प्रेष्य · प्रचारकाल एव वायवे दोहं कृत्वा यागः · यज्ञ-प्रैषो हविषां स्विष्टकृत् पशुपुरोडाशेडान्ते दक्षिणादानमैष्टिकवत् । पशुयागे शु॰राभ्यां छागस्य हविषोऽनुब्रूहि छागस्य हविः प्रेष्य · व्यूहने शु॰रयोर्वनस्पतेरुज्जितिम् शु॰रौ वनस्पतिस्तमपनुदन्त्विति · अत्र हृदयशूलान्ते वपनाभावः यथाप्राप्तस्यैव वपनस्य कालान्तरविधानात् न चात्र प्राप्तिरस्त्यैष्टिके · अन्यत्सर्वं सपशुवैश्वदेववत् ॥ इति सपशुशुनासीरीयम् ॥ अथवा सर्वेषु पर्वसु-पर्वसु पर्वारम्भात्प्रागेव स्वः-स्वः[पशुः] पृथक्तन्त्रः कर्तव्यः तत्रापि पर्वदक्षिणैवेति [सम्प्रदाय]-कारः पशोरपि चातुर्मास्यपर्वशब्देनैवाभिधानात् पशुसमाप्त्यनन्तरं पर्व · अस्मिन्पक्षे साकमेधेषु महाहविषः प्राक् पशुः । अथवा सर्वपर्वणामन्ते पृथक्तन्त्रः स्वः-स्वः पशुर्भवति · अस्मिन्पक्षे महाहविषोऽनन्तरं पित्र्येष्टेः[1] प्राक् पशुः · अत्रापि पर्वदक्षिणैव · अस्य पशोर्हविर्यज्ञविधत्वान्निरूढपशुवत्सर्वम् ॥ ॥ इति पाशुकानि चातुर्मास्यानि ॥ ॥

कठानां पञ्चाहिकानि पठ्यन्ते · तत्र फाल्गुनशुक्लैकादश्यां वैश्वदेवं पर्व · तस्मिन्नेवाहनि वरुणप्रघासार्थमुद्धृत्य करम्भपात्रकरणाद्युत्तरवेदिछादनान्तम् · द्वा-

---

१) ? पित्र्येष्टौ १.

दश्यां वरुणप्रघासाः · त्रयोदश्याम[ा]नीकवत्यादिगृहमेधीयान्तम् · चतुर्दश्यां दर्विहोमादिसाकमेधसमाप्तिः · पौर्णमास्यां शुनासीरीयमिति । एवं पाशुकान्यपि पञ्चाहिकानि भवन्ति · कठानां च प्रतिपद आरभ्य क्रियन्तऽइति पठ्यते । इति पञ्चाहिकानि ॥

अथैकाहिकान्यैष्टिकानि चातुर्मास्यानि लिख्यन्ते । तत्र पञ्चानामृत्विजां वरणम् °गोत्र°शर्मन् प्रथमजगवधेन्वृषभोष्टाराश्वदक्षिणैरैकाहिकैरैष्टिकैश्चातुर्मास्यैरहं यक्ष्यऽइति । अत्र मरुत्वाद्वारुणप्रघासिकं तन्त्रं भवति · अहतवस्त्रपरिधानम् · समारोपः · उदवसानम् · मन्थनम् · गार्हपत्यस्थापनम् · ऐकाहिकैष्टिकचातुर्मास्यार्थमित्युद्धरणम् · अग्न्यन्वाधानं सर्वेषु समन्त्रकम् · समन्त्रकं चातुर्मास्यार्थब्रह्मवरणम् °गोत्र°शर्मन्नैकाहिकैरैष्टिकैश्चातुर्मास्यैरहं यक्ष्यऽइति · ततोऽध्वर्युप्रतिप्रस्थात्रोर्यथास्वं करम्भपात्रमेषमेषीकरणम् · तत इध्मस्थाने शकलपरिधिनिधानम् । उभयोः शाखाछेदादि पवित्रबन्धनान्तम् उपवेषकरणमध्वर्योरेव · ततोऽध्वर्योर्वैश्वदेवपयस्यार्थं वत्सापाकरणम् विश्वेभ्यो देवेभ्यो भागम् ततो वारुणपयस्यार्थम् वरुणाय भागम् ततः प्रतिप्रस्थातुर्मारुत्यर्थम् मरुद्भ्यो भागमिति · ततोऽध्वर्योर्गृहमेधिचरुश्रपणार्थदुग्धार्थं त्रयाणां वत्सानां यावत्स्वं[1] वा तूष्णीमपाकरणम् · ततो वायव्यपयोऽर्थं वत्सापाकरणम् वायवे भागमिति · उभयोः शाखोपगूहनम् । ततो व्रतग्रहणमत्र वा · ततः षट्कासादनादि · उभयोरुपयमन्युपनिवपनान्तम् · अहःपक्षे पूर्वेद्युरुत्तरवेदिछादनान्तं कृत्वा प्रातरग्निप्रणयनादि कर्तव्यम् · अकृतं चेत् अत्र व्रतग्रहणं कृत्वा प्रणीताप्रणयनम् · मध्यमवर्जमध्वर्योः परिस्तरणम् प्रतिप्रस्थातुः स्वाग्नेः । अध्वर्योः पात्रासादनम् कपालानि सप्ततिः षट्षष्टिर्वा चरुस्थाल्यः सप्त शम्याकृष्णाजिनम् उलूखलमुसलम् दृषदुपलम् पात्रीधान्यम् शाखोपवेषः संयवनोदकं बहु स्थाली आज्यं च वेदश्च दोहनचतुष्टयम् तत्र तिस्रः स्थाल्यः दक्षिणार्थे प्रथमजगवधेन्वृषभोष्टाराश्वाः अभ्रिः विंशतिरिध्मकाष्ठानि कुशप्रसूप्रस्तरोपसंनद्धं[2] त्रेधा बर्हिः स्रुवो जुहूः उपभृत्पृषदाज्योपभृच्च ध्रुवा प्राशित्रहरणे शृतावदानमेक्षणे वा-

[1] ? यावत्सवं १: or are we to read यावद्वत्सं ? [2] कुशप्रस्वप्र° १.

जिनपात्रद्वयम् एकादश पुरोडाशपात्र्यः पोक्तम् यूनकुशाश्च परिधयः पृष-दाज्यार्थं दधि पयस्यार्थं च शमीपलाशमिश्राणि करीराणि मन्थनचतुष्टयम् पीठं कुशास्तीर्णम् इडापात्री षडवत्तं च अन्तर्धानकटः पूर्णपात्रम् पक्षे कर्मापवर्गा समित् वपनपक्षाङ्गीकारे नुरचतुष्टयम् · प्रतिप्रस्थातुः पात्रासादनम् स्थाली आज्यं च वेदश्च दोहनचतुष्टयम् अग्निः इध्मो विंशतिकाष्ठकः · प्राकृतं बर्हिः स्रुवो जुहूः शूर्पमुपभृद्ध्रुवा शृतावदानम् करम्भपात्री वाजि-नपात्रम् यूनकुशाः परिधयः शमीपत्राणि[1] करीराणि । ततोऽध्वर्युर्गार्हप-त्यस्य पश्चात्प्रागग्रां धान्यपात्रीं निधायाधस्तात्स्फ्यस्य प्रेरणम् · पात्रान्तरे प्रोक्ष-णीरुन्नीय शूर्पाग्निहोत्रहवण्योदानादि ग्रहणं सादनान्तम् · नानावीजपक्षे तद्धर्मा वैश्वदेवपर्वण्युक्ताः · ग्रहणे विशेषः अग्नये जुष्टम् पुरो° सोमाय जुष्टम् चरुः सवित्रे जुष्टम् पुरो° सरस्वत्यै जुष्टम् चरुः पूष्णे जुष्टम् पौष्णश्चरुः मरुद्भ्यः स्वतवोभ्यो जुष्टम् पुरो° द्यावापृथिवीभ्यां जुष्टम् पुरो° इन्द्राग्निभ्यां जुष्टम् पुरो° काय जुष्टम् पुरो° अग्नयेऽनीकवते जुष्टम् पुरो° मरुद्भ्यः सांतपने-भ्यो जुष्टम् चरुः मरुद्भ्यो गृहमेधिभ्यो जुष्टम् चरुः मरुद्भ्यः क्रीडिभ्यो जुष्टम् पुरो° अदित्यै जुष्टम् चरुः महेन्द्राय जुष्टम् चरु विश्वकर्मणे जुष्टम् पुरो° शुनासीराभ्यां जुष्टम् पुरो° वायोर्यवागूपक्षे वायवे जुष्टम् सूर्याय जुष्टम् पुरो° · अत्र एकादश पुरोडाशाः सप्त चरवः द्वे पयस्ये एकं पयो यवागूर्वा एवमे-कविंशतिर्हवींषि अध्वर्योर्भवन्ति प्रतिप्रस्थातुश्च मारुती पयस्या एकं हविर्भव-तीति · प्रोक्षणे त्वा जुष्टमिति ग्रहणमन्त्रेभ्यो विशेषः । एकवीजपक्षे कणान्ते विभज्यालम्भः इदमग्नेः सवितुः पूष्णो मरुता७ स्वतवसां द्यावापृथिव्योरिन्द्रा-ग्न्योः कस्याग्नेरनीकवतो मरुतां क्रीडिनां विश्वकर्मणः शुनासीरयोः सूर्यस्य च इद७ सोमस्य सरस्वत्या मरुता७ सांतपनानां मरुतां गृहमेधिनामदित्या महेन्द्रस्य च यवागूपक्षे वायोश्चेत्यधिकं पदम् । क्रमेण कपालोपधानम् अन्तरान्तरा चरु-स्थानकरणं च · एककपालेषु तप्यस्वेत्यभ्यूहनमन्त्रः · प्रोहणान्ते चाध्वर्युर्वैश्वदे-वपयस्यार्थे दोहः ततो वारुणपयस्यार्थे द्वितीयः ततः प्रतिप्रस्थातुर्मारुत्यर्थं

[1] °पात्राणि १·

दोहः । ईक्षणं तण्डुलानां पिष्टानां च · तद्वत्ते पूष्णः पिष्टं पृथक्कृत्यालम्भः तत्र पूषपदवर्जं पूर्ववन्निर्देशः इदं पूषपिष्टानाम् · ततश्चरूणां तण्डुलान्विभज्यालम्भः इद७ सोमस्य इद७ सरस्वत्याः इदं मरुता७ सांतपनानाम् इदं मरुतां गृहमेधिनाम् इदमदित्याः इदं महेन्द्रस्य यवागूपक्षे इदं वायोरिति च · ततः पात्र्यां पिष्टानां संवापः चरूणां स्थालीषु क्रमेणावापः त्रिः प्रक्षालनम् · सांतपनसंवापानन्तरं गृहमेधिचरुस्थाल्यां शाखापवित्रं निधाय तत्रैव तिस्रो गा दोहयित्वा गृहमेधितण्डुलानुदकेन त्रिः प्रक्षाल्य दुग्धमध्ये संवपति पवित्रवति संदोह्य तं चरु७ श्रपयति चरुर्ह्येव स यत्र क्व च तण्डुलानावपन्तीति (२.५.३.४) श्रुतेः · ततः प्राकृतम् । पुरोडाशानां विभज्यालम्भः इदमग्नेः इद७ सवितुः इदं मरुता७ स्वतवसाम् अथवा मरुताम् इदं द्यावापृथिव्योः इदमिन्द्राग्न्योः इदं कस्य इदमग्नेरनीकवतः इदं मरुतां क्रीडिनाम् इदं विश्वकर्मणः इद७ शुनासीरयोः इद७ सूर्यस्य · ततो यथाक्रममधिश्रयणम् · गृहमेधिचरोरपि घर्मोऽसीत्यधिश्रयणं पर्यग्निकरणं च भवति पयसः श्रपणार्थत्वात् · अग्नीधः क्रमेणाज्यद्वयाधिश्रयणम् · पयोवर्जं पर्यग्निकरणमध्वर्योः · प्रतिप्रस्थातुः स्वाज्यस्य श्रपणम् · तप्तेषु पयःसु दधिप्रक्षेपो यथास्वम् · शृतालम्भः अभिवासनम् · अध्वर्योर्मेषसम्बन्धिपात्र्यङ्गुलिप्रक्षालनऽउदकेन सह्वाप्योदकदानम् करम्भमेषीपात्र्यङ्गुलिप्रक्षालनं प्रतिप्रस्थाताध्वर्युमनु निनयति । ततः खननाद्युभयोः · पात्रसंमार्गेणाध्वर्युपात्राणां पूर्वं संमार्गस्तत इतरस्य स्रुचौ जुह्वौ शूर्पम् उभभृतौ पृषदाज्योपभृत् ध्रुवे प्राशित्रहरणे शृतावदानमेक्षणे प्रतिप्रस्थातुः शृतावदानम् वाजिनपात्राणि करम्भपात्रीपुरोडाशपात्र्यश्चेति · संमार्जनापासनम् · पत्नीसंनहनादि वरुणप्रघासवत्सर्वम् । प्राणदाने विशेषः पूर्वं प्रतिप्रस्थातुः करम्भपात्राणां प्राणदानम् ततोऽध्वर्योराग्नेयादीनाम् अग्निं गच्छ सोमं गच्छ सवितारं॰ सरस्वतीं॰ पूषणं॰ मरुतः स्वतवसो॰ विश्वान्देवान्गच्छ द्यावापृथिव्यौ॰ इन्द्राग्नी॰ वरुणं गच्छेति मेषे मरुतो गच्छेति प्रतिप्रस्थाता मारुतीमक्त्वा मेषीमनक्ति मरुतो गच्छेति कं गच्छ अग्निमनीकवन्तं॰ मरुतः सांतपनान्गच्छ मरुतो गृहमेधिनो॰ मरुतः क्रीडिनो॰ अदितिं॰ महेन्द्रं॰ विश्वकर्माणं॰ शुनासीरौ॰ यवागूपक्षे वायुं गच्छ वाजिनो गच्छेति द्वयोः पृथक-

पृथक् प्रतिप्रस्थातुरपि वाजिनो गच्छेति। कपालाञ्जनम् उद्वासनम् आज्यस्थाली-
पूर्वकमासादनादि · प्रतिप्रस्थातुराज्यस्थाल्यनन्तरं स्ववेदौ करम्भपात्र्यासादनम् ·
अध्वर्युः सांतपनीयचरुमासाद्य गृहमेधिचरुं गार्हपत्यसमीपात्स्वयमेवानीय तूष्णीं
वेदिमभिमृश्याहवनीये शकलान्याधाय चरुमासादयति · ततः क्रैडिन्याद्यासादनादि
आत्मालम्भोदकालम्भान्तम् [१] । ततोऽग्निमन्थनम् · होतृषदनस्थापनादिसंमार्ग-
प्रैषान्ते करम्भपात्रहोमः · ततः संमार्गाद्याज्यभागान्तमुभयोः · मरुतां गृहमेधि-
नामत्रावाहनोत्तमप्रयाजस्विष्टकृन्निगदेषु कीर्तनाभावः सूक्तवाकव्यूहनयोस्तु
भवति · ततः प्रतिप्रस्थाता स्रुचौ हस्ते गृहीत्वोपविशति · अध्वर्योराग्नेयादिह-
विःप्रचारः · तत्र प्रैषाः अग्नयेऽनुब्रूहि अग्निं यज सोमायानु° सोमं यज
सवित्रेऽनु° सवितारं यज पूष्णेऽनु° पूषणं यज मरुद्भ्यः स्वतवद्भ्यो [२]ऽनु°
मरुतः स्वतवसो यज विश्वेभ्यो देवेभ्योऽनु° विश्वान्देवान्यज द्यावापृथिवी-
भ्यामनु° द्यावापृथिव्यौ यज इन्द्राग्निभ्यामनु° इन्द्राग्नी यज मेषमेष्योर्विपर्यासः
वरुणायानु° वरुणं यज मरुद्भ्योऽनु° मरुतो यज काय अनु° कं यज अग्नये
ऽनीकवतेऽनु° अग्निमनीकवन्तं यज मरुद्भ्यः सांतपनेभ्योऽनु° मरुतः सांतपनान्यज
मरुद्भ्यो गृहमेधिभ्योऽनु° मरुतो गृहमेधिनो यज गृहमेधियागे स्थाल्या एवोप-
स्ताराभिघारौ न ध्रुवायाः मरुद्भ्यः क्रीडिभ्योऽनु° मरुतः क्रीडिनो यज अदित्या
ऽअनु° अदितिं यज महेन्द्रायानु° महेन्द्रं यज विश्वकर्मणोऽनु° विश्वकर्माणं
यज शुनासीराभ्यामनु° शुनासीरौ यज पयःपक्षे इदानीमेव दोहः प्राणादा-
नासादनालम्भाः वायवे अनु° वायुं यज सूर्याय अनु° सूर्यं यज। तत उभयोः
स्विष्टकृदादि सर्वं वरुणप्रघासवद्भागपरिहारान्तम् · गृहमेधिचरोर्न प्राशित्राव-
दानम् · वारुणीपयस्यावदानानन्तरं प्रतिप्रस्थात्रे इडासमर्पणम् मारुतीपयस्या-
वदानानन्तरमनीकवदादीनामिडान्तमवदानम् [३] · इडामुपहूय पूर्वं मार्जनम् ततो
भक्षणम्। दक्षिणालम्भे प्रथमजगवधेन्वृषभोष्टाराश्वमसीति विशेषः अमीषा-
मेकाहिकानामैष्टिकानां चातुर्मास्यानां समृद्ध्यर्थं प्रथमजं गां धेनुमृषभमोष्टारौ अश्वं
च दक्षिणां ब्रह्मणे इत्यादि ब्राह्मणा इदं वः प्रथमजगवधेन्वृषभोष्टाराश्वं

१) ? °लंभांते १. २) sic! thus १. ३) ? °मोडायाम° १.

प्रतिगृह्णीतेति । उदगुद्वासनं हविःशेषाणाम् गृहमेधिचरुशेषप्राशनं यथोक्तम्
वारुणीपयस्याशेषस्यावभृथार्थं सुगुप्ते देशे स्थापनम् · ततो गृहमेधिचरुशेषाद्दर्वि-
होमो यथोक्तः । ततोऽपराह्णे यथोक्ता पित्र्या · तत्र ब्रह्मवरणव्रतग्रहणयोरभाव
इति विशेषः । ततस्त्रैयम्बका यथोक्ता उदकोपस्पर्शनान्ताः । तत उल्मुकसमासा-
द्युभयोः कर्मापवर्गान्तं वरुणप्रघासवत् · व्यूहने अग्नेः सोमस्य सवितुः सरस्वत्याः
पूष्णो मरुताᳯं स्वतवसां विश्वेषां देवानां द्यावापृथिव्योरिन्द्राग्न्योर्वरुणस्य कस्या-
ग्नेरनीकवतो मरुताᳯं सांतपनानां मरुतां गृहमेधिनां मरुतां क्रीडिनामदित्या
महेन्द्रस्य विश्वकर्मणः शुनासीरयोर्वायोः सूर्यस्योज्जितिम् अग्निः सोमः सविता
सरस्वती पूषा मरुतः स्वतवसो विश्वे देवा द्यावापृथिव्यौ इन्द्राग्नी वरुणः को
ऽग्निरनीकवान्मरुतः सांतपना मरुतो गृहमेधिनो मरुतः क्रीडिनोऽदितिर्महेन्द्रो
विश्वकर्मा शुनासीरौ वायुः सूर्यस्तमपनुदन्त्विति · अत्रोपांशुदेवतानामुपांशूच्चार-
णमन्येषामुच्चैः · मरुतामुज्जितिम् मरुतस्तमपनुदन्त्विति प्रतिप्रस्थातुर्व्यूहनम् ।
सूक्तवाकान्ते वा वाजिनयागः · समिष्टयजुरन्तेऽवभृथः · ततः प्रत्येत्य समिदा-
धानम् · ततो बर्हिर्होमादि नमः कृतायेत्यन्तं वरुणप्रघासवत्समापनीयम् · अन्ते
चत्वारि शतानि ब्राह्मणान्भोजयेत् ॥ इत्यैष्टिकान्यैकाहिकानि चातुर्मा-
स्यानि ॥ ॥ अथ पाशुकान्यैकाहिकानि चातुर्मास्यानि लिख्यन्ते । तत्र समा-
रोपादि कर्मापवर्गान्तं पाशुकवरुणप्रघासवत् · विशेषः प्रथमजगवधेन्वृषभो-
ष्टाराश्वदक्षिणैः सपशुभिरैकाहिकैश्चातुर्मास्यैरहं यक्ष्य इति वरणे · ब्रह्महोत्रध-
र्युमैत्रावरुणप्रतिप्रस्थात्राग्नीध्राणां वरणम् · अहतवासःपरिधानम् · समारोपः ·
उदवसानम् · मन्थनम् · सपश्वैकाहिकचातुर्मास्यार्थमित्युद्धरणम् · सर्वेषु समन्त्र-
कमग्न्यन्वाधानम् ब्रह्मवरणम् व्रतग्रहणम् करम्भपात्रमेषमेषीकरणं यथोक्तम् ।
यूपाहृत्यादि षड्ढोताराहुत्यन्तम् · वेदिमानाद्युभयोः · संमर्शनान्ते चावालमानाद्यु-
भयोरुपयमन्युपनिवपनान्तम् । सद्यो द्व्यहं वा पशुर्भवति · तत्र द्व्यहपक्षे उत्तर-
वेदिछादनान्तं पूर्वेद्युः प्रातरग्निप्रणयनाद्युपयमन्युपनिवपनान्तम् · ततः प्रणीता-
प्रणयनादि · प्रागकृतं चेत् अत्र व्रतग्रहणम् । अध्वर्योः प्रतिप्रस्थातुश्च पाशुक-
वरुणप्रघासवत्पात्रासादनादि वपामार्जनान्तम् · विशेषः ऐन्द्राग्नः पशुः · तत्रेन्द्रा-

ग्निभ्यां जुष्टमित्यादि निरूढवत्प्रयोगः · संमार्गप्रैषानन्तरं करम्भपात्रहोमः । वपामार्जनान्ते पशुपुरोडाशः ऐन्द्राग्नो द्वादशकपालः तमनु सर्वेषां चातुर्मास्यहविषां निर्वापः · तत्र पूर्वमिध्मस्थाने शकलपरिधिनिधानम् · उभयोः शाखाच्छेदनादि ऐष्टिकवद्वत्सापाकरणं शाखोपगूहनान्तम् · ततो यजमान वाचं यच्छेति प्रैषः । ततः पात्राणा[मा]सादनम् शूर्पम् अशीतिरष्टासप्ततिर्वा कपालानि स्थाल्यः सप्त उलूखलमुसलम् पात्रीधान्यम् शाखोपवेषः संयवनोदकम्[1] दोहनचतुष्टयम् तत्र स्थाल्यस्तिस्रः शृतावदानमेक्षणे वाजिनभाण्डद्वयम् द्वादश पुरोडाशपात्र्यः शमीपत्नकरीराणि कर्मापवर्गा[2] चेति · प्रतिप्रस्थातुः पात्रासादनम् दोहनचतुष्टयम् शृतावदानम् वाजिनभाण्डम् शमीपत्नकरीराणि । ततो हविर्ग्रहणादि · इन्द्राग्निभ्यां जुष्टमिति पुरोडाशग्रहणम् ततं आग्नेयादिसौर्यान्तानाम् · आप्यान्ते वाजिनपात्रपुरोडाशपात्रीशृतावदानमेक्षणासंमार्गः संमार्जनापासनम् · विभस्मीकरणाद्यालम्भनान्तम् । पशावकृतं चेत् इह नियोगतो मन्थनम् · एतद होतृमैत्रावरुणाविति प्रैषः · स्रुचावादायोभयोर्यजप्रैषावाज्यभागौ · ततः प्रतिप्रस्थाता स्रुक्पाणिरास्ते · अध्वर्योः पूर्वं पशुपुरोडाशयागः तत आग्नेयादिभिः सौर्यान्तैः · ततो यज-प्रैषः सगुणः स्विष्टकृद्यागः · प्राशित्रादि भागपरिहरणान्तम् । ऐष्टिकवद्दक्षिणादानम् प्रथमजगवधेन्वृषभोष्टाराश्वमसीति सपश्वैकाहिकानां चातुर्मास्यानां समृद्ध्यर्थमिति च शाङ्खायनमते पशुदक्षिणापि भवति · ततो दर्विहोमः · ततः पशुविशसनादि त्रिः प्रच्यावयतादित्यन्तम् · ततः पित्र्या · ततस्त्र्यम्बका उदकोपस्पर्शनान्ताः · ततो जुह्वा पृषदाज्यमादायोपनिष्क्रम्य पृच्छतीत्यादि[3] धारानुयाजान्तम् · व्यूहने इन्द्राग्न्योर्वनस्पतेरुज्जितिम् इन्द्राग्नी वनस्पतिस्तमपनुदन्त्विति आग्नेयादीनामावाहनादिष्विव व्यूहनेऽपि संकीर्तनाभावः · सह शाखया प्रस्तरानुप्रहरणम् · परिधिभिः सहोपवेषहोमः · हृदयशूलावभृथसमिदाधानान्ते वपनम् · पाशुकवरुणप्रघासवत्सर्वं कर्मापवर्गान्तम् · चत्वारि शतानि ब्राह्मणा भोज्याः ॥ इत्यैकाहिकानि पाशुकानि चातुर्मास्यानि ॥ ॥

सांवत्सरिकचातुर्मास्यकरणाशक्तौ सत्यां यदा सर्वाणि पर्वाण्युत्कृष्य शुनासीरी-

---

[1] ? संवपनो॰ R. [2] i. e. समित्. [3] see ६. ८. ३.

यकाले फाल्गुन्यां चैत्र्यां वा वसन्ते वा तदा पौर्णमास्यां कार्याणि · यदा चापकृष्य तेषां[१] सर्वाणि क्रियन्ते तदापि प्र[ति]पद्येव कार्याणीति ज्ञेयम् ॥ ॥११॥

इति पञ्चमस्यैकादशी कण्डिका ॥ ॥

चातुर्मास्यानन्तरं श्रुतिमन्त्रपाठक्रमानुसारेण ज्योतिष्टोमोऽनुविधेयः। तं प्रोत्सार्य हविर्यज्ञत्वसामान्यान्मित्रविन्दोच्यते ·

मित्रविन्दा श्रीराष्ट्रमित्रायुष्कामस्य दशहविः ॥१॥

आग्नेयः ॥२॥ अष्टाकपालः पुरोडाशः प्रथमं हविर्भवति।

सौम्यश्चरुः ॥३॥ वारुणो दशकपालः ॥४॥

चरुर्वायावः ॥५॥ वारुणश्चरुर्वा तृतीयं हविः · यावस्य सिद्धत्वादत्रायाव इति व्याख्येयम् अन्यथा वैयर्थ्यापत्तेः।

मैत्रश्चरुः ॥६॥ ऐन्द्र एकादशकपालः ॥७॥

बार्हस्पत्यश्चरुः ॥८॥ सावित्रो द्वादशकपालोऽष्टाकपालो वा ॥९॥

पौष्णश्चरुः ॥१०॥ त्वाष्ट्रो दशकपालः ॥११॥

एकं प्रदानम् ॥१२॥ दशानामपि प्रदानं तन्त्रेण · दशदेवतालिङ्गकयोर्याज्यानुवाक्ययोरेवाम्नानात्[२]।

समस्यानुवाचनम् ॥१३॥ देवताः समस्य क्रमेण चतुर्थ्यन्तानि सर्वासां देवतानां पदान्युच्चार्यानुब्रूहीति वक्तव्यम्।

यजेति च ॥१४॥ द्वितीयान्तानाम् · समासश्चाविभक्तिलोपेनैव · उपांशु काम्यत्वात् (४. ५. १)।

प्रैषाश्च ॥१५॥ देवताः समस्य भवन्ति[३] · अध्वर्युणा प्रेषितो होता ये यजामहऽइत्याह · तस्माद्ये-यजामहऽइत्यस्यानन्तरं यानि देवतासंकीर्तनानि तानि प्रैषसम्बन्धात्प्रैषा इत्युच्यन्ते · ये-यजामहेऽग्निं सोमं वरुणं मित्रमिन्द्रं बृहस्पतिं सवितारं पूषणं सरस्वतीं त्वष्टारम् त्वष्टा रूपाणि ददतीत्यादि · हौत्रस्याप्यत्रे-

---

१) ? There is a hole in the Mspt. at the place of षां : the remaining dots resemble more to वा · २) ? °त्वा° २. ३) See schol. and the paddh. at १३. ३.

वोक्तत्वादिदमुक्तम्। यागादुत्तराणि स्विष्टकृदादिषु यानि देवतासंकीर्तनानि तानि चिन्त्यन्ते किं यागक्रमेण कर्तव्यान्युत चोदनाक्रमेणेति · किं तावत्प्राप्तम् · तत्र सूत्रेणैव पूर्वपक्षं परिगृह्णाति ·

उत्तरे निगमा यथेष्टं जोषणाश्रुतेः ॥ १६ ॥ उत्तरे निगमाः स्विष्टकृन्निगदसूक्तवाकादिषु ये निगमाः यानि देवतासंकीर्तनानि यथेष्टम् इष्टक्रमेण याज्योक्तविपरीतक्रमेणान्तिमादारभ्य[1] भवन्ति प्रकृतौ च य एव चोदनाक्रमः इह च प्रातिलोम्येन देवता इज्यन्ते · कुतः जोषणाश्रुतेः एवं या इष्टा देवता भवन्ति ताः सम्पश्यत्यसौ हविरजुषतासौ हविरजुषतेति जोषणाश्रुतेः (१. ३. १. १०) · अत्र वाक्ये यागक्रमेण देवतासंकीर्तनमवगम्यते किमनेन क्रमेणेता देवता इष्टा न वेति प्रत्यवेक्षणं क्रियते अतो यागक्रमेण प्रातिलोम्येनोत्तरे निगमा भवन्तीति प्राप्तऽश्राह ·

अनुलोमा वा चोदनागुणत्वात् ॥ १७ ॥ वा पक्षव्यावृत्तौ · अनुलोमा एव उत्तरे निगमा भवन्ति चोदनाक्रमेणैव · कुतः चोदनागुणत्वात् य एव चोदनाक्रमः[2] स एव सर्वत्र गुणभावं प्राप्नोति · यतो नैवाक्रमेण बहवो यागाः क्रियन्ते तस्मात्प्रकाशयितव्यस्य यागक्रमस्याभावे चोदनाक्रमेणैव देवतासंकीर्तनमिति · अपि च नैवात्र क्रमः प्रकाश्यते किं तर्हि याश्चोदिता देवतास्ता[3] इष्टा नेष्टा वा इति प्रत्यवेक्ष्यन्ते। अस्या इष्टेर्हौत्रमपि अत्रैव श्रुतम् अतः सूत्रकारोऽप्यत्रैव तदुपनिबध्नाति ·

पञ्चदश सामिधेन्यः ॥ १८ ॥ अस्यामिष्टौ · प्र वो वाजा इत्याद्या ऋचः[4]।

पुष्टिमन्तावाज्यभागावग्निना रयिमश्नवत्पोषमेव दिवे-दिवे यशसं वीरवत्तमम् गयस्फानो अमीवहा वसुवित्पुष्टिवर्धनः सुमित्रः सोम नो भवेति ॥ १९ ॥ इमौ श्रुतिपठितौ (११. ४. ३. १३) पुष्टिमन्तावाज्यभागौ अत्र भवतः[5]। आज्यभागयोः क्रमेणेति पुरोऽनुवाक्ये ·

हविषोऽनुवाक्याभिः सोमो वरुणो मित्र इन्द्रो बृहस्पतिः सविता यः

---

1) See ११. ४. ३. ७.　2) नोदनागुणत्वात् य एव नोद॰ Ss.　3) ? या श्रोदिता देवस्ता २.　4) See १. ४. १. ७. Çânkh. १. ४. ७.　5) See Riksamh. १. १. ३. and १. ९१. १२.

सहस्री पूषा नो गोभिरवसा सरस्वती त्वष्टा रूपाणि समनक्तु यज्ञैरिति ॥२०॥
इयं प्रधानयागानां सह क्रियमाणानां पुरोऽनुवाक्या भवति ।

याज्या त्वष्टा रूपाणि ददती[१] सरवती पूषा भगꣳ सविता मे ददातु बृहस्पतिर्ददिन्द्रो बलं मे मित्रः क्षत्रं वरुणः सोमोऽग्निरिति ॥२१॥ तेषामेव यागानां तन्त्रेण क्रियमाणानामियं याज्या भवति · इदमग्नये ॰त्वष्ट्रे चेति त्यागः ॥

॥ द्वादशी कण्डिका ॥ ॥

अथ पद्धतिः ॥

अथ मित्रविन्दा इष्टिरुच्यते · सा च श्रीकामराष्ट्रकाममित्रकामायुष्कामाणां भवति । तत्र दश हवींषि भवन्ति आग्नेयोऽष्टाकपालः सौम्यश्चरुः वारुणो दशकपालः यवमयश्चरुर्वा[२] अथवा व्रीहिमयश्चरुः मैत्रश्चरुः ऐन्द्र एकादशकपालः बार्हस्पत्यश्चरुः सावित्रो द्वादशकपालोऽष्टाकपालो वा पौष्णश्चरुः सारस्वतश्चरुः त्वाष्ट्रो दशकपाल इत्येतानि दश हवींषि उपांशु भवन्ति । तत्र उद्धरणे मित्रविन्दार्थमिति · मित्रविन्दयाहं यक्ष्यऽइति वरणे · पात्रासादने शूर्पाग्निहोत्रहवणी · स्फ्यः कपालान्येकपञ्चाशत्सप्तचत्वारिंशद्वा[३] वारुणचरुपक्षे दशभिरूनानि चरुस्थाल्यः पञ्च षड्वा शम्याकृष्णाजिनमित्यादि दक्षिणा दश गावः सहस्रं वा अष्टादशेध्मकाष्ठानि शृतावदानानन्तरं मेक्षणम् पात्र्यः पञ्च चतस्रो वा शेषं प्रकृतिवत् · नानावीजधर्मा उक्ताः · ग्रहणे अग्नये जुष्टम्॰ सोमाय॰ वरुणाय॰ मित्राय॰ इन्द्राय॰ बृहस्पतये॰ सवित्रे॰ पूष्णे॰ सरस्वत्यै॰ त्वष्ट्रे जुष्टमिति · प्रोक्षणे वा जुष्टमिति · एकवीजपक्षे कणान्ते विभज्यालम्भः इदमग्नेर्वरुणस्येन्द्रस्य सवितुः पूष्णस्त्वष्टुश्च इदꣳ सोमस्य मित्रस्य बृहस्पतेः सरस्वत्याश्च · यथोक्तमग्नीधः कपालोपधानम् दशकपाले चत्वार्युपधाय षट् समं विभज्य त्रीणि दक्षिणतस्त्रीणि चोत्तरत इति · पिष्टानां तण्डुलानां चेक्षणम् · ईक्षणान्ते पूष्णो विभागः इदमग्नेर्वरुणस्येन्द्रस्य सवितुस्त्वष्टुश्च इदं पूष्णः · चरूणां तण्डुलान्विभज्यालम्भः इदꣳ सोमस्य इदं बृहस्पतेः इदꣳ सरस्वत्याः ·

---

[१] Thus the çruti (११. ४. ३. ७) · ददाति १. २. [२] This is in contradiction with the scholion at १२. ५. [३] स्फ्यकपा॰ त्सप्तत्रिंशद्वा १.

वारुणचरुपक्षे तस्यापि चरुमध्ये कीर्तनम् · पुनः संयवनान्ते पुरोडाशानां प्राणादानम् अग्निं गछ सोमं गछ वरुणं° मित्रं°. इन्द्रं° बृहस्पतिं° सवितारं° पूषणं° सरस्वतीं° त्वष्टारं° · पञ्चदशेन वज्रेणेत्यवबाधनम् · उत्तमप्रयाजे इदमग्नये सोमाय वरुणाय मित्रायेन्द्राय बृहस्पतये सवित्रे पूष्णे सरस्वत्यै त्वष्ट्रे देवेभ्य इत्यादि · तत आज्यभागौ · प्रधानयागे अग्नये सोमाय वरुणाय मित्रायेन्द्राय बृहस्पतये सवित्रे पूष्णे सरस्वत्यै त्वष्ट्रे उपांशु अनुब्रूहीति प्रथमस्वरेण · ततो जुह्वामुपस्तारः · क्रमेण सर्वेषां मध्यात्पूर्वार्धाच्चावदानम् अभिघारः प्रत्यभिघारः अतिक्रम्याश्राव्याग्निं सोमं वरुणं मित्रमिन्द्रं बृहस्पतिं सवितारं पूषणं सरस्वतीं त्वष्टारम् उपांशु यजेति प्रथमेन ॥ ॥१२॥

इति पञ्चमस्य द्वादशी कण्डिका ॥ ॥

हुत्वा स्थाल्याः स्रुवेणोपजुहोत्यग्निरन्नादोऽन्नपतिरन्नाद्यमस्मिन्यज्ञे मयि दधातु स्वाहा सोमो राजा राजपती राज्यमस्मिन्यज्ञे मयि दधातु स्वाहा वरुणः सम्राट् सम्राट्पतिः साम्राज्यमस्मि° °स्वाहा मित्रः क्षत्रं क्षत्रपतिः क्षत्रमस्मि° °स्वाहेन्द्रो बलं बलपतिर्बलमस्मि° °स्वाहा बृहस्पतिर्ब्रह्म ब्रह्मपतिर्ब्रह्मवर्चसमस्मि° °स्वाहा सविता राष्ट्रं राष्ट्रपती राष्ट्रमस्मि° °स्वाहा पूषा भगं भगपतिर्भगमस्मि° °स्वाहा सरस्वती पुष्टिं पुष्टिपतिः पुष्टिमस्मि° °स्वाहा त्वष्टा रूपाणां रूपकृद्रूपपती रूपेण पशूनस्मिन्यज्ञे मयि दधातु स्वाहेति ॥१॥
प्रधानावदानानि हुत्वा प्राक्स्विष्टकृतः स्थाल्याः सकाशात्स्रुवेणोपजुहोति[1]. दशभिर्मन्त्रैः प्रतिमन्त्रम् · स्थालीग्रहणमुपहोमार्थं पूर्णाहुतिवदाज्यसंस्कारनिवृत्त्यर्थम् ।

विराजौ संयाज्ये ॥२॥ संयाज्ये स्विष्टकृतो याज्यानुवाक्ये · अस्यामिष्टौ विराजौ प्रेद्धोऽअग्ने दीदिहि (१७.१६) इमोऽअग्ने वीततमानीतीमे संयाज्ये भवतः[2] प्रेद्धोऽअग्नऽइति (ऋक्सं° ७. १. ३) पुरोऽनुवाक्या इमोऽअग्न इति (ऋक्सं° ७. १. १८) याज्या ।

---

1) स्रुवेणेति ग्रहणं निवृत्त्यर्थम् Ss. 2) See १. ६. ५. १२.

सहस्रवत्यौ वा नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वसु द्युमदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितम् उत नो ब्रह्मन्नविष उक्थेषु देवहूतमः शं नः शोचा मरुद्‌वृधोऽग्ने सहस्रसातम इति ॥३॥ नू नो रास्वऽदिति (ऋक्सं॰ ३. १३. ७) पुरोऽनुवाक्या उत नो ब्रह्मन्निति (ऋक्सं॰ ३. १३. ६) याज्या ॥ यागस्य तन्त्रेण क्रियमाणत्वादावाहनऽउत्तमप्रयागे स्विष्टकृन्निगदे सूक्तवाके च तन्त्रेणैव देवतापदानामुच्चारणं युक्तम् · तद्यथा अग्निँ सोमं॰ त्वष्टारम् उपांशु आऽवहेत्युच्चैः · [इत्यादि] ।

दश दक्षिणा ॥४॥ अस्यामिष्टौ दश गावो दक्षिणा ।

सहस्रं वा ॥५॥ वा विकल्पे · सहस्रं वा गावः शाखान्तरात् । स्मृतिष्वियमिष्टिः चान्द्राय[ण]प्रत्याम्नायत्वेनापि श्रूयते तदापि यजनीयेऽहनि आद्यान्वारम्भणीयपूर्विकानुष्ठेया ॥ ॥ त्रयोदशी कण्डिका ॥१३॥ ॥

इति श्रीत्रिरग्निचित्सम्राट्स्थपतिमहायाज्ञिकश्रीप्रजापतिसुतयाज्ञिकश्रीदेवेन कृते कातीयसूत्रव्याख्याने पञ्चमोऽध्यायः समाप्तः ॥ ॥

अथ पद्धतिः ॥

तत उपविश्याज्यस्थाल्याः स्रुवेण गृहीत्वाग्निरन्नाद इत्यादिभिर्दशभिर्मन्त्रैः स्रुवाहुतीर्जुहोति · इदमग्नयऽइत्यादयः प्रधानदेवताभ्यस्त्यागाः । ततः स्विष्टकृदादि · प्राशित्रादि सर्वं सर्वेषाम् · दक्षिणालम्भे दशगवम[सि सहस्रगवम]सीति वा अस्या मित्रविन्दायाः समृद्ध्यर्थं दश गा दक्षिणा ब्रह्मणे इत्यादि · व्यूहने अग्नेः सोमस्य वरुणस्य मित्रस्येन्द्रस्य बृहस्पतेः सवितुः पूष्णः सरस्वत्यास्त्वष्टुरुज्जितिम् अग्निः सोमो वरुणो मित्र इन्द्रो बृहस्पतिः सविता पूषा सरस्वती त्वष्टा तमपनुदन्तु · प्रस्तरहोमे इदमग्नये सोमाय वरुणाय॰ त्वष्ट्रे देवेभ्य इत्यादि · शेषं प्रकृतिवत् ॥ इयं मित्रविन्दा चान्द्रायणप्रत्याम्नायत्वेनापि स्मृतिषु विहितास्ति ॥ इति मित्रविन्दा समाप्ता ॥ ॥ अथास्या हौत्रं लिख्यते । कं प्रपद्यऽइत्यादि [1] पञ्चदश सामिधेन्यः । आवाहने आज्यभागानन्तरम् अग्निँ

[1] प्रपद्येत्यादि १. See Çânkhây. १. ४. ५.

सोमं वरुणं °त्वष्टारम् उपांशु आवहेत्युच्चैः । उत्तमे प्रयाजे ये यजामहे स्वाहाग्निꣳ स्वाहा सोमꣳ स्वाहा अग्निꣳ सोमं वरुणं° त्वष्टारम् उपांशु स्वाहा देवा इत्यादि । पुष्टिमन्तावाज्यभागौ [अग्नयेऽनु°] अग्निना रयिमश्न°वत्तमो३म् ये३यजामहेऽग्निं जुषाणा इति सोमायानु° गयस्फानो अमीवहा° भवो३म् ये३-यजामहे सोमं जुषाणा इति । प्रधानयागे पुरोऽनुवाक्या अग्निः सोमो वरुणो मि° यज्ञो३म् ये३[यजाम]हे त्वष्टा रूपाणि ददती° अग्निर्वौषट् · याज्यावदादेशे यथासम्प्रेषितं वेति शाङ्खायनः (३. ७. १–१०) तेनानुक्रमेणापि देवतादेशनं भवति निगमेषु पुरोऽनुवाक्यावत् । प्रेद्धोऽअग्नऽइमोऽअग्नऽइति विराजौ स्विष्टकृतः · सहस्रवत्यौ वा नू नो रास्व °दिति पुरोऽनुवाक्या · ये३यजामहेऽग्निꣳ स्विष्टकृतमयाडग्निरग्नेः प्रिया धामान्ययाट् सोमस्य [प्रिया धामा]न्ययाडग्नेः सोमस्य वरुणस्य° त्वष्टुः उपांशु प्रिया धामान्ययाड्देवानामित्यादि । सूक्तवाके आज्यभागानन्तरम् अग्निः सोमो वरुणो° त्वष्टा उपांशु हविरजुषन्तावीवृधन्त महो ज्यायोऽक्रत · देवा आज्यपा इत्यादि ॥ ॥१३॥ ॥

इति पञ्चमस्य त्रयोदशी कण्डिका ॥

इति श्रीत्रिरग्निचित्सम्राट्स्थपतियाज्ञिकश्रीप्रजापतिसुतदेवकृतकात्यायनपद्धतौ पञ्चमो ऽध्यायः समाप्तः ॥ ॥

इति कातीये श्रौतसूत्रे पञ्चमोऽध्यायः ॥५॥ ॥



श्रुतिमन्त्रक्रमानुसारिणाचार्येण चातुर्मास्यान्युक्तानि । तदनन्तरं ज्योतिष्टोम-स्यावसरः । तं प्रोत्सार्य हविर्यज्ञवसामान्यान्मित्रविन्दोक्ता । अथ हविर्यज्ञत्वसा-मान्यादेव पाशुकेषु चातुर्मास्येषु हविर्यज्ञविधपशूनामुक्तत्वाच्च निरूढोऽपि हविर्य-ज्ञविधः पशुर्बुद्धावागतो ऽतस्तमुपदिदिक्षुः प्रथमं तस्य कालमाह ·

पश्विज्या संवत्सरे-संवत्सरे प्रावृषि ॥ १ ॥ [इज्या यागः पशुना इज्या पश्विज्या पशुयागः संंरे प्रतिवर्षं यावज्जीवं भवति प्रावृषि वर्षास्वृतौ ·] तत्राप्यमावास्यायां पौर्णमास्यां वा । श्रावणो भाद्रपदश्चोभौ मासौ वर्षा ऋतुः · स च चान्द्रः तदलाभे सौरः श्रौतस्मार्तक्रियाः सर्वाः कुर्याच्चान्द्रेषु चऽर्तुषु तदलाभे तु सौरेष्विति स्मृतिविदां मतमिति स्मरणात् · एवं सोमादौ सर्वत्र ऋतूनां सौरचान्द्रायणा[ना]माश्रयणे व्यवस्था द्रष्टव्या । पशुबन्धेन यजतऽइति प्रकृत्य (११.७.१.१) तेन सुयवसे यजेतेति तं वै संवत्सरो नानीजानमतीयादिति (°३) च श्रूयते शोभनानि यवसानि तृणानि यस्मिन्नसौ सुयवसो वर्षर्तुरिति · नित्यत्वं चास्य परिभाषायामुक्तमेव[1] (१.२.११) । केचिदस्य प्रारम्भे प्रथमप्रयोगे ऽन्वारम्भणीयामिच्छन्ति नेति कर्काचार्याः सम्प्रदायपद्धतिकाराश्च । कालान्त-रमप्याह ·

आवृत्तिमुखयोर्वा ॥ २ ॥ आवर्तनमावृत्तिः सूर्यस्य दक्षिणायनमुदगयनं च तयोर्मुखम् प्रथममहः संक्रमणकालविहितम्[2] तत्र [पश्विज्या भवति] · अस्मिन्पक्षे प्रतिवर्षं पशुद्वयं भवति । नात्र पौर्णमास्यमावास्ययोरपेक्षा संक्रान्ति-दिनऽएव विधानात् संक्रान्तेः पूर्वदिने उत्तरदिने वा यस्मिन्नहनि स्मृतिशास्त्रतः

---

1) See pag. ३४, ३ ff. 2) ? °न्तसंनिहितं Ss.

पूर्वाह्णे पूर्णाकालत्वम् तत्र पशुयागः कर्तव्यः । शाखान्तरेऽस्य कालान्तरमप्युक्तम् प्रावृषि शरदि वसन्ते वेति ।

गृहेषु ॥३॥ अग्नीषोमीयविकारत्वादस्य देवयजने यागप्राप्तावाह अयं पशुयागो गृहेषु कर्तव्यः ।

यूपाहुतिं जुहोति चतुर्गृहीतं स्रुवेण वोरु विष्णविति (५. ४१) ॥४॥ अत्र पूर्वमृत्विजो वृत्वा सांनाय्यविकारत्वादनुदितएवोपक्रम्य निरूढपश्वर्थमाहवनीय-दक्षिणाग्नी विहृत्याग्न्यन्वाधानं चतुरासनं ब्रह्मवरणं च कृत्वा यूपाहुत्यर्थं पूर्णाहुतिवदाज्यं संस्कृत्य उरु विष्णविति मन्त्रेण स्रुचा स्रुवेण वा यूपाहुतिं जुहोति · स्रुचा चेत् चतुर्गृहीतमाज्यमाहवनीये जुहोति स्रुवेण चेत् तेनैव गृहीत्वा (३. ६. ४. ३) · अत्र पूर्वतरं परिस्तरणं तिष्ठता समिदाधानं चाहवनीये कर्तव्यम् · इदं विष्णवइति त्यागः · प्र-प्र यज्ञपती तिर इति द्वियजमानके प्र-प्र यज्ञपतीन् बहु-यजमानके । [इयं यूपाहुतिः खलेवाली यूपो भवतीत्यत्र (२२. ३. ४८) न भवति लुप्तार्थत्वात् · यूपं छेत्स्यता होतव्यमिति छेदनार्थो होमः · न खलेवाल्यां छेदन-मस्ति स्वदेशावस्थितायामेव पशुर्बध्यते · अतस्तत्र न यूपाहुतिः कर्तव्या][1] ।

आज्यशेषमादाय सतक्षा गच्छति ॥५॥ आज्यस्थालीं यूपाहुत्यर्थं संस्कृत्या-ज्यशेषमध्वर्युरादाय तक्ष्णा सूत्रधारेण सहितो यूपच्छेदनायारण्यं गच्छति ।

यूपमभिमृशत्यत्यन्यानिति (५. ४२) ॥६॥ ते ब्रह्मयजमानाध्वर्युतक्षाणो ऽरण्यं समागताः सन्तो यं वृक्षं यूपप्रकृतिं जोषयन्ते परस्परम् एवंलक्षणो यूप-वृक्ष[2] इति तं वृक्षमभिमृश्य जपति (३. ६. ४. ५) ।

प्राङ् तिष्ठन्नभिमन्त्रयते वा ॥७॥ अथवा यूपस्य पश्चात्प्राङ्मुखः यूपं विलोकयन् । किंजातीयं यूपमित्याकाङ्क्षायामाह ·

पालाशं बहुलपर्णमशुष्काग्रमूर्ध्वशकलशाखं[3] मध्याग्रोपनतमव्रणाम् ॥८॥ अशुष्कमार्द्रमग्रं यस्य · ऊर्ध्वम् ऊर्ध्वाः शकलाः वेष्टनत्वचः ऊर्ध्वाश्च शाखाः प्रो-

---

1) [to] is a marginal addition in C. इयं खलेवालीत्यत्र न भवति यत्र यूपच्छेदनं तत्रैव तस्या उक्तत्वात् A marg. — B. has nothing the like. 2) ? °णोपायोवृक्ष A. °णो यूपो वृक्ष C. B (°पयो). 3) सकल १. M. A sec. m.(throughout.)

ज्ञा यस्य · मध्ये अग्रे चोपनतम् स्थानद्वयेऽपि वक्रम् · व्रणामीर्ममरुः रोगज्ञो ग्रन्थिरित्यर्थः · अथ य एष आनत इत्यादिश्रुतेः (११. ७. ३. ३) मध्याग्रोपनतमित्युक्तम् अन्यत्सर्वं शाखान्तरात् ।

अभावे खदिरबिल्वरौहितकान्[१] ॥ ९ ॥ निरूढे पालाशस्य यूपस्याभावे खर्कान् यूपान्कुर्यात् शाखान्तरात् ।

खदिराभावे सोमऽइतरान् ॥ १० ॥ सोमे मुख्यः खादिरो यूपो भवति खदिरस्याभावेऽलाभे इतरान् बैल्वान्रौहितकान्वा[२] यूपान्कुर्यात् · केचित् बहुवचनात्पालाशमपि खादिराभावे सोमे इच्छन्ति नेत्यपरे । सोमशब्देन तदङ्गभूतोऽग्नीषोमीयो लक्ष्यते सोमयागस्य यूपेन प्रयोजनाभावात् ।

स्रुवेणोपस्पृशति विष्णवे त्वेति (५. ४२) ॥ ११ ॥ स्रुवेण घृताक्तेन छेदनप्रदेशे तं यूपवृक्षमुपस्पृशति । तत्राहापस्तम्बः देवस्त्वा सविता मध्वानक्त्विति स्रुवेण सर्वतो मूलं पर्याणक्तीति[३] · मानवे च विष्णवे त्वेत्यनेन पर्यनक्तीति · काठके देवस्त्वेत्यक्तेति · अतः स्रुवेण स्थाल्याज्यमादाय यूपवृक्षस्य मूले छेदनस्थाने परितोऽञ्जनं कर्तव्यमित्यर्थः ।

ओषधऽइति (५. ४२) कुशतरुणं तिरस्कृत्य स्वधितऽइति (५. ४२) परशुना प्रहरति ॥ १२ ॥ दर्भतृणमन्तर्धाय कुठारेणान्तर्हितस्य तृणस्योपरि प्रहरति छेदनाय प्रहारं मुञ्चति ।

प्रथमशकलं निदधाति ॥ १३ ॥ यूपे छिद्यमाने यः प्रथमः शकलः पतति तं प्रथमं शकलं यूपावटमध्ये प्रक्षेपार्थं क्वचित्सुगुप्ते देशे अनाशार्थं स्थापयतीत्यर्थः यथा न गच्छति · स यं प्रथममित्यादिश्रुतत्वात् (३. ६. ४. १२) · अत्र हरिस्वामिनः यः प्रथमः शकलोऽपच्छिन्नस्तमादत्ते यूपावटेऽवधातुम् अन्यानपि चादत्तऽएव स्वरवे शुक्रामन्थिप्रचाराय चेति ।

अनक्षस्तम्भं वृश्चति ॥ १४ ॥ तं प्रकृतं यूपवृक्षमनक्षस्तम्भं छिनत्ति · सामर्थ्यात्तदेकदेशः स्थाणुरनसोऽक्षं स्तभ्नातीत्यक्षस्तम्भः न अक्षस्तम्भोऽनक्ष-

---

१) रौहित॰ १. MAB. रोहित॰ १. रौहीत C. २) ॰न्रौहीत॰ C. B (sec. m.) ३) Thus ABC. (॰र्यणा॰ C.)

स्तम्भः यथा गच्छतः शकटस्याक्षमवशिष्टः स्थाणुर्न स्तभ्नाति तथा नीचं छिन्द्यादित्यर्थः ।

एकाङ्गम् ॥ १५ ॥ य एक एवासङ्घाय एव भूमेर्जातः तमेकाङ्गं यूपं वृश्चति ।

द्यां मा लेखीरिति (५. ४३) पतन्तमभिमन्त्रयते ॥ १६ ॥

न दक्षिणा पतेत् ॥ १७ ॥ तथा यत्नः कर्तव्यः यथा स यूपो दक्षिणास्यां दिशि न पतेत् तस्यां दिशि पतन्तं बाधेतेत्यर्थः ।

अयं हि त्वेति (५. ४३) शोधनम् ॥ १८ ॥ छिन्नस्य यूपवृक्षस्य शोधनं कुठारेण शाखापर्णादिपातनं करोति । यूपस्यावश्यमर्थप्राप्तं शोधनमस्ति · अयं च मन्त्रस्तदेवाभिधातुं शक्तः · अतो लिङ्गात्सूत्रकृता तत्र विनियुक्तः · कथं पुनरेष मन्त्रः शोधनमभिदधाति परशुना शोध्यमानस्य यूपस्य सौभाग्यं दर्शनीयत्वं भवति एवं चाभिधीयते महते सौभगायेति तस्मादनेन मन्त्रेण शोधनं कर्तव्यम् इति प्राप्तेऽभ्याह ·

अभिमन्त्रणशेषो वाविशेषोपदेशात् ॥ १९ ॥ वाशब्दः पूर्वोक्तपक्षनिरासार्थः · अभिमन्त्रणशेष एवायम् अयं हि त्वेति मन्त्रः नानेन शोधनं कर्तव्यमिति · कुतः अ॰शात् यतो नायं मन्त्रो विशेषेण शोधने केनचिदुपदिश्यते · अतोऽभिमन्त्रणमन्त्रस्य द्यां मा लेखीरित्यस्यैवायं शेषो न मन्त्रान्तरम् · यदुक्तम् लिङ्गाच्छोधने विनियोग इति तन्न मन्त्राणामविधायकत्वादिति · वस्तुतस्तु तादृशं लिङ्गमपि नास्ति यद्बलाच्छोधने विनियुज्येत[1] · तस्मादभि॰ष एव शोधनं तु तूष्णीं कर्तव्यम् ।

अतस्त्वमित्याव्रश्चने (५. ४३) जुहोति ॥ २० ॥ आज्यस्थाल्याः सकाशात्सकृद्गृहीतं जुह्वां गृहीत्वा परिस्तीर्याव्रश्चने जुहोति · आवृश्च्यते[2] यूपोऽस्मादित्याव्रश्चनः स्थाणौ छेदनप्रदेशः तं होमेन संस्करोति ।

यूपे वा तत्संस्कारात् ॥ २१ ॥ अथवा यूपे एतामाहुतिं जुहोति न स्थाणौ · आहुत्या हि यूपः संस्कर्तव्यो न स्थाणुः · आव्रश्चनशब्देन छेद

---

[1]) ॰ज्यते AB. — C. is doubtful, but may be read ज्येत · [2]) Thus C. ॰व्रश्चते AB.

उच्यते स च यूपेऽप्यस्ति स्थाणावपि । ततश्च यूपस्थे आव्रश्चने होमः कार्य इति प्राप्तऽआह ·

स्थाणौ श्रुतेश्च ॥२२॥ स्थाणावेव होतव्यम् न यूपे · कुतः श्रुतेः चकारात् मन्त्रवर्णाच्च · श्रुतिस्तावत् अथाव्रश्चनमभिजुहोतीत्यादि (३. ६. ४. १५) · वनस्पतिप्ररोहणं च स्थाणावेवोपपद्यते न यूपे यूपविरोहणे प्रायश्चित्तविधानात् (२५. १. १५) अतस्त्वं विरोहेति (५. ४३) मन्त्रवर्णात् हे वनस्पते त्वमतः अस्मात्स्थाणोः सकाशात् शतवल्शः शतशाखो विरोह प्रसरेति मन्त्रार्थः । केचित् समाख्यायाः श्रुतेश्चेत्येवं व्याचक्षते · शाखान्तरे स्थाण्वाहुतिरिति समाख्या श्रूयते । यदुक्तम् यूपसंस्कारादिति अत्र ब्रूमः स्थाणावपि क्रियमाणो होम आराडुपकारकत्वाद्भवत्येव यूपस्य संस्कारको यूपीयः स्थाणुरिति कृत्वा · शेषाभिमर्शनवत् यथा शेषस्याभिमर्शने कृते गृहीतस्य हविषः संस्कारो भवति तत्सम्बन्धित्वात् एवमत्रापीति[1] ।

परिवास्याछेदनं पुनः ॥२३॥ पूर्वं मानं कृत्वावशिष्टमग्रं परिवास्य छित्वा. पुनर्द्वितीयवारं छेदनं न कर्तव्यम् · तथा यत्नः कर्तव्यो यथा मानं कृत्वा परिवासने कृते पुनः समीकरणाय छेदनं कर्तव्यं न भवति · परिपूर्वो वासयतिः छेदने वर्तते ।

त्र्यरत्निः ॥२४॥ त्र्यरत्निप्रमाणः परिवासनीयः ।

चतुररत्निर्वा ॥२५॥ स वाऽएष त्र्यरत्निर्वैव चतुररत्निर्वा पशुबन्धयूपो भवतीति निरूढप्रकरणऽएवं श्रुतत्वात् (११. ७. ४. १) ।

एकारत्निप्रभृतीनेके ॥२६॥ एके आचार्याः एकारत्न्यादिप्रमाणकानपि यूपान्निरूढऽइच्छन्ति स यत्पशुना यक्ष्यमाण एकारत्निमित्यादिश्रुतत्वात् (११. ७. ४. १) · अन्ये पुनरेकारत्निं· द्व्यरत्निमितीमाववयुत्य-वादौ मन्यन्ते कुतः स वाऽएष त्र्यरत्निर्वैव चतुररत्निर्वेति पक्षद्वयस्यैवोपसंहारात् · तथा चाहापस्तम्बः त्र्यरत्निश्चतुररत्निर्वा पालाशो निरूढपशुबन्धस्यातोऽन्यः सौम्यस्याधरस्येति वाजसने-

---

[1]) इयं चाहुतिः खलेवाल्यां न भवति marg. in A. इयं आहुतिः खण्ल्यां न कर्तव्या marg. in B.

यकमिति · तस्माच्चरत्निर्वा चतुररत्निर्वा[1] इति द्वावेव पक्षौ नैकारत्निर्व्यर-त्निर्वा [इति] पक्षाविति साधु ।

अष्टाश्रिं करोत्युपरवर्जम् ॥२७॥ तं परिवासितं यूपं तक्षा तक्षणेन अष्टा-श्रिमष्टकोणं करोति · उपर्जम् उपरो ऽवटः तत्सम्बन्धिनं निखनार्हं यूपस्य प्रदेशं मूलतः पञ्चमांशं वर्जयित्वा ।

अग्राच्चषालं पृथमात्रमष्टाश्रि[2] मध्यसंगृहीतम् ॥२८॥ यूपपरिवासना-नन्तरं यदवशिष्टं पृथक्कृतमग्रम् ततश्चषालं कर्तव्यम् · प्रसारिताङ्गुलिः पाणिरा मणिबन्धनात्पृथ इत्युच्यते · चषालमिति संज्ञा संव्यवहारार्था आ चषालेभ्यः पा-दित्यादौ (८. ८. १४) · अष्टाश्रि अष्टकोणम् तदपि तक्षणेनाष्टकोणं कुर्यात् तन्नैव उलूखलवन्मध्ये संकुचितम् ।

ऊर्ध्वमग्रे प्रतिमुञ्चति ॥२९॥ तच्चषालं यूपस्याग्रे ऊर्ध्वं प्र°ति अत एवोर्ध्व-प्रतिमोकविधानाच्चषालस्य तथा वेधः कार्यः · प्रतिमुञ्चतीति वचनाच्च चूडायो यूपः चषालं च सुषिरमिति गम्यतऽइति हरिस्वामिनः · तथा चाहापस्तम्बः मूलतोऽतष्टमुपरम् अष्टाश्रिरनुपूर्वा[3]ऽग्रतोऽणीयान्प्रज्ञातानिष्टाश्रिरिति ।

द्व्यङ्गुलं त्र्यङ्गुलं वा तदतिक्रान्तं[4] यूपस्य ॥३०॥ यूपस्य यूपाग्रस्य द्व्यङ्गुलं त्र्यङ्गुलं वा चषालं त°न्तं चषालच्छिद्राग्रवेधादतिक्रान्तं भवति अतिक्रम्योर्ध्वं निःसृतं भवति · तथा चषालस्योर्ध्वं प्रवयणं कर्तव्यम् यथा चषालो यूपाग्रादधो द्व्यङ्गुले त्र्यङ्गुले वा तिष्ठतीत्यर्थः ।

पञ्चारत्निः पञ्चदशपर्यन्तः सोमे दशसप्तचतुर्दशवर्जम् ॥३१॥ सोमाङ्गभूते ऽग्नीषोमीये दश°र्ज दशारत्निं सप्तारत्निं चतुर्दशारत्निं वर्जयित्वा पञ्चारत्न्यादि-पञ्च-दशारत्निपर्यन्तो (३. ६. ४. १८–२५) यूपो भवति · दशसप्तचतुर्दशारत्नेरश्रुतत्वात् तद्वर्ज-मित्युक्तम् । इहाग्नीषोमीयविकारं निरूढपशुं प्रस्तुत्याग्नीषोमीयधर्मा अभिधीयन्ते · नन्वग्नीषोमीयऽएवाग्नीषोमीयधर्माः कुतो न विहिताः किमितीह विकृतावु-पदिश्यन्ते · उच्यते · अग्नीषोमीयधर्माणां हि सौमिकैर्धर्मैरत्यन्तं व्यतिषङ्गात्तत्रो-

1) तस्मादरत्निश्चतु° A. 2) पृथु° M pr. m. १. C (throughout.) °श्रिं M pr. m. १. AC. °श्रि M sec. m. B. 3) स्नू AB. 4) तरश्मा ABC.

पदेशे सति न ज्ञायते केऽग्नीषोमीयधर्मा इति · अतो निष्कृष्य तद्विकारे निरूढे केवलाः सर्वेऽग्नीषोमीयधर्मा उपदिश्यन्ते · तेनात्र विशेषिका निरूढधर्मा अपि वक्तव्याः अग्नीषोमीयधर्माश्च · तेनोच्यते पञ्चार° सोमऽइति ।

अपरिमितो वा ॥ ३२ ॥ अपरिमितं प्रमाणाद्भूय इत्युक्तत्वादतिप्रमाणोऽतिशयेनाधिकप्रमाणोऽपरिमित इत्युच्यते । अथवा सोमे तदङ्गभूतेऽग्नीषोमीयेऽपरिमितप्रमाणो वा षोडशारत्निप्रभृति यूपो भवति ।

सप्तदश वाजपेये ॥ ३३ ॥ वाजपेयाङ्गभूतेऽग्नीषोमीये सप्तदशारत्निर्यूपः स्यात् ।

एकविंशतिरश्वमेधे ॥ ३४ ॥ सर्वे यूपा एकविंशत्यरत्नयः ।

यथाकायं[1] स्थविमा ॥ ३५ ॥ स्थविमा स्थौल्यं यूपानां यथं भवति कायस्य यूपदेहस्यानुरूपं[2] योग्यं यथाकायम् लोकप्रसिद्धैव दीर्घप्रमाणानुसारेण तद्योग्यं स्थौल्यं कुर्यात् ।

वेदिं करिष्यन्षड्ढोतारं[3] पञ्चगृहीतं मनसानुद्रुत्य जुहोत्येकामाहुतिं पञ्च वा द्यौष्पृष्ठमन्तरिक्षमात्माङ्गैर्यज्ञं पृथिवीं शरीरैः वाचस्पतेऽछिद्रया वाचाछिद्रया जुह्वा दिवि देवावृधं होत्रामेरयस्वाहेति (११.७.२.६) ॥ ३६ ॥ वेदिकरणात्प्रागाज्यं संस्कृत्य पञ्चगृहीतमाज्यं गृहीत्वा द्यौष्पृष्ठमितीमं षड्ढोतारं मन्त्रं मनसानुद्रुत्य मनसैवोच्चार्य तेन पञ्चगृहीतेनैकामाहुतिं जुहोति अथवा तेनैव पञ्चगृहीतेन विभज्य पञ्चाहुतीर्जुहोति आहवनीये परिस्तरणसमिदाधानपूर्वकम् · द्यौष्पृष्ठमिति मन्त्रस्य षड्ढोतेति नामधेयम् । इयं चाहुतिर्निरूढपशावेव भवति तत्प्रकरणऽएव पठितत्वात् (११.७.२.६) तद्विकारेषु चातुर्मास्यसौत्रामणीगतेषु हविर्यज्ञविधपशुषु च । अत्र केचिदाहुः अध्वर्य्वादिभिः षड्भिर्ऋत्विग्भिरयं पशुरेव षड्ढोता तं पशुं मनसानुद्रुत्य संचिन्त्याहुतिं जुहुयादिति · येषां च मन्त्रः षड्ढोता तेषामपि ऋत्विग्भिः पशुः षड्ढोता तद्योगान्मन्त्रोऽपि षड्ढोतेति ॥ ॥

प्रथमा कण्डिका ॥ १ ॥

वेदिं करोति वरुणप्रघासवत् ॥ १ ॥ अत्र निरूढपशुबन्धे वरुण°वदित्याहवनीयस्य पुरस्ताद्रथमात्री वा चतुररत्निर्वा पश्चात्सप्त प्राची षड्वा त्रयः पुरस्ता-

1) °कामं M pr. m. १. 2) Thus Ss. °देशस्या° ABC. 3) हो M. १. ABC.

दित्येवम्प्रमाणां वा अपरिमितां वा (५. ३. १–१५) वेदिं कुर्यादित्यर्थः · वेदिमित्येकवचनादेकां करोति । केचिद्वेदिं करोतीत्यन्तं सूत्रं कृत्वा दर्शपूर्णमासिकीमेव वेदिं पशुबन्धस्येच्छन्ति · तदयुक्तम् · तथा सति वरुण°वदित्यतिदेशस्य वैयर्थ्यापत्तेः स्फ्याद्यग्निनिधानादित्येतावतैव (२) सिद्धत्वात् न हि वरुणप्रघासादन्यत्रेतः प्राक्क्वचित्स्फ्यादानाद्यग्निनिधानान्तं कर्मोपदिष्टमस्ति येन वरुण°वदिति विशेष्यते · तस्मात् वेदिं° घासवदित्येवमन्त एव सूत्रच्छेदः कर्तव्यः । शाखान्तरसूत्रेष्वपि निरूढे वरुण°वद्वेदिः पठ्यते · तथा चापस्तम्बः रथमात्री निरूढपशुबन्धस्य वेदिरक्षसंमिता पश्चात्तिर्यगीषया प्राची विपथयुगेन पुरस्ताद्यावता वा बाध्ये छिद्रे अरत्निभिर्वा चतुर्भिः पश्चात्षड्भिः प्राची त्रिभिः पुरस्तात् तां वेदिं कृत्वा दर्शपूर्णमासवत्संनम[न]वर्जं प्रागुत्तरात्परिग्रहात्कृत्वापरेण यूपावटं संचरमवशिष्य वेद्यामुत्तरवेदिं दशपदां सोमे करोत्यष्टीयसीं पुरस्तादित्येके यावता युगेन यजमानस्य वा पदैर्विमाय शम्यया परिमिमीते शम्यामात्री निरूढपशुबन्धस्योत्तरवेदिरिति · काठके प्रागग्रे रथमात्रीं वेदिं प्राक्परिग्रहात्कृत्वा तस्याः पूर्वार्धाद्द्वात्रिंशदङ्गुलामुत्तरवेदिं चतुःस्रक्तिं प्रत्यग्यूपदेशात्पदमात्रे भूयसि वा अपरिमिता वेदिर्यदा स्याद्दशपदोत्तरवेदिः सम्भवेत्तां[१] वेदिं कुर्यादिति लौगाक्षिरिति · मानवे वेदिं करोति यथोत्तरां वारुणप्रघासिकीं निःसारणान्तां कृत्वा वसन्ति श्वो भूते पाणी प्रक्षाल्य विहारं परिस्तीर्येति · सम्भारानुत्तरनाभौ न्युप्यापि वैतदन्तं पूर्वेद्युः स्यादिति काठके · आपस्तम्बोऽपि च प्रोक्षणान्तां कृत्वौदुम्बरशाखाभिः प्लक्षशाखाभिर्वा प्रच्छाद्य वसति यद्यसद्यस्कालः पशुर्भवति[२] · अतश्च सर्वसूत्रेषु दर्शनाद्वैकल्पिकी द्व्यहकालतापि पशोर्भवति ।

स्फ्याद्यग्निनिधानात् ॥२॥ अत्र वरुण°वत्प्रमाणत्रयमध्येऽन्यतमेन प्रमाणेन वेदिमानमुत्करकरणान्तं कृत्वा स्फ्यादानादि तेष्वग्निं निदधातीत्येतावत्पर्यन्तं (५. ३. १६–४. १८) कर्म करोति · ततः पूर्वतरं यजमान वाचं यच्छेति प्रैषं दत्त्वा षड्ढासादनादि त्रिकप्रोक्षणान्तं कृत्वा वेदिमानादि कुर्यात् ।

---

१) ? °वेत्यां AB. °वेतां C. २) see at ५. ४. २.

एकमिध्मेन प्रणयति ॥ ३ ॥ तत्र पशुबन्धे एकमग्निमिध्मे॰ति · अयं वारुणप्रघासिकातिदेशमध्ये विशेषः तत्र हि द्वयोः प्रणयनमुक्तम् (५. ४. २) कर्परेण च · इहैकमेव प्रणयति न द्वौ इध्मेन न प्रकृतिवत्कर्परेणेति · येषां च तत्र सौमिकं प्रणयनम् तेषामिध्मेनेति प्राप्तानुवाद एव · आपस्तम्बः एष पशुबन्धस्याहवनीयो[१] यतः प्रणयति स गार्हपत्यः प्रणीते चेदग्निहोत्रस्य काल एतस्मिन्नेवाग्निहोत्रं जुहुयादेवमन्यत्र विप्रक्रान्तऽइति । अत्र वेदेरुत्तरभागेनेध्महरणं कार्यम् · तथा च काठके त्रिरनूक्तऽउत्तरेण वेद्यन्तेन गत्वा पूर्वेणोत्तरवेदिं प्रत्यङ् तिष्ठन्नित्यादि ।

व्रतोपायनप्रणीताज्यभागभागावदानपूर्णपात्रविष्णुक्रमान्कुर्याद्धविर्यज्ञविधे ॥ ४ ॥ हविर्विधे पशौ व्रतोपायनादीन्विष्णुक्रमान्तान्पदार्थान्कुर्यात् अर्थात् सवविधे न कुर्यादिति गम्यते । व्रतोपायनं व्रतग्रहणम् तच्च ब्रह्मवरणोत्तरकालं वाग्निनिधानानन्तरं वा पशौ कर्तव्यम् । प्रणीताप्रणयनमप्यग्निनिधानानन्तरं कर्तव्यम् । आज्यभागौ च वपायां कर्तव्यौ । भागावदानानि तु होमं ब्रह्मणे इत्यादीन्यग्नीषोमीयमागतानि तत्र च शाखान्तरे प्रतिषिद्धानि अतो विकारपशुषु गच्छन्ति · अत इहैतेषां विधानम् अग्नीषोमीये एतानि न भवन्तीत्येवमर्थम् · अतः पश्वन्तरेष्वेतानि नियमेन भवन्ति तत्रापि निरूढऽएषां विकल्पं वक्ष्यति होमप्ली॰ चेच्छन्निति (७. ११) · अत एषां निरूढे निरूढविकारेषु च विकल्पः पश्वन्तरे नियमः अग्नीषोमीये त्वभाव एवेति । पूर्णपात्रं च पशोर्भवति ततश्च पशुपात्रासादनकालऽआसादनप्रोक्षणे तस्य भवतः । विष्णुक्रमा अप्यस्य पशोर्भवन्ति · विष्णुक्रमशब्देन दिवि विष्णुरित्यत आरभ्य तूष्णीमाहवनीयोपस्थानान्तं कर्माभिधीयते · तत्कथम् सूत्रकारप्रस्थानात् यत एवमाह (१०. २) आहवनीयं वोपस्थाय व्रतादीनि चेदिति · अत एवं गम्यते आहवनीयोपस्थानान्ता विष्णुक्रमा इति · अग्नीषोमीयो दक्षिणाग्निहोमान्तः इतरे पशवः समिष्टयजुरन्ताः निरूढस्त्वाहवनीयोपस्थानान्त इति · निरूढविकारा हविर्यज्ञपशवोऽप्याहवनीयोपस्थानान्ता इति हविर्यज्ञविधो ह वाऽअन्यः ॰यस्मिन्नेतानि न क्रियन्तऽइति

१) Thus C. ॰नीया A. B. ॰नीयात् A. sec. m.

(११.७.२.१) श्रुतत्वात् । तथा चाह्वापस्तम्बः इष्टिविधो वाऽन्यः पशुबन्धः सोमविधोऽन्यः स यत्रैतदपः प्रणयति पूर्णपात्रं निनयति विष्णुक्रमान्क्रमति स इष्टिविधो ऽन्यः सत्वविध इति वाजसनेयकमिति । सत्वविधे तु पशावेतेषां प्रतिषिद्धत्वात्पशुपुरोडाशे प्रणीतादीनि भवन्ति । तत्राग्नीषोमीये पशुपुरोडाशे प्रणीताप्रणयनमाज्यभागौ चेत्येतावदेव अन्येषां प्रतिषिद्धत्वात् ।

परिस्तरणपात्रसंसादनप्रोक्षणाज्यनिर्वपणाधिश्रयणानि कृत्वोत्तरपरिग्रहादि करोत्याज्यासादनात् ॥५॥ दार्शपौर्णमासिकानौषधविषयान्ग्रहणादिपदार्थानर्थलुप्तान्परित्यज्यासंमोहाय पशौ ये कर्तव्याः पदार्थास्तानुपदिशति । तत्र प्रागकृतं चेत् अत्र पूर्वं व्रतग्रहणम् । ततः प्रणीताप्रणयनम् । ततो मध्यमाहवनीयवर्जं सर्वेषां परिस्तरणम् ततः शूर्पाद्यर्थलुप्तवर्जं[1] पात्रासादनम् । अत्राहापस्तम्बः यथार्थं पात्राणि प्रयुनक्ति स्फ्यमग्निहोत्रहवणीं वसाहोमहवनीयां[2] द्वितीयां जुहूं पृषदाज्यधानीं द्वितीयामुपभृतं द्वे आज्यस्थाल्यौ हृदयशूलमसिं कुम्भीं प्लक्षशाखां शाखापवित्रं कार्ष्मर्यमय्यौ वपाश्रपण्यौ द्विशूलां[3] चौदुम्बरं मैत्रावरुणदण्डमास्यदघ्नं चुबुकदघ्नं वा रशने चेति । अत्र मानवे व्रतोपेतस्येध्माबर्हिः संनह्यत्याश्ववालः प्रस्तरो विधृती च कार्ष्मर्यमयाः परिधयो विंशतिदार्विध्मं वेदिं करोति यथोत्तरां वारुणप्रघासिकीं निःसारणान्तां कृत्वा वसन्ति श्वो भूते पाणी प्रक्षाल्य विहारं परिस्तीर्य पाशुकानि पात्राणि प्रयुनक्त्यग्निं प्रथमोत्पतितं[4] शकलं प्लक्षशाखां वपाश्रपण्यौ रशने शूलं मैत्रावरुणदण्डमादानश्रयणीं स्वरुं स्वधितिं चेति । काठके आहरत्याज्यं पात्राण्यरणी प्रथमपरापतितं स्वर्वधिमन्थनौ च शल्कौ कार्ष्मर्यमय्यौ वपाश्रपण्यौ रशने त्रिगुणां त्रिव्यामां द्विगुणां द्विव्यामां प्लाक्षीमध्यवदानीं स्वधितिं कुम्भीं दण्डं शूलं यूपं प्रक्षालितं पशुं स्नातं पन्नदमव्यङ्गं येन चार्थो विहारं परिस्तीर्य पात्राणि प्रयुनक्तीति । अत्रापूर्वाणामपि पात्राणामासादनं विहितमस्ति अतः शम्यायूपादीनामप्यासादनं प्रोक्षणं च कर्तव्यम् । शूर्पाग्निहोत्रहवण्यादानादीनर्थलुप्तान्पदार्थान्परित्यज्य पात्रप्रोक्षणम् । अव-

---

1) °द्यनर्थ° ABC. 2) Thus A. नीय C. नीयं B. 3) Thus BC. A. pr. m. लं A. sec. m. 4) अग्निं प्रथमोत्पन्नितं AB. अभिमंथोत्प° C.

खननादीनर्थलुप्तान्मुक्त्वा आज्यनिर्वापो वेदकरणं च। संवपनादयः पदार्था अर्थलुप्तास्तानन्तरा मुक्त्वा आज्याधिश्रयणं च कृत्वा खननं च कृत्वोत्तरपरिग्रहादि आ ऽऽज्यासादनात् आज्यसादनालम्भात्मालम्भोदकालम्भान्तं कुर्यात् · उत्तरपरिग्रहादीत्यत्रोत्तरपरिग्रहस्यावृता स्वधितिं जुहूवद्धसाद्धोमहवनीमुपभृत्पृषदाज्यधानीमिति तथा उपभृत्पृषदाज्यधानीः सादयतीति च · अत्र विशेषमाह ·

सपृषदाज्यमाज्यग्रहणाम् ॥ ६॥ आज्यामत्र संज्ञं भवति चतुर्गृहीते जुह्वां चोप° ज्योतिरसीति (३. ६. ३. ६) श्रुतत्वात् । अत्र काठके विशेषः दधि च निर्वपति यथाज्यं द्वे उपभृन्मन्त्रे चतुर्गृहीतान्याज्यानि द्वितीयस्यामुपभृति तेन्न इत्युपस्तीर्य ज्योतिरसीति दध्यासिच्योत्तमाभ्याममभिघार्य शेषे घृतमासिच्य तस्य पश्वभिघारणं वनस्पतिं च यजतीति · आपस्तम्बोऽपि आज्यं निरुप्य दधि निर्वपत्यधिश्रयणावर्ज दधनि क्रियते नैतस्य दध्नः संस्कारो विद्यतऽइत्यपरम् आज्यग्रहणकाले चतुर्जुह्वां गृह्णाति चतुरुपभृति दधन्याज्यमानीय महीनां पयोऽसीति पृषदाज्यधान्यां पञ्चगृहीतं ज्योतिरसीति वेति ।

बर्हिषि प्लक्षशाखा स्तृणाति ॥ ७॥ बर्हिषि स्तीर्णे बर्ह्णिः प्लक्षाति बर्हिष्येव वेदेर्दक्षिणभागे तासामुपरि हृदयादीनामवदानं छेदनं करिष्यते यतः · ताश्च तूष्णीमेव स्तृणाति न मन्त्रेण अपूर्वत्वात् ।

देवस्य त्वेत्यभ्रिमादाय (५. २२ २६ ६. १) यूपावटं परिलिखतीदमहमित्याहवनीयस्य पुरस्तादन्तर्वेद्यर्धम् ॥ ८॥ आज्यासादनानन्तरं देव°दाय आह°स्ता-यूपावटं यूपनिखननार्थं श्वभ्रं गर्तं परिलिखति · पुनरपि यूपावटस्य स्थानं विशेषयति अन्तर्वेदि वेदिमध्ये अर्धम् अर्धादर्धं बहिर्वेदि आहवनीयात्पूर्वस्यां दिशि तत्रावटं खनति यत्र खातः सन्नर्धमन्तर्वेदि अर्धं बहिर्वेदि स्यात् ।

उपरसंमितं खनति ॥ ९॥ उपरो यूपस्य मूलभागोऽतष्टो निखननार्हः पञ्चमो भागः · तेन संमितं तत्प्रमाणं निम्नमवटं खनति ।

प्राचः पांसूनुद्वपति ॥ १०॥ प्राचः अवटात्प्राच्यां दिशि पांसून् खननेनोत्खातं धूलिराशिमुद्वपत्यवटाद्बहिर्निष्काशयति ।

तदग्रेण यूपं प्राञ्चं निदधाति ॥ ११ ॥ तस्यावटस्याग्रेण पुरस्तात्प्रागग्रम्· तदग्रेण प्राञ्चमिति श्रुतत्वात् (३. ७. १. ३) तमवटमग्रेणावटस्य पुरस्तादिति कर्कस्वामी ।

कुशमुष्टिमुपरि तस्मिन् ॥ १२ ॥ तस्मिन्यूपे कुशं निदधाति ।

प्रथमशकलं च ॥ १३ ॥ तस्मिन्नेव यूपे निदधाति · यूपे छिद्यमाने यत्प्रथमापच्छिन्नं शकलम् तत्प्रथमशकलम् ।

अग्रमुत्तरेण चषालम् ॥ १४ ॥ यूपाग्रस्योत्तरतः समीपऽएव चषालं निदधाति ।

यवोऽसीत्यप्सु (५. २६ ६. १) यवानोप्य प्रोक्षत्यग्रमध्यमूलानि दिवे त्वेति (५. २६) प्रतिमन्त्रम् ॥ १५ ॥ अप्सु क्वचित्पात्रस्थेषु लौकिकेषु [उदकेषु][1] यवान्क्षिप्त्वा ताभिर्यवमतीभिरद्भिरग्रादिषु त्रिषु प्रदेशेषु यूपं प्रोक्षति ।

प्रोक्षामीति सर्वत्र साकाङ्क्षत्वात् ॥ १६ ॥ प्रोक्षामीति क्रियापदं सर्वत्र दिवे त्वेत्यादित्रिष्वपि मन्त्रेषु प्रयोज्यम् · साकाङ्क्षा ह्येते दिवे त्वेत्यादयः क्रियापदाभावात् · तस्मान्निराकाङ्क्षीकरणाय प्रोक्षामीति पदं सर्वेषु प्रयोज्यम् ।

अवटे शेषमासिञ्चति शुन्धन्तामिति (५. २६ ६. १) ॥ १७ ॥ प्रोक्षणीशेषं गर्ते · शुन्धन्तां पित्र्ये इत्युक्तत्वादस्य मन्त्रस्य पित्र्यत्वादुदकालम्भो[2] भवति । यूपैकादशिन्यां प्रत्यवटं शेषासेकः तमेवैतन्मेध्यं करोतीति (३. ७. १. ६) वाक्यशेषे अवटसंस्कारत्वावगमात् · अपरे त्वेवमाहुः प्रोक्षणीनां प्राकृतार्थानामियं शेषप्रतिपत्तिरेव न त्ववटसंस्कारः तमेवैतन्मेध्यं करोतीत्येतत्त्वर्थवादमात्रम् ।

बर्हींषि प्राञ्च्युदञ्चि च प्रास्यति पितृषदनमसीति (५. २६ ६. १) ॥ १८ ॥ तस्मिन्नवटे असंस्कृतानेव कुशान्प्रक्षिपति · य एष कुशमुष्टिर्यूपस्योपरि निक्षिप्तस्तस्यायं विनियोगः · अस्यापि मन्त्रस्य पित्र्यत्वादुदकालम्भः[3] ।

प्रथमशकलं चाग्रेणोरसीति (६. २) ॥ १९ ॥ यूपावटे प्रक्षिपति ।

स्रुवेणावटे जुहोति तूष्णीम् ॥ २० ॥ आज्यस्थाल्याज्येनैव · मन्त्रान्तराभावात्तूष्णीमित्यनेन स्वाहाकारो निवार्यते · इदं प्रजापतयऽइति त्यागः · अवटे तु परिस्तरणं भवति ।

पुरस्तात्परिक्रम्याध्वर्युर्यजमानो वा यूपमनक्त्युदङ्कुपविश्य ॥ २१ ॥ यूपं पुरस्य

[1] wanting in ABC. [2] Thus C. पितृ° AB. [3] Thus C. पितृ° AB.

अध'नो वा उदङ्मुख उपविश्य अर्थाद्यूपस्य दक्षिणतः ततो यूपं लौकिकेनाज्येन म्रक्षयति[१]. आपस्तम्बः अथैनमसंस्कृतेनाज्येन यजमानोऽग्रतः शकलेनानक्तीति. अत्र परिक्रमणविधानादश्यादानाद्यवटहोमान्तमुत्तरत उपविष्टेन कर्तव्यम्. उदङ्ङासीन इत्यनेन (३. ७. १. १०) सामर्थ्यादिवाधर्योः परिक्रमणं प्राप्नोत्येव यजमानस्य तु न प्राप्नोति तदर्थमुच्यते पुर'स्येति मा भूत्संनिधानादपरिक्रमणमिति ॥ ॥ द्वितीया कण्डिका ॥ २ ॥

यूपायाज्यमानायानुवाचयति ॥ १ ॥ अध्वर्युर्यजमानो वा यो यूपमनक्ति स एव यू'नायानुब्रूहीत्येवं होत्रानुवाचनं कारयति ।

देवस्त्वेत्यनक्ति (६. २) ॥ २ ॥ आज्येन म्रक्षयति . एतच्चाञ्जनमुपरदेशं वर्जयित्वावशिष्टस्य सर्वस्य यूपस्य सर्वास्रिषु कार्यम् ।

चषालमुभयतः ॥ ३ ॥ अन्तर्बहिश्चानेनैव मन्त्रेणानक्ति . देशभेदान्मन्त्रावृत्तिर्भवतीति प्रतिपादितम् . अग्निसंमार्गात्पूर्वं मध्येऽनक्ति ततो बहिः ।

अक्तं प्रतिमुञ्चति सुपिप्पला भ्य इति (६. २) ॥ ४ ॥ तमेवाक्तं चषालं यूपाग्रे प्रतिमुञ्चति पूर्वोक्तस्थाने (५. २१-३०) . अथ षड्विंशब्राह्मणे पठ्यते आप्लावयन्त्यलङ्कुर्वन्त्यहतेन वाससा छादयन्तीति अविरुद्धत्वात्तदपि कर्तव्यम् ।

सोपरमग्निष्ठादेशमक्त्वा परिव्ययणदेशात्समन्तं परिमृश्याधर्युर्नावसृजेदा परिव्ययणात् ॥ ५ ॥ सहोपरेण वर्तत इति सोपरं यूपस्याग्निष्ठादेशमग्निसंमुखाश्रिदेशं[२] पुनस्तेनैव मन्त्रेणाक्त्वा ततोऽधर्युः परि'शं यूपस्य रशनाबन्धनस्थानं समन्तं सर्वतो हस्तेन गृहीत्वा आ प'णात् अध'जेत् अग्निष्ठादेशस्य सोपरस्याञ्जनविधानात्पूर्वं यूपाञ्जनमुपरदेशवर्जितं कार्यमिति गम्यते . आक्तमग्निष्ठामनक्तीति (३. ७. १. १३) . अग्नौ अग्निसमीपे तिष्ठतीत्यग्निष्ठा यूपस्याग्नेः प्रत्यासन्ना अश्रिः तामा अन्तात् उपरेऽप्यनक्ति । ननु चोपरस्याप्यग्निष्ठास्ति सत्यम् उपर्यधःस्थितया स्वदेशो यस्तया[३] लक्ष्यते तदर्थं वचनम् . अन्यथा तु सर्वा एवाश्रयो यूपेऽज्यमानेऽज्यन्ते कोऽग्निष्ठाविशेषः । यजमानकर्तृकाञ्जनपक्षे सोपराग्निष्ठाञ्जनान्तं यजमान एव करोति . ननु सूत्रे ल्यबादेशदर्शनादधर्युः स तु तत्र पूर्व-

[१] Thus BC. °क्षति A. [२] °खाश्रितदे° Ss. [३] ? Thus C. स्वदेशो यस्त्वया AB.

कालंतामात्रे अञ्जनस्य वाचनिककर्तृकत्वात् । तथा अथ परिव्ययणं प्रति समन्तं परिमृशतीति च श्रूयते (३. ७. १. १३) परिव्ययणं रशनया संवरणं[१] प्रति तेन लक्षिते यूपदेशे नाभिमात्रे तत्र समन्तं सर्वतः परिमण्डलेन परिमृशति न च तं देशं विसृजत्या परिव्ययणात् · तथा चापस्तम्बः देवस्त्वा सविता मध्वानक्त्विति स्रुवेण संततमनवच्छिन्दन्नग्निष्ठामश्रिमनक्त्योपरादिति । अधुनाग्निसमीपेऽवस्थानाभावात्सूत्रेऽग्निष्ठादेशमित्युक्तम् · तथा चात्वालदेशात् (१७. १. १८) अन्तःपात्यदेशऽइत्यादि (८. ५. ३४) इहैव यथा परिव्ययणदेशमिति ।

उच्छ्रीयमाणायानुवाचयति ॥ ६॥ ततोऽध्वर्युरुच्छ्रीयमाणायानुब्रूहीत्येवंहोत्रानुवाचनं कारयति । आपस्तम्बः यूपायोच्छ्रीयमाणायेति सम्प्रेष्यत्युच्छ्रीयमाणायेति वेति ।

द्यामग्रेणेत्युच्छ्रयति (६. २) ॥ ७॥ तं नाभिमात्रे सर्वतो गृहीतं यूपं द्या॰ ॰णेति मन्त्रेण उ॰ति प्राञ्चं भूमौ निक्षिप्तं सन्तं तमधुनोर्ध्वं करोति ।

या तऽइति (६. ३) मिनोति ॥ ८॥ अवटमध्ये यूपस्य मूलं प्रक्षिपति प्रवेशयति।

अग्निष्ठा सम्प्रत्याहवनीयम् ॥ ९॥ तथा यूपमवटे मिनोति यथा अग्निष्ठा अश्रिः आहवनीयं सम्प्रति आहवनीयसंमुखी भवति · या अश्रिः पूर्वं सोपरा अक्ता तां चिह्नितां कृत्वाधुना तामाहवनीयसमीपे कुर्यात् । यूपैकादशिन्यां सर्वयूपानामग्निष्ठा आहवनीयां सम्प्रति कर्तव्याः ।

ब्रह्मवनि त्वेति (५. २७ ६. ३) पांसुभिः पर्यूहति ॥ १०॥ यूपावटं पूरयति ।

ब्रह्म दृꣳहेति (५. २७ ६. ३) मैत्रावरुणदण्डेन समन्तं त्रिः पर्यृषति ॥ ११॥ अध्वर्युर्मैत्रा॰ण्डेन तं पांसुभिः पूरितं गर्तं सर्वतस्त्रिः पर्यृषति परितः कुट्टनेन पांसूनवटेऽधः प्रवेशयति पिट्टयतीत्यर्थः ।

समम्भूमि कृत्वाद्भिरुपसिच्य विष्णोः कर्माणीति (६. ४) वाचयति यूपमन्वारब्धम् ॥ १२॥ तमवटं परिपिट्टनेन सम॰त्वा परितो वर्तमानया भूम्या समं कृत्वाद्भिर्लौकिकैरु[दकैरु]पसिच्य[२] यूप॒ब्धं कृतान्वारम्भं यजमानं वि॰यति । अत्र

१) ? ॰णं । तं ABC. Or are we to read: ॰णात्तं ? २) दकैरु deest AC. (in B. lacuna from १ to १७).

यूपमन्वारभस्वेत्यध्येषणा कार्या कुतः अथैवमभिपद्य वाचयतीति समानाया-मेव श्रुतौ (३.७.१.१७) सोमालम्भे श्रौदुम्बर्यालम्भे च तथा सूत्रणात् आचाराच्च · अनेकयजमानके सर्वेषां वाचनम् यूपान्वारम्भो गृहपतेरेव परार्थत्वात् ।

तद्विष्णोरिति (६. ४) चषालमीक्षमाणम् ॥ १३ ॥ यजमानं वाचयति अथ चषालमुदीक्षते तद्विष्णोरिति श्रुतत्वात् (३.७.१.१८) ईक्षमाणं वाचयतीति शाखान्तरात् · केचिदत्र चषालमीक्षस्वेति अध्येषणां कुर्वन्ति तदयुक्तम् श्रुतौ सूत्रे चादर्शनात् · तथा चापस्तम्बः तद्विष्णोरित्यग्रं प्रेक्षतऽइति । अनेकयजमानके सर्वेषां वाचनम् चषालेक्षणं तु परार्थत्वाद्गृहपतेरेव ।

परिवीयमाणायानुवाचयति ॥ १४ ॥ ततोऽध्वर्युः परिवीयमाणायानुब्रूहीति होतारं सम्बोधयति · आपस्तम्बः यूपाय परिवीयमाणायानुब्रूहीति सम्प्रेष्यति परिवीयमाणायानुब्रूहीति वेति · यूपायेत्यन्येष्वपि सूत्रेषु ।

त्रिगुणा त्रिव्यामा कौशी रशना तया नाभिमात्रे त्रिवृतं परिव्ययति परिवीरसीति (६. ६) ॥ १५ ॥ त्रिगुणरशना रज्जुर्भवति · तया रशनया रशनामध्यभागेन नाभिमात्रे प्रमाणाद्यजमाननाभिसंमिते (१. १०. १२) यूपस्य देशे यूपस्य नाभिमात्रे मध्यदेशे वा त्रिवृतं त्रिगुणं प्रदक्षिणं परिव्ययति व्येञ् संवरणे संवृणोति परिवेष्टयतीत्यर्थः · तथा चापस्तम्बः नाभिदघ्ने रशनया त्रिः प्रदक्षिणं यूपं परिव्ययति मध्यदेशे वेति · मानवे च परिवीरसीति नाभिदघ्ने त्रिवृता त्रिः परिव्ययत्युत्तरं प्रदक्षिणमिति । अनेकयजमानकेऽस्य मन्त्रस्योहः परीमौ यजमानौ परीमान्यजमानानिति ।

सꣳसृज्यान्यतरस्यामन्तं प्रवेशयति ॥ १६ ॥ परिव्ययणानन्तरं तां रशनां[1] संसृज्य तस्या रशनाया मध्ये विशिष्टाया अवशिष्टावुभौ प्रान्तौ परस्परं संसृज्य मिश्रीकृत्यान्यतरस्यां सिचि प्रान्ते अन्तं प्रवेशयति । अत्राह मनुः प्रादेशमात्रꣳ समस्याणीयाꣳसꣳ स्थवीयसीति · कठसूत्रे प्रादेशमात्रꣳ सम्प्रवेष्याणीयस्याꣳ स्थवीयसीमतिषज्येति · आपस्तम्बः अधो द्वरं[2] परिव्ययेद्वृष्टिकामस्योपरि द्वरमवृष्टिकामस्यैके यं कामयेत स्त्यस्य जायेतेति उपान्ते तस्य व्यतिषज्य न वेष्टयेत्

---

१) ? रज्वांतां A. रंवानां C. २) ? अधाद्वर° A. अध्याद्व° C.

यं कामयेत पुमानस्य जायेतेत्यान्तं तस्य प्रवेष्टयाणिमति स्थविमत्प्रवीयेति । अत उभयथा शाखान्तरे दर्शनात्सूत्रकृता अन्यतरस्यामिति सूत्रितम् · यूपस्य मध्यदेशे परिव्ययणपक्षे वाजपेययूपैकादशिन्यादौ निश्रेणीमारुह्य यूपस्य मध्ये परिव्ययणं कर्तव्यम् ।

यूपशकलमस्यामवगूहत्युत्तरेणाग्निष्ठां दिवः सूनुरसीति (६.६) ॥१७॥ अग्निष्ठामग्निमुत्तरेण अस्यां यूपे त्रिर्वेष्टितायां रशनायां यूपलं स्वरुमवगूहति अधोमुखं रशनायूपान्तराले प्रवेशयति · उत्तरेणाग्निष्ठां मध्यमे रशनागुणेऽवगूहत्युत्तमे वा सर्वेषु वा[1] द्वयोरधरयोरिति वाजसनेयकमित्यापस्तम्बः ।

बहुषु यथास्वम् ॥१८॥ एकादशिन्यश्वमेधादौ बहुषु यूपेषु सत्सु यथास्वं स्वरुमवगूहति यो [य]स्य यूपस्य स्वरुस्तं तस्मिन्नवगूहेत् · तस्माद्यदि यूपैकादशिनी स्यात्स्व७-स्वमेवावगूहेदविपर्यासमिति श्रवणात् (३.७.१.२२) एकादशानां वर्ग एकादशिनी यूपानामेकादशिनी यूपैकादशिनी · सा च यत्र पश्वेकादशिनी भवति तत्र विकल्पते · अतस्तां कदाचिद्भाविनीमङ्गीकृत्याह यदि यूपैकादशिनी यूपानामेकादशकः स्यात्ततः स्वं-स्वमेव यस्मिन्यूपे निष्पद्यमाने यः शकलो गृहीतः स एव तस्मिन्नवगूहनीयः अविपर्यासम् अन्यदीयस्यान्यं प्रति नयनं विपर्यासः तमकुर्वन् ।

उपावीरसीति (६.७) तृणमादाय तेन पशुमुपस्पृशत्युप देवानिति (६.७) ॥१९॥ स्तृतबर्हिषस्तृणादन्यद्दर्भतृणमादाय तेन तृणेन पुरस्तात्प्रत्यङ्मुखमवस्थितं पशुमालभते · काठके उप देवानिति पशुमुपाकरोति प्रत्यङ्मुखमिति · आपस्तम्बोऽपि पशूनुपस्थापयन्ति कूटकर्णकाणखण्डबण्डश्लोणासप्तशफवर्जं यद्यङ्गहीनः स्यादङ्गतो वा विरूप्याप्येकेषां वैष्णवी७ सारस्वतीं बार्हस्पत्यामिति बहुत्वात्प्रयोजयेदिति[2] प्रकृत्य पुरस्तात्प्रत्यञ्चं पशुमुपाकरोतीति । किंजातीयं पशुमित्याकाङ्क्षायामाह ·

छागं मन्त्राम्नानात् ॥२०॥ अजं पशुमुपाकरोति · होता यक्षदश्विनौ छागस्येत्यादिषु (२१.४१) मन्त्रेषु छागस्याम्नानात् · तथा अग्नीषोमाभ्यां छागस्य

---

1) °न्तरेमे वा मससवेषु वा C. °न्तमेवस सर्वेषु A. 2) ? Thus AB. बहुत्वाप्रयोत्तये° C.

वपायै मेदसोऽनुब्रूहीति (३. ८. २. २६) · यदि च छागो यागसाधनं भवति तदा अयं मन्त्रः संगतार्थो भवति नान्यथा । पुनः कीदृशम् ·

पन्नदम् ॥ २१ ॥ पन्नदो ज्ञातदन्त इति निगमेषूक्तः (११) ।

अव्यङ्गम् ॥ २२ ॥ विगतमङ्गं चक्षुःकर्णादिकं यस्यासौ व्यङ्गः · अन्यूनाङ्गम् · शाखान्तरात् ।

यथामन्त्रवर्णं प्रोक्षणे ॥ २३ ॥ प्रोक्षणमन्त्रे अनु त्वा माता मन्यतामित्यस्मिन् (६. १) यादृशः पशुरभिहितः तादृशं कुर्यात् मातृमन्तं पितृमन्तं भ्रातृमन्तं चेत्यर्थः तादृशस्य मन्त्रे प्रतीयमानत्वात् ।

नाचोदितत्वात् ॥ २४ ॥ नैतदेवम् · कुतः अचोत्वात् न ह्येवंविधा चोदनास्ति[1] मातृमन्तं पितृमन्तं भ्रातृमन्तं चोपाकुर्यादिति · तस्मान्नायं नियमः ।

अग्निं मन्थत्या होमात्करोति ॥ २५ ॥ उपाकरणानन्तरमग्निं मन्थति · तत्र च शाकलादानादि अग्नावग्निरित्याहुतिहोमान्तं करोति · वैश्वदेवपर्वोक्तमन्थनधर्मप्रापणार्थमा होम° तीत्युक्तम् अन्यथा अनामधेयत्वान्मन्थनमात्रं स्यात् ।

उपाकरणमन्थने वा ॥ २६ ॥ विकल्पेन भवतः (३. ७. ३. ७) · तृणेन पशोरुपस्पर्शनं यत्प्रागुक्तम् तदुपाकरणम् · तस्य पुनर्वचनं मन्थनेन सह संनियोगार्थम् तेन संयुक्तयोरेवानयोर्विकल्पः यदि भवतस्तदा उभे भवतः न त्वनयोरेकं भवतीति ।

द्विगुणरशनया द्विव्यामया कौश्या पाशं कृत्वान्तराशृङ्गमभिदक्षिणं बध्नात्यृतस्य त्वेति (६. ८) ॥ २७ ॥ द्विगुणा चासौ रशना च द्विगुणरशना पशुबन्धनार्था रज्जुः · तया कौश्या दर्भमय्या पाशं नागपाशं कृत्वा अन्तरङ्गं शृङ्गयोरन्तराले पशुं बध्नाति कथम् अभि॰णाम् दक्षिणशृङ्गसंमुखं पाशं प्रतिमुञ्चेदित्यर्थः ।

देवस्य त्वेति (६. १) यूपे ॥ २८ ॥ यूपेन पशुं नियुनक्ति बध्नाति · दक्षिणे ऽर्धशिरसि[2] पाशेनाक्ष्णया प्रतिमुच्य धर्षा मानुष इत्युत्तरतो[3] यूपस्य नियुनक्तीत्यापस्तम्बः ।

ऐन्द्राग्नः सौर्यः प्राजापत्यो वा ॥ २९ ॥ अयं निरूढपशुः । त्रयो विकल्पाः ।

---

1) नोद° Ss. 2) ऽधःशिरसि Roer, Taitt Saṃh. pag. ५११. 3) मानुषानित्यु° ibid.

यमिच्छेत् ॥ ३० ॥ एतेषां त्रयाणां मध्ये यमिच्छेत् यं यद्देवतं कर्तुमिच्छेत् तं यावज्जीवं कुर्यादित्यादिविकल्पोऽयम् प्रथमप्रयोगे य आरब्धः स यावज्जीवं कर्तव्य इत्यर्थः न प्रतिप्रयोगमिच्छया । पितृभूत्याचार्यास्तु प्रयोगस्येच्छाविकल्पार्थमेवेदं[1] सूत्रं व्याख्यातवन्तः · व्याख्यान्तरं च कृतवन्तः · तथा हि · सवनीयानूबन्ध्ययोर्निरूढस्य चाग्नीषोमीयप्रकृतित्वं वक्ष्यति (१०. ३२) अग्नीषोमीयात्पशुष्विति अत्र ये त्वन्ये पशवस्तेषां निरूढप्रकृतित्वमुच्यते यमिच्छेत् यमिच्छेत्पशुं कर्तुं तं निरूढधर्माणां कुर्यात् चोदनासामान्यात् लिङ्गं च सौत्रामण्यां स्विष्टकृत्प्रैषे आज्यभागयोरुपलक्षणम् ।

अग्न्यस्त्वेति (६. १) पशुं प्रोक्षणीभिः प्रोक्षति ॥ ३१ ॥ संस्कृताभिः · अत्र च पूर्वं ब्रह्मन्हविः प्रोक्षिष्यामीति ब्रह्माणमामन्त्रयेत् ततस्तेन प्रोक्ष यज्ञमित्यनेनानुज्ञातः पशुं प्रोक्षेत् ।

अपां पेरुरित्यास्य (६. १०) ऽउपगृह्णाति ॥ ३२ ॥ पशोर्मुखस्याधस्तात्संलग्ना एव प्रोक्षणीर्धारयति पानार्थम् · तदेनं सर्वतो मेध्यं करोतीति (३. ७. ४. ६) ततश्चोपग्रहणं पायनार्थम् तथा चाश्वमेधे श्रूयते (१३. २. ७. १२) अथोपगृह्णात्यग्निः पशुरासीदित्यादौ · ततश्च तृडभावेऽपि पायनीयः ।

आपो देवीरित्यधस्तादुपोक्षति (६. १०) ॥ ३३ ॥ पशोरुदरहृदयप्रदेशे उपोक्षति प्रोक्षति ॥ ॥ तृतीया कण्डिका ॥ ३ ॥

इध्मप्रैषादि करोत्या प्रयाजेभ्यः ॥ १ ॥ होतारमामन्त्र्य होतृषदनं सादयित्वाग्नये समिध्यमानायेतीध्म॰दि इध्मप्रैषादारभ्य प्रयाजहोमपर्यन्तं प्राकृतं कर्म करोति · विकृतावसरे प्राकृतकर्मप्रवृत्त्यर्थमिदमुक्तम् । तत्र विशेषमाह ·

उत्तराघारमाघार्य पशुं पूर्वं समनक्ति ललाटांसश्रोणिषु सं तऽइति (६. १०) प्रतिमन्त्रम् ॥ २ ॥ उत्तराघारहोमानन्तरं पूर्वं ध्रुवासमञ्जनादर्वागेव प्रथमं पशुं ल॰णिषु ललाटे भाले अंसयोर्दक्षिणोत्तरस्कन्धयोः श्रोण्योर्दक्षिणोत्तरकट्योश्च जुहूस्थेनाज्येन जुह्वैव म्रक्षयति · तत्रासयोः श्रोण्योश्च मन्त्रावृत्तिः · ततो ध्रुवासमञ्जनम् स्रुक्सादनं च · अनेकपाशुके प्रतिपशु ललाटांसश्रोणिसमञ्जनम् ।

[1] गमिच्छा॰ AB. (in C. lacuna, to ४. ३.)

प्राकृतं च विकृताविित्यनेन न्यायेन (१.५.४) प्राकृतं ध्रुवासमञ्जनं वैकृतात्पशुसमञ्जनात्पूर्वं मा भूदिति प्रत्ययः कृतः सूत्रकृता पशुं पूर्वमङ्क्तीति[१]· अत एव यत्र वचनाभावः तत्र प्राकृतवैकृतकर्मसंनिपाते प्राकृतं पूर्वं भवतीति तद्यथा पित्र्यायामिडानन्तरं पिण्डदानात्प्राङ्मार्जनदक्षिणादानादि यथा च वैश्वदेवादौ पर्वणि हविरासादनान्तरं प्रागग्निमन्थनाद्धविरालम्भनोदकस्पर्शनानि यथा च तृणानुप्रहरणानन्तरं प्राग्वाजिनयागादात्मा[लम्भोदका]लम्भौ यथा सवनीयेषु निर्वापानन्तरमेव हविषां प्रोक्षणाभिवासनान्तं प्राक्प्रचरणीहोमादिति। अनेकयजमानके पशुश्रोण्योः समञ्जनमन्त्रे ऊहः सं यज्ञपतीऽआशिषेति द्वियजमानके सं यज्ञपतय आशिषेति बहुषु।

प्रवृत्य होतारमाश्राव्याहाग्निर्ह दैवीनां विशां पुरएतायं यजमानो मनुष्याणाम् सुन्वन्निति सुत्ये तयोरस्थूरि गार्हपत्यं दीदयच्छतम् हिमा द्वा यू राधाम्सीत्सम्पृञ्चानावसम्पृञ्चानौ तन्व इति (३.७.४.१०-११)॥३॥ होतारं प्रवृत्य प्रकृतिवदाश्रावणपूर्वकमग्निर्देवो दैव्यो होतेति होतृवरणं कृत्वा पुनराश्राव्य अग्निर्ह दैवीनामित्यमुं मन्त्रमसम्पृञ्चानौ तन्व इत्येवमन्तमध्वर्युर्ब्रवीति· अत्र मन्त्रे यजमानो मनुष्याणामित्यत्र सुत्येऽहनि ऋतुयाज्यार्थे वरणे सुन्वन्यजमानो मनुष्याणामिति प्रयोगः· सुन्वन्मनुष्याणामित्येतावदेवेति केचित् तन्नोपपन्नम् सर्वेषु शाखान्तरसूत्रेषु सुन्वन्यजमान इति प्रयोगस्य दर्शनात्· तथा चाप° दैवं च मानुषं च होतारौ वृत्वा पुनराश्राव्य मैत्रावरुणं प्रवृणीतऽइति। अनेकयजमानके चास्य मन्त्रस्य विपरिणामः इमौ यजमानौ° तेषामस्थूरि° त्रयो यवो राधाम्सीत्सम्पृञ्चाना असम्पृञ्चानास्तन्व इति द्वियजमानेके इमे यजमाना° तेषामस्थूरि° चत्वारो यवः पञ्च यवः[२] षड्यव इत्यादि यजमानसंख्यात एकाधिकमुक्त्वा[३] राधाम्सीत्सम्पृञ्चाना असम्पृञ्चानास्तन्व इनि बहुयजमानके।

मैत्रावरुणाय दण्डं प्रयच्छति मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा प्रयच्छामीति· ॥४॥ वरणानन्तरमध्वर्युर्मैत्रा°ण्डं समर्पयति मित्रावरुणयोस्त्वेति सूत्रपठितेन मन्त्रेण उपविश्य प्रयच्छति· शाखान्तरे यजमानः प्रयच्छति।

---

१) See pag. ८४, ११. २) पञ्च यवः is wanting in AB. ३) एकाविधमु° ABC.

औदुम्बरं यजमानमुखमात्रम् ॥ ५ ॥

दीक्षितदण्डं सोमे ॥ ६ ॥ सोमयागे होतृमैत्रावरुणावरणानन्तरमेवाग्नीषोमीये पशौ अत एव दीक्षितग्रहणादध्वर्युः प्रयच्छतीति गम्यते अन्यथा स्वदण्डं सोम इत्येवमेवावक्ष्यत् । सोमे दण्डप्रदानस्य कालान्तरमाह

क्रीते वा ॥ ७ ॥ क्रीते वा सोमे सोमविक्रयिणः सकाशाद्धिरण्यादानानन्तरमेव अनेनैव मन्त्रेण चाग्नीषोमीयमध्ये । दण्डस्य प्रतिपत्तिरुक्ता मानवे विरम्यातिप्रणीते तूष्णीं दण्डमवदधातीति आश्वलायनसूत्रेऽपि समाप्य प्रैषमग्नौ दण्डमनुप्रहरेदनवभृथेऽवभृथेऽन्यत्रेति ।

एकादश प्रयाजाः ॥ ८ ॥ अत्र पशौ एते भवन्ति ।

अनुयाजाश्च ॥ ९ ॥ अत्रेयं प्रयाजानुयाजानामेकादशसंख्या उत्पन्नसंयोगिनी ततश्चोदकप्राप्तेषु प्रयाजानुयाजेषु श्रूयते अतोऽभ्यासेनैव पूरणीया तत्र प्रयाजानां पञ्चमाभ्यासेन संख्यापूरणम् अनुयाजानां मध्ये द्वाःप्रभृतीनां नाराशंसान्तानां द्वितीयस्य नराशंसस्याभ्यासः स वनस्पतिप्रभृतीनामन्तिमाभ्यास इति ततश्च द्वाःप्रभृतीनां पञ्चमादीनां पञ्च मम न तस्येत्येवानुमन्त्रणम् पूर्वं-पूर्वं वाभिक्राममिति (३.२.२१) पक्षे पञ्चम एव स्थाने होमः अनुयाजेषु द्वितीयादीनां नराशंसान्तानां द्वितीयस्थाने होमः वनस्पत्यादीनां त्रयाणां तृतीये स्थान इति । तत्र आपस्तम्बसूत्रे विशेषः तिष्ठति पशावेकादश प्रयाजान्यजति समिद्धः प्रेष्येति प्रथमं सम्प्रेष्यति प्रेष्य-प्रेष्येतीतरांश्चतुर्थाष्टमयोः प्रतिसमानीय दशैकादशायाज्यमवशिनष्टि तान्यजमानः प्राकृतैरादितश्चतुरोऽनुमन्त्र्य चतुर्थस्यानुमन्त्रणेन उरःप्रभृतींस्त्रीनुत्तमेन शेषं प्रत्याक्रम्य जुह्वा स्वरुस्वधिती अनक्तीति । तत्र प्रयाजानामिध्मस्तनूनपान्नराशंस इडो बर्हिर्द्वार उषासानक्ता दैव्या होतारा तिस्रो देवीस्त्वष्टा वनस्पतिः स्वाहाकृतय इत्येता आप्रीदेवता इत्युक्तत्वादिदं समिद्ध्यः इदं तनूनपाते नराशंसाय इदमिड्भ्यः इदं बर्हिषे इदं द्वार्भ्यः इदमुषासानक्ताभ्याम् इदं दैव्याभ्यां होतृभ्याम् इदं तिसृभ्यो देवीभ्यः इदं त्वष्ट्रे इदं वनस्पतये इदं स्वाहाकृतिभ्य इति अनुयाजादीनां तु इदं देवाय बर्हिषे इदं देवीभ्यो द्वार्भ्यः इदं देवीभ्यामुषासानक्ताभ्याम् इदं देवीभ्यां जोष्ट्रीभ्याम् इदं देवीभ्यामूर्जा-

ऊतिभ्याम् इदं देवाभ्यां देव्याभ्याᳫं होतृभ्याम् इदं देवीभ्यस्तिसृभ्यस्तिसृभ्यो देवीभ्यः इदं देवाय नराशᳫंसाय इदं देवाय वनस्पतये इदं देवाय बर्हिषे इदं देवायाग्नये स्विष्टकृतऽइति ।

समैत्रावरुणे प्रेष्येत्याह यजस्थाने वचने ॥ १० ॥ मैत्रावरुणसंयुक्ते पशुसोमादौ कर्मणि यजस्थाने प्रेष्येत्याह वचने सति यत्र मैत्रावरुणस्य प्रैषाध्याये प्रैषवचनमस्ति तत्र · यथा आज्यभागयोरग्नये प्रेष्य सोमाय प्रेष्येति समिधो यजेत्यत्र समिधः प्रेष्येति देवेभ्यः प्रेष्येति च · समैत्रावरुणेऽपि वचनाभावे पत्नीसंयाजादौ यजेत्येव न प्रेष्येति ।

दशेष्ट्वा प्रयाजानाह शासमाहरेति ॥ ११ ॥ शासहस्तं विशसितारं[1] प्रत्यध्वर्युराह · असिः शासः कट्टारिका द्रष्टव्या सामर्थ्यान्न खड्ग इति हरिस्वामिनः (३.८.१.४) ।

स्वरुमादायाक्तोभौ जुह्वग्रे ताभ्यां पशोर्ललाटमुपस्पृशति घृतेनाक्ताविति (६.११) ॥ १२ ॥ विशसित्रा[2] दत्तं शासं गृहीत्वा स्वयमेव यूपात्स्वरुमादाय तावुभावसिस्वरू जुह्वा अग्रे प्रणालिकायां[3] घृतेनाक्ता ताभ्यां पशोᳫंशति आलभते ।

स्वरुमवगुह्यासिं प्रयच्छन्नाहैषा ते प्रज्ञाताश्रिरस्त्विति (३.८.१.४) ॥ १३ ॥ स्वरुं यथास्थानेऽवगुह्य शमित्रे असिं प्रयच्छन्सन् एषाᳫंस्त्विति ब्रवीति अश्रिर्धारा एषा प्रज्ञाता चिह्निता भवतु ते तव · यथायं पशुरक्तः पुनरेनयैव वपार्थमभिसंधास्यामीति[4] · शमित्रे स्वधितिं प्रयच्छन्नाह शमितरेषा तेऽश्रिः स्पृष्टास्त्वित्याप॰ अक्तया धारया शृतस्यावद्यति पशुमितरया विशास्तीति आपस्तम्बे मानवे च असेः कट्टारिकाया धाराद्वयम् तत्रैका अक्ता अपरानक्ता भवति तथा सत्ययं विवेक इति ।

सादयित्वा स्रुचौ चात्वालमुत्तरेण शामित्रायोल्लिखति ॥ १४ ॥ जुह्वप्रभृती स्वस्थाने आसाद्य चात्वालादुत्तरस्यां दिशि शाᳫंखति शामित्राग्नेः स्थापनार्थमुल्लिखति उल्लेखनं चाधिकम् स्मार्ताः पञ्च भूसंस्काराः पूर्वं प्रवर्तन्तऽएव · शामित्रः पशुश्रपणोऽग्निरुच्यते । आपस्तम्बः अभिपर्यग्निकृते देशऽउल्मुकं निदधाति स शामित्र इति ॥ ॥ चतुर्थी कण्डिका ॥ ४ ॥ ॥

---

[1] विशासि॰ ABC. [2] विशासि॰ ABC. [3] Thus C. प्रनालि॰ AB. [4] पुनरेवये॰मभिनिधा॰ BC. पुनरेव॰ A pr. m.

पर्यग्नयेऽनुवाचयति ॥ १ ॥ अध्वर्युः पर्यग्नयेऽनुब्रूहीत्यनुवाचनं कारयति मैत्रावरुणेन · परि सर्वतोऽग्निर्यस्य स पर्यग्निः पशुः तस्मै अथवा वपापरिगतो ऽग्निः पर्यग्निः तस्मै इति वा ।

आहवनीयोल्मुकमादायाग्नीध्रस्त्रिः समन्तं पर्येति पश्चाद्यशामित्रदेशयूपचात्वालाहवनीयान् ॥ २ ॥ समन्तं सर्वतः प्रदक्षिणं पश्चाद्यान् पर्येति परितो गच्छति ।

आज्यपशुशामित्रान्वा ॥ ३ ॥ अथवा आज्यानि जुह्वादिस्थानानि पशुः शामित्रश्च एतानेव पर्येति[1] न पूर्वसूत्रोक्तान्सर्वान् · वा विकल्पार्थः ।

प्रतिप्रास्योल्मुकं तावत्प्रतिपर्येति ॥ ४ ॥ उल्मुकं प्रतिप्रास्य आहवनीयमध्ये प्रतिप्रक्षिप्याग्नीत्तावदिति त्रिरेव प्रतिपर्येति प्रतेः प्रयोगात् अप्रदक्षिणं त्रिः पश्चादीन्परिगच्छतीत्यर्थः पुनरपीतरथावृत्त्यर्थमेकवारं प्रदक्षिणं पर्येति ।

पुनरादायोदङ् प्रतिपद्यते ॥ ५ ॥ आग्नीध्र एव पुनस्तमेवोल्मुकमादाय उदङ्मुखः प्रतिपद्यते अग्रतो गन्तुं प्रारभते ।

पशुश्चान्वक् ॥ ६ ॥ पशुस्तमाग्नीध्रमन्वक् अनु पश्चादञ्चतीत्यन्वक् पृष्ठतो ऽनुगच्छतीत्यर्थः · शमितैनं कण्ठे बद्ध्वा नयतीति श्रुतेः शमिता पशुरशनां मस्तकादवतार्य गले बद्ध्वाग्नीधमनु नयति ।

प्रतिप्रस्थातान्वारभतऽएनं वपाश्रपणीभ्यां कार्ष्मर्यमयीभ्यां विशाखाविशाखाभ्याम् ॥ ७ ॥ प्र॰ता शमित्रोदङ्नीयमानं पशुं वपाभ्यामन्वा॰ · वपा श्रप्यते आभ्यामिति वपाश्रपण्यौ · श्रीपर्णीवृक्षावयवभूताभ्याम् · द्विशृङ्गैकशृङ्गाभ्यामिति काठके द्विशूलैकशूलाभ्यामित्यापस्तम्बः · अतश्च एका विशाखा द्विशृङ्गा द्विशूला मेथ्याकारा सकर्णकेत्यर्थः द्वितीया अविशाखा ऋज्वी तता[2] एकशृङ्गा एकशूला अकर्णकेत्यर्थः ।

तमध्वर्युः ॥ ८ ॥ तं पशोः कृतान्वारम्भं प्रतिप्रस्थातारमध्वर्युः अन्वारभते ।

यजमानोऽध्वर्युम् ॥ ९ ॥ प्रतिप्रस्थातुः कृतान्वारम्भमध्वर्युम् ।

वेदितृणेऽअध्वर्युरादायाश्राव्याहोपप्रेष्य होतर्हव्या देवेभ्य इति ॥ १० ॥ स्तृताया एव वेदेर्द्वे तृणेऽआदायाश्राव्योपप्रेष्य होतरित्येवमादिकं प्रैषं मैत्रावरुणं प्रत्याह ।

---

१) ? पर्यग्निकरोति ABC. २) ? Thus C. लता AB.

रेवति यजमानऽइति (६. ११) वाचयति ॥ ११ ॥ यजमानम् । अनेकयजमानके एकोऽन्वारभते वाचनं सर्वेषाम् । ब्रूतं ब्रूतेति च यथायथमध्येषणा । अथ कठसूत्रे विशेषः प्रमुच्य यूपात्पशुं यत्युल्मुकहस्तोऽग्रत आग्नीध्र उत्तरस्मिन्वेद्यन्ते पशुमवस्थितं द्विशृङ्गिकशृङ्गाभ्यां वपाश्रपणीभ्यां मुखमभिनिधायाश्राव्याहोपप्रेष्य होतर्हव्या देवेभ्य इति संचरेण निष्क्रम्य रेवति प्रेत्यनुमन्त्रयतऽइति । आप॰सूत्रे च वपाश्रपणीभ्यां पशुमन्वारभेतेऽध्वर्युर्यजमानश्चाश्राव्य प्रत्याश्राविते सम्प्रेष्यत्युपप्रेष्य होतर्हव्या देवेभ्य इति प्रास्माऽअग्निं भरत स्तृणीत बर्हिरिति होतुरभिज्ञायाहवनीयादुल्मुकमादायाग्नीध्रः पूर्वः प्रतिपद्यते शमिता पशुं नयत्युरोऽन्तरिन्नेत्यन्तरा चात्वालोत्करावुदञ्चं पशुं नयन्तीति ।

शामित्रं नातीयात् ॥ १२ ॥ अत्र शामित्रशब्देन तस्य स्थानं लक्ष्यते । अध्वर्युः प्रतिप्रस्थातुः कृतान्वारम्भः पशुमनुगच्छन्सन् शा॰थात् अतिक्रम्य न गच्छेत् शामित्रसमीपऽएव तिष्ठेत् ।

शामित्रेऽग्निं निदधाति ॥ १३ ॥ ततोऽध्वर्युस्तमग्नीद्धस्तस्थमुल्मुकाग्निं शामित्रे स्थापयति ।

निर्मन्थ्यमेके ॥ १४ ॥ एके शाखिनो निर्मन्थ्यमग्निं शामित्रे निदधति न प्रकृतमुल्मुकम् । अन्यमेवाग्निं निर्मथ्य तस्मिन्नेनत् श्रपयेयुरिति (३. ८. १. ७) श्रुतत्वात् । अतो निर्मन्थ्यस्य श्रपणार्थत्वादस्मिन्पक्षे आहवनीयादुल्मुकाहरणं न भवति । यत्त्वग्निमेवैतत्पुरस्तात्करोतीत्यादि (३. ८. १. १) तदर्थवादमात्रमिति पितृभूतिः ।

पश्चात्तृणमुपास्यति वर्षो वर्षीयसीति (६. ११) ॥ १५ ॥ शामित्रस्य पश्चात्प्रागग्रं तृ॰स्यति हस्तस्थयोर्वेदितृणयोर्मध्येऽन्यतरत्तृणं तत्र प्रतिक्षिपति । अत्रानेकयजमानके मन्त्रस्योहः यज्ञे यज्ञपती धा इति द्वयोः यज्ञपतीन्धा इति बहुषु । अनेकयजमानके पश्वन्वारम्भमेक एव करोति वाचनं सर्वेषाम् ब्रूतं ब्रूतेति प्रैषः ।

तस्मिन्नेनं निघ्नन्ति प्रत्यक्शिरसमुदक्पादम् ॥ १६ ॥ तस्मिन् तृणे एनं पशुं नितरां मारयन्ति ।

प्राक्शिरसं वा ॥ १७ ॥ उदक्पादमिति तु स्थितमेव । अतश्च शिरसो दिङ्नियमेऽपि पुरुषस्योदक्पादता कर्तव्या वचनात् ।

संगृह्य मुखं तमयन्त्यवाश्यमानम् ॥१८॥ श्वासरोधो यथा स्यात्तथा दृढं मुखस्य ग्रहणं कृत्वा अवाश्यं यथा मार्यमाणः शब्दं न करोति तथा तमयन्ति तमु आकाङ्क्षायाम् पशुर्हि विरुद्धप्राणः सन् श्वासमाकाङ्क्षति ताम्यति ताम्यन्तं प्रयुञ्जते तमयन्ति तथा कुर्वन्ति यथा स ताम्यति श्वासरोधं कृत्वा मारयन्तीति तात्पर्यार्थः।

वेष्केण वा ॥१९॥ अथ वा वेष्केण तमयन्ति वेष्को गलावेष्टकः गलं वावेष्ट्य तमयन्ति संज्ञपयन्ति मारयन्ति।

एत्याहवनीयमावृत्यासते ॥२०॥ पशुमारणदेशाच्चात्वालोत्करावन्तरेण आहवनीयसमीपे प्रत्यागत्य आहवनीयमभिमुखा आवृत्य प्रदक्षिणमावर्तनं कृत्वा पराङ्मुखा आसते अध्वर्युयजमानप्रतिप्रस्थात्राग्नीध्राः।

संज्ञपयान्वगन्नित्येव ब्रूयात् (३. ८. १. १५) ॥२१॥ इममेव प्रैषम् नार्थलक्षणमन्यलोकप्रसिद्धं ब्रूहि मारयेत्यादिकमित्येवकारार्थः हे शमितस्त्वमेनं पशुं संज्ञपय मारय अयं पशुः संज्ञप्तः सन्नन्वगन् देवानन्वगच्छदिति[1] प्रैषार्थः अन्वगमतामिति पशुद्वये ऊहः अन्वगमन्निति बहुषु पशुषु।

स्वाहा देवेभ्य इति (६. ११) जुहोति ॥२२॥ ततोऽध्वर्युः सकृद्गृहीतमाज्यं वसाहोमहवन्या समित्पूर्वकमाहवनीये जुहोति इदं देवेभ्य इति त्यागः तद्यत्रैनं निविध्यन्ति तत्पुरा संज्ञपनाज्जुहोतीति (३. ८. १. १६) श्रुतेः।

संज्ञप्तः पशुरिति प्रोक्ते शेतां नु मुहूर्तमित्याहासोमे ॥२३॥ शमिता प्रोक्ते अध्वर्युरसोमे सोमादन्यत्र निरूढे पशौ शेतां नु मुहूर्तमिति ब्रवीति यतो निरूढप्रकरण एव श्रूयते (११. ८. ३. ५) तस्माद्गुञ्जयतीति। संज्ञप्तौ पशू इति पशुद्वये संज्ञप्ताः पशव इति बहुषु पशुषु। निरूढविकारेषु हविर्यज्ञविधपशुषु शेतां नु मुहूर्तमिति भवत्येव सवविधेष्वग्नीषोमीयसवनीयानूबन्ध्यादिषु न भवति सौत्रामण्यां त्रिपशोर्हविर्यज्ञविधत्वे शेरतां नु मुहूर्तमित्यूहः सपाशुकेषु वरुणप्रघासेषु [च] बहुवचनम् पशुद्वये शयातां नु मुहूर्तमिति।

देवेभ्यः स्वाहेति (६. ११) जुहोति ॥२४॥ ततोऽध्वर्युर्वसाहोमहवन्यां सकृद्गृहीतमाज्यं गृहीत्वाहवनीये समिधं विना जुहोति त्यागस्तु पूर्ववत् (२२)।

---

1) नुगच्छन्निति BA. C pr. m. नुगच्छदि C sec. m.

न वेति जुहुयात् ॥२५॥ एते परिपशव्याहुती (२२ २४) जुहुयात् न वा ।

वपाश्रपणीभ्यां नियोजनीं चात्वाले प्रास्यति माहिर्भूरिति (६.१२) ॥२६॥ नियोजनीं पशुबन्धनरज्जुं द्विगुणरशनाम् · रशनाबहुत्वे माहिर्भूत मा पृदाकुरिति द्वित्वे च माहिर्भूतं मा पृदाकुरित्यूहः अहिपृदाकुशब्दौ न विपरिणाम्येते उपमाया अनङ्गत्वात् · अङ्गभूतं हि प्रकाशयितव्यं च नोपमाङ्गभूतेति · भूरित्येतत्तु रशनापरम् अतो विपरिणाम्यत एव ।

प्रतिप्रस्थातः पत्नीमुदानयेत्याह ॥२७॥ अध्वर्युः ।

नेष्टरिति सोमे ॥२८॥ सोम इति सोमान्तर्भूतपशुष्वेव सोमाङ्गभूतेष्वग्नीषोमीयसवनीयेषु · यतस्तत्रैव नेष्टा विद्यते ॥ ॥ पञ्चमी कण्डिका ॥५॥

पत्नीजनहस्तां वाचयति नमस्त आतानेति (६.१२–१३) ॥१॥ पत्नीजनः पादनेजनार्थ उदककलशः पादग्रहणमवयवप्रदर्शनार्थम् मुखाद्यवयवशोधनार्थो जलकलशो हस्ते यस्याः · प्रतिप्रस्थाता नेष्टा वा · गार्हपत्यसमीपात् · पशुशोधनाय । अनेकपत्नीके एकैव पत्नीजनहस्ता वाचनं च सर्वासाम् संस्कारत्वात् ।

पशोः प्राणाञ्छुन्धति पत्नी ॥२॥ पशुसमीप उपविश्य तस्य मृतस्य मुखादीनि प्राणायतनानि अद्भिः स्पृशति । तान्येवाह ·

मुखं नासिके चक्षुषी कर्णौ नाभिं मेढ्रं पायुं पादान्त्संहृत्य वाचं ते शुन्धामीति (६.१४) प्रतिमन्त्रम् ॥३॥ मेढ्रं शिश्नं प्रजननेन्द्रियम् पायुर्गुदः · नासिकयोः चक्षुषोः कर्णयोश्च भेदेनोपस्पर्शनम् युगपदशक्यत्वात् भेदे च मन्त्रावृत्तिः · पादान्संहृत्य चतुरोऽप्येकत्र कृत्वा ।

शेषेण यजमानश्च शिरःप्रभृत्यनुषिञ्चतः ॥४॥ पत्नीजनशेषेण · चकारादध्वर्युश्च · अथ या आपः परिशिष्य° षिञ्चत इति (३.८.२.७) श्रुतत्वात् काण्वानां चाध्वर्युश्च यजमानश्चेति पठ्यते · तेन चकारेणाध्वर्युः समुच्चीयते · अनेकयजमानके चैक एवानुषेचनं करोति परार्थत्वात् । तत्र शिरसो मन्त्रमाह ·

मनस्त इति (६.१५) शिरः ॥५॥ अनुषिञ्चतः · विलिङ्गत्वात्तस्य विनियोग उक्तः वाक्त इत्यादिमन्त्राणां लिङ्गादेव विनियोगः सिद्ध इति सूत्रकृता नोपदिष्टः ।

यत्ते क्रूरमित्यङ्गानि (६.१५) ॥६॥ सर्वाणि · विलिङ्गत्वादस्यापि विनियोग उक्तः ।

शमक्तोऽस्य इति (६.१५) पश्चात्पशोर्निषिञ्चतः ॥७॥ पशोः पश्चाद्भागे जघनप्रदेशे पान्नेजनशेषमुभावपि निनयतः · निनयनस्य पशुसंस्कारबाह्यत्वऽएव पश्चाद्भागे निनयनमिति । अनेकपशुषु प्राणशोधनादि पश्चात्पशोर्निषेकान्तमेकैकस्य संस्कारस्यैतावत्त्वात् ।

उत्तानं पशुं कृत्वाग्रेण नाभिं तृणं निदधात्योषधऽइति (६.१५) ॥८॥ शेषनिनयनानन्तरमध्वर्युः पशुमुत्तानं कृत्वा नाभेरग्रतोऽङ्गुलचतुष्टयं त्यक्त्वा ओषधऽइति मन्त्रेण प्रागग्रं तृणं निदधाति · नाभेरग्रतो वपायाः स्थानम् ।

स्वधितऽइति (६.१५) प्रज्ञातयाभिनिधाय छित्त्वाग्रऽ सव्ये कृत्वा दक्षिणेन मूलमुभयतोऽनक्ति लोहितेन रक्षसामिति (६.१६) ॥९॥ प्रज्ञातया प्रस्तुतया कृतचिह्नया असिधारया अभिनिधाय तृणस्योपरि असिधारां निधाय तूष्णीं सतृणामुदरत्वचं छित्त्वा तिर्यक्पाटयित्वा तृणाग्रं यत्पृथग्भूतं तत्सव्ये हस्ते कृत्वा दक्षिणहस्तेन तृणमूलं द्विगुणीकृत्योभयतोऽग्रे मूले च लोहितेन छेदनस्थानऽउत्पन्नेन पशोः रुधिरेणानक्ति अक्तयति अथवा उभयत इत्यन्तर्बहिश्च तृणं लोहितेनानक्ति · अत्राहापस्तम्बः स्वधितिना पार्श्वतस्तिर्यगाच्छ्यतीति । असेर्हि धाराद्वयं भवति तयोर्मध्ये या पूर्वं जुहूये अक्ता एषा ते प्रज्ञाताश्रिरस्त्विति च शमितारं प्रत्युक्तम्[1] (४.१२–१३) अधुना तयैव कृतचिह्नया घृताक्तया असिधारयाभिनिधानं कर्तव्यम् नानक्तया द्वितीयया पार्श्वगतया · तथा चोक्तं मानवे आपस्तम्बे च अक्तया शृतस्यावद्यत्यनक्तया विशसतीति ।

निरस्तमित्यपास्यति (६.१६) ॥१०॥ तद्रुधिराक्तं तृणमूलमुत्करे प्रक्षिपति · तत उदकोपस्पर्शनं करोति मन्त्रस्य रक्षोवाचित्वात् ।

इदमहमित्यभितिष्ठति (६.१६) यजमानः ॥११॥ तदुत्करेऽध्वर्युणा प्रक्षिप्तं रुधिराक्तं तृणमूलमभि॰ति तस्योपरि तिष्ठति पादेनाक्रामति · अत्राप्युदकोपस्पर्शनं यजमानेन कार्यम् मन्त्रस्य रक्षोवाचित्वात् · अनेकयजमानके त्वेक एव तृणमभितिष्ठति क्रत्वर्थत्वात् ।

वपामुत्खिद्य वपाश्रपण्यौ प्रोर्णोति घृतेन द्यावापृथिवीऽइति (६.१६) ॥१२॥

---

१) ? Thus ABC.

ततोऽध्वर्युः पाटितात्पशोरुदरात् वपां॰ष्य उद्धाव्योत्पाट्य[1] निष्काश्य तया वपया व॰ण्यौ प्रकर्षेण छादयति । पशोः सांनाय्यविकारत्वात्पशुमांसश्रपणार्थानां पात्राणां सांनाय्योखास्थानापन्नत्वाद्वपाश्रपण्योस्तद्धर्मपरिप्राप्तौ उखादानमन्त्रेणोह्नितेनादानं कर्तव्यम्[2] द्यौ स्थः पृथिवी स्थ इति यजमानेनान्वारब्धयोर्वपाश्रपण्योः प्रोर्णवनं चेति · अत्र द्यौःपृथिवीशब्दावुपमानार्थत्वान्न विपरिणाम्येते असीत्येतत्तु वपाश्रपणीपरत्वाद्विपरिणाम्यत एव ।

परिवास्य चात्वालेऽवसिच्य शामित्रे प्रतपति ॥१३॥ वपा॰ण्योः प्रोर्णवनानन्तरं तां वपां परिवास्योदरसंलग्नां छेदनेन पृथक्कृत्य ततश्चात्वाले वपाश्रपणीस्थामेव वपामवसिच्यावोक्ष्याभ्युक्ष्य उदकेनोपरि सिक्त्वा ततः प्रतिप्रस्थाता शा॰पति · चात्वालेऽवसेकान्तमध्वर्युः करोति शामित्रे प्रतपनादि तु प्रतिप्रस्थाता तां परिवासयति तां पशुश्रपणे प्रतपति तथो ह्यस्यात्रापि शृता भवतीति श्रुतत्वात् (३. ८. २. १८) · अतः शामित्रे प्रतपनमपि श्रपणैकदेश एव श्रपणं च प्रतिप्रस्थातृकर्तृकम् दक्षिणतः परीत्य प्रतिप्रस्थाता श्रपयतीति (॰२०) वचनात् ।

शामित्रैकदेशमाहवनीये प्रास्यत्यग्नीत् ॥१४॥ अग्नीत् शामि॰नीये प्रक्षिपति · पुनरुल्मु॰दादत्त इति (३.८.२.१८) श्रवणात् आदानस्य गमनस्य च दृष्टार्थत्वात्तदुल्मुकमाहवनीये प्रास्यतीति गम्यते · पुनःशब्दोपादानात् न निर्मन्थ्यपक्षे तत[3] आदानम् ।

तृणाग्रं चाध्वर्युर्वायो वेरिति (६. १६) ॥१५॥ तृणाग्रं यत्प्राक्सव्ये पाणौ कृतमासीत्तदधुनाहवनीये प्रास्यति · ते अध्वर्युप्रतिप्रस्थात्राग्नीध्राः शामित्रसमीपाच्चात्वालं जघनेन चात्वालोत्करावन्तरेणाहवनीयं प्रति यन्ति (३. ८. २. १८) ।

उत्तरतस्तिष्ठन्प्रतप्य वपामन्तरा यूपाग्नी हृत्वा दक्षिणतः प्रतिप्रस्थाता श्रपयति परीत्य ॥१६॥ अध्वर्युणा तृणप्रक्षेपे कृते सति प्रति॰ता उत्तरतः आहवनीयादुत्तरे देशे तिष्ठन्सन् आहवनीये वपां प्रतप्य ततोऽग्नियूपयोरन्तरालेन वपां हृत्वा स्वयमपि परीत्य न तूत्तरतः स्थित एव दक्षिणात आहवनीयाद्दक्षिणस्यां दिश्यासीनः आहवनीय एव वपां श्रपयति । अत्राहाप॰ आहवनीयस्यान्तिमेऽङ्गारे वपां निगृह्यान्तरा यूपमाहवनीयं दक्षिणातिहृत्य प्रतिप्रस्थात्रे प्रयच्छति तां

1) ? ॰त्याद्य ABC. 2) Thus C. उखादानवत्कर्त॰ AB. 3) तत C. deest AB

दक्षिणत आसीनः प्रतिप्रस्थाताहवनीये श्रपयतीति · काठके च चरमेऽङ्गारे वपां निगृह्यान्तरा यूपाग्नी हृत्वाभिघार्य श्रपयतीति । वपामेवान्तराग्नी हृत्वा उत्तरतोऽवस्थितेनापि दक्षिणप्रदेशे श्रपयितुं शक्यतऽइति तन्मा भूदिति परीत्येत्युक्तम् परीत्य परिक्रम्य गत्वा दक्षिणत इत्याहवनीयस्य दक्षिणप्रदेशे वपां श्रपयतीत्यर्थः · अन्यथा परीत्येत्यस्य वैयर्थ्यापत्तेः दक्षिणत इत्यनेनैवार्थात्प्राप्तत्वात् ।

वपा॰ स्रुवेणाभिघारयत्यग्निराज्यस्येति (६. १६) ॥ १७ ॥ प्रतिप्रस्थात्रा[1] वपाश्रपणीभ्यामाहवनीयस्योपरि धृतां वपां स्रुवेणोपहृत्याज्यमध्वर्युर्वपामभिजुहोति · श्रुतौ (३. ८. २. २७) जुहोतीति होमस्य विधानान्मन्त्रे स्वाहाकाराम्नानाच्चात्रेदमग्नय ऽइति त्यागोऽनुष्ठेयः · तथा चापस्तम्बः स्रुवेण वपामभिजुहोतीति ।

स्तोकेभ्योऽनुवाचयति ॥ १८ ॥ ततोऽध्वर्युः प्रादुर्भूतेषु स्तोकेषु स्तोकेभ्यो ऽनुब्रूहीत्येवं मैत्रावरुणं प्रति ब्रूयात् · श्चुति क्षरणे अतः श्चोतन्तीति स्तोकाः विन्दवः वपायां श्रप्यमाणायां तापवशाद्वपायाः ये विन्दवः पतन्ति ते स्तोकाः तदर्थमनुब्रूहि । अत्राह्वाप॰ प्रादुर्भूतेषु स्तोकेषु स्तोकेभ्योऽनुब्रूहीति सम्प्रेष्यति अलोहिनी॰ सुशृतां कृत्वा सुपिप्पला ओषधीरिति दक्षिणस्यां वेदिश्रोण्यां बर्हिषि प्लक्षशाखायामासाद्य वपाश्रपणी[2] प्रवृह्य निधाय घृतवतीशब्दे जुहूपभृतावादायेति · काठके च प्रस्तुतासु स्तोकेभ्योऽनुब्रूहीति श्येनी॰ सुशृतां वेद्यां दर्भेषूदगग्रेषु निधायेति ।

शृतायाः॰ शृता प्रचरेत्याह प्रतिप्रस्थाता ॥ १९ ॥ अध्वर्युं प्रति · शृता वपा प्रचर त्वं स्वाहाकृतिभिरिति प्रैषार्थः · शृते प्रचरेति वपाद्वये शृताः प्रचरेति बहुषु · ततोऽध्वर्युर्वपायास्तप्ताभिघारं करोति ।

स्वाहाकृतिभ्यः प्रेष्यति[3] ॥ २० ॥ ततो वपां प्रतिप्रस्थातैवान्तरा यूपाग्नी प्रत्याहृत्योत्तरतश्चात्वालसमीपे आनीय वपाश्रपणीस्थामेव भूमौ निदधाति · ततो ऽध्वर्युः प्राणदानं वपाश्रपणीस्थाया एव प्रियेण धाम्नेत्यासादनमालम्भं च करोति · आपस्तम्बेन तु आहवनीयस्य दक्षिणत एव नीत्वा दक्षिणस्यां वेदिश्रोण्यां बर्हिषि

---

१) ? ॰स्थाता ABC. २) श्रपणी ABC. ३) सेनी॰ A. श्येनीं B. ४) प्रेष्यति १. प्रेष्येति M.

ब्राह्मणशाखायां वपाया आसादनमुक्तम् कठसूत्रे चोदगग्रेषु दर्भेषु · होता पुनरप्य-ग्निर्होतेति स्रुगादापनमन्त्रं पठति ततोऽध्वर्युर्जुहूपभृतावादायातिक्रम्याश्राव्य स्वा-हाकृतिभ्योऽर्थे प्रेष्यति प्रेषणं मैत्रावरुणस्य करोति तच्च स्वाऽऽह्य: प्रेष्येत्येवम् ।

हुत्वा वपामभिघारयति पृषदाज्यम् ॥२१॥ उत्तमं प्रयाजं स्वाहाकृतिं हुत्वा प्रथमं वपामभिघारयति प्रयाजशेषाज्येन ततः पृषदाज्यस्थालीस्थं पृषदाज्यम् ततः स्रुक्स्थं च हुत्वा वपामेवाग्रेऽभिघारयत्यथ पृषदाज्यमिति (३. ८. २. २४) श्रुतेः · ततश्चायं क्रमः पूर्वं वपाम् ततो ध्रुवाम् तत आज्यस्थालीम् ततः पृषदाज्यस्था-लीम् ततः पृषदाज्यस्योपभृतमिति । पशावाज्यभागयागपक्षे क्रमान्तरमाह ·

ध्रुवां प्रथममाज्यभागौ चेत् ॥२२॥ आज्यभागौ चेत् वपायां क्रियेते तदा प्रथमं ध्रुवामभिघारयति तत आज्यस्थालीम् ततो वपाम् ततः पृषदाज्यस्थालीम् ततः पृषदाज्योपभृतम् · यदि आज्यभागौ अत्र निरूढे क्रियेतेऽइति अत एव निरूढे आज्यभागयोर्विकल्पः ।

अत्राज्यभागौ कुर्वन् ॥२३॥ पशावाज्यभागौ कुर्वन्नत्र वपायां करोति प्रेष्यप्रैषौ पशुपुरोडाशे चेत् यजप्रैषावेव भवतः । तौ च सवविधे प्रतिषिद्धौ तौ न पशौ करोति न सोमऽइति शाखान्तरात् स्वशाखायामपि तन्न सौम्ये ऽध्वरे न पशाविति (१. ६. ३. १३) श्रवणाच्च · हविर्यज्ञविधे तु पुनः प्रतिप्रसूतौ तदाहुर्यजेदाज्यभागौ ना३ इति यजेदित्याहुरिति श्रुतत्वात् (११. ७. ४. ८) । अत्राहा-पस्तम्बः हुत्वा प्रत्याक्रम्य शेषेणैव ध्रुवामभिघार्य पृषदाज्यमभिघारयति अथ वपामेतद्वा विपरीतं नोपभृतमाज्यभागौ यजति तौ न पशौ करोति न सोम ऽइत्येकऽइति · काठके च स्वाहाकृतीरिष्ट्वा प्रत्याक्रम्याभिघारयति ध्रुवां पृष-दाज्यं वपां नोपभृतं तमाज्यभागाविष्ट्वेति[१] ।

वपया चरिष्यन्नुपस्तीर्य हिरण्यमवधाय वपामवद्यन्नाहेन्द्राग्निभ्यां छागस्य वपायै मेदसोऽनुब्रूहीति ॥२४॥ वक्ष्यन् जुह्वामुपस्तीर्य ध्रुवायाः सकाशादुपस्तारं कृत्वा हिरण्यशकलमवधाय वपाऽऽहेति · प्रयोगप्रदर्शनमेतत् तेन सौर्यपशुपक्षे सूर्याय छागस्येति प्राजापत्यपशुपक्षे प्रजापतये छागस्येति प्रयोज्यम् ।

[१] ? Thus ABC.

हिरण्यमवधाय द्विरभिघारणं सोमे ॥२५॥ वपावदानानन्तरं पुनरुपरिष्टाद्धिरण्यमवधाय सोमे द्वि॰णाम् निरूढे तु सकृदभिघारणम्। अत्राहापस्तम्बः सुवामुपस्तीर्य हिरण्यशकलमवदाय कृत्स्नां वपामवदाय हिरण्यशकलमुपरिष्टात्कृत्वाभिघारयत्येवं पञ्चावत्ता भवति चतुरवत्तिनोऽपि पञ्चावत्तैव स्यादिति काठके च असिना वपां सकृदवदाय द्विरभिघार्येति · अतोऽखण्डैव वपा सकृदेवावद्येया न द्विरिति।

आश्राव्याहेन्द्राग्निभ्यां छागस्य वपां मेदः प्रेष्येति ॥२६॥ तत उत्थायातिक्रम्याश्राव्य इन्द्रा॰ष्येति मैत्रावरुणं प्रत्याह। एतदपि प्रयोगदर्शनार्थमेव पक्षे सौर्यप्राजापत्ययोरपि भावात्।

प्रस्थितमिति च प्रसुते ॥२६॥ प्रसुते सुत्यायां सवनीये पशौ वपां मेदः प्रस्थितं प्रेष्येति · प्रसुतशब्देनात्र सवनीय एव गृह्यते तद्विकारेषु प्रस्थितशब्दः प्राप्तोऽपि सौत्रामण्यामुपसंहृतत्वादन्यत्र न भवतीति।

हुत्वा वपाश्रपण्यावनुप्रास्यति प्राचीं विशाखां प्रतीचीमितरां स्वाहाकृते ऽइति (६.१६) ॥२७॥ वपां हुत्वोत्तरतस्तिष्ठन् व॰ण्यावाहवनीयऽएवानु॰ति अनु पश्चात्प्रक्षिपति हाप्रत्ययादध्वर्युरेव · विशाखां द्विशृङ्गां प्रागग्रां प्रास्यति इतरामविशाखामेकशृङ्गां प्रत्यगग्राम् · आप॰ उत्तरतस्तिष्ठन्प्रतिप्रस्थाताहवनीये वपाश्रपणी[1] प्रहरति स्वाहोर्ध्वनभसमिति। वपानेकत्वे स्वाहाकृता ऊर्ध्वनभसं मारुतं गच्छतेति विपरिणामः।

चात्वाले मार्जयन्ते सपत्नीका इदमापः प्रवहतेति (६.१७) ॥२८॥ ततः स॰काः सयजमानाः सर्वे ऋत्विजः चात्वालसमीपे अद्भिरात्मानं शोधयन्ति अभ्युक्षन्ति मन्त्रलिङ्गादेवाद्भिर्मार्जनं कर्तव्यमिति गम्यते · पत्न्यपि मन्त्रेणैव मार्जनं करोति क्वचित्समिदाधानादौ पत्नी च गार्हपत्ये तूष्णीमिति (५.५.३६) नियमदर्शनात्[2] · पूर्वं ब्रह्मादयः षडृत्विजः ततो यजमानः ततः पत्नीति · अनेकयजमानके सर्वे यजमानाः सर्वाः पत्न्यश्च ॥ ॥ षष्ठी कण्डिका ॥६॥

---

१) ॰पणी ABC. २) ? मिति घन A. मिति यत्न CB.

इदानीमिदं विचार्यते · पुरुषाणामित्युक्तत्वात्पशुसंज्ञपनमपि किमृत्विजामेव कश्चित्करोति उतऽर्त्विग्भ्योऽन्यः कश्चिदिति · तत्र सूत्रकार एव पक्षं परिगृह्णाति ·

विशास्ति पशुमन्यः ॥ १ ॥ शसु हिंसायाम् · ऋत्विग्भ्योऽन्यः कश्चित् शमितेत्येवंसंज्ञः पशुं विशास्ति हिनस्ति मारयतीत्यर्थः · कुत एतत् संज्ञाभेदात् शमितैनं कण्ठे बद्ध्वा नयतीति · संज्ञाभेदाच्च संज्ञिनोऽपि भेदो भवति यथा चैत्रादन्यो मैत्र इति । अतो ब्रह्मादिभ्योऽन्य एव पशुं विशास्तीति प्राप्तऽआह ·

ऋत्विजां वैकोऽप्रक्लृप्तत्वाच्छामित्रे ॥ २ ॥ वाशब्दः पक्षव्यावृत्तौ · ऋत्विजामेव यः कश्चिदेकः पशुं विशास्ति · कुतः शामित्रे शमितुः कर्मणि मारणे वेदे ऋत्विग्व्यतिरिक्तस्यान्यस्य शमितुरप्रक्लृप्तत्वात्[1] अनुक्तत्वात् · ननु संज्ञाभेदादन्यो विशास्तीत्युक्तम् सत्यम् यौगिकी संज्ञा भविष्यति ऋत्विजामेव यः शमनं करिष्यति स एव शमिता भविष्यति · अतः ऋत्विग्व्यतिरिक्तस्य शमितुरनुक्तत्वात्कश्चिदृत्विगेव पशुं विशास्तीति सिद्धम् ।

उपगादर्शनाच्च ॥ ३ ॥ होऽइत्यृत्विज उपगायन्त्योऽ३मिति यजमान इत्यत्रऽर्त्विजामेवोपगानदर्शनाच्चैवमवसीयते यदृत्विजामेवैकः पशुं विशास्तीति · यथा ऋत्विग्व्यतिरिक्तानामुपगातॄणामप्रक्लृप्तत्वादृत्विज एवोपगातारः . एवं शमितापि । ननु होऽइत्यृत्विज इत्यादिको विधिरेव न[2] दर्शनमिति चेत् न हो इत्येवंपरमेतद्वाक्यम् न ऋत्विग्विधिपरम् अतो दर्शनमेवैतदिति · ऋत्विजामपि विधाने वाक्यभेदः प्रसज्यते · तथा नाध्वर्युरुपगायतीत्यध्वर्योरुपगानप्रतिषेधादितरर्त्विजामुपगानं[3] भवतीति गम्यते ॥ केचिदेवमेव सिद्धान्तं मन्यन्ते · अपरे त्वेवमाहुः अन्यस्याप्रक्लृप्तत्वात् कश्चिदृत्विगेव शमनयोगात् शमिता भविष्यतीति · तन्न · यतः श्रुतौ ऋत्विग्व्यतिरिक्तः शमिता प्रकल्पितो दृश्यते शमितैनं कण्ठे बद्ध्वोदञ्चं नयतीति तथा शृतं७ हविः शमिता३रिति (३. ८. ३. ५) च · ननूक्तम् यौगिकी संज्ञा तेनर्त्विजामेव कश्चित् शमनं कुर्वन् शमिता भविष्यतीति तन्न सर्वेष्वृत्विक्षु स्वस्वकर्मणि व्यापृतेषु शमितृशब्दश्रवणात्तेभ्योऽन्य एव शमितेति गम्यते

---

१) °रप्रकृतत्वात् AC. २) न deest A. del. BC sec. manu. ३) Thus CB. °तरर्त्विजोरुपगानं A. (जारु pr. m.)

तथा हि[1] अथोल्मुकमादायाग्नीत्पुरस्तात्प्रतिपद्यते शमितैनं कण्ठे बद्धोदञ्चं नयति तं वपाश्रपणीभ्यां प्रतिप्रस्थातान्वारभते प्रतिप्रस्थातारमध्वर्युरध्वर्युं यजमान इति मैत्रावरुणोऽध्रिगुप्रैषे होता चाध्रिगौ ब्रह्मा च दक्षिणात आसीनः कृताकृतप्रत्यवेक्षणे एवं सर्वेषु ऋत्विक्षु व्यापृतेषु शमितृशब्दश्रवणादवश्यं तेन ऋत्विग्भ्योऽन्येनैव भवितव्यम् · उपगादर्शनं चाप्रकृतविषयम् अत्र त्वयं हेतुर्नास्ति · अपि च संज्ञपने ऋत्विक्कर्तृके सति समाख्यया तद्धर्मोः प्राप्नोति तदा च शमित्रध्वर्युसंवादे इदं नोपपद्यते अनेनाध्वर्युर्न भवति शमिता तदन्यो भवतीति · तस्मादन्यः शमितेति ॥ अपरा व्याख्या । शमितेति संज्ञाभेदात्पशुमारणमसंदिग्धमन्य एव करोतीति अतो विकर्तनं[2] चिन्त्यते किमृत्विङ्नामिकः कुर्यात् उतान्य एवेति · तत्र पूर्वपक्षमाह विशास्ति पशुमन्यः · ऋत्विग्भ्यो ऽन्यः पशुविकर्तनं करोति · अतो मारणे शमितुः प्रवृत्तत्वाद्विकर्तनमपि[3] स एव करोतीत्येवं प्राप्ते सिद्धान्तमाह ऋत्वि॰मित्रे वाशब्दः पक्षव्यावृत्तौ शामित्रे विकर्तनकर्मणि ऋत्विङ्नामैवैकः कश्चन कर्ता स्यात् नान्यः अन्यस्यानुक्तत्वात् न ह्येवं कुत्राप्युक्तमस्ति[4] यच्छमिता विकर्तनं करोतीति यत्रान्यस्य कर्तृत्वं नोच्यते तत्र-तत्रऽर्त्विङ्नामैव कर्तृत्वं भवति · उप॰नाद्य पूर्ववद्व्याख्येयम् । अस्मिंश्च व्याख्याने इदं विरुध्यते यत् दैव्याः शमितार उत च मनुष्या रभधमित्यस्मिन्नध्रिगुप्रैषे विकर्तने शमिता सम्बोध्यते ।

विक्रयी त्वन्यः शूद्रसंयोगात् ॥४॥ विक्रयी सोमविक्रय्यपि ऋत्विङ्नामैव कश्चिद्भविष्यतीत्याशङ्का[5] तुशब्देन निराक्रियते · विक्रयी ऋत्विग्भ्योऽन्य एव भवति नर्त्विङ्मध्ये कश्चित् · कुतः शू॰गात् पक्षे शूद्रस्यापि सोमविक्रयित्वेन संयोगात् कौत्साच्छूद्राद्वा सोमं विक्रीणातीति · शूद्रश्च निःसंदिग्धमृत्विग्भ्यो[6] ऽन्य एव तस्मात्कौत्सोऽ[प्य]न्य[7] एव ।

अङ्गान्यवद्यत्यभञ्जन् ॥५॥ अध्वर्युर्हृदयादीनि शरीरात्पृथक्करोति अङ्गानां छेदनमकुर्वन् सकलान्येवावद्यतीत्यर्थः। अविशेषात्सर्वाङ्गानामवदाने प्राप्तऽत्राह·

---

१) See ३. ८. १. १. २) विवर्तनं A throughout. ३) ? °तुरप्रवर्त्तत्वाद्विवर्तन° A. °तुरप्रवृत्त° C. B (वर्त्त pr. m.). ४) but see the schol. at ७. २१. ५) शंक्य ABC. ६) निःसंदिग्भ्यो ABC. ७) °त्सोऽन्य ABC.

हृदयं जिह्वां क्रोडं सव्यसक्थिपूर्वनडकं पार्श्वे यकृद्वृक्कौ गुदमध्यं दक्षिणा श्रोणिरिति जौहवानि ॥ ६॥ जुहूवामवदानयोग्यानि प्रधानयागसाधनानि । हृदयमाम्रफलसदृशम् · जिह्वा रसना · क्रोडं वक्षो भुजान्तरम् · सव्यस्य सक्थ्नः सव्यस्य बाह्वोः पूर्वनडकं प्रथमं नडकम् अंसादधो वर्तमानम् · द्वेऽअपि पार्श्वे दक्षिणं सव्यं च एकैकं त्रयोदशवङ्क्र्यात्मकम् षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्च्यावयतादित्यध्रिगुप्रैषे उक्तत्वात् वङ्क्रयो वक्राणि पार्श्वानि · यकृत्कालेयम् · वृक्कौ कुक्षिस्थौ गोलकौ महदामलकतुल्यौ आम्रफलाकृती इति धूर्तस्वामिनः · गुदस्य मध्यम् येन शकृन्निर्गच्छति तद्विषमं त्रेधा कृत्वा तस्य यो मध्यमो भागो न स्थूलो न च कृशः तम् · दक्षिणा श्रोणिः कटी दक्षिणापरसक्थ्न उपरि वर्तमानो मांसलः प्रदेशः श्रोणिर्दक्षिणा स्फिगिति धूर्तस्वामिनः स्त्रियां स्फिजौ कटीप्रोथावित्यमरः[२] (२. ६. ७५) । अथोपभृत्यवद्यान्याह ·

दक्षिणसक्थिपूर्वनडकं गुदतृतीयाणिष्ठं सव्या श्रोणिरित्यौपभृतानि ॥ ७॥ दक्षिणस्य बाह्वोः पूर्वकं प्रथमनलकम् अंसादध एवावस्थितम् · गुदं स्थम् आन्त्रस्य यो ऽणिष्ठो ऽतिशयेनाणुरतिकृशस्तृतीयो भागः · सव्या श्रोणिरुत्तरापरसक्थ्न उपरि भवो मांसलः प्रदेशः कटीशब्दवाच्यः[२] · एतानि त्रीणि उपभृत्सम्बन्धीनि स्विष्टकृदवदानानि ।

वर्षिष्ठमुपयड्भ्यः ॥ ८॥ अतिशयेन महद्वर्षिष्ठम् यद्गुदतृतीयमतिस्थूलम् तदुपयड्ढोमार्थमवद्यति ।

अवदानकाले प्रभागः ॥ ९॥ गुदतृतीयस्य प्रभागः प्रकर्षेण भागो वर्षिष्ठमध्याणिष्ठभागेन विभजनम् सोऽवदानकाले भवति जुहूवामवदानकाले नेदानीम् इदानीं तु समग्रमेवाविभक्तं[३] गुदमवद्यति ।

वनिष्ठुजाघनि[४] चावद्यति ॥ १०॥ वनिष्ठु स्थूलान्त्रम् । जाघनी जघनप्रदेशे भवा पुच्छदण्ड इत्यर्थः · जाघनी पशोः पुच्छमिति हरिस्वामिनः · जाघनी वालदण्ड इति माधवाचार्याः · जाघनी येन मशकानपनयतीति धूर्तस्वामिनः · जाघनी वालधिरुच्यतऽइति ज्ञानदीपिकाकारः · क्षुधार्तश्चानुमात्यागाद्विश्वामित्रः श्वजाघनीम्[५]

१) Thus C. °ला AB. २) कटि° AB. ३) °भवं ABC. ४) °घनी १. M. AB sec. m. ५) स्वजा° AB throughout.

चण्डालहस्तादादाय धर्माधर्मविचक्षणः इत्यत्र श्रजाघनीं[१] श्रपुच्छमिति स्मृतिचन्द्रिकाकारो व्याख्यातवान् · जाघनी पशोः पुच्छमित्यधिकरणमालायां तृतीयेऽध्याये जाघनी चैकदेशत्वादित्यधिकरणे (जैमिनि ३. ३. १८) · जाघनी कटी इति पितृभूतिहरिहरौ तदयुक्तम् कटिशब्दस्य[२] श्रोणिपर्यायत्वात् श्रोण्योश्च प्रागुक्तत्वादिति · श्रतः पुच्छकाण्डमेव जाघनीशब्देनोच्यते · सा च पत्नीसंयाजार्था ।

क्लोमप्लीहाध्यूध्नीपुरीततं चेच्छन् ॥ ११ ॥ विकल्पे · क्लोमो गलनाडिका · प्लीहः पीह इति यः प्रसिद्धः · श्रध्यूध्नी शतपुटः ऊधस उपरि भवति · पुरीतदिति[३] हृदयं प्रच्छादितं येन मांसेन तदुच्यते । एतानि क्लोमादीनि पुरीतदन्तानि भागावदानानीच्छन्नवद्यति श्रतश्चैतेषां भागाऽनानां विकल्प इति प्रागुक्तमेव ।

उदरमेदोऽवशिष्टं गुदे प्रास्यति कृशश्चेत् ॥ १२ ॥ पशुश्चेद्यदि कृशो दुर्बलः स्यात् तदा श्रवशिष्टं मेदो ग्रहणे क्रियमाणे यन्न गृहीतम् तद्गुदे प्रास्यति श्रान्त्रमध्ये प्रवेशयति (३. ८. ४. ५) ।

श्रभ्रेऽऊवध्यमवधाय तस्मिन्लोहितं[३] रक्षसामिति (६. १६) ॥ १३ ॥ श्रभ्रे गर्ते शामित्रादपरस्यां दिशि उत्कराद्युत्तरस्यां वर्तमाने ऊवध्यं पुरीषं तूष्णीमवधाय तस्मिन्नूवध्ये लोहितं पशोः रुधिरं प्रास्यति · श्रत्रेदं रक्षोभ्य इति त्यागः · उदकोपस्पर्शनं च ।

शूले हृदयं प्रतृद्य शामित्रे श्रपयति ॥ १४ ॥ शूलेऽतृद्य प्रोतयित्वा शामित्रेऽग्नौ श्रऽति · परितृद्यैव (३. ८. ५. ८) शूलेन भित्त्वा · सांनाय्यविकारादुखायां श्रपणे प्राप्ते वचनात् शूले श्रपणम् शूलं च वारणमरत्निमात्रम् । सांनाय्योखापन्नत्वाच्च घर्मोऽसीति मन्त्रेण तस्य शूलस्यादानम् श्रधिश्रयणं त्वर्थलुप्तम् · यजमानेनान्वारब्धे शूले हृदयप्रतर्दनमिति ।

पशुं चोखायाम् ॥ १५ ॥ पशुं पश्ववदानानि हृदयव्यतिरिक्तानि सर्वाणि उखायां श्रपयेत् · श्रत्रापि पशोः सांनाय्यधर्मप्राप्त्या तच्छ्रपणार्थाया उखायाः सांनाय्योखाधर्मप्राप्तिः श्रतश्च घर्मोऽसीत्यादानम् मातरिश्वन इति मन्त्रेण शामित्रेऽधिश्र-

१) Thus ABC. °टां B pr. m. २) Thus ABC. ? °ततमिति Ss. ३) Thus ABC. °स्मिंश्लो° M. स्मिंलो १.

यणाम् अन्वारब्धे यजमाने मांसानां प्रक्षेप इति । चकारात्पशुमपि शामित्रऽएव श्रपयति अथ यमेतमुदञ्चं पशुश्रपणायाहरन्तीति (११. ८. २. १) श्रवणात् पशुश्रपण इति समाख्यानाच्च ।

पशुदेवताये पुरोडाश एकादशकपालः ॥१६॥ अत्र पशौ एकालः पुरोडाशो भवति यद्देवत्यः पतीति (३. ८. ३. १) श्रुतत्वात् । अग्नीषोमीयपुरोडाशस्यैकादशकपालत्वात् तत्प्रकृतित्वाच्च अयमप्येकालो भवतीति प्राप्तऽआह ·

अग्नीषोमीयो वा विशेषोपदेशात् ॥१७॥ वाशब्दः पक्षव्यावृत्तौ · अयं निरूढपशोः पशुपुरोडाशः एकादशकपालो न भवति · अग्नीथ एवैकालः · कुतः विशात् येनाग्नीषोमीयऽएव विशेषेणैकादशकपालतोपदिश्यते तस्य वपया प्रचर्याग्नीथमेकालं पुरोडाशं निर्वपतीत्यभिषेचनीये न च सर्वपशुषु पुरोडाशोऽग्नीषोमीयपशुपुरोडाशविकारः किं तर्हि पौर्णमासाग्नेयाग्नीषोमीयादिपुरोडाशविकार एव । ततश्चैकद्विशब्दपरिमाणेत्याद्युक्तप्रकारेणैवेह (४. ३. ८) पुरोडाशे कपालसंख्या नैकादशकपाल इति · ततश्चैन्द्राग्नो द्वादशकपालः सौर्यप्राजपत्यौ चाष्टाकपालाविति सिद्धम् ।

अत्रैव हविष्कृदाह्वानमिज्यैकत्वात् ॥१८॥ इदानीमिदं विचार्यते · प्रकृतावाहननहविष्कृदाह्वानयोरेककालत्वमुक्तम् स यत्रैष हविष्कृतमुद्वादयति तदेको दृषदुपले समाहन्तीति (१. १. ४. १३) · हविष्कृदाह्वानं चावघातार्थम् अवघातश्चौषधधर्मत्वात्पशुपुरोडाशऽएव भवति · तेन तदर्थं हविष्कृदाह्वानमप्यत्रैव भवति न पशौ · तत्सहचरितत्वादाहननमपि किमत्र भवति उत पशुपात्रप्रोक्षणात्तऽएवेति संदेहं सूत्रकार एवापनयति । अत्र पशुपुरोडाशे केवलं हविष्कृदाह्वानमेव भवति नाहननम् तत्तु पाशुकपात्रप्रोक्षणानन्तरमेव भवति · कुतः इज्यैकत्वात् आहननस्य हि पश्विज्यया सहैकवाक्यत्वम् न पुरोडाशेज्यया हविष्कृदाह्वानस्य च पुरोडाशेज्ययैकवाक्यत्वम् न पश्विज्यया · अतोऽत्र केवलं हविष्कृदाह्वानमेव कर्तव्यम् नाहननमिति ।

अवघ्नन्नाहेन्द्राग्निभ्यां पुरोडाशस्यानुब्रूहीति ॥१९॥ अत्र प्रणीताप्रणयनपरिस्तरणात्तस्य पशौ कृतत्वाद्रुपर्युक्तशूर्पादिपात्रासादनहविर्ग्रहणप्रोक्षणाकण्ड-

नपेषणाग्रपणपात्र्यङ्गुलिप्रक्षालननिनयनपात्रीसंमार्गानन्तरमुद्वासनप्राणादानाद्यालम्भनान्तं कृत्वा एतऽ होतर्मैत्रावरुणाविति तावामन्त्र्य स्रुचावादाय जुह्वामुपस्तीर्य पुरोडाशस्यावद्यन्सन् अवदानखण्डनं कुर्वन् मैत्रावरुणं प्रतीमं प्रेषमाह इन्द्राऽग्नीति · अत्र वचनात्सहानुवाचनं द्व्योच्चारणं च · इन्द्राग्निभ्यामित्येतत्तु प्रयोगशिक्षार्थम् न परिसंख्यार्थम् तेन सूर्याय पुरोडाशस्य प्रजापतये पुरोडाशस्येत्यपि तत्पक्षे भवति ।

उपभृति चावद्यति स्विष्टकृद्वत् ॥२०॥ जुह्वामुपभृति च उपस्तीर्य जुह्वां मध्यात्पूर्वार्धाच्चावदायाभिघार्यावदाने प्रत्यभिघार्य तत उपभृति स्विष्टकृद्वद्यति उत्तरार्धात्सकृदवद्यति उत्तरार्धात्सकृदवदाने उपरिष्टाद्द्विरभिघारणम् प्रत्यभिघारणाभाव इति वतेरर्थः · चकारात्प्रधानावदानानन्तरमेवं प्राक्प्रदानात्स्विष्टकृदर्थमुपभृत्यवदेयम् कालान्तरेऽवदानविधानादुपभृत्यवदानाच्च स्विष्टकृदस्यैव सतः [1] स्विष्टकृद्वदित्युक्तम् ।

इन्द्राग्निभ्यां पुरोडाशमिति प्रेष्यति ॥२१॥ एवं द्वयोः स्रुचोरवदायोत्थायातिक्रम्याश्राव्य इन्द्राऽग्नं प्रेष्येत्येवं मैत्रावरुणं प्रेष्यति । इदमपि प्रयोगशिक्षार्थमेव · तेन पक्षे सूर्याय पुरोडाशम् प्रजापतये पुरोडाशमिति भवति ।

हुत्वा समानीयाग्नये प्रदाय ॥२२॥ इडामवद्यतीति (२५) वक्ष्यमाणेन सम्बन्धः · प्रधानावदाने जुहूस्थे हुत्वोपभृति यदवत्तं तज्जुह्वां समानीय निर्गुणायाग्नये तत्प्रदाय इडाप्राशित्रादिकमवद्यति । ननु कथमसति श्रुतिवचने निर्गुणायाग्नये प्रदानमुच्यतऽ इत्याशङ्क्याह ·

सगुणस्थानेऽगुणः सर्वविकार एकत्वात् ॥२३॥ हौत्रे सौविष्टकृते प्रदाने आग्नेय्यौ याज्यानुवाक्ये निर्गुणे समाम्नाते स्विष्टकृतः प्रेषोऽपि प्रेषाध्याये निर्गुण एवाग्निदेवत्यः पठ्यते · अतश्च [2] सगुणस्विष्टकृतः स्थाने योऽगुणो निर्गुणः स्विष्टकृदुक्तः स युक्त एव · यतो होतृवेदे याज्यापुरोऽनुवाक्याप्रेषेषु यः स्विष्टकृतो विकारः निर्गुणतारूपः स सर्वविकारः सर्वेषामपि विकार एवाध्वर्यूणामपि तथैव भवति · कुत एतत् एकत्वात् यत एक एवायं स्विष्टकृद्यागः ऋग्वेदे च

1) ? Thus ABC. 2) ? अतश्च यः ABC.

विहितः · एकत्वाच्च समानदेवताकेन भवितव्यम् इतरथा क्वचित्सगुणः क्वचिन्निर्गुण इत्ययुक्तमिव स्यात् · तस्मात्सगुणस्थानेऽगुण इति साध्वेवोक्तम् ।

यथाम्नातं वा वचिभेदात् ॥ २४॥ अथवा यथाम्नातं स्विष्टकृद्यागः स्यात् न सर्वेषां विकारः · यस्य यथाम्नातम् तस्य तथा भवति न होतृवशेन चोदकप्राप्तस्य स्विष्टकृद्गुणस्य लोप इति · अतो याज्यानुवाक्याप्रैषेषु निर्गुणः स्यात् अनुवाचने प्रैषे च सगुणः · कुतः वचिभेदात् वचनभेदादित्यर्थः अन्यद्धि प्रैषानुवाचनवचनम् अन्यच्च याज्यानुवाक्याप्रैषाणाम् तत्रैव च गुणनिषेधो नानुवाचनादौ तस्माद्याज्यादावेव निर्गुणो नानुवाचनादिष्विति । कर्कस्यायमेव सिद्धान्तः ॥ अपरे त्वेवमाहुः · अत्र शाखान्तरे श्रूयते अग्निं यजतीति तेन याग एव निर्गुणोऽग्निर्विहितः · अतो यो यागे निर्गुणोऽग्निर्विहितः स सर्वविकारो भवति सर्वेषां होतॄणामध्वर्यूणां च विकारो भवति · कुतः एकत्वात् यतो[१] ऽनुवाचनप्रैषयाज्यादिष्वेक एवायमग्निः न भिन्नः · एकश्च क्वचित्सगुणः क्वचिदगुण इति न विरुद्धरूपतामर्हति[२] · तस्मात्सर्वत्र निर्गुण एवेति सिद्धान्तः · जैमिनिनापि दशमे ·(१०·) निर्गुण एव सिद्धान्तितोऽस्ति · यथाम्नातं वेत्ययं तु पूर्वः पक्षः।

इडामवद्यति ॥२५॥ इडाग्रहणं प्राशित्रभागादीनामप्युपलक्षणार्थम् प्रकृतितः प्राप्तस्य लोपे वचनाभावात् · ततश्च निर्गुणस्विष्टकृद्यागानन्तरं स्रुचौ निधाय संचराभ्युक्षणावर्जं प्राशित्रावदानादि भागपरिहारान्तं यथाश्रुतं कर्तव्यम् पवित्रप्रतिपत्तिवर्जम् सा तु पश्चिडामार्जनोत्तरकाले कर्तव्या । अथेदं विचार्यते · पशुपुरोडाशस्य चोदनासारूप्याद्दार्शपौर्णमासिका धर्माः प्राप्ताः · तत्रोद्धरणादि नमःकृतायेत्यन्ताः सर्वे धर्माः किं पृथग्भवन्ति उत नेति · तत्र सूत्रकार एव पक्षं स्वीकरोति ·

अक्रियान्यस्य समानार्थत्वात् ॥२६॥ अत्र पशुपुरोडाशे प्रागुक्तात्प्रधानस्विष्टकृद्यागादन्यस्यारादुपकारकस्याग्न्यन्वाधानादेरङ्गजातस्याक्रिया भवति · कुतः सत्वात् सदृशार्थत्वात् सदृशार्थसाधकत्वादित्यर्थः · यादृशमेवोपकारं पशौ प्रयाजादीनि कुर्वन्ति पशावनुष्ठितान्येवैतादृशमेव पशुपुरोडाशेऽपीति · अतः पश्वर्थम-

[१] Thus C. ततो AB. [२] ? ॰र्हीति ABC.

नुष्ठितानां प्रणीताकुक्कुटाहननस्फ्योदकप्रहाराघारप्रयाजाज्यभागानुयाजादीनामा-राडुपकारकाणामगृह्यमाणविशेषत्वात्पशुपुरोडाशेऽप्युपकारप्रसङ्ग इति संनि-पत्योपकारकाणि तु पात्रासादनग्रहणाकण्डनपेषणश्रपणादीनि पृथगेव भवन्ति अन्यथा स्वरूपासिद्धेः · अत एवोक्तं शाङ्खायनेन (५. ११. २) पश्वर्थानि विभवादर्थं साधयन्तीति । अथवा समा॰त्वादित्येवमेव व्याख्येयम् · सन्त्येवाग्न्यन्वाधानादी-न्यङ्गानि पशुप्रयुक्तानि · य एव च पशुपुरोडाशस्याग्न्यन्वाधानादिभिरर्थः तेनै-वार्थेनैतानि पशुना प्रयुक्तानि · तस्मात्तान्येव प्रसङ्गादत्रोपयुज्यन्ते · यत्तु[1] प्रयुक्तं पशुना तत्पुरोडाशः स्वसंनिधौ[2] प्रयोजयति यथा सवविधे प्रणीताप्रणयनाज्य-भागादि यथात्रैव ब्राह्मणतर्पणाकर्मापवर्गादि । यद्येवम् स्विष्टकृदिडस्याप्यक्रिया प्राप्नोति तत्राह ·

न चोदनाभेदात् ॥२७॥ न स्विष्टकृदिडस्याक्रिया · कुतः चोदना-भेदात् · इष्टकापशौ संवत्सरसम्पत्प्रधाने वाक्ये भिन्ने स्विष्टकृच्चोदने दर्शयति द्वावाघारौ द्वौ स्विष्टकृताविति (६. २. २. ३७) । तथा दक्षिणानयनक्रमविधिपरे वाक्ये पृथक्पुरोडाशस्येडां दर्शयति इत्थमेव कुर्यात्पुरोडाशेडायामिवोपह्वतायां दक्षिणा नयेदिति (११. ७. २. ५) · दर्शनमात्रमेव तत् प्राप्तिस्तूत्तरेण सूत्रेण ·

कालगुणभेदाच्च ॥२८॥ अस्ति च न्यायो येन स्विष्टकृदिडं भेदेन क्रियते · कुतः कालभेदात् गुणभेदाच्च । अन्यकालः पाशुकः स्विष्टकृत् अन्यकालः पशु-पुरोडाशस्य अन्यकाला पाशुकीडा अन्यकाला च पशुपुरोडाशस्य तस्माद्यु-क्तम् यद्भेद इति · तथा सगुणे याज्यानुवाक्ये पशुस्विष्टकृतः निर्गुणे च पशुपु-रोडाशस्विष्टकृत इति ॥ अपरा व्याख्या न चोदनाभेदात् यदुक्तम् अक्रि-यान्यस्येति तन्न · कुतः चोदनाभेदात् विधिभेदात् भिन्ने ह्येते चोदने[3] एका पशुचोदना अग्नीषोमीयमजमालभेतेति अपरा पशुपुरोडाशचोदना तद्देवत्यं पशुपुरोडाशमनुनिर्वपतीति (३. ८. ३. १) · यत्र पुनरेकेन विधिवाक्येनोपादाय बहूनां फले विधानम् यथा मित्रविन्दया आयुष्कामो यजेतेति तत्रोपादेयत्वेन वि-धानात्साहित्यविवक्षायां युगपदङ्गोपकारापेक्षा · तेनागृह्यमाणविशेषत्वात्संनिधा-

1) ? यत्र C. यत्त AB.   2) ग्रस्य A. sec. m.   3) नोदने Ss. (throughout) भेदने A.

नाविशेषाच्च तन्त्रेणाङ्गोपकारसम्बन्धः · इह पुनश्चोदनाभेदादेतन्न सम्भवति । किं च · कालगुणभेदाच्च · अन्यस्मिन्काले पशोः प्रयाजाः कृताः अन्यकालस्य पुरोडाशस्य कथमुपकारं कुर्युः · अथवा कालभेदात् अन्यकालः पशुः अन्यकालः पुरोडाश इति · तथा गुणभेदात् एकादशसंख्यागुणकाः प्रेष्यप्रैषाश्च पशोः प्रयाजाः पञ्चसंख्यागुणका यजप्रैषाश्च पुरोडाशस्य · तथा एकादशसंख्यागुणकाः पृषदाज्य-द्रव्यकाः प्रेष्यप्रैषाश्च पशोरनुयाजाः आज्यद्रव्यका यजप्रैषास्त्रयः पशुपुरोडाशस्य · अतश्चोदनाभेदात् कालभेदात् गुणभेदाच्च तन्त्रेणाङ्गोपकारो न सम्भवतीति पूर्व-पक्ष एवाचार्येण पश्चादुक्तः सिद्धान्तस्तु अक्रियान्यस्य समानार्थत्वादित्ययमेव । यदुक्तम् चोदनाभेदात्कालगुणभेदाच्च तन्त्रेणोपकारसम्बन्धो न भवतीति अत्र ब्रूमः मा भूत्तन्त्रेणोपकारसम्बन्धः प्रसङ्गन्यायेन भविष्यति · तथा हि अङ्गो-पकारस्य ह्याम्नानसामर्थ्यादन्त्यपदार्थसमनन्तरं प्रधानेन सह सम्बन्ध इष्यते · अन्य-थाङ्गप्रधानयोः संगतिरेव न स्यात् · यदाङ्गानि प्रयाजानुयाजादीनि क्रियन्ते न तदा प्रधानानि प्रधानकाले च नाङ्गानीति · यद्येवं नाङ्गीक्रियते तर्हि प्रधान-यागेषु कृतेषु तदुत्तरकालीनानामनुयाजाद्यङ्गानां केन सह सम्बन्धः स्यात् · तस्मा-त्प्राच्योदीच्यादिसर्वाङ्गोपकारार्थं सर्वान्तऽएव[१] सम्बन्धोऽङ्गीकर्तव्यः · एवं च सति यद्यप्यत्र चोदनाभेदः तथापि प्रयाजाघारादि जनितमपूर्वम् अगृह्यमाणवि-शेषम् विद्यमानत्वात्पशुपुरोडाशस्याप्युपकारं करोत्येव · यथा व्रताद्यर्थमुज्ज्वा-लितो दीपोऽन्यार्थोऽपि शिष्यादीनां पुस्तकादिविलोकनार्थोऽपि भवति · अत-श्चोदनाभेदोऽत्राकारणम् · तथा कालभेदो गुणभेदश्च · तस्मात्साधूक्तम् अक्रिया-न्यस्य समानार्थत्वादिति ॥ अन्ये त्वेवं व्याचक्षते अक्रियान्यस्य समानार्थत्वात् संनिपत्योपकारकाङ्गयुक्तपशुपुरोडाशयागादन्यस्यादृष्टार्थस्याङ्गस्यात्र पशुपुरोडाशे अक्रिया अकरणम् · कुतः समा॰त्वात् पशौ क्रियमाणानामाज्यभागाद्यङ्गानां साधारणार्थत्वात् साधारणानि ह्युभयोरेतान्यङ्गानि उभयार्थानि न पुरोडाशस्य प्रासङ्गिकानि · समानतन्त्रोऽयं पशुपुरोडाशो न प्रासङ्गिक इत्यर्थः · अतः प्रास-ङ्गिकत्वाभावादत्रेडान्तमेव कर्तव्यम् न सवनीयवच्छेषसमाप्तिः · अत एवाहापस्तम्बः

---

[१]) Thus B. सर्वत एव C. सर्वांगत एव A.

इडान्तः संतिष्ठतऽइति · तेन पिष्टलेपफलीकरणहोमराक्षसभागब्राह्मणतर्पणप्रैषब्राह्मणतर्पणाकर्मापवर्गाः प्राकृताङ्गक्रमेणैव भवन्ति अङ्गानां समानसम्बन्धात् न सवनीयानामिवेदानीमेव समाप्तिरिति · जैमिनेस्तु प्रासङ्गिक एव पशुपुरोडाशः तन्मते पशुपुरोडाशसम्बन्धपिष्टलेपफलीकरणहोमादि कर्मापवर्गान्तमिडान्तऽएव कर्तव्यम् पश्वङ्गैरसम्बन्धात् ॥ अत्राहापस्तम्बः पशुपुरोडाशस्य पात्रसंसादनादि कर्म प्रतिपद्यते यथार्थं पात्रनियोगो निर्वपणकाले व्रीहिमयं पुरोडाशं निर्वपत्येकादशकपालं द्वादशकपालं वा यद्देवत्यः पशुस्तद्देवत्यो भवति हविष्कृता वाचं विसृज्य पशुं विशास्ति हृदयं जिह्वा वक्षो यकृद्वृक्कौ सव्यदोरुभये पार्श्वे दक्षिणा श्रोणिर्गुदतृतीयमिति दैवतानि दक्षिणदोः सव्या श्रोणिर्गुदतृतीयमिति सौविष्टकृतानि क्लोमानं पुरीततं वनिष्ठुमध्यूध्नीं मेदो[1] जाघनीमित्युद्धरति गुदं मातिलेखीर्वनिष्ठु लेखीरिति[2] सम्प्रेष्यति मा विपर्यास्त[3] इत्यर्थो भवत्युदकपवित्रे कुम्भ्यां पशुमवदाय शूलं प्रणिह्त्य[4] हृदयऽ शामित्रे श्रपयति अवहननादि कर्म प्रतिपद्यते वपया प्रचर्य पुरोडाशेन प्रचरति शृते वा पशाविन्द्राग्निभ्यां पुरोडाशस्यानुब्रूहीन्द्राग्निभ्यां पुरोडाशस्य प्रेष्येति सम्प्रैषाविन्द्राग्निभ्यां पुरोडाशस्यावदीयमानस्यानुब्रूहीन्द्राग्निभ्यां पुरोडाशस्यावदीयमानस्य प्रेष्येति वाग्नयेऽनुब्रूह्यग्नये प्रेष्येति स्विष्टकृतः सम्प्रैषौ प्राशित्रवदिडां[5] न यजमानभागे हविराहुतीप्रभृतीडान्तः[6] संतिष्ठत ऽउपहूतां मैत्रावरुणषष्ठां भक्षयित्वा पूर्ववत्प्रस्तरे मार्जयित्वा स्रुवेण पृषदाज्यस्योपहत्य वेदेनोपयम्य त्रिः पृच्छति शृतऽ हविः शमिताऽ३रिति शृतमितीतरः प्रत्याहार्धार्धे[7] द्वितीयं प्राहाथ[8] तृतीयमिति । काठके च स्थाल्यामवदानानि श्रपयति शूले हृदयमसम्भिन्ने वृक्कावनिर्भ्रेडिते[9] गुदवनिष्ठु गर्तं खात्वा तस्मिन्नूवध्यं कुर्यात्पशुपुरोडाशाय पात्रशेषं प्रयुनक्ति यद्देवत्यः पशुस्तद्देवत्यं व्रीहिमयमेकादशकपालं वा प्रणयनादि तुल्यमाज्येभ्यो व्युह्य बर्हिराज्येभ्यो निनयति शृते पशौ पशुपुरोडाशेन प्रचरति यदि बह्वः

---

१) ? वेदो ABC. २) ? °तिष्ठोषीवनिष्ठुलेषीरि° ABC. ३) ? ABC. ४) प्रणीह्य ABC. ५) Thus A. °देडां pr. m. °त्रवदायेडां BC. ६) Thus ABC. ७) ? °र्द्धार्धे C. °र्जार्धे B. °र्धाद्धृद्धे A. See at ८. ५. ८) प्राप्याथ BC. ९) °ह्ना अनि° ABC.

पशवः पशुपुरोडाशा वा स्युर्जुहूपभृतोरुपस्तीर्य जुह्वामवदायाभिघार्योपभृत्यवदायानभिघार्योत्तमस्याभिघारणमनु सौविष्टकृतमभिघारयेद्यत्र क्व च सह्वोपभृत्तदेवमेव[1] कुर्यात्  इन्द्राग्निभ्यां पुरोडाशस्यानुब्रूहीत्याश्राव्याहेन्द्राग्निभ्यां पुरोडाशस्य प्रेष्येति  इष्टे स्विष्टकृता प्रचरत्यग्नये पुरोडाशस्येति सम्प्रैषः पुरोडाशयोः पुरोडाशानामिति चेडामुपह्वय पृषदाज्यस्य स्रुवेण वेदोपयमेनादायाह शृतꣳ हविः शमिता३रिति शृतमिति शमिता प्रत्याहैवं मध्यऽएवं गत्वेति ॥  अतः पशुपुरोडाशे पात्रासादनादि भागपरिहरणान्तं संनिपत्योपकारकं सर्वं पृथक्कर्तव्यम् आराडुपकारकं तु प्रयाजादि पाशुकमेवात्र प्रसङ्गादुपकरोति साधारणमेव भवतीति सिद्धम् ।

पशुर्दक्षिणा धेनुर्वरो वा  मार्जिते[2] ॥२९॥  संनिधानात् पशुपुरोडाशेडामार्जनान्ते गवादिजातीयः पशुर्दक्षिणा  अथवा धेनुर्दक्षिणा अथवा वर इति · वरशब्देन ऋत्विगभिलषितं हिरण्यवस्त्रगवादिकं यज्ञमानेन दातुं शक्यते तदभिधीयते । मार्जितऽइति ग्रहणाच्च भागपरिहारोऽपि पश्विडामार्जनपवित्रप्रतिपत्त्यनन्तरमेव प्राकृतक्रमेण कर्तव्य इति युक्तम् ।  अपरे तु इत्थमेव कुर्या॑न्नयेदिति (११. ७. २. ५) वचनादिडाभक्षात्पूर्वमेव दक्षिणादानमिच्छन्ति  तेषाम् मार्जित ऽइत्युत्तरसूत्रे[ण] सम्बध्यते  मार्जिते शमितारꣳ शास्तीति  एतच्च व्याख्यानं युक्तमिवाभाति·  परं तु मार्जितऽइत्ययमेव[3] उत्तरसूत्रेण सम्बध्यमानो व्यर्थ एव भवति  मार्जनानन्तरं शमितुः शासनस्य श्रुतिविरुद्धत्वात् श्रुतौ पशुपुरोडाशेन प्रचर्याथ पशुं विशास्तीत्युक्तम् (३. ८. ३. ३) अतो मार्जनानन्तरं पूर्वं पशोर्विशसनाद्यधिश्रयणान्तम् ततः शमित्रनुशासनमिति · तस्मात्पूर्वसूत्रेणैवोपपत्तौ मार्जित ऽइत्यस्य सम्बन्धः । अत्राचार्येण पश्वधिश्रयणानन्तरं पशुपुरोडाश उपदिष्टः स तु वपामार्जनानन्तरमेव कर्तव्यः  शतपथे तथा श्रुतत्वात् यद्देवत्यः॰वपतीति (३. ८. ३. १) प्रकृत्याथ यद्वपया प्रचर्यै॑तेन पुरोडाशेन प्रचरतीत्युक्त्वा (॰२) अथ पशुं विशास्तीत्युक्तम् (॰३) · तथा अभिषेचनीयेऽपि  स वै दीक्षते स उपवसथ्ये ऽग्नीषोमीयं पशुमालभते तस्य वपया प्रचर्याग्नीषोमीयमेकादशकपालं पुरोडाशं

1) ॰भृतदे॰ ABC.  2) वरो वा ॥७॥ मार्जिते M. १  3) Thus C. B sec. m. इत्येव A.

निर्वपतीति श्रूयते · अतो वपामार्जनान्त एव पात्रासादनादि मार्जनान्तः कर्मापवर्गान्तो वा पशुपुरोडाशः कर्तव्यः ततः पशुविशसनादि उखायां निरूह्याववदानप्रक्षेपणान्तम्[1] ततः शमितारं शास्तीति । अथ पशुं विशास्तीत्यत्र (३.८.३.३) हरिस्वामिनः हृदयादिभ्योऽवदानश्रुतेः पशोर्विसनमर्थप्राप्तमेव किमर्थमुच्यते पशुपुरोडाशप्रचारोत्तरकालं कथं नाम विशसनं स्यादिति · विशास्तीति शासु अनुशिष्टौ इत्येष धातुर्विपूर्वो विशसने वर्तते · कः पुनः पशुं विशास्ति शमिता[2] विशसितुस्त्रिः प्रच्यावयतादित्यादिनानुशिष्यमाणत्वात् तत्र[3] च यत्त्वा पृच्छाच्छृतꣳ हविः शमितारित्यत्र शमितुरेव दर्शनात् · काण्वानां ह्ययेनं पशुं विशास्ति तमाह त्रिः प्राच्यावयतादिति पठ्यते तस्यार्थः यः एनं पशुं विशास्ति तमाहꣳतादिति · माध्यन्दिनानमपि विशसनानन्तरं त्रिः प्रच्यावयतादिति मन्त्रः पठितः स लिङ्गात्कण्वश्रुतेश्च[4] शमित्रनुशासन एव विनियोज्य इति · तस्माच्छमितुरपि पशुविशसनं श्रुतिमूलम् आचारोऽपि तथैवास्तीति साधीय एवेदं मतम् ॥ ॥ सप्तमी कण्डिका ॥ ७ ॥

शमितारꣳ शास्ति त्रिः प्रच्यावयतात्त्रिःप्रच्युतस्य हृदयमुत्तमं कुरुतात् यत्त्वा पृच्छाच्छृतꣳ हविः शमितारिति शृतमित्येव ब्रूतान्न शृतं भगवो न शृतꣳ हीति (३.८.३.४) ॥ १ ॥ अवदानान्युखायां प्रक्षिप्यानन्तरमेव शमितारं शास्ति शिक्षयति त्रिः प्रच्यावयतादित्यादिना · अयमर्थः · हे शमितस्त्वं पशुं त्रिः प्रच्यावयतात् प्रच्यावय उत्कालय त्रिःप्रꣳस्य ऊर्ध्वमावृत्तस्य हृदयमुपरि स्थापयेति · यत् यदा त्वां कश्चित्पृच्छात्पृच्छेत् कथम् शृतꣳता३रिति तदा त्वम् शृतमित्येव ब्रूतात् ब्रूहि · न हि पुनरेवं ब्रूतात् कथम् शृतं भगव इति तथा · एवमपि न ब्रूतात्[5] कथम् शृतꣳ हीति · तदुक्तं भवति · शृतमित्येतावदेव प्रतिवक्तव्यम् भगवच्छब्दो वा हिशब्दो वा न परत उच्चारणीय इति । अनेकपाशुके त्रिःप्रच्युतयोः हृदये उत्तमे कुरुतादिति पशुद्वये त्रिःप्रच्युतानां हृदयान्युत्तमानि कुरुतादिति बहुषु च विपरिणामः · केचित्प्रच्युतस्येत्यस्य पदस्य हविःपरत्वं मन्यमाना अनूह-

---

1) Thus BC. डौहत्वा A sec. m. ज़ुह्वा A pr. m. 2) but see the schol. at ७. ३.
3) Thus A. तस्य BC. 4) ? कर्म A. कार्ष B. काएव C. 5) ? एवमपि ब्रूयात् ABC.

मिच्छन्ति तदयुक्तम् अस्य पशुपरतायाः श्रुत्यैव प्रकटितत्वात् तन्त्रिःप्रच्युते पशा-
विति (३. ८. ५. ८) तेनास्यापि पश्वनेकत्वे यथार्थमूहो भवत्येव। अत्र द्वे अनुशा-
सने त्रिः प्रच्याऽऽवृतादित्येकम् यद्वा पृच्छादिति द्वितीयम् अतस्तृतीयसवने शमि-
त्रनुशासनप्रभृतीडान्तं कृत्वेत्यत्र (१०. ५. ७) द्वितीयशमित्रनुशासनप्रभृति ज्ञातव्यम्
पूर्वानुशासनस्य कार्यस्य प्रातःसवनऽएव क्रियमाणत्वात् तत्तत्रैव कर्तव्यम्।

त्रिःप्रच्युते हृदयं प्रवृह्योत्तमं करोति ॥ २॥ एवमनुशिष्टः शमिता पशुं
त्रिः प्रच्यावयति त्रिरुत्कालयति ततस्त्रिःप्रच्युते पशौ हृदयं शूलान्निष्कृष्य
निष्काश्यावदानानामुपरि स्थापयति।

शूलं चाभूमौ ॥ ३॥ हृदयनिष्काशनानन्तरं शमिता हृदयशूलमध्वर्यवे
प्रयच्छति स अध्वर्युस्तद्धृदयशूलं न पृथिव्यां नाप्सु निक्षिपेत् शूलावभृथकालं
यावत्क्वाचिदुपधारयेत्।

जुह्वा पृषदाज्यस्यादायोपनिष्क्रम्य पृच्छति शृतꣳ हविः शमिता३रिति त्रिभि-
रभिक्रामम् ॥ ४॥ जुह्वां पृषदाज्यस्थालीस्थस्य पृषदाज्यस्यैकदेशमादाय चात्वा-
लोत्करावन्तरेणोपनिष्क्रम्य शमितुः समीपे गत्वा अभिक्राममभिक्रम्य शृतꣳ ता-
३रित्येवं त्रिः शमितारं पृच्छति एकवारमभिक्रम्य शमितृसंमुखं क्रमणं कृत्वा
शृतꣳ हविरिति शमितारं पृच्छति।

प्रोक्ते तद्देवानामित्याहोपांशु ॥ ५॥ शृतमित्येवं शमित्रा प्रोक्ते तद्दे°मि-
त्येवमध्वर्युरुपांश्वाह ततः पुनरभिक्रम्य द्वितीयवारं पृच्छति पुनः शृतमिति
शमित्रा प्रोक्ते तद्देवानमित्युक्त्वा पुनरप्यभिक्रम्य तृतीयवारं पृच्छति पुनरपि शृत-
मिति प्रोक्ते तद्देवानामित्याह।

सं ते मन इति (६. १८) हृदयमभिघार्य सर्वम् ॥ ६॥ प्रश्नप्रतिवचनानन्त-
रमध्वर्युः पशूखासमीपे उपविश्य सं ते मन इति मन्त्रेण जुहूस्थेन पृषदाज्येन
हृदयं पूर्वमभिघार्य तूष्णीं सर्वं पशुमभिघारयति पृषदाज्येनैवेति केचित् आज्ये-
नेत्यपरे। तथा चापस्तम्बः शूलात्प्रवृह्य हृदयं कुम्भ्यामवधाय सं ते मनसा
मन इति पृषदाज्येन हृदयमभिघारयत्युत्तरतः परिक्रम्याज्येन पशुमिति काठके
च प्रवृह्य शूलाद्धृदयमभिघारयति पशुं चेति स हृदयमेवाग्रेऽभिघारयति सं ते

मन इति च (३. ८. ३. ८) श्रुतत्वात् । तत उत्तरत उखाया उद्वासनम् ततोऽवदानान्युखाया उद्धृत्य कस्मिंश्चिद्विपुले वंशपात्र्यादिके पात्रे उदक्संस्थानि निधाय हृदयादीनामेकादशानां जौहवानां[1] प्रत्येकं प्राणदानं कुर्यात् न सौविष्टकृतादीनाम् तूष्णीं च वसायाः · अत्र हृदयादीन्येव हवींषि पशुस्तु व्रीहियववत्प्रकृतिद्रव्यम्[2] अतो हृदयादीनां प्रत्येकं यागसाधनहविर्धर्माः प्राणदानासादनालम्भा भवन्ति मध्यात्पूर्वार्धादवदानं च भवतीति हरिस्वामिनः ।

पशुसी वपावद्धृत्वा दक्षिणतः प्रतिप्रस्थाता वेद्यां प्लक्षशाखास्ववद्यति ॥७॥ पशुशब्देन हृदयादीन्यवदानान्युच्यन्ते असिश्चावदानार्थः तदुभयं वपावदित्यन्तरा यूपाग्नी (६. १६) हृत्वा वेद्यां दक्षिणतो वेदेर्दक्षिणभागे दक्षिणश्रोणिदेशे बर्हिष्यासादयत्यध्वर्युः प्रतिप्रस्थाता तु प्लक्षशाखासु हृदयादीन्यवद्यति अवखण्डयति असिना छिनत्ति । उत्तरत आसादने प्राप्ते दक्षिणत इति वचनाद्दक्षिणत आसादनम् । पशोः सांनाय्यविकारत्वात्तद्वदुखास्थस्यैवासादने प्राप्ते वेद्यामिति वचनाद्वेद्यामासादनम् । अवदानमात्रे प्रतिप्रस्थातुः श्रवणादालम्भनान्तमध्वर्योरेव · जौहवानां बर्हिषि प्रत्येकं मन्त्रवदासादनमुदक्संस्थम् आलम्भनं च जाघन्याश्च वसायास्तूष्णीमासादनमालम्भश्च[3] सौविष्टकृतानां भागावदानानां चासादनालम्भने न भवतः ।

जुहूपभृतोरुपस्तृणीति वसाहोमहवन्यां पात्र्यां च ॥८॥ आसादनालम्भनानन्तरमध्वर्युर्जुहूपभृतोराज्यमुपस्तृणीते ततो वसाहवन्याम् ततः प्राशित्रहरणे तत इडापात्र्यामिति · अथाज्यमुपभृति चेति (३. ८. ३. १३) श्रुतत्वात् वसाहोमहवनी स्रुक् द्वितीया जुह्वः समवत्तं धीयते यया सा समवत्तधानी इडापात्री ।

मनोतायै हविषोऽवदीयमानस्यानुब्रूहीत्युक्ते स्रुचोरवद्यति यथोक्तं द्विर्द्विः ॥९॥ मनोऽग्नीति अध्वर्युणा मैत्रावरुणं प्रत्युक्ते प्रतिप्रस्थाता यथोक्तं द्विर्द्विरिति मध्यात्पूर्वार्धाच्च स्रुचोर्जुहूपभृतोरवद्यति · एकादश वै पशोरवदानानि तानि द्विर्द्विरवद्यतीति शाखान्तरात् · औपभृतानामपि द्विर्द्विरवदानं भवति गुदं

1) जौ° deest in A. 2) see schol. at १७. 3) thus BC. A pr. m. °लम्भनं च A sec. m.

द्वेधा कृत्वावद्यतीति (३. ८. ३. १३) विशेषात् उपरिष्टाद्द्विरभिघारणानुपदेशाच्च · यथोक्तमिति जौहवानि जुह्वामौपभृतान्युपभृतीति ।

अशेषे गुदतृतीये ॥ १० ॥ गुदेऽशेषे निःशेषे अवद्यति द्विर्द्विः · गुदं त्रेधा करोति स्थविमोपयड्भ्यो मध्यं जुह्वां द्वेधा कृत्वावद्यतीति (३. ८. ३. १८) तथा गुदं द्वेधा कृत्वावद्यतीति (°१३) कृत्स्नयोरेव द्विर्द्विरवदानश्रवणात् ।

वपावद्धिरण्यम् ॥ ११ ॥ अत्र जुहूपभृतोर्वपावद्धिरण्यमवदधाति · वपावदित्युपस्तारानन्तरम् प्रागुपरिष्टादभिघाराच्च (६. २४–२५) तथैव श्रुतत्वात् । आप° अन्तरा यूपमाहवनीयं च दक्षिणातिक्रम्य पश्चद्धोत्रा षड्ढोत्रा वा दक्षिणस्यां वेदिश्रोण्यामासाद्योपस्तृणीति जुहूपभृतोर्वसाहोमहवन्यां समवत्तधान्यामिति जुहूपभृतोर्हिरण्यशकलाववधाय बर्हिषि प्लक्षशाखायामवदानान्यवद्यन्सम्प्रेष्यति मनोतायाऽइत्यादि · काठके च अग्रे हृदयस्यावद्यन्नाह मनोतायाऽइति · आपस्तम्बसूत्रे सौविष्टकृतानां सकृत्सकृदवदानमुक्तम् यथोद्धृतं दैवतानां द्विर्द्विरवदाय जुह्वामवदधात्युपभृति सौविष्टकृतानां सकृत्सकृदिति · कठसूत्रे सौविष्टकृतानामिव सर्वेषां द्विरिति ।

ऐडसीति (६. १८) वसां गृहीत्वा द्विरभिघार्य प्रयुतमिति (६. १८) पार्श्वेन संसृजत्यसिना वा ॥ १२ ॥ वसाहोमहवन्यां यथा कथंचिदेव वसां गृहीत्वोपरिष्टाद्द्विरर्थं पार्श्वेनाज्यं वसां च मिश्रयत्याड्डालयति असिना वा कट्टारिकया वा · अत्राप्युपस्ताराभिघारौ ध्रुवाया एव जुहोतिवाक्तूष्णीम् ।

शेषमिडापात्र्यामासिच्य क्रोडमनस्थीनि च प्रास्यति श्रोणिवर्जम् ॥ १३ ॥ वसाशेषमिडाऽच्य (३. ८. ३. २५) निनीय क्रोडं वक्षोऽवशिष्टे प्रास्यति प्रक्षिपति · अनस्थीनि च नास्त्यस्थि येषाम् तान्यनस्थीनि हृदयं जिह्वां यकृत् वृक्कौ चेत्येतानि श्रोणिवर्जम् दक्षिणां श्रोणिं वर्जयित्वा · सव्याश्रोणेस्तु अनस्थित्वेन प्राप्ताया निषेधः अपरसक्थ्न उपरि वर्तमानस्य पुच्छसंलग्नस्य मांसमात्रस्य अजौहवत्वादिवाप्राप्तेः अश्रोणिशब्दवाच्यत्वात्[1] । प्रकृतितः प्राप्तत्वादिडातः पूर्वतरं जौहवेभ्यो द्विर्द्विः प्राशित्रावदानं कार्यम् तत इडापात्र्यां वसासेचनादि · आपस्तम्बः सम-

[1] ? °ण्तेः पिशब्द° BC. °ण्तेः अपिशब्द° A.

वत्तधान्यां षडाग्यानीडामवद्यति वनिष्ठु सप्तमं षड्भ्यो वा वनिष्ठोः सप्तमाद्-नस्थिभिरिडां वर्धयति क्लोमानं प्लीहानं पुरीततमित्यन्ववधाय यूष्णोपसिच्याभि-घारयतीति षडाग्यानि हृदयं जिह्वा वक्षो यकृद्वृक्कौ इत्येतानि · शाखान्तरे श्रूयते दैवतान्यवदाय न तावत्येव होतव्यं सौविष्टकृतान्यवद्यति सौवि-ष्टकृतान्यवदाय न तावत्येव होतव्यमैडान्यवद्यतीति अतश्चात्रावदानं प्रदानान्तं न भवति वचनात् पूर्वं प्रधानावदानम् ततः सौविष्टकृतानाम् तत ऐडाना-मिति क्रमः · प्राशित्रं तु कात्यायनापस्तम्बमानवकठसूत्रेषु शतपथे च पठितं नास्ति सम्प्रदायपद्धतिकारेण कर्काचार्यैश्च कर्तव्यत्वेनोक्तम् भर्तृयज्ञेन चानु-क्तत्वान्न भवतीत्युक्तम् ।

जाघनीगुदं निधायाहेन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहीति ॥ १४ ॥ जाघनी गुदं च जाघ्दम् क्वचित्सुगुप्ते देशे स्थापयित्वा पक्षे वक्ष्यमाणप्रकारेण पशुसंमर्शनं च कृत्वा ततो मैत्रावरुणं प्रत्यध्वर्युराह इन्द्राग्नीति · एतदपि प्रयोगशिक्षार्थम् तेन पक्षे सूर्याय छागस्य प्रजापतये छागस्येत्येवमपि ज्ञेयम् ।

आश्राव्याहेन्द्राग्निभ्यां छागस्य हविः प्रेष्येति ॥ १५ ॥ तत उत्थाय यजतिदेशं गत्वाश्राव्येन्द्राग्नीप्रेष्येत्येवं मैत्रावरुणं प्रत्याह · एतदपि प्रयोगशिक्षार्थमेव · आश्रा-वणं तु प्राप्तमेव प्रैषविशेषार्थमनूद्यते ।

प्रस्थितमिति च प्रसुते ॥ १६ ॥ प्रसुतशब्देन सवनीये पशौ हविः प्रस्थितं प्रेष्येत्येवं वक्तव्यम् ।

अर्धर्चान्तरे याज्यायै वसैकदेशं जुहोति घृतं घृतपावान इति (६. ११) ॥ १७ ॥ याज्यायै इति षष्ठ्यर्थे चतुर्थी याज्यायाः अर्धर्चे अर्धर्चयोरन्तराले एकस्मिन्नर्धर्चे उक्ते द्वितीये चानुक्ते वसाहोमहवन्यां वसाया एकदेशं जुहोति आहवनीयस्योत्तरत उपविश्य सव्ये स्रुचौ कृत्वा दक्षिणेन वसां जुहोति इदमन्तरिक्षायेति त्यागः · वषट्कृते जुहोति यानि जुह्वामवदानानि भवन्तीति श्रुतत्वात् (३. ८. २. १२) यानि जुह्वां हृदयादिभ्योऽवत्तान्यवदानानि भवन्ति तानीति शेषः · एतस्मादेव च प्राप्तहोमसम्बन्धादवद्दानप्रभृतीनां हृदयादीनां पयःस्थानीयानां हविष्ट्वमवसीयते

पशोस्तु हविःप्रकृतेरुपाकरणादि[1] यथा गवां शाखोपस्पर्शनादि तथा द्रष्टव्यमिति हरिस्वामिनः । विरोधाद्वसाहोमः प्रतिप्रस्थातृकर्तृकः इति माधवाचार्याः · तथा चापस्तम्बः यान्याया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहोतीति · युक्तं चैतत् विना वचनम अध्वर्योर्यागार्थं गतस्य यजतिस्थानात्प्रत्यागमनस्यायुक्तत्वाच्च · तदुक्तम् (१. ८. ३०) वचनविरोधाभ्यामिति ।

दैवतं हुत्वा प्रदक्षिणमावृत्य जुह्वा पृषदाज्यस्योपघ्नन्नाह वनस्पतयेऽनुब्रूहीति ॥१८॥ दैवतं प्रधानदेवतासम्बन्धि द्रव्यं यज्जुह्वामवत्तम् तद्धुत्वा ज्ञौरुवं[2] हुत्वेत्यर्थः · ततः प्र॰त्य जुह्वा पृषदाज्यस्थालीतः पृषदाज्यं गृह्णन्नेव वन॰हीत्येवं मैत्रावरुणं प्रत्यध्वर्युरेवाह · प्रदक्षिणग्रहणमितरथावृत्तिव्युदासार्थम् श्रौतवज्ञापनार्थं वा अस्मिन्पक्षे इतरथावृत्तिर्भवतीति । अथ जुह्वा॰ब्रूहीति श्रुतवात् (३. ८. ३. ३३) अनुवाचनादिपूर्वकहोमसम्बन्धद्वारेण पृषदाज्यं यागसाधनमिति गम्यते स्थानसाम्याच्चायं स्विष्टकृद्विकारो वनस्पतिर्द्रष्टव्य इति हरिस्वामिनः । आपस्तम्बः प्रत्याक्रम्य जुह्वामुपस्तीर्य सकृत्पृषदाज्यस्योपहत्य द्विरभिघार्य वनस्पतयेऽनुब्रूहीति · काठके च सकृच्चतुर्वावदाय वनस्पतिना चरतीति ।

आश्राव्याह वनस्पतये प्रेष्येति ॥१९॥ मैत्रावरुणं प्रेष्यति । वनस्पतियागं स्विष्टकृद्विकारं केचिदाहुः · अपरे तु द्रव्यसामान्यादुपांशुयाजविकारमिति · तन्न · स्विष्टकृद्विकारता युज्यते उभयोः प्रैषेडाप्रधानदेवतासंकीर्तनसामान्यात् स्थानसाम्याच्च ।

हुत्वा समानीय सौविष्टकृतम् ॥२०॥ तज्जुह्वां गृहीतं पृषदाज्यं वनस्पतये हुत्वा स्विष्टकृद्विकारत्वादुत्तरार्धे तत उपभृत्यवत्तान्यवदानानि जुह्वां समा॰कृतं यागं कुर्यात् · उपभृतः सकाशाज्जुह्वां समानयनं कुर्वता स्विष्टकृतो[3]ऽनुवाचनं कर्तव्यम् ।

प्रत्येत्य वा दिशो व्याघारयति वसाशेषेण वाजिनवत् ॥२१॥ यजतिस्थानात्प्रत्येत्य जुहोतिस्थानं प्रत्यागत्य वा तत्र स्थितो वा स्रुचौ सव्ये कृत्वा

---

1) Thus B. °शोस्तूहः प्रवर्त्तते° A sec. m. °शोस्तुहविम्रत्प्रकृते° C. See schol. at ६. 2) °हवानि A sec. m. 3) ? कुर्वस्वि° A pr. m. CB. कुर्वन्स्वि° A sec. m. °कृते A.

वसाशेषेणैव वाजिनवद्दिशो व्याघारयति · यथा वाजिनशेषेण दिग्व्याघारणमुक्तम् तथे-त्यर्थः · तच्च दिशो व्या° प्रदक्षिणं पुरस्तात्प्रथममुत्तमाभ्यां मध्ये पूर्वार्धे चेत्येवम् (४. ४. १६–१७) । वाजिनवद्भक्षमप्याशङ्क्याह ·

सर्वं जुहोति ॥ २२ ॥ इयांस्तु वाजिनवदित्यतिदेशे विशेषः · वसाशेषं सर्वमपि जुहोति न भक्षार्थमवशेषयति । अपरे त्वन्यथा व्याचक्षते · वाजिन-वद्व्याघारणस्यैवातिदेशो न भक्षस्य अथ दिशो व्याघारयति दिशः प्रदिश इत्या-दिना (३. ८. ३. ३५) व्याघारणमात्रश्रवणात् तावन्मात्रस्यैव सूत्रणाच्च (२१) तस्मात् सर्वं जुहोतीत्यस्यायमर्थः अवशिष्टं सर्वमपि पशुं जुहोति होमेन प्रतिपादयति संमर्शनानन्तरम् तथा च श्रूयते अथ पशुं संमृशतीति (३. ८. ३. ३६) संमर्शनं विधाय तत्स्तुत्वा आह तद्यत्रैनमहौषीत् (°३१) हुतवान् एनं पशुमैन्द्रः प्राण इति मन्त्रवचनेन कृत्स्नं परिपूर्णं कृत्वा तत्तत्रैवाहवनीये अनुसमस्यति जुहोतीति · अयुक्तमेतन्मतमिति हरिस्वामिनः यतो नायं विधिः किं तर्ह्यर्थवादमात्रमेत-दिति ॥ ॥ अष्टमी कण्डिका ॥ ८ ॥

ऐन्द्रः प्राण इति (७. २०) पशुं संमृशति ॥ १ ॥ दिग्व्याघारणानन्तरं प्राक्स्रुङ्निधानात् पशुं अवशिष्टानि शेषभूतानि पश्ववदानान्यालभते · पशुं पश्वे-कदेशम् साङ्गं कलेवरं पक्षे च यदवत्तस्यावशिष्टम् तत्संमृशति इति हरिस्वा-मिनः (३. ८. ३. ३६) । तथा चापस्तम्बः अथ यन्न शीर्ष्णोऽवद्यति नांसयोर्नानू-कस्य नापरसक्थ्योरनवद्यान्येतानि तानि शृतैः संनिधाय संमृशत्यैन्द्रः प्राण इत्यथ हविषा प्रचरतीति सकलान्येवैतानि[1] दैवतसौविष्टकृतैडैर्निधायैकीकृ-त्याभिमृशत्युभयानि शृतानि मदन्त्वित्येतेनेति धूर्तस्वामिनः । एतर्हि संमर्शनस्य काल इति (३. ८. ३. ३६) सारभूतेषु शेषस्यापि[2] प्रतिपत्तिर्युक्तेत्यभिप्रायः । अथ संम-र्शनस्य कालान्तरमाह ·

अवदाय वेडां प्राक्प्रदानात् ॥ २ ॥ अथवा इडामवधाय प्रदानात्प्राक् श्रापणीगुदनिधानोत्तरकालं पशुं संमृशति · अथ यत्पुरा संमृशतिभृमेदिति (३. ८. ३. ३६) कालद्वये संमर्शनश्रवणात् अथ यत्पुरेति शाखान्तरसिद्धं प्रदाना-

---

१) Thus C. शक° AB. २) ? Thus BC. साधूत्तेषु A. ३) ? Thus C. शेषस्याति AB.

त्प्राक्संमर्शनमनुवदति यऽइमे उपतिष्ठन्ते मार्जारादयस्ते विमथिष्यन्ते विहनिष्यन्तऽइति शङ्कमानः यदि त्वस्माद्धिमाथाद्युपद्रवान्न[1] शङ्केत तदा अत्रैव संमृशेत् उचिते क्रमे संमर्शनं कुर्यादिति हरिस्वमिनः ।

इडामादधाति ॥ ३ ॥ स्रुगादानं संचराभ्युक्षणं प्राशित्रसमर्पणमुदकालम्भनं च कृत्वा होत्रे इडा॰ति प्रकृतिवदेव इडा॰ होत्रे प्रदायेत्यादिना प्रकारेण (३. ४. ८) · अत्र चान्तरा यूपाग्नी इडां प्रत्याहृत्य पश्चाद्धोतुः पाणावादधाति अन्यथा गार्हपत्याहवनीययोर्व्यवायः स्यात् दक्षिणेन हविर्धानं पश्चिडा॰° जाघनीं प्रत्याहृत्य वेति (८. ८. २–५) वक्ष्यमाणन्यायानुसारात् · तथा चापस्तम्बः दक्षिणेन विहारं जाघनी॰ हृत्वा तया पत्नीः संयाजयन्तीति निरूढे सूत्रम् एवं च जाघन्यपि पत्नीसंयाजार्था प्रत्याहृत्यैव गार्हपत्यं प्रति नेया दक्षिणेन विहारं वा ।

उपहूतायां वनिष्ठुमग्नीधे ॥ ४ ॥ उप॰यमिडायां वनि॰धे ददाति ।

अध्वर्यू॰ होत्रे ॥ ५ ॥ इतरेषामपि भागावदानानामयमेव[2] समर्पणकालः · तच्च क्लोमं ब्रह्मणे पुरीततमध्वर्यवे प्लीहं यजमानायेति · ततः सर्वेषां स्वस्वभागभक्षणम् · इडायाश्च सयजमानानां षण्णामृत्विजां भक्षणम् · तदुक्तम् (५.५.२६–२७) अध्वर्युविकारात्प्रति॰होत्रध्वर्युविकारादिति · आप॰ उपहूतां मैत्रावरुणषष्ठा भक्षयन्ति[3] प्रतिप्रस्थाता सप्तमो वनिष्ठुमग्नीधि षडवत्त॰ सम्पादयतीति ।

अवान्तरेडा वा ॥ ६ ॥ अध्वर्यू भवति · तदा च होतुः पाणाववान्तरेडावदानं न कार्यम् तत्कार्येऽध्वर्यूविधानात् ।

मार्जिते प्रेष्यत्यग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन्प्रस्थास्यामि समिधमाधायाग्निमग्नीत्संमृड्ढीति[4] ॥ ७ ॥ इडाभक्षणानन्तरं मार्जने कृते पवित्रप्रतिपत्तिं भागपरिहारं च कृत्वा उल्मुके समस्य समिधमादाय ततः प्रेष्यति अग्नीदौ॰हरेत्यग्नीधम् उपय॰सीदेति प्रतिप्रस्थातारम् ब्र॰मीति ब्रह्माणम् समि॰ड्ढीत्याग्नीध्रमिति । येषां मते प्रासङ्गिकः पशुपुरोडाशस्तेषां भागपरिहारस्तदिडामार्जनान्त[5] एव भवति नात्र मार्जितग्रहणं पवित्रप्रतिपत्त्यादीनामुपलक्षणम् यतो विकृतप्रैषानन्तरमेव प्राकृतं प्रैषमुपदिशति ।

---

1) ? यादेयाद्धिमा॰ C. 2) ॰नानामप्ययमेव ABC. 3) thus C. ॰णाश्च A. ॰णाष्ठा B (may be read ॰णाश्च ।) 4) ड्ढी M. १. ABC. 5) नं । त ABC. See schol. at १०. १३.

शामित्रादङ्गारानाहृत्य वेदिश्रोण्यां निवपत्युत्तरस्याम् ॥८॥ आग्नीध्रः · सामर्थ्याद्बर्हींष्यपोह्य वेदेः संस्कृतत्वान्निवापोपदेशाच्च भूसंस्काराणामभाव उत्तरवेदिवत् · काठके आहरत्याग्नीध्रः पशुश्रपणादङ्गारान्पूर्वेणाध्वर्युं कृत्वोत्तरस्यां वेदिश्रोण्यां व्युह्य बर्हिर्निवपति तत्रोपयज इति ।

आग्नीध्रीयाद्वा सोमे होतृधिष्ण्ये ॥९॥ सोमे आग्नीध्रा शामित्राद्वा अङ्गारानाहृत्याग्नीध्रो होत्र्ये निवपति · आप॰ आग्नीध्रादौपयजानङ्गारानाहरति होत्रीयमुपयजति शामित्रान्निरूढपशुबन्ध उत्तरस्यां वेदिश्रोण्यामिति ।

प्रतिप्रस्थातोपयजति गुदतृतीयस्य प्रच्छेदमनुयाजेषु समुद्रं गच्छेति (६. २१) प्रतिमन्त्रम् ॥१०॥ अनुयाजेषु हूयमानेषु प्रति॰ता गुद॰च्छेदं गुदतृतीयं यद्बर्हिषि स्थापितमासीत् (७. ८) तत्प्रच्छिद्य-प्रच्छिद्य उपयजति जुहोतीत्यर्थः · औपयजानङ्गारानित्युपदेशात् (७) तेषामाहरणस्य दृष्टार्थत्वाच्च तेष्वङ्गारेषु जुहोति · तच्च हस्तेनैव हस्तेनैव गुदकाण्डं जुहोतीति शाखान्तरे श्रुतत्वात् · उपयजति यजतोऽध्वर्योर्हीनं यजति पशब्दो हीने कर्मप्रवचनीयः तद्योगात् यजन्तमिति (३. ८. ४. १०) द्वितीया । आप॰ गुदकाण्डमेकादशधा तिर्यक्छित्वासम्भिन्दन्नपर्यावर्तयन्ननुयाजानां[1] वषट्कृते-वषट्कृत एकैकं गुदकाण्डं प्रतिप्रस्थाता हस्तेन जुहोति समुद्रं गच्छ स्वाहेत्येतैर्मन्त्रैः प्रतिमन्त्रं सर्वाणि हुत्वाद्भ्यस्त्वौषधीभ्य इति बर्हिषि लेपं निमृज्य मनो मे हार्दि यच्छेति जपति पृषदाज्यं जुह्वामानीय पृषदाज्यधानीमुपभृतं कृत्वा तेनैकादशानुयाजान्यजति देवेभ्यः प्रेष्येति प्रथमं प्रेष्येतीतरांस्तान्यजमानः प्राकृतैरनुमन्त्रयत इति · काठके तत्रोपयजः पृषदाज्येनैकादशानुयाजान्प्रत्याङ्क्ति गुदकाण्डस्यासम्भिन्दन्नच्छायावदाय समुद्रं गच्छ स्वाहेति प्रतिमन्त्रमिति । अथ माधवाचार्याः[2] समुद्रं गच्छेति हे गुदावयवरूप हविः त्वं समुद्रं समुद्राभिमानिदेवं गच्छ स्वाहा इदं द्रव्यं सुहुतमस्तु एवमुत्तरत्रापि द्रष्टव्यम् येषु मन्त्रेषु देवता स्पष्टं न प्रतिभाति तत्र तदभिमानिदेवता द्रष्टव्येति ।

प्रतिवषट्कारं हुत्वा मनो म इति (६. २१) मुखोपस्पर्शनम् ॥११॥ प्रतिप्रस्थाता प्र॰मेकैकं गुदकाण्डं हुत्वा सर्वान्ते मुखस्यालम्भं करोति ।

---

१) ? भिंदपर्या॰ ABC. २) at ३. ८. ४. ११.

अनुयाजान्ते स्वरुं जुहोति दिवं ते धूम इति (६.२१) ॥ १२ ॥ अनु°न्ते धारायाजान्ते जुह्वामवधाय स्वरुं जुहोति इदं स्वरवऽइति त्यागः · प्रत्याक्रम्य जुह्वां स्वरुमवधायानुयाजान्ते जुहोति द्यां ते धूम इत्यापस्तम्बः · काठके च संस्थितयजुर्हुत्वा जुह्वा स्वरुं जुहोत्यनुपस्तीर्णामनभिघारितं[१] द्यां ते धूम इति · प्रतिपत्तिरियं चरितार्थत्वात् नाशदोषादौ सकृद्गृहीतेनाज्येन होमः ।

पशुदेवतावनस्पतिभ्यां स्रुग्व्यूहनम् ॥ १३ ॥ वनस्पतिस्तु स्विष्टकृद्विकारः अतस्तस्य व्यूहने संकीर्तनं न प्राप्नोति प्रधानदेवतानामव्यूहने संकीर्तनदर्शनात् अतो वचनात्तस्योच्चारणम् । वनस्पतिग्रहणाऽएव क्रियमाणे परिसंख्यामाशङ्क्य तस्यैवोच्चारणेन व्यूहनं मा भूदिति पशुदेवताग्रहणम् तस्या अपि दर्शपूर्णमासधर्मित्वेन प्राप्तस्य व्यूहनस्यानिषिद्धत्वात् · अत्र तु तस्या एकत्वात्कालगुणभेदाभावादव्यवधानाच्च पशुदेवतापशुपुरोडाशदेवतयोस्तन्त्रेणोच्चारणम् यत्र तु व्यवधानम् सपशुचातुर्मास्यादौ तत्र भेदेनेति · यत्र च पशुदेवतानां पशुपुरोडाशदेवतानां च भेदो भवति यथा सौत्रामण्याम् (१२.७.२.१६) तदाहुरन्यदेवत्याः पशवो भवन्त्यन्यदेवत्याः पुरोडाशा इति तथा चेष्टकापशौ पञ्चपशुपत्ने (६.२.७.३५) वैश्वानरः पशुपुरोडाश इति अत्र तन्न प्राप्नोति अपशुदेवतात्वात् प्रासङ्गिकत्वाविशेषात्तु तत्रापि भवति · एवं प्रासङ्गिकानां चातुर्मास्यहविर्देवतानां देवसूदेविकाहविरादीनां च व्यूहने संकीर्तनं ज्ञेयम् ।

जाघन्या पत्नीसंयाजनम् ॥ १४ ॥ जाघन्या पशोः पुच्छरूपेण हविषा पत्नीसंयाजान्कुर्यात् · आज्यस्थालीस्थाज्येन प्रकृतौ पत्नीसंयाजानां दृष्टत्वादिह तत्स्थाने जाघनीविधानादाज्यस्थानापन्ना जाघनी · ततश्च हविरासादनकाले जौहवानामासादनालम्भानन्तरं तस्या अप्यासादनालम्भने भवतः । आपस्तम्बसूत्रे विशेषः प्रवावर्त[२] चतसृभिः पत्नीसंयाजानभिजुहोति दक्षिणेन विहारं जाघनीं हृत्वा तया पत्नीः संयाजयन्त्याज्येन सोमत्वष्टाराविष्टोत्तानार्ये जाघन्ये देवानां पत्नीभ्योऽवद्यति · नीच्याऽअग्नये गृहपतय ऽउत्तानायै होत्रऽइडामवद्यति नीच्याऽअग्नीधे तां पत्न्यै प्रयच्छति तां साधयवेऽन्यस्मै मया रमणायेति[३] । ततश्चतसृभिः स्रुग्भिः

१) °स्तीर्यमन° AB. २) ?? ३) ? —रमणायेति C. भयारम° B. मया रम° A.

संस्रवद्धोमः घृताच्य स्थ धुर्यौ पात सुम्ना स्थ सुम्ने मा धत्तेति धुरि-निधानम-त्वविपरिणामः (२. ११)।

उत्तानाया देवानां पत्नीभ्योऽवद्यति ॥ १५ ॥ उत्तानाया जाघन्याः अन्तरतो मध्यवर्तिपार्श्वात् देवाञ्यति अधस्तात् अलोमकात्पार्श्वात्।

इडां च ॥ १७ ॥ पश्चावत्ताम्।

परिवर्त्याग्नये गृहपतये ॥ १७ ॥ पर्यस्य उत्तानवाद्विपरीतत्वमापाद्य जाघन्या उपरिभागात् अग्न॰तये चतुरवद्यति उपरिष्टादुपरिदेशात् सलोमकात्पार्श्वात्।

अग्नीधे च ॥ १८ ॥ चकारात् पूर्वसूत्रोक्तादेव जाघनीप्रदेशादग्नीधे भागमवद्यति। इदानीमिदं विचार्यते किं चतस्रोऽपि पत्नीसंयाजदेवता जाघन्या यष्टव्याः उत पूर्वे द्वे देवते सोमत्वष्टारावाज्येनेति· तत्र सूत्रकार एव पूर्वपक्षमाह·

आज्येन पूर्वे ॥ १९ ॥ पूर्वे प्रथमे द्वे पत्नीसंयाजदेवते सोमत्वष्टारावाज्येनेति यष्टव्ये· कुतः उत्तरयोरेव यागयोर्जाघन्या अवदानस्य श्रुतत्वात् अथ जाघन्या पत्नीः संयाजयन्तीति प्रकृत्य (३. ८. ५. ६) अन्तरतो देवानां पत्नीभ्योऽवद्यति उपरिष्टादग्नये गृहपतयऽइति (७) च· अतस्तृतीयचतुर्थयोरेव जाघनीश्रवणात्प्रथमद्वितीये देवतेऽआज्येनैव यष्टव्ये इति प्राप्ते सिद्धान्तमाह·

सर्वा वा जाघन्याविशेषात् ॥ २० ॥ वा पूर्वपक्षनिरासे· सर्वा अपि चतस्रोऽपि देवता जाघन्यैव यष्टव्याः नाज्येन पूर्वे· कुतः अविशेषात्[1] चतुर्ष्वपि पत्नीसंयाजेष्वेवाविशेषेण[2] जाघन्याः श्रवणात् अथ जाघन्या पत्नीः संयाजयन्तीति (३. ८. ५. ६)· अथवा अविशेषात् चतुर्णामपि यागानां पत्नीसंयाजत्वाविशेषात् चत्वारः पत्नीसंयाजा इति श्रुतिनिर्देशात् अतश्चतस्रोऽपि देवता जाघन्यैव यष्टव्या इति सिद्धान्तः· जाघन्या एव यागसाधनत्वेन विधानात्प्रत्याम्नानाच्च तस्या एव चत्वारि-चत्वार्यवदानानि नोपस्तराभिघारौ इति याज्ञिकाः धूर्तस्वामिनश्च ॥

॥ नवमी कण्डिका ॥ ९ ॥

बर्हिर्कुवापो गच्छन्ति हृदयशूलमादाय ॥ १ ॥ तडागादिस्थितमुदकं प्रति

---

१) Thus ABC. २) °ष्वेव वि° ABC.

गच्छन्ति · बहुवचनात्सर्वे ऋत्विजः सयजमानाः सपत्नीकाश्च । सवविधेषु पशुष्व-यमेव शूलावभृथस्य कालः हविर्यज्ञविधेषु तु वैकल्पिकं कालान्तरमाह ·

आहवनीयं वोपस्थाय व्रतादीनि चेत् ॥२॥ पशौ व्रतादीनि व्रतोपा-यनप्रणीतादीनि चेत्क्रियमाणानि भवन्ति तदाहवनीयमुपस्थाय वा तूष्णीमाहव-नीयोपस्थानानन्तरं वा हृदयशूलमादायापः प्रति गच्छन्ति · तेन हविर्यज्ञविधेषु कालद्वयम् बर्हिर्होमान्ते आहवनीयोपस्थानान्ते चेति सवविधे तु बर्हिर्होमान्त एवेति · अथ हृदयशूलेनावभृथं यन्तीति (३. ८. ५. ८) श्रवणात् हृदयं यस्मि-ञ्शूतं स हृदयशूलः तेन सहावभृथमवभृथदेशं गच्छन्तीत्युपन्यासमात्रमेवैतत् उत्तरत्रैव यद्विधास्यते अप एवाभ्यवेत्य यत्र शुष्कस्य चार्द्रस्य च संधिः स्यात्तदुप-गूहेदिति (१०) तस्येदमुपन्यासमात्रम् इतरथा तु विधावेतस्मिन्सति सौमिकाव-भृथधर्मकोऽयं यागो नाम्ना परिकल्प्येत ।

अभ्यवेत्य शुष्कार्द्रसंधौ हृदयशूलमुपगूहति शुगसि तमभि शोच योऽस्मान्द्वेष्टि यं च वयं द्विष्मो मापो मौषधीरिति (६. २२) च ॥३॥ अध्वर्युरभ्यवेत्य उदकमध्येऽवतीर्य प्रविश्य शुष्कार्द्रसंधावुपगूहति भूमिमध्येऽधोमुखं बलात्प्रवेशयति । हृदयशूलेनावभृथं यन्तीत्युपन्यासाद्यागाशङ्कायां प्रसक्तायामवधारयति (३. ८. ५. १०) अप एवाभ्यवेत्येति नान्यत्किंचित्कृवेति ।

ग्लायन्नुदपात्रे निषिच्य पूर्वेण यूपं यथोक्तमुपगूहति ॥४॥ तडागादि-स्था अपः प्रति गमनाय ग्लायन् अनुत्सहमानो गन्तुमशक्नुवन् यूपं पूर्वेण यूपात्पू-र्वदेशे अदूरे निम्नभूमौ उदपात्रे उदकस्य पात्रं निनीय यथोक्तमिति शुष्कार्द्र-संधौ हृदयशूलमुपगूहति ।

धाम्नो-धाम्नः सुमित्रिया न इत्युपस्पृशन्त्यपः (६. २२) ॥५॥ सर्वे ऋत्वि-ग्यजमानास्तत्तडागादिस्थं यूपं पूर्वेण भूमौ निषिक्तं वोदकमालभन्ते अथाप उपस्पृशन्तीति काण्वपाठात् ।

उपगूहनशेषो वा पूर्वः ॥६॥ अथवा पूर्वो मन्त्रो धाम्नो-धाम्न इत्ययमु-पगूहनमन्त्रस्य शेष एव भवति मापोऽधीरित्यस्यैकदेशोऽवयवो भवति अप-मप्युपगूहनऽएव कारणत्वमापादनीय इत्यर्थः · वाशब्दोऽवधारणे ।

अभिमन्त्रणं वोत्तरेण ॥७॥ सुमित्रिया न इत्यनेन मन्त्रेणापामभिमन्त्रणं कर्तव्यम् उपस्पर्शनं वा · माध्यन्दिनानां ह्यभिमन्त्रणं पठ्यते अथाभिमन्त्रयते सु॰या न इति (३. ८. ५. ११) काण्वानां चोपस्पर्शनम् अथाप उपस्पृशन्तीति · अतो वाशब्दो विकल्पार्थः ।

न सोमेऽनूबन्ध्यावर्जम् ॥८॥ सोमेऽनूबन्ध्यां वर्जयित्वा अनूबन्ध्यातोऽन्यत्र अग्नीषोमीये पशौ आग्नेये च शूलावभृथो न भवति अनूबन्ध्यायां तु भवत्येव स वै नाग्नीषोमीयस्येत्यादिना (३. ८. ५. ११) श्रुतत्वात् ।

वरुणप्रघासवत्समिदाधानम् ॥९॥ तत्र ह्युक्तम् यथेतमेत्या॰तूष्णीमिति (५. ५. ३५–३६) तद्वदत्रापि भवतीत्यर्थः । अनेकयजमानके गृहपतिरेवाहवनीये समिधमादधाति तत्पत्नी च सर्वगार्हपत्येषु समिदाधानस्याग्नीन्धनार्थत्वात् परार्थेष्वेकः कुर्यादित्युक्तत्वात्[1] · प्रपञ्चितं चैतद्वरुणप्रघासेषु ।

व्रतं विसृज्यापराग्नीनां पूर्वे चतुर्गृहीतं यूपाहुतिवत् ॥१०॥ हविर्यज्ञविधे यदि तूष्णीमाहवनीयोपस्थानान्ते शूलावभृथः कृतस्तदा समिदाधानान्ते व्रतं विसृज्यौत्तरवेदिकाहवनीयसमीपे[2] व्रतविसर्गं कृत्वा अपरा॰र्वे मध्याहवनीये यूपा॰वच्चतु॰तं जुहोति उरु विष्णविति मन्त्रेण · व्रतं विसृज्येत्युक्तत्वात् यत्रैव व्रतं तत्रैवेयमाहुतिर्न सवविधऽइति गम्यते · यूपाहुतिवदित्येतावतैव सिद्धेः पुनश्चतुर्गृहीतग्रहणं स्रुवेण वेत्येतस्य (६. ४) पक्षस्यात्र निवृत्त्यर्थम् · केचिदाज्यं पूर्णाहुतिवत्संस्कृत्य कुर्वन्ति अन्ये तु पश्वर्थं संस्कृतेनैव नैमित्तिकाहुतिशङ्कया तस्यानपवृक्तत्वादिति हरिस्वाम्यभिप्रायः ।

स विहारोऽत ॥११॥ अतः परं स एव विहारो भवति · अतिप्रणीतोऽपवृज्यते · कर्मापवर्गाधानाद्यप्यत्रैव कर्तव्यमिति पितृभूतिः अतिप्रणीतऽएवेति कर्कः । सर्वेषां धारणपक्षे च मध्याहवनीयस्य धारणं कर्तव्यमित्येतदर्थमिदमुक्तम् ।

समारूढनिर्मथिते वा ॥१२॥ अथवा समा॰ते विहारे इयमाहुतिर्भवति ततश्च गार्हपत्यं समारोप्य निर्मथ्याहवनीयमुद्धृत्य तस्मिन् · अस्मिन्पक्षे कर्मापवर्गाहुतिसमिदुपस्थानादिकमप्यत्रैव भवति ।

---

1) See १२. १. १५. 2) °स्तदसविदाधानांतेविस° ABC.

यथोत्साहं दद्यादस्याम् ॥ १३ ॥ अस्यामाहुतौ यद्यद्धिरण्यधान्यवस्त्रादि दातुं शक्यते तदर्धर्यवे दद्यात् तस्यैव संनिधानात् । ततः पशुपुरोडाशभागप्राशनं ब्रह्मयजमानयोः अतिप्रणीतसंनिधाविव पशुपुरोडाशाङ्गत्वेन ब्राह्मणतर्पणप्रैषः पशोर्विष्णुक्रमान्तत्वात् ब्राह्मणतर्पणम् नमः कृतायेत्यनेनौत्तरवेदिकाहवनीये समिदाधानम् आहुतिहोमो वा उपस्थानं चेति। बर्हिर्होमान्ते शूलावभृथकरणपक्षे तु समिदाधानान्ते प्रणीताविमोकादि व्रतविसर्गान्तम् ततो वैष्णव्याहुतिः ततो भागप्राशनादीति · येषां मते प्रासङ्गिकः पशुपुरोडाशः तेषां मते भागप्राशनादि कर्मापवर्गान्तं पशुपुरोडाशेडामार्जनान्ते भागपरिहारानन्तरमेव कणानपास्य भागावेक्षणं च कृत्वा कर्तव्यम् नेदानीम् · व्रतविसर्गान्त एवायं पशुर्भवति ऐन्द्राग्नाद्यनेकदेवतस्य तु भागाभावः ।

अग्निं प्रणीय सदोहविर्धानाग्नीध्रहोतृधिष्ण्यान्यथोक्तं गृहीत्वाज्यान्याग्नीध्रप्रणायनमग्नीषोमीयदर्शनात् ॥ १४ ॥ अत्र निरूढेऽग्निप्रणयनानन्तरं सदो॰क्तं कृत्वा यादृशान्येतानि येन प्रकारेण कर्तव्यत्वेनोक्तानि तेनैव प्रकारेण कृत्वा तत आज्यानि गृहीत्वा आग्नीध्रे अग्नेः प्रणयनं कर्तव्यम् · कुतः अग्नी॰नात् यतो ऽग्नीषोमीयऽ एतानि दृश्यन्ते · तथा हि अग्नीषोमीये हविर्धाने सामिधेन्यनुवचनम् आग्नीध्रे प्रत्याश्रावणम् सदसि वषट्कारः होतृधिष्ण्यऽ उपयड्ढोमः आग्नीध्रीयाद्उपयड्ढोमार्थमङ्गाराणामाहरणमिति · अतोऽग्नीषोमीयऽ एतेषां दर्शनात् अत्राप्येतानि कर्तव्यानि अस्याग्नीषोमीयविकारत्वादिति पूर्वपक्षः । सिद्धान्तमाह ·

न सोमार्थत्वात् ॥ १५ ॥ अत्र सदोहविर्धानादिकं न भवति · कुतः सो॰त्वादेतेषाम् यतः सदआदीनि सोमार्थानि सोमं प्रकृत्य यत एतानि श्रूयन्ते उदरमेवास्य सद इत्येवमादि (३. ६. २. १) । ननु यदि एतानि सोमार्थानि तदा कथमेषामग्नीषोमीयदर्शनमित्याशङ्क्याह ·

प्रसङ्गाद्दर्शनम् ॥ १६ ॥ प्रासङ्गिकमित्यर्थः · अन्यार्थमनुष्ठितस्यान्येनोपजीवनं प्रसङ्गः · सोमार्थमेव निष्पादितान्येतानि प्रसङ्गादग्नीषोमीयेणोपभुक्तानि न त्वेतेषामग्नीषोमीयस्याल्पोऽपि स्वत्वसम्बन्धो येन विकारेषु प्रवृत्तिरपि शङ्क्येत · तस्मान्निवर्तन्तेतानि भवन्तीति ।

दर्विहोमाः पौर्णमासधर्मा जुहोत्यविशेषात् ॥१७॥ दर्विहोमाः शतरुद्रियादयो जुहोतिचोदनाचोदिता जुहोतयः · ते पौर्णमा भवन्ति पौर्णमासग्रहणं दर्शस्याप्युपलक्षणम् दर्शपूर्णमासधर्मा इत्यर्थः शुक्लवत्सापयसाभिजुहोति (१८. ४. २) अन्वारब्धेषु पयो जुहोति (११. ३. २५) औदुम्बरे पात्रऽआसिच्य पयश्चेत्यादिषु (१४. ५. २०) दार्शिकपयसो धर्मप्रवृत्तेरिष्टत्वात् · कुतः पौर्णमा भवन्तीति जुहोत्यविशेषात् यजतेः सकाशाज्जुहोतेर्विशेषो नास्ति यतः उभयत्र हि द्रव्यदेवतावत्त्वम् · अथ मारुतान्जुहोतीत्येवमादिचोदनासामान्याच्च (१. ३. १. ७) धर्मप्रवृत्तिर्भवति · तस्माद्दर्शपूर्णमासधर्मा दर्विहोमेषु भवन्तीति । किं च ·

जुह्वदर्शनाच्च ॥१८॥ जुह्वादियजतिधर्माणां जुहोतिषु सम्पत्तिदर्शनादप्येवं ज्ञायते यद्दर्विहोमेषु दर्शपूर्णमासधर्मा भवन्तीति · मारुतान्प्रकृत्यैवं श्रुयते (१. ३. १. १७) तदाहुः कथमस्यैतेऽस्रुचा हुता भवन्तीति · अत्रैषां यजतिधर्माणां दर्शपूर्णमासदृष्टानामिह प्रकारान्तरेण सम्पादनं ब्रुवन्दर्विहोमाणां दर्शपूर्णमासधर्मत्वं दर्शयति । तदेवं समन्त्रकसर्वधर्मप्राप्तावाह ·

तूष्णीम् ॥१९॥ ते दर्शपूर्णमासधर्माः दर्विहोमेषु भवन्तः तूष्णीं मन्त्रवर्जिता भवन्ति अमन्त्रकाः सर्वे पदार्था भवन्तीत्यर्थः ।

अनर्थलुप्ताः ॥२०॥ दृष्टेनार्थेनालुप्ता अनर्थलुप्ताः यथैकाग्नित्वेऽपि गार्हपत्यश्रपणादिनेति ।

एकाग्नयः ॥२१॥ एकाग्निसाध्यहोमकाः · [त][1]एव चात्र होमा भवन्ति यऽएकस्मिन्नाहवनीये क्रियन्ते · अनेनात्रापराग्निहोमाः पत्नीसंयाजदक्षिणाग्निहोमा निषिध्यन्ते ।

अप्रयाजाः ॥२२॥ अननुयाजाः ॥२३॥

असामिधेनीकाः ॥२४॥ मन्त्ररूपाणां सामिधेनीनामृचां तूष्णीमित्यनेनैव (१९) निषिद्धत्वात् अनेनैव सामिधेनीसहचरितेध्मकाष्ठानां लक्षणया निषेधः क्रियते मुख्यार्थासम्भवात् ।

अनिगदाः ॥२५॥ मन्त्ररूपाणां निगदानां तूष्णीमित्यनेनैव निषिद्धत्वात्

1) ? deest ABC.

अनेन लक्षणया तत्सम्बन्धीनि धर्माणि स्विष्टकृदिडाप्रस्तरहोमरूपाणि निषिध्यन्ते ततश्च दर्विहोमेषु स्विष्टकृद्धोमो न भवति इडावदानं च न भवति प्रस्तरहोमोऽपि न भवतीत्यर्थः ।

प्रतिनिगद्य होमाः ॥ २६ ॥ देवतां प्रतिनिगद्य देवतापदं चतुर्थ्यन्तमुच्चार्य स्वाहाकारेणात्र होमः कर्तव्यः · तद्यथा अग्नये स्वाहा सोमाय स्वाहेत्याज्यभागयोर्होमः ।

स्वाहाकारप्रदानाः ॥ २७ ॥ तूष्णीमित्युक्तत्वात्स्वाहाकारस्याप्यभावः प्राप्नोति तन्मा भूदित्येवमर्थमिदमुच्यते · स्वाहाकारेण प्रदानं होमो येषु ते स्वा॰नाः ततश्चतुर्थ्यन्तं देवतापदं स्वाहान्तमुच्चार्य होमः कर्तव्यः इत्यर्थः · तद्यथा प्रजापतये स्वाहेन्द्राय स्वाहेत्याघारौ अग्नये स्वाहा सोमाय स्वाहेत्याज्यभागौ विश्वेभ्यो देवेभ्यः स्वाहेति संस्रवहोमः दिव्याय नभसे स्वाहेति बर्हिर्होम इति ॥

एवं सर्वजुहोतिषु प्रसक्तौ क्वचिदपवादमाह

परतन्त्रोत्पत्तयो जुहोतिमात्राः ॥ २८ ॥ परस्यान्यस्य कर्मणस्तन्त्रे उत्पत्तिर्येषां जुहोतीनाम् ते जुºत्रा होममात्रा[1] भवन्ति संनिपत्योपकारकाङ्गयुक्ताः आराडुपकारकाणि तु तेषु न भवन्तीत्यर्थः · तद्यथा साकमेधेषु सांतपनीयातन्त्रमध्ये दर्विहोमः पतितः स तु होममात्र एव भवति तत्रापि येषां सांतपनीयासम्बन्धि बर्हिर्होमवर्जितं सर्वं समाप्य गृहमेधीया क्रियते तेषामस्मिन्नपि दर्विहोमे सर्वेऽपि पौर्णमासधर्मास्तूष्णीं भवन्त्येवेति · तथा च वाजपेये सर्वौषधोदकपयःसाधनको जुहोतिः परतन्त्रोत्पन्नः सोऽपि हविर्निष्पत्तिमात्रसांनिपातिकधर्मोपेतो जुहोतिमात्रो भवति · एवमन्वारब्धेषु पयो जुहोतीत्यादावपि (१९. ३. २५) वाच्यम् · ते च परतन्त्रोत्पन्नत्वात्पशुपुरोडाशवदङ्गानामप्रयोजकाः · अन्यानुष्ठितान्येवाराडुपकारकाण्युपजीवन्तीति न तेषां पृथगङ्गानुष्ठानापेक्षा · तदुक्तम् अक्रियान्यस्य समानार्थत्वादिति (७. २२) ।

पाकयज्ञेष्ववत्तस्यासर्वहोमः ॥ २९ ॥ स्मार्ता जुहोतयः[2] पाकयज्ञा उच्यन्ते · पच्यतेऽन्वहमनेनेति पाको गृह्याग्निरावसथ्यः पाके आवसथ्ये गार्ह्येऽग्नौ ये यज्ञाः पक्षादिकर्मोपाकर्मनवान्नप्राशनश्रवणाकर्मादयः तेषु होमार्थं स्रुचि स्रुवे वा-

---

1) Thus Ss. हो॰ deest ABC. 2) Thus Ss. स्मा॰यः deest ABC.

वत्तस्य आज्यचरुधानादेरसर्वहोमः कर्तव्यः अवत्तं सर्वं न होतव्यम् प्रतिहोमं भक्षार्थं किंचित्परिशेषणीयम् तच्च प्रतिहोमं पात्रान्तरे निधेयम् । अथ तस्यावशेषितस्य प्रतिपत्तिमाह

हुत्वा शेषप्राशनम् ॥ ३० ॥ हुत्वा साङ्गं पाकयज्ञं समाप्य सर्वहोमान्ते कस्मिंश्चित्पात्रे स्थापितानां होमशेषाणामाज्यचरुधानादीनां होमकर्ता प्राशनं करोति ।

अग्निहोत्रे तदस्य पाकयज्ञस्येवेति श्रुतेः (२.३.१.२१) ॥ ३१ ॥ यतोऽग्निहोत्रे अवत्तस्यासर्वहोमं तस्य भक्षणं च विधाय तत एवं श्रूयते तद्धोवाच याज्ञवल्क्य 'पाकयज्ञस्येवेति (२.३.१.२१) अतोऽग्निहोत्रे शेषभक्षणे पाकयज्ञस्य शेषभक्षणं सिद्धवत्कृतं दृष्टान्तत्वेन ब्रुवन् पाकयज्ञेष्ववत्तस्यासर्वहोमं कृत्वा च शेषप्राशनं कर्तव्यमिति दर्शयति ।

अग्नीषोमीयात्पशुषु ॥ ३२ ॥ पशुषु सवनीयानूबन्ध्यनिरूढेषु अग्नी॰यात्पशोः सोमाङ्गभूता धर्माः प्रवर्तन्ते चोदनासारूप्यात् प्राणिसाधनकत्वसामान्याच्च · एतत्पशुत्रयव्यतिरिक्तपशुषु निरूढपशोर्धर्मा भवन्तीति याज्ञिकाः · हरिस्वामिनामप्ययमेवाभिप्रायः यतः तानि वाऽएतानि नव समिष्टयजूंषीत्यत्र (४.४.४.१) एवमाहुः निरूढे तु प्रत्यक्षशिष्टत्वात्त्रीण्येव तद्विकारेष्वपि तान्येव दर्शितानि तदाहुर्नैतस्य पशोः समिष्टयजूंषि जुहुयादित्यादिना । एवं प्राणिसाधनसाम्यात् स्मार्तपशुष्वपि धर्मप्राप्तौ विशेषमाह ·

शाखानियोजनम् ॥ ३३ ॥ पाकयज्ञपशुषु शूलगवाष्टकापश्वादिषु शाखायां पशुनियोजनम् न यूपे · तदुक्तं पारस्करेण (३.११) पशुश्चेदाप्लाव्यागामग्रेणाग्नीन्परीत्य पलाशशाखां निहन्तीत्यादिना ।

वपां हुत्वा त्रीणि पञ्च सर्वाणि वावद्यति ॥ ३४ ॥ वपाहोमानन्तरं पशुशरीरात् त्रीण्येवादिमानि हृदयादीन्यवदानानि अवद्यति गृह्णाति हृदयं जिह्वां क्रोडमित्येतानि · अथवा पञ्च हृदयं जिह्वां क्रोडं सव्यसक्थिपूर्वनडकं पार्श्वे चेति · अथवा सर्वाण्येव हृदयादीन्यवदानान्यवद्यति · इति त्रयो विकल्पाः ।

सर्वाभावे शेषात्स्विष्टकृतः ॥ ३५ ॥ सर्वावदानाभावपक्षे त्रीण्यवद्यतीत्यस्मिन्पक्षे पञ्चावद्यतीत्यस्मिन्पक्षे च शेषात् प्रधानार्थावत्तशेषात् हृदयादेः सका-

शास्त्विष्टकृतोऽवदानं भवति । स्विष्टकृद्धोमार्थं तेभ्य एवावद्यतीत्यर्थः । सर्वावदानपक्षे तु त्र्यङ्गेभ्य एवेति ।

स्थालीपाकेन सह प्रदानम् ॥ ३६ ॥ पाकयज्ञपश्ववदानानां स्था॰दानं भवति · स्था॰केनेत्यत्र सहयुक्तेऽप्रधानऽइति तृतीया (पा॰ २. ३. १९) तेन स्था॰कस्य प्राधान्यमत्रावगम्यते अतश्च स्थालीपाकावदानविस्मरणे केवलावदानहोमे निष्पन्ने अनावृत्तिरिति विचारस्य प्रयोजनम् ।

पूर्णपात्रो दक्षिणा ॥ ३७ ॥ पाकयज्ञेषु तण्डुलमुद्गगोधूमादियज्ञियधान्यपूर्णः पू॰णा · धान्यस्य मानपात्रं पल्ली श्वेतिकादिपूर्णा[१] पूर्णपात्र इति कर्कः · छन्दोगपरिशिष्टे कात्यायनस्तु प्रकारान्तरमाह (कर्मप्रदीप॰ २. ५. २) यावता बहुभोक्तुस्तु[२] तृप्तिः पूर्णेन विद्यते नावरार्ध्यमतः कुर्यात्पूर्णपात्रमिति स्थितिरिति ।

वरो वा ॥ ३८ ॥ ॥ दशमी कण्डिका ॥ १० ॥

इति श्रीश्रोत्रियाग्निचि॰सुतेन याज्ञिकदेवेन कृते कात्यायनसूत्रव्याख्याने षष्ठोऽध्यायः ॥

इति कातीये श्रौतसूत्रे षष्ठोऽध्यायः ॥ ६ ॥ ॥

आचार्येण हविर्यज्ञप्रसङ्गाच्चातुर्मास्यानन्तरं निरूढपशुबन्ध उपदिष्टः । अधुना श्रुतिमन्त्रपाठक्रमानुसारेण ज्योतिष्टोममुपदिदिक्षुः प्रथमं तस्य क्रममुपदिशति ·

दर्शपूर्णमासाभ्यामिष्ट्वान्येन यजेतेति श्रुतेः ॥ १ ॥ अग्न्याधानसमनन्तरं पूर्वं दर्श॰ष्ट्वा ततोऽन्येनेष्टिपशुसोमादिना यजेत · कुतः इति श्रुतेः यत एवमर्थप्रतिपादिकेयं श्रुतिर्वर्तते देवरथो वाऽएष यद्दर्श॰सौ यो दर्श॰साभ्यामिष्ट्वा सोमेन यजते स रथस्पृष्ट एव देवानामवसाने चरिष्यतीति । अन्येन यजेतेति यजतिशब्दोपादानाद्यजतेरेवायं नियमो न जुहोतेः ततश्चाधानानन्तरं दर्श॰साभ्यां प्रागप्यग्निहोत्रं हूयतऽएव ।

सोमेन वोपक्लृप्तसोम आधानस्य सोमप्राधान्यात् ॥ २ ॥ उपक्लृप्तं सोमयागाय दक्षिणान्नघृतसोमादिकं द्रव्यं येनासावुपक्लृप्तसोमः उप॰सोमो यजमानः आधानानन्तरं प्रथमं सोमेनेष्ट्वा ततोऽन्येन दर्श॰सादिना यजेत · कुतः आधा॰-

१) ? पल्लीषेतिकादिपूर्ण A. पल्लोशेतिर्णं BC. २) भोक्तुस्था C. भोक्तु AB.

न्यात् सोमप्रयुक्तत्वात् सोमचिकीर्षया कृतत्वात् सोमाधानयोरानन्तर्यश्रवणादित्यर्थः· तथा हि　सोमेन यक्ष्यमाणो नऽर्तुं पृच्छेन्न नक्षत्रमिति · अत्र यक्ष्यमाण इति लृडादेशः शानच् · स तु सोमस्याधानानन्तर्यमाह　यतो न कश्चिदयक्ष्यमाणः सर्वस्यापि सोमयागविधानात् · तस्मादाधानानन्तरं कर्मान्तराव्यवधानेन यक्ष्यमाण इति प्रतीयते । वाशब्दो व्यवस्थितविकल्पार्थः　य उपक्लृप्तसोमस्तस्य नियमेन सोमपूर्वत्वं दर्शपूर्णमासादीनाम्.　यश्चानुपक्लृप्तसोमस्तस्य दर्शसपूर्वकत्वमन्येषामि- ष्टिपशुसोमादीनामिति · उपक्लृप्तसोमस्याधानानन्तरं सोमपूर्वकतानियमेऽपि आ- धानान्तर्भूताः पवमानाद्या इष्टयः सोमात्प्रागपि भवन्त्येव　ताभिर्विना अग्नीना- मनिष्पत्तेः · अत एव च दौर्ब्राह्मण्यनिरासार्थो य ऐन्द्राग्नः पशुः (५) सोऽपि सो- मात्पूर्वं भवत्येव　तदनुष्ठानं विना सोमेऽधिकाराभावात् अनधिकारिणारब्धस्य कृतस्य चाकृतसमत्वादिति · अग्निहोत्रं त्वत्तरा न हूयतऽएव　यतस्तस्मिन्हूयमाने व्यवधानं भवत्येव　पवमानेष्टिपशुवदन्यथानुपपत्त्यभावात्　प्रपञ्चितं चैतत्पा- र्थसारथिमिश्रैस्तन्त्ररत्ने पञ्चमाध्याये ।　अथेदं विचार्यते · किमयमृतुनक्षत्रानादर आधानस्योत सोमस्येति · तत्रादधानो नऽर्तुं पृच्छेदित्याधानानन्तर्यादाधानस्यानेन कालानादरः क्रियतऽइति प्राप्तऽआह ·

नाविशेषात् ॥३॥　　नायमाधानस्य ऋतुनक्षत्रानादरः · कुतः　अविशे- षात् एतस्य वाक्यस्याधानकालानादरपरत्वे वर्ण्यमाने अनेन वाक्येन कोऽपि विशेष उक्तो न भवति　अस्यार्थस्यैव श्रुतिपठितेनैव यदहरेवैनं श्रद्धोपनमेत्त- दहरादधीतेत्यनेन वाक्यान्तरेण सिद्धत्वात् अनुवादपरमनर्थकमेव स्यात् · तेन सोमस्यैव वसन्तादिकालानादरोऽनेन क्रियतऽइति युक्तम् तथा सति वाक्यस्याज्ञा- तार्थपरत्वेन सार्थकत्वाद्विधित्वं भवति ॥

वसन्तेऽग्निष्टोमः ॥४॥　　सोमयागस्यानुष्ठानक्रम उपदिष्टः　इदानीं तस्य काल उच्यते[१] · अग्निष्टोमो वसन्तर्तौ भवति　वसन्ते-वसन्ते ज्योतिषा यजेतेति शा- खान्तरश्रवणात् · ननु तर्हि वसन्ते ज्योतिष्टोम इति वक्तव्यम्[२] न त्वग्निष्टोम इति　उच्यते　वक्ष्यति एष प्रथमः सोम इति (१०. १. २४) तत्राग्निष्टोमस्यैव

१) कालविधिरु॰ A.　२) deest B.

प्राथम्यं यथा स्यान्नोक्थ्यादीनामित्येवमर्थमग्निष्टोम इत्युक्तम् · चतुःसंस्थोऽप्ययं ज्योतिष्टोमो भवत्येवाग्निष्टोम उक्थ्यः षोडश्यतिरात्र इति · अत्राहापस्तम्बः वसन्ते ज्योतिष्टोमेन यजेताग्निष्टोमः प्रथमयज्ञोऽतिरात्रमेके पूर्वं समामनन्ति वसन्ते-वसन्ते ज्योतिष्टोमेन यजेत तस्य तिस्रो दक्षिणा यदि छन्दोगब्राह्मणं भवति[1] रथन्तरसाम्ना बृहत्साम्नोभयसाम्ना वा प्रथमं यजेत न रथन्तरसामानमकृत्वा बृहत्सामानमाहरेदित्येके यदीष्ट्या यदि पशुना यदि सोमेन यजेतामावास्यायां वैव पौर्णमास्यां वा यजेतेति । केचिदिदं व्याचक्षते · वसन्तऽइत्यनेन पदेन वसन्ते-वसन्तऽइति वाक्योपलक्षणम् तेनायमर्थः वसन्ते-वसन्तऽइत्यनेन वाक्येन यः प्रतिवसन्तं ज्योतिष्टोमः कर्तव्यत्वेनोच्यते सोऽग्निष्टोमो नोक्थ्यादीति[2] तस्यैव नित्यत्वात् उक्थ्यादीनां च कामनासंयोगादिति · उक्थ्यादयोऽपि पुरुषसंस्कारमध्ये परिगणिता नित्या अपि सन्त्येव कामसंयोगाच्च काम्या अपि · अतो दर्शपूर्णमासचातुर्मास्यवदुभयरूपताग्निष्टोमादीनामिति · अत एव हरिस्वामिभिरप्युक्तम् संस्कारमध्यपाठाद्यग्निष्टोमाद्याः सप्त संस्थाः[3] निष्कामैरपि कार्या इति · चतुःसंस्थस्यापि ज्योतिष्टोमत्वात् अविशेषाच्च येन केनापीष्टे प्रतिवसन्तं ज्योतिष्टोमेनेष्टमेव भवतीति नाग्निष्टोमऽएवेत्ययं नियम इत्यपरे · युक्तं चैतत् · वचनं विना संकोचस्यायुक्तत्वादिति । अथवाग्निष्टोमसंस्थस्योक्थ्यादीन्प्रति प्रकृतित्वज्ञापनार्थम् अग्निष्टोम इत्युक्तम् · अतोऽग्निष्टोमसंस्था प्रकृतिभूता तामेव प्रकृत्य धर्माणामाम्नानात् इतरासु च संस्थासु ततो धर्मप्राप्तिरिति ।

ऐन्द्राग्नं पुनरुत्सृष्टमालभ्य द्विपुरुषासोमपीथिनः ॥५॥ द्विऽनः यजमानस्य ऐष्टं पशुमालभ्य वसन्तेऽग्निष्टोमो भवति · द्वौ पुरुषौ पितृपितामहावसोमपीथिनौ असोमपावकृतसोमयागौ यस्यासौ · यस्य पित्रा पितामहेन वा सोमयागो न कृतः तस्य सोमारम्भात्पूर्वं यजनीये पुण्याहे सोमारम्भदिने वा दौर्ब्राह्मण्यनिरासार्थोऽयमैन्द्राग्नः पशुरुद्धरणादिकर्मापवर्गान्तः ततः सोमयागारम्भनिमित्तमातृपूजाश्राद्धादि । पूर्वं वाहितः दौर्बल्याच्चोत्सृष्टः पुनरपि सबलो जातः पुनरपि वाहितः पुनश्च दौर्बल्याद्य उत्सृष्टः स पुनरुत्सृष्ट इत्युच्यते · स च

१) भविष्यति A. २) °दिभिरिति A. ३) सोमसंस्थाः A.

पुंष्टः छाग एव　न सामर्थ्यान्नौः　कुतः　प्रकृत्यनुग्रहात् छागस्यापि छिमवत्प्रदेशे वाच्यमानस्य पुनंष्टत्वसम्भवादिति। कर्कमतानुसारिणस्त्विमं पशुमग्नीषोमीयविकारं सवविधधर्माणं कुर्वन्ति　इतरे तु निरूढविकारं हविर्यज्ञविधधर्माणमिति।

षोडशऽर्त्विजो ब्रह्मोद्गातृहोत्रध्वर्युब्राह्मणाछंसिप्रस्तोतृमैत्रावरुणप्रतिप्रस्थातृपोतृप्रतिहर्त्रच्छावाकनेष्ट्राग्नीत्सुब्रह्मण्यग्रावस्तुदुन्नेतॄन्वृणीते ॥ ६॥　ततो यजमानो मातृपूजावृद्धिश्राद्धे कृत्वा ब्रह्मादीनुन्नेतृपर्यन्तान्षोडशर्त्विजो वृणीते पठ्यमानक्रमेणैव · तत्र प्रथमं षड्विंशब्राह्मणोक्तं दैवर्त्विजां वरणं कृत्वा मानुषाणां वरणमनुष्ठेयम् · वरणं नाम करिष्यमाणकर्मस्वरूपदक्षिणाद्रव्यतत्परिमाणश्रावणपूर्वकं स्वयमप्रवृत्तानां ब्रह्मवादिषु कर्मसु कर्तृत्वेनाभ्यर्थना　तद्यथा　हिरण्यशतगवदक्षिणेन वासोऽश्वदक्षिणेन च रथन्तरपृष्ठेन चतुष्टोमेनाग्निष्टोमसंस्थज्योतिष्टोमेनाहं यक्ष्ये तत्र मे त्वं ब्रह्मा भवेति　अतोऽपि पूर्वतरं षड्विंशब्राह्मणोक्तं (२.१०) दैवर्त्विग्वरणम्[१]　तद्यथा　अग्निर्मे होतादित्यो मेऽध्वर्युश्चन्द्रमा मे ब्रह्मा पर्जन्यो मऽउद्गाता[काशो मे सदस्य][२] आपो मे होत्राशंसिनः · महर्त्विग्व्यतिरिक्ता ब्राह्मणाछंस्याद्या द्वादशऽर्त्विजो होत्राशंसिन उच्यन्तऽइति मानवसूत्रे उक्तमस्ति तथा हि　यूयं मे होत्राशंसिन स्थेति द्वादश होतृकानिति · ततो रश्मयो मे चमसाध्वर्यव इति। ननु ब्रह्मादीनामनुक्रमेणोपदेशादेव षोडशत्वे सिद्धे किमर्थं पुनः षोडशेत्युक्तम् · सत्यम् · चमसाध्वर्यूणामृत्विगाख्याभावज्ञापनार्थमित्यदोषः　तेषामप्यृतौ यजतामृत्विक्त्वं स्यात् तन्मा भूदिति षोडशेति · अतश्चऽर्त्विक्सम्बन्धिमधुपर्कतानूनाप्त्रसर्पणक्रतुदक्षिणादानदधिधानाभक्षणादिकं चमसाध्वर्यूणां न भवतीति चिन्तायाः प्रयोजनम् · अथवा शाखान्तरीयसदस्यव्युदासार्थं षोडशग्रहणम् तस्मान्न सप्तदशमृत्विजं कुर्वीत नेदतिरेचयानीति (१०. ४. १. १९) स्वशाखायां तस्य निषेधात्।

चतुरो वाद्यान् ॥ ७॥　.शाखान्तरे विकल्पेन चतुर्णामेव वरणस्य श्रुतत्वात्　तथा च शाङ्खायनः　चतुरः सर्वान्वेति (५. १. २) · आपस्तम्बोऽपि　सोमेन यक्ष्यमाणो ब्राह्मणानार्षेयानृत्विजो वृणीते यूनः स्थविरान्वानूचानानूर्ध्ववाचोऽनङ्गहीनानिति प्रकृत्य तान्वृणीते चतुरः सर्वान्वैकैकशोऽध्वर्युं प्रतिप्रस्थातारं

१) अतो॰णम् deest B.　२) Thus the Shaḍviṅçam. Deest AB.

नेष्टारमुन्नेतारमित्यध्वर्यून् ब्रह्माणं ब्राह्मणाच्छंसिनमाग्नीध्रं पोतारमिति ब्रह्मणो होतारं मैत्रावरुणमच्छावाकं ग्रावस्तुतमिति होतॄन् उद्गातारं प्रस्तोतारं प्रतिहर्तारं सुब्रह्मण्यमित्युद्गातॄन् सदस्यं सप्तदशं कौषीतकिनः समामनन्ति स सर्वकर्मणामुपद्रष्टा भवतीति ।

तत्पुरुषा इतरे यथावेदम् ॥ ८॥ इतरे द्वादशर्त्विजो तेषामाद्यानां ब्रह्मादीनां चतुर्णां पुरुषाः आदेशकारिणोऽनुचराः सेवकाः · यथावेदमिति ये यद्वेदविहितस्य कर्मणः कर्तारस्ते तत्पुरुषाः । यथावेदमित्यनेन ब्रह्मपुरुषा न ज्ञायन्तऽइति तान्स्वयमेवाह ·

ब्राह्मणाच्छंस्यग्नीत्पोतारो ब्रह्मणः ॥ ९॥ प्रधानपुरुषवरणेन तद्वशवर्तित्वात्तेऽपि वृता एव भवन्ति · प्रधानपुरुषे कार्यान्तरासक्तेऽन्यत्रगते वा तदीयं कर्म तत्पुरुषैरेव कर्तव्यम् नान्यपुरुषैरिति · पुरुषाणामपि पूर्वपूर्वेण करणसम्भवे नोत्तरेण ॥ वरणानन्तरं वृतानां मधुपर्केण प्रत्येकमर्हणं कुर्यात् · यक्ष्यमाणास्त्वृत्विज इति पारस्करवचनात् (१. ३) एकस्मिन्नपि वर्षे यदा बहवः सोमयागाः क्रियन्ते तदा प्रतिसोमयागं मधुपर्केण ऋत्विजामर्हणं भवत्येव यद्यप्यसकृत्संवत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्या इति श्रुतेरिति पारस्करेणोक्तत्वात् (१. ३) · ततः पुण्याहवाचनम् दक्षिणादानम् यजमानाय सोमसमर्पणम् · माङ्गल्याशीर्वादादि च कृत्वा देवयजनप्रार्थनं यजमानः कुर्यात् तथा हि (षड्विंश २. १०) अग्निर्मे होता स मे देवयजनं ददात्वित्युपांशूक्त्वा होतर्देवयजनं मे देहीत्युच्चैः एवं सर्वत्र ज्ञेयम् आदित्यो मेऽध्वर्युः स॰ददातु अध्वर्यो दे॰देहि चन्द्रमा मे ब्रह्मा स॰ ब्रह्मन्दे॰ पर्जन्यो मऽउद्गाता स॰ उद्गातर्दे॰ आपो मे होत्राशंसिनः ते मे देवयजनं ददतु होत्राशंसिनो देवयजनं मे दत्त रश्मयो मे चमसाध्वर्यवस्ते मे देवयजनं ददतु चमसाध्वर्यवो देवयजनं मे दत्तेति ।

देवयजनं जोषयन्ते ॥ १०॥ ते वृता ऋत्विजः सयजमाना दे॰न्ते सेवन्ते · देवा इज्यन्तेऽस्मिन्निति दे॰नम् सकलप्रयोगाङ्गभूतो भूमिप्रदेशः · युक्तमिदं दे॰नमित्येवं परस्परं संवदन्तोऽत्रैव यागः कर्तव्य इत्येवमध्यवसायं कुर्वन्ति ।

उच्चतमम् ॥ ११॥ परितः समीपवर्तिप्रदेशेभ्यो यदतिशयेनोच्चम् ।

सममम् ॥ १२ ॥ न निम्नम् नाप्युन्नतम् ।

अविभ्रंशि ॥ १३ ॥ भ्रंशु भ्रंशु अधः पतने · इतश्चेतश्च भ्रंशतऽइति भ्रंशि न विभ्रंशनधर्मकमविभ्रंशि उदकेन न विभ्रश्यते · तत्र प्राक्प्रवणावचनादित-श्चेतश्चापां गमनप्रतिषेधः सिद्ध एव अनुगमनप्रतिषेधस्त्वेषः न विभ्रंशते न शीघ्रमपो मुञ्चति स्थिरोदकम् दृढभूमि यस्मिन्पतितमात्रा एवापो न शुष्यन्ति ।

अभितोदेवयजनमात्रदेशम् ॥ १४ ॥ अभितः सर्वत्र यस्य दक्षिणतः पश्चा-दुत्तरतश्च देवयजनकरणपर्याप्तः प्रदेशो भवतीत्यर्थः । अभित इत्यनेन पुरस्तादपि देवयजनमात्रदेशपरिशेषणप्राप्तावाह ·

पुरस्ताद्वर्जम् ॥ १५ ॥ प्राच्यां दिशि देवयजनमात्रं न विशेषणीयम् · यथा देवयजनप्रमाणं देशान्तरं पुरस्तादतिरिक्तं न स्यात् तथा कुर्यात् ।

प्राक्प्रवणम् ॥ १६ ॥

उदग्वा ॥ १७ ॥ अथोऽउदक्प्रवणमिति श्रुतत्वात् (३. १. १. २) ।

यस्मिंश्चानूचानर्त्विजः ॥ १८ ॥ षष्ठ्येकवचनान्तमिदम् · अनूचाना ऋत्विजो यस्यासौ अनूचानर्त्विक् तस्य अनूऽत्रः यजमानस्य यादृशं तादृशं देवयजनं स्यादनु-क्तलक्षणमपि · याज्ञवल्क्यमतमेतत् (३. १. १. ४) शुश्रुवांसो वेदार्थं श्रुतवन्तः अनूचानाः तमेव वेदार्थमन्येभ्य उक्तवन्तः · आपस्तम्बः दक्षिणत-उन्नतमुदीचो-नावनतं प्राक्प्रवणमुदक्प्रवणं वा देवयजनं यत्र वा बहवो ब्राह्मणा न सछरा-धयेयुरग्नयो वाव देवयजनं यत्र क्वचनाग्नीनाधाय यजते देवयजनऽएव यजत ऽइति विज्ञायते दक्षिणा वाव देवयजनं दक्षिणाश्चेत्कल्याणीर्ददाति देवयजन ऽएव यजतऽइत्येके ।

उद्धतौषधिमूलेऽपरेऽन्ते विमितं कुर्वन्ति ॥ १९ ॥ उद्धतान्युन्मूलितान्यु-त्खातान्योषधिमूलानि यस्मात्तदुद्धऽलम् तस्मिन्नुद्धऽले देवयजने अपरेऽन्ते तस्य पश्चिमे भागे विमित कुर्वन्ति · चतुरस्रो मण्डपो विमितमित्युच्यते विमितं चतुरश्रं स्याद्दशारत्नि प्रमाणात इति परिशिष्टकारवचनात् · द्वादशारत्नि मानत इत्यपि पाठान्तरम् ।

प्राग्वंशम् ॥ २० ॥ वंशो मध्यवलः[1] प्रागग्रो यस्य तत् ।

पुरस्तादुच्चम् ॥ २१ ॥ प्राच्यां दिश्युच्चम् शाखान्तरात् · स्वश्रुतावपि लिङ्ग-मस्ति तस्य एष पूर्वार्ध्यो राजो भवतीति (३. ५. १. १) · अर्थात्पश्चाद्भागे निम्नं कुर्यात् । मानवे तत्र प्राचीनवंशं कुर्वन्नुच्चतं पुरस्तान्निनतं पश्चादिति · आप॰ प्राचीनवंशं करोति पुरस्तादुन्नतं पश्चान्निनतं सर्वतः परिश्रितमिति अतो विमितस्य शालाया वा सर्वतः परिश्रयणं कार्यम् परि समन्तात् श्रयन्ति वेष्टयन्ति भित्त्यादिना।

प्रतिदिग्द्वारम् ॥ २२ ॥ सर्वासु दिक्षु द्वाराणि यस्य · प्रमाणमुक्तं मानवे द्विशयानि द्वाराणीति शयो हस्तः द्विहस्तानीत्यर्थः ।

उदग्वर्ज वा ॥ २३ ॥ वाशब्दः पूर्वसूत्रप्राप्तस्योदग्द्वारस्य निवृत्त्यर्थः ।

शालां वा ॥ २४ ॥ अथवा शालां कुर्यात् वा विमितम् · दीर्घचतुरश्रा कुटी शालेति हरिस्वामिनः · शालाप्रमाणं चोक्तं परिशिष्टे विंशत्यरत्निः शाला स्यात्तदर्धेन तु विस्तृतेति तत्साधनोपायश्च प्रमाणार्धं वाभ्यस्याभ्यासषष्ठे लक्षणं करोति तन्निरञ्छनमिति (शुल्व॰ १) अत्र विंशत्यरत्निर्मूलरज्जुः दशारत्निरभ्यासरज्जुः तस्याः प्रथमे षष्ठे भागे निरञ्छनम् तस्या अर्धे पञ्चारत्निमिते श्रोण्यन्ताङ्कनार्थमिति[2] । सापि प्राग्वंशा पुरस्तादुच्चा उदग्वर्जितप्रतिदिग्द्वारा च भवति ।

परिवृते चोत्तरापरे ॥ २५ ॥ शालाकरणानन्तरमेवोत्तरापरे द्वे परिवृते च करोति प्राग्वंशे शालाया उत्तरत एकम् पश्चाच्चैकमिति · परि समन्तात्कटादिना वृतं परिवृतम् तच्चार्थात्परिमाणं चतुरश्रं प्राग्द्वारं भवति ।

दीक्षाप्रभृति शुक्लपक्षे पञ्चमीं सप्तमीं वा प्रसुतः ॥ २६ ॥ शु॰क्ले दीक्षां कृत्वा दीक्षादिनमारभ्य पञ्चमीं तिथिं प्रति सप्तमीं तिथिं प्रति वा दीक्षादिनादारभ्य पञ्चमदिने सप्तमे वा सुत्या भवति · एतेनैतदुक्तं भवति एका दीक्षा तिस्रो दीक्षा वा भवन्ति तत्रैकदीक्षापक्षे पञ्चमे दिने सुत्या भवति दीक्षात्रयपक्षे सप्तमे दिन इति । अथेदं विचार्यते · शाखान्तरे दीक्षितो न जुहोति न ददाति न पचतीति दीक्षितस्य दानहोमपाकाः प्रतिषिद्धाः ते किं दैवान्मानुषाद्वा कारणात्सु-

---

1) Thus A. मध्यलवः B. 2) तत्साध॰मिति deest A.

त्याकालस्य पञ्चमसप्तमदिनस्यातिक्रमे सति षष्ठाष्टमादिदिनेषु कर्तव्या उत नेति · तत्र सूत्रकार एव पूर्वपक्षं परिगृह्णाति ·

कालातिक्रमे नियतक्रिया प्राप्तकालत्वात् ॥ २७॥ दैवान्मानुषाद्वा सुत्यायाः कालभ्रंशे जाते निष्था नियतानां नित्यानां दानहोमपाकानां क्रिया स्यात् · कुत एतत् प्राप्तत्वात् प्राप्तो हि तेषां कालः कथम् दीक्षितो हि न जुहोति न ददाति न पचतीति यावन्त्यहानि दीक्षितो भवति तावन्त्यहानि प्रतिषेधः स च सप्ताहं पञ्चाहं वा भवति · तस्मात्तावत्कालमेव प्रतिषेधः · तावन्ति चाहान्यतिक्रान्तानि · अतः षष्ठाष्टमदिनादावनिषिद्धे काले दैवान्मानुषाद्वा असमाप्ते ऽपि यज्ञे नित्यानां संध्यातर्पणवैश्वदेवसायम्प्रातर्होमादीनां दानहोमपाकानां क्रिया भवतीति पूर्वः पक्षः । सिद्धान्तमाह ·

न समत्वात् ॥ २८॥ नित्यानां क्रिया न भवति · कुतः समत्वात् कारणस्य तुल्यत्वात् तुल्यं हि नित्यानां प्रतिषेधकारणम् यदेवानतिक्रान्ते सुत्याकाले तदेवातिक्रान्ते ऽपि दीक्षितत्वं हि नित्यानां प्रतिषेधे कारणम् स चातिक्रान्ते ऽपि सुत्याकाले दीक्षित एव · अतश्चातिक्रान्ते ऽपि काले यावत्कालं दीक्षितत्वं नापैति तावत्कालं नित्यानां प्रतिषेध एव । आप॰ न प्रतीच्या द्वारा निष्क्रामति नाक्रतुसंयुक्तामाहुतिं जुहोति नाग्निहोत्रं न दर्शपूर्णमासाभ्यां यजते न ददाति न पचत ऽइति ।

द्वादश दीक्षाः ॥ २९॥ अत्राग्निष्टोमे भवन्ति ।

अपरिमिता वा ॥ ३०॥ द्वादशसंख्यातो ऽतिशयेनाधिकसंख्या वा दीक्षा भवन्ति अपरिमितं प्रमाणाद्भूय इति परिशिष्टकारः (शुल्व॰ १) · अतश्चत्वारो दीक्षापक्षाः एका दीक्षा तिस्रो दीक्षा द्वादश दीक्षा अपरिमिता वा दीक्षेति · शाखान्तरादेते दीक्षापक्षाः · आपस्तम्बः दशाहमवरार्ध्यं दीक्षितो भवति मासम् संवत्सरं वा यदा कृशः स्यादित्यपरं विज्ञायते च यदा वै दीक्षितः कृशो भवत्यथ मेध्यो भवति यदास्मिन्नन्तर्न किं चन भवत्यथ मेध्यो भवति यदास्य कृष्णं चक्षुषोर्नश्यत्यथ मेध्यो भवति यदास्य त्वचास्थि[१] संधीयते ऽथ मेध्यो भवति पीवा दीक्षेत कृशो यजेत यदस्याङ्गानाम् हीयते जुहोत्येव तदिति विज्ञायत ऽइति ।

१) त्वगस्थि A.

पुण्याह्ने दीक्षा क्रयः प्रसव उत्थानम् ॥ ३१ ॥ तान्यत्र दीक्षा सोमक्रयः प्रसवः सुत्या उत्थानं समाप्तिः पुण्ह्ने विष्टिव्यतीपातादिज्योतिःशास्त्रनिषेधवर्जिते सुदिने भवन्ति · यत एवं स्मरन्ति आभ्युदयिकः पदार्थः पुण्येऽह्नि कर्तव्यः एतानि चाभ्युदयिकानीति ।

प्रक्रमोत्थाने विरोधे ॥ ३२ ॥ प्रक्रम आरम्भः उत्थानं समाप्तिः अथवा प्र॰ने एव पुण्याह्ने भवतः न सोमक्रयः सुत्या च · कुतः यत एतानि सर्वाणि पुण्याह्ने क्रियमाणानि सोमकालस्य विरोधे वर्तन्ते · सोमस्तु नियतदिनसाध्यः तत्र च क्रयसुत्ये नियतकाले यदि च क्रये सुत्याह्ने च पुण्याह्नप्रतीक्षा क्रियते तदा श्रुत्युक्तनियतकालविरोधो भवति · अतः प्र॰त्थाने आरम्भसमाप्ती एव पुण्याह्ने भवतः । स्मरणमप्येतावदेव आभ्युदयिकं पुण्याह्ने प्रारब्धव्यं समापनीयं च सोमश्चाभ्युदयिकः पदार्थः सोमक्रयादयो गुणभूता इति ।

न वाचोदितत्वात् ॥ ३३ ॥ पूर्वसूत्रं सर्वमप्यनुवर्तते · अथवा श्रुतिविरोधे प्र॰त्थानेऽपि पुण्याह्ने न भवतः · कुतः अचो॰त्वात् न ह्येवं कुत्रापि वेदे चोदितम् यत्प्रक्रमोत्थाने पुण्याह्ने भवत इति स्मृतिश्चेयम् · अतो यत्र श्रुतिविरोधो न भवति तत्र स्मृत्यनुसारेण पुण्याह्नाद्यादरणीयमेव यदा तु नियतकालत्वात्पुण्याह्नादौ गृह्यमाणे श्रुतिविरोधो भवति तदा पुण्याह्नानादरेण श्रुत्युक्ते मुख्ये काले आरम्भसमाप्ती कर्तव्ये । आपस्तम्बः एका दीक्षा तिस्र उपसदः पञ्चमीं प्रसुतस्तिस्रो वा दीक्षास्तिस्र उपसदः सप्तमीं प्रसुतश्चतस्रो वा दीक्षा तिस्र उपसदोऽष्टमीं प्रसुतो ऽमावास्यायां दीक्षा यज्ञनीये वा पौर्णमास्यां यज्ञनीये वा सुत्यमह्नरेतद्वा विपरीतं पौर्णमास्यां दीक्षा यज्ञनीये वामावास्यायां यज्ञनीये वा सुत्यमह्नरिति · काठके च अथाग्निष्टोमस्य पुण्याह्ने दीक्षा पर्वणि सुत्यामावास्ये वा स॰ऽस्थिते दीक्षा पुण्याह्ने सुत्येति · मानवे च अमावास्यायां दीक्षेत यथा वा पर्वणि सुत्या स्यादिति ।

दीक्षासु यूपच्छेदनं यूपाहुतिं प्राग्घुत्वा यूपान्ते वाग्निं मथित्वा दीक्षितस्याग्निहोमप्रतिषेधश्रुतेः ॥ ३४ ॥ दीक्षाभ्यः प्राग्यूपाहुतिं हुत्वा अथवा दीक्षिताग्न्युत्पत्तेः सोमार्थाग्न्युत्पत्तेः प्रागेव समारोपादपि प्रागेवेत्यर्थः अत्रैव सूत्रणात् ·

अथवा यूपान्ते यूपसमीपे अग्निं मथित्वा तस्मिन्मथितेऽग्नौ यूपाहुतिं जुहुयात् · कुतः दीक्षितेः यतः कारणाद्दीक्षितस्याग्नौ यूपाहुतिहोमस्य प्रतिषेधः श्रूयते · तथा हि न दीक्षितस्याग्नावेतामाहुतिं जुहोत्याज्यं चारणी चादाय यूपान्तिके ऽग्निं मथित्वा यूपाहुतिं जुहुयादिति · अतो दीक्षितसम्बन्धिन्यग्नौ यूपाहुतिहोमप्रतिषेधात् समारोपात्प्रागेव गार्हपत्याद्यूपाहुत्यर्थमाहवनीयमुद्धृत्य तत्र यूपाहुतिर्होतव्या · अथवा यदा यूपच्छेदनं क्रियते तदा यूपच्छेदनात्प्रागेव यूपसमीपे ऽग्निं मथित्वा तस्मिन्यूपाहुतिं हुत्वा तदानीमेव यूपच्छेदनं कुर्यात् होमान्ते च तस्य लौकिकत्वमेव तावन्मात्रार्थमुत्पादितत्वात् अस्मिन्पक्षे गार्हपत्ये आज्यं संस्कृत्य सह नेतव्यम् आज्यं चारणी चादायेति श्रुतत्वात् । यूपच्छेदनं चैकदीक्षापक्षे रात्रौ वाग्विसर्गानन्तरं कर्तव्यम् · अनेकदीक्षापक्षे तु यस्मिन्नहनीच्छा भवति तस्मिन्कर्तव्यम् । आधानानन्तरं त्रिरात्रादि अग्निधारणमध्यऽएव[1] चेत्सोमारम्भः तदा तस्मिन्नेवाहवनीये यूपाहुतिर्होतव्या ।

उच्छ्रयणकाले वोभयं होमच्छेदने संनिधेः ॥ ३५ ॥ अथवा यूपोच्छ्रयणकाल ऽएवोभयं कर्तव्यम् · किमुभयम् होमच्छेदने यूपाहुतिहोमश्च यूपच्छेदनं च · कस्मात् संनिधेः शतपथे यूपोच्छ्रयणसंनिधानऽएवोभयोः श्रुतत्वात् यूपं व्रश्चन्वैष्णव्य र्चा जुहोतीति (३. ६. ४. १) । दीक्षास्वेव वा होमच्छेदने कार्ये नोच्छ्रयणकाले · कुतः दीक्षासु यूपं छिनत्तीति श्रुतेः · यत्तूक्तम् संनिधेरुच्छ्रयणकालऽइति तदयुक्तम् दुर्बलः संनिधिः श्रुतिवाक्यं च संनिधेर्बलवत् अतो वाक्यबलात्संनिधिं बाधित्वा दीक्षास्वेव यूपच्छेदनं कर्तव्यम् । आपस्तम्बः दीक्षासु यूपं कारयति क्रीते राजन्युपसत्सु वेति · मानवे च दीक्षितस्य चेत्प्राक्क्रयाद्यूपमच्छेद्यात्स्रुवमरणी चादाय यूपस्यान्तेऽग्निं मथित्वा यूपाहुतिं जुहुयात् क्रीते चेदाहवनीये हुत्वेति ।

समारोह्याग्नी शालास्तम्भं पूर्वार्ध्ये गृहीत्वारणिपाणिराहेदमगन्मेति (४. १) शालायाम्[2] ॥ ३६ ॥ गृहऽएव गार्हपत्यात्समारोपार्थमाहवनीयमुद्धृत्य गार्हपत्याहवनीयौ क्रमेणायं ते योनिरिति (३. १४) मन्त्रेणारण्योः समारोह्य देवयजनमागत्यारणी पाणौ कृत्वा पूर्वेण द्वारेण शालायां प्रविश्यारणिद्वयहस्तः सन्

[1] Thus A. ॰रात्रमग्नि॰ B. [2] Thus AB. ॰न्मेति वा ॥ १ ॥ शालायां॰ राजा॰ १. M.

· पूर्वार्ध्यं शाखं गृहीत्वाभिपद्यालभ्य मन्त्रलिङ्गाद्यजमानः इदमगन्मेति पठति · पूर्वो भागः शालायाः पूर्वार्धः पूर्वार्धे भवः पूर्वार्ध्यः · प्राग्वंशस्य मध्यमं स्थूणाराजमालभ्य जपतीति ·वाजसनेयकमित्यापस्तम्बः · शालामध्यवस्यतीति (३. १. १. ११) वचनात् शालायां प्रविश्यैतत्कर्तव्यम् अत एव शालायामित्ययमवयवोऽपि पूर्वसूत्रेण योजितः । अनेकयजमानके सर्वेऽरणिपाणयो मुख्यं गृहपतिं शालास्तम्भग्रहणं कुर्वाणमन्वारभन्ते ॥ ॥ प्रथमा कण्डिका ॥ १ ॥

राजानं निदधात्याहृतश्चेत् ॥ १ ॥ शालायामित्यत्रानुवर्तते · सोमं शालामध्ये निदधाति यदि वनादानीतो भवति ।

प्राक्क्रयादन्नमुपहरन्त्यस्मै हविष्यममांसमग्निं विहृत्य ॥ २ ॥ सोमार्थमग्निं विहृत्य आहवनीयं दक्षिणाग्निं चोद्धृत्य सोमक्रयादर्वाक् अस्मै सोमाय मांसवर्जितं हविषे हितं व्रीहियवाद्यन्नमदनयोग्यमुपहरन्ति उपढौकयन्ति · अग्न्योर्विहारश्च क्रतुनिर्देशपूर्वकः कर्तव्यो ऽग्निष्टोमसंस्थज्योतिष्टोमार्थं गार्हपत्यादाहवनीयमुद्धरामीत्येवम् · मानवे पूर्वया द्वारा विमितं प्रविश्य क्रतुनिर्देशं कृत्वा तस्मिन्नग्नी विहरतीति · अत एव विहारोपदेशादर्थात्पूर्वतरं गार्हपत्यं मथित्वेति गम्यते · ततश्चायं क्रमः शालां प्रविश्य स्तम्भग्रहणम् सोमनिधानम् मन्थनम्[१] ततो भूसंस्कारपूर्वकं विहरणम् ततः सोमायान्नोपहारः ।

सप्तसु प्रक्रमेष्वर्धव्यामे च साग्निचित्ये ॥ ३ ॥ साग्न्ये सचयने सोमयागे गार्हपत्यखरस्य मध्यात्त्रिपदेषु सप्तसु प्रक्रमेषु ततः परमर्धव्यामे च आहवनीयस्य विहरणं कर्तव्यम् · अनग्निचित्ये तु न नियमः तत्राष्टासु प्रक्रमे° मत्या वेति (४. ८. १३) ।

अपराह्णेऽश्नातीष्टम् ॥ ४ ॥ यजमानोऽह्नो द्विधाविभक्तस्य द्वितीये भागे यदिष्टं वाञ्छितमन्नं पायसापूपमोदकादि तदश्नाति ।

उपपन्नं वा ॥ ५ ॥ अथवा यदन्नं सम्पद्यते ।

न वा ॥ ६ ॥ अथवा इष्टं वा उपपन्नं वा नाश्नात्येव यद्यशनेच्छा न भवति ।

क्रत्वर्थमपदिश्यान्यस्माऽउत्तरे परिवृतऽउदकुम्भवत्यप्सु-दीक्षा ॥ ७ ॥ अशनानन्तरं यजमानः क्रतुसाधनभूतमर्थं धान्यघृतहिरण्यादिद्रव्यमन्यस्माऽअपदिश्य

१) deest B.

क्रत्वर्थं मे गोपाय यथाकालं सम्पादयेत्येवमन्यस्मै क्रत्वर्थस्यापदेशं कृत्वा उद॰ति उदकपूर्णकुम्भयुक्ते उत्त॰वृते अप्सु-दीक्षा भवति · अप्सुदीक्षेति वक्ष्यमाणस्य केशश्मश्रुवपनस्नानसंस्कारस्य नामधेयम् · अत्र क्रत्वर्थमपदिश्यैवेति पाठो न तूपदिशति अग्रे (२२. १. १४) दीक्षासु चापदेशादिति वक्ष्यमाणत्वात्[1] ॥ अथ वैवं योजना अपराह्णेऽश्नाती॰ श्यान्यस्मै · यजमानोऽन्यस्मै क्रत्वर्थमपदिश्य अपराह्णे इष्टमश्नाति अथवा उपपन्नमश्नाति न वाश्नाति पत्न्यप्येवमेवाश्नाति समानन्यायात् · इयं योजना साधीयसी अन्यथा पत्न्यन्वयानुपपत्तेः · तथा च मानवे इदं दास्यामीति निर्दिश्य दैक्षमशनमश्नीतो[2] दध्ना मधुमिश्रेण यजमानः पत्नी चेति · काठके च पत्नीयजमानश्चाश्नीत इति · आपस्तम्बसूत्रे च अन्नमश्नाति सर्पिर्मधुमिश्रं दधि मधु वा यदस्य मनसः प्रियं तदश्नाति तदेवास्यामुष्मिंलोके भवतीति विज्ञायते तथाशितः स्याद्यथा ततो[3] दीक्षासु कनीयः-कनीयो व्रतमुपेयात्पुरस्ताद्वा केशवपनाद्वासमो वा परिधानाद्बोजनमेके समामनन्तीति । उत्तरे॰ प्सु-दीक्षा अशनादनन्तरमेव उद॰ उ॰ प॰ अप्सुदीक्षा भवति । ततश्चायं पदार्थक्रमः · दैवर्त्विग्वरणम् मानुषर्त्विग्वरणम् मधुपर्कः पुण्याहवाचनम् दक्षिणासंकल्पः सोमसमर्पणम् माङ्गल्याशीर्वादपाठः देवयजनप्रार्थना देवयजनजोषणम् शालापरिवृतकरणम् यूपाहुतिः समारोपः देवयजनं प्रत्यागमनम् अरणी पाणौ कृत्वा शालाप्रवेशनम् अरणिहस्तस्यैव स्तम्भालम्भः सोमनिधानम् मन्थनम् विहरणम् सोमायान्नोपहारः क्रत्वर्थापदेशः इष्टाशनमपराह्णे ततोऽप्सुदीक्षेति ।

नापितऽउपतिष्ठति नखानि निकृन्तत्यङ्गुष्ठप्रभृतीनि दक्षिणहस्तस्य प्रथमम् ॥८॥ नापिते वपनकर्तरि उप समीपे स्थिते सति अध्वर्युरङ्गुष्ठोत्पन्ननखमारभ्य सर्वाणि नखानि नितरां छिनत्ति · तत्रापि दक्षिणहस्तस्य प्रथमम् ततः सव्यस्य ततो दक्षिणस्य चरणस्य ततः सव्यस्येति ।

दक्षिणं गोदानं वितार्योनत्तीमा आप इति (४. १) ॥९॥ स्वपद्भिर्गविपृथिव्यां दीयतऽइति गोदानम् शिरसो दक्षिणं प्रदेशं वितार्य कङ्कतादिना तत्स्थान्केशान्विजटान्कृत्वा क्लेदयति अद्भिरार्द्रं करोति ।

---

1) अत्र॰त्वात् deest A. 2) दैक्ष्य॰ B. 3) Thus A. स्यान्नयथा तथा B.

यूपवत्कुशतरुणम् ॥ १० ॥ ओषधऽइत्यनेन मन्त्रेण (४. १ ५. ४२) दर्भतृणमन्तर्दधाति (५. २. १५ ६. १. १२) · सूक्ष्मं कुशाग्रं दर्भतरुणकमिति हरिस्वामिनः ।

क्षुरेण चाभिनिधाय छित्त्वोदपात्रे प्रास्यति ॥ ११ ॥ चकारेण यूपवदित्यनुकृष्यते (६. १. १२) यूपवदेव स्वधितऽइति (४. १ ५. ४२) मन्त्रेण क्षुरेणाभिनिधाय क्षुरधारामन्तर्हिततृणस्योपरि निधाय छित्त्वा सतृणान्केशानुदपात्रे प्रास्यति संनिधौ स्थापिते पूर्णपात्रादौ सोदके ।

एवमुत्तरं तूष्णीम् ॥ १२ ॥ एवमेव तूष्णीमुत्तरं गोदानं संस्करोति ।

नापिताय क्षुरं प्रयच्छति ॥ १३ ॥ अध्वर्युः ।

तेन केशश्मश्रु वपति ॥ १४ ॥ स नापितः तेनाध्वर्युणार्पितेन क्षुरेण केश्मश्रु मुण्डयति · श्मश्रुशब्देन मुखजानि लोमान्यभिधीयन्ते भ्रूचक्षुषां रोमाणि वर्जयित्वा · आप॰ उत्तरेण बर्हिः प्राग्वंशे परिश्रिते यजमानः केशश्मश्रु वापयत ऽउपपक्षावग्रेऽथ श्मश्रूण्यथ केशानपि वा श्मश्रूण्युपपक्षावथ केशानाप उन्दन्त्विति दक्षिणं गोदानमुनत्त्योषधे त्रायस्वैनमिति प्रागग्रं दर्भमन्तर्धायेति · मानवे न कक्षाविति · तथा लोहितमनभिगमयन्नौदुम्बरेण दक्षान्धावेतेति ।

आपोऽअस्मानिति (४. २) स्नात्वोदिदाभ्य इत्युत्क्रामत्युत्तरपूर्वार्धम् (४. २) ॥ १५ ॥ दृष्टार्थत्वाच्चोदकुम्भोदकेनैव स्नानमिति कर्कः । आप॰ स्थावरास्वप्सु स्नाति शङ्खिनीष्ववकिनीषु लोमशे तीर्थे कुण्डे हिरण्यमवधाय तस्मिन्स्नातीति वाजसनेयकमिति · मानवे च तीर्थेनावगाह्य सावकासु हिरण्यवर्णाः शुचय इति स्थावरासु स्नात्वानूपमग्नमाचम्योदिदाभ्यः शुचिरापूत एमीत्युत्क्रामति · काठके च तीर्थेनावसृप्य शं नय इति[1] स्नात्वोदिदाभ्य इत्युत्क्रम्येति · अतस्तडागादिस्थास्वेवापोऽअस्मानिति मन्त्रेण स्नानम् उदिदाभ्य इति मन्त्रेण जलमध्यादुत्तरपूर्वार्धे ऽउत्क्रमणं निःसरणमिति युक्तम् · न तु कुम्भोदकेन स्नानम् अविधानात् उदिदाभ्य इति मन्त्रलिङ्गविधानाच्च · आभ्योऽद्भ्यः सकाशात् शुचिः पूतः सन्नुदेमि उत्क्रमामि उद्गच्छामीति मन्त्रार्थः स च कुम्भोदकेन स्नाने कृते विरुध्यते · उदकुम्भनिधानं तु तत्रादृष्टार्थम् सोमक्रयवत् ।

---

[1]) ? शं भय B. शं नय A.

क्षौमं वस्ते ॥१६॥ स्नानानन्तरमाचम्योत्क्रम्य क्षौमं ते यजमानः परिधत्ते । क्षुमा अतसी तद्विकारं क्षौमम् ।

निष्पेष्टवै ब्रूयादहतं चेदद्भिरभ्युक्ष्य ॥१७॥ अहतं चेत्तद्वासः स्यात् तदाध्वर्युर्निं॰वै इति प्रैषं ब्रूयात् प्रतिप्रस्थातारं प्रति यजमानपुरुषं प्रतीति हरिस्वामिनः । हस्ताभ्यां सम्पेष्टव्यमिति प्रैषार्थः ततश्च ब्राह्मणहस्तसम्पर्कान्मेध्यता भवतीत्यभिप्रायः । ततः स प्रेषितः सन्पाणिभ्यां वस्त्रं गाढं घर्षयति ततोऽद्भिरभ्युक्ष्य यजमानः परिधत्ते । वाससः उपघातः परिधानेन रागेण वा भवति अतोऽहतमपरिहितमरक्तं च । अभ्युक्षणं त्वहतस्यैव तस्याद्भिरप्रक्षालितस्याभ्युक्षणेन मेध्यता भवति ।

स्नातवस्यं वामौत्रधौतम् ॥१८॥ अथवा स्नातेन प्रत्यहं कृतस्नानेन वस्यं वसनीयं स्नातवस्यम् सदा परिधीयमानं यद्वासः तदमौत्रधौतमरजकप्रक्षालितं सत्परिधत्ते । उभयस्यापि विशेषमाह

विचितकेशं प्रसारितदशं दीक्षातपसोरिति (४.२) ॥१९॥ एतदहतं स्नातवस्यं वा विचितकेशं स्यात् विचिता निष्काशिताः केशा यस्मात्तत् । प्रसारिता यस्य दशा तत् न संकलितदशम् ।

न नीविं कुरुते ॥२०॥ नीविरपवर्तिका तां न कुरुते अनीविकमेव वासः परिधत्तऽइत्यर्थः । तत उत्तरीयं च धारयति काण्वपाठात् । एकमेव वास इति हरिस्वामिनः । तथा हि तदेकमेव सर्वत्रैकस्य दर्शनात्तदुपादेयगतस्यैकवस्याविवक्षाकारणाभावात् । नस्य वाऽए॰ (३.१.२.१८) नेदिदं दी॰ (३.१.३.६) अन्तरं दी॰ (५.२.१.८) अथैनं पु॰ (५.३.५.२५) इति हि सर्वत्रैकमेव दृश्यते । तथा दम्पत्योर्द्वे वाससी दर्शयति तावन्ये वाससी॰ (४.४.५.२३) इति । तथा अथैनं वासांऽसीति (५.३.५.२०) बहुषु बहुवचनमेव दृश्यते । तेन विवक्षितमिदमेकमित्यवसीयते । तच्चाधोवासः[१] स्यात् नीविदर्शनात् अन्तरं दीक्षितवसनादिति (५.२.१.८) परिदधातेश्च तत्रैव दृष्टत्वात् ।

एवं प्रतिप्रस्थातापरस्मिन्परिवृते पत्नीं तूष्णीम् ॥२१॥ अप्सुदीक्षया दीक्षयति।

---

१) ॰धीवासः ?

वपनं वा ॥२२॥ वपनं वा भवति वा न भवति · तत्रावपनपक्षे गोदानसंस्काराभावः तस्य वपनार्थत्वात् । नखनिकृन्तनं तु भवति स्नानम् उत्क्रमणम् अनीविकं वासःपरिधानम् उत्तरीयधारणं च ।

धेन्वनडुह्योर्नाश्नीयात् ॥२३॥ मांसं यजमानः ।

पुरुषधर्मो वासम्भवात् ॥२४॥ क्रतुमध्ये समाम्नानात्क्रतुधर्मोऽयमिति प्राप्ते इदमुच्यते पुरुषमात्रधर्मोऽयम् न क्रतुधर्मः · कुतः क्रतावसम्भवात् न हि क्रतौ धेन्वनडुन्मांसभोजनस्य प्राप्तिः या निषिध्येत[1] यतो दीक्षितस्य पयोव्रतता विहिता तन्निवृत्त्यनन्तरं हविःशेषभक्ष उक्तः अतो निषेधस्यासम्भवात्पुरुषमात्रधर्म एवायमिति · केचिदिष्टाशनविषयो (४) ऽयं निषेध इत्याहुः तथा च सति प्रकरणमनुगृहीतं भवति ।

अंसलभोजनं वा ॥२५॥ अंसौ विद्येते यस्यासावंसलः · अंसौ बाहुमूले तौ च सर्वस्यापि भवत इति विशेषणानुपपत्तिः अतोऽत्रांसाभ्यां बलं लक्ष्यते · वत्सांसाभ्यां कामबलेऽइति (पा° ५. २. ९८) लच्प्रत्ययः बलवान्मांसलोऽंसल इत्यमरः (२. ६. ४४) · अंसलयोर्धेन्वनडुह्योर्मांसस्य भोजनं वा कर्तव्यम् तदुंऽवतीति श्रुतेः (३. १. २. २१) स्थूलं चेद्धेन्वनडुहं भवति ततोऽहमश्नाम्येवेति याज्ञवल्क्य उवाचेत्यर्थः ।

प्रपाद्याग्नाविष्णव एकादशकपालः ॥२६॥ ततो बाहुगृहीतं यजमानं शालायां प्रपाद्य प्रवेश्य आग्नेः पुरोडाशः कर्तव्यः · तद्यथा अत्र दीक्षणीयेष्टावग्न्यन्वाधानम्[2] ब्रह्मवरणाभावः ब्रह्मोपवेशनम् व्रतग्रहणम् ततः प्रणीताप्रणयनादि दक्षिणाया अभावः । परिभाषयैव (४. ५. २२) प्राप्ते यदेकादशकपाल इत्युक्तम् तदेवमादिर्विषया परिभाषेति ज्ञापनार्थम् ।

आदित्येभ्यो वा चरुः ॥२७॥ द्वितीयं हविरत्र वा भवति वा न भवति । अत्र देवता उपांशु भवति दीक्षणीयाऽध्यादेवतेत्युक्तत्वात् (४. ५. १०) तस्य सप्तदश ऽयजतीति (३. १. ३. ६) श्रुतेश्च । अथाग्नाविष्णवे प्रकृतिवत्सर्वाङ्गेषु प्राप्तेष्वाह ·

प्राक्समिष्टयजुषः करोति ॥२८॥ स एषः प्राग्यान्यङ्गानि तान्येव करोति ।

---

१) ? °ध्यते AB. प्रतिषि° B. २) °त्र दीक्षणीयेष्टाव° deest A.

समिष्टयजुर्वर्ज्जं वा ॥२९॥ अथवा समिष्टयजुर्वर्ज्जयित्वान्यत्सर्वं कर्मापवर्गान्तं भवति तन्मात्रस्य प्रतिषेधात् · एवं पक्षद्वयोपन्यासे कृते यः पक्षः श्रेयान् स एवाभ्युपगन्तव्यः कश्चासौ प्राक्समिष्टयजुषः करोतीति · तथा चापस्तम्बमानवसूत्रयोः पत्नीसंयाजान्ता दीक्षणीया संतिष्ठतऽइति पञ्चदश सप्तदश वा सामिधेन्य इति च ।

उपांशु चरन्ति प्रागग्नीषोमीयात् ॥३०॥ आदित आरभ्य प्रागग्नीषोमीयात् अग्नीषोमीयपशोः पुरस्ताद्यत्कर्म तेनोपांशु चरन्ति · चरणशब्दे सर्वमित्युक्तत्वात् (३. ७. ८) प्रैषाणामप्युपांशुत्वमेव । पक्षान्तरमाह ·

वागन्तेन वा दीक्षणीयां नीचैस्तरां-नीचैस्तरामितरे ॥३१॥ अथवा वागन्तेन उत्तमया वाचा उच्चैर्दीक्षणीयां कुर्युः इतरे. द्वे इष्टी प्रायणीयातिथ्ये नीचैस्तरां कर्तव्ये दीक्षणीयापेक्षया नीचैस्तरां प्रायणीया तदपेक्षया नीचैस्तरामातिथ्येति उपांशूपसत्सु · वागन्तपक्षेऽपि देवता उपांशु भवति दीक्षणीष्ट्यादेवतेत्यस्य (४. ५. १०) सूत्रस्य वागन्तपक्षार्थत्वात् ।

उपांशूपसदः ॥३२॥ कर्तव्याः · काठके उच्चैः प्रवर्ग्येण चरतीति महावीरसम्भरणमपि प्रवर्ग्याङ्गत्वादुच्चैः · आप० धारयति ध्रौवमाज्यं यत्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्त्यथैकेषां यावत्यस्य वाग्भवति तावतीं दीक्षणीयायामन्वाह ततो नीचैस्तरां प्रायणीयायां ततो नीचैस्तरामातिथ्यायामुपांशूपसत्सूच्चैरग्नीषोमीये मन्द्रेण वा दीक्षणीयायां मन्द्रतरेण प्रायणीयायां मन्द्रतमेनातिथ्यायामुपांशूपसत्सूच्चैरग्नीषोमीय ऽउपांशु वा दीक्षणीयायामुपांशुतरं प्रायणीयायामुपांशुतममातिथ्यायामुपांशूपसत्सूच्चैरग्नीषोमीये। दर्शपूर्णमासप्रकृतीनां सोमेष्वग्न्यन्वाधानं व्रतोपायनमारण्याशनं जागरणमन्वाहार्यस्य च दानं पत्न्याः संनहनं विमोचनमिति न विद्यन्ते अग्न्यन्वाधानं तु दीक्षणीयायां क्रियेत पत्न्याश्च संनहनमिति ।

शालां पूर्वेण तिष्ठन्नभ्यङ्क्ते कुशेषु नवनीतेन शीर्ष्णोऽध्यनुलोमं सपादको मह्रीनां पयोऽसीति (४. १) ॥३३॥ दक्षिणाग्निहोमान्ते कृते यजमानः शालायाः पुरस्ताद्द्वारे दर्भेषु प्राङ्मुखः तिष्ठन् गव्येन नवनीतेन मस्तकादारभ्यानुलोमं लो-

मानुगतं स्वशरीरं म्रक्षयति। सपादक इति नपुंसकस्य स्थाने व्यत्ययेन पुंलिङ्गम् सपादकम् अभ्यङ्क्तऽइति क्रियाविशेषणम्। आत्मनेपदात्स्वयमेवाभ्यङ्क्ते मन्त्रोऽपि स्वयंकर्तृकऽएव समर्थः। आपस्तम्बः तेन पराचीनं त्रिरभ्यङ्क्ते मुखमग्रेऽनुलोममङ्गानि स्वक्तो भवतीति। मानवे च मुखमग्रेऽथ शिरः स्वभ्यक्तो भवत्या पादाभ्यामिति।

वृत्रस्येत्यक्ष्यावनक्ति (४.३) त्रैककुदाञ्जनेनाभावेऽन्यद्भिर्दक्षिणं त्रिरुत्तरं पराक्सकृत्सकृन्मन्त्रः शरेषीकया साग्रया ॥३४॥ अध्वर्युः साग्रया शरेषीकया शरस्याग्रशलाकया त्रैककुदेन सौवीराञ्जनेन यजमानस्य अक्ष्यौ चक्षुषी अक्षिणी पराक् अनावृत्तमनक्ति नेतश्चामुतश्च। तत्र दक्षिणं चक्षुर्द्विरनक्ति उत्तरं त्रिर्वारम्। तत्राञ्जनमन्त्रः सकृत्पठनीयः। त्रिककुत्पर्वतस्तत्र भवमञ्जनं त्रैककुदं सौवीरमिति यत्प्रसिद्धम् त्रैककुदाभावेऽन्यत् लोकप्रसिद्धं यत्कज्जलादि। अक्षिणीऽइति प्राप्ते नुमागमाभावशीभावाभावौ छान्दसौ। आपस्तम्बः वृत्रस्य कनीनिकासीति त्रैककुदेनाञ्जनेनाङ्क्ते यदि त्रैककुदं नाधिगच्छेद्येनैव केनाञ्जनेनाञ्जीतेति वाजसनेयकं सतूलया दर्भेषीकया शरेषीकया दर्भपिञ्जूलेन बाह्यन्तरं द्विर्दक्षिणमित्यादि। दर्भेषीकाभिः शरेषीकाभिरिति मानवे ॥ द्वितीया कण्डिका ॥२॥

कुशपवित्रैश्चित्पतिर्मेति (४.४) पावयति सप्तभिः-सप्तभिः प्रतिमन्त्रमच्छिद्रेणेति सर्वत्र द्विरुपरिनाभ्युन्मृज्य प्रदक्षिणं सकृदवाङ् ॥१॥ कुशाश्च तानि पवित्राणि च कुशपवित्राणि समूलानि साग्राणि तृणानि तैः सप्तभिः कुशैः अध्वर्युर्यजमानं शोधयति प्रतिमन्त्रम् एकैकेन मन्त्रेणेत्यर्थः। सर्वत्र सर्वेषु चित्पतिर्मेत्यादिमन्त्रेषु अच्छिद्रेण पवित्रेणेत्यनुषङ्गः कर्तव्यः यद्यपि तृतीयान्मन्त्राद्देवो मऽइत्यस्मात्परमयं समाम्नातस्तथापि तुल्ययोगित्वादगृह्यमाणविशेषत्वाच्च त्रिष्वनुषज्यते। उभे नाभेरुपरिष्टात् प्रदक्षिणं सप्तभिः-सप्तभिः द्विरुन्मृज्य ऊर्ध्वं मार्जनं कृत्वा नाभेरवाङ् अधःप्रदेशे प्रदक्षिणं सप्तभिरेव सकृदवमार्ष्टि। आपस्तम्बः एकविंशत्या त्रिधा विभक्तया सप्तभिः सप्तभिर्द्विरूर्ध्वं नाभेरुन्मार्ष्टि सकृदवाङवाञ्चं पावयतीति।

एकेन ॥२॥ अथवा एकेनैव कुशपवित्रेण त्रिरपि पावयति एकेन दर्भतृणेन साग्रेणेत्यर्थः।

त्रिभिः ॥ ३ ॥ अथवा त्रिभिः दर्भतृणैः साग्रैः यजमानं त्रिः पावयति ।

सप्तभिर्वा ॥ ४ ॥ वाशब्दः त्रिष्वपि प्रत्येकं योज्यः ।

एकशतेन वा राजसूये ॥ ५ ॥ एकाधिकं शतमेकशतम् · राजसूयान्तर्गतसोमेषु पवित्राभिषेचनीयादिषु · वा यथोक्ताः सर्वे पक्षाः । काण्वानां तु नवकृत्वः पावयतीति पठ्यते · तत्र चित्पतिर्मेत्यादिभिस्त्रिभिरपि मन्त्रैरुपरिनाभि साभ्यासमेकं पावनं कर्तव्यम् तथैव द्वितीयमेतैरेव त्रिभिर्मन्त्रैः साभ्यासम् तथा तृतीयं त्रिरवाङिति एवं चाभ्यासापेक्षया नवकृत्वः पावनं कृतं भवति अभ्याससमुदायापेक्षया च द्विरुपरिनाभि सकृदवाङिति च सूत्रं नेयम् ।

आ वो देवास इति (४.५) वाचयति ॥ ६ ॥ पावनानन्तरमध्वर्युर्यजमानम् ।

स्वाहा यज्ञमित्यङ्गुली (४.६) ऽञ्चते नाना हस्तयोः ॥ ७ ॥ नाना पृथग्घस्तयोः अङ्गुते संकोचयति · नैकस्यैव हस्तस्य द्वे किंत्वेकैकस्यैकैकाम् अन्ते मुष्टी करोतीति (३.१.३.२५) वचनात्प्रथमं द्वे कनिष्ठिके ।

एवꣳ शेषं प्रतिमन्त्रम् ॥ ८ ॥ एवमेवाङ्गुलिशेषं संकोचयेत् उत्तरैर्मन्त्रैः प्रतिमन्त्रम् । एवंशब्दान्नानाहस्तयोः स्वाहोरोरिति द्वेऽनामिके स्वाहा द्यावापृथिवीभ्यामिति द्वे मध्यमेऽइति ।

उत्तमेन मुष्टी कृत्वा स्वाहेत्युक्त्वा (४.६) वाग्यतः ॥ ९ ॥ उत्तमेन स्वाहा वातादारभऽइति मन्त्रेण मुष्टी कृत्वा ततः स्वाहेत्युक्त्वा यजमानो वाग्यतो भवति ।

अङ्गुष्ठौ तत्सहिते चोत्सृजति ॥ १० ॥ तत्सहिते अङ्गुष्ठसंलग्ने अङ्गुली तर्जन्यौ · उत्सृजति प्रसारयति · चकारात् स्वाहेत्युच्चारणानन्तरमेवोभयं युगपत्करोति वाग्यमनमङ्गुष्ठप्रदेशिन्योर्विसर्गं च । याजमानं चैतदङ्गुल्यञ्चनम् · कुतः पुरुषसंस्कारत्वात् तत्कथम् गर्भो वाऽएष न्यक्ताङ्गुलयऽइव हि गर्भा इति श्रुतेः (३.२.१.६) ।

वाग्यतं प्रवेशयति ॥ ११ ॥ ततोऽध्वर्युः कृतवाग्यमनं यजमानं बाहुगृहीतं शालायां प्रवेशयति । अथ प्रवेशनानन्तरं यजमानस्य स्वमासनं गच्छतः पूर्वेणाहवनीयमव्यवायेन प्राप्तदक्षिणेन गमने प्राप्तऽआह ·

आहवनीयगार्हपत्यावन्तरेण ॥ १२ ॥ यजमानः प्रवेशितः सन् आहवनीयगार्हपत्ययोरन्तरालमार्गेण गत्वा दक्षिणतः स्वस्थानऽउपविशति श्रुतेः (३.१.३.२८) · पूर्वया

द्वारा प्रपाद्येति मानवे पूर्वया द्वारा प्राग्वꣳशं प्रविश्येत्यापस्तम्बः · वचनादेवं व्यवायेन प्रवेशनम् ।

सोऽस्य संचर आ प्रसवात् ॥ १३ ॥ अस्य दीक्षितस्य आ सुत्यायाः स एव संचरो भवति गार्हपत्याहवनीयान्तरालेनैव गमनागमनाय मार्गो भवति · एष एवात ऊर्ध्वं यजमानस्य संचरो भवतीत्यापस्तम्बः · मानवे च दीक्षितसंचर उत्तरेणाहवनीयमपरेण वेदिं दक्षिणातिक्रम्य दक्षिणात आहवनीयस्योदङ्मुख उपविशत्येष संचर इति ।

एवं प्रतिप्रस्थाता पत्नीमभ्यञ्जनादि तूष्णीम् ॥ १४ ॥ एवमनेनैव प्रकारेण यथाध्वर्युर्यजमानं दीक्षयति तथैव प्रतिप्रस्थाता पत्नीं दीक्षयति · अयं तु विशेषः अं॰दि सर्वं कर्म मन्त्रवर्जितं भवति ।

अपरेण वा प्रवेशयति ॥ १५ ॥ पत्नीमपरेण वा शालाद्वारेण पत्नीशालायां प्र॰ति पूर्वेण वा · केचिदेवं व्याचक्षते गार्हपत्याहवनीयावन्तरेणेति (१२) तयोः प्रस्तुतत्वात्तावपरेण वा तावन्तरेण वेति । अत्र मानवसूत्रे विशेषः प्रतिप्रस्थाता तूष्णीं पत्नीं पावयित्वापरया द्वारा प्रपाद्य दक्षिणतः पश्चादपरस्य पत्नीलोकमुपस्थाप्योपवेशयतीति · अतोऽपरेण द्वारेण प्रवेशनं समूलम् । अनेकयजमानकेऽभ्यञ्जनादि बाहुगृहीतप्रपादनान्तमेकैकस्य यजमानस्य कर्तव्यम् संस्कारस्यैतावत्परिमाणत्वात् अप्सुदीक्षायामपि नखनिकृन्तनादि प्रपादनान्तमेकैकस्येति ।

औद्ग्रभणानि जुहोति स्थाल्याः स्रुवेणाकूत्याऽइति (४. ७) प्रतिमन्त्रम् ॥ १६ ॥ स्थाल्याः सकाशात् स्रुवेण औ॰नि अध्वर्युर्जुहोति पत्नीयजमानयोः स्वासनोपवेशनादनन्तरम् · औ॰णानीत्येषां संज्ञा संव्यवहारार्था प्राकृतान्यौद्ग्रभणानि जुह्वेत्यादौ (१६. ४. ३०) · जुह्वा अपवादः स्रुवः (३. १. ४. २) ।

तृतीयं जपत्येव ॥ १७ ॥ तृतीयम् दीक्षाया इत्येतद्यजुर्जपत्येव न तेन जुहोति · एवकारोपबन्धाच्च स्वस्थानपठितस्यैव जपः कार्यः ।

पञ्चमं जुह्वां ध्रौवमासिच्य द्विश्च स्थाल्याः स्रुवेण तृतीयꣳ स्रुवमभिपूरयति विश्वो देवस्येति (४. ८) ॥ १८ ॥ पञ्चममौद्ग्रभणं विश्वस्येति मन्त्रेण जुहोति · कथम् जुह्वां ध्रौवमाज्यमासिच्य सकृदेव सर्वं निनीय ततः स्थाल्याः सकाशा-

त्स्रुवेण द्विरासिच्य च तृती॰पूरयति स्रुवं जुह्वाः पुष्करस्योपर्युत्तानं निधायाज्य-स्थाल्यैव तदाज्येन पूरयति · अत्र स्रुवस्यैव पूरणम् न जुह्वाः स्रुवपूरणस्यापि होमार्थत्वात्पूरणानन्तरं जुह्वामासिच्य जुहोति · द्विश्च॰त्रेणेत्यत्र स्रुवेणेत्युक्तत्वात् ध्रुवातो न स्रुवेण ग्रहणम् किंतु ध्रुवयैव निनयनं कार्यमिति गम्यते । अत्रेदं सवित्रऽइति त्यागः विश्वो देवस्य स्वस्त्यात्रेयः सावित्रीमनुष्टुभमिति सर्वानु-क्रमण्यामुक्तत्वात् (१. १६) अथ सावित्रीं जुहोतीति चयने श्रुतत्वाच्च (६. ६. १. २१) · केचित्तु इदं विश्वेदेवसवितृमित्रबृहस्पतिपूषभ्य इति कुर्वन्ति सैषा देवताभिः॰ पौष्णमिति श्रुतत्वात् (३. १. ४. १३) । पूर्वेषु चाद्येषु त्रिषु होममन्त्रा एवेदं-शब्दयुक्ताः स्वाहाकारवर्जितास्त्यागाः · चतुर्थे तु आपो देवीर्लिङ्गोक्तदेवता इत्युक्तत्वात् (अनुक्र॰ १. १६) इदमब्द्यावापृथिव्यन्तरिक्षबृहस्पतिभ्य इति प्रत्येकं वा चतुर्थ्य-न्तानि असमस्तानि देवतापदान्युच्चार्याणि इदमद्भ्यो द्यावापृथिवीभ्यामन्तरिक्षाय बृहस्पतयऽइति · एवं सर्वत्रानेकदेवताकेषु ज्ञेयम् ।

एतामेव वा पूर्णां जुहुयात् ॥ १९ ॥ अथवा विश्वो देवस्येत्येतामाहुतिं पूर्णां स्रुचं कृत्वा जुहुयात् न पूर्वाश्चतस्र आहुतय इति । एतान्यौद्ग्रभणानि दीक्षणीयाङ्गम् · कुतः तच्छेषभूतद्रव्यसाध्यत्वात् अतो दीक्षणीयाभावे अस्थियज्ञे न भवति । ध्रौवाज्यस्य हुतत्वादत ऊर्ध्वं दीक्षणीयाशेषसमाप्तिः कर्तव्या बर्हि-र्होमः प्रणीताविमोकः राक्षसभागः भागावेक्षणं भागप्राशनमिति · व्रतविसर्गस्त्व-नूबन्ध्यान्ते पयस्यान्ते वा भवति नात्र ।

आहवनीयं दक्षिणेन कृष्णाजिने माऽसंसहिते स्यूतान्ते तर्म्मसु[1] पश्चादासञ्ज-नवती निदधाति ॥ २० ॥ दीक्षणीयाशेषसमाप्त्यनन्तरमध्वर्युः आहवनीयाद्द-क्षिणस्यां दिशि अदूरे द्वे कृ॰ने प्राग्ग्रीवे नि॰ति स्तृणाति · किंलक्षणे मां॰ते मांसोपलक्षितालोमकान्तःप्रदेशेन परस्परं सम्बद्धे योजिते सलोमकौ तु कृष्णा-जिनप्रदेशौ बहिः कार्यौ · तथा पश्चात्तर्म्मसु[2] स्यूतान्ते चर्मणो विकर्तना-नन्तरं भूमौ कीलकान्निखाय परितश्छिद्राणि कृत्वा कीलकेषु प्रोतयित्वा विस्तरणं[3]

---

1) तरर्ग्मसु A sec. m. तर्ग्मसु A pr. m. तरम्मसु Ss. तरर्म B. 2) तरम्मसु B. तरग्मसु A.
3) Thus B. विस्तारणं A. वितननं Ss.

क्रियते तेन तस्मिंश्चर्मणि परितश्छिद्राणि स्वत एव भवन्ति तत्रेदमुच्यते पश्चात्तर्म्सु[1] पश्चाच्छिद्रेषु स्यूतान्ते स्यूता दोरकेण परस्परं संश्लेषिताः अन्ताः ययोस्ते स्यूतान्ते चर्मणोः पश्चाद्भागे यानि छिद्राणि तेष्ववश्यं परिषीवणं भवति नान्येषु छिद्रेषु · पुनः किंलक्षणे आसञ्नी नागदन्तकादावासज्यते येन तदासञ्जनम् अवलगनरज्जुपाशः तद्वती · एवंविधे कृष्णमृगस्य चर्मणी । तर्म्सस्युते (३. २. १. २) तृष्यतऽइति तर्म्म छिद्रम् कीलकछिद्रेषु संगते संस्यूते ।

एकं चेत्पश्चात्पादद्विगुणम् ॥ २१ ॥ यद्येकं कृष्णं भवति तदा तत्कृष्णं पञ्चाणं कार्यम् पश्चात्पादोऽपरपादो द्विगुणो मोटनेन भङ्गेन द्विगुणीकृतो यस्य कृष्णाजिनस्य तत्तथा · मानवे यद्येकं स्याद्दक्षिणं कृष्णाजिनपादं मांसतः समस्य प्रतिषीवेदिति · आपस्तम्बोऽपि कृष्णाजिनेन दीक्षयतीति द्वाभ्यां समस्य दीक्षेतान्तर्मांसाभ्यां बहिर्लोमाभ्यां यद्येकं स्याद्दक्षिणं पूर्वपादं प्रतिषीव्येति · काठके अपरेणाग्निं कृष्णाजिनेऽआस्तीर्यान्तर्मांसे[2] बहिर्लोम्नी यद्येकं स्याद्दक्षिणं पूर्वपादं प्रतिषीव्येदिति ।

दक्षिणं जान्वाच्यास्ते पश्चादेनयोः ॥ २२ ॥ दक्षिणं जान्वाच्य नीचं भूमिस्पृष्टं कृत्वा एनयोः कृष्णाजिनयोः पश्चाद्यजमान उपविशति ।

शुक्लकृष्णसंधिमालभतऽऋक्सामयोरिति (४. १) ॥ २३ ॥ यजमानः शुक्लवर्णकृष्णवर्णरोम्णां संधिं हस्तेन स्पृशति ।

दक्षिणजानुनारोहति शर्मासीति (४. १) ॥ २४ ॥ कृष्णाजिने यजमान एव । अथ प्राङ्मुखो जान्वाक्नोऽभिसर्पतीत्यापस्तम्बः ।

तेनास्तेऽपरेऽन्ते ॥ २५ ॥ यजमानः कृष्णाजिनेऽआरुह्य तयोरपरेऽन्ते पश्चिमे भागे तेनैव दक्षिणेन जानुना उपविशति ।

मेखलां बध्नीते वेणिं त्रिवृतं शणमुञ्जमिश्रामन्तरां वाससः ऊर्गसीति (४. १०) ॥ २६ ॥ ततो यजमानः मेखलां बध्नीते आत्मनेपदश्रवणात् · कीदृशीं मेखलाम् · वेणिं वेण्याकारां ग्रथिताम् न रज्जुवद्वेष्टिताम्[3] · तथा त्रिवृतं त्रिगुणाम् शणैर्मु-

---

1) तरध्वसु A. तरघ्नसु B. तरभसु Ss. 2) स्यार्यां A. B pr. m. स्याया B sec. m.
3) ? °हस्तितां A. °हणितां B. see at १. २७.

ज्ञमिश्रैर्निष्पादिताम् परिधानवस्त्रमध्यवर्तिनीम् · आप॰ शणमयी मौञ्जी वा मेखला त्रिवृत्पृथ्व्यन्यतरतःपाशा तया यजमानं दीक्षयतीति · उदक्पाशेति मानवे।

नीविं कुरुते सोमस्य नीविरिति (४.१०) ॥२७॥ यजमानः नीविरुप-वर्तिकोच्यते · अत्र नीव्या उद्गूहनश्रवणात् (३.२.१.१५) परिधानकाले न क्रियत इति गम्यते ।

शिरः प्रोर्णुते विष्णोः शर्मेति (४.१०) ॥२८॥ ततो यजमानः शिरो आच्छादयति · अत्र सम्प्रदायभेदः केचिदुत्तरीयेण केचिदुष्णीषेणेति · आप॰ उष्णीषेण प्रदक्षिणं शिरो वेष्टयत इति वाजसनेयकम् न पुरा सोमस्य क्रयाद-पोर्णुवीतेति · कठसूत्रे विष्णोः शर्मेति क्षौमान्तेन शिरः प्रछादयति जालं पत्न्याः शिरसीति · उत्तरान्तेन प्रोर्णुत इति मानवे ।

कृष्णविषाणां त्रिवलिं पञ्चवलिं वोत्तानां दशायां बध्नीते ॥२९॥ कृष्णस्य मृगस्य विषाणामुत्तानां बध्नीते आत्मनेपदाद्यजमानः · कीदृशीम् त्रिवलिं ग्रन्थित्रययु-क्ताम् पञ्चवलिं पञ्चग्रन्थियुक्तां वा · सा च प्रादेशमात्री परिशिष्टोक्तेः । काण्वा-नामुत्तरीये बन्धनमाम्नातम् · आपस्तम्बः त्रिवलिः पञ्चवलिर्वा दक्षिणावृद्भवति सव्यावृदित्येक इति ।

तया कण्डूयनम् ॥३०॥ दीक्षितेन कर्तव्यम् । यदा शरीरे कण्डुरुत्पद्यते ।

उपस्पृशत्यनेनया दक्षिणस्या भ्रुव उपरीन्द्रस्य योनिरिति (४.१०) ॥३१॥ ललाटम्।

भूमौ चोल्लिखति सुसस्या इति (४.१०) ॥३२॥ तयैव प्राचीं रेखां क-रोति · विषाणया बर्हिर्वेदि प्राचीमुल्लिखतीति मानवे ॥ ॥ तृतीया कण्डिका ॥ ३ ॥

मुखसंमितमौदुम्बरं दण्डं प्रयच्छति ॥१॥ यजमानमुखमात्रमुदुम्बरवृ-क्षावयवं दण्डं तिर्यञ्चं यजमानाय समर्पयत्यध्वर्युः ।

उच्छ्रयस्वेत्यनेनमुच्छ्रयति (४.१०) ॥२॥ ऊर्ध्वं करोति ।

तं दक्षिणत उपधत्ते ॥३॥ दक्षिणस्कन्धे निदधाति · तस्य दण्डस्य यदर्थ-तो मोचनम् तद्दक्षिणतो भवतीति कर्कः · आपस्तम्बः औदुम्बरं दीक्षितदण्डं यजमानाय प्रयच्छति यो वा यज्ञियवृक्षः फलेग्रहिरिति फलेग्रहिरवन्ध्य[1] इत्यर्थः।

---

1) ॰ह्निनवंध्य A. ॰ह्णिरवंध्य B.

अत्र वा मुष्टिकरणवाग्यमने ॥४॥ अत्रावसरे वा मुष्ने भवतः अथवा पूर्वोक्तकालऽएव ।

एवं प्रतिप्रस्थाता पत्नीं तूष्णीं युगपन्मेखलादि ॥५॥ एवमनेनैव प्रकारेण प्रऽत्नीं मन्त्रवर्जं युगपत् यजमानेन सह यजमानदीक्षासमकालमेव मेखलाबन्धनादि कर्म कारयति ।

योक्त्रेण वा ॥६॥ योक्त्रेण वा पत्नीं दीक्षयति मेखलया वा · योक्त्रपक्षे चोपरि वाससः संनहनं सूत्रकारप्रस्थानादवगम्यते · वक्ष्यत्युपरिष्टात् (८. १. ६) पत्नीसंनहनं च सयोक्त्राया निवर्ततऽइति · समानकार्यं संनिवर्तकं भवति एवं च समानकार्यं भवति यद्युपरि वाससः क्रियते · अत्राहापस्तम्बः योक्त्रेण पत्नीमिति प्रकृत्यात्र दर्शपूर्णमासवत्पत्नीं संनह्यतीति ।

जालं वा शिरसि त्रिपर्यायम् ॥७॥ पत्न्याः शिरसि जालं वा वेष्टनीयम् त्रिर्वेष्टितम् वा उष्णीषमेव · तथा च काठके क्षौमान्तेन शिरः प्रच्छादयति जालं पत्न्याः शिरसीति · आपस्तम्बः पत्नी शिरसि कुम्बकुरीरमध्यूहते जोवोर्णानामिति वाजसनेयकम् जालं कुम्बकुरीरमित्याचक्षतऽइति · मानवे प्रतिप्रस्थाता योक्त्रेण पत्नीं संनह्यति मेखलां दीक्षित इति · योक्त्रेण पत्नीमित्येव सर्वसूत्रेषु ।

पृथुमुखो यज्ञियवृक्षशङ्कुः कण्डूयने ॥८॥ विपुलाग्रो यज्ञियवृक्षस्योदुम्बरपलाशादेः शङ्कुः पत्न्याः कण्डूयनकर्मणि भवति · स च प्रादेशमात्र एव ।

आोल्लेखनात्करोति मेखलादि चेत् ॥९॥ पत्नी मेऽचेत्[1] यदि मेखलाबन्धनादारभ्य कर्म करोति तदा भूमौ प्राच्या रेखाया उल्लेखनान्तं कुर्यात् ।

कृष्णाजिनादि चेद्दण्डान्तम् ॥१०॥ चेद्यदि पत्नी[2] कृष्णाजिनास्तरणादि करोति तदा दण्डप्रदानान्तं कर्म कुर्यात् · एवमेव शाखान्तरे श्रूयते पत्नी कृष्णाजिनादि वा दण्डान्तं कुर्यान्मेखलादि वोल्लेखनान्तमिति · अनेकयजमानके एकैकस्य कृष्णाजिनास्तरणादि दण्डप्रदानान्तं कर्तव्यम् एवं पत्नीनामपि ।

अन्यो दीक्षितोऽयं ब्राह्मण इत्याह त्रिरुच्चैः ॥११॥ अध्वर्योरन्यः संनिकर्षा-

1) Thus A. पत्न्या B. 2) Thus A. पत्न्याः B.

त्प्रतिप्रस्थात्रादिः · अग्रेण प्राग्वंशं दीक्षितमावेदयतीति मनुः · अनेकयजमानके चास्योहः दीक्षिताविमौ ब्राह्मणौ दीक्षिता इमे ब्राह्मणा इति ।

ब्राह्मण इत्येव वैश्यराजन्ययोरपि श्रुतेः ॥१२॥ वैश्योरपि यज्ञे दीक्षितोऽयं ब्राह्मण इत्येव वक्तव्यम् · न दीक्षितोऽयं क्षत्रियो वैश्यो वेति ।

आस्तमयाद्वाचं यच्छति ॥१३॥ मुष्टिकरणानन्तरं विहितस्य वाग्यमनस्यावधिरुच्यते सूर्यास्तमयपर्यन्तं यजमानो वा॰ति ।

अस्तमिते दीक्षित वाचं विसृजस्व पत्नि वाचं विसृजस्वेति त्रिराह ॥१४॥ अस्तमिते सूर्ये दीक्षित॰स्वेति त्रिरुक्त्वा पत्नि॰स्वेत्यध्वर्युस्त्रिराह · अनेकयजमानके ऊहः दीक्षितौ॰सृजेथामिति द्वयोः दीक्षिता॰जधमिति बहुषु पत्नीशब्दस्य तु नोहः प्रकृतावप्यसमवेतत्वात् ।

अग्निमभ्यावृत्य व्रतं कृणुतेति (४.११) वाग्विसर्जनं त्रिरुक्त्वाग्निर्ब्रह्मेति (४.११) च सकृत् ॥१५॥ दीक्षितः प्राङ्मुखः प्रागुपविष्टोऽस्ति · अधुनाध्वर्युणा प्रेषितः सन् अग्नि॰त्य आहवनीयसंमुखो भूत्वा व्र॰तेति त्रिरुक्त्वा अग्निर्ब्रह्मेत्यनेन मन्त्रेण सकृत्पठितेन वा॰नं करोति · व्र॰तेति व्रतकरणप्रैषोऽयमध्वर्य्वादीन्प्रति अग्निर्ब्रह्मेति तु वाग्विसर्गमन्त्रः ।

भूर्भुवः स्वरिति वा ॥१६॥ वाग्विसर्जनं करोति (३.२.२.६) ।

अत ऊर्ध्वमा मुष्टिविसर्गादनस्तमितेऽनुदिते च त्रिराह दीक्षित वाचं यच्छ पत्नि वाचं यच्छेति ॥१७॥ अतः परं मुष्टिविसर्गपर्यन्तमनस्तमिते सूर्येऽनुदिते च सूर्ये दीक्षित वाचं यच्छेति त्रिरुक्त्वा पत्नि वाचं यच्छेति त्रिराह इति श्रुतत्वात् (३.२.२.२६) ।

यथोक्तं विसर्जनम् ॥१८॥ यथा श्रुतावुक्तं विसर्जनम् तद्वत्कर्तव्यम् · श्रुतौ चास्तमिते उदिते च विसर्जनमुक्तम् तथैवानुष्ठेयमित्यर्थः ।

व्रतदुघे दोहयति ॥१९॥ व्रतं कृणुतेति यजमानेन प्रेषितोऽध्वर्युर्व्रतदुघे गावौ दो॰ति व्र॰घे धुक्ष्वेति प्रेषणं करोति · ततः प्रेषितः कश्चिद्गावौ दोग्धि ।

तत्क्षीरव्रतौ भवतः ॥२०॥ तयोर्व्रतदुघयोः क्षीरं तत्क्षीरम् तत्क्षीरमेव व्रतं भोजनामशनं ययोः पत्नीयजमानयोस्तौ त॰तौ पत्नीयजमानौ तदुग्धाशनौ भवत इत्यर्थः ।

प्रथमे व्रते व्रीहियवयोरन्यतरमावपति ॥ २१ ॥ दुग्धमध्ये प्रक्षिपेत् · व्रतस्य भोजनार्थत्वाद्व्रीहियवज्ञातीयं भक्षयोग्यं कृत्वा आवपति ।

उभावेके ॥ २२ ॥ शाखिनः प्रथमे व्रते उभौ व्रीहियवावावपन्ति ।

तद्व्रतमदोहे ॥ २३ ॥ व्रतदुघाया अदोहे सति व्रीहियवयोरन्यतरेण पत्नीयजमानयोर्भोजनं भवति ।

सर्वौषधꣳ सर्वसुरभि चैके ॥ २४ ॥ एके शाखिनः प्रथमे व्रते सर्वं ग्राम्यारण्यं धान्यं व्रीहियवमुद्गगोधूमश्यामाकनीवारकङ्ग्वादि सर्वं भि च सुगन्धि द्रव्यं चन्दनागुरुकर्पूरादि तदपि मेध्यमेव नामेध्यम् वरटककोद्रवादि एवमादि प्रथमव्रतमध्ये आवपन्ति · एके तु नेति विकल्पः ।

गार्हपत्ये दीक्षितस्य श्रपणम् ॥ २५ ॥ व्रतदुघे पृथक्पात्रयोर्दोहयित्वा दीक्षितव्रतार्थस्य पयसो गार्ह्पत्ये श्रपणं कर्तव्यम् ।

दक्षिणाग्नौ पत्न्याः ॥ २६ ॥

यवागू राजन्यस्य ॥ २७ ॥ तण्डुलानां शिथिलः[1] पाको यवागूः सा क्षत्रियस्य दीक्षितस्य व्रतं भवति · सा च सिद्धैवोपादेया तस्य श्रौताग्न्यधिश्रितभक्षणप्रतिषेधात्[2] ।

आमिक्षा वैश्यस्य ॥ २८ ॥ पयस्या · पयस्तप्तं कृत्वोपरि दध्यासिच्योदकमवस्राव्य यद्घनीभूतं दधिसदृशं द्रव्यं स्थाल्यां तिष्ठति सा आमिक्षा वैश्यस्य दीक्षितस्य व्रतं भवति · सापि सिद्धैव ग्राह्या पूर्वोक्तादेव हेतोः · तयोः पत्न्योरपि यजमानवद्व्रतं समानन्यायात् । अत्राहापस्तम्बः यवागू राजन्यस्येत्युक्तम् यवागूमेके दुग्धं वा व्रतयेदित्यवर्णसंयोगेनैकऽउपदिशन्ति तद्वैतदेके पयो व्रतयन्ति तदु तथा न कुर्यात्पयस्येव यवागूꣳ श्रपयित्वा व्रतयेत् यदि व्रतधुगल्पं दुहीताथान्यां दुह्याद्यद्यन्या न स्यादद्भिः सꣳसृज्य श्रपयेद्यदि पयो न स्यादप्स्वेव यवागूꣳ श्रपयित्वा व्रतयेदप्यन्ततः पिप्पलानि न त्वेव चन व्रतयेदग्निहोत्रस्याविच्छेदायेति यदि दधीयादेतदेवास्मै दधि कुर्युर्यद्घनीयाद्धाना अस्माऽअन्वावपयेयुः[3] सक्तूनस्माऽअन्वावपयेयुर्यतमस्मा[4]ऽअन्वानयेयुरप्यग्निहोत्रहविषामेकैकं व्रतयेन्माꣳ-

---

1) °ला: A. 2) तस्याग्न्य° A. 3) वपेयुः A. 4) °वपेयु° A.

सवर्णं सोऽयं द्वैधो वादो भवतीति खल्वाकृत्यपसत्स्वनारभ्य स्तनकल्प आम्नात इति ।

व्रतं प्रयच्छत्यनुत्सिक्तम् ॥२९॥ अध्वर्युरनुत्सिक्तं व्रतं भोजनार्थं पयो यजमानाय समर्पयति · अभ्युच्चयाय वर्धनाय सिक्तमुत्सिक्तम् न उत्सिक्तमनुत्सिक्तम् · व्रतदुग्धमल्पं दृष्ट्वा कश्चित्स्नेहदयादियुक्तः पुरुषोऽन्यद्दुग्धमानीय व्रतमध्ये निनयति तदुत्सिक्तम् तद्विपरीतमनुत्सिक्तमनाप्यायितमिति हरिस्वामिनः (३. २. २. ११) ।

अपररात्रे सायंदोहम् ॥३०॥ अध्वर्युर्यजमानाय प्रयच्छति व्रतार्थम् ।

अपराह्णे प्रातर्दोहम् ॥३१॥

दैवीं धियमिति (४. ११) व्रतायोपस्पर्शनं स्वासने ॥३२॥ करोति यजमानः स्वासने कृष्णाजिनऽउपविष्टः · अत्र (३. २. २. १७) हरिस्वामिनः उपस्पर्शनं चात्राचमनमिति केचित् तद्धि भोजनाङ्गतया स्मृतितः प्राप्तमिति न त्वेतद्युक्तम् इह शतपथे उपस्पृशतेः स्पर्शनमात्रे सर्वत्र दृष्टत्वात् मानुषाय वा° दैव्यै धिये इति (०१७) चावनेजनमात्रस्यैव वाक्यशेषे दर्शनात् तस्मादाचान्तस्य हस्तप्रक्षालनमात्रमेतदिति मन्तव्यम् · आपस्तम्बः मध्यन्दिने मध्यरात्रे च व्रतयत्यतिनीय वा मानुषं कालं सायंदुग्धमपररात्रे प्रातर्दुग्धमपराह्णऽइत्येके गार्हपत्ये दीक्षितस्य व्रतं श्रपयन्ति दक्षिणाग्नौ पत्न्या याग्निहोत्रस्य स्कन्नस्य प्रायश्चित्तिः सा व्रतस्याग्निहोत्रवत्तूष्णीमुन्नीयापरेणाहवनीयं व्रतमत्याहृत्य प्रयच्छन्नाह व्रत्यं व्रतय व्रतमुपेहीति दैवीं धियं मनामहऽइति हस्तावव निज्य ये देवा मनोजाता मनोयुज इति दक्षिणेनाहवनीयं परिश्रिते व्रतयति नैनमदीक्षिता व्रतयन्तं पश्यन्ति शिवाः पीता इति व्रतयित्वा नाभिदेशमभिमृशतेऽपश्च पीत्वा जपति तूष्णीं पत्नी स्वऽआयतने व्रतयतीति · मानवे एकदुग्धे व्रते दोहयति पयो ब्राह्मणस्य व्रतं यवागू राजन्यस्यामिक्षा वैश्यस्योपसत्सु पयः सर्वेषाम् तूष्णीमग्निहोत्रोपचारं गार्हपत्ये व्रतं श्रपयति दक्षिणाग्नौ पत्न्यै शृतं गार्हपत्ये पश्चादाहवनीयस्योपसादयति याग्निहोत्रस्य स्कन्नस्य प्रायश्चित्तिः सा व्रतस्याऽतिनीय सायमशनं व्रतं व्रतयत्युपोदयं वातिनीय प्रातरशनमुपास्तमयं वा नादीक्षितो व्रतयन्तं पश्येत् अग्नीन्ज्योतिष्मतः कुरु व्रतमुपेहि व्रत्यं

व्रतयेत्युक्त्वा दीक्षितसंचरेणातिक्रम्य दक्षिणात आहवनीयस्य काष्ठस्ये चमसे वा व्रतं प्रयच्छति   देवीं धियं मनामह इति प्रक्षालयति ये देवा इति व्रतयति शिवाः पीता भवतेति नाभिदेशमारभ्य जपति   पश्चार्धे पत्नी व्रतयतीति · काठके च देवीं धियमिति मार्जयते इति · तस्माद्देवीं धियमित्यनेन हस्तप्रक्षालनमेव कर्तव्यम् नाचमनमिति सिद्धम् ।

ये देवा इति (४.११) व्रतयत्यमृन्मये ॥३३॥   यजमानोऽमृण्ये पात्रे पयो व्र॰ति भक्षयति स्वासनऽएवोपविष्टः ।

पत्नी लौहे ॥३४॥   ताम्रपात्रे · स्वस्थाने स्थिता एव ।

आत्राः पीता इति (४.१२) नाभिमालभते ॥३५॥   व्रतं व्रतयित्वाचम्य · पत्न्या अपि तूष्णीं पाणिप्रक्षालनम् पयोभक्षणं नाभ्यालम्भनं च भवत्येव ।

मेक्ष्यन्कृष्णविषाणया लोष्टं किंचिद्वादत्तऽइयं तऽइति (४.१३) ॥३६॥   मूत्रपुरीषे करिष्यन् यजमानः कृ॰ष्टं मृत्खण्डं किंचिद्वा लघुपाषाणतृणकाष्ठादिकं गृह्णाति।

अपो मुञ्चामीति (४.१३) मेहति ॥३७॥   मूत्रं पुरीषं वा करोति ।

पृथिव्या सम्भवेत्यात्तं (४.१३) निदधाति ॥३८॥   स्मृतिप्राप्तं शौचाचमनं कृत्वा   आत्तं लोष्टं किंचिद्वा नि॰ति ।

अग्ने त्वमित्युक्त्वा (४.१४) स्वपित्यधः प्राङ् दक्षिणतः ॥३९॥   यजमानोऽधः भूमौ खरस्याग्न्यपेक्षया नीचः प्राक्शिरा उदङ्मुखः आहवनीयाद्दक्षिणस्यां दिशि शेते   अधः॰णात इति शाखान्तरात् · आप॰   दक्षिणेनाहवनीयं प्राङ् शेते न न्यङ्ङोत्तानो   नाग्नेरपपर्यावर्तेत[1] यज्ञपपर्यावर्तेत विश्वे देवा अभि मामावृत्रन्निति जपेन्नान्यत्र कृष्णाजिनादासीत यद्यन्यत्रासीत देवाञ्जनमगन्यज्ञ[2] इति जपेन्न दण्डात्कृष्णाजिनादिति विप्रछिद्येतोभे निधाय मूत्रपुरीषे कुर्याद्यावदुक्तं पत्न्या दीक्षितव्यञ्जनानि समानं ब्रह्मचर्यं न दीक्षितवसनं परिदधीत नास्य पापं कीर्तयेन्नान्नमश्नीयाद्यज्ञार्थे वा निर्दिष्टे शेषाद्भुञ्जीरन्सऽस्थिते वाग्नीषोमीये हुतायां वपायामिति · मानवे च   दक्षिणात आहवनीयस्योदङ्मुखोऽपर्यावर्तमानः प्राक्शिराः शयीतेति ।

---

१) नाग्नेरपर्याव॰ AB.   २) दिवांजनमन्यज्ञ B.

अग्निमभ्यावृत्तं विबुद्धमस्वप्स्यन्तं पुनर्मन[1] इति (४.१५) वाचयति ॥४०॥ आहवनीयाग्न्यभिमुखीभूतं यजमानं विबुद्धं विगतनिद्रं पुनः स्वापमकरिष्यन्तमिमं मन्त्रं वाचयत्यध्वर्युः ॥ ॥ चतुर्थी कण्डिका ॥४॥

त्वमग्नऽइत्याह (४.१६) क्रुद्ध्वा ॥१॥ दीक्षितः क्रोधं कृत्वा त्वमग्नऽइत्यमुं मन्त्रं पठति प्रायश्चित्तार्थम् ।

अव्रत्यं वा व्याहृत्य ॥२॥ व्रतमिति शास्त्रितो नियमः व्रतमर्हतीति व्रत्यम् अथवा व्रते साधु व्रत्यम् अव्रत्यं शूद्रसम्भाषणादि · तदुच्चार्य त्वमग्न ऽइत्याह · अव्रत्यमाचारव्यपेतमश्लीलाभिधानमुच्यतऽइति पितृभूतिः ।

लब्धमालभ्य वाचयति रास्त्रेयदिति (४.१६) ॥३॥ शाखान्तरे दीक्षितो भृतिं चिन्वीतेति[2] दीक्षितस्य भृतियाचनार्थं प्रयाणं विहितमस्ति · तत्र याचने क्रियमाणे यद्धिरण्याश्वगवादि यत्किञ्चिद्ददाति तल्लब्धमालभ्य हिरण्यमालभस्व गामालभस्वेत्येवमादिना प्रैषेणालम्भं कारयित्वा रास्त्रेयदित्यमुं मन्त्रं यजमानं वाचयति । आप० दीक्षितो द्वादशाहं भृतिं चिन्वीत[3] यज्ञमेव तत्सम्भरतीति विज्ञायते पूषा सन्येति सनीहारान्सच्छास्ति चन्द्रमसीत्येतैर्यथालिङ्गं प्रतिगृह्णाति देवः सविता वसोर्वसुदावित्यन्यानीति · तथा पृथगरण्योरग्नीन्समारोप्य रथेन प्रयाति तदभावे रथाङ्गेन वेति · तथा रथेन वा रथाङ्गेन वा न विप्रच्छिद्येतेति · तथा अत्र देवयजनाध्यवसानमेके समामनन्ति य इहाध्यवस्येत्स प्रयायाद्य आदितो न स प्रयातीति ।

अशक्येऽभिमन्त्रणम् ॥४॥ अशक्ये आलम्भे अनेनैव रास्त्रेयदित्यनेन तस्य विप्रकृष्टस्य द्रव्यस्याभि॰णं यजमानः करोति ।

शूद्रसम्प्रवेशसम्भाषाप्रत्युत्थानाभिवादनोदकावायवर्षाणि वर्जयेत्प्रागवभृथात् ॥५॥ दीक्षितः । शालायां शूद्रस्य प्रवेशं वर्जयेत् · तथा शूद्रसम्भाषां सम्भाषणं संवादं वर्जयेत् · प्रत्युत्थानम् गुरुपित्रादेः पूज्यस्यागतस्याभ्युत्थानम् · अभिवादनार्हस्यापि गुर्वादेर्नमस्कारम् · उदकमध्ये प्रवेशम् · वर्षं वृष्टिः तत्सम्बन्ध्युदकम् स्वशरीरे वृष्टिधारासंयोगं वर्जयेत् अप्सु दीक्षा गृहीता तस्याः पुनरप्सु

1) ॰स्यन्तम् ॥४॥ पुनर्मन M. 1. 2) चन्वीत A pr. m. 3) चन्वीत B. वन्वीत A.

प्रवेश आशङ्क्यते वस्त्रसंस्तुताश्चामेध्या आपः ताभिर्गर्भसंस्तुतस्य दीक्षितस्य मा भूदुपघात इत्यभिप्रायः इति हरिस्वामिनः (३. २. २. २७)।

परिह्वालं वदति ॥६॥ प°लं कोमलं मृदु वचनं दीक्षितो वदति · सर्वैर्जिह्वादिभिश्चलित्वा-चलित्वा स्थूलजिह्वाकरणः सन्वाचं वदति न प्रसृताम् प्रसृतकरणां मानुषीम् मनुष्यव्यवहारयोग्याम् (३. २. २. २७)।

विचक्षणचनसितवतीं वाचम् ॥७॥ विचक्षणशब्दवतीं चनसितशब्दवतीं च वाचं ब्राह्मणादिनामधेयभूतां वाणीं वदेत् · मनुः न प्रत्यक्षनाम्नाचक्षीत चनसितेत्यर्हता सह सम्भाषमाणो ब्रूयाद्विचक्षणेतीतरैरिति · आप° जागर्येताꣳ रात्रिं क्रीते राजनि द्वितीयाꣳ श्वःसुत्यायां तृतीयां[1] चनसितं विचक्षणमिति नामधेयान्तेषु दधाति चनसितेति ब्राह्मणं विचक्षणेति राजन्यवैश्यौ परिणयेन्न मानुषीं वाचं वदति न स्त्रिया न शूद्रेण सम्भाषेत नैनमनुप्रपद्येत यद्येनꣳ शूद्रेण संवाद उपपद्येत ब्राह्मणराजन्यवैश्यानामेकं ब्रूयादिममित्थं ब्रूहीति वाजसनेयकम् कामꣳ शूद्रेण सम्भाषेत यः पापेन कर्मणानभिरक्षितः स्यादिति शाट्यायनकम् अभिवदति नाभिवादयतेऽप्याचार्यꣳ श्वशुरꣳ राजानमिति शाट्यायनकम् अग्निर्वै दीक्षितस्तस्मादेनं नोपस्पृशेन्न[2] चास्य नाम गृह्णीयान्न पुरा दक्षिणाभ्यो नेतोः कृष्णविषाणामववृतेन्न च दन्तान्दर्शयते हस्तेनापिगृह्य स्मयते मधु माꣳसꣳ स्त्रियमनृतमुपरिशय्यासेवनं विकाले[3] निष्क्रमणं दीक्षितविमितात्प्रवासमिति वर्जयेन्न दिवा मूत्रपुरीषे कुर्याद्यदि कुर्याच्छायायाम् मूत्रं चिकीर्षन्नियं ते यज्ञिया तनूरिति तृणं लोष्टं वापादायापो मुञ्चामि न प्रजामꣳहोमुच इति[4] मूत्रं विसृज्याचम्य पृथिव्या सम्भवेत्यात्तं प्रतिनिदधातीति · तथा यदन्नमद्यते नक्तं न तत्प्रातः क्षुधानति सर्वं तदस्मान्मा हिꣳसीन्न हि तद्ददृशे दिवमिति स्वप्नेऽन्नं भुङ्क्तेति · न प्रतीच्या द्वारा निष्क्रामतीति च त्वमग्ने व्रतपा असीति प्रबुध्य मुष्टी वाचं विसृज्यादीक्षितवादं वोदित्वेति · काठके च यदि प्राक्कालादङ्गुलोर्वाचं वोत्सृजेदिदं विष्णुर्विचक्रमे बृहस्पते जुषस्व नस्त्वमग्ने व्रतपा असीत्यग्निमुत्तमयेति · मानवे च लोमतः कृष्णाजिनस्य शय्यासनमाछादनं च

1) ? °तोयायां AB. 2) ? नापस्पृ° AB. 3) °शय्यां षेवनंविक्ताले AB. 4) ? °जामंहोंशतेति AB.

प्रतिषिद्धं निष्ठीवनं हसनमववर्षणं दन्तविष्करणममेध्यदर्शनमपांगाहनं होमो ऽनृतं च[1] प्रागवभृथादुद्यास्तमयावभ्याश्रावणं च न स्यान्नक्तं मूत्रपुरीषे कुर्याद्यदि दिवा छायायाम् यदि हसेदपिधाय मुखमिति उन्दतीरित्यववृष्टो जपेत् अदब्धं चक्षुरित्यमेध्यं दृष्ट्वा अदीक्षितवादं चेद्ब्रूयात्त्वमग्ने व्रतपा असीति जपेत् अकाले वाचं विसृज्य वैष्णवीमाग्नावैष्णवीं सारस्वतीं बार्हस्पत्यामित्येता निगद्य वाचं यजतीति · एवमेव कठसूत्रे ऽपि ।

शालासनास्वप्नौ संधिवेलयोः ॥ ८ ॥ सायम्प्रातःसंध्याकालयोः यथाक्रमं शाप्तौ यजमानः करोति · सायं शालायामासनम् प्रातरस्वप्नश्च ।

वेद्यां सुत्यासु ॥ ९ ॥ सुत्यासु वर्तमानासु वेदिमध्ये संध्योः शाप्तौ भवतः ।

अप्रायश्चित्तमपराधे ॥ १० ॥ पूर्वोक्तस्य शालास्वलयोरित्यस्य (८) नियमस्यातिक्रमे अप्राप्तम् [प्रायश्चित्तं] न भवतीत्यर्थः · यत्न एवात्र कर्तव्यो यथापराधो न भवति नात्र प्रायश्चित्तिरस्ति प्रतिगुप्यमेवैतस्मादिति (३. २. २. २७) श्रुतत्वात् · किं दुष्करत्वान्नास्ति नैतदेवम् महत्तराणामप्यागसां चिकित्सनात् किं तर्हि नास्ति प्राप्तिः · मनसैवास्यानपप्रोषितं भवतीति यो जागार भुवनेष्वितिवत् (११. ३. १. ६ ८) अपराधस्य मन्दत्वादित्याशयः · तथापि प्रतिगुप्यमेव गुपू रक्षणे रक्षितव्यमेवास्मादपराधादिति हरिस्वामिनः ।

इतरेतरस्मिन्वोपहवमिच्छेरन् ॥ ११ ॥ अथवा पूर्वोक्तनियमस्यापराधे अनेकयजमानके कृतापराधा दीक्षिता इतरेषूहवमनुज्ञामिच्छेरन् दीक्षिता उपह्वयध्वमित्येवम् · ततश्च तैरनुज्ञाताः शालां प्रविशेयुरेव ।

पत्न्यामेकदीक्षी ॥ १२ ॥ दीक्षा अस्यास्तीति दीक्षी एकश्चासौ दीक्षी च एकदीक्षी स पूर्वोक्तापराधे सति पत्न्यामुपहवमिच्छति पत्न्युपह्वयस्वेति । अप्रायश्चित्तं वा इदं प्रायश्चित्तं वेति विकल्पे वाशब्दः ।

दीक्षान्ते प्रायणीयम् ॥ १३ ॥ प्रायणीयाख्यं कर्म ।

अदित्यै चरुं निर्वपति ॥ १४ ॥ अत्र प्रायणीये · अदित्यै चरुरन्यत्रापीत्यनेन (५. ७. २–३) सिद्धे ऽपि पुनश्चरुग्रहणं चरोः प्रायणीयत्वप्रज्ञप्त्यर्थम्[2] ।

---

१) ? °मो ऽनृतं चरेता A. अपागाहनं होमो नृतं चरेत् B. २) अनवस्रावितान्तरूष्मपक्वौदनवचनो हि याज्ञिकानां चरुशब्दः प्रसिद्धः marg. gloss. in B.

आज्यभागाविष्ट्वाज्येन देवताश्चतस्रो यजति पथ्या७ स्वस्तिमग्नि७[1] सोम७ सवितारं च ॥१५॥ ननु गण्यमाना एवैताश्चतस्रो भविष्यन्ति किमर्थं पुनश्चतस्र इत्युक्तम् · मा भूत्कस्यचिदाशङ्का पथ्यां स्वस्तिमिति पृथगेते द्वे देवतेऽइति । आप॰ चतुर आज्ययागान्प्रतिदिशं यजति पथ्या७.[2] स्वस्तिं पुरस्तादग्निं दक्षिणतः सोमं पश्चात्सवितारमुत्तरतो मध्येऽदितिमिति · एवं मानवकठसूत्रयोरपि · शतपथे तु ता वाऽआनन्निति श्रूयते (३. २. ३. १२-१३) तेनाग्नेरुत्तरभागे पथ्यास्वस्तिं यजति प्राच्यामग्निम् दक्षिणायां सोमम् पश्चात्सवितारम् मध्येऽदितिमिति ।

चरुमेक्षणबर्हिर्निदधात्युदयनीयायै ॥१६॥ चरुस्थालीं मेक्षणं बर्हिश्च सुगुप्ते देशे स्थापयेत् उदयनीयार्थम् ।

सलेपं चरुं प्रमृष्टं मेक्षणम् ॥१७॥ चरुं सलेपं निदध्यात् मेक्षणं च पाणिना प्रमार्जनेन निर्लेपं कृत्वा अप्रक्षालितमेव निदध्यात् · बर्हिश्च वेदिमध्यादपोद्धृत्य निदध्यात् तत्तु[3] सांतपनीयाबर्हिरिव गृहमेधीये स्तीर्णमेवास्ते ।

प्रक्षालयति वा चरुम् ॥१८॥ अथवा चरुस्थालीमद्भिः[4] प्रक्षाल्य निर्लेपां कृत्वा निदधाति ।

अनुप्रहरतीतरे ॥१९॥ अस्मिंश्च इतरे मेक्षणबर्हिषी अग्नावनुप्रहरति आह्वनीये जुहोति स्वकालऽएव प्रकृतिवत् ।

तऽएवऽर्त्विजः ॥२०॥ ये प्रायणीये ऋत्विजो भवन्ति तऽएव उदयनीयेऽपि · ननु कर्तॄणां प्रयोगाङ्गत्वादा प्रयोगसमाप्तेस्तऽएवऽर्त्विजो भवन्तीति प्राप्तत्वादवाच्यमेतत् सत्यम् अनुवाद एवायमुत्तरविवक्षार्थम् ।

विप्रेतेष्वन्येऽपि ॥२१॥ विप्रेतेषु मृतेषु प्रायणीयर्त्विक्षु अन्ये ऋत्विज उदयनीये भवन्ति । नन्वेतदप्यवाच्यमेव विप्रेतेष्ववश्यसमापनीये कर्मणि अन्येषामवश्यम्भावित्वात्[5] सत्यमेतदेवम् असति तु वचने वैगुण्यापत्तेः प्रायश्चित्तं स्यादिति तदभावार्थमिदं वचनम् अप्यन्यऽएव स्युरिति (३. २. ३. २२) ।

शम्य्वन्तं भवति ॥२२॥ तदेतत्प्रायणीयं कर्म शम्य्वन्तं शम्योर्वाकान्तं भवति ·

---

1) ? Thus M sec. m. पथ्यास्वस्ति॰ M pr. m. १. AB. 2) पथ्यां B. पथ्या A.
3) Thus B. न तु A. 4) लीमद्भिः A. 5) ॰वश्यभावि॰ AB.

शम्योर्वाकात्परेषामङ्गानां वचनादपच्छेदः । अथेदं विचार्यते · तच्छम्य्वन्तं भवति तदिडान्तं भवतीति श्रुते सति द्वयोः शम्य्वोर्द्वयोरिडयोश्च भावादेष संदेहो जायते किं प्रायणीया पित्र्या च पूर्वशम्युना शम्य्वन्ता अथवोत्तरेणेति तथातिथ्या गृहमेधीया च पूर्वयेडयेडान्ता उतोत्तरयेति · तत्र नियमकारिशास्त्रस्याभावादनियमे प्राप्तऽआह ·

अन्तवचने पूर्वं प्राप्तेरविशेषश्रुतेः ॥ २३ ॥ तच्छम्य्वन्तं भवतीति (३. २. ३. २३) तदिडान्तं भवतीति (३. ४. १. १६) ईदृशे अन्तवचने श्रूयमाणे पूर्वमेव शम्य्विडं ग्राह्यम् नोत्तरम् पूर्वेण शुम्युना शम्य्वन्तम् पूर्वया चेडयेडान्तमिति · कुतः प्राप्तेः यस्मात्प्रथमेऽपि शम्याववस्थीयमाने शम्य्वन्तशब्दस्योपपन्नत्वाद्विधिस्तदतिक्रमे कारणाभावाच्चैवमेव प्राप्नोति · कथमेवं प्राप्तिः अविशेषश्रुतेः यस्मादत्र विशेषो न श्रूयते पूर्वमुत्तरं वेति · अतः प्रथमातिक्रमे कारणाभावाद्वटे प्रतीक्षस्वेति-वत् प्रथममेव शम्य्वन्तं ग्राह्यम् । अपि च प्रथमशम्य्वन्ततायां विधीयमानायाम् न पत्नीः संयाजयन्तीत्यनुवाद एव भविष्यति इतरथा पत्नीसंयाजप्रतिषेधोऽपि वाच्यः तत्रैकवाक्यत्वं विरुध्येत ।

उत्तरं वा प्रकृत्यनुग्रहानुयाजप्रतिषेधाभ्याम् ॥ २४ ॥ उत्तरं वा शम्य्वन्तमिडान्तं च ग्रहीतव्यम् न पूर्वम् · कुत एतत् प्रग्रहात् अनुषेधाच्च · उत्तरे शम्यौ गृह्यमाणे चोदकप्राप्तानि बहूनि प्राकृतान्यङ्गान्यनुगृह्यन्ते तथा सति गुणाधिक्यात्फलाधिक्यं भविष्यति · अपि चानुयाजपत्नीसंयाजप्रतिषेधश्च भवति तदिडान्तं भवति नानुयाजान्यजन्तीति (३. ४. १. १६) तच्छम्य्वन्तं भवति न पत्नीः संयाजयन्तीति (३. २. ३. २३) यदैवोत्तरे शम्यौ परिसमाप्तिरुत्तरस्यां चेडायाम् एवमनुयाजप्रतिषेधः पत्नीसंयाजप्रतिषेधश्च घटते प्राप्तिपूर्वकत्वात्प्रतिषेधस्य । यदुक्तम् अविशेषश्रवणे मुख्यानतिक्रमो न्याय्य इति प्रकृत्यनुग्रहादनुयाजप्रतिषेधाच्च कारणान्मुख्यमतिक्रम्यते · लोकेऽपि कारणात्प्रथममतिक्रम्यतऽएव वटे प्रतीक्षस्वेत्युक्तो यदि प्रथमे देशऽउपद्रुतो[1] भवति विरलच्छायो वा भवेत्तदा तमतिक्रम्य द्वितीये प्रतीक्षते ।

---

1) प्रथमे देश सर्प उपहृतो (द्रुतो ?) A. (at वटे marg.)

ग्रहणादप्रवृत्तिः ॥ २५ ॥ यद्यप्युत्तरेऽपि गृह्यमाणे प्रकृ°ग्रहो भवति तथापि प्रथमऽएव[1] शम्यौ परिसमापनीयम् अप्रवृत्तिरुत्तरस्य कर्मणः · कुतः अविशेषश्रवणे प्रथमस्यैव ग्रहणात् यदि प्रथमेऽपि[2] शम्यौ परिसमाप्यमाने कृतः शास्त्रार्थो भवति किमित्यतिक्रम्यते । ननु प्रकृत्यनुग्रहरूपात्कारणात्प्रथमातिक्रम उक्तः दुर्बलमेतत्कारणम् आनुमानिकश्चोदकः प्रत्यक्षेणान्तवचनेन बाध्यते तस्मान्नैव प्रकृतिरनुग्राह्या · अपि च पूर्वः शम्युर्नित्यः तेन तदन्ताङ्गरीतिः[3] शक्यते विधातुम् उत्तरस्तु पाक्षिकस्तत्र स[4] च नियन्तव्यः तदन्ताङ्गरीतिश्च विधेयेति द्विकरता वाक्यस्य स्यात् ।

संवराश्रुतेश्च ॥ २६ ॥ सं°तेश्चायमर्थो गम्यते यत् पूर्वमेव शम्य्वन्तमिडान्तं च ग्रहीतव्यमिति · यतः प्रायणीयायामातिथ्यायां चान्तच्छिद्वचनादनन्तरं श्रूयते तेषु प्रेतेषूपसदोऽतन्वत°मवरन्तेति (१.५.१.२२) · अत्र भूयिष्ठमवरन्तेति वचनात्पूर्वास्वपीष्टिषु वरमाणा एवाङ्गान्यवलुप्तवन्त इति गम्यते तस्य शम्योरुक्तमासाथाजग्मुस्तस्मात्स यज्ञः शम्य्वन्त इति (१.५.१.२०) तस्येडोपहूतासाथाजग्मुस्तस्मात्स यज्ञ इडान्त इति (°२१) असुरेभ्यो बिभ्यतो देवाः शम्य्वन्तमिडान्तमेव प्रायणीयमातिथ्यं च वरमाणाः परित्यक्तवन्तः वराकारिणाश्च विना कारणं पूर्वमतिक्रम्य नोत्तरं प्रतीक्षन्ते · अपि च पूर्वः शम्युः प्रधानवादङ्गरीत्या साक्षात्सम्बद्धस्तेन तदन्ताङ्गरीतिर्लक्षयितुं शक्यते उत्तरस्तु पत्नीसंयाजाङ्गम् तेन व्यवहिता दुर्लक्ष्याङ्गरीतिः · अपि चात्र पत्नीसंयाजाः प्रतिषिध्यन्ते तदभावे तदङ्गमुत्तरः शम्युर्भविष्यतीत्यनुपपन्नतरमेतदत्र स्यात् · तेन पूर्वशम्युनैव शम्य्वन्ता प्रायणीया स्यात् एवमातिथ्यापि पूर्वयेडया इडान्ता स्यादिति सिद्धम् । अथ यदुक्तम् अनुयाजप्रतिषेधः पत्नीसंयाजप्रतिषेधश्चैतस्मिन्पक्षे न घटतऽइति तत्राह ·

नित्यानुवादोऽनुयाजप्रतिषेधः ॥ २७ ॥ यस्त्वत्र अनु°धः स नि°दः नित्यस्यैवानुयाजाभावस्यानुवाद इत्यर्थः · एवं पत्नीसंयाजप्रतिषेधोऽपि नि°द एव । तस्मात्पूर्वेणैव शम्युना शम्य्वन्तम् पूर्वयैवेडयेडान्तं कर्तव्यमिति सिद्धान्तः ॥ ॥

पञ्चमी कण्डिका ॥ ५ ॥

[1] Thus A. एव deest B. [2] पि deest B. [3] तेन deest A. तेनदंगनीति B.
[4] स deest A.

उपरवदेशे प्रतिप्रस्थाता रोहिते चर्मण्यानडुहे सोमं निवपति ॥१॥ धुरि निधाने वेद्यालम्भे च कृते उपांशे उपरवाणां स्थाने प्र॰ता आ॰हे रो॰णि प्राग्ग्रीवे उत्तरलोम्नि सो॰ति शाखान्तरात् ।

विक्रय्येनं विचिनोति ॥२॥ सोमविक्रयी सोमं पर्वशोऽवखण्डयति ।

कौत्सः ॥३॥ कुत्ससगोत्रः सोऽर्थी भवति कुत्सितकर्मा कौत्स इत्यपरे ।

शूद्रो वा ॥४॥ कौत्साच्छूद्राद्वा सोमं क्रीणीयादिति शाखान्तरात् ।

ब्राह्मण उपास्ते ॥५॥ उपरवदेशे सोमनिधाने कते ब्राह्मण इति ब्रह्मणः अयं ब्राह्मणः तस्येदमित्यण् (पा॰ ४. ३. १२०) तेन[1] ब्रह्मपुरुषो ब्राह्मणाछंसी समीपे दक्षिणात उपविशति ब्रह्मणः प्रायणीयेष्टौ कृताकृतप्रत्यवेक्षणे व्यापृतत्वात् ।

उदकुम्भश्च पुरस्तात् ॥६॥ उदकपूर्णः कलशः उपरवदेशे स्थापितस्य सोमस्य पुरस्तान्निदधाति ।

शालाद्वाराण्यपिधाय ध्रौवं स्रुच्यां चतुर्विगृह्णाति ॥७॥ ततोऽध्वर्युः शालायास्त्रीण्यपि द्वारा॰धाय ध्रौवमाज्यं स्रु॰ह्णाति विभज्य चतुर्वारं ध्रुवयैव निनयति ।

बर्हिस्तृणेन हिरण्यं बद्ध्वावदधात्येषा तऽइति (४. ११) ॥८॥ स्रुच्याम् ध्रुवातो गृहीतस्य घृतस्य मध्ये निक्षिपति बर्हिरित्युपदेशाद्विनियुक्तमेव वेदौ स्तीर्णं तृणं ग्राह्यम् अन्यथा तृणेनेत्येतावदेवावक्ष्यत् न तु बर्हिस्तृणेनेति ।

जूरसीति (४. १७) जुहोति ॥९॥ तदाज्यमाहवनीये समिदाधानपूर्वकं जुहोति इयं च हिरण्यवती आहुतिः इदं वाचऽइति त्यागः जूरसि वाग्देवतमिति सर्वानुक्रमण्यामुक्तत्वात् इदं जुवऽइति वा वाग्वै सोम॰ नाम यज्जूरसीति (३. २. ४. १०-११) श्रुतत्वात् ।

शुक्रमसीति (४. १८) हिरण्यमुद्धृत्य वेद्यां तृणं निदधाति ॥१०॥ तद्बर्हिस्तृणाबद्धं हि॰त्य हस्ते कृत्वा तृणं वेदिमध्ये प्रतिप्रक्षिपति ।

सूत्रबद्धं हिरण्यं कुरुते ॥११॥ ततस्तदुद्धृतं हिरण्यं सूत्रदोरकेण बध्नाति । अत ऊर्ध्वं प्रायणीयाशेषसमाप्तिः तच्छेषभूतं हि द्रव्यं[2] विनियुक्तमिति बर्हिर्होमो वा प्रणीताविमोकः राक्षसभागः भागावेक्षणम् भागप्राशनमिति । यच्च-

[1] ब्रह्मणः॰तेन deest A. [2] ? Thus A. ॰तं हविर्द्रव्यं B.

पीयमाङ्गतिः प्रायणीयशेषेण ध्रौवेण ह्रूयते तथापि सोमक्रयार्थैव[1] वाग्वै सोम॰ क्रीणानीति (३. २. ४. १०) वाक्यशेषात् अतश्चोदयनीयायामियमाङ्गतिर्न भवति ।

चतुर्गृहीतं गृहीत्वान्वारभस्व यजमानेत्याह ॥ १२ ॥ प्रायणीयाशेषसमाप्त्यनन्तरमध्वर्युराज्यं संस्कृत्य पदाभिहोमार्थं चतुर्गृहीतमाज्यं गृहीत्वा॰त्याह ततो यजमानो॰ध्वर्युमन्वारभते ।

अपावृतद्वारे निष्क्रामतः ॥ १३ ॥ विमिते अ॰रे उद्घाटितद्वारे सति अध्वर्युयजमानौ विमितान्नि॰तः · अपावृतान्युद्घाटितानि द्वाराणि यस्य तदपा॰रं विमितम् · अवसरविशेषणं वा अपा॰राणि यस्मिन्नवसरे स अपा॰रः तस्मिन् · अपोर्णुवन्ति ॰द्वारे इति श्रुतत्वात् (३. २. ४. १५) अपो॰न्ति यजमानपुरुषाः अत एवोद्घाटनवचनात्पूर्वमपिहिते॰इति गम्यते ते च पूर्वदक्षिणे स्याताम् ताभ्यां संव्यवहारप्राचुर्यादिति हरिस्वामिनः · प्रतिपस्थाता द्वितीय इति सम्प्रदायः ।

दक्षिणेन द्वार७ सोमक्रयणी तिष्ठत्यलक्षितावयङ्गाप्रवीतारज्जुबद्धा बभ्रुः पिङ्गला पिङ्गलाभावे॰रुणारुणाभावे रोहिण्यश्येताक्षी ॥ १४ ॥ शालायाः पूर्वद्वारं द॰न पूर्वद्वारो दक्षिणस्यां दिशि सो॰णी स्थिता भवति · कीदृशी · अलक्षिता अनङ्किता अकृतचिह्ना · अव्यङ्गा अनङ्गहीना · अप्रवीता वी गतिप्रजननकान्त्यशनखादनेषु अत्र प्रजननार्थः प्रशब्दात् वाक्यशेषाच्च अयातयाम्नी॰ वीतेति (३. ३. १. १६) प्रजाता हि गतसारा भवति नोपगममात्रेण तस्माद्प्रवीता अप्रजातेति हरिस्वामिनः अकामितेति कर्कः · अरज्जुबद्धा अबद्धैव · बभ्रुः कपिला · पिङ्गला पिङ्गाक्षी पिङ्गले मधुवर्णे अक्षिणी यस्याः । पिङ्गाक्ष्या अभावे अरुणा रक्तभासुरा अव्यक्तरागा अरुणयैकहायन्या[2] पिङ्गाक्ष्या गवा सोमं क्रीणातीति शाखान्तरात् · आपस्तम्बो॰पि एकहायनी द्विहायनी वर्षीयसी वेति · काठके सोमक्रयणीं बभ्रुमेकहायनीं ज्यायसीं वेति · एकहायनी एकवर्षा द्विहायनी द्विवर्षा · अव्यक्तरागस्त्वरुण इत्यमरः (१. ४. २५) । अरु॰क्षी रोहिणी रक्तवर्णा सा च अश्येताक्षी अरक्ताक्षी श्येत-इव ह्येष उद्यंश्चास्तं च यन्भवतीति श्रवणात् (५. ३. १. ७) उद्यदादित्यवर्णाः श्येतः ।

---

१) ? Thus A ॰यार्थे च B. २) ॰णाया एक॰ AB.

चिदसीत्येनामभिमन्त्रयते (४. १९–२०) ॥ १५ ॥ अध्वर्युः पूर्वद्वारेण निष्क्रम्य सोमक्रयण्या दक्षिणत उदङ्मुखः स्थितो यजमानान्वारब्धः । सोमक्रयण्यास्त्रिवत्सः साण्ड इति (२२. ३. ४०) साम्यक्षे वक्ष्यति तत्रायं मन्त्र इति उच्यते चिदसि मनोऽसि धीरसि दक्षिणोऽसि क्षत्रियोऽसि यज्ञियोऽस्यदितिरस्युभयतःशीर्षा स नः सुप्राङ् सुप्रत्यङ्केधीति · अग्निष्टुति चाग्नयेऽध्यक्षायेति इन्द्रस्तुति इन्द्रायाध्यक्षायेति सूर्यस्तुति सूर्यायाध्यक्षायेति वैश्वदेवस्तुति विश्वेभ्यो देवेभ्योऽध्यक्षेभ्य इति · तथा इन्द्राय सोममित्यत्र (४. २०) अग्नये सोममित्यादि ।

उदीचीं नीयमानामनुगच्छतो वस्व्यसीति (४. २१) ॥ १६ ॥ अभिमन्त्रणानन्तरं कैश्चिदुदी°नां सोमक्रयणीमध्वर्युयजमानावनुगच्छतः[1] द्वयोरपि मन्त्रः । अस्यापि साम्यक्षे साण्डे ऊहः वस्व्यस्यदितिरस्यादित्योऽसि[2] रुद्रोऽसि चन्द्रोऽसीति ।

षट् पदान्यतीत्य सप्तमं पर्युपविशन्ति ॥ १७ ॥ सोमक्रयण्याः पूर्वदक्षिणपादसम्बन्धीनि षट् पदानि अतिक्रम्य सप्तमं पदं प°न्ति परितः समन्तादुपविशन्ति दक्षिणतो ब्रह्मयजमानौ पश्चादध्वर्युः उत्तरतो नेष्टेति · कठसूत्रे तस्य दक्षिणेषु सप्तसु पूर्वपदेषु लक्षणं कुरुते · मानवे षट् पदान्यनुनिष्क्रामति दक्षिणस्य पूर्वपदस्य सप्तमं पदमभिपरिगृह्णेति ।

हिरण्यमस्मिन्निधायाभिजुहोत्यदित्यास्त्वेति (४. २२) ॥ १८ ॥ अस्मिन् सप्तमे पदे हिरण्यं निधाय अभिजुहोति इदमदित्या इति त्यागः ।

स्फ्येन पदं त्रिः परिलिखत्यस्मे रमस्वेति (४. २२) ॥ १९ ॥ होमानन्तरमध्वर्युस्तत्पदं स्फ्येन त्रिः प°ति परितो रेखां करोति · अत्र च सकृन्मन्त्रेण द्विस्तूष्णीम् एकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रवचनमित्युक्तेः (१. ७. ३) · अत्र परिलेखनमुपर्युपरि कार्यम् अग्निचयने बहिर्बहिरिति (१६. २. २३) विशेषोक्तेः[3] ।

समुद्धृत्य पदं स्थाल्यामावपत्यस्मे ते बन्धुरिति (४. २२) ॥ २० ॥ अथाद्धिरण्यमपसार्य पदं पदसम्बन्धिनः पांसून्समुद्धृत्य उल्लिख्य हस्तेन गृहीत्वा स्था°ति ।

---

1) अनुनिष्क्रमणं पदोपरि पदनिधानम् यत्र सोमक्रयणी पदं निदधाति तत्र द्वयोः पदनिधानमिति शास्त्रदीपिकाव्याख्याने चतुर्थाध्यायस्य प्रथमे पादे पदकर्माप्रयोजकं नयनस्य परार्थत्वादित्यधिकरणे सोमनाथदीक्षिताः A marg. 2) ? Thus B. वस्व° A. 3) अत्र प° क्तेः deest A.

अप स्थाने निषिच्य यजमानाय पदं प्रयच्छति त्वे राय इति (४.२२) ॥२१॥ तस्योद्धृतस्य पदस्य स्थाने भूमौ उदकं निनीयाध्वर्युर्यजमानाय प्रयच्छति ।

मे राय इति (४.२२) यजमानः प्रतिगृह्णाति ॥२२॥ तत्स्थालीस्थं पदम् · अनेकयजमानके पदसमर्पणे प्रतिग्रहणे च सर्वेषामन्वारम्भः ऊहश्च युवयो रायः आवयो राय युष्मासु रायः अस्मासु राय इति ।

मा वयमित्यध्वर्युरात्मानं (४.२२) संस्पृशति ॥२३॥ हृदयदेशे ऽऽलभते · तत उदकोपस्पर्शनं कार्यम् ।

दत्वा पत्न्यै पदं प्रयच्छति ॥२४॥ अध्वर्युर्यजमानात्पदं हृत्वा ऽऽदाय समर्पयति स्थालीस्थमेव ।

नेष्टा तोत इत्येनां (४.२२) वाचयति ॥२५॥ अनेकपत्नीके सर्वासां वाचनम् ब्रूतं ब्रूतेति च यथायथं प्रयोगः ।

सोमक्रयण्या च समीक्ष्यमाणां समख्ये इति (४.२३) ॥२६॥ सोमक्रयण्या वत्सतर्या कर्ण्या समं विलोक्यमानां पत्नीमध्वर्युरेव वाचयति · अध्वर्युरेव संख्यापयेत् अश्रुतवान्नेष्टुः (३.३.१.११-१२) ।

प्रक्षाल्य पाणी हिरण्यं बध्नीते ऽनामिकायाम् ॥२७॥ अध्वर्युः · सोमक्रयार्थमेतद्धिरण्यबन्धनम् · पाणिप्रक्षालनं दृष्टार्थम् पदपरिलेखनोद्धरणादिना धूलिलिप्तत्वात् । हिरण्यबन्धनानुवृत्तिमुपजीवन्नाह ·

आप्यायनाभिषवाऽदाभ्येषु च ॥२८॥ सोमाप्यायने सोमाभिषवे अंशुग्रहग्रहणे अदाभ्यग्रहणे च अनामिकायां हिरण्यं बध्नीते ऽध्वर्युः · पाणिप्रक्षालनं त्वत्र नानुकृष्यते तस्य दृष्टार्थत्वात् आप्यायनादिषु तस्याश्रवणाच्च · सोमाप्यायने हिरण्यबन्धनं शाखान्तरात् अभिषवे स्वशाखायामेव ॥ ॥ षष्ठी कण्डिका ॥ ६॥

प्रेष्यति च सोमोपनहनमाहर सोमपर्याणहनमाहरोष्णीषमाहरेति ॥१॥ (३.३.२.३) चशब्दादध्वर्युरेव यजमानपुरुषं प्रति प्रेष्यति · सोम उपनह्यते बध्यते येन तत्सोमोपनहनं वासः · सोमो ऽनसि स्थितः परि समन्तादानह्यते येन पटकुटीस्थानीयेन तत्सोमपर्याणहनम् · उष्णीषः पट्टको बन्धनार्थः । अत्र प्रेष्यस्यैक-

त्वात् अवसानं विनैव त्रयः प्रैषा देयाः प्रोक्षणीरासादयेत्यादिवत् (२. ६. ३४)। चशब्द आनन्तर्यार्थे ।

अत्र वा निवपनम् ॥२॥ अस्मिन्काले वा उपरवदेशे सोमनिधनं भवति स्वशाखायामस्मिन्नेव काले श्रुतवात् पदं॰ उपास्तऽइति (३. ३. २. ५) ।

शोभनं सोमोपनहनम् ॥३॥ पूर्वोक्तानां त्रयाणां वाससां मध्ये शोभनं वासः सोऽहनं स्यात् ।

उष्णीषाभावे सोमपर्याणहनाद्व्यङ्गुलं त्र्यङ्गुलं वोष्णीषायावकृन्तति ॥४॥ उष्णीषस्य सोमबन्धनार्थस्य तृतीयस्य वाससः अभावे · उष्णीषार्थं छिनत्ति पाटयति ।

अध्वर्युर्यजमानो वा सोमोपनहनं हरति ॥५॥ अध्वर्युणा प्रेषितेन केनचिद्यजमानपुरुषेणाहृतानां सोमोपनहनादीनां त्रयाणां वाससां मध्ये सोऽनं वासो ऽध्वर्मानो वा क्रयदेशं प्रति हरति ।

अन्य इतरे ॥६॥ प्रतिप्रस्थाता सोमपर्याणहनोष्णीषे क्रयदेशं प्रति हरति ।

सोमं गच्छन्ति ॥७॥ एवं वासांस्यादाय सोमं प्रति गच्छन्ति ।

एष तऽइति (४. २४) वाचयति ॥८॥ सोमं प्रति गच्छन्तं यजमानम् ।

प्राङुपविश्यास्माकोऽसीति (४. २४) सोममालभते ॥९॥ यजमान एव नाध्वर्युः।

न विचिनोत्यतः ॥१०॥ अतः परं सोमविक्रय्यपि सोमं न विचिनोति नावखण्डयति शाखान्तरात् · अध्वर्योस्तु पूर्वमपि शाखान्तरे प्रतिषेधदर्शनात् मानवे नाध्वर्युः सोमं विचिनुयादिति प्रतिषिद्धं विचयनं प्रेक्षणं चेति · काठके च न विचीयमानं प्रेक्षेरन्निति ।

तृणकाष्ठापासनमेके ॥११॥ एके अस्मात्सोमात्तृणकाष्ठानां सोममध्ये पतितानामपासनं कुर्वन्ति एके नेति · अत्र ह्येकेऽओषधय इत्यादिश्रवणात् (३. ३. २. ८) अत्र कालऽएके चरकयजमानाः ॰इति यजमानस्यैवापासनं दर्शयति इति हरिस्वामिनः ।

सोमोपनहनं द्विगुणं चतुर्गुणं वा स्तृणाति प्राग्दशमुदग्वा ॥१२॥ चर्मणि · आपस्तम्बः क्षौमं वासो द्विगुणं त्रिगुणं वा प्राग्दशं वेति । मानवे प्राग्दशे क्षौमे राजानं मिमीतऽइति ।

तस्मिन्सोमं मिमीते दशकृत्वोऽभि त्यमिति (४. २५) ॥ १३ ॥ तस्मिन् चर्मणा उपर्यास्तीर्णे सोमोपनहनवाससि दशवारं सोमं प्रक्षिपति मन्त्रान्ते वाससं उपर्यावपति । दशस्वपि मानेषु अनियमेनाङ्गुलिव्यापारे प्राप्तऽआह ·

सर्वाभिः प्रथमम् ॥ १४ ॥ सर्वाभिरङ्गुलीभिः प्रथमं मिमीते · दक्षिणस्य पाणेः ।

अङ्गुष्ठप्रभृति चैकोत्सर्गम् ॥ १५ ॥ प्रतिमानमङ्गुष्ठादारभ्यैकैकामङ्गुलिमुत्सृजेत् · द्वितीये मानि अङ्गुष्ठमुत्सृज्य चतसृभिरङ्गुलिभिरेव मिमीते तृतीये माने प्रदेशिनीमुत्सृज्य तिसृभिः चतुर्थे मध्यमामुत्सृज्य द्वाभ्याम् ।

द्विः कनिष्ठिकया ॥ १६ ॥ पञ्चमे षष्ठे च मानेऽनामिकामुत्सृज्यैकया कनिष्ठिकया द्विवारद्वयं सोमं मिमीते ।

एकोपचयं च ॥ १७ ॥ सप्तमादिमानेषु प्रतिमानमेकैकाङ्गुल्युपचयं वृद्धिं कृत्वा मिमीते · षष्ठमानापेक्षया सप्तममाने एकाङ्गुल्युपचयः कर्तव्यः कनिष्ठानामिकाभ्यां मिमीते · अष्टमे कनिष्ठानामिकामध्यमाभिः · नवमे सप्रदेशिनीभिश्चतसृभिः · दशमे साङ्गुष्ठाभिः सर्वाभिरिति ।

अञ्जलिना दशमम् ॥ १८ ॥ दशकृत्वो मिमीतऽइति (३. ३. २. १७) दशवारमेव मानश्रवणात् दशमं मानमञ्जलिना कर्तव्यमिति पूर्वः पक्षः । सिद्धान्तमाह ·

अन्यद्वाध्यावपश्रुतेः ॥ १९ ॥ वाशब्दः पूर्वपक्षनिरासे · अन्यदेव दशममानादधिकमेवाञ्जलिनैकादशं मानं कर्तव्यम् · कुतः अध्यावपश्रुतेः समस्याञ्जलिनाध्यावपतीति (३. ३. २. १३) श्रवणात् · अत्र हि एतया सर्वाभिरिति सर्वाभिर्मानं विधाय तद्व्यतिरिक्तोऽध्यावापः पृथक्श्रूयते अतो दशभ्यस्तूष्णीमञ्जलिनाध्यावापः कार्यः ।

अन्तान्संगृह्योष्णीषेण बध्नाति प्रजाभ्यस्त्वेति (४. २५) ॥ २० ॥ ततोऽध्वर्युः सोमोपनहनस्यास्तीर्णस्य वाससोऽन्तानूर्ध्वमुन्नीय एकत्र संकलय्य उष्णीषेण बध्नाति ।

अङ्गुल्या मध्ये विवृणोति प्रजास्त्वानुप्राणन्त्विति (४. २५) ॥ २१ ॥ बन्धनान्तरं दक्षिणपाणेरङ्गुल्या वृणोति विवरं करोति तेषां समुन्नीतानां सोमोपनहनान्तानां मध्ये अङ्गुल्या आकाशं (३. ३. २. १९) छिद्रं करोति ।

तं विक्रयिणे प्रयच्छति ॥ २२ ॥ ततोऽध्वर्युस्तं सोमोपनहनबद्धमेव सोमं विक्रयिणे प्रयच्छति ॥ ॥ सप्तमी कण्डिका ॥ ७ ॥

पञ्चकृत्वः सोमं पणते ॥१॥ अध्वर्युः । पण व्यवहारे पणनं न्यूनेन मूल्येन विक्रेतुः प्रार्थनम् कलादिभिः प्रथमं तावत्प्रार्थयतऽइत्यर्थः । कथं पुनः पणतऽइत्याकाङ्क्षायामाह ।

स आह सोमविक्रयिन्क्रय्यस्ते सोमो राजा३इति (३.३.३.१) ॥२॥ आहोस्विन्न क्रयार्थं प्रसारितः किंतु रसायनाद्यर्थः । अनुदात्तितयोरिति (पा° ८.२.१००) प्लुतिः ।

क्रय्य इत्याह सोमविक्रयी ॥३॥

तं वै ते क्रीणानीति ॥४॥ पुनरध्वर्युस्तं पृच्छति । अनुज्ञां प्रार्थयते ।

क्रीणीहीत्याह सोमविक्रयी ॥५॥

कलया ते क्रीणानीति ॥६॥ कला गोः षोडशो भागः ।

भूयो वाऽअतः सोमो राजार्हतीति सोमविक्रयी ॥७॥

भूय एवातः सोमो राजार्हति महांस्त्वेव गोर्महिमेत्यध्वर्युर्गोर्वै प्रतिधुक्तस्यै शृतं तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्याऽआतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्याऽआमिक्षा तस्यै वाजिनमिति (३.३.३.१-२) ॥८॥ सत्यम् अतो मदुक्तान्मूल्यात्तव सोमो राजा भूय एव बहुतरमेव मूल्यमर्हति परं तु गोरपि महिमा महानेव महदेव महत्त्वम् यतः गोः प्रतिधुक् धारोष्णं पयः तस्या एव च शृतम् तस्या एव शरस्तरिका तस्या एव च दध्यादि वाजिनान्तम् यस्माद्गो रेतानि पयआदीनि सर्वोपजीव्यानि जायन्ते तस्माद्गोर्महिमा महान् सोमात्तु न किमपीत्यभिप्रायः ।

भूय एवेत्यतःप्रभृति चतुरावर्तयति ॥९॥ अध्वर्युः । चतुर्वारं पठति ।

एकैकेनान्ते पणते शफेन पदार्धेन गवा ॥१०॥ भूय एवेत्यस्य मन्त्रस्यान्ते प्रत्यावृत्ति यथासंख्यं शफादीनामेकैकेन व्यवहरति तेन प्रथमवारं पठनान्ते शफेन ते क्रीणानीति द्वितीयवारं पठनान्ते पदा ते क्रीणानीति तृतीयवारमर्धेन चतुर्थवारं गवा । अत्र चतुर्थे पणने विशेषमाह ।

ते क्रीणामीत्यन्ततः ॥११॥ अन्ततोऽन्ते चतुर्णां शफादीनामन्तिमे चतुर्थे गवा ते इत्यत्र ते क्रीणामीत्ययं मन्त्रविशेषो भवति । अत्र हि प्रार्थनां तदीयमतिसर्जनं चानपेक्ष्य स्वयमेव परिछिद्य एतावदेवास्य मूल्यमिति वर्तमानसामीप्ये वर्तमानवदित्यतिदिशति (पा° ३.३.३.१३१) गवा ते क्रीणामीति तथैव श्रुतत्वात् (३.३.३.३)।

प्रश्नान्ते-प्रश्नान्ते ॥ १२ ॥ भूय एवात इत्याद्याहेति शेषः · प्रश्नशब्देन गुणवृत्त्या भूयो वाऽग्रतः सोमो राजार्हतीत्येष (७) मन्त्र उच्यते · वचनप्रतिवचनसम्बन्धात्प्रश्न-इव प्रश्न इति ।

क्रीतः सोमो राजेत्यन्ते वयाᳬसि प्रब्रूहीत्याह सोमविक्रयी (३. ३. ३. ३) ॥ १३ ॥ अन्ते पञ्चकृत्वः पणनान्ते क्रीतः ऽज्ञा वऽहीत्येवमध्वर्युं प्रत्याह वयांसि अन्यान्यशून् छाग इत्यादीन् ॥ वैश्यराजन्ययोः सोमयागे न्यग्रोधस्य सोमवत्क्रयणादिसंस्कारकरणापत्ते विशेषः · सोमनिधानानन्तरमुपरवदेशे न्यग्रोधस्य निधानम् · सोमक्रयण्यनुमन्त्रणे स्वस्ति सोमन्यग्रोधसखा पुनरेहीति (४. २०) · सोमन्यग्रोधोपनहनेऽश्नाहर सोमन्यग्रोधपर्याणहनेऽआहर उष्णीषावाहरेति अभिषेचनीयदशपेययोस्तु बहुवचनेनं सोमोपनहनान्याहर सोमपर्याणहनान्याहर उष्णीषानाहरेति · तथा एष तऽइति (४. २४) वाचने एष वां गायत्रो भाग इति मे सोमन्यग्रोधाभ्यां ब्रूतात् इति · उभयोरालम्भनम् आस्माकौ स्थ इति (४. २५) · सोमोपनहनमास्तीर्य न्यग्रोधोपनहनस्यास्तरणम् · सोममानानन्तरं तद्वदेव मन्त्रेण मानम् · उष्णीषेण बन्धनम् अङ्गुल्या मध्ये विवरणं च · उभयोः सोमविक्रयणे समर्पणम् · सोमविक्रयिन्क्रय्यौ ते सोमन्यग्रोधौ राजानौ इति प्रश्नः · क्रय्याविति प्रतिवचनम् · तौ वै ते क्रीणानीति भूयो वाऽग्रतः सोमन्यग्रोधौ राजानावर्हतः · भूयं एवातः सोमन्यग्रोधौ राजानावर्हतो महांस्त्वेवेत्याध्वर्युः · क्रीतौ सोमन्यग्रोधौ राजानौ वयाᳬसि प्रब्रूहीति ।

स आह चन्द्रं ते वस्त्रं ते छागा ते धेनुस्ते मिथुनौ ते गावौ तिस्रस्तेऽन्या इति (३. ३. ३. ४) ॥ १४ ॥ सोमविक्रयिणा क्रीतः सोमो राजेत्यादिके उक्ते सोऽध्वर्युः सोऽयिणं प्रत्याह · वयांसि प्रब्रूहीत्युक्तम् तुल्यन्यायवाच्चन्द्रवस्त्रेऽप्याह · चन्द्रं ते हिरण्यं ते अपरम् वस्त्रं ते छागा ते अपरा धेनुस्ते मिथुनौ च ते गावौ स्त्रीगवी पुंगवश्चेति तिस्रस्तेऽन्याः स्त्रीगव्य इति अस्यार्थः ।

शुक्रं त्वेति (४. २६) हिरण्यमालम्भ्य वाचयति ॥ १५ ॥ कारितोपदेशाद्धिरन्यमालभस्वेति अध्येषणाया यजमानेन हिरण्यालम्भं कारयित्वा यजमानं वाचयति · न्यग्रोधे चोहः शुक्रौ वाᳬ शुक्रेण क्रीणामि चन्द्रौ चन्द्रेणामृतावमृतेनेति ।

सग्मे तऽइति (४. २६) सोमविक्रयिणाऽ हिरण्येनाभिकम्पयति ॥१६॥ चित्ततः[१] प्रचालयति · महार्हमेतत्तव यदि स्यात् न हि स्यादित्येवं हिरण्यदर्शनेन तं प्रलोभयतीत्यर्थः ।

अस्मे तऽइति (४. २६) यजमानसहितं निदधामि ॥१७॥ यजमानसमीपे ।

सोमविक्रय्येतदादत्ते ॥१८॥ एतद्यजमानसमीपे स्थापितं हिरण्यं गृह्णाति ।

अजां प्रत्यङ्मुखीमालभ्य वाचयति तपसस्तनूरिति (४. २६) ॥२०॥ प्रागेव स्थापितां छागामालभ्य अजामालभस्वेत्यध्येषणाया यजमानेन अजाया आलम्भं कारयित्वा यजमानं वाचयति · न्यग्रोधे मन्त्रस्योक्तः परमेण पशुना क्रीयेथेऽइति ।

सव्येनाजां प्रयच्छन्मित्रो न इति दक्षिणेन सोमम् ॥२१॥ आदत्ते · न्यग्रोधे ऊहः मित्रौ न एतऽ सुमित्रधाविति · उपमार्थत्वान्मित्रशब्दस्याविपरिणामऽइति कर्कः ।

आदायागतऽउत्तिष्ठति वा ॥२२॥ सोममादायाध्वर्यावागते सति यजमानः स्वासनादुत्तिष्ठति न वोत्तिष्ठति । अथ वैवं सूत्रयोजना · सव्येऽणेन सोममादाय यजमानसमीपमागच्छति · आगतऽउत्तिष्ठति वा आगते सोमे । अनुत्थानं शाखान्तरात् ।

दीक्षितोरौ दक्षिणे प्रत्युह्य वासो निदधातीन्द्रस्योरुमिति (४. २७) ॥२३॥ ततोऽध्वर्युर्दक्षिणे दीऽरौ तत्स्थं वस्त्रं प्रतिनीयोर्ध्वमुत्पार्य[२] तत्र ऊरौ सक्थ्नि सोमं वासोबद्धमेव निदधाति · प्रतिपूर्वक ऊह वितर्कऽइत्येषोऽत्र नयनार्थः वस्त्रान्तमुत्कृष्योरावासादयतीति मानवे · न्यग्रोधे आविशतं दक्षिणामुशन्तावुशन्तऽ[३] स्योनौ स्योनमित्युभयोरूरावाधानम् ।

स्वान भ्राजेति (४. २७) जपति सोमविक्रयिणामीक्षमाणः ॥२४॥ संहितास्वरेण पठति · यजमानो जपतीति कर्कः अध्वर्युरिति याज्ञिकाः · सोमक्रयणान्गावादीन्सोमविक्रय्यधिदेवताभूतेभ्यो गन्धर्वेभ्यो निवेदयति (३. ३. ३. ११). ।

अपोर्णुते दीक्षितः शिरः ॥२५॥ दीक्षासमये धृतं शिरःप्रावरणमपसारयति ।

पत्नी च ॥२६॥ शाखान्तरात् । अस्मिन्नवसरे मैत्रावरुणाय दीक्षितदण्डस्य प्रदानं कर्तव्यम् विकल्पेन क्रीते वेति (६. ४. ७) प्रागुक्तत्वात् अथवा अग्नीषोमीयऽएवाग्निर्ह देवीनामित्येतस्मादनन्तरम् ।

---

१) ? विन्नतः AB. २) °त्यार्धमुत्पार्य A. ३) °मुशन्नुशंतं B.

हिरण्यं सहसाछिद्य पृषता वस्त्राकाण्डेनाहन्ति वा ॥२७॥ सोमविक्रयिणः सकाशात्सहसा बलेन हिरण्यमाछिद्य झटिति आकर्षणेन गृहीत्वा अनन्तरं तं सोमविक्रयिणं पृषता विचित्रवर्णेन वण्डेन वंशदण्डेनाध्वर्युराहन्ति[1] कुट्टयति वा विकल्पेन अथवा नाहन्ति शाखान्तरात्· आपस्तम्बः प्रदक्षिणं सोमक्रयणीमावृत्यान्यया गवा निष्क्रीय यजमानस्य गोष्ठेऽपिसृजति यदि सोमविक्रयी प्रतिविवदेत पृषतैनं वस्त्राकाण्डेनावहत्याय नाशयेयुर्लकुटैर्घ्नन्तीत्येके[2] नित्यवदेके समामनन्तीति· मानवे सोमविक्रयिणे किंचिद्दद्यादिति ॥ ॥ अष्टमी कण्डिका ॥८॥

गृहीतसोमं परि माग्नऽइति (४.२८) वाचयति ॥१॥ गृहीतः हस्तेनात्तः सोमो येनासौ गृ॰मः गृ॰मं यजमानं वा॰ति· हस्ताभ्यामभिगृह्यास्तऽइत्यापस्त॰।

उत्तरे च ॥२॥ उत्तरे वक्ष्यमाणे द्वे कर्मणी उत्थानमनः प्रति गमनं च गृहीतसोम एव यजमानः करोति।

उदायुषेत्युत्थानम् (४.२८) ॥३॥ ऊरोः सकाशाद्धस्ताभ्यां सोममादाय यजमानः उत्थानं करोति उत्तिष्ठति।

शीर्ष्णि सोमं कृत्वा पाणिमन्तर्धाय प्रति पन्थामित्यनो (४.२९) ऽभ्येति दक्षिणातस्तिष्ठच्छन्नं समङ्गि धौतम् ॥४॥ पार्धाय स्वशिरस उपरि स्वकीयं पाणिं निधाय शीर्ष्णि मूर्धनि सो॰त्वा पाण्यन्तर्हिते शिरसि सोमपोटलकं निधाय यजमानः अनः आरोहणं शकटमभ्येति सोमक्रयदेशाद्दक्षिणस्यां दिशि समीपे स्थितम् सच्छदिष्कमाच्छादितम् सर्वाङ्गैर्युगयोक्त्रानडुहादिभिः संयुक्तम् धौतं प्रक्षालितम्· पार्धायेति शाखान्तरात्· एतच्चानः सोमक्रयार्थमागच्छद्भिः सह नेयम्। मानवे सच्छदिष्केणानसा राजानमच्छ यन्तीति· आपस्तम्बसूत्रेऽपि अपि पन्थामगन्महीत्युद्धतपूर्वफलकेनानसा परिलिखितेन छदिष्मता प्राञ्चः सोममच्छ यान्ति शीर्ष्णा गिरौ क्रीतं हरन्त्यपरेणोत्तरेण वा राजानं प्राग्ग्रीषमुदग्गीषं[3] वानडुद्युगं शकटमिति· न्यग्रोधस्य संस्कारपक्षे तस्याप्यादानं शिरसि करणं च भवति।

प्रउगाच्चोद्धते फलके ॥५॥ अस्यानसः प्रउगात् पूर्वस्माद्भागाद्द्वे काष्ठमये फलके उद्धते उत्खाते भवतः· प्रउगं प्राग्युगमीषान्तरम्।

[1] वंशदंडेन deest B. [2] Thus A. °कुलैर्घ्नं° B. (लगुड!) [3] °मुदगीषं A.

कृष्णाजिनमस्मिन्नास्तृणात्यदित्यास्त्वगिति (४. ३०) ॥६॥ नीडस्योपरि प्राग्ग्रीवमुत्तरलोम · नीडे (३. ३. ४. १) शकटस्योपस्थे पश्चाद्भागे ।

तस्मिन्त्सोमं निदधात्यदित्यै सद इति (४. ३०) ॥७॥ तस्मिन्नास्तीर्णे कृष्णाजिने अध्वर्युः सोऽन्तं वासोबद्धमेव · न्यग्रोधपत्ते तस्यापि सहैव स्थापनम् आसीदतमित्यूहश्च । अभिषेचनीये च सोमं क्रीत्वा द्वेधमुपनह्य पर्युह्येति (१५.४.३) वक्ष्यमाणत्वात्सोमविक्रयिणः सकाशाद्धिरण्यादानानन्तरं सोमस्य वस्त्रद्वये पृथक्पृथक् बन्धनम् न्यग्रोधस्य च · यजमानः सर्वाञ्छिरसि कृत्वा गच्छति · सर्वेषामासादनम् अदित्यै सद आसीदतेत्यूहः ।

अस्तभ्नाद्द्यामिति (४. ३०) सोममालभ्य वाचयति ॥८॥ सोममालभस्वेत्यध्येषणाया यजमानेन सोमालम्भं कारयित्वा · न्यग्रोधे सोमन्यग्रोधावालभस्वेति प्रैषः अस्तभ्नीतां द्यां वृषभावन्तरिक्षममिमातां आसीदतं सम्राजौ इत्यूहः · अभिषेचनीये च सोमन्यग्रोधानालभस्व अस्तभ्नन्द्यां वृषभा अन्तरिक्षममिमत आसीदत सम्राजो ।

वनेषु व्यन्तरिक्षमिति (४. ३१) सोमपर्याणह्नेन परितत्य कृष्णाजिनं पुरस्तादासजति सूर्यस्य चक्षुरित्यासनयोरन्यतरत् (४. ३२) ॥९॥ सोऽनेन वाससा सोमं परितत्य सर्वतो वेष्टयित्वा आसनार्थयोः कृष्णाजिनयोर्मध्ये अन्यतरदनियतमेकं कृष्णाजिनं शकटस्य पुरस्ताद्भागे आसजति युगसमीपे उच्छ्रिते दण्डे अवलगयति ध्वजस्थानीयम् · अत्रानसो वाससा वेष्टनमिति केचित् · मानवे वनेषु व्यन्तरिक्षमित्यनो वाससा पर्याणह्यतीति । अनसि स्थितः सोमः परि समन्तादानह्यते येन पटकुटीस्थानीयेन तत्सोऽह्नमिति · तेन सोमस्य परितो वेष्टनेन पटकुटी निष्पादनीया ।

एकं चेद्ग्रीवा अवकृत्य ॥१०॥ यद्यासनार्थमेकमेव कृष्णाजिनम् न द्वे तदा तस्य ग्रीवाः कण्ठप्रदेशं छित्त्वा शकटस्य पुरस्तादासजति · ग्रीवाशब्दो बहुवचनान्त एव प्रायेण वेदे दृश्यते ।

अनड्वाहौ पुनन्त्युन्नावितमिति (४. ३३) ॥११॥ बलीवर्दौ । इदानीमिदं विचार्यते किं युगपदनडुहोर्योजनमुत भेदेनेति · तदर्थं चेदमपरं चिन्त्यते

किं युगस्कन्धसंनिपातो योजनं उत योक्त्रपरिहरणमिति । यद्याद्यः तदा युगपत् अथान्त्यस्तदा भेदेनेति · किं तावत्प्राप्तम् · सूत्रेणैव पूर्वपक्षं करोति ।

युगपत्तद्वचनत्वात् ॥ ११ ॥ युगपत्सहैवानडुहोर्योजनं कर्तव्यम् तच्च युगस्कन्धसंनिपातत्वं युगपदपि कर्तुं शक्यम् · कुतः मन्त्रस्य तद्वचस्त्वात् युगपद्वचनत्वात् मन्त्रो हि द्विवचनान्तत्वाद्युगपदनडुाहौ युज्यमानौ प्रकाशयति भेदेन योजने तु तद्द्विवचनमनुपपन्नं स्यात् । एवं प्राप्ते सिद्धान्तमाह ·

भेदे मन्त्रावृत्तिः सांनिपातित्वात् ॥ १२ ॥ भेदेन योजनं कर्तव्यम् कुतः दक्षिणेन पाणिना कर्म कर्तव्यमिति स्मर्यते न चैकेन दक्षिणेन द्वयोर्युगपद्योजनं कर्तुं शक्यते · स्मृतिश्च प्रमाणमित्युक्तम् तानौ वा नित्यत्वादित्यत्र (१. ८. १८) । योजनं च योक्त्रपरिहरणम् न युगस्कन्धसंनिपातमात्रम् तच्चाशक्यं युगपत्कर्तुम् तस्मादवश्यं भेदेन योजनं कर्तव्यम् । भेदे च सति मन्त्रिः योजनमन्त्रस्योत्साहवेतमित्यस्यावृत्तिर्भवति · कुतः सांत्वान्मन्त्रस्य संनिपत्य हि क्रियायामुपकरोति मन्त्रः स क्रियभेदे सत्यावर्तयितव्यः । यदुक्तम् एकस्मिन्युज्यमाने द्विवचनान्तस्य प्रयोगोऽनर्थक इति नानर्थकः प्रातितिपदिकार्थमभिधास्यते ।

ईषान्तरे भूमिष्ठः सुब्रह्मण्यः पलाशशाखया प्राजति ॥ १४ ॥ सुब्रह्मण्यसंज्ञक उद्गातृपुरुषः शकटस्येषयोरन्तराले यतः प्रदेशात्फलके उह्यते तस्मिन्प्रदेशे ईषयोर्मध्ये भूमिष्ठो भूमाववस्थितः सन् पर्णा प्रतोदस्थानीयया अनडुाहौ प्राजति गमनाय प्रेरयति · उह्यते प्रउगे फलके भवतः (३. ३. ४. १) ।

पश्चात्परीत्यापालम्बं गृहीत्वा सोमाय क्रीतायानुवाचयति ॥ १५ ॥ अध्वर्युरनसः पश्चात्त्य प्रदक्षिणं परिक्रमणेन पश्चाद्भागेऽआगत्य अपालम्बमुपस्तम्भनार्थं पश्चादाबद्धं दारु अभिपद्य हस्तेन गृहीत्वा सोमाय क्रीतायानुब्रूहीत्येवं होतारमनुवाचयति । अत्र (३. ३. ४. १३) विप्रतिपत्तिः · अपालम्बशब्देन पश्चादाबद्धा रज्जुरभिधीयते यया अवतारे अनः प्रवर्तमानं विधार्यतऽइति कर्कः पश्चाद्भागे बद्धं लम्बायमानं दारु अपालम्बशब्देनोच्यते येनोर्ध्वप्रदेशे प्रचलतः शकटस्य स्तम्भनेन पर्यावर्तनं वार्यतऽइति हरिस्वामिनो याज्ञिकाश्च । हविरन्तमालभ्य सोमाय क्रीतायेत्यादि मानवे · अपरेण ब्रह्मयजमानौ दक्षि-

णातः शकट[म]न्वारभ्याह सोमायेत्यादि काठके · अथाध्वर्युः शकटमन्वारभ्य सम्प्रेष्यतीत्यापस्तम्बे ।

पर्युह्यमाणायेति वा ॥१६॥ अथवा सोमाय पर्युह्यमाणायानुब्रूहीत्येवं प्रेष्यति वा प्रागुक्तम् · न्यग्रोधश्चेत् सोमन्यग्रोधाभ्यां क्रीताभ्यामनुब्रूहि पर्युह्यमाणाभ्यामिति वा · अभिषेचनीये च सोमन्यग्रोधेभ्यः क्रीतेभ्यः पर्युह्यमाणेभ्य इति वा ।

दीक्षितश्चान्वारभते ॥१७॥ अनुवाचनानन्तरमेव शकटस्थं सोमम् ।

त्रिरुक्तायां प्राङ् यात्वा दक्षिणावर्त्य[1] शालां गच्छन्ति ॥१८॥ होत्रा प्रथमायामृचि त्रिरुक्तायां सत्यां प्रथमं पदार्थतया प्राग्यात्वा प्राच्यां दिशि कियन्तं चिदध्वानं गत्वा ततो दक्षिणावृत्य प्रदक्षिणमावृत्य शालां प्रति गच्छन्ति सर्वे ब्रह्मयजमानहोत्रध्वर्य्वादयः · अथवा दक्षिणावर्त्येति पाठः ततोऽनः प्रदक्षिणमावर्त्य आवर्तयित्वा ।

भद्रो मऽइति (४. ३४) वाचयति ॥१९॥ ततो गमनाभिप्रवृत्तं यजमानमध्वर्युर्वाचयति आलब्धसोममेव शालां प्रति गच्छन्तम् । न्यग्रोधे विशेषः भद्रौ मे स्थः प्रच्यवेथां भुवस्पती°[2] मा वां° श्येनौ °परापतन्तं °गच्छन्तं° · अभिषेचनीये च भद्रा मे स्थ प्रच्यवध्वं भुवस्पतयो°[3] मा वः श्येना °परापतत° गच्छत° ।

सुब्रह्मण्यां चाह्वयति सुब्रह्मण्योऽ३म् सुब्रह्मण्योऽ३मिति त्रिरुक्त्वा सकृन्निगदं यावदहे सुत्या भवति तथाह ॥२०॥ चकारादध्वर्युरेव वाचनानन्तरं सुब्रह्मण्यामाह्वयति अध्वर्युवेदे एवं विधानात् प्रैषस्य चानुक्तत्वात् सुब्रह्मण्यस्यापि प्रकारान्तरेणात्राह्वानस्योक्तत्वाच्च सुब्रह्मण्यः पुनः स्वकीयां सुब्रह्मण्यां निगदवर्जितां त्रिः कृत्वः प्राचि वर्तमानेऽनसि षट्कृत्वः प्रतीचीति । अध्वर्युः कथमाह्वयतीत्यपेक्षायामाह सुब्रह्म°ण्यो३मित्येवमभ्यस्तं त्रिरुक्त्वा वारत्रयमुच्चार्य शेषमिन्द्रागच्छेत्यादि निगदं (३. ३. ४. १७) सकृदेकवारमुक्त्वा यावदहेऽतीते सुत्या भवति अस्मात्क्रयणादिवसादारभ्य यावत्सु दिनेषु अतिक्रान्तेषु सुत्या भवति तथा आह · तद्यथा त्र्युपसत्के त्र्यहे सुत्यामिति षडुपसत्के षडहे सुत्यामिति द्वादशोपसत्के द्वादशाहे सुत्यामिति । सुब्रह्मण्य एव सुब्रह्मण्यामाह्वयतीति हरिस्वामिनः · एतदपि समूलम् यतो मानवलौगाक्ष्यापस्तम्बसूत्रेषु अत्र

[1] Thus M. १. °वृत्य AB. [2] भुवनस्पती AB. [3] भुवनस्पतयो AB.

सुब्रह्मण्य सुब्रह्मण्यामाह्वयेत्येवं प्रैष उक्तोऽस्ति। वाजपेये च शक्रागच्छ हरिव आगच्छेति विश्वे ब्रह्माण आगच्छतेति[1] विशेषः · एवं सर्वेषु निरूढेषु निरूढप्रातःसवनेषु च सोमेषु ज्ञेयम् · अग्निष्टुदादिषु स्वयमेव वक्ष्यति (२२.५.२) सुब्रह्मण्याग्नेयीत्यादिना।

शालां पूर्वेण प्रतिप्रस्थाताग्नीषोमीयं पशुमादाय तिष्ठति कृष्णसारङ्गं मेध्यमभावे लोहितसारङ्गम् ॥२१॥ कृ°ङ्गम् सारङ्गः कर्बुरः वर्णान्तरानुविद्धः शुक्लः सारङ्ग इत्युच्यते कृष्णेन वर्णेन सारङ्गः कृ°ङ्गः अथवा कृष्णश्चासौ सारङ्गश्चेति शुक्लकृष्णलोमा · लो°ङ्गम् लोहितेन रक्तेन सारङ्गः · मेध्यम् मत्तं स्थूलम्। कृष्णवर्णो वर्णान्तरोपेतः कृष्णसारङ्गः लोहितवर्णो वर्णान्तरोपेतो लोहितसारङ्ग इति पितृभूतिः कर्कश्च। अग्रेण प्राग्वꣳशं कर्णगृहीतमजमग्नीषोमीयं कालालं पीवानमवस्थापयतीति मानवादिषु।

नमो मित्रस्येत्येनमालभ्य (४.३५) वाचयति ॥२२॥ एनमग्नीषोमीयं पशुमालभस्वेति प्रैषेण यजमानेनालम्भं पशोः कारयित्वा तं कृतान्वारम्भं यजमानमध्वर्युर्वाचयति।

चरति पशौ वाचनमेव ॥२३॥ पशौ वने चरति सति केवलं वाचनमेव भवति शाखान्तरात्।

आहवनीयाच्चोल्मुकमाहृत्यैके ॥२४॥ एके आचार्याः आहवनीयादुल्मुकं च शालायाः पुरस्तात्स्थापिताग्नीषोमीयसोमसंनिधाने आहृत्य नमो मित्रस्येति वाचयन्ति अपरे वनाहृत्यैवोल्मुकं वाचयन्ति।

समीपेऽन उपस्थाप्योत्तम्भनेनोपस्तभ्नाति वरुणस्योत्तम्भनमिति (४.३६) ॥२५॥ शालायाः समीपे शकटमुदङ्मुखं प्राङ्मुखं वा उपस्थाप्य उत्त°न विष्कम्भककाष्ठेन प्रतिबध्नाति। मानवे अग्रेण प्राग्वꣳशमुदङ्मुखमनोऽवस्थापयतीति · आपस्तम्बसूत्रे चोभयथा अग्रेण प्राग्वꣳशं प्राञ्चीषमुदञ्चीषं वा शकटमवस्थाप्येति।

शम्ये चोद्धृहति वरुणस्य स्कम्भसर्जनीऽइति (४.३६) ॥२६॥ अन उपस्तम्भनस्योपरि स्थापयित्वा शम्ये उद्यम्योत्पाद्योर्ध्वं[2] निष्काशयति।

---

[1] ? °गच्छेति AB. [2] °त्पाद्वयो° ?

औदुम्बरीमासन्दीं नाभिदघ्नामरत्निमात्राङ्गीमूतामाहरन्ति चत्वारः ॥२७॥ अध्वर्य्वादयः · आसन्दी मञ्चिका तां सोमस्यासादनार्थं शकटसमीपे आहरन्ति · औदुम्बरीम् उदुम्बरवृक्षावयवैः काष्ठैर्निष्पादिताम् · नाभिदघ्नाम् नाभिः प्रमाणं यस्याः सा नाभिदघ्नी इति प्राप्ते छान्दसष्टाप्प्रत्ययः नाभिप्रमाणपादयुक्ताम् · अरत्न्यङ्गीम् अरत्निमात्राण्यङ्गानीषोपलक्षणानि यस्याः · ऊताम् मुञ्जरज्ज्वा व्यूताम्[1] सौत्रामण्यां हि श्रूयते मुञ्जविवयना भवतीति (१२. ८. ३. ६) तत्र चाचार्येणोक्तम् (११. ४. ७) सोमासन्दीवदिति एतच्च तदैवोपपद्यते यदा अत्र आसन्दी मुञ्जरज्ज्वा व्यूता भवतीति । अरत्निमात्राङ्गीति शाखान्तरात् ।

अभिमृशन्त्येनां वरुणस्यऽऋतसदन्यसीति (४. ३६) ॥२८॥ अध्वर्युर्हस्तेन स्पृशति ।

कृष्णाजिनमस्यामास्तृणाति वरुणस्यऽऋतसदनमसीति (४. ३६) ॥२९॥ प्राग्ग्रीवमुत्तरलोम कृष्णमृगचर्म ।

तस्मिन्त्सोमं निदधाति वरुणस्यऽऋतसदनमासीदेति (४. ३६) ॥३०॥ तस्मिन्नासन्द्यामास्तीर्णे कृष्णाजिने सोमं वासोबद्धमेव स्थापयति । न्यग्रोधश्चेत् आसीदतमिति मन्त्रे ऊहः · अभिषेचनीयेऽपीतः प्रभृति द्विवचनान्ता एवोक्ताः आसन्द्यभिमर्शनादेः पृथग्विधानात् ।

शालां प्रवेशयन्ति दीक्षितसंचरेण ॥३१॥ तेऽध्वर्य्वादयश्चत्वारः दीक्षिता गार्हपत्याहवनीययोरन्तरालेन तमासन्दीस्थमेव सोमं शालां · दीक्षितेति शाखान्तरात् ।

या तऽइति (४. ३७) वाचयति ॥३२॥ प्रवेश्यमाने सोमेऽध्वर्युर्यजमानम् । न्यग्रोधश्चेत् अत्रोहः या वां ता वां गयस्फानौ प्रतरणौ सुवीराववीरहणौ प्रचरतं सोमन्यग्रोधौ दुर्यानिति ।

आहवनीयं दक्षिणेन स्थापयन्ति ॥३३॥ तं सासन्दीकं सोमं पूर्वद्वारेण शालां प्रवेश्याहवनीयमपरेण नीत्वा तमेव दक्षिणेन आहवनीयाद्दक्षिणस्यां दिशि अदूरे स्थापयन्ति दक्षिणेनाहवनीयं निदधातीति काण्वानां श्रुतत्वात् · आग्नीध्रप्रणयनादर्वाक्सोमोऽत्रैव तिष्ठति ।

---

[1] व्यूतां वणितां B. see at ३. २६.

उदपात्रमुपनिनयन्त्येके ॥ ३४ ॥ उदकस्य पात्रम् उपेति सोमस्य समीपे एके ऽध्वर्यवो निनयन्ति एके नेति ॥ ॥ नवमी कण्डिका ॥ ९ ॥

इति श्रोत्रियाग्निचिच्सुतेन याज्ञिकदेवेन कृते कात्यायनसूत्रव्याख्याने सप्तमोऽध्यायः ॥

इति कातीये श्रौतसूत्रे सप्तमोऽध्यायः ॥ ७ ॥

आतिथ्यम् ॥ १ ॥ उच्यतऽइति शेषः । तत्र हविरुपदिशति ·

निर्वपति वैष्णवं नवकपालं पत्न्यन्वारब्धस्तूर्णम् ॥ २ ॥ तत्रातिथ्ये कर्मण्यध्वर्युः प॰ब्धः यजमानस्त्रिया कृतान्वारम्भः तूर्णं सत्वरं नव॰लं वै॰णं विष्णुदेवतं पुरोडाशं नि॰ति · सोमस्यापनानन्तरमर्थलक्षणमुदकपानमूत्राद्यप्यन्तरा अकृत्वैव निर्वपतीति तूर्णमित्यस्यार्थः । पक्षान्तरमथाह ·

एकविमुक्ते वा ॥ ३ ॥ अथवा शकटे युक्तयोर्द्वयोरनडुहोर्मध्ये एकस्मिन्दक्षिणे विमुक्ते अन्यस्मिन्सव्येऽविमुक्तऽएव निर्वपति · अस्मिन्पक्षे एकस्यां शम्यायां निष्काशितायामध्वर्युः शालां प्रविश्य ब्रह्मोपवेशनादि श्रपणस्य पश्चादासादनान्तं हविर्निर्वापं कृत्वा हविष्कृता वाग्विसर्गान्तं वा कृत्वा तदनन्तरं द्वितीयशम्योद्धरणादि सोमप्रवेशनान्तं करोति · उभयथा श्रुतत्वात् (३. ४. १. ३-५) अतो विहितप्रतिषिद्धत्वाद्विकल्पः ।

निर्वपेदग्नेस्तनूरिति (५. १) पञ्चकृत्वः प्रतिमन्त्रम् ॥ ४ ॥ निर्वपति गृह्णाति · पूर्वं (२) निर्वपतिग्रहणं कर्मोत्पत्त्यर्थम् द्वितीयं निर्वापार्थम् । अत्रायं क्रमः · चतुरासनम् ब्रह्मोपवेशनम् प्रणीताप्रणयनम् आहवनीयदक्षिणाग्न्योः[1] परिस्तरणम् पात्रासादनम् ततः स्फ्योपहितपात्रीकरणम् ततः शूर्पाग्निहोत्रहवण्योरादानादि पत्न्यन्वारब्धो ग्रहणं कुर्यात् इति । इदमिदानीं विचार्यते · किमातिथ्यायां सावित्रस्य निवृत्तिः वैकृतैरेव मन्त्रैर्ग्रहणम् उतानिवृत्तिः समुच्चितैर्ग्रहणमिति · किं तावत्प्राप्तम् · सूत्रेणैव पक्षं गृह्णाति ·

सावित्रनिवृत्तिः श्रुतिविरोधाभ्याम् ॥ ५ ॥ सवितृशब्दसम्बन्धाद्देवस्य त्वेत्येष मन्त्रः सावित्र इत्युच्यते · सवितृपदोपलक्षितस्य मन्त्रस्यात्र हविर्ग्रहणे निवृत्तिः

---

1) ? ग्न्या AB.

स्यात् · कुतः श्रुतेः विरोधाच्च स गृह्णात्यग्नेस्तनूरसीति (३. ४. ८. १) ग्रहणो प्रत्यक्षश्रुतश्चोदकप्राप्तमानुमानिकं बाधते · अपि चात्र देवस्य त्वेति त्वाशब्दो विष्णवे त्वेति (५. १) अनेन समानार्थ उक्तार्थत्वात्प्रयुज्यमानो विरुध्यते · अतः सावित्रस्य निवृत्तिः केवलैर्वैकृतैर्मन्त्रैर्ग्रहणमिति · अत एव बैजवापेन सूत्रितम् न सावित्रमाहेति । आपस्तम्बः पञ्चसु सावित्रं जुहोति चानुषजति नोत्तरयोरित्येके वैष्णवो नवकपालः पुरोडाशो भवति विष्णुर्देवता ऊर्ध्वं संस्कारा हविष्कृता वाचं विसृज्योत्तरमनड्वाहं विमुच्य वारुणमसीत्यादि · काठके च वरुणस्य स्कम्भसर्जन्यसीति शम्यां प्रवृहयति प्रउक्तऽइति योक्त्रपाशं प्रमुच्य प्रविश्य पत्नीमन्वारम्भयित्वा निर्वपति वैष्णवं नवकपालमग्नेस्तनूरिति पञ्चकृत्वः सावित्रादिभिस्तुल्येनोत्तरं विमुञ्चति वरुणोऽसीति सोममादत्तऽइत्यादि · प्रोक्षणादि तुल्येडान्ता संतिष्ठतऽइति च · मानवे अग्रेण प्राग्वंशमुदञ्चमनोऽवस्थापयति वरुणस्त्वोत्तभ्नात्विन्युपस्तभ्नोति वरुण[स्य]स्कम्भसर्जन्यसीति दक्षिणां शम्यामुत्कर्षति विचृत्तो वरुणपाश इति योक्त्रपाशं विष्यति प्रत्यस्तो वरुणपाश इति प्रत्यस्यति नमो वरुणपाशायेति नमस्करोति आतिथ्यायेध्माबर्हिः संनह्यति यथा पशुबन्धे सिद्धमा निर्वपणा[त्प]त्न्यन्वारभेद्यस्मिन्निर्वपेत्सावित्रादिभिरग्नेस्तनूरसीति प्रभृतिभिः पञ्चकृत्वो निर्वपति वैष्णवं नवकपालं सिद्धमा हविष्कृदाह्वानाद्धविष्कृता वाचं विसृज्योत्तरमनड्वाहं विमुञ्चति तमध्वर्यवे च ददात्यनश्च दीक्षितसंचरेणातिक्रम्येत्यादि । सोमान्तस्तत्प्रभूतासु दीक्षणीयादिष्विष्टिषु चोदकेन प्राकृतेषु समस्तेष्वङ्गेषु प्राप्तेष्वाह ·

अग्न्यन्वाधानव्रतोपायनारण्यभोजनदानब्रह्मवरणानि दीक्षणीयाप्रभृति प्रागुदवसानीयायाः सोमे कृतत्वात् ॥ ६॥ सोमे दीक्षणीयात आरभ्य उदयाः प्राक् सोमान्तस्तत्प्रभूतास्विष्टिषु च अग्न्यन्वाधानादीनि ब्रह्मवरणान्तानि कर्माणि न भवन्ति · कुतः कृतत्वात् सौमिकैरेवैतेषामर्थस्य साधितत्वात् · उदवसानीयायां तु सर्वमग्न्यन्वाधानादिकं भवति अग्न्यन्तरत्वादग्न्यन्वाधानम् उन्मुक्तदीक्षत्वाद्व्रतोपायनम् दानं च विहितत्वात् तस्य हिरण्यं दक्षिणेति (१०. ३. १८) आनन्त्यन्तरविधानाच्च ब्रह्मवरणम् ।

पत्नीसंनहनं च सयोक्त्रायाः ॥७॥ पूर्वं हि विकल्पेन पत्न्या योक्त्रेण दीक्षणमुक्तम् (७. ४. ६) तत्र यदि योक्त्रेण पत्न्या दीक्षा कृता तदा पत्नी सयोक्त्रा भवति · तदा चेदमुच्यते स॰याः पत्न्याः प॰नं च न भवति · चकारेण कृतत्वा-दित्येतदनुकृष्यते ।

यजमानभागश्च भक्षप्रतिषेधात् ॥८॥ दीक्षणीयादिषु संनिवर्तते भ॰धात् तत्प्र-तिषेधश्च तत्कार्ये द्रव्यान्तरस्य पयआदेर्विधानात् · इति पूर्वः पक्षः । सिद्धान्तमाह ·

न कर्मगुणत्वात् ॥९॥ दीक्षणीयादिषु यजमानभागस्य निवृत्तिर्न भवति · कुतः क॰त्वात् कर्माङ्गत्वाद्यजमानभागस्य · यदि वृत्त्यर्थो यजमानभा-गभक्षः स्यात्तदा निवर्तेत स तु हविःशेषप्रतिपत्त्यर्थः भागं प्राश्नातीति भागस्य द्वितीयानिर्देशात् · अतः क॰त्वात् तदकरणे च शेषप्रतिपत्तिलोपेन कर्मणो वैगु-ण्यापत्तेर्यजमानभागो न निवर्तते ।

उपसर्जनीरधिश्रयति मदन्तीश्च व्रतवत् ॥१०॥ उपसर्जन्यधिश्रयणानन्तरमे-वाध्वर्युर्व्रतवन्मदन्तीरधि॰ति · व्रतवदिति गार्हपत्ये दीक्षितस्य मदन्तीः दक्षिणाग्नौ तु पत्न्या इति (७. ४. २५-२६) । प्राप्तमप्युपसर्जन्यधिश्रयणं मदन्त्यधिश्रयणस्यावसरवि-धानार्थं पुनरिहोच्यते · मदन्तीः इति पत्नीयजमानयोः क्रतोश्च दृष्टादृष्टकार्यार्थाना-मपां संज्ञा संव्यवहारार्था । एवं मदन्तीनामधिश्रयणं विधाय तासां प्रयोजनमाह ·

आ मुष्टिविसर्गादुदकार्थस्ततः ॥११॥ अवान्तरदीक्षात ऊर्ध्वं मुष्टिविसर्ग-पर्यन्तं पत्नीयजमानयोर्यः कश्चन उदकार्थः उदकेनार्थः क्रत्वर्थो वा दृष्टो वादृष्टो वा स सर्वोऽपि ततः ताभ्यो मदन्तीभ्यः कर्तव्यः · अतः प्रणीताप्रणयनोपसर्जन्या-चमनोदकोपस्पर्शनशौचादिकं यत्किंचिदुदककार्यम् तत्सर्वं ताभिर्मदन्तीभिरुष्णा-भिरद्भिः कर्तव्यम् · अत्र कठसूत्रे विशेषः गार्हपत्ये तप्तानां दीक्षितस्योदकार्थो दक्षिणाग्नौ पत्न्या इति · मदी हर्षग्लपनयोरित्ययमनेकार्थो धातुः अत्र ताप-कृतऽएव ग्लपने द्रष्टव्यः मदन्त्यस्तापेन ग्लायन्त्य इत्यर्थः । आतिथ्यायामेव विशेषान्तरमाह ·

कार्ष्मर्यमयाः परिधयः ॥१२॥ कार्ष्मर्यः श्रीपर्णी तन्मयाः ।

आश्ववालः प्रस्तरः ॥१३॥ अश्ववालसदृशा अश्ववालाः काशाः तन्मयः ।

ऐक्षव्यौ विधृती ॥१४॥ विधृती ऐक्ष्व्यौ काशमूलावयवभूते अत्र भवतः। यद्यप्यत्राश्ववाल इत्यश्ववालाः[1] प्रतीयन्ते ऐक्षवी इत्यत्र इक्ष्ववयवभूते प्रतीयेते तथाप्यत्र शाखान्तरीयाद्वाक्यशेषात्काशमयः प्रस्तरः काशमूलमये च विधृत्यौ गृह्येते · इति मीमांसायां प्रथमाध्यायतृतीयपादे साधितम् · अत्राङ्गमाधवाचार्याः बर्हिःप्रस्तरयोरन्तराले तिर्यक्प्रसार्यमाणौ दर्भौ विधृती ते अत्र इक्षुपत्ररूपे स्यातामिति।

बर्हिश्च ॥१५॥ प्राकृतमेव कौशं भवति · एतत्प्राप्तमपि चतुष्टयमध्ये (१६) गणनाय पुनरुक्तम्।

एतदेवाग्नीषोमीयोपसत्स्वपि चतुष्टयम् ॥१६॥ यदेतत्प्रागुक्तम् कार्ष्मर्यमयपरिध्यादि चतुष्टयं बर्हिरन्तम् एतदेवाग्नीषोमीये ऽपसत्सु च भवति · यदातिथ्यायामासादनप्रोक्षणादिना संस्कृतमुपयुक्तं च तदेवेत्यर्थः।

आसाद्याग्निमन्थनमा होमान्तात्करोति ॥१७॥ स्रुवौ्व्यासाद्य अग्नावग्निरिति होमान्तमग्निमन्थनं कुर्यात् · एतच्चाग्निमन्थनं श्रुताविह विहितम् (३.४.१.१३–२५) तच्चाचार्येण चातुर्मास्येषु वैश्वदेवपर्वण्युपनिबध्य (५.१.२८–२.६) पुनरिहातिदिष्टम् अतस्तद्वदेव शकलादानादि होमान्तमिहानुष्ठेयम् सर्वेषां धर्माणामत्रैव श्रुतत्वात्।

इडान्तं भवति ॥१८॥ इदमातिथ्यम् · अत्र च पूर्वयेडया इडान्तेति प्राङ्निरूपितम् शम्य्वन्तं भवतीत्यत्र (७.५.२२) · अत्रेडान्ताङ्गरीतिविधानम् अतो ऽत्रानुयाजाभावात्तिसृष्वपि स्रुचु चतुर्गृहीतान्येवाज्यानि नोल्मुकोद्वहनम् न समित्परिशेषणम् चतुर्थे प्रयाजे सर्वस्यौपभृतस्य समानयनमिति विशेषः।

ध्रौवं व्रतप्रदाने गृह्णात्यापतय ऽइति (५.५) ॥१९॥ पवित्रप्रतिपत्त्यन्ते कृते ध्रौवं व्रग्ने व्रतप्रदानार्थे भाजने गृह्णाति।

द्विश्च स्थाल्याः स्रुवेण तनूनप्त्रे शाक्वरायेति शक्मन ऽओजिष्ठायेति ॥२०॥ स्थाल्याः सकाशात्स्रुवेण द्विराज्यं गृह्णीयात् व्रतप्रदाने पात्र ऽएव · शाखान्तरे त्रीण्याज्यग्रहणानि समाम्नातानि सन्ति त्रयश्चैते मन्त्राः तेन प्रतिमन्त्रं ग्रहणं सूत्रितम्।

गृह्णामीति सर्वत्र साकाङ्क्षत्वात् ॥२१॥ गृह्णामीतीममवयवं सर्वत्र सर्वे-

---

[1] अश्वस्यवालाः AB.

ष्वपि मन्त्रेषु अनुषजेत् उत्तरयोरपि मन्त्रयोः पठेदित्यर्थः · कुतः साकाङ्क्षात् साकाङ्क्षौ ह्युत्तरौ मन्त्रौ अतस्तेन सम्बध्यमानौ निराकाङ्क्षौ भवतः ।

पूर्वशेषौ वोत्तरौ ॥ २२ ॥ वाशब्दः पक्षव्यावृत्तौ · उत्तरौ तनूनप्त्रे शक्वन इत्येतौ पूर्वस्यापतये त्वेत्यस्यैव मन्त्रस्य शेषौ भवतो न पृथङ्मन्त्रौ · कुतः एकवाक्यत्वात् एक एवायं वायुदेवत्यो मन्त्रः अतो मध्ये यद्गृह्णामीति पदं पठितम् तत्सर्वैर्वायोर्गुणवचनैः सम्बध्यते[१] · तच्च ध्रौवग्रहणे विनियुक्तम् द्विः स्थाल्या ग्रहणं तु तूष्णीमेव मन्त्रानाम्नानात् ।

प्रतिपुरुषं च ग्रहणमाज्यानि गृह्णाना इति श्रुतेः (३. ४. २. १) ॥ २३ ॥ प्रश्नं चैतद्ध्रौवाद्याज्यग्रहणात्रयं भवति · सर्वैर्ब्रह्मादिभिः पुरुषैः वरणक्रमेण कर्तव्यमित्यर्थः · सर्वैः कुतः श्रुतेः आज्यानीति गृह्णाना इति चाज्येषु च ग्रहणकर्तृषु च बहुत्वश्रवणात् । तानूनप्त्रं गृह्णाति कांस्ये चमसे वेति मानवसूत्रे ।

तानूनप्त्रमेतत् ॥ २४ ॥ एतदाज्यं तानूनप्त्रसंज्ञं भवति ।

दक्षिणास्यां वेदिश्रोणौ निधायावमृशन्त्यृत्विजो यजमानश्चानाधृष्टमिति (५. ५) ॥ २५ ॥ तत्तानूनप्त्रमाज्यं दक्षिणाधाय ऋत्विजश्च युगपत्सहैवावमृशन्ति · मानवे ऋत्विजो यजमानश्च युगपत्समवमृश्यानाधृष्टमसीति जपन्तीति ।

अद्रोहस्तेभ्यो न सतानूनप्त्रिणे द्रोग्धव्यमिति श्रुतेः (३. ४. २. १) ॥ २६ ॥ यैः सह तानूनप्त्रमाज्यं स्पृष्टम् ते सतानूनप्त्रिणः तेभ्योऽद्रोहः अनपकारः कर्तव्यः ॥
॥ प्रथमा कण्डिका ॥ १ ॥

पल्यङ्ग्य निदधात्यपिधायामृन्मयेन ॥ १ ॥ अभिमर्शनानन्तरमध्वर्युः तत्तानूनप्त्रमाज्यं पल्यङ्ग्य कम्पयित्वामृन्मयेन पात्रेणापिधाय निदधाति सुगुप्ते देशे स्थापयति । अस्य तानूनप्त्रस्य विनियोगमाह ·

अपराह्णे व्रतमिश्रं दीक्षिताय प्रयच्छति ॥ २ ॥ एतत्तानूनप्त्रं व्रतमिश्रं कृत्वा तस्योपरि व्रतदुग्धं निनीयापराह्णे दीक्षिताय समर्पयति व्रतभक्षणकाल एव नेदानीम् इत्येतदर्थमपराह्ण इत्युक्तम् · तानूनप्त्रस्य व्रतमिश्रस्य यजमानप्रदानार्थवाद-

१) instead of अतो॰ध्यते A reads एकमेवेदं वाक्यं.

ग्रावधिश्रितस्याङ्गस्यान्ब्राह्मणयोः क्षत्रियवैश्ययोर्भक्षणाप्रतिषेधात् तयोः सोमे ता॰ प्राभाव इति सम्प्रदायकारः ।

बहुषु गृहपतये ॥३॥　सत्रेषु ब॰षु दीक्षितेषु सत्सु गृ॰य॰एव व्रतमिश्रं तानूनप्त्रं प्रयच्छति नान्येभ्यः तस्माद्गृहपतिं प्रेक्षेयुरिति (३.४.२.१५) श्रुतत्वात् ।

अग्ने व्रतपा इत्याहवनीये (५.६) समिधमाधाय मदन्तीरुपस्पृश्य गा॰तरं मुष्टि-मेखलं कुरुते ॥४॥　दीक्षितः · अवान्तरदीक्षेयम् अतो यजमान एव करोति ।

पत्नी च गार्हपत्ये तूष्णीम् ॥५॥　पत्नी च तूष्णीं गा॰त्ये समिधमाधाय स्वमदन्तीरुपस्पृश्य मु॰लं गा॰तरं कुरुते · अनेकयजमानके सर्वेषां पत्नीयजमाना-नामवान्तरदीक्षा भवति　क्रमेण · नानागार्हपत्यपक्षे स्वस्वगार्हपत्ये पत्न्यः समि-दाधानं कुर्वन्ति　एकगार्हपत्यपक्षे तु तस्मिन्नेव ।

मदन्तीरुपस्पृश्य यजमानषष्ठाः सोममाप्याययन्त्यंशुरंशुरिति (५.७) ॥६॥ यजमानसम्बन्धिनीर्मदन्तीः य॰ष्ठा ब्रह्मोद्गातृहोत्रध्वर्य्वाग्नीध्राः पञ्च॰र्विजः सो॰न्ति शाखान्तरात् षष्ठो यजमानो भवति · विस्रं॰स्य राजान॰ सहिरण्यैः पाणिभिराप्याय-यन्तीत्यापस्तम्बः　अतो मद॰स्पृश्य अनामिकायां हिरण्यबन्धनं कर्तव्यम् ततो विस्रंस्य सोममाप्यायनमिति · एवमेवान्येषु सूत्रेषु पठितमस्ति · अनेकयजमा-नके त्वेक एवाप्यायते परार्थत्वात् · आप्यायनं चात्रालम्भनमात्रम् न सोमप्र-क्षेपः नियतपरिमाणत्वात् । अग्निष्टुदादिषु चास्य मन्त्रस्य विपरिणामः　अग्नय ॰एकधन॰　आ तुभ्यमग्निः ॰त्वमग्नये प्यायस्वेति · इन्द्रस्तुति यथाश्रुत एव · सूर्य-स्तुति　सूर्यायैकधन॰　आ तुभ्य॰ सूर्यः ॰सूर्याय प्यायस्वेति · वैश्वदेवस्तुति　विश्वे-भ्यो देवेभ्य एकधनविद्भ्यः　आ तुभ्यं विश्वे देवाः प्यायन्तामा त्वं विश्वेभ्यो देवेभ्यः प्यायस्वेति · सुत्यानेकत्वे　सुत्ये॰अशीय सुत्या अशीयेत्येवमूहः इति शाङ्खायन-भाष्ये (५.८.३) · न्यग्रोधश्चेत् तस्याप्यायनमात्रं तूष्णीम् तस्यानिन्द्रार्थत्वेन मन्त्र-स्याप्राप्तेः · अथवा फलचमसस्य यजमानचमससाध्ययागसाधनत्वात् सो॰पीन्द्रार्थो भवति सोमवत् अंशुरंशुर्वां देवौ सोमन्यग्रोधावाप्यायताम् आ युवाभ्यामिन्द्रः प्यायतामा युवामिन्द्राय प्यायेथाम् आप्यायतमस्मान् स्वस्ति वां देवौ सोमन्यग्रोधौ सुत्यामित्यूहो भवत्यस्मिन्पक्षे　युक्तो॰यं पक्षः ।

आज्यमालभ्योपस्पृशेदपः सोममालिप्समानः[१] ॥ ७ ॥ आज्यस्यालम्भानन्तरं सोऽनः सोमस्यालम्भं चिकीर्षुः उदकं स्पृशेत् शाखान्तरात् ।

तथा विपर्यस्य ॥ ८ ॥ विऽस्य विपर्यासं कृत्वा तथेत्यप उपस्पृशेदित्यर्थः · विपर्यासश्चैवम् सोममालभ्याज्यमालिप्समानोऽप उपस्पृशेदित्यर्थः शाखान्तरात् · मानवे यत्राज्येभ्योऽधि राजानमुपचरेयुः प्रक्षालयेरन्पाणीन् राज्ञो वाध्याज्यानीति ।

प्रत्येत्य प्रस्तरे निह्नुवतऽउत्तानहस्ता दक्षिणोत्ताना वेष्टा राय इति (५.७) ॥ ९ ॥ आहवनीयं दक्षिणेन स्थापयन्तीति (७.९.३३) आहवनीयाद्दक्षिणस्यां दिशि सोमोऽस्ति · आहवनीयं पूर्वेण परीत्य सोमसमीपे गत्वा सोमाप्यायनं कृतम् · ततः प्रत्येत्य प्रतिशब्दप्रयोगात्तेनैव मार्गेण प्रत्यागत्य सर्वे ब्रह्मादयः षडपि उत्ताऽत्ताना वा प्रस्तऽवते प्रस्तरस्योपरि पाणी कुर्वते उभावपि पाणी उत्तानौ दक्षिणो वा उत्तानः सव्यो नीच एव · तत्रस्थस्यापि प्रस्तरे निह्नवः कर्तुं शक्यते तन्मा भूदिति प्रत्येत्येत्युक्तम् ।

व्यूहनपरिध्यञ्जने कृत्वैके ॥ १० ॥ एके शाखिनो व्यूऽत्वा तानूनप्त्रग्रहणाद्येवमन्तं कुर्वन्ति अन्ये तु निह्नवानन्तरं व्यूऽने कुर्वन्ति · ताऽप्त्रादिरवसरविधानार्थो व्यूऽञ्जनयोरनुवादः । आतिथ्याया इडान्तत्वेऽपि व्यूऽञ्जनादीनि संस्कारकर्माणि प्रवर्तन्तऽएव संस्कारत्वादिति प्रतिपत्तिकर्माण्यपि प्रणीताविमोकराक्षसभागादीनि प्रवर्तन्तऽएव ।

समुच्छ्रुप्य प्रस्तरमक्त्वा परिधींश्चादायाहाग्नीन्मदन्त्यापा३ इति ॥ ११ ॥ प्रस्तरं सऽप्य समुद्धृत्य संज्ञानाथामित्यनेन प्रकृतिवदादाय जुह्वादिषु प्रकृतिवदेवाक्त्वा परिधींश्च चकाराद्विधृती चादाय तूष्णीमित्र सर्वान्परिधीन्विधृती च हस्तेन गृहीत्वा अग्नीधं प्रत्याह हे अग्नीत् आपो मदन्ति तापेन ग्लायन्ति तप्ता आसन् उत नेति प्रश्नान्ते प्लुतः · शृता न शृता इति प्रश्नार्थ इति धूर्तस्वामिनः । अत्रायं क्रमः निह्नवानन्तरं भागपरिहारः अग्निसंमार्गप्रैषः संमार्गः व्यूहनम् विष्णोरुज्जितिमिति जूह्रूमभ्युद्य परिध्यञ्जनम् न[२] सूक्तवाकप्रैषः कर्कमते तु सोऽपि भवति[३] ततः प्रस्तरादानादि ।

१) ? Thus AB. ॰त्स्य॰ १. M. २) deest A. ३) कर्कऽति deest A.

मदन्तीत्यग्नीत् ॥ १२ ॥ प्रत्याह · ततो मरुतां पृषतीरित्याहवनीयं प्रति हरणम् ।

ताभिरेहीति ब्रुवन्नध्वध्याहवनीयं हृत्वाभ्युद्यार्ग्नीधे प्रयच्छति निधानाय ॥ १३ ॥ ताभिर्मदन्तीभिः सह त्वमिह मत्समीपेऽगच्छेत्येवमग्नीधं प्रति ब्रुवन्कथयन्नध्वर्युः प्रस्तरादिकमध्यध्यात्वा आहवनीयस्योपरिष्टात्समीपे नैवाग्निमतिनीयाग्नीधानीताभिरुष्णाभिर्मदन्तीभिरद्भिरभ्युद्याग्नीधे प्रस्तरादित्रिकं समर्पयति किमर्थम् निधानाय सुगुप्ते देशे स्थापनार्थम् ततोऽग्नीदेवं प्रेषितः तत्प्रस्तरादित्रिकं सुस्थाने स्थापयति यत्नेन अग्नीषोमीयपर्यन्तं तस्य सप्रयोजनत्वात् · शाखान्तरे यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्येति ·

सुब्रह्मण्यां च प्रेष्यति सुब्रह्मण्ये सुब्रह्मण्यामाह्वयेति ॥ १४ ॥ ततः सुब्रह्मण्येऽह्वयेति एवं सुण्यां प्रेष्यत्यध्वर्युः चकारादातिथ्याशेषसमाप्तिं च करोति तस्यानुक्तसमुच्चयार्थत्वात् · ततश्च चतुष्या इत्यात्मालम्भोदकालम्भौ संस्रवहोमः धुरि निधानम् वेद्यालम्भाभावः कर्कमते दक्षिणाग्नौ केवला पिष्टलेपाहुतिः तदर्थं चाहवनीयं परिस्तीर्य दक्षिणाग्नेः परिस्तरणमित्यादौ कार्यम् वेदविमोकः पत्नी योक्त्रस्य च बर्हिर्होमाभावः[1] प्रणीताविमोकः राक्षसभागः भागावेक्षणम् भागप्राशनमिति · ततः सुब्रह्मण्यप्रैषः आगतत्वात् प्राकृतं च विकृताविति (१. ५. ४) न्यायाच्च । एतच्च सुब्रह्मण्याह्वानं शालायाः पुरस्तादन्तर्वेदिदेशे पत्नीयजमानयोरन्वारब्धयोर्भवतीति छन्दोगसूत्रे (लाट्यायन° १. ३. १) ।

प्रवर्ग्योपसदावतः ॥ १५ ॥ अतः सुण्याह्वानादूर्ध्वं प्र°दौ भवतः पूर्वं प्रवर्ग्यः तत उपसदिति · प्रवर्ग्यमुपरिष्टाद्वक्ष्यति (२६. २. १) उपसदिति वक्ष्यमाणाया इष्टेः संज्ञा ।

उपसदेव वाप्रवर्ग्ये ॥ १६ ॥ न प्रथमयज्ञ इति (२६. ७. ५३) वक्ष्यमाणत्वात् प्रथमयज्ञोऽप्रवर्ग्यः प्रथमयज्ञशब्देन प्रथमाहार उच्यते · तेनायमर्थः अप्रवर्ग्ये प्रथमाहारे उपसदेव वा भवति वा तत्रापि प्रवर्ग्यः ग्रीवा°द्भिः प्रचरन्तीति श्रुतत्वात् (३. ४. ४. १) । आपस्तम्बः प्रवर्ग्येण प्रचर्योपसदा चरत्येतद्वा विपरीतम् न प्रथमयज्ञे प्रवृञ्ज्यात्प्रवृञ्ज्याद्वा[2] प्रवृञ्ज्याद्द्ब्राह्मणस्य ब्रह्मवर्चसकामस्येत्येके

[1] deest A. [2] °ज्ञे प्रवृंज्याद्वा B.

योऽनूचानः श्रोत्रियस्तस्य प्रवृञ्ज्यादिति बह्वृचब्राह्मणमिति · प्रथमयज्ञेऽतिरात्रे प्रतिषेधः अग्निष्टोमे नित्यः अग्निष्टोमे प्रवृणक्तीति श्रुतेः · दुर्ब्राह्मणो यस्य वेदश्च वेदी च उत्सन्ना च त्रिपौरुषी स वै दुर्ब्राह्मण इति अनूचानोऽधीतशास्त्र इति धूर्तस्वामिनः ।

प्रणीताद्युपसत् ॥ १७ ॥ प्र॰दि प्रणीताप्रणयनादि उपसदिष्टिर्भवति · अग्न्यन्वाधानब्रह्मवरणव्रतग्रहणानामभावस्योक्तत्वात् (८. ६) प्रणीताद्येव घटते · तच्च प्रणीताप्रणयनं यजमानमहत्तीभ्योऽपो गृहीत्वा कर्तव्यम् उदकार्थस्तत इत्युक्तत्वात् (८.११) । इदानीमिदं विचार्यते किं पेषणाभावे चोदकप्राप्तं दृषदुपलयोराहननं भवति उत न भवतीति · किं तावत्प्राप्तम् · तत्र सूत्रेणैव पूर्वपक्षं करोति ·

हविष्कृतमाह्वयानाहननमपेषणे तीक्ष्णार्थत्वात् ॥ १८ ॥ अपे॰णे पेषणरहिते कर्मणि ह॰ह्वय अनाहननं भवति हविष्कृदाह्वानकाले यद्दृषदुपलयोराहननम् तन्न भवतीत्यर्थः यथोपसत्सु पयस्यायां च चर्विष्टिषु च · कुतः आहननस्य ती॰त्वात् तीक्ष्णीकरणार्थत्वात् प्रकृतौ हि दृ॰लयोस्ती॰णार्थं तत् तीक्ष्णीकृताभ्यां हि सुखेन पेषणं कर्तुं शक्यते अतोऽपेषणेऽर्थलोपान्निवर्तत इति प्राप्ते सिद्धान्तमाह ·

स्याद्वा धर्ममात्रत्वात् ॥ १९ ॥ वा पक्षव्यावृत्तौ शब्दः · अपेषणेऽप्याहननं स्यादेव · यत इदमाहननं धर्ममात्रमदृष्टार्थम् न तीक्ष्णीकरणार्थम् · तत्कुतः यतो नियतप्रहारं काष्ठकरणकं च · न हि शम्यया त्रिसंख्याकेनाहननेन पाषाणस्य तीक्ष्णतोपजायते · अतो धर्ममात्रमदृष्टार्थमेवाराडुपकारकं प्रकृतावाहननम् ।

श्रुतेश्च ॥ २० ॥ श्रुतेरप्याहननस्यादृष्टार्थतैव गम्यते न तीक्ष्णीकरणार्थता · तथा हि स यत्रैष॰ समाहन्तीति (१. १. ४. १३) तथा सैषासुरघ्नी सपत्नघ्नी[1] वागुद्वदति॰सपत्ना भवन्तीति (॰१७) अत्र पुराकल्पनरूपया श्रुत्या दृषदुपलयोराहननमसुरसपत्नहननार्थम् न दृषदुपलयोस्तीक्ष्णीकरणार्थमिति प्रतीयते ।

परिस्तरणपात्रसादनप्रोक्षणाज्यनिर्वपणाधिश्रयणानि[2] कृत्वा स्फ्यादि करोति ॥ २१ ॥ अत्र ये न्यायप्राप्ताः प्राकृताः पदार्थास्तेऽनूद्यन्ते अनुष्ठानसौ-

---

1) This word is to be added in the Edition. 2) Thus M. १. B sec. m. निर्वपणानि B pr. m. A.

कर्याय न तु प्राप्ताः परिसंख्यायन्ते · तेनानुक्तमप्याज्यनिर्वापानन्तरं वेदकरणम् आज्याधिश्रयणानन्तरं च पर्यग्निकरणं भवत्येव । परिस्तरणं केवलस्याहवनीयस्यैव · ततोऽर्थवत्पात्राण्यासाद्य प्रोक्षणीः संस्कृत्य तेषां प्रोक्षणम् · ततः कुक्कुटाहननमत्र भवतीति केचित् सूत्रकारेणात्रैव समर्थितत्वात् · अपरे त्वाहुः तस्मादन्यतरमेऽथवा स्रुवेणेति (३.४.४.१) स्रुवाघारस्य प्राप्तस्यैव पुनर्विधानमितरस्यैवंजातीयस्यारादुपकारकस्यादृष्टार्थस्य परिसंख्यानार्थम् उपसदोऽपूर्वत्वज्ञापनार्थं च तेनात्र कुक्कुटाहननस्फ्योदकप्रहरणोत्तराघारप्रयाजाज्यभागानुयाजपत्नीसंयाजदक्षिणाग्निहोमपूर्णपात्रविष्णुक्रमणादिकमदृष्टार्थमारादुपकारकमत्र न भवत्येवेति अतोऽपूर्वत्वाच्चात्पुनरुच्यते तावदेव भवति नाधिकं प्रकृतितः प्राप्तं किंचिदिति · ततः आज्यनिर्वपणं वेदबन्धनमाज्याधिश्रयणमध्वर्योरेव पर्यग्निकरणं च एतानि कृत्वा ततः स्फ्यादानादि कर्म करोति · स्फ्यादानं त्वत्राप्राप्तमेव विधीयते वेदे[:] स्तृतत्वेन स्तम्बयजुर्हरणस्य प्राप्त्यभावात् · यद्यप्युपसदोऽपूर्वत्वात्परिस्तरणादयोऽपि न प्राप्नुवन्ति तथाप्यत्र पूर्वाघारस्य विहितत्वात् अग्निपात्रविनियोगाद्यादीनां चाङ्गप्रधानार्थत्वात् पूर्वाघारप्रयुक्ताः परिस्तरणादयोऽत्र भवन्तीति ।

बर्हिषः प्रच्छेदं हरति ॥ २२ ॥ स्तम्बयजुर्हरणेऽध्वर्युः बन्दम् पुरीषस्थाने बर्हिः प्रच्छिद्य-प्रच्छिद्य हरति न तु पुरीषम् · अत एव बर्हिषः प्रच्छेदनोपदेशाद्रातिथ्यायां यद्बर्हिः स्तीर्णम् तत्स्तृतमेव तिष्ठति नोद्धृत्य पुनः स्तीर्यत इति गम्यते · अतश्च वेदे[:] स्तृतत्वाल्लेखाकरणानुमार्जनखननवर्जितानां वेदिसंस्काराणामप्राप्तानामेव वचनात्पुनः करणम् ।

मदन्तीरिति वा प्रेष्यति ॥ २३ ॥ मदन्तीरासादयेध्मं बर्हिरुपसादयेत्येवं वा प्रेष्यति प्रोक्षणीरासादयेति वा (२.६.३४) अत्र मदन्तीनामेव प्रोक्षणीत्वं यतः उदकार्थस्तत इत्युक्तत्वात् (१.११) · अपरे तु स्वपदविभाषामाहुः प्रोक्षणीरित्येतद्भवत्येव मदन्तीरित्येतद्भवति वा न वेति प्रोक्षणीर्मदन्तीरासादयेत्येवमिति ।

मात्रावदिध्माबर्हिः ॥ २४ ॥ इध्माबर्हिषोर्या मात्रा ब्राह्मणे श्रुता तत्परिमाणं भवति[1] · अत एकादशकाष्ठक इध्मो भवति सामिधेनीनां नवसंख्यत्वात्

1) See schol. १.३.१८.

तासां प्रणवे एकैकस्य प्रक्षेपात् स्पृश्यानुस्पृश्ये च द्वे एवमेकादशेति · बर्हि-श्चैकवृत्स्तरणपर्याप्तमिति (२८)। अष्टादशसंख्यकाष्ठके इध्मे प्राप्ते माऽभूदित्युक्तम्।

स्रुवतृतीयाः स्रुचः संमार्ष्टि ॥२५॥ एका जुहूः द्वितीया उपभृत् तृतीयः स्रुवः एवं स्रुचः संमार्ष्टि · प्रैषश्च स्रुचौ संमृड्ढीत्येव देयः (२.६.३४) · मानवे प्रोक्षणी-रासादयेध्ममुपसादय स्रुचौ संमृड्ढ्याज्येनोदेहीति सप्तशास्तीति।

अष्टगृहीतं जुह्वां चतुरुपभृति ॥२६॥ आज्यं गृह्णाति प्राकृत एव काले संमार्गवेदिस्तरणयोरन्तराले सूत्रितत्वात् · तूष्णीमेवैतद्ग्रहणम् अपूर्वत्वात् · प्रधा-नयागार्थमिदमाज्यग्रहणम् न प्रयाजार्थम्। पक्षान्तरमाह ·

यथाप्रकृति वा ॥२७॥ प्रकृतिवदेव वा आज्यं गृह्णीयात् चतुर्गृहीतं जुह्वा-मुपभृत्यष्टगृहीतमिति (२.७.१२-१३) · अस्मिन्नपि पक्षे ग्रहणं तूष्णीमेव संख्या-मात्रस्य प्राकृतस्यैव श्रुतत्वात् (३.४.४.७)।

एकवृत्स्तरणम् ॥२८॥ न त्रिवृत् · स्तीर्णाया अपि वेदेर्वाचनिकमेकं॰णाम्।

आज्यस्थाली ध्रुवार्थे ॥२९॥ ध्रुवाकार्ये भवति प्रस्तराञ्जनकाले मूलं ध्रुवा-यामित्येतत् (३.६.७) · प्रस्तरमूलाञ्जनं ध्रुवाकार्यमाज्यस्थाल्यां कर्तव्यमित्येवम-र्थमिदं सूत्रम्।

स्रुवाघारमाघार्य संमृष्टेऽग्नावाश्राव्य सीद होतरित्येव ब्रूयात् ॥३०॥ स्रुवे-णाघारः स्रुवाघारः पूर्वाघारः · तमाघार्य संमृष्टेऽग्नौ अग्निसंमार्गे कृते आश्राव्य सीद होतरि-त्येतावदेव ब्रूयात् अग्निर्देवो दैव्य इत्येतस्य स्थाने (३.२.७) · एवकारेणान्यत्पर्यु-दस्यते। अस्य चाघारस्य प्रकृतितः प्राप्नुवत एव पुनर्वचनात् एतेनैव केवलेन प्राकृताङ्गोपकारः क्रियत इतीतराण्यङ्गान्यत्र निवर्तन्ते · अतोऽपूर्वा उपसत् तेन यावदुक्तमेवात्र भवति नाधिकं प्रकृतितः प्राप्तं किंचिदिति सिद्धम्।

प्रसूतोऽतिक्रामन्नग्नयेऽनुवाचयति ॥३१॥ होत्रा अग्निर्होता वेवेति प्रसूतः अनुज्ञातो (३.२.१५) ऽध्वर्युः स्रुचावादाय यज्ञतिदिशं प्रत्यतिक्रामन्नतिक्रमणं कुर्वन् अग्नयेऽनुब्रूहीत्यनुवयति प्रसूतोऽनुब्रूहीति श्रुतत्वात् (३.६.४.२०-२१)।

अर्धं हुत्वा सोमाय ॥३२॥ जुह्वामष्टगृहीतग्रहणपक्षे तस्यार्धमाज्यमग्नये हुत्वा अपरमर्धं सोमाय जुहुयात्।

विष्णवे समानीय ॥ ३३ ॥ औपभृतमाज्यं जुह्वां समानीय विष्णवे प्रदानं कर्तव्यम् · अनुवाचनं च समानयनं कुर्वता कर्तव्यम् । यदोपभृत्यष्टगृहीतम् तदेदं सूत्रं तदर्थमेव व्याख्येयम् तस्यौपभृतस्यार्धं समानीय सोमाय हुत्वा पुनः समानीय विष्णवे जुहुयादिति । एतेषां त्रयाणां प्रधानानां होमोऽग्नौ प्रत्यक्संस्थः (३. ५. ११) कर्तव्यः पूर्वार्धे अग्नेः मध्ये सोमस्य अपरार्धे विष्णोरिति · मानवे घृतवतीमध्वर्यो स्रुचमास्यस्वेत्युच्यमाने[1] स्रुचावादाय दक्षिणातिक्रम्य यथादेवतमनुवाचयत्यग्निं पूर्वार्धे यजति मध्ये सोममौपभृतं जुह्वाऽ सर्वमानीय विष्णुं पश्चार्धऽ इति · सकृदतिक्रान्तेनैव त्रयोऽपि यागाः कर्तव्याः ।

सादयित्वा स्रुचौ सोमाप्यायनाद्या सुब्रह्मण्यप्रैषात् ॥ ३४ ॥ ततः प्रत्येत्य स्वस्थाने स्रुचौ सा॰वा सो॰नादारभ्य सु॰प्रैषान्तमातिथ्यावत्करोति । अतिदिष्टमध्य एव विशेषमाह ·

अक्त्वा प्रस्तरमुपसदं जुहोति स्रुवेण या तऽ इत्ययःशयामन्वारब्धे (५. ८) ॥ ३५ ॥ जुह्वादिषु प्रस्तरमक्त्वा परिध्यादानात्पूर्वं स्रुवेण उप॰होति उपसत्संज्ञकं होमं करोति जुहोत्यस्यापवादः स्रुवेणेति · यजमानेऽन्वारब्धे अनेकयजमानके एकस्यैवान्वारम्भः · उपसदिति सामान्यसंज्ञा अयःशयेति मन्त्रलिङ्गाद्विशेषसंज्ञा · पूर्णाहुतिप्रकृतिविनान्वारम्भः प्राप्त एव परिसंख्यार्थं पुनरुक्तः उपसत्स्वेवान्वारम्भो नान्येषु होमेष्विति · ततः परिधिविधृत्योरादानादि सुब्रह्मण्यप्रैषान्तम् ॥

अत्र सौकर्याय उपसदः प्रयोग उच्यते · चतुरासनम् ब्रह्मोपवेशनं समन्त्रकं प्रणीताप्रणयनम् आहवनीयस्यैव परिस्तरणम् पात्रासादनम्[2] पवित्रच्छेदनादि तासां[3] प्रोक्षणान्तम्[4] पात्रप्रोक्षणम् असंचरे निधानम् कुक्कुटाहननम् न कर्कस्य आज्यनिर्वापो वेदबन्धः अग्नीध एव[5] आज्याधिश्रयणम् अध्वर्योः पर्यग्निकरणम् उदकालम्भः सतृणास्फ्यादानम् आलभ्य जपः स्तृतायामेव वेदौ तृणनिधानम् बर्हिषः प्रच्छेदं हरणम् पूर्वपरिग्रहः न रेखाकरणं खनने उत्तरपरिग्रहः नानुमार्जनम् प्रोक्षणीर्मदन्तीरासादयेध्मं बर्हिरुपसादय स्रुचौ संमृड्ढि

1) °ध्वर्योः इत्यु° A. °र्योः स्रुचमास्य इत्यु° B. See ३. २. १६. 2) ब्रह्मो°दनम् deest A.
3) Thus AB. = प्रणीतानां? 4) Thus A. प्रोक्षणं B. 5) अग्नीध एव deest A.

पत्नीं संनह्याज्येनोदेहीति प्रैषः मद्वतीशब्दस्याप्रयोगो वा न स्फ्योदकप्रहारः न पाण्योरवनेजनम् स्फ्येध्मबर्हिषां सादनम् स्रुवजुहूपभृतां संमार्गः संमार्जनापासनम् पत्नीसंनहनम् आज्योद्वासनम् पत्न्यवेक्षणम् वेद्यामासादनम् उत्पवनम् प्रोक्षण्युत्पवनम् आज्यावेक्षणम् तूष्णीं जुह्वामष्टगृहीतग्रहणम् उपभृति चतुर्गृहीतम् विपरीतं वा इध्मप्रोक्षणम् वेदिप्रोक्षणम् बर्हिषः प्रोक्षणाद्येकवृत्स्तरणान्तम् स्रुग्भ्यां वेति विशेषः समित्प्रस्तरादानम् कल्पनम् नोल्मुके परिधिपरिधानम् स्पृश्यानुस्पृश्ययोराधानाद्युपभृदासादनान्ते आज्यस्थाल्या आसादनम् सर्वेषामालम्भः उदकालम्भः होतुरामन्त्रणम् सामिधेनीप्रैषः इदमहं नवमेन वज्रेणेत्यवबाधनम् प्रतिप्रणवमाधानम् आहवनीयोपवाजनम् पूर्वाघारः संप्रैषाग्निसंमार्गः आश्राव्य सीद होतरित्येव प्रैषः होतुरुपवेशनादि स्रुगादापनान्तम् प्रसूतः स्रुचावादायातिक्रमणं कुर्वन्नग्नयेऽनुब्रूहीत्याह अग्निसोमविष्णुयागा यथोक्तम् प्रत्येत्य स्रुचोः सादनम् पाणिप्रक्षालनम् यजमानषष्ठानां मदन्त्युपस्पर्शनम् हिरण्यबन्धनम् सोमाप्यायनम् निह्नवः पवित्रप्रतिपत्तिः संप्रैषोऽग्निसंमार्गः व्यूहनम् अभ्युदय परिध्यञ्जनम् न सूक्तवाकप्रैषः कर्कमते तु सोऽपि भवति[१] प्रस्तरादानम् आज्यस्थाल्यां मूलाञ्जनम् उपसद्धोमः परिधिविधृत्योरादानम् अग्नीन्मदन्त्यापा३ इति प्रैषः मदन्तीति प्रत्युक्तिः मरुतामिति नीचैर्हरणम् ताभिरेहीति ब्रुवतोऽग्नेरध्यधि हरणम् अभ्युदयाग्नीधे समर्पणम् आत्मालम्भोदकालम्भौ संस्रवाहुतिः देशे निधानम् वेदयोक्त्रविमोकः एकवद्बर्हिर्होमः प्रणीताविमोकः सुब्रह्मण्याप्रैषस्तदाह्वानमिति ।

द्विरेकया चरति ॥ ३६ ॥ एकया अयःशयादिकयोपसदा द्विश्चरति एकैकां द्विरभ्यस्येदित्यर्थः । तत्कदेत्याकाङ्क्षायामाह ·

सुसायं सुपूर्वाह्णे च ॥ ३७ ॥ सुपूर्वाह्णे प्रथमः प्रयोगः स्वपराह्णे द्वितीयः · सायंशब्देनात्रापराह्णो लक्ष्यते · सु: पूजायाम् प्रशस्तः पूर्वाह्णः सुपूर्वाह्णः तस्य च प्रशस्तत्वं प्रथमावयवः उदयानन्तरमेवेत्यर्थः एवमपराह्णेऽपि वाच्यम् ।

एवमितरेऽअन्वहं रजःशयां हरिशयां च ॥ ३८ ॥ इतरे उपसदौ द्विती-

१) न सू॰वति deest A.

यत्तृतीये एवमेवान्वहं कर्तव्ये · या ते अग्ने रजःशयेत्यनेन मन्त्रेण द्वितीयदिने उपसद्धोमः कर्तव्यः तदुपलक्षितोपसद्रजःशयेत्युच्यते · या° हरिशयेति तृतीयदिने उपसद्धोमः तदुपलक्षितोपसद्धरिशयासंज्ञा भवति । तत्रापि द्विरेकया चरतीत्येत-दस्त्येव अतश्च प्रथमदिने द्वयोरुपसदोरयःशयाकृतिः द्वितीयदिने द्वयोरुपसदो रजःशया तृतीयदिने हरिशयेति ।

एकाहस्त्र्युपसत्कः ॥३९॥ एकाहः एकसुत्यः क्रतुः त्र्य°त्को भवति · एक-सुत्ये यज्ञे तिस्र एवोपसदो भवन्तीत्यर्थः ।

द्वादश वा ॥४०॥ अथवा अत्र द्वादशोपसदो भवन्ति ॥ ॥ द्वितीया कण्डिका ॥२॥

त्रिस्तनं प्रथमायां दोहयति ॥१॥ प्र°थामुपसदि त्रिस्तनं व्रतं[1] दो°ति · उपसत्स्वेव विशेषवचनाद्दीक्षासु न नियमः ।

एकापचयेनोत्तरयोः ॥२॥ उत्तरयोर्द्वयोरुपसदोः एका°येनैकैकस्तनाप-सारणेन व्रतं दोहयति द्वितीयायां द्विस्तनम् तृतीयायामेकस्तनमित्यर्थः ।

विपर्यस्य वानग्निचित्ये ॥३॥ अग्निचयनरहिते क्रतौ वि°स्य वा व्रतं दोह-यति प्रथमायामेकस्तनम् द्वितीयायां द्विस्तनम् तृतीयायां त्रिस्तनमित्येवं भवति ।

एवं प्रवृद्धौ समं विभजेत् ॥४॥ उपसत्प्रवृद्धौ एवमेव स°जेत् समं विभज्य दोहयेत् · षट्सूपसत्सु द्वयोस्त्रिस्तनम् द्वयोर्द्विस्तनम् द्वयोरेकस्तनमिति द्वादशसु चतुरहं त्रिस्तनम् चतुरहं द्विस्तनम् चतुरहमेकस्तनमिति · एवं चतुर्मा-सोपसत्सु चत्वारिंशदहानि त्रिस्तनादि · संवत्सरोपसत्सु[2] च मासचतुष्टयं त्रिस्तनादि । इदानीमिदं विचार्यते · किं दण्डकलितवदावृत्त्या उपसदां वृद्धिः उत स्वस्थानवृद्ध्येति · उभयथा समविभागेन वृद्धिसिद्धेरनियमे प्राप्ते नियममाह ·

स्वस्थानविवृद्धिः ॥५॥ द्वादशाहादौ उपसत्प्रवृद्धौ स्व°द्धिः कर्तव्या न दण्डकलितवदावृत्तिः · कुतः मन्त्रक्रमानुग्रहात् स्वस्थानविवृद्धौ च सोऽनु-गृहीतो भवति दण्डकलितवदावृत्तौ च क्रमेण-क्रमेण त्रिषु दिनेषु तिस्र उपसदः कृत्वा यदि चतुर्थेऽहनि पुनः प्रथमा क्रियते तदा मन्त्रक्रमो बाधितो भवति हरिशयां कृत्वा पुनरयःशयाकरणात् · तस्मात्स्व°द्धिरेवाङ्गीकार्या तेनाद्यासु

१) व्रतं deest B. २) Thus B. संवत्सरे A.

चतसृषु अयःशया पञ्चम्याद्यासु चतसृषु रजःशया नवम्याद्यासु हरिशयेति। प्रथमे दिने अयःशया द्वितीये रजःशया तृतीये हरिशया पुनश्चतुर्थे अयःशया पञ्चमे रजःशया षष्ठे हरिशया पुनः सप्तमे अयःशयेत्येवं-विवृद्धिर्दण्डकलितवदावृत्ति-रित्युच्यते दण्डवत्परिसमाप्य-परिसमाप्य कलनात्· यदा चैवं क्रियते यावत्य उपसदो भवन्ति तावतीः समं त्रिधा विभज्य प्रथमभागदिनेषु सर्वेष्वन्वहमयःशयैव हूयते द्वितीये भागे सर्वेषु दिनेषु रजःशयैव एवं तृतीये भागे सर्वेषु दिनेषु प्रत्यहं हरिशयेति सा स्वस्थानविवृद्धिरिति। तदेवमातिथ्यानन्तरं प्रवर्ग्यमुपसदं च कृत्वापराह्णे तानूनप्त्रमिश्रं व्रतं च कृत्वा प्रवर्ग्योपसदौ कार्यौ अनस्तमिते च[1] वाग्बन्धोऽस्तमिते च वाग्विसर्गः व्रतकरणप्रैषादि अपररात्रे व्रतकरणम् विबुद्धवाचनम् वाग्बन्धविसर्गौ। ततो द्वितीयायामुपसदि प्रवर्ग्योपसत्करणा-नन्तरं विशेषमाह·

औपवसथ्यात्पूर्वेऽहनि पौर्वाह्णिक्या प्रचर्य वेदिं मिमीते ॥६॥ अग्नी-षोमीयसम्बन्धि दिनमुपवसथशब्देनोच्यते उपवसथसम्बन्धि औपथ्यम् तस्मा-त्पूर्वे प्राचीने अहनि अत्र द्वितीयायामुपसदीत्यर्थः· तत्र पौर्वाह्णिक्या उपसदा प्रचर्य महावेदिं मिमीते· अथ वेदेः स्थानमाह·

पूर्वार्ध्यात्स्तम्भात्पुरस्तात्त्रिषु प्रक्रमेषु शङ्कुं निहन्ति सोऽन्तःपात्यः ॥७॥ शा-लायाः पूर्वार्धे भवः पूर्ध्यः तस्मात्पूर्ध्यात्स्तम्भात्पुरस्तात्पूर्वस्यां दिशि त्रिषु प्रक्रमेष्व-तिक्रान्तेषु एकं शङ्कुं निहन्ति भूमिमध्ये गमयति उपरि मुद्गरादिभिः कुट्टनेन स निहतः शङ्कुः अन्तःपात्यसंज्ञको भवतीति पितृभूतिकर्कादयः· अत्र स्तम्भग्रहणेन तत्संमितं शालायाः पूर्वद्वारस्य मध्यं लभ्यते तेन शालाद्वारमध्यात्प्रक्रमणं कार्यम्· अन्तः पतति शालाद्वार्यस्य च वेदेश्चेत्यन्तःपातः (३.५.१.१)।

तस्मात्पुरस्तात्षट्त्रिंशति ॥८॥ तस्मादन्तःपात्यात्प्राच्यां दिशि षट्त्रिं-शति प्रक्रमेषु अतीतेषु[2] शङ्कुं निहन्तीत्यनुवर्तते।

दक्षिणोत्तरौ च पञ्चदशसु-पञ्चदशसु ॥९॥ तस्मादन्तःपात्याद्दक्षिणस्यां दिश्युत्तरस्यां च पञ्चदशसु प्रक्रमेषु अोण्यर्थमेकैकं शङ्कुं निहन्ति। अत्र पद्यान्तरमाह·

१) च deest B. २) अतितेषु A. deest B.

अर्धसप्तदशेषु वा ॥१०॥ अर्धः सप्तदशो येषां ते अर्धंशाः तेषु अंशेषु सार्धेषु षोडशस्वित्यर्थः[1] · एवं सति त्रयस्त्रिंशत्प्रक्रमा पश्चाद्वेदिः स्यात् पञ्चदशास्विति पक्षे च त्रिंशत्प्रक्रमा ।

पूर्वार्ध्याच्च द्वादशसु-द्वादशसु ॥११॥ पूर्वार्धे भवः पूर्ध्यः शङ्कुः यः षट्त्रिंशत्प्रक्रमेषु निहतः चकारेण दक्षिणोत्तरावित्यनुकृष्यते पूर्वार्ध्याच्च शङ्कोर्दक्षिणोत्तरौ द्वांशसु प्रक्रमेषु वेद्यंसनिष्पत्त्यर्थं शङ्कू निहन्ति ॥ अत्रायं साधनोपायः। काठके सौमिकीं वेदिं विधित्सन्पञ्चदशसु प्रक्रमेषु[2] लक्षणं कुरुते त्रिपदः प्रक्रमोऽर्धचतुर्थपदो वा पदं पञ्चदशाङ्गुलं द्वादशाङ्गुलं वा तत एकविंशतौ ततस्त्रिषु ततस्त्रिषु[3] ततो द्वादशसु पाशः पूर्वेण प्रागवंशं त्रिषु प्रक्रमेषु शङ्कुं निहन्ति तस्मिन्पाशं प्रतिमुच्य प्राचीमायम्य यदेकविंशतौ तत्र शङ्कुं निहन्ति तस्मिन्पाशं प्रतिमुच्य पञ्चदशसु[4] गृहीत्वा दक्षिणायम्य शङ्कुं निहन्त्येतेनोत्तरोऽन्तो व्याख्यात एवं पूर्वार्धं विदधाति त्रिषु गृहीत्वा द्वादशसु तत्र शङ्कुं निहन्तीति । परिशिष्टे च (शुल्व° ७.१५-१६) पञ्चदशमथैकविंशं त्रिकमपरं परतस्त्रिकं चापि द्वादशसु पाश उत्तमः सोमे रज्जुप्रमाणमेतत् रज्ज्वां पञ्चदशसु प्रक्रमेष्वेकं लक्षणं श्रोण्यङ्कनार्थम् आकर्षणार्थं च तदेव ततः पञ्चदशसु कृतालक्षणात्परमेकविंशे प्रक्रमे द्वितीयं लक्षणं प्राच्यन्ताङ्कनार्थम् ततः परं त्रिषु प्रक्रमेषु तृतीयमाकर्षणार्थम् ततोऽपि परं त्रिषु चतुर्थमंसाङ्कनार्थम् ततः परं द्वादशसु प्रक्रमेष्वन्तिमः पाश इति एवं चतुःपञ्चाशत्प्रक्रमा रज्जुर्भवतीति · तथा चोक्तं शुल्वकृता (१) प्रमाणार्धं वाभ्यस्याभ्यासषष्ठे लक्षणं करोति तन्निरञ्छनमिति तथा (१) शास्त्रवर्द्धे दीर्घचतुरश्रस्येत्युक्त्वा एतेन प्रागवंशवेदिमानानि[5] व्याख्यातानीति चोक्तम् · अत्र रज्जोः प्रथमं पाशमन्तःपात्ये प्रमुच्य प्राचीं निष्पाद्य . पञ्चदशमथैकविंशमित्येकविंशे शङ्कुं निहत्य तस्मिन्नन्तिमं पाशं प्रतिमुच्य पञ्चदशे कृतेन लक्षणेन रज्जुं दक्षिणात आकृष्य पञ्चदशऽ एव शङ्कुं निखनेत् सा दक्षिणा श्रोणिः · तेनैवोत्तरत आकृष्य तत्रैव शङ्कुः सा उत्तरा श्रोणिः · ततः त्रिक्रमपरमित्यनेन

---

१) °डशेषि° AB. २) Thus A. विक्र° B. ३) ततस्त्रिषु but once in A. ४) °दश A. °दस B. ५) प्राग्वेदि° B.

गृहीत्वा दक्षिणतो रज्जुमाकृष्य परतस्त्रिक्रमित्यस्मिञ्छङ्कुः स दक्षिणोऽंसः · तत-
स्तेनैव गृहीत्वोत्तरत आकृष्य तत्रैव शङ्कुः स उत्तरोऽंस इति । अत्र यूपावट्या-
च्छङ्कोः पश्चात्पदमात्रं पश्चादन्तराले मुक्त्वा युगमात्री यजमानदशपदप्रमाणा[1] वोत्त-
रवेदिः साधनीया (५. ३. ३३) । प्रक्रमस्थानाग्निके सोमे द्विपदः · तथा च परिशिष्टे
(शुल्व° ७. ३३-३४) उक्तम् आधाने पदिकं कुर्यात्सौमिको[2] द्विपदो भवेत् अग्नौ
तु[3] त्रिपदं कुर्यात्प्रक्रमं याज्ञिको बुध इति । अयं च त्रिंशत्प्रक्रमा पश्चादिति
पक्षे साधनोपायः · त्रयस्त्रिंशत्पक्षे तु षट्त्रिंशत्प्रक्रमां रज्जुं द्विगुणां द्वासप्ततिप्र-
क्रमां कृत्वा तस्यां सार्धषोडशे प्रक्रमे श्रोण्यङ्कनार्थं लक्षणं कृत्वा सप्तविंशतितमे
निरञ्छनं श्रोणिसाधने रज्जोराकर्षणार्थम् षट्त्रिंशत्तमे च यूपावट्यशङ्क्वर्थम्
ततः परं नवसु प्रक्रमेष्वंससाधनकाले रज्जोराकर्षणार्थम् ततोऽन्तिमात्पाशाद्द्वादशे
प्रक्रमेऽंसाङ्कनार्थमित्येवंविधया रज्ज्वा साधनम् । अत्राहापस्तम्बः प्राग्वंशस्य
मध्यमाल्ललाटिकात्त्रीन्प्राचः प्रक्रमान्प्रक्रम्य शङ्कुं निहन्ति तस्मात्पञ्चदशसु दक्षि-
णात एवमुत्तरतस्ते श्रोणी प्रथमनिहताच्छङ्कोः षट्त्रिंशति पुरस्तात् तस्माद्द्वा-
दशसु दक्षिणात एवमुत्तरतस्तावंसौ विमिमे त्वेति विमानः सर्वतः स्पन्द्य-
या पर्यातनोति मध्ये पृष्ठ्यामिति · अत्र वेदेः सर्वतो वेष्टनमुक्तम् · तथा वेदिं
करोति दर्शपूर्णमासवत्संनमनवर्जमिति संनमनं च मध्ये-संगृहीतत्वम् · तथा
चोक्तं दर्शपूर्णमासयोः मध्ये संनततरा भवतीति · अतो महावेद्यां संग्रहाभावः ।

पृष्ठ्यामायम्य स्फ्यादि करोति खादिरेणाछादनात् ॥ १२ ॥ ततो वेदिप-
रिसमूहने उत्क[रक]रणे चाग्नीधा कृतेऽध्वर्युः पृष्ठ्य अन्तःपात्यादारभ्य यूपावट-
पर्यन्तं पृष्ठ्यासंज्ञकं वरण्डकं पूर्वापरायतं निष्पाद्य ततः स्फ्यादि स्फ्यादानादा-
रभ्य आ आछात् हन्ता वसतीत्येतदन्तं (५. ३. १६;४. १) वरुणप्रघासवदत्र खादिरेण
स्फ्येन करोति · पृष्ठे भवा पृष्ठ्या वेदिपृष्ठे लेखामायतां कृत्वेति पितृभूतिः
वरण्डकमिति कर्कः । अत्रायं क्रमः · पूर्वं शालामध्यात्त्रिषु प्रक्रमेषु शङ्कुनिख-
ननम् ततो द्विरासनम् ब्रह्मणः समन्तकमुत्तरवेदिदेशं दक्षिणतो बहिर्वेद्युपवे-
शनम् वेदिपृष्ठस्य[4] यजमानस्य च यजमान वाचं यच्छेति प्रैषः ततोऽग्निहो-

[1] पश्चाद्यज° B. [2] °त्सोमे च Par. [3] अग्नौ च Par. [4] वे°स्य deest A.

त्रुह्वण्यादीनां वेदिमानोपयोगिनां पात्राणामासादनम् शालाद्वार्यस्य पश्चादुत्तरतो वा · ततो वाग्यमः पवित्रच्छेदनादि तेषां प्रोक्षणम्[१] प्रोक्षणीनां पवित्रयोश्च यत्नेन रक्षणम् ततो वेदिमानम् परिसमूहनम् उत्करकरणम् पृष्ठ्याकरणम् ततः स्फ्यादानादि । अनियतात्प्रदेशात्स्तम्बयजुर्हरणे प्राप्तऽआह ·

उपरवदेशात्स्तम्बयजुर्हरति ॥१२॥ यत्रोपरवा भविष्यन्ति तस्माद्देशात्स्त'इति शाखान्तरात् · उपरवदेशं चाचार्यः स्वयमेव कथयिष्यति दक्षि'रवानिति (४. २५) · स्फ्यादानमप्युपरवदेशऽएव कर्तव्यम् तदर्थत्वात् देशान्तरस्यानुपदेशाच्च । अधुना चात्वालस्य स्थानमाह ·

उत्तरांऽसात्पश्चादध्यर्धे पदे चात्वालम् ॥१४॥ वेदेर्य उत्तरोऽंसः ततः पश्चात् अध्य'र्दे प्रक्रमत्रयपरिमिते प्रदेशे चा'लं भवति · अत्र प्रक्रमद्वयपरिमाणं पदम्[२]।

यथोक्तं वा ॥१५॥ अथवा यथा प्रागुक्तम् पूर्वे'ह्राप्येति (५. ३. २०) तत्र वा चात्वालं परिलिखेत् · यत्रैव स्वयं'खेदिति श्रुतेः (३. ५. १. २६) । चात्वालशब्देन पुरीषार्थः खातोऽभिधीयते · परिशिष्टे त्वेवमुक्तमस्ति चात्वालादुत्करं कुर्यादपरेण रथान्तरम् उत्करादुत्तरं कुर्यादूवध्यस्य रथान्तरम् ऊवध्यात्पूर्वतः कुर्याच्छामित्रस्य रथान्तरमिति · अत्र स्फ्यशम्यादानाद्युत्तरवेदिच्छादनान्तमिह कर्तव्यम् · छादने विशेष आपस्तम्बेनोक्तः उदुम्बरशाखाभिः प्लक्षशाखाभिर्वा प्रछन्ना वसतीति · तथा चात्वालाद्द्वादशसु प्रक्रमेषु प्रत्यगुत्कर इति च । एतावत्पूर्वाह्णऽएव कर्तव्यम् · ततोऽपराह्णे व्रतं प्रदाय प्रवर्ग्योपसदौ वाग्बन्धादि पूर्ववत् ॥ अथ सुत्यायाः प्राग्दिनकृत्यमाह

प्रातरुपसदौ समस्य ॥१६॥ प्रातरित्यौपवसथ्येऽह्नि वेदिमानदिनाद्द्वितीयेऽह्नि उप'स्य अग्निं प्रणयतीति वक्ष्यमाणेन (२०) सम्बन्धः · समासश्च पौर्वाह्णिकापराह्णिकयोर्द्वयोरप्युपसदोः पूर्वाह्णऽएव करणम् । तत्र विशेषमाह ·

पौर्वाह्णिक्या प्रचर्यार्धव्रतं प्रयच्छति ॥१७॥ पौर्वाह्णिकीमुपसदं कृत्वा यजमानायार्ध'ति न्यायस्य समानत्वात्पत्न्यै च । मानवे उत्तमायामुपसदि पौर्वाह्णिकीं कृत्वा शाखामच्छेति अर्धव्रते प्रदाय सद्यः कुर्यादापराह्णिकीमिति · व्रतस्यार्धं समवि-

---

१) प्रो° deest A. २) sic! See ६८७, ७. ८ ६८८, ४. — trin vikramán ३. ५. १. २६.

भक्तमर्धव्रतम् तेन यावद्व्रतार्थं दुग्धं भवति त्रिस्तनमेकस्तनं वा तस्य समविभक्तमर्धं दद्यान्न न्यूनमतिरिक्तं वा ।

सर्वं वाग्नौ ॥ १८ ॥ अग्नौ चयने सर्वं वा व्रतं यजमानाय प्रयच्छेदर्धव्रतं वा ।

उभाभ्यां चरिते प्रवर्ग्यमुत्सादयति यथोक्तं कुर्याच्चेत् ॥ १९ ॥ उभाभ्यामुपसद्भ्यां चरिते प्रवर्ग्यं महावीरं यथोक्तमुत्सा॰ति यथा प्रवर्ग्याध्यायऽउक्तम् उपसदन्ते प्रवर्ग्योत्सादनमित्यत्र (२६. ७. १) चेद्यदि श्रोत्रियोऽनूचानः प्रथमयज्ञेऽपि प्रवर्ग्यं कुर्यात् तदात्रावसरे प्रवर्ग्योत्सादनं कुर्यात् ।

अग्निं प्रणयति ॥ २० ॥ अप्रवर्ग्ये उपसत्समासानन्तरमग्निं॰ति सप्रवर्ग्ये च प्रवर्ग्योत्सादनानन्तरमिति यथा वरुणप्रघासे उक्तम् (५. ४. २) · अथ महावेदिमुत्तरेणेध्मनयनं कर्तव्यम् वरुणप्रघासे पशौ चापस्तम्बलौगाक्षिसूत्रयोस्तथा दर्शनात् इध्मम॰कल्पयन्तीत्यत (३. ५. २. १) आरभ्योत्तरवेदावग्निनिधानात्तस्येह श्रुतत्वात् ।

ओपनिवपनात्कृत्वा हविर्धाने स्थापयति पृष्ठ्यामुभयतो ऽरत्न्यन्तरे प्रक्षालिते प्राचीऽउभयतः शालामावर्त्य ॥ २१ ॥ इध्माभ्याधानादि ओप॰नात् उपयमन्युपनिवपनात्तमग्निप्रणयनाख्यं कर्म कृत्वा (५. ४. २-२०) प्रक्षालिते प्रकर्षेण धौते हविर्धाने अनसी शालामुभयत आवर्त्य वेदिमध्ये पृ॰न्तरे परस्परमरत्निद्वयान्तरालयुक्ते प्राची प्राग्ग्रीषे स्थापयति · प्रक्षालनमुत्करे प्रथमं कृत्वा एकं हविर्धानमध्वर्युर्गृह्णाति द्वितीयं प्रतिप्रस्थाता · हविः सोमो धास्यतेऽनयोरिति हविर्धाने अनसी · अध्वर्युः स्वकीयं रथं वेदिं दक्षिणेन नीत्वा शालाया दक्षिणतो नीत्वा प्रदक्षिणमावर्त्य दक्षिणेनैव प्रत्यानीयान्तःपात्यसमीपे वेदिमध्ये पृष्ठ्यातो दक्षिणतः प्राग्ग्रीषं स्थापयति प्रतिप्रस्थाता तु स्वकीयं हविर्धानं वेदेरुत्तरेण शालाया उत्तरेण च नीत्वा प्रदक्षिणमावर्त्य शालाया उत्तरेणैव प्रत्यानीयान्तःपात्यसमीपे वेदिमध्ये पृष्ठ्यात उत्तरतः प्राग्ग्रीषं स्थापयति ऽरत्न्यन्तरे[1] ऽइति पृष्ठ्यातो दक्षिणतोऽरत्निमात्रे दक्षिणम् उत्तरतोऽरत्निमात्रे उत्तरमिति परस्परमरत्निद्वयमन्तराले भवति ।

वर्षीयो दक्षिणम् ॥ २२ ॥ तयोर्हविर्धानयोर्मध्ये यद्वर्षीयोऽतिशयेन महद्ध-

१) ? अरत्न्यंतर AB.

छतरं तद्दक्षिणं स्याद्र्यथात्कनीय उत्तरतः · मानवे हविर्धानयोः प्रथमकृतान्ग्रन्थीन्विस्रंस्य प्रक्षाल्याभ्यज्याभिनह्याभितः[1] पृष्ठ्यामरत्निमात्रेऽवस्थापयन्ति बहिर्वेदि चक्राण्यन्तर्वेद्युपस्तम्भयतीति · काठके सच्छदिष्कयोर्हविर्धानयोर्ग्रन्थीन्विचृत्य प्रक्षाल्याभ्यज्याभितः पृष्ठ्यामवस्थाप्येति · आप॰ प्रक्षाल्य तयोः पृथग्ग्रथितान्ग्रन्थीन्विस्रंस्य नवान्प्रज्ञातान्कृत्वाग्रेण प्राग्वंशमभितः पृष्ठ्यामवस्थापयतीति ।

तयोश्छदिरध्यस्यति ॥२३॥ तयोर्हविर्धानयोरुपरि छदिरस्यति अधि उपरि अस्यति क्षिपति निदधातीत्यर्थः · तृणमयः कटः छदिः ।

भित्तिं वाभावे ॥२४॥ भित्तिं छदिषा तुल्याम् वेणुशकलैः कृतं किलञ्जम्[2] ।

अन्यत्रापि ॥२५॥ अपि सदसि छदिषोऽभावे भित्तिस्तत्कार्ये भवतीति प्रसङ्गादुक्तम् ।

रराट्यां पुरस्तादासजत्यैषीकीम् ॥२६॥ इषीकाः वीरिणाशरादीनां[3] दीर्घा अग्रशलाकाः तन्मयी ऐषीकी तां रराट्यां हविर्धानयोः पुरस्ताद्भागेऽवलगयति · प्रत्यास्यामिति श्रुतेः (३.५.३.१) रराटं ललाटं तत्र भवा रराट्या ललाटपट्टिका · तामिषीकामयीमिति शाखान्तरात् · रराटी हविर्धानस्य पूर्वद्वारे उपरिष्टात्कटिकेति धूर्तस्वामिनः ।

उच्छ्रायीभ्यां परिवार्य छदिः ॥२७॥ परिश्रयणार्थाभ्यामुच्छ्रायीभ्यां कटाभ्यां छन्ने अनसी परिवार्य परिवेष्ट्य छदिर्निदधाति · उच्छ्रीयेतेऽइत्युच्छ्रायौ पार्श्वकटकौ तयोरेका हविर्धानस्य पूर्वद्वारदक्षिणद्वार्यात आरभ्य दक्षिणतः पश्चिमद्वारदक्षिणद्वार्या यावदुच्छ्रीयते अपरा च पश्चिमद्वारस्योत्तरद्वार्यात आरभ्योत्तरतो यावत्पूर्वद्वारस्योत्तरस्थूणा · छदिस्तुल्यं वा किलञ्जम्[4] रराट्या तेजनीत्यनर्थान्तरमिति पितृभूतिः ।

पश्चाच्च ॥२८॥ प्रथमं निहितस्य छदिषः पश्चाच्च छदिर्निदधाति अस्य च पश्चान्निधानोपदेशात् पूर्वसूत्रोपदिष्टस्य छदिषः पुरस्तान्निधानमिति ।

चतुर्गृहीतं शालाद्वार्ये जुहोति युञ्जतऽइति (५.१४) ॥२९॥ एवं हविर्धाने

---

१) °क्षाल्याल्याभ्य° A. क्षाल्यालभ्यज्यानिन° B. २) Thus AB. किलञ्जं Ss. see २७. and ६.११. ३) Thus Ss. वीरण° AB. ४) कालंजं B (जं।!). कलंजं A!

सन्नीकृत्याध्वर्युः शालां प्रविश्याज्यं संस्कृत्य चतमाज्यं परिस्तरणसमिदाधानपूर्वकं शार्य्येऽग्नौ जुहोति ।

स गार्हपत्योऽन्तः ॥ ३० ॥ अतः परं स शालाद्वार्यो गार्त्यो भवति गार्हपत्यकार्यमत्र कर्तव्यमित्यर्थः · एतच्च ज्योतिष्टोमप्रकरणे पठितत्वाज्ज्योतिष्टोमार्थम् · प्रसङ्गादग्नीषोमीयेऽपि गार्हपत्यकार्यमगार्हपत्ये क्रियते तस्यापि ज्योतिष्टोमपरतन्त्रत्वात् अतः स्वतन्त्रेषु निरूढादिष्वेतन्न भवति · अत एवाग्नीषोमीयोपभोगेऽपि निरूढादिषु वेदिरपि सोमवन्न भवति ।

अपरं दक्षिणे वर्त्मनि दक्षिणस्यानसो हिरण्यं निधायाभिजुहोतीदं विष्णुरिति (५. १६) ॥ ३१ ॥ पुनराज्यं शालाद्वार्यऽएव संस्कृत्यापरं चतुर्गृहीतं गृहीत्वा दक्षिणस्य हविर्धानस्य दक्षिणचक्रमार्गे हिरण्याभिजुहुयात् अत्रापि हिरण्यस्य परिस्तरणं कृत्वा तस्योपरि चतुर्गृहीतं जुहुयात् ।

दक्षिणाया द्वारानीता पत्नी पाणिभ्याᳮ शेषं प्रतिगृह्याक्षधुरावनक्ति परागदेवश्रुताविति (५. १७) ॥ ३२ ॥ शालायाः दक्षिणेन द्वारेणानीता सती पत्नी चतुर्गृहीतस्य हुतशेषं प्रगृह्य अक्षस्य धुरौ धुरिकाशल्ये परागनभ्यावृत्तमनक्ति हस्तस्थेनाज्येनोत्तानेनैव हस्तेन · निष्क्रामयन्तीति (३. ५. ३. १३) श्रुतत्वात् आनीतेत्युक्तम्. अतश्च बाहौ गृहीत्वा शालाया दक्षिणद्वारेण पत्नी निष्काशनीया पत्नि निष्क्रमस्वेत्यध्येषणाया वा उभयथापि णिजर्थोपपत्तेः । आपस्तम्बः हिर्दक्षिणामक्षधुरां दक्षिणेन हस्तेनोत्तानेन प्राचीनं न च हस्तमावर्तयतीति अक्षधुरामक्षशल्यम् प्राचीनं प्राग[प]वर्गमनक्ति न च निवर्तयति हस्तमिति धूर्तस्वामिनः । इदानीमिदं विचार्यते · किं युगपद्भावक्षधुरौ अनक्ति उत भेदेनेति ·

युगपत्तद्वचनत्वात् ॥ ३३ ॥ भेदे मन्त्रावृत्तिः सांनिपातित्वात् ॥ ३४ ॥ [अनडुद्योजनप्रकरणे (७. १. १३) व्याख्यातौ सदृशत्वात्][1] ।

स्रुक्स्थाल्यौ प्रतिगृह्य प्रतिप्रस्थातोत्तरस्येरावतीऽइति (५. १६) पूर्ववत् ॥ ३५ ॥ प्रत्ता अध्वर्युणा समर्पिते स्रुग्घ्य उत्तरस्य हविर्धानस्य दक्षिणे चक्रवर्त्मनि हिरण्यं निधाय परिस्तीर्य तस्मिंश्चतुर्गृहीतं जुहोति इति पूर्ववदित्यस्यार्थः ।

[1] Thus Ss., whereas AB repeat the explanation given before in nearly the same words.

पत्नी चापरेणाग्नीन्परीत्योत्तरस्यानक्ति पूर्ववत् ॥३६॥ पत्नी दक्षिणाद्धविर्धानसमीपादुत्थाय दक्षिणद्वारेण शालां प्रविश्य अपरेणाग्नीन् परीत्योत्तरस्य हविर्धानस्याक्षधुरौ चतुर्गृहीतशेषं दक्षिणाहस्तेन गृहीत्वा क्रमेण प्राक् देवश्रुतावित्यनेन मन्त्रेण [अनक्ति][1] · पूर्ववच्छब्देनैतत्सर्वं लभ्यते · अनेकपत्नीके एकैव पत्नी अक्षधुराञ्जनं करोति परार्थत्वात् ॥ ॥ तृतीया कण्डिका ॥ ३ ॥

हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुवाचयति ॥ १ ॥ ततोऽध्वर्युः हविर्धानाभ्यामनुब्रूहीत्येवमनुवाचनं होत्रा कारयति ।

त्रिरुक्तायामुद्धृत्येव वर्तनम् ॥ २ ॥ होत्रा प्रथमायामृचि त्रिरुक्तायां सत्याम् हविर्धानयोरुद्धरणं कृत्वा वर्तनं प्रवर्तनं प्राङ्नयनं कारयेयुः ।

प्राची प्रेतमिति (५.१७) वाचयति ॥ ३ ॥ यजमानम् हविर्धानयोः प्रवर्तमानयोः · आपस्तम्बः उद्गृह्णन्तः प्रवर्तयन्तीति · मानवे च उद्गृह्णन्तोऽनुव्रजन्तीति · काठके च त्रिरनूक्तेऽनूद्गृह्णन्तो[2] वर्तयन्तीति · अतो भूमिसंलग्नमेवोद्धरणं कर्तव्यम् यथा भारवशाच्चक्रघर्षणाज्जोऽक्षशब्दो नोत्पद्यते ।

स्वं गोष्ठमिति (५.१७) च खर्जति ॥ ४ ॥ अव्यक्तं चक्रघर्षणाजं शब्दं कुर्वत्यनसि स्वं गोष्ठमित्यमुं मन्त्रं यजमानं वाचयति · नैमित्तिकमिदम् ततश्च वरुणायेति कालाहुतिरपि भवति ।

पश्चादुत्तरवेदेस्त्रिषु प्रक्रमेषु मत्या वा नभ्यस्थेऽभिमन्त्रयतेऽत्र रमेथामिति (५.१७) ॥ ५ ॥ उत्तरवेदेः पश्चात्त्रिषु प्रक्रमेषु अतीतेषु ते हविर्धाने नभ्यस्थे मध्यफलकाधारस्थे कृत्वा अध्वर्युर्द्वेऽपि अनसी युगपदभिमन्त्रयते अथवा मत्या स्वमतिपरिकल्पिते देशे न त्रिषु प्रक्रमेष्विति नियमः · यादृशानि मालवकेऽनसां चक्राणि त्रिफलकानि तादृशान्यङ्गीकृत्येदमुक्तम् मध्यमं चक्रस्य फलकं नभ्यम् नाभिनभं चेति प्रत्ययसंनियोगेन नाभेर्नभभावः[3] नभ्ये तिष्ठतो नभ्यस्थे मध्यमे च फलके स्थापयेदित्यर्थः · अतोऽत्रानसोश्चक्राणि त्रिफलकानि भवन्ति तानि चाक्षस्य प्रान्तयोरेव धुरिकास्थानीययोः प्रवेश्यन्ते एवं च द्वेऽईषे प्रागायतेऽएको ऽक्षः अक्षस्य पुरस्तात्पश्चाच्चैकैका कूबरी विष्कम्भिकापरपर्याया उद्धोर्विधा-

1) ? deest AB. 2) ? °नुद्° AB. 3) See पाणिनि° ५.१.२. वार्त्ति° ५-७.

रिणी· त्रिफलके चक्रे युगबन्धनप्रदेशसमीपे एक उपस्तम्भनार्थः[1] स्तम्भः स चानसः पृथग्भवति अनसा सह बद्धो वा उभयथा दर्शनात् · इत्येवंविधे ऽहते ऽनसी भवत इति प्रतीयते ।

उत्तरेण परिक्रम्य दक्षिणामुपस्तभ्नाति विष्णोर्नु कमिति (५.१८) ॥९॥ अध्वर्युर्द्वे ऽपि हविर्धाने उत्त°क्षिणां हविर्धानमुप°ति युगप्रदेशं दारुणि स्तम्भे प्रतिष्ठापयतीत्यर्थः । तत उत्थाय दशारत्निपरिमाणस्य हविर्धानस्य साधनम् · नवारत्नि हविर्धानमित्यापस्तम्बः ।

दक्षिणात स्थूणामुपनिहन्ति विष्णवे त्वेति (५.१८) ॥१०॥ मेथीं निहन्ति निखनति अवटे मिनोति · दक्षिणात इति दक्षिणपूर्वः कोणो ऽभिधीयते ।

दिवो वेत्युत्तरं (५.१३) प्रतिप्रस्थाता ॥११॥ हविर्धानमुपस्तभ्नाति ।

उत्तरत स्थूणां पूर्ववत् ॥१२॥ तत उ°तः उत्तरपूर्वकोणे स्थूणां निहन्ति विष्णवे त्वेति (५.१८) मन्त्रेण अध्वर्युरेव ।

उभे वा दक्षिणतः ॥१३॥ अथवा उभे ऽपि स्थूणे द°त एव हविर्धानस्य दक्षिणपार्श्वे ऽएवाध्वर्युर्निहन्ति एकां पूर्वदक्षिणकोणे अपरां दक्षिणापरकोणे इति।

इतरतस्ततः ॥१४॥ ततो ऽनन्त[रमित]रतः इतरयोः कोणयोरेकैकां स्थूणां निखनति तूष्णीमेव मन्त्रानुपदेशात् ययोः कोणयोः पूर्वं निखाते ततो ऽन्ययोरित्यर्थः · यदि प्रथमंसयोर्निखाते तदा इतरयोरिति द्वयोः श्रोण्योः यदि च प्रथमं दक्षिणातस्तत उत्तरत इति ।

यद्व च मानुष ऽइति श्रुतेः (३.५.३.२१) ॥१५॥ यच्च मानुषे लोकविषये प्रसिद्धमनसः सुप्रयुक्त[त्व]ाय मण्डपकरणाय च तदपि कुर्यात् उपरि वल्लकादिनिधानबन्धनाधिकस्थूणानिखननादिभिर्दृढीकुर्यादित्यर्थः · कुतः इतर°नुष ऽइति[2] श्रुतेः इति श्रवणात् । अत्र च पूर्वोक्तेन प्रकारेण हविर्धानमण्डपस्य निष्पादनं कर्तव्यम् · चतसृणां द्वारस्थूणानां निखननम् उपर्युदगग्राणां त्रयाणां छदिषामारोपणम् पूर्वद्वारस्योपरिष्टाद्रराट्याबन्धनम् उच्छ्रायोभ्यां परिश्रयणम् · आपस्तम्बः

---

१) एकमुप° AB. २) „elsewhere than where it (the मेथ्या उपनिहननम्) is done in common business." — The explanation of १४ and १५ given by the scholiast is based on a thorough misunderstanding of this passage.

सर्वतः स्थूणाः परिमिनोति पुरस्ताच्चान्तः खरायावकाशं शिष्ट्वोदञ्चौ वंशाव-
त्यादधाति पश्चात्पुरस्ताच्च   तथा प्राचो वंशानत्याधाय विष्णोः पृष्ठमसीति तेषु
मध्यमं छदिरध्यूहति त्र्यरत्निविस्तारं नवायामं तूष्णीमितरे छदिषीऽअध्यूह्य कटां-
स्तेजनीरिति छद्यन्तरालेषु प्रवर्तमपास्यति तेऽन्तर्वर्तीभवन्ति परि त्वा गिर्वणो गिर
इति सर्वतः परिश्रित्य विष्णोः श्नप्त्रेऽइति रराट्या अन्तौ व्यवस्यतीति ।

प्र तद्विष्णुरिति (५.२०) वाचयति मध्यमं छदिरालम्भ्य ॥१६॥   एवं हवि-
र्धानं निष्पाद्य म॰म्भ्य म॰दिरालभस्वेत्यध्येषणाया यजमानेन मध्यमच्छदिष आलम्भं
कारयित्वाध्वर्युर्यजमानं भाणयति · अथ मध्यमं छदिरुपस्पृश्य वाचयतीत्यादि (३.
५.३.२३)   म॰दिर्यजमानेन स्पर्शयित्वा यजमानं वाचयति · ननु च स्पृशतेः परो
ल्यप्श्रूयते न स्पर्शयतेः · ततश्च स्वयमेवाध्वर्युः श्रुतत्वात् स्पृष्ट्वा वाचयेदित्यव-
गम्यते · न · मन्त्रलिङ्गविरोधात् · मन्त्रो ह्यालब्धस्याभिधायकः   तं च यजमानो
ब्रवीति अध्वर्युस्तु केवलं प्रयुङ्क्ते · अध्वर्युणालब्धे याजमानो मन्त्रो न समर्थः स्यात्
तस्मात्स्पर्शयित्वा यजमानं वाचयतीत्ययमर्थः · एतेन सर्वे एवंजातीयका अथैवम-
भिपद्य वाचयतीत्यादयो निर्देशा व्याख्याताः ।

उत्तरे च ॥१७॥   उ॰च द्वे यजुषी आलम्भ्यालम्भ्य वाचयति ।

विष्णो रराटमिति (५.२१) रराट्याम् ॥१८॥   रराट्यामालभस्वेत्यध्येषणाया
यजमानेन रराट्यां स्पर्शयित्वा वि॰टमित्यमुं मंत्रमध्वर्युर्यजमानं भाणयति · रराटं
ललाटम् रराटमिव हविर्धानस्य पूर्वद्वारस्योपरि · तत्र भवा ऐषीकी पटिका रराट्या।

विष्णोः श्नप्त्रे स्थ इत्युच्छ्राय्यौ ॥१९॥   आलम्भ्य वाचयतीति शेषः । अने-
कयजमानके उपस्पर्शनमेकस्य वाचनं सर्वेषामिति सर्वत्र ज्ञेयम् ।

उदगग्राणि छदींषि पश्चाच्छ्रुतेः ॥२०॥   त्रीण्यपि छदींषि उ॰णि भवन्ति
अथ यदिदं पश्चाच्छदिर्भवतीति यतः श्रूयते (३.५.३.२४)   न ह्यन्यथा पूर्वापरा
छदिषां पङ्क्तिर्भवति · उपरि छादनार्थाः कटाश्छदींषि इत्युच्यन्ते तानि च दशार-
त्निदीर्घाणि त्र्यंशेन विपुलानीति ।

द्वार्याः परिषीव्यति लस्यूजनिप्रतिकृतया रज्ज्वा विष्णोः स्यूरसीति[1] (५.२१)

---

१) स्यूरिति M pr. m.

॥ २१ ॥ ततोऽध्वर्युर्द्वारभवाश्चतस्रः स्थूणाः द्वारशाखाः लऽऽवा काष्ठमयसूच-कप्रोतया रज्ज्वा उच्छ्रायीप्रान्तैः सह क्रमेण परिषीव्यति मूलत आरभ्याग्रपर्यन्तं रज्ज्वा सीव्यति वेष्टनेन दृढं बध्नातीत्यर्थः · एतच्च पूर्वद्वारस्य दक्षिणस्थूणामारभ्य प्रदक्षिणमुत्तरस्यां स्थूणायां समापनीयम् · लस्पूजन्या (३. ५. ३. २५) लष श्लेषणे पूज पूजायाम् पूजितं शोभनं श्लेष्यतेऽनयेति पूजितश्लेषणीति प्राप्ते छान्दसत्वात् लस्पूजनीति स च दारुमयः सूचकः ।

विष्णोर्ध्रुवोऽसीति (५. २१) ग्रन्थिं करोति ॥ २२ ॥ रज्जुमूले परिषीवणारम्भे ।

उपक्रान्ते प्रमुञ्चति ॥ २३ ॥ समाप्ते सीवनकर्मणि[1] तं पूर्वकृतं ग्रन्थिं विमुञ्चति विस्रंसयति ।

प्राग्वꣳशꣳ हविर्धानं निष्ठाप्य वैष्णवमसीत्यालभते (५. २१) ॥ २४ ॥ प्रागग्रो वंशो मध्यवलो यस्य तत्प्राग्वंशम् प्रागग्रा वा सर्वे वंशा यस्य तत्प्राꣳशम् · एवंविधं हꣳष्ठाप्य समाप्य निष्पाद्य स्पृशति · कठसूत्रे द्विपुरुषया पश्चाङ्ग्या हविर्धानं विदध्यादनःसंमितं वैव स्याद्विप्रादेशया पश्चाङ्ग्योपरवान्विदध्याद्विप्रादे-शोपरवेषु पृष्ठ्या प्रादेशं द्वैधं संभुज्यार्धप्रादेशेन परिलिखेद्दशपदया पश्चाङ्ग्योत्त-रवेदिं विदध्याच्चतुःशय्या पश्चाङ्ग्याग्नीध्रीयं विदध्यात्त्रिपदया पश्चाङ्ग्या धिष्ण्यान्वि-दध्यादष्टादशशय्या पश्चाङ्ग्या सदो विदध्यादिति ।

भोजनभक्षणे चास्मिन्न कुर्युः ॥ २५ ॥ तृप्त्यर्थं भोꣳनं नित्याशनम् भꣳणं चेडासोमचमसादीनाम् अत्र हविर्धाने न कुर्युः ।

अद्वारेण सदोहविर्धाने प्रेक्षमाणं ब्रूयान्मा प्रेक्षथा इति ॥ २६ ॥ अध्वर्युः (४. ६. ७. १०) · तच्चैतत्सदसि स्तोत्रशस्त्रकाले हविर्धाने च सोमे स्थिते अपां प्रवेशनादनन्तरम् मिथुनसम्पत्तेः ।

पृष्ठ्यामुभयतो द्वार्ये ॥ २७ ॥ वेदिमध्ये वर्तमाना प्राची रेखा पृष्ठ्या ताम-भितः अरत्न्यन्तरे द्वार्ये द्वारस्थूणे भवतः पूर्वद्वारस्यापरद्वारस्य च (३. ५. ३. ७) · द्वारप्र-माणं चारत्निद्वयम् उचितत्वात् मण्डपादौ दृष्टत्वाच्च कन्यसे[2] द्विकरं द्वारमित्यादौ।

दक्षिणस्यानसोऽधःप्रउगं खनत्युपरवान्[3] ॥ २८ ॥ दꣳस्य हविर्धानस्य

---

1) Thus Ss. सेवन° AB. 2) ? Thus AB. 3) Thus AB. खनति ॥४॥ उप° M. १.

यत्प्रउगम् द्वेधा भक्तस्य पूर्वो भागः तस्याधःप्रदेशेऽधर्युरुपरवान्खनति · उपरवा अवटाः अभ्राः · प्रउगं प्राप्तयुगमीषासंगमापरार्धम् । मानवे दक्षिणस्य हविर्धानस्य पश्चादुपस्तम्भनस्य द्विप्रादेशं चतुरश्रं विधाय प्रादेशमात्रान्कुष्ठासूपरवान्खनतीति[1] · काठके दक्षिणस्य प्रत्यगुपस्तम्भनादिति · अत्र हविर्धानं स्वार्धप्रमाणेनोभयतोऽपछिद्य चतुःकोष्ठकं कृत्वा तत्राग्नेयकोष्ठमध्ये द्विप्रादेशं चतुरश्रं कृत्वा तत्कोणेषूपरवान्वृत्तान्परिलिखेत् · उपरवा नाम कूपकाः तेषां चोपर्यधिषवणफलके निधीयेते तयोरुपर्यधिषवणचर्म तत्र सोमोऽभिषूयते तस्मिन्ग्रावभिर्हन्यमाने वादित्रोदरवत्सुषिरास्ते कूपा गम्भीरमुपरुवन्तीत्युपरवा इत्यभिधीयन्ते। तत्खनने विधिमाह · ॥ ॥ चतुर्थी कण्डिका ॥४॥

अभ्र्यादि करोत्यवटवद्‌ा परिलेखनात् ॥१॥ आहरत्यनया मृदमित्यभ्रिः खनित्रम् तस्या आदानादि आदानादारभ्य परिलेखनपर्यन्तम् अवटवदिति यूपावटवत्करोति देवस्य त्वेत्यभ्र्यादानमिदमहमित्यनेन च परिलेखनमिति (६. २. ८)।

चतुरोऽन्नाया व्याघारणवत् ॥२॥ तानुपरवान् चतुःसंख्यान् व्याघारणवदन्नाया परिलिखति · व्याघारणवदिति दक्षिणेऽंसेऽउत्तरश्रोण्याः दक्षिणश्रोण्यामुत्तरेऽंसेऽइति (५. ४. १४) । प्रादक्षिण्येन परिलेखने प्राप्ते अन्नायेति कौटिल्येनेत्यर्थः · तदपि कौटिल्यमनियमे न प्राप्नोतीति नियमयति व्याघारणवदिति तेन दक्षिणपूर्वमपरोत्तरमपरदक्षिणं पूर्वोत्तरमिति[2] । पक्षान्तरमाह ·

उत्तरापरं वा प्रथमम् ॥३॥ वा विकल्पार्थः · अथवा प्रथममुत्तरं परिलिख्य ततोऽन्नाया परिलिखेत् · तेनायं क्रमः उत्तरापरं दक्षिणपूर्वं दक्षिणापरमुत्तरपूर्वमिति । तृतीयं पक्षमाह ·

सम्यग्वा ॥४॥ वा विकल्पे · अथवा सम्यगृजुमार्गेणैवोपरवान्परिलिखेत् नान्नाया · तेन प्रथमं दक्षिणपूर्वम् ततो दक्षिणापरम् ततोऽपरोत्तरम् [तत उत्तर]पूर्वम्[3] ।

उत्तरपूर्वं त्वन्त्यम् ॥५॥ उत्तरयोरपि पक्षयोस्तु ऊर्ध्वमेवोपरवमन्त्यं परि-

---

1) °त्रान्कुष्ठा° AB. 2) Thus AB. but उत्तरपूर्वम् at ३ and ५. 3) °रोत्तरं पूर्वं AB.

लिखति पूर्वस्मिन्पक्षे च व्याघारणवदित्यनेनैवोत्तरपूर्वस्यान्त्यत्वसिद्धेः · तेनान्तिमे पक्षे दक्षिणपूर्वं प्रथमं परिलिखेदित्येतदवगम्यते सम्यक्त्वसिद्धेः (३. ५. ४. ७)। अथोपरवाणां प्रमाणमाह ·

प्रादेशमात्रांस्तदन्तरान् ॥ ६ ॥ प्रादेशः प्रमाणमेषां ते प्रा॰त्राः तान्प्रा॰त्रान्परिमण्डलानुपरवान्परिलिखति अर्धप्रादेशेन कोणेषु वृत्तान्परिलिखतीत्यर्थः · तदन्तरानिति तच्छब्देन प्रादेशः परामृश्यते परस्परं प्रादेशमात्रमन्तरा परित्यज्य खनतीत्यर्थः ।

बृहन्नसीति (५. २२) यथापरिलिखितं खनति ॥ ७ ॥ परिलेखनक्रमेणोपरवान्खनति · नात्रोदकस्पर्शनम् अराक्षसत्वात् बृहन्नीपरवाणीति वचनात् ।

इदमहमित्युत्किरति (५. २३) यथाखातं प्रतिमन्त्रम् ॥ ८ ॥ खननानन्तरं य॰तं खननक्रमानतिक्रमेण सर्वेभ्य उपरवेभ्य उत्खातान्पांसूनुत्किरति मध्याद्बहिर्निष्काशयति ।

उत्कृत्यां किरामीति पश्चात्सर्वेभ्यः ॥ ९ ॥ प्रथममिदमहमित्यनेन पांसूनामुद्धरणं[1] कृतम् पश्चादित्यन्ते उत्कृत्यामित्यनेनैवावृत्तेन सर्वेभ्यः उपरवेभ्यः सकाशात्पांसूनुद्वपति · प्रथमं पश्चाच्च मन्त्रेणोद्वापो वचनात् मध्ये यावदर्थं तूष्णीमिति· अत्र पश्चाच्छब्दश्चरमार्थः श्रुतितो (३. ५. ४. १३) विशेषावगमात् । खातप्रमाणमाह ·

बाहुमात्रान् ॥ १० ॥ तानुपरवान्बा॰त्रान्खनेत् निम्नान् ।

अधणाया सम्भिन्द्यात् ॥ ११ ॥ तान्प्रकृतानुपरवान् कौटिल्येनाधस्तात्स॰न्द्यात् परस्परं छिद्रेण संयोजयेत् · अधणायाशब्दोऽयं कर्णवचनः न भुजेन कोट्या वा सम्भिन्दन्ति (३. ५. ४. १४) किं तर्हि कर्णेन दक्षिणपूर्वमुत्तरापरं च [सं]छिद्रयन्ति तथा दक्षिणापरं पूर्वोत्तरं चेत्यर्थः । आपस्तम्बः अधस्तात्संतृण्णा भवन्ति नोपरिष्टादिति · काठके बाहुमात्रान्खनन्त्यसम्भिन्दन्तोऽधस्तात्सम्भिन्दन्ति ।

अशक्तौ सम्यक् ॥ १२ ॥ अधणाया सम्भेदनाशक्तौ ऋजुभावेनैव सम्भिन्द्यात् दक्षिणौ परस्परम् पुनः पश्चिमौ तत उत्तरपूर्वौ इत्येवम् ।

स्वराडित्यवमर्शयति (५. २४) यथाखातं प्रतिमन्त्रम् ॥ १३ ॥ तानुपरवान्ख-

---

१) नामुत्करणं A.

ननक्रमेण यजमानमवमर्शयत्यध्वर्युः उपरवानवमृशस्वेत्यध्येषणाया यजमानश्च अन्तःप्रदेशान्निम्नोन्नतत्वपरिहाराय संमृशति · अनेकयजमानके चैक एवावमृशति उपरवसंस्कारत्वात् ।

अध्वर्युयजमानौ संमृशेते ॥१४॥ अवमर्शनानन्तरमध्वर्यौ उपरवयोः स्वं-स्वं दक्षिणं हस्तं प्रवेश्याह्णाया सम्भेदनमार्गेण परस्परं संगते संस्पर्शं कुर्वाते । अत्राह्यापस्तम्बः बाहूऽउपावहरतोऽध्वर्युयजमानश्च संमृशेतेऽइति । कथं संमृशेतेऽइत्यपेक्षायामाह ·

पूर्वदक्षिणेऽध्वर्युरपरोत्तरे यजमानः ॥१५॥ उपरवे हस्तं प्रवेशयति ।

अध्वर्युः पृच्छति यजमान किमत्रेति ॥१६॥ उपरवयोर्हस्तौ प्रक्षिप्य सम्भेदनमार्गेण परस्परं संमर्शनानन्तरम् ।

भद्रमित्याह ॥१७॥ स यजमानः पृष्टो भद्रमिति एवं ब्रूयात् ।

तन्नौ सहेत्यध्वर्युरुपांशु ॥१८॥ प्रश्नप्रतिवचनसम्बन्धादुच्चैः प्राप्ते वचनादुपांशुवमुच्यते अथवा वागन्तपक्षेऽप्युपांशुत्वप्राप्त्यर्थमुपांश्वित्युक्तम् · अनेकयजमानके तन्नः सहेत्येवमूह्यते · मानवे अनुमृशतः पूर्वयोर्दक्षिणामध्वर्युरपरयोरुत्तरं यजमानः किमत्रेति पृच्छति भद्रमित्यध्वर्युस्तन्नौ सहेति यजमान उत्तरमन्वध्वर्युर्दक्षिणायोरपरं यजमान इति · काठके अध्वर्युयजमानौ संविमृशतो द्वाऽअन्यौ द्वाऽअन्यः किमत्रेत्यध्वर्युर्यजमानो भद्रमिति प्रत्याह तन्नौ सहेत्युभावुपस्पृशेवेति ।

पुनर्दक्षिणापरेऽध्वर्युः पूर्वोत्तरे यजमानः ॥१९॥ उपरवे ।

यजमानः पृच्छत्यध्वर्यो किमत्रेति ॥२०॥ पूर्ववद्धस्तौ सम्भेदनमार्गेण परस्परं संयोज्य ।

भद्रमिति प्रोक्ते तन्मऽइति यजमानः ॥२१॥

प्रोक्षत्येनानवोक्षणा इति (५.२५) ॥२२॥ अध्वर्युर्लौकिकाद्भिरेनानुपरवान्प्रोक्षति हस्तेनैव · एतच्चाग्नेयकोणस्थादारभ्य प्रदक्षिणं भवति । तच्चैतत्प्रोक्षणं सर्वेषामुपरवाणां युगपत्स्यात् · एवं प्राप्तऽआह ·

भेदे मन्त्रावृत्तिः सांनिपातित्वात् ॥२३॥ भिन्नदेशानामुपरवाणामेकेन पाणिना युगपत्प्रोक्षणाशक्तेर्भेदेन भवितव्यम् न चोभाभ्यां पाणिभ्यां कर्तव्यम्

दक्षिणेन पाणिना कर्म कर्तव्यमिति स्मरणात् तस्माद्वेदेन प्रोक्षणम् · भेदे च प्रत्युपरवं मन्त्रावृत्तिर्भवति[१] · कुतः साम्यात् संनिपत्य हि करणो मन्त्र उपकरोति।

अवनयनावस्तरणे चावटवद्रक्षोहणो-रक्षोहण इति (५.२५) ॥२४॥ प्रोक्षणीशेषस्योपरवेष्ववनयनम् प्रागुदग्भिर्बर्हिर्भिरवस्तरणं चावटवत् यूपावटवदेव भवति रक्षोहणा इति मन्त्राभ्याम् · अत्र प्रोक्षणयवनयनादौ च कृते नोदकोपस्पर्शनम् रक्षोहणो वः सप्त वैष्णवानीति वचनान्मन्त्राणां वैष्णवत्वेनाराक्षसत्वात् · नयनावस्तरणे च प्रदक्षिणमेव भवतः ।

तनूनुपरि कुशान्कृत्वाधिषवणे फलके ह्यङ्गुलान्तरे प्रक्षालिते प्राचीऽअरत्निमात्रे संतृष्णे वोपदधाति पर्यूहति च रक्षोहणौ-रक्षोहणाविति (५.२५) ॥२५॥ तेषामेव प्रकृतानामुपरवाणामुपरि तनून्सूक्ष्मानस्थूलान्प्रागग्रानुदगग्रान्वा दर्भानास्तीर्य अधिषवणे फलके अधि उपरि अभिषूयते सोमो ययोस्ते वारणे प्रादेशमात्रविपुले स्थूले उपदधाति · कीदृशे अधिषवणे फलके परस्परं ह्यङ्गुलान्तराले अद्भिः शोधिते प्रागग्रे अरत्निमात्रे दीर्घे · संतृष्णे वा वा विकल्पे परस्परं संतृष्णे संधिते संयोजिते स चायं व्यवस्थितविकल्पः एकसुत्ये यज्ञे अग्निष्टोमसंस्थे असंतृष्णेऽएव उक्थ्यातिरात्रादौ अनेकसुत्ये चावश्यं संतृष्णेऽएव भवतः दीर्घसोमे संतृन्द्याऽधृत्याऽइति शाखान्तरीयाद्वचनात् दीर्घश्चासौ सोमश्च दीर्घसोमः अग्निष्टोमापेक्षया यो दीर्घः उक्थ्यातिरात्रादिरनेकसुत्यश्च तत्रावश्यं संतर्दनं कर्तव्यम् · ततस्ते अधिषवणे पर्यूहति च पांसुभिस्तदन्तरालं ह्यङ्गुलं परितश्च पूरयति दार्ढ्याय अन्यथा सोमाभिषवकाले तेऽइतस्ततश्चलेते तथा सति दुष्करोऽभिषवः स्यात् · काठके अधिषवणे फलके पुरस्तादणीयसी पश्चाद्वरीयसी ह्यङ्गुले वा[२] सहिते पश्चाद्रक्षोहणाऽइति प्रोक्षत्युत्तरेणोपरवेषूपदधाति उत्तरेण पुरीषेण पर्युह्य शङ्कुभिः परिणिहत्येति। मानवे औदुम्बरेऽअधिषवणफलके समोपवृक्ते[३] बाहुमात्रेऽइत्यादि।

तयोश्चर्माधिषवणं परिकृत्त सर्वरोहितं निदधाति वैष्णवमसीति (५.२५) ॥२६॥ तयोरधिषवणफलकयोरुपरि सर्वतो रक्तं परितः कर्तनेन समीकृतमधिषवणचर्म निदधाति प्राग्ग्रीवमुत्तरलोमेति परिभाषायामुक्तमेव (१.१०.४)

---

१) See at ७. १. १३. ८. ३. ३४. २) ? °लेना AB. ३) ? समेप° A. सोमोप° B.

अधि उपरि सोमः सूयतेऽस्मिन्नित्यधिषवणम् · सर्वरोहितमिति वचनाद्गोचर्म गोविषयो हि रक्तो वर्णो रोहित इत्युच्यते मन्त्रवर्णाच्च अंशुं दुहन्तो ऽअध्यासते गवीति (ऋक्सं° १०.९४.९) · मानवे अधि चयनस्य[1] चर्मणो ऽधिषवणं करोतीति ।

तस्मिन्ग्रावाणः पञ्च वैष्णवा स्थेति (५.२५) ॥२८॥ पाषाणान् ।

खरं पुरस्तात्करोत्युद्धतावोक्षिते सिकतोपकीर्णं चतुरश्रम् ॥२९॥ उपरवाणां पुरस्तात् अथवा प्रकृतस्याधिषवणचर्मणः पुरस्तात् शाखान्तरात् उपस्तम्भनस्य वा पुरस्तात्प्राच्यां दिशि उद्ध°क्षिते देशे सि°र्णं च°श्रं खरं करोति · उद्धतमुल्लेखनम् अवोक्षितमभ्युक्षणम् · सिकता वालुका उपकीर्णा यत्र तत्सिक°र्णम् अर्थात्प्रमाणम् · चतुरश्रं[2] चतुःकोणम् · मानवे औपरवाणां पाष्णूनामग्रेणोपस्तम्भनं बाहुमात्रं चतुरश्रं खरं करोत्युद्धतावोक्षिते सिकताभिः प्रोचयतीति · काठके पूर्वेणोपस्तम्भनं पात्रेभ्यः खरं करोतीति ।

अन्तःपात्यात्षट् प्रक्रमान्प्राङ् यात्वा दक्षिणा सप्तमं मध्यान्तम् ॥३०॥ अन्तःपात्यात् शङ्कोरवधिभूतात् ष°त्वा प्राच्यां दिशि गत्वा स°मं प्रक्रमं म°न्तं दक्षिणास्यां दिशि यायात् ।

तत्रौदुम्बरीं मिनोति यजमानमात्रीम् ॥३१॥ तत्र सप्तमपदप्रान्ते यजमानप्रमाणामौ°रीं स्थूणामवटे प्रक्षिपति · सा च निखननप्रदेशादूर्ध्वं यजमानमात्री कार्या निखननार्हप्रदेशस्तु ततोऽधिकः । तदुक्तमापस्तम्बेन ऊर्ध्वं निखाताद्यजमानसंमितेति[3] · औ°रीति सदसो मध्यस्थूणा विशाखा भवति । मानवे उदग्षट्शट् सदोऽन्तर्मायु[4] मिनोत्यौदुम्बरी वर्षिष्ठा स्थूणानाट् ह्रसीयस्योऽन्या अन्त्या ह्रसिष्ठेति[5] · काठके अर्धपञ्चमेषु पृष्ठ्याया दक्षिणा मध्यऽऔदुम्बर्यै गर्तं परिलिखतीति · मानवे अपरस्माद्वेद्यन्तात्त्रिषु प्रक्रमेष्वपरिमिते वावकाशे[6] सदो विदधाति तस्य मध्ये दक्षिणतः पृष्ठ्यायाः प्रक्रममात्रऽऔदुम्बर्यै गर्तं खनतीति · आपस्तम्बः दक्षिणतः प्रक्रमे पृष्ठ्याया औदुम्बरीं मध्ये सदसो मिनोति

---

1) ? Thus B., मानवे°तीति deest A. 2) Thus A throughout, whereas B has °स्रं. 3) सा च निख°मितेति deest A. 4) ? Thus AB. 5) °ष्ठा इति AB. 6) वाचकाशे B.

दक्षिणा सदः प्रकर्षेदिति · तेन पृष्ठ्याया दक्षिणतः सदोमध्यरेखायां मध्यान्तं प्रक्रमं प्रक्रम्य तत्प्रान्ते औदुम्बर्याऽवटपरिलेखः कार्यः अन्तःपात्यात्षष्ठे प्रक्रमे च सदसो मध्यं कुर्यात् सदसो मध्ये औदुम्बर्या मानश्रवणात् तन्मध्यऽऔदुम्बरीं मिनोतीति।

यूपवच्छेते ॥३२॥ सा चौदुम्बरी यूपे यूपवदिति (६.२.११) अवटस्य पुरस्तात्प्रागग्रां भूमौ निदधाति तस्या उपरि कुशमुष्टिं च निदधातीत्यर्थः · अग्रेणावटं प्राचीं निधायेत्यापस्तम्बः।

अभ्र्यादि करोत्यावस्तरणात् ॥३३॥ अभ्र्यादानादारभ्य यूपावटवत् कर्म करोति अवटमध्ये प्रागुदगग्रबर्हिःप्रासनपर्यन्तम् (६.२.८-१८) · अतश्चात्राप्यभ्र्यादानम् अवटपरिलेखः खननम् प्राच्यां पांसूद्वापः ततः प्राच्यामौदुम्बरीनिधानम् तस्या उपरि कुशमुष्टिनिधानम् यवोऽसीत्यप्सु यवावापः दिवे त्वेत्यादिभिरौदुम्बर्या अग्रमध्यमूलानां प्रोक्षणम् अवटे शेषासेकः प्रागग्रोदगग्रबर्हिःप्रासनम्।

उद्दिवमित्युच्छ्रयति (५.२७) ॥३४॥ अवटमध्ये प्रागुदग्बर्हिःप्रासनादनन्तरं तामेव प्रकृतामौदुम्बरीमूर्ध्वां करोति · प्राचीनकर्णाऽ सच्छोद्गात्रोच्छ्रयेदित्यापस्तम्बः।

द्युतान इति (५.२७) मिनोति ॥३५॥ अवटमध्ये प्रक्षिपति · प्राक्कर्णामिवदधातीति मानवे विशेषः · प्राचीनकर्णाऽ सच्छोद्गात्रा मिनोत्यूर्ध्वं निखाताद्यजमानसंमितेत्यापस्तम्बः।

पर्यूहणाद्योपसेचनात्कृत्वा ध्रुवासीति वाचयत्यौदुम्बरीमालभ्य ॥३६॥ अवटे प्रक्षेपानन्तरं पर्यूहणादि पांसुभिरवटपूरणादारभ्य अद्भिरुपसिञ्चेत्येतत्पर्यन्तं यूपवदेव कृत्वा (६.३.१०-१२) तत औदुम्बरीमालभस्वेत्यध्येषणाया यजमानेनौदुम्बर्या आलम्भं कारयित्वाध्वर्युस्तं यजमानं ध्रुवासीतीमं मन्त्रं भाणयति। अस्मिन्मन्त्रे प्रजया पशुभिर्भूयादित्युभयोः पदयोः समाम्नातत्वादुभयोः समुच्चयेन प्रयोगे प्राप्तऽआह ·

प्रजया भूयादिति पशुभिरिति वा ॥३७॥ नोभयम् प्रजया पशुभिरित्येवं यथासमाम्नातमित्यर्थः विकल्पस्य श्रुतत्वात् (३.२.१.२०)।

स्रुवेण विशाखे जुहोति घृतेन द्यावापृथिवीऽइति (५.२८) ॥३८॥ आज्यं संस्कृत्य औदुम्बर्या विशाखे कर्णे मूर्धनि वलनिधानप्रदेशे स्रुवेणाध्वर्युर्जुहोति इदं द्यावापृथिवीभ्यामिति त्यागः · स्रुवेणेति जुह्वा निवृत्त्यर्थम् अतश्चात्र स्रुवस्यैव

संमार्गः · विष्टं निविष्टमुपरि स्थापितं वलकादि पाति रक्षति अधः पतद्धारयतीति विष्टपं (३. ६. १. २१) विशाखम् · मानवे अन्तरा कर्णौ हिरण्यं निधाय घृतेन द्याऽवी आपृणेत्यभिजुहोति आ मूलादवस्रावयतीति च · आप° तस्या विशाखे हिरण्यं निधाय घृतेनेति स्रुवेण हिरण्ये जुहुदात्तमौदुम्बरीमन्ववस्रावयेद्देषा सदसः स्थूणा वर्षिष्ठेति ।

भूमिप्राप्ते स्वाहाकरोति ॥ ३९ ॥ भूमिसम्प्राप्ते घृते औदुम्बर्या विशाखे प्रक्षिप्तमाज्यं यदा भूमिं प्राप्नोति तदा · भूमिं गते स्वाहाकरोतीति शाखान्तरे श्रवणात् । अनाम्नातस्वाहाकारेषु होममन्त्रेषु स्वाहाकारो न प्राप्नोत्यत आह ·

सर्वत्र मन्त्रवत्सु जुहोत्युपदेशात् ॥ ४० ॥ स°वत्सु होमेषु स्वाहाकारं करोति अनाम्नातस्वाहाकारेष्वपि · कुतः जु°शात् श्रुत्या होमे स्वाहाकारस्योपदेशात् वषट्कारेण वा वै स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयतऽइति तत्र वषट्कारस्य यजतौ नियतत्वात् परिशेषात्स्वाहाकारस्य जुहोतौ निवेशः · नियतो हि वषट्कारो यजतौ ता वा एताः पञ्च व्याहृतयो भवन्त्योश्रावयेत्यादिः (१. ५. २. १६) याज्याया अधि वषट्करोतीति श्रुतेश्च । किं च ·

अनाम्नातप्रतिषेधाच्च ॥ ४१ ॥ अनाम्नातस्वाहाकारेषु मन्त्रेषु स्वाहाकारस्य प्रतिषेधाद्धारणाच्चैवं निश्चीयते यत्स्वाहाकारः सर्वत्र भवतीति · स जुह्वेव समि° षीत्यत्र (४. ५. २. १७) गर्भहोमे मरुतो यस्य हीति मन्त्रे (८. ३१) न स्वाहाकरोतीति स्वाहाकारो निषिध्यते तत्र चाम्नातो नास्ति · तथा न स्वाहाकरोति न ह्येषाहुतिरित्यनेनाहुतौ (३. ८. ३. १) स्वाहाकारस्य सद्भावावगमाच्च · अमन्त्रवत्सु पूर्णाहुत्यां स्वाहाकारप्रदाना इत्यत्र (६. १०. २७) च स्वाहाकारो विहित एव मन्त्रवद्विषयोऽयमारम्भः ॥ ॥ पञ्चमी कण्डिका ॥ ५ ॥

नाभिदघ्नं सदः ॥ १ ॥ नाभिप्रमाणं सदः प्रान्तेषु उच्चं भवति शाखान्तरात् · मध्ये तूच्चमेव औदुम्बर्या मध्यस्थूणाया यजमानमात्रीत्वोपदेशात् · तथा चाह पितृभूतिः सदसो यन्मध्यऽउच्चैस्त्वम् तदौदुम्बरीप्रमाणमेव दृष्टार्थवादौदुम्बर्युच्छ्रयणस्य[1] यत्वन्तेषु तदनेनोपदिश्यते · सद इति च वक्ष्यमाणस्य परिश्रितस्य नाम।

---

[1] दृष्टवादौ° B.

मत्या वा ॥२॥ सदसः प्राक्तिषूच्चत्वं भवति न नाभिमात्रनियमः शाखान्तरात्।

उदग्वꣳशम् ॥३॥ वंशो मध्यवल्लः[1] सोऽत्रोदगायतो भवति तेनोदगायतम्।

अष्टादशारत्नि ॥४॥ तिर्यक्प्रमाणस्य वक्ष्यमाणत्वात् इदं दैर्घ्यप्रमाणमुच्यते।

एकविꣳशतिश्चतुर्विꣳशतिर्वा ॥५॥ अरत्नयः शाखान्तरात्।

नव तिर्यक् ॥६॥ त्रिष्वपि पक्षेषु नवारत्नयस्तिर्यक्प्रमाणं भवंति।

अर्धायामो वा ॥७॥ आयामो दैर्घ्यम् तस्यार्धं समप्रमाणमर्धायामः · यावत्प्रमाणं दीर्घं सदः क्रियते तस्य दैर्घ्यप्रमाणस्यार्धप्रमाणेन तिर्यक्प्रमाणं पृथुत्वप्रमाणं कुर्यादित्यर्थः · तेनाष्टादशारत्निदैर्घ्यपक्षे नवारत्नि तिर्यक् एकविंशत्यरत्निपक्षे सार्धदशारत्नि तिर्यक्कम् चतुर्विंशत्यरत्निदैर्घ्यपक्षे द्वादशारत्नि तिर्यक्कमिति अथवा सर्वपक्षेषु नवारत्न्येवेति। तत्राष्टादशारत्नि नव तिर्यगिति पक्षे परिशिष्टे सदःसाधनश्लोकः (शुल्व° ७. १४-१५) नवके लक्षणं कुर्यात्त्रीणि कुर्यात्त्रिषु-त्रिषु उत्तमो नवकः पाशः सदसो मानमुच्यते इति। आपस्तम्बः नवारत्नि विस्तारꣳ सप्तविꣳशतिरुदगायतमपरिमितं[2] वा यावद्दृत्विग्भ्यो धिष्ण्येभ्यः प्रासर्पकेभ्य आप्तं मन्येतेत्यपरमिति।

औदुम्बरीं मध्ये ॥८॥ पूर्वनिखातामौदुम्बरीं स्थूणां सदसो मध्ये कुर्यात् · तथा सदः साधनीयम् यथा सा तिर्यक्प्रमाणस्य सदसो मध्ये भवति।

पृष्ठ्यामेके ॥९॥ सदसः उदगायामस्य मध्ये कुर्वन्ति एके नेति · एके-ग्रहणं पूजार्थम् नियमेनोदगायामस्य मध्ये पृष्ठ्या कार्या प्रागायामस्य मध्ये चौदुम्बरीति।

इन्द्रस्य छदिरिति (५. २५) मध्यमं छदिरारोप्यापरपूर्वे च ॥१०॥ पूर्वोक्तेन प्रकारेण सदः प्रसाध्य यावदर्थं स्थूणा निखाय पूर्वापरद्वारयोः पृष्ठ्यामुभयतो द्वार्ये च निखायोपरि वंशादि निधाय रज्ज्वाबन्धनेन सर्वतो दृढं कुर्यात् · ततः प्रथमं सदसो दक्षिणे तृतीये भागे मध्यप्रदेशे इन्द्रस्य छदिरिति मन्त्रेणोदगग्रं मध्यमध्य वंशानामुपरि निधायापरपूर्वे च द्वे छदिषी आरोपयति तस्य मध्यमछदिषोऽपरपार्श्वे पूर्वपार्श्वे चेत्यर्थः।

त्रिवर्गो चोत्तरतः ॥११॥ यादृश एकश्छदिषां त्रिवर्ग उपदिष्टः तादृशा-

---

1) ? °ऊयः B. (ऊवः sec. m.) 2) Thus AB. °त्रातिमु°? but see the same at ६. १३.

वेव द्वौ त्रिवर्गौ तद्वदेव तेनैव क्रमेण उत्तरतो भवतः एको मध्यमे तृतीये भागे द्वितीयस्तत उत्तरे सदसस्तृतीये भागऽइति · छदिस्तृणमयः कट इति प्रागुक्तम् (३. २३) तदभावे भित्तिर्वंशमयः किलञ्ज इति च प्रागुक्तम् मन्त्रः प्रतिछदिरावर्तनीयः।

परि त्वेति (५. २१) परिवार्य परिषीवणग्रन्थ्यभिमर्शनान्यैन्द्रैः (५. ३०) ॥१२॥ उपरि छादनानन्तरं लोकसिद्धैः षड्भिः परिवारकैः सदः पर्यं परिश्रित्य परित आच्छाद्य पूर्वद्वारस्य दक्षिणास्थूणादिप्रदक्षिणाक्रमेण चतसृणां द्वार्याणां परिषीवणम् रज्ज्वां ग्रन्थिकरणम् सदसो निष्ठितस्याभिमर्शनं च एतान्यैन्द्रैः इन्द्रलिङ्गकैर्मन्त्रैः इन्द्रस्य स्यूरित्यादिभिः (५. ३०) कुर्यात् · समाप्ते ग्रन्थिविमोचनमनुक्तमपि तूष्णीं कुर्यात्। छदिषामपि यज्ञविशेषेण संख्याविशेषाः शाखान्तरऽउक्ताः · नवाग्निष्टोमे पञ्चदशोक्थ्ये षोडश षोडशिनि सप्तदश वाजपेयेऽतिरात्रे च एकविंशतिः सत्राहीनानामित्यापस्तम्बः · मानवे नव छदींष्यग्निष्टोमऽउदकूलानि पञ्चदशोक्थ्ये सप्तदशातिरात्रे एकविंशतिः सत्राहीनयोरेकादश षोडशिनि वाजपेये चेति तथा औदुम्बर्यां मध्यमं छदिरादधाति पूर्वमाधायापरमादधाति[1] दक्षिणैरभिनिदधात्युत्तराण्युपकर्षति परि त्वा गिर्वणो गिर इति परिश्रयति मध्यमापरयोः संधाविन्द्राय त्वेत्यारभ्य जपतीन्द्रस्य स्यूरसीति प्रवयतीन्द्रस्य ध्रुवोऽसीति प्रथमं ग्रन्थिं करोत्यान्तात्प्रतिषीवेदपरान्तात्संधीन्प्रतिषीव्य द्वार्याः प्रतिषीव्यतीति नाध्वर्युः प्रत्यक्सदोऽतीयात् धिष्ण्यान्होतारं वा यद्यतीयादिन्द्रऽर्चा संचरेदिति · काठके च न प्रत्यक्सदोऽतीयादध्वर्युः समया यद्यतीयात्नेत्रस्य पतऽइति प्रतिसंचरेदिति।

हविर्धानापरान्तमुत्तरेणाग्नीध्रमग्न्यगारद्वारमन्तर्वेद्यर्धं भूयः सर्वं वा ॥१३॥ अर्धाद्दशारत्निपरिमाणस्य हविर्धानस्य समं द्विधा विभक्तस्य योऽपरोऽन्तभागः अपरार्धम् पश्चिमः समो विभागः तमुत्तरेणार्जव्येनाग्नीध्रमग्नीधः शरणं गृहं मिनोति स्थूणानिखननादिना निष्पादयति · अत एव पञ्चारत्निपरिमितम् हविर्धानापरभागस्य तावत्परिमाणत्वात् · तथा कर्तव्यम् यथा हविर्धानस्याग्नीध्रस्य चापरप्रान्तौ समतया भवतः। मानवे उत्तरतः सदो हविर्धानयोः समयार्धे चतु[:]स्थूणं दक्षि-

१) पूर्वामाधायापरामा° AB.

णद्वारं प्राग्वंशमाग्नीध्रं मिनोति तस्यार्धमन्तर्वेद्यर्धं बहिर्वेदीति च । कीदृश-
माग्नीध्रम् अग्न्यंशम् अग्न्यगारयोरिव दक्षिणपूर्वे द्वारं यस्य · अन्तर्वेदि वेदिमध्ये
अर्धम् अर्थादर्धं बहिर्वेदि अथवा भूयो अर्धाद्बहु अन्तर्वेदि स्तोकं बहिर्वेदि
अर्धम् अर्थादर्धं बहिर्वेदि अथवा भूयो अर्धाद्बहु अन्तर्वेदि स्तोकं बहिर्वेदि
अथवा सर्वमप्यन्तर्वेदि वेदिमध्ये भवति · काठके प्रत्यगुदग्घविर्धानादाग्नीध्रां
शालामर्धमन्तर्वेद्यर्धं बहिर्वेदि प्रागपरस्माद्वेद्यन्तात्सदो नवशयं प्राक्सप्तविंशति-
स्तिर्यगिति[1] · आपस्तम्बः षट्सु प्रक्रमेषु प्रत्यगुत्करादाग्नीध्रं मिनोत्यर्धमन्तर्वे-
द्यर्धं बहिर्वेदि प्राचीनवंशं च चतुःस्थूणं सर्वतः परिश्रितं दक्षिणातउपचारो
ऽपरस्माद्वेद्यन्तात्त्रिषु पुरस्तात्प्रक्रमेषु सदो मिनोतीति ।

निष्ठाप्य वैश्वदेवमसीत्यालभते (५. ३०) ॥ १४ ॥ एवमाग्नीध्रीयं नि°प्य स्पृशति ।

धिष्ण्यान्निवपत्युद्धतावोक्षिते पुरीषं निवपति स्फ्येनान्वारब्धऽउदङ्ङुपविश्य
विभूरसीति (५. ३१) प्रतिमन्त्रम् ॥ १६ ॥ धिष्ण्यानिति वक्ष्यमाणानां सिकतो-
पकीर्णानां पुरीषस्थलानां नामधेयम् · उद्ध°ते भूप्रदेशे तान्धिष्ण्यान्निवपति
स्फ्येन करणभूतेनान्वारब्धे यजमाने उदङ्मुख उपविश्याध्वर्युः वि°मन्त्रम् एकैकेन
मन्त्रेण यथाक्रममेकैकस्मिन्धिष्ण्ये हस्तेनैव पुरी°वपति · न तु स्फ्येन तेन पुरी-
षनिवापस्य कर्तुमशक्यत्वात् स तु यजमानस्यान्वारम्भे करणम् · अत्र पूर्वं स्मा-
र्ताः पञ्च भूसंस्काराः परिसमूहनादयो भवन्त्येव तेषामग्न्यर्थतया गृह्ये (पारस्क° १. १)
विधानात् तत उद्ध°ते उल्लेखनाभ्युक्षणे भवत इति · अत्र च पुरीषं चात्वा-
लादानेयम् चा°षमिति परिभाषितत्वात् (१. ८. ३१) ।

आग्नीध्रीयं पूर्वम् ॥ १६ ॥ आग्नीध्रे भवः आ°यः तमा°यं धिष्ण्यं पूर्वं प्रथमं
विभूरसीति मन्त्रेण निवपति आग्नीध्रगृहस्य मध्ये प्रथमं चिनोति ।

सिकताश्चोपरि रौद्रेणेति (५. ३४) सर्वत्र ॥ १७ ॥ सर्वेषु धिष्ण्येषु पुरीष-
निवापानन्तरं धिष्ण्यानामुपरि रौद्रेणेति मन्त्रेण सिकता उपकिरति · आग्नीध्रीयस्य
प्रकृतत्वात्सर्वत्रेत्युक्तम् · कर्काचार्यास्त्वाहुः सिक°परि कीर्यन्ते तूष्णीमेव रौद्रे-
णेति मन्त्रस्य विभूरसीत्यादिषु सर्वेष्वनुषङ्ग इति अयं च शाखान्तरीय एकव-

१) °अयं विंश° B. °अयं प्राक्सप्तविंश° A.

चनान्तो रौद्रेणानीकेन पाहि माग्ने पिपृहि माग्ने गोपाय मा नमस्तेऽअस्तु मा मा हिꣳसीरिति स्वशाखीयस्य बहुवचनान्तस्य तु धिष्ण्योपस्थाने विनियोगं वक्ष्यति अग्नयः सगरा इति धिष्ण्यानिति (९. ८. २७) एतदपि समूलम् · तथा च मानवे रौद्रेणानीकेनेति सर्वत्रानुषजतीति · काठके च रौद्रेणेत्यनुषङ्गः सर्वत्रेति । अत्र भूसंस्काराः पुरीषनिवापः सिकतोपकिरणं चेत्येते पदार्थाः सर्वधिष्ण्येष्वेकस्यामिव दिशि उपविष्टेन कर्तव्याः आग्नीध्रीये उदङ्मुखेन होत्रीये प्रत्यङ्मुखेन मार्जालीये दक्षिणामुखेन शेषेषूदङ्मुखेनेति ।

षट् सदसि ॥ १८ ॥ आग्नीध्रीयनिवापानन्तरं षड्धिष्ण्यान्निवपति । तानेवाह ·

प्रत्यङ्मुखो द्वारमपरेण होतुः ॥ १९ ॥ पूर्वं सदोद्वार॰ण पृष्ठ्यामुत्तरेण पृष्ठ्यासंलग्नमेव होतुर्धिष्ण्यं प्र॰खोऽध्वर्युर्निवपति ।

दक्षिणपूर्वेणौदुम्बरीं मैत्रावरुणस्य ॥ २० ॥ औ॰र्या आग्नेय्यां दिशि मै॰॰णस्य धिष्ण्यमुदङ्मुखो निवपति । होतृधिष्ण्याद्दक्षिणस्यां दिशि अरत्निचतुष्टये सार्धे पदाधिके प्रशास्तृधिष्ण्यं भवति · तथा चोक्तम् अरत्निसार्धचतुष्के पदे वै होतृधिष्ण्यतः प्रशास्तृधिष्ण्यमानं स्यादिति[1] ।

होतृधिष्ण्यमुत्तरेण चतुरः समान्तरान्ब्राह्मणाछꣳसिपोतृनेष्टृच्छावाकानाम् ॥ २१ ॥ तुल्यान्तरालान् ।

आग्नीध्राद्दक्षिणाꣳ सम्प्रति वेद्यन्ते दक्षिणामुखो मार्जालीयम् ॥ २२ ॥ सम्प्रति समतया आर्जव्येन वेद्य॰लीयं धिष्ण्यं निवपति · मानवे विशेषः दक्षिणत आग्नीध्रस्याग्नीध्रीयाय लक्षणं करोत्युद्धत्यावोक्ष्य चावालात्पाꣳसूनिवपति व्युह्यावोक्ष्य सिकताभिः प्ररोचयत्येवं धिष्ण्यान्निवपति षडन्तःसदसः पृष्ठ्यादेशे होत्रीयं बाहुमात्रे पश्चाद्द्वारस्य दक्षिणं मैत्रावरुणीयं यथैनयोः समयौदुम्बरी[2] भविष्यत्युदीच इतरान्बाहुमात्रान्तरान्ब्राह्मणाछꣳस्यं पोत्रीयं नेष्ट्रीयमच्छावाकं यावति होत्रीयादाग्नीध्रीयस्तावति दक्षिणतः पुरस्तान्मार्जालीयो दक्षिणतश्चाग्नीध्रावालस्यान्तर्वेद्यास्तावाय[3] सꣳस्तृणात्युत्तरतश्चावालस्य शामित्राय लक्षणं करोतीति · धिष्ण्येषु नवपादभागलोका इत्युक्तत्वादष्टादशाङ्गुलानि धिष्ण्यस्य प्रमाणम् अष्टाद-

---

१) होतृधिष्ण्याद्°दिति deest A. २) समया श्रौदु° AB. ३) °णातश्चावाल° A.

शाङ्गुलान्येव परस्परमन्तरालमिति · तथा परिशिष्टे स्थानमप्युक्तम् सदोमध्यमरेखायां तत्रोदीची निरामया तस्याः प्राञ्चं पदं त्यक्त्वा ततो धिष्ण्यानि कारयेदिति।

सदोद्वारं पूर्वेण तिष्ठन्ननुदिशत्याहवनीयबहिष्पवमानदेशचात्वालशामित्रौदुम्बरिब्रह्मासनशालाद्वार्यप्राग्वंशान्सम्राडसीति (५.३२) प्रतिमन्त्रम् ॥२३॥ अष्टानां धिष्ण्यानां निवापानन्तरमध्वर्युः सदसः पूर्वद्वारस्य पुरस्तात्तिष्ठन् सम्राडिमाहवनीयादीननुदिशति विलोकयति। अनुदेशश्च संदर्शनमात्रम् तथा चाहुर्माधवाचार्याः अनुदेशो नाम विद्यमानमेव पदार्थमनु त्वमेवं भवसीति निर्देश इति। तत्र सम्राडसीत्याहवनीयमीक्षते उत्तरवेदिस्थम् · ततश्चात्वालस्य दक्षिणतोऽन्तर्वेदि बहिष्पवमानदेशं परिषद्योऽसीति · नभोऽसीति चात्वालमीक्षते · मृष्टोऽसीति शामित्रमीक्षते · ऋतधामासीत्यौदुम्बरीं सदोमेथीमीक्षते · प्रशास्तुर्दक्षिणतः सदसि ब्रह्मासनमीक्षते · अजोऽसीति शालाद्वार्यमग्निम् · अहिरसीति प्राग्वंशमाद्यं गार्हपत्यमिति प्राग्वंश इति यौगिकं नाम · अनुषङ्गपक्षे सम्राडसीत्यादिष्वपि रौद्रेणेत्यस्यानुषङ्गः।

उत्करॆ समूह्योऽसि विश्ववेदा ऊनातिरिक्तस्य प्रतिष्ठेति[१] ॥२४॥ अनुदिशति ईक्षते · अत्रापि रौद्रेणेत्यनुषङ्गो भवत्येव कर्कमते ॥ अथाग्नीषोमीयपशोरुपक्रममाह ·

· परिस्तरणपात्रसंसादनप्रोक्षणाज्यनिर्वपणानि कृत्वोत्तरपरिग्रहादि करोति ॥२५॥ आहवनीयशालाद्वार्यदक्षिणाग्नीनां परिस्तरणम् पाशुकानां पात्राणामासादनम् तेषामेव प्रोक्षणम् पाशुकस्यैवाज्यस्य निर्वपणम् · अत्रानुक्तमपि आज्यनिर्वापात्पूर्वं कुक्कुटाहननम् आज्यनिर्वापादनन्तरं च वेदकरणं भवत्येव · ततो महावेदेरुत्तर रोति महावेदेः संमर्शनं प्राकृतम् · अधुना खननस्यावसरः तस्य निषेधाभावात्खननादि करोतीत्यर्थः उत्तरपरिग्रहस्यादौ यत्खननमेव तदादीत्यर्थः।

अन्तःपात्यसहितं बर्हिरन्तं प्रेष्यति ॥२६॥ अन्तःपात्यसमीपे स्थितो बर्हन्तम् प्रोक्षणीरासादयेध्मं बर्हिरुपसादयेत्येवमन्तमेव (२.६.३४) प्रेष्यति · मानवे नाप्रोक्षितामाक्रामत्युत्तरं परिग्रहं परिगृह्य प्रत्यवमृज्याग्रेण पृष्ठ्याशङ्कुं तिर्यञ्चं स्फ्यं स्तब्ध्वा प्रोक्षणीरासादयेत्यादि।

१) See VS. Kāṇva ५. ८. ५. pag. १६०.

तत्र सर्वमासादयति ॥२७॥ तत्रान्तःपात्ये · सर्वशब्देनात्राग्नीषोमप्रणयनसमये यस्य-यस्य नयनम् (७. ५) तत्सर्वमुच्यते · तेन शकटबर्हिः ग्रावद्रोणकलशसोमपात्राणि इध्मं चतुष्टयं च संनद्धं वपाश्रपण्यौ रशने मन्थनचतुष्टयं चेति ।

अत्रैव प्रोक्षणमिध्मं निधायाग्नीषोमीयाय ॥२८॥ इध्ममग्नीषोमीयार्थं स्थापयित्वा अत्रैवान्तःपात्यदेशऽएव महावेदेः प्रोक्षणं भवति · बर्हिःप्रोक्षणे तु बर्हिरसि स्रुग्भ्यां त्वेति पयस्यापक्षे अनूबन्ध्यापक्षे तु बर्हिरसि त्वा जुष्टमिति · अत्र शकटबर्हिष एव प्रोक्षणम् आतिथ्याबर्हिषस्त्वग्रे भविष्यति इध्मस्य च नेदानीम् तयोरुपरिष्टात्प्रोक्षणविधानात् स इध्ममेवाग्रऽइत्यादिना (३. ६. ३. १४) अतोऽत्र तयोर्न प्रोक्षणम् ।

वेदेः स्तरणमग्रहणं प्रस्तरस्यापराह्णे ॥२९॥ अप°ह्णे महावेदेः स्त°णं भवति · अयं तु विशेषः तत्र प्र°स्य ग्रहणं न भवति सोमस्य प्रयोजनाभावात् · अत्र काठके विशेषः वेदिशेषं स्तृणाति ससदोहविर्धानं धिष्ण्यखरवर्जमिति · मानवे च वेदिं स्तृणाति यथापदलोभा धातुशो धून्वन्तो वानपच्छादयन्तो धिष्ण्यान्खरोपरवोत्तरवेदिं चेति ।

अर्धव्रते प्रत्ते प्रविश्य प्रणयनीयाधानम् ॥३०॥ वेदिस्तरणानन्तरं पत्नीयजमानाभ्यामर्ध°त्ते सति प्रविश्य पत्नीशालां शालाद्वार्ये प्रणयनीयस्येध्मस्याधानं कर्तव्यम् आग्नीध्रीयप्रणयनार्थम् अयमपीध्मोऽपरिमितकाष्ठकस्त्रियूनबद्धः स्यात् (१. ३. २१) । प्रविश्येति प्रवेशनेन निष्क्रमणं लक्ष्यते तच्च शाखाछेदनार्थम् यतोऽग्रे वक्ष्यति परिवाप्यायै दोहनमिति (१. २७) · तत्र च सांनाय्यधर्मप्रवृत्त्या शाखाछेदनवत्सापाकरणादिकमपराह्णे प्रकृतिवत्प्राप्नोति तस्य चावसरो न ज्ञायते तेन प्रवेशनेन लक्षितस्य निष्क्रमणस्याज्ञानप्रयोजनस्यैतत्प्रयोजनं कल्पते यच्छाखाछेदनार्थमेतन्निष्क्रमणमिति तेनात्र शाखाछेदः प्रगुणीकरणम् · तत्र सप्रवर्ग्ये चतुर्णां दोहानां वत्सापाकरणम् तत्र प्रथमतृतीयचतुर्थवत्सापाकरणे इन्द्राय सरस्वतीवते भागमिति गोरुपस्पर्शने विशेषः द्वितीये विन्द्राय भागमिति दधिघर्मस्य · अप्रवर्ग्ये तु त्रय एव दोहाः तत्र दधिघर्मो न भवति · ततः शाखापरिवासनमुपवेषकरणं शाखोद्वहनं चेति एतावत्कृत्वा शालां प्रविश्य प्रणयनी-

याधानमिति · मानवे च स्तरणानन्तरम् अर्धव्रते प्रदायोत्तरत आहवनीयस्येध्म-
बर्हिरुपसादयतीति · काठके च वत्सापाकरणस्य कालान्तरमुक्तम् वत्सानपा-
कृत्य प्रवर्ग्यवति पात्राण्युद्वास्याग्निकर्मणाग्निं प्रणीयेति उपसत्समासानन्तरं प्रा-
क्प्रवर्ग्योत्सादनादित्यर्थः · मानवे च उत्तमायामुपसदि पौर्वाह्णिकीं कृत्वा शा-
खामाछित्यर्धव्रते प्रदाय सद्यः कुर्यादापराह्णिकीमिति · आपस्तम्बे च उत्तरपरिग्र-
हानन्तरमुक्तम् उत्तरं परिग्रहं परिगृह्णात्यत्र प्रतिप्रस्थाता शाखामाहृत्य मैत्रा-
वरुण्याः पयस्याया वत्सानपाकरोति प्रोक्ष्य बर्हिस्त्रिर्वेदिं प्रोक्षति नाप्रोक्षिता-
मभिचरन्त्यथैनां बर्हिषा बहुलं प्राचीनꣳ स्तीर्वेति · प्रतिप्रस्थातुः सवनीयनिर्वा-
पविधानात् तस्यैव शाखाहरणं वत्सापाकरणं च[]युक्तम् · एवं च कात्यायनेना-
ग्नीदेर्वपतीत्यादिना (९.१.१५) आग्नीध्रस्य पुरोडाशधानाकरम्भदधिपयस्यानूपसव-
नीपकरम्भविधानात्तत्करणानूपं शाखाछेदनवत्सापाकरणादोहादिकं तेनैव कर्तव्यम्
सवनीयानामलङ्करणान्तस्याङ्गकलापस्य तत्कर्तृकत्वविधानात् · तेन प्रातः प्रथमो-
पसदोऽनन्तरं वा उपसत्समासानन्तरं वा उत्तरपरिग्रहानन्तरं वा बर्हिःप्रोक्षणा-
त्प्रागाग्नीध्रेण शाखाछेदनादि वत्सापाकरणान्तं कर्तव्यम् ।

आज्याधिश्रयणस्रुक्संमार्जनोद्वासनावेक्षणानि कृत्वा शालाद्वार्यमपरेणास्ते यज-
मान उपस्थे सोमं कृत्वा ॥ ३१ ॥ आग्नीध्रीयप्रणयनार्थमिध्मं शालाद्वार्येऽभ्याधाय
अग्नीषोमीयार्थस्याज्यस्याधिश्रयणं पश्वर्थानामेव स्रुचां संमार्जनमाज्योद्वासनं पत्नीक-
र्तृकमवेक्षणं च कृत्वा शा॰रेण यजमानः उत्सङ्गे सोमं कृत्वा उपविशति · अनेक-
यजमानकऽएक एव · उपस्थे सोमं कृत्वेति क्त्वाप्रत्यय आनन्तर्यमात्रे पदार्थानां
भिन्नकर्तृकत्वात् · अत्र चेध्माधानाज्याधिश्रयणानन्तरं शालातो निष्क्रम्यान्तःपात्य-
समीपे स्थित्वा स्रुचः संमृड्ढीत्यादिप्रैषशेषं (२.६.३४) ब्रूयात् · ततः स्फ्योदकप्रहारं
च कुर्यात् पाणिप्रक्षालनं च बर्हिरन्तप्रैषानन्तरं (२६) पूर्वमेव कृतं सामर्थ्यात् · ततो
ऽन्तःपात्यदेशे स्फ्यसादनमत्रैव कार्यम् सकलप्रैषदानानन्तरमेव स्फ्योदकप्रहारादे-
र्दृष्टत्वादिति · ततः स्रुक्संमार्जनादि ।

शालाद्वार्यमपरेण सोमक्रयणीपदं परिकिरति ॥ ३२ ॥ अध्वर्युः · पदमिति
पदपांसून् सोऽदं च यत्पूर्वं (७.६.२०-२४) स्थाल्यामोप्य पत्न्यै समर्पितमासीत्तदेव।

चतुर्धैकऽआहवनीयस्योपयमनीष्वाग्नीध्रीयस्याक्षोपाञ्जने च ॥३३॥ शाखिनः सो°णीपदं च°र्धा एकं सच्चतुरो भागान् चतुर्षु स्थानेषु कुर्वन्ति · क्व-क्वेत्याह एकं चतुर्भागमाह°नीषु अग्निप्रणयनकाले तथा द्वितीयं[1] चतुर्भागमाग्नीध्रीयस्योपयमनीषु तृतीयं[2] चतुर्भागमक्षोपाञ्जने (३. ३२) अक्षधुरावनक्तीत्यत्राञ्जनार्थाऽज्यशेषे पत्नोपाणावित्यर्थः · चकारादिह च शालाद्वार्यमपरेण चतुर्थं भागं[3] परिकिरति ।

आज्यप्रोक्षणीरन्तःपात्यदेशऽउत्पूय पश्वाज्यग्रहणाम् ॥३४॥ आ°णीरन्तःपात्यसंज्ञके देशे शङ्कोः पश्चाद्धविर्वेदि उत्पूय प्रकृतिवदेवोत्पवनं कृत्वा आज्यावेक्षणं च कृत्वा पश्वा°णां करोत्यध्वर्युः पशुसम्बन्धि सपृषदाज्यमाज्यग्रहणमित्यर्थः · अत एव पश्वा°णामिति निर्देशात्पूर्वत्र पशुतन्त्रमुपक्रान्तमिति ज्ञायते · उत्पवनस्यान्तःपात्यदेशानियमः शाखान्तरात् · अतः पत्न्यवेक्षणानन्तरमग्नीदाज्यमानीय बहिर्वेद्येवासादयति · प्रोक्षण्यासादनमपि पूर्वं तत्रैव कृतम् ।

धारयन्त्याज्यानि ॥३५॥ ग्रहणानन्तरं जौहवादीन्याज्यानि अन्ये धा°न्ति आहवनीयं प्रति नयनाय · अध्वर्युणार्पिताः सतीः स्रुचोऽन्ये धा°न्ति ।

अपिव्रताश्चान्वारभन्ते यजमानम् ॥३६॥ अस्मिन्काले · अनेकयजमानके सर्वेषां यथास्वमपिव्रतान्वारम्भः · अपिव्रतास्तऽउच्यन्ते येषां यजमानव्रते अपिव्रमस्ति दायाद्येनाविभक्ता इति पितृभूतिः अपिव्रता गोत्रजा इति कर्कः · अपि संसर्गे व्रतमिति कर्मनाम संसृष्टं साधारणं कर्म येषाम् ते अपिव्रता अविभक्ता दायादाः ते ह्येकेनापि कृष्यादि कर्म कृतं सर्वऽउपजीवन्तीति हरिस्वामिनः · व्रतं भोजनम् यजमानेन[4] सह प्राप्तभोजनः स्यात् बन्धुवर्गः स्यादित्यर्थ इति माधवः (३. ६. ३. २) ।

वाससा छादयन्त्येनान् ॥३७॥ तानेव सयजमानान् अपिव्रतानहतेन वा°सा छादयेत् शाखान्तरात् · अनेकयजमानके सर्वेषां छादनम् · प्राग्दशेन वाससामात्यं यजमानं च प्रच्छादयन्ति पुमांसो यजमानमन्वारभन्ते स्त्रियः पत्नीमिति मानवे ।

---

1) तृतीयं AB. 2) Thus B. द्विती° A. 3) चतुर्भा° B. 4) [यजमा]नव्रते अपिव°यजमा[नेन] deest B.

चरत्सु नाद्रियेत ॥ ३८॥ च॰त्सु इतस्ततो व्यापृतेष्वपिवित्रेषु तेषामन्वारम्भं नाद्रियेत अतश्चापचारे प्रायश्चित्ताभावः ॥ ॥ षष्ठी कण्डिका ॥ ६॥

प्रदीप्तमिध्मं त्वᳯ सोमेति (५.३५) प्रचरण्याभिजुहोति ॥ १॥ ततोऽनन्तरं प्र॰ध्ममभि प्रदीप्तस्येध्मस्योपरि प्र॰ण्या स्रुचा सकृद्गृहीतमाज्यं जु॰ति · तत्रेदᳯ सोमायेति देवतोद्देशः। प्रचरणी नाम पालाशी स्रुक् जुह्वरेव अन्यासु व्यापृतासु तया प्रचर्यतऽइति प्रचरणी · अतस्तस्या आसादनादि सदैव कर्तव्यम् · सा च वसाहोमहवनीतः पृथग्भवति यतोऽनूबन्ध्यायां गर्भसद्भावे प्रतिप्र॰प्रचरण्यां मेधमित्यत्र (२५. १०. ८) वसाहोमहवन्यां व्यापृतायां प्रचरणी दृश्यते · तथा च मानवे · प्राग्वᳯशे पात्राणि प्रयुनक्ति स्रुवाद्दक्षिणाᳯ स्रुचं प्रचरणीं तस्याः प्रथमᳯ संमार्जनमिति।

जुषाणोऽअप्तुरिति (५.३५) द्वितीयाम् ॥ २॥ ततः पुनरपि प्रचरण्यां सकृद्गृहीतं गृहीत्वा प्रदीप्तस्येध्मस्योपर्येव द्वि॰यामाहुतिं जुहोति · अत्र चेदमप्तवऽइति देवतोद्देशः।

अग्नये प्रह्रियमाणायानुवाचयति ॥ ३॥ होमानन्तरं प्रदीप्तमिध्ममुद्यम्योपयमनीभिरुपयम्य चाग्न॰णायानुब्रूहीति होत्रानुवाचनं कारयति।

सोमाय प्रणीयमानायेति वा ॥ ४॥ प्रैषं ब्रूयात् उभयोर्विकल्पेन श्रवणात् (३. ६. ३. १) शाखान्तरे त्वग्नीषोमाभ्यां प्रणीयमानाभ्यामित्येवंविधः प्रैष उक्तोऽस्ति।

आहवनीयं गच्छन्त्यादाय ग्रावद्रोणकलशसोमपात्राणीध्मं चतुष्टयं च संनद्धं वपाश्रपण्यौ रशने शकलवृषणमरणी च ॥ ५॥ अनुवाचनानन्तरं सर्वे आह॰न्ति ब्रह्मयजमानाध्वर्य्वादयो बहवः · किं कृत्वा ग्रावादीनि पूर्वतरं हस्ते गृहीत्वा · पञ्च ग्रावाणोऽभिषवार्थाः ते च पूर्वमधिषवणे स्थापिता अपि वचनात्तत्र आनीयन्ते संस्कारार्थम् · द्रोणकलशो द्रुममयः कलशाकारो वैकङ्कतः यस्योपरि धाराग्रहा गृह्यन्ते · तथा सोमपात्राणि सर्वाणि नव ग्रहपात्राणि दश चमसाः परिप्लवा ऋतुपात्रे ऊर्णापवित्रे स्थाल्यश्वतस्रः पूतभृदाधवनीयौ उदञ्चनः सोमासन्दी इत्येवमादीनि · कठसूत्रे एतेषां सर्वेषामग्नीषोमीयपात्रैः सहासादनं प्रोक्षणं नयनं च विहितमस्ति स्वसूत्रे तु द्रोणकलशस्य पृथगुपादानं श्रुत्यनुकरण-

मात्रम् · इध्मं विंशतिकाष्ठकम् · परिध्यादिचतुष्टयं च संनद्धं सम्यग्बद्धम् चतुष्टयं च प्रागुक्तम् (८.१२-१६) तदेवेह नेयम् · वपा श्रप्यते याभ्यां ते वपाश्रपण्यौ काष्मर्यमय्यौ विशाखाविशाखे · द्वे रशने द्विगुणरशना पश्वर्था यूपार्था त्रिगुणरशना च · शकल एकः वृषणौ द्वे दर्भतृणे अरणी द्वे अधरारणिरुत्तरारणिश्चेति मन्थनचतुष्टयम् । मानवसूत्रे ऽग्नीषोमीयमन्नं चेति पठ्यते · एतानि सर्वाण्यादायाहवनीयं प्रति गच्छन्ति · आज्यानि च यैः पूर्वं धृतानि (६.३५) तानि तऽएव नयन्ति दृष्टार्थत्वात् अतस्तानि पृथङ्नोक्तानि । यद्यप्यग्नीषोमीये मन्थनस्य विकल्पः तथापि मन्थनचतुष्टयं नीयतऽएव सवनीयार्थम् ग्रावादीनामप्युत्तरेष्वपरेवोपयोक्ष्यमाणानां नयनविधानात् ।

अग्ने नयेति (५.३६) वाचयति ॥ ६॥ आग्नीध्रं प्रति गमनार्थं प्रवृत्तेषु अध्वर्युर्यजमानं वा॰ति ।

उत्तरेण सदो हृत्वाग्नीध्रेऽग्निं निदधाति ॥ ७॥ सद उ॰रेणैव तत्सर्वं हृत्वा आग्नीध्रमध्ये आग्नीध्रीये धिष्ण्येऽग्निं स्थापयति · मानवे अन्नं चाग्नीषोमीयमनुनयन्त्युत्तरेण सदो नयन्त्याग्नीध्रीये धिष्ण्येऽग्निं निधायाग्ने नयेत्यभिजुहोत्याग्नीध्रे यज्ञपात्राण्यासादयन्त्यासन्दीं ग्राववायव्यानि द्रोणकलशमन्नं बध्नातीति · काठके आग्नीध्रीये धिष्ण्ये प्रत्यङ् तिष्ठन्निधायाग्ने नयेति[1] जुहोत्यत्र ग्राववायव्यानि सादयन्त्यासन्दीं चेति · तेन यद्यपि स्वश्रुतौ (३.६.३.११) सूत्रे चाग्नीध्रऽइत्येतावदेवास्ति तथापि तत्र धिष्ण्ये निधानमवसीयते ।

ग्रावद्रोणकलशसोमपात्राणि च ॥ ८॥ आग्नीध्रमध्ये नि॰ति सर्वं यद्येन गृहीतम् तत्स एव निदधातीत्यर्थः तानि चायं न इति होमानन्तरम् तथा श्रुतत्वात् स निहितं॰सादयन्तीति (९१२-१३) ।

अयं न इति (५.३७) जुहोत्यस्मिन् ॥ ९॥ आग्नीध्रीयेऽग्नौ सकृद्गृहीतमाज्यं परिस्तरणसमिदाधानपूर्वकं जु॰ति · इदमग्नयऽइत्येतावानेव त्यागः · ततो ग्रावादीनां निधानम् सोमासन्द्याश्च तत्र स्थापनम् ।

उत्तरेण परिक्रम्याहवनीयस्योत्तरतो निदधत्यन्यदाज्यसोमवर्जम्[2] ॥ १०॥

---

१) नय इति AB.　२) ? निदधात्य॰ AB. १.

तन्निहितमाग्नीध्रीयमुत्तरेण परिक्रम्य इध्मादीन्यादायाहवनीयं प्रति गत्वा आह-ृतोऽन्यदिध्मादि सर्वं निदधति[१] स्थापयन्ति आज्यानि सोमं च वर्जयित्वा · अत-आज्यसोमानां धारणमेवासादनपर्यन्तम् · अत एव वचनादाज्यानां सोमस्य चानयनं प्रतीयते · सोमस्य च नयनं यजमानकर्तृकं ब्रह्मकर्तृकं वा भवतीत्यग्रे वक्ष्यति (११. १. १३-१४) · अथेतरं दधतीति (३. ६. ३. १३) श्रुतेराहवं दधतीत्युक्तम्[२]।

धिष्ण्याव्यवायोऽध्वर्योः ॥ ११ ॥ धिष्ण्यानामव्यवायः अन्तरा गमनं न कार्यमध्वर्युणेत्यर्थः · मानवे तीर्थमन्तरा चात्वालमाग्नीध्रं च न धिष्ण्यान्व्यवेयाद-ध्वर्युश्चेत्प्रत्यङ् धिष्ण्यानतिक्रमेदैन्द्रीं निगदेदिति · काठके प्रत्यङ् धिष्ण्यान-तिसर्पेदध्वर्युरिति · तेन हविर्धानाग्नीध्रयोरन्तरालेनैव सदसि[३] गमनागमने सर्वे-षाम् पत्नीशालायां वाग्नीध्रमुत्तरेणैवेति ।

इध्मप्रोक्षणादि करोति ॥ १२ ॥ आहवनीयसमीपमागत्य आहवनीय-स्योत्तरतः पशुसाधनानीध्मादीनि निधाय इध्मादि पाशुकं कर्म निरूढवत्करोति ।

खरोत्तरार्धऽएकवृत्स्तरणम् ॥ १३ ॥ बर्हिःस्तरणकाले खरार्धे हविर्धा-नमध्ये उपरवाणां पुरस्तात्कृतस्योत्तरभागे आतिथ्यबर्हिषः एकावृत्ति सकृदेव स्तरणं करोति एकवृत्स्तृणातीति श्रुतेः (३. ६. ३. १४) । स्थानान्तरमाह ·

पश्चोद्वोत्तरवेदेः ॥ १४ ॥ उभयमेतच्छाखान्तरात् ।

आहवनीयेक्षणात्कृत्वोरु विष्णविति (५. ३८) जुहोति ॥ १५ ॥ सूर्यस्त्वेति आहवनान्तं कर्म कृत्वा (२. ८. ४) तत आहवनीयेऽग्नौ सकृद्गृहीतमाज्यं प्रचरण्या जुहोति · अनेकयजमानके यज्ञपती तिर यज्ञपतींस्तिरेत्यूहः ।

पुरस्ताद्वा समिधावाधायेति श्रुतेः (३. ६. ३. १४) ॥ १६ ॥ वाशब्दोऽस्य पक्ष-स्यावधारणे पुरस्तादेव प्रागेवाहवनीयेक्षणात् उरु विष्णवित्येष होमः कार्यः ।

आसाद्याज्यानि दक्षिणेऽनसि कृष्णाजिनमास्तीर्य तस्मिन्त्सोमं निदधाति देव सवितरिति (५. ३९) ॥ १७ ॥ जुह्वादीनामाज्यस्थाल्यन्तानामासादनं कृत्वा तदनन्तरं तेषामालम्भात्मालम्भोदकालम्भांश्च कृत्वा ब्रह्मणः सकाशाद्यजमानसकाशाद्वा सोममादाय हविर्धानं प्रविश्य ततो दक्षिणेऽनसि दक्षिणे हविर्धाने नीडे कृष्णं प्रा-

---

१) °दधाति A. २) दधाती° AB. ३) सदसि deest B.

ग्रीवमुत्तरलोम चास्तीर्य तत्र कृष्णाजिने सो॰ति · अत्र यद्यपि सूत्रकारेणासा-द्याज्यानीत्याज्यासादनानन्तरमेव कृष्णाजिनास्तरणाद्युक्तम् तथापि प्राकृतं विकृता-वित्यनेन (१. ५. ४) न्यायेनाज्यालम्भात्मालम्भोदकस्पर्शनानि ततः पूर्वं भवन्त्येव · तथा च शाखान्तरे आसाद्य हवींऽषि संमृश्याप उपस्पृश्य राजानमादाय प्रपद्यत ऽइति । न्यग्रोधश्चैतस्यापि सोमेन सहैव प्रणयनमासादनं च ऊहश्च मन्त्रे एतौ ते सोमन्यग्रोधौ तौ रक्षस्व मा वा दभतमित्युभयोः स्थापनम् ।

एतत्त्वमिति (५. ३१) विसृज्योपतिष्ठते ॥१८॥ यजमानः सोमं विसृज्यैत-त्त्वमित्यनेन मन्त्रेण सोममुप॰ते · अत एव विसर्गोपदेशात्कृष्णाजिने निधानकाले यजमानः सोममन्वारभतऽइति प्रतीयते । न्यग्रोधे चास्य मन्त्रस्योहः एतद्युवं देवौ सोमन्यग्रोधौ देवौ॰ इति · अनेकयजमानके सर्वे गृहपतिमन्वारभन्ते विसृ-ज्योपस्थानं कुर्वाणाम् तन्मन्त्रे इदं वयं मनुष्यानिति बहुषु इदमावां मनुष्या-निति द्वियजमानके विशेषः ।

स्वाहा निरिति (५. ३३) निष्क्रम्याग्नेे व्रतपा इत्याहवनीये (५. ४०) समिधमाधाय मदन्तीरुपस्पृश्याङ्गुलीर्विसृजति ॥१९॥ ततो यजमान एव हविर्धानान्निष्क्रम्य॰सृजति विमुञ्चति · अनेकयजमानके निष्क्रमणाद्यङ्गुलीविसर्गान्तं[1] सर्वेषां भवति ।

पत्नी च गार्हपत्ये तूष्णीं मदन्तीरुपस्पृश्य ॥२०॥ गार्हे॰ष्णीं समिधमाधाय · नानागार्हपत्यपक्षे तु स्वस्वगार्हपत्ये सर्वासां[2] समिदाधानाद्यङ्गुलीविसर्गान्तम्[3] एकगार्हपत्यपक्षे तस्मिन्नेव सर्वाः पत्न्यः समिध आदध्युः ।

चात्वाले मदन्तीः कृत्वा ॥२१॥ अवसिच्य प्रतिपाद्य वक्ष्यमाणं कर्म करोति · चरितार्थत्वात्प्रतिपत्तिरियं मदन्तीनाम् ।

नामग्रहणाभोजनेऽअस्यातः कुर्वन्ति ॥२२॥ अत ऊर्ध्वमस्य दीक्षितस्य । अर्थादतः पूर्वं न कुर्वन्तीति निषेधोऽवसीयते · पुरुषमात्रधर्मोऽयम् ।

व्रत्यनिवृत्तिः ॥२३॥ व्रतमर्हतीति व्रत्यं पयोयवाग्वादि यद्यस्य यजमानस्य वर्णविशेषेणोपदिष्टम् तस्यातः परं नि॰त्तिर्भवति ।

हविःशेषभक्षः ॥२४॥ अतः परं यजमानो हव्यो भवेत् हविषां पुरो-

---

१) लीर्वि B. लिवि A. २) deest B. ३) Thus B. °लीर्वि° A.

डाशधानादध्यादीनां शेषस्यैव भक्षो यस्यासौ हूतंक्षः · स च प्रातरेव नाद्य तस्मादुपवसथे नाश्नीयादिति निषेधात् (१.५.१.६) · अत्र मानवे विशेषः हविष्यं पत्नी प्राश्नीयाद्धविरुच्छिष्टं यजमानोऽग्रेण हविर्धाने परेण स्रुग्दण्डान्दक्षिणातिक्रम्यापरो ब्रह्मण उपविशत्येष संचर इति ।

अग्नीषोमीयोऽतः पशुः ॥२५॥ अत ऊर्ध्वमग्नी॰यः पशुर्भवति · तस्याज्यासादनान्तं कर्म प्रागुक्तमेव पशोर्देवताविधानार्थमेतत्सूत्रम् अव्यवधानज्ञापनार्थं च · अतः परं सौमिकैः पदार्थैरव्यवहितं पाशुकमेव कर्म कर्तव्यमिति · उपांशु॰षोमीयादित्यस्य (७.२.३०) अयमवधिरिति ज्ञापनार्थम् · साद्यस्क्रे च (२२.३.२१) पुरोडाशो वाग्नीषोमीयस्थान इत्युक्तम् सोऽप्यस्मिन्नवसरे यथा स्यादित्येवमर्थमग्नीषो॰शुरित्यत्र सूत्रं कृतम् ।

तद्देवत्यः पशुपुरोडाशः ॥२६॥ यद्देवत्यः पशुः ॥ ॥ सप्तमी कण्डिका ॥७॥

अभ्र्यादि करोति ॥१॥ अङ्गुलिविसर्गानन्तरमभ्र्यादानादि पाशुकं कर्म भवति · आज्यासादनान्तस्य पूर्वं कृतवात् अभ्र्यादानादेरेवायमवसर इति ।

दक्षिणेन हविर्धानं पश्चिडा७ हरति ॥२॥ पश्चिडां (६.१.३) सदसि होतुर्पणाय नयन् ह॰नं द॰न ह॰ति तथा च सति प्रादक्षिण्येन हरणात्स्मृत्यनुग्रहः कृतो भवति ।

गुदतृतीयं च ॥३॥ उपयड्ढोमार्थं होतृधिष्ण्यं प्रति सदसि नेयम् तदपि दक्षिणेन हविर्धानं हरति ।

मार्जालीयं दक्षिणेन जाघनीम् ॥४॥ पत्नीसंयाजार्थं पत्नीशालायां जाघनी नेतव्या · तां[1] च मा॰लीयधिष्ण्यं द॰न हरति प्रादक्षिण्यानुग्रहाय ।

प्रत्याहृत्य वा सोमाहवनीययोरव्यवायात् ॥५॥ अथवा येन मार्गेण पूर्वमाहृतानि अन्तरा यूपाग्नी (६.६.१६) तेनैव मार्गेण प्र॰त्य एतानि इडादीनि उत्तरेण हविर्धानं हरति · कुत एतत् सो॰यात् यद्येतानि हविर्धानं दक्षिणेन वा प्रत्याहृत्य वा न नीयन्ते तदानीं सो॰योरन्तरालेन हरणात्तयोरेभिर्व्यवायः कृतो भवति न चैतद्युज्यते तस्माद्दक्षिणेन वा प्रत्याहृत्य वा एतानि हर-

1) ? स B pr. m. सा B sec. m. A.

तीति · तत्र दक्षिणेन हरणे प्रादक्षिण्योपचारात्स्मृत्यनुग्रहः प्रत्याहृत्य हरणे चोत्तरत-उपचारतया श्रुत्यनुग्रहो भवति · तस्मात्प्रत्याहृत्यैवेत्ययमेव पक्षोऽव-धार्यते · वावधारणे ।

यूपैकादशिनी चेद्रथाक्षमात्राण्यन्तराणि ॥ ६ ॥ ज्योतिष्टोमे हि विकल्पेन आग्नेयोऽग्निष्टोमे सवनीयः पशुरित्यादयः (१. ८. २) स्तोमायनसंज्ञाः पशवो भवन्ति विकल्पेनाग्नेयसारस्वतादयो वारुणपर्यन्ताः (२६) एकादश सवनीया भवन्ति · तेषां नियोजनार्थमेक एव यूपः प्रतिपशु एकैको यूपो वा भवतीत्येतदनेनो-च्यते यूपिनी चेदिति · एकादशानां वर्ग एकादशिनी यदि पक्षैकादशिन्यामे-कादश यूपा भवन्ति तदायं विशेषः रथाक्षप्रमाणानि यूपानामन्तरालानि भव-न्ति · रथस्याक्षो रथाक्षः चतुःशतमक्ष इति शुल्वकृतोक्तत्वात् (२) चतुर्भिर-धिकैः शताङ्गुलैरक्षो भवति द्वादशाङ्गुलश्च यूपावटः · अत्र च वेदिमाने विशेषः शुल्वकृतोक्तः (६) यथायूपं वेदिवर्धनमित्येतद्व्याख्यामो[1] या रज्जुरेकादशोपरवा-न्त्संक्षिपति दश च रथाक्षांस्तस्या यश्चतुर्विंशो भागः स प्रक्रमस्तेन वेदिं मिमी-यादिति[2] · चतुर्विंशत्याङ्गुलैरेकोऽरत्निः एवंविधैर्दशभी रथाक्षैरेकादशोपर-वैश्चाष्टाचत्वारिंशदरत्नयो विंशत्यङ्गुलैरधिका भवन्ति तत्र चतुर्विंशतितमे भागे द्वावरत्नी एकमर्धाङ्गुलमङ्गुलतृतीयभागसहितम्[3] एतावद्भवति · एतद्यूपैकादशिन्यां प्रक्रमस्य परिमाणम् एतेन परिमाणेन पञ्चदशमथैकविंशमित्यादिनोपायेन[4] वे-दिमानं कुर्यात् । पक्षान्तरमाह ·

पूर्वार्धं वा समं विभज्य ॥ ७ ॥ अथवा प्राकृतप्रमाणमेव वेदेः पूर्वार्धं सममेकादशधा विभज्य एकादश यूपान्निखनेत् · अस्मिन्पक्षे वेदिवृद्धिर्न भवति ।

पक्षसंमिता वाग्नौ ॥ ८ ॥ यदि साग्निचित्ये ज्योतिष्टोमे यूपैकादशिनी भवति तदा पक्षान्ता वा यूपिनी भवति पक्षसंमितं वेदिपूर्वार्धं समं विभज्यै-कादश यूपान्निखनेत् अथवा साग्निचित्येऽपि सकलस्य वेदिपूर्वार्धस्य समविभा-गेन वा रथाक्षमात्राण्यन्तराणीति वा · एवं त्रयोऽपि पक्षा अग्नावपि भवन्ति । तत्रेतिकर्तव्यताविशेषमाह ·

---

1) See २२. 2) निर्माय Çulv. 3) i. e. $\frac{5}{6}$ angula. 4) शुल्व० ७. १५. see at ८. ३. ११.

यूपाङ्कत्यश्चादानयवावपनानि सकृत् ॥ ९ ॥ तत्र यूपैकादशिन्यां यूपाञ्जतिः अश्वादानं यवावपनं चेत्येतानि सकृत् भवन्ति । कुतः यूपाञ्जतिस्तावदाराडुपकारं करोति । अतश्च सर्वयूपच्छेदनात्प्राक् क्रियमाणा अगृह्यमाणविशेषत्वात्तन्त्रं भवति । सकृदात्तयैवाश्र्या सर्वयूपावटपरिलेखादिसिद्धेः सकृदेव भवति । एकवारमेव संस्कृताभिर्यवमतीभिः प्रोक्षणीभिः सर्वयूपानां प्रोक्षणसिद्धेः सकृदेव यवावापः । अत आराडुपकारकत्वादेतानि तन्त्रं भवन्ति । एकादशानां यूपानां जोषणम् द्वादशस्योपशयस्य च त्रयोदशस्य त्वाष्ट्रार्थयूपस्य च नाभिमात्रस्य च ।

भेदेनान्यत्सांनिपातित्वात् ॥ १० ॥ यूपाञ्जनेभ्यो यदन्यद्यूपाङ्गं यूपावटाङ्गं वा तद्भेदेन भवति प्रतियूपं प्रत्यवटं वा तस्यावृत्तिर्भवति संनिपत्योपकारकत्वात् । संनिपत्योपकारकं हि गृह्यमाणविशेषत्वाद्भिद्यते । तस्मात्परिलेखनादि अवटस्तोमान्तं प्रत्यवटं भिद्यते अञ्जनादि च परिव्ययणान्तं प्रतियूपं भिद्यत इति । उदक्संस्थे यूपावटपरिलेखने प्राप्त उच्यते ।

मध्यमं परिलिख्योत्तरम् ॥ ११ ॥ प्रथमं मध्यमं यूपावटं वेदेः पूर्वार्ध्यशङ्कुस्थाने मध्य तस्योत्तरं परिलिखेत् ।

दक्षिणं वा ॥ १२ ॥ अथवा मध्यमं परिलिख्य तस्माद्दक्षिणं परिलिखेत् ।

व्यत्यासमितरान् ॥ १३ ॥ इतरान्यूपावटान्व्यत्यासं परिलिखति व्यत्यस्यव्यत्यस्य पामुलयमाभीक्ष्ण्ये । तथा हि उत्तरं वेति पक्षे प्रथमं मध्यमं परिलिख्य तस्मादुत्तरं द्वितीयम् मध्यमाद्दक्षिणं तृतीयम् द्वितीयादुत्तरं चतुर्थम् तृतीयाद्दक्षिणं पञ्चमम् चतुर्थादुत्तरं षष्ठम् पञ्चमाद्दक्षिणं सप्तमम् षष्ठादुत्तरमष्टमम् सप्तमाद्दक्षिणं नवमम् अष्टमादुत्तरं दशमम् नवमादुत्तरमेकादशमिति (१०. ८. ६. ४. २. १. ३. ५. ७. ९. ११) अथ दक्षिणं वेति पक्षे मध्यमं परिलिख्य तस्माद्दक्षिणं द्वितीयम् मध्यमादुत्तरं तृतीयम् ॰नवमादुत्तरमेकादशमिति (११. ९. ७. ५. ३. १. २. ४. ६. ८. १०) । उच्छ्रयणे अस्य क्रमस्य श्रुतत्वात् स य उत्तरोऽग्निष्ठात्तिष्ठत इति (३. ७. २. ५) । तत्र च सूत्रकारो वक्ष्यति यथाच्छ्रयतीति (१८) । यथोच्छ्रितमेव च पश्वालम्भं वक्ष्यति (२६) । तेन यूपोच्छ्रयणस्य पशुनियोजनार्थत्वाद्यूपार्थत्वाच्चावटपरिलेखनस्योच्छ्रयणक्रमेणैव परिलेखनमिति ।

आवटहोमात्करोति ॥ १३ ॥ परिलेखनाद्यवटहोमान्तं निर्विशेषं पदार्थानुसमयेन करोति · प्राप्तमेवैतदुत्तरविवक्षयोच्यते ।

अञ्जनाद्या चषालेक्षणात्कृत्वैकैकस्य ॥ १४ ॥ अग्निष्ठादेरेकैकस्य यूपस्य अञ्जनादि चषांशान्तं कर्मकाण्डानुसमयेन कृत्वा यत्तत उत्तरं कर्तव्यम् अग्निष्ठस्य मध्यमयूपस्य परिव्ययणादि तत्करोतीति सम्बन्धः । पक्षान्तरमाह ·

श्वो वा दक्षिणोत्तराणामवगूहनान्तमालम्भनासम्भवात् परिवीय मध्यममवगूहनान्तम् ॥ १५ ॥ अथवा श्वः सौत्येऽहनि प्रथमं मध्यमं[1] यूपमवन्तं परिवीय ध्रुवगोपं रतीत्यस्मिन्काले (१. ८. १) मध्यमस्य स्वर्ववगूहनान्तं परिव्ययणं कृत्वा तदनन्तरं दक्षिणोत्तराणां यूपानामञ्जनाद्यवगूहनान्तं स्वर्ववगूहनान्तं काण्डानुसमयेन कर्तव्यम् नाद्य : कुतः आलम्भात् न ह्यद्य दक्षिणोत्तरेषु यूपेषु पश्वालम्भः सम्भवति पश्वालम्भार्थमेव च यूपोच्छ्रयणम् · स चेदद्य न भवति तर्हि किमर्थमद्योच्छ्रीयन्ते श्वः क्रियमाणे बङ्गानां[2] प्रधानकालतानुग्रहः कृतो भवति ।

अग्निष्ठे चैषाठ रशनाः परिवेष्ट्य वासयति ॥ १६ ॥ उभयोरपि पक्षयोरेषां दक्षिणोत्तरयूपानां रशनाः परिव्ययणार्थास्त्रिगुणरशनाः अग्निष्ठे परिदधाति · स चायं शेषयूपार्थो रशनासंस्कारो नाग्निष्ठार्थः · अतश्चाश्वमेधे वसत्यर्थासम्भवेऽपि अग्निष्ठे रशनाः कृत्वा परिव्ययणं कर्तव्यम् । ननु यदि प्रधानकालानुरोधेनोत्तरेद्युरुच्छ्रीयन्ते तदा किमवटपरिलेखनाद्यपि श्व एव कर्तव्यमित्याशङ्क्याह ·

अभ्यञ्जनप्रभृति करोति ॥ १७ ॥ यद्यप्युत्तरेद्युरुच्छ्रीयन्ते तथापि पूर्वेद्युरेव परिलेखनाद्यवटहोमान्तं कृत्वोत्तरेद्युरभ्यञ्जनात्येव करोति । अत्र विकल्पः सर्वभाष्यकृतामभिमतः · हरिस्वामिमते चोत्तरेद्युरेव सर्वेषामुच्छ्रयणमिति अतश्च तन्मते अद्य पार्श्वयूपानामवटहोमान्तमेव प्रातश्च ध्रुवगोपानन्तरं मध्यममवगूहनान्तं परिवीयेतरेषामभ्यञ्जनादि अवगूहनान्तं काण्डानुसमयेन कुर्यात् · इतरेषां मते विकल्पः अद्य वा मध्यमयूपस्याञ्जनादि अवगूहनान्तं कृत्वा पार्श्वयूपानामञ्जनादि चषालेक्षणान्तमेकैकस्य कर्तव्यम् अथवा श्व एव मध्यमस्यावगूहनान्ते कृते अन्येषामञ्जनाद्यवगूहनान्तमिति · तदपि नातिसमीचीनम् श्वो वा

[1] मध्यमं deest B. [2] ? चांगानां A. वांगानां B.

दक्षिणोत्तराणामित्यस्मिन्नेव पक्षे (१५) मध्यमस्य पूर्वमवगूहनान्तं कृत्वा पश्चादन्येषामवगूहनान्तमेकैकस्य कर्तव्यमित्युक्तत्वात् · तेनाद्यपक्षे सर्वेषामञ्जनादि चषालेक्षणान्तं कृत्वा मध्यमस्य परिव्ययणादि कर्तव्यम् एवं सति सदृशं सर्वेषां कृतं भवति ।

यथाखातमुच्छ्रयति ॥१८॥ येन क्रमेण खननं कृतम् तेनैव यूपानामुच्छ्रयणम् । अधुना यूपानां प्रमाणमाह ·

वर्षिष्ठो दक्षिणः ॥१९॥ दक्षिणो यूपो वर्षिष्ठः स्यात् . यूपानां मध्ये अतिशयेन वृद्धो दीर्घतमो दक्षिणो यूपः स्यात् ।

अनुपूर्वा[1] इतरे ॥२०॥ अनुगताः पूर्वमनुपूर्वाः · अनुगमनं च हीनतया भवति उत्कृष्टो ह्यग्रतो गच्छति निकृष्टा ह्यनुगच्छन्ति · अत्र च प्रमाणेन निकृष्टत्वम् · अतश्च दक्षिणस्य वर्षिष्ठत्वमुक्तम् तत उत्तरस्य तदपेक्षया हीनप्रमाणत्वम् तदपेक्षया तत उत्तरस्य तदपेक्षया ततोऽप्युत्तरस्येत्येवमेकादशो यूपः सर्वतो निकृष्टः यथा भवति तथा कर्तव्यः । प्रसङ्गादाह ·

तीव्रसुत्यग्निष्ठः प्राची च ॥२१॥ वक्ष्यति (२२. १. १५) सोमातिपूतस्य तीव्रसुदुक्थ्य इति · तत्र यूपैकादशिन्यां विशेषोऽयम् तीव्रसुति यज्ञे अग्निष्ठो यूपो वर्षिष्ठो भवति अर्थादितरे यूपा अनुपूर्वा भवन्तीति प्रतीयते · तत्र च यूपपङ्क्तिः प्राची भवति[2] ।

यथायूपं वेदिवर्धनम् ॥२२॥ रथाक्षमात्राणि यूपान्तरालानि भवन्तीत्यस्मिन्पक्षे (६) यथायूपं यथा यूपान्तरालवृद्धिरेवं वेदेरपि वर्धनं कर्तव्यम् · अन्यथान्तर्वेदि मिनोतीत्यन्तर्वेद्यभावेन वैगुण्यं स्यात् ।

वर्षिष्ठाद्दक्षिणं वितष्टं द्वादशं निदधात्येष तऽइति (६. ६) ॥२३॥ द्वादशं यूपं वितष्टं वर्षिष्ठाद्दक्षिणं निदधाति भूमौ स्थापयति एष ते पृथिव्यां लोक आरण्यस्ते पशुरित्येतावत्प्रमाणेनानेन मन्त्रेण · वितष्टमनष्टाश्रीकृतमिति पितृभूतिः · विविधमा मूलात्तष्टः नेतरयूपवदुपरवर्जम् न चायं निखातव्यः ततश्च निःशेष एव तक्षणीय इत्यभिप्रायः · अन्ये त्वाहुः विविधमव्यवस्थितं तष्टो नाष्टाश्रिरिति

1) Thus AB. °पूर्व्या M. १.  2) तत्र च° भवति deest B.

तदप्ययुक्तम् अष्टाश्रावपि वितक्षणाविरोधात् · अपरे त्वाहुः विगततक्षणो वितष्टः अतष्ट इत्यर्थः तदप्ययुक्तम् विशब्दो ह्येवमत्यश्रुतया गतिक्रियया सम्बध्येत न तक्षतिना · तस्मात्सकलो तष्टो वितष्टः ।

प्रोक्षणाद्यावगूहनात्करोत्यनर्थलुप्तम् ॥ २४ ॥ अस्योपशयस्य प्रोक्षणादारभ्य स्वर्ववगूहनपर्यन्तान्संस्कारान्करोति अ॰प्तम् न विद्यते अर्थः प्रयोजनं यस्यासावनर्थः अनर्थो लुप्तो यत्र तदन॰प्तमिति क्रियाविशेषणम् । अथवा अ॰प्तमङ्गजातं करोतीति · तेन निखननाभावात्तदर्थानामवटपरिलेखनादीनामभावः इतरद्भवति प्रोक्षणम् अञ्जनम् चषालप्रतिमोकः पुनरग्निष्ठदिशाञ्जनम् परिव्ययणम् स्वर्ववगूहनम् ।

अनुच्छ्रित्य वोत्तरम् ॥ २५ ॥ अथवा उ॰रं यूपमनु॰त्योपशयस्य दक्षिणतो निधानं करोति उच्छ्रित्य वा · शाखान्तरात् ।

यथोच्छ्रितं सवनीयानालभतऽएकतृणेनोपाकृत्याग्नेयसारस्वतसौम्यपौष्णबार्हस्पत्यवैश्वदेवैन्द्रमारुतैन्द्राग्नसावित्रवारुणान् ॥ २६ ॥ उच्छ्रयणक्रमेण मध्यमे यूपऽआग्नेयम् द्वितीयोच्छ्रिते सारस्वतम् ॰एकादशे वारुणमिति · एकेनापि तृणेन सर्वेषामुपाकरणस्य कर्तुं शक्यत्वादेक॰णेनेत्युक्तम् · सव॰यानित्येतेषां सवनीयत्वज्ञापनार्थम् ।

एकयूपे पश्वेकादशिन्यामाग्नेयं नियुज्य तस्मिंस्तस्मिन्नितरानुदीचः ॥ २७ ॥ पश्वेकादशिनी द्विविधा प्रतिपशुयूपा एकयूपा च प्रतिपशुयूपायां नियोजनप्रकार उक्तः इदानीमेकयूपायामुच्यते · यूपे आग्नेयः तस्य गले तस्मादुत्तरः सारस्वतः तस्य गले सौम्यः सौम्यस्य गले पौष्ण॰सावित्रस्य गले उत्तरतो वारुण इति · अत्र पशुपुरोडाशे वैश्वदेवमारुतैन्द्राग्ना द्वादशकपालाः शेषा अष्टौ अष्टाकपालाः ।

आग्नेयः प्रथमो गच्छत्यन्वारब्धोऽनुपूर्वा[१] इतरे ॥ २८ ॥ अतः प्रभृति यूपैकादशिनीपश्वेकादशिन्योः साधारणमेवोच्यते · आ॰यः पशुः प्रतिप्रस्थात्रान्वारब्धः प्रथ॰च्छति इतरे दश पशवः अनन्वारब्धा एव अनुपूर्वा अनुगामिनो भवेयुः

१) ॰पूर्व्या M १. B sec. m.

अनुगताः पूर्वमनुपूर्वाः पृष्ठगामिनः पश्चाद्गामिन इत्यर्थः अथेतराननन्वारभ्या-
नेव शमितारो नयेयुरित्येतद्व्याख्यान्तरात्स्पष्टीकरणीयम् ।

दक्षिणं च निघ्नन्त्येनमुत्तरमुत्तरमितरान् ॥२९॥ मारयन्ति शमितारः · आग्नेयादुत्तरं द्वितीयम् । स्तोमायनपशूनां (९. ८. २) तु यूप एवालम्भो न गलगलिकया सर्वेषामन्वारम्भो युगपद्गमनम् सर्वेषां चात्वालात्पश्चादेव संज्ञपनमिति तेषां पश्वेकादशिनीधर्माग्रहणात् । पशुगणे उपप्रैषादीनां प्रतिपश्वावृत्तौ प्राप्तायामाह ·

समानमुपप्रैष्य-परिपशव्ये-संज्ञपयान्वगन्प्रोक्षण्युल्मुकासिशामित्रान्तर्धानप्रच्छेद-स्तोकसम्प्रैषशमित्रनुशासनसंवादवनस्पतिस्विष्टकृदिडाः ॥३०॥ पशुगणे उपप्रैषादि इडान्तं समानं भवति तन्त्रेणैव भवति न प्रतिपश्वावर्तते । कुतः । उपप्रैषेण तावदध्रिगोरर्थे होता प्रैष्यते स चैकोऽध्रिगुः समानकालो ऽगृह्यमाणविशेषत्वादेव तन्त्रम् । संज्ञपयान्वगन्नित्येतच्च शमितुः सम्बोधनम् तदपि संज्ञपयान्वगमन्नित्येवमूहितं समानम् सर्वपशूनां संज्ञपनस्यैककालत्वात् । सकृत्संस्कृताभिरेव प्रोक्षणीभिः सर्वपशूनां प्रोक्षणादिसिद्धेः ता अपि न प्रतिपशु भिद्यन्ते · अश्वमेधे तु पुनः संस्कारो वचनात् (१३. २. ७. १५) । एकेनाप्युल्मुकेन सर्वपशूनां पर्यग्निकरणस्य सिद्धेर्न प्रतिपशु उल्मुकभेदः । असिनाप्येकेनैव सर्वपशूनामवदानसिद्धेः सोऽप्येक एव भवति । शामित्रेणाप्येकेनैव सर्वपशूनां श्रपणसिद्धेर्न भेदः । अन्तर्धानतृणानां यौ प्रच्छेदौ मूलमग्रं च तत्कार्यमपि समानमेव भवति · सर्वमूलानां सकृदेवोत्करे निरसनमभिष्ठानं च · सर्वतृणाग्राणां च सकृदेवाहवनीये प्रासनम् शक्यत्वात् · अत्रान्तर्धानप्रच्छेदशब्देन तत्कार्यं लक्ष्यते · अत्र प्रतिपशु द्वे-द्वे तृणे स्तीर्णाया वेदेर्ग्राह्ये एकैकं संज्ञपनस्थाने प्रतिपशु उपासनीयम् एकैकं च वपोत्खेदनकालेऽन्तर्धाने विनियोज्यम् । स्तोकसम्प्रैषः स्तोकेभ्योऽनुब्रूहीत्ययं प्रैषः सोऽपि कालैक्यात्सकृदेव[१] भवति । एवं शमित्रनुशासनमपि सकृदेव भवति त्रिः प्रच्यावयतादित्यादिकम् त्रिः प्रच्युतानां पशोर्हृदयान्युत्तमानि[२] कुरुतादित्यूहितेन सर्वपशूनां कार्यसिद्धेः । शृतं हविरित्ययं संवादोऽपि सकृदेव

१) काडैक्या° AB. २) Thus AB!

भवति एककालत्वात् । वनस्पतियागोऽपि सकृदेव प्रयाजादिवदाराडुपकारकत्वात् अगृह्यमाणविशेषत्वाच्च । स्विष्टकृदिडयोस्तु न द्रव्यभेदे गुणायोगादित्यनेनैव (१. ५. १३) समानत्वसिद्धेरवदानार्थं[१] पुनर्ग्रहणम् · पशुगणे स्विष्टकृत इडायाश्चावदानमपि सर्वपशुप्रचारान्ते अन्त्यपश्ववदानोत्तरकालं तत्प्रदानात्प्राक् सर्वपशूनां सह कर्तव्यम् न तु प्रतिपशु प्रधानावदानग्रहणानन्तरमेव तत्सौविष्टकृतानामिडानां चावदानमिति कर्कादयः · तन्त्ररत्ने तु विशेषः तत्र सम्प्रतिपन्नदेवताकेषु पशुषु दैवतैरेवानुसमयः न तु दैवतैडान्तकाण्डेनेति विप्रतिपन्नदेवताकेष्वैकादशिनेष्वेकैकस्य पशोर्दैवतसौविष्टकृतैडान्यवदाय होमं च दैवतस्य कृत्वा ततः पश्वन्तरस्यापि तथैव कुर्यादिति पञ्चमस्य द्वितीये · तथा च काठके यदि बहवः पशवः पुरोडाशा वा स्युर्जुहूपभृतोरुपस्तीर्य जुह्वामवदायाभिघार्योपभृत्यवदायाभिघार्योत्तमस्याभिघारणमनु सौविष्टकृतमभिघारयेद्यत्र क्व चन सहोपभृदेवमेव कुर्यादिति · तेनेयमेवं व्यवस्था उक्ता एकदेवत्येषु दैवतैरेवानुसमयः न वैडान्तकाण्डेन नानादेवतेषु ऐकादशिनादिषु पशुषु एकैकस्य पशोर्दैवतसौविष्टकृतैडान्यवदाय दैवतव्यतिरिक्तान्यनभिघार्य दैवतानि हुत्वा पश्वन्तराणामेवं कुर्यात् अन्त्यपश्ववदानानन्तरं सौविष्टकृतादीनानभिघार इति रहस्यम् · पशुपुरोडाशयागेष्वपि बहुष्वेवमेव जुहूपभृतोरुपस्तीर्य प्रतियागमुपभृत्यवदानम् अन्त्यहविषोऽवदानानन्तरमुपभृत्यभिघारः ।

दिग्व्याघारणाच्च समासिच्य ॥ ३३ ॥ वसाहोमस्तु प्रतिपशु पृथग्भवतीति वक्ष्यति (४०) · सर्वान्वसाहोमशेषान्क्वचित्पात्रान्तरे स्थापितान्जुह्वां संच्य एकस्यां जुह्वां सर्ववसाशेषान्निनीय सहैव दिग्व्याघारणं करोति कालैकत्वादेव ।

प्रभूत्वादुखा ॥ ३४ ॥ सर्वपशूनां समानी एकैव सर्वपशुसाधारणी उखा भवति · कुतः प्रभूत्वात्[२] प्रभवति ह्येकैव महती बहूनां पशूनामवदानानि श्रपयितुम् ।

शूलं वपाश्रपण्यौ च ॥ ३५ ॥ अनेकपशुषु शूलमेकमेव महद्भवति वपाश्रपण्यौ च समान्याविव भवताम् · कुतः प्रभूत्वादेव चकारेण प्रभूत्वादिति हेतुरनुकृष्यते समानपदं[३] च · शक्यन्ते चैकेनापि महता शूलेन सर्वपशुहृदयानि

१) Thus B. सहत्त्वसि° A. २) प्रभूतत्वा° Ss. ३) from ३०.

अपयितुम् एवं वपाश्रपणीभ्यामप्यतिदीर्घाभ्यां सर्वपशुवपाः श्रपयितुं शक्यन्तऽएव · तस्माद्वपाश्रपणीशूलोखानां भेदो न भवतीति सिद्धान्तः । अथ पूर्वपक्षमाह ·

न वसासंदेहात् ॥३६॥ यदुक्तम् प्रभूत्वादुखा एकेति तन्न · कुतः वंहात् संदिह्यते ह्युखैकत्वे वसा · द्रवद्रव्यत्वान्न ज्ञायते कस्येयं वसेति · अवदानानि तु वस्त्रादिना बद्धानि कृतचिह्नान्यपि विवेकेन ज्ञायन्ते वसा तु संसृष्टा न ज्ञायते कस्येयमिति भेदेन च वसाहोमं वक्ष्यति (४०) स्वस्वार्धर्चान्तरेषु · अतो वसासंदेहात्पशुगणे उखा एका न भवति । अमुमेव पक्षं दृष्टान्तेन दृढं करोति ·

सौत्रामणीदर्शनाच्च ॥३७॥ सौत्रामण्याम् शूलैश्च मासरेण चावभृथमभ्यवयन्तीति शूलोखानां भेदः · इति शूलभेदस्य दर्शनादप्येवं ज्ञायते यत्पशुगणे वपाश्रपणीभेदः[१] । एवं पूर्वपक्षे कृते तं दूषयति ·

नाविरोधात् ॥३८॥ उखाशूलवपाश्रपणीनां भेदो न भवति उक्तहेतोः प्रभूत्वादेवेत्यर्थः · यत्तूक्तम् वसासंदेहाद्विरोधो भवतीति तत्राह नाधात् नैष विरोधः स्वसम्बन्धस्याश्रुतत्वात् नैवं श्रूयते स्ववसा होतव्येति · किंतु प्रकृतायाः प्रतिपादनार्थत्वात्प्रकृता हूयते अत्रापि प्रकृताया एव होमं करिष्यामो ऽतो विरोधो नास्ति । अथ यदुक्तम् सौर्शनाच्चोखादेर्भेद इति तत्राह ·

पाकवैषम्यात्सौत्रामण्याम् ॥३९॥ सौत्रामण्यां यच्छूलभेदो दृश्यते तत् पाम्यात् विषमो हि तत्र पाकः पशूनां नानाजातीयत्वात् · छागर्षभमेष्यो हि तत्र पशवो विषमपाकाः श्रुताः · तत्र कस्यचिदवदानानि शीघ्रं पच्यन्ते कस्यचिच्चिरेण · तत्र सह श्रपणे केषांचिदशृतत्वं विलयो वा स्यात् · तस्मात्सौण्यां भेदो यूक्तः · अन्यत्रापि यत्र पाकवैषम्यं नानाजातीयपशुविधाने तत्रोखादीनां भेद एव · यत्र पुनः समानजातीया एव पशवस्तत्रोखाशूलवपाश्रपणीनां भेदो न भवत्येव ।

मनोतावसाहोमौ पृथक्कालभेदात् ॥४०॥ भिन्नो हि पशूनामवदानकालः याज्याया अर्धर्चान्तरं च · तेन गृह्यमाणविशेषत्वान्मनोताप्रैषवसाहोमयोः प्रतिपशु भेदः वनस्पतेस्तु कालैकत्वादभेदः प्रागुक्तः (३०) ।

१) भेदः deest AB.

यूपैकादशिन्यां वशावपामार्जनान्तं कृत्वा शालाद्वार्ये पत्नीयूपोच्छ्रयणं नाभिमात्रस्य ॥४१॥ यूप्न्यामेष विशेषो भवति · वशाया अनूबन्ध्याया वपान्तं कर्म कृत्वा शार्यसमीपे तस्य पुरस्तात् नाभ्यस्य पत्नीयूपस्योच्छ्रयणं करोति · वशा कृत्वेत्युक्तेऽपि वशायां गर्भसद्भावे गर्भनिर्हरणान्तऽएव कर्तव्यः · पश्वेकादशिन्यामयं न भवति शालाद्वार्यऽइत्युक्तत्वात् सोऽत्राहवनीयः । पत्नीयूप इत्यस्य संज्ञा पत्नीवते त्वष्ट्रे पशुमालभ्य[१] पत्नीयूप उच्छ्रयणीय इति हरिस्वामिनः (३. ७. २. ८) तेन पत्नीवांस्त्वष्टा इह देवतेति · शालाद्वार्यऽउच्छ्रयणं नाभिमात्रश्च यूप इत्येतच्छाखान्तरात् । तत्रेतिकर्तव्यतामाह ·

परिस्तरणपात्रसंसादनप्रोक्षणाज्यनिर्वपणाधिश्रयणानि कृत्वा स्फ्यादि करोति ॥४२॥ पशौ हि पूर्वं स्फ्यादि ततः परिस्तरणादीत्येवं क्रमेण पदार्था उक्ताः · इहापि पशुधर्मप्राप्तौ स एव क्रमः प्राप्नोतीति क्रमान्तरविधानार्थमाह · तन्त्रमध्ये विधानेऽपि देशभेदात्तन्त्रभेदो युक्त एव ॥ ॥ अष्टमी कण्डिका ॥ ८ ॥

त्वाष्ट्रो बस्तः ॥१॥ आज्यासादनान्तऽएनं यूपं मित्वा तस्मिन्यूपे त्वाष्ट्रः पशुरालब्धव्यः त्वष्टृदेवत्यः · कीदृशः पशुः बस्तः मुष्करः प्रजनयिता · मुष्कावाण्डौ तौ विद्येते यस्य स मुष्करः प्रवृद्धमुष्कः रो मत्वर्थीयोऽतिशये द्रष्टव्यः सर्वस्य हि मत्तस्य पुंपशोर्मुष्कौ विद्येतेऽएव तत्रासत्यतिशये वचनमनर्थकं स्यात् ।

पर्यग्निकृतमुत्सृजन्ति ॥२॥ पर्यग्निकरणान्तं कर्म कृत्वा उत्सर्गं त्वाष्ट्रस्य पशोः कुर्वन्ति इदं पत्नीवतऽइति त्यागं कृत्वा · शाखान्तरे हि त्वाष्ट्रं पात्नीवतमालभेतेति विधायोच्यते पर्यग्निकृतं पात्नीवतमुत्सृजन्तीति । अत्रैतत्संदिह्यते किमेष द्रव्योत्सर्गः प्रतिनिधिभूतेनाज्येन संस्था तस्यैव कर्मणः उत कर्मोत्सर्गः तदन्ताङ्गीतिविधानम् कर्मान्तरमाज्यसंस्थेति · किं तावत्प्राप्तम् सूत्रेणैव पक्षः ·

आज्येन संस्थापयतीति श्रुतेः ॥३॥ द्रव्योत्सर्गोऽयम् न कर्मोत्सर्गः कुतः श्रुतेः उत्सृष्टे च द्रव्ये तस्यैव कर्मणः प्रतिनिधिभूतेनाज्येन संस्थापनमुपदिश्यते ।

पशुपर्यग्निकरणाच्च ॥४॥ इतश्च द्रव्योत्सर्गो न कर्मोत्सर्गः पशोरेव

---

१) °लब्धं AB.

पर्य॰णात् पर्यग्निकृतस्य चोत्सर्गविधानात् (३. ७. २. ८) तत्र सञ्स्थापयेत्पर्यग्निकृतमेवोत्सृजेदिति । एवं पूर्वपक्षे कृते सिद्धान्तमाह ·

तदन्तं वा कर्मनामधेयात् ॥ ५ ॥ वाशब्दः पक्षव्यावृत्तौ · तदन्तं वा पर्यग्निकरणान्तमेव पशुकर्म भवति तदन्तमेवोत्सृजेत् उत्सृष्टत्वाच्च कर्मणः आज्यसंस्था कर्मान्तरविधानमिति · कुतः कर्म॰धात् यतस्तदित्यनेन (३. ७. २. ८) सर्वनाम्ना कर्माभिधीयते तत्कर्म न संस्थापयेत्पर्यग्निकृतमेवोत्सृजेदिति ।

त्वष्टृवनस्पत्योश्च प्रयाजेष्विज्यादर्शनात् ॥ ६ ॥ अतोऽपि कर्मोत्सर्गः · कुतः त्व॰त्योः प्रयाजेषु इज्यासम्पत्तिर्दृश्यते यत्त्वष्टारं वनस्पतिं चावाहयत्यथ ह्येनौ यजतीति त्वाष्ट्री नवमी प्रयाजयाज्या वानस्पत्या दशम्यत्रैनाविष्टौ विद्यादिति वानस्पत्या दशमी तत्रैनौ भागिनौ करोतीति क्वचित्पाठः · एतच्च दर्शनं कर्मोत्सर्गऽएवोपपद्यते द्रव्योत्सर्गे हि द्रव्यान्तरेण त्वष्टृवनस्पती अभीज्येतेऽएवेति तस्मादपि तदन्ताङ्गीतिविधानमिति । अत्रायं पदार्थक्रमः । चतुरासनम् शालाद्वार्यं दक्षिणेन ब्रह्मयजमानयोरुपवेशनम् प्रणीताप्रणयनम् · प्राजहितस्यैव परिस्तरणम् इतरयोरनूबन्ध्यादौ कृतत्वात् · पात्रासादनम् अग्निहोत्रहवणी वज्रः शम्या दृषदुपलम् पवित्रच्छेदनानि पवित्रे आज्यं वेदश्च उदकतृणमग्निः इध्माबर्हिः चतुष्टयम् कार्ष्मर्यमया इत्यादिकम् स्रुवो जुहूः उपभृद्ध्रुवा यूनकुशाः होतृषदनम् यूपाष्टकम् नाभिमात्रो यूपः त्रिगुणरशना द्विगुणरशना मैत्रावरुणदण्डः असिः मन्थनचतुष्टयं वा अन्तर्धानकटः पूर्णपात्रम् कर्मापवर्गा वेति [1] · एतान्यासाद्य पवित्रकरणम् प्रोक्षणीसंस्कारः पात्राणां प्रोक्षणम् असंचरे प्रोक्षणीनां निधानम् कुक्कुटाहननम् आज्यनिर्वापः वेदबन्धः अध्वर्योरेवाज्याधिश्रयणम् पर्यग्निकरणम् [2] उदकोपस्पर्शनम् · ततः शालाद्वार्यमपरेण दर्शपूर्णमासवेदिमानादि संमार्जनापासनान्तम् असेः संमार्गाभावः [3] · पत्नीसंनहनं तु कृतमेव · आज्योद्वासनादि ऐष्टिकमेवाज्यग्रहणम् न प्लक्षशाखावसाहोमहवन्यौ · आज्यासादनात्मालम्भोदकालम्भान्तं प्रकृतिवत् · अभ्यादानादि

---

१) पूर्णा वेति deest B. २) Thus A. अग्नीध्र (!) एवाज्याधिश्रयणमध्वर्योः पर्य॰ B.
३) Thus B. अग्रे संमा॰ A.

शालाद्वार्यं पूर्वेण नाभिमात्रस्य यूपस्य निखननं स्वर्वनगूहनान्तम् · उपाकरणमन्थनयोर्विकल्पः · त्वष्ट्रे जुष्टं नियुनज्मीति पशोर्नियोगः त्वष्ट्रे पत्नीवतऽइति वा · त्वष्ट्रे त्वा जुष्टमिति प्रोक्षणे त्वष्ट्रे पत्नीवते त्वेति वा[१] · इध्मप्रैषादिपर्यग्निकरणान्ते विशेषः शमित्रे असिप्रदानाभावः[२] · शामित्रसंस्कारो न भवति मैत्रावरुणादण्डस्तु गृहीत एव · ततः पर्यग्निकरणान्ते इदं त्वष्ट्रऽइति इदं पत्नीवते त्वष्ट्रऽइति वा त्यागं कृत्वा पशोरुत्सर्गः · ततस्त्वाष्ट्रेण पशुना सहैवारब्धस्य कर्मान्तरस्याज्यहविष्कस्य परिसमाप्तिः · तत उत्तमः प्रयाजो यजप्रैषः प्रकृतिवत् प्रयाजशेषेणाभिघारणम् · तत आज्यभागौ यजप्रैषौ · ध्रुवायाश्चतुर्गृहीतेन त्वाष्ट्रो यागः त्वष्ट्रेऽनुब्रूहि त्वष्टारं यजेति अनुवाचनप्रैषौ इदं त्वष्ट्रऽइति त्यागः पत्नीवते त्वष्ट्रे वा त्यागः · न स्विष्टकृत् · स्रुग्विधानम्[३] · पवित्रप्रतिपत्तिः · उल्मुकसमासः · समिधमादाय ब्रह्मन्प्रस्थास्यामीत्यादिः प्राकृत एव प्रैषः · त्रयोऽनुयाजा औपभृतेनाज्येन · धारानुयाजान्ते स्वरुहोमः · व्यूहने त्वष्टुरुज्जितिम् त्वष्टा तमपनुदत्विति · सूक्तवाकप्रैषे ब्रूहीत्येव प्रैषः · इदमग्नये सोमाय त्वष्ट्रे देवेभ्य आज्यपेभ्य[४] इति प्रस्तरत्यागः · पत्नीसंयाजाः दक्षिणाग्निहोमाश्च · एकमेव समिष्टयजुः · बर्हिर्होमः · प्रणीताविमोकः · पूर्णपात्रादि कर्मापवर्गान्तं सर्वमैष्टिकम्[५] · ततोऽनूबन्ध्यायाः पशुपुरोडाशनिर्वपणादि कर्मापवर्गान्तम् । अथ प्राकृतमग्नीषोमीयकर्मैवोपदिशति ·

अग्नीषोमीयस्य वपामार्जनान्ते वसतीवरिग्रहणं स्यन्दमानानामनस्तमिते ॥७॥

अग्नीषोमीयस्य पशोः वपामार्जनान्ते कर्मणि कृते अनस्तमिते सूर्ये स्यन्दमानां नद्यादौ वहन्तीनामपां वसतीवरीणां ग्रहणं करोति · सोमार्था आपो वसतीवरीशब्देनोच्यन्ते । कठसूत्रे[६] मर्जयित्वा वसतीवरीर्गृह्णाति वहन्तीनां कुम्भेन प्रतीपस्तिष्ठंश्छायायां दर्भैरन्तर्धाय हविष्मतीरिति पूरयित्वान्यैरपिधाय संचरेण प्रविश्यापरेण गार्हपत्यमग्नेर्व इति निधायेति · प्रतीपं कलशमुपमारयति छायातपयोः संधावपिधाय दर्भैः पाणिना वेति मनुः · तथा दिवा गृह्णीयादिति (३. १. २. ६) श्रुतेरनस्तमितऽइत्युक्तम् ।

१) त्वष्ट्रे प° त्वेति वा deest A. २) शामित्रे अग्निप्र° B. ३) स्रुग्नि° AB. ४) देवेभ्यश्चाज्य° B. ५) B. adds: अनूबन्ध्यान्तऽएव समापनं भवति नेदानीम् नेदिदं दीक्षितवसनमिति (३. १. ३. ६.) निषेधात् · ६) कठसूत्रे °मनुः deest A.

अस्तमितश्चेन्निनाह्यात्पुरेजानश्चेत् ॥ ८ ॥ चेद्यदि आदित्योऽस्तमितः स्यात् तदा स्वगृहऽएव निनाह्यात्[१] मणिकाद्गृह्णीयात् यदि यजमानः पुरा पूर्वं सोमेनेष्टवान्स्यात् · नीचैर्नहनीयो निखननीयो भूमौ निनाह्यो मणिकः ।

अनीजानोऽन्यस्यापि समीपावसितस्य पुरेजानस्य ॥ ९ ॥ यदि स्वयं यजमानोऽनीजानः स्यात् पुरा इष्टवान्न स्यात् तदान्यस्यापीष्टवतः समीऽस्य उपावसितस्य प्रतिवेशस्य समीपवासिनो यज्ञकर्तुर्निनाह्यात् गृह्णीयात् ।

उभयाभावऽउल्कुषीᳮ हिरण्यं वोपर्युपरि धारयन्हविष्मतीरिति (६.२३) ॥ १० ॥ उऽवे स्वयमपि नेष्टवान् अन्योऽपि समीपवासी नेष्टवान् तदा उल्कुषीमुल्कां हिरण्यं वा स्यन्दमानानामपामुपरि समीपऽएव धारयन् वसतीवरीर्गृह्णाति ।

अग्नेर्व इति (६.२४) निदधाति शालाद्वार्यमपरेण ॥ ११ ॥ ता वऽरोरानीय चात्वालोत्करावन्तरेण प्रविश्याग्नीध्रमुत्तरेण हृत्वा पूर्वद्वारेण शालां प्रविश्य शाऽरेण आसादयति ।

सुब्रह्मण्यां च प्रेष्यति पैतापुत्रीयाम् ॥ १२ ॥ चकाराद्वसतीवरीणां निधानकालऽएव · पितापुत्रादेर्नामकीर्तनसम्बन्धिनी पैऽथा ताम् · अथवा चकारेण वपामार्जनान्तऽइत्येतदेव (७) अनुकृष्यते वपाऽन्तऽएव सुऽण्यां प्रेष्यति · पैऽथामिति सुऽण्याया विशेषणम् · सुब्रह्मण्ये सुऽण्यामाह्वय पैतापुत्रीयामित्येवम् शाखान्तरे वपामार्जनान्तऽएव सुब्रह्मण्यायाः पैतापुत्रीयाया विहितवात् सूत्रकारप्रस्थाना[च] तथा च साम्यङ्के सूत्रितम् वपान्ते सुब्रह्मण्यानिवृत्तिरिति (२२.३.३०) । एककालवेऽपि सूत्रपाठक्रमात्पूर्वं वसतीवरिग्रहणम् ततः सुब्रह्मण्यप्रैषः · नाग्नीषोमीये हृदयशूलं करोति न सवनीये न स्वरुमनुप्रहरति नान्तरापो देवयजनं च पथा[२] व्यवेयात्प्रागस्तमयान्निष्क्रम्य वसतीवरीर्गृह्णाति वहन्तीनां प्रतीपस्तिष्ठन्प्रतीपं कलशमुपमारयति इति कठसूत्रेऽप्ययमेव क्रम उक्तोऽस्ति ।

आदित्याभ्यये ऽऽहुतायामपि ॥ १३ ॥ वपाहोमात्पूर्वमादित्याभ्यस्तमये अहुतायामपि वपायां वसतीवरीर्गृह्णीयात् ।

दक्षिणाग्निहोमान्तमग्नीषोमीयमस्तमिते सᳮस्थाप्य व्युत्क्रामतेत्याह त्रिः ॥ १४ ॥

---

१) ॰नाह्यात् Ss. २) पंथा A. पथ्या B.

दक्षि॰मीयं पशुमस्त॰ते सूर्ये समाप्य व्यु॰तेति प्रैषं त्रिर्ब्रूयात् त्रिरित्येतच्छाखान्तरात् · ननु अग्नीषोमीयः प्रकृत एव किमर्थं पुनस्तद्ग्रहणम् उच्यते संस्थापनमग्नी॰य ऽएव यथा स्यात् न तद्विकारेषु निरूढादिषु · अस्तमिते संस्थापनमपि शाखान्तरात् । दक्षि॰मान्तमित्युक्तत्वात्तत ऊर्ध्वमर्थकर्मणां निवृत्तिः तेन पूर्णपात्रादिकर्मापवर्गान्तस्यात्राभावः · तस्मात्तस्य पशोः समिष्टयजूꣳषि न जुह्वतीत्युक्तत्वात् तेषामपि निषेधः इतरपशुषु त्रीणि समिष्टयजूंषि भवन्ति पशौ चेति (५. २. १०) प्रागुक्तत्वात् · प्रतिपत्तयस्तु प्रवर्तन्ते । दक्षिणाग्निहोमश्चास्तमितऽएव भवति · तेन वेद्योक्त्रविमोकः ध्रौवस्य[1] तूष्णीं प्रक्षेपः एकवृद्धर्हिर्होमः प्रणीताविमोकः राक्षसभागो भागाविक्षणाम् भागप्राशनं चेति · ततो व्युत्क्रामतेत्यादि ।

शालाद्वार्यमपरेणास्ते पत्नी ॥१५॥ अनेकासु त्वेकैवात्रोपविशति ।

उत्तरवेदिमपरेण यजमान उपस्थे सोमं कृत्वा ॥१६॥ अग्रेण हविर्धाने यजमानश्चास्तऽइति (३. १. २. १३) श्रुतेः · उप॰त्वा शाखान्तरात् · अनेकेषु त्वेक एव ।

शालाद्वार्यमपरेण वसतीवरीः परिहरति ॥१७॥ अध्वर्युः · कलशं हस्ताभ्यां यत्नेनादाय शा॰र्यस्य पश्चादेव नीत्वा गच्छेत् ।

दक्षिणेन निर्हृत्य दक्षिणस्यामुत्तरवेदिश्रोणौ निदधातीन्द्राग्न्योरिति (६. २४) ॥१८॥ वस॰रीरादाय दक्षिणेन शालाद्वारेण निर्हृत्य शालाया निष्काश्य मार्जालीयं दक्षिणेन नीत्वा दक्षि॰धाति · मानवे पूर्वया द्वारा प्रविश्य वसतीवरीर्गृह्णात्यपरेण विहारं दक्षिणातिक्रम्य पूर्वया द्वारा निःसृत्य दक्षिणेन सदो मार्जालीयं हविर्धानं च गत्वेन्द्राग्न्योर्भागधेयी स्थेति दक्षिणस्यामुत्तरवेदिश्रोणौ सादयति यथेतं प्रत्येत्य पूर्वया द्वारा निःसृत्योत्तरेण सद आग्नीध्रीयꣳ हविर्धानं च गत्वा मित्रावरुणयोरित्युत्तरस्यामुत्तरवेदिश्रोणौ सादयति विश्वेषामित्याग्नीध्रीयऽइति · काठके सꣳस्थिते वसतीवरीः परिहरति व्युत्क्रामतेत्युक्त्वापरेण विहारं परिक्रम्य दक्षिणेन वेद्यन्तेन गत्वा दक्षिणस्यामुत्तरवेदिश्रोण्याꣳ सादयतीन्द्राग्न्योरिति यथेतं परेत्यापरेणाग्नीध्रीयमग्निं विश्वेषां देवानामिति सादयतीति ।

---

1) ? समिध्रो॰ AB.

zzzz*

आहृत्य स्थाने निदधाति ॥ १९ ॥ ता वसतीवरीरुत्तरवेदेः सकाशात्तेनैव मार्गेण पश्चादाहृत्य स्थाने शालाद्वार्यमपरेणैव नि॰ति ।

कलशं पत्न्यालभते ॥ २० ॥ पत्न्या अग्रे सादितं वसतीवरीकलशं प॰ते · केचित् कलशमध्यस्थस्योदकस्यालम्भमिछन्ति तथा सति लक्षणा स्यात् ।

उत्तरेण परिक्रम्योत्तरस्यां पूर्ववत् ॥ २१ ॥ उत्तरेण विहारं पश्य तत्रोपविष्टां पत्नीमपरेण गत्वा तं शालाद्वार्यमुत्तरेण परिक्रम्य कलशमादाय पूर्वद्वारेण शालातो निष्क्रम्याग्नीध्रीयमुत्तरेण गत्वा उत्तरस्यामुत्तरवेदिश्रोणौ निदधाति पूर्ववत् इन्द्राग्न्योरिति अनेनैव मन्त्रेण ।

मित्रावरुणयोरिति (६. २४) वा ॥ २२ ॥ अथवा उत्तरवेदिश्रोणौ मि॰रित्यनेन वा मन्त्रेण वसतीवरीरासादयति ।

विश्वेषां देवानामित्याग्नीध्रे (६. २४) ॥ २३ ॥ ततः पुनरुत्तरवेदिश्रोणेः सकाशाद्वसतीवरीरादायाहृत्याग्नीध्रस्य मध्ये ।

सोमं चासन्द्याम् ॥ २४ ॥ सोमं चाग्नीध्रऽएव आसन्द्यां निदधाति अत एवासन्दी पूर्वमेवात्र स्थापितास्तीति गम्यते ।

दीक्षितश्च तत्र ताᳯं रात्रिᳯं सोमᳯं रक्षति ॥ २५ ॥ दी॰तो यजमानः तत्राग्नीध्रे कृत्स्नायां रात्रौ सो॰ति अतश्चार्थाज्जागर्तीत्युक्तं भवति अन्यथा रक्षणस्यासिद्धेः · मानवे आग्नीध्रे यज्ञपात्राणि सादयति तस्माद्यजमानो जाग्रदुपवसति प्राग्वᳯंशे पत्नीति ।

सुब्रह्मण्यां च प्रेष्यति ॥ २६ ॥ चकारात्पितापुत्रीयाम् · आग्नीध्रे सोमनिधानानन्तरमेव ।

परिवाप्यायै दोहनम् ॥ २७ ॥ परिवापशब्देनात्र दध्युच्यते परिवापं[1] दध्यर्हतीति परिवाप्या[2] सरस्वती तस्यै दोहनम् दधिनिष्पत्तये पृथक्त्रीन्दोहानग्नीत्करोति · प्रतिसवनं सवनीयेषु सरस्वत्यै दधि विहितमस्ति तद्धि द्वाभ्यामहोभ्यां निष्पद्यते अतश्च तदर्थं दोहनमपकृष्टम् · तदर्थं च वत्सापाकरणं प्राकृतमेव उत्तरपरिग्रहान्ते वेदिप्रोक्षणात्प्राक् अत्रोपसृष्टादिपरिक्षालनान्तांस्त्री-

१) परी॰ Ss. २) परी॰ Ss. sec. m.

न्दोहानग्नीत्कुर्यात् · सप्रवर्ग्ये च दधिघर्मार्थ (१०.१.२०) एको दोहः कार्यः स च प्रातःसवनिकसारस्वतदोहानन्तरं कार्यः · लौकिकेन दध्ना चतुर्णामप्यातञ्चनम् इन्द्रस्य सरस्वतिवतस्त्वा भागमिति मन्त्रे ऊहः इन्द्रस्य त्वा भागमिति दधिघर्मस्य · ततस्तान्दोहान्सुगुप्ते देशे निधाय मैत्रावरुण्याः पयस्याया अर्थे वत्सापाकरणं कर्तव्यम् तत्रेन्द्राय मित्रावरुणवते भागमिति गोरुपस्पर्शने विशेषस्ततः शाखोद्वहनमिति । एतच्च दोहनं पयस्याया वत्सापाकरणं चाग्नीध्रेण कर्तव्यम् तस्यैव सवनीयकर्तृत्वविधा[ना]त् शाखान्तरे अस्य न्यायस्य दृष्टत्वाच्च · अत्र मानवे सर्वाः स्रुचः सम्प्रगृह्णाति नक्तं पत्नीसंयाजान्तः संतिष्ठते पाशुबन्धिकमिध्माबर्हिः संनह्यति या यजमानस्य व्रतधुक्तामाशिरे दुहन्ति या पत्न्यास्तां मैत्रावरुण्यै पयस्यायै या प्रवर्ग्यस्य तां दधिघर्मायेति अतो यजमानव्रतदुघां दोहयित्वाशिरे दधि कर्तव्यम् · काठके च ऐन्द्रं दोहयति वत्सानपाकृत्याग्नीध्रीये यजमानो वसतीति पयस्यार्थं वत्सापाकरणं पूर्वेद्युरुक्तम् ।

आवसथोन्मर्दनालङ्करणदन्तप्रक्षालनान्यध्वर्योरदीक्षितस्य ॥२८॥ आवसथो वसत्यर्थं गृहम् · उन्मर्दनं तैलाभ्यङ्गादिना शरीरोन्मर्दनं शरीरसंवाहनं मलापकरणार्थं स्निग्धस्नानादि · अलङ्करणं चन्दनस्रङ्मालाकर्णवेष्टकमुद्रिकावस्त्रादिभिः · दन्तप्रक्षालनं दन्तधावनम् ताम्बूलमिति केचित् · एतानि वस्तून्यदीक्षितस्याध्वर्योर्देयानि · अदीक्षितग्रहणाच्च नैषाङ्गदक्षिणा संस्कारमात्रमेतत् · अतश्चावसथस्यादानं वसतिमात्रार्थत्वात् एवमलङ्करणादेरपि · अत एवात्राध्वर्योरिति षष्ठ्या निर्देशो न सम्प्रदानचतुर्थ्या ॥ ॥ नवमी कण्डिका ॥९॥

इति श्रीत्रिरग्निचित्स्तुतेन याज्ञिकदेवेन कृते कात्यायनसूत्रव्याख्यानेऽष्टमोऽध्यायः ॥

इति कातीये श्रौतसूत्रेऽष्टमोऽध्यायः ॥८॥ ॥

उक्तमौपवसथ्यं कर्म । अधुना सौत्यं कर्मोपदिशति ।

अपररात्रऽऋत्विजः प्रबोधयन्ति ॥१॥ रात्रेरपरस्मिन्भागे यजमानपुरुषा सुप्तानृत्विग्यन्ति जागरयन्ति सौत्यकर्मकरणार्थमुत्थापयन्तीत्यर्थः ऋत्विजः प्रबुध्यध्वमिति प्रैषेण · बहुवचनाद्यजमानपुरुषाः ।

अथ उपस्पृश्य शालाद्वार्ये परिस्तरणपात्रसादनप्रोक्षणाज्यनिर्वपणाधिश्रयणस्रुक्संमार्जनोद्वासनावेक्षणानि कृत्वाग्नीध्र उत्पूय पश्चादाज्यग्रहणम् ॥ २॥ ते च सर्वर्त्विजः प्रबुद्धाः सन्तः कृतशौचस्नानाः उदकं स्पृष्ट्वा सौत्यं कर्म प्रारभन्ते । तत्राग्न्यन्वाधानब्रह्मवरणव्रतग्रहणप्रणीताप्रणयनानामभावः · तेन प्रथमत एवाध्वर्युः शालाद्वार्यसमीप एव परिस्तरणादि पत्न्याज्यावेक्षणान्तं कृत्वा आग्नीध्रे आज्यप्रोक्षणीरुत्पूय पश्चात्पाशुकमाज्यग्रहणं करोति सपृषदाज्यमाज्यग्रहणमित्यर्थः। तत्र यजमान वाचं यच्छेत्युक्त्वा परिस्तरणमौत्तरवेदिकाहवनीयशालाद्वार्यदक्षिणाग्नीनाम् न प्राजहितस्य होमाभावात् नाप्याग्नीध्रीयस्य उपदेशातिदेशयोरभावात् · पात्रासादनमपि शालाद्वार्यसमीप एव पश्चादुदग्वा पाशुकानां पात्राणाम् · प्रोक्षणीः संस्कृत्य पात्रप्रोक्षणम् · अतिप्रणीतमुत्तरेण निधानम् शालाद्वार्यस्य पुरस्ताद्वा अग्रेण गार्हपत्यं निधायेति शाखान्तरे · ततः कुक्कुटाहननम् · आज्यनिर्वापः वेदबन्धनं च · अग्नीधः शालाद्वार्य एवाज्याधिश्रयणम् पर्यग्निकरणमध्वर्योः · उदकोपस्पर्शनम् · ततः आग्नीध्र उत्पवनविधानादाग्नीध्र एव वेदिमध्ये प्रोक्षणीषु धार्यमाणासु स्फ्यमुद्यम्य प्रोक्षणीप्रैषः · तत्रैवासादनम् · उत्करे स्फ्योदकप्रहरणम् न पाण्योः क्षालनम् · अन्तःपात्य एव स्फ्यासादनम् इध्माबर्हिषोश्च · ततः स्रुवस्रुगादीनां पशुवत्संमार्गः संमार्जनस्थापनम् · आज्योद्वासनं पत्न्यवेक्षणं च कृत्वेध्माबर्हिः स्रुगाज्यपृषदाज्यस्थाल्याश्चादायाग्नीध्रमध्ये आज्यमुत्पूय प्रोक्षणीश्चोत्पूयाज्यमवेक्ष्य नानाज्ये कृत्वा पृषदाज्यं च कृत्वा पशुवदाज्यग्रहणं कर्तव्यम् । मानवे विशेषः उत्तरत आहवनीयस्येध्माबर्हिरुपसादयतीति तथा स्रुवाद्दक्षिणा स्रुचं प्रचरणीं तस्याः प्रथमं तूष्णीं संमार्जनमिति ।

आज्यान्यादाय सोमं चार्थवच्चाहवनीय इध्मप्रोक्षणादि करोति ॥ ३॥ आज्यग्रहणानन्तरं तानि गृहीतान्याज्यान्यादाय तमाग्नीध्रे आसन्द्यां स्थापितं सोमं चादाय अर्थवच्च येन च हविर्धाने अर्थो ग्रावद्रोणकलशसोमपात्रादिकेन तच्चादाय आहवनीयसमीप आगत्याध्वर्युरिध्मादि पाशुकं कर्म करोति ।

अग्नीषोमीयवत्स्तरणम् ॥ ४॥ आग्नीध्रवदित्यनेन वतिना खरो वेदिरित्येतल्लभ्यते (८. ७. १३-१४) · ननु च प्राप्तमेवैतत् सवनीयपशोरग्नीषोमीयविकार-

त्वात् सत्यम् उपसंहारार्थं पुनर्वचनमित्यदोषः · तेनाग्नीषोमीयाच्चैकवृत्स्त-रणम् तत्सवनीयपशाविव नान्येषु निरूढादिषु · अतश्च तेषु त्रिवृत्स्तरणमेव भवति नैकवृदिति सवनीयविकारेषु तु एकवृत्स्तरणं भवत्येव अतश्चानूब-न्ध्यायामप्येकवृत्स्तरणम् आज्यासादनान्तम् तस्या अपि सवनीयवदित्यतिदेशात् ।

आज्यासादनात्कृत्वेषान्तरेणार्धसोममद्रिषु संमुखेषु निदधाति हृदे त्वेति (६. २५) ॥ ५ ॥ आ आ॰नात्कृत्वा आज्यासादनं तदालम्भात्मालम्भोदकालम्भान्कृत्वा तदनन्तरं सोममादाय हविर्धानं प्रविश्य सोमं विस्रस्य दक्षिणस्य हविर्धानस्येषा-न्तरलेनार्धसोमं समं सोमस्यार्धविभागं तृतीयसवनार्थमह्नांशुसहितं संमुखेष्वद्रिषु अभिषवार्थपाषाणेषु निदधाति सोमोपनहनवाससैवावहरति ईषान्तरालेना-धश्चर्मण उपरि स्थापितेषु ग्रावसु रथादवतारयति पातयतीत्यर्थः । ·

विश्वास्त्वामिति (६. २६) विसृज्योपतिष्ठते ॥ ६ ॥ ततोऽध्वर्युरेव सोमा-द्वस्त्रं[१] विसृज्य विश्वा॰ति मन्त्रेण सोममुपतिष्ठते · अनुसृज्य (३. १. ३. ७) वेष्टित-वस्त्रं विसृज्येति माधवाचार्याः · विसर्गस्यालम्भपूर्वकत्वात्तस्य च यजमानत्वाद्या-जमानमिदमुपस्थानमिति कर्कः अध्वर्योरेवेत्यन्ये ।

एतेनाहरणा७ सोमार्थस्याभिषवे ॥ ७ ॥ अभिषवे चिकीर्षिते प्रारभ्यमाणे सोमोपयोगिनो द्रव्यस्य एतेनैव ईषान्तरेणैवाहरणं कर्तव्यम् · तच्च हिरण्यम् ग्रावाणः निग्राभ्याः सम्भरणी दशापवित्रं चेति ।

नोद्धरणं ततो बहिर्धाभावात् ॥ ८ ॥ आनीतस्य तेनैव मार्गेण प्रत्युद्धरणं न कर्तव्यम् · कुतः ब॰वात् यतस्तस्य प्रत्युद्धृतस्य यज्ञाद्बहिर्भावो भवति अबहिर्भावश्च श्रूयते अन्तरेणेषेऽउ॰करोतीति (३. १. ३. ३) वाक्यशेषात् · अत ईषान्तरालेनाहरणं यस्य कृतम् तस्य तेन मार्गेण निष्काशनं न कर्तव्यमित्यर्थः ।

अभिषुतस्य चानवहरणं कृतत्वात् ॥ ९ ॥ अभि॰स्य सोमस्य आधवनीया-त्प्रत्याह्रियमाणस्य अन॰णां तेनैव ईषान्तरमार्गेणाधिषवणे प्रक्षेपो न कार्यः कुतः कृतत्वात्तस्य संस्कारस्य · एष एव सदा सोमस्य मार्ग इत्याशङ्कानिवृ-त्त्यर्थमिदमुक्तम् ।

---

१) ? द्वस्तं A. उस्तं B.

प्राग्वाचं प्रवदितोः प्रातरनुवाकोपाकरणं देवेभ्यः प्रातर्यावभ्योऽनुब्रूहीति स-मिधमादधत् ॥ १० ॥ वयसां प्रवदनात् शब्दकरणात्प्राक् प्रात॰रणमध्वर्युः करोति · किं कुर्वन् समिधमौत्तरवेदिकाहवनीयेऽभ्यादधत्सन् देवे॰ ब्रूहीत्यनेन निगदेन ।

देवेभ्य इत्येके ॥ ११ ॥ दे॰भ्योऽनुब्रूहीत्यनेन वा मन्त्रेण ।

सुब्रह्मण्यां च प्रेष्यति ॥ १२ ॥ काठके देवेभ्यः प्रातर्यावभ्योऽनुब्रूहि ब्रह्मन्वाचं यच्छ सुब्रह्मण्य सुब्रह्मण्यां पैतापुत्रीयामाह्वयेति प्रेष्यतीति · एवमेवा-ग्नीध्रे सोमनिधानानन्तरमपि वचनमस्ति · तेन चकारात्पैतापुत्रीयामिति व्याख्यातुं शक्यते · अत एव सूत्रात्प्रैषमध्ये पैतापुत्रीयामिति विशेषेण प्रयोगोऽपि कर्तव्यः ।

प्रातरनुवाकं जाग्रदुपासीताध्वर्युः ॥ १३ ॥ प्रा॰कं होत्रा शस्यमानमध्वर्यु-र्जाग्रत्सन् असुप्तो जागरूकः सन्नुपासीत उप समीपऽएवोपविष्टो भवेत् ।

स्वप्याद्वा ॥ १४ ॥ अथ सवनीयपुरोडाशादिनिर्वापमाह ·

अग्नीदिन्द्रमेकादशकपालं निर्वपति ॥ १५ ॥ अग्नीत्प्रातरनुवाके होत्रा श-स्यमानऽएव इन्द्रदेवतमेका॰लं पुरोडाशं नि॰ति · स सवनीयानां प्रथमं हविः ।

हरिभ्यां धानाः ॥ १६ ॥ द्वितीयं हविः · भृष्टा यवा धाना इत्युच्यन्ते ।

पूष्णे करम्भम् ॥ १७ ॥ तृतीयं हविरग्नीत्करोति · करम्भो दधिसक्तवः · मानवे पश्चार्धे सक्तून्करम्भाय दध्ना प्रयुतान्सर्पिषा वेति · काठके दधि सक्तवः करम्भः सक्तवः परीवाप[१] इति ।

सरस्वत्यै दधि ॥ १८ ॥ चतुर्थं हविः · दध्नो निर्वापाभावात्पयस्यावदग्नीत्कर्तृ-कतासिद्ध्यर्थमत्र स॰धीत्युक्तम् दध्नो देवतासंयोगार्थं च · तेन दध्यर्थाः पयस्यार्थाश्च शाखाच्छेदनवत्सापाकरणादोहनादयः पदार्था अग्नीत्कर्तृका एव भवन्तीत्यवसीयते ।

मित्रावरुणाभ्यां पयस्याम् ॥ १९ ॥ पञ्चमं हविः । शाखान्तरादत्राग्नीधः क-र्तृत्वम् · मानवकठसूत्रयोः प्रतिप्रस्थातः सवनीयान्निर्वपस्वेति प्रेषणपूर्वकं प्रतिप्र-स्थातृकर्तृकत्वमुक्तमस्ति तैत्तिरिब्राह्मणे च ।

इन्द्राय वा हरिपूषसरस्वतिमित्रावरुणवते धानादीनि यथासंख्यम् ॥ २० ॥ वाशब्दोऽवधारणे · इन्द्रायैव एतानि धानादीनि चत्वारि हवींषि भवन्ति पुरो-

१) Thus B. परि॰ A.

डाशस्त्विन्द्रायैवोक्तः · कीदृशायेन्द्राय यं॰ख्यं यथाक्रमेण हरि॰वते · एतदुक्तं भवति इन्द्राय हरिवते धानाः इन्द्राय पूषण्वते करम्भः इन्द्राय सरस्वतिवते दधि इन्द्राय मित्रा॰णवते पयस्येति यं॰ख्यशब्दार्थः · कुत एतत् शाखान्तरे हरिवदादिगुणविशिष्टस्यैवेन्द्रस्य प्रधानादिदेवतात्वेनोक्तत्वात् मन्त्रवर्णाच्च हरिवाँ३ ऽइन्द्रो धाना अत्तु पूषण्वान्करम्भꣳ सरस्वतीवान्भारतीवानित्यादेः। अत्र प्रणीताप्रणयनं सवनीयोपयुक्तपात्रासादनं सवनीयानां ग्रहणादिप्रोक्षणान्ते दोहं तप्ते पयसि दधिप्रक्षेपं धानानां च पूर्वं श्रपणं करम्भार्थानां च पेषणं करम्भं च कृत्वा पुरोडाशाभिवासनान्तमाग्नीध्रस्तदानीमेव प्रातरनुवाके पठ्यमाने कृत्वा तत्समीप ऽएव तिष्ठति रक्षार्थम् ॥ प्रथमा कण्डिका ॥१॥

उन्नेतुः पात्रयोजनम् ॥१॥ प्रातरनुवाके शस्यमानऽएव सोमपात्राणां वक्ष्यमाणमासादनमुन्नेतुर्भवति तच्च समाख्यानादध्वर्योः प्राप्तं वचनादु॰तुर्भवति। तदेवाह·

खरोत्तरपूर्वार्धऽउपाꣳश्वन्तर्यामयोः ॥२॥ खरस्योत्तरार्धे ईशानकोणे उपां॰ख्योः पात्रे योजयति सादयति · योजनं च विशिष्टे देशे स्थापनम्।

दक्षिणमुपाꣳशोः ॥३॥ अर्थादन्तर्यामस्योत्तरम्।

तदपरेण द्विदेवत्यानि प्रत्यञ्चि ॥४॥ तस्य पश्चात्समीपऽएव त्रीणि।

राम्नावमैन्द्रवायवम् ॥५॥ राम्ना मेखला निद्यते यस्य तद्राम्नावम् मत्वर्थीयो वः · मेखलासदृशकाष्ठावयवयुक्तमैन्द्रवायवग्रहस्य पात्रम्।

अजकावं मैत्रावरुणम् ॥६॥ अजागलस्तनी अजका तद्वत् · अजागलस्तनाकारकाष्ठावयवयुक्तं मै॰णग्रहस्य द्विदेवत्यस्य पात्रं भवति · गाण्ड्यजकात्संज्ञायामिति [1] (पा॰ ५.२.११०) मत्वर्थे वः।

औष्ठमाश्विनम् ॥७॥ ओष्ठाकारकाष्ठावयवयुक्तमाश्विनंग्रहस्य।

दक्षिणपूर्वार्धे शुक्रामन्थिनोः ॥८॥ खरस्याग्नेयकोणे शु॰नोः पात्रे।

दक्षिणꣳ शुक्रस्य ॥९॥ अर्थादुत्तरं मन्थिनः पात्रम्।

आग्रयणस्थाली मध्ये ॥१०॥ खरस्य मध्ये आ॰ली योजनीया।

---

1) but Pânini has अजगा॰.

दक्षिणोक्थ्यस्थाली सपात्रा ॥ ११ ॥ आग्रयणस्थाल्याः दक्षिणतः सपात्रा उ॰ली योजनीया · तत्रापि दक्षिणश्रोण्यां स्थाली पात्रं तस्याः पुरस्तादिति ।

तथादित्यस्थाल्युत्तरा ॥ १२ ॥ आग्रयणस्थाल्याः उत्तरतोऽदूरे सपात्रा आ॰ली योजनीया · तत्रापि स्थाली उत्तरश्रोण्याम् पात्रं तस्याः पूर्वे । कठसूत्रे दक्षिणश्रोण्यामुक्थ्यस्थालीं पूर्वमुक्थ्यपात्रमुत्तरस्यां श्रोण्यामादित्यस्थालीं पूर्वमादित्यपात्रमिति ।

ऋतुपात्रे पूर्वे स्रुक्पुष्कराकृतीऽउभयतोमुखे कार्ष्मर्यमयेऽआश्वत्थे वा ॥ १३ ॥ पूर्वेऽइत्याग्रयणस्थाल्याः पूर्वे द्वे ऋतुग्रहपात्रे योजनीये दक्षिणोत्तरे तयोर्दक्षिणमध्वर्युपात्रम् उत्तरं प्रतिप्रस्थातुरिति मानवे · किंलक्षणे स्रु॰ती स्रुक्पुष्करस्येवाकारो ययोस्ते · अग्रे मूले च मुखं ययोस्ते द्विमुखेऽइत्यर्थः · का॰मये श्रीपर्णीवृक्षविकारे आ॰त्थे वा पिप्पलवृक्षकाष्ठनिर्मिते वा ।

ऊर्ध्वानीतराणि प्रादेशमात्राणि मध्यसंगृहीतानि ॥ १४ ॥ इत॰णि ऋतुपात्रव्यतिरिक्तानि अन्यानि उपांशुपात्रादीनि पात्राणि प्रा॰ण्यूर्ध्वानि प्रादेशप्रमाणान्युच्चानि म॰नि मध्यप्रदेशे संकुचितानि भवन्ति · एवविधाश्चोलूखला एव भवन्ति अत एतान्युलूखलरूपाणि भवन्तीत्यर्थः : एतानि च नव पात्राणि वैकङ्कतानि भवन्ति होमार्थानां विकङ्कतमयत्वोक्तेः (१. ३. ३१) · द्वे उपांश्वन्तर्यामपात्रे द्वे शुक्रामन्थिनोः त्रीणि द्विदेवत्यानाम् उक्थ्यपात्रमादित्यपात्रं चेत्येवं नवोलूखला भवन्ति · चतस्रः स्थाल्यः आग्रयणोक्थ्यादित्यध्रुवाणाम् । काठके वायव्यानि हस्तपाणिप्रादेशमात्राणि तृतीयमात्रखातानि नानालक्षणानि वैकङ्कतं मन्थिपात्रमाश्वत्थेऽउभयतोमुखेऽऋतुपात्रे स्रुक्पात्ररूपे तयोरश्वस्येव शफोऽधस्तादिति · मानवे सर्वाण्यूर्ध्वपात्राणि प्रादेशमात्राणि संलग्नमध्यानि तृतीयोडुप्तानीति ।

आग्रयणादपरां परिप्लवां स्रुक्पुष्कराम् ॥ १५ ॥ आग्रयणस्थाल्या अप॰प्लवां लघुपात्ररूपां द्रोणकलशसोमोदञ्चनयोग्यां सादयति · स्रुचः पुष्करमिव पुष्करं यस्याः सा स्रु॰रा · परिप्लवेत्यस्या यौगिकी संज्ञा · सा च द्रोणकलशमध्ये निहिता सती लघुत्वात्प्लवति तरतीति परिप्लवेत्युच्यते अथवा परिसमन्तात्प्लवते तीति परिप्लवा चञ्चला · तया च द्रोणकलशाद्ग्रहणं क्रियते शाखान्तरात्

पूतभृतश्च सर्वत्राप्यायनोन्नयनसम्भरणादौ च सोमो नीयते · सा च वारुणी भवति ग्रहसोमसंयुक्तत्वात् (१. ३. ३६) · स्रुक्पात्रमात्रं पारिप्लवं चतस्रो ग्रहस्थाली-रिति काठके तस्य च विनियोग उक्तः या वां कशेति द्रोणकलशात्पारि-प्लवेन गृह्णातीति · मानवे च परिप्लवा७ स्रुचमदण्डिकामिति तया च द्रोण-कलशाद्ग्रहणं वक्ष्यति · संज्ञाभेदाच्च सम्भरणी ततोऽन्यैवोच्यते ।

अधोऽधोऽक्षं प्रत्यञ्चं द्रोणकलशमत्युह्योपर्युपर्यक्षं पवित्रमस्मिन्करोति शुक्लं ज्ञीवोर्णानाम् ॥ १६ ॥ दक्षिणस्य हविर्धानस्याक्षमधोऽधः अक्षस्याधस्तात्समी-पमार्गेणैव प्रत्यञ्चं॰त्युह्य प्रागग्रमेव प्रतीच्यां प्रेरयित्वा उप॰क्षम् अक्षस्योपरिमार्गेण समीपऽएव प॰त्रं प्रत्यक् नीत्वा अस्मिन्द्रोणकलशे क॰ति · कीदृशम् शुक्लं श्वेत-वर्णम् ज्ञी॰नां निर्मितम् · ऊर्णा मेषरोमाणि ज्ञीवस्योर्णा ज्ञीवोर्णाः तासां ज्ञी-वन्मेषरोमनिर्मितसूत्रनिर्मितमित्यर्थः · तत्प्रमाणं च मानवे यज्ञमानस्यारत्निमात्रं प्रादेशमात्री दशेति पवित्रं पावनार्थम् दशा परिमार्जनार्था दशया संमार्ष्टीति वक्ष्यमाणत्वात् · काठके शुक्लोर्णानां विचितकेशानामूते पवित्रे प्रादेशमात्रा-रत्निमात्रेऽइति एकं प्रादेशमात्रं संमार्गार्थम् अपरमरत्निमात्रं पावनार्थम् इति द्वयोः कार्यम् ।

उभयतोदशं परिप्लवायाम् ॥ १७ ॥ एवंविधमेवोभयतो प्रादेशमात्रं द्वितीयं पवित्रं प॰यां निदध्यात् अर्थादन्यतरतोदशमरत्निमात्रं पवित्रं द्रोणकलशे ·

पूर्वेणोपस्तम्भनमुत्तरं ध्रुवस्थालीमनन्तर्हिते ॥ १८ ॥ उत्तरस्य हविर्धानस्य उपस्तम्भनः स उत्तर उपस्तम्भनः[१] तं पूर्वेण उत्तरादुपस्तम्भनात्पूर्वस्यां दिशि अदूरऽएवानन्तर्हिते प्रदेशे ध्रु॰लीं योजयेत् · अत्रोत्तरमिति वचनाद्द्रोणकलशस्य दक्षिणे हविर्धाने नियोजनम् ।

धुरि प्रचरणीम् ॥ १९ ॥ प्रचर्यतेऽनयेति प्रचरणी पालाशी द्वितीया जुहूरेव · तां संनिधानादुत्तरस्यैवानसो धुरि नियोजयेत् ।

पूर्वेणाक्षमुपरि पूतभृतम् ॥ २० ॥ उत्तरस्यैवानसोऽक्षं पूर्वेणानस उपर्येव पूभृत्संज्ञकं महाकलशं पृथुमुखं योजयति · पूतं सोमं बिभर्तीति पूतभृत् ।

१) रमुप॰ AB.

अपरेणाधवनीयम् ॥ २१ ॥ उत्तरस्यैवानसोऽन्तमपरेणानस उपर्येव आधवनीयसंज्ञकं द्वितीयं महाकलशं पृथुमुखं योजयति · आधूयते प्रक्षाल्यते सोमो ऽस्मिन्नित्याधवनीयः · कठसूत्रे आधवनीयपूतभृतौ च कुम्भौ सोदञ्चनौ सापिधानावपरमाधवनीयमिति ।

प्रागक्षाद्दश चमसान्त्सवृन्तानधः ॥ २२ ॥ तस्यैवोत्तरस्य हविर्धानस्याक्षात्प्राक् अधो भूमौ सवृन्तान्मूलज्ञापकदण्डयुतानुदक्संस्थान्योजयति · तथा चोक्तं मानवे दश चमसान्नैयग्रोधान्रौहीतकांस्त्सरुमतो[1] नानालक्षणानिति · काठके नैयग्रोधाश्चमसा रौहीतका[2] वा सर्वाणि वा पर्णमयानीति ।

प्रत्यगेकधनानयुग्मानुदहरणांस्त्रिप्रभृत्या पञ्चदशभ्यः ॥ २३ ॥ उत्तरस्यैवानसोऽक्षात्प्रत्यक् अधो भूमौ एकधनानयुग्मसंख्यान्निदधाति · एकधनशब्दार्थं स्वयमेव व्याचष्टे उदहरणानिति उदकं ह्रियत एभिरित्युदहरणाः कलशाः · त्र्यादिपञ्चदशपर्यन्तमयुग्मसंख्यान्विषमसंख्यान् (३. १. ३. ३४) अग्निष्टोमे त्रयः पञ्च वा अत्यग्निष्टोमेऽपि तावन्त एव उक्थ्ये पञ्च वा सप्त वा षोडशिनि[3] सप्त नव वा वाजपेये नव वैकादश वा अतिरात्रे एकादश वा त्रयोदश वा अप्तोर्यामे त्रयोदश वा पञ्चदश वेति ।

अभूदुषा रुशत्पशुरित्युच्यमाने ॥ २४ ॥ अस्मिन्मन्त्रे होत्रा शस्यमाने ॥

॥ द्वितीया कण्डिका ॥ २ ॥

चतुर्गृहीतं प्रचरण्या जुहोति शृणोत्वग्निरिति (६. २६) ॥ १ ॥ अध्वर्युः आज्यस्थाल्याज्यादेव चतुर्गृहीतमाज्यं गृहीत्वा प्रचरण्या स्रुचा समिदाधानपूर्वकमतिप्रणीते जुहोति इदमग्न्यब्धिषणाग्रावदेवसवितृभ्य इति त्यागः इदमग्नये अद्भ्यो धिषणाभ्यो देवीभ्यो ग्रावभ्यो देवाय सवित्रे चेति वा ।

अपरं गृहीत्वोदङ्ङत्याहाप इष्य[4] होतरिति ॥ २ ॥ अपरं चतुर्गृहीतं गृहीत्वा उदङ्मुखो गच्छन्सन् अपरतरिति होतारं प्रत्यध्वर्युराह ।

प्रेष्यति च मैत्रावरुणस्य चमसाध्वर्यवेहि ॥ ३ ॥ इति चमसाध्वर्युम् ।

---

1) ? कान्त्समरुतो A sec. m. B. कान्त्सरुमतो A pr. m. 2) रोहित° B. 3) शन्यां B! शिन्यां A! 4) °हापयिष्य M. १.

नेष्टः पत्नीरुदानय ॥४॥ इति नेष्टारम् ।

एकधनिन एत ॥५॥ इत्येकंन ऋत्विज एव ये निर्व्यापारा भवन्ति ।

अग्नीदाग्नाले वसतीवरीभिः प्रत्युपतिष्ठासे होतृचमसेन चेति ॥६॥ अग्नीधं प्रेष्यति · प्रेष्यभेदाच्चवार एते प्रैषाः (३-६) · प्रयोजनम् सावसानं चतुर्णामुच्चारणमिति ।

अपो गत्वा देवीराप इत्यप्सु जुहोति (६. २७) ॥७॥ यच्चतुर्गृहीतं गृहीत्वा सह नीतं तत् अपः प्रति गत्वा देवीराप इत्युदकमध्ये परिस्तरणं कृत्वा जुंति इदमद्भ्य इति त्यागः · अपो गत्वेति वचनात्तत्र गत्वा गृह्यन्ते न पूर्वमाहृताः । प्रैषे पत्नीरिति (४) बहुवचनमविवक्षितम् पत्नीनामनुपादेयत्वात् ते वै सह पत्नीभिर्यन्तीति (३. १. ३. १७) सहगमनमात्रमत्र विधीयते · अत्र मानवे विशेषः नेष्टा पत्नीमभ्युदानयति पान्नेजनपाणिनीं यत्र होतुः प्रातरनुवाकमनुब्रुवत उपशृणुयात्तदपोऽध्वर्युर्वहन्तीनां गृह्णीयाद्यदि दूरे स्युश्चात्वालान्ते गृह्णीयादिति ।

कार्षिरसीति (६. २८) मैत्रावरुणचमसेनाज्यमपोहति ॥८॥ यदप्सु हुतं चतुर्गृहीतमाज्यं तत्कांसीत्यनेन मन्त्रेण मेंसेन करणभूतेन अपोंति अपप्लावयति अपगमयति चमसेन प्रेरयित्वा दूरे करोतीत्यर्थः ।

समुद्रस्य त्वेति (६. २८) तेन गृह्णाति ॥९॥ ततोऽध्वर्युरेव तेन मैत्रावरुणचमसेन तडागादिस्था अपो गृह्णाति ।

एकधनांश्चोन्नयन्ति ॥१०॥ चकारादनेनैव मन्त्रेण एकंनानुन्नंन्ति उदकेन पूरयित्वा उत्क्षिपन्ति जलमध्यादूर्ध्वं निष्काशयन्ति · बहुवचनादेकधनिन एवोन्नयन्ति एकधनिन एतेति (५) ये सम्प्रेषितास्ते · यौगिकत्वाच्च संज्ञायाः · प्रकृतानामेवैके केचिदेकधनिनो भवन्तीति पितृभूतिः ।

पान्नेजनांश्च पत्न्यो द्वौ-द्वौ ॥११॥ उन्नयन्ति · वीप्साकरणात्प्रतिपत्नि द्वौ-द्वाविति गम्यते · चकारस्योन्नयतिक्रियाकर्षणेन कृतार्थत्वान्न मन्त्राकर्षणम् तेन तूष्णीमेव पान्नेजनोन्नयनं पत्नीभिः कर्तव्यम् पान्नेजनार्थान् लघुकलशानद्भिः पूरयित्वोत्क्षिपन्तीत्यर्थः । पत्न्य इति प्रकृतस्य यज्ञस्य स्वामिन्यः पत्न्य इत्युच्यन्ते पत्युर्नो यज्ञसंयोगऽइति (पा॰ ४. १. ३३) स्मरणात् · यद्येवम् अबहुपत्नीकस्य ज्यो-

तिष्टोमो न प्राप्नोति न ह्यबहुपत्नीकस्य पत्नीभिः सहापां प्रति गमनं बहुपत्नीकं च पान्नेजनोन्नयनं सम्भवति · नैष दोषः · धर्मप्रजासम्पन्ने दारे नान्यां कुर्वीतेति स्मरणात् सर्व एव त्रैवर्णिकः प्रथमकल्पे एकपत्नीकः प्रथमकल्पे च ज्योतिष्टोमशास्त्रं नित्यं प्रवर्तते नानुकल्पऽएव · तत्र बहूनां मुख्यानां पत्नीनां कदाचित्सम्भवः कदाचिदसम्भव इति शास्त्रान्तरवशात्सम्भवन्तीं संख्यामङ्गीकृत्यैतद्वचनं वृत्तमिति गम्यते · ततश्च यस्यैका पत्नी तस्य तयैव सह यन्ति सैव द्वौ पान्नेजनौ उन्नयति यस्य द्वे तस्य द्वाभ्याम् द्वेऽअपि द्वौ-द्वौ पान्नेजनावुन्नयतः यस्य बह्व्यः तस्य बह्वीभिः तिस्रो पि द्वौ पान्नेजनौ पृथगुन्नयन्तीत्येवमवधार्यते। एकेन पान्नेजनेन पशुशुन्धनम् अपरेणोर्वभिषेकः।

प्रत्येत्य चात्वालस्योपरि मैत्रावरुणचमसं वसतीवरीश्च संस्पर्शयति समाप इति (६. २८) ॥ १२ ॥ जलाशयात्प्रत्यागत्य चात्वा°रि अध्वर्युर्मैत्रा°वरीश्च परस्परं संमर्शयति अन्योऽन्यसंसर्गायोभयस्था अपः संयोजयतीत्यर्थः · अत्र चमसशब्देन लक्षणया तत्स्था आप उच्यन्ते।

इतरेतरस्मिन्व्यानयन्त्येके ॥ १३ ॥ शाखिनः इत°स्मिन्व्यानयनं कुर्वन्ति।

मैत्रावरुणचमसे प्रथमम् ॥ १४ ॥ अस्मिन्पक्षे प्र°मं मै°मसे वसतीवरीर्निनयन्ति ततो मै°साद्वसतीवरीषु निनयन्तीत्यर्थः उभयत्र समापोऽअद्भिरित्ययं मन्त्रः। पूर्वस्मिन्पक्षे उभयोः संमार्जनमात्रमुपायेन[1] कार्यम् न क्वचित्कस्यचिन्निनयनम् अस्मिंश्च पक्षे इतरस्य मध्यऽइतरस्य निनयनमिति विशेषः।

होतृचमसे वसतीवरीः कृत्वा यजमानाय प्रयच्छति निग्राभ्याः ॥ १५ ॥ ततोऽध्वर्युर्होतृ°वरीः कृत्वा आसिच्य य°नाय समर्पयति · ताश्चाध्वर्युणा यजमानाय समर्पिताश्चमसस्था आपो निग्राभ्यासंज्ञका भवन्ति अभिषवार्थाः ताभ्य एव च ग्रहा अपि ग्रहीष्यन्ते · अनेकयजमानके च गृहपतयऽएव निग्राभ्यासमर्पणम् परार्थत्वात्।

होत्रा पृष्टः प्रत्याहोतेव नंनमुरिति (३. १. ३. ३१) ॥ १५ ॥ ततः सर्वे चात्वालाद्धविर्धानद्वार्युपविष्टं होतारं प्रत्यागच्छन्ति · ततो होताधर्युं पृच्छति अध्वर्योऽवेरपा३ इत्येवम् · सोऽध्वर्युरेवं होत्°ष्टः सन् उते°मुरित्येवं प्रतिवक्ति।

---

१) Thus B. संसर्ज° A.

प्रचरणीसꣳस्रवमग्निष्टोमे जुहोत्यभावे चतुर्गृहीतं यमग्नऽइति (६. २१) ॥ १६ ॥ अग्नि°मसंस्थे क्रतौ प्रारब्धे प्रच°स्रवं जु°ति · तस्य प्र°वस्य होमपर्याप्तस्याभावे च- तु°तमाज्यं गृहीत्वा जु°ति · इदमग्नयऽइति त्यागः ।

उक्थ्ये प्रथमं परिधिमालभते ॥ १७ ॥ उक्थ्यसंस्थे क्रतौ प्रारब्धे सति प्र°भते हस्तेन स्पृशति । मानवे अपरया द्वारा पत्नी सदः प्रविश्य वसवो रुद्रा आदित्या इति पश्चान्नेष्टीयस्य पान्नेजनꣳ सादयति हविर्धानमभ्युदानयत्यग्रतो मै- त्रावरुणचमसीया होतृचमसीया[1] वसतीवरीरनुपूर्वꣳ सवनीयकलशानिति[2] · तथा प्रचरण्याग्निष्टोमे यमग्नऽइति क्रतुकरणीं जुहोत्येतेनोक्थ्ये[3] परिधिमङ्ग्या- देतेन षोडशिनि ररार्टीं द्रोणकलशं चोपस्पृशेद्धविर्धाने प्रचरणीमाधाय प्रधुरेवै- तज्ञपन्हविर्धानं[4] प्रपद्येतातिरात्रे वाजपेयेऽप्तोर्यामणीति ।

प्रविशत्येवान्यत्र ॥ १८ ॥ अग्निष्टोमोक्थ्याभ्यामन्यत्र हविर्धानं प्रविश- त्येव · एवकारो होमपरिध्यालम्भनयोर्व्युदासार्थः मन्त्रस्याविधानादेव निरस्त- त्वात् मन्त्रव्युदासार्थ इत्यन्ये ।

ररात्यालम्भनं वा षोडशिनि ॥ १९ ॥ अथवा षोडशिसंस्थे यज्ञे प्रारब्धे तूष्णीमेव ररात्याः स्पर्शनं कर्तव्यम् शाखान्तरात् · वा प्रवेशनमेव · यमग्नऽइति (६. २१) मन्त्रेणेत्यपरे शाखान्तरात् ।

छदिरतिरात्रे ॥ २० ॥ अथवा अतिरात्रसंस्थे यज्ञे प्रारब्धे तूष्णीमेव छदि- रालभते न मन्त्रेणेति · मन्त्रेणेत्यन्ये शाखान्तरात् · प्रवेशनमेव वा ।

अतीत्य दक्षिणेन होतारं मैत्रावरुणचमसमाधवनीयेऽवनयति वसतीवरि- तृतीयं[5] चाग्निः प्रातःसवने पात्वस्मान्वैश्वानरो महीनां विश्वशम्भूः स नः पा- वको द्रविणं दधात्वायुष्मन्तः सहभक्षाः स्यामेति ॥ २१ ॥ अध्वर्युर्हविर्धानद्वा- र्युपविष्टं होतारं दक्षिणेनातिक्रम्याधवनीयसमीपे गत्वा मैत्रा°मसस्थमुदकमाध°नी- यसंज्ञे कलशेऽव°ति सर्वमपि निनयति · ततोऽध्वर्युरेव वसतीवरीणां तृतीयमंशं चाधवनीये निनयति अनेनैव मन्त्रेण । अती°तारमित्यव्ययार्थमुक्तम् ।

---

१) हो°या deest B. २) सवनीय deest B. ३) यज्ञमग्न°करणि जुहोत्येते° B.
४) ? Thus AB. प्रधुरे° A pr. m. ५) Thus AB. °वरीतृतो° M. १.

तावच्चैकधनानाम् ॥ २२ ॥ तावदिति तृतीयं भागं सर्वेषामेकधनानामेकध-नस्थानामपां क्रमेणाधवनीयेऽवनयत्यध्वर्युरनेनैव मन्त्रेण ।

एकधनस्थानऽउभयशेषं निधाय ॥ २३ ॥ ॥ तृतीया कण्डिका ॥ ३ ॥

अधिषवणे पर्युपविशन्ति ॥ १ ॥[1] उभयशेषमित्येकधनशेषं वसतीवरिशेषं चैकस्थाने निधाय यत्नेन स्थापयित्वा अधिषवणचर्मणः समीपे पंक्ति परितः सर्वत उपविशन्ति । एकधनस्थानं चोत्तरस्य हविर्धानस्याधस्तादक्षस्य पश्चात् ।

उत्तरतोऽध्वर्युयजमानौ ॥ २ ॥ अधिषवणस्योत्तरेणौ उपविशतः ।

पूर्वोऽध्वर्युः ॥ ३ ॥ तयोः पूर्वोऽध्वर्युः पूर्वस्यां दिशि सामर्थ्याद्दक्षिणाभिमुखः उपविशेत् अर्थादपरो यजमानः । अनेकेषु तु गृहपतिरेव ।

अपरेण परीत्येतरे त्रयः ॥ ४ ॥ इतरे त्रयः अध्वर्युपुरुषाः प्रतिप्रस्थातृनेष्टृन्नेतारः अ-परेणाधिषवणं परीत्य दक्षिणत उदङ्मुखाः प्रदक्षिणमुपविशेयुः । एते चापरेणाधिष-वणं गच्छन्तो हविर्धानस्य पश्चादुपविष्टानामुद्गातॄणामपरेण गच्छेयुः । प्रतिप्रस्थाता तु प्रतिकर्तारं बहिःकरोति तस्य निकृष्टत्वात् ऋत्विजां च यथापूर्वमिति (१. ८. ३२) परिभाषायामन्तर्बहिर्भावस्योक्तत्वात् ।

देवस्य त्वेत्यद्रिमादाय (६. ३०) वाचं यच्छति प्रागभिहिङ्कारात् ॥ ५ ॥ अध्वर्युः ।

स उपांशुसवनः ॥ ६ ॥ योऽध्वर्युणा ग्रावा गृहीतः स उपांशुसवनसंज्ञको भ-वति । उपांशुग्रहार्थं सोमः सूयते येन स उपांशुसवन इति यौगिकी संज्ञा ।

निग्राभ्यासु वाचयत्युरस्येना निगृह्य निग्राभ्या स्थेति (६. ३०) ॥ ७ ॥ करणा-सम्भवादालम्भसप्तमीयम् निग्राभ्यास्विति । ततश्चायमर्थः । अध्वर्युर्निग्राभ्यासु यज-मानेनोरसि निगृह्यास्वालभ्यासु च निग्राभ्यास्थेत्यमुं मन्त्रं यजमानं वाचयति यजमानश्च स्वकीयोरसि निग्राभ्या निगृह्यालभ्य चेमं मन्त्रं वक्तीत्यर्थः । अनेकय-जमानके मुख्यस्यैवोरसि निग्राभ्याः वाचनं सर्वेषाम् ।

उपांशुसवने सोमं मिमीतऽइन्द्राय त्वा वसुमते रुद्रवतऽइति (६. ३२) पञ्चकृत्वः प्रतिमन्त्रम् ॥ ८ ॥ वाचनानन्तरमध्वर्युः उपांशुसवनमधिषवणचर्मणि निधाय तस्मि-

---

[1] ३. २३. and ४. १. form in AB. one sûtra.

न्नुपांश्वने पञ्चवारं सोमीति इन्द्रायवतइति पञ्चभिर्मन्त्रैः प्रत्यृचम् एकैकमीषा-न्तरेणोपावहृतसोमस्य मुष्टिमुपांशुसवनस्योपरि प्रक्षिपति ।

यत्तऽइति (६.३३) मितालम्भनम् ॥९॥ मितस्योपांशुसवने पञ्चवारं प्रक्षिप्तस्य सोमस्य मन्त्रान्ते स्पर्शनं करोति · अनेकयजमानके चास्योहः तेनाभ्यां यजमानाभ्यामुरु तेनेभ्यो यजमानेभ्य उरु इति । अत्रायं पदार्थानां क्रमः उप-वेशनम् अभिषवार्थानामीषान्तरेणाहरणम् हिरण्यं ग्रावाणो निग्राभ्याः सम्भ-रणी दशापवित्रे चेत्येतेषाम् ततोऽध्वर्योरनामिकायां हिरण्यमुद्रिकाबन्धनम् अध्वर्योरह्यादानम् वाग्यमनम् उपांशुसवने सोममानम् मितालम्भनम् । अथ प्रथमं क्षुल्लकाभिषवमाह ·

प्रतिप्रस्थाताऽंशून्षडादत्ते ॥१०॥ मितात्सोमात्षट् सोमलताखण्डानि ।

अङ्गुल्यन्तरेषु द्वौ-द्वौ कुरुते ॥११॥ ये षडंशवो गृहीताः तेषां मध्ये द्वौ-द्वावंशू शाखान्तरात्सव्यहस्ताङ्गुलीनां त्रिष्वन्तरालेषु कुरुते प्रतिप्रस्थातैव ।

आत्रा स्थेत्यासिञ्चति (६.३४) निग्राभ्याः ॥१२॥ अध्वर्युः सोमस्योपरि होतृचमसेनैव निग्राभ्याः आपः ति निनयति ।

प्रहरिष्यन्द्वेष्यं मनसा ध्यायेदमुष्माऽअहं प्रहरामि न तुभ्यऽ सोमेति ॥१३॥ सोमे ग्राव्णा प्रहरिष्यन्नध्वर्युर्द्वेषकरणायोग्यं वैरिणं हन्तव्यं मन्येत् · अमुष्माऽइत्यस्य स्थाने वैरिणश्चतुर्थ्यन्तं नाम ग्राह्यम् असावित्यपनोदऽइति (१.२.१७) परिभाषितत्वात् ।

अभावे तृणम् ॥१४॥ वैरिणोऽभावे तृणं मन्येत् तृणायाहं प्रहरामि सोमेत्येवम् ।

मा भेरिति (६.३५) प्रहरति ॥१५॥ अध्वर्युरुपांशुसवनेनाद्रिणा सोमे ।

एवं त्रिरभिषुणोत्यासेचं निग्राभ्याः ॥१६॥ निग्राभ्या आसिच्यासिच्य एव-मेव वारत्रयमभिषवं करोति । अथ त्रिरभिषवे क्रमेण प्रहारसंख्यामाह

अष्टकृत्व एकादशकृत्वो द्वादशकृत्वः ॥१७॥ यथासंख्येन प्रथमेऽभिषवे अष्टवः प्रहरति द्वितीये एकादशवः तृतीये द्वादशव इति ।

सर्वे पञ्चवर्गाः पशुकामस्य ॥१८॥ पशुकामस्य यजमानस्य सर्वे त्रयोऽप्यभि-षवाः पञ्चप्रहारा भवन्ति (४.१.१.१६) ।

अष्टवर्गा ब्रह्मवर्चसकामस्य ॥१९॥ (४.१.१.१४) ।

प्रतिवर्गं निग्राभं वाचयति होतृचमसेऽल्पानꣳशूनवधाय प्रागपागिति (६. ३६) ॥२०॥ प्रतिप्रहारवर्गं अल्पस्तोकान्सोमांशून्निधाय प्रा॰गित्यमुं मन्त्रं निग्राभसंज्ञं वाचयति · मानवे विशेषः अभिषुतानꣳशून्प्रागपागुदगिति होतृचमसे परिप्लावयति प्रपीड्य प्रत्याहरतीति · तेनाभिषुतानेवांशून्होतृचमसेऽवधाय वाचयित्वा निष्पीड्य प्रत्याहरेत् ।

अद्रिणा चतुर्थम् ॥२१॥ च॰र्थं निग्राभवाचनमद्रिणा कुर्यात् अद्रिमुपांशुसवनमेव होतृचमसेऽवधाय कुर्यादित्यर्थः ।

तूष्णीं वा ॥२२॥ नैव वा चतुर्थं वाचनम् किंतु तूष्णीमेव होतृचमसेऽद्रिमवदध्यात् एवमपि यतः शाखान्तरे श्रुतम् ।

उपाꣳशु च गृह्णातिं वाचस्पतये देवो देवेभ्यो मधुमतीरिति (७. १-२) ॥२३॥ निग्राभवाचनानन्तरं चशब्दात्प्रतिवर्गमेव उ॰शुसंज्ञकं ग्रहं गृ॰ति यथासंख्यं वाच॰मतीरित्येतैर्मन्त्रैः प्रतिमन्त्रम् एकैकेन मन्त्रेण प्रतिवर्गं तृतीयांशं गृह्णीयात् अत्र च प्रति-ग्रहणं उपयामगृहीतोऽसीत्यस्य प्रयोगः कार्यः उपयामः सर्वत्राविशेषादिति (१२. ५. १५) वक्ष्यमाणत्वात् तेनोपया॰तोऽसि वाचस्पतये पवस्वेति उप॰तोऽसि देवो देवेभ्य इति उप॰तोऽसि मधुमतीरित्येवं प्रयोगः कार्यः · आपस्तम्बसूत्रे विशेषः पवित्रमुपयामः सादनं च न विद्यतऽइति । तेनात्रायं क्रमः निग्राभ्यासेकः अष्टकृत्वोऽभिषवः वाचनं ग्रहणम् पुनर्निग्राभ्यासेकः एकादशकृत्वोऽभिषवः वाचनं ग्रहणम् पुनरपि निग्राभ्यासेकः द्वादशकृत्वो[1]ऽभिषवः वाचनम् अद्रिमवधाय चतुर्थवाचनम् ततस्तृतीयवारं ग्रहणमिति ।

प्रतिप्रस्थातोपगृह्णाति पात्रम् ॥२४॥ ग्रहग्रहणकाले प्र॰ता दक्षिणहस्तेनोपांशुपात्रमुप॰ति अध्वर्योः समीपे धारयति ।

आत्तानां च द्वौ-द्वावन्तर्दधाति ग्रहणभेदात् ॥२५॥ प्रतिप्रस्थाता मितात्सोमाद्ये षडंशवो गृहीतास्तेषामात्तानां गृहीतानां मध्ये द्वौ-द्वावंशू प्रति-ग्रहणमन्त॰ति ग्रहे गृह्यमाणे पात्रमुखस्योपरि अङ्गुल्यन्तरे कृत्वा धारयति · द्वौ-द्वौ कुतः ग्र॰दात् त्रीणि च भिन्नानि ग्रहणानि षडंशवः अतः समं स्यादश्रुतत्वा-

1) एकादश॰ AB.

दिति न्यायेनैष एव विभागः प्राप्नोति · षड्भिः पावयतीति (४. १. १. ३) च ग्रहणा-त्रयमपेक्ष्य षड्भिरित्युपपन्नं भविष्यति । किं च ·

मन्त्रलिङ्गाच्च ॥ २६ ॥　　न केवलं ग्रहणभेदादिति हेतोर्द्वौ-द्वौ प्रति-ग्रहणा-मन्तर्दधाति　किंतु मन्त्रलिङ्गादप्येवमेव ज्ञायते · अत्र च ग्रहणमन्त्रे वृष्णोऽअंशुभ्यां गभस्तिपूत इति (७. १) अंशुभ्यामिति द्विवचनं दृश्यते तच्च तदैवोपपद्यते यदा एष विभागो भवति । सिद्धान्तमाह ·

षड्वा श्रुतिसामर्थ्यात् ॥ २७ ॥　　वावधारणे · षडेवांशून्प्रति-ग्रहणमन्तर्दधाति न प्रति-ग्रहणं द्वौ-द्वौ · कुतः　श्रुत्यर्थात् एवं च षड्भिः पावयतीति (४. १. १. ३) श्रुतिः संगतार्था भवति　अन्यथा एकस्मिन्नपि ग्रहणे षड्भिः पावनाभावादसं-गता स्यात् · मन्त्रलिङ्गं (२६) त्वकिंचित्करम् मन्त्राणामविधायकत्वात् · अतः सव्या-ङ्गुल्यन्तरेषु द्वौ-द्वावंशू कृत्वा दक्षिणहस्तधृतपात्रमुखस्योपरि धारयित्वान्तऽइत्यर्थः · अध्वर्युश्च तथा ग्रहणं करोति यथा षड्भिरंशुभिः पूतः सोमो ग्रहपात्रमध्ये पत-तीति　पवित्रेणाधिषवणात्सोमरसं नीत्वा ग्रहपात्रमुखस्योपरि धृतानां षडंशू-नामुपरि द्वाभ्यां हस्ताभ्यां पवित्रं निष्पीडयतीत्यर्थः ।

यत्तऽइत्यात्तान्सोमे (७. २) निदधाति ॥ २८ ॥　　पावनार्थमात्तान्गृहीता-न्सोमांशून्सोमे निदधाति प्रतिप्रस्थातैव　आत्तानित्युक्तवाक्येनात्ताः स एव नि-दधातीति प्रतीयते · सोमे इति लतासोमऽइति कर्कः　अजीषद्वपऽइति जीर्णाः सम्प्रदायः · तथा च मानवे　यत्ते सोमादाभ्यमित्यवगृहीतानां प्रतिप्रस्थाताऽ-शुषु द्वौ-द्वावऽशू प्रत्यवसृजतीति · अत्र प्रतिशब्दप्रयोगाद्यतो गृहीतास्तत्र प्रति-प्रक्षेपो गम्यते · कठमैत्रसूत्रयोस्तु प्रतिग्रहणं द्वयोर्द्वयोरेवान्तर्धानमुक्तम् · अञ्ज-लिनावग्रहणमुक्तं हरिस्वामिभिरपि · कर्काचार्यैरपि प्रति-ग्रहणं द्वाभ्यां-द्वाभ्यामे-वान्तर्धानं सिद्धान्तितम् · तथा च मानवे　अष्टौ कृत्वोऽभिषुत्य वाचस्पतये पव-स्वेत्युपाऽशुपात्रेऽञ्जलिना तृतीयग्रहमानयति एवमेकादशकृत्वोऽभिषुत्यैवं द्वादश-कृत्वोऽवगृहीतानां प्रतिप्रस्थातासिच्यमाने द्वौ-द्वावऽशूऽअन्तर्दधातीति · काठके अत्रा स्थेति होतृचमसात्सोमऽ स्नेहयित्वा तस्य षडऽशून्प्रतिप्रस्थाता सव्ये पा-

णावभिषवति[1] द्वौ द्वावसꣳश्लिष्टौ तस्मिन्नुपाꣳशुपात्रमादायेति · तथा अभिषु-
णुयादष्टकृत्व उपाꣳसुसवनपाणिरञ्जलिनोपाꣳशुपात्रे सोममासिञ्चति वाचस्पतये
पवस्वेति प्रवृह्याꣳशून्प्रतिप्रस्थातान्तर्दधाति देवो देवानामिति प्रत्यभिषवति[2]
भूयसीरासिच्यैकादशकृत्वोऽभिषुत्यैवमासिञ्चति एवमन्यौ प्रतिप्रस्थाता भूयसीरा-
सिच्य द्वादशकृत्वोऽभिषुत्यैवमासिञ्चतीति ।

परिमृज्यासादनमुपाꣳश्वन्तर्यामयोः ॥ २९ ॥ ग्रहणानन्तरं दशापवित्रेण ग्रहमु-
लूखलं परिमृज्योपांशभयोरसादनम् सादनं न[3] कर्तव्यम् । उभयोरनयोर्विधिस्तुल्यः
पठितोऽस्ति अतो ग्रन्थलाघवायाचार्य उभयोः सहैव कतिचिद्धर्मानुपदिशति ।

अभिचरन्सादयेदविसृजन्नमुष्य त्वा प्राणꣳ सादयामीति (४. १. १. १७) ॥ ३० ॥
अभिचारं कुर्वन् उपांशुग्रहं हस्तेनाविमुञ्चन्सादयेत् ।

उदानमित्यन्तर्यामम् ॥ ३१ ॥ अमुष्य त्वोदानꣳ सादयामीत्यनेन मन्त्रेण ।

पाणिना चापिदधात्यमुष्य त्वा प्राणमपिदधामीति ॥ ३२ ॥ (४. १. १. १८) ।

उदानमित्यन्तर्यामम् ॥ ३३ ॥ अपिदधाति ।

स्वाहेत्युक्त्वोर्वन्तरिक्षमिति (७. २) निष्क्रमणम् ॥३४॥ ग्रहणानन्तरं परिमृज्याना-
साद्यैव स्वाहेति मन्त्रं पठित्वा उर्वित्यनेन मन्त्रेण हविर्धाननिष्क्रमणमध्वर्युः करोति।

अन्वारभतेऽन्यस्मै प्रदाय होतृचमसम् ॥ ३५ ॥ यजमानोऽध्वर्युमन्वारभते ।

वरं वृत्वा ददाति च ॥ ३६ ॥ यजमानो वरं वृत्वा पुत्रो मेऽस्तु स्वर्गो मे
ऽस्त्वित्येवम् इदं मे स्यादित्यभीष्टं प्रार्थयित्वा तदनन्तरं ददाति च संनिधानादध्वर्यवे।

स्वांकृत इति (७. ३) हुत्वा पात्रमुन्मार्ष्टि ॥ ३७ ॥ उपांशुग्रहं सशेषं स्वल्पं
हुत्वा ग्रहपात्रमूर्ध्वमुन्मार्ष्टि । काठके ग्रहमादाय स्वांकृत इत्युत्थायोर्वन्तरिक्ष-
मिति दक्षिणा परिक्रम्य दक्षिणार्धेऽग्नेर्ऋजुस्तिष्ठन्त्सर्वहुतामित्यादि · मानवे स्वां-
कृतोऽसीत्यादायोत्तिष्ठति उर्वन्तरिक्षं वीहीति[4] व्रजति दक्षिणेन होतुर्गत्वाहु-
त्तरेणाभिप्रयम्य ग्रहं दक्षिणं परिधिसंधिं प्रत्यवस्थाय विश्वेभ्य इन्द्रियेभ्य इति
जुहोतीति । अत्र इदꣳ सूर्यायेति त्यागः ।

---

1) Thus A pr. m. °वतिष° A sec. m B. 2) Thus AB. 3) °योरासादनं न B., in A. lacuna from °भयो° to °र्य उभ[यो· 4) ? वाहीति A. विहीति B.

प्रथमे परिधाउत्तानं पाणिं प्रागुपमार्ष्टि देवेभ्यस्त्वेति (७. ३) ॥ ३८ ॥ अध्वर्युर्ग्रहं हुत्वा पात्रमुन्मृज्योन्मार्जनेन सोमलिप्तमुत्तानं पाणिं प्रथमे परिधौ प्राङ्मार्ष्टि · दृष्टार्थत्वाच्च परिधेरधस्ताद्धस्तं प्रवेश्य पश्चादाकर्षति · तथा सति स्रुवस्य प्राक्संमार्जनवद्धस्तस्य प्रागुपमार्जनं सम्पद्यते ।

वासऊरोबाह्वोषु श्लिष्टमंशुमभिचरन्नुज्जुहुयाद्देवांशवितिति (७. ३) ॥ ३९ ॥ अध्वर्योर्वस्त्रे हृदये बाह्वोर्वा श्लिष्टम् अभिषवं कुर्वतो ग्रावाभिघातवशादुड्डीय वस्त्रादिषु संलग्नं सोमांशुम् अर्थात्तत आदाय अभिचरन् आहवनीये जुहुयात् ।

आग्रयणस्थाल्यांशेषैकदेशमासिच्यांशुं प्रास्यति तृतीयसवनाय ॥ ४० ॥ ततो हविर्धानं प्रविश्य खरसमीपउपविश्य तस्य उपांशुग्रहशेषस्यैकं भागमाग्रयणस्थाल्यां निनीय तृतीयसवनार्थमेकं महान्तं प्रलम्बं सोमांशुं कुण्डलिकात्वमापादितं प्रक्षिपति प्रस्तावादुपांशुग्रहपात्रएव[1] । मानवे आग्रयणस्थाल्यांसम्पातमवनयति प्राणाय त्वेत्युपांशुपात्रं सादयति तस्मिन्नंशुमवदधातीति ।

प्राणाय त्वेति (७. ३) पात्रसादनम् ॥ ४१ ॥ स्वस्थाने उपांशुग्रहपात्रं सादयति ।

उपांशुसवनं पाणिना प्रमृज्योदञ्चं व्यानाय त्वेति (७. ३) संस्पृष्टम् ॥ ४२ ॥ ततोऽध्वर्युरुपांशुसवनं पाणिना हस्तेन प्रमृज्य तत्संलग्नमृजीषादिकं मार्जनेनाधः पातयित्वोदङ्मुखं संस्पृष्टमुपांशुपात्रसंलग्नमेव सादयति · मुखं चास्य येनाभिषवः कृतः ।

उपविष्टयोः[2] ॥ ४३ ॥　　॥ चतुर्थी कण्डिका ॥ ४ ॥

अभिषुण्वन्ति चत्वारः पर्युपवेशनसामर्थ्यात् ॥ १ ॥ अभिषवकर्मणि चतुर्णामश्रुतत्वादध्वर्योरेवाभिषवे प्राप्ते आह · ग्रहं हुत्वागत्याधिषवणसमीपे अध्वर्युयजमानयोरुपविष्टयोः सतोः तयोरुपवेशनानन्तरमित्यर्थः ततश्चत्वारोऽध्वर्युप्रतिप्रस्थातृनेष्टुन्नेतारोऽभिषुण्वन्ति ग्रावभिः सोमस्याभिषवं कुर्वन्ति · कुतः पर्युपवेशनसामर्थ्यात् अथाधिषवणं शम्यान्तीति (३. १. ४. १) विहितस्य पर्युपवेशनस्यैवं सामर्थ्यं समर्थत्वं संगतार्थत्वं भवति यदि ते सर्वेऽप्यभिषुण्वन्ति इतरथा त्वदृष्टार्थं स्यात् न च दृष्टे सम्भवत्यदृष्टार्थत्वं युज्यते ।

आप्यायनान्तोऽभिषवस्त्रिपर्यायः ॥ २ ॥ महाभिषवएवायं विशेषः अभिषवः आप्यायनान्तः स्यात् त्रिपर्यायश्च · अंशुरंशुष्टइति (५. ३) मन्त्रेण सोमालम्भनम्

---

1) प्रस्तावा॰ A.　2) ४. ४३ and ५. १ form in AB one sûtra.

तदेतस्यासावाप्याण्न्तः अभिषवस्यान्ते आप्नं कर्तव्यमित्यर्थः · त्रयः पर्याया आवृत्तयो यस्यासौ त्रिपर्ण्यः त्रयाणां पर्यायाणामन्ते सकृदाप्यायनं कर्तव्यमित्यर्थः ।

मत्या[१] ॥३॥ मतिरिष्टा तया · अस्मिन्नभिषवे इष्टया प्रहरणं भवति यावता सोम ऋजीषभावं प्राप्नोति नीरसश्च · न पूर्वोक्ताभिषववत्प्रहारसंख्यानियमः तस्याश्रुतत्वात् । शेषमद्यादानादि सर्वं पूर्वोक्तमत्र भवति ।

पर्यायादिषु निग्राभ्यासेचनम् ॥४॥ पर्यायाणां त्रयाणामादयः पञ्चयस्तेषु पञ्चदिषु पर्यायप्रारम्भे रसप्रच्युत्यर्थं निग्राभ्चनं भवति · इति पूर्वः पक्षः । सिद्धान्तमाह ·

प्रथमे वा प्रभूत्वात् ॥५॥ प्रथमऽएव पर्याये निग्राभ्चनं स्यात् · प्रभवन्ति प्रथमऽएव पर्याये सिक्ताः सर्वपर्यायेषु सोममार्द्रीकर्तुम् ।

निग्राभान्ते सरसानछशूनत्सम्भरण्याधवनीयेऽवधायाधूयाहरति ॥६॥ अत्रायं क्रमः · सर्वेषां हिरण्यबन्धनम् चतुर्णामद्यादानम् निग्राभ्यासेकः सोमं चतुर्धा विभज्य मा भेरिति प्रहरणम् मत्याभिषवः एवं पर्यायः इतस्ततः पतितं सोमं पुञ्जीकृत्य विश्रम्य पुनः प्रहरणादि द्वितीयः पर्यायः पुनः पुञ्जीकृत्य तृतीयः तत आप्यायनम् ततो होतृचमसेऽभिषुतान्सोमांशूनवधाय निग्राभवाचनं प्रागपागिति · निग्राण्न्ते निग्राभवाचनान्ते सण्शान्सोमांशून्सण्ण्या सम्भरणासमर्थेनार्थाद्विपेन पात्रेण कृत्वा आधण्नीयसंज्ञके कलशे सोदके अवधाय प्रक्षिप्य आधूय प्रक्षाल्य परिप्लाव्य निष्पीड्य[२] ततो निष्काश्य सम्भरण्यैवाहृण्ति आहृत्याधिषवणस्योपरि प्रक्षिपति · मानवे ततः सम्भरति प्रपीड्योन्नेताधवनीये परिप्लावयति प्रपीड्योन्नेताधिषवणे निवपतीति · सम्भ्रियतेऽभिषुतः सरसः सोमोऽस्यामिति सम्भरणी वारणं महत्पूर्णपात्रमिति तच्च परिप्लवातो भिन्नम् सम्भरणो संज्ञाभेदात् · परिप्लवा च द्रोणकलशात्सोमस्य ग्रहादौ ग्रहणार्था शाखान्तरे दर्शनात् ।

एवं द्विरपरम् ॥७॥ यथा एकवारं त्रिपर्यायोऽभिषव आप्यायनान्तो निग्राभवाचनसम्भरणयुक्त उक्तः एवं पूर्वोक्तसदृशमेवापरमुक्तादन्यद्विर्भवति वारद्वयमभिषवकर्म भवतीत्यर्थः ।

---

१) Thus MAB. मत्या वा १. २) ? ॰ष्पायं B. ॰ष्पीय A॰

पूर्ववन्निग्राभ्याः ॥ ८ ॥　　प्रथमाभिषवादावेव सिक्ता उत्तरयोरप्यभिषवयोः प्रभवन्तीतीयमाशङ्का[१] मा भूदित्येवमर्थं पुनरुक्तम् पूर्वभ्या इति　प्रत्यभिषवं सम्भरणस्य विहितत्वात् · ततश्चैवम् · प्रथमोऽभिषव उक्तः　द्वितीये निग्राभ्यासेकः चतुर्धा सोमं विभज्य प्रहरणम् उत्पुञ्ज्य पुनः प्रहरणम् पुनरुत्पुञ्ज्य प्रहरणम् आप्यायनम् प्रागपाग्वाचनम् सम्भरणं च　एवं द्वितीयोऽभिषवः · एवमेव तृतीयः अयं तु विशेषः　प्रागपाग्वाचनान्तेऽध्वर्युः स्वकीयं ग्रावाणं होतृचमसेऽवधाय चतुर्थं प्रागपागिति वाचयति ततः सम्भरणमिति ।　पूर्वं हि उपांश्वभिषव उक्तः पश्चाच्च महाभिषव उक्तः　अधुना लाघवाय तयोरभिषवयोरैक्यं पूर्वपक्षीकरोति ·

पूर्वं वोपांश्शुं गृहीत्वा-गृहीत्वाप्यायनसम्भरणे कृतत्वात् ॥ ९ ॥　पूर्वं एवोपांश्वभिषवे उपांशुं गृहीत्वा प्रतिवारमुपांशुग्रहणानन्तरं सोमाप्यायनं सम्भरणं च एते कर्मणी अधिके कर्तव्ये · वाशब्देन महाभिषवो निरस्यते　न महाभिषवः पृथक्कार्यः · कुतः　कृतत्वात् उपांश्वभिषव एवाप्यायनसम्भरणयोरधिकयोः कृतयोर्महाभिषवोऽपि कृत एव भवति　अन्यस्य सर्वस्य पूर्वाभिषवेऽपि क्रियमाणत्वात्पदार्थद्वयार्थं पृथगभिषवो न कार्य इत्यर्थः · अथवा　अकृतत्वात् इत्यकारप्रश्लेषः[२] कुतो हेतोराप्यायने पूर्वस्मिन्नधिके कर्तव्ये　तत्र हेतुः अकृतत्वादिति यतस्ते तत्र न कृते　अविहितत्वादिति · एवं सति लाघवं भवति । ननु यद्येक उपांश्वभिषवः क्रियते न पृथङ्महाभिषवः　तदा अधिषवणशक्तीति (३. १. ४. १) चतुर्णां पर्युपवेशनं किमर्थमिति · अत आह ·

धर्ममात्रं पर्युपवेशनम् ॥ १० ॥　धर्ममदृष्टार्थमेवैतत्पर्युपवेशनम् सोमक्रयणीपदपर्युपवेशनवत् । इदानीं सिद्धान्तमाह ·

अभिषवविपर्यासो वाभिमृष्टादंशूनपकृष्य निग्राभ्याश्चानुपूर्व्ययोगात् ॥ ११ ॥ नाभिषवैक्यम् किंतु द्वावप्यभिषवौ कर्तव्यौ · द्वित्वे च सत्यभिषवयोर्विपर्यासः कर्तव्यः　पूर्वं महाभिषवः　पश्चादुपांश्वभिषवः　अभिमृष्टात् मानानन्तरं यत्त इति मन्त्रेण कृताभिमर्शनात्सोमात् अंशूनपकृष्य　उपांश्वभिषवार्थं मुष्टिमात्रानंशून् अङ्गुल्यन्तरे करणार्थांश्च षडंशून् तृतीयसवनाभिषवार्थं च महान्तमंशुम् पृथक्कृत्वा

१) ? °वतीतिय° B. °वंतीतिय° A.　२) but then the text ought to have: °यणेऽअक्° !

पृथक्स्थापयित्वा निग्राभ्याश्चापकृष्य उपांश्वभिषवार्थमेव निग्राभ्या अपि पात्रान्तरे कृत्वा · एवं क्रियमाणे मन्त्राणां विधीनां च आनुगो भवति · आनुपूर्व्येण हि क्रमेणैव श्रुतौ द्वावप्यभिषवौ विहितौ अध्वरकाण्डस्यान्त्ये ब्राह्मणे (३.९.४.१-२५) महाभिषवो विहितः ग्रहकाण्डस्याद्ये ब्राह्मणे (४.१.१.१-२८) उपांश्वभिषव इति · मन्त्रा अपि क्रमेणैव पठिताः सन्ति पूर्वं महाभिषवमन्त्राः (६.२३-३७) पश्चादुपांशुग्रहणहोममन्त्रा वाचस्पतये पवस्वेत्यादयः (७.१) · यदा च पूर्वमुपांश्वभिषवमुपांशुग्रहपात्रासादनान्तं कृत्वा पश्चान्महाभिषवः क्रियते तदा मन्त्रपाठक्रमो बाध्यते · सूत्रकारेण तु प्रादानिकं[1] क्रममाश्रित्य पूर्वमुपांश्वभिषव उक्तः प्रदानं हि पूर्वमुपांशुग्रहस्य पश्चादन्तर्यामादीनाम् । ननु भवत्वभिषवयोर्विपर्यासः अंश्वपकर्षणं निग्राभ्याणां चापकर्षणं कुत इत्यत आह ·

अनाप्तस्य चाभिमानसामर्थ्यात् ॥ १२ ॥ अनाप्तस्य अनात्तरसस्य सरसस्यैव सोमस्य सोमाभिमानसामर्थ्यात् सोमबुद्धिसामर्थ्यात् सोमोऽयमिति बुद्धिरनात्तरसे अनभिषुतएव सोमे भवति नाभिषुते · सोममभिषुणोतीति सोमाभिषव एव विहितः अभिषुते च सोमे सोमबुद्धेरभावात् किमभिषूयेत तस्मादष्टौ शूंकृष्येति (११) युक्तमेवोक्तम् । अथवायमर्थः · मीङ् हिंसायाम् अभिमानमभिषवो हिंसनं कुट्टनमित्यर्थः · अनात्तरसएव सोमे अभिषवः समर्थो दृष्टार्थो भवति[2] नात्तरसे · तस्मादंश्वपकर्षो युक्तः । किं च ·

ऋजीषभावाच्च ॥ १३ ॥ न केवलम् अभिषुते सोमबुद्धिर्न[3] भवतीत्येतावत् किं तु ऋजीषश्च ऋजीषोऽयं न सोम इति विपरीतबुद्धिर्भवति · तस्मादष्टांशून्पूर्वतरमुपांश्वभिषवार्थमपकृष्यैव पूर्वं महाभिषवः पश्चादुपांश्वभिषव इत्येवं विपर्यासः कर्तव्य इति सिद्धान्तः । निग्राभ्याणां चापकर्षो यदि न क्रियते तदोपांश्वभिषवमहाभिषवाभिषुतसोमयोः संसर्गो भवति होतृचमसेऽभिषुतानंशूनवधाय प्रागपागिति वाचनविधानात् असंसर्गश्चेष्यते उपांशुग्रहार्थं पृथगभिषवविधानात् · अतो निग्राभ्याश्चापकृष्येति युक्तमेवोक्तम् (११) ।

---

1) Thus A. प्रदानादिकं B. 2) अनात्तरससोमे हिंसा क्रियमाणा समर्था भवति B. marg. 3) सोमेबु॰ B.

प्रोक्ष्य द्रोणकलशमृजीषमुखेषद्रिषु निदधत्युद्गातारः ॥१४॥ द्रो°शं प्रोक्ष्य यत्र योजितस्तस्मात्स्थानात्प्राञ्चमधिषवणस्योपरि प्रेर्य ऋजी°धति पूर्वं सर्वान्ग्राव्णा एकत्र संमुखान्कृत्वा ऋजीषेणाछाद्य तस्योपरि स्थापयन्ति ।

पवित्रं च वितन्वन्त्युदक् ॥१५॥ चकारादुद्गातार एव प°त्रं द्रोणाकलशस्योपरि वि°न्ति वितत्य विस्तार्य धारयन्ति · उदगिति उदग्दशमवाङ्नाभि च ।

स्वयं वाकुर्वत्सु ॥१६॥ उद्गातृषु द्रोणाकलशपवित्रयोर्नमकु°त्सु स्व°वाध्वर्युः करोति ।

आधवनीयादुन्नेता निग्राभ्यास्वासिञ्चति ताः पवित्रे यजमानस्ततो ग्रहग्रहणामा ध्रुवात् ॥१७॥ उन्नेता आधवनीयकलशादुदञ्चनेन सोममादाय यजमानहस्तस्थिते होतृचमसे निग्रा°ञ्चति · ततो य°नः ता निग्राभ्याः प°त्रे द्रोणाकलशस्योपरि उद्गातृभिर्विस्तार्य धृते आसिञ्चति संततम् · ततः संततं स्रवन्त्या धारायाः सकाशाद्ध्रुवग्रहपर्यन्तान्ग्रहान्गृह्णाति · काठके ऋजीषेण ग्राव्णः प्रछाद्याधोऽध्नं [1] द्रोणाकलशमुद्गातारः प्रोह्यान्तराद्वाविष्कम्भौ दशापवित्रं न्यस्यत्याहिते द्रोणाकलशे वितते पवित्रऽआधवनीयाद्धोतृचमसं पूरयित्वासिञ्चति संतत७ स्रवन्त्या[2] ग्रहान्गृह्णातीति · मानवे ऋजीषेण ग्राव्णः परिवपति प्राञ्चमुद्गाता द्रोणाकलशं प्रोहत्यस्यति दशापवित्रमन्तराद्वाविष्कम्भं च यं द्विष्यात्तस्याद्वमुपहन्याद्दशया द्रोणाकलश७ संमार्ष्टि वसवस्त्वा संमृजन्त्विति प्रातःसवने रुद्रास्त्वेति माध्यन्दिनऽआदित्यास्त्वेति तृतीयसवने पूतभृतं ग्रावसु द्रोणाकलशमादधाति तस्योपर्युद्गातारोऽधस्तान्नाभि पवित्रं वितन्वन्ति तस्मिन्यजमानो होतृचमसेन संतता७ शुक्रधारा७ स्रावयत्या ध्रुवग्रहणादिति । अधिकारमुपजीवन्नाह ·

माध्यन्दिने च पञ्च प्रथमान् ॥१८॥ चकारात्तत एव धारायाः यजमानेन पवित्रस्योपरि संततं निनीयमानायाः मा°ने सवने प्रथमान्प्रथमपठितान् शुक्रमन्थ्याग्रयणामरुत्वतीयोक्थ्यान्पञ्च ग्रहान्गृह्णाति । अथ सवनत्रयोपयुक्तां परिभाषां करोति

शुक्रो द्रोणाकलशे ॥१९॥ द्रो°शे यः सोमः स शुक्रसंज्ञकः ।

---

१) Thus AB. २) पवित्रंन्य°स्रवन्त्या deest B.

ततोऽन्येऽनादेशे ॥२०॥ धाराग्रहेभ्योऽन्ये ये ग्रहाः ते अनादेशे वचनाभावे ततः शुक्रात् शुक्रसंज्ञाद्द्रोणकलशस्थात्सोमाद्ग्रहीतव्याः · पूतभृतो वा (२४)।

सावित्रपात्नीवतहारियोजनोपद्मीणानाग्रयणात् ॥२१॥ तृतीयसवने सावित्रग्रहं पात्नीवतग्रहं हारियोजनं च उपद्मीणांश्च आग्रयणस्थालीस्थात्सोमाद्गृह्णाति · उपद्मीणा ये कालभूयस्त्वेन शुष्काः ।

पूतभृतश्चमसान् ॥२२॥ चमसान्सर्वत्र पूतभृत एवोन्नयेत् :

तृतीयसवनें वैश्वदेवम् ॥२३॥ तृतीयऽने यो वैश्वदेवस्तं वैश्वदेवं महावैश्वदेवसंज्ञं पूतभृतो गृह्णीयात् ।

अनादिष्टांश्चेदोन्नयनश्रुतेः ॥२४॥ अोऽतेः अनेन अतो हि देवेभ्य उन्नयन्त्यतो मनुष्येभ्योऽतः पितृभ्य इतीयं श्रुतिः (४. ५. ६. ३) प्रकटीकृता · अनया श्रुत्या पूतभृत उच्यते । उभयोः श्रुतिमूलत्वाद्विकल्पः शुक्रात्पूतभृतो वानादिष्टा ग्राह्या इति ।

दशापवित्रेण परिमृज्य-परिमृज्यैष ते योनिरिति ग्रहसादनम्[1] ॥२५॥ ग्रहस्य सादनं कर्तव्यम् · वीप्साकरणं सर्वग्रहार्थम् · दशात्रेण ग्रहं संमार्ष्टीति शाखान्तरात्।

नायोनिकेषु ॥२६॥ अयोऽषु यत्र एष ते योनिरित्यस्याम्नानं न भवति [तत्रैष ते योनिरित्यनेन सादनं न भवति][2] ।

सर्वेष्विति वात्स्योऽविशेषोपदेशात् ॥२७॥ सर्वेष्वाम्नातयोनिकेषु अनाम्नातयोनिकेषु च ग्रहेषु परिमार्जनानन्तरमेष ते योनिरिति मन्त्रेणासादनं भवत्येव · कुतः अऽशात् अविशेषेण ग्रहमात्रमुद्दिश्य योन्यासादनमुपदिश्यते (४. १. २. १)।

सावित्रर्तुग्रहप्रतिषेधाच्च ॥२८॥ यतः सावित्रग्रहे ऋतुग्रहेषु चानाम्नातयोनिकेष्वेव योनिः प्रतिषिध्यते तं गृहीत्वा न सादयति॰ तस्मादिदमसन्नं मन इति (४. ४. १. ७) तथा ऋतुग्रहेषु तं गृहीत्वा न सादयति॰सन्नः संवत्सर इति (४. ३. ३. ७)।

प्रतिवषट्कारं हुत्वा वषट्कर्तुर्भक्षाहरणम् ॥२९॥ ग्रहं चमसं वा प्रतिऽरं वषट्कारेऽनुवषट्कारे च हुत्वाऽरणम् सदस्युपविष्टं वषट्कर्त्रादिकं प्रति भक्षस्य नयनं कर्तव्यम् · सर्वसोमयागेषु वषट्कारोऽनुवषट्कारश्चेति वषट्कारद्वयं विहितमस्ति ·

---

1) See Mahîdh. at २३. २. 2) Thus Ss. deest A. In B lacuna from पूतभृतश्च॰ (२२) to वैदिकी समा (३०)

केषु चिद्ग्रहेष्वनुवषट्कारः[१] प्रतिषिद्धोऽस्ति · तथा च यज्ञपार्श्वे (८८) ऋतुग्रहा द्विदेवत्या यश्च पात्नीवतो ग्रहः आदित्यग्रहसावित्रा एते नानुवषट्कृता इति।

यथास्वं चमसान् ॥३०॥ प्रतिवषट्कारं हुत्वा यथास्वं भक्षणार्थं हरणं कर्तव्यम् · यो यस्य स्वकीयश्चमसो यथास्वं हरेयुः · चमसेषु हि समाख्यया चमसिनां भक्षो भवति अन्यथा होतृचमस इत्यादिर्वैदिकी समाख्या नोपपद्यते। अथेदं चिन्त्यते किं पूर्वं वषट्कर्तुर्भक्षणमुत चमसिनामिति · तत्रानियमे प्राप्तऽआह ·

वषट्कर्तुर्वा पूर्वं श्रुतिसामर्थ्यात् ॥३१॥ वषट्कर्तुरेव पूर्वं भक्षः स्यात् पश्चाच्चमसिनाम् · कुतः अर्थ्यात् वषट्कर्तुः प्रथमभक्ष इति श्रुतिबलादित्यर्थः समाख्यातः श्रुतेर्बलवत्त्वादिति। समाख्ययाध्वर्योरेव चमसोन्नयने प्राप्ते आह ·

उन्नेतोन्नयति समाख्यानात् ॥३२॥ नाध्वर्युः उन्नयतीत्युन्नेता · इयं श्रुत्यवगता समाख्या संज्ञा तदैवोपपद्यते यदासावुन्नयनं करोति · अनया च विशेषसमाख्यया आध्वर्यवमिति सामान्यसमाख्या बाध्यते॥ परिभाषा उक्ताः अथ प्रकृतमुच्यते॥

॥ पञ्चमी कण्डिका ॥५॥

उदितेऽन्तर्यामग्रहणमुपयामगृहीत इति (७.४) ॥१॥ अध्वर्युरन्तर्यामपात्रेऽन्तर्यामसंज्ञं ग्रहं गृह्णाति। उक्तं च आधःध्रुवादिति (५.१७) · अतस्तस्याः संततं स्रवन्त्याः धारया येषामन्तर्यामादीनां ध्रुवपर्यन्तानां ग्रहणमुक्तम् तान्ग्रहानिदानीमुपदिशति · ततश्च महाभिषवे कृते उद्गात्रा च द्रोणकलशे पवित्रयोजने कृते आधवनीयाद्धुन्नेतेत्यादिनोपायेन धारायां (५.१७) प्रवृत्तायामुदिते सूर्ये अन्तःपादि कर्तव्यम्।

उपांशुवदनाम्नातवरशेषासेचनवर्जम् ॥२॥ उपांशुग्रहवदस्यान्तर्यामस्य अनाम्नातवर्जं सर्वं भवति अनाम्नातं मन्त्रम् स्वाहेति उर्वन्तरिक्षमिति च वरवरणम् दानं च हुतशेषस्य आग्रयणस्थाल्यामासेचनम् एतान्पदार्थान्वर्जयित्वान्यत्सर्वमुपांशुग्रहवद्भवतीत्यर्थः · ततश्च ग्रहणानन्तरं परिमार्जनम् असादनम् तूष्णीं निष्क्रमणम् यजमानस्यान्वारम्भः स्वांकृत इति (७.६) निःशेषस्यैव होमस्तिष्ठतः[२] उत्तरार्धे सूर्याय त्यागः। अत्र कठसूत्रे तुल्यमुपांशुनासादनाद्धुत्तरार्धे

---

१) केषुविग्रहेष्वनु॰ A. २) स्वांॅष्ठतः is quoted by Mahîdhara at ७.६. as forming a part of the Kâtiyasûtra itself! — See ४.३७.

होम इति · मानवे च उत्तरेण होतुर्गच्छति दक्षिणेनाभिप्रपद्य ग्रहमुत्तरं परिधिसंधिं प्रत्यूनुत्तिष्ठन्निति । विशेषमाह ·

अपमार्ष्ट्यत्र ॥ ३ ॥ अत्रान्तर्यामग्रहे ग्रहं हुत्वा पात्रमुखादारभ्यावाश्चमवमार्ष्टि न तूपांशुग्रहवदूर्ध्वम् अथ हुत्वावाञ्चं ग्रहमवमार्ष्टीति श्रुतेः (४.१.२.२२) ।

प्रथमे च न्युब्जेन पाणिना प्रत्यक्[1] ॥ ४ ॥ प्रथमे च परिधौ अधोमुखेन हस्तेन प्रत्यक्संस्थमुपमार्ष्टीति शेषः · हस्तस्य प्राङ्नयने कृते उपमार्जनं प्रत्यक्संस्थं भवति ।

उपाᳪशुसवनसᳪस्पृष्टस्योदानाय त्वेति पात्रासादनम् ॥ ५ ॥ अन्तर्यामपात्रस्य उपांशुस्य संलग्नस्य आसादनम् ।

ऐन्द्रवायवं गृह्णात्या वायविति (७.७) ॥ ६ ॥ एवमुदिते सूर्ये अन्तर्यामग्रहणादि तत्पात्रासादनान्तं कृत्वाध्वर्युस्तदानीमेव तस्याः संततधारायाः सकाशादिन्द्रवायवपात्रे ऐन्द्रवायवसंज्ञं प्रथमं द्विदेवत्यग्रहं गृह्णाति ।

अपगृह्य पुनरिन्द्रवायूइति (७.८) ॥ ७ ॥ एकवारमर्धं गृहीत्वा ततोऽपगृह्य संततधारातो विच्छिद्य पृथक्कृत्वा पुनस्तस्या एव धारया गृह्णाति · ततः परिमृज्य स्वस्थाने सादनम् एष ते योनिः सजोषोभ्यां त्वेति (७.८) मन्त्रेण ।

मैत्रावरुणमयं वामिति (७.९) ॥ ८ ॥ ऐन्द्रवायवादनन्तरं मैत्रावरुणपात्रे मित्रावरुणदेवतं द्वितीयं द्विदेवत्यं ग्रहं गृह्णाति तस्या एव संततधारायाः ।

पयसा श्रीणात्येनं कुशावन्तर्धाय राया वयमिति (७.१०) ॥ ९ ॥ ग्रहणानन्तरमेनं मैत्रावरुणं ग्रहं कुशेनान्तर्धाय पयसा लौकिकेन दुग्धेन श्रीणाति · श्रयणं च द्रव्यान्तरसंसर्जनेन मृष्टीकरणम् · ततः परिमार्जनम् एष ते योनिर्मित्रावरुणाभ्यां त्वेति स्वस्थानसादनम् ।

एवᳪ सर्वत्र श्रयणेषु ॥ १० ॥ यत्र-यत्र श्रीणातीति श्रूयते तत्र सर्वत्र कुशान्तर्धाय द्वे दर्भतृणे ग्रहस्योपरि प्रागग्रे उदगग्रे वा निधाय श्रयणं कार्यमित्यर्थः ।

शुक्रं बैल्वेन वा तं प्रत्नथेति (७.१२) ॥ ११ ॥ शुक्रसंज्ञकं ग्रहं तस्या एव धारया गृह्णाति बैल्वेन उलूखलेन वा वैकङ्कतेन वेति विकल्पः शाखान्तरात् ।

अयं वेन इत्येके (७.१६) ॥ १२ ॥ अन्ये तु तं प्रत्नथेत्यनेन वा इमां त्वेवेति श्रुतेः (४.२.१.९) · ततः परिमृज्य एष तेऽग्निरिति खरस्य दक्षिणार्धे सादयति ।

---

1) Thus M. ९. AB. Mahîdh. at ७.६. परिधौ M. marg. प्रथमे परिधौ प्रत्यक् Ss.

मन्थिनमयं वेन इति (७. १६) ॥ १३ ॥ ततो मन्थिपात्रे म॰नं ग्रहं गृह्णाति । सुक्तुभिः श्रीणात्येनं मनो न येष्विति (७. १७) ॥ १४ ॥ एनं मन्थिनम् · सक्तवोऽप्येते लौकिका एव · अत्रापि कुशावन्तर्धाय श्रयणं कार्यम् ततः परिमृज्य सादनम् एष ते योनिः प्रजाः पाह्लीति ।

आग्रयणं द्वयोर्धारयोर्ये देवास इति (७. १९) ॥ १५ ॥ द्व॰रयोः सोमेन आ॰नं ग्रहं स्थाल्या गृह्णीयात् · यजमानो नियाभ्याः पृथगासिञ्चति उन्नेता चाधवनीयात्सोममादाय उदञ्चनेन वा पात्रान्तरेण वा पृथगासिञ्चति एवं धाराद्वयं सम्पाद्यमिति कर्काचार्या याज्ञिकाश्च आग्रयणस्थाल्यां तु य उपांशुग्रहशेष आसिक्तः सोऽदृष्टार्थ इति तेषामभिप्रायः · अन्ये त्वाहुः आग्रयणस्थाल्यां य उपांशुग्रहशेषस्तं पात्रान्तरे कृत्वा पृथगासेचनं तस्य कार्यम् सा एका धारा द्वितीया तु प्राकृत्येव यजमानो यामासिञ्चति तदपि समूलम् · तथा च काठके ये देवा इत्याग्रयणं द्वयोर्धारयोराग्रयणाद्द्वितीयामिति[1] · मानवे य आग्रयणस्थाल्या॰ सोमस्त॰ होतृचमसेऽवनीय ये देवा दिव्येकादश स्थेत्याग्रयणं द्वाभ्यां गृह्णातीति · अनेकयजमानकऽऊहः यज्ञपती यज्ञपतीन् (७. २०) आभ्या॰ सुन्वद्भ्यां यजमानाभ्यां एभ्यः सुन्वद्भ्यो यजमानेभ्यः (७. २१) इति ।

दशापवित्रेणाग्रयणमुपगृह्य त्रिर्हिङ्कृत्य सोमः पवतऽइति (७. २१) सकृच्छेषम् ॥ १६ ॥ दशा॰ह्य दशापवित्रं ग्रहसंमार्जनार्थमुपगृह्य आग्रयणस्थाल्याः सोमव्यवसेकपरिहारार्थं तस्याः स्थाल्याः मुखदेशं तेन वेष्टयित्वा ततस्त्रि॰त्य हिं इत्येवं शब्दं त्रिवारमुच्चार्य सोमः पवतऽइत्यपि त्रिरुच्चार्य शेषम् अस्मै ब्रह्मणऽइत्यादिकं यजुः सकृद्ब्रूयात् · शेषस्य सकृदुच्चारणविधानात् सोमः पवतऽइत्यस्य त्रिरुच्चारणं प्रतीयते · काण्वीयाया[म]त्यस्यापि[2] त्रिर्वचनं समाम्नातमस्ति माध्यन्दिनानां तु द्विर्वचनेनाभ्यासः प्रदर्शितः · मानवे हिङिति त्रिरभिहिङ्कृत्येति[3] ।

प्रथमस्थानेन प्राग्देवतादेशात् ॥ १७ ॥ विश्वेभ्यस्त्वा देवेभ्य इत्ययं देव॰देशः हिङ्कारादारभ्यायं मन्त्रो दे॰शात्प्राक् प्र॰नेन प्रयोज्यः · देवतादेशस्तू-

1) पाद्वि A. पाद्वि B. 2) यायांत्यस्या॰ AB. 3) त्रिरभ्यभिहिं॰ B.

पांश्वेव कार्यः · प्रथमस्थानं चोपांशूच्चारणापेक्षया किंचिद्व्यक्तम् · ततः परिमृज्य मध्ये सादनम् एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति ।

प्रातःसवने चोच्चैःकर्माणि ॥१८॥ प्रा॰वने यान्युच्चैःकर्माणि प्रैषोच्चारणादीनि तान्यपि प्रथ॰नेनैव कार्याणि · मन्द्रं प्रातःसवने चरन्तीति शाखान्तरात् · अतश्चाग्नीदग्नीन्विहरेत्यादयः प्रैषा आश्रावणादयश्च प्रथ॰नेनैव प्रयोज्याः ।

मध्यमेन माध्यन्दिने ॥१९॥ मा॰ने सवने यानि कर्माणि नीचैर्यानि चोच्चैस्तान्युभयान्यपि म॰न स्वरेण कार्याणि · शाखान्तरे तथा श्रवणात् ।

उत्तमेन तृतीयसवने ॥२०॥ तृ॰ने यानि नीचैर्यानि च मध्यमेन स्वरेण प्राप्नुवन्ति तानि सर्वाण्युत्त॰नैव स्वरेण कार्याणि तथैव शाखान्तरे श्रुतत्वात् ।

उक्थ्यमुपयामगृहीत इति (७.२२) ॥२१॥ उक्थ्यस्थाल्योक्थ्यसंज्ञकं ग्रहं गृह्णाति धारायां एव · तच्च तत्प्रकल्पनमात्रम् तेन ग्रहणानन्तरं दक्षिणावृत्तीतरथावृत्ती न भवतः उक्थ्यविग्रहेषु च भविष्यतः । स्थाल्या ह्येनं गृह्णातीति (४.२.३.१) श्रुतत्वात्स्थालीग्रहोऽयम् · आग्रयणश्च तत्रापि तथैव श्रवणात् (४.२.२.१) · ध्रुवग्रहेऽपि चैवमेव श्रूयते · अत एते त्रयोऽत्र स्थालीग्रहाः ।

ध्रुवं मूर्धानं दिव इति (७.२४) ॥२२॥ ध्रुवस्थाल्या करणभूतया ध्रुवसंज्ञकं ग्रहं गृह्णाति ।

आ होमादस्य सुन्वन्न मूत्रपुरीषे कुर्यात् ॥२३॥ अस्य ध्रुवग्रहस्य होमपर्यन्तम् ।

वैश्वानरं च जानन् ॥२४॥ एतस्य ग्रहणादि इतिकर्तव्यतां (४.२.४.१) जानन् ।

पूर्णान्स्थालीग्रहान् ॥२५॥ त्रीनपि स्था॰हान्पूर्णान्गृह्णीयात् ।

अर्धपूर्णं द्रोणकलशं कृत्वा सर्वमासिञ्चति सुन्वन् ॥२६॥ अन्तर्यामादिध्रुवपर्यन्तान्धाराग्रहान्गृहीत्वा ततः सम्पातसोमेन द्रो॰शमर्ध॰र्णं कृत्वा सुन्वन् यजमानः स॰ति होतृचमसस्था निग्राभ्याः । मानवे अतिपाद्य राजानं प्रपीड्य पवित्रं पार्श्वतो निदधातीति ।

अध्वर्युप्रतिप्रस्थातृप्रस्तोतृउद्गातृप्रतिहर्तृसुन्वन्तः समन्वारब्धा निष्क्रामन्ति ॥२७॥ कृतान्वारम्भाः सन्तो हविर्धानान्निःसरन्ति ।

अध्वर्युः प्रथमो यथासंख्यमितरे ॥२८॥ पाठक्रमादप्येवं प्राप्ते अस्य यत्नस्य

करणादेवं ज्ञायते समासोक्तानां पाठक्रमो नियामको न भवतीति समासे हि लक्षणवशादल्पाच्तरत्वादल्पाच्तरत्वादेः पश्चाच्छ्रुतस्यापि पूर्वनिपातो भवति ।

हुत्वा वा समन्वारभेरन् ॥२९॥ यस्ते द्रप्स इति (७.२६) होमं हुत्वा पश्चात्सर्वे समरन्न् न हविर्धानमध्ये माध्यन्दिनीयायामेवमेव श्रुतत्वात् (४.२.५.३)।

यस्त इति (७.२६) विप्रुषां होमं जुहोति ॥३०॥ ते सर्वेऽध्वर्य्वादयो विहृति समिदाधानपूर्वकं सकृद्गृहीतमाज्यं प्रचरण्यातिप्रणीते[१] क्रमेण षडपि जुहोति सोमायेति त्यागः विप्रुषां सोमकणिकानां प्राप्त्यर्थमिति शेषः होममाज्यस्य जुहोतीति हरिस्वामिनः (४.२.५.१) अभिषवकाले ग्रहणाकाले च स्कन्नानां सोमबिन्दूनां स्कन्दनप्रत्यवायपरिहारार्थं विप्रुषामर्थं तत्र स्कन्दनप्रायश्चित्तत्वेन होमं कुर्यादित्यर्थः इति माधवाचार्याः। विप्रुड्ढोम इतीयमस्या आहुतेः संज्ञा।

अध्वर्युर्वा ॥३१॥ अथवाध्वर्युरेको जुहोति विप्रुड्ढोमम् नेतरे स जुहोतीति (४.२.५.२) माध्यन्दिनानामेकवचनश्रवणात् सर्वेषां होमकरणं शाखान्तरात् ।

वेदितृणेऽध्वर्युरादत्ते ॥३२॥ स्तीर्णाया वेदेः सकाशाद्द्वे तृणे आदत्ते ।

प्रह्वा उदञ्चो गच्छन्ति ॥३३॥ ते अध्वर्य्वादयः प्रह्वा नम्रा आनता भूत्वा उदङ्मुखाः चात्वालस्य दक्षिणतो वेदिमध्ये वर्तमानं बहिष्पवमानदेशं प्रति अन्वारब्धा एव छन्दोगानामत्र विशेषः प्रातःसवन आसीनाः सर्पन्ति माध्यन्दिने प्रह्वाः तृतीयसवन उत्थिता इति तथा च मानवे हविर्धानादध्यास्तावात्प्रह्वाणाः सर्पन्ति तथा अनूदरा माध्यन्दिनाय सवनाय प्रसर्पन्त्युत्तरेण हविर्धाने पूर्वया द्वारा सदः प्रविश्य सदसि स्तुवतेऽनतिक्रामन्तो धिष्ण्यानध्वर्युरुपविशतीति तथा अनुदेहीयाः सर्पन्त्यार्भवं पवमानमिति ।

अन्यतरत्तृणं चात्वाले प्रास्यति देवानामिति (७.२६) ॥३४॥ वेदिमध्याद्गृहीतयोर्मध्ये एकं तृणमध्वर्युः चात्वाले प्रक्षिपेत् ।

उद्गातृणां पुरस्तादितरत्तूष्णीम् ॥३५॥ तस्मादन्यद्धस्तस्थितं तृणमुद्गातॄणां पुरस्तात् बहिष्पवमानदेशे यथाविहितस्थान उपविष्टेभ्य उद्गातृभ्यः पूर्वस्मिन्देशे तूष्णीं प्रक्षिपति।

उपास्मै गायता नर इति … 

[१] °रण्यति° AB.

न्तेषु उद्गातृषु पुरस्ताज्जपं कृतवत्सु अध्वर्युः प्रस्तोत्रे द्वे तृणे समर्पयन् सोमः पवतऽइति मन्त्रेण पवमानस्तोत्रमुपाकरोति · तृणे प्रयच्छन्निति शाखान्तरात् । अत्रानिरुक्तेषूपहव्यादिषु अनिरुक्तप्रातःसवने प्रथमे त्रिवृत्स्तोमे एकाहे वाजपेये चेन्दुः पवतऽइत्येवं पवमानोपाकरणं कर्तव्यम् छन्दोगसूत्रात् · तत्रोपहव्यादिषु त्रिष्वपि पवमानेषु अनिरुक्तप्रातःसवनयोस्तु बहिष्पवमानऽएवेति भेदः ।

सर्वेषु ॥ ३७ ॥ सर्वेषु स्तोत्रेषु प्रस्तोत्रे तृणे प्रयच्छन्नुपाकरोति न बहिष्पवमानऽएव केवलम् सोमः पवतऽइति मन्त्रस्तु वचनात्पवमानऽएव ।

अतृणो वा ॥ ३८ ॥ तृणरहितो वा सर्वेषु पवमानेषूपाकरणं करोति ॥

॥ षष्ठी कण्डिका ॥ ६ ॥

कुशमुष्टिं वा ॥ १ ॥ अथवा कुशमुष्टिं दर्भमुष्टिं प्रस्तोत्रे प्रयच्छन्सर्वेषु पवमानेषूपाकरोति · प्रतिसवनं यद्यत्प्रथमं स्तोत्रम् तत्पवमानमित्युच्यते । काठके प्रत्यङ्मुखोऽध्वर्युः प्रस्तोत्रे दर्भान्प्रयच्छन्नाह सोमः पवतऽइति प्रातःसवने तुल्यमासर्पणात्सदसि प्रस्तोत्रे दर्भान्प्रयच्छन्नाह सोमः पवतऽइति माध्यन्दिने एवंविधमेव तृतीयसवनेऽपि सूत्रमस्ति · अत एते त्रयोऽपि विकल्पास्त्रिष्वपि पवमानेषु भवन्ति तृणे प्रयच्छन्वा अतृणो वा कुशमुष्टिं वा प्रयच्छन्निति ।

प्रत्यङ्मुखाऽउपविशतः पुरस्तात् ॥ २ ॥ उद्गाता उदङ्मुखः उपविशति प्रत्यङ्मुखः प्रस्तोता दक्षिणाभिमुखः प्रतिहर्तेति एवमुपविष्टानामुद्गातृणां पुरस्तादध्वर्युप्रतिप्रस्थातारौ प्रत्यङ्मुखावुपविशतः · अध्वर्युयजमानाविति केचित् तन्मते प्रतिप्रस्थातुरनियमः · तथा च मानवे आस्तावं प्राप्योपविशन्ति प्रस्तोतुः सव्यमनु यजमानो दक्षिणामन्वध्वर्युः प्रस्तोत्रे दर्भमुष्टिं प्रयच्छन्सोमः पवतऽइति स्तोत्रमुपाकरोतीति · प्रातःसवनवन्माध्यन्दिने सवने तृतीये च ।

दक्षिणो यजमानः ॥ ३ ॥ अध्वर्युप्रतिप्रस्थात्रोर्दक्षिणो यजमानः उपविशति ।

स्तूयमानऽउन्नेताधवनीये पवित्रमन्तर्धाय पूतभृत्यासिञ्चति ॥ ४ ॥ आधवनीयस्थं सोमम् उदग्दशमन्यतरतोदशं वा पवित्रमन्तर्धाय पूतभृत्संज्ञके कलशे आसिञ्चति · स्तोत्रस्य पावनार्थत्वाद्यावत्स्तोत्रसमाप्तिमासिञ्चेदिति पितृभूतिः । अत्र पवमानेषु आद्यप्रस्तावसमये यजमानेन असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्यो-

र्मामृतं गमयेति त्रयाणां यजुषां जपः कार्यः अथातः पवमानानामेवाभ्यारोह इति प्रकृत्य स वै खलु॰जपेदसत इत्यादिश्रुतेः (१४.४.१.३०)· शतपथस्वरेणैव जपो न मन्त्रस्वरेणेति शङ्कराचार्याः[1] तथा हि द्वितीयानिर्देशाद्ब्राह्मणोत्पन्नत्वाच्च यथापठितं एव स्वरः प्रयोक्तव्यो न मान्त्रः याजमानं च जपकर्मेति· सकृदेवायं जपः आवृत्तेरश्रवणात् ।

स्तोत्रान्ते प्रेष्यत्यग्नीदग्नीन्विहर बर्हि स्तृणीहि पुरोडाशाँ३ अलङ्कुरु प्रतिप्रस्थातः पशुनेहीति (४.२.५.११) ॥५॥ स्तो॰न्ते बहिष्पवमानसमाप्तौ अध्वर्युरुपतिष्ठन्प्रे॰ति · उत्तिष्ठन्नाहाग्नीदग्नीनिति शाखान्तरात् · अग्नीदग्नी॰ कुर्वित्यनेनाग्नीधं प्रेष्यति प्रति॰नेहीति प्रतिप्रस्थातारमिति प्रेष्यभेदाद्वावेतौ प्रैषौ अतो भेदेन सावसानं प्रयोगो द्वयोः · पशुनेहीत्यत्र प्रतिप्रस्थातरिति शाखान्तरात् । पशुनेहीत्यस्य च पशुद्वित्वे बहुत्वे चोहः पशुभ्यामेहि पशुभिरेहीति · कुतः उक्थ्यादिपशूनामैकादशिनानां च सवनीयपशुविकारत्वात् ।

यथान्युप्तं धिष्ण्येष्वाग्नीध्रादङ्गारान्निवपति ॥६॥ अग्नी॰हरेति प्रेषितोऽग्नीन्निवापक्रमेण धि॰षु होत्रीयादिषु आग्नी॰पति · मानवे आग्नीध्रीयादङ्गारानाग्नीध्रो होत्रीयप्रभृति यथान्युप्तं धिष्ण्येषु विहृत्येति · आग्नीध्रशब्देनात्र तत्स्थ आग्नीध्रीयोऽग्निरुच्यते ।

अनु पृष्ठ्यां बर्हि स्तृणाति ॥७॥ बर्हि स्तृणीहीति प्रेषितत्वात्स आग्नीध्रः पृष्ठ्यामनुलक्षीकृत्यान्तःपात्यादारभ्य उत्तरवेदिं यावत् अपूर्वत्वात्प्राक्संस्थं तूष्णीं च ब॰णाति · मानवे संततामुलपराजिं स्तृणाति पृष्ठ्याशङ्कोरध्योत्तरवेदेरिति । पुरोडाशालङ्करणं च चोदकप्राप्तमेवेति न तदर्थो विहितः · अलङ्करणं चात्राभिघारप्राणदानादिसंस्कारः तेन हि ते अलङ्कृताः समर्था यागयोग्या भवन्ति यद्वै हवि॰ तन्मेध्यमिति (७.३.२.३) वचनात् एवं चात्र पुरोडाशेन धानादयोऽप्यत्र लभ्यन्ते सहचारिणः तदभिप्रायं पुरोडाशानां पुरोडाशैरित्यादि बहुवचनम् · ततआग्नीत्पुरोडाशविभस्मीकरणादि वाजिनस्य प्राणदानान्तमत्र करोति प्रकृतिवत् । पशुनेहीति पशुना सह त्वमेहि पशुमानयेत्यर्थः ।

---

१) See Brihad-Árany. ed. Roer pag. 120.

आश्विनं गृह्णात्यन्वारब्धे वा या वामिति (७.११) ॥ ८॥ बहिष्पवमान-स्तवनानन्तरमध्वर्युर्हविर्धानं प्रविश्य द्रोणकलशात्पूतभृतो वा यजमानेऽन्वारब्धे वा परिप्लवया आश्विनसंज्ञं ग्रहं गृह्णाति । यजमानान्वारम्भः शाखान्तरात् । काठके आश्विनं गृह्णाति या वां कशेति द्रोणकलशात्पारिप्लवेनैतस्मादत ऊर्ध्वं प्रातःसवने गृह्णीयान्मरुत्वतीयमाहेन्द्रौ च माध्यन्दिनइति । मानवे परिप्लवया द्रोणकलशाद्ग्रहं गृह्णाति या वां कशेति । अतः परिप्लवया सोममादाय ग्रह-ग्रहणम् न पवित्रेण अनुक्तत्वात् । अनेकेष्वेकस्यैवान्वारम्भः ।

ग्रहानवेक्षयति यथागृहीतमवकाशान्वाचयन्प्राणाय मइति (७.२७) प्रतिम-न्त्रम् ॥ ९॥ ग्रहणक्रमेणाध्वर्युर्यजमानेन ग्रहानवेक्षयति प्राणाय मइत्यादीनवकाश-संज्ञकान्मन्त्रान्प्रत्येकं यजमानं पाठयन् । अतश्चात्रैवं प्रयोगः प्राणाय मेऽपवस्वेति ब्रुवन्नुपांशुमीक्षस्वेति एवं सर्वत्र मन्त्रेष्वध्येषणामूह्यम् ।

उपांशुसवनं द्वितीयम् ॥ १०॥ अवेक्षयतीति शेषः । उपांशुग्रहसोमा-भिषवार्थं पाषाणम् । ग्रहानित्युक्तत्वात् (१) अस्य चाग्रहत्वाद्वचनमिदम् । यथागृ-हीतमित्युक्तत्वात् (१) आश्विनस्यापि ग्रहणक्रमेण सर्वान्तेऽवेक्षणं प्राप्नोत्यत आह ।

आश्विनं षष्ठम् ॥ ११॥ न ग्रहणक्रमेण दशमम् श्रुतौ मैत्रावरुणा-नन्तरमेव षष्ठस्यावेक्षणश्रुतत्वात् (४.५.६.२) ।

शुक्रामन्थिनौ युगपत् ॥ १२॥ शुक्रामन्थिनौ ग्रहौ युगपदवेक्षयति तथैव श्रुत-त्वात् मन्त्रस्यापि द्विवचनान्तत्वाच्च । यथागृहीतमित्यनेन (१) क्रमेणैकैकस्य प्राप्नोति तस्या-यमपवादः अत एव व्यूढच्छन्दसि द्वादशाहे शुक्राग्रतायां पृथक्पृथगवेक्षणं न भवति किंतु तत्रापि युगपदेव ।

पूतभृदाधवनीयौ च विश्वाभ्यो मइति (७.२८) ॥ १३॥ चकारेण युगप-दित्यनुकृष्यते । पूतभृदाधवनीयौ च सहैव अवेक्षयति तथैव श्रुतत्वात् मन्त्रस्य द्विवच-नान्तत्वाच्च अथाम्भृणावेवेक्षयामिति (४.५.६.३) । अग्रहत्वादेतदपि वचनमेव ।

कोऽसीति (७.२९) द्रोणकलशम् ॥ १४॥ अमुं मन्त्रं यजमानं वाचयन्नध्वर्यु-र्द्रोणकलशमवेक्षयति ।

भूर्भुवः स्वरिति (७.२९) जपति ॥ १५॥ यजमान एव जपति मन्त्रलि-

ङ्गात् · अनेकयजमानके सर्वेषामवेक्षणं वाचनं च　पवस्वेति ब्रुवन्तावीक्षेथामिति द्वयोः　पवस्वेति ब्रुवन्त ईक्षध्वमिति बहुषु · भूर्भुवः स्वरिति जपः सर्वेषामिति ।

ज्ञातप्रियानूचानानवकाशयेत् ॥ १६ ॥　ज्ञातः यो वंशपरम्परया शुद्धकुलोत्पन्नत्वेन च　अथवा योऽध्वर्योः प्रियो वल्लभोऽतिशयेन　यो वा अनुचानः वेदार्थानुवचनसमर्थः तान् ज्ञातानेव ग्रहानवधयेत् अवेक्षयेत् नान्यान्　तान्वै न सर्वमिवेति (४.५.६.५) श्रुतत्वात् ॥　॥ सप्तमी कण्डिका ॥ ७ ॥

ध्रुवगोपं कृत्वा परिव्ययणादि करोति रशनामुद्वृह्य पूर्वाम् ॥ १ ॥　ध्रुवं गोपायतीति ध्रुवपः कश्चित्क्षत्रियः तं ध्रुवत्वा ध्रुवरक्षकं पुरुषं ध्रुवसमीपे स्थापयित्वा　पूर्वां रशनां वृह्य यया रशनयाग्नीषोमीये परिव्ययणं कृतम् तां रशनामुत्कृष्य यूपस्य मध्यादग्रदेशे प्रेरयित्वा　सवनीयपशोः सम्बन्धियूपस्य त्रिगुणारशनया परिव्ययणादि कर्म करोति · मानवे　राजपुत्रो ध्रुवं गोपायतीति · काठके　मूर्धानं दिव इति ध्रुवं ध्रुवोऽसीति सादयति तं प्रत्यङ्मुखो राजपुत्रो रक्षेदिति ।

आग्नेयोऽग्निष्टोमे सवनीयः पशुः ॥ २ ॥　अग्निष्टोमसंस्थे ज्योतिष्टोमे अग्निदेवत्यः सवनीयपशुर्भवति　सवनेषु भवः सवनीयः ।

ऐन्द्राग्नश्चोक्थ्ये द्वितीयः ॥ ३ ॥　उक्थ्यसंस्थे ज्योतिष्टोमे द्वितीयः ऐन्द्राग्नः पशुर्भवति　आग्नेयः प्रथमो भवत्येव · चशब्दादयमपि सवनीय एव · यूपऽएव बध्यते न गले ।

ऐन्द्रो वृष्णिः षोडशिनि तृतीयः ॥ ४ ॥　षोडशिसंस्थे ज्योतिष्टोमे आग्नेयं प्रथमं द्वितीयं चैन्द्राग्नमालभ्य तृतीयः पशुरिन्द्रदेवतो वृष्णिर्मेषो भवति　वृष्णिरिति शाखान्तरात् । एते त्रयोऽपि यूपऽएव बध्यन्ते ।

सरस्वत्यै चतुर्थोऽतिरात्रे ॥ ५ ॥　अतिरात्रसंस्थे ज्योतिष्टोमे आग्नेयादीन् त्रीन्पशून्यूपे बद्ध्वा चतुर्थः छागः सरस्वत्यै देवतायै आलब्धव्यः　यूपऽएव · स्तोमायनपशूनामैकादशिनीतो धर्मप्राप्तेर्यूपऽएव बन्धनम् प्रकृतिवत् ।

मेषी वा ॥ ६ ॥　शाखान्तरात् ।

एतत्स्तोमायनम् ॥ ७ ॥　एतत्पूर्वोक्तमाग्नेयादिपशुचतुष्टयं यथाक्रतु स्तोमायनसंज्ञं भवति · तेनाग्निष्टोमे आग्नेय एवैकः स्तोमायनम्　उक्थ्ये आग्नेयैन्द्राग्नौ

द्वौ पशू स्तोमायनम् षोडशिनि आग्नेयैन्द्राग्नैन्द्रास्त्रयोऽपि स्तोमायनम् अतिरात्रे पशुचतुष्टयमपि समस्तं स्तोमायनमिति ।

होतृनामग्रहणान्तं कृत्वेतरांश्चाश्राव्याश्राव्य प्रवृणीते यथालिङ्गम् ॥८॥ पशूपाकरणादि होता मानुष इति यद्धोतृवरणं तत्पर्यन्तं पाशुकं कर्म कृत्वा ततः पुनः-पुनराश्राव्येतरान्होतृव्यतिरिक्तानपि वक्ष्यमाणान्वक्ष्यमाणैर्मन्त्रैः यथाऽङ्गं प्रणीते यो यल्लिङ्गको मन्त्रस्तेन तं-तमिति यथाऽङ्गशब्दार्थः ततश्चेन्द्रः होत्रादित्यनुक्तमपि होतुर्वरणं प्रथमं कर्तव्यमिति कर्कः तच्च समूलम् · काठके आग्नेयमजं सवनीयमुपाकरोति तुल्यमाश्रावणादाश्राव्य होतारं वृणीतऽएवमितरान् इन्द्रः होतारः होत्रादिति होतुरग्निराग्नीध्रादित्यग्नीधो वरणमश्विनाध्वर्यूऽआध्वर्यवादित्यध्वर्योर्मित्रावरुणौ प्रशास्तारौ प्राशास्त्रादिति प्रशास्तुरिन्द्रो ब्रह्मा ब्राह्मणादिति ब्राह्मणाच्छंसिनो मरुतः पोत्रादिति पोतुर्ग्रावो नेष्टारो नेष्ट्रादिति नेष्टुर्ग्ना नेष्ट्रादिति[1] वा अग्निर्हं दैवीनां विशां पुरएतायः सुन्वन्यजमानो मनुष्याणामिति गृहपतेः सकृदाश्राव्य होतारं वृणीते नामधेयैरितरात्मन्त्रेण गृहपतिमित्येके इति । मानवे च होतुरिन्द्रः होत्रादित्येतद्वरणं नास्ति · तथा हि उत्कृष्य रशनां त्रिवृता यूपं परिवीयाग्नेयः सवनीयमुपाकरोत्याग्नेयमजमग्निष्टोमऽऐन्द्राग्नं द्वितीयमुक्थ्यऽऐन्द्रं वृष्णिं तृतीयः षोडशिनि सारस्वतीं मेषीं चतुर्थीमतिरात्रे सिद्धमा प्रवरादष्टावि[ध्म]शकलानादायाश्रावमृतुप्रैषादिभिर्वृणीते यथाम्नातः होतारमश्विनाध्वर्यूऽआध्वर्यवादित्यध्वर्यू [उ]पाःश्चात्मनो नाम गृहीत्वा प्रतिप्रस्थातुश्च मानुषावित्युच्चैः शकलमग्नावध्यस्यत्यग्निराग्नीध्रादित्याग्नीध्रं मित्रावरुणौ प्रशास्तारौ प्राशास्त्रादिति[2] प्रशास्तारमिन्द्रो ब्रह्मा ब्राह्मणादिति ब्राह्मणाच्छंसिनं मरुतः पोत्रादिति पोतारं ग्रावो नेष्ट्रादिति नेष्टारमग्निर्दैवीनां विशां पुरएतायः सुन्वन्यजमानो मनुष्याणामित्यादि ।

अश्विनाध्वर्यूऽआध्वर्यवात् ॥९॥ इत्यध्वर्युलिङ्गकेन मन्त्रेण अध्वर्यू प्रवृणीते · द्वितीयोऽध्वर्युर्गुणवृत्त्यात्र प्रतिप्रस्थाता ।

मित्रावरुणौ प्रशास्तारौ प्राशास्त्रात् ॥१०॥ अनेन मन्त्रेण प्रशास्तारमेकं

१) ? नेष्टुर्ग्ना नेष्टा° AB. २) प्रशा° B.

वृणीते नात्र अश्विनाध्वर्यू इति-वद्द्विवचनेनान्यः कश्चिदुच्यते कठमैत्रसूत्रयोर-नेन द्विवचनात्तेनैव प्रशास्तुर्वरणविधानात् मित्रावरुणौ प्रशास्तारौ प्राशास्त्रा-दिति [1] प्रशास्तुरिति काठके प्राशास्त्रादिति [2] प्रशास्तारमिति मानवे · अतश्चात्र द्विवचनाद्द्वितीयोऽच्छावाक इति मतं निर्मूलत्वात्सूत्रान्तरविरुद्धत्वाच्चोपेक्षणीयम् ।

इन्द्रो ब्रह्मा ब्राह्मणादिति ब्राह्मणाच्छंसिनम् ॥ ११ ॥ प्रवृणीते · लि-ङ्गात् ब्रह्मणो वरणं मा भूदिति ब्रा॰सिनमित्युक्तम् । अत्र सर्वेषु वाक्येष्वयमर्थः · अश्विनावध्वर्यू स्तां भवेताम् आध्वर्यवाद्धेतोः मि॰णौ प्रशास्तारौ स्ताम् प्राशास्त्रा-त्कर्मणो [3] हेतोः एवमिन्द्रो ब्रह्मास्तु ब्राह्मणाच्छंसी अस्तु · ब्राह्मणाच्छंसी-यादिति वक्तव्ये लक्षणया अयमर्थः सेत्स्यतीति इतरथोक्तम् ।

मरुतः पोत्रात् ॥ १२ ॥ अनेन पोतारं प्रवृणीते · मरुतः पोतारः सन्तु पोत्राद्धेतोः पोत्रीयात्कर्मण इत्यर्थः ।

ग्नावो नेष्ट्रात् ॥ १३ ॥ अनेन नेष्टारं वृणीते · ग्ना इति देवपत्न्योऽभिधीयन्ते · तद्वान्ग्नावः नेष्टा अस्तु नेष्ट्राद्धेतोः नेष्ट्रीयादित्यर्थः · नेष्टा नयनात्पत्नीनाम् ।

अग्निराग्नीध्रात् ॥ १४ ॥ अनेनाग्नीध्रं वृणीते · अग्निराग्नीध्रोऽस्त्वाग्नीध्रा-त्कर्मणो हेतोरिति ।

अग्निर्होता दैवीनामिति यजमानम् ॥ १५ ॥ आग्नीध्रवरणानन्तरं यजमानं वृणीते · अत्र यो विशेषः स पूर्वमेवोक्तः (६. ४. ३) सुन्वन्निति सुत्य इति · तेनात्र सुन्वन्यजमानो मनुष्याणामिति प्रयोज्यम् · कुतः कठमैत्रसूत्रयोरित्थमेव पाठदर्शनात् प्रदर्शितं च तत्सूत्रं प्राक् होतृनाम॰ कृत्वेत्यत्र (८) । अनेकयजमा-नके सुन्वन्तो यजमाना इति · शेषं निरूढे उक्तम् (६. ४. ३) ।

यथाप्रवृतं प्रवृतहोमौ जुह्वति जुष्टो वाचे भूयासं जुष्टो वाचस्पतये देवि वाग्यत्ते वाचो मधुमत्तमं जुष्टतमं तस्मिन्मा धाः स्वाहा सरस्वत्या इति ॥ १६ ॥ ततो होत्राध्वर्य्वग्नीधीः संमर्शने कृते तयोरुपवेशनानन्तरं यथा॰तं प्रवरणक्रमेण सर्वे द्वौ-द्वौ प्रवृ॰मौ जु॰ति प्रत्येकं द्वे-द्वे आहुती जुह्वति समिदाधानं कृत्वा प्रचरण्या सकृद्गृहीतेनाज्येन · जुष्टो वाचे भूयासमित्यनेन प्रथमामाहुतिं जुह्वति

१) प्रशा॰ B. २) प्रशा॰ B. ३) प्रशा॰ AB.

इदं वाचे वाचस्पतये सरस्वत्याऽइति त्यागः · यथा॰वृतमिति प्रथमं होता१ ततो ऽध्वर्युः२ ततः प्रतिप्रस्थाता३ प्रशास्ता४ ब्राह्मणाछंसी५ पोता६ नेष्टा७ आग्नीध्रः८ यजमान इति । अत्रानेकयजमानेषु होमस्य परार्थत्वात् परार्थेष्वेकः कृतत्वादित्यनेन न्यायेनैक एव होमे · तत्रोहः · जुष्टौ वाचे भूयास्व जुष्टौ॰ तस्मिन्नौ धाः इति द्वियजमानके जुष्टा वाचे भूयास्म जुष्टा॰ तस्मिन्नो धाः स्वाहेति बहुषु · एवं ह लोकद्वारीयहोमेष्वप्येककर्तृत्वमूहश्च द्रष्टव्यः लोकं नौ यजमानाभ्यां विन्देष वै यजमानयोर्लोक एतारौ स्वोऽत्र यजमानौ परस्तादिति द्वयोः लोकं नो यजमानेभ्यो विन्देष वै यजमानानां लोक एतारः स्मोऽत्र यजमानाः परस्तादिति बहुषु ।

पावका न इति (२०. ८४) द्वितीयाम् ॥ १७ ॥ आहुतिं जुह्वति प्रचरण्या सकृद्गृहीतेनैव · इदं सरस्वत्याऽइति त्यागः ।

वपामार्जनान्तं कृत्वा सयजमाना धिष्ण्यानुपतिष्ठन्ते विभूरसीति[1] (५. ३१) प्रतिमन्त्रम् ॥ १८ ॥ ततो होतरि सदोमध्ये स्वस्य धिष्ण्यस्य पश्चादुपविष्टे स्रुगादापने चोक्ते प्रयाजादि आग्नेयस्य सवनीयस्य पशोर्वपा॰न्तं कृत्वा स॰नाः यजमानसहिताः षोडश ऋत्विजः आग्नीध्रीयादीन्धिष्ण्या॰ष्ठन्ते ।

उत्करान्तं कृत्वा वाङ्गसीति (५. ३३) सदोऽभिमर्शनम् ॥ १९ ॥ अष्टानां धिष्ण्यानामुपस्थानादनन्तरं सम्राडसीत्यादिभिर्मन्त्रैः (५. ३२) समूह्योऽसीत्यन्तैः (८. ६. २३-२४) आहवनीयादीनामनुदेशमुत्क॰न्तम् अग्नीषोमीयदिनवत्कृत्वा वागसीति मन्त्रेण सदोऽ॰र्शनं करोति ।

ऋतस्य द्वाराविति (५. ३३) द्वार्ये ॥ २० ॥ सदसो द्वार्ये द्वारभवे स्थूणे अभिमृशेत् · येन प्रवेशनं तस्मिन्त्सर्पणमित्युक्तवात् (११. १. २२) यस्य येन द्वारेण प्रवेशनम् स तस्य द्वारस्य द्वार्येऽअभिमृशति · यस्य द्वाभ्यां प्रवेशनम् तस्य द्वयोरपि सर्पणं भवति ।

अभिमन्त्रणमुत्तरैः ॥ २१ ॥ उत्तरैर्यजुर्भिरभि॰णां भवति (२२-२४) ।

अध्वनामध्वपतऽइति (५. ३३) सूर्यम् ॥ २२ ॥ अध्वर्युः सूर्यमभिमन्त्रयते शाङ्खायनसूत्राद्गात्रिपर्यायविधाश्विने च सर्पणे सूर्योपस्थानाभावः (शा॰ ६. १३. १५) ।

---

1) Thus M. विभूरिति A. विभूतिरिति B.

मित्रस्य मेत्यृत्विजः (५.३४) ॥२३॥ यजमानः सर्वानभिमन्त्रयते ।

अग्नयः सगरा इति (५.३४) धिष्ण्यान् ॥२४॥ आग्नीध्रीयादीनष्टावपि धिष्ण्यानध्वर्युरभिमन्त्रयते । ऋत्विगभिमन्त्रणमेव याजमानमिति कर्कः ।

एतत्सर्पणम् ॥२५॥ एतद्धिष्ण्योपस्थानादि स॰णासंज्ञं भवति · संज्ञेयम् सर्पणादि माध्यन्दिनमित्यादौ (१०.१.१) संव्यवहारार्था ॥ ॥ अष्टमी कण्डिका ॥८॥

सदोऽभिमर्शनादि वोत्तरयोः सवनयोः ॥१॥ उत्त॰नयोरिति माध्यन्दिनसवनतृतीयसवनयोः सदो॰नादि वा सर्पणं भवति धिष्ण्योपस्थानादि वेति विकल्पः। वपामार्जनान्ते कठसूत्रे सर्वेषां भोजनमुक्तम् मार्जयित्वा भुक्त्वा प्रक्षालितपादा अक्षानवेक्षन्तऽइति · छन्दोगसूत्रे च एतस्यां वेलायां प्राश्नीयुरिति · ततः सर्पणादीति।

पुरोडाशैश्चरति ॥२॥ सर्पणानन्तरमध्वर्युः सवनीयैः पुरो॰रति सवनाय हितास्तदङ्गत्वात्सवनीयाः · अत्र पुरोडाशेन तत्सहचारिणो धानादयोऽपि लक्ष्यन्ते तदभिप्रायं च बहुवचनम् पुरोडाशैरिति । अत्र च हविरासादनानन्तरं यजप्रैषावाज्यभागौ कार्यौ पशोः सववविधत्वेन तयोरभावात् · ततः सवनीययागः । नानादेवतत्वाद्भेदेन प्रदाने प्राप्तऽआह ·

एकं प्रदानम् ॥३॥ वचनादत्र नानादेवतानामपि । किं कृत्वा ·

एकपात्र्यामासाद्य ॥४॥ एकस्यां महापात्र्यां पञ्चापि हवींष्यासाद्य प्रदानमप्येकं करोतीत्यर्थः · ल्यबादेशादासादनमध्वर्युणा कर्तव्यम् । पात्र्यामप्युदक्संस्थे आसादने प्राप्तऽआह ·

मध्ये पुरोडाशः पुरस्ताद्धानाः प्रतिदिशमितराणि यथासंख्यं प्रदक्षिणम् ॥५॥ पात्रीमध्ये पुरो॰श आसादनीयः पुरोडाशस्य पु॰स्तात्तस्यामेव च पात्र्यां धानाः स्थाप्याः इत॰णि करम्भदधिपयस्याख्यानि य॰ख्यं यथाक्रममनुक्रमेण प्र॰णं पात्र्यामेवासादनीयानि · ततश्च पुरोडाशस्य दक्षिणतः करम्भः पश्चाद्दधि उत्तरतः पयस्येति । आसादनमन्त्रश्च प्रियेर्धामभिः प्रिय७ सद आसीदतेत्येवमूह्यः · वाजिनस्य चोत्करे सादनम् · ततः सर्वेषां प्रत्येकमालम्भो वाजिनस्य च आत्मालम्भस्तु अपररात्रे कृतो न पुनः-पुनः क्रियते तस्यात्मसंस्कारार्थत्वात् तस्य च संस्कृतत्वादा कर्मपरिसमाप्तेः · दधिपयस्ययोस्तु स्थालीस्थयोरेव पात्र्यां निधानमिति कर्कः ·

अथवा एकं चेति (४) विशेषवचनात् प्रतिदिं दिक्षिणमिति (५) बहुवचनाच्च पात्र्यां दधिपयस्ययोरासादनाय गर्तौ कृत्वा स्थालीतो निष्काश्य दधिपयस्ययोरपि पात्र्यामेवासादनं कर्तव्यम् · युक्ततरमिव चैतत् · तथा च मानवे पात्र्यामुपस्तीर्य सनवनीयानुद्वासयति पूर्वार्धे धाना दक्षिणार्धे सक्तून्करम्भाय दध्ना प्रयुतान्सर्पिषा वा पश्चार्धे सक्तून्परिवापाय मध्ये पुरोडाशं विलाव्यामिक्षामुत्तरार्धे अलंकृत्य जुहूपभृतोरवदायेति · अत उखास्थयोरेवासादने प्राप्ते वचनात्पात्र्यामासादनमिति । मित्रविन्दावद्देवतापदसमासेनानुवाचने प्राप्तऽआह ·

प्रातः प्रातःसवस्येन्द्राय पुरोडाशानामनुवाचयति ॥ ६ ॥ प्रातः प्रातः॰शानामनुब्रूहीत्येवं प्रशास्तुरनुवाचनप्रैषं करोति · मानवे चावदानानन्तरमनुवाचनमुक्तम् जुहूपभृतोरवदाय प्रातः प्रातःसवस्येत्यादि तुल्यम् · काठके च सहानुवाचनम् पुरोडाशादीनां पयस्यान्तानामवद्यन्प्रातः प्रातःसवस्येन्द्राय पुरोडाशानामनुब्रूहीत्यवदीयमानानामिति लौगाक्षिरिति · सम्प्रदाये चादावनुवाचनम् ततोऽवदानमिति । देवतापदसमासेनैव प्रैषेऽपि प्राप्तऽआह ·

आश्राव्याह प्रातः प्रातःसवस्येन्द्राय पुरोडाशान्प्रस्थितान्प्रेष्येति ॥ ७ ॥ आश्रावणं कृत्वा मैत्रावरुणं प्रत्येवमाह · इदमिन्द्रायेति वा इदमिन्द्राय हरिवत ऽइन्द्राय पूषण्वतऽइन्द्राय सरस्वतिवतऽइन्द्राय मित्रावरुणावतऽइति वा त्यागः सर्वेषु सवनेषु सौविष्टकृते विदमग्नयऽइति ।

एवं यथासवनमनुवाचनप्रैषौ ॥ ८ ॥ एवमेवोत्तरयोः सवनयोर्यथाऽर्षौ कार्यौ · माध्यन्दिनसवने माध्यन्दिनस्य सवनस्येन्द्रायेति · तृतीयसवने तृतीयस्य सवनस्येन्द्रायेति · एवमेव शाखान्तरे श्रुतत्वात् ।

उपभृति चावद्यति ॥ ९ ॥ प्रधानयागार्थं जुह्वां सर्वाण्यवदायाभिघार्य हवींषि प्रत्यभिघार्योपभृत्युपस्तीर्य पुरोडाशादीनां पञ्चानामुत्तरार्धात्सकृत्सकृदवदाय द्विरभिघार्योत्थायातिक्रम्याश्रावणादि प्रधानयागानन्तरं समानीय निर्गुणः स्विष्टकृद्यागः कार्यः ।

पशुपुरोडाशवदुभयम् ॥ १० ॥ उभयमित्यवदानं प्रदानं च प्रधानयागस्विष्टकृद्यागयोः पशुवत् भवति · तेन प्रधानयागार्थावदानेन सहानुवाचनमवद्य-

न्नाहेति उपभृति स्विष्टकृदवदानम् प्रधानयागार्थं जुह्वा समानीय निर्गुणा-याग्नये प्रदानमिति · ततश्चाग्नयेऽनुब्रूह्यग्नये प्रेष्येत्येवं यागः कार्यः · अत्र मानवे विशेषः औपभृतं जुह्वामानीयाग्नये पुरोडाशानामनुब्रूह्यग्नये पुरोडाशान्प्रस्थितान्प्रेष्येति प्रचरतीति · काठके इष्टे स्विष्टकृता प्रचरत्यग्नये पुरोडाशानामिति सम्प्रेष इति ।

जुह्वा होतृधिष्ण्ये पुरोडाशान्निदधाति ॥ ११॥ प्रधानं सौविष्टकृतं च जुह्वाप उपस्पृश्य स्रुचौ निधाय संचराभ्युक्षणमकृत्वैव पुरोऽदधाति प्राशित्रेडावदानाद्यपि न करोतीति पूर्वः पक्षः । सिद्धान्तमाह ·

निरवत्तां वेडाम् ॥ १२॥ वाशब्दः पूर्वपक्षनिरासार्थः · निर्वृत्तामेवेडां होतृधिष्ण्ये निदधाति न सकलानि पुरोडाशादीनि पञ्च हवींषि · निःशेषेणावत्ता निर्वृत्ता · अतश्च प्राशित्रेडाषडवत्तेष्ववत्तेषु सा निर्वृत्ता भवति · चतुर्धाकरणं तु न भवति शेषस्य यजमानभक्षणे विनियोगात् · अतश्च प्राशित्रमवदाय ब्रह्मणे समर्प्याप उपस्पृश्य इडामवदाय षडवत्तं चावदायेडामध्ये एकस्मिन्प्रदेशे पुरोडाशपयस्याधानानां मात्राः पुरोडाशवृगलं च निधायोत्तरेण हविर्धानं सदसि गत्वा होतृधिष्ण्ये इडां निदध्यादिति हविःशेषं च यजमानभक्षार्थं संगुप्ते देशे निदध्यात् ।

द्विदेवत्यैश्चरति ॥ १३॥ ततः पाणी प्रक्षाल्य अध्वर्युर्द्विदेवत्यसंज्ञकैर्ग्रहैश्चरति यागमनुतिष्ठतीत्यर्थः ।

वायवऽइन्द्रवायुभ्यामनुवाचयति ॥ १४॥ ततोऽध्वर्युरुत्तरेण हविर्धानं गत्वा पूर्वद्वारेण हविर्धानं प्रविश्य ऐन्द्रवायवं ग्रहं हस्तेनादाय वायवऽइन्द्रवायुभ्यामनुब्रूहीत्येवं मैत्रावरुणं प्रेष्यति । अत्र मानवे विशेषः स्रुचौ चमसं वायव्यं चादाय वाचं यच्छत्या यजेति वचनादाग्नीध्रे स्फ्यसंमार्गपाणिराग्नीध्रः पश्चादासन्दीमारंभ्योर्ध्वस्तिष्ठन्नस्तु श्रौषडिति प्रत्याश्रावयति प्रत्याश्रुते दक्षिणं परिधिसंधिं प्रत्यवस्थाय जुहोत्यध्वर्युरुत्तरं प्रतिप्रस्थाता मध्ये अग्नेराज्याहुतीः पुरोडाशाहुतीः पश्चाभितः सोमाहुतीरिति ।

प्रतिप्रस्थातादित्यपात्रेण द्रोणकलशादुपयामगृहीतोऽसीति (८. १) गृहीत्वा-

गृहीत्वा द्विदेवत्याननु जुहोत्युत्तरार्धे ॥ १५॥ अध्वर्युणा अनुवाचने कृते प्रतिप्रस्थाता कलशात् उ ऽसीत्येतावतैव मन्त्रेण देवतानिर्देशशून्येन सोमं गृहीत्वा अग्नेरुत्तरार्धे द्विदे त्यहोमानन्तरं जु ति · द्रोणा शात्पूतभृतो वा विकल्पेन ग्रहणे प्राप्ते (५. २० २२) द्रो शादिति पुनर्वचनं वैकल्पिकपूतभृतो ग्रहणनिवृत्त्यर्थम् । द्विदेव होतीत्यनेन त्रयाणामपि द्विदेवत्यानामनुक्रम्य [1] होमो विहितः तत्र प्रतिहोमं पुनः-पुनर्ग्रहणविधानार्थं गृही होत्वेति वीप्सा न सकृद्गृहीत्वा सर्वेषामनु होम इति · ऐन्द्रवायवस्य च वषट्कारद्वयम् तत्र द्वितीयवषट्कारस्य पश्चात् [2] अनुशब्दोपदेशादिति कर्कः · कठमैत्रसूत्रयोस्तु उभयत्रानुहोमो विहितः · तथा च काठके द्विदेवत्यैश्चरतोऽर्धमैन्द्रवायवस्य प्रतिप्रस्थातादित्यपात्रे गृह्णात्युपयामगृहीतोऽसि वायव इन्द्रवायुभ्यां त्वेति वायव इन्द्रवायुभ्यामिति सम्प्रैषस्ताभ्यां चरत उत्तरः प्रतिप्रस्थातैव सर्वत्र युगपत्प्रचरणेषूत्तर एव प्रतिप्रस्थाता द्विरिष्ट्वाध्वर्युपात्रे शेषमासिच्य तस्यार्धमादित्यपात्रेणादित्यस्थाल्यामासिञ्चतीति · मानवे द्विदेवत्यैः प्रचरतः प्रतिप्रस्थातादित्यपात्रेण प्रतिनिग्राह्यान्ग्रहमसंनीत्वा [3] जुहोत्युपयामगृहीतोऽसि वायव इन्द्रवायुभ्यां त्वेति गृह्णातीति प्रकृत्य वायव इन्द्रवायुभ्यामनुब्रूहीत्यनुवाचयत्याश्राव्य वायव इन्द्रवायुभ्यां प्रेष्येति प्रचरति वषट्कृते जुहुतः पुनर्वषट्कृते हुत्वा व्यवनयते प्रतिप्रस्थाताध्वर्युपात्रे सर्वमवनयति तस्याग्रमध्वर्युः प्रतिप्रस्थातृपात्रेऽवनीय त्वरमाणो भक्षा हरतीति · तेन वषट्कारे अनुवषट्कारे च होमो युक्तस्तेषां द्विदेवत्यदेवताभ्य एव ग्रहणाद्धोमविधानात् ।

अनुवषट्कृतेऽपि ॥ १६॥ उत्तरार्धऽएव जुहोति · येषां ग्रहाणामनुवषट्कारो होतृवेदे विहितोऽस्ति तत्रायमुपदेशः अत्र तु नास्ति । अनुवषट्कारयागार्थमेव प्रसङ्गादिदं चिन्त्यते किमनुवषट्कारयागेऽप्याश्रुतप्रत्याश्रुतप्रैषा भवन्त्युत नेति · तत्र सूत्रेणैव पूर्वपक्षं करोति ·

आश्रुतप्रत्याश्रुतप्रैषाश्च समत्वात् ॥ १७॥ अनुवषट्कारयागेऽपि आश्रुतम् ओश्रावयेति प्रत्याश्रुतम् अस्तु श्रौषडिति प्रैषोऽग्निं यजेति एते भवन्ति · कुतः स त्वात् अनुवषट्कारयागोऽप्यन्यैर्यागैः सम एव यतः अत्रापि मान्त्रव-

[1] ? त्र्यस्य B. अभ्य A. [2] viz. होमो युक्तः [3] ? संनान्वा B. न्ग्राहमंसंनावा A.

र्णिकी देवता सोमो द्रव्यम् · यागमात्रे चाश्रुतादीनि विहितानि सन्ति ।
सिद्धान्तमाह ·

नानन्तर्यात् ॥ १८ ॥ वषट्कारानुवषट्कारयोर्ह्यानन्तर्यं श्रूयते वषट्कृत्यानवानन्ननुवषट्करोतीति ।

स्यादविरोधात् ॥ १९ ॥ अविरोधादनुवषट्कारयागेऽप्याश्रावणादि स्यात् · यदि च श्रुत्या सह अविरोधः स्यात् तदा स्यादित्यर्थः · अस्ति चात्र श्रुतिविरोधः वषट्कृत्यानवानन्ननुवषट्करोतीति अत्रानवानन्निति श्रुतम् · तच्च वषट्कारानन्तरमाश्रावणादौ क्रियमाणे विरुध्यते असम्भवात् · अतोऽनुवषट्कारयागे आश्रावणप्रत्याश्रावणप्रैषा न भवन्तीति सिद्धान्तः । अथ प्रकृतमुच्यते ·

शेषं-शेषमादित्यस्थाल्यामासिञ्चत्यादित्येभ्यस्त्वेति (८. १) ॥ २० ॥ प्रतिप्रस्थाता द्विदेवत्यानन् हुत्वा-हुत्वा प्रतिहोममादित्यपात्रस्थं हुतशेषमादिंचति · शेषं-शेषमिति वीप्सा प्रतिहोमं शेषासेचनविधानार्था । एवमैन्द्रवायवयाग उक्तः · तत ऐन्द्रवायवपात्रं होत्रे समर्प्य हविर्धानमुत्तरेणागत्य मैत्रावरुणं ग्रहमादाय मित्रावरुणाभ्यामनुब्रूहि मित्रावरुणाभ्यां प्रेष्येति इदं मित्रावरुणाभ्यामिति · प्रतिप्रस्थाता च पूर्ववच्छेषासेचनान्तं करोति · यागानन्तरं त्वरया गत्वा होत्रे ग्रहपात्रं प्रदाय तथैवागत्याश्विनमादायाश्विभ्यामनुब्रूहि अश्विभ्यां प्रेष्येति प्रचरति · प्रतिप्रस्थाता च पूर्ववत्ततस्त्वरयागत्य[१] होत्रे ग्रहपात्रं समर्पयति ।

समासिच्य तेनापिदधाति विष्णऽउरुगायेति (८. १) ॥ २१ ॥ प्रतिप्रस्थाता तृतीयवारमादित्यस्थाल्यां समाच्य तेनैवादित्यपात्रेण आदित्यस्थालीमपिंति । सर्वत्र सदसि गमनागमने उत्तरेण हविर्धानं कर्तव्ये नान्यथा ।

उन्नीयमानेभ्योऽनुवाचयति ॥ २२ ॥ द्विदेवत्यप्रचारानन्तरमुन्नीभ्योऽनुब्रूहीत्येवं प्रशास्तारमनुवचनक्रियायां प्रेरयति ।

चमसेषून्नयति नवस्वपरेणोत्तरवेदिं निधाय ॥ २३ ॥ तत उन्नेताछावाकचमसवर्जितान्नव चमसान्क्रमेण उत्तंदिमपणा निध्य तेषु पूतभृतः सकाशात्सोममुन्नंति ।

शुक्रादुपास्तरणाभिघारणे ॥ २४ ॥ चमसेषु शुक्रात् द्रोणकलशस्थात्सोमा-

१) यात्या B. यागत्या A.

ह्रुप॰रणो करोति · मध्ये उन्नयनं पूतभृत एव (५. २२) एकैकश्च त्रिरवत्तः क्रियते। तत्र क्रममाह ·

होतृचमसे प्रथमम् ॥ २५॥ प्र॰मं होत॰से उन्नयति ततः क्रमेणेतरेष्वष्टासु · तत्रायं क्रमः प्रथमं होतुश्चमसे ततो ब्रह्मणः२ उद्गातुः३ सुन्वतः४ प्रशास्तुः५ ब्राह्मणाछंसिनः६ पोतुः७ नेष्टुः८ आग्नीध्रस्येति९ · मानवे पूतभृतोऽन्ते मध्यतः-कारिचमसानुपसादयति होतुर्ब्रह्मण उद्गातुर्यजमानस्य होतृकचमसांश्चान्यानृते ऽछावाकचमसादुन्नीयमानेभ्योऽनुब्रूहीत्यनुवाचयति उभयतः शुक्रमुन्नेतोन्नयति द्रो-णाकलशादुपस्तीर्य पूतभृत उपविल्लान्कृत्वा द्रोणकलशादभिपूरयतीति · काठके होतृचमसमुख्यानुन्नयति नाछावाकचमसमिति तस्योपरिष्टादुन्नयनविधानात् (१२. १३) ॥ ॥ नवमी कण्डिका ॥ १॥

शुक्रामन्थिभ्यां चरतः ॥ १॥ चमसोन्नयनानन्तरमध्वर्युप्रतिप्रस्थातारौ।

शुक्रेणाध्वर्युर्मन्थिना प्रतिप्रस्थाता ॥ २॥ शुक्रग्रहेणाध्वर्युश्चरति मन्थि॰।

प्रोक्षिताप्रोक्षितौ यूपशकलावादाय ॥ ३॥ किं कृत्वा प्रोक्षितौ अप्रो-क्षितौ च यू॰दाय अध॰तारौ शु॰न्थिनोरादानं कुरुतः।

अपिधानं प्रोक्षिताभ्याम् ॥ ४॥ प्रोक्षि॰भ्यां शकलाभ्यामध॰तारौ ग्रहयो-रपि॰नं कुरुतः · यूपशकलाभ्यामिति तु शाखान्तरात्।

अपमार्जनमप्रोक्षिताभ्यामपमृष्टः शण्ड (७. १२) इत्यध्वर्युरपमृष्टो मर्क इति (७. १७) प्रतिप्रस्थाता ॥ ५॥ अप्रो॰भ्यां यूपशकलाभ्यां ग्रहयोरप॰नं ग्रहपात्रमुखादा-रभ्याधस्तान्मार्जनं कुरुतः।

देवास्त्वेति (७. १२ १७) निष्क्रामतो यथालिङ्गम् ॥ ६॥ हविर्धानमध्यात् · य॰ङ्गमिति शुक्रलिङ्गेनाध्वर्युर्निष्क्रामति (७. १२) मन्थिलिङ्गेन (७. १७) प्रतिप्रस्थाता।

अपरेणोत्तरवेदिमरत्नी संधायोत्तरवेदिश्रोण्योर्निधत्तोऽविसृजन्तौ दक्षिणस्याम-ध्वर्युरुत्तरस्यां प्रतिप्रस्थातानाधृष्टासीति (७. १२ १७) ॥ ७॥ हविर्धानान्निष्क्रम्य वेदिमपरेणाध॰तारावरत्नी दक्षिणहस्तयोररत्नी मेलयित्वा अवि॰न्तौ ग्रहयोर्विस-

---

१) ? ॰नोते AB.

र्गमकुर्वन्तौ उत्तरवेधत्तः दक्षिणस्यामध्वर्युः शुक्रम् उत्तरस्यां श्रोणौ प्रतिप्रस्थाता मन्थिनमनेनैव मन्त्रेण ।

सुवीर इति (७. १३) दक्षिणं यूपदेशं गच्छत्यध्वर्युः ॥ ८ ॥

सुप्रजा इति (७. १८) प्रतिप्रस्थातोत्तरम् ॥ ९ ॥ यूपदेशं गच्छति · अत्रानेकयजमानके यजमानौ यजमानानिति यथायथमूहः ।

अपरेण यूपमरत्नी संधत्तः संजग्मान इति (७. १३ १८) यथालिङ्गम् ॥ १० ॥

पूर्वेणाशक्तौ ॥ ११ ॥ यूपमपरेणारत्निसंधानाशक्तौ यूपं पूर्वेणारत्नी संधत्तः ।

अप्रोक्षितौ निरस्यतो निरस्तः शण्ड (७. १३) इत्यध्वर्युर्निरस्तो मर्क इति (७. १८) प्रतिप्रस्थाता ॥ १२ ॥ यूपशकलौ ।

आहवनीये प्रोक्षितौ प्रास्यतः शुक्रस्याधिष्ठानमित्यध्वर्युर्मन्थिन इति (७. १३ १८) प्रतिप्रस्थाता ॥ १३ ॥

अछिन्नस्येति (७. १४) जपित्वाश्राव्याह प्रातः प्रातःसवस्य शुक्रवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति ॥ १४ ॥ प्रत्यगाशीर्यीगाद्यजमानोऽछिन्नस्येति जपति तदनन्तरमध्वर्युराश्रावयेति मैत्रावरुणं प्रति ब्रवीति · जपित्वेत्ययं सूत्रे ल्यबादेशः पूर्वकालतामात्रे न समानकर्तृकतायाम् ब्राह्मणे अश्रवणात् तत्र जपत्यछिन्नस्य इति प्रकृत्य (४. २. १. २२) अथाश्राव्याह प्रातः प्रातःसवस्येत्यादिश्रुतत्वात् (°२३) ॥ ॥ दशमी कण्डिका ॥ १० ॥

उभयतोयूपं प्रत्यङ्मुखौ जुहुतः सा प्रथमेत्यध्वर्युः प्रथमं तमनु प्रतिप्रस्थात- ॥ १ ॥ उभयतो तिष्ठन्तौ शुक्रामन्थिनौ जुहुतो वषट्कृते सति ।

चमसाध्वर्यवश्च ॥ २ ॥ चकारेण तमनु जुहुयुरित्याकृष्यते · तं प्रतिप्रस्थातारमनु चर्थ्वस्तूर्ष्णीं प्राङ्मुखाश्चमसैः[1] सोमम् · अत्रेदमिन्द्रायेति सर्वेषां वषट्कृते त्यागः इदमग्नयऽइत्यनुवषट्कृते । मानवे प्राङ्मसैश्चरंति[2] प्रत्यञ्चौ शुक्रामन्थिभ्यामिति · अनुवषट्कारेष्वेवमेव होमः प्रथमं होतुः तमनु प्रतिवतुः तमनु चमसाध्वर्यूणाम् · चमर्थ्वूर्णां च विशेषः चर्थ्वश्चाश्रावणात्प्राक् चमसान्होमायोद्यच्छेयुः · तथा च काठके अनूद्यच्छन्ते चमसानाश्राव्याहेति तथा ब्रह्मोद्गातृहोतृयज-

1) Thus AB. प्रत्यङ्मु° ?    2) प्रांचमश्च° B. प्राचमसैव° A.

मानचमसानां द्विर्यजति सकृदितरेषां द्विर्हुतान्सदो हरन्ति सकृद्धुतान्द्विर्द्विर्यजत्या-श्रावं प्रशास्तर्यजेति प्रशास्तुः सम्प्रैषो ब्रह्मन्यजेति ब्राह्मणाच्छंसिनः पोतर्यजेति पोतुः नेष्टर्यजेति नेष्टुरग्नीध्यजेत्यग्नीधस्तान्सदो हरत्यथाऽग्नीदित्युक्त्वा द्विदेवत्या-न्संभक्षयत इति · मानवे च मध्यतःकारिणां चमसाध्वर्यवो वषट्कृतानुवष-ट्कृते जुह्वति होतृकाणां चमसाध्वर्यवः सकृद्धुतांश्चमसानिति · चमसाध्वर्यवोऽपि दशैव भवन्ति चमसानां दशत्वात् अत्र तु नव · चमसेष्वध्वर्युरेव कुर्वन्तीति चम॰र्यवः ततश्चाव्यापृते अध्वर्युरेव चमसाञ्जुहुयात् व्यापृते तु चमसाध्वर्यव इति पितृभूतिः ।

प्रेष्यति च प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र यजमानस्य प्र यन्तु सदस्यानां होत्राणां चमसाध्वर्यव उपावर्तध्वं शुक्रस्याभ्युन्नयध्वमिति (४. २. १. २१) ॥ ३ ॥ चशब्दादध्वर्युः होमानन्तरमेव प्रेष्यति · प्रैतु होतुः सम्बन्धी चमसः न हि चमसोऽप्रणीयमानः प्रैति तेनार्थाच्चमसाध्वर्युः प्रेष्यते प्रणय होतुश्चमस-मिति · एवं प्र ब्र॰णा इत्यादीनामपि द्रष्टव्यम् · प्रोद्गा॰णामिति यद्यप्येको मुख्य उद्गाता तथापि बहुवचनात्त्रयोऽपि संनिहिताः स्तोत्रकारिणो भक्षयितारो गम्यन्ते · प्रयन्तु॰स्यानामिति पूर्वेषामेवानुवादः होत्रादीनां सदसि भवानां स-म्बन्धिनश्चमसाः प्रयन्तु अतश्चात्राप्यवसानं कर्तव्यम् · हो॰णां प्रशास्त्रादीनां चम॰र्यवः यूयं मामुपावर्तध्वं[1] चमसैः सह · शुक्रस्य द्रोणाकलशस्थसोमस्य अभ्यु-॰ध्वमभिपूरयध्वं तानेव चमसान् · यद्यपि समाख्यानादुन्नेतुरुन्नयनम् तथाप्यस्मादेव प्रैषविशेषश्रवणाच्चमसाध्वर्यव एवोन्नयेयुः ।

आगम्य प्रतिप्रस्थाता शेषं शुक्रपात्रेऽवनयति ॥ ४ ॥ आगम्य यूपदेशा-दुभयोरागमनानन्तरं प्र॰ता मन्थिशेषं शु॰यति ।

तं स होतृचमसे ॥ ५ ॥ तं मन्थिशेषमिश्रं शुक्रशेषं सोऽध्वर्युः हो॰से ऽवनयति भक्षार्थम् ।

पश्चसून्नयन्ति ॥ ६ ॥ बहुवचनाद्ये चमसाध्वर्यवः प्रेषिताः होत्रा॰न्नयध्व-मिति (३) अतस्ते चमसाध्वर्यव एव द्रोणाकलशात्प॰सु स्वस्वचमसेषु सोममुन्न॰न्ति ।

---

[1]) मा उपा॰ A. गां उपा॰ B.

तानाश्राव्याश्राव्य प्रेष्यति नामग्राहं यज-यजेति प्रशास्त्रादीन् ॥७॥ तांश्च-मसाध्वर्युभिः पुनरुन्नीतांश्चमसानादाय हस्ते गृहीत्वा आश्राव्य नाम्ना प्रशास्तर्यजेत्येवं प्रशास्त्रादीनां नाम गृहीत्वा-गृहीत्वा प्रत्येकमध्वर्युः प्रेष्यति · वरणक्रमेण येन क्रमेण होतृनामग्रहणान्ते वृताः । ब्राह्मणाच्छंसिन्यजेति प्राप्ते आह ·

ब्रह्मन्यजेति ब्राह्मणाच्छंसिनम् ॥८॥ ततः पोतृचमसमादाय पोतर्यजेति · नेष्टृचमसमादाय नेष्टर्यजेति · आग्नीध्रचमसमादायाग्नीध्यजेति । सर्वेषां प्रशास्त्रादिचमसानां वषट्कारेऽनुवषट्कारे च होमः · तत्र प्रशास्ता मित्रावरुणौ यजति तत्रेदं मित्रावरुणाभ्यामिति त्यागः · ब्राह्मणाच्छंसी चेन्द्रं यजति इदमिन्द्रायेति तत्र त्यागः · इदं मरुद्भ्य इति पोतुः · इदं त्वष्ट्रऽइति नेष्टुः · इदमग्नयऽइत्यग्नीधः · इदमग्नयऽइति सर्वत्रानुवषट्कारेषु · वषट्कारानुवषट्कारयोर्हुत्वा सदसि चमसप्रस्थापनम् ।

प्रथमछ हुत्वोत्तमं वा तृम्पन्त्विति (७.१५) जपति ॥९॥ प्रथमं प्रशास्तृचमसं हुत्वा तृम्पन्त्वित्यध्वर्युर्जपति अथवोत्तममाग्नीध्रचमसं हुत्वा ।

होतारं प्रत्यङ्ङुपसीदत्ययाडग्नीदिति (७.५४) ॥१०॥ ततोऽध्वर्युराग्नीध्रचमसहस्त एव सदस्यागत्य अयाडिति प्रत्यङ्मुखो होतारमुपसीदति होतृसमीपे प्रत्यङ्मुख उपविशति · अनेन होता सम्बोध्यते अयाडग्नीत् आग्नीध्र इष्टवान् यत्ते कार्यं द्विदेवत्यभक्षणादि तत्कुरुष्वेत्यर्थः ।

द्विदेवत्यान्भक्षयति ॥११॥ ततोऽध्वर्युर्द्विदेवत्यानैन्द्रवायवादीन्भक्षयति । इदानीमिदं विचार्यते किमध्वर्युः पूर्वो भक्षयति उत होतेति · अस्ति ह्यत्र वषट्कारनिमित्तो होतुरपि भक्षः · तत्र पूर्वपक्षमाह ·

पूर्वः प्रथमचोदनात् ॥१२॥ स चाध्वर्युः पूर्वो होतुर्भक्षयति · प्रथमं हि होमानन्तरं तस्य भक्षश्चोद्यते विधीयते अग्नौ हुत्वाथ भक्षयतीति (९.५.१.११) श्रुतेः । नन्वध्वर्योर्भक्ष एव नास्ति कुतः पूर्वत्वमित्याशङ्क्य भक्षणे हेतुमाह ·

होमाभिषवकारी भक्षयेदिति श्रुतेः ॥१३॥ येन होमाभिषवौ कृतौ स हुत्वा शेषं भक्षयेदित्यस्यार्थस्य श्रुतत्वात् तथा हि हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि सोमान्भक्षयन्तीति · अभिषुत्य हुत्वा भक्षयतीत्यनेन होमाभिषवकारिणो होमानन्तरं प्रथमो भक्षोऽवगम्यते · संनिधानाच्च होमानन्तरं

सोमोऽध्वर्योः संनिहितः सहस्थत्वात् होतुस्तु विप्रकृष्टः · अतोऽप्यध्वर्युः पूर्वमेव भक्षयति इति प्राप्ते सिद्धान्तमाह ·

होता वा वचनमन्त्रवर्णकारणेभ्यः ॥१४॥ होता वा पूर्वो भक्षयति · कुतः वचनात् वषट्कर्ता प्रथमो भक्षयतीति श्रुतिवाक्यात् · किं च मन्त्रवर्णाच्च ग्रावाणः स्तूयन्ते होतुश्चित्पूर्वे हविरद्यमाशतेति (ऋक्सं० १०.९४.२) ग्रावाणो वदन्ति किम् वयं होतुरपि पूर्वे हविःशत अशितवन्तः एतच्च तदैवोपपद्यते यदा होतुः प्रथमं भक्षो भवतीति · किं च कारणाच्च भक्षकारणमपि वषट्काररूपं होतुः पूर्वम् पश्चादध्वर्योर्होमरूपम् वषट्कृते जुहोतीति वषट्कारानन्तरं होमविधानात् · अतो होतुरेव पूर्वो भक्ष इति जैमिनेः सिद्धान्तः। इमं सिद्धान्तं पूर्वपक्षीकृत्याचार्यः स्वमतेन सिद्धान्तमाह ·

ना ऽध्वर्युः समभिव्याहारात् ॥१५॥ होता प्रथमो भक्षयतीति यदुक्तम् तन्न किं तु अध्वर्युरेव पूर्वो भक्षयति · कुतः समःशात् तत्प्रातरभिपद्याभिषुत्याग्नौ जुहोति ऽत्यथ भक्षयतीति (९.५.१.१०) · अत्राथशब्दार्थो विधीयते स ह्यप्राप्तः अन्यत्सर्वं प्राप्तमेवानूद्यते तेनात्राथशब्देनानन्तर्यवाचिना होमानन्तरमध्वर्योर्भक्षो विधीयते · अतोऽध्वर्योः पूर्वो भक्षः। ननूक्तम् मन्त्रवर्णाच्च होता पूर्वं भक्षयतीति · तत्र परिहारमाह ·

मन्त्राणां चाविधानात् ॥१६॥ चकारो वचनस्य (१४) समुच्चयार्थः · मन्त्राणामविधायकत्वात् न हि विधायका मन्त्राः · चकारात् वचनस्याप्यविधायकत्वात् · कथं वचनस्याविधायकत्वमिति चेत् वचनस्य सौम्येक्षणविधिपरत्वात् अतस्तस्यार्थवादः · तथा हि सौम्यं चरुं वषट्कर्त्रे हरेद्वषट्कर्ता हि प्रथमः सर्वभक्षान्भक्षयतीत्यनुवादोऽयम् · नन्वनुवादस्य प्राप्तिपूर्वकत्वात् कुतोऽत्र प्राप्तिरिति चेत् अस्ति हि समाख्याभक्षापेक्षया होतुः पूर्वभक्षप्राप्तिः उक्तं हि (५.३०) वषट्कर्तुःमर्थ्यादिति। यच्चोक्तम् कारणादिति वषट्काररूपस्य कारणस्य प्रथमभावित्वाद्धोतुः पूर्वभक्ष इति तत्प्रत्याचष्टे ·

कारणस्य च समत्वात् ॥१७॥ समं हि कारणमुभयोः तुल्यकालमित्यर्थः तस्मादु सह वैव वषट्कारेण जुहुयाद्वषट्कृते वेति (१.७.२.१२) · अतः

समकालत्वात्कारणस्योभयोः पक्षयोः समत्वम् अतस्तदेकस्यापि पक्षस्य निर्धारकं न भवति · तेन प्रागुक्तकारणेभ्योऽध्वर्योरेव प्रथमभक्ष इति कात्यायनाचार्यसिद्धान्तः ॥ केचित्तु जैमिनिसिद्धान्ताविरोधयितेषां सूत्राणामपरां व्याख्यां कुर्वन्ति। नाध्वर्युः पूर्वो भक्षयतीति यत्केश्चिदुच्यते तन्निषिध्यते · कुतः पूर्वोक्तादेव वचनादिति हेतोः · अस्ति हि होतुः पूर्वभक्षे वचनम् वषट्कर्तुः प्रथमभक्ष इति · नन्वध्वर्योरप्यस्ति वचनम् नैवम् तद्धि पयोव्रतो दीक्षितः स्यादित्यादिना (१.५१.१) यजमानपरम् · अतश्च वचनाद्धोतुरेव पूर्वं भक्षः किमिव न करोति वचनम् तस्य सर्वेभ्यो बलीयस्त्वादिति · यद्यपि मन्त्रा विधायका न भवन्ति तथापि प्रमाणान्तरसिद्धस्य होतुः प्राथम्यस्य द्योतका भवन्त्येव तस्माद्धोतुरेव पूर्वं भक्ष इति सिद्धान्तः। एवं व्याख्यायमाने जैमिनिसिद्धान्तविरोधो न भवति परं तु सूत्राणि आञ्जस्येन व्याख्यातानि न भवन्ति · अध्वर्युरेव प्रथमो भक्षयतीति कर्काचार्याणां याज्ञिकानां च सिद्धान्तः पितृभूत्याचार्यैस्तूभयथा सूत्राणि व्याख्यातानि सन्ति ॥ अथ द्विदेवत्यभक्षणप्रकारमाह ·

ऐन्द्रवायवं प्रतिगृह्णात्येतु वसुः पुरूवसुरिति ॥१८॥ अध्वर्युर्होत्रा समर्पितमैन्द्रवायवं ग्रहं भक्षणार्थं प्रतिगृह्णाति · ग्रहा हि हुत्वा-हुत्वा तदानीमेवागत्य होत्रे समर्पिताः सन्ति तेन प्रतिगृह्णातीति समर्पणपूर्वमादानं ग्रहाणां विधीयते।

होतृवद्भक्षणं वाग्देवी जुषाणा सोमस्य तृप्यतु सह प्राणेन स्वाहेति ॥१९॥ होतृवदिति होतृशास्त्रातिदेशोऽयम् · तेनैन्द्रवायवं प्रतिगृह्य होतारमुपह्वय तं मुखस्य ढौकयित्वा तस्य द्विर्भक्षणं कर्तव्यम् द्विश्च वक्ष्यमाणं शेषावनयनम् पात्रेणैवैतद्भक्षणम् करणान्तरानुपदेशात्। अत्र चायं क्रमः · ग्रहप्रतिग्रहणम् उपह्वः ढौकनम् भक्षणम् गात्रालम्भनम् ततो होतुर्भक्षः · पुनः मन्त्रेण प्रतिगृह्योपह्वयाध्वर्योः पूर्ववद्भक्षः · ततो होत्रा पुनर्भक्षिते उभयोर्द्विर्द्विः शेषावनयनम् · ततः पुरोडाशमात्रां प्रक्षिप्य निधानमिति · सर्वसंमतश्चायं क्रम इत्ययमेवानुष्ठेयः। अस्य भक्षमन्त्रस्य सर्वसोमभक्षेष्वतिदेशं करोति ·

एवꣳ सर्वत्र सोमानां भक्षणम् ॥२०॥ सर्वत्र ग्रहचमसादौ सोमानामेवं करोति अनेनैव वाग्देवीति मन्त्रेण।

वचनादन्यत् ॥२१॥ वऽन्यत् मन्त्रान्तरं भक्षणे भवति ।

भक्षे ह्वि मेति वा यथालिङ्गम् ॥२२॥ अनेन वानुवाकेन[1] शाखान्तरपठितेन यऽङ्गं ग्रहचमसादीन्भक्षयेत् यस्मिन्मन्त्रे यस्य ग्रहस्य चमसस्य वा लिङ्गम् तेन तं भक्षयेत् नराशंसलिङ्गेन नाराशंसान् इतरलिङ्गेनेतरानिति शाखान्तरात् ।

एवमितरौ प्रतिमन्त्रमैतु वसुर्विदद्वसुरैतु वसुः संयद्वसुरिति ॥१३॥ इऽरौ मैत्रावरुणाश्विनौ होत्रा समर्पितौ यथाक्रममैवित्याभ्यां मन्त्राभ्यां होतुः सकाशात्प्रतिगृह्य एवमिति होतृवद्भक्षणं तयोः करोति · तच्चैवम् मैऽणं विदद्वसुरिति प्रतिगृह्य होतारमुपह्वय चक्षुषोर्मौकयित्वा वाग्देवीति भक्षयित्वा गात्रालम्भं च कृत्वा होतृभक्षान्तरं होतृचमसे शेषमवनयति · तत आश्विनं संयद्वसुरिति प्रतिगृह्य शिरः पर्याहृत्याविद्य प्रतिपर्याहृत्याविद्य होतारमुपह्वय वाग्देवीति भक्षयित्वा गात्राणि चालभ्य होतृभक्षानन्तरं होतृचमसे शेषमवनयेदिति · भक्षणमपि ओष्ठलेपनमात्रमवघ्राणं वा होतृवदतिदेशादेव तथा च शाङ्खायनः (७. ८. २२) लिम्पेदिवैवाव[2] जिघ्रेदत्र द्विदेवत्येषु चेति अत्रऽर्तुयाजेषु द्विदेवत्येषु चैवम् अन्यत्र पानमेव ।

शेषऽ-शेषऽ होतृचमसेऽवनयति ॥२४॥ भक्षणानन्तरं त्रयाणामपि द्विदेवत्यानां होऽसेऽध्वर्युः शेषं-शेषमवनयति · शेषं-शेषमिति वीप्साकरणात्प्रतिग्रहं प्रतिभक्षणं शेषावनयनम् · भक्षानन्तरं शेषावनयनादर्वाक् ग्रहाणां हस्ताद्विसर्जनं न कार्यमित्यपि होतृवदतिदेशाल्लभ्यते ।

पुरोडाशमात्रामैन्द्रवायवे प्रास्यति ॥२५॥ होतृचमसे शेषावनयनानन्तरमैन्द्रऽवे पात्रे पुरोऽशस्य मात्रां सूक्ष्मखण्डं तूष्णीं पात्रमध्ये प्रक्षिपति अध्वर्युः · मानवे विशेषः नानवधायावसृजेदैन्द्रवायवे पुरोडाशभृगलं[3] मैत्रावरुणे पयस्यां धाना आश्विनेऽइति ।

पयस्यां मैत्रावरुणे ॥२६॥ मैऽणपात्रे पयस्यां प्रक्षिपेत् ।

आश्विने धानाः ॥२७॥ आश्विनपात्रे ।

तानि प्रतिप्रस्थाता दक्षिणास्य हविर्धानस्योत्तरे वर्त्मनि निदधाति ॥२८॥

---

1) Taitt. Saṃh ३. २. ५. १. 2) Thus B. ॰दिवैवावैव A. 3) Thus B. ॰वृगलं A.

तानि द्विदेवत्यपात्राणि सदसो निष्क्राश्य हविर्धानमध्ये गत्वा दक्षिणस्य उत्त-र्मनि उत्तरचक्रमार्गे प्रत्यक्संस्थान्येव सादयति ।

इडामादधाति ॥ २९ ॥ ततोऽध्वर्युर्होत्रे समर्प्य इडां‌ति · सा हि पूर्वमेव होतृधिष्ण्ये निहिता (९. ११-१२) इदानीं तत आदाय होत्रे समर्प्य इडां‌क्रामतीत्यादिकं (३. ४८) कर्म प्रकृतिवत्करोतीत्यर्थः · प्रदक्षिणावर्तनं त्वत्र न भवति व्यवायाभावात् धिष्ण्यावव्यर्थैरिति (८. ७. ११) प्रतिषेधाच्च ।

चमसांश्चोद्यच्छन्ति ॥ ३० ॥ बहुवचनाच्चमसाध्वर्यवः चमसिनो वा ॥

॥ एकादशी कण्डिका ॥ ११ ॥

इदानीमिदं विचार्यते किं वाजिनयागो यथोक्तमेव सूक्तवाकान्ते शम्योर्वाकान्ते वा कर्तव्यः अथ वेडान्तऽइति · तदर्थं च पुनरिदं विचार्यते किं सवनीयपुरोडाशाः तन्त्रस्य प्रयोजका उत प्रासङ्गिका इति · किं चातः · यदि तन्त्रस्य प्रयोजकाः ततो यथोक्तमेव सूक्तवाकान्ते शम्योर्वाकान्ते वा वाजिनयागः यदि प्रासङ्गिकास्तदेडान्तऽएवेति । किं तावत्प्राप्तम् · सूक्तवाकान्ते शम्योर्वाकान्ते वा वाजिनयाग इति · कुतः · यतः सवनीयपुरोडाशा अपि तन्त्रस्य प्रयोजकाः सवनीयपशुना सवनीयैः पुरोडाशैश्च तन्त्रस्य प्रयुक्तत्वात् · कथमुभयप्रयुक्तत्वम् तुल्यश्रुतित्वात् अनुसवनं सवनीयेन पशुना चरन्त्यनुसवनं सवनीयैः पुरोडाशैश्चरन्तीति समानकालऽउभयेषां श्रवणात्साधारणं तन्त्रम् · अतः सवनीयानामपि तन्त्रस्य प्रयोजकत्वाद्यथोक्तमेव सूक्तवाकान्ते शम्योर्वाकान्ते वा वाजिनयाग इति पूर्वः पक्षः । सिद्धान्तमाह ·

मार्जिते वाजिनेन चरन्ति सूक्तवाकशम्योर्वाकयोरन्यार्थत्वात् ॥ १ ॥ मा‌र्ते सवनीयपुरोडाशानामिडामार्जनान्ते कृते वाजिं‌त्व्यधर्य्वादयः वाजिनयागमनुतिष्ठन्तीत्यर्थः · कुतः सू‌त्वात् यतः तौ सूक्तवा‌वाकौ अन्यार्थौ सवनीयपश्वर्थौ सवनीयपुरोडाशाः प्रासङ्गिकाः पशुतन्त्रमध्ये विधानात् अतस्तेषामङ्गानि पृथक्क्रियन्ते · यानि च पयस्याया अङ्गानि तेषामेष क्रमः सूक्तवाकान्ते शम्योर्वाकान्ते वा वाजिनचरणमिति · अतः सूक्तवा‌र्वाकयोः पयस्यासम्बन्धिनोरभावान्मार्जनान्तऽएव वाजिनयागः प्राप्नोति । वाजिनग्रहणं सर्वेषां प्रतिपत्तिकर्मणां

भागपरिहरणप्रणीताविमोकादीनामुपलक्षणार्थम् तानि सर्वाण्यपि मार्जनान्ते कर्तव्यानि · ततश्च मार्जनानन्तरं भागपरिहरणम् भक्षान्तो वाजिनयागः दक्षिणाग्नौ केवला पिष्टलेपाहुतिः प्रणीताविमोको रक्षसभागो भागावेक्षणम् भागप्राशनमिति । ननु नैवात्र सवनीयपुरोडाशानां पशुतन्त्रमध्ये विधानम् तुल्यश्रुतित्वादित्युक्तम् तस्माद्यथोक्तं वाजिनचरणमित्याक्षेपे कृतऽआह ·

यथोक्तं वाऽप्रसङ्गात् ॥ २ ॥ यथोक्तं वाजिनचरणं स्यात् यद्ययमप्रसङ्गः अप्रसङ्गाद्धेतोः स्यात् · स्पष्टस्तु प्रसङ्गः तन्त्रमध्ये विधानात् · यदुक्तम् तुल्यचोदने इति गुणार्थेऽएते चोदने नोत्पत्तिचोदने अनुसवनꣳ सवनीयैः पुरोडाशैश्चरन्ति सवने-सवने चरन्तीत्यर्थः · अनुसवनꣳ सवनीयेन पशुना वपया प्रातःसवने चरन्ति पुरोडाशे माध्यन्दिने अङ्गैस्तृतीयसवनऽइत्यङ्गविहारार्थमेतद्वचनम् · अपररात्रऽएव चोत्पत्तिः तान्सम्प्रबोधयन्ति राजानमुपावहरतीत्यासादितेषु (३. १. ३. १-२) पाशुकेष्वाज्येषु सोमपात्रयोजनकाले सवनीयपुरोडाशाश्चोप्यन्ते · अतस्तन्त्रमध्ये विधानात्प्रासङ्गिका इति सिद्धम् ।

होतृचमसेन सोमं भक्षयतः ॥ ३ ॥ इडामुपहूय तस्या भक्षणात्प्राग्यजमानः सवनप्रार्थनां करोति · ततोऽध्वर्युप्रतिप्रस्थातारौ होंसेन करणभूतेन सोंयतः तत्राध्वर्युः शुक्रग्रहशेषं होमाभिषवनिमित्तं भक्षयति होतारं प्रतिप्रस्थातारं च पृष्ट्वा प्रतिप्रस्थाता च मन्थिग्रहशेषं होमाभिषवनिमित्तं भक्षयति अध्वर्युं होतारं च पृष्ट्वा · वाग्देवी भक्षणमन्त्रः · होतापि तस्मिंश्चमसे शुक्रमन्थिहोतृचमसवषट्कारनिमित्तं तन्त्रेण भक्षयति क्रमेण वा · न सोमेनोच्छिष्टा भवन्तीति स्मरणात्तेनैव चमसेन सर्वेऽपि भक्षयन्ति · ततो होता ब्रह्मयजमानचमसयोस्तौ पृष्ट्वा वषट्कारनिमित्तं भक्षयति · ततो होता प्रशास्तृब्राह्मणाछंसिपोतृनेष्ट्राग्नीध्रचमसेषु वषट्कारनिमित्तं भक्षयति प्रशास्त्रादीनध्वर्युं च पृष्ट्वा · ततो होता स्वचमसे समाख्यानिमित्तं भक्षयति अध्वर्युं प्रतिप्रस्थातारं च पृष्ट्वा · ततो ब्रह्मयजमानौ स्वचमसे समाख्यानिमित्तं भक्षयतः होतारं पृष्ट्वा · उद्गातृचमसं त्रय उद्गातृप्रस्तोतृप्रतिहर्तार एव भक्षयन्ति नान्यः कश्चित् · ततः प्रशास्त्रादयः स्वस्वचमसे प्रस्थितयागनिमित्तं होतारमध्वर्युं च पृष्ट्वा समाख्यानिमित्तं भक्षयन्ति · ततः

पुनरभ्युन्नीतेषु प्रशास्त्रादिचमसेषु पञ्चस्वध्वर्युः होतारं प्रशास्त्रादींश्च पृष्ट्वा होमाभिषवनिमित्तं भक्षयति · प्रशास्त्रादयश्च होतारमध्वर्युं च पृष्ट्वा स्वस्वचमसे वषट्कारनिमित्तं भक्षयन्ति · ततः पुनरप्येवमेव पृष्ट्वा समाख्यानिमित्तं च भक्षयन्ति · तथा च श्रीमद्भिरनन्तयाज्ञिकैरादिष्टम् षड्भक्षा होतुश्चमसे द्वौ-द्वौ स्तां ब्रह्मसुन्वतोः उद्गातॄणां त्रयः स्वे स्युः पञ्च-पञ्च च पञ्चस्विति ।

हिन्व मे गात्राणि हरिवः शिवो[१] मे सप्तऽऋषीनुपतिष्ठस्वोर्ध्वं मे नाभेः सीद मा मेऽवाङ्नाभिमतिगा इति गात्राणि सꣳस्पृशन्ते ॥ ४॥ सर्वभक्षेषु भक्षणानन्तरं गात्राणि शिरःप्रभृतिपादान्तानि स्वान्यङ्गानि संस्पृशन्ते भक्षयितारः ।

आप्यायस्वेति (१२. ११२-११३) द्वाभ्यां चमसानालभन्ते ॥ ५॥ भक्षणानन्तरं सर्वे चमसिनः । स्वस्वचमसानालभन्ते भक्षयित्वा चमसानाप्याययेयुरिति शाखान्तरात् आप्यायनलिङ्गेन मन्त्रेणाभिमर्शनमाप्यायनमिति कथ्यते ।

सोमं वासिञ्चन्ति मन्त्रेणासम्भवात् ॥ ६॥ मन्त्रेणाप्यायनस्यासम्भवात् आप्यायनं पूरणं[२] वर्धनमुच्यते तच्च मन्त्रेण न सम्भवति · अत आभ्यां मन्त्राभ्यां चमसेषु सोमसेकमेव चमसिनः कुर्युः · स च सोमः पूतभृतः सकाशादानेयः तस्य सर्वार्थत्वात् ।

असर्वभक्षांस्तान्दक्षिणस्य हविर्धानस्य पश्चादक्षं निदधति चमसानधः ॥ ७॥ ततश्चमसाध्वर्यवस्तानसर्वभक्षान् सशेषानेव कृताप्यायनान्होतृचमसादिनवचमसान्हविर्धानमध्ये दक्षिणाक्षं अक्षस्य पश्चात् अधो भूमौ प्रागग्रानुदक्संस्थान्स्थापयन्ति ।

ते नाराशꣳसा आ वैश्वदेवात् ॥ ८॥ ते चमसा नाराशंससंज्ञा भवन्ति आ वैश्वदेवात् · वक्ष्यति वैश्वदेवं गृह्णाति शुक्रपात्रेणेति तावत्पर्यन्तमित्यर्थः (१४. १) ।

पुरोडाशशकलमादाय समुपहूताः स्म इत्युक्त्वोत्तिष्ठति ॥ ९॥ अध्वर्युः होतुरग्रत ऊर्ध्वो भवत्यच्छावाकं प्रति गमनाय ।

अच्छावाकायैनत्प्रयच्छन्नाहाच्छावाक वदस्व यत्ते वाद्यमिति ॥ १०॥ सदसो निष्क्रम्य सदसः पुरस्तात् स्वधिष्ण्यस्य पुरस्तादुपविष्टस्याच्छावाकस्य समीपमागत्य एनत् पुरोडाशशकलम् । ततोऽच्छावाकोऽच्छा वोऽअग्निमवसऽइत्यादिकं (ऋक्सं॰

१) Thus MAB. शिवो भव १. २) च पू॰ A. वा पू॰ B.

५.२५.१) वदति · अध्वर्युस्तत्र समीपऽएवोपविशति · मानवे उपविशत्यछावाकोऽग्रेण स्वं धिष्ण्यं बहिः सदस इति ।

उपोऽअस्मानिति ब्रुवति होतारमाह्वोपह्वमयं ब्राह्मण इछते त७ होतरुपह्वयस्वेति ॥ ११॥ ततोऽछावाके उपोऽअस्मान्ब्राह्मणा ह्वयधमित्येवं पठमाने सति अध्वर्युर्होतारं प्रत्याह ।

उपह्नतऽउन्नीयमानायानुवाचयति ॥ १॥ होत्राछावाके उ॑ते सति अध्वर्युरुन्नीयमानायानुब्रूहीत्येवमछावाकं प्रेष्यति ।

अछावाकचमसमुन्नयति ॥ १३॥ ततोऽछावाकस्य चमसाध्वर्युर्द्रोणाकलशादुछा॑यति · उभयतःशुक्रमछावाकचमसमुन्नयतीति मानवे · तेन द्रोणकलशादुपस्तारः पूतभृतो मध्येऽउन्नयनम् पुनर्द्रोणाकलशादभिघारणमित्येवं कर्तव्यम् ।

होत्राचमसवत्सर्वमा निधानात्कृत्वा ॥ १४॥ वक्ष्यमाणं कुर्यादिति शेषः तस्याछावाकचमसस्य होत्रा॑त्सर्वं कर्म कुर्यात् दक्षिणस्य हविर्धानस्य पश्चादक्षं निधानं यावत् · ततश्चैवम् · द्रोणाकलशाच्चमसाध्वर्योरुन्नयनम् · ततश्चाध्वर्योस्तृम्पन्त्विति जपः · अछावाकचमसं गृहीत्वाश्राव्याछावाक यजेति प्रैषः · वषट्कारानुवषट्कारयोर्होमः · अत्र वा तृम्पन्त्विति जपः · अछावाकसमीपे गत्वा सदसो बहिरेवाछावाकं पृष्ट्वाध्वर्योर्होमाभिषवनिमित्तो भक्षः अछावाकस्याप्यध्वर्युं पृष्ट्वा वषट्कारसमाख्यानिमित्तौ भक्षौ · ततोऽछावाकस्य चमसाप्यायनम् · चमसाध्वर्योर्हविर्धानमध्ये नेष्टृग्नीध्रचमसयोर्मध्ये निधानम् ।

पूर्वश्चाग्नीध्राद्तः ॥ १५॥ अतः परं सर्वेषु चमससम्बन्धिकार्येषु अयमछावाकचमस आग्नीध्रचमसात्पूर्वं उन्नयनविधानादौ ज्ञेयः ।

आग्नीध्रे हविर्यज्ञर्विज इडां प्राश्नन्ति ॥ १६॥ अछावाकचमसस्य हविर्धानमध्ये निधानानन्तरमाग्नीध्रसंज्ञकमण्डपमध्ये हविर्य॑श्नन्ति प्रकृतिवदेव · हवि॑र्विजः ब्रह्महोत्रध्वर्युमैत्रावरुणाग्नीध्राः · मैत्रावरुणस्यापि सवनीयेडाभक्षो भवति प्रधानस्विष्टकृद्याग़े पुरोऽनुवाक्याप्रैषयोः पाठेन होत्रध्वर्युविकारात् (५.५.२७) । इडावसरे यजमानः सवनीयानां पुरोडाशादीनां शेषं भक्षयति ।

पत्नी चान्यछालायाम् ॥ १७॥ पत्नी चास्मिन्नेव काले शाल्यां पत्नीशा-

## NEW ABBREVIATIONS.

Adhyâya VI E.I.H. 753 = B. — 761 = A. — 755 = C. —

— VII E.I.H. 751 = A. — 753 = B. —

— VIII E.I.H. 2669 = A. — 2667 + 753 = B. —

— IX E.I.H. 751 = A. — 752 = B. —

The use of the crochets [ ] in the extracts from the commentaries to Adhyâyas II - V is very irregular: for particulars I refer to the preface.

---

## CORRECTIONS AND ADDITIONS.

Read: 134,5 आवृत्तिसामत्तेषु. — 139,20 विरोधात्. — 169,3 वोपवसेत्. — 9 सत्यवदन. — 170,1 मानवे च । तन्निर्ण°. — 10 °पत्याऽऽवलक्षमाह°. — 15 अध्वर्युकर्तृपक्षे. — 173,17 दक्षिणं ज्ञात्वा°. — 174,8 ह्येवं पठ्यते. — 11 सूत्रकारस्याप्यय°. — 18 वरुणा°. — 175,17 भुव इति. — 178,19 अध्वर्युणा ब्रह्मन्हविः प्रो°. — 179,12 ओं बृहस्पती. — 15 बह्वीषूदवसानीयासु. — 181,15 वृतजपादि°. — 182,3 °तीति शाखान्तरात्. — 186,12 °र्ययेण. — 188,17 °तोन्देवयुवः. — 194,15 °ननस्य न घटते न हि शम्याघातेनाश्मा तीक्ष्णो भवति. — 197 between 9 and 10 add: तूष्णीं वा ॥३५॥. — 202,4 °षधानामपि. — 7 तैजस. — 203,16 °लम्भुकी. — 211,14.15 °क्तो मन्त्रः प्रहरणमन्त्रस्य पृथिवि देवयजनीत्यस्यैव. — 212,12 °द्वेदिमध्यं यावत्. — 17 कृत्वाग्नीधं. — 215,7 °न्तत्प्रतिप्रसवा°. — 223,15 बर्हिषो प्रोक्षिष्यावः।. — 26 भवति Ananta. — 27 मन्त्रः Ananta. — 235,3 वरुणादि. — 238,23 °न्तरालदेशस्य. — 241,19 सर्वत्राश्रुतप्रत्याश्रुतेषु. — 244,6 प्राचो यजति. — 246,15 जुहोति ' ततः पुनर्जुह्वमुपभृत्येतेनैव मार्गेणाधिहृत्योपभृत उपरि निदधाति (?ततो पनर्वङ्गमुपभृत्तो प्रागोणीवाधि° E.I.H. 757). — 248,9 पर्युपस्थापकम्. — 16 चोत्पन्नशिष्टा. — 17 उत्पन्नशिष्टया नवे°. — 249,18 °धारा पृथिवी यज्ञे. — 20 ध्रुवामाप्यायति. — 251,17 °षोमौ. — 256,19 and 20 °ङ्गुलिपर्वणी. — 259,21 सिक्ता. — 260,3 अत्र विकृतौ. — 216,16 प्रशीर्य त्रोटयित्वा. — 264,20 यजतिवे. — 266,9 द्वितीयस्थाने. — 11 प्राक्तोऽन्त्यः. — 268,9 By वस्तुभ्य इति° begins in M. १. the next kaṇḍikâ. — 270,12 Deva reads (here and at ८. २. २१.) मूलं ध्रुवायाम्. — 272,24 नः संतिष्ठस्वेति स्विष्टेनौ सं°. — 274,13 एकेषां मते. — 277,12 °दिष्टदेवता. — 289,16 इदमपि यज्ञोपवीतिनैव प्रा°. — 290,14 जुहोतीति श्रुतेरिति. — 293,6 स्वमंशुकमिति. — 294,13 एवं

जीवपितृकोऽपीति •. — 15 °दातीति श्रुतेः ॥२७॥. — 300,19 °न्वत्सानपाकरोति • — 301, 14 M. and १ give the whole mantra from वेषोऽस्युप° to यथासन्निति • — 305,18 सायंदोहवत्कृत्वा • — 307,8 °गुणाकदर्शपूर्णमासपक्षे पश्व° • — 315,6 °कारणाभा° • — 22 अत आम्रा° • — 316,3 सांनाय्य • — 7 देवतासामान्यादित्यु° • — 9 °पांशुयागे • — 318,3 अतः कारणा° • — 21 स्थः पृथिवी • — 319,11 प्राप्तस्य कालस्य • — 12 अन्तरा अन्य° • — 320, 5 प्राकृतद्रव्यधर्म° • — 9 उतानूहि° • — 321,12 °त्वन्नस्य द्र° • — 322,2 य इष्ट्ये • — 11 पक्वां चातु° • — 325,14 फलान्यवे • — 330,14 °नेनानन्वया - • — 336,7 पयो यवागूर्वा deest M. १., and seems to be in २ too only a part of the commentary, not a separate sûtra. — 342,23 न कर्क° • — 343,16 °ौदनवाग्यवाग्रयणेऽपि चरुर्व्रीहितण्डुलमय एव स्यात् • — 344,9 यागपक्षेऽप्यु- • — 20 वत्सो दक्षिणा • — 351,10 °णस्यैवोक्तत्वात् • — 16 °णस्यैव वसन्तः कालः यतो ब्रह्मवर्चसं ब्राह्मणस्यैव युक्तम् • — 357,8 चतुरश्रं • — 358,16 बध्नाति and बध्नातीति • — 20 ऽप्यानीय बन्धनीयः • — 23 नाबन्धनपक्षे नान्यबन्ध° • — 365, 1 ब्रह्मन्यस्ते E. I. H. 757. — 367,8 and 9 देवानां व्रतपते व्रतेनादधऽइति • — 10. 11 °पते व्रतेनादधामीति • — 368,8 ब्रह्मत्वे अधिकारः • — 373,1 del. सामस्तु • — 5 and 6 °होत्रां३ न होतव्या३मिति मीमांसन्तऽइति विधिप्रतिषे° • — 374,18 संमृज्य दर्भैरेव संमार्गः तत्रापि प्रथमं स्रुवस्य ततः स्रुचः • — 385,4 °ह्वाप्रतिज्ञातोऽप्र° • — 12 °नमप्रतिज्ञा- • — 386,1 दधीत • — 387,15 सर्वमपि • — 391,22 °क्षेत्रं वक्तव्यम् • — 393,1 हस्तेन स्पृशति • — 23 and 24 °ग्नीनुद्धृत्य नर्य • — 395,25 समिध्यु° • — 402,13 तेन पत्न्यपि • — 411,9 By चोरहोता चेत् begins in M. १. the next kaṇḍikâ • — 428,3 °घासा महाहविः शु° • — 441,17 उत्पूर्वो • — 445,12 प्रस्तताङ्गु° • — 448,2 °न्नाध्वर्युमभि परिह° • — 459,16 °द्रेखाकरणम् • — 460,4, 5 अभिचारं कुर्वन् अमुमभि°मन्त्रेण बहिर्वेदि • — 461,6 धानाश्रु° • — 462,2 °घासा [इति] • — 463,9 °याजार्थस्या° • — 465,4 होतृवरणम् • — 472,2 °गात्ना- • — 473,8 प्रतिसाऽस्तुतम् • — 476,8 वारुणी°ध्वर्युः स्रुचौ सव्येन हस्तेन गृहीत्वा दक्षिणेन प्रतिप्रस्थातुर्वस्त्रमन्वारभ्य • — 478, 13. 14 पूर्वपर्वकरणा°न्धिनी वाससी पत्नी°हिते अभूताम् ते वाससी दद्यात् • — 479,7 °क्षिणापक्षा • — 11 °घारमाघारय° • — 21 °नमाम्नातम् • — 491,3 प्रयुनक्ति • — 495,3 तु प्राप्तप्रतिषेधः • — 16 सशेषां • — 22 सकलेनेति • — 502,19 महिष्या इत्यादौ (१५. ३. ६) • — 504,12 °नीयम् सिद्धमिष्टिः • — 505,7 °श्वरुः • — 508,14 सर्वसाकमेधार्थो° • — 509,2 सोमाय वा पितृ° • — 20 °डाशं • — 510,3 °कयेक्षुशलाक° • — 513,19 प्राङ्मुखो • — 20 °क्रम्य गच्छति • — 522,15 ग्रहणाविस्मरणे • — 525,14 कृत्वा deest M. १. — 21 °क्ते न किंचनानुप्र° M. — 526,8 del. व्रतगृहीतत्वात् • — 530,16 ताप्रणयनं च • — 532,9 °वदाय • — 539,1 °पाल इन्द्राय वा शुनासीराय M. १. — 25 श्वेतोऽश्वः • — 540 10 °स्मिन्वाहनि • — 25 ५) ? पूर्वेद्युश्चतुर्दश्यां २., and. — 542,17 इदा- • — 560,13 °रुः ॥१०॥ सारस्वतश्चरुः ॥११॥ त्वा°लः ॥१२॥. — 566,17 कालसंनिहितम् • — 576,4 and 5 °भृद्दत्पृ° • —

**Berlin, May 1858.**

लामध्ये उपविष्टा सती अन्यत् इडादिहविःशेषादन्यद्धविष्यम् ओदनापूपमुद्गादिकं सैन्धवसंस्कृतं प्राश्नाति। काठके आग्नीध्रे पुरोडाशान्भक्षयति घृताक्तान्यजमानो हविष्यं पत्नी भुङ्क्त इति हविषे हितं हविष्यम् ओदनमुद्गादि माषकोद्रववरटादिवर्जितम् सैन्धवं च हविरेव[1]· अनुसवनं ब्राह्मणांस्तर्पयस्वेति प्रेष्यतीति मानवे। अत्रऽर्त्विजो भोजनं कुर्युः· शाङ्खायनः (७.७.८-९) अथ व्रतयत्यूर्ध्वं चौपासनेभ्य इति।

उपविष्टेऽच्छावाके[2] ॥१८॥ ॥ द्वादशी कण्डिका ॥१२॥

ऋतुग्रहैश्चरतः ॥१॥ अच्छावाके सदः प्रविश्य स्वस्य धिष्ण्यस्य पश्चादुपविष्टे सत्यध्वर्युप्रतिप्रस्थातारौ ऋतुग्रहैश्चरतः· अत्रेडाभक्षणे पत्नीयजमानाभ्यामृत्विग्भिश्चाशने च कृते मार्जनभागपरिहरणावाज्ञिनयागप्रणीताविमोकराक्षसभागभागावेक्षणभागप्राशनानि कर्तव्यानि· तत ऋतुग्रहप्रचारः। अथ ऋतुग्रहप्रचारस्य विधिमुपदिशति·

द्रोणकलशादुपयामगृहीतोऽसि मधवे त्वेति (७.३०) द्वादश प्रतिमन्त्रम् ॥२॥ ऋतुग्रहान्गृह्णीतः· द्रोणशादिति नियमार्थमुक्तम्। तत्र मन्त्रविभागमाह·

अध्वर्योः पूर्वः-पूर्वो मन्त्रः ॥३॥ षष्णामत्र युग्मानां पूर्वोऽध्वर्योः स्यात्।

उत्तर उत्तरः प्रतिप्रस्थातुः ॥४॥ युगपत्प्रथमौ गृह्णीतः ॥५॥

उत्तमौ च ॥६॥ व्यत्यासं मध्ये ॥७॥ न युगपत्।

प्रचरणं च सर्वेषाम् ॥८॥ सर्वेषां द्वादशानामप्यृतुग्रहाणां प्रचरणं यागानुष्ठानं चकाराद्व्यत्यासं व्यत्यासेनैव भवति पूर्वमध्वर्योः ततः प्रतिप्रस्थातुः पुनरध्वर्योः पुनः प्रतिप्रस्थातुरित्येवं सर्वेषामपि। स व्यत्यासः कथं कर्तव्य इत्यपेक्षायामाह·

निष्क्रामत्येकः प्रविशतीतरः ॥९॥ हविर्धानमध्यात्· अपरो हविर्धानं प्रविशति।

उत्तर-उत्तरः प्रतिप्रस्थातापरकालत्वात् ॥१०॥ अत्र ग्रहणे प्रचरणे च देशतः कालतश्च प्रविशता उत्तरो भवेत्· कुतः अपरत्वात् प्रतिप्रस्थातृमन्त्राणां पश्चात्कालीनत्वात् (३-४)। परकालत्वादिति केचित् स एवार्थोऽस्मिन्नपि पाठे।

उभयतोऽध्वर्युं पात्रेण परिप्रगृह्णाति[3] ॥११॥ उभयत इति हविर्धानान्निष्क्रामन्तं हविर्धाने प्रविशन्तं चाध्वर्युं प्रतिप्रस्थाता पात्रेण परिगृह्णाति[4] अव्यवायार्थं पात्रम-

---

1) see pag. १७६. ६. ff. 2) १२. १८ and १३. १ form in AB. one sûtra. 3) Thus MB. पप्र° ९. प्रतिगृ° A. 4) परिप्र° Ss. sec. m. परिपर° B. प्रतिगृ° Ss. pr. m. and A.

धर्योर्दक्षिणतो हरति स्वयमुत्तरतो यातीत्यर्थः · मानवे हुत्वा गृहीत्वा च प्रतिप्रस्थाता दक्षिणेनाध्वर्युमभिप्रयम्य पात्रे हरति नान्योऽन्यमभिप्रपद्येते शेषे पूर्वस्योत्तरमभिपरिगृह्णीत इति · काठके प्रपद्यमानः प्रतिप्रस्थाता दक्षिणेनाध्वर्योः पात्रे हरेदुत्तर एव संचरेदिति ।

सर्वहुताः प्रागुत्तमाभ्याम् ॥ १२ ॥ उत्तमाभ्यामेकादशद्वादशाभ्यां प्राग्ये दश ऋतुग्रहाः ते सर्वहुताः कार्याः सकृदेव सर्वं होतव्यम् अनुवषट्कारोऽपि न भवति ।

ऋतुनेति षट् प्रेष्यतः ॥ १३ ॥ आद्येषु षट्सु ऋतुग्रहयागेषु ऋतुना प्रेष्येत्येवं मैत्रावरुणं प्रेष्यतः ।

ऋतुभिरिति चतुरः पात्रमुखे विपर्यस्य ॥ १४ ॥ ततः पात्रमुखयोर्विपर्यासं कृत्वा सप्तमाष्टमनवमदशमेष्वृतुग्रहयागेषु ऋतुभिः प्रेष्येत्येवं प्रशास्तारं प्रेष्यतः · मानवे ऋतुना प्रेष्येति षड्भिः प्रचरतो यतो हुतं[1] ततः पात्रे गृहीत्वा[2] ऋतुभिः प्रेष्येति चतुर्भिर्यथादितस्तथा गृहीत्वा ऋतुना प्रेष्येति द्वाभ्यामिति · अन्तयोः षण्णामग्रेण होमः ततश्चतुर्णां पात्रमूलेन होमोऽग्रं हस्ते गृहीत्वा उत्तमयोः पुनरग्रेणेव · ग्रहणमपि पात्रार्थस्यैव कार्यम् ।

षडुत्तमौ ॥ १५ ॥ · उत्तमावेकादशद्वादशावृतुग्रहौ षडुत् प्रचरतः · तेन पात्रयोरग्रेण होमः ऋतुना प्रेष्येति चेत्येतद्वतिना गृह्यते · कः पुनर्मन्त्रार्थः ऋतुना इत्येवंरूपां तृतीयैकवचनान्तर्तुशब्दयुक्तां याज्यां प्रेष्येत्यर्थः ऋतुनेत्येतत्पदयुक्तेन प्रैषेण वा एवमृतुभिः प्रेष्येत्यत्रापि ।

यजमानः प्रेषितो होतरेतद्यजेति ब्रूयात् ॥ १६ ॥ द्वादशे ऋतुग्रहे गृहपते यजेत्येवं प्रशास्त्रा प्रेषितो यजमानः होतर्यजेति एवं ब्रूयात् · ततस्तां यजमानयाज्यां होता ब्रूयात् ।

अध्वर्यू च ॥ १७ ॥ एकादशे ऋतुग्रहे प्रशास्त्रा अध्वर्यू यजतमित्येवं प्रेषितावध्वर्यू होतरेतद्यजेति एवं ब्रूयाताम् · ततश्च तद्याज्यामपि होतैव ब्रूयात् · शाखान्तरे तु विकल्पेन होतुः प्रेषणं स्वयं वा याज्यापठनमित्येवमुक्तमस्ति · मानवे एकादशे प्रैषेऽध्वर्यू यजतमित्युक्ते तयोरन्यतरो मध्यमस्य परिधेः पश्चा-

1) हुतं A. (in B deest प्रचरतुभिः).  2) ? त्वानु A.

डुपविश्य ये यज्ञामहे ऽश्विनाध्वर्यू ऽआध्वर्यवादृतुना सोमं पिबतां वौषडिति प्रैषेण यजेदथ चेदृचा[1] ये यज्ञामहे ऽश्विना पिबतं मधु दीद्यग्नी शुचिव्रत ऽऋतुना यज्ञवाहसा वौषडित्यनवानं यजेति[2] होतरेतद्यजेति वा न[3] प्रेष्यत्युत्तमे प्रैषे यजमानस्य याज्यानि[4] प्रैषो वेति · काठके विशेषः द्वारे हविर्धानस्योपविश्याध्वर्यू यजतमित्युक्ते ऽश्विनावध्वर्यू यजत आध्वर्यवादृतुना[5] सोमं पिबतामिति होतारं वा प्रेष्येद्धोतरेतद्यजेति यद्यध्वर्युर्यजेतोन्नेता ग्रहेणा चरेदिति ।

त्रयोदशं गृह्णीयादित्युपयामगृहीतो ऽस्यंहसस्पतये त्वेति (७. ३०) ॥ १८ ॥

प्रतिप्रस्थातारमनु जुहोति ॥ १९ ॥ तमध्वर्युः प्र॰तारं द्वादशमृतुग्रहं हुतवन्तमनु पश्चाज्जु॰ति । द्वादशस्यैव वषट्कारस्त्रयोदशे प्रसङ्गादुपकरोति । अत्र सर्वेष्वृतुग्रहेषु याज्या मन्त्रवर्णदेवता[6] ज्ञेया · तत्र बह्वृचानुक्रमण्यां यथाक्रमं याज्यानां देवताभिधानम् ऐन्द्री मारुती त्वाष्ट्र्याग्नेय्यैन्द्री मैत्रावरुणी चतस्रो द्रविणोदस आश्विन्याग्नेयीत्यृतुदेवता इति · तेनेदमिन्द्राय१ मरुद्भ्यः२ त्वष्ट्रे३ अग्नये४ इन्द्राय५ मित्रावरुणाभ्याम्६ चत्वारो देवाय द्रविणोदसे७-१० अश्विभ्याम्११ अग्नये गृहपतय ऽइति द्वादशे त्रयोदशे च · याज्याया एकत्वेन दैवतैक्यात् इति क्रमेण त्यागाः ।

अन्यतरस्मिञ्छेषौ कृत्वा वशिनैन्द्राग्नं गृह्णाति प्रतिप्रस्थातेन्द्राग्नी इति (७. ३१) ॥ २० ॥ अ॰स्मिन्नित्यध्वर्युपात्रे वा प्रतिप्रस्थातृपात्रे वा उत्तमयोर्ग्रहयोः शेषौ निनीय व॰ना रिक्तेन शेषरहितेन ऋतुपात्रेण प्रति॰ता हविर्धानं प्रविश्य द्रोणाकलशात्पूतभृतो वा परिप्लवया ऐ॰ग्नं ग्रहं गृ॰ति · अध्वर्युस्तु सदसि ऋतुग्रहशेषवत्पात्रं गृहीत्वा भक्षार्थं गच्छति अस्य सशास्त्रग्रहत्वाद्ग्रहणानन्तरं परिमृज्य प्रदक्षिणावृत्तीतरथावृत्ती कृत्वा ऋतुपात्रस्थाने आसादनं कर्तव्यम् · ततः प्रतिप्रस्थातापि पूर्वद्वारेणैव निष्क्रम्योत्तरेण हविर्धानं भक्षार्थं सदस्यागच्छति । अथ ऽर्तुग्रहाणां भक्षयितॄनाह

आहरति भक्षा॰ होतृपोतृनेष्ट्रग्नीद्ब्राह्मणाच्छं॰सिप्रशास्तृभ्यः ॥ २१ ॥ आद्येषु षट्सु ऋतुग्रहेषु क्रमेणेति होत्रादयः षड्वषट्कर्तारः · तत्र एतेभ्यः भक्षणमाह॰ति

---

[1] ? दप्यवेदवा A. दप्यवेदचा वा B. [2] ? यज इति AB. [3] deest A.
[4] प्रैषे॰ज्यानि deest B. [5] Thus A. वा इत्यृतुना B. [6] ? ॰र्णादेव॰ AB.

यस्य वषट्कारे येन कृतम् अध्वर्युणा प्रतिप्रस्थात्रा वा स तेन सह भक्षयेत् तस्मिन्नेव पात्रे · ततश्चाध्वर्युर्होत्रा सह भक्षयति प्रतिप्रस्थाता पोत्रा अध्वर्युर्नेष्ट्रा प्रतिप्रस्थाताग्नीधा अध्वर्युर्ब्राह्मणाछंसिना प्रतिप्रस्थाता प्रशास्त्रेति ।

विपर्यस्य पात्रं होतृपोतृनेष्ट्रच्छावाकानाम् ॥२२॥ ततः पात्रं विपर्यस्य अग्रं हस्ते गृहीत्वा होतृकानां भक्षमाहरति · सप्तमाष्टमनवमदशमानां क्रमेणेति चत्वारो वषट्कर्तारः · अतश्चाध्वर्युर्होत्रा सह भक्षयति प्रतिप्रस्थाता पोत्रा अध्वर्युर्नेष्ट्रा प्रतिप्रस्थाताच्छावाकेनेति । भक्षविधानादेवं कल्पते वैकल्पिकं सर्वहुतत्वमिति (१२) तेनाद्या दश सर्वहुता वा असर्वहुता वेति अतश्च सशेषहोमपक्षे शेषमध्य एव पुनःपुनर्ग्रहणम् · मानवे शेषे पूर्वस्योत्तरमभिपरिगृह्णीत इति · आपस्तम्बसूत्रे ऋतुग्रहैः प्रचरतो द्रोणकलशादृह्यन्ते न साद्यन्ते पूर्वपात्रं शेषेपूत्तरानभिगृह्णीतः पूर्वोऽध्वर्युर्गृह्णाति जघन्यः प्रतिप्रस्थातेति · कठसूत्रे शेषं संभक्षयतो होत्रा पोत्रा नेष्ट्राग्नीधा ब्राह्मणाछंसिना मैत्रावरुणेनेतीतरथा पात्रं पर्यस्य होत्रा पोत्रा नेष्ट्राच्छावाकेनेति यथापूर्वं पात्रं कृत्वाध्वर्युणा यथालोकं यजमानेन चेति ॥ इदानीमिदं विचार्यते · होतरेतद्यजेत्यत्र (१६) किं याज्यामात्रमपनीयते उत वषट्कारोऽपि · तत्र यदि याज्यामात्रमपनीयते तदा यजमानस्यैव वषट्कारो भक्षश्च यदा चोभयमपनीयते तदा होतुरेव भक्ष इति · तत्र सूत्रेणैव पूर्वपक्षं करोति ·

यावदुक्तं होतुर्यजमानयोगाद्वरणवत् ॥२३॥ यावदुक्तं याज्यामात्रं होतुर्भवति न वषट्कारः · कुतः वरणवद्यजमानयोगात् यथा वरणं यजमानयोगि अग्निर्होता दैवीनामित्यादिकम् एवं वषट्कारोऽपि यजमानयोग्येव · वषट्कारार्थमेव वरणं श्रूयते यजमानं वाऽएतद्वृणीते स वृतो वषट्करोतीति तस्माद्यजमानस्यैव वषट्कारः तन्निमित्तो भक्षोऽपि यजमानस्यैवेति पूर्वः पक्षः । सिद्धान्तमाह ·

कारणाद्वा होतृभक्षः ॥२४॥ होतुरेव भक्षो भवति न यजमानस्य · वषट्कारो हि भक्षस्य कारणम् स च होत्रा कृतः । ननूक्तम् वरणवद्वषट्कारस्य यजमानयोगादिति (२३) यजमानस्यैव वषट्कार इति अत्रोच्यते न यजमानस्य वषट्कारः अनवानं याज्याया अधि वषट्करोतीति श्रुतत्वात् यजमाने च वषट्कर्तरि

अनवानं वषट्कृतं न स्यात् पाठ्याया होत्रा पठितत्वात् · तस्माद्धोतुरेव वषट्का-रस्तन्निमित्तं भक्षणं च । ननूक्तम् वरणं यथा यजमानान्नपैति तद्वद्भक्षोऽपि ना-पेयादिति · तत्राह ·

अप्राप्तेर्वरणम् ॥२५॥　वरणं यजमानान्नपैतीति यत्तद्युक्तमेव · कुतः अप्राप्तेः तदानीं वरणकाले हि होतुर्वरणं न प्राप्नोति यतः　न हि तदा होता यागेऽधिकृतः　अतस्तदा तत्क्रियमाणमप्यनुपकारकमेव ।

विपर्यस्य पात्रं होतुर्द्विर्भक्षणम् ॥२६॥　पुनः पात्रमुखं विपर्यस्य होतुरेव वारद्वयं भक्षणं भवति　एकादशे द्वादशे च होतुरेव वषट्कर्तृत्वात् · तत्र प्रथमं भक्षणमध्वर्युणा द्वितीयं प्रतिप्रस्थात्रेति · येनैव पात्रमुखेनैव हुतम् तेनैव भक्षणं युक्तमिति विपर्यासमित्युक्तम् ।

तावद्वा सर्वहुतत्वात्पूर्वेषाम् ॥२७॥　अथवा तावदेव एकादशद्वादशयोरेव शेषस्य द्विर्होतुः　अध्वर्युप्रतिप्रस्थात्रोश्च सकृदित्येतावदेव भक्षणं भवति · तत्रापि प्रथममध्वर्योः ततो होतुः　ततः प्रतिप्रस्थातुस्ततः पुनर्होतुरिति · तावदेव कुतः पूर्वेषां दशानामृतुग्रहाणां सर्वहुतत्वात् (१२)　सर्वहुता हि शाखान्तरे समाम्नाताः · अतस्तेषां शेषाभावादन्त्ययोरेव शेषभक्षणम् ।

निर्हृत्य पात्रं होतुः पुरस्तात्प्राङासते ॥२८॥　भक्षितमृतुपात्रं प्रक्षाल-नार्थं सदसो बहिर्निष्काश्य होऽस्तात्प्राङ्मुख उपविशति · काठके　आह्वयते हो-ता प्राङ्मुखमध्वर्युं सदोबिलेऽआसीनं शोंसावो देवेति प्रदक्षिणमावृत्य प्रत्यङ् तिष्ठन्प्रह्वः प्रतिगृणातीति · मानवे　अग्रेण होतारं बहिः सदसः प्राङ्मुखः प्रति-गरायोपविशत्यध्वर्यो शोंसावो३ऽइत्युच्यमाने शोंसाऽवो देवो३मिति प्रतिपर्या-वर्तते ऋतुपात्रमारभ्योर्ध्वस्तिष्ठन् सदोबिले समानस्वरं होत्रा व्यवसानेषु[1] प्रतिगृणातीति ।

अभिहुतः　शोंसावेत्यावृत्योथामोदैवेति　प्रतिगृणाति　प्रणवावसानयोः ॥२९॥　होत्रा शोंसावेत्यनेन मन्त्रेण प्रतिगरार्थमभिहुतः आहुतः

---

1) ? Thus B. °विलेसम्यनुसृपस्वेतीष्टयवसानेषु A.

सन् आवृत्य होतुः संमुखो भूत्वा प्रण°योरिति शस्यमानानामृचां प्रणवे अवसाने च (४. ३. २. ६) ओथा°णाति · ओथामोदैवेति प्रतिगरविशेषः शाखान्तरात् ।

ओमिति[1] वा ॥३०॥ ओ३मिति[2] वा प्रणवावसानयोः प्रतिगृणीयात् ।

शस्त्रान्ते नित्यम् ॥३१॥ शस्त्रसमाप्तौ ओमित्येष एव प्रतिगरो भवति नित्यम् सर्वपक्षेऽपि अनोंकारपक्षेऽपीत्यर्थः · स वाऽओ३मित्येव°णीयादिति श्रुतेः (°१२)।

वागन्तो वा पूर्वः ॥३२॥ अथवा पूर्वः ओथामोदैवेति प्रतिगरो वाक्शब्दान्तो भवति ओथामोदैव वागिति (४. ३. २. १३) · पूर्वविधानादयं पूर्व इत्युच्यते ।

ऐन्द्राग्नमादायाश्राव्याहोक्थशा यज सोमस्येति ॥३३॥ शस्त्रान्ते ओ३मिति प्रतिगीर्य प्रदक्षिणावृत्तीतरथावृत्ती कृत्वा हविर्धानमुत्तरेण गत्वा हविर्धानं प्रविश्याध्वर्युरैन्द्राग्नं ग्रहमादा°व्य उक्थ°स्येति होतारं प्रेष्यति · आश्राव्याहेति ग्रहणं पुरोऽनुवाक्याव्यावृत्त्यर्थम् ।

एष प्रैषः सशस्त्राणाम् ॥३४॥ स°णां ग्रहाणामेष पूर्वसूत्रोक्त एव प्रैषो भवति।

नाराशꣳसानां च कम्पनꣳ हूयमाने ॥३५॥ नाराशंससंज्ञानां चमसानां वषट्कारेऽनुवषट्कारे च हु°ने सशस्त्रे ग्रहे क°नम् चालनं हस्ते गृहीत्वा प्राङ्गयनं[3] कुर्वन्ति चमसाध्वर्यव · मानवे समाप्ते शस्त्रे ग्रहमादत्तेऽध्वर्युश्चमसाध्वर्यवश्चमसानाश्राव्योक्थशा यज सोमस्येति प्रेष्यति वषट्कृतानुवषट्कृते जुहोति चमसाध्वर्यवो द्विश्चमसाननु प्राङ्गयन्तीति ।

अनिङ्कितेषु चेद्धोमः सशस्त्रस्य ॥३६॥ यदि अनि°षु चमसेषु नाराशंसस्थाने अस्थापितेषु सत्सु स°स्य ग्रहस्य होमः तदा चमसानामपि होमो भवति वषट्कारेऽनुवषट्कारे च · मानवे प्रतिगीर्य ग्रहमादत्ते चमसाध्वर्यवश्चमसानाश्राव्योक्थशा यज सोमानामिति प्रेष्यति वषट्कृतानुवषट्कृते जुहोति चमसाध्वर्यवश्चेति।

भक्षप्रभृत्या निधानात्कृत्वा ॥३७॥ ॥ त्रयोदशी कण्डिका ॥ १३ ॥

वैश्वदेवं गृह्णाति शुक्रपात्रेण द्रोणाकलशादन्वारब्धे वौमास इति (७. ३३) ॥१॥ ऐन्द्राग्नस्य वषट्कारानुवषट्कारयोर्हुत्वा प्रदक्षिणावृत्तीतरथावृत्ती कृत्वा ऋतुपात्रे हस्तस्थितऽएव सदस्यागत्य होतुरग्रे उपविश्य तस्य-तस्य ग्रहशेषस्यर्तुपात्रस्थस्य

---

1) ओ३मि° AB. ओमिति M. १. 2) Thus AB. 3) प्राङ्गयनं A. °ङ्ग° B.

चमसानां च भ॰भृति भक्षणादारभ्य चमसानां हविर्धानमध्ये निधानान्तं कृत्वा शुक्र॰लशाद्वैश्वदेवग्रहं गृ॰ति यजमानेऽन्वा॰ब्धेऽनन्वारब्धे वा सति। अत्रायं क्रमः · पूर्वं होतारं पृष्ट्वा ग्रहशेषस्याध्वर्योर्भक्षणम् ततो होतुः · ततश्चमसानां साधारण्याभावादनुपह्वयैव सर्वे यथास्वं चमसानसर्वभक्षान्भक्षयित्वा पूर्ववदाप्याययन्ति · ततस्तानाप्यायितांश्चमसान्दक्षिणस्य हविर्धानस्य पश्चादक्षमधो निदधाति ऋतुपात्रे वाधर्युर्मार्जालीये प्रक्षाल्य खरे स्वस्थाने निदधाति · मानवे ऋतुपात्रे मार्जालीये प्रक्षाल्य यथास्थान७ सादयतीति। अन्वारब्धे वेति शाखान्तरात् · ग्रहणं च परिप्लवया द्रोणकलशात्सोममादाय कार्यम् ततः परिमृज्य प्रदक्षिणावृत्तीतरथावृत्ती कृत्वा शुक्रपात्रस्थाने एष ते योनिरिति सादयति।

शुक्रं पूतभृत्यासिच्य द्रोणकलशपवित्रयोजनम् ॥२॥ आसादनानन्तरमध्वर्युः शुक्रं द्रोणकलशस्थं सर्वं सोमं पू॰च्य द्रोण॰जनं प्रातःसवनवत्करोति (२. १६)।

पशुपुरोडाशप्रथमान्त्सवनीयान्निर्वपति पयस्यावर्जम् ॥३॥ ततोऽग्नीत् पयस्यां वर्जयित्वा पशु॰पति · पशु॰डाशः प्रथमो येषां ते पशु॰थमाः तान् तेनाग्निष्टोमे प्रथममाग्नेयः पुरोडाशोऽष्टाकपालः तत ऐन्द्र एकादशकपालः तत इन्द्राय हरिवते धानाः इन्द्राय पूषण्वते करम्भः इन्द्राय सरस्वतिवते दधीति · अत्रापि प्रातःसवनवदेव प्रणीताः प्रणीय एतदर्थमेवोपयुक्तानि पात्राण्यासाद्याद्भिः पूर्वं संस्कृताभिरेव हवींषि पात्राणि च प्रोक्ष्य कण्डनादि पुरोडाशयोश्च शृताभिवासनान्ते आस्योदकनिनयनं तत्सम्बन्धि पात्रसंमार्गान्तं[१] कुर्यात् · मानवे प्रतिप्रस्थाता सवनीयान्निर्वपति यथा वैश्वदेवस्य स्तोत्रोपाकरणकाले हविष्कृदाह्वयेतेति।

स्तोत्रमुपाकरोति तृणाभ्यां ग्रहमुपस्पृश्योपावर्तधमिति (४. २. ५. ८) ॥४॥ द्वाभ्यां दर्भतृणाभ्यां वैश्वदेवग्रहमु॰श्य स्तो॰ति प्रस्तोत्रे तृणे प्रयच्छन् (६. ३६-३७) हे उद्गातारो यूयमुपावर्तधम् स्तोत्रमित्यर्थः।

एवं धुर्येषु सर्वत्र ॥५॥ सर्वेषु धु॰षु एवमेव स्तोत्रापाकरणं कर्तव्यम् तृणाभ्यां ग्रहमुपस्पृश्य प्रस्तोत्रे तृणे प्रयच्छन्स्तोत्रमुपाकरोतीत्येतावदेवंशब्देन लभ्यते · पवमानव्यतिरिक्तानि सर्वाणि स्तोत्राणि धुर्याणीत्युच्यन्ते धुरि सा-

---

१) ? ॰त्समंज्ञो B. (in A lacuna from आस्यो॰).

धूनि धुर्याणि । वैश्वदेवस्तोत्रोपाकरणानन्तरमुद्गातारः स्तुवन्ति तदन्ते होता वैश्वदेवं शस्त्रं शंसति तत्राध्वर्योः पूर्ववत्प्रतिगरः · शस्त्रान्ते ओ३मिति प्रतिगीर्य प्रदक्षिणावृत्तीतरथावृत्ती कृत्वोत्तरेण हविर्धानमागत्य पूर्वद्वारेण प्रविश्य वैश्वदेवं ग्रहमादायातिक्रम्याश्राव्योक्थशा यज्ञ सोमस्येति प्रेष्यति · वषट्कारानुवषट्कारयोर्ग्रहहोमः · पूर्ववच्चमसस्य कम्पनं च द्विरेव · प्रदक्षिणावर्तनमितरथा च · ततः सदस्यागत्य होतारमुपह्वय ग्रहशेषं भक्षयित्वा होताप्यध्वर्युमुपह्वय ग्रहशेषं भक्षयति · चमसिनश्चानुपह्वयैव स्वस्वचमसस्थं सर्वं सोमं[१] भक्षयन्ति ।

सर्वभक्षाश्चमसाः ॥ ६ ॥ अत्र वैश्वदेवग्रहभक्षणानन्तरं चमसिभिः कार्याः ।

मार्जालीये पात्रप्रक्षालनम् ॥ ७ ॥ भक्षितानां ग्रहचमसरूपाणां पात्राणां मार्जालीये प्रक्षालनं भवति · ततो ग्रहपात्रं यथास्थानं खरे सादयति चमसांश्चोत्तरवेदिमपरेण ।

उक्थ्यं विगृह्णाति त्रेधं देवेभ्यस्त्वेति (७. २२) सर्वेभ्यः ॥ ८ ॥ उक्थ्यस्थालीस्थं सोमं त्रेधा विभज्य विभज्योक्थ्यपात्रे गृह्णातीत्यर्थः · सर्वेभ्यः प्रशास्तृब्राह्मणाच्छंस्यच्छावाकेभ्यः प्रशास्त्रादिकर्तृकशस्त्रकयागाभ्यासार्थमित्यर्थः ।

मित्रावरुणाभ्यां त्वेति (७. २३) वा प्रशास्त्रे ॥ ९ ॥ अथवा प्रशास्त्रे मैत्रावरुणाय मैत्रावरुणकर्तृकशस्त्रवद्ग्रहयागार्थमुक्थ्यस्थालीमुत्पाद्य तत्स्थसोमतृतीयांशमुक्थ्यपात्रे गृह्णाति मित्रावरुणाभ्यां त्वेति मन्त्रेण । यस्मिन्यागाभ्यासे मैत्रावरुणः शंसति तस्मै मैत्रावरुणकर्तृकशस्त्रवते यागाभ्यासाय एवं गृह्णीयादित्यर्थः ।

तूष्णीं सादनम् ॥ १० ॥ गृहीत्वा परिमृज्य प्रदक्षिणावृत्तीतरथावृती कृत्वा तस्योक्थ्यपात्रस्य स्वस्थाने तूष्णीं सादनं करोति · तं वै नोपयमेनेति श्रुतत्वात् (४. ३. २. १८) ।

स्तोत्रमुपाकरोति ॥ ११ ॥ एवं ग्रहं गृहीत्वासाद्य तृणाभ्यां ग्रहमुपस्पृश्य पूर्ववत्स्तोत्रमुपाकरोति पूर्वतरं मैत्रावरुणचमसपूर्वकं चमसोन्नयनम् ततः स्तोत्रोपाकरणमिति ।

उक्थशा यज्ञ सोमानामिति प्रैषोऽनाराशंसेषु ॥ १२ ॥ चमसेषु अनाराशंसेषु सत्सु सशस्त्रग्रहस्य उक्थशा यज्ञ सोमानामित्येवं बहुवचनान्तः प्रैषो भवति तत्र पात्रभेदेन बहूनां सोमानां होतव्यत्वात् · स च शस्त्रान्ते ग्रहमादाय चमसाध्वर्युभिश्चमसेषु

[१] सर्वे सामं B.

होमार्थं हस्तगृहीतेषु कर्तव्यः · ततो ग्रहस्य वषट्कारानुवषट्कारयोर्होमः · चमसानां च ग्रहहोममनु वषट्कारेऽनुवषट्कारे च होमः ।

यस्य विग्रहस्तस्य प्रथमं चमसमुन्नयति ॥ १३ ॥ यस्य वि॰हो भवति मैत्रावरुणस्य वा ब्राह्मणाछंसिनो वा अछावाकस्य वा तस्य च॰सं प्र॰ममुन्न॰ति ग्रहग्रहणानन्तरम् · उन्नयनस्य प्रथमं विधानान्निधानमपि प्रथमं तस्यैव कर्तव्यम् उन्नयनार्थत्वान्निधानस्य · अतो मैत्रावरुणकर्तृकशस्त्रके उक्थ्यविग्रहे मैत्रावरुणचमसे प्रथममुन्नयनम् ब्राह्मणाछंसिकर्तृकशस्त्रके विग्रहे प्रथमं ब्रा॰सिचमसोन्नयनम् अछावाककर्तृकशस्त्रके च विग्रहे अछावाकचमसस्य प्रथममुन्नयनमिति ।

ग्रहशेषं चास्मिन्नासिञ्चति ॥ १४ ॥ ग्र॰षं च होमानन्तरमस्मिंश्चमसे आ॰ति यस्मिन्प्रथममुन्नयनं कृतम् तस्मिन्नित्यर्थः · ततश्च सदसि गत्वा मैत्रावरुणं पृष्ट्वाध्वर्युर्ग्रहहोमनिमित्तं भक्षयति · मैत्रावरुणश्च स्वचमसेऽध्वर्युमुपहूय वषट्कारनिमित्तं भक्षयित्वा ब्रह्मादिचमसेषु च तान्पृष्ट्वा वषट्कारनिमित्तं भक्षयति · ततः प्रशास्तुः स्वचमसे समाख्यानिमित्तो भक्षोऽध्वर्युं पृष्ट्वा चमसिनां स्वस्वचमसेषु च समाख्यानिमित्तो वषट्कर्तारं पृष्ट्वा · ततश्चमसप्रक्षालनादि पूर्ववत् । एवमुत्तरयोरपि विग्रहयोरूहनीयम् ।

एवं प्रतिप्रस्थातोत्तराभ्यामिन्द्राय त्वेति (७. २३) ब्राह्मणाछंसिनऽइन्द्राग्निभ्यां त्वेत्यछावाकाय (७. २३) ॥ १५ ॥ एवमेव प्रति॰राभ्यां ग्रहाभ्यां प्रचरेत् · एवं शब्देनैतल्लभ्यते तू॰दनम् (१०) यस्य विग्र॰सिञ्चतीति (१३-१४) · अयं तु विशेषः इन्द्राय त्वेत्यनेन मन्त्रेण ब्रा॰सिनः ब्राह्मणाछंसिकर्तृकशस्त्रवते यागाभ्यासाय ग्रहं गृह्णीयात् इन्द्राग्निभ्यां त्वेत्यनेन मन्त्रेण अछा॰य अछावाककर्तृक॰ह्णीयात् । मानवे उक्थ्यविग्रहैः प्रचरत उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वेति गृह्णात्युक्थ्यस्थाल्यास्तृतीयमुक्थ्यपात्रऽएष ते योनिर्मित्रावरुणाभ्यां त्वेति सादयत्युपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवायुवं गृह्णामि पुनर्हविरसीत्युक्थ्यस्थालीमभिमृशति पूतभृतो मैत्रावरुणचमसमुख्यानुन्नयन्ति स्तुतशस्त्रे भवतो[1] मैत्रावरुणाय प्रतिगीर्य ग्रहमादत्तेऽध्वर्युश्चमसाध्वर्यवश्चमसानाश्राव्योक्थशा यज सोमानामिति

[1] A. has पूतभृतौ instead of स्तु॰ते.

प्रेष्यति वषट्कृतानुवषट्कृते जुहोति चमसाध्वर्यवश्च सह आलभ्य देवेभ्यस्त्वा देवायुवं प्रणायामीत्युक्थ्यपात्रेण[1] मैत्रावरुणचमसे सम्पातमवनयन्ति[2] वाग्देवी जुषाणा सोमस्य पिबत्विति भक्षयन्ति मार्जालीये प्रक्षाल्य यथास्थानं चमसान्सादयन्ति　प्रतिप्रस्थातोत्तराभ्यां प्रचरत्युपयामगृहीतोऽसीन्द्राय त्वेति गृह्णात्युक्थ्यस्थाल्या अर्धमुक्थ्यपात्रऽएष ते योनिरिन्द्राय त्वेति सादयति तथैव पुनर्हविषं करोति पूतभृतो ब्राह्मणाछᳬसिचमसमुख्यानुन्नयन्ति स्तुतशस्त्रे भवतो ब्राह्मणाछᳬसी शᳬसति तस्य चमसे सम्पातमवनयति समानमन्यत्　सवनमभ्यासृजत्यृजीषं कृष्णाजिने निदधाति वाससा राजानं ग्रावसूपावहरति माध्यन्दिनीयं कलशमाधवनीयेऽवनयत्युपयामगृहीतोऽसीन्द्राग्निभ्यां त्वेति गृह्णात्युक्थ्यस्थाल्याः सर्वमुक्थ्यपात्रऽएषऽते योनिरिन्द्राग्निभ्यां त्वेति सादयति पुनर्हविषं करोत्यछावाकचमसमुख्येषु[3] सर्वं पूतभृतोऽछावाकाय प्रतिगीर्योक्थशा इति ब्रूयात्तस्य चमसे सम्पातमवनयति समानमन्यदिति · एवमेव काठकेऽपि　स्तुते प्रउगे[4] वैश्वदेवेन प्रचरति शेषᳬ सम्भक्षयतो यथाचमसं भक्षयन्ति प्रक्षाल्य मैत्रावरुणचमसमुख्यानुन्नयन्त्युक्थ्यपात्रेणोक्थ्यस्थाल्या गृह्णात्युपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वेति पुनर्हविरिति स्थालीमालभ्य स्तोत्रमुपाकरोति शस्त्रेण ग्रहेण चमसैश्चरन्ति देवेभ्यस्त्वेति मुख्ये शेषमवनीय शेषᳬ संभक्षयतो यथाचमसं भक्षयन्ति प्रक्षाल्य ब्राह्मणाछᳬसिचमसमुख्यानुन्नयन्त्युक्थ्यपात्रेणोक्थ्यस्थाल्या गृह्णातीत्यादि ।

प्रागछावाकविग्रहात्सोमोपावहरणम् ॥ १६ ॥　　ईषान्तरालेन रथादवतारणम् प्रातःसवनवत् कुर्यात् ।

वसतीवर्यर्धं चासिञ्चत्याधवनीये　विश्वे देवा मरुत इन्द्रोऽअस्मानस्मिन्द्वितीये सवने न जह्युः　आयुष्मन्तः प्रियमेषां वदन्तो वयं देवानाᳬ सुमतौ स्यामेति ॥ १७ ॥[5]

एकधनार्धं च ॥ १८ ॥　　सर्वेषामेकधनानामर्धम् अर्धमुदकं क्रमेणाधवनीयेऽवनयेत् । पशुविशसनमपि केचित्प्रागछावाकविग्रहादिछन्ति　अन्ये तु माध्यन्दिनसवनीयानां पात्रसंमार्गान्ते कुर्वन्ति · तत्र पशुविशसनहृदयग्रहणादि अवदाना-

---

1) ? प्रणाष्मी° AB.　2) °यति AB.　3) °खेषु AB.　4) शस्त्रे add. A.　5) Atharva ६. ४७. २.

नामुखामध्ये प्रक्षेपान्तं कृत्वा त्रिः प्रच्यावयतात्त्रिःप्रच्युतस्य हृदयमुत्तमं कुरुतादित्येवं-खण्डप्रैषान्तं कुर्यात्   ततोऽछावाकविग्रहार्थे ग्रहग्रहणादि पात्रप्रक्षालनान्तम् ।

चरन्ति सर्वैः प्रशास्तः प्रसूहीति [१] ब्रूयात् ॥ १९ ॥   सर्वैर्विग्रहैश्चरन्ति सति प्र॰सूहीत्येवं प्रशास्तारं प्रति ब्रूयात् ।

प्रसूतानाꣳ सर्पणम् ॥ २० ॥   प्रशास्त्रा प्रसू॰नामनुज्ञातानां सर्वर्त्विजां स॰णां भवति सदसो मध्याद्बहिर्निष्क्रमणं भवतीत्यर्थः · अत्र सर्पणशब्देन निष्क्रमणमेवोच्यते   आवश्यकमूत्रपुरीषाद्यर्थम् न धिष्ण्योपस्थानम् तद्धि सवनादौ (१०.१.१) समाम्नातम् · काठके   सोमातिरेकꣳ रक्षेत्प्रशास्तः प्रसुवेत्युक्ते यथाप्रसृतं निःसर्पन्ति संतिष्ठते प्रातःसवनमिति · मानवे च   प्रशास्तः प्रसुवेति प्रेष्यति प्रसूताः सर्पन्तीति · माध्यन्दिनाय प्रसर्पन्तीति सवनादौ सर्पणं पृथग्विहितमस्ति ॥ चतुर्दशी कण्डिका ॥ १४ ॥

इति श्रीत्रिरग्निचित्स्तुतेन याज्ञिकदेवेन कृते कात्यायनसूत्रव्याख्याने नवमोऽध्यायः ॥

इति कातीये श्रौतसूत्रे नवमोऽध्यायः ॥ ९ ॥   ॥

प्रातःसवनमुपदिष्टम् । अथ माध्यन्दिनसवनमुपदिशति

सर्पणादि माध्यन्दिनम् ॥ १ ॥   सर्पणमादौ प्रथमं क्रियते यस्मिन् तत्स॰दि · मा॰नं सवनं स॰दि भवति   तस्यादौ प्रथमं सर्पणं कर्तव्यमित्यर्थः · तच्च धिष्ण्योपस्थानादि धिष्ण्याभिमन्त्रणान्तम्   सदोऽभिमर्शनादि (१.३.१) वा धिष्ण्याभिमन्त्रणान्तमिति ।

होतृचमसे वसतीवरीः कृत्वा यजमानाय प्रयछति ॥ २ ॥   सर्पणात्पूर्वमाग्नीध्रीयस्य पश्चादुदङ्मुखोपविष्टस्य यजमानस्य लोकद्वारीयसामगानम् ततः सर्पणम् तदनन्तरमध्वर्युः होतृ॰छति · ताश्चाभिषवार्थीयाः   प्रातःसवने येऽभिषवधर्मास्ते त्रिष्वपि अभिषवेषु भवन्ति · परिशिष्टे   प्रातःसवनꣳ सवनप्रकृतिरिति ।

उष्णीषं ग्रावस्तुते ॥ ३ ॥   उ॰षं शिरोवेष्टनवस्त्रं सोमसम्बन्धि · मानवे

[१] Thus ९., M pr. m., schol. at १०. ३. २३ and ७. १३. ॰सुही M sec. m. AB.

सोमोपनद्धनं ग्रावस्तुते प्रयच्छत्युन्नेत्रे च वसनेऽइति · काठके ग्रावसु राजानं न्युप्योष्णीषं ग्रावस्तुतेऽध्वर्यवे वसनमिति ।

अथादानप्रभृति त्रिपर्यायानभिषवान्करोति ॥४॥ प्रातःसवनवदेव (९.४.५) · यद्यप्यत्र करोतीत्येकवचनम् श्रुतावपीह्वा३ऽइत्यभिषुणोतीति (४.३.३.१) चैकवचनमेव तथापि शाखान्तरे बहुवचनदर्शनात्प्रातःसवनवदेव चत्वारोऽभिषुणुयुः · तथा च मानवे निर्यात्य राजानमभिषुण्वन्ति व्याख्यातोऽभिषव इह्वा३ऽइहेत्यभिषुन्वन्त्युत्तमस्य पर्यायस्य मध्यमे पर्याये बृहद्बृहदित्यभिषुण्वन्तीति [1] । प्रातः सवनवदेवात्राप्युपांशुसवने सोममाने प्राप्ते आह ·

आत्तमभि मिमीते ॥५॥ अध्वर्युणा य आत्तो गृहीतो ग्रावा तमभि तस्योपरि सोमं मिनीते मुष्टिना सोमांशूनादाय तस्योपरि प्रक्षिपति नोपांशुसवने । कुतः ·

उपांशुसवनस्यानिङ्गनश्रुतेः ॥६॥ यत उपांशुसवनस्यानिङ्गनमचालनं श्रूयते तानि वाऽअनिङ्ग्यमानानि शेरऽआ तृतीयसवनादिति (४.१.२.२५) तानीति उपांशुपात्रोपांशुसवनान्तर्यामपात्राणि · एवं सति यद्युपांशुसवने मानं क्रियेत तर्हि तत आदायाधिषवणस्योपरि निधाय तत्र मानं कर्तव्यम् · तथा च तस्य स्वस्थानाच्चालनं कृतं स्यात् ।

इह्वा३ऽइह्वा३ऽइति प्रथमः पर्यायः ॥७॥ अभिषवान्करोतीति प्रागुक्तम् तत्र विशेष उच्यते · त्रिष्वप्यभिषवेषु प्रथमोऽभिषवपर्यायः इह्वा३ऽइह्वा३ऽइत्यनेन मन्त्रेण कर्तव्यः · पर्याय इत्युक्तत्वात् प्रतिप्रहारमिह्वा३ऽइत्यस्य मन्त्रस्य प्रयोगः वीप्साकरणाच्च।

अविलम्बितो द्वितीयः ॥८॥ त्रयाणामप्यभिषवाणां द्वितीयः पर्यायः अन्तः अविलम्बितमन्त्रको भवति · पूर्वसूत्रे त्रिमात्रस्य पठितत्वात् द्विमात्रोऽविलम्बित इह पठनीयः इह्वा इत्येवम् दीर्घ एवेत्यर्थः · इह्वाविलम्बितग्रहणात्पूर्वो विलम्बित इत्यवसीयते ।

तूर्णस्तृतीयः ॥९॥ स्वरमन्त्रको भवति एकमात्र इत्यर्थः इह इत्येवंरूपः । [अथवा] इह्वा३ऽइत्येवं प्लुतान्तमेव त्रिष्वपि पर्यायेषु विलम्बितमविलम्बितं तूर्णं च (शिक्षा° २२) क्रमेण प्रयोज्यम् ।

---

१) यस्यमध्यममध्यमे पर्याये बृह° A.

अविलम्बितस्थानऽउत्तमे बृहद्बृहदिति (४. ३. ३. १) ॥१०॥ उत्तमे तृतीये ऽभिषवे अविलम्बिने मध्यमे पर्याये बृहदित्यनेन मन्त्रेण प्रतिप्रहारमभिषुणोति इहेत्यस्यापवादः · विनियोगविशेषः शाखान्तरात् ।

अर्धं वाविशेषोपदेशात् ॥११॥ अभिषवार्धं वा बृहद्बृहदित्यनेन मन्त्रेण कुर्यात् अर्धं विहा३ इत्यनेनैव · अविशेषेण ह्युपदिश्यते इहा३ऽइहा३ऽइत्यभिषुणोति बृहद्बृहदितीत्थतीति (४. ३. ३. १) · यद्यपि माध्यन्दिनानामविशेषोपदेशः तथापि शाखान्तरे विशेषोपदेशोऽस्ति · तत्र विशेषो बलवानिति विशेष एवानुष्ठेयः अविलम्बि॰ बृहदित्येव (१०) ॥ अत्रायं पदार्थक्रमः । प्रथममाग्नीध्रे लोकद्वारीयगानम् ततः सर्पणम् वसतीवरीर्होतृचमसऽआसिच्य यजमानायार्पणम् ग्रावस्तुतऽउष्णीषस्य समर्पणम् ततोऽधिषवणचर्मणः समीपऽउपवेशनम् अभिषवार्थानामीषान्तरेणाहरणम् सर्वेषामनामिकायां हिरण्यबन्धनम् सर्वेषामद्र्यादानम् निग्राभ्यावाचनम् · आत्तं ग्रावाणं चर्मणि निधाय तत्र सोममानम् मितालम्भनम् निग्राभ्यासेकः मा भेरिति प्रहरणम् तत इहा३ऽइत्यनेन विलम्बितवृत्त्या पठितेन प्रथमे पर्याये प्रतिप्रहारमभिषवः मध्यमया वृत्त्या द्वितीये पर्याये उत्तमवृत्त्या तृतीयऽइति तत आप्यायनम् प्रागपाग्वाचनम् सरसानां सोमांशूनां सम्भरण्या कृत्वा आधवनीयमध्ये प्रक्षेपः प्रक्षाल्य हरणम्

एवमेकोऽभिषवः [एवमेव द्वितीयः] एवमेव तृतीयः · तत्रायं विशेषः मध्यमे पर्याये प्रतिप्रहारं बृहद्बृहदिति मन्त्रः प्रथमोत्तमयोस्त्विहा३ऽइत्येवम् · प्रागपाग्वाचनानन्तरमद्रिं होतृचमसेऽवधाय निग्राभवाचनम् तत आधूयाहरणान्तम् · ततः प्रस्तोता द्रोणकलशं प्रोक्ष्य ऋजीषमुखेष्वद्रिषु निधायोपरि उदग्दशमन्यतरतो दशापवित्रं विस्तार्य धारयन्त्युद्गातारः · तत आधवनीयादुन्नेतोदञ्चनेन सोममादाय यजमानहस्ते होतृचमसस्थासु निग्राभ्यास्वासिञ्चति · ततो यजमानस्ता निग्राभ्याः पवित्रे आसिञ्चति संततधारा भवति । अथ तस्या धारायाः ग्रहणमाह ·

शुक्रप्रभृति चतुर्णां ग्रहणाम् ॥१२॥ माध्य॰मानित्युक्तम् (९. ५. १८) · तान्पञ्च ग्रहानाह · तस्याः संततधारायाः सकाशात् शु॰ति शुक्रादारभ्य च॰णां शुक्रमन्थ्याग्र-

यणोक्थ्यानां प्रातःसवनोक्तानां ग्रहाणां ग्र॰णमध्वर्युः करोति। आग्रयणे विशेषमाह ·

आग्रयणं स्वतृतीयाभ्यो धाराभ्यः ॥ १३ ॥ आ॰णं ग्रहं स्व॰भ्यस्तिसृभ्यो धा॰भ्यो गृह्णाति · स्वा आग्रयणस्थालीस्थितप्रातःसवनगृहीतसोमसम्बन्धिनी सा तृतीया [या]सां ताः स्वतृतीयाः सु॰ष्टीति-वद्बहुवचनम् (८. २. २५) · अत्र एका यजमानसम्बन्धिनी धारा द्वितीयां च आधवनीयादुन्नेता पृथगासिञ्चति तृतीयां चाग्रयणस्थालीस्थं सोमं पात्रान्तरे कृत्वा प्रतिप्रस्थाता आसिञ्चति · एवं तिस्रो धाराः। मानवे अथाग्रयणस्थाल्यां सोमस्तं होतृचमसेऽवनीयाधवनीयाच्चो-दञ्चनेन ये देवास इत्याग्रयणं तिसृभ्यो धाराभ्यो गृह्णात्युच्चैस्तरां हिंकरोतीति · उपांशुपात्रस्थोपांशुग्रहशेषेणैका धारा एका यजमानकर्तृका तृतीया स्वेति जीर्णाः सम्प्रदायः · काठके आग्रयणं तिसृणां धाराणामाग्रयणादन्तर्यामाच्चेति।

प्रागुक्थ्यान्मरुत्वतीयमृतुपात्रेणेन्द्र मरुत्व इति (७. ३५) ॥ १४ ॥ आग्रयण-ग्रहणानन्तरमुक्थ्यग्रहणात्प्राक् ऋतु॰णा मरु॰तीयसंज्ञकस्य ग्रहस्य ग्रहणं करोति (४. ३. ३. २) धाराया एव · ततः परिमृज्य ऋतुपात्रयोजनम् स्थाने सादनम्।

उत्तरमेके ॥ १६ ॥ उक्थ्यग्रहणादनन्तरं मरुत्वतीयं गृह्णन्ति। यदा च षोड-शिसंस्थे माध्य॰ह्णीयादिति (४. ५. ३. ८) श्रुतेर्माध्य॰णादुत्तर इति (१२. ५. ३) सूत्राच्च आग्रयणादुत्तरो माध्यन्दिने षोडशी ग्रहो गृह्यते तदोक्थ्यग्रहणानन्तरं मरुत्व-तीयः परिप्लवया सोममादाय द्रोणकलशादेव ग्राह्यः। यदा च पृष्ठ्यस्य चतुर्थेऽहनि षोडशिसंस्थे माध्यन्दिनऽएव षोडशी गृह्यते माध्यन्दिनऽएव चोक्थ्यान्ते अतिग्राह्योऽपि तदा सोऽपि द्रोणकलशादेव ग्राह्यः ततः सर्वान्ते मरुत्वतीयः।

समन्वारब्धनिष्क्रमणादि करोत्याग्नीदग्नीनिति प्रैषात् ॥ १६ ॥ एवं ग्रहा-न्गृहीत्वा अर्ध॰सुन्वन्नित्येतत्कृत्वा (९. ६. २६) पवित्रं प्रपीड्य निधाय पाणी प्रक्षाल्य ततः सम॰णादि अग्नीदग्नीनिति प्रैषं यावत् (९. ६. २७-७. ५) प्रातःसवनवदेव सर्वं क॰ति · तत्र विशेषमाह ·

सदसि पवमानोपाकरणम् ॥ १७ ॥ सदोमध्ये प॰णं भवति न प्रातःस-वनवच्चात्वालसमीपऽएव · मानवे उक्थ्यं गृहीत्वातिपाव्य राजानं प्रपीड्य प-वित्रं सिद्धमा सर्पणादूर्ध्वा माध्यन्दिनाय सवनाय प्रसर्पत्युत्तरेण हविर्धाने

पूर्वया द्वारा सदः प्रविश्य सदसि स्तुवतेऽनतिक्रामन्तो धिष्ण्यानध्वर्युरुपविशति व्याख्यातः संपावनं तथोपाकरणं पवमानस्येति · काठके सदसि प्रस्तोत्रे दर्भान्प्रयच्छन्नाह सोमः पवतऽइति · अतः कुशमुष्टिरपि त्रिष्वपि सवनेषु भवति दर्भानिति बहुवचनात् · मानवे च प्रातःसवनवदतिदेशः तथोपाकरणमित्यनेन · प्रातःसवने च कुशमुष्टिरेवोक्तोऽस्ति ।

अहर्गणे च सर्वत्र प्रायणीयोदयनीयवर्जम् ॥१८॥ अहर्गणे द्विरात्रादौ अहीने द्वादशाहादौ सत्रे च सर्वत्र प्रातःसवनेऽपि सदस्येव पवमानोपाकरणं भवति प्रायणीयातिरात्रमुदयनीयातिरात्रं च वर्जयित्वा · तयोस्तु प्रातःसवने बहिरेवोपाकरणं भवति · छन्दोगसूत्रेऽहीनेषु विशेषः अहीने बहिष्पवमानैः सदसि स्तुवीरन्प्रथमादह्नोऽन्यत्रेति · मानवे प्रायणीयोदयनीययोर्बहिः स्तुवते सदसीतरेष्विति।

पशुनेहीत्यपकृष्य दधिघर्माय दध्याहर दक्षिणा उपावर्तयेति प्रैषोपचयः ॥१९॥ प्रतिप्रस्थातः पशुनेहीत्यतः (९. ७. ५) प्रैषात्पशुनेहीत्येतत्पदद्वयमपकृष्य प्रैषमध्यान्निष्काश्य दधिघर्मायेत्येवं प्रैषवृद्धिर्भवति ।

सप्रवर्ग्ये दधिघर्मः ॥२०॥ भवति · दधिघर्माय दध्याहरेति (१९) प्रेषितो दधिघर्मार्थं दध्याहरति · तच्च यागार्थत्वात् सांनाय्यधर्मेण वत्सापाकरणादिना संस्कार्यम् · तत्र दध्नो द्व्यहसाध्यत्वात्पूर्वस्मिन्नहनि प्रातःसवनिकदध्यर्थदोहानन्तरं (८. १. २७) दधिघर्मदध्यर्थमपि रात्रौ दोह आतञ्चनान्तः कर्तव्यः तत्सम्बन्धिनो वत्सापाकरणादयोऽप्यनेनैव क्रमेण कर्तव्याः । प्रवर्ग्यवत्येवायं दधिघर्मः ततश्चाप्रवर्ग्ये प्रतिप्रस्थातर्दक्षिणा उपावर्तयेत्येतावानेवोपचयः । तत्र दधिघर्मकरणप्रकारमाह ·

उपविश्य सदसः पुरस्तात्सपवित्रायामग्निहोत्रहवण्यां ग्रहणं यथोक्तम् ॥२१॥ तत्प्रतिप्रस्थात्रा आहृतं दधि उत्तरवेदेः पश्चादासाद्यालभ्य ततः सदसः पुरस्तादुपविश्य सपवित्रामिति शाखापवित्रेण सपवित्राग्निहोत्रहवण्याम् यदुक्तम् यथा प्रवर्ग्याध्याय उक्तम् (२६. ७. ५४) तथा ग्रहणं करोति · अतो यावतीऽइति मन्त्रान्ते (३८. २६) स्थालीमुखेनैवाग्निहोत्रहवण्यां निनयनं कर्तव्यम् कुतः स आनीय आहेत्यानयनस्यैव श्रुतत्वात् (१४. ३. १. ३०) आनयनं च निनयनमेव · अतः सांनाय्यवद्द्विरवदानोपस्तरणादि न भवति · अत एव सूत्रे पि ग्रहणमेवोक्तम् नावदानमिति ·

अस्यापि प्राणादानमग्नीदेव करोति इन्द्रं गह्रेत्येवम् ततः प्रतिप्रस्थातुर्ग्रहणाम् ।

होतर्वदस्व यत्ते वाच्यमित्याह ॥२२॥ स्रुचि दध्नो निनयनं कुर्वन्नेव होतारं प्रत्येवमाह ।

वाच्यान्ते आतः हविरित्युत्तिष्ठन्नाह ॥२३॥ होतुर्वाच्ये परिसमाप्ते अध्वर्युरग्निहोत्रहवणीं हस्तेन गृहीत्वा तस्मात्स्थानादुत्तिष्ठन्नूर्ध्वो भवन् आ॰रित्येवं होतारं ब्रूयात् ।

दधिघर्मस्य यजेति प्रेष्यति ॥२४॥ ततो यजतिस्थानं गत्वाश्राव्य इन्द्रं दधि॰जेत्येवं होतारं प्रे॰ति ।

हुतशेषं घर्मर्त्विजः सयजमानाः समुपहावं भक्षयन्ति यथोक्तम् ॥२५॥ हु॰षं होमावशिष्टं स्रुक्स्थं यजमानसहिताः घर्मसम्बन्धिन ऋत्विजः समुपहूय य॰क्तं भ॰न्ति यथा प्रवर्ग्याध्याय उक्तम् (२६. ७. ५५-५६) · अत्र तु यजमानस्यैव भक्षणमाम्नातं शाखान्तरात् भक्षक्रमश्च वर्णाक्रमेणैव अन्यस्यानुक्तत्वात् तेन पूर्वं ब्रह्मणः ततो होतुरध्वर्योः प्रस्तोतुः प्रतिप्रस्थातुरग्नीधो यजमानस्येति · अनेनैव क्रमेणोपहवप्रार्थनमपि कर्तव्यम् । शेषस्य भक्षणविधानादशेषस्य[१] होम इत्यवसीयते ।

प्राणभक्षं वादीक्षिताः ॥२६॥ अ॰ता ऋत्विजः दधिघर्मशेषस्य प्रा॰क्षं वा कुर्युः · प्राणेन भक्षः प्राणभक्षः नासिकयावघ्राणमात्रम्[२] · यदि दीक्षिताः स्युः सत्त्रेषु तदा नियमेन प्रत्यक्षभक्षमेव कुर्युः अदीक्षितानां तु विकल्पः प्राणभक्षो वा प्रत्यक्षो वेति · भक्षणानन्तरं च सर्वैः सुमित्रिया न इति चात्वाले मार्जनं कार्यम् ।

पशुपुरोडाशेन प्रचर्य पुरोडाशादि करोत्या धिष्ण्यनिधानात् ॥२७॥ ततः प॰शेनासादनादिभागपरिहरणान्तेन प्र॰र्य तदनन्तरं सवनीयपुरोडाशादीनां सादनादि करोति आ धि॰नात् होतृधिष्ण्ये इडां निदधातीत्येवं (९. ९. ११-१२) प्रातःसवनवदेव · कठसूत्रे स्तीर्णे दधिघर्मेण चरति यदि प्रवर्ग्यवान्पशुपुरोडाशेनेडान्तेन चरित्वा माध्यन्दिनीयैस्तुल्येन चरति माध्यन्दिनस्य सवनस्येति सम्प्रैष इति ।

उन्नीयमानेभ्यश्चानुवाचनप्रभृत्या चमसनिधानात् ॥२८॥ होतृधिष्ण्ये सव-

१) ॰नात्सशे॰ A. २) ॰सिकयावघ्राणा॰ A.

नीयपुरोडाशेडानिधानानन्तरम् उन्नीयतीत्येतत्प्रभृति (१.१.२३) दक्षिणं चमसानध इ-त्येतत्पर्यन्तं (१.१२.७) प्रातःसवनवदेव निर्विशेषं करोति शुक्राद्दपघारणोऽइत्या-दिप्रकारेण (१.१.२४)। द्विदेवत्यानां ग्रहणास्यानुक्तत्वादत्र द्विदेवत्ययागाभावः तेने-डानिधानानन्तरमुन्नीयमाभ्यश्चेत्यादिना (२८) शुक्रामन्थिप्रचरणमेव सूत्रकृतातिदि-ष्टम् ॥ प्रथमा कण्डिका ॥ १ ॥

दशसून्नयति ॥ १ ॥ प्रातःसवनवदेव नवसून्नयने (१.१.२३) प्राप्तेऽस्माह अत्र दशस्वपि चमसेषु उन्नेता सोममुन्नयति । प्रैषे विशेषमाह ·

माध्यन्दिनस्य सवनस्य निष्केवल्यस्य भागस्य शुक्रवतो मधुश्चुत इन्द्राय सो-मान्प्रस्थितान्प्रेष्येति ॥ २ ॥ शुक्रामन्थि[नोः] एवंविधः प्रैषो भवति ।

मन्थीवत[1] इति वा मधुश्चुत स्थाने ॥ ३ ॥ अस्मिन्नेव प्रैषे मधुश्चुत इत्यस्य स्थाने मन्थीवत[2]ऽइत्यस्य वा प्रयोगो भवति वा यथाम्नात एव ।

इडां भक्षयित्वा शालाद्वार्ये दाक्षिणहोमः ॥ ४ ॥ सवनीयपुरोडाशेडां भक्ष-होमः कर्तव्यः · इडाग्रहणमुपलक्षणार्थम् सवनीयपुरोडाशसम्बन्धि शेषं कर्म समाप्येत्यर्थः · ततश्चायं पदार्थक्रमः · माध्यन्दिनपवमानानन्तरं दधिघर्मप्रचारो मार्जनान्तः · ततः पशुपुरोडाशयाग आसादनादिभागभक्षणान्तः · ततः सवनीया-सादनादि होतृधिष्ण्ये इडानिधानान्तम् · ततः पाणी प्रक्षाल्योन्नीयमानप्रैषः · ततः उन्नेता दश चमसानुत्तरवेदिमपरेण होत्रादिक्रमेण निधाय शुक्राद्दुपस्तीर्य पूतभृत उन्नीय शुक्रादभिघारयति · एवं दशस्वप्युन्नयति · ततः शुक्राऽरत इत्युक्तप्रकारेण· (१.१०.१) शुक्रामन्थिनोर्यागः · तत्र माध्यन्दिनस्य सवनस्येत्यादिप्रैषः · वषट्कृते ऽध्वर्योर्होमः तमनु प्रतिप्रस्थातुः तमनु चमसाध्वर्यूणाम् एवमनुवषट्कारेऽपि · तत्राद्यानां चतुर्णां होत्रादिचमसानां सदसि स्थापनम् · प्रशास्त्रादीनां षट्सु चम-सेषु चमसाध्वर्यवः शुक्रात्पुनरभ्युन्नयन्ति · ततोऽध्वर्योः प्रशास्तर्यजेत्यादिप्रकारेण (१.११.७) षण्णां चमसानां वषट्कारानुवषट्कारयोर्होमः तत्रेदमिन्द्रायेदमग्नयेऽइति इमावेव षण्णामपि वषट्कारहोमयोस्त्यागौ · प्रथमं वा हुत्वा तृम्पन्त्विति (१.११.१) जपः · अयाडिति (१.११.१०) मन्त्रेण होतुरग्रे उपवेशनम् · तत इडासमर्पणाद्य-

---

1) Thus M. मन्थि° १. A. 2) Thus A.

ग्नीधे षडवत्तं समर्घ्य मयीदमिति जपान्तम् · ततः[1] सवनप्रार्थना · ततः प्रातः-सवनवदेव शुक्रामन्थिशेषभक्षणादि प्रस्थितयागनिमित्तं सर्वचमसभक्षणम् · पुन-रभ्युन्नीतनिमित्तं च भक्षणम् असर्वभक्षांश्चमसानाप्यायितान्हविर्धानमध्ये निदधा-ति · आग्नीध्रे हविर्यज्ञर्विज इडां प्राश्नीयुः यजमानश्च सवनीयशेषं भक्षयति पत्नी च पत्नीशालायां हविष्यं भुङ्क्ते कठसूत्रे अत्र हविष्यं पत्नी भुङ्क्ते इति वच-नात् · ततो मार्जनम् · भागपरिहारः दक्षिणाग्नौ पिष्टलेपहोमपक्षे केवला-ज्याहुतिपक्षे तु [नि]दानीम् · प्रणीताविमोको राक्षसभागो भागावेक्षणम् तत्प्रा-शनं च · ततः शालार्ये दाक्षिणैः कर्तव्यः · दाक्षिण इति संज्ञा · अथ प्रतिपरे-त्य दाक्षिणानि जुहोतीति श्रुतत्वात् (४. ३. ४. ६) दाक्षिणानि दक्षिणाप्रयोजनानि ।

वासःप्रबद्धᳪ हिरण्यᳪ हवन्यामवधाय चतुर्गृहीतमुद्गु त्यमिति (७. ४१) ॥ ५ ॥ वस्त्रेण प्रकर्षेण बद्धं हिरण्यं जुह्वामवधाय गृहीतमाज्यं शालाद्वार्येऽग्नौ समित्पूर्वकं जुहोति · स दशाहोमीये 'स जुहोत्युद्गु त्यमिति श्रुतेः (४.३.४.६ १) काण्वपाठादु-भयोराहुत्योश्चतुर्गृहीतं भवति दशासम्बद्धा होमाः दशाहोमाः प्रयोजनं यस्य तद्दशाहोमीयम् अत्र च दानार्थमेव यत्कल्पितं वासस्तस्मिन्नित्यर्थः ।

चित्रं देवानामिति (७.४२) द्वितीयाम् ॥ ६ ॥ आहुतिं जुहोति · चतुर्गृहीतेन शा-लाद्वार्य एव · वासोहिरण्ये अत्राप्यवधेये । इदᳪ सूर्यायेति द्वयोराहुत्योस्त्यागः ।

आग्नीध्रीयेऽग्ने नयेति (७. ४३) ॥ ७ ॥ तत उत्थाय आग्नीध्रीयं गत्वा आग्नीध्रीयेऽग्नौ सकृद्गृहीतमाज्यं जुहोति · अत्रापि वासोहिरण्ये भवत एवेति हरिस्वामिनः (९२)।

अयं न इत्यपरामश्वं (७. ४४) चेद्युक्तं दद्यादयुक्तं वा ॥ ८ ॥ यदि अश्वं रथादौ युञ्ज्यात् (२२. २. १) अथवा अयुक्तमेकाकिनमेव (२२. २. ११) तदा द्वितीयामाहुतिं सकृद्गृहीतेनाज्येन जुहुयात् · अनयोराहुत्योरिदमग्नय इति त्यागः ।

वासोहिरण्ये ददाति ॥ ९ ॥ वक्ष्यमाणे दक्षिणादानकाले क्रतुदक्षिणावेन वा ण्ये षोडशभ्योऽप्यृत्विग्भ्यो ददाति ।

सहिरण्यो यजमानः शालां पूर्वेण तिष्ठन्नभिमन्त्रयते दक्षिणा बहिर्वेदि तिष्ठ-तीर्दक्षिणातो रूपेण व इति (७. ४५) ॥ १० ॥ आग्नीध्रीये होमानन्तरं तेनैव

---

[1] ? ततः छंदोक्ता A.

हिरण्येन सहितेष्वयो यजमानस्तन् रूपेण व इति मन्त्रेण वेदेर्बहिर्दक्षिणस्यां दिश्यवस्थिताः दक्षिणा गाः अभिमन्त्रयते ।

गवां शतं द्वादशं[1] वातिक्रामति ॥ ११ ॥ गन्तं वक्ष्यमाणेन मार्गेणातिक्रमति अभिमन्त्रणानन्तरम् · अथवा द्वादशशतम् द्वादश अधिका यस्मिन् शते तद्द्वादशशतम् द्वादशभिर्गोभिरधिकं शतं गाव इत्यर्थः · तत् शतेनैव० नाशतदक्षिणः स्यादिति श्रुतेः (४.३.४.३) द्वादशं तु शाखान्तरात्[2] ।

मन्थौदनतिलमाषाश्च[3] ॥ १२ ॥ मन्थः क्षीरसक्तवः · ओदनतिलमाषाः प्रसिद्धाः · ते च तेनैव पथा नीयन्ते ऋत्विग्भ्यो दातुम् ।

अन्तरा शालासदसी दक्षिणेनाग्नीध्रं तीर्थेन ॥ १३ ॥ गवामतिक्रमणमार्गोऽयम् · शालासदसोरन्तरालेन मध्यममार्गेणोत्तरेण सदः आग्नीध्रं दक्षिणेन तीर्थेन चात्वालोत्करयोरन्तरालेन गवां शतं द्वादशं वा शतं निष्क्रामति · शाखान्तरात् ।

सुब्रह्मण्यां च प्रेष्यति वा ॥ १४ ॥ अत्रावसरे न प्रेष्यति वा ।

आग्नीध्रादनुगच्छति सुन्वन् ॥ १५ ॥ ता दक्षिणा उक्तमार्गेण गच्छन्तीः आग्नीध्रं यावत् यजमानोऽनुगच्छति · शाखान्तरात् ।

प्रागनुवाचनाच्च ॥ १६ ॥ इन्द्राय मरुत्वतेऽनुवाचयतीत्येतस्मात्प्राक् (३.१) यदुच्यते तद्यजमानः करोति · चकारेण सुन्वन्नित्यनुकृष्यते ।

सदो गच्छति वि स्वरिति (७.४५) ॥ १७ ॥ यजमानः आग्नीध्रदेशात्सदः प्रति ग० ।

प्रेक्षते यतस्व सदस्यैरिति (७.४५) सदस्यान् ॥ १८ ॥ सदःसमीपे स्थित्वा सदस्यान्प्रेक्षते यजमान एव · सदसि भवाः ऋत्विजः ब्राह्मणाः सदस्याः ।

ब्राह्मणमद्येत्याग्नीध्रगमनम् (७.४६) ॥ १९ ॥ यजमानः सदःसमीपात् आग्नीध्रगमनं करोति आग्नीध्रमृत्विजं स्वशरणेऽवस्थितं[4] प्रति गच्छति यद्धिरण्यं चतुर्गृहीतेऽवहितं पश्चाद्यजमानेन गृहीतम् तस्मादेव हिरण्याद्यावदग्नीधे दातव्यं तावद्दक्षिणेन पाणिना गृहीत्वा ।

उपविश्य हिरण्यमस्मै ददात्यस्मद्राता इति (७.४६) ॥ २० ॥ आग्नीध्रं गत्वा तत्समीपेऽउपविश्य अस्मै आग्नीध्राय हिरण्यं ददाति हिरण्यग्रहणमुपलक्षणार्थं

1) Thus १. MA. 2) Çāṅkh. ७. १७. १७. 3) Thus M. १. षांश्च A. 4) स्वशरीरेण० A.

सर्वासां दक्षिणानाम् · अत्रैवं प्रयोगः अस्याग्निष्टोमसंस्थस्य ज्योतिष्टोमस्य[1] समृद्ध्यर्थमिदं हिरण्यं तिस्रो गावः वासोविभागमश्वविभागं मन्थौदनतिलविभागं चाग्नीत्तुभ्यमहं सम्प्रददे इति संकल्प्यास्मद्राता इति[2] मन्त्रान्ते ददाति · अस्मद्राता इत्यनेनैव[3] मन्त्रेण सर्वेभ्यो दक्षिणादानं भवति दक्षिणादाने करणत्वात् बहुवचनान्तत्वाच्च न हिरण्यदानमात्रे ।

आत्रेयाय चाग्नीध्रवत्सदसः पुरस्तादुपविष्टाय क आत्रेयं क आत्रेयमिति त्रिरुक्त्वा सकृद्धेषमहालेयमवालेयमकौद्रेयमशौभ्रेयमवामरथ्यमगौपवनमिति ॥२१॥ अग्नीधे दक्षिणादानानन्तरमात्रेयाय अत्रिसगोत्रायात्रिप्रवराय वा सदःस्थाय चकाराद्धिरण्यमाग्नीध्रवद्ददाति · किं कृत्वा आग्नीध्रवदित्यनेनैतावदतिदिश्यते ब्राह्मणामन्त्र्येत्यनेन (७.४६) मन्त्रेण आत्रेयं प्रत्यागमनम् (२१) अस्मद्राता इत्यनेन (७.४६) दानं च । हिरण्यं च क्रतुदक्षिणार्थहिरण्यव्यतिरिक्तम् कुतः तस्मादृत्विग्भ्य एवानृत्विग्भ्य इति (४.३.४.५) नियमात् आत्रेयस्यानृत्विक्त्वात् । मन्त्रार्थः हालेयवालेयादिवर्जितमात्रेयमत्रेरपत्यं कः परिशिंष्यात[4] यो हालेयादिवर्जितः तस्मै दद्यादिति ।

ऋत्विग्भ्यो दक्षिणा ददाति ॥२२॥ आत्रेयदानानन्तरम् । शतस्य परिक्रयार्थत्वेन श्रुतत्वादयं संदेहो जातः किं प्रतिपुरुषं शतं देयम् उतैकस्यैव शतस्य प्रतिविभागो देयः · तत्र पूर्वपक्षमाह ·

पृथक् शतानि पुरुषभेदात् ॥२३॥ गवां देयानि प्रत्यृत्विजमेकैकं गवां शतमित्यर्थः · यतो भिन्नाः पुरुषाः येभ्यस्तच्छतं दीयते · गुणभूतं च तत् ऋत्विक्संतोषणार्थत्वात् ऋत्विजस्तु प्रधानम् प्रतिप्रधानं गुणावृत्तिर्न्याय्या । सिद्धान्तमाह ·

प्रतिविभागो वा कर्मप्राधान्यात् ॥२४॥ एकस्यैव गवां शतस्य प्रतिभागो देयः न प्रतिपुरुषं पृथक्शतम् कर्मणः प्रधानत्वात् दक्षिणा तु कर्माङ्गभूता न सम्प्रदानाङ्गभूता येन सम्प्रदानभेदेन दक्षिणाभेदो भवेत् · कर्म त्वेकमेव · अत एकमेव शतं विभज्य तस्य विभागः प्रत्यृत्विजं देय इति सिद्धम् · कर्मप्राधान्यं च दक्षिणायाः श्रूयते तं शतेन दक्षयतीति (४.३.४.३) अत्र कर्म उपदिश्य तस्य

1) °मसंस्थस्य A. 2) °द्रातेति A. 3) °द्रातेत्य° A. 4) शेष्यात् A.

परिक्रयार्थत्वेनैकमेव शतं श्रूयते · यदि च भेदेन प्रतिपुरुषं शतं-शतं दीयेत तर्हि षोडश शतानि परिक्रयः स्यात् न शतम् तथा च यथाश्रुतस्याकरणात्कर्मणो वैगुण्यं स्यात् · तस्मादेकशतं विभज्य देयम्। तत्राविशेषात्समे प्राप्तऽउच्यते।

यथारम्भं द्वादश-द्वादशाद्येभ्यः षट्षड्द्वितीयेभ्यश्चतस्रश्चतस्रस्तृतीयेभ्यस्तिस्रस्तिस्र इतरेभ्यः ॥२५॥ यथाभमित्यारम्भक्रमेण वरणक्रमेण · आद्येभ्यो ब्रह्मादिभ्यश्चतुर्भ्यो द्वादश गा दद्यात् · द्विभ्यश्चतुर्भ्यो ब्राह्मणाछंसिप्रस्तोतृमैत्रावरुणप्रतिप्रस्थातृभ्यः · तृभ्यश्चतुर्भ्यः पोतृप्रतिहर्त्रच्छावाकनेष्टृभ्यः इभ्यश्चतुर्भ्यः [आग्नीध्र]सुब्रह्मण्यग्रावस्तुदुन्नेतृभ्यः · एवं हि सत्त्रे दीक्षाक्रमविधानपरे वाक्ये श्रूयते समस्तभागिनो दीक्षयति अर्धिनो दी॰ति तृतीयिनो दी॰ति पादिनो दीक्षयतीति। हिरण्यवस्त्रादीनामप्येवमेव विषमो विभागः कर्तव्यः समानन्यायात्। उक्तो विभागः · इदानीं वरणक्रमेणैव दाने प्राप्ते यथाश्रुतं क्रममुपदिशति ·

ब्रह्मोद्गातृहोतृभ्यः ॥२६॥ आग्नीध्रे प्रथमं दानमुक्तम् ततो ब्रभ्यो दद्यात् · ब्रह्मणे हिरण्यम् द्वादश गाः वासोऽश्वमन्वौदनादेश्च तदनुरूपं भागं ददाति · एवमुत्तरेष्वपि योज्यम्।

अध्वर्युभ्यां च हविर्धानऽउपविष्टाभ्याम् ॥२७॥ द्विवचनाद्द्वितीयः प्रतिप्रस्थाता · सह वा प्रत्येकं वा स्वानुरूपविभागदानम्। अध्वर्युभ्यां हिरण्यादिदक्षिणादानमुक्तम् ताभ्यां च कथं प्रतिग्रहः कर्तव्य इत्याकाङ्क्षायामाह ·

अग्नये त्वेति (७.४७) हिरण्यं प्रतिगृह्णीतः ॥२८॥ अनेकयजमानके दातृभ्याम् दातृभ्य इत्यूहः · वक्ष्यमाणेषु प्रतिग्रहमन्त्रेषु [अप्येवमेव] द्रष्टव्यम्।

रुद्राय त्वेति (७.४७) गाम् ॥२९॥ प्रतिगृह्णीतोऽध्वर्यू।

बृहस्पतये त्वेति (७.४७) वासः ॥३०॥ यमाय त्वेत्यश्वम् (७.४७) ॥३१॥

कोऽदादित्यन्यत् (७.४८) ॥३२॥ अन्यदिति हिरण्यादिद्रव्यचतुष्टयाद्यदन्यदन्वौदनतिलमाषादि शाखान्तरीयं च गोऽश्वाश्व[तरा] गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्चेत्येवमादि च। प्रति॰ह्णीत इत्यत्र (२८) अध्वर्युप्रतिप्रस्थात्रोः प्रकृतत्वात्सूत्रकृता द्विवचनं प्रयुक्तम् प्रकरणाम्नानाच्च सर्वप्रतिग्रहीतृणामिमे मन्त्राः।

इह्तो मन्त्रवचनम् ॥३३॥ [हिरण्यादीनां प्रतिग्रहे यद्]अग्ने त्वेत्यादिकं मन्त्रमुक्तम् तदिह्तो भवति इह्या नेत्यर्थः (४. ३. ४. ३३)। प्रकरणाज्ज्योतिष्टोमे एव हिरण्यादीनां प्रतिग्रहणे इमे मन्त्राः न त्वन्यत्र चातुर्मास्योदवसानीयावैश्वानर्यादौ।

प्रत्येत्य प्रस्तोतृप्रशास्तृब्राह्मणाछंसिपोतृनेष्टृछावाकोन्नेतृग्रावस्तुत्सुब्रह्मण्येभ्यः ॥३४॥ ततो हविर्धानात्सदः प्रत्येत्य सदसि प्रत्यागत्य यजमानः प्रस्तोत्रादिभ्यः क्रमेण दक्षिणां ददाति।

प्रसृप्तेभ्यश्चान्यत्कण्वकश्यपयाचमानवर्जम् ॥३५॥ ये केचन ऋत्विग्व्यतिरिक्ताश्चमसाध्वर्यूपगातृप्रासर्पका उपद्रष्टारोऽन्ये च सदः प्रसृप्ताः प्रविष्टा भवन्ति तेभ्यः प्रभ्यो हिरण्यादि क्रतुदक्षिणाद्रव्यादन्यद्धिरण्यादि किंचिद्द्रव्यं ददाति· कण्वः कण्वसगोत्रः कश्यपः कश्यपसगोत्रः याचमानो मह्यं देहि मह्यं देहीत्येवं प्रार्थयमानः एतान्वर्जयित्वा· केचित्तु कण्वशब्दं बधिरं मन्यन्ते कश्यपं च श्यावदन्तवाचकमिति।

ज्ञातये चाश्रोत्रियाय ॥३६॥ दानं न प्राप्नोतीत्यत उच्यते ज्ञातये श्रोत्रियायानधीतवेदायापि दद्यात्· केचित्तु विपरीतमाहुः यथा कण्वकश्यपयाचमानानाम् एवं ज्ञातये श्रोत्रियाय।

न रजतं दद्याद्बर्हिषि पुरास्य संवत्सराद्गृहे रुदन्तीति श्रुतेः ॥३७॥ नात्र बर्हिषि प्रसृप्तेभ्यो रजतं दद्यात् यद्रजतं दद्यात्पुरास्य रुदन्तीति निन्दार्थवादात्।

पत्नी च ददाति ॥३८॥ द्रव्यसाधारण्याद्यजमानेन दीयमानमनुजानातीत्यर्थः।

सर्वेभ्यः दत्वा प्रतिहर्त्रे पश्चात् ॥३९॥ सभ्य इति ऋत्विग्भ्यः प्रसृप्तेभ्यश्च दत्वा पश्चात्प्रतिहर्त्रे दद्यात् प्रतिहर्त्रे ददातीति श्रुतत्वात् (४. ३. ४. २२)· सत्त्रेषु सदोगमनसदस्यप्रेक्षणात्रेयप्रासर्पकदानानि गृहपतेः· अनेकयजमानकाहीनेष्वपि मुख्य एव तदन्वारब्धो दक्षिणा ददाति ॥ ॥ द्वितीया कण्डिका ॥२॥

इन्द्राय मरुत्वतेऽनुवाचयति ॥१॥ प्रतिहर्तृदानानन्तरमध्वर्युर्ऋतुपात्रगृहीतं मरुत्वतीयं ग्रहमादाय इन्द्राय मरुत्वतेऽनुब्रूहीति मैत्रावरुणमनुवाक्यापाठाय प्रेरयति।

अदानमतः ॥२॥ अतः परं प्रसृप्तेभ्यो दानं न कर्तव्यम्· अत इति अनुवाचनादूर्ध्वं प्रतिषेधावगमात्प्रतिहर्तृदानादूर्ध्वमपि प्रागनुवाचनादागताय देयमिति पितृभूतिः।

ऋतुपात्रेण मरुत्वतीयग्रहणमुपयामगृहीतोऽसि मरुतां त्वौजसऽइति (७. ३६) ॥३॥ प्रतिप्रस्थाता हविर्धानं प्रविश्य द्वितीयेन ऋ॰णा द्रोणाकलशात्पूतभृतो वा ग्रह॰णं करोति ।

अध्वर्युमनु जुहोति सशस्त्रे वानुपूर्व्ययोगात् ॥४॥ तुशब्दः पक्षव्यावृत्तौ · स॰स्त्रऽएव मरुत्वतीयेऽध्व॰नु प्रतिप्रस्थाता जु॰ति न प्रथममनु · एवं मन्त्राणामानुपू॰गो भवति आ॰र्व्यं क्रमः क्रमेण योगो भवति नेतरथा पूर्वं हि मरुत्वन्तं वृषभमित्यस्य (७. ३६) सशस्त्रमरुत्वतीयग्रहणमन्त्रस्य पाठः ततः परं मरुतां त्वौजसऽइत्यस्य (७. ३६) ।

तृतीयश्रुतेश्च ॥५॥ अस्य हि तृतीयत्वं श्रूयते उपया॰ज्ञसऽइति तृतीयं ग्रहं गृह्णातीति (४. ३. ३. १४) द्वितीये च प्रयुज्यमाने तृतीयश्रुतिर्बाध्यते · तस्मात्सशस्त्रऽएव मरुत्वतीये हुते इमं तृतीयं तमनु जुहोति ।

वशिना मरुत्वतीयग्रहणं मरुत्वन्तमिति (७. ३६) ॥६॥ प्रथमं मरुत्वतीयं वषट्कारानुवषट्कारयोर्हुत्वा शेषमन्यस्मै प्रदाय हविर्धानं प्रविश्य अध्वर्युः व॰ना रिक्तेन ऋतुपात्रेण शुक्रात्पूतभृतो वा मरु॰हणं करोति · ग्रहणानन्तरं प्रदक्षिणावृत्तीतरथावृत्ती तत एष ते योनिरिति सादनम् · ततः पूर्वमरुत्वतीयशेषस्य होत्रा सह भक्षणम् · इदमिन्द्राय मरुत्वतऽइति मरुत्वतीयानां त्यागाः ।

निर्हृते पात्रे होता शंसति ॥७॥ मरुत्वतीयभक्षणानन्तरमृतुपात्रे सदसो निष्काशिते होता शस्त्रं शं॰ति · पात्रनिर्हरणं प्रक्षालनार्थम् · ततश्च मार्जालीये प्रक्षाल्य पुनः खरे सादनीयम् । ननु पूर्वं स्तोत्रं पश्चाच्छस्त्रमिति सर्वत्र सत्यम् माध्यन्दिनेन पवमानेन गतस्तोत्रमिति ज्ञापनाय हो॰सतीत्युक्तम् ततश्चात्राध्वर्युर्होत्रे प्रतिगृणाति · प्रतिगरार्थ एवायमुपदेशः ।

जनिष्ठा उग्र इत्येतस्यां (३३. ६४) मदामोदैवेति प्रतिगरः सकृत् ॥८॥ अस्मिन्होत्रा शस्यमाने शस्त्रे जनि॰तस्यामृचि (ऋक्° १०. ७३. १) शस्यमानायां मोदामोदैवेत्येवं सकृदेकवारं प्र॰रः · मुख्यत्वान्मध्यावसाने प्रतिगरोऽयम् ।

तत्स्थाने विकृतौ ॥९॥ जनिष्ठा उग्र इत्यस्या ऋचः स्थाने यया[1] ऋचा

---

[1] ? यायंस्या A. pr. m. याज्या sec. m.

शस्यते तस्यामप्येष प्रतिगरः सकृद्भवत्येव सवनसम्बन्धेन यतोऽयं श्रुतो न ऋक्सम्बन्धेन सकृन्मद्वन्माध्यन्दिने सवनऽइति (४. ३. २. १०)।

आ निधानात्कृत्वा माहेन्द्रं गृह्णाति वैश्वदेववन्मह्नाँ३ऽइन्द्र इति (७. ३१) ॥१०॥ [त]तः शस्त्रान्ते ग्रहमादायातिक्रम्याश्राव्योक्थशा यज्ञ सोमस्येत्युक्त्वा वषट्कारानुवषट्कारयोर्ग्रहं हुत्वा प्रदक्षिणावृत्तीतरथावृत्ती करोति · प्रतिप्रस्थाता च पूर्वोक्तेन प्रकारेण शस्त्रे शस्यमाने एवं तृतीयं मरुत्वतीयं गृहीत्वा खरे सादयति · इदानीमध्वर्युमनु वषट्कृतेऽनुवषट्कृते च हुत्वा सदसि गत्वानुप्रहूयैव स्वयमेव भक्षयति · चमसाध्वर्यवश्च चमसान्हस्ते गृहीत्वा वषट्कारानुवषट्कारयोः हस्तस्थानेव प्राङ्नयनेन कम्पयित्वा चमसिनां भक्षणाय सदसि नयन्ति · ततोऽध्वर्युः सदसि गत्वा होत्रा सह महामरुत्वतीयशेषभक्षं करोति · चमसिनश्चानुप्रहूयैव स्वस्वचमसेषु भक्षयित्वाप्यायनं कुर्वन्ति · ततश्चमसाध्वर्यवश्चमसान्दक्षिणस्य हविर्धानस्य पश्चाद्क्षं निदधति · एवं निधानान्तं कृत्वाध्वर्युर्मह्नाँ इन्द्रो नृवदिति (७. ३१) मन्त्रेण वै॰वत् माहेन्द्रसंज्ञकं ग्रहं गृ॰ति · वै॰वदिति वशिना शुक्रपा॰श्चे वेत्यतावद्गृह्यते (९. १४. १)· ततः परिमृज्य प्रदक्षिणातद्विपरीतावृत्ती[१] कृत्वा एष ते योनिरिति खरे सादयति।

शुक्रं पूतभृत्यासिच्य पृष्ठमुपाकृत्य प्रेष्यत्यभिषोतारोऽभिषुणुतौलूखलानुद्वादयताग्नीदाशिरं विनय सौम्यस्य वित्तादिति (४. ३. ३. १९) ॥११॥ माहेन्द्रसादनानन्तरं शुक्रं द्रोणकलशस्थं सर्वं सोमं पूभृत्कलशमध्ये निनीय ततस्तृणाभ्यां माहेन्द्रग्रहमुपस्पृश्य सदसि गत्वा प्रस्तोत्रे तृणे प्रयच्छन्नुपावर्तध्वमिति पृष्ठसंज्ञकं स्तोत्रमुपा॰त्य प्रे॰ति · पृष्ठमिति माहेन्द्रस्तोत्रसंज्ञा। अभिषो॰णुतेत्येकः प्रैषो ऽभिषवकर्तॄन्प्रतिप्रस्थात्रादीन्प्रति अत एव प्रैषादत्र[२] प्रतिप्रस्थातृनेष्टृन्नेतार एवाभिषुण्वन्ति नाध्वर्युः। औलू॰दयतेति द्वितीयः प्रैषो हविर्यज्ञर्त्विजः प्रति सवनीयनिर्वापार्थमुलूखले[३] भवा औ॰ला ध्वनयः प्रहारनिमित्ताः तानुत्पादयतेत्यवघातलक्षणद्वारेण हविर्यज्ञर्त्विजः सवनीयनिर्वपणाय प्रेष्यन्ते। अग्नीदा॰वित्तादिति तृतीयः प्रैषोऽग्नीधं प्रति हे अग्नीत्त्वमाशिरं श्रयणार्थं दधि वि॰थ दध्नो मन्थनं कुरु विनयनं चात्र मन्थनम् मानवे पश्चादाग्नीध्रीयस्याशिरं मन्थतीति·

---

१) °क्षिणातद्विपरीणावृत्ती A. २) प्रेषहविर्ज्ञानादत्र A. ३) °नीयानिर्वा उपार्थं उलू° A.

आशिरमित्यौपवसथ्ये सायंकाले यजमानव्रतदुघां दुग्धा तत्पयो यद्दधि क्रियते तदुच्यते · सौम्यस्य चरोरुपायमिति शेषः वित्तात् विद् ज्ञाने ज्ञानीह्युपायमिति लक्षणया चरुनिर्वापप्रैषः ।

ऋजीषमिश्रमंशुमभिषुन्वन्ति यथा कथा चानुदकम् ॥ १२ ॥ अभिषवकर्तारः ऋग्यं सोमांशुं यथाकथंचेत्यधर्मकमेव उदकासेकवर्जितं चाभिषुण्वन्ति · अंशुश्च अंशुं ग्नायेति (९. ४. ४०) योऽपररात्रे उपांशुपात्रे स्थापितः तृतीयसवनार्थः · मानवे प्रतिप्रस्थातर्य[1] उपांशुपात्रेंऽशुस्तमृजीषेऽप्यस्याभिषुत्योदञ्चं कृत्वाधवनीये प्रस्कन्दयस्वेति प्रेष्यतीति ।

आधवनीये करोति ॥ १३ ॥ प्रातर्माध्यन्दिनसवनर्जीषेण सह सोमांशुमभिषुत्याधवनीयकलशमध्ये प्रक्षिपति ।

त्रिपर्यायान्वाभिषवोपदेशात् ॥ १४ ॥ वाशब्दः पक्षव्यावृत्तौ · त्रिपर्यायान्वा त्रीनभिषवान्करोति न यथाकथंचिदधर्मकम् · ते वै तृतीयंषुण्वन्तीति (४. ३. ३. १२) अभिषवस्योपदेशाद्विधानात् · अभिषवश्च यादृशो दृष्टस्तादृश एव कर्तुं युक्त इति · उदकस्य त्वनाम्नातत्वादेवाभावः । यदा च धर्मवानभिषवस्तदा मानाभिमर्शनेऽपि प्राप्नुत इत्यत आह ·

मानाभिमर्शनवर्जं कृतत्वात् ॥ १५ ॥ मानर्जं तमभिषवं कुर्यात् · यतः प्रातःसवन एव तस्यांशोरुभयं कृतम् ऋजीषस्य तु सवनद्वयेऽपि · अत्र निग्राभ्याणामभावान्निग्राभ्यासेचननिग्राभवाचनयोरभावः[2] · आधवनीयस्य रिक्तत्वादंशूनां प्रत्यभिषवमवधायाधूयेत्यस्याभावः[3] (९. ५. ६) किं तु त्रयाणामप्यभिषवाणामन्ते ऽभिषुतस्यांशोः ऋजीषस्याधवनीये करणम् · अतश्चैते पदार्थाः अभिषवार्थानामीषान्तरेणाहरणम् हिरण्यबन्धनम् त्रयाणामभ्यादानम्[4] प्रातर्माध्यन्दिनसवनर्जीषमिश्रस्यांशोरधिषवणे प्रक्षेपः मा भेरिति प्रहरणम् त्रिपर्यायोऽभिषवः आप्यायनम् एवं द्विरपरम् ततः ऋजीषस्याधवनीये प्रक्षेप इति ।

पूतभृति पावनं शुक्राभावात् ॥ १६ ॥ सोमस्य पावनं पूतभृति एव कर्त-

---

१) °स्थातर्य A. २) °मभायोत्तिग्राभ्यावाचननिग्राभवाचन° A. (°मभावो नि° sec. m.) ३) °माधायावधूये° A. ४) त्रयाणां ह्यादनं A.

व्यम् न द्रोणकलशे · यतस्तृतीयसवने शुक्रः प्रतिषिध्यते अथैतन्निर्धीत॰वन-मिति (४. ३. ३. १९)। शाखान्तरे प्रत्यक्षवाक्येन धर्मप्रतिषेधादत्राभिषवोऽधर्म एव त्रिपथ्यान्वेति (१४) कृत्वा-चिन्तेति पितृभूतिः।

स्तूयमाने कुम्भे चऽग्नीषिस्यात्प्रधानम् ॥ १७ ॥ तृतीयसवने आर्भवे पवमाने स्तू॰ने कस्मिंश्चित्कलशे अग्नी॰नम् · चकारात् पूतभृति सोमस्य पावनं च भवति।

सवनीया अपयस्याः ॥ १८ ॥ अत्र तृतीयसवने पयस्यावर्जिताः स॰र्याः पुरोडाशादयो भवन्ति प्रातःसवनऽएव॰सवनयोरिति प्रतिषेधात् (४. २. ५. १९)।

सौम्यश्चरुर्वारुणश्चैककपालोऽधिकौ ॥ १९ ॥ सवनीयेभ्योऽधिकौ · अधिक-ग्रहणात्सवनीयैः सहत्वं गम्यतेऽतश्चानयोरप्याग्नीध एव कर्तृत्वम्[१]।

आ पात्रप्रक्षालनात्कृत्वोक्थ्यं विगृह्णाति पूर्ववदिन्द्राय त्वेति (७. २२) सर्वेभ्यः ॥ २० ॥ ततः पृष्ठस्तोत्रानन्तरं होता शस्त्रं शंसति · तत्राध्वर्युः प्रतिगीर्य श-स्त्रान्ते प्रदक्षिणेतरथावृत्ती कृत्वा माहेन्द्रं ग्रहमादायाश्राव्योक्थशा यज सोमस्येति प्रेष्यति वषट्कारानुवषट्कारयोर्हुत्वाप आलभ्य[२] प्रदक्षिणावृत्तीतरथावृत्ती कृत्वा सदसि होत्रा सह माहेन्द्रशेषं भक्षयित्वा मार्जालीये पात्रं प्रक्षाल्य खरे निदधाति · चमसाध्वर्यवोऽपि ग्रहादानसमये चमसान्हस्ते कृत्वा वषट्कारानुवषट्कारयोः प्राङ्-यनेन कम्पयित्वा सदसि हरन्ति चमसिनश्चानुपहूयैव यथास्वं सर्वभक्षान्भक्षयन्ति ततो मार्जालीये चमसानां प्रक्षालनम् · एवं पात्र॰लनान्तं कर्म कृत्वा पात्रप्र-क्षालनान्ते कर्मणि कृते सति अध्वर्युः पू॰वदिति प्रातःसवनवत् (९. १४. ८)· त्रेधमु-क्थ्यं वि॰ति विभज्य गृह्णाति · पू॰वदिति मन्त्रा अपि प्राप्नुवन्ति तत्राह इन्द्राय ॰वेभ्यः स॰भ्य इति प्रशास्त्रे ब्राह्मणाछंसिने अछावाकाय च इन्द्राय त्वा देवा-व्यमित्यनेनैव मन्त्रेणोक्थ्यस्थाल्याः सकाशादुक्थ्यपात्रे तृतीयं भागं विभागेन गृ-ह्णातीत्यर्थः · स॰भ्य इति तादर्थ्यचतुर्थी प्रातःसवने व्याख्याता (९. १४. ८) मैत्राव-रुणादिकर्तृकशस्त्रवद्भ्यो ग्रहयागाभ्यासेभ्य इत्यर्थः · उक्थ्यविग्रहसम्बन्धिनीति-कर्तव्यता प्रातःसवने चोक्ता तूष्णीं॰ सादं॰सिञ्चतीत्यादिका (९. १४. १०-१४)। अनि-रुक्तेषूपहव्यादिषु[३] इन्द्रपदस्य स्थाने शक्रपदं प्रयोज्यम् शक्राय त्वा देवाव्यम्।

१) कर्तव्यं A. २) ? प्यत्रालभ्य A. ३) अतिरिक्तेषुपहल्या॰ A.

वसतीवरीश्चासिञ्चतीदं तृतीयसवनं कवीनामृतेन ये चमसमैरयन्त ते सौधन्वनाः स्वरानशानाः स्विष्टिं नोऽभि वसीयो नयन्त्विति [1] ॥ २१ ॥ चकारेण पूर्ववदित्यनुकृष्यते · पूर्ववदिति प्रातःसवनवत् तत्र च प्रागच्छावाकचासिञ्चतीति (९. १४. १६-१७) चशब्देन प्रागच्छावाकविग्रहादित्येतदनुकृष्टम् अत इहापि प्रागच्छावाकग्रहादाधवनीये वसतीवरीः सिञ्चति · मन्त्रस्य शाखान्तरीयत्वात्कृत्स्नपाठः ।

एकधनशेषं च ॥ २२ ॥ अनेनैव मन्त्रेणासिञ्चति · आधवनीय एव · ततोऽच्छावाकविग्रहग्रहणादि पात्रप्रक्षालनान्तम् ।

प्रसूतान्तं [2] भवति ॥ २३ ॥ प्रशास्तः प्रसूहीति [3] (९. १४. १६) एवमन्तमुक्थ्यविग्रहणकर्म भवति · आदित्यग्रहस्य कालविधानार्थं प्राप्तस्यैव पुनरयमुपदेशः · सर्पणं तु आदित्यग्रहहोमानन्तरं वक्ष्यति अत्र सर्पणमिति (४. १५) · तेन ततः प्रागादित्यग्रहो भवतीत्यत उक्तम् प्रसूतान्तमिति ॥ ॥ तृतीया कण्डिका ॥ ३ ॥

एहि यजमानेत्याह ॥ १ ॥ प्रसूतान्ते कृते अध्वर्युः एवं यजमानं प्रत्याह ।

हविर्धानं प्रविशन्त्यध्वर्युयजमानप्रतिप्रस्थात्रग्नीदुन्नेतारः ॥ २ ॥ (४. ३. ५. १) ।

पत्नी चापरेण ॥ ३ ॥ हविर्धानद्वारेण · पत्न्या अपरेण प्रवेशनविधानादितरे पूर्वद्वारेण प्रविशेयुरिति गम्यते ।

अपिहितद्वार आदित्यपात्रमादाय सध्स्रवांश्चोपरि पूतभृतस्तत आदित्यग्रहं गृह्णाति सध्स्रवेभ्यः कदा चनेति (८. २) ॥ ४ ॥ हविर्धाने अपिहितद्वारे कृते सत्यध्वर्युरादित्यपात्रं हस्ते गृहीत्वा संस्रवांश्चादित्यस्थाल्यादाय पूतभृत उपरि तेभ्यः संस्रवेभ्यः सकाशादादित्यपात्रेण आदित्यग्रहं गृह्णाति · तत्र सव्येन हस्तेनादित्यपात्रं गृहीत्वा दक्षिणेन मन्त्रान्ते संस्रवानादित्यस्थाल्यैव पात्रस्य मध्ये निनयति · अपिहिते आच्छादिते द्वारे यस्य तदपिहितद्वारम् तस्मिन् ।

अपगृह्य पुनः कदा चनेति (८. ३) ॥ ५ ॥ अपगृह्य धारातो विच्छिद्य पूतभृतः सकाशादात्मसमीपं नीत्वा पुनस्तथैव गृह्णाति · अत्रोपयामो न भवति तं वै नोपयमेनेति (४. ३. ५. ११) श्रुतत्वात् ।

दध्ना श्रीणात्येनं पश्चिमेऽन्ते मध्ये वा यज्ञो देवानामिति (८. ४) ॥ ६ ॥ एन-

---

1) See Ath. ६.४७.३. 2) सू M sec. m. A pr. m. 3) प्रसुही° A pr. m. (and Çânkh. ७.१४.१.)

मादित्यग्रहं कुशावन्तर्धाय ग्रहस्य पश्चिमे भागे मध्ये वा दध्नां'णाति · एतच्च दधि लौकिकं ग्राह्यम् अयणार्थत्वात् ।

उपांशुसवनेन मिश्रयति विवस्वन्नादित्येति (८.५) ॥७॥ ततोऽध्वर्युः उपां'नेनाद्रिणादित्यग्रहं मिं'ति सोमं दधि च परस्परं संसृजति · मेलनयतिराङ्गालनार्थः (४.३.५.१६) ।

उपांशुसवनमुन्नेत्रे प्रयच्छति ॥८॥ मिश्रणानन्तरं तमुपां'छति अध्वर्युः ।

आसृत्र ग्रावाणा इति चाह ॥९॥ उन्नेतारं प्रति · ततोऽध्वर्योर्ग्रहस्य परिमार्जनम् सादनाभावः ।

आधवनीये चमसे वा सोमवति ग्रावाणोऽवधाय स्थाने निदधाति ॥१०॥ ततोऽध्वर्युराध'नीयमध्ये सोमयुक्ते च'से वा पश्चापि ग्रावाणो निधाय स्वकीये स्थानेऽधिषवणचर्मणि नि'ति ।

अपावृतद्वारे निष्क्रामतो ग्रहमपिधाय पाणिना स्थाल्या वान्वारब्धे ॥११॥ हविर्धाने उद्घाटितद्वारे सति ग्रहं पाणिनापिधायादित्यस्थाल्या वापिधाय ठङ्कयित्वा अन्वा'ब्धे यजमाने अध्वर्युप्रतिप्रस्थातारौ हविर्धानान्नि'तः अत्र प्रतिप्रस्थाता द्वितीयः यजमानस्यान्वारम्भणविधानादेव[मिव] निष्क्रमणसिद्धेः ।

आदित्येभ्योऽनुब्रूहीति ॥१२॥ निष्क्रमणानन्तरमध्वर्युरादि'हीत्येवं मैत्रावरुणं प्रत्याह · तद्धितनिर्देशाददितेरादित्यस्य वात्र देवतात्वमिति संदेहनिरासार्थमेतदुक्तम् आदि'हीति । अथवा अन्वारब्धऽइत्यस्यानेनैव सम्बन्धः अन्वारब्ध ऽआदि'हीति · ततश्च निष्क्रमणानन्तरमन्वारम्भः कार्य इति विशेषः · मानवसूत्रे अत्रैवान्वारम्भो विहितः यजमानोऽन्वारभतऽआदित्येभ्यः प्रियेभ्य इत्यादि ।

प्रैषानुवाचनयोरन्यतरस्मिन्नाह प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो मह स्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्य इति (४.३.५.२०) ॥१३॥ आदित्येभ्यः प्रेष्येति प्रैषे वा आदित्येभ्योऽनुब्रूहीत्यनुवाचने वा इदमाह प्रियेभ्य इत्यादिकम् · अत्र प्रेष्यानुब्रूहीत्येतयोः क्रियापदयोः प्रागेव प्रियेभ्य इत्यादीनामुच्चारणं कार्यमिति कर्कः · कठमैत्रसूत्रयोरेवमेव पठितमस्ति · अनेकयजमानके मुख्यस्यैव हविर्धाने प्रवेशनमन्वारम्भश्च तस्यैव ।

हुत्वा प्रतिप्रस्थात्रे प्रयच्छति शेषौ ॥ १४॥ वषट्कारे आदित्यग्रहं हुत्वा शेषौ प्रतिच्छति · शेषाविति आदित्यग्रहशेषमादित्यस्थालीशेषं च · अत एव सशेषस्य होमः · ग्रहणकाले च स्थाल्यां शेषो रक्षणीय इति गम्यते ।

अत्र सर्पणमादित्यग्रहस्य प्राक्तृतीयसवनश्रुतेः ॥ १५॥ अत्रावसरे आदित्यग्रहहोमानन्तरं सर्पणं भवति · यत आदित्यग्रहः तृतीयसवनात्प्राक् श्रूयते (४. ३. ५. २) सꣳस्थितेऽजुहवुरिति · हेतुग्रहणं तृतीयसवनादिसंसूचनार्थम् ॥ ॥ चतुर्थी कण्डिका ॥ ४॥

आग्रायणमादायासिञ्चति पवित्रेऽधिपूतभृतं प्रतिप्रस्थाता च सꣳस्रवावाधवनीयादुन्नेतोदञ्चनेन चमसेन वा तत आग्रायणं गृह्णाति ॥ १॥ आग्रयणस्थालीस्थं सोमं पात्रान्तरे कृतं हस्तेन गृहीत्वा अधिभृतं पूतभृत उपरि पवित्रे आसिंचति अध्वर्युरेव निनयति सव्येन हस्तेन · तथा प्रतिप्रस्थाता च संस्रवौ आदित्यग्रहाग्र्यस्थालीशेषौ पवित्रे आसिंचति · तथा उन्नेता आधवनीयात्सोमं गृहीत्वा उदञ्चनेन वा आसिंचति पवित्रे एव · एवं चतस्रो धारा भवन्ति · ततस्ताभ्यश्चतसृभ्यो धाराभ्योऽध्वर्युर्दक्षिणेनाग्रयणस्थाल्यां आगृह्णाति ये देवास इत्यनेनैव (७. १३) प्रातःसवनवदेवासादनान्तम् (१. ६. १४) · अध्वर्युर्दक्षिणेनाग्रयणस्थालीं गृह्णाति सव्येनाग्रयणं निनयति । अत्र चायं क्रमः · पूर्वमादित्यग्रह[ग्रहणा]म् · ततो लोकद्वारीयगानं यजमान आहवनीयमपरेणोदङ्मुख उपविष्टः करोति · ततः सर्पणं सर्वेषां धिष्ण्योपस्थानादि धिष्ण्याभिमन्त्रणान्तम् सदोऽभिमर्शनादि वा धिष्ण्योपस्थानान्तम् · ततः प्रतिहर्ता पवित्रेण पूतभृतं संमार्ष्टि · तत उद्गातारः पूतभृत उपर्युदग्दशं पवित्रं वितत्य धारयेयुः · तत उक्तविधिना आग्रयणग्रहणं सादनान्तम् ।

उक्थ्यं चोत्तरेषैकया ॥ २॥ उत्तरेषु उक्थ्यादिषु पञ्चसु क्रतुषु एकया धारया उक्थ्यस्थाल्यामुक्थ्यं गृह्णाति प्रातःसवनवदेव ।

पूतभृत्याशिरमासिञ्चत्याशीर्मऽऊर्जमुत सुप्रजास्त्वमिषं दधातु द्रविणꣳ सुवर्चसम् संजयन्क्षेत्राणि सहसाहमिन्द्र कृण्वानोऽन्यानधरान्त्सपत्नानिति[1] ॥ ३॥

---

1) See Ath. २. २९. ३. सजयं A.

ततोऽध्वर्युः पूतिं आशिरं दधि निनयति । अग्नीदाऽनयेति (३. ११) प्रेषितेनाग्नीधा विनीतं मथितं यद्दधि तदाशिरमित्युच्यते ।

अदस्मै नर इत्येनमवेक्षते (८.५) पत्नी ॥४॥ एनं पूतभृतम् शाखान्तरोपदेशात् · सत्त्वाद्धीनादावेकैव पत्नी इतराभिरन्वारब्धा सत्यवेक्षते न चोक्तः प्रकृतावप्येनेकपत्नीकेऽसमवेतत्वात्

समन्वारब्धनिष्क्रमणादि करोति माध्यन्दिनवत् ॥५॥ यादृशं माध्यन्दिने सवनऽउक्तम् क्षमऽमणम् विप्रुड्ढोमः हुत्वा वा समन्वारम्भः उदग्गमनम् अनुदेहीयाः सर्पन्त्यार्भवपवमानमिति मानवे चाबाले तृणप्रासनम् सदसि पवमानोपाकरणम् स्तोत्रान्ते अग्नीदग्नीनिति प्रेषः (१. १६) । अत्र प्रेषे विशेषमाह ·

पशौ संवदस्वेत्युपचयस्थाने ॥६॥ माध्यन्दिने हि प्रतिप्रस्थातरित्येतस्मात्पदात्परो दधिघर्मायेत्यादिः (१. १३) प्रेषोपचय उक्तः · अत्र तस्य स्थाने पशौऽदस्वेति प्रयोज्यम् तेन प्रतिप्रस्थातः पशौ संवदस्वेत्येवं प्रेषः · अनेकपशुषु पश्वोः संवदस्व पशुषु संवदस्वेति विशेषो यथास्वं द्विबहुत्वयोः ।

प्रातःसवनप्रभृत्या संवादाहुतेः शमित्रनुशासनप्रभृतीडान्तं कृत्वा पुरोडाशादि चेडाभक्षात् ॥७॥ अथ सवनीयः पशुः प्रातःसवनादारभ्य आऽदात् यत्वा पृह्णादिति (६. ८. १) संवादं यावत् श्रप्यते स प्रातःसवनऽऽलप्यमाण उपशेतऽइति श्रवणात् (४. २. ५. १३) · अतः कारणादत्रावसरे शमिऽभृति यत्वा पृह्णादित्येतस्माद्वितीयाच्छमित्रनुशासनादारभ्य पश्विडान्तं कृत्वा तन्मार्जनान्ते पुरोऽदि सवनीयपुरोडोशासादनादि च आ इडाऽन्नात् आग्नीध्रे हविर्यज्ञऽअन्तीत्येतत्पर्यन्तं (१. १२. १६) कुर्यात् · यद्यत्र शमित्रनुशासनादि न क्रियते तदा आ तृतीयसवनाच्छ्रपणं पशोः श्रुतमस्ति तत्कृतं न स्यात् अत आ तृतीऽवनाच्छ्रपणश्रुतेरत्र शमित्रनुशासनादि कर्तव्यम् · द्वे ह्यत्रानुशासने (६. ८. १) त्रिः प्रच्यावयतादित्येकम् यत्वा पृह्णादिति द्वितीयम् तत्र प्रथममर्थात्प्रातःसवनऽएव कृतम् इह तु द्वितीयं शमित्रनुशासनादि कर्तव्यम् तत्र च यत्वा पृह्णादिति प्रतिप्रस्थाता करोति वचनात् · ततो जुह्वा पृषदाज्यमादाय शृतऽ हविरिति च · अभिघारणमध्वर्योः । पुरोडाऽडाभक्षादित्यत्र विशेषमाह ·

चमसैरेव ॥ ८॥ अत्र शुक्रामन्थिनोरभावाच्चम॰रेव केवलैः प्रस्थितयागः कर्तव्यः। प्रैषेऽपि विशेषमाह ·

होतृचमसं गृहीत्वाश्राव्याह तृतीयस्य सवनस्यऽऋभुमतो विभुमतो वाजवतो बृहस्पतिमतो विश्वदेव्यावतस्तीव्राँ३ऽआशीर्वत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति ॥ ९॥ अध्वर्युर्होतृ॰वा यजतिदेशेऽवस्थायाश्राव्याह तृतीयस्येत्यादिना मैत्रावरुणं प्रेष्यति · याज्यान्ते च तूष्णीं जुहोति चमसाध्वर्यवश्च तमनु सर्वाश्चमसान्वषट्कारानुवषट्कारयोर्जुह्वति। तत उपस्पृश्य प्रैतु होतुश्चमस इत्यादि प्रैषः (९.११.३) · अत्र प्रैषे विशेषमाह ·

आशीर्वत इति शुक्रस्थाने ॥ १०॥ शुक्रस्याभ्युन्नयधमित्यत्र प्रैषे शुक्रपदस्य स्थाने आशीर्वतोऽभ्यु॰धमित्येवमाशी॰त इति पदं प्रयोज्यम् शाखान्तरात्। अस्मिन्नेवातिदेशे विशेषमाह ·

प्रागिडाभक्षाद्धविर्धाने यथास्वं चमसेषूपास्यन्ति पुरोडाशमात्रा अनुदकाः पिण्डपितृयज्ञवद्दानप्रभृति प्रागवघ्राणात् ॥ ११॥ सवनीयेडा॰क्षात्प्राक् च॰षु ह॰ने[1] निहितेषु हविर्धानमध्ये य॰स्वं चमसेषु पुरो॰मात्राः पुरोडाशस्य सूक्ष्मा अवयवाः[2] पि॰वद्दपा॰न्ति उप चमससमीपे अस्यन्ति क्षिपन्ति · शाखान्तराच्चमसेभ्यः पश्चात् · किंलक्षणाः अनु॰काः प्रत्यवनेजनपरिषिचनवर्जिताः। तत्र दान॰भृति पिण्डदानादारभ्याव॰णात्प्राक् सर्वं पि॰वद्भवति · तत्र दान॰भृतीत्यनेन रेखोल्मुकपूर्वावनेजनसकृदाच्छिन्नास्तरणानामभावो गम्यते · अनु॰का इत्यनेन प्रत्यवनेजननिषेचनयोर्निषेधः शेषं तु भवति नीवीकरणम् गोत्रनामभ्यां मात्राणां दानम् अत्र पितर इति जपः उदङ्मुखावृत्त्या तमनादासनम् (४.१.१३) आवृत्यामीमदन्तेति[3] जपः अञ्जलिकरणम् सूत्रदानम् (४.१.१६) इडायां प्रत्यवधानमिति। मार्गवे प्राचीनावीतिनः पुरोडाशपिण्डानणुमिश्रानत्र पितर इति पश्चात्प्रतिचमसं त्रींस्त्रींश्चमसेषूपास्यन्ति होतृचमसेऽध्वर्युर्हविर्भुक्ष्ण[4]ऽइति। षोडशानामप्यृत्विजां [स]यजमानानामयं विधिः स्प[ष्ट] दृष्टः · यथास्वं चमसे[षु] इत्युपलक्षणाम् तेन येषां चमसा न सन्ति ते स्वसंनिहितचमसेषु उपास्यन्ति · तद्यथा अध्वर्युप्र-

१) हविर्धानमध्ये A. २) Thus A. ३) प्रत्यमी॰ A. ४) हवि भुक्त A.

तिप्रस्थात्रुन्नेतारो नेष्टृचमसे नेष्टा च सामगाश्चवार उद्गातृचमसे ग्रावस्तुद्धो-तृचमसे · इति सर्वं[1] पुरोडाशं यजमानसंख्यया विभज्यैकैकं भागं पुनः सप्तदशधा विभज्य पूर्वं गृहपतेः पितॄणां सर्वैरग्निष्टोमवत्पिण्डदानं कर्तव्यम् · ततो द्वितीयं भागमादाय सप्तदशधा विभज्य ब्रह्मणः पितृभ्यः सर्वैः पिण्ड[दा]नं कर्तव्यम् अयं तु विशेषः ब्रह्मा यजमानत्वेन गृहपतिचमसे ब्रह्मत्वकर्तृत्वा[च्च] ब्रह्मचमसे इति · एकाधिकद्वित्रादिगृहपतिपक्षे पूर्वं सर्वगृहपतिपितॄणां दानम् ततो ब्रह्मा-दिपितॄणामिति · एवमेव सर्वैश्चमसिभिः स्वचमसे यजमानचमसे च पिण्डदानं कर्तव्यम् । इदानीमिदं विचार्यते · किमृत्विग्भिः स्वस्वपितृभ्यो देया उत यजमा-नपितृभ्य इति · तत्राविशेषात्सम्बन्धिशब्दाच्च[2] स्वपितृभ्य इति प्राप्तऽआह ·

यजमानपितृभ्यो वा तस्य फलाधिकारात् ॥१२॥ वावधारणे · यजम्भ्य एव देयम् नऽर्त्विक्पितृभ्यः · कुतः तस्य यजमानस्य फऽरात् तदीयं हि यागावशिष्टं द्रव्यमत्र त्यज्यते ।

भक्षयित्वेडामुपांश्वन्तर्यामपात्रयोरन्यतरेण सावित्रग्रहणं वाममद्येति (८. ६) ॥१३॥ सवनीयपुरोडाशं भक्षऽत्वा इडाग्रहणोपलक्षितं सवनीयसम्बन्धि प्रतिपत्तिकर्मजातं समाप्य तत उपांश्वऽत्रयोर्मध्ये अन्यऽणा आग्रयणात् साऽणां क-रोति परिमार्जनम् सादनाभावः · अत्र यज्ञपती भगायेति द्वियजमानकऽऊहः यज्ञपतीन्भगायेति बहुषु । अत्रायं पदार्थक्रमः · अग्नीदग्नीनिति प्रैषान्ते प्रतिप्रस्था-तुर्यक्षा पृक्षादित्यादि संवादान्तम् · हृदयाभिघारणाद्यध्वर्योः · पश्विडामार्जनान्ते कृते सवनीयपुरोडाशासादनादि होतृधिष्ण्ये इडानिधानान्तम् अत्र स्विष्टकृदनन्तरं संच-राभ्युक्षणमिति विशेषः · ततः पाणिप्रक्षालनम् उन्नीयमानप्रैषः · पूतभृत एव दशसु चमसेषून्नयनम् · शुक्राभावादुपस्तरणाभिघारणे न भवतः · अनुवचनान्ते यजमानस्याछिन्नस्येति जपः · आश्राव्य तृतीयस्येत्यादिप्रैषः : ततोऽध्वर्युश्चमसाध्वर्य-वश्च वषट्कारानुवषट्कारयोर्जुह्वति · प्रशास्त्रादिचमसानामनुवषट्कारे होमाभाव इति विशेषः · इदमिन्द्रायेदमग्नयऽइति त्यागौ · प्रैतु होतुश्चमस इति प्रैषः · चतुर्णां सदसि स्थापनम् · प्रशास्तर्यजेत्यादि अग्नीध्यजेत्यन्तम् · तत्र प्रशास्तृचमसयागे

---

1) ? इति सर्वे A. 2) तत्रविऽशब्दोच A.

इदं मित्रावरुणाभ्यम् ब्रह्मणः इन्द्राय पोतुर्मरुद्भ्यः नेष्टुस्त्वष्ट्रे अच्छावाकस्येन्द्राविष्णुभ्याम् अग्नीध इदमग्नय इति · अनुवषट्कारेषु सर्वत्राग्नय इति · तृम्पन्त्विति जपः · होतुरग्रे उपवेशनम् · होतुरिडासमर्पणादि मयीदमिति जपान्तम् · सवनप्रार्थना · ततस्तु शुक्रामन्थिशेषवर्जितं प्रातःसवनवदेव निर्विशेषं प्रस्थितयागनिमित्तं पुनरभ्युन्नीतयागनिमित्तं चमसभक्षणम् · चमसानामसर्वभक्षितानामाप्यायनम् हविर्धानमध्ये निधानम् · ततः पिण्डदानं यथोक्तम् · तत इडाभक्षणं हविर्यज्ञविन्नामाग्नीध्रे यजमानस्य हविःशेषभक्षणम् · पत्न्या हविष्यस्याशनं पत्नीशालायाम् पत्नी हविष्यं भुङ्क्त इति कठसूत्रेऽत्रापि सूत्रकरणात् · ततो मार्जनम् · पवित्रप्रतिपत्तिः · भागपरिहारः · केवलायाः शाखायाः आहवनीये प्रक्षेपः · जुहोमि त्वेति स्वयमेवाध्वर्योरुपवेषहोमः · दक्षिणाग्नौ केवला पिष्टलेपाहुतिः पिष्टलेपहोमपक्षे केवलाज्यहोमपक्षे तु नेदानीम् · प्रणीताविमोकः · राक्षसभागः · भागवीक्षणं भागप्राशनं च · ततः पाणी प्रक्षाल्य सावित्रग्रहणादि ।

कालो पात्नीवतमितरेण ॥१४॥ पात्नीवतस्य ग्रहणकाले उपांश्वन्तर्यामपात्रयोर्मध्ये येन सावित्रो गृहीतो भवति तस्मादितरेणान्येन पात्रेण पात्नीवतं गृह्णाति ॥ ॥ पञ्चमी कण्डिका ॥५॥

देवाय सवित्रेऽनुवाचयति ॥१॥ अनुवाचने प्रेरयति · सर्वहुतश्चायं कर्तव्यः · अनुवषट्कारोऽपि न भवति श्रुतौ (४. ४. १. ७) निषेधात् ।

अभक्षितेन महावैश्वदेवग्रहणमुपयामगृहीतोऽसि सुशर्मासीति. (८. ८) ॥२॥ अन्तेन तेनैव सावित्रग्रहपात्रेणैव पूतभृतः सकाशात् महावैश्वस्य ग्रहस्य ग्रहणं करोत्यध्वर्युरेव ।

होता शंसति ॥३॥ ग्रहणानन्तरं परिमृज्य प्रदक्षिणावृत्तीतरथावृत्ती कृत्वा ग्रहमासाद्य होतुरग्रे गत्वा प्राङुपविशति (४. ४. १. १४) · ततो होताध्वर्यो शोंसावेत्यामन्त्र्य महावैश्वदेवस्य शस्त्रं शंसति अध्वर्युरावृत्य प्रतिगृणाति । अस्मिन्नेव शस्त्रे शस्यमाने विशेषमाह ·

एकया च दशभिश्चेति (२७. ३३)[1] शस्यमाने द्विदेवत्यानि प्रतिप्रस्थाता प्रक्षाल्य

---

1) See ४. ४. १. १५. and Çânkhây. ८. ३. १.

खरे निदधाति ॥ ४॥ एकया चेत्यस्मिन्मन्त्रे होत्रा शंसने प्रतिगृहीते द्विदेवत्य-ग्रहपात्राणि मार्जालीये प्रक्षाल्य खरे स्वस्थाने सादयति ।

प्रद्यावा यज्ञैरित्येतासु[1] मदामोदैवेति त्रिः प्रतिगरः ॥ ५॥ एतासु ऋक्षु पादशः शस्यमानासु तिसृष्वपि मध्यावसानेषु यत्रांत्रिमदददिति (४. ३. २. ११) श्रुतत्वात् ।

स्वादुष्किलीयासु[2] चेच्छन् ॥ ६॥ प्रसङ्गादाह · आग्निमारुतशस्त्रमध्ये स्वादुषु ऋक्षु शस्यमानासु तिसृणामर्धर्चेषु इच्छन्मदामोदैवेति प्रतिगृणाति शाखान्तरात् ।

आ पात्रप्रक्षालनात्कृत्वा सौम्येन चरति ॥ ७॥ शस्त्रान्ते ओ३मिति प्रतिगीर्य प्रदक्षिणातद्विपरीतावृत्ती कृत्वा ग्रहमादायाश्राव्योक्थशा यज्ञ सोमस्येति प्रेष्यति · ततो वषट्कारानुवषट्कारयोश्चमसान्कम्पयित्वा सदसि नयन्ति चमसिनश्च सर्व-भक्षान्भक्षयन्ति · ततो ग्रहपात्रस्य चमसानां च प्रक्षालनं कृत्वा सौम्येन चरुणा चरति · तस्यासादनालम्भावत्राध्वर्युणा कार्यौ प्राणदानं त्वग्नीधा कृतमिति ।

आज्येनोभयतः परियजति ॥ ८॥ सौम्ययागमुभयतः पुरस्तादुपरिष्टाच्च आज्येन यजति · तत्र याज्यागतमन्त्रवर्णात्पूर्वस्याग्निर्देवता उत्तरस्य विष्णुरिति ।

अन्यतरतो वा ॥ ९॥ पुरस्ताद्वोपरिष्टाद्वा · तत्र मन्त्रवर्णादग्नाविष्णू देवता ।

घृतस्य यजेत्याह घृतशब्द उपांशु ॥ १०॥ तत्र घृतयागे घृतस्य यजेति प्रैषमाह तत्रापि घृतांशु प्रयोज्यः · अथ चतुर्गृहीतेनीति श्रुतत्वात् (४. ४. २. ४ ६) अत्रा-श्रावणादिः पुनर्ग्रहणादनुवाक्या[ ]देवतापदोच्चारणादि सर्वं परिसंख्यायते · अनयोश्च परियागयोराहवनीययजतित्वात्[3] (१. ८. ४०) ध्रुवायाश्चतुर्गृहीतमवदायानुष्ठानम् · द्रव्योच्चारणं तस्योपांशुप्रयोगश्च वचनात् उपांशुयागविकारत्वेन देवताया एवो-पांशुत्वं प्राप्नोति न द्रव्यवाचिपदस्य ।

सौम्यस्य यजेति सौम्येन चरन् ॥ ११॥ सौम्येन चरुणा चरन् सौम्यस्याह · अत्रापि यथोक्तमेव कुर्यात् नानुवाक्या[मनुब्रूया]दिति · कुतः नानुवाहेति प्रतिषेधात् (४. ४. २. ३) । चोदकप्राप्त्या सौम्यस्य स्विष्टकृदादिप्राप्तावाह ·

यावदुक्तं सौम्यस्य पुनर्ग्रहणात् ॥ १२॥ सौम्यस्य चरोः यावदुक्तं तावदेव स्यात् नाधिकं चोदकप्राप्तं किंचिदाज्यभागस्विष्टकृदिडादिकम् · कुतः पुनर्ग्रहणात्

---

1) Riks. १. १५९. १-३. Çânkh. ८. ३. ९. 2) Riks. ६. ४७. १-३. Çânkh. ८. ६. १४. 3) °या-गेयेरा° A.

प्राशानमिवाज्योपस्तरणादीनां पुनर्ग्रहणात् · अतश्च शेषकार्याणामप्यभावः · व्यूहने तु वचनात्सौम्यस्योच्चारणमिति ।

आज्यमासिच्योद्गात्रे सौम्यं प्रयच्छति ॥ १३ ॥ सौम्ययागानन्तरं वैकल्पिकघृतयागानन्तरं वा सौम्यचरौ लौकिकमा[ज्यमा]सिच्य घृतं निनीय सदसि गत्वा होत्रे प्रदर्श्य तत उद्गात्रे सौम्यं चरुं समर्पयति ।

चतुर्गृहीतं प्रचरण्या धिष्ण्येषु जुहोति यथान्युप्तं प्रभावयञ्छलाकान्प्रदीप्य-प्रदीप्य विभूरसीति (५. ३१) प्रतिमन्त्रम् ॥ १४ ॥ आज्यस्थाल्याश्चतुर्गृहीतमाज्यं प्रचरण्या स्रुचा धि°षु अध्वर्युर्जु°र्ति · य°प्तं निवापक्रमेण प्र°यन् तदेव चतुर्गृहीतं विभज्य सर्वेषु धिष्ण्येषु प्रापयन् · शाला°दीप्य प्रज्वाल्य शलाकानां समूहः शालाकाः तान् शा°कान् बहुवचनादेकैकस्मिन्धिष्ण्ये त्रीन् । मानवे दर्भमुष्टीनष्टौ शलाकोल्मुकानकृत्वा प्रचरण्यामष्टगृहीतेनाध्यधि धिष्ण्यान्ज्वलतो[1] ध्रियमाणान्प्रत्यङासीन उपस्थानिर्व्याघारयतीति[2] · काठके च शलाकामुष्टीन्निहितानादीप्य[3] विहरति यथापूर्वं जुह्वामष्टगृहीतं धिष्ण्येषु जुहोति प्रत्यङ्ङासीनो विभवे प्रवाहणाय स्वाहेत्यादीति · तेन[4] सदसः पूर्वद्वारेणैव प्रविश्य प्रत्यङ्मुखो धिष्ण्यान्व्याघारयेत् · आग्नीध्रीयमार्जालीययोश्चैवमेव ।

अग्नीध्रीये पुनः पश्चादिहन् ॥ १५ ॥ अध्वर्युरिहन् आ°ध्ये पुनरभिघारयेत् · कदा पश्चात् सर्वधिष्ण्यव्याघारणानन्तरम् · तच्च तूष्णीमेव मन्त्रस्यानुक्तत्वात् काण्वानां समाम्नायत्वाच्च ।

उपयामगृहीतोऽसि बृहस्पतिसुतस्येति (८. १) प्रतिप्रस्थाता पात्नीवतं गृह्णाति ॥ १६ ॥ धिष्ण्यव्याघारणासमकालमेव[5] प्रति°ता हविर्धानं प्रविश्याग्रयणादुपांशुपात्रेणान्तर्यामपात्रेण वा पात्नी°ह्णाति येन पात्रेणानयोर्मध्ये पूर्वं सावित्रो गृहीतो न भवति (५. १३) तेन गृह्णातीत्यर्थः ।

प्रचरणीशेषेण श्रीणात्येनमहं परस्तादिति (८. १) ॥ १७ ॥ प्रतिप्रस्थाता गृहीत्वानासादितमेव धारयित्वा हविर्धानस्य पूर्वद्वारे उपविष्टो भवति अध-

---

१) ?? मुष्टिंद्गाष्ठान्वल्कावे प्रचरण्यम°धिष्टांजलंतो A. २) ? नैव्याघा° A. ३) ? शालाकामुष्टिनं निहितादादिप्य A. ४) ? °त्यादिति न A. ५) °ष्ययान्व्याघा° A.

र्युस्तु आगत्य प्रचरणेण आज्येन पात्नीवतं तृणेऽअन्तर्धाय श्रीणाति · वचनाद्ग्रहणमात्रे प्रतिप्रस्थाता श्रयणादिकं त्वध्वर्युरेव करोति समाख्यानात् ।

अग्नीत्पात्नीवतस्य यजेत्याह ॥ १८ ॥ ततोऽध्वर्युः प्रतिप्रस्थातृहस्ताद्ग्रहमादाय परिमृज्यानासाद्यैवातिक्रम्याश्राव्य अग्नीत्पात्नेति प्रैषमाह · अग्नीचोपांशु याज्यां पठति[1] शाङ्खायनवचनात् (८. ५. १) · प्रसन्नो हूयतऽइति मानवे ।

अग्नाइइ पत्नीवन्नित्युत्तरार्धे (८. १०) जुहोति ॥ १९ ॥ अध्वर्युः पात्नीवतं ग्रहमग्नेरुत्तरार्धे उत्तरभागे जुहोति · इदमग्नये पत्नीवतऽइति त्यागः · सशेषहोमः नात्रानुवषट्कारः ।

प्रेष्यति चाग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोद्गात्रा संख्यापयोन्नेतर्होतुश्चमसमनून्नय सोमं मातिरीरिच इति (४. ४. २. १७) ॥ २० ॥ ततोऽध्वर्युः प्रेष्यति · चकारोऽनुक्तस्य समुच्चयार्थः[2] यद्ब्राह्मणे विहितमुपहवादि तच्च करोति · तच्च पूर्वतरम् तथा श्रुतत्वात् (४. ४. २. १६ १७) आहरत्यध्वर्युरग्नीधेऽष्टोमः स्यादिति · ततश्च पूर्वमग्नीधे भक्षहरणम् अग्नीधे पात्रसमर्पणम् · अग्नीदुपह्वयस्वेति प्रश्नः · उपहूत इत्युक्त्वा अध्वर्यऽउप मा ह्वयस्वेत्यग्नीदध्वर्युं प्रत्याह उपहूत इत्युभये · ततोऽध्वर्युराग्नीध्रे स्थितऽएव प्रेष्यति अग्नीन्नेष्टुरित्यादिकम् त्रय एते प्रैषाः प्रेष्यपुरुषभेदात् अतो विभज्य सावसानं प्रयोगः अग्नीदिति प्रथमः नेष्टरिति द्वितीयः उन्नेतरिति तृतीयः ।

प्रभावयेत्युक्थ्यादिषु ॥ २१ ॥ तेषु उक्थ्यषोडश्यतिरात्रवाजपेयाप्तोर्यामेषु सोमं प्रभावयेति (४. ४. २. १८) प्रैषो भवति · न तु सोमं मातिरीरिच इति स तु अग्निष्टोमऽएव । इदमिदानीं चिन्त्यते · किं पत्नीवच्छेषभक्षणमाग्नीध्रे उत सदसि · तत्र पूर्वपक्षमाह ·

आग्नीध्रे भक्षणं वषट्कारोपह्वानाभ्याम् ॥ २२ ॥ पात्नीवतशेषस्य भक्षणमाग्नीध्रे स्यात् · कस्मात् वषट्कारात् उपह्वानाच्च · वषट्कारो ह्याग्नीध्रे कृतः अतस्तन्निमित्तं भक्षणं तत्रैव युज्यते · उपह्वानमप्याग्नीध्रऽएव कृतम् तदपि भक्षार्थं भक्षदेशऽएव दृष्टमित्याग्नीध्रऽएव भक्षणमिति पूर्वपक्षः · अत एव सूत्रादुपह्वानमाग्नीध्रे क्रियतऽइति गम्यते ।

---

1) अग्निष्टोऽऽप्यापाठति A. 2) ? क्तस्य मुच्चार्य A.

सपात्र आसीदति नेष्टुरुपस्थम् ॥ २३ ॥ अग्नीत्सपात्रो नेष्टुरुत्सङ्गमुपविशति सदोमध्ये गत्वा (४. ४. २. १८)। सिद्धान्तमाह ·

अत्र वा भक्षणं पात्रहरणसामर्थ्यात् ॥ २४ ॥ वावधारणे · अत्रैव सदस्येव भक्षणं भवति यत्राग्नीन्नेष्टुरुपस्थमुपविष्टस्तत्रैवेत्यर्थः · कुतः पार्थ्यात् सदसि पात्रहरणं पात्रनयनं तदेव संगतार्थं दृष्टार्थं भवति यदि तत्र भक्षः क्रियते इतरथादृष्टार्थता स्यात्।

अग्नीत्प्रक्षाल्य पात्रं खरे करोति ॥ २५ ॥ अध्वर्य्वग्नीधोर्भक्षणानन्तरं तत्पात्नीवतपात्रमग्नीन्मार्जालीये प्रक्षाल्य खरे स्थापयति ॥ ॥ षष्ठी कण्डिका ॥ ६ ॥

यज्ञायज्ञियं स्तोत्रमुपाकरोति होतृचमसमुपस्पृश्य ॥ १ ॥ उन्नेतरुन्नयेति (६. २०) प्रेषितः उन्नेता होत्रादिक्रमेण चमसानुत्तरवेदिमपरेण निधाय तेषु पूतभृतः सोमं विभज्य सर्वमुन्नयति होतृचमसे तु स्वल्पम् तस्मिन्ध्रुवनिनयनस्य वक्ष्यमाणत्वात् · काठके होतृचमसमुख्यान्सर्वं सोममुन्नयत्याग्रयणाध्रुववर्जमल्पं होतृचमसे स्तोत्रमुपाकरोतीति होतृचमसे ध्रुवस्यावकाशं[1] कृत्वेति · मानवे ततोऽध्वर्युर्होतृचमसे सोमं[2] तृणाभ्यामुपस्पृश्य पुरस्ताज्जपानन्तरं यज्ञायज्ञियं स्तोत्रमुपाकरोति।

प्रोर्णुते चेद्धनुद्गातृवत् ॥ २ ॥ चकाराद्यज्ञायज्ञियएव स्तोत्रेऽध्वर्युः प्रोर्णुते · तच्च इछन् उद्गातृवत् इछन् लोकवत् · लोकवत्सकर्णकम् उद्गातृवदित्यकर्णकम् · उद्गातृणामपि विप्रतिपत्तिः अशिरस्कं सशिरस्कं चेति · तत्र शिरः कर्णौ चाप्रावृतौ तद्व्यतिरिक्तं सर्वं शरीरमाच्छादनीयमिति जयस्वामिनः अन्ये तु शिरः प्रावृत्य कर्णौ बहिः कुर्वन्तीति · आकर्णप्रावृता इति मानवे आकर्णप्रावृताः सकर्णप्रावृता वेति छन्दोगसूत्रे[3]। अथ इतरा व्याख्या · इछन्प्रोर्णुते न वा यदा प्रोर्णुते तदोद्गातृवदिति[4] प्रोर्णवनस्य विकल्पः।

पत्नीं सदः प्रवेश्यापरेणोत्तरत उपविष्टामुद्गात्रा समीक्षयति प्रजापतिर्वृषासीति (८. १०) ॥ ३ ॥ नेष्टः पत्नीमुदानयेति (६. २०) एवं प्रेषितो नेष्टा पत्नीमपरेण द्वारेण सदः प्रवेश्य उद्गातॄणामुत्तरत उपवेशयति उद्गात्रा सह समीक्षणं कारयति

1) ? काशे A. 2) ? ससोमं A. 3) See Pancav. ८. ७. Anupada २. १२. 4) तदा होतृ॰ A.

पत्न्युद्गातारं समीक्षस्वेत्यध्येषणाया · ततः पत्नी नेष्ट्रा एवमुक्ता सती प्रजाः॰षासीति मन्त्रेणोद्गातारमीक्षते। तथा हि छन्दोगसूत्रम् (ला॰ २.१०. १५-१७) यज्ञायज्ञियस्य हिङ्कारं प्रति॰निनयेदिति अतश्च तृतीये ऊर्वासेके सर्वमुदकं निनयेत्· एवमेव काठकेऽपि।

पान्नेजनीभिरभिषिञ्चति विवृत्य दक्षिणोरुम् ॥४॥ समीक्षणादनन्तरं पा॰नीभिरद्भिः पत्न्यापररात्रे स्वयमेवाहृताभिः पत्नी स्वं दक्षिणमूरुं वि॰त्य वासोऽपनीय विवृतमनाच्छादितं कृत्वाभिषिञ्चति · प्रभुज्य जानुनी प्रत्युह्य वसनान्तान्कमण्डलुनेति[1] काठके ।

उद्गात्रानुज्ञाता गच्छति ॥५॥ पत्नी उद्गात्रीक्षणमूर्वासेकं च करोति · तत्र प्रतिहिङ्कारमीक्षणम् प्रतिनिधनं चोर्वासेकः · एवं पुनः-पुनः कुर्वन्ती[2] यदा उद्गाता गन्तुमनुजानाति तदा उद्गा॰ज्ञाता सती पत्नीशालां गच्छति ।

ईक्षिता वा त्रिः ॥६॥ अथवोद्गात्रा त्रिरीक्षिता सती पत्नीशालां गच्छति · प्रतीक्षणं च मन्त्रभेदः कालभेदात् · ततश्च त्रिरीक्षणम् त्रिर्वारं चोर्वासेकः । सत्त्रे गृहपतिपत्नी सर्वाभिरन्वा[रब्धा सती उद्गात्रीक्षणादिकं करोति] ।

एवा न इन्द्रो मघवेति[3] शस्यमाने ध्रुवं होतृचमसेऽवनयति ध्रुवं ध्रुवेणेति (७.२५) ॥७॥ एवा न इत्यस्मिन्मन्त्रवाक्ये शस्त्रान्ते होत्रा त्रिः श॰ने प्रतिप्रस्थाता ध्रुवं ग्रहं हो॰यति · अध्वर्योः प्रतिगरव्यापृतत्वात्प्रतिप्रस्थातावनयति विरोधात् · मानवे एवा न इत्यपुनरुक्ताया अर्धर्चे[4] प्रतिप्रस्थाता प्रत्यङ्मुखस्तिष्ठन्होतृचमसे ध्रुवमवनयतीति · काठके एवा न इति सकृदुक्तायां होतृचमसे ध्रुवमवनयति प्रत्यङ्ङासीन इति ।

अवनयामि-स्थाने गृह्णामीति वा ॥८॥ ध्रुवं ध्रुवेणेत्यस्मिन्नेव मन्त्रे ।

वैश्वानरं यजमानस्य गृह्णीतश्चेत् ॥९॥ वैश्वानरं च जानन् गृह्णीयादित्युक्तम् (९. ६. २४) · यदि स वै॰रः प्रातःसवने गृ॰तो भव[ति] तदा इदानीं य॰स्य चमसेऽवनयति · तूष्णीमेवावनयनम् मन्त्रोपदेशाभावात् पूर्वस्य च ध्रुवप्रकाशकत्वात् ।

पात्रप्रक्षालनान्तेऽनुयाजाः समिदादि ॥१०॥ आग्नीमारुतशस्त्रान्ते[5] अो३-

---

1) ? वसनांतात् कमंडलुं ने A. 2) ? कुर्वंति A. 3) Riks. 8. १७. २०. Çāṅkhāy. ८. ६. १७. 4) ? इत्यस्या पुनरुक्ता अर्धचे A. 5) Thus A.

मिति प्रतिगीर्य · प्रदक्षिणेतरथावृत्ती न भवतः अग्रहत्वात् · ततोऽध्वर्युर्होतृचमसमादत्ते चमसाध्वर्यवश्चमसान् · आश्राव्योक्थशा यज्ञ सोमानामिति प्रैषः · वषट्कारानुवषट्कारयोर्होमः · इदमग्नीमरुद्भ्य[1] इति त्यागः · नात्रावर्तनम् अग्रहत्वात् · होतृचमसे होत्रध्वर्य्वोर्भक्षणम् · होतुः सर्वेषु चमसेषु वषट्कारनिमित्तं भक्षणम् तेषां च समाख्यानिमित्तम् · सर्वभक्षाश्चमसाः · मार्जालीये पात्रप्रक्षालनम् · पात्रप्रक्षालनान्ते सवनीयपशोः समिदादि समिदाधानस्य आदौ यत उल्मुकसमासस्तदादि तत आरभ्य अनुयाजाः पशुवद्भवन्ति · आग्नीमारुतादूर्ध्वमनुयाजैश्चरन्तीति[2] शाखान्तरात् ।

उक्थ्यविग्रहणमुत्तरेष्विन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामिति (७. २३) ॥११॥ उक्तेषु उक्थ्यादिषु पञ्चसु यज्ञेषु आग्निमारुतस्य[3] पात्रस्य प्रक्षालनान्ते सर्पणपूर्वकमुक्थ्यणां करोति (६. १४. ८-२०) पूर्ववत् इ॰णाभ्यामिति मैत्रावरुणाय इ॰तिभ्यामिति ब्रा॰सिने इ॰ष्णुभ्यामित्यछावाकाय · सर्वान्ते च पात्रप्रक्षालनाद्यनुयाजा इति · यज्ञायज्ञियान्ते सर्पणं छन्दोगसूत्रात् । एवमुक्थ्यसंस्थे विशेष उक्तः अथात्यग्निष्टोमसंस्थे विशेषमाह ·

स्तुतशस्त्रेऽअधिके षोडशी चेत् ॥१२॥ [चेद्यत्यग्निष्टोमसंस्थं कर्तुं षोडशी गृह्यते तदाग्निमारुतस्य पात्रप्रक्षालनान्ते][4] स्तु॰स्त्रे एवाधिके भवतः नान्यत्षोडशिसम्बन्धि[कर्म] उपास्तमयह्रिरण्याश्वादिकम् · अतः[5] शाखान्तरे अत्यग्निष्टोमे स्तोत्रशस्त्रयोः पुनर्ग्रहणमश्वोपस्थानोपास्तमयह्रिरण्योपाकरणमन्त्रादीनां परिसंख्यार्थम् यत एतानि शाखान्तरेऽप्रतिषिद्धानि । यद्यपि चात्रात्यग्निष्टोमग्रहणं न क्रियते तथाप्यत्यग्निष्टोमऽएवैष विशेष इति गम्यते परिशेषात् · षोडश्यादिषु तु विशेषमुपरिष्टाद्वक्ष्यति । षोडशिनमप्यग्निष्टोममतीत्य वर्तत इत्यत्यग्निष्टोम इत्यन्वर्थसंज्ञाविज्ञानादत्यग्निष्टोम इति वक्तुं शक्यते ।

तृतीयसवनेऽप्रसवः ॥१३॥ अप्रसव इति छेदः · प्रातःसवने सर्पणमुक्तम् (६. १४. १३) माध्यन्दिने च (१०. ३. २३) अत इहापि तदाशङ्का प्रतिषिध्यते [तृ॰ने प्रसवो न भवति । अथवा शाखान्तरादेवात्र प्रसवो भवति][6] · शाखान्तरात्

---

१) Thus A. २) Thus A. ३) Thus A. ४) deest A. From Ss. ५) यतः A. ६) from Ss.

तृतीऽने यत्र-यत्र सर्पणामुक्तम् तत्र-तत्र भवतीत्यर्थः · छन्दोगसूत्रे (लाव्या° २. ७. १) उक्थ्यादौ षोडश्यादौ वाजपेयेऽतिरिक्तस्तोत्रेषु प्रतिस्तोत्रमादौ सपर्णमुक्तमस्ति अतस्तथैवानुष्ठेयम् ।

स्रुग्व्यूहनम् अग्नेर्वनस्पतेरिन्द्रस्य वसुमतो रुद्रवत आदित्यवत ऋभुमतो विभुमतो वाजवतो बृहस्पतिमतो विश्वदेव्यावतः सोमस्योज्जितिमित्यग्निर्वनस्पतिरिन्द्रो वसुमान्रुद्रवानादित्यवानृभुमान्विभुमान्वाजवान्बृहस्पतिमान्विश्वदेव्यावान्त्सोमस्तमपनुदन्त्विति ॥ १४॥ अनुयाजान्ते स्रुग्व्यूहनं भवति · तत्राग्नेर्वनस्पतेरुज्जितिमिति जुह्वा व्यूहने मन्त्रः अग्निरित्युपभृतो व्यूहने · शाखान्तरादेवं व्यूहनं सूत्रकृतोपबद्धम् ।

पशुदेवतावनस्पतिभ्यां वा सोमोपदेशादितरासाम् ॥ १५॥ अथवा पशुभ्यामेवोपलक्षितं स्रुग्व्यूहनं कर्तव्यम् अग्नेर्वनस्पतेरुज्जितिमित्येतावन्मात्रमित्यर्थः · कुतः इतरासाम् इन्द्रस्य वसुमत इत्यादीनां सोमांशात् सोमयागे ह्येता देवता उपदिश्यन्ते (९. ४. ८) इन्द्राय त्वा वसुमते रुद्रवतऽइत्यादिना (६. ३२) · सोमयागश्चापूर्वः न च तत्र व्यूहनं प्राप्नोति ।

सर्वा वा सवनीयसौम्यभावात् ॥ १६॥ वाशब्दः पूर्वपक्षनिरासे · सर्वा वा वसुमदादयोऽपि व्यूहनऽउपलक्षणीयाः न पशुदेवतावनस्पतिमात्रम् · कुतः सवनीयत्वात् सवनीयेषु सौम्ये च सन्ति वसुमदादयः · कथम् · सर्वत्र ह्यैन्द्रोऽभिव्यज्यते[१] सर्वऽऐन्द्रा भवन्तीति · ननु च सवनीयेषु हरिवदादिगुणक इन्द्रः इह तु वसुमदादिगुणक इति कथमुच्यते सवनीये वसुमदादीनां सद्भाव इति सत्यम् किं क्रियते वचनादेवंविधं विरुद्धमप्यङ्गीक्रियते निर्वापे हरिवदादिगुणविशिष्ट इन्द्रो यागे च निर्गुणो व्यूहने वसुमदादिगुणक इति नास्ति वचनस्यातिभारः किमिति [न] कुर्याद्वचनमिति · सौम्यचरौ च सोमस्य सद्भावो निःसंदिग्ध एव · यद्यपि सवनीयानां प्रासङ्गिकत्वात् सौम्य[स्य] च यावदुक्तत्वात् व्यूहनं न प्राप्नोत्येव तथापि वचनाद्भवत्येवेति ॥ ॥ सप्तमी कण्डिका ॥७॥

विमुच्य स्रुचौ द्रोणकलशे हारियोजनग्रहणामुपयामगृहीतोऽसि हरिरसीति

१) Thus Ss. युज्यते A.

(८.११) ॥१॥ व्यूहनादि स्रुग्विमोकान्तं निर्विशेषं पाशुकं कृत्वा वेद्यालम्भानन्तरमेव हारियोजनसंज्ञकस्य ग्रहस्य ग्रहणमध्वर्युः करोति · आग्रयणादयं ग्राह्यः सावित्रवर्जमानाग्रयणादिति प्रागुक्तत्वात् (१.५.२१)।

धानाश्चावपति हर्योर्धाना इति (८.११) ॥२॥ हारियोजने ग्रहणं चैतत्।

उन्नेतानुवाचयति मूर्धनि कृत्वा धानासोमेभ्योऽनुब्रूहीत्याश्राव्याह धानासोमान्प्रस्थितान्प्रेष्येति[1] (४.४.३.१) ॥३॥ परिमार्जनेऽध्वर्युणा कृते उन्नेताध्वर्युहस्ताद्द्रोणाकलशमादाय मूर्धन्यूहीति मैत्रावरुणं प्रत्याह · धानासहिताः सोमा धानासोमा इति · मानवे धानाभिः श्रीणात्युन्नेता द्रोणाकलशं शिरस्यवधायेन्द्राय हरिवते धानासोमानामनुब्रूहीत्यनुवाचयति आश्राव्येन्द्राय हरिवते धानासोमान्प्रस्थितान्प्रेष्येति विकटीभूय प्रचरति वषट्कृतानुवषट्कृते जुहोति व्युन्मर्शं हारियोजनं सर्वेऽभक्षयन्तश्शुश्रूषाकारं धानाः संदश्य रय्यै त्वा पोषाय त्वेत्युत्तरवेद्यामुपवपन्तऽइति । इदमिन्द्राय हरिवतऽइति त्यागः।

भक्षं हरेदिहन् ॥४॥ इहन्वषट्कर्तुर्भक्षं रेत् सदसि भक्षणार्थं द्रोणाकलशं नयेत् तद्धैकेऽत्तीति (४.४.३.१०) विहितप्रतिषिद्धत्वाद्विकल्पः।

उत्तरवेदौ वा निधाय विलाभं यस्तेऽश्वसनिरिति (८.१२) प्राणभक्षं भक्षयित्वोत्तरवेदौ निवपन्ति ॥५॥ अथवा उत्तरवेदौ द्रोणाकलशं निधाय विल[भ्यविल]भ्यादायादाय गृहीत्वा-गृहीत्वा सर्वेऽऋत्विजः प्राणयित्वा उत्तरवेदौ ताः कृतावघ्राणा धाना निवपन्ति · तस्मादेतस्मिन्त्सर्वेषामेव भक्ष इति (४.४.३.१०) वाक्यशेषात्सर्वे ऋत्विग्यजमाना भक्षयेयुः अथैतस्य हारियोजनस्य सर्वऽएव लिप्सन्तऽइति शाखान्तराच्च · उत्तरवेदावपि विलाभे सदस्येव प्राणभक्षः · उपहवप्रार्थनं तु उन्नेतुर्होतुः सर्वैः कर्तव्यम् · प्राणभक्षपक्षेऽपि प्राणैरेव भक्षयन्ति नासिकैः प्राणैरेव जिघ्रन्तीत्यर्थः · काठके तु हरिरसीति होतर्युन्नेतर्युपहवमिच्छन्ते सर्वे धाना असम्भिन्दन्तो निर्धीय प्रक्षाल्याचम्योत्तरवेद्यां निवपेयुरिति।

शाकलाधानं देवकृतस्येति (८.१३) प्रतिमन्त्रम् ॥६॥ शाकलानामाधान-

---

[1] त्याश्राव्ये deest A., M. १ too give it only at the margin. [2] ? °व्यून्मर्शं हर्योर्जनं सर्वे भक्ष°संदस्य °षाय त्वान्युत्तरवेद्यामुपवयंते इति A.

माहवनीये कुर्युः । अविशेषात्सर्वे शाखान्तराच्च । मानवे आहवनीये षट् षड्यूपशकलान्यभ्यादधतऽइति [१] । अग्नौ शकलान्यादधतीति [२] काठके अग्निश-ब्देनाहवनीयः परिभाषितः शकलान्येव शाकलानि यथा अथ शाकलैर्जु-होतीति (१४. २. २. ३१) तत्र सूत्रकृता (२६. ६. १२) विकङ्कतशकलैर्जुहोतीत्युक्तम् ।

अपरेण चात्वालं यथास्वं चमसान्पूर्णपात्रानवमृशन्ति हरितकुशानवधाय सं वर्चसेति (८. १४) ॥ ७ ॥ चात्वालादपरस्मिन्प्रदेशे अदूरऽएव होत्रादिक्रमेण उदक्संस्थाः प्रागग्रा दशापि चमसाः स्थाप्यन्ते । एवंविधांस्तांश्चमसान्सर्वे ऋत्विग्य-जमाना यथास्वं पूर्णपात्रान्कृत्वा उदकपूर्णान्कृत्वा तेषामुपरि हरितशानार्द्रान्दर्भान्निधाय मुक्त्वा अवमृशन्ति अभिमृशन्ति चमसमध्ये अधस्तात्स्पर्शं कुर्वन्तीत्यर्थः । यथास्वमिति यो यस्य स्वः स तं तमभिमृशति । येषां चमसा न सन्ति ते पिण्डदानवत् (५. ११) संनिहितपुरुषचमसानभिमृशन्ति नेष्टृचमसमध्वर्यवश्चत्वारः उद्गातृचमसं तत्पु-रुषाः ग्रावस्तुद्धोतृचमसमिति ।

मुखान्यालभन्ते ॥ ८ ॥ ततोऽवमर्शनानन्तरं सर्वे ऋत्विग्यजमानाः तूष्णीमेव स्वमुखान्युपस्पृशन्ते ।

दधिक्राव्ण इत्याग्नीध्रे (२३. ३२) दधिभक्षणम् ॥ ९ ॥ ततः सर्वे ऋत्विजः आग्नीध्रीयस्य मध्ये दधिभक्षणं कुर्वन्ति शाखान्तरात् ।

पत्नीसंयाजाः पशुवत् ॥ १० ॥ तदनन्तरं वेद्यालम्भादि कृत्वा शालाद्वार्ये पशुवत्पत्नीसंयाजा भवन्ति जाघन्येत्यर्थः । सवनीयपुरोडाशानां प्रासङ्गिकत्वात्पशुरेव तन्त्रस्य प्रयोजक इति ज्ञापनार्थमिदं सूत्रम् पूर्वोक्तस्यैव प्रपञ्चो वा ।

समिन्द्र ण इति (८. १५) नव समिष्टयजूंषि जुहोति प्रतिमन्त्रम् ॥ ११ ॥ पत्नी-संयाजेडामार्जनान्ते दक्षिणाग्निहोत्रं च कृत्वोत्तरवेदावागत्य नव समिष्टयजूंषि (४. ४. ४. १) ध्रुवयैव जुहोति । धाता रातिरित्यस्मिन्मन्त्रेऽनेकयजमानके यजमानाभ्यां द्रविणं य-जमानेभ्यो द्रविणमित्येव यथार्थमूहः । तत्र प्रथमे समिष्टयजुषि इदं विश्वेभ्यो देवेभ्य इति त्यागः द्वितीये त्वष्ट्रे तृतीये इदं धात्रे सवित्रे प्रजापतये देवा-याग्नये त्वष्ट्रे विष्णवे च चतुर्थे देवेभ्यः पञ्चमे षष्ठे चाग्नये सप्तमे वाताय

---

१) धतो इति A. २) त्लानाद॰ A.

अष्टमे यज्ञाय नवमे यज्ञपतयऽइति । साभ्यासमिदमेकं कर्म नवसंख्या तु पाशुकी तत्तुल्याभ्युपगमात् तथा च पशुगणे सवनीयपशुविकारत्वान्नवैव भवन्ति · इति कर्कः ।

आसन्द्यौदुम्बर्यौ चात्वाले हरन्ति[1] सोमलिप्तं च ॥१२॥ ततोऽध्वर्य्वादयः समिष्टयजुर्होमानन्तरं बर्हिर्होम[म]कृत्वैव सोमासन्दीम् औदुम्बरीं च सदसो मध्यवर्तीं स्थूणां चात्वालं प्रति हरन्ति[2] सोमलिप्तं च यत्पात्रजातमुलूखलचमसद्रोणकलशस्थालीपूतभृदाधवनीयर्जीषकुम्भ-हविर्धाने-पवित्रग्रावाधिषवणचर्मोदञ्चनपरिप्लवादि तदपि चात्वालं प्रति हरन्ति[3]। अध्वर्युसहकार्यपेक्षं बहुवचनम्[4] ।

कृष्णविषाणामेखले चात्वाले प्रास्यति माहिर्भूरिति (८.२३) ॥१३॥ ततोऽध्वर्युः यजमानसम्बन्धिनीं कृष्णां मेखलां च चात्वाले प्रक्षिपति · मेखलायाः प्रासनऽएवायं मन्त्रो न कृष्णविषाणाया इति पितृभूतिः अनेकयजमानके च भूतं भूतेति यथार्थमूह्यः · केचिदत्रोभयोरपि मन्त्रमाहुः तन्मते च प्रकृतावसमवेतार्थत्वादनेकयजमानकेऽपि नोह्यः ।

प्रतिप्रस्थाता च शङ्कुयोक्त्रे तूष्णीम् ॥१४॥ प्रतिप्रस्थाता पत्न्याः कण्डूयनार्थं यज्ञियवृक्षशङ्कुं दीक्षार्थं योक्त्रं च तूष्णीममन्त्रकमेव चकाराच्चात्वाले प्रास्यति · मेखलया दीक्षापक्षे मेखलामेव समानन्यायात् · अनेकयजमानके सर्वासां मेखलायोक्त्रकृष्णविषाणानां प्रासनं प्रतिपत्तित्वात् ।

उरुं हीति (८.२३) वाचयति ॥१५॥ मेखलाप्रासनानन्तरं चात्वालसमीपे वेदिमध्यऽएव प्राङ्मुखोपविष्टं यजमानमध्वर्युर्वाचयति ।

साम प्रेष्यति गाय ब्रूहीति वा ॥१६॥ वाचनानन्तरं साम गायेत्येवम् साम ब्रूहीत्येवं वा प्रस्तोतारं प्रेष्यति · सामग्रहणं प्रैषस्यैव पूर्वपदविधानार्थम् गायेत्युत्तरपदविधानम् ब्रूहीति वेति श्रुतत्वात् (४.४.५.६) ।

व्यधोदकान्तयोश्च ॥१७॥ एवमेव व्यधे देवयजनावभृथस्थानयोर्मध्ये अर्धमार्गे साम प्रेष्यति · तत उदकान्ते उदकसमीपे च यस्मिन्नुदकेऽवभृथः करिष्यते तत्संनिधौ च तृतीयवारं साम प्रेष्यति ।

---

1) °रति M. 1 °रंति A. 2) °रति A. 3) Thus A. 4) viz. आगच्छन्ति ४.४.५.२.

सर्वे निधनमुपयन्ति ॥१८॥ नि°नं साम्नोऽन्त्यो भागः · तत्सर्वे ऋत्विग्यजमानाः उ°न्ति पठन्तीत्यर्थः ।

आहृतमादायावभृथं गच्छन्ति स्यन्दमानानां स्थावराः ॥१९॥ आसन्द्यौदुम्बरीसोमलिप्तादिकं यच्चात्वालसमीपे आहृतम् तत्सर्वमादाय चात्वालोत्करावन्तरेण निष्क्रम्य पत्नी ऋत्विग्यजमानाः अवभृथसंज्ञं कर्म कर्तुम् स्य°नां वहन्तीनामपां मध्ये याः स्था°राः स्थिराः ह्रदस्था आपस्ताः प्रति यन्ति गच्छन्तीत्यर्थः[1] ।

तदभावेऽन्याः ॥२०॥ पूर्वोक्तगुणविशिष्टानामभावे अन्या काश्चनापो गच्छन्ति।

नमो वरुणायेति (८. २३) वाचयत्यपोऽवक्रमयन् ॥२१॥ उदकसमीपे गत्वा सामगाने कृते बाहुगृहीतं यजमानमुदकमध्ये प्रवेशयन् ।

प्रास्य समिधं चतुर्गृहीतेनाभिजुहोत्यग्नेरनीकमिति (८. २४) ॥२२॥ उदकमध्ये प्रवेशनानन्तरं हस्तगृहीताया एवाज्यस्थाल्याः सकाशाज्जुह्वां चतु°हीतमाज्यं गृहीत्वा परिस्तीर्याप्सु स°धं प्रास्य तां प्रास्तां समिधमभि उपरि जु°ति इदमग्नय ऽइति त्यागः · अथ चतुर्गृहीत°नीकमित्यादिश्रवणात् (४. ४. ५. २२) ।

अपरेण प्रयाजान्बर्हिर्वर्जम् ॥२३॥ आहुतिहोमानन्तरमेव गृहीतेनापरेण चतुर्गृहीतेनाज्येन · सोऽपबर्हिषश्चतुरः प्रयाजान्यजतीति (४. ४. ५. २४) श्रुतेः ।

अप्सु जुहोति ॥२४॥ अत्रावभृथेऽप्स्वाहुतीर्जु°ति आहवनीयापवादोऽयम्।

एककपालेनावदायं चरति ॥२५॥ एक°न वारुणेन पुरोडाशेन · स हि तार्तीयसवनिकैः सवनीयैः सहाग्नीधिवालंकरणान्तो निष्पादितः · अस्य सर्वहुतत्वं प्राप्नोति (१. १. १२) तद्व्यावृत्त्यर्थमुक्तम् अवदायं चरतीति . अत्र चोपस्तारानन्तरं पुरोडाशस्यावदानं खण्डनं कुर्वन्वरुणायानुब्रूहीत्यनुवाचयति ।

ऋजीषस्येच्छन्नवद्येत् ॥२६॥ अत्र वारुणयागे इच्छन् अध्वर्युः ऋ°स्य हिरव°त् · अत्र हैके°कुर्यादिति (४. ४. ५. १६) विहितप्रतिषिद्धत्वात् इच्छन्शब्दो विकल्पार्थः ।

अग्नीवरुणाभ्यां सर्वहुतं शेषम् ॥२७॥ प्रधानयागावशिष्टं सर्वमपि पुरोडाशमग्नी°भ्यामुद्दिश्य स°तं कुर्यात् · स च यागस्तत्स्विष्टकृत्कार्ये (४. ४. ५. १७) वर्तते · अत एव केचिदत्राग्नीवरुणाभ्यां स्विष्टकृद्भ्यामिति स्विष्टकृच्छब्दं प्रयुञ्जते तद-

---

1) sic! the text has गच्छन्ति, not यन्ति.

युक्तम् देवतान्तरे मन्त्रान्तरप्रसङ्गात् यथाश्रुतदेवताक एव होष यागः कामं स्विष्टकृतः कार्ये न च मन्त्र एवाम्नातोऽन्यथाकरणीयः ।

अग्नीषस्य च सकृत्पूर्वे चेत् ॥२८॥ अ॰स्य च सकृदेवावद्यति एकमवदानमवद्यति चेद्यदि पूर्वे प्रधानार्थे अवदाने अग्नीषस्य गृहीते ततः स्विष्टकृदर्थमप्येकमव[द्य]ति नान्यथेत्यर्थः · स यद्यमुत्र॰जुहोतीति (४.४.५.१७) ।

वशऽएतत्कुर्यात् ॥२९॥ वशशब्द इच्छावाची · वशे सति इच्छायां सत्यामेतत् षडाहुतिकमवभृथं कु॰त् । ता वाऽएताः षडाहुतयो भवन्तीति प्रकृत्यैतदादित्यानामिति (४.४.५.१८ १९) · द्वय्यः किलैताः प्रजा बभूवुः · आदित्या ईदृशेनावभृथमीदृशं प्रयुक्तवन्तः · ततश्च वाजसनेयी अध्वर्युरे[वमे]वावभृथं कर्तुमिच्छेद्यावदस्य वश एवमिच्छा स्यात् · यत्कारणं यस्मादादित्यानि आदित्यस्य ऋषेरिमानि वाजसनेयकानि यजूंषि एवंविशिष्टान्वेदवादांश्चाहुः तस्मादेतैर्यजुर्भिः प्रचरन्वाजसनेयी आदित्यानामेव मार्गमन्वियान्नाङ्गिरसां नार्गम् · लघुकर्मविद्याः प्रधानाः षडाहुतिकं च यथोक्तं लघ्वित्यभिप्रायः । अथ पक्षान्तरमाह ·

यजमानोक्तावाज्यभागौ बर्हिर्वर्जं चानुयाजौ ॥३०॥ य॰क्तौ सत्यमेतत्पक्षान्तरं कुर्यात् · पूर्वोक्तं षडाहुतिकमस्त्येव द्वावाज्य॰गौ प्रयाजानन्तरं वरुणायागात्प्राक् ततो ब॰र्जं द्वावनु॰जौ च कार्यौ तौ च वरुणाग्निवरुणयागानन्तरमेव · एवं च दशाहुतयः सम्पद्यन्ते । यद्युऽएनमितरथा॰ एतदङ्गिरसामयनमिति (४.४.५.१९ २०) श्रुतत्वात् · यदि पुनरेनमध्वर्युमितरथा अङ्गिरसामयनं कर्तव्यमिति यजमानो ब्रूयात् तत इतरथा पूर्वोक्तादन्यथा कुर्यात् · कथम् · एतानेव पूर्वोक्तधर्मकानेकेनैव चतुर्गृहीतेन चतुरः प्रयाजानपबर्हिषो यजेत् · ततो द्वौ आज्यभागौ तौ च विशेषानभिधानात्प्राकृताविव ध्रुवाया एवावदाय कार्यौ तदर्थं तु ध्रुवा प्रयोक्तव्या उपस्तरणाभिघारणार्थं च · वरुणं च यजे[दि]ति वर्तते तेनोक्तेनैव पुरोडाशावदानेन · अग्निवरुणौ यजेदुक्तेनैव पुरोडाशशेषेण · द्वावनुयाजौ प्रकृतिवदौपभृतेन · एतद्धुरुतरमङ्गिरसः पुत्रपौत्राणां मनुष्यादीनाम् · अत्रापि च संस्कृतैरेवाज्यपुरोडाशमात्रैरपो गत्वा चतुर्गृहीतं हुत्वा त्रीणि चतुर्गृहीतानि गृहीत्वा तिष्ठन्त एवाङ्गप्रधानसाधारणानग्निसंस्कारानप्सु कुर्वन्तो हस्तधृतैरेवाज्यह-

विर्भिश्चरेयुः · तत्रापि चेध्मसामिधेनीहौत्रार्षेयवरणानि न कुर्यात् शाखान्तरे तदभावस्य स्पष्टत्वात् · एतदङ्गिरसामयनमिति साहचर्यवचनम् यदाज्यभागौ तदानुयाजाववश्यं यथा स्याताम् मा भूत्पृथगाज्यभागयोर्विकल्पः पृथगनुयाजयोः · अतो ऽन्यतरत्कृत्वेत्युत्तरेषां धारानुयाजादीनां पदार्थानामभावं दर्शयति · ततश्च न किंचिदतः परमैष्टिकं करणीयमिति हरिस्वामिनः । कठमैत्रापस्तम्बसूत्रोक्ता अवभृथेष्टिगता विशेषा वरुणप्रघासऽउक्ता (५. ५. ४०) इति नेह पुनरुच्यन्ते ।

अन्यतरत्कृत्वा ॥३१॥ षडाहुतिकं दशाहुतिकं वा ॥ ॥ अष्टमी कण्डिका ॥८॥

समुद्रे तऽइत्यृजीषकुम्भं (८. २५) प्लावयति ॥१॥ अध्वर्युरुदकमध्ये तारयति ।

देवीराप इति (८. २६) विसृज्योपतिष्ठते ॥२॥ आप्लावितं तं मुक्त्वा ।

अवभृथेति (८. २७) मज्जयति ॥३॥ तमेवऽर्जीषकुम्भमप्सु मज्जयति उदकमध्ये ऽधः नीचैः प्रवेशयति ।

कृष्णाजिनान्तं च मा मेद्ध्यं[1]) ह्येष्यद्ग्नेद्ध्यं व्यौषीरिति पुत्रायैनत्प्रदाय वरुणप्रघासवत्स्नानप्रभृत्या समिदाधानात् ॥४॥ कृष्णाजिनस्यान्तं चाप्सु मज्जयति · [समिदाधा]नान्तं वरुणप्रघासवदेव (५. ५. ३०-३५) कुर्यात् अथाभ्यवेत्यऽसमिदसीति (४. ४. ५. २३) समिदाधानान्तस्यात्र श्रुतत्वात् · तत्र विशेषमाह ·

सोमलिप्तं प्रास्यति ॥५॥ स्नानादनन्तरं सोमलिप्तं द्रोणकलशादि अप्सु प्रक्षिपति । वरुणप्रघासवदेव परिहितयोर्दाने (५. ५. ३४) प्राप्तऽआह ·

अदानं पूर्वयोः ॥६॥ इह पूर्वयोर्वाससोरदानम् दानं न भवति · मानवे अवभृथे स्नातावन्योऽन्यस्य पृष्ठं प्रक्षालयतः सोमोपनहनं यजमानः परिधत्ते पर्याणहनं पत्नी तेऽउदवसानीयायामिष्टौ दक्षिणाकालेऽध्वर्यवे ददाति ।

उद्वयमित्युन्नेत्रोन्नीता (२०. २१) आमह्वीयां जपन्तो गच्छन्त्यपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान् किं नूनमस्मान्कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्येति ॥७॥ वासःपरिधानादनन्तरमुद्वयमित्यनेन मन्त्रेणोन्नेत्रा जलमध्याद्बहिर्निष्कासिताः सन्तः ऋत्विग्यजमानाः आमह्वीयामित्येवंसंज्ञकाम् अपामेत्येतामृचं (ऋ० ८. ४८. ३) जपन्तः सर्वे देवयजनं प्रति गच्छन्ति · शाखान्तरादुन्नेतुरुन्नयनम्

---

[1]) मेद्रियं M pr. m. १ sec. m. मेंद्रियं १ pr. m. मैद्ध्यं M sec. m. A text, but मेद्ध्यं schol.

माध्यन्दिनानामपि सत्त्रे लिङ्गमस्ति (१२.१.१.११) तेषां वा उन्नेतोन्मुदेतीति । अत एवोन्नयनोपदेशात्सर्वेऽत्र स्नान्तीति गम्यते · मानवे उन्नेतारं पुरस्कृत्यानपेक्षमाणाः प्रत्यायन्तीति ।

शालाद्वार्यमपरेणास्ते यजमानः कृष्णाजिनमङ्के कृत्वा ॥८॥ चात्वालोत्करावन्तरेण प्रत्यागत्य च वरुणप्रघासवत्समिदाधानान्ते बर्हिर्होमादिसवनीयशेषसमाप्त्यनन्तरं यजमानोऽजिनमुत्सङ्गे कृत्वा शालाद्वारेण उपविशति ।

स्रुवाहुतिं जुहोति मैध्यं[1] इयेध्य७ श्रेध्यमग्निर्दधातु स्वाहेति ॥९॥ शालाद्वार्यस्य पश्चादुपविष्टएव यजमाने अध्वर्युरतिप्रणीते आहवनीये स्रुवेणैवाज्याहुतिं जुहोति मैध्यमिति मन्त्रेण ।

कृष्णाजिनं निधायोदयनीया प्रायणीयावत्[2] ॥१०॥ कृष्णं यत्र क्वचन स्थापयित्वा प्रायणीयावदुदयनीयेष्टिः कर्तव्या · अस्यां च शालाद्वार्य एवाहवनीयः · शालामुखीयऽउदयनीयायां चरन्तीति वचनात् · मानवे निःकाषे प्रायणीयस्योदयनीयमनुनिर्वपति[3] शालामुखीये प्रचरतीति · काठके पत्नीशाले प्रायणीयस्य निष्काषमुदयनीयमभि निर्वपतीति ।

पथ्या स्वस्तिश्चतुर्थी ॥११॥ अत्र उदयनीयायां पथ्या यष्टव्या सोऽग्निमेवपथ्यादितिमित्युदयनीयायामेवंविधस्य क्रमस्य श्रुतत्वात् (४.५.१.४) ।

पात्रप्रोक्षणाद्याज्यासादनात्सवनीयवत्परिव्ययणादि मैत्रावरुणी वशानूबन्ध्या[4] ॥१२॥ उदयनीयायां समाप्तायां मित्रावरुणदेवत्या वशा रिक्ता वन्ध्या गौरनुबन्ध्या कर्तव्या या कदाचिदपि गर्भं न गृह्णाति सा वशोच्यते · तत्र[5] च पात्रप्रोक्षणादारभ्य आज्यासादनान्तं सवनवत् सवनीयपशौ यथा कृतम् तद्वदत्र करोतीत्यर्थः · तेन ब्रह्मणः शालाद्वार्यमतिप्रणीतं वा दक्षिणेनोपवेशनम् अप उपस्पृश्य शालाद्वार्ये परिस्तरणादि आग्नीध्रीये आज्योत्पवनादि ग्रहणान्तम् · तत आज्यान्यादायेत्यादि एकवृत्स्तरणमित्यादि (१.१.३ ४) लभ्यते · तदनन्तरं यूपस्य परिव्ययणादि करोति · सवनीयवदित्याग्नीध्रे उत्पवनम् खरोत्तरार्धेद्वोत्तरवेदे-

1) ? Thus M. १. A., but see at ४. 2) °णीयवत् M. A (text). णीयावत् १ and A in the schol. 3) निःकामे प्रायस्यो° A 4) °नुब° A throughout. 5) ? तथा A.

रिति (८.७.१३ १४)। यद्यप्यत्र पात्र°णादीत्युक्तम् तथापि परिस्तरणं पात्रसंसादनं च पूर्वं कर्तव्यम् ततः प्रोक्षणादि तयोरप्यत्रापेक्षितत्वात् प्रोक्षणग्रहणमुपलक्षणार्थमित्यदोषः। मानवे मैत्रावरुणीं वशामनूबन्ध्यामालभेत यागकालऽउस्रा या इति सम्प्रैष इति। श्राड्या°दनपर्यन्तमेव सव°थवदित्युक्तत्वात् तत ऊर्ध्वमग्नीषोमीयवदेव न सव°थवत् अग्नीषोमीयात्पशुधिति (६.१०.३२) प्रागुक्तत्वात्· अत्र च त्रीणि समिष्टयजूंषि हृदयशूलावभृथश्च भवति· सवनीयपशौ पुनः परिव्ययणविधानेन पश्वङ्गमेतत्परिव्ययणमित्यवगूहनात्तदपवर्गे [1] ऽपवर्गमाशङ्क्यात्रापि परिव्ययणादीत्युक्तम्· तत्राह·

स्वर्ववगूहनादि वा कृतत्वात्॥१३॥ वावधारणे· स्वर्व°नाद्येवात्र करोति न परि°णादि· कुतः कृ°त्वात्परिव्ययणस्य परिवीत एव हि यूपः· यदि पश्वङ्गं स्यात् ततस्तदपवर्गेऽपवृज्येत इदं तु यूपाङ्गं यूपसंस्कारः यूपश्च सर्वपश्वर्थ अतः परिव्ययणमपि सर्वपश्वर्थमेव· तस्मात्स्वर्व°नाद्येव कर्तव्यम्। उदयनीयानन्तरमेवानूबन्ध्या कर्तव्या तदनन्तरमेवाथ मैत्रा°लभतऽइति (४.५.१.५) श्रवणात्।

वशाभावऽउक्षा॥१४॥ उक्षा सेचनसमर्थो महावृषभः।

उभयाभावे पयस्या॥१५॥ सापि मैत्रावरुण्येव· प्रकृतत्वादत्र मै°णीति पदमनुकृष्यते अपेक्षितत्वाच्च· शाखान्तरे विनापि विकल्पेन पयस्या उक्ता· मानवे सिद्धः पशुबन्धः पयस्या वेति· काठके आमिक्षा वा स्यात्तूष्णीमुपचरिताज्यभागप्रभृतीडान्ता संतिष्ठतऽइति। छन्दोगसूत्रे (ला° १.६.४२-४८) सामगानविधिपरेषु सूत्रेषु बहवोऽनूबन्ध्यापन्ना उक्ताः सन्ति· तेन छागमेषावपि वैकल्पिकौ भवतोऽनूबन्ध्यास्थाने· युक्तं चैतत्पक्षाश्रयणं कलौ। अथ पयस्यायां विशेषमाह·

आसाद्यैनामाज्यभागप्रभृतीडान्तामेके॥१६॥ एनां पयस्यां दाक्षायणयज्ञपयस्याधर्मेणोत्पाद्य [2] प्राणदानान्तं संस्कृत्यासाद्य तत आज्य°न्तामेके शाखिनः कुर्वन्ति एके सकलामिति· आसाद्याज्यभागप्रभृतीत्यनेनाज्यभागात्प्रागासादनाच्च परं यत्सामिधेन्यनुवाचनपूर्वोत्तराघारप्रयाजादि तत्सर्वं परिसंख्यायतऽइति पितृ-

---

१) ?? °मित्यवगुहमान्त° A. २) ? णोह्याद्य A.

भूतिः · आज्यभागादीडान्तं कर्मात्र पुनर्विधीयते तेनाराडुपकारकाणामवहननस्फोदकप्रहाराघारप्रयाजानुयाजपत्नीसंयाजदक्षिणाग्निहोमपूर्णपात्रविष्णुक्रमणब्राह्मणतर्पणकर्मापवर्गाणामभावः यावदुक्तत्वात् · अदृष्टार्थत्वपक्षे संयवनार्थत्वपक्षे [च] प्रणीतानामप्यभावः सर्वार्थत्वपक्षे तु भवन्ति । तत्रायं पदार्थक्रमः · शाखाछेदनाद्युपगूहनान्तम् मित्रावरुणाभ्यां भागमिति विशेषः ब्रह्मोपवेशनम् वाग्यमनप्रैषः अतिप्रणीतस्यैव परिस्तरणम् पात्रासादनम् प्रोक्षणम् आज्यनिर्वापो वेदबन्धः शालाद्वार्ये दोहः आज्याधिश्रयणम् पर्यग्निकरणम् उदकस्पर्शः अपणम् दधिप्रक्षेपः प्रोक्षणीप्रैषादि आग्नीध्रे उत्पूय ध्रुवायामेवाज्यग्रहणान्तमिध्मप्रोक्षणम् न वेदेः प्रस्तरबर्हिषश्च स्रुचे त्वेति तूष्णीं प्रस्तरग्रहणाद्यन्यैरवछादनान्तम् समित्प्रस्तरादानादि वाजिनालम्भात्मालम्भोदकस्पर्शान्तम् तत्र विशेषः नोल्मुके · स्तृताया एव वेदेर्द्वे तृणेऽआदाय विधृत्योः स्तरणम् होतुरामन्त्रणम् तूष्णीं षोडशेध्मकाष्ठप्रक्षेपः उपवाजनसंमार्गौ होतृवरणम् आज्यभागप्रधानस्विष्टकृद्यागाः न संचराभ्युक्षणम् प्राशित्रमिडा च भवति नान्यत् मार्जनम् पवित्रप्रतिपत्तिः संमार्गः स्रुचोर्व्यूहनम् अभ्युक्षणम् परिध्यञ्जनम् सूक्तवाकप्रैषः प्रस्तरग्रहणादि प्रक्षेपान्तम् इदमग्नये सोमाय मित्रावरुणाभ्यामग्नये होत्रायेति प्रस्तरत्यागः अनुप्रहरेति प्रैषः तृणप्रहरणम् आत्मालम्भः उदकालम्भः ततो भक्षान्तो वाजिनयागः संवदस्वेत्यादिरभावः परिधिप्रक्षेपः संस्रवाहुतिः देशे निधानम् · अत्र वा वाजिनयागः वेद्यालम्भाभावः वेद्योक्तविमोकः समिष्टयजुर्होमः प्रणीताश्चेत् तद्विमोक इति । केचित्सवनीयपशोः पशुपुरोडाशस्य पूर्णपात्रनिनयनादि कर्मापवर्गान्तमत्र कुर्वन्ति केचिच्चावभृथादागत्य समिदाधानबर्हिर्होमान्ते ।

उदवसानीयाग्नेयः पञ्चकपालः समारूढनिर्मथिते ॥१७॥ अनुबन्ध्यायां समाप्तायां पयस्यायां वा समाप्तायां समाप्ते विहारे उदया इष्टिः कार्या · तत्र च आद्योऽग्निदेवताकः पञ्चकलः पुरोडाशोऽग्न्यन्वाधानादिब्राह्मणतर्पणान्तो भवति यथा पुनराधेयऽउक्तः (४. ११. १) तथात्र भवतीत्यर्थः · काठके शालामुखीयोत्तरवेदिकौ पृथक्समारोप्य यो वा पत्नीशाले विहारः संचरेण निष्क्रम्याष्टाकपाल-

मुदवसानीयं निर्वपतीति[1] · मानवे समारोपयत्यपरावग्नी[2] यदि गतश्रीः शालामुखीयं चोद्धृत्यावसायारणीभ्यामग्निं मथित्वोदवसानीयामिष्टिं[3] निर्वपति आग्नेयमेव पञ्चकपालं विभक्तीः प्रयाजानुयाजेष्वाग्नेयावाज्यभागावनड्वान्दक्षिणापि च वैष्णवीं पूर्णाहुतिं जुहोतीति । समारोपणं प्राजहितस्येतरेषामपवृक्तत्वात् · वैज्ञवापेन तु सर्वाग्नीनां समारोपणं सूत्रितम् तच्छाखान्तरीयाद्वचनात्स्यादिति पितृभूतिः · तस्मात्सर्वेषां समारोपो युक्तः सूत्रकारवचनानुसरणस्य समूलत्वात् ।

हिरण्यं दक्षिणा ॥१८॥ अस्यामुदवसानीयायाम् । अनड्वान्वा ॥१९॥

पशुवद्वाहुतिः ॥२०॥ अथवा उदवसानीयायाः स्थाने पशुवदाहुतिं जुहुयात् · पशुवदिति उरु विष्णविति (५.४१) मन्त्रेण चतुर्गृहीतहोमो यथोत्साहदानं च (६.१०.१० १३) · एतदर्थमेवाहवनीयमुद्धृत्येयं होतव्या ।

तदन्ते सायमाहुतिः ॥२१॥ तस्या उदवसानीयाया वैष्णव्याहुतेर्वा अन्ते सायंकालीनोऽग्निहोत्रप्रयोगोऽनुष्ठेयः । अथेदं विचार्यते किमेषा सायमाहुतिः सोमाङ्गम् उत नित्येति · तत्र पूर्वपक्षमाह ·

सोमाङ्गं संनिधिविरोधाभ्याम् ॥२२॥ इयं सायमाहुतिः सोऽङ्गं स्यात् · कुतः संधेः सोमसंनिधौ विधानात् यदैवैषोदव॰सायमाहुतिं जुहोतीति (४.५.१.१६) विरोधाच्च यदि एषा नित्या तदा तस्याः प्रागस्तमयादुद्धरणम् अस्तमिते च होम इत्येवमादिः कालो विरुध्यते सा हि नियतेनोदवसानीयान्त एव कर्तव्या उदवसानीयान्त एव कदाचिदस्तमयात्प्रागपि सम्भवति परतोऽपि मध्याह्नेऽपि अतिरात्रादौ पूर्वाह्णेऽपि · अत उदवसानीयावदेषापि सोमाङ्गमिति पूर्वपक्षः । सिद्धान्तमाह ·

नित्या वा प्रातराहुतिश्रुतेः ॥२३॥ नित्यैवेयं सायमाहुतिः स्यात् · काल एव प्रातराहुतिमिति (४.५.१.१६) प्रातराहुतेः श्रवणात् · यदि च सोमाङ्गमियं स्यात् काले प्रातराहुतिर्न श्रूयेत श्रूयते च अतो ज्ञायते नित्येय[मि]ति · यदुक्तम् काल॰धादिति नैष विरोधो नित्यस्य यथा कथंचित्परिसमापयितव्यत्वस्योक्तत्वादिति · अतः सोमयागनिमित्तो नित्याया एव सायमाहुतेरपकर्षोऽयं वचनात् ।

---

1) ? ॰पति श्रीरिति A. 2) ॰वग्नि A. 3) ॰या इष्टि A.

नियतक्रियातः ॥२४॥　　अतः परं निष्या नियतानां नित्यानां संध्यातर्पणादिदेवपूजनदानहोमपञ्चमहायज्ञादीनां क्रिया भवति · अस्मादेव प्रतिप्रसववचनादतः प्राङ्नित्यानि न क्रियन्ते इत्येतदवगम्यते[1] · अवभृथादूर्ध्वमुन्मुक्तदीक्षत्वेऽप्येतत्पर्यन्तं निषेध एव ।

एष प्रथमः सोमः ॥२५॥　य एष पूर्वमुक्तो वसन्तेऽग्निष्टोम इति (७. १. ४) एष·सोमः सर्वसोमयागापेक्षया प्रथमोऽनुष्ठेय इत्यर्थः · शाखान्तरेऽतिरात्रस्यापि प्रथमसोमता विहितास्ति · ताण्डकेऽग्निष्टोमं प्रकृत्य पठ्यते (पञ्चविं॰ १६. १) एष वाव प्रथमो यज्ञानां य एतेनानिष्ट्वाथान्येन यजेत गर्तपत्यमेव[2] तज्जीयते वा[3] प्र वा मीयतऽइति · तस्मादग्निष्टोममकृत्वान्ये यज्ञा न कर्तव्या इति सिद्धम् ।

आदीप्य प्रविशन्ति ॥२६॥　देवयजनमादीप्य ग्रामं प्र॰न्ति ऋत्विग्यजमानाः · बर्हिरादीप्येति कर्कः · यदनुपोष्य प्रयायाज्जीवबद्धं तेन यजमानममुष्मिंलोके नयेरन्निति[4] शाखान्तरे श्रवणात्　उष दाहे उपोषणं दहनम् अनुपोष्य अदग्ध्वा अनादीप्येत्यर्थः · मानवे　विहारं पुरस्कृत्य गृहानागच्छन्तीति । केचित्त्वानूबन्ध्यायां पयस्यायां वा शकटबर्हिष स्तीर्णास्यानूबन्ध्यान्ते पयस्यान्ते वा होमं कुर्वन्ति ।

षडुत्तरे ॥२७॥　　पूर्वं ह्युक्तम् उक्थ्यं॰कयेति (५. २) उक्थ्यमुत्तरेष्विति (१. ११) · तत्र न ज्ञायते के ते उत्तरऽइत्यत इदमाह · अग्निष्टोमादुत्तरे संस्थावृद्ध्या षट् क्रतवो भवन्ति · षट् संस्थाविकारा इति कर्कः । तानेवाह ·

अत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्यामः ॥२८॥　　तत्र च उक्थ्यात्यग्निष्टोमौ पूर्वमुक्तौ　षोडशिनमतिरात्रं च द्वादशाहे वक्ष्यति　वाजपेयं च स्वतन्त्रं वक्ष्यति　अप्तोर्यामं चाश्वमेधऽइति । तत्राग्निष्टोमस्यैव विधान्तरमत्यग्निष्टोमः · तत्र यज्ञायज्ञियान्ते सर्पणं कृत्वा दिवैव षोडशिग्रहयागो दशचमसोन्नयनपूर्वकः · तत्र स्तोत्रशस्त्रमात्रं षोडशिनः　अन्ये धर्मा न भवन्तीति प्रागुक्तम् (७. १२) · क्रतुकरणमाग्निष्टोमिकम् आग्नेय एवैकः पशुः · षोडश्यन्तेऽनुयाजादि । उक्थ्ये च यज्ञायज्ञियान्ते सर्पणं कृत्वा त्रय उक्थ्यविग्रहा यथोक्ताः　द्वौ सवनीयौ । षोडशिनि　उक्थ्यान्ते सर्पणपूर्वकः षोडशिग्रहयागः　त्रयः पशवः सव-

---

1) See at ७. १. २७.　2) कर्तपत्य॰ Panc.　3) Thus Panc. तद्रूजीयते A.　4) ? नीये॰ A.

NN NNN*

नीयाः । वाजपेये च षोडशिनः परं सर्पणपूर्वकं वाजपेयस्तोत्रं शस्त्रं च तत्र चमसैरेव यागः · तस्य विशेषास्तस्य प्रकरणऽएव वक्ष्यन्ते क्रतुकरणं च षोडशिनः । अतिरात्रे चत्वारः सवनीयाः षोडश्यन्ते रात्रिपर्यायास्त्रयः ततः संधिस्तोत्रम् तत्राश्विनं शस्त्रम् ततोऽनुयाजादि । अप्तोर्यामे चातिरात्रवत्सर्वं सवनीयादिकम् · तत आश्विनयागात्परमेकः चतुस्तोत्रः पर्यायः · तत्र प्रतिस्तोत्रं[1] सर्पणम् तदन्तेऽनुयाजादि । उपनयनविवाहादिवत्पुरुषसंस्कारकत्वेन सप्त सोमसंस्थाः स्मर्यन्ते तासामनेन क्रमेणानुष्ठानं यथा स्यादित्येवमर्थमिदं सूत्रमिति पितृभूतिः ।

तेषामुक्थ्योऽच्छावाकमभि संतिष्ठते होतारमितरे ॥ २९ ॥ यऽएते ज्योतिष्टोमे शस्त्रवन्तो ग्रहा उक्तास्तेषाऽमुक्थ्य एवैकोऽच्छाऽष्ठते इऽरे सर्वे ग्रहा होतारमभि संतिष्ठन्ते · किमर्थमिदमुच्यते · शस्त्रवत्सु ग्रहेषु च मैत्रावरुणादयो यष्टारो नान्येषु ग्रहेष्विति पितृभूतिकृतं व्याख्यानम् । अपरं च तेषां पूर्वोक्तानां षण्णामत्यग्निष्टोमादीनां मध्ये उक्थ्योऽच्छाऽष्ठते अच्छावाकशस्त्रेण समाप्तिं प्राप्नोति इऽरे होतारमभि संतिष्ठन्ते होतृशस्त्रेण समाप्तिं प्राप्नुवन्ति · प्रतिगरार्थं शस्त्रकर्तुर्ज्ञानायायमुपदेशः ।

वैश्यराजन्ययोः सोमे न्यग्रोधस्तिभीनुपनह्येच्छन्भक्षाय क्रयणप्रभृत्यनुसोममावृता समानमासादनं प्रागभिषवात् ॥ ३० ॥ वैश्यक्षत्रिययोः सोमे सोमयागे अध्वर्युः भक्षाय इच्छन् यजमानं भक्षं कारयितुमिच्छन् न्यभीन् वटफलस्तबकानुपऽह्य उपनहनेन वाससा बद्ध्वा अनुऽमं सोमेन सह आऽता सोमस्यैवेतिकर्तव्यतया तस्य न्यग्रोधस्य क्रऽभृति क्रयणादारभ्य प्राऽवात् अभिषवादर्वाक् सर्वं संस्कारजातं कुर्यात् · आसादनं च ऊरौ अनसि आसन्द्यां हविर्धाने च । प्रागऽवादित्युक्तत्वात्तस्याभिषवो न भवतीति गम्यते । न्यग्रोधस्य समानं सहैव सोमे कुर्यात् अनुशब्दोऽत्र सहार्थे कर्मप्रवचनीयः तद्योगे सोममिति द्वितीया यौगपद्ये ऽव्ययीभावो वा । शाखान्तरे श्रूयते यदि राजन्यं वैश्यं वा याजयेत्स यदि सोमं बिभक्षयिषेन्न्यग्रोधस्तिभिनीराहृत्य ताः सम्पिष्य दधन्युन्मृच्य तस्मै भक्षं प्रयच्छेन्न

---

[1] ? स्तोत्र A.

सोममिति स्तिभिन्योऽङ्कुराः फलानि चेति तत्र टीकायाम् · अत्र वाक्ये यदि सोमं बिभक्षयिषेदिति सोमभक्षमनुसंकीर्त्य तत्र फलचमसो निदिश्यते · भक्षश्च यागावशिष्टद्रव्यसंस्कारत्वेन प्रसिद्धस्तेन भक्षविधानादेवानेन फलचमसेन यजमानचमसयागाभ्यासः साधनीय इति ज्ञायते ।

चमसोन्नयनकाले वाहृत्य दध्नोन्मृद्य तच्चमसमनून्नयेत् ॥३१॥ अथवा चमसोन्नयनकाल एव न्यग्रोधफलान्यङ्कुरांश्चाहृत्य सम्पिष्य चूर्णयित्वा दध्ना दध्ना मिश्रणं कृत्वा तच्चमसं यजमानचमसं अनु पश्चादुन्नयेत् अथवा इतरान्सोमचमसाननु तच्चमसं फलचमसमुन्नयेत् ।

हूयमानेषु कुशतरुणेन जुहोत्यहं वदस्मीति ॥३२॥ इतरेषु सोमचमसेषु हूयमानेषु एनं फलचमसं चमसाध्वर्युरेव कुशतरुणेन दर्भतृणेन चमसादाकृष्य जुहोति यदान्यांश्चमसानुन्नयन्ति तथैतमुन्नयन्ति यदैतान्जुह्वोति अथैनं कुशतरुणेनोपहृत्य जुहोतीति शाखान्तरे श्रवणात् · ततो हुतशेषस्य वैश्यराजन्ययोर्भक्षणम् ॥

॥ नवमी कण्डिका ॥ ९ ॥

इति श्रीत्रिरग्निचित्सुतेन याज्ञिकदेवेन कृते कात्यायनसूत्रव्याख्याने दशमोऽध्यायः ॥

इति कातीये श्रौतसूत्रे दशमोऽध्यायः ॥

ज्योतिष्टोमसम्बन्ध्याध्वर्यवमुक्तम् इदानीं ब्रह्मत्वं वक्तुं प्रतिजानीते

ब्रह्मत्वमतः ॥१॥ अतः परं ब्रह्मणः कर्मोच्यते · ब्रह्मणस्त्व इति (पा॰ ५.१.१३६) त्वः · पृथगुच्यमानमनाकुलं भवति अपि च यथाकालमुच्यमाने पुनःपुनर्वक्तव्यं भवतीदं ब्रह्मणऽइदं ब्रह्मणऽइति पृथगुपदेशे नैष दोषऽइति · अध्यायपरिसमाप्तेर्यावत् ।

वाग्यतः कर्मणि वर्तमाने ॥२॥ सौमिके कर्मणि वर्तमाने क्रियमाणे ब्रह्मा कृतवाग्यमनो भवेत् वर्तमानऽइत्युक्तत्वात् यस्मिन्काले कर्म न क्रियते तदा वाग्यतो न भवति यथोपसत्सु पौर्वाह्णिकापराह्णिकयोरन्तराले · सौमिके सोमप्रकरणोपदिष्टऽएव कर्मणि सोमक्रयहविर्धानसदःकरणादौ अभिषवग्रहग्रहणस्तोत्रादौ च क्रियमाणे अयं नियमः ऐष्टिकेषु च पाशुकेषु च कर्मसु दर्शपूर्णमासव-

द्वेति कर्कः · सर्वस्मिन्कर्मणि वर्त्मने वाग्यत इत्यपरे। लौगाक्षिः शुचिर्वाग्यतः शीली स्यान्नायज्ञियां वाचं ब्रूयाद्यदि ब्रूयाद्वैष्णवीमृचं यजुर्वा जपेदपि वा नमो विष्णव इत्येव ब्रूयादिति।

हिरण्यवत्याहुतायां दक्षिणोऽनुगछन्त्या क्रयात् ॥३॥ बर्हिस्तृणेन हिरण्यं बद्ध्वाऽनुहोतीत्येषा (७. ६. ८-१) आहुतिर्हिरण्यवती · तस्यां हुत्यामाहुत्यां हुतायां सत्यां सोमक्रयण्यानयने होमे सोमं प्रति गमनादौ च सर्वत्र ब्रह्मा दक्षिणतः अध्वर्य्वाद्यपेक्षया दक्षिणादिगाश्रितः पृष्ठतो याति सोमक्रयसमाप्तिपर्यन्तम्।

क्रीते प्राङतीत्य पूर्वेणानः परीत्यापरेण वा दक्षिणोऽनुगछन्त्या निधानात् ॥४॥ सोमक्रये कृते यदा यजमानादयः सोममादायानः प्रति गछन्ति तदा ब्रह्मापि तत उत्थाय प्रागतीत्य पदार्थतया किंचित्पूर्वस्यां दिशि गत्वा तदनन्तरं सोमक्रयदेशस्य दक्षिणतोऽवस्थितमनः शकटं पूर्वेण परीत्य परिगम्य शकटमपरेण वा परीत्य तस्मादेव शकटाद्दक्षिणाः दक्षिणेषामाश्रितः सन् तमेव शकटमनुगछन्नात् शालायामाहवनीयं दक्षिणेन सोमनिधानं यावत्।

दक्षिणाग्निं वापरेण घर्मे ॥५॥ घर्मे प्रवर्ग्ये क्रियमाणे दक्षिणाग्निमपरेण वा गार्हपत्यस्य दक्षिणत आसीत वा यथोक्ते स्थाने आहवनीयस्य दक्षिणत इति। घर्मेऽपि प्रवर्ग्ये आहवनीयं प्रति नीयमाने आहवनीयसमीपे गत्वोपविशति।

स्तम्बयजुर्हरिष्यत्याहवनीयदेशं दक्षिणेनास्ते वेदिसक्तिः ॥६॥ औपवसथ्यामिमीत इति (८. ३. ६) सौमिक्या वेदेः करणमुक्तम् · तत्र च पृष्ठ्याकरोतीति (१२) स्फ्यादानस्तम्बयजुर्हरणादिकमुक्तम् · तत्र ब्रह्मणो विशेष उच्यते · स्तम्बयजुर्हरिष्यति अध्वर्यौ तदर्थपात्रासादनात्प्रागेव ब्रह्मा औत्तरवेदिकाहवनीयेन वेदितो वेदिसंलग्नो वेदिस्पृष्टो बर्हिर्वेदि उपविशति · आसनं मन्त्रेण संस्कृत्य।

एवम् सर्वत्र प्रागग्नीषोमप्रणयनात् ॥७॥ अतः प्रभृति सोमाग्नीध्रीययोः प्रणयनादर्वाक् सर्वत्र सर्वेषु कर्मसु अग्निप्रणयनादिषु वेदिस्तरणान्तेषु क्रियमाणेषु एवं कुर्यात् एवमित्याहवनीयसक्तिः (६) इत्यर्थः तत्रैवोपविष्टः सन् कृताकृतप्रत्यवेक्षणं कुर्यात्। पक्षान्तरमाह ·

कर्मणः-कर्मणो वा सक्तिस्तत्तदेवान्वेत्य ॥८॥ अथवा हविर्धानप्रवर्त-

नोपरवखननसदःकरणाग्नीध्रकरणाधिष्ण्यनिवपनादेः कर्मणः क्रियमाणस्य सन्तः संनिहितो दक्षिणत आस्ते समीप एव दक्षिणत उपविशति न त्वाहवनीयदेशस्य दक्षिणत एव · किं कृत्वा तन्त्य तत्तदध्वर्य्वादिभिः क्रियमाणं कर्मान्वेत्य अनुगम्य तत्र गत्वेत्यर्थः · यथा हविर्धानप्रवर्तने पूर्वमन्तःपात्यसमीपे वेदिमध्ये स्थापितयोर्हविर्धानयोर्दक्षिणा उपविष्ट आसीत् यदा च हविर्धाने प्रणीयेते तदा ब्रह्मापि तत उत्थायानुगच्छति गत्वा पुनस्तत्र संनिधौ दक्षिणत आस्ते · एवं सर्वत्र ज्ञेयम् ।

आहवनीये प्रणीयमानेऽप्रतिरथस्य (१३. ३३-४४) द्वादश ब्रुवन्नग्नौ ॥ ९ ॥ उक्तं चाग्निं प्रणन्त्कृत्वेत्याहवनीयस्य (८. ३. २० २१) प्रणयनम् · अग्नौ चयने तस्मिन्नाह्नमाने इध्ममादीप्याग्निं प्रति नीयमाने ब्रह्मा अप्रन्दश ऋचो[1] ब्रुवञ्जपन् दक्षिणतोऽनुगच्छति साग्निके क्रतावेवैवं श्रुतत्वात् (९. २. ३. ५) · मानवे चीयमानेऽग्नौ दक्षिणतः पक्षस्य बहिर्वेद्युपास्त इति ।

सर्वत्रैके ॥ १० ॥ शाखिनः सन्त्र साग्निके अनग्निके च क्रतौ अग्निप्रणयने अप्रतिरन्ब्रुवन्ब्रह्मानुगच्छतीत्येवमाहुः ।

स्तीर्णायां यथार्थमेत्य ॥ ११ ॥ वेदिस्तरणादूर्ध्वं यर्थं यथाप्रयोजनमावश्यकभोजनमूत्रपुरीषाद्यर्थमेत्य पुनर्वेदेर्दक्षिणतः स्वस्थान आस्ते वेदिस्तरणापर्यन्तमत्रैवास्त इत्यर्थात्सिद्धम् · अत एव स्तीर्थमित्युपदेशात् वेदिस्तरणानन्तरं सर्वे भोजनाद्यावश्यकं कर्म कुर्वन्तीति गम्यते ।

अग्नीषोमप्रणयनायोत्तरेण धिष्ण्याञ्छालाद्वार्यं पूर्वेणेत्यास्ते दक्षिणतः ॥ १२ ॥ अग्नीन्णयनार्थं यदा ब्रह्मा शालायामागच्छति तदा आहवनीयदक्षिणदेशादुत्थाय पूर्वेण वेदिमागत्य चात्वालमुत्करं च दक्षिणेनागत्याग्नीध्रीयादीन्सर्वान्धिष्ण्यानुत्तरेणागत्य पूर्वद्वारेण शालां प्रविश्य शालान्णेत्य गत्वा तस्यैव शालाद्वार्यस्य दक्षिणत उपविशति ।

हुते च सोममादायाग्निमन्वेति ॥ १३ ॥ प्रदीप्तमिन्द्वितीयामिति (८. ७. १-२) अयं वैसर्जिनहोमः[2] प्रदीप्तेध्मस्योपरि विहितः · तस्मिन्वैसर्जने[3] हुते ब्रह्मा यजमानो-

1) deest A. ऋचो B.　2) Thus AB.　3) Thus AB. Ss.

पश्चात्सोम॰दाय अग्निमाग्नीध्रीयमध्वर्युणा प्रणीयमानमन्वेति अनु पृष्ठलग्नो गच्छति ।

यजमानो वा सोमꣳ हरेत् ॥ १४ ॥ अथवा य॰न एव सो॰रेत् न ब्रह्मा ।

अन्यस्मै प्रदायानिहिते यथेतमेत्यास्ते दक्षिणतः ॥ १५ ॥ अनि॰ते अध्वर्युणा आग्नीध्रीये धिष्ण्यस्योपर्यस्थापिते ब्रह्मा चेत्सोमं हरन्भवति तदा तं सोममन्य॰दाय तावदन्यस्य हस्ते धारणार्थं समर्प्य यथे॰त्य येन मार्गेण गतः उत्तरेण धिष्ण्यमिति तेनैवागत्याग्नीध्रीयस्य दक्षि॰त आस्ते होमं यावत् · तत्र च होम उक्तो ऽयं न इति॰स्मिन्निति (८. ७. ९) ।

हुते च सोममादायाहवनीयं चातीत्य ॥ १६ ॥ हुते च वैसर्जनीये ब्रह्मा पुनरन्यहस्तात्सोम॰दाय आहवनीयसमीपे गत्वा चकारात्पुनरन्यस्मै सोमं प्रदायाहवनीयं पूर्वेणातीत्यातिक्रम्य तस्यैव दक्षिणतो बहिर्वेदि वेदिसक्ति आस्ते · लौगाक्षिः अग्नीषोमयोः सन्नयोः संचरेण प्रविश्यापरेण हविर्धानं दक्षिणा परिक्रम्य दक्षिणतोऽग्नेरनन्तर उपविशत्यत्रासीता मार्जनाद्धुतायां वपायां यथेतं प्रत्येत्य चात्वाले मार्जयित्वापरेणोत्तरवेदिं दक्षिणा परिक्रम्य यथास्थानमुपविशत्यषोऽत ऊर्ध्वꣳ संचर इति · मानवे यदि राजानꣳ हरेद्धविर्धानान्तेऽध्वर्यवे प्रदायोत्तरेणाग्नीध्रीयमपरेण सदो दक्षिणेन सदोमार्जालीये हविर्धानं गत्वाङ्यानां दक्षिणत उदङ्मुख उपविशत्येष संचर इति ।

अपरात्रेऽग्नीषोमप्रणयनवदिच्छन् ॥ १७ ॥ अप॰त्रे सवनीयपशोः परिस्तरणपात्रासादनादौ क्रियमाणे ब्रह्मा इच्छन्नग्नी॰वत्कुर्यात् · अग्नी॰वदिति अग्नी॰णायने येन मार्गेणागत्य शालाद्वार्यं दक्षिणेनोपविष्टस्तेनेत्यर्थः तेनोत्तरेण धि॰त्यास्त ऽइत्येतल्लभ्यते (१२) इच्छन्नाहवनीयं दक्षिणेनैवेति विकल्पः · लौगाक्षिसूत्रे विशेषः सवनीयासु प्रपद्यमानास्वनुप्रपद्येतापरेण दक्षिणꣳ हविर्धानं दक्षिणा परिक्रम्य दक्षिणतः सोमस्यानन्तर उदङ्मुख उपविशत्यासीता सर्पणात्सर्पणाकाले मैत्रावरुणमन्वारभ्य निःसृत्येति सवनीया एकधनस्था आपः अतोऽभिषवकाले ब्रह्मा हविर्धानमध्ये दक्षिणतोऽभिषवस्थानस्योपविशति ।

विप्रुषाꣳ होमꣳ हुत्वा प्रतिहर्तारमन्वारभेत वादीक्षितः ॥ १८ ॥ अदी॰तो ब्रह्मा विप्रु॰त्वा यस्ते द्रप्स इत्येतन्मन्त्रकामाहुतिं हुत्वा प्र॰रं पवमानार्थं सर्पन्त-

न्वारभेत विकल्पेन । अदीक्षित इत्युक्तत्वात्सत्त्रेषु दीक्षितो ब्रह्मा विप्रुड्ढोमपूर्वकं नियमेन प्रतिरभेत यजमानस्तु ब्रह्माणमन्वारभते प्रतिहर्तारं ब्रह्मा ।

प्रस्तोत्रामन्त्रित एतं ते देव सवितः (२. १२) स्तुत सवितुः प्रसवऽइत्युक्त्वा प्रसौति ॥ १९ ॥ पवमानादिसर्वस्तोत्रेषु उपाकरणानन्तरं प्रस्तोता ब्रह्मन्स्तोष्यामः प्रशास्तरित्यनेन मन्त्रेण ब्रह्माणमामन्त्रयते पृच्छति स च ब्रह्मा प्रस्त्रा एवमामन्त्रितः पृष्टः सन् एतं ते देव सवितरित्यमुं मन्त्रं तेन माम्वेत्यन्तमुक्त्वा पठित्वा ततः स्तुत सवितुः प्रसवऽइत्यनेन मन्त्रेण प्रसौति प्रस्तोत्रादीननुजानाति स्तवनातिस्तवनाय स यत्राह ब्रह्मन्स्तोष्यामः प्रशास्तरित्येतं तऽइत्यादिश्रवणात् (४. ६. ६. ६) । अत्रोक्त्वा प्रसौतीति द्वयोः क्रिययोर्यथाक्रमं सम्बन्धः एतं तऽइत्युक्त्वा स्तुत सवितुरिति प्रसौति । पक्षान्तरमाह ।

देव सवितरेतद्बृहस्पते प्रेति वा ॥ २० ॥ अथवा देव सवितरेतं बृहस्पते प्रेत्येतावन्तं मन्त्रमुक्त्वा स्तुत सवितुरित्यनेन प्रसौति (४. ६. ६. ७) । पुनरपि पक्षान्तरमाह ।

रश्मिना सत्यायेति (१५. ६) वा प्रतिमन्त्रम् ॥ २१ ॥ रश्मिना सत्याय सत्यं जिन्वेत्यत्रैकोनत्रिंशत्स्तोमभागा मन्त्राः सन्ति । तत्राग्निष्टोमे द्वादश स्तोत्राणि । तत्र रश्मिना सत्यायेत्यादिभिर्द्वादशमन्त्रैः प्रतिमन्त्रं प्रतिस्तोत्रं क्रमेणैकैकेन मन्त्रेण प्रसौति । रश्मिनासीत्येवमादिकमेकैकं मन्त्रमुक्त्वा स्तुत सवितुः प्रसवऽइत्यनेन मन्त्रेण प्रसौति । स्तुत सवितुरित्ययं सर्वत्र भवतीति कर्काचार्याः । कठसूत्रे ब्रह्मन्स्तोष्याम इत्युक्ते रश्मिरसीत्यनुवाक स्तोमभागाः प्रतिमन्त्रं देव सवितरित्यनुषङ्गस्तेषामेकैकं स्तोत्रेषु द्वादशाग्निष्टोमे पञ्चदशोक्थ्ये षोडश षोडशिन्युत्तरे द्वादश रात्रिपर्यायेषु उत्तरे त्रयो राथन्तरे संधौ नाप्तोर्यामप्यूर्ध्वमाश्विनान्न वाजपेयस्यातिरिक्तस्तोत्रे यथाब्राह्मणोक्तमेवात्रानुज्ञानमिति ।

येन प्रवेशनं तस्मिन्त्सर्पणम् ॥ २२ ॥ सदसो येन द्वारेण प्रवेशनं ब्रह्मा कुर्यात् तस्मिन्द्वारेण सर्पणं कुर्यात् ऋतस्य द्वाराविति द्वार्येऽइति (१. ८. २०) एतद्द्वार्ययोरभिमर्शनं तस्मिन्नेव द्वारे कर्तव्यमित्यर्थः तस्यैव संस्कार्यत्वात् । अतो येनेति अनिर्धारितविशेषोपदेशात् ब्रह्मणः सदसः प्रवेशे द्वारविकल्पः पूर्वेण वापरेण वेति । तत्रापरेण द्वारेण प्रवेशे संचरविशेषमाह ।

पूर्वेण यूपं परीत्यापरेण चेत् ॥ २३ ॥ चेद्यद्यपरेण सदसो द्वारेण ब्रह्मा

प्रवेष्टुमिच्छति तदा स्वस्थानात्पूर्वे॰रीत्य आग्नीध्रीयं सदश्चोत्तरेणागत्य अपरेण सद-
सो द्वारेण प्रविशति · पूर्वेण चेत् अपरेणैव यूपमिति तदा च ब्रह्मासनाद्ध-
विर्धानं दक्षिणेनैवागत्य पूर्वेण सदसो[1] द्वारेण सदः प्रविशति । अथ सदस्युपवे-
शनस्थानमाह ·

प्रशास्तुर्दक्षिणत आस्ते ॥२४॥ ब्रह्मा स्तोत्रशस्त्रकाले सदसि प्र॰स्तुर्मै-
त्रावरुणस्य दक्षि॰स्ते · ग्रहपुरोडाशादिहोमकाले तु तत उत्थाय प्रशास्तृधिष्ण्यं
दक्षिणेनोत्तरेण वा गत्वा पूर्वेण द्वारेण निष्क्रम्य हविर्धानं दक्षिणेन गत्वा स्व-
स्थानऽउपविशति ।

अपरेण धिष्ण्यानितरे ॥२५॥ इ॰रे ब्रह्मपुरुषाः ब्राह्मणाच्छंसिपोत्राग्नीध्राः[2]
धिष्ण्यानपरेण स्वस्य[-स्वस्य] धिष्ण्यस्य पश्चात् आसते उपविशन्ति ।

नेष्टा च ॥२६॥ स्वं धिष्ण्यमपरेणास्ते उपविशति · अध्वर्युपुरुषत्वात्तस्य
पृथगुक्तम् । अथ ब्रह्मणः असमाप्ते सवने ग्रहपुरोडाशादिहोमेषु कृताकृतप्रत्य-
वेक्षणार्थं गमनागमनाय संचरमाह ·

विसऽस्थितसंचरः प्रशास्तृधिष्ण्यं वोत्तरेणापवमाने ॥२७॥ वि॰स्थितम-
संस्थितमुच्यते तस्मिन्संचरो विसं॰चरः असमाप्ते सवने ब्रह्मणो यः संचरः
संचरणं गमनमागमनम् अप॰नऽइति पवमानार्थगमननिमित्तव्यतिरिक्तः स
प्र॰ष्ण्यमुत्त॰णा वा भवति वा दक्षिणेनेति · पवमानार्थं संस्थिते च सवने प्र॰ष्ण्यं
दक्षिणेनैवेति ।

स्वऽ-स्वमितरे ॥२८॥ इ॰रे ब्रह्मपुरुषाः स्वं-स्वं धिष्ण्यमुत्तरेण वा अप-
रिसमाप्ते सवने[3] गच्छन्ति वा दक्षिणेन संस्थिते तु दक्षिणेनैवेति ॥ प्रथमा
कण्डिका ॥ १ ॥

इति श्रोत्रियग्निचि॰सुतेन याज्ञिकदेवेन कृते कात्यायनसूत्रव्याख्याने एकादशोऽध्यायः

इति कातीयश्रौतसूत्रऽएकादशोऽध्यायः ॥ ॥

---

१) सदसो deest B. २) ब्रा॰ध्राः deest A. ३) सवने deest B.

श्रुत्यर्थमनुविधित्सताचार्येण ज्योतिष्टोमोऽनुविहितः इदानीं श्रुतिमन्त्रपाठावसरप्राप्तो द्वादशाहोऽनुविधीयते ।

ज्योतिष्टोमधर्मा एकाहद्वादशाहयोस्तद्गुणादर्शनात् ॥१॥ ज्योतिष्टोमशब्देन उपांश्वादिहारियोजनपर्यन्तो ग्रहयज्ञाभ्यासोऽभिधीयते · ज्योतींषि यस्य स्तोमाः स ज्योतिष्टोमः स्तोमैर्ह्यसौ द्योत्यत इति · ते च सोमयागस्य स्तोमाः तस्माज्ज्योतिष्टोमशब्देन सोमयागोऽभिधीयते । सं॰ धर्मशब्देनाङ्गान्युच्यन्ते · ते सर्वेष्वेकाहेषु द्वादशाहे च भवन्ति · कस्मात् तद्गु॰नात् तद्गुणानां ज्योतिष्टोमाङ्गानां गुणास्तत्र दृश्यन्ते तस्या [आ]वृच्यत्र होता॰रेयुरिति (५.१.३.४) एकाहे वाजपेये ।

प्रथमस्य व्रात्यस्तोमसाद्यःक्रेषु वचनात् ॥२॥ व्रात्यस्तोमादिषु प्र॰स्य धर्मा उत्तरेषु प्रवर्तन्ते न ज्योतिष्टोमिकाः · कुतः व॰नात् उच्यतेऽनेनेति वचनं नामधेयम् नामधेयादित्यर्थः तुल्यनामत्वात्तत्रैव प्रतीतिर्भवति[1] प्रतीत्या च धर्मसम्बन्धो भवति नान्यथेति ।

अग्निष्टुत्सु चैके ॥३॥ सं॰ प्रतिकाममग्निष्टुतां भेदः (२२.४.२१) · प्रथमस्याग्निष्टुतो धर्माः द्वितीयादिषु प्रवर्तन्ते [इति] एके आहुः ।

द्वादशाहः सत्रमहीनश्च ॥४॥ सं॰ सत्ररूपः अहीनरूपश्च भवति द्विविधः ।

आसतऽउपयन्तीति सत्रलिङ्गं यजतऽइत्यहीनस्य ॥५॥ अत्र विशेषमाह · द्वादशाहमृद्धिकामा उपेयुरिति तथा त्रयोदशरात्रमासीरन्निति सत्रलिङ्गम् · द्वादशाहेन प्रजाकामं याजयेदित्यहीनलिङ्गम् । अस्यानुकथनप्रयोजनम् सत्रे सत्रात्मको धर्मो दातृत्वेन प्रवर्तते अहीने चाहीनात्मकः ।

---

1) Thus D. प्रवृत्तिर्भ॰ K.

उभयतोऽतिरात्रं सत्रमुपरिष्टादहीनस्य ॥ ६॥ सं० उभयत इत्यादावन्तेऽतिरात्रो यस्य तदुभ०रात्रम् · उप०ष्टात् अन्तऽएव ।

यजमानाः सर्वे सत्रेषु ॥ ७॥ कर्तारो भवन्ति · यऽऋत्विजस्ते यजमाना इत्यनेनार्त्विजीनान्पदार्थान्लक्षणयानूद्य यजमानाः कर्तृत्वेन विधीयन्ते ।

अदक्षिणानि च स्वामियोगात् ॥ ८॥ सत्राणि भवन्ति · न हि कश्चिदात्मनैवात्मानं परिक्रीणाति । सं० अत्र हि स्वामिन एवार्त्विज्यम् अनुपपन्नश्चात्मपरिक्रयः ।

गृहपतिर्याजमानमयुक्तत्वात् ॥ ९॥ या०नं यत्कर्म तद्गृ०तिः करोति कर्मान्तरे तस्यायु०त्वात् इतरेषां चाध्वर्यवादिषु योगात् ।

दर्शनाच्च ॥ १०॥ दृश्यते चायमर्थः तस्माद्यदि बहवो० प्रयच्छेयुरिति (३. ४. २. १५) ।

सर्वे संस्कारात् ॥ ११॥ सं० यद्यत्संस्कारकं याजमानं यथा वपनादि तत्सर्वे कुर्युः तेन हि यजमानाः संस्क्रियन्ते ।

दर्शने वचनात् ॥ १२॥ यत्तु दर्शनमुक्तम् तद्वचनम् । सं० गृहपतये एकस्मै दानमुक्तम् वचनं किमिव न कुर्यात् ।

अविभवति गृहपत्यन्वारम्भः ॥ १३॥ सं० असंभवत्यनेककर्तृके पदार्थे वेदबन्धनाद्यन्वाधानादौ गृहपतेरन्वा०म्भः सर्वैः कर्तव्यः ।

परार्थे ष्वेकः कृतत्वात् ॥ १४॥ यत्पुनः क्रत्वभिनिर्वृत्त्यर्थमेव कर्म यथा पात्रासादनमाज्यावेक्षणं वा तत्रैकस्यैव कर्तृत्वम् कृ०त्वात्पदार्थस्य । सं० परार्थे यजमानकर्तृके आज्यावेक्षणादौ एको गृहपतिः · कुतः कृ०त्वात् एकेनापि कृतः कृत एव यतः ।

अग्निं चेष्यमाणाः समारोह्य गृहपतिर्मथ्ये मन्थत्यर्धश इतरे दक्षिणोत्तराः ॥ १५॥ स०ह्येति च पूर्वकालतामात्रे ल्यबादेशो न समानकर्तृकतायाम् ।

गृहपत्याहवनीयेऽङ्गारप्रासनम् ॥ १६॥ तत्र प्राजापत्यः पशुः ॥ १७॥ तत्र विहारे प्रा०शुः भवति । पुनर्ग्रहणाच्चाहर्गणे प्राजापत्यस्य नियमः · तथा चाश्वमेधे नियमदर्शनं भवति प्राजा०त्यमालभ्येति (१३. ४. ४. १) । सं० तत्र साधारणीकृते विहारे ।

आज्येन पत्नीसंयाजा गृहपतिवर्जम् ॥ १८॥ वचनात् (४. ६. ८. १२) ।

तदहर्दीक्षा ॥ १९॥ दीक्षायाः पशोश्चैककालतोच्यते · तत्र दीक्षाकाले पशुः कर्तव्यः न पशुकाले दीक्षा एवं सोमस्य कालविरोधो न भवति इतरथा कालविरोधः स्यात् ।

अशक्तौ नियतक्रिया समारूढनिर्मथितेषु सर्वत्र ॥२०॥ पशुदीक्षयोरेककाल-ताशक्तौ स्वकाले पशुं कृत्वा समारोपनिर्मथनपूर्विका[1] नियतानां क्रिया · सर्व-त्रग्रहणाच्च सर्वेषु त्रिष्वपि मन्थनपक्षेषु । सं° नियतानामग्निहोत्रादीनां क्रिया ।

दीक्षाकालऽउदग्वछशायां पूर्ववन्मन्थनम् ॥२१॥ उ°यामिति नियमः · पू°दिति यथा पशावुक्तम । सं° पू°वदितीष्टकापशुवन्मन्थनम् समारो°त्तरा इति (१५)।

गार्हपत्ये प्रासनमत्र ॥२२॥ अङ्गारस्य भवति । सं° अत्र दीक्षाकाले ।

आहवनीयस्ततः ॥२३॥ उद्ध्रियते दक्षिणाग्निश्च तुल्यन्यायत्वात् । सं° तत इति प्रागुक्तेन प्रकारेण साधारणीकृताद्गार्हपत्यात् ।

तत्र दीक्षा ॥२४॥ उपवसथप्रभृति प्रागग्नीषोमप्रणयनादुपशमय्य चि-नोत्येनाञ्छालाद्वार्याद्दक्षिणोत्तरान्धिष्ण्यवद्वा श्रुतेः[2] ॥२५॥ अग्नी°नात्प्राक् दक्षि-°त्तरान् गार्हपत्यान् उप°य्य शाला°त्तरांश्चिनोति गार्हपत्यान् धि°वत् · कुत एतत् श्रुतेः अथेतरेभ्य°धिष्ण्यानिति (४. ६. ८. ६) धिष्ण्यानित्यसत्यपि वतिप्रत्यये वत्यर्थो गम्यते अतस्मिंस्तच्छब्दस्य तद्वदतिदेशार्थत्वात् । सं° प्रभृतिशब्दः सप्तम्यर्थे उपवसथे ।

[वा][3] यथोक्तं गृहपतेः ॥२६॥ वाशब्दात्पक्षो विपरिवर्तते · न धिष्ण्यवच्चिनो-ति किं तर्हि यथो°पतेः गार्हपत्यस्य चयनम् तथेतरेषामपि गार्हपत्याविशेषात् · धिष्ण्यशब्दस्तर्हि कथम् स्थानवचन इत्यदोषः । सं° गृ°तेर्गार्हपत्यचयनं य°क्तं भवति परिमण्डलमेकविंशतीष्टकं च ॥ ॥ प्रथमा कण्डिका ॥ १ ॥ ॥

आग्नीध्रीयऽउद्यतेऽङ्गारमेकैकछ हरन्ति प्रतिचिति शालाद्वार्यात् ॥१॥ उद्यत °यन्तीति (४. ६. ८. ७) · तच्च यजमाना एव । सं° आग्नीध्रीयेऽग्नौ प्रणयनार्थमुद्यते ।

प्रत्यग्नि सवनीयपुरोडाशा भूयो हविरुच्छिष्टमसत्समास्याऽइति श्रुतेः (४. ६. ८. १७) ॥२॥ नानापुरोडाशता च द्वादशाहिको धर्मः सूत्राम्नानात् · प्रयोजनम् वि-कारेष्वैकाहिकेषु न भवति ।

पत्नीसंयाजाश्च पूर्ववत् ॥३॥ भवन्ति (५.१८)। गृहपतिं वा पर्युपविश्य मन्थन्ते ॥४॥ वा विकल्पार्थः । सं° द्वितीयं पक्षमाह · इतरे सत्त्रिणः गृ°तिं सर्वतो वेष्टयित्वा म°न्ते ।

---

1) Thus D. °र्मथित° K. 2) Thus ३. Ss. M. R. वा श्रुतेः deest KD. 3) Thus KD. deest ३. Ss. M. R.

गृहपतिः प्रथमः-प्रथमः सर्वत्र ॥५॥ सर्वपक्षेषु ।

ज्ञातं-ज्ञातं गृहपतिगार्हपत्ये प्रास्यन्त्युभयत्र ॥६॥ पर्युपवेशनपक्षे पशौ दीक्षायां चोभयत्रग्रहणात् । सं° उभयत्र इष्टकापशौ दीक्षाकाले ।

उपवसथप्रभृति तुल्यत् सर्वेषु ॥७॥ उप°ति यदुक्तम् (१. २५) तत्पक्षत्रयेऽपि तुल्यं भवति नाना गार्हपत्या इति (४. ६. ८. १३) यदुक्तं भवति ।

अरण्योर्वाग्नेर्गृहपतेर्य इतोऽग्निर्जनिष्यते स नः सह यदनेन यज्ञेन ज्ञेष्यामोऽनेन पशुबन्धेन तन्नः सह सह नः साधुकृत्या नाना पापकृत्या[1] य एव पापं करवत्तस्यैव तदित्युक्त्वा (४. ६. ४. १३) गृहपतिः समारोहयते स्वौ प्रथमम् ॥८॥ स्वावग्नी । सं° तृतीयं पक्षमाह · अथवा गृहपतेररण्योरित्याहुः सर्वे दीक्षिताः ।

यथास्वं वेतरे ॥९॥ गृहपतिर्वेति विकल्पः । सं° अथवा इ°रे दीक्षिता य°स्वं स्वौ-स्वावग्नी स्वयमेव गृहपतेररण्योः समारोहयन्ते न गृहपतिः ।

दीक्षाकाले संवादप्रभृति पशुबन्धस्थाने सत्त्रेणेति ॥१०॥ अस्मिन्नेव पक्षेऽयमपरो विशेषः · पशौ अरण्योर्वाग्नेर्गृहपतेरित्येतस्मिन्पशुबन्धेनेति (८) यत् तत्स्थाने सत्त्रेणेति (४. ६. ८. १५) प्रयोगः ।

एकाहवद्वोत्तमे शालागार्हपत्यपुरोडाशपत्नीसंयाजाः ॥११॥ एका°वदिति उ°मे पक्षे वा प्राग्वंशा शाला भवति वोदग्वंशेति विकल्पः · उपवसथप्रभृति (७) नानागार्हपत्येषु प्राप्तेषु विकल्पेन गार्हपत्यैकत्वमुच्यते · पुरोडा°याजानामप्येवमेव ।

एकपुरोडाशेषु व्रत्यासम्भवादैन्द्रं पञ्चशरावमोदनं निर्वपेत् पुरोडाशं वा यद्यो-दनीयन्ति यद्यपूपीयन्तीति श्रुतेः ॥१२॥ एक°डाशपक्षे । सं° व्रतार्हत्वासम्भवाद्भोजनपर्याप्तत्वासम्भवादैन्द्रं°डाशं वा · शाखान्तरश्रुतेः · यदि दीक्षिता ओदनं खादितुमिच्छन्ति तदा पञ्चशरावमोदनम् ।

बार्हस्पत्यमेके ॥१३॥ कुर्वन्ति नैन्द्रम् । दीक्षा द्वादशोपसदश्च ॥१४॥ भवन्ति ।

अध्वर्युर्गृहपतिं दीक्षयति ब्रह्मादींश्चाध्वर्युादीन्प्रतिप्रस्थाता प्रतिप्रस्थात्रादीन्नेष्टा नेष्ट्रादीनुन्नेतोन्नेतारं ब्रह्मचारी स्नातकोऽन्यो वा ब्राह्मणो न पूतः पावयेदिति (१२. १. १. १०) श्रुतेः ॥१५॥ अन्यो°ह्मण इति ब्राह्मणग्रहणं ब्रह्मचारिस्नात-

[1] नाना पापकृत्या deest in the Chambers-Mss. (5 and 39) of the Çat. Br. here as well as at ४. ६. ३. १५.

कयोरब्राह्मणयोरपि प्राप्त्यर्थम् उन्नेतृसम्बन्धार्थं च उन्नेतृसम्बन्धी ब्रह्मचारी स्नातकश्च यथा स्यादिति ।

अनुपति पत्नीरुत्तर-उत्तरः ॥१६॥ सं॰ उ॰रो दीक्षाकर्ता पतिसमीपे तत्पत्नीः दीक्षयति ।

त॰एवोन्नेतुः ॥१७॥ सं॰ त॰एव ब्रह्मचार्यादय ए॰तः पत्नीं दीक्षयन्ति ।

दक्षिणाकाले कृष्णाजिनानि धून्वाना दक्षिणापथेन व्रजन्तो गच्छन्ति यन्मेऽग-दायुषः परागितोऽगात्तां तेऽगद दक्षिणां नयामीतीदमहममुमामुष्यायणममुष्य पुत्रममुष्याः पुत्रं कामाय दक्षिणां नयामीति ॥१८॥ स चायं सत्त्रधर्मः अतश्चाहीने न भवति ऐकाहिकेषु च न भविष्यति ॥ ॥ द्वितीया कण्डिका ॥२॥ ॥

पृष्ठ्यः षडहः प्रथमोऽग्निष्टोमश्चतुर्थः षोडश्युक्थ्या इतरे ॥१॥ षण्णामह्नां पृष्ठ्य इतीयं संज्ञा सा च वैदिकी · दृश्यते च तया संव्यवहारः पृष्ठ्यमुत्तरमित्येवमादि (१२.२.३.४)।

तत्रातिग्राह्यग्रहणं त्र्यहे पूर्वेऽग्ने पवस्वोत्तिष्ठन्नदश्रमित्यन्वहमेकैकम् (८.३८-४०)॥२॥

उत्तरे वा ॥३॥ अतिग्राह्यग्रहणम् एवमेवान्वहम् (४.५.४.१४) ।

उभयोर्वा ॥४॥ त्र्यहयोर्ग्रहणम् · एवमपि हि श्रूयते पूर्वेऽ॰गृह्णीयादिति (॰१४) · पक्षत्रयं विकल्पेन सम्प्रदाये तु पक्षद्वयम् पूर्वे वा त्र्यहे उभयोर्वेति ।

माहेन्द्रमनु होमः ॥५॥ अतिग्राह्याणाम् ।

अग्ने वर्चस्विन्निन्द्रौजिष्ठ सूर्य भ्राजिष्ठेति (८. ३८-४०) भक्षणं यजमानैः ॥६॥ सह होमाभिषवकर्तुः · यजमानानामपूर्वभक्षविधानम् न हि तत्प्रत्याम्नायः ।

पृष्ठकाले[1] रथसंचारणं प्रथमे दक्षिणेन वेदिम् ॥७॥ माहेन्द्रग्रहयाज्याभ्या-सस्तोत्रं[2] पृष्ठम् · तत्काले द॰दिं र॰णाम् पृष्ठ्यस्य प्र॰मेऽहनि । सं॰ रथस्य सं॰णं प्राञ्चमुदञ्चं वा चालनं[3] कर्तव्यम् ।

द्वितीये दुन्दुभिशब्देनोपाकरणम् ॥८॥ द्वि॰येऽहनि दु॰ब्देन पृष्ठोपा॰णाम् ।

तृतीयऽऔपवाजनैः[4] ॥९॥ उपवाजना व्यजनका उच्यन्ते[5] ।

चतुर्थेऽरणिभ्यां मन्थनं चोद्गातुर्हरी[6] होमश्च ॥१०॥ च॰र्थेऽहनि[7] · आहवनीये ।

---

1) Thus Ss. K. R. पृष्ठ्यकाले M. १. D. 2) ग्रहयागाभ्या॰ D sec. m. 3) sic! instead of प्राच उदीचो वा! 4) व्यजनवायुभिः K marg. 5) Thus KD. 6) ? ॰तुर्हरी १. ३. M. KD. 7) च॰नि deest K.

पञ्चमे सावकयोदपात्र्या ॥ ११ ॥ उपाकरणम् । सं॰ शेवालसंयुक्तया पात्र्या ।

षष्ठे सांवाशिनेन ॥ १२ ॥ सांवाशिनशब्दार्थोऽप्रसिद्ध इत्यत आह ।

मातृभिर्वत्सांत्समवसृज्य सदः पूर्वेण व्यावर्तयन्ति ॥ १३ ॥

स्वयमृतुयाजेऽयावांश्वमद्य यथ्यं[1] नृवाहणा रथं युञ्जाथामिह वां विमोचनम् पृङ्क्तं हवींषि मधुना हि कं गतमथा सोमं पिबतं वाजिनीवसूऽइति ॥ १४ ॥ सा चाध्वर्युप्रतिप्रस्थात्रोः · ताभ्यां हि प्रेषिताभ्यां प्रकृतावुक्तम् होतरेतद्यजेति (९. १३. १६-१७) · तेन चाश्विनाविष्टौ · इयमपि च द्विवचनान्तत्वादाश्विनयाग एवेति गम्यते ।

होतृप्रत्ययः प्रतिगरः ॥ १५ ॥ माहेन्द्रग्रहशस्त्रे । सं॰ अस्मिन्पृष्ठ्ये षडहे होतृवेदे यत्र-यत्र पादशो विहितस्तत्र तथा भवतीति ।

प्राकृतं चान्यार्थत्वादितरेषाम् ॥ १६ ॥ प्रा॰तं च प्रतिगरपदं प्रवर्तते अन्या॰षाम् होतृकाणां प्रतिगरपदानामदृष्टार्थत्वात् · एवं च कृत्वा स्तोत्रोपाकरणमपि प्राकृतं प्रवर्तते अदृष्टार्थत्वाद्ग्रहसंसारणादीनाम् । सं॰ अदृष्टार्थेषु समुच्चयस्योक्तत्वात् धर्ममात्रेषु समुच्चय इत्यत्र (१. ८. ७) ।

षडहान्ते न बहु वदेन्नान्यं पृच्छेन्नान्यस्मै प्रब्रूयात् ॥ १७ ॥ तच्च ऋत्वर्थम् स्वाध्यायविषयमिति सम्प्रदायः तत्र हि प्रश्नप्रत्याख्यानानि सम्भवन्ति · षडहान्तग्रहणाच्च तदन्त[2] एव भवति न विहृते षडहे ।

मधोः प्राशनं घृतस्य वा ॥ १८ ॥ तच्चैतद्धर्ममात्रम्[3] दृष्टार्थाभावात् ।

उक्थ्याश्छन्दोमास्त्रय उत्तरे ॥ १९ ॥ उत्तरे छ॰स्त्रय उक्थ्याः ।

अत्यग्निष्टोमोऽविवाक्यं दशमम् ॥ २० ॥ अत्य॰मसंस्थमवि॰क्यसंज्ञं द॰ममहर्भवति ।

पत्नीसंयाजान्तान्यहान्यन्त्यवर्जम् ॥ २१ ॥ तच्चैतत्पदार्थपर्यवसानम् न तदन्ताङ्गीतिविधानम्[4] · अवभृथस्य दीक्षोन्मोचनार्थत्वात्सर्वान्तेऽवभृथः · तत्र समिष्टयजुरन्ते पर्यवसाने प्राप्ते पत्नीसं॰न्यहानि संतिष्ठन्तेऽइति वचनादिह पर्यवसानम् · द्वादशाहमृद्धिकामा उपेयुरिति युगपत्परिसमाप्तिरिति अत इदमुच्यते अन्त्यवर्जमिति ॥ ॥ तृतीया कण्डिका ॥ ३ ॥ ॥

---

1) ? अव्यं RDM. यजथं ?. See Riks. २. ३७. ५. 2) Thus D. तदत्र K. 3) Thus D. तत्र तद्य॰ K. 4) Thus K sec. m. तदंगांतरी॰ pr. m. and D.

एकैको वाग्यतः सोमं रक्षत्या बोधनात् ॥१॥ वचनात् (४.६.१.७)।

वसतीवरिपरिहरणादि वा ॥२॥ यतवाक्कं भवति उत्तराहःशेषभूतत्वात्।

इतरे विसृज्यन्ते स्वाध्यायाय समिध्यो वा ॥३॥ इतरे दीक्षिताः स्वाध्यायार्थं समिदर्थं च गच्छन्ति (४.६.१.७) वाशब्दश्चार्थे द्रष्टव्यः · सोमरक्षिता विकल्पस्थ एव स्वाध्यायं करोति समिधश्चास्यानीयन्ते।

तत्राप्यशनम् ॥५॥ अशनमपि तत्र गतानां भवति (४.६.१.७)।

दशमे वा संनिधेः ॥६॥ दशमे वाहनि समितस्वाध्यायोपगमो भवति तत्संनिधौ हि शिष्यते (४.६.१.७) · वा सर्वत्र प्रकरणात् संनिधिः क्रमः स प्रकरणेन बाध्यते तस्मात्सर्वत्रैव। सं॰ दशमसंनिधावस्य विधानात्।

अस्तमिते समिदाधानं सर्वेषु ॥७॥ सर्वेष्वहःसु यजमानेषु अग्निषु च प्रतिपत्तव्यम् शाखान्तरात्।

दशमेऽपराह्णेऽप उपस्पृश्य शालाप्रवेशनम् ॥८॥ दीक्षितानाम्।

शालाद्वार्येऽन्वारब्धेष्विह रतिरिति (८.५१) जुहोति ॥९॥ श्रुतेः (४.६.१.८)।

अपरामुपसृजन्निति (८.५१) ॥१०॥ आहुतिं जुहोति।

उत्तरेण प्रक्रम्यापरेण हविर्धानं प्रविश्योत्तरस्य हविर्धानस्यापरकूबरीमालभ्य[1] सत्रस्यर्द्धिं गायन्ति सत्रस्यऽर्द्धिरिति (८.५२) ॥११॥ शालाद्वार्यादुत्त॰क्रम्य अप॰णा द्वारेण हवि॰श्य उत्त॰नस्य दक्षिणामपरकू॰यन्ति सत्रस्यऽर्द्धिरित्याहुः सर्वऽएव दीक्षिताः।

उत्तरवेदिश्रोण्यां वोत्तरस्याम् ॥१२॥ सत्रस्यर्द्धिगानं कुर्वन्ति · विकल्पः।

युवं तमिति (८.५३) दक्षिणस्याधोऽक्षं प्राञ्चो निष्क्रामन्ति ॥१३॥ द॰स्य हविर्धानस्य।

सदः प्रविश्य पूर्वेणा स्वासनेषूपविशन्ति ॥१४॥ पू॰णा द्वारेणा स॰श्य धिष्ण्याव्यवायेन स्वा॰न्ति।

ग्रहं गृह्णाति प्राजापत्यं वायुं पृथिव्या पात्रेण ॥१५॥[2]

ग्रहणासादनस्तोत्रोपाकरणहोमभक्षाहरणभक्षणानि मनसा ॥१६॥ कर्तव्यानि।

चतुर्होतृव्याख्यानं होतुः ॥१७॥ शस्त्रं भवति।

---

१) लभ्य D. १.　२) Thus M.R.३. वायव्यं schol. at ४.५.८.

गृहपतिरनानति ॥१८॥ होतर्यनानति गृ॰तिर्व्याचक्षीत (४. ६. ३. १८)।

प्रतिगृणात्यरात्सुरिमे यजमाना भद्रमेभ्यो यजमानेभ्योऽभूदिति ॥१९॥ चतुर्होतृव्याख्याने प्रतिगरः।

ब्रह्मोद्यं वदन्ति ॥२०॥ तन्न ज्ञायते किमित्यत आह ·

प्रजापतेरगुणाख्यानम् ॥२१॥ तत्कुतो ऽर्थवादात् प्रजापतिमेव तत्परिवदन्ते। सं॰ अगुणस्य प्रजापतेः निर्गुणस्य परस्य ब्रह्मणः आख्यानं कथनं निरूपणम्।

अप्रतिभायां वा तद्वादः[1] ॥२२॥ प्रजापतिं परिवदितुं प्रतिभैव नास्ति तस्य विधिप्रतिषेधाभावात् · तस्मादसदेतत्।

आश्वमेधिकं वा नामधेयात् ॥२३॥ आ॰कं वा ब्रह्मोद्यम् · कुत एतत् ना॰ध्यात् नामधेयं हि ब्रह्मोद्यमिति तत्रैव प्रतीतिं जनयति। सं॰ अप्र॰धाम् स्फूर्तौ[2] व्याख्यानाशक्तौ आश्वमेधिकं ब्रह्मोद्यं वदन्ति · कुतः ना॰धात् अश्वमेधे होता च ब्रह्मा (१३. २. ६. १) सदसि ब्रह्मोद्यं वदन्ति (१३. ५. २. ११) अतो नामधेयसाम्यात् तुल्यनामत्वात्तदेवात्र भवति।

अनस्तमिते गृहीत्वौदुम्बरीं वाचं यच्छन्ति ॥२४॥

अस्तमिते निष्क्रम्यापरेणोत्तरवेदिमासते प्रतिप्रस्थाता वसतीवरीः परिहरति ॥२५

वाग्विसर्जनञ्च सत्त्रकामेन ॥२६॥ येन कामेन सत्त्रमारब्धं तेन वा॰नम् असौ नः कामः समृध्यतामिति (४. ६. ९. २३)।

पृथक्कामेषु भूर्भुव इति (८. ५३) ॥२७॥ भूर्भुवः स्वरिति वाग्विसर्जनम्।

सुब्रह्मण्याह्वानं गृहपतेर्य वाह ॥२८॥ सं॰ अथ वा गृहपतिर्य ब्रह्मादिकं सत्त्रिणं प्रति आह स करोति।

सुब्रह्मण्य ऽउप मा ह्वयस्वेत्युक्त्वा समिदाधानम् ॥२९॥ यस्य-यस्य सुब्रह्मण्याह्वानम् स स सुब्र॰धानं करोति।

अप-उपस्पर्शनाद्येतत्सत्त्रोत्थानम् ॥३०॥ स॰नमिति नामधेयम् तच्च संव्यवहारार्थम् दशरात्रोऽसत्त्रोत्थान इति (२३. ५. ३१) · अतिग्राह्यषोडशिप्रसङ्गेनेदमुच्यते। सं॰ अपउप॰नादि प्रागुक्तं कर्म स॰नसंज्ञं भवति॥ ॥ चतुर्थी कण्डिका ॥४॥ ॥

---

1) वा deest D.— Ss. gives २२. २३ as one sûtra, and omits: वा तद्वादः · 2) ? यामस्फू॰ Ss.

अन्तराग्रयणोक्थ्यावाग्नेस्थानं ग्रहाणाम् ॥१॥ आ॰क्थ्यावन्तरेणागन्तवो ग्रहा ग्राह्याः[1]।

प्रातःसवनेऽतिग्राह्यान्गृहीत्वा षोडशिनं खादिरेण चतुःस्रक्तिनातिष्ठ युक्ष्वा हीति वा (८.३३-३४) ॥२॥ मन्त्रविकल्पः। अतिग्राह्यबहुत्वस्याभावाच्च बहुवचनमुच्चारणार्थम्· अतिग्राह्यषोडशिनोः पौर्वापर्यं शाखान्तरात् अस्यापि हि ग्रहाणामाग्रयणादुत्तरमेव तं वै प्रातःसवने गृह्णीयादाग्रयणं गृहीत्वेति (४.५.३.७)।

माध्यन्दिने वाग्रयणादुत्तरः ॥३॥ षोडशी गृह्यते· एवमपि हि श्रूयते माध्य॰हीत्वेति (१८)।

धाराग्रहान्ते वातिग्राह्यान् ॥४॥ माध्यन्दिने वै॰दुक्थ्यं गृहीत्वेति श्रुतेः (४.५.४.७)।

पूतभृतो वोपाकरिष्यन्पृष्ठम् ॥५॥ षोडशिनं गृह्णाति · पृष्ठमुपाकरिष्यन्नतिग्राह्यान्गृह्णातीति योगविभागः। एवं चातिग्राह्याणां कालत्रयम्· षोडशिग्रहणस्य तु चत्वारः कालाः अन्तराग्रयणोक्थ्यौ तृतीयसवने कण्वपाठाच्चतुर्थः कालः। सं॰ वा पृष्ठोपाकरणात्प्राक् पूतभृतः सकाशादतिग्राह्यान्गृह्णीयात्।

अपो निधायाऽदाभ्यग्रहणमौदुम्बरेण चतुःस्रक्तिना ॥६॥ अंशुग्रहणे वाच्ये ऽदाभ्यग्रहणोक्तिः संनियोगसिद्ध्यर्था। सं॰ एकधन॰धायेत्यस्यानन्तरम् (९.३.२३)।

अंऽशोस्तूष्णीं सर्वम् ॥७॥ वक्ष्यमाणकं पदार्थजातम्।

अनुक्तसंश्लेषन् ॥८॥ वक्ष्यमाणकमेव।

आदानाऽऽशुनिवपनोपसर्जनसकृत्प्रहरणग्रहणहोमान् हिरण्यं चोपजिघ्रति ॥९॥

उद्यम्य वा प्रहरणम् ॥१०॥ स चायं विकल्पः शास्त्रस्य तुल्यत्वात्।

सत्त्रसहस्रसर्ववेदसवाजपेयराजसूयविश्वजित्सर्वपृष्ठेषु ग्रहणमवकाश्यश्चेत् ॥११॥ सं॰ यदि यजमानोऽवकाश्योऽवकाशवाचनार्हो भवति (९.७.१६)।

द्वादश वत्सतर्यो गर्भिण्यो दक्षिणासत्त्रे ॥१२॥ अदक्षिणत्वात्सत्त्राणामसत्त्र इत्युक्तम्। सं॰ सत्त्रादन्यस्मिन्सहस्रदक्षिणादौ यज्ञे।

बुभूषतोऽदाभ्यं गृह्णाति ॥१३॥ संनियोगशिष्टत्वाददाभ्यस्य· [यस्य] भूतिरिष्येष्यते। आसिच्य निग्राभ्याः पात्रे तस्मिंस्तूष्णीं त्रीनंऽशूनवधायाग्नये वा गायत्रच्छन्दसमिति

1) See Mahîdh. at २३. ९.

(८. ४७) प्रतिमन्त्रम् ॥१४॥ अंशुपात्रे निग्राभ्यास्तूष्णीमासिच्य · मन्त्राभावात्तूष्णीमिति लौकिकवागुच्चारणप्रतिषेधः ।

उपयामः सर्वत्राविशेषात् ॥१५॥ सर्वेष्वेवांश्ववधानेषूपयामो भवति · कुत एतत् सर्वैर्हि योगोऽविशिष्टः यथाद्येन तथोपरितनयोरपि · तस्मादुपयामस्यानुषङ्गः ।

विग्रहादित्यग्रहप्रतिषेधाच्च ॥१६॥ विग्रहादित्यग्रहेषु च प्रतिषेधो भवति · तं वै नोपश्सादयेदिति (४. २. ३. १८) तथा आदित्यग्रहे तं वै नोपयाम्भवतीति (४. ३. ५. ११) तस्मादंश्ववधानं प्रत्युपयाम इति ।

अनुष्टुप्तऽइत्युक्त्वा (८. ४७) ऽऽधूनोत्यच्छुभिर्ब्रेशीनां त्वेति (८. ४८) गच्छन्नाहवनीयं तस्मै तऽइति (८. ४९) जुहोति ॥१७॥ तस्मै तऽइत्यनेन मन्त्रेण जुहोत्युदकम् ।

अच्छूल्सोमे निदधात्युशिक्कमिति (८. ५०) प्रतिमन्त्रम् ॥१८॥ ईषान्तरेणावृद्ध-तार्धसोमे ततो हि ते गृहीता इति ।

अच्छुवद्दक्षिणा ॥१९॥ भवति । सं° द्वादश वत्सतर्यः ।

उक्थ्यान्ते षोडशिचरणामुपस्थायैनं यस्मान्न जात इति (८. ३६) चमसानुन्नीय ॥२०॥ उक्थ्यप्रचारान्ते । सं° सदोऽभिमर्शनादि सर्पणान्तं कृत्वा षोडशिग्रहेण प्रचरणं करोति ॥ ॥ पञ्चमी कण्डिका ॥५॥ ॥

तृणाहिरण्ये स्तोत्रोपाकरणमुपास्तमयच्च सोमोऽत्यरेच्युपावर्तधमिति कृत्वेऽश्च ऽउपतिष्ठति ॥१॥ तृणैः षोडशिनः स्तोत्णाम् अस्तमनसमये · (४. ५. ३. ११) ।

इन्द्रश्च सम्राडिति (८. ३७) भक्षणम् ॥२॥ भवति ।

आ पात्रप्रक्षालनात्कृत्वातिरात्रश्चेत्सौम्येन सहाश्विनो द्विकपालः सर्वत्र ॥३॥ आ पात्वा षोडशिनः अत्रैव च षोडशिसंस्था परिसमाप्तिः । उत्तरेणातिरात्रे विशेष उच्यते सौम्लः कर्तव्यः · सर्वत्रग्रहणाच्चातोऽन्यत्राप्याश्विनो द्विकपाल एव भवति । अतिरात्रऽएवापरो विशेष उच्यते ·

त्रयः पर्यायाश्चमसैश्चतुस्तोत्रः पर्यायः ॥४॥ चमसैर्यागपर्यायास्त्रयः चतुस्तोत्र एकैकः पर्यायः । तत्र च ·

होतुः प्रथमं-प्रथमम् उक्थ्यवदितरेषु ॥५॥ शस्त्रकर्तारः ।

तदन्ते चमसानुन्नीय स्तोत्रोपाकरणाद संधेः ॥६॥　तेषां पर्यायाणामन्ते चमस संधिस्तोत्रम् । सं° तेषामन्ते सर्पणं कृत्वा संधेः स्तोत्रस्योपाकरणं करोति ।

होता शस्त्यात्याश्विनम् ॥७॥ पर्यायान्तेषतिप्रवृत्त्याच्छावाको मा भूदिति होतेति ।

शस्त्वान्तेऽश्विनेन सर्वहुतेन चरति ॥८॥

एकप्रदानश्चमसैः ॥९॥　सं° स चाश्विनः चमसैः सह एकः समानप्रदानो भवति ।

अश्विभ्यां तिरोऽह्न्यानाद सोमानामनुवाचनप्रैषौ ॥१०॥　अत्र भवतः 'ज्योतिष्टोमे षोडश्यतिरात्रयोः क्रतुपशवः क्रतुकरणं चोक्तम्　शेषः संस्थाविशेषोऽत्राभिहित इति ।

ऐन्द्राग्नः सवनीयोऽन्वहम् ॥११॥　भवति · स चायमङ्गानां गणधर्मः　तथा च विकृताविकारिकेष्वपि भवति ।

स्तोमायनं वा ॥१२॥　यथास्वं भवति ।

एकादशिना[1] वा विहृताः ॥१३॥　सं° अथवान्वहं विहृता विभक्ता एकादशिनीसम्बन्धिन आग्नेयादयः पशवः एकादशस्वहःसु भवन्ति ।

द्वादश आद्यः ॥१४॥　अस्मिंश्च पक्षे द्वादश आद्यो भवति ।

सर्वसमासो वा ॥१५॥ सं° वाथवा तादृशेऽहनि समस्तः सर्वाप्येकादशिनी भवति ।

ऐन्द्राग्नो वा ॥१६॥ विकल्पः ।　　यावच्छेषमुत्तरेषु ॥१७॥　उक्तेषु अहर्गणेषु एकादशिनिपक्षे वा यावच्छेषमालब्धव्यम् । सं° उक्तेषु त्रयोदशरात्रादिषु एकादशिना वा विहृतास्तदा एकादशसु अहःसु एकवारं समाप्य पुनर्द्वादशाहादिषु द्वितीयवारमाहृत्य आलभ्यन्ते तदा अन्त्येऽहनि यावच्छेषम् यावन्तः पशव एकादशानां मध्येऽवशिष्यन्ते तावन्तः सर्वेऽन्त्येऽहन्यालभ्यन्ते ।

काम्यद सत्त्रम् ॥१८॥　नित्यवचनाभावात्काम्यत्वे प्राप्ते काम्यग्रहणं पृथक्कामानामप्यधिकारप्रज्ञापनार्थम् । सं° सत्त्रं काम्यं भवति न तु नित्यम् ।

अहीने व्यूढच्छन्दसि दशरात्रस्य चतुर्थनवमयोरह्नोराग्रयणाग्रहणं प्रथमम् ॥१९॥ तद्यत्रैतद्व्यायजत इति (४.५.१.१) व्यूढच्छन्दाश्चाहीनोऽस्ति यमङ्गीकृत्य उद्गातुर्होतुश्छन्दसां व्यूहनमाम्नातम् तत्र विशेषव्याचिख्यासयेदमाह । सं° अहीनेऽसि द्वादशाहे ।

1) Thus DK.

शुक्रस्य षष्ठसप्तमयोः ॥२०॥ प्रथमं ग्रहणं भवति · प्राथम्यं चैन्द्रवायवापेक्षया नोपांश्वन्तर्यामापेक्षया ।

असादनमा पूर्वेषां ग्रहणात् ॥२१॥ सं॰ शुक्रादाग्रयणाच्च ये पूर्वे ग्रहास्तेषां ग्रहणादर्वाक् असादनम् सादनं तयोर्न कार्यम् ।

परिमार्जनप्रभृति काले हिङ्कृत्य सादनम् ॥२२॥ यस्य हिङ्कारोऽभिहितः इतरस्य त्वहिङ्कृत्यैव । सं॰ शुक्रस्य चाग्रयणस्य च प्राकृते काले परिभृति सादनं भवति आग्रयणस्य तु हिङ्कृत्य ।

अव्यूळ्हो वा ॥२३॥ छन्दसां व्यूहनपक्षेऽपि वाव्यूळ्हो भवति द्वादशाहः एवमपि श्रूयतऽइति । सं॰ दशरात्रो भवति · ग्रहाणां व्यूहो न भवतीत्यर्थः ।

उभयतोऽतिरात्रः ॥२४॥ या त्वन्यतरतोऽतिरात्रतोक्ता[1] (९. ६) सा विकृतिविषया । सं॰ अयमहीनात्मको द्वादशाहो वचनादुभयत्रो भवति ।

अतिप्रेषितेऽग्नीदाह श्वःसुत्यामिन्द्राग्निभ्यां प्रब्रवीमि विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोमपेभ्यो ब्रह्मन्वाचं यछेति ॥२५॥ सर्वान्प्रेषानतीत्य वर्ततऽइत्यतिप्रेषितो हारियोजनोत्तरकालऽइत्यर्थः · तत्राग्नीदाह श्वःसुत्यामित्येवमादि · अयं च श्वस्तनाहःशेषभूतः ब्रह्मन्वाचं यछेत्ययं त्वद्यतनस्यैव · प्रयोजनम् ऐकाहिकेषु विकारेषु द्वादशाहिकेषु च यथार्थं प्रयोगः ।

प्रायणीयेऽद्यसुत्यामेके प्राप्तकालत्वात् ॥२६॥ प्रायणीयोऽतिरात्रो द्वितीयेऽहनि परिसमाप्यते · तत्र च पार्ष्ठिकं प्रथममहर्भवति · तेनैतदुच्यते ऽद्यसुत्यामिति वक्तव्यम् प्राप्त एव हि काल इति । सं॰ यतोऽद्य प्राप्त[ः] काल एव · प्रायणीयातिरात्रो हि द्वितीयेऽहनि परिसमाप्यते तदैव पार्ष्ठिकं प्रथममहरारभ्यते ।

न पूर्वशेषात् ॥२७॥ एवं प्राप्तऽआह न पूर्षात् · पूर्वस्यैवाह्नः शेषभूतोऽयमतिप्रेषितः ततश्च श्वःशब्देन कर्मान्तरमुच्यते नाहरन्तरम् ।

तस्माच्च श्वोभावात् ॥२८॥[2] तस्माच्च कर्मणः श्वःशब्देन कर्मान्तरमुच्यते । सं॰ तस्मात्प्रायणीयातिरात्रात् श्वःशब्देन कर्मान्तरं पार्ष्ठिकप्रथमाहःकर्मोच्यते ।

---

१) °रात्रेतोक्ता D. °रात्रोक्ता K 1. °रात्रोक्तिः K 2. २) °त्वादिति KD. इति deest १. ३. M. Ss., who moreover give this sûtra between २९ and ३०.

अचोदितत्वाच्च ॥२९॥ न चैवंविधा चोदना विद्यते प्रायणीयेऽह्यसुत्यामिति वक्तव्यमिति ।

अग्निमद्येति च लिङ्गात्[1] ॥३०॥ अद्यशब्दः कर्मविषयः · अग्निमद्य होतारमवृणीतायं यजमान इति (२१.५१) अन्यस्मिन्नेवाहन्यन्तरे वृतो होताद्यशब्देनोच्यते तच्च कर्मविषयेऽद्यशब्द उपपद्यते नान्यथेति । इदमेव तावद्विचार्यते किं प्रायणीयादुत्तरं यदहस्तस्मिन्नेवाहन्यारब्धव्यमुत द्वितीय इति · किं तावत्प्राप्तम् · सूत्रेणैवोपक्रमः ·

प्रायणीयादुत्तरमहः श्वः कालाभावात् ॥३१॥ प्राथादवसितादुत्तमहः उत्तरं कर्म श्वः आरब्धव्यम् न तस्मिन्नेवाहनि · कुत एतत् कालो हि न सम्भवेत् · अत्र प्राग्वाचः प्रवदनात्प्रातरनुवाककालः(९.२.२०) तथोपांश्वन्तर्यामयोस्तयोरुदितेऽन्यतरं जुहोत्यनुदितेऽन्यतरमिति कालो न सम्भाव्यः[2] श्वः पुनः क्रियमाणे सम्भवति ।

न सम्पद्धतेः ॥३२॥ एवं प्राप्तेऽत्राह नैतदेवम् अद्य आरब्धव्यमिति अद्यैवारभ्यते · कुत एतत् सम्पत्तिर्हि भवति षट्त्रिंशदहो वाऽएष यद्वादशाहः षट्त्रिंशदक्षरा वै बृहती तद्बृहतीमभिसम्पद्यतऽइति · तच्चैवमुपपद्यते · श्वस्तनेऽह्न्यारम्भे न षट्त्रिंशद्विर्व्यवतिष्ठेत तत्र सम्पत्तिविरोधः ।

कालो वचनात् ॥३३॥ यः पुनः कालविरोधः स वचनादिति । सं० कालोऽपररात्रादिर्वचनाद्बाध्यते नास्ति वचनस्यातिभारः ॥ ॥ षष्ठी कण्डिका ॥६॥ ॥

इत्युपाध्यायकर्ककृतौ कात्यायनसूत्रभाष्ये द्वादशोऽध्यायः ॥ ॥

इति कात्यायनसूत्रे द्वादशोऽध्यायः ॥१२॥ ॥

---

उक्तो द्वादशाहः । तत्संनिधावेव गवामयनस्य परामर्शोऽस्ति सौर्यंमहाव्रत इति (४.६.३.३) · गवामयनमेव तावदारभ्यते । पूर्वं धर्मप्राप्त्यर्थमधिकरणम् ·

द्वादशाहधर्मा सत्त्रेषु तद्गुणादर्शनात् ॥१॥ द्वादशाहिका धर्माः प्रवर्तन्ते सत्त्रेषु तद्गुणा ह्यत्र दृश्यन्ते · अभिप्लवं पूर्वं पुरस्ताद्विषुवत उपयन्ति पृष्ठ्यमुत्तरमिति (१२.२.३.४) तथा पृष्ठ्यमुपरिष्टाद्विषुवतः पूर्वमुपयन्तीति चेति (१२.२.३.४) पौर्वापर्य-

---

1) Thus KD. लिङ्गात् deest १.३. M. Ss. 2) Thus K. संभाव्यते D.

विधिपरे[1] वाक्ये द्वादशाह्निकं पृथ्यं दर्शयति · न्यायस्तु पूर्वमुक्त एव सामर्थ्यात् (४. ३. २) गुण एव गुणमनुग्रहीतुं समर्थो नान्यः । सं° त्रयोदशरात्रादिषु सत्त्रेषु ।

गवामयनायिकाष्टकायां दीक्षा ॥२॥ सं° एकाष्टका नाम कृष्णाष्टमी माघस्य प्रसिद्धेः।

फाल्गुनीपौर्णमासे[2] ॥३॥ दीक्षेतेति · अत्रापि हि वचनम् (ताण्ड्ये ५. १) ।

चैत्र्याम् ॥४॥ चतुरहे वा पुरस्तात्प्राक्पौर्णमास्याः ॥५॥ पौर्णमासी च फाल्गुनी गृह्यते सा ह्यत्र पूर्वमभिहिता · तस्याः पुरस्ताच्चतुरहे दीक्षेरन् ।

चैत्र्यानन्तर्यात् ॥६॥ चैत्री चतुरहविशेषणत्वेन प्रतिपत्तव्या । सं° आर्थात् चैत्र्यां पौर्णमासे[3] दीक्षेरन्नित्युक्तानन्तरमेव चतुरहे श्रुतत्वात् (ताण्ड्य° ५. १) ।

सर्वा वाविशेषात् ॥७॥ सर्वाः पौर्णमास्यश्चतुरहविशेषणत्वेन प्रतिपत्तव्याः विशेषानवगमात् · एवं च पौर्णमासीशब्दः सर्वत्र प्रवर्तमानो न संकोचितः स्यात् ।

माघी वा क्रयश्रुतेः ॥८॥ सं° वावधारणे · माघ्येव चतुरहस्यावधित्वेन ग्राह्या न चैत्री न फाल्गुनी · कुतः क्र°तेः (ताण्ड्य° ५. १) तेषामेकाष्टकायां क्रयः सम्पद्यते [इति] ।

लोकप्रत्ययात् ॥९॥ कुत एतत् लो°यात् एषा हि लोके एकाष्टकेति प्रसिद्धा।

अर्थवादाच्च ॥१०॥ किं च अर्थवादश्च भवति · तानुत्तिष्ठत ओषधयो वनस्पतयो[4]ऽनूत्तिष्ठन्ति तान्दीक्षितानुत्तिष्ठतोऽनु[5] ओषधिवनस्पतीनां प्ररोहो भवति तच्चैवमुपपद्यते · तथा तर्ह्यपोऽभिनन्दमाना अवभृथमभ्यवयन्ति तदप्येवमेव घटते · वनस्पतिप्ररोहोऽपामभिनन्दनं च चैत्रोद्देशऽएव भवति · तस्मान्माघी चतुरहविशेषणम् ।

पवमानिषूद्गातारमन्वारभेरञ्छ्येनोऽसि गायत्रछन्दा अनु त्वारभे स्वस्ति मा सम्पारय सुपर्णोऽसि त्रिष्टुप्छन्दा ऋभुरसि जगच्छन्दा इतीतरयोः सवनयोः ॥११॥ (१२. ३. ४. ३-४ । ताण्ड्य° १. ३) ।

सवनान्तेषु जपन्ति मयि भर्गो मयि महो मयि यशो मयि सर्वमिति ॥१२॥ बहुवचनोपदेशात्सर्वे यजमानाः उद्गात्रालम्भसवनान्तजपौ कुर्वन्ति[6] ।

---

1) ? पूर्वा° K. 2) °ल्गुनि° Ss. 3) चित्रापूर्ण° Tâṇḍya. 4) °ष्ठतः पशव ओषधयो Tâṇḍya ५. १. 5) ? °जपान्त° K.

सर्वत्रैके ॥ १३ ॥ सर्वत्रैवैकऽएतदिच्छन्ति · कुत एतत् ·

यजतिशब्दात् ॥ १४ ॥ पुरुष॰यजस्वेति (१२. ३. ४. १) एवमुक्तैतत्सर्वमभिहितमिति ।

न प्रकरणात् ॥ १५ ॥ नैतदेवम् सर्वत्रैतदिति येन गवामयनं प्रकृत्यैतच्छ्रूयते · एवं यजतिशब्दोऽप्यनुगृह्यते प्रकरणमपि ॥ ॥ प्रथमा कण्डिका ॥ १ ॥ ॥

अभिप्लवः षडहो ऽग्निष्टोमौ प्रथमान्त्याऽउक्थ्या इतरे ॥ १ ॥ षण्णामह्नामभिप्लव इतीयं वैदिकी संज्ञा · संस्थामात्रनिर्देशश्चात्र संस्थितास्त्वैकाहिकाः · एवं चात्र नाम्ना धर्मा ऐकाहिका भवन्ति न द्वादशाहिकाः सत्त्रगणधर्मास्तु प्रवर्तन्तऽएव ।

अतिरात्राच्चतुर्विंशमहरग्निष्टोम उक्थ्यो वा ॥ २ ॥ अति॰त्रादवसिताच्चतु॰महःसंज्ञकोऽग्नि॰क्थ्यो वा भवति · गवामयनिकश्चायम् ततश्च द्वादशाहिका अपि धर्मा प्रवर्तन्ते ।

चत्वारोऽभिप्लवाः पृष्ठ्यश्च मास एवं चत्वार उत्तरे ॥ ३ ॥ सं॰ एतैः प्रथमो मासः · यादृशः प्रथमो मासोऽभिहितः एवमेव द्वितीयप्रभृतयश्चत्वारो मासा भवन्ति ।

षष्ठे त्रयोऽभिप्लवाः पृष्ठ्यः ॥ ४ ॥ षष्ठे मासे अभि॰वास्त्रयः पृष्ठ्यश्च ।

अभिजिदग्निष्टोमः ॥ ५ ॥ ननु चायमग्निष्टोमसंस्थ एवाभिजित् किमुच्यते अग्निष्टोम इति · उच्यते · अग्निष्टोमग्रहणादभिजिदन्तरं तत्संज्ञकं गवामयनिकमेतत् अतश्चात्र द्वादशाहिका अपि धर्माः प्रवर्तन्ते ।

त्रयः स्वरसामानो ऽग्निष्टोमा उक्थ्या वा ॥ ६ ॥ स्वरसामसंज्ञकाः । सं॰ अग्निष्टोमसंस्थास्त्रयः क्रतवो भवन्ति वा उक्थ्यसंस्था वा ।

अग्निष्टोमो विषुवान् ॥ ७ ॥ विषुवत्संज्ञकोऽग्निष्टोमो भवति ।

प्रातरनुवाकः संधिवेलायाम् ॥ ८ ॥ सं॰ पर्युदयम् न प्रागवा॰दितोः (१. १. १०) ।

उदिते ॥ ९ ॥ सं॰ सूर्ये प्रातरनुवाकः ।

यथोक्तं वा ॥ १० ॥ दिवाकीर्त्यमेतदहर्भवतीति श्रूयते तेनैतदुच्यते संधिवेलायामिति · यद्येवम् नियतचोदकपरिप्राप्तः कालबाधः शक्योऽभ्युपेतुम् · दिवाकीर्त्यता हि ब्राह्मणविषया अस्य ब्राह्मणं दिवा कीर्त्यतऽइति दिवाकीर्त्यम् कीर्तनशब्दश्चोच्चारणार्थः · एवं चेत् यथोक्तमेवेत्यवधार्यते । सं॰ प्राकृते काले ।

सौर्य उपालम्भ्यः ॥ ११ ॥ वचनात् (४. ६. ३. ३) । सं॰ सूर्यदेवतः सवनीयस्य उप

समीपे आलम्भनीयः ।

उडु त्यमिति (८. ४१) ग्रहग्रहणम् अतिग्राह्यवद्भक्षवर्जम् ॥१२॥ विधिर्भवति।

पूर्वपक्षं प्रतिलोमम् ॥१३॥ सं॰ मध्यस्थितमात्मस्थानीयं विषुवन्तमुभयतोऽव-स्थानात्पूर्वापरमासषट्कयोर्गुणवृत्त्या पक्षत्वम् पक्षाविव पक्षौ · तयोर्यः पूर्वपक्षः स्वरसामान्त उक्तः तं प्र॰लोममुपेयुः ।

अभिजित्स्थाने विश्वजिदग्निष्टोमः ॥१४॥ अत्र विशेषमाह अभि॰मः । स च ·

सर्वपृष्ठश्चेत् सर्वेऽतिग्राह्याः ॥१५॥ भवन्ति । एतदपि चाग्निष्टोमग्रहणाद्विश्व-जिदन्तरम् नैकाहिक इति · ऐकाहिकत्वे हि अग्निष्टोमग्रहणं न करोत्याचार्यः कृतं च तस्माद्विश्वजिदन्तरं गवामयनिकमेतत् · अतश्च द्वादशाहिका अप्यत्र धर्मा भवन्ति । सं॰ स विश्वजिदग्निष्टोमः सर्व॰श्चेत् तदा सर्वे त्रयोऽतिग्राह्याः ।

षष्ठे मासे त्रयोऽभिप्लवा गोऽआयुषी[१] दशरात्रो महाव्रतमग्निष्टोमः ॥१६॥ अत्र दशरात्रो द्वादशाहिकः महाव्रतं गवामयनिकम् शेषास्त्वैकाहिकाः ।

प्राजापत्य उपालम्भ्यः ॥१६॥ महाव्रते विशेषमाह वचनात् (४. ६. ३. ३) ।

गहं गृह्णाति वि न इन्द्र वाचस्पतिं विश्वकर्मन्निति वा (८. ४४-४६) ऽतिग्राह्य-वत् ॥१८॥ गृहीतस्य विधिर्भवति ·

उप मा यन्तु मज्जयस्सनीडा[२] उप मा जन्तुरुप मा मनीषा प्रियामहं तन्वं पश्य-मानो मयि रमो देवानां तेजसे ब्रह्मवर्चसायेति भक्षणं यजमानैः ॥१९॥

पृष्ठोपाकरणं बाणेन शततन्तुना ॥२०॥ सं॰ वाणो महती वीणा · शत तन्तवो [य]स्यासौ श॰न्तुः · तेनोपाकरणम् ।

मौञ्जास्तन्तवो वैतसं वादनम् ॥२१॥ सं॰ अस्मिन्वाणे · वै॰सं वेतसवृक्षस-म्बन्धि ॥ ॥ द्वितीया कण्डिका ॥२॥ ॥

बृसीषूपविशन्ति प्रेङ्खे होता फलकेऽध्वर्युः प्रतिगृणाति ॥१॥ सं॰ सर्वे ऋत्विजो बृ॰षु कूर्चेषु दर्भमयाः कूर्चाः आसनविशेषाः · प्रेङ्खो दोला ।

उद्गातासन्द्यां प्रादेशपाद्यां सोमासन्दीवत् ॥२॥ (७. ३. २७) ।

---

१) गो॰षी उक्थ्यौ पूर्वमायुः ततो गौः ताण्ड्ये आयुश्च गौश्चेति श्रुतत्वात् सूत्रेऽल्पाच्त्वात्पू-र्वनिपातः K. marg. २) ?? Thus M. ३. ॰ज्जयसनी॰ १. ॰ज्जयस्वनी॰ K. R. AB.

अन्यदन्तर्वेदि ॥३॥ वक्ष्यमाणं कर्म भवति ।

अभिगरापगरौ ॥४॥ अभि॰रो दीक्षितानां स्तुतिः[1] अप॰रस्तु निन्दा । तदेवेदमुक्तम् ·

आक्रोशत्येकः प्रशंसत्यपरः ॥५॥ सं॰ आ॰ति निन्दति · अ॰रः सत्त्रिणः स्तुतिं करोति ।

पुंश्चलूब्रह्मचारिणावन्योऽन्यमाक्रोशतः ॥६॥ पुंश्चलूर्जघनचापला । सं॰ पुमांसं-पुमांसं [प्रति] चलतीति पुंश्चली वेश्या जघनचपला स्त्री · सा च ब्रह्मचारी च तौ अन्योऽन्यं परस्परमुद्वेगकरं वाक्यं भाषेते ।

शूद्रार्यौ चर्मणि परिमण्डले व्यायच्छेते ॥७॥ निमित्तसप्तमीयम् चर्मणि निमित्तभूते । सं॰ शूद्रश्चतुर्थो वर्णः आर्यस्त्रैवर्णिकः · तौ प॰ले वर्तुले च॰णि व्या॰च्छेते विरुद्धमात्माभिमुखं चर्मण आकर्षणं कुर्वाते मदीयमिदं-मदीयमिदं [इति] स्पर्धया स्वाभिमुखं बलादाकर्षणं कुरुतः ।

जयत्यार्यः ॥८॥[2] मार्जालीयं दक्षिणेन परिवृते मिथुनं सम्भवति ॥९॥ सं॰ स्त्रीपुमांसौ सुरतसम्भोगं कुरुतः ।

क्षत्रियं संनाह्यति दक्षिणां वेदिश्रोणिमपरेण ॥१०॥ संनहनक्रियां कारयति · कारिते चाध्येषणा क्षत्रियं संनह्यस्वेति ।

मर्माणि तऽइति (१७.४१) कवचं प्रयच्छति ॥११॥ क्षत्रियाय ।

तूष्णीमन्येभ्यः ॥१२॥ बहुवचनोपदेशात्त्रिभ्यः · अन्यशब्दस्य समानजातीयन्यायात् क्षत्रियेभ्यः ।

त्रिः समन्तं परियन्ति शालामपरेणोत्तरेण चात्वालं वशाचर्म कटे विशाख्यां वास्तीर्णमुच्छ्रितं वा विध्यन्त्यनिष्पत्त्रम् ॥१३॥ अनिष्पत्त्रमित्यनिःसृतपत्त्रं विध्यन्ति क्षत्रियाः[3] । सं॰ वन्ध्याचर्म कटे आस्तीर्णं भवति अथवा विशाख्यां स्थूणायामुच्छ्रितं भवति · यथा शरपत्त्राणि पिच्छानि चर्मणो निःसृत्य न यान्ति तथा वेधः कार्यः यथा शराश्चर्मणि प्रोता एव तिष्ठन्तीत्यर्थः ।

---

1) अभिगृणातीत्यभिगरो ब्राह्मणः पूर्वस्यां सदसो द्वारि प्रत्यङ्मुख उपविशेत् · अपगृणाति विरुद्धमनिष्टं भाषतऽइत्यपगरो वृषलोऽपरस्यां प्राङ्मुखः K marg. 2) The same ritual see in Lâṭy. ४. ३: but in Çânkh. १७. ६. २ we read: tad etat purâṇam utsannam na kâryam । 3) पत्त्रं यथा मध्येन प्रविशति K marg.

दक्षिणेन चर्म यन्ति त्रिर्विद्धा पुरस्ताद्विमोचनम् ॥१४॥ वितानस्य ।

सदःस्रक्तिषु दुन्दुभीन्वादयन्ति ॥१५॥ सं° चतुर्षु स°षु ये के चन पुरुषाः ।

आग्नीध्रमपरेण श्वभ्रं सवालधानेन चर्मणावनह्य वालधानेनाघ्नन्ति ॥१६॥ वालधानं पुच्छमुच्यते । सं° श्वभ्रं गर्तं खात्वा सपुच्छेन चर्मणा बद्धा पुच्छेनाघ्नन्ति · एवमुपायेन भूमिदुन्दुभिः कार्यः ।

गोधावीणाकाः काण्डवीणाश्च पत्न्यो वादयन्त्युपगायन्ति ॥१७॥ स्तोत्रस्योपगानं कुर्वन्ति । सं° गोधाचर्मणा नद्धा वीणा गोधावीणा ह्रस्वा गो°णा गो°णाकाः · का°णाः शरकाण्डमय्यो वीणाः · ता उभयविधाः सर्वाः पत्न्यो वा°न्ति · उप°न्ति ताः स्तुतिभिः सक्षिणः उपगायन्ति ।

अन्यांश्च[1] शब्दान्कुर्वन्ति ॥१८॥ ये के चन गानप्रसिद्धाः मूर्छनादयः । सं° मर्दलभेरीपटहादिजानन्यानपि शब्दान्लोकाः कुर्वन्ति ।

उदकुम्भाञ्छिरःसु कृत्वा मार्जालीयं दास्यः परियन्ति वाचयत्येनाः पर्यायादिषु ॥१९॥ सं° पर्यायः · परिगमनम् तत्र प°षु परिगमनानामादिषु एनाः दासीः वाचयति ।

हैमहा३ हैमहा३ इति ॥२०॥ पर्यायानिदानीमाह

गावो हारे सुरभय इदं मधु गावो गुल्गुलुगन्धय[2] इदं मधु गावो घृतस्य मातर इदं मधु ता इह सन्तु भूयसीरिदं मधु तका वयं प्लवामहे८ इदं मधु शम्याः प्रतरतामिवेदं[3] मधु न वै गावो मन्दीरस्य गङ्गाया उदकं पपुः पपुः सरस्वतीं नदीं ताः प्राच्य उज्जिगाहीर[4]८ इदं मधु निगीर्य सर्वा आधीरिदं मधु मधित्याकर्षैः कुशैर्यथेदं मधिति ॥२१॥ मधाकर्षैः कुशैरिति सर्वत्रानुषङ्गः ।

अपसव्यं प्रदक्षिणं चास्तोत्रान्तात् ॥२२॥ दास्यः परियन्ति । सं° अप्रदक्षिणं सकृत्परियन्ति ततः प्रदक्षिणं सकृत्परियन्ति महाव्रतस्य स्तोत्रस्य समाप्तिं यावत् ।

त्रिस्त्रिर्वा ॥२३॥ अपस°क्षिणं च परिगमनम् । सं° विकल्पेन त्रिर्वारम् न स्तोत्रान्तम् ॥ ॥ तृतीया कण्डिका ॥३॥ ॥

निषिच्य मार्जालीये[5] पूर्णान्निदधति ॥१॥ नि°च्य यत्र क्व चन देशे · दास्यः ।

---

1) Thus १. ३. M. R. Ss. अन्यान् K. 2) Thus M. १. B. ३. गुग्गु° K. A. R. ३. 3) Thus M. ३. K. प्रचर° ABR. 4) Thus all. 5) ? निषिच्य ॥३॥ मार्जा° १. ३. M. R. Ss.

अभिगरादि स्तूयमाने सर्वं क्रियते ॥२॥ स्तू॰ने महाव्रतस्तोत्रे । महाव्रतशब्द एकः क्रत्वर्थप्रतिपादकः अपरः स्तोत्रपर्यायः ।

अतिरात्रः श्वः ॥३॥ सं॰ उदयनीयातिरात्रः ।

तिस्रोऽनूबन्ध्या मैत्रावरुणी वैश्वदेवी बार्हस्पत्या ॥४॥ अत्र च द्रव्याभ्यासो न कर्मबहुत्वम् अभ्यस्तद्रूपमेव कर्म प्रकृताविकल्पात् ।

संवत्सरावरेषु सत्त्रेष्वसारस्वतेषु सहस्रदक्षिणावरेषु च ॥५॥ क्रतुषु तिस्रोऽनूबन्ध्या भवन्ति · एवं हि श्रूयते (४.५.१.११-१२)। सं॰ संवत्सरमवरो निकृष्टः कालो येषां तानि संवत्सरावराणि ।

अनूबन्ध्यवपाहोमान्ते दक्षिणस्यां वेदिश्रोणौ सर्वकेशश्मश्रुलोमवपनम् ॥६॥

पत्न्याश्च ॥७॥ चशब्दाद्वपनेनाभिसम्बध्यते । सं॰ वचनात् ।

त्रैधातव्युदवसानीया सर्वत्र ॥८॥ स॰त्रग्रहणेन संवत्सरावराणि सत्त्राणि असारस्वतानि सहस्रदक्षिणावराश्च क्रतवो गृह्यन्ते · तुल्यं हि ब्राह्मणमत्रानूबन्ध्याविधायकं त्रैधातवीविधायकं च । सं॰ यत्र-यत्र तिस्रोऽनूबन्ध्यास्तत्र सर्वत्र त्रै॰ध्या भवति तुल्यश्रुतित्वात् अथो यः सहस्रं॰स्यात् अथो ये दीर्घ॰ (४.५.१.११-१२) ।

·अवभृथादुदेत्य ज्योतिष्टोमोऽग्निष्टोमः पृष्ठशमनीयः सहस्रदक्षिणो वा ॥९॥ अवभृथग्रहणं समाप्त्युपलक्षणार्थम् । ननु चाग्निष्टोम एव भवति संस्थान्तरस्यानुक्तत्वात् अतो व्यर्थमग्निष्टोमग्रहणम् उच्यते गुणकामानां प्रवृत्तिज्ञापनार्थमित्यदोषः । पृष्ठ॰थ इति संज्ञा · स सह॰णो वा प्राकृतदक्षिणो वा ।

एकाहमेके ॥११॥ सं॰ भूरादीनां मध्ये यं कंचिदेकाहं पृष्ठ॰यं कुर्वन्ति ।

सत्त्राङ्गं प्रकरणात् ॥१२॥ स च पृष्ठशमनीयः सत्त्रस्याङ्गं भवति · तद्धि प्रकृत्य श्रूयते अवभृ॰नीय इति (१)। सं॰ सत्त्रं प्रकृत्य विहितत्वात् ।

फलाश्रुतेश्च ॥१३॥ न चात्र फलं श्रूयते · तस्मादपि सत्त्राङ्गम् । सं॰ फलवत्संनिधावफलं तदङ्गमिति न्यायात् ।

न फलं न्यायात् ॥१४॥ नैतदेवम् सत्त्राङ्गमिति · न्यायेन फलमत्र परिकल्प्यते । सं॰ फलं न्यायादपि क्लृप्तमेव वाच्यफलेषु स्वर्गः सामर्थ्यात् (१.१०.१०)।

कालप्राधान्याच्च ॥१५॥ अपि चास्य कालप्रधानः शब्दः सत्त्रादुदवसायेति ।

एवं प्राप्ते पुनर्व्यावर्तते सत्त्राङ्गमेव प्रकरणात् फलाश्रुतेश्चेति फलवत्सं-
निधौ तदङ्गतैव न्याय्या एवं च फलं न कल्पयितव्यं भवति · पृष्ठशमनीय
इति चार्थानुगता संज्ञा पृष्ठानां सत्त्रनियुक्तानामुपजातश्रमाणां शमनं करोतीति
पृष्ठशमनीयः सारस्वतेषु च प्रतिषेधात् अपृष्ठश॰स्वतानीति (२४. ६. १४)।

सहस्रदक्षिणे त्रिरात्रे प्रतिविभज्य नयन्रोहिणीमुपध्वस्तामप्रवीतामतिरेचयति ॥
१५॥ अहीनो यः सहस्रदक्षिणः त्रिरात्रस्तत्र प्रतिविभागेन प्रत्यहं दक्षिणापथेन
दक्षिणानयनम् · वर्णान्तरोप॰स्ताम् अकामिताम्। सं॰ स॰णे गर्गविदादौ त्रि॰त्रे
सहस्रं गाः प्रति॰नयन्सन्नेकां गामतिरे॰ति रक्तवर्णाम् वर्णान्तरमिश्रितां कर्बुराम्।

त्रिरूपां वा ॥१६॥ आद्येऽहन्प्रथमां नयेदन्त्ये वा पश्चात् ॥१७॥
आद्येऽहनि पक्षे गवां प्र॰येत् अन्त्ये वाहनि पश्चात्।

हविर्धानाग्नीध्रान्तरे द्रोणाकलशमेनामाघ्रापयत्याजिघ्रेति (८. ४२) ॥१८॥

इडे रन्तऽइति (८. ४३) दक्षिणेऽस्याः कर्णे यजमानो जपति ॥१९॥ प्रत्यगाशीर्यो-
गेऽपि सति यजमानग्रहणं क्रियते रोहिणीसंस्कारोऽयमिति अध्वर्युर्मा भूदिति।

वोचेरिति वान्ते ॥२०॥ मन्त्रस्य ब्रूतादिति वा विकल्पः।

सर्वतो नवसु दशमीं कृत्वा होत्रे दद्यात् ॥२१॥ त्रिभ्योऽप्यहोभ्यस्तिस्रस्तिस्र
उपादाय रोहिणीं दश॰द्यात्। सं॰ त्रयस्त्रिंशदधिकानां त्रयाणां शतानां दशभिर्दश-
भिर्दाने क्रियमाणे प्रत्यहं तिस्रस्तिस्रः परिशिष्यन्ते · तत्राह · स॰तः सर्वेभ्यस्त्रिभ्यो
ऽप्यहोभ्यस्तिस्रस्तिस्रोऽधिका उपादाय न॰सु सम्पन्नासु एनां साहस्रीं गां दशानां
पूरणीं कृत्वा तं दशकं हो॰द्यात्।

उन्नेतारौ वाकृत्वानाश्रावयते ॥२२॥ द्वौ वोन्नेतारौ कुर्वीतेति वचनात् (४.
५. ८. १३) · तयोश्च यतरो नाश्रावयेत्तस्माऽएनां दशमीं दद्याद्धोत्रे वेति विकल्पः।

दश-दशाभेदेन दक्षिणा दद्यात् ॥२३॥ अन्यूना॰नयेदिति (४. ५. ८. १६) वचनात्।
सं॰ दश-दश गा दद्यात् · कथम् अभेदेन दानकाले दशानां-दशानां भेदो न कार्यः।

अनूबन्ध्यवपाहोमान्ते दद्यादिनाम् ॥२४॥ दशमीमिति[1] सूत्रशेषः।

उदवसानीयायां वा ॥२५॥ इति विकल्पः।

---

[1]) नवभिर्युक्तां रोहिणीम् K marg.

अन्यदिह्न् ॥२६॥ विकल्पः । सं° युक्तरथादिकमिच्छन्दद्यात् ।

अहर्गणे व्युत्क्रामताद्यन्वहम् ॥२७॥ सं° प्रत्यहं व्यु°दिप्रैषप्रभृति भवति ।

वसतीवरीग्रहणं च ॥२८॥ सं° अन्वहमहर्गणे भवतीति शेषः ।

एके माध्यन्दिनेऽवनीय ॥२९॥ वसतीवरीग्रहणं कुर्वन्ति · एके परिहारकाल एवेति विकल्पः । सं° आधवनीये वसतीवरीरवनीयोत्तरस्याह्नोऽर्थे प्रत्यहं ग्रहणमिच्छन्ति ॥ ॥ चतुर्थी कण्डिका ॥४॥ ॥

इत्युपाध्यायकर्ककृतौ कात्यायनसूत्रभाष्ये त्रयोदशोऽध्यायः ॥

इति कात्यायनसूत्रे त्रयोदशोऽध्यायः ॥१३॥ ॥

---

गवामयनमभिहितम् । इदानीमवसरप्राप्तो वाजपेयोऽनुविधेयः ।

वाजपेयः शरद्यवैश्यस्य ॥१॥ वा° इति कर्मनामधेयम् न हि द्रव्ये गुणे वा प्रसिद्धिरस्य · स च शरदि भवति वचनात् (शाङ्खा° १५. १. १) · अवैश्यस्येति शाखान्तरात् लिङ्गाच्च अथ यदि ब्राह्मणो यजेत यदि वा राजन्यो यजेतेति विशेषविधानम् (५. १. ५. २-३) ।

उभयतः शुक्लपक्षौ बृहस्पतिसवेन यजते ॥२॥ यावनन्तरौ शु°क्षौ तयोर्बृह°सवः।

ज्योतिष्टोमेन वा ॥३॥ विकल्पः । सं° ज्यो°मेनाग्निष्टोमसंस्थेन वा ।

द्वादश वा ॥४॥ सं° अथवोभयतो द्वा°श सोमा भवन्ति शुक्लपक्षे ।

पुरस्तादयुक्षु ज्योतिष्टोमः पार्ष्ठिकानीतरेषु ॥५॥ सं° अयुक्षु अयुग्मेषु प्रथमतृतीयपञ्चमसप्तमनवमैकादशेषु षट्सु [शुक्लपक्षेषु] ज्योतिष्टोमः इ°रेषु युग्मेषु द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशेषु षट्सु पा°कान्यहानि भवन्ति ।

प्रतिलोमं पार्ष्ठिकान्युपरि ॥६॥ उपरिष्टात्प्रातिलोम्येन अयुक्षु पार्ष्ठिकानि युक्षु च ज्योतिष्टोमः · पार्ष्ठिकान्यपि प्रातिलोम्येन त्रयस्त्रिंशारम्भणानि भवन्ति ।

सर्वाग्निष्टोमैर्वा राजसूयसोमैः ॥७॥ उभयतो यजते · तेषां च संस्थामात्रापनयः। सं° अथ वोभयतो रा°मैः [राजसूयान्तर्वर्तिभिः] पवित्राभिषेचनीयादिभिः सप्तभिर्नभिर्वा [सोमयागैः] यजेत अग्निष्टोमसंस्थैः ।

प्रतिलोममुपरि ॥८॥ उपरिष्टात्प्रातिलोम्येन ज्योतिष्टोमादारभ्येति । अत्रा-

अदाभ्यग्रहणं राजसूयसोमोपदेशाद्भवति पार्ष्ठिकेष्वसत्त्ववान्न भवति · अतिग्रा-ह्यग्रहणमपि त्र्यहसंयोगान्न भवतीति सम्प्रदायः । सं° अत्तिमादारभ्य पवित्रान्तम् ।

नानादीक्षाः परियज्ञाः कालभेदात् ॥ ९॥ पार्ष्ठिकानां तन्त्रेण दीक्षाः कृताः इहापि तथैव मा भूवन्निति नानादीक्षत्वमुच्यते · तत्कुतः का°त् भिन्नो ह्यत्र काल इति । सं° उभयतो विहिताः प°ज्ञाः बृहस्पतिसवादयः पृथग्दीक्षाः ।

सप्तदश दीक्षाः ॥ १०॥ परियज्ञानां दीक्षाः प्राप्ता एव एतास्तु वाजपेयस्य ।

देव सवितरिति (९. १) जुहोति यजत्यादिषु ॥ ११॥ वचनात् (५. १. १. १४) ।

सकृद्दीक्षारम्भे कर्मैकत्वात् ॥ १२॥ अप्सु-दीक्षाद्यारम्भे सकृदेव [आहुतिः] होतव्या · कुत एतत् क°त्वात् कार्यैकत्वादित्यर्थः · एकं हि कार्यं दीक्षाणाम् पुरुषसंस्कार इति । यजत्यादिषु पुनः ये वाजपेयाङ्गभूता यजतयो दीक्षणीयादयः तेष्वेव न तदङ्गेष्वपि प्रयाजादिषु न हि ते साक्षाद्वाजपेयस्य ।

क्रयणा-वेद्यारम्भणा-प्रवर्ग्योत्सादना-ग्निप्रणयन-हविर्धाना-ग्नीषोमाणा८-सद-आग्नीध्र-धिष्ण्यनिवपन-वसतीवरिग्रहणा-परिहरणेषु च कर्मान्तरत्वात्प्राक्सुत्यायाः ॥ १३॥ सं° चकारादाहुतिम् · कुतः कर्मा°त्वात् भिन्नान्येवैतानि कर्माणि ।

सोमात्क्रीयमाणात्सहितं दक्षिणतः सीसेन परिस्रुतः क्रयणं केशवात् ॥ १४॥ केशवो दीर्घकेशः षण्ढ[१] इति केचित् · परिस्रुत्सुरा । सं° सोमक्रयकाले सहितम् ।

तद्द्रव्याणां वा ॥ १५॥ विकल्पः । सं° सुरासाधनभूतद्रव्याणां शष्पतोकमला-[जानग्नहुसंज्ञा]नां क्रयणं कर्तव्यम् न निष्पन्नायाः परिस्रुतः ।

पर्युह्यमाणेऽनुहरणम् ॥ १६॥ पर्यु°णे सोमे परिस्रुतः तद्द्रव्याणां वानु°णम् ।

दक्षिणेन प्रवेश्य दक्षिणाग्नौ पक्वापरेऽन्ते नेष्टा सुरां करोति ॥ १७॥ द°णेन द्वारेण विमिते प्र°श्य · यदि न पक्वा ततः पच्यते । सं° शालाया अपरभागे ।

खरं कृत्वा नाराश८सस्थानेऽपरम् ॥ १८॥ सं° ग्रहसादनार्थं प्राकृतं खरं कृत्वाध्वर्युरेव नाराशंससंज्ञानां चमसानां निधानेऽपरं द्वितीयं खरं करोति ।

दक्षिणतः संधिं करोति ॥ १९॥ दक्षिणतो हविर्धानस्य कुद्वारं करोति । सं° दक्षिणस्यां दिशि उच्छ्रायीं विदार्य द्वारिकां करोति ।

---

१) षंढ K sec. m. षंढ pr. m.

यूपवेष्टनं सप्तदशभिर्वस्त्रैर्व्युद्ग्रन्थनं वा परिव्ययणकाले ॥२०॥ वचनात् (५.२.१.५) · व्यु॰नं च अवचूलकरणम् · तच्च प॰ले परिव्ययणाद्वा परत आगन्तुकत्वात् । सं॰ रशनापरिव्ययणकाले स॰स्त्रैर्यूपस्य वेष्टनं कर्तव्यम् अथवा व्यु॰नं विविधमूर्ध्वं ग्रन्थनं कर्तव्यम् न तु वेष्टनमात्रम् ।

श्वो वा सवनीयेषु ॥२१॥ यूपवेष्टनं भवति · तत्र हि वाजपेयशब्दो वर्तते । वा अग्नीषोमीयऽएव व्युद्ग्रन्थनं कर्तव्यम् यूपसंस्कारत्वात्तस्य तदुद्देशेन विहितत्वात् ।

उत्कीर्णसमाग्रो गौधूमचषालः ॥२२॥ यूपो भवतीति वाक्यशेषः । सं॰ उत्कीर्ण किंचित्खातं समं चाग्रं यस्यासौ · गोधूमानां विकारो गौधूमम् तच्चषालं यस्यासौ ।

सुत्यादौ हिरण्यस्रजोऽपिनह्यन्तेऽधिकृता यजमानः पत्नी च ॥२३॥ हिरण्यमालिनो वाजपेयेन चरन्तीति श्रूयते । सं॰ हिरण्मय्यः स्रजः सौवर्णपुष्पमालाः अधिकृता ऋत्विजः ।

सुत्यस्य तच्छब्दात् ॥२४॥ सुत्या च वाजपेयशब्दवाच्या । सं॰ स वाजपेयशब्दो यस्य यस्मिन्वासौ तच्छब्दः · सुत्यस्यैव तच्छब्दो वाजपेय[-शब्दो वाचको यतः अतः सुत्यादावेव हिरण्यमालाबन्धनं कार्यम्] ।

सर्वत्राविशेषात् ॥२५॥ सं॰ देवयजनजोषणप्रभृति सर्वेषां हिरण्यमालित्वं भवति · अविशिष्टं हि सर्वत्र वाजपेयत्वम् साङ्गो ह्ययं वाजपेय एवेति ।

एकधनप्रवेशनकाले सुरां नेष्टापरेणा प्रवेश्य खरे करोति ॥२६॥ सं॰ हविर्धानमध्ये एकधना उदकपूर्णा आनीय प्रवेश्यन्ते स स कालः तस्मिन् ।

संधिना पात्राण्याहृत्य पात्रे वालेन पुनाति ॥२७॥ नेष्टैवाभिप्रवृत्तत्वात् । सं॰ सुरायाः संधिना (१२) द्वारेण सुराग्रहपात्राण्य एकस्मिन्महति पालाशे पात्रे गोऽश्ववालेन सुरां पुनाति ।

प्रातःसवनेऽतिग्राह्यान्गृहीत्वा षोडशिनं पञ्च चैन्द्रान् ॥२८॥ ॥ प्रथमा कण्डिका ॥१॥ ॥

ध्रुवसदमिति (१.२) प्रतिमन्त्रम् ॥१॥ ग्रहान्गृह्णाति ।

अतिग्राह्यवद्धोमः ॥२॥ पञ्चानामैन्द्राणाम् । सं॰ माहेन्द्रमन्वित्यर्थः ।

सप्तदशापरान् ॥३॥ सोमग्रहान्गृह्णाति । नेष्टा च तावतः सौरान् ॥४॥

व्यत्यासं ग्रहणम् ॥५॥ वचनात् (५. १. २. १६)। सं॰ न तु सह किंतु व्यत्यासेन।

अहानतिक्रमणं ग्रहाणाम् ॥६॥ सं॰ सोमग्रहाणां सुराग्रहाणां च अ॰णामुल्ल-ङ्घनं न कार्यम्।

उपर्युपर्यक्षमध्वर्युर्धारयत्यधोऽधो नेष्टा सम्पृचाविति (९. ४) ॥७॥

विपृचावित्याहरतः ॥८॥ सं॰ स्वं-स्वं ग्रहं खरे सादनायात्मसमीपे आ॰तो ऽध्वर्युनेष्टारौ।

हिरण्मयेन मधुग्रहं गृहीत्वा खरमध्ये सादयति ॥९॥ ततः

उक्थ्यादि ॥१०॥ सं॰ उक्थ्यग्रहणादि प्राकृतं कर्म भवति।

अतिरात्रपशूनुपाकृत्य वशां पृश्निं मरुद्भ्य उन्नेषेभ्यः ॥११॥ सं॰ पूर्वं चतुरो ऽति॰शूनाग्नेयादीनुपा॰त्य वशां वन्ध्यां पृश्निं विचित्रवर्णामुपाकरोति।

तदभावेऽपृश्निम् ॥१२॥ प्राजापत्यांश्च सप्तदश श्यामतूपरान्बस्तान् ॥१३॥ सं॰ श्यामाश्च ते तूपराश्च श्यामतूपराः तान् तूपरान् शृङ्गहीनान् बस्तान्मुष्करान् साण्डान्प्रजनयितॄन्।

तद्गुणाभावे सर्वेषामेकदेशोऽपि ॥१४॥ तद्गुणः स्यात् (५. १. ३. १०)। सं॰ पूर्वो-क्तानां सर्वेषां गुणानामभावे ए॰शोऽपि तद्गुणः श्यामत्वादिगुणवान्भवति।

वाचऽउत्तममेके ॥१५॥ सप्तदशं पशुमेके वाचऽआलभन्ते एके प्राजापत्य-मिति विकल्पः। तस्य च नोपांशुत्वम् अप्राजापत्यत्वात्।

माहेन्द्रान्ते वशावपाचरणम् ॥१६॥ मा॰न्द्रग्रहयाज्याभ्यासान्ते वशाया वपाप्रचारः।

अवदानैश्च द्वेधा शृतैः ॥१७॥ चशब्दाद्वपाप्रचारोत्कर्षे द्वेधा श्रपणम् स्वकाल ऽएव प्रधानयागः। सं॰ जौहवान्यन्यस्यामुखायां सौविष्टकृतान्यन्यस्यामिति।

पूर्वेभ्यो देवतास्विष्टकृद्भ्यामवद्यति ॥१८॥ पूर्वाणि हृदयादीनि उत्तराणि त्र्यङ्गानि। सं॰ पू॰भ्यो जौहवेभ्योऽवदानेभ्यो दे॰भ्यामर्थेऽव॰ति।

उत्तराणि विशे ददाति ॥१९॥ सं॰ औपभृतानि त्रीण्यवदानानि विशे प्रजायै द॰।

वामदेव्यग्रहान्ते प्राजापत्यानाम् ॥२०॥ सं॰ वपाभिश्चरतीति शेषः (५. १. ३. १२)।

स्रुग्व्यूहनात्प्राग्घविषा ॥२१॥ सं॰ प्राजापत्यानां पशूनां हविषा प्रचरेत्।

यथान्यायं वोभयोः ॥२२॥ वपाहविषोः प्रचारो भवति यथान्यायशब्देन

चोदकानुसरणमुच्यते । सं॰ यथाप्रकृति प्राकृतकाले (५. १. ३. १४) ।

वशायाश्च ॥२३॥ चोदकानुसार एव नोत्कर्ष इति॰ वाशब्दो (२२) विकल्पार्थः विकल्पेन क्वेतच्छ्रूयतऽइति । सं॰ चकाराद्यथान्यायं वपायाः प्रचारः ।

ऐकध्यं च श्रपणम् ॥२४॥ ऐकध्येन श्रपणमवदानानामस्मिन्पक्षे । सं॰ एकधा एकस्मिन्पात्रे जौहवानामौपभृतानां च श्रपणम् न द्वेधा ।

श्रदानं च विशे ॥२५॥ त्र्यङ्गाणाम्॰ विटूशब्देन प्रजोच्यते ।

माध्यन्दिनीयैः सह नैवारचरुर्बार्हस्पत्यः सप्तदशशरावः ॥२६॥ माऽनीयसवनीयैः ।

संख्यामुष्टिनिवृत्तिः सामान्यात् ॥२७॥ अत्र चोदकप्राप्तेन चतुर्मुष्टिना निर्वापेण सप्तदशशरावो न भवतीति अवश्यम्भाविनि संख्यामुष्टिबाधऽइदमाह सप्तदशसंख्यया चतुःसंख्या निवर्त्यते शरावैश्च मुष्टयः॰ कुत एतत् साऽन्यात् समानं हि समानस्य निवर्तकं भवति यथा तैलं घृतस्येति : एवं प्राप्तऽआह ।

न यजतिशब्दात् ॥२८॥ नैतदेवम् संख्यामुष्ट्योरुभयोरपि निवृत्तिरिति॰ किं कारणम् यजतिशब्दात् यागे हि सप्तदशसंख्या[नि] शरावाणि श्रूयन्ते चतुःसंख्या मुष्टयश्च निर्वापे न चान्यत्र श्रुतं सत्यपि सामान्येऽन्यस्य निवर्तकं भवति न हि शिरोऽभ्यङ्गे श्रुतं तैलं भोजने घृतस्य निवर्तकं भवति॰ कथं तर्हि चतुर्मुष्टिके निर्वापे सति सप्तदशशराव ओदनो भवति उच्यते अर्थादत्रान्यतरस्य निवृत्त्या भवितव्यम् संख्याया मुष्टीनां वा न ह्यनिवृत्त्या सप्तदशशरावो भवति॰ तत्रापि संख्याया मुष्टीनां वा निवृत्तिर्निर्भयोः॰ तत्र मुख्यत्वात्संख्यानुग्रहः जघन्यत्वान्मुष्टिलोप इति॰ सपादचतुःशरावपरिमाणेन पात्रेण निर्वापे क्रियमाणे सप्तदशशराव ओदनो भवति॰ एवं मुष्टीनां लोपः संख्यानुग्रहश्च भवति ।

सप्तदश-सप्तदश शतानि ददाति गोवस्त्राजावीनाम् ॥२९॥ प्रत्येकम् ।

सप्तदश वृषल्यो निष्ककण्ठ्यः ॥३०॥ दीयन्ते॰ चतुःसौवर्णिको निष्कः कण्ठे यासां । सं॰ वृल्यो दास्यः॰ निष्कं सुवर्णाश्चत्वारः ।

हस्तिवद्यकमहानसानाम् ॥३१॥ सं॰ हस्तिनां वाहनानां महानसानां सप्तदशकं दद्यात्॰ महानसो महारथः [पाककरणगृहमिति केचित्] ।

जातेर्जातेश्चा सप्तदशगणपूरणात् ॥३२॥ भिन्नजातीयत्वे चेतद्भवतीत्यभिप्रायः ।

सं० जाति'श्च गवाश्वच्छागमहिष्यवीत्यादिकायाः सप्तदशकं-सप्तदशकं दद्यात् · याव-द्गवाश्वाजाविजातीयसप्तदशकानां सप्तदश गणाः पूर्यन्ते ।

द्रव्येषु वा सप्तदशता सप्तदश सप्तदशानि ददातीति श्रुतेः ॥३३॥ न भिन्न-जातीयेषु · एवं श्रूयते सप्त'दातीति · गोदानं च दक्षिणासूचितम् महाभागा हि गाव इति · तस्माद्गोद्रव्येषु सप्त'ता । सं० सिद्धान्ते · समानजातीयेष्वेव सप्त-दशसंख्येषु गोद्रव्येष्वियं सप्त'ता ज्ञेया न भिन्नजातीयेषु गवाश्वादिषु · कुतः सप्त'श्रुतेः गवां सप्तदशानि सप्तदश ददातीति ॥ ॥ द्वितीया कण्डिका ॥२॥ ॥

मरुत्वतीयान्तऽइन्द्रस्य वज्र इति (९. ५) रथावहरणम् ॥१॥ तच्च रथवाहणात् तस्य प्रदेशान्तरे दृष्टार्थत्वात् रथवाहणे करोतीति (१५. ६. २६) · अवपूर्वश्च हरति-रवतारणे प्रवर्तते । सं० रथवाहणाच्छकटाद्रथस्यावहरणमवतारणमध्वर्युः करोति ।

दक्षिणेन चात्वालमावर्तयति वाजस्येति (९. ५) धूर्गृहीतम् ॥२॥ चात्वालस्य दक्षिणतः । सं० धू'तं धुरि गृहीत्वा वेदिमध्ये आ'ति स्थापयति ।

अश्वान्प्रोक्षत्यपोऽवनीयमानान्स्नातान्वागतानप्स्वन्तरिति (९. ६) ॥३॥

देवीराप इति (९. ६) वा ॥४॥ समुच्चयो वा ॥५॥ मन्त्रयोर्भवति ।

दक्षिणं युनक्ति वातो वेति (९. ७) ॥६॥ उत्तरं वातरंहा इति (९. ८) ॥७॥

दक्षिणाप्रष्टिं जवो यस्तऽइति (९. ९) ॥८॥ दक्षिणाप्रष्टिः दक्षिणस्य द्वितीय उच्यते । सं० रथे तृतीयमश्वं युनक्ति · धुर्यपेक्षया प्रकृष्टं देशमश्नोतीति प्रष्टि-र्बाह्यो युग्यः ।

अयुक्तश्चतुर्थोऽनुगच्छति सर्वयन्त्री ॥९॥ कविकापर्याणाद्युपेतः । सं० मुखरीव-ल्गाचतुःकटपल्याणादिसर्वयन्त्रोपेतः ।

बार्हस्पत्यमेनानाघ्रापयति वाजिन इति (९. ९) ॥१०॥ अवघ्राणं चाश्वसंस्कारः आजिधावनार्थः ततश्च विस्मरणे तदुत्तरकालं न भवति ।

चतुर्युजो युनक्त्यपरांस्तूष्णीं बहिर्वेदि षोडश ॥११॥ रथान् · योजनक्रियाशेषत्वात् मन्त्रप्राप्तिर्मा भूदिति तूष्णीमित्युच्यते । सं० एकैकस्मिन्रथे चतुरश्चतुरोऽश्वान्युनक्ति ।

देवस्याहमिति (९. १०) ब्रह्मा रथचक्रमारोहत्युत्करे नाभिमात्रे स्थाणौ स्थितम् ॥१२॥ स्थाणुः खडकमुच्यते ।

ऐन्द्राः क्षत्रियस्य चक्रदुन्दुभ्याः ॥१३॥ क्षत्रियस्य चक्रारोहणदुन्दुभिवादनमन्त्रा ऐन्द्रा भवन्ति। सं॰ इन्द्रलिङ्गोक्ता मन्त्राः ते सर्वे क्षत्रस्य भवन्ति।

सप्तदश दुन्दुभीनासजत्यनुवेदि पश्चादाग्नीध्रात् ॥१४॥ आग्नीध्रमपरेण। सं॰ अनु॰दि वेद्याया[म]मनुलक्षीकृत्य · आस॰ति अवलगयति अर्थात् उच्छ्रितेषु स्थाणुषु।

बृहस्पते वाजमित्येकं (९.११) दुन्दुभिमाहन्ति तूष्णीमितरान् ॥१५॥

क्षत्रियः सप्तदशेषुप्रव्याधानस्यति तीर्थादुदीचः ॥१६॥ सं॰ तीर्थाच्चात्वालोत्करान्तरालात् सप्तदशसंख्यानिषुप्र॰स्यति क्षिपति · प्रव्यधनं प्रव्याधः · एकः शरः क्षिप्तो यत्र पतति स एकः प्रव्याधः तत्र गत्वा द्वितीयस्य क्षेपः कार्यः एवं सप्तदश।

अन्त्ये[1] मिनोत्यौदुम्बरीं शाखाम् ॥१७॥ अन्त्ये प्रक्षेपे निखनति।

देवस्याहमिति (९.१३) यजुर्युक्तमारोहति यजमानः ॥१८॥ य॰क्तं रथम्। सं॰ यजुषा युक्तम्।

अध्वर्योश्च तूष्णीं ब्रह्मचार्यन्तेवासी वा वाचनाय ॥१९॥ चशब्दात् यजुर्युक्तं रथमध्वर्योः ब्र॰री अध्वर्युणा य उपनीतः तस्य वा अन्ते॰सी शिष्यो यजमानवाचनायारोहति।

इतरेषामेकस्मिन्राजन्यो वैश्यो वा सौरप्रतिग्रहाय ॥२०॥ आरोहतीति वर्तते · इ॰षां रथानां राजन्यवैश्ययोरन्यतरः एकस्मिन्नारोहति सौरग्रहणाय।

आजिं शीघ्रं यन्ति ॥२१॥ आजिशब्देन स्पर्धोच्यते स्पर्धया अहमहमिकया शीघ्रं धावन्ति। सं॰ स्पर्धाधावनमाजिशब्देनोच्यते।

वाजिन इति (९.१३) वाचयति ॥२२॥ ब्रह्मचार्यन्तेवासी वा यजमानम् ॥

॥ तृतीया कण्डिका ॥३॥ ॥

ब्रह्मा त्रिः साम गायति ॥१॥ त्रिः सामगानं करोतीत्यर्थः।

दुन्दुभीन्वादयन्ति ॥२॥ बहुवचनोपदेशात्प्रकृता अप्रकृताश्च।

एष स्य इति (९.१४-१५) प्रत्यृचं जुहोति ॥१३॥ धावत्सु · आहुतीर्जुहुयात्।

अनुमन्त्रयते वा ॥४॥ तानेव धावतोऽश्वान्।

उत्तरेण च त्रिचेन[2] (९.१६-१८) ॥५॥ चशब्दात् जुहोति अनुमन्त्रयते वा।

---

1) Thus १. R. K. A. अन्ते M. ३. 2) Thus १. ३. M. K. A. तृचेन च Mahidh.

सुन्वन्नयति ॥६॥ सुन्वन्यजमानो जिनातीतरान्रथान् ।

शाखां प्रदक्षिणं कृत्वायन्ति ॥७॥ औदुम्बरीं शाखां आगच्छन्ति रथैः । सं० देवयजनं प्रति ।

आगतेषु ब्रह्मावरोहति देवस्याहमिति (९.१०) ॥८॥ सर्वेष्वागतेषु रथचक्रात् ।

एषा व इति (९.१२) मन्त्राहुतमवहरते ॥९॥ सं० म०तं दुन्दुभिमवतारयति ।

तूष्णीमितरान् ॥१०॥ दुन्दुभीनवहरति ।

अवरुह्य नैवारमालभते तीर्थे स्थितमा मा वाजस्येति (९.१९) ॥११॥ यजमानोऽवरुह्य रथात् चात्वालोत्करावन्तरेण स्थितं नैवारं चरुमालभते ।

यजुर्युक्तानाघ्रापयति वाजिन इति (९.१९) ॥१२॥ त्रीनश्वान्नैवारमा०ति ।

चतुर्थं युक्त्वाध्वर्यवे ददाति ॥१३॥ चतुर्थमश्वं युक्त्वा०वे रथं द० । सं० सव्याप्रष्टिं युक्त्वा।

सर्वेभ्यः षोडश ॥१४॥ सर्वेभ्य एवऽर्त्विग्भ्यः षोडश रथान्ददाति ।

अध्वर्युयजमानौ मधुग्रहꣳ सौरप्रतिग्रहाय प्रयच्छत उत्तरस्यां वेदिश्रोणाऽउपविष्टाय ॥१५॥ सौरप्रतिग्रहीता च राजन्यो वैश्यो वा योऽसौ रथमारूढः (३.२०) ।

नेष्टा च सौरान्पश्चिमेन निर्हृत्य शालामपरेण हविर्धानद्वारेणा निर्हृत्य · सौरप्रतिग्रहाय प्रयच्छन् । ततः सर्वानेव सौरान्प्रयच्छति मधुग्रहं चादत्ते ।

ब्रह्मणे मधुग्रहं ददाति सपात्रम् ॥१७॥ ग्रहशब्दस्य द्रव्यविषयत्वात्सपात्रमित्युच्यते।

तꣳ स यथेष्टं कुरुते ॥१८॥ ददातीति वान्यत्रासिञ्चति वा पिबति वेति ॥

॥ चतुर्थी कण्डिका ॥ ४ ॥ ॥

द्वादश स्रुवाहुतीर्जुहोत्यापये स्वाहेति (९.२०) प्रतिमन्त्रं वाचयति वा ॥१॥ विकल्पश्रुतेः (५.२.१.१) · वाचनपक्षेऽपि द्वादशसंख्या यथा स्यादिति द्वादशग्रहणम् ।

षडुत्तराः (९.२१) ॥२॥ जुहोति वाचयति वा ।

नेष्टा पत्नीमानेष्यन्कौशं वासः परिधापयति चण्डातकं दहरं वा ॥३॥ परिधापयतीति कारितत्वादध्येषणात्र भवति · चण्डातकं चलनक उच्यते एवं ह्यभियुक्तोपदेशः अर्धोरुकं विलासिन्या वासश्चण्डातकं विदुः (अमर० २.६.११७) · दहरं तु कौपीनम् दहरशब्दस्याल्पवाचकत्वात् । सं० कौशं कुशमयम् · चण्डातकं चल-

नकम् जघनमात्रप्रच्छादनार्थं चालनकं प्रसिद्धम् ।

अन्तरं दीक्षितवसनात् ॥४॥ निश्रयणीं यूपऽउच्छ्रयत्युत्तरां दक्षिणां वा ॥५॥

आरोहन्जायामामन्त्रयते [1] जायऽएहि स्वो रोहावेति ॥६॥

रोहावेति प्रत्याह ॥७॥ प्रजापतेरित्यारोहतः (९.२१) ॥८॥ जायापती ।

स्वरिति (९.२१) गोधूममालभते ॥९॥ चषालम् ।

शिरसा यूपमुज्जिहीतेऽमृता इति (९.२१) ॥१०॥ यूपोच्छ्रयमुज्जिहीते । सं° ऊर्ध्वं त्यजति यूपाग्रादूर्ध्वं शिरः करोति ।

अस्मे व इति (९.२२) दिशो वीक्षते ॥११॥ यजमानः ।

सप्तदशाश्वत्थपत्त्रोपनद्धानूषपुटानुदस्यन्त्यस्मै विशः ॥१२॥ सं° विशो यजमानप्रजाः पुत्रादयः अस्मै यजमानाय ऊन् ऊषाः क्षारमृत्तिकाः तेषां पुटान्पिप्पलपर्णैर्बद्धानुदस्यन्ति ऊर्ध्वं क्षिपन्ति ।

प्रतिगृह्णात्येनान् ॥१३॥ नमो मात्रऽइति (९.२२) भूमिमवेक्षते ॥१४॥

सरुक्मे बस्तचर्मण्यवरोहति ॥१५॥ सं° रुक्मः परिमण्डलः सौवर्णाभरणविशेषः · बस्तो मुष्करः साण्डश्छागः ।

भूमौ वा ॥१६॥ सरुक्मायामेव · भूमिग्रहणं सरुक्मार्थमेव न ह्यन्यथा वाच्यम् अर्थप्राप्तत्वात् ।

उत्तरवेदिमपरेणौदुम्बरीमासन्दीं बस्तचर्मणास्तृणातीयं तऽइति (९.२२) ॥१७॥

सुन्वन्तमस्यामुपवेशयति यन्तासीति (९.२२) ॥१८॥ बाहुगृहीतं यजमानम् ।

नैवारेण प्रचरति ॥१९॥ अस्मिन्नवसरे ।

प्राक्स्विष्टकृत औदुम्बरे पात्रेऽप आसिच्य पयश्च सप्तदशान्नान्यावपति ॥२०॥ सप्तानां षड्वर्गाणां पयोऽत्रासिच्यते ।

यावत्स्मृति वैकवर्जम् ॥२१॥ एकमन्नं वर्जयित्वा । सं° यावतां स्मृतिः स्मरणं ।

अभोजनं तस्योच्छ्वासात् ॥२२॥ सं° उच्छ्वासपर्यन्तं जीवनपर्यन्तम् ।

स्रुवेण सम्भृताञ्जुहोति वाजस्येममिति (९.२३-२९) प्रतिमन्त्रम् ॥२३॥ सप्तैतानि जुहोतिकर्माणि · ततश्च सप्तानां षड्वर्गाणां पयोऽत्रासिच्यते सप्त च औषधच-

[1] Thus K. ऽ । रो° M. ३. रोहन् Ss. A.

तुर्मुष्टिकानि भवन्ति चोदकानुग्रहाय · अपां चाज्यधर्मो भवति वर्णसामान्यात् । सं० स०तात् एकत्र कृताडुदकदुग्धसर्वान्नादेः सकाशात् ।

शेषेणाभिषिञ्चति यजमानं देवस्य त्वेति (९.३०) ॥२४॥ शेषश्च हुतशेषः ।

सरस्वत्यै वाच (९.३०) स्थाने विश्वेषां त्वा देवानाम् ॥२५॥ प्रयोगः ।

सरस्वत्यै त्वेति वा ॥२८॥

सम्राडयमसावित्याह नामग्राहं त्रिरुच्चैः ॥२७॥ सं० सम्राडयममुकशर्मा इत्येवम् ।

अग्निरेकाक्षरेणेत्यनुवाकं (९.३१-३४) द्वादशवत्कृत्वा नैवारस्विष्टकृदिडं करोति ॥२८॥ द्वादशवदिति (१) जुहोति वा वाचयति वा (५.२.२.१६) ।

माहेन्द्रादि च ॥२९॥ सं० चरोर्भागप्राशनान्ते माहेन्द्रग्रहग्रहणादारभ्य प्राकृतं कर्म भवति · वैकृतावसरे प्राकृतप्रवृत्त्यर्थमिदमुक्तम् ।

अवरुह्य गच्छति स्तोत्राय प्रहितः ॥३०॥ सं० अध्वर्युणा प्रहितो (५.२.२.१२) यजमानोऽवतीर्य [स्तोत्रमुपासितुं सदो] गच्छति ।

उज्जितिभ्यो वोत्तरो माहेन्द्रः ॥३१॥ भवति ततः स्विष्टकृदिडम् ।

षोडश्यन्ते स्तोत्रं चमसैरेव ॥३२॥ षोडशिग्रहयागान्ते · ग्रहो न भवति एवकारकरणात् · सं० अतिरिक्तस्तोत्रं चमसैर्भवति न ग्रहेण ।

अविक्रमसेषु सप्तदशावनयति द्वौ-द्वौ ॥३३॥ इयांस्तु विशेषः द्वौ-द्वाववनयति । सं० सप्तदश सोमग्रहान्निनयति चमसेषु । चमसा नव ग्रहाश्च सप्तदश तत्र नवसु द्वयोर्निनयनं न सम्भवति एकस्योनत्वात् [इत्यर्थादेकस्मिन्नेकस्य निनयने सिद्धेऽस्यत्वादाग्नीध्रचमसे तस्यैकस्य निनयने प्राप्तेऽआह ·]

एकं नेष्टुः ॥३४॥ चमसेऽवनयति ·

उदवसानीयान्ते यूपवेष्टनान्यध्वर्यवे ददाति ॥३५॥ सं० सप्तदश वस्त्राणि ।

यथोपमुक्तं७ हिरण्यस्रजः ॥३६॥ सं० या-या स्रग्येन-येन उपमुक्ता गले बद्धा तां-तां तस्मै दद्यात् ॥ ॥ पञ्चमी कण्डिका ॥५॥ ॥

इत्युपाध्यायकर्कविवरणे कात्यायनसूत्रभाष्ये चतुर्दशोऽध्यायः ॥ वाजपेयः समाप्तः ॥

इति कात्यायनसूत्रे चतुर्दशोऽध्यायः ॥१४॥ ॥

---

श्रुतिमन्त्रपाठानुसारिणाचार्येण वाजपेयोऽनुविहितः इदानीमवसरप्राप्तो राजसूयोऽनुविधेयः। तदर्थं सूत्रम् ·

राज्ञो राजसूयः ॥१॥ स चायं राजशब्दः क्षत्रियजातिनिमित्तः।

अनिष्टिनो वाजपेयेन ॥२॥ तस्माद्वाजपेयेनेष्ट्वा न राजसूयेन यजेतेति श्रुतेः। सं॰ येन राज्ञा पूर्वं वाजपेयेनेष्टं न भवति।

इष्टिसोमपशवो भिन्नतन्त्राः कालभेदात् ॥३॥ आनुमत्यादय[1] इष्टयः पवित्रादयः सोमाः मल्हादयश्च पशवः एते भिन्नतन्त्राः भवन्ति · कुत एतत् कालभेदात् भिन्नकालीनं ह्येषां विधानमिति।

पवित्रश्चतुर्दीक्षः ॥४॥[2] स च सोमयागो दीक्षासम्बन्धात्।

सहस्रदक्षिणः ॥५॥ एवं चाश्वदाभ्यग्रहणं तिस्रोऽनूबन्ध्यास्त्रेधातवी चात्र भवति।

माघीपक्षयजनीये दीक्षा ॥६॥ माघपौर्णमास्या उपरिष्टात्पक्षे गते[3] यद्यजनीयं तत्र दीक्षा · फाल्गुनप्रतिपदीत्यर्थः। सं॰ माघ्याः पक्षेऽतीते यद्यजनीयं फाल्गुनशुक्लप्रतिपत्तत्र।

तदन्ते पूर्णाहुतिर्गृहेष्विष्टतो वरदक्षिणा ॥७॥ सं॰ [तस्य पवित्रस्यान्ते फाल्गुनशुक्लनवम्यां] यजमानगृहेष्वेव · इष्टतो यजमानस्य।

श्वःप्रभृत्यन्वहं पञ्चोत्तराणि ॥८॥[4] हवींषि भवन्तीति शेषः · अन्वहमेकैकम्।

अष्टाकपालोऽनुमत्यै ॥९॥ पुरोडाशो भवतीति शेषः।

शम्यायाः पश्चाद्धविष्यशन्तौ स्रुवे कृत्वा दक्षिणाग्न्युल्मुकमादाय दक्षिणा गत्वा स्वयम्प्रदीर्णऽइरिणे वाग्नौ जुहोत्येष ते निर्ऋतऽइति (९.३५) ॥१०॥ शम्याद्धविष्येषु पिष्यमाणेषु यदवशीयते[5] तण्डुला वा पिष्टं वा तत्स्रुवेऽल्मुकं गृहीत्वा दक्षिणां दिशं गत्वा स्वर्णो कुत्सारे इरिणे वोषरे अग्नौ·जुहोति · अग्निग्रहणाच्चेतिकर्तव्यताव्युदासः। सं॰ अनुमत्यर्थं गृहीतस्य हविषः पेषणकाले दृषदोऽधस्तादुपहितायाः शम्यायाः पश्चाद्धन्नं यद्धविः कृष्णाजिने स्कन्नम् · स्वर्णो कोसारादौ इरिणे ऊषरे वा तमग्निं स्थापयित्वा [तस्मिन्न]ग्नौ जुहोति।

---

1) अनुम॰ K. 2) अत्र राजसूये प्रथमं पवित्रसंज्ञः सोमयागो भवति Deva. 3) ॰त्पक्षगते K sec. m. 4) फाल्गुनशुक्लदशमीमारभ्य Deva. 5) ? ॰सीर्यते K sec m. सीयते pr. m. See ५. २. ३. २.

अनपेक्षमेत्यानुमतस्य संवपनादि करोति ॥११॥ संवपनादिग्रहणाच्च ईक्षणा-न्तऽ एतद्भवति ।

वासो देयम् ॥१२॥ आनुमतस्य दक्षिणा । हिरण्यमाग्नावैष्णवे ॥१३॥[१] ।

पुनरुत्सृष्टो गौरग्नीषोमीये ॥१४॥[२]

अनड्वान्साण्ड ऐन्द्राग्ने ॥१५॥[४] सं॰ साण्ड आण्डसहितः ।

गौराग्रयणे ॥१६॥[५] गवा यवाग्रयणं व्रीह्याग्रयणं विशेष्यते न सौम्याग्रयणम् ।

चातुर्मास्यप्रयोगः फाल्गुन्याम् ॥१७॥ चाऽस्यशब्दो धर्मातिदेशार्थो नैतानि चातुर्मास्यानि चातुर्मास्यवद्राजसूययागा एते · अतश्च नित्यानामपि क्रिया भवति नैतैः कृतत्वम् अचातुर्मास्यत्वात् ।

पौर्णमासेन कृष्णपक्षानित्यामावास्येन शुक्लाना शुनासीरीयात् ॥१८॥ अत्रापि दर्शपौर्णमासवद्राजसूय एवायम् न दर्शपौर्णमासाविति । [देव॰ अतश्च नित्ययोर्दर्श-पूर्णमासयोः पृथक्क्रिया स्वकाले भवत्येव · संनिपाते तु राजसूयिकयोः पूर्वं करणं पश्चान्नित्ययोरिति] ।

पवित्रदीक्षास्थाने शुनासीरीयम् ॥१९॥ सं॰ आगामिनि वर्षे फाल्गुनशुक्लप्रतिपदि [राजसूयिकं भवति वचनात् · नित्यं तु फाल्गुन्यां पौर्णमास्यामेव] ।

पञ्चवातीयम् आहवनीयं प्रतिदिशं व्युह्य मध्ये च स्रुवेणाग्निषु जुहोत्यग्निनेत्रेभ्य इति (९. ३५) प्रतिमन्त्रम् ॥२०॥ होममन्त्राणां लिङ्गेन व्यवस्था । सं॰ [फाल्गुनशुक्ले प्रतिपद्येव] पञ्चवातीयसंज्ञकं वक्ष्यमाणं कर्म भवति · आहवनीयं खरमध्यस्थं हस्तप्रेरितमेव खरमध्यऽ एव प्राच्यादिदिक्षु स्थापयित्वा मध्ये चावशिष्य पञ्चस्वग्निषु जुहोति ।

उत्तराः समस्य ये देवा इति (९. ३७) प्रतिमन्त्रम् ॥२१॥ जुहोतीति शेषः · समस्य चाग्नीनिति । सं॰ प्रतिदिशं व्यूढमाहवनीयमेकत्र कृत्वा उत्तराः पञ्चाहुतीर्जुहोति ।

त्रियुक्तोऽश्वरथो दक्षिणा ॥२२॥ त्रिभिरश्वैर्युक्तो रथो दक्षिणा ।

व्याधितस्याप्येवम्[५] ॥२३॥ व्याधिगृहीतस्यापि पञ्चवातीयं भवति । सं॰ व्या-

---

१) ततः श्वो भूते एकादश्यामाग्नावैष्णवो भवति Deva. २) द्वादश्याम् ३) त्रयोदश्याम् ४) चतुर्दश्याम् ५) व्याहितस्य A pr. m. B.

ह्नितो व्याधितः तस्यापि भवति व्याध्युपशमार्थम् · [राजसूयाद्बहिः] ।

इन्द्रतुरीयम् ॥२४॥ व्याख्यास्यते इति शेषः · एतच्च काण्वानां श्वो भते[1] पठ्यते ।

आग्नेयः ॥२५॥ वारुणो यवमयश्चरुः ॥२६॥ द्वितीयं हविर्भवति ।

अन्यत्रापि ॥२७॥ सं° इतोऽन्यत्रापि वारुणो यवमय एव भवति ।

रौद्रश्च गावेधुकः ॥२८॥[2] चशब्दादन्यत्रापि रौद्रो गा°को भवति ।

वह्निनिदध्यैन्द्रम्[3] ॥२९॥ सं° वह्निन्या गोर्दधि वह्निनिदधि[4] अनो वह-
तीति वह्निनी गौः ।

सैव दक्षिणा ॥३०॥ ॥ ॥ प्रथमा कण्डिका ॥१॥ ॥

अपामार्गहोमः ॥१॥ व्याख्यास्यतऽइति सूत्रशेषः · इन्द्रतुरीयाच्च श्वोभूते का-
ण्वानां पठ्यते । सं° तत्र विधिमाह ·

स्रुवे पालाशे वैकङ्कते वापामार्गतण्डुलान्कृत्वा ॥२॥ तेनैव सर्वहोमः कर्तव्यः ।

त्र्यम्बकवद्दिगग्नी ॥३॥ अग्निर्दक्षिणाग्निः दिगुदीची । सं° त्र्यम्बकेषु (५.१०.४ १)
या दिक् यश्चाग्निः अन्वाहार्यप°जुहोतीति (५. २. ४. १५) ।

प्राची वा ॥५॥ अत्र च गमनमात्रे विकल्पः । वितानं तु प्राङ्मुखमेव ।

अग्ने सहस्वेत्युल्मुकादानम् (१. ३७) ॥५॥ अन्वाहार्यपचनात् ।

देवस्य त्वेति (१. ३८) जुहोति ॥५॥ प्राङुदग्वा गत्वा ।

रक्षसां त्वेति (१. ३८) स्रुवमस्यति तां दिशं यस्यां जुहोति ॥७॥ सं° यस्यां गत्वा जु° ।

अबधिष्म रक्ष इत्यायत्यनपेक्षम् (१. ३८) ॥८॥

अभिचर्यमाणोऽपि तां दिशं गत्वा ॥९॥ सं° परेणाभिचारकर्मणा मार्यमाणः ।

अभिचरतो नामादिशेद्धोमस्रुवप्रासनागमनेषु[5] ॥१०॥ स चायं नामादेशो
रक्षःशब्दस्य स्थाने भवति अमुमसाविति च । सं° होमे स्रुवप्रासनमन्त्रे आग-
मनमन्त्रेऽ[चा]भिचारं कुर्वतो नामादिशति ।

त्रिषंयुक्तेषु ॥११॥ कर्मोच्यते । सं° त्रिभिर्हविर्भिः संयुक्तं कर्म त्रिषंयुक्तम् ।

---

1) भूतेषु K. 2) गवेधुका महतां जलजानां तृणानां श्वेतानि फलानि Deva. 3) Thus K (here, and at ४. २. १). Ss. वह्निनीद° १. ३. M. K sec. m. R. AB and schol. at ४. २. १. (where however °ह्निनि pr. m.) 4) ह्निनी° AB. 5) °ध्रोमःस्रु° १. R. M.

आग्नावैष्णव ऐन्द्राविष्णवो वैष्णवो वामनो दक्षिणा ॥१२॥

अलिङ्गग्रहणे गौः सर्वत्र ॥१३॥ सं॰ यत्र ज्ञातिरूपं लिङ्गं न गृह्यते तत्र सर्वत्र गोजातिर्ज्ञेया ।

आग्नापौष्ण ऐन्द्रापौष्णः पौष्णः श्यामो दक्षिणा ॥१४॥ अस्यापि श्वो भूते काण्वपाठात् ।

अग्नीषोमीय ऐन्द्रासौम्यः सौम्यो बभ्रुर्दक्षिणा ॥१५॥ अस्यापि श्वो भूतऽएव काण्वीयायां पठ्यते । एकादशकपालः प्रथमः-प्रथमश्चरव इतरे ॥१६॥ भवन्ति।

वैष्णवस्त्रिकपालो वा ॥१७॥ भवति चरुर्वा ।

श्वो वैश्वानरो द्वादशकपालो वारुणश्चैकतन्त्रे ॥१८॥ भवत इति शेषः ।

श्वो वैकः ॥१९॥ भवतीति विकल्पः । सं॰ एको वारुणः ।

ऋषभः पूर्वस्य दक्षिणा कृष्णं वास उत्तरस्याभावेऽकृष्णम् ॥२०॥ तन्त्रभेदे चैतद्भवति ऐकतन्त्रे तु चोदकपरिप्राप्तोऽन्वाहार्य[1] इति ॥ द्वितीया कण्डिका ॥२॥ ॥

द्वादशोत्तराणि रत्नहवींषि ॥१॥ भवन्ति · द्वादशग्रहणं क्रियते चतुर्गृहीतस्यापि (१३) श्वोभूतेऽनुष्ठानं यथा स्यादिति ।

प्रतिगृहमेकैकं श्वः-श्वः ॥२॥ कर्तव्यम् । सं॰ वक्ष्यमाणानि द्वादश रत्नंषि प्रतिकं निर्वपति ।

समारूढनिर्मथितेऽग्नयेऽनीकवते सेनान्यः ॥३॥ गृहे । सं॰ सेनां नयतीति सेनानीः ।

बार्हस्पत्यश्चरुः पुरोहितस्य ॥४॥ गृहऽइति सर्वत्रानुवर्तते । सं॰ राजगुरुः ।

ऐन्द्रो यजमानस्य ॥५॥ ऐन्द्र एकादशकपालः ।

अदित्यै महिष्याः ॥६॥[2] चरुः । सं॰ प्रथमपरिणीता स्त्री ।

वारुणः सूतस्य ॥७॥[3] सूतश्चाश्वसारथिः । सं॰ सूतोऽश्वपोषकः ।

मारुतो ग्रामण्यः ॥८॥ सप्तकपालः । सं॰ ग्रामं नयतीति ग्रामणीः ग्रामनेता वैश्यानां महत्तरः ।

सावित्रः क्षत्तुः ॥९॥ अष्टाकपालो द्वादशकपालो वा · क्षत्ता प्रतीहारो दूतो वा[4] । सं॰ क्षत्ता मन्त्री · क्षत्ता नाम यष्टिहस्तोऽन्तःपुराध्यक्षः सर्वेषां नियन्ता ।

---

1) Thus AB. °ह्यान्वा° Ss. 2) महिषी पट्टराज्ञी ज्येष्ठा स्त्री ३ marg. 3) ब्राह्मण्यां क्षत्रियाज्जातः सूतः ३ marg. 4) मन्त्रीत्येके K marg. मन्त्री दूतो वा क्षत्रियायां शूद्राज्जातः क्षत्ता ३ marg.

आश्विनः संग्रहीतुः ॥१०॥ सं॰ संग्रहीता सारथिः रथयोजयिता ।

पौष्णो भागदुघस्य ॥११॥ भा॰घो भोजयिता । सं॰ परिवेष्टा · भागमंशं दोग्धीति ।

रौद्रो यजमानस्याक्षावापगोविकर्तगृहेभ्यो गवेधुकानाम् ॥१२॥ अक्षावापो ऽक्षगोप्ता अक्षगोप्तेत्यपरे[1] · गोविकर्ता हालिकः । सं॰ चर्वर्था गवेधुका[2] अक्षा॰गेहेभ्य आनीयन्ते · अक्षावापो द्यूतपतिः सभादिहतां गां विकृन्तति गोविकर्तः · अपरे तु अक्षगोप्ता गोविकर्तः कर्षुकः अथवा गोहिंसको व्याधः ।

चतुर्गृहीतं जुषाणोऽध्वाज्यस्य वेत्विति दूतस्य ॥१३॥ सं॰ दूतः पालागलः प्रहेयः प्रेष्य इत्यनर्थान्तरम् अनृतवादी दूतः पालागलः [इत्यापस्तम्बः] · तस्य गृहे ।

नैर्ऋतः परिवृत्त्यै[3] कृष्णव्रीहीणां नखनिर्भिन्नानां दर्विहोम एष ते निर्ऋतऽइति (१. ३५) जुहोति ॥१४॥ सं॰ या स्त्री पतिपुत्रवर्जिता सा परिवृत्ती परिवृत्त्या[4] गृहे नैर्ऋतश्चरुर्दर्विहोमो जुहोतिर्भवति ।

वषट्कृते वा ॥१५॥ ततश्च विकल्पोऽयम् । सं॰ वषट्कारे वा जुहोति[5] ।

यथासंख्यं दक्षिणाः ॥१६॥ हिरण्यम् ॥१७॥ सं॰ प्रथमे ।

शितिपृष्ठः ॥१८॥ सं॰ द्वितीये · शितिः कृष्णः पृष्ठो वंशो यस्यासौ · [श्वेतपृष्ठ इति हरिस्वामिनः माधवाचार्याश्च] शिति शुक्लं पृष्ठं यस्य ।

ऋषभः ॥१९॥ सं॰ तृतीये । धेनुः ॥२०॥ सं॰ चतुर्थे । अश्वः ॥२१॥ सं॰ पञ्चमे ।

पृषन् ॥२२॥ सं॰ विचित्रो गौः षष्ठे ।

श्येतोऽनड्वान् ॥२३॥ सं॰ सप्तमे · श्येतो रक्तः [श्येत आलोहितः श्वेत इति हरिस्वामिनः · शुक्लवर्णः] इति माधवाचार्याः ।

यमौ ॥२४॥ सं॰ यमलजौ द्वौ गावौ ।

अभावेऽनुपूर्वजौ ॥२५॥ सं॰ क्रमजातौ ।

श्यामः ॥२६॥ सं॰ नवमे श्यामः शुक्लकृष्णरोमेत्यर्थः ।

---

१) द्यूतकारकः K. marg. द्यूताध्यक्षः ३ marg. २) गवेधुका व्रीहिमध्ये तृणविशेषे शंखाकाराणि गोधूमप्रायाणि फलानि कसैया-लोकप्रसिद्धानि ३ marg. ३) परिवृत्यै १. ३. R. M. K. AB. — परिवृत्ती राज्ञा त्यक्ता अपुत्रा राज्ञः स्त्री ३ marg. परिवृत्ता परिगता निर्ऋत्या · ईकारश्छान्दसः · पुत्रादिभिः परित्यक्ता Deva. ४) वर्जो परिवर्ज्या Ss. ५) ततश्च वा यजतिरथवा जुहोतिरिति · यजतिपक्षे च स्वाहाकारवषट्कारयोः समुच्चयो भवति शुक्रामंथियागवत् । Deva.

त्रिदक्षिणो रौद्रः ॥२७॥ सं॰ दशमं रत्नहविः · तिस्रो दक्षिणा यस्यासौ। ताश्चाह · शितिबाहुशितिवालयोरन्यतरः ॥२८॥ शि॰बाः श्वेतसक्थिः शि॰लः श्वेतपुच्छः तयोरन्यतरः। सं॰ कृष्णबाहुकृष्णपुच्छयोः [· श्वेतबाहुः श्वेतपुच्छ इति हरिस्वामिनः]।

असिर्नखरः ॥२९॥ नखरोऽपरिवारः। सं॰ असिः शासः कृपाणः खड्गः · स च नखर-इव नखरः तीक्ष्णाकुञ्चिताग्रः कठारिकारूपः [न मण्डलाग्र इत्यर्थः] निःकोश इति माधवः।

वालदामबद्धमक्षावपणम् ॥३०॥ अक्षा उप्यन्ते यस्मिंस्तदक्षावपणम्[1]। सं॰ द्यूतकाले यत्राक्षाः प्रक्षिप्यन्ते तदक्षावपणम् तद्वालमयेन दाम्ना बद्धम् · एवं तृतीया दक्षिणा रौद्रस्य।

उत्तरस्य पृष्णावेष्टितं धनुः ॥३१॥ पृष्णशब्देन स्नायुभिधीयते अजगरचर्मेत्यपरे। सं॰ उत्तरस्यैकादशस्य रत्नहविषः [चतुर्गृहीतहोमरूपस्य] पृ॰तं कोशकारवेष्टितम्[2] मयूरपुच्छवेष्टितमिति केचित्।

चर्मतूण्यः[3] सेषुकाः ॥३२॥ सहेषुभिश्चर्ममय्यो भस्त्रा उच्यन्ते। सं॰ सेषुकाः इषुभिः सहिताश्चर्मतूण्यः चर्ममय्यो भस्त्रा इषुधयः शरपूर्णाश्चर्मभस्त्रा इत्यर्थः।

लोहित उष्णीषः ॥३३॥ सं॰ तथा लो॰तो रक्तवर्णा उष्णीषः शिरोवेष्टनम्।

कृष्णा परिमूर्ण्यपहृतोत्तमस्य ॥३४॥ जीर्णा अप॰ता अपस्तरी[4] कृष्णा गौः। सं॰ परिमूर्णी वृद्धा · अपहृता पर्यारिणी परि समन्तादार्तिमती · उत्तमस्य द्वादशस्य रत्नहविषः।

परिवृत्तीं चाह मा मेऽच्छेशायां वात्सीदिति ॥३५॥ मत्स्वाम्ये मा वात्सीरित्येतदुक्तं भवति · ततश्चासौ ब्राह्मणगृहं प्रविशति तत्र राज्ञो न स्वाम्यमिति।

सौमारौद्रोऽतश्चरुः शुक्लापयसि शुक्लवत्सायाः ॥३६॥ सं॰ [अत एभ्यः प्रागुक्तेभ्यो रत्नहविर्भ्य उत्तरकालम् ·] शु॰याः शुक्लाया गोः पयसि।

सैव दक्षिणां ॥३७॥ अनूचानोऽप्ययशा यजेत ॥३८॥[5]

---

1) अक्षस्थापनपात्रमिति माधवः K marg. द्यूतरमणपात्रमक्षावपणं ३ marg. 2) Thus AB. ३ marg. कोशा॰ Ss. कोशकारो धनुषः कोटीरचयिता ३ marg. 3) Thus १. R. K. AB. ॰पर्यः ३. M. तूपर्यो भस्त्राः ३ marg. 4) व्याधियुक्तेत्यर्थः K marg. अपहृता रोगिष्ठा ३ marg. 5) अनूचानः श्रुतशास्त्रादिकमन्येभ्य उपदेष्टुसमर्थोऽपि यशोहीनो भवति स एते-

किलासाबाधं तु ॥३९॥ [1] किलासाशब्देन व्याधिविशेष उच्यते · तद्बाधमि-च्छंश्च यजते · तुशब्दश्चार्थे । सं॰किलासा सिध्मः श्वित्र [2] इत्यन्ये ।

मैत्राबार्हस्पत्यश्चरुः ॥४०॥ श्वो भूते भवतीति शेषः ।

बार्हस्पत्यमधिश्रित्याश्वत्थी या स्वयम्भग्ना प्राच्युदीची वा शाखा तत्पात्रेणापिद-धाति ॥४१॥ बा॰त्यं चरुम् । सं॰ तस्याः शाखायाः पात्रेण छद्मयति ।

विनाठाद्रथपर्यूणान्नवनीतं स्वयंजातमाज्यमासिच्य पात्रे तस्मिन्स्थविष्ठांस्त-ण्डुलान्मित्रायावपति ॥४२॥ सं॰ विनाठो [3] दृतिः चर्ममयी भस्त्रा · रथेन पर्यू-णो रथपर्यूणः · तस्माद्दधिपूर्णाद्विनाठात्स्वयंजातं नवनीतमाज्यं तस्मिन्नाश्वत्थीशा-खापात्रे आसिच्य तस्मिंस्तण्डुलानावपति · स्थविष्ठानतिशयेन स्थूलान् ।

ऊष्मणा शृतो भवति ॥४३॥ मैत्रः । सं॰ स्थालीगतेन तापेन शृ॰ति ।

अणिष्ठानितरस्मिन् ॥४४॥ इतरस्मिन्बार्हस्पत्ये चरौ । सं॰ अणिष्ठानतिसू-क्ष्मानावपति [· मैत्रस्य श्रपणानन्तरम्] ।

एकं प्रदानम् ॥४५॥ स चायमेक एव यागः मैत्राबार्हस्पत्य इति समुदा-यात्तद्धितोत्पत्तेः अतश्च ए॰नम् अर्धार्धिकया चावदानग्रहणम् ।

गौर्दक्षिणा ॥४६॥ अभिषेचनीयदशपेययोर्दक्षिणोत्तरे देवयजने ॥४७॥

दक्षिणमभिषेचनीयस्य ॥४८॥ तयोश्च द॰यस्य भवति ।

फाल्गुनीपक्षयजनीयेऽभिषेचनीयाय दीक्षते ॥४९॥ फाल्गुन्याः पक्षेऽतीते यद्यजनीयम् तत्र दीक्षा चैत्रशुक्लप्रतिपदीत्यर्थः ॥ ॥ तृतीया कण्डिका ॥३॥ ॥

भार्गवो होता ॥१॥ अभिषेचनीयदशपेययोरेव न सर्वत्र · तत्रैव हि श्रू-यतऽइति । सं॰ अत्राभिषेचनीये भृगुसगोत्रो ब्राह्मणो होता भवति । [सर्वस्मि-न्नपि राजसूये भार्गव एव होतेति कठमैत्रसूत्रयोरस्ति] ।

पञ्चापवर्गः ॥२॥ सं॰ पञ्चभिरहोभिरपवर्गः समाप्तिर्यस्यासौ · [एका दीक्षा

---

न हविषा यशःप्राप्त्यर्थं यजेत ३ marg. राजसूयाद्बहिर्नैमित्तिकोऽयं ब्राह्मणस्य प्रयोगः Deva.

[1] किं च इदं सौमारौद्राख्यं कर्म किलासाबाधकं भवति रोगनाशकमित्यर्थः · किला-सा श्वित्रकुष्ठः ३ marg. [2] Thus A. श्वित्र B. चित्र Ss. [3] विनाठो दृतिः मशकः प्रसिद्धः । विनाठे दध्यासेकः मुखबन्धनम् रथे स्थापनम् रथधावनम् आण्डोलायमानेन न-वनीतं जायते तदाज्यं चरुपाकार्थं ग्राह्यम् ३ marg.

तिस्र उपसदः एका सुत्येति]।

सोमं क्रीत्वा द्वेधमुपनह्य पर्युह्यैकं ब्रह्मागारे निदधाति ॥३॥ स च दशपेयार्थः। सं° द्वे°ह्य पृथक्पृथक्सोमोपनहनयोर्बद्धा पर्युह्यानसा परिवहनं कृत्वा।

अग्नीषोमीयस्य पशुपुरोडाशमनु देवसूहवींषि निर्वपति यजप्रैषाणि ॥४॥ देवींषीति नामधेयम्। यज°णीति कुतः चोदकेन· यद्येवम् किमर्थमिदमुच्यते यज°णीति मुख्यत्वात्पशुपुरोडाशधर्माशङ्कानिवृत्त्यर्थम् [ पशु°डाशस्य प्रेष्यप्रैषत्वात्]।

प्लाशुकानां सवित्रे सत्यप्रसवाय ॥५॥ [1] प्लाशुकाः पुनःप्ररूढा व्रीहयः।

आशूनामग्नये गृहपतये ॥६॥ आशवः पक्षत्रयपाकिनो व्रीहयः।

उत्तरे चरवः ॥७॥ सं° इत उत्तरे षट्चरवो भवन्ति।

श्यामाकः सोमाय वनस्पतये ॥८॥ [श्यामाकाः शूककण्ठकरहिता अतिमृदवः कणाः]।

नैवारो बृहस्पतये वाचे ॥९॥ सं° नीवाराः स्वयंजाताः [आरण्या व्रीहयः]।

हायनानामिन्द्राय ज्येष्ठाय ॥१०॥ हायना रक्तशालयः। सं° जहात्युदकमतिवृद्धेति हायनाः (पा° ३. १. १४८)· [संवत्सरपाचिनो व्रीहयो हायना इति याज्ञिकाः]।

रुद्राय पशुपतये ॥११॥ सं° गावेधुकश्चरुर्भवति (१. २८)।

नाम्बो मित्राय सत्याय ॥१२॥ स्वयंजाता व्रीहयो नाम्बाः। सं° अकृष्टपच्याः।

वरुणाय धर्मपतयऽइति ॥१३॥ अष्टौ। सं° यवमयश्चरुर्भवतीति शेषः (१. २७)।

उत्तमेन चरित्वा सविता त्वेत्याह (९. ३९-४०) यजमानबाहुं दक्षिणं गृहीत्वा ॥१४॥

नामास्य गृह्णाति मन्त्रे यथास्थानम् ॥१५॥ यस्मिन्स्थाने अमुमिति सर्वनाम तत्र नामग्रहणम् तत्संस्कारात्। सं° मन्त्रे सविता त्वेत्यस्मिन्कण्डिकाद्वयात्मके।

मातापित्रोश्च ॥१६॥ यथास्थानं नामग्रहणम् तत्संस्कारात्।

यस्याश्च जाते राजा भवति देशस्यानवस्थितत्वात् ॥१७॥ काण्वानां पठ्यते एष वः कुरवो राजा पाञ्चाला राजेति च· तदुच्चारणार्थमेव मा भूत्· अत आह यस्या॰भवति जातिग्रहणं जनपदोपलक्षणार्थम् यस्मिञ्जनपदे राजा भवति तस्य च नाम गृह्णातीत्यर्थः। कुत एतत् दे°त्वात् न हि शास्त्रे देशव्यवस्था कुरुपञ्चालजातीयैरेव राजसूयः कर्तव्य इति सर्वस्य विहितत्वात्·

---

[1] पूर्वं छिन्नाः सन्तः पुनराशु प्ररोहन्तीति पुनराशुका इत्यर्थे प्लाशुका[:] छान्दसः K. marg.

कुरुपञ्चालग्रहणमत्र देशोपलक्षणार्थम् अङ्गा वङ्गाः सुह्माः पुण्ड्रा इति चैवमादीनाम् । सं॰ तस्या जातिर्नाम गृह्णाति अस्यै कौरव्यै विशे अस्यै पाञ्चाल्यै इत्यादि ।

पशुपुरोडाशतन्त्रं प्राधान्यात् ॥१८॥ देवसूहविषां पशुपुरोडाशिकं[1] तन्त्रं भवति कुत एतत् प्राधान्यात् मुख्यत्वादित्यर्थः तत्र हि[2] पशुपुरोडाशः प्रधानभूत इति स्थानित्वात्प्राधान्यमुक्तम् । सं॰ पशुपुरोडाशस्य तन्त्रं भवति कुतः प्राधान्यात् पशुपुरोडाशतन्त्रमध्ये [पशु॰डाशतत्स्विष्टकृतोर्मध्ये] देवसूहविषां प्रक्षिप्तत्वात् ।

इतरेषां वा भूयस्त्वात् ॥१९॥ इतरेषां वा तन्त्रं भवति न पशुपुरोडाशिकम् कुत एतत् भूयस्त्वात् बहूनि ह्येतानि देवसूहवींषि एवं च विकल्प एवायम् मुख्यत्वाद्वा पौरोडाशिकम् भूयस्त्वेन वेतरेषामिति किं च । सं॰ वा सिद्धान्ते देवसूहविषामेव तन्त्रं स्यात् ।

स्विष्टकृच्छ्रुतेश्च ॥२०॥ उभयरूपा हि स्विष्टकृच्छ्रुतिः काण्वानां यजप्रैषः स्विष्टकृत् माध्यन्दिनानां प्रेष्यप्रैष इति तेनात्र विकल्प एवानुरूपतर इति[3] । सं॰ स्विष्टकृच्छ्रुतेरपि हि विकल्पः प्रतीयते उभयथा स्विष्टकृच्छ्रुतिर्भवति ।

इडान्तेऽपो गृह्णाति ॥२१॥ इडान्तग्रहणेन देवसूहविषां शेषकार्योपलक्षणम् ततश्च तद्भागपरिहरणान्ते ग्रहणम् श्रुतौ तु स्विष्टकृत्समनन्तरमपां ग्रहणं पठ्यते तत्रापि स्विष्टकृता शेषकार्योपलक्षणम् । सं॰ वक्ष्यमाणा अभिषेकार्था अपः ।

यूपमुत्तरेण नैमित्तिकीरसम्भवात् ॥२२॥ या आपो निमित्तेन प्राप्यन्ते ता नै॰क्यः यथा गोरुल्ब्या आतपवर्ष्यास्तासामस्मिन्काले ग्रहणासम्भवादतः पूर्वं गृहीत्वा यूपमुत्तरेण पुनर्ग्रहणम् तच्च वचनात् । सं॰ ता नैमित्तिकीरपो राजसूयारम्भात्प्रागेव सम्पाद्येदानीं यू॰णा विधिना गृह्णीयात् कुत एतत् इदानीमातपवर्षणादेर्निमित्तस्यासम्भवात् ।

गत्वेतराः ॥२३॥ सं॰ अनैमित्तिकीरपो गत्वा इदानीमेव तत्र गत्वा गृह्णीयात् ।

पृथक्पात्रेष्वौदुम्बरेषु ॥२४॥ सारस्वतीः ॥२५॥ सं॰ सरस्वत्यां भवाः ।

अवगाह्यावगाढात्पशोः पुरुषाद्वा पूर्वापराऽऊर्मी ॥२६॥ सं॰ अध्वर्युरवगाह्य

---

1) पशुपौरो॰ K. 2) ? न हि K. — See ५. ११. १३. 3) See ५. ११. २४.

तडागादिस्थे [जले स्वयं प्रविश्य] अवगाढाज्जले प्रविष्टात्पशोः पुरुषाद्वावधिभूताव्यौ पूरी ऊर्मी कल्लोली तौ गृह्णीयात् ।

स्यन्दमानाः ॥२७॥ सं° नद्यादिस्था वहन्त्य आपः स्य°ना उच्यन्ते ।

प्रतिलोमाः ॥२८॥ सं° स्यन्दमानानां याः प्रतिलोमं वहन्ति ता गृह्णाति ।

अपयतीः ॥२९॥ याः स्यन्दन्त्य एवापयन्ति ता अपयतीः । सं° प्रवाहादपसृत्य मार्गान्तरेण गत्वा पुनरपि तस्मिन्प्रवाहे प्रविशन्ति ।

नदीपतिम् ॥३०॥ नदीपतिः समुद्रः ।

सूच्याः ॥३१॥ तत्रापि याः सुष्ठूच्यन्ति ताः सूच्याः वीचिस्थाः ।

काष्ठं वोच्छ्रितोढम् ॥३२॥ सं° पूर्वमुच्छ्रितमूर्ध्वीकृतम् पश्चादूढम् उच्छ्रितोढम् · याभिः सामुद्राभिरद्भिः पूर्वं किंचन काष्ठमुच्छ्रित्योर्ध्वीकृत्य वेगबलात्तिर्यक्पातयित्वा पश्चादूढं स्थलान्तरं नीतम् ताः ।

निवेष्याः ॥३३॥ सं° निवेष्य आवर्तः[1] अम्भसां भ्रमः · तत्र भवाः ।

स्यन्दमानानाट स्थावराः प्रत्यातापे ॥३५॥ सं° स्यन्दमानानां मध्ये याः स्थावराः स्थिराः न वहन्ति · आदित्येन प्रतिकालमातप्यते न कदाचिद्वृक्षादिछायया-वष्टभ्यतऽइति प्रत्यातापो देशः तस्मिन्यो ह्रदस्तदात्मिकाः ।

अन्तरिक्षात्प्रतिगृह्यातपर्ष्याः ॥५॥ अन्त°त्प्रतिग्रहीतव्याः आतपवर्षणाः । सं° आतपे वर्षन्ति · ताः अन्त°क्ष्य भूमिपतनात्प्रागेवाकाशात्पततीरादाय गृह्णाति ।

सरस्याः ॥३६॥ सं° सरस्तडागस्तत्र भवाः । कूप्याः ॥३७॥ सं° कूपे भवाः ।

प्रुष्वाः ॥३८॥ स° प्रुष्वा अवश्यायो हिमाम्भः ठार इति लोके प्रसिद्धः[2] ।

मधु ॥३९॥ गोरुल्ब्याः ॥४०॥ सं° उल्बं गर्भवेष्टनं तत्र भवाः[3] ।

पयः ॥४१॥ घृतम् ॥४२॥ उक्ता आपः तासां ग्रहणमाह

सारस्वतीर्गृह्णात्यपो देवा इति (१०.१) ॥४३॥ सं° अध्वर्युः प्रथमं सा°ति ।

जुहोत्युत्तरासु चतुर्गृहीतानि वृष्णऊर्म्यादिभिः (१०.२-४) स्वाहाकारान्तैः पूर्वैः-पूर्वैः

---

1) स हि नीचैर्निविशर्तऽइति निवेश इति प्राप्ते निवेष्य इति छान्दसः प्रयोगः Deva.
2) प्रुषंति सिंचंतीति प्रुष्वाः हिमांभः K marg. हिमकणाः प्रुष्वाः ३ marg. 3) प्रसवकालीनाः ३ marg.

प्रतिमन्त्रमुत्तरैरुत्तरैर्गृह्णाति ॥४४॥ काण्वानां च यथाश्रुति विनियोगक्रमेण च आपो ग्रहीतव्याः । सं॰ पूर्वमप्सु [चतुर्गृहीत]होमः पश्चात्तासां ग्रहणम् ।

अपः स्वराज इति (१०. ४) मरीचीर्गृहीत्वा-गृहीत्वाञ्जलिना सर्वासु संसृजति ॥४५॥ सारस्वतीषु च मरीचिषु च न होमः प्रतिषेधात् । सं॰ मरीचीरञ्जलिना गृहीत्वा सर्वास्वप्सु [प्रत्येकं] तूष्णीं संसृजति । [सूर्यरश्मिभिरुद्धृता आपो मरीचयः] ।

औदुम्बरे पात्रे समासिञ्चत्येना मधुमतीरिति (१०. ४) ॥४६॥ सं॰ एना अपः एकस्मिन्महति पात्रे संमिश्रीकर्तुं निनयति । [प्रत्येकं मन्त्रावृत्तिः] ।

मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधात्यनाधृष्टाः सीदतेति (१०. ४) ॥४७॥

पात्राणि च तूष्णीं पालाशौदुम्बरनैयग्रोधपादाश्वत्थान्यभिषेकाय ॥४८॥ चशब्दात्पुरस्तान्निदधाति । सं॰ अभिषेकार्थमेतानि पात्राण्यासादयति ।

उक्थ्यः श्वः ॥४९॥ पयस्या मैत्रावरुणी माध्यन्दिनीयैः सह ॥५०॥

शतं सहस्राणि दक्षिणा ॥५१॥ सं॰ गवां लक्षमित्यर्थः ॥ ॥ चतुर्थी कण्डिका ॥४॥ ॥

मरुत्वतीयान्ते पात्राणि पूर्वेण व्याघ्रचर्मास्तृणाति सोमस्य त्विषिरिति (१०. ५) ॥१॥ अगृहीते माहेन्द्र इति वचनात् (५. ३. ५. २) सर्वमरुत्वतीयानामन्ते । सं॰ मैत्रावरुणधिष्ण्यस्य पुरस्तादासादितपात्राणां पुरस्तात् ।

अपरेऽन्ते सीसं निदधाति ॥२॥ सं॰ चर्मणः पश्चाद्भागे ।

पार्थानामग्नये स्वाहेति (१०. ५) षड्जुहोति प्रतिमन्त्रम् ॥३॥ पार्थानि हि प्रकृत्याह षट् पुरस्तादभिषेकस्येति (५. ३. ५. ६) । सं॰ पार्थसंज्ञकानां [होमानां मध्ये] ।

पवित्रे कृत्वा हिरण्मयेनयोः प्रवयति ॥४॥

ताभ्यामुत्पुनात्यपः सवितुर्व इति (१०. ६) ॥५॥ अभिषेचनीया अपः । पौर्णमासिकेन विधिना पवित्रकरणम् तुल्यं हि शास्त्रमत्र ।

अभिषेचनीयेष्वेना व्यानयति सधमाद इति (१०. ७) ॥६॥ सं॰ पालाशादिचतुर्षु पात्रेषु चतुर्धा विभज्य व्यानयति एना अपः ।

तार्प्यं परिधापयति ॥७॥ [तार्प्यशब्दं स्वयमेव व्याकरोति ।]

क्षौमम् ॥८॥ सं॰ तार्प्यशब्दार्थमाह । क्षुमा अतसी तस्य विकारः ।

त्रिपाणं वा ॥९॥ त्रिःकृत्वः पायितं वा सकृदिति विकल्पः । सं॰ वयनकाले उदकेन त्रिस्तर्पयित्वा यद्यूयते सूत्रम् तत्तृप्यम् तस्य विकारस्तार्प्यम् त्रिःपायितैस्तन्तुभिर्व्यूतमित्यर्थः · केचित्त्रिपाणं वल्कलमित्याहुः ।

घृतोन्नमेके ॥१०॥ एके आचार्याः घृन्नं तार्प्यमभिवदन्ति · घृतशौचितम् । सं॰ घृतक्लिन्नम् । यज्ञरूपस्यूतम् ॥११॥ तस्मिन्त्सर्वाणि यज्ञरूपाणि निष्यूतानि भवन्तीति (५. ३. ५. २०) वचनात् · यज्ञरूपाणि च स्रुक्स्रुवादीनि । सं॰ स्रुक्स्रुवादीनि स्यूतानि सूचीकर्मणा उत्पादितानि यत्र ।

पाण्डुं च निवस्ते ॥१२॥ पाण्डुः कम्बलः · तं च निवस्ते उपरि तार्प्यस्य । सं॰ पाण्डुं रक्तकम्बलं तार्प्यस्योपरि द्वितीयं वस्ते ।

अधीवासं प्रतिमुच्योष्णीषं संवेष्ट्य निवीते ॥१३॥ निवीतं च कण्ठेऽवसञ्जनम् । सं॰ उपरि सर्वतश्चाच्छाद्यतेऽनेनेत्यधीवासः महाकञ्चुकः · उष्णीषः शिरोवेष्टनम् · अधीवासं गले प्रतिमुच्य उष्णीषस्य मध्यप्रदेशं[1] शिरसि वेष्टयित्वा तस्योष्णीषस्योभौ प्रान्तौ परिहितस्य वस्त्रस्य नि॰ते कृतनीविके स्थाने नाभेः पुरस्तादवगूहते ।

नाभिदेशे परिहरते वा ॥१४॥ सं॰ वा प्रान्तौ नाभिदेशे परि समन्ताद्वेष्टयति ।

तार्प्यप्रभृतीनि क्षत्रस्येति (१०. ८) प्रतिमन्त्रम् ॥१५॥ परिधत्ते ।

दीक्षितवसननिवृत्तिर्विरोधान्माहेन्द्रादौ वा पुनःपरिधानं निधायैतानि ॥१६॥ तार्प्यादीनि । सं॰ एतानि निधाय परित्यक्तस्य दीक्षितवसनस्य पुनःपरिधानम् ।

इन्द्रस्य वार्त्रघ्नमिति (१०. ८) धनुरातनोति ॥१७॥ आरोपयति । सं॰ ज्याधिरूढं करोति ।

मित्रस्य वरुणस्येत्यस्य (१०. ८) बाह्ल विमार्ष्टि ॥१८॥ बाह्ल धनुःकोट्यावुच्येते · मन्त्रद्वयोपदेशात्प्रतिमन्त्रमिति गम्यते । सं॰ कोटीप्रान्तौ ।

धनुः प्रयच्छति त्वायमिति (१०. ८) ॥१९॥ यजमानाय ।

दृवासीति (१०. ८) प्रतिमन्त्रमादाय तिस्र इषूः प्रयच्छति पातैनमिति (१०. ८) प्रतिमन्त्रम् ॥२०॥ यजमानायैव ।

आविर्मर्या इति (१०. ९) वाचयति ॥२१॥ केषांचित्प्रतिमन्त्रम् नेति सम्प्रदायः।

---

[1] °देशं Ss. °देशेन AB.

अवेष्टा इति (१०.१०) लोहायसमाविध्यति केशवास्ये सदोऽन्तऽउपविष्टाय ॥२२॥ सं॰ दीर्घकेशवस्य पुरुषस्य मुखे लो॰सं ताम्रं प्रक्षिपति [लोहेनोपसिक्तमयः लो॰सम्]।

सुन्वन्तमाक्रमयन्दिशः प्राचीमारोहेति (१०.११) वाचयति प्रतिमन्त्रं प्रतिदिशं यथालिङ्गम् ॥२३॥ सुन्वन्तं यजमानं बाहुगृहीतमाक्रमयन्॰ दिशां चाक्रमणमाभिमुख्यगमनमात्रेणैव न ह्यन्यथा सम्भवः।

आक्रम्य पादेन सीसं निरस्यति प्रत्यस्तमिति (१०.१४) ॥२४॥ यच्छार्दूलचर्मणो जघनार्धे सीसं निहितम् (२) तत्पदा प्रतिक्षिपति।

व्याघ्रचर्मारोहयति सोमस्य त्विषिरिति (१०.१५) ॥२५॥ यजमानमारोहयति बाहुगृहीतम् मन्त्रस्तु यजमानस्यैव।

रुक्मधःपदं कुरुते मृत्योरिति (१०.१५) ॥२६॥ रुक्म आभरणविशेषः तं पदस्याधस्तात्कुरुते। [अध्वर्युर्यजमानस्य पादयोरधस्तात् परिमण्डलं सौवर्णम्]।

शिरसि च नवतर्म्म७ शततर्म्म बौजोऽसीति (१०.१५) ॥२७॥ चशब्दाद्रुक्ममेव। सं॰ नवछिद्रं शतछिद्रं वा।

बाहूऽउद्गृह्णाति हिरण्यरूपा इति (१०.१६) ॥२८॥ यजमानः। सं॰ ऊर्ध्वौ करोति।

मित्रोऽसि वरुणोऽसीति (१०.१६) वा ॥२९॥ बाह्वोरुद्ग्रहणाम्।

स्थितं प्राञ्चमभिषिञ्चति पुरोहितोऽध्वर्युर्वा पुरस्तात्पालाशेन प्रथमम् पश्चादितरे द्वितीयेन स्वस्तृतीयेन मित्र्यो राजन्यो वैश्यश्चतुर्थेन सोमस्य त्वा द्युम्नेनेति (१०.१७) प्रतिमन्त्रम् ॥३०॥ पुरस्ताद्व्यवस्थितः पु॰र्युर्वा पालाशेन पात्रेण पश्चादितरे व्यवस्थिताः॰ द्वितीयेनौदुम्बरेण भ्राता तमभिषिञ्चति तृतीयेन नैयग्रोधपादेन राजन्यो यो मित्रत्वेनोपागतः वैश्यश्चतुर्थेनाश्वत्थपात्रेण। सं॰ प्राङ्मुखम्।

अभिषिञ्चामीति सर्वत्र साकाङ्क्षत्वात् ॥३१॥ अध्याहारः।

क्षत्राणां क्षत्रपतिरेधीति च ॥३२॥ सर्वत्रैव शेषः।

इममनुष्येति (१०.१८) च प्रथमो देवसूवत् ॥३३॥ अभिषिञ्चति। सं॰ प्रथमः पुरोहितोऽध्वर्युर्वा देवसूहविःष्विव नामग्रहणयुक्तं पठति।

पार्थानामिन्द्राय स्वाहेति (१०.५) षड्जुहोति प्रतिमन्त्रम् ॥३४॥ ॥ पञ्चमी कण्डिका ॥५॥ ॥

शौनःशेपं च प्रेष्यति ॥१॥ शौ॰प॰ शं॰सेत्येवम् । सं॰ होतारम् [ततो होता शंसति]।

सूतान्ते वा ॥२॥ प्रेष्यति · तदा तत्रैव शस्यते । सं॰ वक्ष्यमाणसू॰न्ते ।

ओ३मित्यृचां प्रतिगरस्तथेति गाथानाम् ॥३॥ [तत्र शौनःशेपशस्त्रे] ऋचो ह्याम्नातऽएव गाथा छन्दोविशेषेण ।

होताध्वर्यू हिरण्मय्योः[1] कशिपुनोरुपविष्टौ ॥४॥ सं॰ कशिपुशब्देन मसूरक उच्यते [फलकमिति पितृभूतिः] · तयोरुपविष्टौ शौ॰पशंसनं तत्प्रतिगरं च कुर्वाते ।

शौनःशेपान्ते पृथक्शते ददाति ॥५॥ पृथग्वचनाच्छतं-शतं गवामेकैकस्य द॰ति ।

सहस्रे वा ॥६॥ विकल्पः । आसने च ॥७॥ ददाति · यो यत्रोपविष्टः ।

कण्डूयन्याभिषेकेण प्रलिम्पते प्र पर्वतस्येति (१०.१९) ॥८॥ कण्डूयनी कृष्णविषाणा · तया शरीरसंलग्नोदकाभिषेकेण प्र॰ते । सं॰ यजमानः स्वशरीरम् ।

चर्मणि त्रिर्विक्रमयति विष्णोरिति (१०.१९) प्रतिमन्त्रम् ॥९॥ विक्रमणं कारयत्यध्वर्युः मन्त्रस्तु यजमानस्यैव क्रमणशेषत्वात् ।

पालाशे शेषानासिच्य पुत्राय प्रयच्छति प्रियतमायेदं मे कर्मेदं वीर्यं पुत्रोऽनुसंतनोत्विति ॥१०॥ शेषा अभिषेकशेषाः ।

शालाद्वार्ये जुहोति पुत्रेऽन्वारब्धे प्रजापतऽइति (१०.२०) पुत्रयजमानयोर्नाम गृह्णाति पितृशब्दं पुत्रे कृत्वा यथायथं पश्चात् ॥११॥ अयमभिमन्युरर्जुनस्य पितेत्येवं पितृशब्दः पुत्रे कृतो भवति यथायथं पश्चादिति अर्जुनोऽभिमन्योः पितेत्येवम् · अयममुष्य पितासावस्य पितेति मन्त्रे पाठः ।

आग्नीध्रीये पालाशेन शेषाञ्जुहोति रुद्र यत्तऽइत्युत्तरार्धे (१०.२०) ॥१२॥ अभिषेकशेषान् ।

गवां॰ शतमधिकं वा स्वस्याहवनीयस्योत्तरत स्थापयति ॥१३॥ स्वशब्देनात्र भ्रातोच्यते । सं॰ स्वो ज्ञातिः सपिण्डः ।

पूर्वाग्निवहनं च साग्नि ॥१४॥ शान्तिकपौष्टिकार्थोऽग्निर्येनानसोह्यते । सं॰ पूर्वाग्निः [प्रथमो गृहस्थस्याग्निः शालाग्निः] आवसथ्यः स उह्यते येनानसा तत्पूर्॰हनम् · साग्नि आवसथ्याग्निसहितम् · चकारादाहवनीयस्योत्तरतः स्थापयति ।

---

[1] ? यय्योः १. K pr. m. M pr. m. — Feminine!

वाजपेयवद्रथमवहृत्य दक्षिणस्यां वेदिश्रोणौ युनक्ति पूर्ववन्मित्रावरुणयोरिति (१०.२१) चतुर्भिः ॥१५॥ वाजपेयवदिति (१४.३.१-२) रथगृहाद्रथावहरणं धूर्गृहीतस्य चावर्तनं कृत्वा दक्षिणश्रोणौ व्यवस्थितं युनक्ति · चतुर्भिरश्वैः उत्तराप्रष्टिश्चतुर्थः ।

दक्षिणापथेन यात्वापरेण चात्वालं स्थापयति ॥१६॥ रथम् ।

अव्यथायै त्वेति (१०.२१) सुन्वन्नारोहति ॥१७॥ तमेव रथम् ।

मरुतामिति (१०.२१) दक्षिणधुर्यं प्राजति ॥१८॥ यन्ता । सं॰ कशादिना ।

गवां मध्ये स्थापयत्यापमेति (१०.२१) ॥१९॥ रथं यन्तैव ।

धनुरार्त्न्योपस्पृशति गां यजमानः समिन्द्रियेणेति (१०.२१) ॥२०॥ सं॰ धनुःप्रान्तेन।

जिनानीमाः कुर्वऽइमा इति चाह ॥२१॥ चशब्दाद्यजमानः ।

तावद्भूयो वा गोस्वामिने दत्त्वा पूर्वेण यूपं परीत्यान्तःपात्यदेशे स्थापयति मा तऽइति (१०.२२) ॥२२॥

अग्नये गृहपतयऽइति (१०.२३) चत्वारि रथविमोचनीयानि जुहोति प्रतिमन्त्रम् ॥२३॥

पशूनां रसोऽसीति वराहोपनहाऽउपमुञ्चते ॥२४॥ यजमानः ।

भूमिमवेक्षते पृथिवि मातरिति (१०.२३) ॥२५॥ यजमान एव ।

अवरोहति हंसः शुचिषदिति (१०.२४) ॥२६॥ रथाद्यजमानः ।

विमुच्य सयन्तृकं[1] रथवाहणे करोति ॥२७॥ विमुच्य रथं सह यन्त्रा[2] रथ-श्रोति । सं॰ स॰कं यन्तृसहितमेव[3] उत्पाद्य रथश्रोति · रथवाहणशब्दस्याप्रसिद्धत्वात्स्वयमेव तस्यार्थमाह ·

अनस्तत्कर्म ॥२८॥ तस्य चानसस्तदेव कर्म रथवाहणम् । सं॰ अनः शकटमेव तत्कर्म रथवाहणशब्दवाच्यमित्यर्थः [नान्यदनडुदादिकम्] ।

शालाया दक्षिणतोऽपप्रवते यन्ता ॥२९॥ रथादवतरति ।

रथवाहणस्य दक्षिणेऽन्ते शतमानावासजति वृत्तौ ॥३०॥ वृत्ताकारौ रक्तिकाशतमानौ । सं॰ दक्षिणे चक्रे वृत्तौ श॰नौ बध्नाति ।

अनुवर्त्मनौदुम्बरीं शाखामुपगूहति ॥३१॥ सं॰ अनुवर्त्म रथचक्रवर्त्मनि ।

---

1) Thus AB. सयंत्रिकं ३. M. Ss. 2) ? यंतारं K. pr. m. 3) सयंत्रिकं यंत्रस॰ Ss. सयंतृकं यत्रास॰ AB.

उपस्पृशति शतमानाविपदसीति (१०.२५) ॥३२॥ इं॰सीत्येकम् युङ्क्ष्सीति चापरम्।
तौ ब्रह्मणि दृब्योगसीति (१०.२५) शाखामुपस्पृशति ॥३३॥ ताविति शतमानौ।
इन्द्रस्य वामित्यवहरते (१०.२५) बाहू पयस्यायां व्याघ्रचर्मदेशे स्थितायाम् ॥
३४॥ अवहरति यजमानः। सं॰ पूर्वं व्या॰तायां पय॰यामध्वर्युर्यजमानस्य बाहू
अवहरते पयस्यामध्ये नीचौ करोतीत्यर्थः।

सेषुकं धनुः प्रयच्छति ॥३५॥ सं॰ इषुत्रयसंयुक्तं धनुः धनुर्धराय।

उत्तरवेदिं कृत्वा पयस्यया प्रचरति प्राक्स्विष्टकृतः [१] ॥३६॥ सं॰ तां पयस्यां
[सदोमध्यात्] उत्त॰दिं प्रति कृत्वा ॥ ॥ षष्ठी कण्डिका ॥६॥ ॥

खादिरीमासन्दीं रज्जूतां व्याघ्रचर्मदेशे निदधाति स्योनासीति (१०.२६) ॥१॥

अधीवासमस्यामास्तृणाति क्षत्रस्य योनिरिति (१०.२६) ॥२॥ आसन्द्याम्।

सुन्वन्तमस्यामुपवेशयति स्योनामासीदेति (१०.२६) ॥३॥ बाहुगृहीतं यज-
मानम् · मन्त्रश्चाधर्व्योरेव।

निषसादेत्युरोऽस्यालभते (१०.२७) ॥४॥ यजमानस्य हृदयम्।

अभिभूरित्यस्मै (१०.२८) पञ्चाक्षान्पाणावाधाय पश्चादेनं यज्ञियवृक्षदण्डैः शनैस्तू-
ष्णीं घ्नन्ति ॥५॥ अधर्यवो बहुवचनोपदेशात्। सं॰ षष्ठ्यर्थे चतुर्थी अस्य पाणौ।
पाप्मानं तेऽपहन्मोऽति वा बधं नयामीति वा ॥६॥ तूष्णीं वेति विकल्पः।
वरं वृत्वा ब्रह्मन्नित्यामन्त्रयते (१०.२८) पञ्चकृत्वः ॥७॥ यजमानः।

प्रत्याह व्यत्यासं सविता वरुण इन्द्रो रुद्र इति (१०.२८) त्वं-ब्रह्मासीत्यादिभिः
॥८॥ ब्रह्मा प्रतिवचनं ददाति यजमानाय। सं॰ ब्रह्मा त्वं ब्रह्मासीत्यादिभिः
सवितासि वरुणोऽसि इन्द्रोऽसि रुद्रोऽसीत्येतैर्मन्त्रैर्व्यत्यासं यजमानं प्रत्याह ·
त्वं-ब्र॰भिरिति चतुर्णां मन्त्राणामादौ त्वं-ब्रह्मासीत्यस्य प्रयोगः · व्यत्यासमिति
प्रथमं यजमानो ब्रह्मन्नित्यामन्त्रयते ततो ब्रह्मा त्वं ब्रह्मासीत्यादि यजमानं प्र-
त्याह पुनर्ब्रह्मन्निति यजमानो ब्रह्माणम् ब्रह्मा यजमानमिति सर्वत्र ज्ञेयम्।

आदिनैवान्त्यम् ॥९॥ त्वं ब्रह्मासीत्यनेनैवान्त्यं पञ्चमं [२] प्रतिवचनम्। सं॰ त्वं

---

१) Deva, Ss. and Mahîdh. join प्राक्कृतः with the beginning of the next kaṇḍikâ.

२) यद्यपि सम्पूर्णो मन्त्रः प्राप्नोति तथापि त्वं ब्रह्मासीतीतरोऽनिरुक्तं प्रत्याहेति (५.४.४.१३) श्रुतेस्तावानेव K. marg.

ब्रह्मासीत्यस्यादिरिति संज्ञा · अत्यं पञ्चमं प्रतिवचनमादिनैव त्वं ब्रह्मासीत्येतावतैव मन्त्रेण ब्रह्मणा कर्तव्यम् ।

बहुकारेति (१०.२८) च ब्रूयत्येवंनामानम् ॥१०॥ चशब्दाद्यजमानः स हि पूर्वामन्त्रणेऽभिहितः · बहुकारेत्येवंनामानं संशब्दयति एवमपि हि श्रूयते (५.४.४.१४) य एवंनामा॰वदतीति । सं॰ बहुकारेत्यादिनामानं पुरुषं आकारयति ।

स्फ्यमस्मै प्रयच्छति पुरोहितोऽध्वर्युर्वेन्द्रस्य वज्र इति (१०.२८) ॥११॥ यजमानाय[1]।

राजा राजभ्राता सूतस्थपत्योरन्यतरो ग्रामणीः सजातश्चैवं पूर्वः-पूर्व उत्तरस्मै ॥१२॥ सजातश्च ग्रामणीसजातः । सं॰ सूतोऽश्वपोषकः · स्थपतिर्ग्रामेश्वरः · ग्रामणीः ग्रामाणां नेतृत्वेन महत्तरः · सजातो ग्रामण्यो भ्राता · एतेषां राजादीनां पञ्चानां पूर्वः प्रथमः-प्रथमः राजादिः उऽस्मै राजभ्रात्रादिकाय स्फ्यं प्रयच्छति ।

प्रत्तेन सजातः प्रतिप्रस्थाता च पूर्वाग्निसहिलाच् शुक्रपुरोरुचा द्यूतभूमिं कुरुतः ॥१३॥ पूर्वाग्निवहनसंलग्नाम् । सं॰ ग्रामणीप्रत्तेन स्फ्येन शुक्रग्रहग्रहणामन्त्रेण [तं प्रत्नथेत्यनेन ७.१२] पू॰तां तत्संनिधौ द्यू॰रुतः ।

मन्थिनो विमितम् ॥१४॥ सं॰ [म॰नः पुरोरुचा अयं वेन इत्यनेन ७.१६] मन्थि[ग्रह]ग्रहणामन्त्रेण द्यूतभूमौ विमितं [चतुरस्रं मण्डपं] कुरुतः ।

द्यूतभूमौ हिरण्यं निधायाभिजुहोति चतुर्गृहीतेनाग्निः पृथुरिति (१०.२९) ॥१५॥ अक्षान्निवपति स्वाहाकृता इति (१०.२९) ॥१६॥[2] द्यूतभूमौ ।

गां दीव्यधमित्याह ॥१७॥ द्यूतकरणे[3] प्रैषोऽयम् ।

कृतादि वा निदध्याद्राजप्रभृतिभ्यः ॥१८॥ कृतादिभिर्वा द्यूतं भवति राजप्रभृतिभिः वा द्यूतान्तरम् । सं॰ राभ्यः कृतादि द्यूतं निदध्यात् रचयेत् वा द्यूतान्तरम् · कृतादि द्यूतं द्यूतकारिणां प्रसिद्धम् ।

सजाताय कलिम् ॥१९॥ कृतादिपक्षे । सं॰ क्रीडनार्थं कलिं [निदध्यात्] रचयेत् ।

गामस्यानीय घ्नन्ति ॥२०॥ अस्य सजातस्य सम्बन्धिनी या तां गाम् · हन्तिश्चाहननमात्रो न मारणार्थः । सं॰ ताडनमात्रं कुर्वन्ति न तु मारणम्[4] ।

---

1) पुरोहितो योऽथर्ववेदविहितानां शान्तिकपौष्टिकाभिचारकर्मणां कर्ता Deva. 2) अध्वर्युः K marg. 3) ? द्यूतप्रकरणे K. 4) सभायां घ्नन्ति गृहेषु हन्यतऽइति (५.४.४.२३)

पूर्वाग्निवाह्यो दक्षिणा ॥२१॥ सा च द्यूतस्य यागाङ्गम् अभिधानात् । सं० संनिधानाद्द्यूतकर्तृभ्यः · पूर्वाग्निमावसथ्यं शकटस्थं वहतीति पू०वाह्यः · [पूर्वाग्निमाहवनीयं वहतीति माधवाचार्याः]। पयस्यास्विष्टकृदिडं करोति ॥२२॥

माहेन्द्रादि च ॥२३॥ मरुत्वतीयान्ते वैकृतं कर्म विहितम् (५.१) अतः प्राकृतानुवृत्त्यर्थं माहेन्द्रादीत्युक्तम् । सं० माहेन्द्रग्रहग्रहणादि प्राकृतं कर्म करोति ।

अवरुह्य गच्छति स्तोत्राय प्रहितः ॥२४॥ सं० यजमानोऽध्वर्युणा स्तोत्राय प्रहितः [सन् स्तोत्रोपासनाय गच्छेत्येवमनुज्ञातः] सन्नासन्द्या उत्तीर्य गच्छति (५.४.४.२५)।

अवभृथमेकेन तार्प्यादीनि चेत् उदेत्येकेन ॥२५॥ यदि माहेन्द्रादौ दीक्षितवसने न परिहिते (५.१६) तदा तार्प्यादीनामेकेनावभृथमभ्यवतरति उ०केन उत्तरत्येकेन[1] · अथ माहेन्द्रादौ दीक्षितवसनं परिहितम् ततस्तेनैवावतरणमुत्तरणं च । सं० तत्र चेत्तार्प्यादीनि परिहितान्येव भवन्ति न निहितानि ।

दीक्षितवसनं च प्रास्यति ॥२६॥ तार्प्यावतरणपक्षे । सं० अप्सु प्रास्यति ।

अनूबन्ध्यवपाहोमान्ते दध्यादिनानि ॥२७॥ तार्प्यादीनि । सं० संनिधानादनूबन्ध्यर्विग्भ्यः । उदवसानीयायां वा ॥२८॥ दध्यात् आगन्तुत्वात्तदन्ते निवेशः । सं० कालान्तरविधानम् ।

त्रैधातव्युदवसानीया ॥२९॥ सं० अत्राभिषेचनीये भवति ।

ऐन्द्रावैष्णवो द्वादशकपालो व्रीहियवाणाम् ॥३०॥ तमुभयेषां० (५.५.५.१)।

तृतीयं यवानां मध्ये ॥३१॥ सं० अस्मिन्पुरोडाशे तृतीयं भागं यध्ये गृह्णीयात् भागद्वयं तु व्रीहीणामेव · तत्रैवं कर्तव्यम् · प्रथमे मुष्टौ व्रीहय एव ग्राह्याः द्वितीये मुष्टौ प्रथम एको भागः व्रीहीणाम् ततो भागद्वयं यवानाम् एवं द्वितीयो मुष्टिः तृतीये मुष्टौ प्रथमं भागद्वयं यवानाम् तत एको भागो व्रीहीणाम् एवं तृतीयो मुष्टिः चतुर्थे व्रीहय एव ।

अधिश्रयणं च ॥३२॥ एवमेव वचनात् (५.५.५.१) · अवदानं तु धातुत्रयादपि ग्राह्यम् । सं० यवानां तृतीयभागस्याधिश्रयणं मध्ये कर्तव्यम् ।

---

वाक्यशेषाद्वा हवा प्राश्नीयुरिति हरिस्वामिनः ३ marg.

[1] ? °रत्येकेनोदैति (देति sec. m.) अन्येनोदैति पाठः K.

तिस्रस्तिस्रो दक्षिणा ददाति शतमानानि ब्रह्मणे धेनूर्होत्रे वासांस्य-ध्वर्यवे गामग्नीधे ॥३३॥ [रक्तिकाशतेन एकं शतमानं भवति · तानि च सुवर्णस्य]।

भैषज्याभिचारयोरप्येषा ॥३४॥ त्रिधा-दक्षिणा भवति त्रैधातवी। सं॰ भैषज्यार्थ-मभिचारार्थं च एषा त्रैधातवी भवति ॥ ॥ सप्तमी कण्डिका ॥७॥ ॥

दशोत्तराणि सप्तसृपाहवींषि निर्वपति ॥१॥ नामधेयम् तस्मात्सप्तसृपो नामेति (५.४.५.३) · दशानामपि षण्णामनुष्ठानं यथा स्यादित्येवमर्थं दशग्रहण-मिति सम्प्रदायः। काण्वास्तु [१] षण्णां प्रवृत्तिः श्वो भूत इति मन्यन्ते [२] न त्वा-चार्येण सूत्रितम् · अन्यत्र चोक्तम् (३.२) प्रतिगृह्णमेकैकं श्व इति · तेनाचार्याभि-प्रायादेकस्मिन्नेवाह्नीति· गम्यते काण्वपाठाद्वा प्रत्यहमिति।

देवयजनान्तरमेकैकेनोत्सर्पति ॥२॥ सं॰ एकैकेन हविषा दे॰रं दशपेयदेवय-जनं प्रति उत्सर्पति गच्छति · [तत्र प्रथममभिषेचनीयशालाया उत्तरतः समीप एवा-ग्नौ स्थापयित्वा कर्तव्यम् तस्मादुत्तरदेशे द्वितीयम् तस्योत्तरतस्तृतीयमित्यादि]।

शालायामन्त्यम् ॥३॥ अन्त्यं हविर्दशपेयशालायां भवति · शालाग्रहणं चो-पलक्षणार्थम्।

सावित्रसारस्वतत्वाष्ट्रपौष्णैन्द्रबार्हस्पत्यवारुणाग्नेयसौम्यवैष्णवानि यथोक्तम् ॥४॥ यथा प्रदेशान्तर आचार्येणोक्तानीति यथोक्तग्रहणम्।

प्रतीष्टि पुण्डरीकाणि प्रयच्छति ॥५॥ प्रयच्छति-ग्रहणाद्दक्षिणार्थे · तथा च का-ण्वपाठः सा दक्षिणा। सं॰ जलजानि कमलानि।

हिरण्मयानि वा ॥६॥ पुण्डरीकाणि · स चायं विकल्पः।

उत्तमासु तिसृषु पञ्च ॥७॥ द्वे-द्वे द्वयोः अन्त्यायामेकम्। सं॰ अष्टमीप्रभृतिषु ति-सृषु इष्टिषु पञ्च पुण्डरीकाणि प्रयच्छति।

तेषां स्रजं प्रतिमुञ्चते ॥८॥ तेषां पुण्डरीकाणां स्रजं मालां कृत्वा प्रतिमुञ्चते यजमानः। सं॰ कण्ठे। तद्दीक्षो भवति ॥९॥ सास्य [३] दीक्षेति (५.४.५.२३) वचनात्। सं॰ सैव दीक्षा यस्यासौ।

एकतन्त्रौ क्रयैकत्वात् ॥१०॥ इदं विचार्यते किमभिषेचनीयदशपेयौ एक-

---

१) काण्वा तु K pr. m. काण्वानां तु sec. m. २) मन्यते K. ३) Thus K.

तन्त्रावुत पृथक्तन्त्राविति · एकतन्त्राविति ब्रूमः · कुत एतत् [क्रयैकत्वात्] क्रयप्रतिकर्षात् एवं ह्यत्र श्रूयते सह सोमौ क्रीणाति तत्प्रतिकर्षाच्चाधस्तनस्यापि प्रतिकर्ष इति । एवं प्राप्तऽआह ·

नाना वावभृथदीक्षाश्रुतिभ्याम् ॥११॥ नानातन्त्रौ वा भवतः · कुत एतत् अव॰भ्याम् अभिषेचनीयस्य ह्यवभृथः श्रूयते (५.३.५.२६) स यत्रावभृ॰भ्यवहरन्तीति दीक्षितवसनप्रासनविधिपरे वाक्ये अवभृथं दर्शयति · तथा च दीक्षा श्रूयते[१] पुण्डरीकस्रजं प्रतिमुञ्चते सास्य दीक्षेति · यदि ह्येकतन्त्रौ स्याताम् नावभृथः श्रूयेत तथा दीक्षा इति । एवं प्राप्तऽआह ·

एकं त्वानुपूर्व्ययोगात् ॥१२॥ तुशब्दः पक्षव्यावृत्तौ · एकमेव तन्त्रम् न भिन्नतन्त्रता · कुत एतत् एवं हि पदार्था आनुपूर्व्येण युज्यन्ते क्रयमात्रे पुनः प्रतिकृष्यमाणे दीक्षणीयादीनां पश्चादनुष्ठाने नानुपूर्व्यं स्यात् तत्र चोदकबाधः · यत्तु दीक्षावभृथश्रवणम् तद्वचनेनेत्यदोषः · तदुक्तम् ·

अवभृथदीक्षाभ्यासो वचनात् ॥१३॥ यथाश्वमेधे । सं॰ वचनादत्राव॰सो भवति ।

सप्तम्यां ब्रह्मागारात्सोममाहृत्यासन्द्यभिमर्शनादि करोति ॥१४॥ सं॰ अत्र सप्तम्यामित्युक्तत्वात् चैत्रशुक्लषष्ठ्यां संसृपाहवींषि भिन्नतन्त्राणि कर्तव्यानीति गम्यते।

उपसद्देवताहवीꣳषि निर्वपत्युपसदन्तऽइहन्यथोक्तम् ॥१५॥ एवमेव हि अवणामिति। सं॰उपसदन्ते इहन् उपसद्देवताभ्यो [ऽग्निसोमविष्णुभ्यो] हवींषि निर्वपति।

पितामहदशगणाꣳ सोमपानाꣳ संख्याय सर्पणम् ॥१६॥ यजमानस्य पि॰गणं सो॰नामुच्चार्य सर्पणं कर्तव्यम् । सं॰ सोमपानां पितामहादीनां दशगणं समूहं संख्याय अमुकः प्रथमः सोमपः असौ द्वितीयः असौ तृतीयः एवं दशमपर्यन्तान्सोमयाजिनो गणयित्वा [विभूरसीत्यादि] सर्पणं (१.८.१८) कुर्वन्ति ।

सवित्रेति (१०.३०) वानुवाकमुक्त्वा ॥१७॥ सर्पणं भवतीति विकल्पः । सं॰ अथवा सवि॰क्त्वा शतं ब्राह्मणाः सर्पणं कुर्वन्ति न पितामह[दशगणं]संख्याय ।

दश-दशैकैकं चमसमनु भक्षयन्ति ॥१८॥ वचनात् (५.४.५.३) । सं॰ दश-दश ब्राह्मणाः । यजमानस्य राजन्याः ॥१९॥ तत्र च राजन्यचमसे

१) See ५. ४. ५. १३.

राजन्या भक्षयन्ति · संख्या हि समानजातीयेषु भवति । ननु च शतं ब्राह्मणाः सोमं भक्षयन्तीत्यत्र श्रूयते　तत्र कथं राजन्या भवेयुः · उच्यते · भूयस्त्वात् ब्राह्मणेषु चाब्राह्मणेषु [च] शतसंख्येत्यदोषः · एवं च सहपानविरोधो न भवति । एवं प्राप्तेऽस्माह ·　　　ब्राह्मणा वा श्रुतेः ॥२०॥　वाशब्दः पक्षव्यावृत्तौ　ब्राह्मणा एव भवन्ति न क्षत्रियाः　शतं ब्राह्मणा इति हि श्रूयते । ननु च ब्राह्मणेषु [चाब्राह्मणेषु] च भूयस्त्वाच्छतशब्द इत्युक्तम् · नैतदेवम् · शतं ब्राह्मणाः सोमं भक्षयन्तीति विधिरयम् विधौ च न परः शब्दार्थो भवति · एवं च कृत्वा दशान्तीति (१८) विभागविधानम् । सं° वा सिद्धान्ते · यजमानचमसे[ऽपि] दश ब्राह्मणा एव भक्षयन्ति न क्षत्रियाः · कुत एतत्　शतं ब्राह्मणा इति श्रुतेः ।　　　तुल्याः संख्यायोगात् ॥२१॥　शतसंख्या च तुल्येषूपपद्यते नातुल्येषु · अतो यजमानचमसेऽपि ब्राह्मणा एवेति · सहपानविरोधस्तु वचनात् । सं° शतसंख्यायोगात्तुल्याः समानजातीया एव सर्वे भवन्ति ।　　　ब्रह्मणे ददात्यष्टशुवद्दक्षिणा[1] ॥२२॥　सं° अंशुवदिति द्वादश वत्सतर्यो गर्भिण्यो (१२. ५. १३) भवतीत्यर्थः[2] ।

हिरण्मयीं स्रजमुद्गात्रे ॥२३॥　ददातीति सर्वत्रानुषङ्गः ।

रुक्मं होत्रे ॥२४॥　सं° रुक्मः परिमण्डलः सौवर्ण आभरणविशेषः ।

हिरण्मयौ प्राकाशावध्वर्युभ्याम् ॥२५॥　सं° दर्पणौ आदर्शावित्यर्थः [कर्णवेष्टकावित्यपरे] ।　　अश्वं प्रस्तोत्रे　वशां मैत्रावरुणाय ॥२६॥　गोऽश्वानडुद्वति काण्वपाठात् । सं° वशा वन्ध्या या उपगम्यमानापि गर्भं न गृह्णाति ।

ऋषभं ब्राह्मणाच्छंसिने　वाससी नेष्टापोतृभ्याम्　अन्यतरतोयुक्तं यवाचितमच्छावाकाय　गामग्नीधे ॥२७॥　सं° अन्यतरत एकस्मिन्पार्श्वे बलीवर्देन युक्तं यवाचितम् यवैराचितं पूर्णमनः शकटम् ।

अभिषेचनीयान्ते केशवपनार्थे निवर्तनं संवत्सरम् ॥२८॥　अभिषेचनीयान्तग्रहणेन दशपेयान्तो लक्ष्यते · वपनं मुण्डनम् निवर्तनं केशानामवखण्डनम् येनैवमाह (५. ५. ३. ६) स वै न्येव वर्तयते केशान्न वपतऽइति । सं° अभिषेचनीयशब्देन

1) Thus all. दक्षिणाः?　2) viz. दक्षिणा.

दशपेयोऽपि लक्ष्यते · तेन दशपेयान्ते संवत्सरपर्यन्तं केशऽनार्थे यत्र केशवपनं वैधं प्राप्नोति दीक्षादौ तत्कार्ये निवर्तनम् केशाग्रच्छेदनं कर्तनम् न तु वपनम् ।

भूम्यनधिष्ठानं च ॥२९॥ चशब्दात्संवत्सरमेव । सं° भूमेरुपरि अवस्थानं न कर्तव्यम् । अनुपानत्कस्य यावज्जीवम् ॥३०॥ पुनर्यावज्जीवमेव भूम्यनधिष्ठानम् संवत्सरं तु सोपानत्कस्यापि भूम्यनधिष्ठानमिति । सं° उपानत्पादपरिधानम् तद्रहितस्य याऽवं भूम्यनधिष्ठानं भवति ॥ ॥ अष्टमी कण्डिका ॥८॥ ॥

उत्तरे शुक्ले पञ्चबिलः ॥१॥ सं° उत्तरे आगामिनि वैशाखशुक्ले [यस्मिन्कस्मिंश्चिदह्नि वैशाख्यां वा] · पऽल इति [वक्ष्यमाणस्य पञ्चहविष्कस्य] कर्मणः संज्ञा ।

आग्नेय ऐन्द्रः सौम्यो वा वैश्वदेवश्चरुः पयस्या मैत्रावरुणी बार्हस्पत्यश्चरुः ॥२॥

प्रतिदिशमासादनम् आग्नेयं पुरस्तात्प्रदक्षिणमितराणि मध्येऽन्त्यम् ॥३॥ हविर्भवति । सं° सर्वासु दिक्षु विभज्यैकैकस्यासादनं भवति · तत्र क्रममाह ।

पूर्वैश्चरित्वा-चरित्वा मध्यमे सऽस्रवासिचनम् ॥४॥ स च तत्संस्कारः · अतश्च संस्रवाभावेऽप्यन्येन कार्यः । सं° सऽस्रवं बार्हस्पत्ये चरावनयतीति (५.५.१.३) श्रुतत्वात् ।

आग्नेयो हिरण्यदक्षिणो ऽग्नीधे ददाति ॥५॥ सं° आऽयः पुरोडाशो हिऽणो भवति ।

ऐन्द्रस्य ऋषभः सौम्यस्य बभ्रुर्ब्रह्मणे ॥६॥ सं° बभ्रुर्धूसरवर्णः ।

वैश्वदेवस्य पृषन्होत्रे ॥७॥ सं° पृषन्विचित्रवर्णो [गौः] दक्षिणा ।

पयस्याया वशा ऽभावेऽप्रवीताध्वर्युभ्याम् ॥८॥ ददातीत्यनुवर्तते · वशा रिक्ता · अप्रवीता अकामिका · अध्वर्युभ्यामिति द्वितीयोऽग्नीत् । सं° पयस्यायाः समृद्ध्ये वशा दक्षिणा · अभावे अप्रवीता अक्षतयोनिः ।

बार्हस्पत्यस्य शितिपृष्ठो ब्रह्मणे ॥९॥ सं° शिऽष्ठः श्वेतवर्णपृष्ठो गौः[1] ।

अन्नाद्यकामस्याप्येषा ॥१०॥ राजसूयाद्बहिरिष्टिर्भवति । सं° एषा पूर्वोक्ता इष्टिः ।

द्वादशोत्तराणि प्रयुग्घवींऽषि मासान्तराणि ॥११॥ द्वादशग्रहणं चाऽमासान्तरपक्ष[2]ऽएकस्मिन्नेवाह्नि क्रियेत्येवमर्थम्[3] · तथा च काण्वानां षट् श्वो भूत ऽइति पठ्यते · यद्वा द्वादशानामेव प्रयुग्घविष्ट्वम् उत्तरेषां नेति द्वादशग्रहणम् ।

---

1) Thus Deva. श्वेतपृष्ठवर्णः Ss. 2) शम्याप्रासपक्षे (१२) एकस्मिन्नेवाह्नि सर्वेषामनुष्ठानप्राप्त्यर्थम् Deva. 3) ? ऽर्थः K.

सं° उत्तराणि वक्ष्यमाणानि द्वादश हवींषि प्रयुग्घवींषि इति नामधेयम् (५.५.२.१) तानि परस्परं मासान्तराणि मासि-मासि एकैकं कर्तव्यम् ।

आहवनीयाद्वा पुरस्ताच्छम्याप्रासे-शम्याप्रासे ॥१२॥ सं° वा विकल्पे · काल-व्यवधानं पूर्वसूत्रे अधुना देशव्यवधानं च ।

आग्नेयसौम्यसावित्रबार्हस्पत्यत्वाष्ट्रवैश्वानरा यथोक्तम् ॥१३॥ यथा प्रदेशान्तर ऽउक्तम् । एवमावृत्तस्य चरवः सारस्वतपौष्णमैत्रक्षैत्रपत्यवारुणादित्याः ॥१४॥ एवमेव प्रत्यावृत्तस्य शम्याप्रासे भवति । सं° एवमिति शम्याप्रासे[-शम्याप्रासे] आवृत्तस्य आहवनीयं प्रत्यावृत्तस्य सारस्वताद्याः षट् चरवो भवन्ति । [पक्षान्तरमाह ·] षट्षड्वैकतन्त्रे ॥१५॥ भवन्तीति सूत्रशेषः । सं° अथ-वा षट्षट् हवींषि एकतन्त्रे भवन्ति [समानतन्त्राणि भवन्तीत्यर्थः । न मासान्तराणि नापि शम्याप्रासे-शम्याप्रासे । अस्मिन्पक्षे दक्षिणामाह ·]

पूर्वाग्निवाहौ द्वौ-द्वौ षण्णां-षण्णां दक्षिणा ॥१६॥ इतरत्र तु चोदकेनान्वाहार्यः ।

अष्टापदीवत्पशुबन्धौ गर्भिणीभ्यां स्वगुणदक्षिणौ ॥१७॥ अष्टापदीशब्देनानूबन्ध्योच्यते · लक्षणया तद्वत्पशुबन्धौ · तावेतौ गर्भ्यां भवतः स्ववर्णौ तद्गुणदक्षिणावित्यर्थः । सं° [ततो वैशाखामावास्यायां] सगर्भानूबन्ध्यावत् गर्भ्यां गोभ्यां भिन्नतन्त्रौ पशुबन्धौ कर्तव्यौ · कीदृशौ स्ववर्णौ यादृशीभ्यां गोभ्यां पशुबन्धौ क्रियेते तादृश्याविव गावौ दक्षिणा ।

श्येन्यादित्येभ्योऽदित्यै वा ॥१८॥ सं° श्येनी रक्तवर्णा [गर्भिणी गौः] आदित्येभ्यः अदित्यै वालभ्यते प्रथमे पशुबन्धे । वैश्वदेवी पृषती मारुती वा ॥१९॥ सं° द्वितीये पशुबन्धे पृषती विचित्रवर्णा विश्वेभ्यो देवेभ्यो मरुद्भ्यो वा।

तदन्ते केशवपनीयोऽतिरात्रः पौर्णमासीसुत्यः ॥२०॥ तदन्तग्रहणाच्चानन्तरपौर्णमास्यां भवति । सं° तयोः पशुबन्धयोरन्ते [केशवपनीयसंज्ञः अतिरात्रसंस्थः सोमयागो भवति · स च पौर्णमासीसुत्यः ज्यैष्ठ्यां पौर्णमास्यां तस्य सुत्या भवतीत्यर्थः] ।

उत्तरे च मासान्तराः ॥२१॥ उत्तरे च क्रतवो मासान्तराः चशब्दात्पौर्णमासीसुत्याश्च भवन्ति । [देव° उत्तरे वक्ष्यमाणाश्चत्वारः सोमयागाः । तानेवाह ·]

व्युष्टिद्विरात्रः ॥२२॥ सं° व्युष्टि[द्विरात्र]संज्ञः क्रतुर्भवति । [अत्राह्नोऽआह ·]

अग्निष्टोमातिरात्रौ ॥२३॥ अग्निष्टोमग्रहणमपार्ष्णिकत्वज्ञापनार्थम् । सं॰ [आषाढ्यां] प्रथममहरग्निष्टोमसंस्थम् [प्रतिपदि] द्वितीयमतिरात्रसंस्थम् ।

क्षत्रधृतिः ॥२४॥ [ततो मासान्तरे श्रावण्यां क्ष॰तिसंज्ञः] अपरः क्रतुर्भवति ।

तमुभयत एके त्रिष्टोमज्योतिष्टोमौ ॥२५॥ कुर्वन्ति एके उपरिष्टात् । अत्र च वैशाखामावास्यायां पशुबन्धौ ज्येष्ठपौर्णमास्यां केशवपनीयः आषाढ्यां व्युष्टिद्विरात्रः श्रावण्यां क्षत्रधृतिः भाद्रपदाश्वयुजयोस्त्रिष्टोमज्योतिष्टोमौ कार्त्तिक्यां सौत्रामणीति । सं॰ एके तं क्षत्रधृतिमुभयतः त्रि॰मौ कुर्वन्ति [एके न कुर्वन्ति]।

अभिषेचनीयाद्वा संवत्सरात्केशवपनीयोऽतिरात्रः सोमापवर्गः ॥२६॥ सोमापवर्ग इति सोमानामपवर्गो भवति[1] वा तदपवर्गे सोमाः । सं॰ के॰नीयोऽतिरात्रसंस्थः सोमयागः · कीदृशः सो॰र्गः सोमानामपवर्गः समाप्तिर्यस्यासौ सर्वसोमानामपवर्गे भवति । उत्तरे शुक्ले सौत्रामणी ॥२७॥ सं॰ सर्व[सोम]समाप्तेरनन्तरे शुक्ले । [तत्रेतिकर्तव्यतामाह ·]

व्रीहीन्विरूढानविरूढान्स्तौमऽउपनह्य क्रीणाति क्लीबात्सीसेन ॥२८॥

पक्त्वौदनं विरूढांश्चूर्णीकृत्याश्विभ्यां पच्यस्वेति (१०.३१) संसृजति ॥२९॥ ओदनपाकोऽविरूढैः स चतुर्मुष्टिकग्रहणपूर्वकः चोदकानुग्रहाय · तस्य च विरूढचूर्णैरश्विभ्यां पच्यस्वेति संसर्गः । सं॰ ओदनं चूर्णीकृतान्व्रीहींश्च मिश्रयति ।

सिंहवृकव्याघ्रलोमानि चावपति ॥३०॥ चशब्दात्तत्रैव ।

पशुषु वा ॥३१॥ आवपति तुल्यशास्त्रत्वात् । सं॰ अथवा पशुषु पश्ववदानेषु अप्यमाणेषु सिंहादिलोमान्यावपति ।

पुरोडाशधर्मा द्रव्यसामान्यात् ॥३२॥ अत्र च सुरायां पुरो॰धर्माः प्रवर्तन्ते द्रव्यं हि तेषां पर्युपस्थापकमिति · ननु च ग्रहग्रहणपुरोरुगुपयामादीनां दर्शनात्सौमिका भवन्तीति गम्यते · नेत्याह । सं॰ अत्र पु॰र्मा भवन्ति न सौमिकाः · कुतः द्र॰न्यात् ओदनस्य हि पुरोडाशसाम्यम् न सोमेन ।

यावदुक्तं सौमिका गुणत्वात्[2] ॥३३॥ यावदुक्तं ते भवन्ति · न हि सौमि-

---

[1] अस्मिन्पक्षे प्रयुग्धविषां सद्यस्त्वमेव K marg. [2] विधेयत्वात् नानूद्यन्ते · विधाने च यावदेव विहितं तावदेव भवति नान्यत् K marg.

कधर्मप्रवृत्तिरत्र त्यक्तत्वात् · न च गुणप्रवृत्त्या गुणान्तरप्रवृत्तिर्युक्ता गुणत्वादेव। सं° यावदुक्तं सौमिका भवन्ति · [न सर्वे · यावन्त उपयामादयोऽत्र पठितास्तऽएव भवन्ति नाधिका इत्यर्थः] · कुतः गुणत्वात् विधेयत्वात् [विधीयन्ते हि ते अप्राप्तत्वात् नानूद्यते · तत्कथम् वाक्यस्यानन्यपरत्वात् अथ ग्रहान्गृह्णाति ५.५.४.२३ स गृह्णाति कुविदङ्गेति °२४] ॥ ॥ नवमी कण्डिका ॥ ९॥ ॥

त्रिपशुः पशुबन्धः श्वः ॥ १॥ सं° श्वः पौर्णमास्याम्। चतुर्थ्याम् ॥ २॥ चतुर्थे वाह्नि। पक्वायां वा ॥ ३॥ [1] सुरायाम्। सं° अथवा चतुर्थेऽह्नि सुरायां पक्वायां भवति। [तानिव त्रीन्पशूनाह] · आश्विनोऽजः श्येतः ॥ ४॥ श्येत आरक्तः गौरः। सं° रक्तवर्णः। [श्येत आलोहितोऽज इति हरिस्वामिनः शुक्लवर्ण इति माधवाचार्याः]। मल्हाविः सारस्वती ॥ ५॥ रजो मलं हन्तीति मल्हाविः सा सा॰ती। सं° मलान्हन्ति[2] जहातीति [मल्हा] · यस्या ऊर्णासु रजो न [तिष्ठ]ति एवंविधा अविर्मेषी सा॰ती। ऋषभमिन्द्राय सुत्राम्णे ॥ ६॥

तद्गुणाभावेऽजाः प्रथमो लोहितः ॥ ७॥ तद्गुणानामभावे अजा भवन्ति · तदा च लोहितः प्रथमो भवति। सं° लोहितो रक्तवर्णः। त्रियूपो वैकादशिनिलिङ्गात् ॥ ८॥ एकादशिन्यां ह्युभयं दृष्टम् एकयूपतानेकयूपत्वं च · एकादशिनिलिङ्गं चात्र गणत्वमिति। सं° अयं त्रिपशुः त्रियूपो भवति [एकयूपो वा] · अनेकपशुत्वस्य एकादशिनिलिंगस्यात्र सद्भावात्[3]। · अग्नी वरुणप्रघासवत् ॥ ९॥ अवेदिर्दक्षिणः ॥ १०॥ सं° दक्षिणोऽग्निर्वेदिरहितो भवति।

वपामार्जनान्ते कुशैः परिस्रुतं पुनाति वायुः पूत इति (१०.३१) ॥ ११॥

कुवलकर्कन्धुबदरचूर्णानि चावपति ॥ १२॥ कुवलादयो बदरजातिविशेषाः वयोऽवस्थाविशेषा इत्यपरे। सं° कुवलान्यामलकतुल्यानि[4] बदराणि कर्कन्धून्यनुपजीव्यान्यारण्यकबदराणि[5] बदराणि निरुपपदबदराणि चणकबदराणी[ति याज्ञिकाः। कुवलकर्कन्धुबदराणि सूक्ष्मतरस्थूलमध्यमपरिमाणानि बदरजातिफलानीति माधवाचार्याः। कुवलं मध्यबदरं · कर्कन्धु सूक्ष्ममतिमधुरं यदुत्तरापथे

---

1) २ and ३ form in Ss. (and Deva) one sûtra. 2) मह्यान्ह° Ss. 3) Thus AB. शिनिलिंगाभ्याससद्भा° Ss. 4) ? त्युल्यानि Ss. 5) °न्धून्युपजी° Ss. at १२. २. २०.

प्रायेण ज्ञायते · बदरं तु निर्विशेषणमिति हरिस्वामिनः] । ग्रहं गृह्णाति कुविदङ्गेति (१०. ३२) त्रीन्वा प्रतिदेवतमेतयैव ॥१३॥ पुरोरुचा · स चायं विकल्पः एकं वा त्रीन्वेति श्रुतत्वात् (५. ५. ४. २३) । सं° अथवा एतयैव पुरोरुचा त्रीन्ग्रहान्गृह्णाति प्रतिदेवतमेकैकम् । समस्यानुवाचनम् ॥१४॥ समासश्चतुर्थ्यन्तानामेव पदानाम् न विभक्तिलोपेन । सं° अत्र देवतापदान्यविभक्तिलोपेन समस्य चतुर्थ्यन्तान्येव क्रमेणोच्चार्य अनुवाचनं कर्तव्यम् ।

यजेति च ॥१५॥ सं° चशब्दाद्देवतापदानि समस्य यजेति वक्तव्यम् ।

प्रथमस्यानु होममितरौ ॥१६॥ ग्रहौ । परिस्रुद्धोमो दक्षिणेऽग्नौ ॥१७॥ तत्र चाहवनीयसंस्काराः कर्तव्याः चोदकपरिप्राप्त्या । भक्षमाहृत्य परिस्रुच्छेषमासिच्य रुक्मवच्छिद्रं[1] कुम्भं शिक्ये कृत्वोपरि दक्षिणस्य धारयन्स्रवन्तमुपतिष्ठते त्रिचैः[2] सोमवतां बर्हिषदामग्निष्वात्तानामिति[3] ॥१८॥ भक्षाहरणामात्रोपदेशाद्विशेषानुपदेशाच्च यथान्यत्र भक्षणं तथेहापीति । सं° सुरां स्रवन्तं कुम्भं दक्षिणस्याग्नेरुपरि धारयन् । हवींषि निर्वपति सावित्रवारुणैन्द्राणि यथोक्तं पशुपुरोडाशार्थे ॥१९॥ देवतान्यत्वात्पशु°शार्थऽइत्युक्तम् ।

नपुंसको दक्षिणा रथवाही वा वडबा ॥२०॥ विकल्पः । सं° क्लीबो गौर्दक्षिणा।

सोमातिपूतस्याप्येषा ॥२१॥ सौत्रामणी भवतीति शेषः । सं° यस्य सोमपानानन्तरं मुखव्यतिरिक्तेभ्यश्छिद्रेभ्यः सोमः स्रवति स सोऽत इत्युच्यते ।

अनुयाजान्ते पशुपुरोडाशार्थैश्चरत्याश्विनेन[4] प्रागवदानेभ्यः ॥२२॥ आश्विनस्य चानेनोत्पत्तिः पूर्वमनभिधानात् । सं° अवदानेभ्यः प्राक् आश्विनेन चरति ।

हविर्भिर्वाश्विनाभावस्तु ॥२३॥ सं° अथवा हृदयाद्यवदानयागेभ्यः प्राक् सावित्रादिभिर्हविर्भिः प्रचारो भवति तु पुनः अस्मिन्पक्षे आश्विनाभावः ।

राजसूययाजिनः कर्मापवर्गे वा सौत्रामणी ॥२४॥ सौत्रामणीं त्रैधातवीं च प्रकृत्य श्रूयते सैषा राजसूययाजिन उदवसानीयेष्टिर्भवतीति (५. ५. ५. १) · अतः क्रमार्थमिदमाह । त्रैधातवी वेति विकल्पमाशङ्क्याह · त्रैधातव्यानुपूर्व्य-

---

1) See ५. २७. 2) thus १. R. ३. तृचैः K. M. AB. ३. Ss. 3) See १९. ३. २१. and Mahîdh. at १९. ४१. 4) °डाशैश्च° A (text). B. M. °शार्थैं° A (Comm). ३. K.

योगात् ॥२५॥ त्रैधातव्येवान्ते भवति आ॰गात् त्रैधातव्येवान्ते पठ्यतऽइति · न चानयोर्विकल्पः आम्नानसामर्थ्यात् · तेन सौत्रामण्यामुदवसानीयत्वमुच्यते उदवसानीयासंनिधौ पाठात् उदवसानीयेवोदवसानीयेति उपचारवृत्त्या : तथा च पाठः अनया मेऽपीष्टमसदनयापि सूयाऽइति (५.५.४.११)। सं॰ त्रैधातव्येव कर्मापवर्गे भवति न सौत्रामणी · कुतः आ॰गात् ब्राह्मणे हि पूर्वं सौत्रामणी पठ्यते सवकाण्डस्य उपान्त्यब्राह्मणे श्येत आश्विनो भवतीत्यादौ (५.५.४.१) पश्चात्त्रैधातवी अन्त्यब्राह्मणे (५.५.५.१) ॥ ॥ दशमी कण्डिका ॥१०॥ ॥

इत्युपाध्यायकर्ककृतौ कात्यायनविवरणे पञ्चदशोऽध्यायः ॥ राजसूयः समाप्तः ॥

इति कात्यायनसूत्रे पञ्चदशोऽध्यायः ॥

---

राजसूयोऽनुविहितः। इदानीं श्रुतिमन्त्रपाठावसरप्राप्तोऽग्निरनुविधेयः।

अग्निः सोमाङ्गं तद्गुणाव्यतिषङ्गात् ॥१॥ अग्निशब्दो ज्वलनवचनः अतस्तदधिकरणभूतस्थलाभिधायको द्रष्टव्यः इष्टकाभिरग्निं चिनोतीति हि श्रूयते · तथा अग्निमारोहन्ति (१.२.३.२४) अग्निं प्रोक्षतीति (१७.१२.२८) च आरोहणप्रोक्षणे स्थलस्योच्येते। तस्य चानारभ्यविधानात्प्रकृतिसव्यपेक्षत्वे सोमस्याङ्गमित्युच्यते · सोमशब्देन लक्षणाया तत्साध्यक्रत्वभिधानम् · सोमाङ्गमिति कुत एतत् तद्गु॰ङ्गात् तद्गुणानां हि व्यतिषङ्गोऽत्र दृश्यते अन्तरोपसदौ चिनोति (१०.२.५.१) प्रायणीयेन॰युनक्ति (७.२.२.२) चितौ गार्हपत्यो॰राजानं क्रीणा[तो]त्येवमादि (७.३.१.१) · फलवता च गुणाव्यतिषङ्गे सति अफलस्य तदङ्गता। सं॰ अग्निशब्देन पञ्चचितिकः स्थल उच्यते लक्षणाया न ज्वलनः · सोऽग्निः सोमाङ्गं भवति · कुतः त॰ङ्गात् तद्गुणैः सोमगुणैः अग्नेर्व्यतिषङ्गात् मिश्रीभावेनोपदेशात्।

इच्छतः समहाव्रते नियमः ॥२॥ अङ्गमपि सत् इच्छया भवति · कथमवगम्यते येन स॰ते नियमो दृश्यते तस्मादेतानि सर्वाणि सहोपेयादग्निं महाव्रतं महदुक्थमिति (१०.१.२.२)। सं॰ यजमानेच्छया भवति वैकल्पिकं सोमस्याङ्गम् न तु नित्यम् · महाव्रतसंज्ञकस्तोत्रवति सोमयागे अग्नेर्नियमो भवति।

न प्रथमाहारे ॥३॥ प्रथममाह्रियतऽइति प्रथमाहारः प्रथमप्रयोगः। कुत एतत् ·

उत्तरवेद्यग्निनिधानात् ॥४॥ उत्तरवेदौ ह्यग्निनिधानं विहितम् स यद्धार्यमाणे ऽग्नाऽउत्तरं रयतीति (३. ५. १. ३३) अग्निधारणं च निधानार्थम् अग्नौ च स्थलेऽग्निनिधानं विहितम् · यदि च प्रथमाहारेऽप्यग्निः स्यात् उत्तरवेदावग्निनिधानमनर्थकं स्यात् · अथ पुनः प्रथमाहारेऽर्थवत्त्वे संवृत्ते द्वितीयादिष्वग्नावग्निनिधानमविरुद्धमिति सम्प्रदायः । चिकीषमाण[1] उत्तरस्यां फाल्गुन्यां पौर्णमासेनेष्ट्वा पञ्च पशूनालभतेऽदक्षिणान् ॥५॥ चिकीषमाण इत्यत्राच्यम् उपक्रमादेव तत्सिद्धेः वाच्यं वा स्वयमातृणाद्युपधानेऽपि मा भूदालम्भ इति · पञ्चग्रहणं चाभिजिद्विश्वजितोरपि पञ्चैव यथा स्युरिति । सं॰ फाल्गुनकृष्णप्रतिपदि पौर्णमासेष्टिं कृत्वा । ब्रह्मणे वा दद्यात् ॥६॥ दक्षिणाम् विकल्पेन हि श्रवणमत्र । अमावास्यायामेके ॥७॥ पञ्च पशूनालभन्ते (६. २. २. १६) · सा च माघामावास्या संनिधानाद्गृह्यते[2] । अग्निभ्यः कामाय पुरुषाश्वगोऽव्यजान् ॥८॥ आलभते · यत्तु वैश्वकर्मणं पुरुषं वारुणमश्वमैन्द्रमृषभं त्वाष्ट्रमविमाग्नेयमजमिति (६. २. १. ५) सोऽर्थवादो हृत्तैनानग्निभ्यः कामायालभाऽइत्यस्य (०६) । वर्षिष्ठरशनः पुरुषो ऽनुपूर्व्या[3] इतरेषाम् ॥९॥ रशना भवन्ति (६. २. १. १९) · वर्षिष्ठता चायामापेक्षया न स्थौल्यापेक्षया · प्रकृतौ ह्यायामः श्रूयते द्विव्यामया रशनयेति (६. ३. २६) ।

सर्वेषां वा तुल्याः ॥१०॥ रशना भवन्ति । समिध्यमानसमिद्धवत्यन्तरे समास्त्वाग्नऽइति नव (२७. १-९) दधाति ॥११॥ (६. २. १. २१ २५) ।

आप्रियो द्वादशोर्धा अस्येति (२७. ११-२२) ॥१२॥ आप्रियः प्रयाजयाज्याः (६. २. १. ३१)।

एकादशान्ते शासप्रैषादि करोति ॥१३॥ प्रकृतौ दशान्तेऽभिहितम् इह वचनादेकादशान्ते । परिवृते पुरुषसंज्ञपनम् ॥१४॥ वचनाद्भवति ।

अजस्य शुन्धति प्रचरणयोगात् ॥१५॥ इतरेषां पशूनामप्सु कायप्रासनमुक्तम् (१३) अजेन चरतीति (२१) च तेनाजस्य शुन्धतीत्युच्यते स हि प्रचरणेन युज्यते । सं॰ प्राणानित्यर्थः । सर्वेषां वाविशेषात् ॥१६॥ सर्वेषां

---

1) Thus K sec. m. Ss. ३. १ (॰कीश॰). चिकीर्ष R, ३. M. K pr. m. 2) संनिधानादिति श्रुतौ कृष्णादिमासाभिप्रायादमावास्यापि फाल्गुनी सा च शुक्लाद्यभिप्रायेण माघामावास्येति K·marg. 3) ? ॰र्व्यां ३. M sec. m.

वा शोधनं कर्तव्यम् · सर्वेषामेव ह्यविशेषेण देवतासम्बन्ध उपदिष्टः · तेन सर्व एवैते यागाः यागार्थद्रव्यस्य च यो धर्मः स सर्वेषां भवति · अप्सु कायप्रासनं तु वचनात् । वैश्यः पुरुषो राजन्यो वा ॥१७॥ वचनाद्भवति ।

कण्ठेषु तृणमन्तर्धाय शिरांस्यादत्ते ॥१८॥ तृणाधिकाराद्वपातृणकाल एव शिरसामादानम् जिह्वावर्जम् सा ह्यवदानैः सह गृह्यते । चतुर्णामप्सु कायप्रासनम् ॥१९॥ शिरोग्रहणासमनन्तरमेव येनाङ्गं प्रकृत्याह संस्थिते॰सनमिति (२२) ।

ततो मृदिष्टकार्थापश्च ॥२०॥ तत एवोदकमध्यान्मृद्गृह्यते इष्टकार्थम् आपश्च तत एव । अङ्गेन चरति ॥२१॥ (६. २. १. ७) संस्थिते तस्य शेषप्रासनम् ॥२२॥ सं॰ते च कर्मणि तच्छेषस्याप्सु प्रासनम् । सर्वै रेके ॥२३॥ एके आचार्याः सर्वैः पशुभिः प्रचारमिच्छन्ति (६. २. १. १३) । ननु चैवं सति सम्भरणार्थता विरुध्यते · सम्भरणार्थं हि अप्सु कुसिन्धानां प्रासनम् कुसिन्धैः कुषितया मृदा अद्भिश्चेष्टकानां दार्ढ्यमुपजायत इति · अतः सर्वप्रचारे सम्भरणानुपपत्तिरिति · एवमाशङ्कित आह · एकस्यापि किं ततः सम्भरेदिति श्रुतेः (६. २. १. १३) ॥२४॥ सर्वयागपक्षे सम्भरणाभावदोषप्रसङ्गात् तस्मान्न सर्वैर्याग इत्येवमाशङ्कित उत्तरम् एकस्यापि पशोरालम्भे किं सम्भरेदित्येतत्तुल्यमेव · तस्माद्विकल्पः सर्वैर्वा यागो ऽङ्गेन वेति · सम्भरणाभावः सर्वयागपक्षार्थवादः [1] । वैश्वानरः पशुपुरोडाश उपांशु ॥२५॥ भवति । पशुदेवता च ॥२६॥ उपांश्वेव ।

आग्नेय्यो याज्यानुवाक्याः कामवत्यः ॥२७॥ मैथुनं वर्जयेदा पयस्यायाः ॥२८॥ पयस्या अन्ते विहिता आ तत इति । मांसोपर्यासने चेच्छन् ॥२९॥ वर्जयेत् ।

त्वङ्मस्तिष्कोद्धृतानि घृताक्तानि शिरांसि निदधाति ॥३०॥ सं॰ त्वक्चर्म शिरःकपालान्तर्गतो मज्जा मस्तिष्कः तौ उद्धृतौ येभ्यः शिरोभ्यः । सकलानि वा ॥३१॥ विकल्पः । अन्यानि वा हिरण्मयानि वा मृन्मयानि वानालभ्यैतान् ॥३२॥ पशून् · अन्यानि वा संग्रामहतानि गृह्णाति हि॰वा मृ॰नीति वा विकल्पः ।

श्यामतूपरो वा प्राजापत्यः ॥३३॥ पशुरालभ्यते · पञ्च पशवो वेति विकल्पः · प्राजापत्यस्य चाह्र्गणेषु नियमः । षड्ढ्यात् ॥३४॥ धाय्याः · प्राजापत्ये

---

1) ? ॰भावः सो सर्व॰ K.

हि प्रकृत्योच्यते तस्यैकऽधेन्य इति (६.२.२.३)। हिरण्यगर्भ इत्यृचा (१३.४) स्रुवाघारः ॥३५॥ हिरण्यगर्भवत्याघारमाघारयतीति (६.२.२.५) वचनात्· स च पूर्व एव भवति नापूर्वः प्रकृतिलिङ्गसंयोगो ह्यत्र भवति आघारमाघारयतीति। पूर्वत्वेऽपि संदेहः किं पूर्वाघारे मन्त्रविधानम् उतोत्तराघारऽइति· किं तावत्प्राप्तम्· पूर्वो देवतासामान्यात् ॥३६॥ स्रुवाघारो हिरण्यगर्भवत्या कर्तव्यः· कुत एतत् देऽन्यात् स्रुवाघारे हि प्रजापतिर्देवता हिरण्यगर्भवत्यामपि प्रजापतेरेव देवतात्वम् कस्मै देवाय हविषा विधेमेति कश्च प्रजापतिः· मन्त्रश्च स्रुवाघारऽएव देवताभिधानसमर्थः तस्मात्तत्रैव विनियुज्यतऽइति। एवं प्राप्तऽआह· उत्तरे तु सामान्योपदेशाभ्याम् ॥३७॥ तुशब्दः पक्षव्यावृत्तौ· न पूर्वस्मिन्नाघारे मन्त्रप्रयोगः किं तर्ह्युत्तराघारे· कुत एतत् मन्त्रवत्त्वसामान्यात् यस्यैव च प्रकृतौ मन्त्रो दृष्टस्तस्यैव मन्त्रान्तरविधानमनुरूपतरम् इतरत्र तु मन्त्रवत्ता च विधेया तद्विशेषश्चेति गौरवं स्यात्· तेनोत्तराघारे मन्त्रो विधीयमानः शब्दवत्त्वसामान्यान्मन्त्रान्तरस्य निवर्तको भवति यथा स्नेहेन सामान्यात्तैलं घृतस्य· यत्पुनरुक्तम् कशब्देन प्रजापतिरभिधीयतऽइति इन्द्रस्यापि तच्छब्दाभिधानमविरुद्धम् तस्मान्मन्त्रोपदेशादुत्तराघारऽएव तद्विनियोग इति। सं॰ उपदेशाच्चेति विधिबलाल्लिङ्गस्यापीन्द्रदेवताके उत्तराघारे विनियोग उच्यते। वायवे वा नियुवते श्वेतलप्सुदी द्वे दध्यात् ॥३८॥ अथवा नियुवद्गुणविशिष्टाय वायवे शुक्लः पशुरालभ्यते न प्राजापत्यः पञ्च पशवो वा एवमपि हि श्रूयतऽएव· श्वेतो वर्णतः लप्सुदी कूर्चलः[1] तूपरशब्दश्चात्रानुवर्तते अथैतं वायवेऽतूपरमालभतऽइति (६.२.२.६) श्रुतेः। तत्र च द्वे धाय्ये दध्यात् तस्य सप्तऽधेन्य इति (९८) वचनात्। सं॰ श्वेतः श्वेतवर्णः· लप्सुदी लप्सुदं कूर्चम् तद्वान्। प्राजापत्यः पशुपुरोडाशो द्वादशकपाल उभयोः ॥३९॥ उभयोरपि प्राजापत्यवायव्ययोः प्राऽत्य एव द्वाऽलः पऽशो भवति।

कद्वत्यो याज्यानुवाक्याः प्राजापत्यस्य ॥४०॥ शुक्लवत्यो वायव्यस्य ॥४१॥

वपाया वा ॥४२॥ वा अवधारणे शुक्लवत्यौ भवतः वपाया एव शुक्ल-

---

[1] ? कूर्चालः K.

वत्यौ स्यातामिति (६. २. २. १४) वचनात् । सं॰ न पश्ववदाने । तुल्यमन्यत्सर्वेषु ॥४३॥ सं॰ सर्वेषु त्रिष्वपि पक्षेषु ॥ ॥ प्रथमा कण्डिका ॥१॥ ॥

उखासम्भरणमष्टम्याम् ॥१॥ उखायाः सम्भरणमुखा॰णाम् तदष्टम्यां भवति अष्टकाया॰रतीति (६. २. २. २३) वचनात् · उखा चोपलक्षणम् अषाढाद्यप्यत्र सम्भ्रियत ऽएव ततश्चान्तराये तस्या अपि प्रयोक्तृत्वम् । सं॰ फाल्गुनकृष्णाष्टम्याम् ।

आहवनीयस्य पुरस्तान्मत्या चतुरश्रे श्वभ्रे मृत्पिण्डमवदधाति भूमिसमम् ॥२॥ भू॰ममन्यूनमनतिरिक्ताम् । पिण्डमपरेण व्यधे वल्मीकवपां छिद्रां निदधाति ॥३॥ पिण्डाहवनीययोर्व्यधे अर्धपथे । सं॰ व्यधे पिण्डाहवनीययोर्मध्ये · व॰पाम् उपदीकाकृतस्य मृच्चयस्य वपामिव वपाम् अन्तःपुटां छिद्रां छिद्रसंयुक्ताम् । आहवनीयं दक्षिणेन त्रिवृन्मुञ्जपञ्चाङ्गीबद्धास्तिष्ठन्ति प्राञ्चोऽश्वगर्दभाजाः पूर्वापरा रासभो मध्येऽश्वपूर्वाः ॥४॥ आहवनीयस्य दक्षिणतः त्रिवृद्भिर्मुञ्जमयीभिः पञ्चाङ्गीभिः पञ्चाङ्ग्यो मुखरिकाः ताभिर्बद्धास्तिष्ठन्ति प्राङ्मुखाः अश्व॰जाः पूर्वापररीत्या रास॰र्वाः ।

उत्तरत आहवनीयस्यारत्निमात्रऽउभयतस्तीक्ष्णा वैणवी सुषिराभ्रिः[1] कल्माष्यभावेऽकल्माषी प्रादेशमात्र्यरत्निमात्री वा ॥५॥ आनन्तर्यात्पशूनामुत्तरतो मा भूदित्याहवनीयग्रहणम् । सं॰ परिपाकवशात्कर्बुरा । हिरण्मयीमेके ॥६॥ आचार्या इच्छन्ति · अतश्च विकल्पः । अष्टगृहीतं जुहोति संततमुद्गृह्णन्युञ्जान इति (११. १) ॥७॥ अष्टगृहीतमाज्यद्रव्यं संततं जुहोति ।

देवस्य त्वेत्यभ्रिमादाय (११. ९) हस्तऽआधायेत्येनामभिमन्त्रयते (११. ११) ॥८॥

अश्वप्रभृतींश्च प्रत्यृचं प्रतूर्तं युञ्जाथां योगे-योगऽइति (११. १२-१४) ॥९॥ अभिमन्त्रयते । अनुपस्पृशन्नुत्क्रमयत्येनान्प्राचः प्रतिमन्त्रं प्रतूर्वन्नुर्वन्तरिक्षं पृथिव्याः सधस्थादिति (११. १५-१६) ॥१०॥ अग्निषु ज्वलत्सु पिण्डं गच्छत्यग्निं पुरीष्यमिति (११. १६) ॥११॥ (६. ३. ३. १) । दक्षिणतश्च पशवो युगपत् ॥१२॥ गच्छतां च दक्षिणतः पशवः उत्तरतश्च पुरुषाः यु॰पद्गमनं [कुर्वन्ति] ।

अनड्वापुरुषमीक्षते देवपितृमनुष्यानर्थकमग्निं पुरीष्यमिति (११. १६) ॥१३॥ यो देवादीन्नावति (६. ३. १. २४) स देव॰र्थकः । वल्मीकवपामादाय छिद्रेण

---

1) मुषिरा॰ K. सुखीरा P.

पिण्डमीक्षतेऽन्वग्निरिति (११. १७) ॥१४॥ दृष्ट्वा निदधात्येनाम् ॥१५॥ वल्मीकवपाम् । आगेत्यभिमन्त्रयतेऽश्वम् (११. १८) ॥१६॥ आक्रम्येत्येनेन (११. १९) पिण्डमधिष्ठापयति ॥१७॥ एनेनेत्यश्वोऽभिधीयते । द्यौस्तऽइति (११. २०) पृष्ठस्योपरि पाणिं धारयन्ननुपस्पृशन्नुत्क्रामेत्युत्क्रमयति (११. २१) ॥१८॥ अश्वम् ।
उदक्रमीदित्यभिमन्त्रयते (११. २२) ॥१९॥ अश्वमेव । आहवनीयवत्स्थापयति पिण्डस्य ॥२०॥ पशून् । उपविश्य मृदमभिजुहोत्या त्वा जिघर्मीति (११. २३-२४) व्यतिषक्ताभ्यामृग्भ्यामाहुती स्रुवेणाश्वपदे ॥२१॥ मृत्संस्कारत्वादुपविश्येत्युच्यते · व्यतिषङ्गश्च एकस्याः पूर्वार्ध इतरस्या उत्तरार्धः इतरयोरप्येवमेव । अभ्र्या पिण्डं त्रिः परिलिखति परि वाजपतिरिति (११. २५-२७) बहिर्बहिरुत्तरयोत्तरयाभ्र्या पिण्डं खनति देवस्य त्वेति (११. २८) ॥२२॥ अभ्रिग्रहणमभ्यन्तरनिवृत्त्यर्थम् · तथा चाह अत्र सा वैणाव्यभ्रिरुत्सीदतीति (६. ५. ४. ३) सं° उत्तरयापरया ऋचा पूर्वलिखिताद्बहिर्बहिर्बाह्यप्रदेशे परिलिखति ।
कृष्णाजिनमास्तीर्योत्तरतस्तस्मिन्पुष्करपर्णमपां पृष्ठमिति (११. २९) ॥२३॥ तस्मिन्कृष्णाजिने । विमार्ष्टैनद्दिव इति (११. २९) ॥२४॥ पुष्करपर्णम् ।
आलभतऽउभे शर्म च स्थ इति (११. ३०-३१) ॥२५॥ उभे कृष्णाजिनपुष्करपर्णे · शक्यत्वाच्च युगपदालम्भनम् । पिण्डं पुरीष्योऽसीति (११. ३२) ॥२६॥ आलभते ।
पाणिभ्यां परिगृह्णात्येनं दक्षिणोत्तराभ्यां दक्षिणः साभ्रिस्त्वामग्नऽइति (११. ३२-३७) षड्भिः सर्वं सकृद्वा ॥२७॥ ग्रहणे मन्त्रः अथैनं परिगृह्णातीति वचनात् (६. ४. २. २) ॥ ॥ द्वितीया कण्डिका ॥ २ ॥ ॥

पुष्करपर्णे निदधाति ॥१॥ अपः श्वभ्रेऽवनयत्यपो देवीरिति (११. ३८) ॥२॥ श्वभ्रः पिण्डावटः । सं तऽइति (११. ३९) वा तमपक्षिपति ॥३॥ श्वभ्रऽएव ।
अनामिकया संवपति पुरस्तात्पश्चाद्दक्षिणात उत्तरतश्च ॥४॥ संवापश्चावटे पुरीषस्य । आस्तीर्णयोरन्तानुद्गृह्णाति सुजात इति (११. ४०) ॥५॥ अस्तीर्णयोः कृष्णा°पर्णयोः । सं° बन्धनायोभयोः प्रान्तान्सर्वत ऊर्ध्वान्करोति ।
त्रिवृता मुञ्जयोक्त्रेणोपनह्यति वासोऽअग्नऽइति (११. ४०) ॥६॥ उद्गृहीतानन्तान् ।
उत्तिष्ठति पिण्डमादायोद्‌ तिष्ठेति (११. ४१) ॥७॥

ऊर्ध्वबाहुः प्राञ्चं प्रगृह्यात्यूर्ध्व ऊ षु ण इति (११.४२) ॥८॥ प्रसारितबाहुः पिण्डम्। अवहृत्योपरिनाभि धारयन्नश्वप्रभृतीनभिमन्त्रयते स जात स्थिरो भव शिवो भवेति (११.४३-४५) ॥९॥ अवहृत्य पिण्डं नाभेरुपरि धारयन्।

धारयत्येषामुपरि पिण्डमनुपस्पृशन्प्रैतु वाजी वृषाग्निमित्यश्वखरयोः (११.४६) ॥१०॥ एषां पशूनामुपरि पिण्डमनुपस्पृशन्धारयति · प्रैतु वाजीत्यश्वस्य वृषाग्निमिति खरस्य। अग्न ऽआयाहीत्याहृत्य (११.४६) खराच्छागस्य ऽर्तं सत्यमित्या निधानात् (११.४७) ॥११॥ धारयत्यनुपस्पृशन्नेव। आयत्यावर्त्य पशूनजः पुरस्ताद्रासभो मध्ये ॥१२॥ स्वस्थानस्थितानामेवावृत्तिः। अनड्वापुरुषमीक्षते पूर्ववदग्निं पुरीष्यमिति (११.४७) ॥१३॥ अनन्यार्थत्वात्पूर्ववच्छब्देनाग्निषु प्रज्वलत्स्वित्युच्यते (२.११)। उत्तरत आहवनीयस्योद्धतावोक्षिते सिकतोपकीर्णे परिवृते प्राग्द्वारे पिण्डं निदधात्योषधय इति (११.४७-४८) ॥१४॥

वि पाजसेति (११.४९) प्रमुच्यैनमजलोमान्यादाय प्रागुदीचः पशूनुत्सृजति ॥१५॥ प्रमुच्य पिण्डमजलोमानि गृहीत्वा प्रागुदीचीं दिशं प्रति पशून्प्रेरयति। आपो हि ष्ठेति (११.५०) पर्णकषायपक्वामुदकमासिञ्चति पिण्डे ॥१६॥ पर्णकषायं पलाशकषायम्। सं॰ पलाशत्वग्भिः[1] क्वथितमुदकं पक्वम्। फेनं च तूष्णीं ततः कृत्वा ॥१७॥ तत एवोदकात्पूर्वतरं फेनं कृत्वोदकमासिञ्चति · चशब्दात्फेनम्।

अजलोमभिः संसृजति मित्रः संसृज्येति (११.५३) ॥१८॥ पिण्डम्। शर्करायोरसाश्मचूर्णैश्च रुद्राः संसृज्येति (११.५४) ॥१९॥ शर्करा प्रसिद्धा अयोरसो लोहसिङ्घाणः कोट[2] इति यः प्रसिद्धः अश्मचूर्णाः पाषाणचूर्णाः · चशब्दादेतैः पिण्डं संसृजति। सं॰ शर्कराः सूक्ष्मकन्दुकाः · अयोरसो लोहरसो यस्ताप्यमानाल्लोहात्पृथग्भवतीति कोट[3] इति लोके प्रसिद्धः · अश्मा दृढः पाषाणः तेषां चूर्णैः संसृजति। संसृष्टामिति (११.५५-५७) संयौति ॥२०॥ पिण्डं मिश्रयति आ·ड्रालयतीत्यर्थः। अषाढां करोति महिषी प्रथमवित्ता तदाख्या ॥२१॥ अषाढाख्यामिष्टकां महिषी करोति · महिषीशब्दस्यान्यत्राप्रसिद्धत्वादाह प्रख्या तस्यैव महिषीति (६.५.३.१)। सं॰ भार्याणां मध्ये प्रथमं लब्धा प्रथमपरिणीता

---

१) ? पालाश॰ Ss.　२) सिंघानः कीर K pr. m.　३) ? काट Ss.

या स्त्री सा तदाख्या । यजमानपादमात्रीं त्र्यालिखिताम् ॥२२॥ महिषी-पादमात्री मा भूदिति यजमानग्रहणम् । सं॰ त्रिषु स्थानेषु लिखिताम् ।

यजमान उखां करोति मृदमादाय मखस्य शिर इति (११.५७) ॥२३॥ मृदादाने मन्त्रः (६.५.२.१) । प्रादेशमात्रीं तिर्यगूर्ध्वा च ॥२४॥ सं॰ तिर्यगायामप्रमाणे विस्तारप्रमाणे च । पञ्चप्रादेशामिषुमात्रीं वा तिर्यक्पञ्चपशौ ॥२५॥ ऊर्ध्वं तु प्रादेशमात्र्येव पञ्चपशावपि । वसवस्त्वेति (११.५८) प्रथयति ॥२६॥ आत्तं पिण्डम् । अन्तानुन्नीय सर्वतः प्रथमं धातुमादधाति रुद्रास्त्वेति (११.५८) ॥२१॥ धातुशब्दान्मृत्प्रक्षेप एव । सं॰ प्रथितस्य तलप्रान्तानुन्नीय ऊर्ध्वान्गमयति · धातुं प्रथमपिण्डिकाम् । संलिप्य श्लक्ष्णां कृत्वोत्तरमादित्यास्त्वेति (११.५८) ॥२८॥ सं॰ शिथिलया मृदा संध्य वारिणा संश्लक्ष्णां सुकुमारां कृत्वा । विश्वे त्वेति (११.१८) समीकरोति ॥२१॥ (६.५.२.१) । वितृतीयऽउत्तरे वर्तिं सर्वतः करोत्यदित्यै रास्नेति (११.५९) ॥३०॥ उखाया ऊर्ध्वप्रमाणस्योत्तरे वितृये उपरि वर्तमाने तृतीये भागे सन्तः सर्वासु दिक्षु मृन्मयीं वृत्तिं[१] वृत्त्याकारां रास्नां करोति । ऊर्ध्वास्तूष्णीं प्रतिदिशं चतस्रोऽपरा वर्तिं प्राप्ताः ॥३१॥ वर्तीः करोति · उखाशब्दस्याकृतिवचनत्वादावृत्तिर्वोखा भवति । सं॰ सर्वासु दिक्षु पार्श्व-मध्ये बाह्यप्रदेशे अपराश्चतस्रो वृत्तीरूर्ध्वास्तूष्णीं करोति · किम्प्रमाणाः मूलत आरभ्य वृत्तिं प्राप्ताः तिरश्चीं रास्नां यावदुच्चाः ॥ ॥ तृतीया कण्डिका ॥३॥ ॥

स्तनानिवाग्रेषून्नयति ॥१॥ ऊर्ध्ववर्तीनामेकैकस्याः । सं॰ आसां चतसृणां वृत्ती-नामग्रेषु तिरश्च्या वृत्तेरुपरि स्तनानिव स्तनसदृशान्मृदवयवानुन्नयति ।

द्विस्तनामष्टस्तनामेके ॥२॥ ताद्ध्‌ द्वैकेऽष्टस्तनामिति (६.५.२.१९) श्रुतेः · द्विस्त-नपक्षऽएकस्मिन्नेव वर्त्यग्रे क्रियते अष्टस्तनपक्षे द्वौ-द्वाविति । बिलं गृ-ह्णात्यदितिष्टऽइति (११.५९) ॥३॥ मुखे गृह्णातीत्यर्थः । कृत्वायेति (११.५९) निदधाति ॥४॥ उखाम् । तिस्र एके ॥५॥ उखाः कुर्वन्ति (६.५.२.२२) · तदा च मृत्पिण्डग्रहणाद्येकैका निधानान्ता क्रियते । इष्टकास्तु तिस्रो विश्व-ज्योतिषः पृथग्लक्षणास्त्र्यालिखिताः ॥६॥ तुशब्दश्चार्थे चशब्दाद्यजमान एव ·

१) sic! thus throughout in Ss.

तिस्र इष्टकाः विश्वंतिःसंज्ञकाः पृणाः करोति · लक्षणाकरणं च प्रथमाद्वितीया-प्रज्ञात्यर्थमेवोपधानं यथा स्यादिति । मृदमुपशयां निदधाति ॥७॥ उखां क्रियमाणामुपशेतऽइत्युपशया तां मृदमतिरिच्यमानां निदधाति कार्यार्थम् । सं° अवशिष्टां मृदमुपशयसंज्ञां नि° । सप्तभिरश्वशकृद्भिरुखां धूपयति दक्षिणाग्न्यादीप्तैरेकैकेन वसवस्त्वेति (११.६०) प्रतिमन्त्रम् ॥८॥ सं° शकृद्भिरश्वलेण्डैः ।

अश्ऽया अश्रं चतुरश्रं खनत्यदितिष्ट्वेति (११.६१) ॥९॥ अश्रिश्च पूर्वोक्तैव प्रकृतत्वात् अत्र सा वैणव्यश्रिरुत्सीदतीति (६.५.४.३) वचनात् । अपणामास्तीर्य यथाकृतमवदधाति ॥१०॥ अश्रे · येनैव क्रमेण कृता अषाढाद्याः । उखायां तु विशेषः · देवानां त्वेत्युखां (११.६१) न्युब्जाम् ॥११॥ अवदधाति । अपणेनावछाद्य दक्षिणाग्न्यग्निनादीपयति धिषणास्त्वेति (११.६१) ॥१२॥ निर्मन्थ्येन वा धूपनश्रपणे ॥१३॥ कर्तव्ये । वरूत्रीष्ट्वेतीक्षमाणो (११.६१) जपति ॥१४॥ उखामीक्षमाणः । आचरति मित्रस्येति (११.६२) ॥१५॥ आचरणं च श्रपणप्रक्षेपः । सं° अषाढादीनामधस्तादुपरिष्टाच्च पुनः श्रपणं प्रक्षिपति । यावद्वाचरेत् ॥१६॥ सं° यावद्भिः प्रकारैः श्रपणं प्रक्षिपेत्तावद्वानेनैव मन्त्रेणाचरेत् ।

द्विरेव प्रदहनोद्धरणे ॥१७॥ कर्तव्ये (६.५.४.१०) । सं° प्रद°नं पचनम् उद्ध°णं बहिर्निष्काशनम् । उद्वपति श्रपणम् ॥१८॥ पदार्थतया । सं° भस्मसाद्भूतं पराकरोति । देवस्त्वेत्युखाम् (११.२३) ॥१९॥ उद्वपति । उत्तानां करोत्यव्यथमानेति (११.६३) ॥२०॥ उध्यक्ष्वत्युत्थायेति (११.६४) ॥२१॥ ऊर्ध्वं यच्छति । परिगृह्य पात्रे करोति मित्रैतां तऽइति (११.६४) ॥२२॥

अजापयसावसिञ्चति वसवस्त्वेति (११.६५) प्रतिमन्त्रम् ॥२३॥ उखाम् । त्रिपक्षे च उत्तानकरणाद्येकैका अजापयसावसेकान्ता कर्तव्या । इष्टकाक्रियातस्याऽलिखितानाम् ॥२४॥ अत ऊर्ध्वमिष्टकास्त्र्यांखिताः क्रियन्ते । अपरिमितालिखिता वोत्तरयोः ॥२५॥ द्वितीयाचतुर्थ्योः · कुत एतत् ते हि प्रकृत्याम्नायते रसो ह्येते चितीऽअपरिमित उ वै रस इति (८.७.२.१७) · अतश्च विकल्पोऽयम् ।

पूर्ववदग्निः पाके ॥२६॥ इष्टकानां पाके भवति निर्मन्थ्यो दक्षिणाग्निर्वा ।

दीक्षामावास्यायामामावास्येनेष्ट्वा ॥२७॥ फाल्गुन्यमावास्यायां दीक्षा भवति · सा

चामांष्ट्वा पूर्णमासोपक्रमात् । सं० फाल्गुनामावास्यायां मुख्यायाममांष्ट्वा सद्यःप-
क्षेण पिण्डपितृयज्ञवर्ज्जं प्रातरमावास्येष्टिं समाप्य दीक्षा कर्तव्या । आग्नावै-
ष्णववैश्वानरौ ॥२८॥ दीक्षणीयायां कर्तव्यौ । घृते चरुरादित्येभ्यः ॥२९॥ घृ-
तस्य प्रणयनं कार्यम् कार्यापत्त्या । प्राकृतान्यौक्षभणानि हुत्वा सप्ताग्निका-
न्याकूतिमिति (११.६६-६७) प्रतिमन्त्रम् ॥३०॥ प्राकृतान्याधरिकाणि हुत्वाऽन्नं जु-
होति · अत्र च विश्वो देवस्येत्येतद्द्विधा विभज्यते · स्वकाले[1] पूर्णामित्येतत्
(७.३.१९) आग्नीकेऽत्र ध्रौवं द्वेधा विभज्यते · द्विश्च स्थाल्याः स्रुवेणेत्येतदप्याग्निके
भवति (७.३.१८) । दण्डोच्छ्रयणान्तं कृत्वाध्वर्युयजमानयोरन्यतर उखामारुह्य-
नीयेऽधिश्रयति मुञ्जकुलायावस्तीर्णाम् अन्तरे शणा मा सु भित्था इति (११.६८)
तिष्ठन्नुदङ्प्राङ् ॥३१॥ दण्डोऽन्तमाधरिकं कर्म कृत्वाऽउखामाश्यति · सा च मुञ्जर्णा
भवति · अन्तरे च शणाः · प्रागुदीचीं दिशमभिमुखः । अधिकारमुपजीवन्नाह ·
रुक्मप्रतिमोचनविष्णुक्रमवात्सप्रेषु च ॥३२॥ प्रागुदीचीं दिशमभिमुखो भवति ।
अग्नावारूढे त्रयोदशास्यां प्रादेशमात्रीः समिध आदधाति ॥३३॥ उखायामग्नाऽरूढे
त्रयोदश समिन्ति · प्राञ्चीग्रहणं च शिष्टानुस्मरणप्रज्ञस्यर्थम् । अनारोहत्य-
ङ्गारानोप्येके ॥३४॥ अनारोहत्यग्नावुखायाम् अङ्गाऽके समिदाधानं कुर्वन्ति । ता
इदानीमाह · घृतोन्नां कार्मुकीं द्वन्न इति (११.७०) ॥३५॥ आदधाति · कृ-
मुको धमनः[2] तदीया कार्मुकी । वैकङ्कतीं परस्या इति (११.७१) ॥३६॥
औदुम्बरीं परमस्या इति (११.७२) ॥३७॥ अपरशुवृकणां यदग्न इति (११.७३)
॥३८॥ या परशुना न छिन्ना । सं० अकुठारछिन्नाम् । अधःशयां यदत्तीति
(११.७४) ॥३९॥ सं० भूमिसंलग्ना या सदा प्ररूढा भवति । पालाशीः प्रत्यृच-
मह्रहरिति (११.७५) ॥४०॥ आदधाति अथैताश्यो भवन्तीति (६.६.३.७) वच-
नात् · एवं चापरशुवृकणा अधःशया चौदुम्बर्याविव भवतः जात्यन्तराविधानात् ।
उपोत्तमां क्षत्रियस्येच्छन् ॥४१॥ उत्तमायाः समीपे उपोत्तमा द्वादशी · तां क्ष-
त्रियस्य यजमानस्येच्छयादधाति अन्यस्य क्षत्रियपुरोहितव्यतिरिक्तस्य उभे उपोत्त-
मोत्तमे इच्छयाधीयेते · एवं हि श्रूयते (६.६.३.१२) । एवं च सति ·

---

१) स्वकाल K २) कार्मुको धमण K.

उत्तमां पुरोहितस्य ॥४२॥ इत्ययादधाति । सं° उत्तमाम् उदेषां बाहूऽइति (११.८२)।
अन्यस्योभे ॥४३॥ अन्यस्याक्षत्रियस्यापुरोहितस्य च एकादश भवन्ति त्रयोदश वा · क्षत्रियपुरोहितयोस्तु द्वादश त्रयोदश वा । सं° क्षत्रियपुरोहितव्यतिरिक्तस्य द्वादशीत्रयोदश्याविष्ट्या भवतः । स्वाहाकारः सर्वासूखायाम् ॥४४॥ उखायामाधीयमानासु समित्सु · अतोऽन्यत्रापि स्वाहाकारो भवति सर्वास्वित्यभिधानात् । सं° उखायां सर्वासु समित्सु स्वाहो भवति ।
औद्भणादि दण्डान्तमन्त्रैके ॥४५॥ एवं सति प्रागौद्भणाद्धोमादुखाधिश्रयणादि तान्यु हैकऽउखायामेवैतान्यौद्भणानि जुह्वतीति वचनात् (६.६.१.२२)। सं° अत्रावसरे ॥ ॥ चतुर्थी कण्डिका ॥४॥ ॥

यजमानः कण्ठे रुक्मं प्रतिमुञ्चते परिमण्डलमेकविंशतिपिण्डं कृष्णाजिननिष्यूतं लोमसु शुक्लकृष्णेषु शणसूत्रे त्रिवृत्योतमुपरिनाभि बहिष्पिण्डं दृशानो रुक्म इति (१२.१) ॥१॥ रुक्मं हि प्रकृत्य सर्वमेवैतच्छ्रूयते (६.७.१.२) · यजमानग्रहणाच्च स्वयमेव यजमानः प्रतिमुञ्चते · द्वादशाहे च सर्वे यजमानाः प्रतिमुञ्चेयुः अत ऊर्धमिष्टकान्वारम्भः एवं हि सर्वैः कृतं भवति । सं° परिमण्डलं वर्तुलम् · एकविंशतिपिण्डम् पिण्डं निर्बाधम् निर्बाध्यन्ते निःकाश्यन्ते उन्नताः स्वरूपाद्बहिर्निःसृता भवन्ति · कृष्णाजिने शुक्लकृष्णेषु लोमसु निष्यूतं नितरां स्यूतम् · पुनः कीदृशम् त्रिगुणे त्रिवृति शणमये सूत्रे ओतं प्रोतम् तथा उपरिनाभि · पुनः बहिष्पिण्डं बहिर्निर्बाधम् । इण्ड्वशिक्यासन्दीषु मुञ्जरज्जवस्त्रिवृतो मृद्दिग्धाः ॥२॥ उखा याभ्यां गृह्यते तौ इण्ड्वौ · शिक्यं प्रसिद्धम् आसन्दी च · अनुरक्ता रज्जवो मृद्दिग्धा भवन्ति । सं° मृद्दिग्धाः कर्दमलिप्ताः । परिमण्डलाभ्यामिण्ड्वाभ्यामुखां परिगृह्णाति नक्तोषासेति (१२.२) ॥३॥ हरति द्यावाक्षामेति (१२.२) ॥४॥ तामेवोखाम् । आहवनीयस्य पुरस्तादुद्गात्रासन्दीवदासन्द्यां चतुरश्राङ्ग्याम् शिक्यवत्यां निदधाति देवा अग्निमिति (१२.२) ॥५॥ उद्गातृवदिति प्रादेशपादी गम्यते (१३.३.२) · सा च चतुरङ्गी सह पादैः · तस्यां शिक्यवत्यामासन्द्यां च निदधाति उखाम् । शिक्यपाशं प्रतिमुञ्चते षडुद्यामं विश्वा रूपाणीति (१२.३) ॥६॥ ग्रीवायाम् । सशिक्यं प्राञ्चं प्रगृह्णाति सुपर्णोऽसीति (१२.४) पिण्डवत् ॥७॥ सह शिक्येन प्राञ्चमग्निं प्रगृह्णा-

ति · पिण्डवदित्यूर्ध्वबाहुः (३. ८)। धारणं च ॥८॥ पिण्डवदेव उपरिनाभि (३. ९)। एतया विकृत्याभिमन्त्र्येकेऽन्यचितिं चिन्वन्ति द्रोणाचिद्रथचक्रचित्कङ्कचित्प्रउगचिदुभयतःप्रउगः समुह्यपुरीषः ॥९॥ इति[1] · एते ह्यग्निविशेषाः तदाकारांश्चिन्वन्त्येके एके सुपर्णचितम् · विलिङ्गत्वादस्या विकृतेरग्न्यन्तरेष्वप्राप्तिर्मा भूदित्युच्यते एवं हि श्रूयते (६. ७. २. ८) तद्ध हैकेऽएतया विकृत्याभिमन्त्र्यान्यां चितिं चिन्वन्तीति। सं° वि°त्या एतया ऋचा[2] अन्यचितं[3] षड्विधमन्यमग्निं चिन्वन्ति · तमेवाह। समुह्यपुरीषे प्रतिदिशं पुरीषाहरणम् ॥१०॥ प्रत्यंशं पुरीषमाहृत्याहृत्य तेनैव चयनम्। विष्णुक्रमान्क्रमते विष्णोरिति (१२. ५) प्रतिमन्त्रमग्न्युद्ग्रहणं च तस्मिंस्तस्मिन् ॥११॥ तस्मिन्क्रमणे। अक्रमश्चतुर्थे ॥१२॥ उद्ग्रहणं तु भवत्येव। दिशो वीक्षते दिशोऽनुविक्रमस्वेति (१२. ५) ॥१३॥ प्रतिदिशं मन्त्रः। पिण्डवत्प्रागुदञ्चं प्रगृह्यात्यक्रन्ददग्निरिति (१२. ६) ॥१४॥ पि°वदित्यूर्ध्वबाहुः (३. ८)। अवहरत्यग्नेऽभ्यावर्तिन्निति (१२. ७) ॥१५॥ प्रत्यवरोहत्यग्निम् · यावत्कृत्व ऊर्ध्वो°वरोहतीति (६. ७. ३. ६) श्रुतेस्तद्वत्प्रत्यवरोहणम्। उपरिनाभि धारयन्ना त्वाहार्षमित्यभिमन्त्रयते (१२. ११) ॥१६॥ अग्निम्। पाशाऽउन्मुच्योदुत्तममिति (१२. १२) पिण्डवत्प्रागदक्षिणा प्रगृह्यात्यग्रे बृहन्निति (१२. १३) ॥१७॥ अवहरति हंसः शुचिषदिति (१२. १४) ॥१८॥ आसन्द्यां करोति बृहदिति (१२. १४) ॥१९॥ उपतिष्ठते सीद त्वमिति (१२. १५) ॥२०॥ वात्सप्रेण च दिवस्परीत्येकादशभिः (१२. १८-२८) ॥२१॥ उपतिष्ठते। अनुवाकेनैके (१२. १८-२९) ॥२२॥ उपतिष्ठन्ते। अत्र दीक्षितोऽयमिति ॥२३॥ अस्मिन्नवसरे दी°ऽयमित्याह (७. ४. ११) · दण्डान्ते ह्युखाधिश्रयणाद्युक्तम् अतः प्राकृतानुवृत्त्यर्थमिदमुच्यते। आवृत्तिरतः संवत्सरम् ॥२४॥ अत ऊर्ध्वं यदुच्यते तत्संवत्सरं यावदावर्तते। सं° अत ऊर्ध्वं यत्कर्मोच्यते भस्मोद्वपनादि तस्य सं°रं यावदावृत्तिर्भवति ॥ ॥ पञ्चमी कण्डिका ॥५॥ ॥

उखाया भस्मोद्वपनमस्तमिते पात्रे ॥१॥ तच्च प्राग्वाग्विसर्गात् भस्मोदुप्य°न्नत

1) इति is given in K as part of the text. 2) Mahîdhara gives १२. ३ as चतुरवसाना कृतिः, not as विकृतिः! 3) sic!

ऽइति श्रुतेः (६. ७. ४. १४)। सं॰ भ॰नं भस्मोद्धरणम्। वाचं विसृज्य समिदाधानꣳ रात्रीꣳ-रात्रीमप्रयावमिति (११. ७५) ॥२॥ एवमुदिते भस्मोद्वपनादि ॥३॥ कर्तव्यम्। अयं तु विशेषः · अहरहरित्याधानम् (११. ७५) ॥४॥

विष्णुक्रमवात्सप्रे चाहर्व्यत्यासमुदिते समिधमाधाय ॥५॥ अह॰त्यासेन कर्तव्ये · सं॰ अस्मिन्दिने वि॰माः उत्तरस्मिन्वा॰प्रम् · एवं यावद्दीक्षं कर्तव्यम्।

रुक्मप्रतिमोचनादि प्राग्वात्सप्राद्विष्णुक्रमाः ॥६॥ तयोर्विभागमाह[1]। साग्निके क्रतौ संवत्सरं दीक्षा आम्नाताः संवत्सर॰चिन्वीतेति (१०. २. ६. १) · पवित्रे चतस्रो दीक्षा आम्नाताः पवित्र॰दीक्ष इति (१५. १. ४) · तत्राग्नौ सति चिन्त्यते किमग्निनिमित्ता दीक्षा भवन्तु उत सौमिक्य इति · उभयं चेतच्चरितार्थम् पवित्राद्बहिराग्निक्यश्चरितार्थाः अनग्निके च पवित्रे सौमिक्य इति तेन साग्निमति पवित्रे कथं भवन्त्विति · नियमकारणाभावादनियमे प्राप्तऽआह · सोमाविरोधेन वा तत्प्राधान्यात् ॥७॥ सोमस्य प्रधानभूतत्वात् तदीया एव दीक्षा भवन्ति। सं॰ सोमयागेनाविरोधः सोमाविरोधः तेनाविरोधेनैव दीक्षा भवति वावधारणे · कुतः त॰न्यात् सोमस्य प्राधान्यात् अग्नेश्च तदङ्गत्वात् · तेन द्वादशाहे वाजपेये द्वादश सप्तदश भवन्ति नाग्निप्रयुक्तसंवत्सरदीक्षा इति। न्यज्य समिधं व्रते प्रत्ते-प्रत्तेऽन्नपतऽइत्याधानम् (११. ८३) ॥८॥ सं॰ उख्येऽग्नौ यजमानः करोति। संवत्सरभृतिनोऽसंवत्सरभृतेऽपि ॥९॥ सं॰ पूर्वं कस्मिंश्चिद्यज्ञे साग्निके येनैकवारं संवत्सरमुख्योऽग्निर्धृतो भवति स संव॰भृती · तस्यासं॰तेऽप्युख्येऽग्नौ चयनं भवति (९. ५. १. ६५)। संवत्सरꣳ सोष्यतः ॥१०॥ सं॰रमभिषवं करिष्यतः असंवत्सरभृतेऽपि चयनं भवति (॰६६)। संवत्सराहिताग्नेः ॥११॥ असंवत्सरभृतेऽपि चयनमिष्यते (॰६७)। जातस्य च ॥१२॥ संवत्सरे जातस्य च असंवत्सरभृतेऽपि चयनं भवति (९. ५. १. ६८)। सं॰ गर्भाधानदिनादारभ्य संवत्सरे पूर्णेऽतीते वा यो जातस्तस्य भवति। षण्मास्यमन्त्यम् ॥१३॥ अन्त्यं जघन्यमिदं पक्षान्तरम् षण्मासानुख्यभरणं कृत्वाग्निश्चीयतऽइति (९. ५. १. ६३)। सं॰ ष-

---

[1] यजमानः कण्ठे रुक्मं प्र॰ (५. १) अस्मादारभ्य प्राग्वात्सप्रात् सीद त्वमित्युपस्थानान्ता (५. २०) विष्णुक्रमा ज्ञेयाः Ss.

ऽस्यं षण्मासानुख्यमग्निं भृत्वा चयनं भवति । अचयनं वा परस्मै ॥१४॥ चयनं वेति विकल्पः · एवं हि श्रूयते (६.५.२.१२) त्रयो ह वै॰परस्मै करोतीति निन्दार्थवादः प्रतिषेधार्थः तस्मादप्येवं॰चिनुयादिति (॰३) प्रतिप्रसवः · अतः प्रतिषेधप्रतिप्रसवाभ्यां विकल्पः । प्रागग्नेः कृत्वोख्यस्योत्तरतः समिदाधानं समिधाग्निमिति (१२.३०) ॥१५॥ उख्य॰रतः प्राङ्मुखमनः कृत्वोख्यऽएव स॰नम् । सं॰ प्राङ्शीर्षं कृत्वा । सासन्दीकमुख्यम्योदु त्वेति (१२.३१) दक्षिणातोऽनसि करोति ॥१६॥ सा॰कमुख्यमुद्दु त्वेत्युत्क्षिप्यानसो द॰तोऽवस्थितोऽनसि करोति ।

स्थाल्यां गार्हपत्यं पश्चात् ॥१७॥ अनसि करोति · दक्षिणाग्निं च वितृतीये करोति । अनड्वाहौ युक्त्वा प्रेदग्नऽइति (१२.३२) प्राङ् यावा यथार्थम् ॥१८॥ गच्छेत् । आरोहेत्पार्श्वतो वा गच्छेत् ॥१९॥ यजमानः संस्कारात् ।

अक्षे खर्जत्यक्रन्ददग्निरिति (१२.३३) जपति ॥२०॥ खर्जनं च शब्दकरणम् ।

वासेऽवहरत्युद्धतावोक्षितऽउत्तरतः समिदाधानं प्र-प्रेति (१२.३४) ॥२१॥ यत्र वासस्तत्रैवावहरणम् न प्राग्वसतेः एवं ह्याह (६.८.१.१२) स यदि॰तानस्येवाग्निः स्यादिति · वसत्यां तु उत्तरतोऽग्नीनवतार्य समिदाधानं प्र-प्रेति । उद्ध॰क्षितग्रहणं च परिसमूहनाद्युपसंग्रहार्थमपि · स्मार्तं ह्येतदनूद्यते (६.४.४.१८) उद्धते वाऽअवो-ऽदधातीति · एवं च सति तदपचारे स्मार्तं प्रायश्चित्तम् । सं॰ वासार्थे रथे उत्तरस्यां दिशि अग्निमवतारयति । वनीवाहनमितद्दीक्षासु यदेच्छेत् ॥२२॥ वनीवाहन[मिति] संज्ञास्य कर्मणः · सा च संव्यवहारार्था ऊ॰नादिति (२५) · तच्च दीक्षासु कर्तव्यम् यदेच्छोपजायते · महावीरकरणयूपच्छेदनवनीवाहनानि दीक्षासु क्रियन्ते क्रमस्तु नैषाम् पाठाभावात् । अप्सूख्यभस्मावपनं क्रयणीयादौ ॥२३॥ ऽ॰नमप्सु कर्तव्यम् आदौ क्र॰णीयस्याह्नः । अन्यत्र चेच्छन् ॥२४॥ करोति । ऊर्ध्वं वनीवाहनात्क्रमयोगात् ॥२५॥ अन्यत्रेच्छया कुर्वन्वनी॰नादूर्ध्वं करोति मन्त्राणां पाठक्रमयोगात् । सं॰ व॰नादूर्ध्वं सोमक्रयदिने आदौ अन्यत्र दीक्षासु भस्मावपनम् · कुतः क्र॰गात् पूर्वं वनीवाहनमन्त्राः पश्चाद्भस्मापोऽभ्यवहरणस्य । पलाशपुटेनापो देवीरित्येकया (१२.३५) ॥२६॥ प॰टेन भस्म गृहीत्वाप्स्वावपति । ततो द्वाभ्याम् (१२.३६-३७) ॥२७॥ पुनश्चावपति द्वाभ्यामृग्भ्याम् ।

आद्याभ्यां (१२. ३५-३६) वा पूर्वम् ॥२८॥ पूर्वमावपनं द्वाभ्यामृग्भ्याम् तत एकय ऽर्चा · वाशब्दो विकल्पार्थः तुल्यश्रुतित्वात् । अनामिकया प्रास्तादादत्ते प्रसद्येति (१२. ३८-४१) ॥२९॥ प्रास्ताद्भस्मनः कियदप्यनामिकयादत्ते (६. ८. २. ७) ।

प्रास्योखायामुपतिष्ठते बोधा मऽइति (१२. ४२) ॥३०॥ यत्तदात्तं भस्म तत्प्रास्य । प्रायश्चित्तिं समिधोपहृत्य ॥३१॥ ॥ षष्ठी कण्डिका ॥ ६॥ ॥

आज्यं विश्वकर्मणाऽइति (१२. ४३) जुहोति ॥१॥ प्रायश्चित्तिरित्यस्य होमस्य संज्ञा · उपपूर्वश्च हृतिर्ग्रहणार्थो दृष्टोऽन्यत्रापि अथ स्रुचमिति (३. ४. १. २५) । सं° समिधा करणभूतया स्रुक्स्थानीयया उपहृत्य गृहीत्वा । उत्थायादधाति समिधं पुनस्त्वेति (१२. ४४) ॥२॥ उत्थानग्रहणं च प्रतिपत्तित्वात् गुणार्थं चेति । नैमित्तिकान्यत्रैव प्रकरणे पठ्यन्ते तदर्थमाह · गार्हपत्येऽनुगते निर्मथ्य ॥३॥ आदधाति · मन्थनं प्राप्तत्वादवाच्यम् उच्यते प्रायश्चित्तार्थम्[1] । सं° प्राज्वलिते उपशान्ते मथित्वा प्रायश्चित्ती करोति । सुत्यास्वाहवनीये सांकाशिनेन हृत्वा ॥४॥ सु°सु वर्तमानासु आह°येऽनुगते सांका°त्वा तमादधाति · सांका°नशब्दः प्रगुणमेव हृत्वेत्यर्थः · एतच्चोच्यते पूर्ववत्प्रणयनं मा भूदिति । सं° आहवनीये ऽतिप्रणीतेऽनुगते सांका°त्वा ऋजुना सदोहविर्धानमध्यमार्गेणैव हृत्वा ।

आग्नीध्रीयमुत्तरेण सदः ॥५॥ हृत्वा निदधाति · उत्तरेण सदो हृत्वेतीध्मव्युदासार्थः । सं° आ°यमग्निमनुगतं सदस उत्तरेणैव हृत्वा । प्रवृञ्ज्यादावृतोख्ये ॥६॥ उख्ये चानुगते पूर्ववत्प्र°त् · अयं तु विशेषः आवृता आवृद्ग्रहणं च मन्त्रनिवृत्त्यर्थम् एतयै°न्यजुरिति (६. ६. ४. १) श्रुतेः । सं° उख्येऽग्नावनुगते गार्हपत्यादाहवनीयमन्वग्निरित्याहृत्य (११. १७ २५. ३. १५) समितमित्युपस्थाय (१२. ५७ २५. ३. १४) आवृता मन्त्ररहितक्रियामात्रेण पूर्ववदुखां प्र°त् उखामाहवनीयेऽधिश्रित्योख्यमग्निमुत्पादयेत् । अध्वरप्रायश्चित्तिं च सर्वेषु यथाकालं पूर्वां-पूर्वाम् ॥७॥ अध्व°त्तिं च करोति स°षु निमित्तेषु तां च पू°र्वाम् · चशब्दादाग्निकीं च · सर्वग्रहणं च भस्मापोऽभ्यवहरणार्थम् (२३) तत्रापि हि विधीयेते (६. ८. २. ११) उभे प्रायश्चित्ती°ग्नावनुगतऽइति · य°लमिति चाध्वरप्रायश्चित्त्यर्थमुच्यते आग्निकी तु

1) इदमेव प्रायश्चित्तमिति ज्ञापनार्थमित्यर्थः K. marg.

विश्वकर्मणाऽ इत्येव (१)। सं॰ सर्वेषु पूर्वोक्तेष्वग्न्यनुगमेषु यत्फलं परमेष्ठ्यादिकालाहुतिं (२५. ६. १) पूर्वां जुहुयात् पश्चादग्निप्रायश्चित्तम् चकारात्। उखाभेदने नवस्थाल्यां महामुख्यामुखाकपालमवधायावपति ॥८॥ यद्येष्येतेति (६. ६. ४. ८) प्रकृत्य सर्वमिदमाम्नातम् एतच्चैकोखापन्ने भवति · त्रिवपन्ने तु द्वयोरेवैकस्यामावपनम् (६. ५. २. २२)। उखोपशये पिष्ट्वा मृदा सहोखां करोत्यावृता ॥९॥ उखाखण्डमेकमुखायां प्रक्षिप्तम् द्वितीयमुपशयया सह पिष्ट्वा · अपत्ना मन्त्रवर्जम् · आवृच्छब्देन क्रियामात्रमुच्यते तथा चोक्तम् (६. ६. ४. ९) एतयैष्करन्यजुरिति। सं॰ अपत्ता मन्त्ररहितेतिकर्तव्यतया। पन्नायामावपति कपालं च ॥१०॥ पत्यामुखायाम् अग्निं कपालं च। उखोपशये पिष्ट्वा सन्तृज्य निदधाति ॥११॥ उखाकपालमुपशयां च पिष्ट्वा संसृज्य स्थापयति ॥ इदानीं चयनप्रकारमाह ·

अभ्यात्मं चयनमुपविश्य ॥१२॥ आत्मानमाभिमुख्येन चयनं कर्तव्यम् न परागिति · तथा च नैर्ऋतीषु वचनात्पराङ्चयनमुक्तम् (७. २. १. १३)। अपरो विशेषः ·

सव्यबाहुमन्तरं कृत्वोत्तरलक्षणाभिरिष्टकाभिः ॥१३॥ चेतव्यः। नित्ये सादनसूददोहसाऽउपधानादुत्तरे तया देवतया ता अस्येति (१२. ५३ ५५) ॥१४॥ सर्वास्विष्टकासु एते नित्ये भवतः तयादेवतयेति सादनम् ता अस्येति सूददोहसाधिवदनम्। अविशेषोपदेशात् ॥१५॥ अविशेषेण ह्यनारभ्य कंचिदिष्टकाविशेषमेते श्रूयेते। सं॰ विशेषमनुपादाय सामान्येन तयोरुपदेशात् विधानात्।

अनाम्नातप्रतिषेधाच्च ॥१६॥ सं॰ यत्र नैर्ऋत्यादिषु नाम्नायेते नित्ये संहितायां न पठ्येते तत्रापि प्रतिषेधः श्रूयते (७. २. १. १४) न सादसाधिवदतीति · अतः प्रधात्सर्वत्राप्येते भवतः। एकचोदनास्वेकदेशासु तल्लेपा ॥१७॥ एकचोदना अपस्या वयस्या इत्येवमादि · एकचोदना अपि यद्येकदेशा भवन्ति · यथा तासामेव देशभेदः अपस्याः पञ्चकान्तेष्विति (१७. ६. २) अतश्च प्रत्यनूकं नित्ये · देशभेदे वसति तल्लेपेति। सं॰ एक[ा] चोदना एकं विधिवाक्यं यासां ताः · एको देश एकमुपधानस्थानं यासां ताः · तत्र तल्लेपा नित्ये भवतः।

आत्मनि यजुष्मतीः ॥१८॥ इष्टका उपदधाति न पक्षपुच्छयोः (८. ७. २. १)।

लोकम्पृणासु दशसु-दशसु मन्त्रो लोकं पृणेति (१२. ५४) ॥१९॥ (१. १. २. ११)।

असादनं च ॥२०॥ लोगानाम् · सूददोहसाधिवदनं (१४) तु भवति अप्रतिषिद्धत्वात् । प्रतिचिति द्वे-द्वे उपधाय ॥२१॥ लोणामन्त्रवचनम् · पुनर्दशसु-दशसु । सं॰ प्रथमं द्वे-द्वे॰धाय ततो दश-दशोपदध्यात् । अयुग्मगणमध्यमानूके ॥२२॥ अयुग्मो य इष्टकागणो यथा वालखिल्याः सप्त तासां मध्यमानूकऽउपधेया । सं॰ त्रिपञ्चसप्तादिगणः । एका च ॥२३॥ या चैकेष्टका साप्यनूकऽएव · यथा विश्वज्योतिर्द्वियजुश्चेत्येवमादि । अभितो युग्माः ॥२४॥ अनूकमभितोऽर्धार्धिकया युग्मा उपधीयन्ते । उदञ्चो वर्गाः पूर्वापरे ॥२५॥ यत्र पूर्वऽइति देशव्यपदेशः तत्रोदग्लक्षणा इष्टकावर्गा उपधीयन्ते । सं॰ तिर्यगनूकमभितोऽक्ष्णयावधिके पूर्वे देशे इष्टकानां वर्गाः समूहाः उदग्लक्षणा उपधेयाः ।

प्राञ्चो दक्षिणोत्तरे ॥२६॥ यत्र तु दक्षिणोत्तरव्यपदेशः तत्र प्राग्लक्षणा इति । सं॰ प्रागनूकमभितोऽक्ष्णयावधिके दक्षिणे प्राञ्चः प्राग्लक्षणाः उपधेयाः ।

भिन्नकृष्णयोरचयनम् ॥२७॥ (८. ७. २. १६) ।

दीक्षाणामुत्तमेऽहनि वेद्यग्निमानम् ॥२८॥ कर्तव्यम् ।

उख्यस्थानेऽर्धव्यामेन गार्हपत्यस्य परिलिखति ॥२९॥ मण्डलमिति शेषः ।

मण्डलाद्वा प्रक्रमणमन्तःपात्यस्य ॥३०॥ पूर्वार्धाद्वाक्रामतीति वचनात् (१०. २. ३. १) पूर्वार्धादेव व्यामस्य प्रक्रमणम् न स्तम्भादिति · स्तम्भाद्धि प्रक्रमणमनग्नी[१] चरितार्थम् । सं॰ वावधारणे · मण्डलादेवान्तःपात्यस्य क्रमणम् न पूर्वार्धात्स्तम्भात् ।

पश्चाद्यूपावटात्पादमात्रे चित्यस्य ॥३१॥ सं॰ यूपावटे भवः शङ्कुर्यूप्यः तस्मात्पश्चात् पद्यालोकमात्रे चित्यस्याग्निक्षेत्रस्य स्थानं भवति ।

यजमानेनोर्ध्वबाहुप्रपदोच्छ्रितेन[२] समस्थितेन वा ॥३२॥ (१०. २. २. ६) · प्रपदोच्छ्रितः पादाग्रे व्यवस्थितः समस्थितः प्रसिद्ध एव · तत्क्रियायाश्चोदितत्वात्प्रक्रमणवदध्वर्युर्मा भूदिति यजमानग्रहणम् ॥ सप्तमी कण्डिका ॥७॥ ॥

इति श्रीकात्यायनसूत्रभाष्ये श्रीकर्काचार्योपाध्यायकृतौ षोडशोऽध्यायः ।

द्विपुरुषां रज्जुं मित्वा ॥१॥ द्विःत्वेति निगदव्याख्यातम्[३] । उभयतःपा-

---

१) ? ॰णामग्नी न K pr. m. २) Thus K. M sec. m. ॰बाहुः प्र॰ १. ३. R. M pr. m.
३) the rest of this chapter is wanting in K.

शाम् ॥२॥ मध्ये-लक्षणाम् ॥३॥ अभितोऽर्धपुरुषयोश्च ॥४॥ सं° लक्षणाम् । मध्यमात्पुरुषपञ्चमे ॥५॥ सं° मध्यमाल्लक्षणात्पुरुषपञ्चमे । अर्धे च ॥६॥ सं° पुरुषपञ्चमस्यार्धे । अनुपृष्ठ्यामायम्य पाशयोः शङ्कू मध्ये ऽर्धपुरुषयोश्च ॥७॥

पाशाऽउन्मुच्यार्धपुरुषीययोः प्रतिमुच्य दक्षिणायम्य मध्यमे नितोदं करोति ॥ ८॥ सं° गर्तम् । उन्मुच्य पाशावेकं मध्यमे प्रतिमुच्य दक्षिणाधिनितोदमायम्य मध्यमे शङ्कुः ॥९॥ तस्मिन्पाशं प्रतिमुच्य पूर्वार्धे च दक्षिणायम्य मध्यमे शङ्कुः ॥१०॥ पश्चादर्धपुरुषे च ॥११॥ उन्मुच्य पूर्वार्ध्यात्पश्चार्धे प्रतिमुच्य दक्षिणायम्य मध्यमे शङ्कुः ॥१२॥ अभितोऽर्धपुरुषयोश्च ॥१३॥ एवमुत्तरोऽन्तः ॥१४॥ दक्षिणे पार्श्वे पूर्ववदायम्य पञ्चमभागीये शङ्कुः ॥१५॥

तस्मिन्पाशं प्रतिमुच्य पूर्वे चार्धपुरुषीये पञ्चमभागीयार्धपुरुषीययोः संनिपात्य तस्मिञ्छङ्कुः ॥१६॥ एवं पश्चात् ॥१७॥ एवमुत्तरः पक्षः ॥१८॥ तथा पुच्छं वितस्त्या ॥१९॥ इछन्पक्षपुच्छाप्ययेषु चतुरङ्गुलं-चतुरङ्गुलꣳ संकर्षति विकर्षत्यन्ते ॥२०॥ सं° यत्र पक्ष आत्मानमप्येति स पक्षाप्ययः एवं पुच्छाप्ययः · अप्ययेषु पक्षयोः पुच्छस्य च आत्मसंधिसमीपे चतु°ङ्गुलं चत्वारि-चत्वार्यङ्गुलान्युभयोः पार्श्वयोः संकर्षयति[1] संकोचयति · तथा अन्ते पक्षपुच्छप्रान्ते उभयोः पार्श्वयोः चतु°ङ्गलं विकर्षयति[2] विस्तारयति ।

पञ्चारत्निः पुरुषो दशपदो द्वादशाङ्गुलं पदं प्रक्रमस्त्रिपदः समविभक्तस्य ॥ २१॥ पञ्चारत्नयो यस्य सः · पञ्चभिररत्निभिः पुरुषः दशभिः पदैः पुरुषो द्वादशभिरङ्गुलैः पदम् इत्येवमर्थो न भवति इतः प्रागरत्न्यादीनां लक्षणस्यानुक्तत्वेनासिद्धत्वात् · अतश्चैवम् पुरुषस्य समविभक्तस्य यः पञ्चमो भागः सोऽरत्निः तस्य दशमो भागः पदम् पदस्य द्वादशो भागोऽङ्गुलम् त्रिभिः पदैरेकः प्रक्रमः[3] इति तु भवति पदस्य सिद्धत्वात् । परितत्य रज्ज्वा सक्तितं बहीरज्ज्वेकषष्टे शते परिश्रितो मिनोति ॥२२॥[4] रज्ज्वा प°त्य सर्वतो वेष्टयित्वा रज्ज्वा बहिर्भागे सक्तितं रज्जुसंलग्नं यथा भवति तथा एकषष्ट्यधिके द्वे शते परि°ति ।

चतुर्णवतानि वा त्रीणि ॥२३॥ चतुर्णवत्यधिकानि त्रीणि शतानि ।

---

१) sic! २) sic! ३) see schol. at ४. ८. १३. ४) see schol. at २१. ३. ३३.

ऊर्ध्वाः शर्कराः खाते ॥२४॥[1]  उत्तरेषु पुरुषोच्चयेनैवैकशतविधात् ॥२५॥ उ॰षु अष्टविधादिषु चयनेषु आ एक॰धात् एकशतविधचयनं यावत् एकाधिकशतपुरुषात्मकपञ्चनवतितमचयनपर्यन्तम् पु॰येन एकैकपुरुषवृद्ध्या अग्निमानं भवति तस्माद्व सप्त॰विद्धीतेति (१०. २. ३. १८)। यथाग्नि वेदीष्टकाप्रमाणम् ॥२६॥ वेदिश्च इष्टकाश्च वे॰का: तासां प्रमाणं वेदी॰णाम् तद्यथाग्नि भवति · अग्निमानमनतिक्रम्य य॰ग्नि · यथाग्निक्षेत्रस्य प्रमाणं वर्धते तथा एवं वेदिप्रमणं वर्धते इष्टकाप्रमाणं [च] वर्धते · न हि वेदिवृद्धिं विना तन्मध्ये वर्धितस्याग्नेर्मानं सम्भवति · नापि इष्टका अवर्धिता वर्धितमग्निक्षेत्रं पूरयितुं शक्नुवन्ति · अतो युक्तमुभयोर्वृद्धिः। अन्तःपात्यगार्हपत्ययोरिछन् ॥२७॥ पूर्वार्धा॰स वेद्यन्तः (१०. २. ३. १) यः प्रक्रमत्रयपरिमितो देशः सोऽन्तःपात्य उच्यते · तस्यान्तःपात्यस्य गार्हत्यस्य गार्हपत्यचितेश्च इछन् इछया वृद्धिं कुर्यात् इछया न कुर्यात् तद्धैक॰उत्तरा॰श्रुतेः (१०. २. ३. ६)। उत्तरपक्षस्यापरस्यां॰ स्रक्त्यां परिश्रितो मिनोति जङ्घामात्रीं नाभिमात्रीं मुखमात्रीमिति ॥२८॥ अग्नेरुत्त॰क्षस्यापरस्रक्त्यां पश्चिमकोणे एवम्प्रमाणास्तिस्रः परि॰नोति ॥ अष्टमी कण्डिका ॥८॥ ॥

इति कात्यायनसूत्रे षोडशोऽध्यायः ॥१६॥

---

ओऽभ्यवहरणादि प्रायश्चित्यन्तं कृत्वा विष्णुक्रमवात्सप्रसमासः ॥१॥ दीक्षाणामुत्तमेऽहनि वेद्यग्निमानमुक्तम् · अतः श्वःशब्देन क्रयणीयमहरभिधीयते · तत्र भस्माभ्यवहर॰कृत्वा (१६. ६. २३-७. ७) विष्णु॰मासः कर्तव्यः (६. ७. ३. १४)। अप्सूख्यभस्मावपनं क्रयणीयादावुक्तमपि सदवध्यर्थमुच्यते · विष्णुक्रमणं हि कृतावधिकम् उदिते॰ष्णुक्रमा इति (१६. ६.५-६) ततः प्राग्भस्माभ्यवहरणं यथा स्यादिति। सं॰ उपसदां प्रथममहः श्वःशब्देनाभिधीयते · विष्णु॰प्रयोः समासः द्वयोरनुष्ठानम्। वात्सप्रं कृत्वोपस्थेयं चेत् ॥२॥ यदि पुनः परिपाट्या वात्सप्रोपस्थानं तस्मिन्नह्न्यापतति ततः उपस्थानं कृत्वा विष्णु॰मासः कार्यः · एवमपि हि श्रूयते (६.

[1] see schol. at १७. १. ७ and २१. ३. ३३.

७. ४. १५)। पलाशशाखया गार्हपत्यं व्युदूहत्यपेत वीतेति (१२. ४५) पङ्क्तिः प्रतिदिशं पुरस्तात्प्रथमम् ॥३॥ पश्चा गार्हपत्यस्थानं व्यु°ति गार्हपत्यस्थाने पतितं तृणादि शाखया बहिर्निःसारयति अपे°तेत्यस्य मन्त्रस्य पादेन-पादेन प्रति°शम्।

उदीचीं शाखामुदस्योषान्निवपति संज्ञानमिति (१२. ४६) ॥४॥ शाखानिरसनं प्रतिपत्तिः। सं° ऊषान्[1] गार्हपत्यचितेः स्थाने। मण्डलं छादयति ॥५॥

सिकताश्चाग्नेर्भस्मेत्यूषवत् (१२. ४६) ॥६॥ सं° चकारान्निवपति · ऊषवदिति सिकताभिर्मण्डलं छा°ति। परिश्रिद्भिः परिश्रयति पूर्ववदेकविंशत्या चित स्थेति (१२. ४६) ॥७॥ पूर्ववदित्यूर्ध्वाः°खाते (१६. ८. २४)। मध्येऽर्धबृहतीश्चतस्रो दक्षिणोत्तराः प्राचीरुपदधाति दक्षिणात उदक्रुंय सोऽअग्निरिति (१२. ४७-५०) प्रत्यृचम् ॥८॥ मण्डलमध्येऽर्धबृहतीरिष्टकाः चत°त्तराः [दक्षिणोत्तर]रीत्या प्रागलक्षणाः (१६. ७. २६) दक्षिणातो व्यवस्थितः उप°ति। सकृन्नित्ये ॥९॥ (१६. ७. १४)।

पश्चात्सक्तिते पादमात्र्यौ तिरश्च्यौ पुरस्ताच्च ॥१०॥ उपदधाति · सक्तिशब्दश्च संलग्नवचनः। अपरेण परिक्रम्य-परिक्रम्य चयनमिडामग्नऽइति (१२. ५१-५२) पश्चिमे प्रतिमन्त्रमुत्तरतः ॥११॥ सं° उत्तरोऽवस्थितो दक्षिणामुखः तत्र इडामग्नऽइति दक्षिणाम् अयं तऽइत्युत्तराम्। चिदसीति (१२. ५३) पूर्वे दक्षिणातः प्रतिमन्त्रम् ॥१२॥ तेनैव मार्गेण परीत्य दक्षिणातो व्यवस्थितः चि°सीति प्र°न्त्रं पूर्वे उपदधाति अपरयोर्दक्षिणा प्रथमा पूर्वयोरुत्तरा · तिर्यग्लक्षणाश्चैता भवन्ति तिरश्च्यावित्युक्तत्वात् (१०)। सं° उदङ्मुखः चिदसीत्युत्तराम् परिचिदसीति दक्षिणाम्। नित्ये प्रतीष्टकं तिरश्चीषु ॥१३॥ वचनात्। सं° तिरश्चीष्टकासु चतुर्षु[2]। सक्तिषु पादमात्रीः ॥१४॥ पूर्वदक्षिणास्यामर्धपद्ये ॥१५॥ °देये। सं° पू°स्यां सक्त्याम्। शेषेऽष्टौ वक्राः ॥१६॥ उपधीयन्ते क्षेत्रपूरणात्। तिसृषु लोकम्पृणासु च द्वयोर्वा दशस्वेकस्यां च ॥१७॥ लोकम्पृणानां मन्त्रवचनम् (१२. ५४)। चात्वालदेशात्पुरीषं निवपतीन्द्रं विश्वा इति (१२. ५६) ॥१८॥ समम्बिलां कृत्वोख्यं निवपति समितमिति (१२. ५७-६०) ॥१९॥ गार्हपत्यचितिं पुरीषेण सम°त्वा उख्यमग्निं नि°। रिक्तां नावेक्षेतोखाम्

1) ? उखां Ss. 2) sic!

॥२०॥ तामेव। सिकताभिः समम्बिलां कृत्वा मातेव पुत्रमिति (१२.६१) शिक्याद्विमुच्याग्निवन्निधायासिञ्चति पयो मध्ये तूष्णीम् ॥२१॥ तूष्णीमिति लौकिकवागुच्चारणप्रतिषेधः। सं° अग्निवदिति उख्यस्याग्नेरुत्तरतोऽरत्निमात्रे (१६. २.५) चितेरुपर्येव निदधाति। त्रिचितमेके ॥२२॥ गार्हपत्यं कुर्वन्ति · तत्र च त्रिभागोत्सेधा इष्टका इति सम्प्रदायः · अस्मिंश्च पक्षे प्रथमचितिर्लोकम्पृणानां पूरणं मृग्यम्। सं° उपर्येव चितित्रयात्मकं चिनोति। नैर्ऋतीः कृष्णास्तुषपक्वास्तिस्रोऽलक्षणाः पादमात्रीर्हविष्यशनक्षोमवद्देशे दक्षिणोत्तराः कृत्वा दक्षिणामुखोऽनुपस्पृशन् ॥२३॥ सं° हविःशेषे स्वयम्प्रदीर्णे इरिणे वा (१५.१.१०) ॥ ॥ प्रथमा कण्डिका ॥१॥ ॥

असुन्वन्तमिति (१२.६२) प्रत्यृचं पराचीः ॥१॥ उपदधाति (७.२.१.८)। सं° पराचीः पराङ्मुखाः दक्षिणदिङ्मुखाः प्रथममुत्तराम् ततो दक्षिणाम् ततो दक्षिणाम्।

अभ्यात्ममेके ॥२॥ उपदधति। नित्याभावः ॥३॥ नित्यशब्देन सादनसूददोहसी (१६.७.१४) उच्येते। शिक्यरुक्मपाशेण्ड्वासन्दीः परेणास्यति यं त इति (१२.६५) ॥४॥ नैर्ऋतीनाम्। उदपात्रं निषिच्यान्तरात्मेष्टकमुत्तिष्ठन्ति नमो भूत्याऽइति (१२.६५) ॥५॥ आत्मनश्चेष्टकानां चान्तराले उद्‌ग्च्य उत्तिष्ठन्ति।

अनपेक्षमेत्य शालाद्वार्योपस्थानं निवेशन इति (१२.६६) ॥६॥ अनपेक्षणं च नैर्ऋतीविषयम्। प्रायणीयहविष्कृदन्ते महावेदेः स्फ्याद्या संमर्शनान्त्करोति ॥७॥ पूर्वेद्युर्महावेदेरुत्करकरणान्ताः पदार्था गताः · इदानीं स्फ्याद्या[ः] संमर्शनान्ताः क्रियन्ते। प्रायणीयान्ते सीरं युनक्त्यौदुम्बरम् ॥८॥ तत्र च ·

मौञ्जं त्रिवृद्रज्ज्वव्यम् ॥९॥ भवति। षड्‌द्वादश चतुर्विंशतिं वा युनक्ति ॥१०॥ बलीवर्दान्। पूर्वेणोत्तरांसं दक्षिणामग्निश्रोणिमपरेणा तिष्ठन्युज्यमानमभिमन्त्रयते सीरा युञ्जन्तीति (१२.६७-६८) ॥११॥ अग्न्यंसमुत्तरं पूर्वेण सीरं दक्षिणाभ्मानं प्रतिप्रस्थाताभिमन्त्रयते · योजने तु प्रधानत्वादध्वर्युः। आत्मनि कृषत्यनुपरिश्रित्शुनं सु फाला इति (१२.६९-७२) प्रत्यृचम् ॥१२॥ अग्न्यात्मनि कृषति परिश्रित्संलग्नम्। सं° परिश्रितां समीपे तत्संलग्नमेव कृषति। दक्षिणातः प्राचीम् ॥१३॥ प्रथमां सीताम्। प्रदक्षिणमितराः ॥१४॥ प्रत्यृचमुत्तराभिर्ऋग्भिः। तूष्णीं तिस्रस्तिस्रः प्रदक्षिणम् ॥१५॥ मध्ये सीताः कृषति। तत्र

च प्रथमम्· तिर्यगनूके ॥१६॥ सं° उदगनूके दक्षिणोत्तरायताः।
अक्ष्णाया श्रोण्यंसयोः ॥१७॥ सं° दक्षिणश्रोणेरारभ्योत्तरांसं यावत्।
अनूके ॥१८॥ सं° प्रागनूके प्रागपरायतास्तिस्रः। श्रोण्यंसयोः ॥१९॥ सं° उत्तरश्रोणेरारभ्य दक्षिणांसं यावत्। दीर्घप्रयुक्तेषु वा पुरुषाः कृषन्ति ॥२०॥ दी°षु[1] वा कर्षणं भवति तत्र च पुरुषाः[2] कृषन्ति तिर्यक्प्रयुक्तेष्वध्वर्युरेव[3]। सं° दी°ष्वनडुत्सु। अनडुहो विमुच्य विमुच्यध्वमिति (१२.७३) ॥२१॥
पशुवदुत्सृज्य दक्षिणाकालेऽध्वर्यवे ददाति ॥२२॥ प°ज्य उत्तरपूर्वां दिशं प्रति· अत्र च ल्यबादेश आचार्येण पदार्थनिर्देशार्थः प्रयुक्तो न समानकर्तृकार्थः· तेनाध्वर्योरेव विमोचनोत्सर्गौ दानं तु यजमानस्य न हि श्रौतो ल्यबादेशः। सं° पशुवदिति प्रागुदीचः (१६.३.१५) ऐशानीम्।
सीरमुत्करे कृत्वा ॥२३॥ ॥ द्वितीया कण्डिका ॥२॥
कुशस्तम्बमुपदधाति मध्ये तूष्णीम् ॥१॥ अग्निक्षेत्रस्य· तूष्णीमिति वचनान्नित्याभावः। पञ्चगृहीतेनोद्गृह्णन्नभिजुहोति सजूरब्द इति (१२.७४) ॥२॥ कुशस्तम्बे पञ्चगृहीतेनाज्येनोद्गृह्णन्। सं° उद्गृह्णन् स्रुचमूर्ध्वां[4] कुर्वन्। चतसृषु -चतसृषु त्रींस्त्रीनुदचमसान्निनयति यथाकृष्टमौडुम्बरेण चतुःस्रक्तिना ॥३॥ चतसृषु सीतासु यदा त्रयोऽभिनिनीयन्ते तदा सत्रिभागा सीतैकैकस्य भवति· एवं हि श्रूयते (७.२.२.४) द्वादशोद°निनयतीति· षोडश च कृष्टाः सीताः· येन क्रमेण कृष्टाः सीतास्तेनैवोदचमसनिनयनम् यथाकृष्टमिति सूत्रितत्वात्। त्रीन्कृष्टाकृष्टयोः ॥४॥ निनयत्युदचमसान् (७.२.४.६) सर्वमेवाग्निक्षेत्रं कृष्टं चाकृष्टं च। तत्र निनयने प्राप्तेऽआह· कृष्टमात्रे वा ॥५॥ निनयति· कृष्टपरिच्छिन्नं यदकृष्टम् तत्कृष्टमात्रम् तदेव कृष्टं चाकृष्टं च· यावत्कृष्टपरिच्छिन्नं तावत्कृष्टम् अकृष्टत्वाच्चाकृष्टमिति· कृष्टे पुनर्गृह्यमाणे कृतत्वाद्दोषप्रसङ्गः। सं° यदवकृष्टं तिसृणां-तिसृणां सीतानां मध्यवर्त्यन्तरालद्वयम् तत्रैव निनयति। तस्मिन्सर्वौषधमावपत्येकवर्जम् ॥६॥ तस्मिंश्चमसे। अभोजनं तस्योऽह्नासात् ॥७॥ यावज्जीवम्।

---

1) अग्रतोऽग्रतो दीर्घपङ्क्त्या प्राक्संस्थेषु K marg. 2) प्रतिप्रस्थात्रादयः K marg. 3) दक्षिणोत्तररीत्या प्रयुक्तेषु महता प्राजनेनाध्वर्युरेव कृषति। K marg. 4) °च ऊ° Cod.

या ओषधीरिति (१२.७५-८९) त्रिचैर्वपत्युदपात्रवत् ॥८॥ उद्‌वदिति (३) तिसृभिस्तिसृभिर्ऋग्भिः चतसृषु-चतसृषु सीतासु वपति · ततश्च अत्रापि प्रत्यृचं सत्रिभागा सीतेति · कृष्टमात्राणि त्रिभागन्यूनानि त्रीणि-त्रीणि · उदकासेकेऽप्येवमेव चमसानाम् । सं° पञ्चभिस्तृचैः · द्वादशभिः कृष्टे तिसृभिः कृष्टाकृष्टे · एवं पञ्चदश।

सोमनिवपनाद्याऽऽतिथ्यह्रविष्कृतः कृत्वाह्वनीयपरिश्रितोऽभिमन्त्रयते चित स्थेति (१२.४६) ॥९॥ प्रायणीयाया वेद्योक्तविमोकान्ते सीरयोजनादि कृतम् ध्रौवस्य ह्याज्यस्य विनियोगविधानात्तत उत्तरासु प्रतिपत्तिषसमाप्तास्वेव सोमनिवपनं कृतम् · इहापि तद्वदेव सोम°नादि । सप्त-सप्त वा ॥१०॥ अविशेषस्य विशेषव्यवस्थापनन्यायात्सप्त-सप्तैवेत्युक्तम् । सं° वावधारणे · सप्त-सप्तैव परिश्रितोऽनुमन्त्रयते न सकृन्मन्त्रेण । लोगेष्टका[ः] स्फ्येनाहृत्य बहिर्वेदेरनूकान्तेषूपदधाति तिष्ठन्मा मा हिंसीदिति (१२.१०२-१०५) प्रत्यृचं प्रतिदिशं पुरस्तात्प्रथमम् ॥११॥ सं° लो°काः मृत्खण्डानि । उत्तरापरस्याः पश्चात् ॥१२॥ उ°स्याः दिश आहृत्य पश्चादुपदधाति (७.३.१.२२) । सं° अपरस्यां दिशि उपधानार्थमुत्त°स्याः सकाशात् बहिर्वेदेर्लोगेष्टकामाहृत्योपदधाति ।

उत्तरस्याः सिकताः प्रमार्ष्टि ब्रह्मामि सेदिमिति (१२.१०५) ॥१३॥ तत उपदधाति ।

उत्तरवेदिं निवपति चत्वारिंशत्पदां युगमात्रीं वा सर्वतः कुशस्तम्बे ॥१४॥ छादनान्तां करोति । सं° कुशस्तम्बस्योपरि च°दाम् वा सर्वतश्चतुर्ष्वपि पार्श्वेषु यु°त्रीं युगप्रमाणाम् । अग्ने तवेति (१२.१०६-१११) सिकता न्युप्य छादयत्यात्मानम् ॥१५॥ आप्यायस्वेति (१२.११२) सिकतालम्भनमृग्भ्याम् ॥१६॥ न्युप्तानामेव । आतिथ्यशेषाद्योऽऽपसदः कृत्वा रोहिते चर्मण्यानडुहेऽन्तःपात्यपुरस्तादिष्टकाः[1] करोति प्रथमचितेः ॥१७॥ वैकृतावसरे प्राकृतानुवृत्त्यर्थम् आति°कृत्वेत्युक्तम् · पुनराग्निकमेवोच्यते अन्तःपात्यस्य पुर°रोति प्रथमचितिसम्बन्धिनीः[2] । इतरासां च ॥१८॥ चितीनाम् । स्वयमातृण्णाः मत्या च[3] ॥१९॥ करोति । सं° मत्या इच्छया इतरासां द्वितीयादिचितीनामन्या [अ]पीष्टका[ः] कतिपयीश्चर्मणि करोति । आज्ये न्यस्य कुशाग्राणि तूष्णीं प्रोक्षति

1) Thus १. ३. M. K. 2) ? °बंधिन्यः K. 3) इतरासां च स्व°ण्णा (!)। मत्या च Ss.

श्वेतेऽश्वे पुरस्तात्तिष्ठति श्वेताभावेऽश्वेतेऽश्वाभावेऽनडुहि ॥२०॥ कु॰ग्राण्याद्ये न्यङ्ग्येष्ट-काः प्रोक्षति। अग्निभ्यः प्रह्रियमाणेभ्योऽनुवाचयति ॥२१॥ अ॰णेभ्योऽनुब्रूहीति।

त्रिरुक्तायामश्वपूर्वां चितिं कृत्वा पुच्छाद्दक्षिणां निदधाति ॥२२॥ त्रि॰यां प्रथमा-यामृचि अश्व॰त्वाग्निपुच्छाद्दक्षिणां नि॰ति। तीर्थेनाश्वमारोहयत्युत्तरपक्षमपरेण ॥२३॥ अस्वशब्दाभिहितत्वात्प्रदेशस्य[1] तीर्थशब्दोपादानम् अन्यत्राप्यनेनैवारोहणं यथा स्यादिति। सं॰ किं तत्तीर्थमित्याकाङ्क्षायामाह उत्त॰रेण उत्तरपक्षस्य पश्चाद्-वशिष्टेन आत्मनोत्तरश्रोण्युत्तरपक्षसंध्यन्तरालेन। पुरस्तात्पश्चाद्वैके ॥२४॥ अश्वमारोहयन्ति · स चायं विकल्पोऽश्वविषय एव। सं॰ एके शाखिनः पुरस्ता-दात्मनः पूर्वभागेनैव प्रत्यङ्मुखमश्वमुपर्यग्नेरारोहयन्ति · अथवा पश्चादग्नेः पुच्छभा-गेनैव प्राङ्मुखमश्वम्। अनुयजुःकृष्टं परिणयत्युत्तरतः प्रथमम् ॥२५॥ सं॰ तमश्वं मन्त्रकृष्टमनुलक्षीकृत्य प॰ति अग्निं परितः सर्वतोऽश्वं नयन्ति · प्रथमं द-क्षिणतः प्राप्तावाह उत्त॰मम्। प्रत्यञ्चमागतं चितिमवघ्राप्य परिणीयोत्सृज-ति पशुवत् ॥२६॥ अश्वम् · उत्तरपूर्वां दिशम् (१६. ३. १५)।

उत्तरवेदिप्रोक्षणाद्या सम्भारनिवपनात्कृत्वोत्तरवेदिमपरेण तिष्ठन्यजमानो मयि गृह्णामीति (१३. १) जपति ॥२७॥ आरुह्याग्नि॰गृह्णीतऽइति श्रुतेः (७. ३. २. १७)।

सत्यसाम गायति ॥२८॥ ॥ तृतीया कण्डिका ॥३॥ ॥

पुष्करपर्णमुपदधाति स्तम्बे पूर्ववत् ॥१॥ प्रकृतत्वात्तदेव · पूर्ववदिति (१६. २. २३ २४) च मन्त्रो लभ्यते विमार्जनं च। सं॰ उखासम्भरणवत्। तस्मिन्रुक्मम-धःपिण्डं ब्रह्म जज्ञानमिति (१३. ३) ॥२॥ उपदधाति। सं॰ रुक्मश्च यः कण्ठे प्रा-ग्धृतः (१६. ५. १) स एव नाशादावन्यं सम्पाद्योपधेयः। उत्तानं प्राञ्चं हिरण्यपुरुषं तस्मिन्हिरण्यगर्भ इति (१३. ४) ॥३॥ तस्मिन्रुक्मे उपदधाति।

पुरुषे चित्रे साम गायति ॥४॥ सप्तमीनिर्देशादालब्धे पुरुषे चित्रलिङ्गे मन्त्रे। सं॰ पुरुषे इत्यालम्भसप्तमीयम् पुरुषमालभ्य चित्रे चित्रलिङ्गके कया नश्चित्र इत्य-स्याम् (२७. ३९)। पूर्वेणापरीत्योऽतः ॥५॥ (७. ४. १. २४)। सं॰ अयं हिरण्यपुरुषः पू॰त्यः अपरिगम्यः एतस्य पुरस्तात्प्रदेशे दक्षिणतः सकाशादुत्तरतो न गन्तव्यम्।

[1] ? अश्वशब्दा॰ K. pr. m. अस्वशब्दा॰ sec. m.

उपतिष्ठते यजमानो नमोऽस्त्विति (१३.६-८) ॥६॥ पुरुषम् । उपविश्य पञ्चगृहीतं जुहोति पुरुषे कृणुष्व पाज इति (१३.९-१३) प्रत्यृचं प्रतिदिशं परिसर्पम् ॥७॥ उपवेशनग्रहणाच्च यजमानो जुहोति · द्वादशाहे चैकः कर्ता । सं° परिसृप्य-परिसृप्य गत्वा-गत्वा जुहोति । प्रत्येत्य दक्षिणतः ॥८॥ सं° प्रथमं पश्चात्प्राङ्मुखः तत उत्तरतो दक्षिणामुखः ततः पुरस्तात्प्रत्यङ्मुखः ततः प्र°त्य यथागतं प्रत्यागत्यापरेण दक्षि°तो दक्षिणस्यां गत्वा तत्रोदङ्मुखो जुहोति ।

पश्चात्प्रथमान्त्ये ॥९॥ सं° प्र°न्त्ये होमकर्मणी · पश्चात्प्राङ्मुखः । पुरुषमवक्षाम्योरसास्पृष्टं बाह्वोः प्रापणान्ते लिखति ॥१०॥ स चायं याजमानः पदार्थः प्रमाणत्वात् । सं° उरसा अस्पृष्टं यथा स्यात्तथा पुरु°ष्य दक्षिणोत्तरायतौ स्वौ बाहू प्रसारयति · लिखति चिह्नं करोति । तत्र स्रुगुपधानं प्राच्योः ॥११॥ तत्र परिलेखयोः स्रुचोरुप°नम् प्रागग्रयोः । कार्ष्मर्यमयीं दक्षिणतः पाणिमात्रपुष्करां बाहुमात्रीम् पादमात्रीं वा सामर्थ्यात् घृतपूर्णामग्नेष्ट्वेति (१३.१३) ॥१२॥ पाणि°रामिति तन्मात्रं स्रुचः पुष्करमुक्तम् · बाहुमात्रीमिति परिमाणत्वात्स्रुचम्[1] पा°त्रीं वा कुत एतत् आम्नानसा°र्थ्यात् पादमात्रीः प्रथ°दध्यादिति (८.७.२.१७) यद्येवम् पादमात्रीमेव · तां च घृ°र्णामुपदधाति । एवमौदुम्बरीमुत्तरतो दधिपूर्णामिन्द्रस्य त्वेति (१३.१४-१५) ॥१३॥ सं° एवमित्येवंविधां पादमात्रीम् ।

तिरश्च्यावेके ॥१४॥ प्राच्यौ वेति विकल्पः · अर्धपक्षे चैते·भवत इति सम्प्रदायः । सं° तिरश्च्यौ दक्षिणोत्तराग्रे । स्वयमातृण्णां पुरुषे शर्करां छिद्रां ध्रुवासीति (१३.१६-१९) ॥१५॥ स्व°णामिष्टकां पु°षे उपदधाति । सं° श°रां पाषाणमयीम् ।

भूरित्येतस्याᳮ साम गायति ॥१६॥ आलभ्य सप्तम्युपदेशात् । अन्यत्रापि व्याहृतिषु ॥१७॥ अतोऽन्यत्रापि स्वयमातृण्णासु व्या°षु साम गायति (८.७.४.१) । सं° द्वितीयायां पञ्चम्यां च व्या°षु यजमानः स्वयमातृण्णामालभ्य गायति भुव इति द्वितीयायाम् स्वरिति पञ्चम्याम् । मूलाग्रवतीं दूर्वां तस्यां पुरस्ताद्भूमिप्राप्तां काण्डात्काण्डादिति (१३.२०) ॥१८॥ तस्यां स्वयमातृण्णायां यथा भवत्यर्धम् अर्धं च भूमौ तथोपधेया । सं° तत्र उत्तरामुख उपविश्य पुरस्तात्स्वयमातृण्णातः पूर्व-

---

1) ? °त्वात्स्रुचं K.

▲▲▲▲▲▲

लोके अर्धपञ्चात्मके · भूॱग्राम् मूलानि दूर्वायाः स्वयमातृण्णा[या]मुपरि अग्राणि पुरस्ताद्भूमौ । पूर्वा-पूर्वामुत्तराः ॥१९॥ सं° या ऽॱराः वक्ष्यमाणाः द्वियजुरा-द्याः अषाढान्तास्तासामेकैकां पूर्वपूर्वापङ्क्तिनेष्टकापेक्षया देशतः पूर्वामुपदधाति त-द्यदेनाः प्राचीरुप° (७. ४. २. ४०) । यास्तऽइति (१३.२२) द्वितीये ॥२०॥ लोके उपदधाति · द्वितीयऽइति कुत एतत् · । सं° आत्मनो मध्याद्द्वितीये पञ्चालोके ।

उलूखलस्य रेतःसिग्वेलायामरत्निमात्रश्रुतेः ॥२१॥ उलूखलमुसले हि प्रकृत्याह (७. ५. १. १३) ते रेतःसिचोर्वेलयोपदधाति अरत्निमात्रेॱष्वतऽइति रेतःसिचोश्च द्वियजुषश्चानन्तर्यमुक्तम् (७. ४. २. २४) तेन द्वियजुषो द्वितीये लोके उपधानम्।

विराड्स्वराडिति (१३.२४) रेतःसिचौ प्रतिमन्त्रम् ॥२२॥ उपदधाति ।

प्रजापतिरिति (१३.२४) विश्वज्योतिषम् ॥२३॥ ऋतव्ये मधुश्च माधवश्चेति (१३.२५) ॥२४॥ अषाढासीत्यषाढाम् (१३.२६) ॥२५॥ स्वयमातृण्णारेतःसि-ग्विश्वज्योतिर्ऋतव्याषाढासु लक्षणानि कुरुते रज्ज्वां वेलार्थानि ॥२६॥ उपरिष्टाद्वि-लायाः प्रयोजनमस्ति । सं° मध्यात्पूर्वान्तं यावत् इष्टकानामुपरि प्राचीं रज्जुं वि-स्तार्य तस्यां रज्ज्वां स्वयमाॱढासु तदुपलक्षितस्थानेषु चिह्नानि कुॱते वेलाॱनि वेला[याः] स्वयमातृण्णादिस्थानान्त[स्य] ज्ञानार्थम् । कूर्मं दधिमधुघृतैरनक्ति मधु वाता इति (१३.२७-२९) ॥२७॥ अरत्निमात्रेऽषाढां दक्षिणेमावकासूपरि-ष्टाच्च पुरुषमभिमुखम् ॥२८॥ अवकासु कूर्ममुपदधाति · उपॱष्टाच्चावका भवन्ति · अवकाशब्देन शेवालमुच्यते[1] सं° अषाढाया दक्षिणस्यां दिश्यरत्निमात्रे पञ्चालो-कद्वयमन्तरालं मुक्त्वा तृतीये पञ्चालोके ॥ ॥ चतुर्थी कण्डिका ॥४॥

अपां गम्भन्निति (१३.३०) तिसृभिः ॥१॥ सं° कूर्ममुपदधाति ।

घट्टयति मध्यमया ॥२॥ ऋचा । सं° एजयति कम्पयति ।

उलूखलमुसले स्वयमातृण्णामुत्तरेणारत्निमात्रेऽऔदुम्बरे प्रादेशमात्रे चतुरस्र-मुलूखलं[2] मध्यसंगृहीतमूर्धम् वृत्तं मुसलं दक्षिणमुलूखलाद्विष्णोः कर्माणीति (१३.३३) ॥३॥ (७.५.१.१२) । पक्षे चैते भवतः यजुष्मतीवात् · भेदेन चोपधा-नम् लिङ्गात् (°२५) सकृत्सादॱरो[ती]ति यदि ह युगपदुपधानं स्यात् न सकृत्स-

१) ? सेवा° K. २) °स्रमु° १. ३. R. M. Mahîdh.

मुच्येत । सं॰ स्वयं॰मातृमध्यादरत्निमात्रे तृतीये पश्चालोके उत्तरस्यां दिशि · सह्हैवोपदधाति [1] ।   उलूखलऽउखां कृत्वोपशयां पिष्ट्वा न्युप्य पुरस्ताद्ध्रुवासीत्युखाम् (१३. ३४) ॥४॥ श्रुतिक्रमेणानुष्ठानम् (७. ५. १. २८) लोकभाक्करणोत्तरकालं मन्त्रवचनम् ।   श्रग्ने युद्क्ष्वा हीति (१२. ३६) प्रत्यृचं स्रुवाहुती जुहोत्युखायाम् ॥५॥   उपस्थानं वासंवत्सरभृतिनः ॥६॥ संवत्स॰तिनो होमः श्रसं॰न: उपस्थानं होमो वा · विकल्पेन हि तस्य श्रवणामिति (७. ५. १. ३४) ।

प्रतिशिरः सप्त-सप्त हिरण्यशकलान्मुखे करोति सम्यक्स्रवन्तीति (१३. ३८) ॥७॥ प्र॰कलान्प्रास्यति मुखे प्रथमम् ।   उत्तरान्द्वौ-द्वौ ॥८॥ सं॰ उ॰रान्वद्दयमाणान्मन्त्रान् एकप्रतीकोपादानेऽपि द्वौ-द्वौ मन्त्रौ प्रतीयात् ।   नासिकयोर्श्चक्षे त्वेति (१३. ३९) ॥९॥ मन्त्रद्वयाभिधानादेव शकलद्वित्वम् श्रधिष्ठानभेदाच्च ।

श्रक्ष्योर्भासे त्वेति (१३. ३९) ॥१०॥ प्रास्यति ।   श्रोत्रयोरभूदिदमिति (१३. ३९) ॥११॥

सर्वानप्येकस्मिन्नेके ॥१२॥ एकस्मिन्नपि पशौ सर्वानेव शकलानेकऽश्राचार्याः प्रास्यन्ति (७. ५. २. १०) । सं॰ एकस्मिन्नजशिरसि सर्वान्हिरण्यशकलान् पश्चगुणान्सप्त-सप्त प्रास्यन्ति ।   उखायां प्रत्यश्चि ॥१३॥ सं॰ तानि शिरांसि उखामध्ये प्रत्यङ्मुखान्युपदधाति ।   सहस्रदा इति (१३. ४०) पुरुषशिर उद्धृत्य मध्ये ॥१४॥ सं॰ हस्तेन मुखमुत्पाद्य उखामध्ये उपदधाति ।   श्रश्वाव्योरुत्तरतः पूर्वापरे ॥१५॥ पूर्वमश्वस्यापरमवेः । सं॰ उखायामेवोत्तरविभागे शिरसी उपधेये ।

गोऽजयोश्च दक्षिणतः ॥१६॥ चशब्दात्पूर्वापरेऽएव · पूर्वं गोरपरमजस्य । सं॰ उखाया दक्षिणे भागे ।   श्रादित्यं गर्भमिति (१३. ४१-४५) प्रतिमन्त्रं मन्त्रक्रमेण ॥१७॥ शिरांस्युपधीयन्ते ।   चित्रं देवानामित्यर्धर्चशः (१३. ४६) स्रुवाहुती मध्यमे ॥१८॥ पुरुषशिरसि (७. ५. १. २३) । सं॰ म॰मे पुरुषे शिरस्तः श्रर्ध॰शः श्रर्धर्चेनार्धर्चेन द्वे श्राहुती जुहोति ।   बहिर्वेद्युदङ् तिष्ठन्नुपतिष्ठतऽउत्सर्गैरिमं मा हिंसीरिति (१३. ४७-५१) प्रतिमन्त्रम् ॥१९॥ बहि॰दङ्मुखस्तिष्ठन् । सं॰ उत्सर्गसंज्ञकैर्मन्त्रैः प्र॰न्त्रं पुरुषादिशिरांस्युपतिष्ठते ।   उखां परिक्रामन्नेके ॥२०॥ एके श्राचार्याः उखां परिक्रम्य-परिक्रम्येह स्थिता एव तस्य पशोरुपस्थानं कुर्वन्ति

---

1) sic! contrary to Karka's view.

(७. ५. २. ३०) विकल्पः । सं° मध्ये स्थिता एव उखां परिक्रम्य-परिक्रम्य शिरःसमीपे गत्वा-गत्वा उपतिष्ठन्ते । उपधायोपधाय वा तस्य-तस्य यथालिङ्गम् ॥२१॥ तद्वैके यं-यमेव पशुमुपदधति तस्य शुचमुत्सृजन्तीति श्रुतेः (७. ५. २. २१) · अस्मिंश्च पक्षे प्रागजशिरउपस्थानात्पुरुषाङ्कती ऽ इति । सं° अथवा तं-तं पशुमुपधाय अनन्तरं तस्य°लिङ्गमुपस्थानं कुर्यात् ।

सर्वमन्त्रानप्येकस्मिन्नेके ॥२२॥ सं° एके शाखिनः एकस्मिन्नपि पशौ स°न्त्रान्प्रयुञ्जते उपधानमन्त्रानुपस्थानमन्त्रांश्च । उपधानमन्त्रान्विपरिहरन्नङ्गुलिं प्रधिष्ठे[1] शिरसि ॥२०॥ देशे संलागयति · एतच्च यद्येकस्मिञ्छिरसि पञ्चकृत्वो हिरण्यशकलप्रक्षेपः कृतः तदेव भवति । सं° प्रतिष्ठे तूष्णीमेवोखायां पूर्वं स्थापिते अजशिरसि पुरुषादिशिरसामुपधानस्थाने तत्तत्प्रदेशे अङ्गुलिं विपरिहरन् अङ्गुल्या तं-तं शिरःप्रदेशं स्पृशन् पुरुषमस्तकाद्युपधानमन्त्रान्पठेत् ॥ ॥ पञ्चमी कण्डिका ॥५॥

एत्य च[2] त्वं यविष्ठेति (१३.५२) चित्योपस्थानम् ॥१॥ बहिर्वेद्युत्सर्गैरुपस्थानं कृतम् · तेनैत्येत्युच्यते · चशब्दादनेत्य च उखापरिक्रमणपक्षेऽपीत्यर्थः । सं° तीर्थदेशे आगत्य । अपरेण स्वयमातृण्णामेत्यापस्याः पञ्च-पञ्चानूकान्तेष्वपां त्वेमन्निति (१३. ५३) प्रतिमन्त्रम् ॥२॥ (७. ५. २. ४०) · अत्र च प्रत्यनूकान्तं नित्ये भवत इत्युक्तमेव एक°तन्त्रेणेति (१६. ७. १७) । सं° पुरस्तादनूकमध्ये मध्यमा पद्या तामभितो द्वे अर्धपद्ये तेऽभितो द्वे पद्ये अन्यासु दिक्षु सर्वाः पद्या एव । व्याघारणावत्प्राणभृतः कर्णासक्तिता दश-दश पुरुषमुपार्श्वेके रेतःसिग्वेलायां च सर्वतो यथायोगमयं पुर इति (१३.५४) प्रतिमन्त्रम् ॥३॥ प्राणभृदितीष्टकानां नाम · ताश्च व्या°णावत् (५. ४. १४) दक्षिणपूर्वांसादारभ्य कर्णा°क्तिता उपदधाति · तत उत्तराश्रोणेरारभ्य एवमेवोपधानम् पुनर्दक्षिणाश्रोणेरारभ्य एवमेवोपधानम् तत उत्तरांसादारभ्य · एवं चत्वारो दशका उपक्तिताः · शिष्टा दश रेतः°यां यथा°गं समविभागेनोपधीयन्ते · पुरु°पार्श्व वा सर्वासामुपधानम् (८. १. ४. १) श्रुतेः · ततश्च कर्णासक्तिता इति विकल्पः। सं° कर्णासक्तिता इति कर्णेऽक्ष्णया तत्सक्तिता[:] तत्संलग्ना[:] · शाखिनः पुरु°र्श्व पुरु-

---

1) ?? प्रधिष्ठे K. प्रधिष्टे ३ M. प्रधितिष्ठे १. प्रतिष्टे R. Ss. 2) Thus K and Ss. एत्य च ॥५॥ त्वं य° ३.

षस्य समीपे प्रथमां-प्रथमामुपधाय कोणपर्यन्तमुपधानं कर्तव्यम्  अपरे तु कोणादारभ्य पुरुषपर्यन्तम्  अथवा पुरुर्ध्य सर्वाः पञ्चाशनमपि पुरुषसमीपे एव परितो यथाऽगमुपदधाति · उपार्प्य उपेति समीपार्थः पुरुषसमीपऽ एवार्पयित्वेत्यर्थः · रेतःऽयोगम् मध्ये या विहिताः रेतःऽयां सर्वासु दिक्षु यऽगम्। द्वितीयमयं पश्चादिति (१३.५६) ॥४॥ द्वितीयं दशानामुपधानम् । लोकम्पृणा दक्षिणाऽसाद्ध्या मध्यात्प्रदक्षिणामानूकान्तात्पूर्वस्मात् ॥५॥[1] सं॰ दक्षि॰शादधि आत्मनो दक्षिणकोणादारभ्य लो॰णा उपदधाति[2] आ मध्यात् स्वयमातृणापर्यन्तमित्यर्थः · ततः प्र॰णां स्वयमातृणामपरेण सर्वतो लोकम्पृणा उपदधाति[3] आ पू॰स्मादनू॰न्तात् पूर्वानूकान्तपर्यन्तमित्यर्थः । प्रत्येत्य शेषम् ॥६॥ पूरयति । सं॰ प्र॰त्य दक्षिणांससमीपं प्रत्यागत्य लोकम्पृणाशेषमुपदधाति प्रागनूकदक्षिणांसाद्यायान्तराले ।

पक्षपुच्छानि पराग्भिरप्ययेभ्योऽधि ॥७॥[4] सं॰ अप्ययः पक्षपुच्छात्मसंधिः · अप्ययात्संधेरारभ्य पराग्भिरिष्टकाभिः प॰नि चिनोति · दक्षिणपक्षे चयनमुत्तराभिमुखः संधेरारभ्य[5] दक्षिणासंस्थं स्वात्माभिमुखं कुर्यात् एवमेव प्राङ्मुख[ः] पुच्छे दक्षिणामुख उत्तरपक्षे । एवऽ सर्वत्र ॥८॥ सर्वचितिष्वेवं पराग्भिरिष्टकाभिः पक्षपुच्छानां चयनम् । सं॰ एवमुक्तप्रकारेण सर्वासु चितिषु लोकम्पृणा उपदधाति ।

मध्ये पुरीषं निवपति पूर्ववत् ॥९॥ पूर्ववदिति मन्त्र उपलभ्यते[6] । सं॰ इन्द्रं विश्वा इति (१२.५६) । पूर्वमर्धानूकं छादयति ॥१०॥ सं॰ तेन मध्ये न्युप्तेन पुरीषेण मध्यादारभ्यानूकस्यार्धं छा॰ति । प्रदक्षिणमात्मानम् ॥११॥ पुरीषेण छादयति । पक्षपुच्छानि च ॥१२॥ चशब्दात् प्रदक्षिणं पुरीषेण छादयति (८.७.३.५) । एवऽ सर्वत्र ॥१३॥ सर्वचितिष्वित्यर्थः ॥ ॥ षष्ठी कण्डिका ॥६॥ ॥

चितिं पुरीषवतीमुपतिष्ठते वार्त्रहत्यायेति (१८.६८-७८) सप्तभिः ॥१॥ पुरी॰वतीग्रहणात् यदैव पु॰वती तदैवोपस्थानम् न प्रागिति । अष्टाभिरेके दशभिर्वा ॥२॥ वेति विकल्पः । उपसत्सु पौर्वाह्णिकापराह्णिकयन्तरे चयनपुरीषनिवपने ॥३॥ कर्तव्ये (१०.२.५.१) । त्रिरश्वं परिणीयोपास्तमयं पशुवद्-

---

1) see ८.४ ३.१६ १०.१८  2) ? णामुप॰ Ss.  3) ? णामुप॰ Ss.  4) पराग्भिः instead of पराचीभिः!  5) ? संधिरा॰ Ss.  6) ? मंत्रोपल॰ K. See १.१८.

त्सृज्य तावत्प्रतिपर्येति ॥४॥ अस्तमयकाले त्रिः कृत्वोऽश्वमग्निं परिणीयोत्तरपूर्वां दिशं प्रत्युत्सृज्य (१६. ३. १५) तावर्येति । परिणयनमाग्निनिधानात् ॥५॥ एतच्च प॰नमग्निनिधानादर्वाक्कर्तव्यम् · एतच्च यद्यपि बहुभिरहोभिश्चितिः क्रियते तथापि प्रत्यस्तमयं क्रियतऽएव विशिष्टकाले श्रवणात् । त्र्युपसत्के द्वे प्रथमायाम् तिस्रो मध्यमायाम् ॥६॥ त्र्यु॰त्के क्रतौ प्रथमामुपसदि द्वे चिती उपधीयेते म॰यां च तिस्रः । पञ्चगृहीताद्युत्तमा ॥७॥ उत्तमोपसत्य॰दि भवति (९.२.९.१ १८) । उत्तरासु च ॥८॥ सं॰ षड्द्वादशचतुर्माससंवत्सराद्युपसद्विधासु उत्तमान्तिमोपसत् चकारात्पञ्चगृहीताद्येव भवति । सपुरीषा षट्स्वेकैका ॥९॥ षट्सूपसत्सु स॰षा चितिरेकैका । द्वादशोपसत्के व्यत्यासं चितिपुरीषे ॥१०॥ व्यत्यासेन भवतः । विकर्ण्याद्येकादश्याम् ॥११॥ तत्र चैकादश्यामुपसदि वि॰दि कर्तव्यम् । चतुर्मासोपसत्के द्वादशाहशः ॥१२॥ द्वादशभिर्द्वादशभिरहोभिश्चितिपुरीषे देये · अन्त्यं पुरीषमेकादशभिरहोभिर्विकर्ण्यादि च · पञ्चगृहीताद्युत्तमा तु स्थितैव । सं॰ च॰त्के क्षुल्लकतापश्चिते द्वादशभिरहोभिः प्रथमा चितिरुपधेया द्वादशभिः प्रथमायां पुरीषम् । षट्त्रिंशदहशः-षट्त्रिंशदहशः संवत्सरे ॥१३॥ एतच्च सामर्थ्यात्त्रिसंवत्सरोपसत्के द्रष्टव्यम् · संवत्सरोपसत्के हि विशेषं वक्ष्यत्येव · तथा च तिसृभिस्तिसृभिः षट्त्रिंशद्भिश्चितिपुरीषाणि भवन्ति । सं॰ वीप्साकरणात् बहुसंवत्सरोपसत्के अयं विशेषः · तेन त्रिसंव॰त्के तापश्चिते षट्त्रिंशदहोभिः प्रथमा चितिश्चेतव्या तावद्भिरेतस्यां पुरीषम् । तापश्चिते मासशश्चितिपुरीषे चतसृणाम् ॥१४॥ चितीनां मासेन-मासेन चि॰षे चीयेते मासेन चितिः मासेन पुरीषम् एवमष्टौ मासाः । सं॰ संवत्सरोपसत्के ता॰ते सत्रे च॰णां प्रथमादिचितीनां मासशः मासेन चितिपुरीषे व्यत्यासं भवतः । पञ्चम्यामसपत्ना विराजः प्रथमेऽहन् ॥१५॥ पञ्चम्यां चितौ प्र॰हन्यसपत्ना विराजश्चोपधीयन्ते । स्तोमभागा अन्वहम् ॥१६॥ चीयन्ते · एवं नव मासा गता भवन्ति । मासं पुरीषं तूष्णीम् ॥१७॥ एवं दश मासाः । नाकसत्प्रभृति मासम् ॥१८॥ एवमेकादश मासा भवन्ति । पुरीषं च ॥१९॥ चशब्दान्मासमेव । उत्तमयोरह्नोर्विकर्ण्यादि पूर्वे ॥२०॥ अत्रोत्तम॰र्वेऽहनि

पञ्चगृहीताद्युत्तमा तु स्थितैव । सं° द्वादशमासस्योत्तमयोरेकोनत्रिंशत्रिंशयोर्मध्ये पूर्वे एकोनत्रिंशेऽहनि विकर्ण्यादि त्रिंशे पञ्चगृहीतादि ।

द्विसाहस्री प्रथमा लोकम्पृणानां पञ्चाशदूना ॥२१॥ भवति ।

उत्तराश्च ॥२२॥ एतत्संख्या भवन्ति । सं° द्वितीयातृतीयाचतुर्थ्यस्तिस्रः · चकारात्प्रथमाचितिवत् । त्रिसाहस्र्युत्तमा ॥२३॥ उत्तमा चितिः त्रिःस्री लोकम्पृणानां भवति । वक्रालिखितानां दक्षिणोत्तरे मध्यऽइतरासाम् ॥२४॥ वक्रा॰त्तरे देशे उपधानम् ऋज्वालिखितानां च मध्ये (१०.२.१.१) । सं° ऋज्वालिखितानां लोकम्पृणानां मध्ये मध्यभागे । षट्त्रिंशच्छत्या वा तृतीयाष्टादशशत्या इतराः ॥२५॥ अयमपरो लोकम्पृणानां परिमाणविकल्पः ।

गार्हपत्यलोकम्पृणाः प्रथमायाम् ॥२६॥ चितौ विगणयितव्याः ।

धिष्ण्या उत्तमायाम् ॥२७॥ सं° धिष्ण्यानामिमा धिष्ण्या । अपरिमितेष्टको वा ॥२८॥ अग्निर्भवति · अयं चापरिमितशब्दोऽपरिमाणवचन इत्युक्तमिष्याम् (२.६.५)।

प्रथमोत्तमयोः पादमात्रीरतिरिक्ताः ॥२९॥ प्रथ्योः चित्योर्या अति॰क्ता सा पा॰त्री भवति नातोऽधिकेति । सं° प्रथमापञ्चम्योः अ॰क्ता मकृत्य इष्टकाः [ताः] पा॰त्रीरुप॰ ।

दशगणाधिका भिन्नोत्करे कुर्यात् ॥३०॥ गार्हपत्याहवनीयावष्टौ च धिष्ण्या इति दशगणः · अतो या अधिका[ः] ता भिन्द्यात् ॥ ॥ सप्तमी कण्डिका ॥७॥ ॥

द्वितीयायामाश्विनीः प्रतिदिशम् ॥१॥ द्वितीयाग्रहणं प्रथमावाः परिसमाप्तिज्ञापनार्थम् । आश्विनीरिति च इष्टकानां संज्ञा ताः प्रतिदिशमुपधीयन्ते । सं° रेतःसिग्वेलायाम्[१] । रेतःसिग्वेलायामनूकमुत्तरेण पूर्वा द्वितीये ॥२॥ सं° पूर्वदिग्भवा आश्विनी प्रागनूक॰रेण द्वितीये लोके उपधेया । दक्षिणा पूर्वेण ॥३॥ अनूकमुपधीयते । सं° उदगनूकं पूर्वेण द्वितीये । अपरा दक्षिणेन ॥४॥ सं° पश्चिमाश्विनी प्रागनूकं द॰न द्वितीये । उत्तरापरेण ॥५॥ सं उत्तराश्विनी उदगनूकमपरेण द्वितीये लोके । दक्षिणामुत्तरेण पञ्चमी ॥६॥ सं° पञ्चमी आश्विनी द॰णामाश्विनीमुत्तरेण तस्मिन्नेव लोके · ते द्वे अर्धपञ्चे प्रागायते उपधेये । वैश्वदेवीः ॥७॥ इतीष्टकानां संज्ञा । तासां देशमाह ·

१) रे॰ is given in Ss. as part of this sûtra, not of the next.

पूर्वां दक्षिणेन ॥८॥ सं॰ पूर्वामाश्विनीं द॰णेन पूर्वां वैश्वदेवीमुपदधाति। दक्षिणामपरेण ॥९॥ सं॰ दक्षिणामाश्विनीमपरेण दक्षिणां वैश्व॰। अपरामुत्तरेण ॥१०॥ सं॰ अपरामाश्विनीमुत्तरेणापरां वैश्व॰। उत्तरां पूर्वेण ॥११॥ सं॰ उत्तरामाश्विनीं पूर्वेणोत्तरां वैश्व॰। एवं वैश्वदेवीभ्यः प्राणभृतः ॥१२॥ सं॰ एवमनेन प्रकारेण वै॰भ्योऽवधिभूताभ्यः प्रा॰त इष्टका उपदधाति · एवमित्यनेन पूर्वां दक्षिणेनेत्यादि (८) पूर्वोक्तं सर्वं लभ्यते। प्राणभृद्भ्योऽपस्याः ॥१३॥ सं॰ एवमित्यनुवर्तते · प्राणभृद्भ्योऽवधिभूताभ्यः एवमेवापस्यासंज्ञका इष्टका उपदधाति · एवमित्यादि पूर्वोक्तं सर्वम्। पूर्ववत्पञ्चभ्यः सर्वासाम् ॥१४॥ एतच्चाचार्येण लाघवार्थमुपदिष्टम् · इदानीमुपधानक्रममाह · । सं॰ प्रागुक्तानां स॰सां वैश्वदेवीप्राणभृदपस्यानां प॰भ्यः इष्टकाः पू॰वदित्याश्विनीवत् दक्षिणा आश्विनीवैश्वदेवीप्राणभृत उत्तरेणोपधेयाः (६) · तस्मिन्नेव लोके तिरश्च्यालिखिताः अर्धपञ्चाः प्रागायता एता इति गम्यते। आश्विनीर्ध्रुवक्षितिरिति (१४. १) प्रतिमन्त्रम् ॥१५॥ उपदधाति।

शुक्रश्च शुचिश्चेत्यृतव्ये (१४. ६) पूर्वयोरुपरि ॥१६॥ उपधीयेते। सं॰ प्रथमायामुपक्षितयोर्ऋतव्ययोरुपरि। उत्तराश्च ॥१७॥ सं॰ उ॰रास्तृतीयादितिसृणां चितीनां ऋतव्या अपि पूर्वयोरुपरि उपधेयाः। वैश्वदेवीः सन्नूर्ऋतुभिरिति प्रतिमन्त्रम् (१४. ७) ॥१८॥ उपदधाति। उत्तराश्च ॥१९॥ चशब्दात्प्रतिमन्त्रम्।

प्राणभृतः प्राणं मऽइति (१४. ८) ॥२०॥ प्रतिमन्त्रमुपदधाति। अपः पिन्वेत्यपस्याः (१४. ८) ॥२१॥ उपदधाति। वयस्याः पञ्च-पञ्चानूकान्तेषु मूर्धा वय इति (१४. ९) प्रतिमन्त्रम् चतस्रः पुरस्तात् ॥२२॥ उपदधाति · तासां चत॰स्तात् द्वे जङ्घामात्र्यौ समलोकव्याप्ये द्वे चाध्यर्धे शेषा अध्यर्धा एव। दक्षिणात उत्तरतः पश्चात् ॥२३॥ अनेन क्रमेणोपधानम्। दक्षिणाश्रोणेरधि लोकम्पृणाः पूर्ववत् ॥२४॥ उपधीयन्ते। सं॰ पू॰वदिति दक्षिणाश्रोणे[रध्या]मध्यात्प्रदक्षिणा॰शेषमित्येतावल्लभ्यते (६. ५-६) ॥ ॥ अष्टमी कण्डिका ॥८॥ ॥

तृतीयायाᳬ स्वयमातृण्णामिन्द्राग्नीऽइति मध्ये (१४. ११) ॥१॥ उपदधाति · तृतीयाग्रहणं द्वितीयान्तप्रज्ञप्त्यर्थम् · तदन्तप्रज्ञप्तेश्च प्रयोजनम् पुरीषदानादि भवति द्वे प्रथ॰मायामिति (७. ६) च ज्ञापनाय। अनूकेषु पञ्च दिश्या वैश्वदेवीवद्रा-

ङ्क्यसीति (१४. १३) प्रतिमन्त्रम् ॥२॥ वत्करणं च रेतःसिग्वेलार्थम् (८. २) दक्षिणा-ऽश्वमीत्येवमर्थं च (८. ६)। विश्वकर्मेति (१४. १४) विश्वज्योतिषमुपरि पूर्वस्याः ॥३॥ उपदधाति। उत्तमायां च ॥४॥ सं° पञ्चम्यां चितौ पूर्वस्या उपरि उपदधाति। ऋतव्ये नभश्च नभस्यश्चेति (१४. १५) ॥५॥ उपधीयेते। तयोश्च अवकाः कूर्मवत् ॥६॥ भवन्ति। इषश्चोर्जश्चेत्यपरे (१४. १६) ॥७॥ ऋतव्ये ऽएवोपधीयेते अर्धीत्सिधाश्चेताः चयनयोगात्। पूर्वार्धे प्राणभृतो दशायुर्म ऽइति (१४. १७) प्रतिमन्त्रम् ॥८॥ सं° पूर्वार्धे पूर्वविभागे। छन्दस्या द्वादश-द्वादशाप्येषु मा छन्द इति (१४. १८) प्रतिमन्त्रम् ॥९॥ पक्षपुच्छाप्ययेषु। वालखिल्यालोकं पश्चाच्छिष्ट्वा ॥१०॥ सं° पश्चात्पुच्छसंधौ वा°कं तासां स्थानं शिष्ट्वा परिशिष्य तत्स्थानात्पूर्वलोके कर्तव्यम्। वालखिल्याः सप्त पुरस्तात् ॥११॥ उपदधाति। सं° पूर्वस्यां दिशि। प्राणभृद्भ्यो वापराः ॥१२॥ वा पूर्वा इति विकल्पः। द्वादशभ्योऽपरास्तु ॥१३॥ द्वाभ्यस्त्वपरा एव। सं° तु विशेषे अपराः सप्त द्वादशछन्दस्याभ्योऽपरा उप° न पूर्वाः। मूर्धासि राडिति (१४. २१) प्रतिमन्त्रम् ॥१४॥ सं° वालखिल्या उपदधाति। यजुष्मतीश्च ज्ञानन् ॥१५॥ सं° अध्वर्युः शाखान्तरविहितानां यजुष्मतीनामुपधानविधिं ज्ञानन् ता उपदधाति। उत्तराश्रोणेरधि लोकम्पृणाः पूर्ववत् ॥१६॥ उ°णेरारभ्य पूर्ववत्प्रथमाचितिवदेव (६. ५-६) लो°णा उपदधाति॥ ॥ नवमो कण्डिका ॥९॥ ॥

चतुर्थ्यामनूकान्तेषु दक्षिणोत्तरे द्वे-द्वे ॥१॥ चतुर्थीग्रहणं तृतीयान्तप्रज्ञापनाय। सं° इष्टके उपधेये अत्र पुरस्तात्पश्चाच्चानूकमभितो ज्ञङ्घामात्र्यौ प्राग्लक्षणौ दक्षिणोत्तरयोश्च पक्षे उदग्लक्षणे दक्षिणोत्तरे उदगनूकस्योपरि अर्धार्धिकयोपधेये। पूर्वाभ्यामपराश्चतुर्दश ॥२॥ सं° पूर्वाभ्यां ज्ञङ्घामात्रीभ्यामपराः ताश्चार्धपक्ष्याः। ताभ्यः षट् ॥३॥ ताभ्योऽपराः षट् पक्ष्याः। पूर्वदक्षिणेऽवान्तरदेशऽएके ॥४॥ सं° एताश्चतुर्दश षट्च पूर्वदेशे आत्मन आग्नेयकोणे कोणोपधीयमानज्ञङ्घामात्रीतोऽन्तरा उपदधति तत्र चैवम् दक्षिणांसोपहितज्ञङ्घामात्र्याः पश्चात्संलग्ना या अध्यर्धा तस्या उत्तरतो नवार्धपक्ष्याः प्रागायताः प्राग्लक्षणाश्चोपधेयाः द्वितीयामध्यर्धी ज्ञङ्घामात्रीं चोत्तरतः पञ्चार्धपक्ष्याः उदगायता उदग्लक्षणा उप° तद-

नन्तरं तत्संलग्नाः षट् पश्चा उप॰ ताश्च नवानामधः चतस्रः प्राग्ल॰ पञ्चानामुत्तरतो द्वे उदग्ल॰ इति। उत्तरा वा दक्षिणाभ्याम् ॥५॥ उपधीयन्ते · लाघविकेन मताचार्येणैवमुपदिष्टाः उपधानक्रमः पुनरिहोच्यते · । सं॰ अथवा एताश्चतुर्दश षट् दक्षिणोत्तराभ्य [१] दक्षिणानूकान्तोपक्लिताभ्यां दक्षिणोत्तराभ्यां पश्चाभ्यामुतरा उपदधाति अनूकमभितोऽर्धार्धिकया तत्संलग्ना एव · तयोरुत्तराश्चतुर्दश · तासामुत्तराः षट् उदगायताश्च।

उत्तरां पूर्वयोराशुस्त्रिवृदिति (१४.२३) ॥६॥ सं॰ पूर्वयोर्द्वयोर्मध्ये उत्तराम्।

दक्षिणामपरयोर्धरुण एकविꣳश इति (१४.२३) ॥७॥ सं॰ अपरयोर्मध्ये दक्षिणाम्।

दक्षिणां दक्षिणयोर्भान्तः पञ्चदश इति (१४.२३) ॥८॥ सं॰ द॰णयोर्मध्ये द॰णाम्।

दक्षिणामुत्तरयोर्व्योमा सप्तदश इति (१४.२३) ॥९॥ सं॰ उ॰योर्मध्ये द॰णाम्।

चतुर्दश प्रतिमन्त्रं प्रतूर्तिरष्टादश इति (१४.२३) ॥१०॥ उपदधाति।

दक्षिणां पूर्वयोरग्नेर्भाग इति (१४.२४) ॥११॥ सं॰ पूर्वयोर्मध्ये दक्षिणाम्।

उत्तरामपरयोर्मित्रस्य भाग इति (१४.२४) ॥१२॥ सं॰ अ॰योरुपक्लितयोरुत्तराम्।

उत्तरां दक्षिणयोर्नृचक्षसां भाग इति (१४.२४) ॥१३॥ उत्तरामुत्तरयोरिन्द्रस्य भाग इति (१४.२४) ॥१४॥ षट् प्रतिमन्त्रं वसूनां भाग इति (१४.२५-२६) ॥१५॥ ऋतव्ये सहश्च सहस्यश्चेति (१४.२७) ॥१६॥

रेतःसिग्वेलायां च सप्तदश सर्वतो नव दक्षिणेनानूकꣳ सृष्टीरेकयास्तुवतेति (१४.२८-३१) प्रतिमन्त्रम् ॥१७॥ सृष्टीरितीष्टकानाम। सं॰ सर्वतः सर्वासु दिक्षु सृष्टिसंज्ञका उप॰ · तासां मध्ये प्रागनूकं द॰णेन नव उप॰ अर्थादष्टावुत्तरेणेति · तेन प्रतिदिशं चतस्रश्चतस्रः अनूकमभितो द्वे-द्वे · दक्षिणातः पञ्च मध्यमानूके पश्चा तामभितो द्वेऽअर्धपश्चे तेऽअभितो द्वे पश्चे एवं पञ्चेति। उत्तराꣳसादधि लोकम्पृणाः पूर्ववत् ॥१८॥ सं॰ उ॰सादारभ्य पूर्ववदिति प्रथमावत् (६.५-६) ॥

॥ दशमी कण्डिका ॥१०॥ ॥

पञ्चम्यामन्तेषाश्विनीवदसपत्नाः ॥१॥ इष्टका उपधीयन्ते · अन्तग्रहणं रेतःसिग्वेलाव्युदासार्थम् · आश्विनीवदिति द्वितीये लोके उपधानम् (८.२) चतसृणाम-

[१] sic!

पि । सं॰ अन्तेष्वनूकान्तेषु · पूर्वासपत्ना प्रागनूकमुत्तरेण द्वितीये लोके　अपरा अनूकं दक्षिणेन द्वितीये लोके　दक्षिणा तिर्यगनूकं पूर्वेण द्विके　उत्तरासपत्ना तिर्यगनूकमपरेण द्विके ।　दक्षिणायोरल्यन्तरम् ॥२॥ पञ्चमी च पक्ष्या भवति प्रागलक्षणा · आश्विनीवदित्यर्धपक्ष्ये मा भूतामिति । सं॰ दक्षिणास्यां दिश्युपधीयमानयोर्दक्षिणापञ्चम्योरसपत्नयोः अरत्निप्रमाणमन्तरालं भवति अतश्च भिन्नयोर्लोकयोरुपधानविधानात् ते द्वे ऽअपि पक्ष्ये भवतः ।　अग्ने जातानिति (१५.१-३) प्रतिमन्त्रम् ॥३॥ असपत्नोपधानम् । सं॰ पञ्चभिर्मन्त्रैः ।

पश्चिमा द्वितीया ॥४॥ उपधीयते ।　विराजो दश-दश प्रतिदिशं पुरस्तात्प्रथममेवश्छन्द इति (१५.४-५) प्रतिमन्त्रम् ॥५॥ बहिर्विराजत्वे च सर्वाः पक्ष्या भवन्ति।

गायत्र्यसपत्ना गणमध्येऽसम्भवात् ॥६॥ गायत्र्य इष्टका असपत्नाश्च विराड्गणस्य मध्ये भवन्ति न हि विराड्गणस्य बहिः सम्भवः । सं॰ विराजश्च प्रान्तऽएव तथोपधेयाः यथा गायत्र्य[ऽ]सपत्नाश्च विराड्गणस्य मध्ये भवन्ति · कुतः　तासां नियतस्थानत्वात् · कथम् ·　उष्णिग्भ्यो वापरा अर्धपक्ष्या उपधाय ॥७॥ उष्णिक्षामत्रानुपदिष्टत्वात्तल्लोकस्यापराः अर्धपक्ष्या विराजो भवन्ति । सं॰ वावधारणे · पुरस्ताद्विराज उष्णिपराः उपहितानामुष्णिहां पश्चात्तस्मिन्नेव लोकेऽर्धपक्ष्या उपधेयाः · एवमुष्णिह्भ्योऽप्यर्धपक्ष्या उपधाय · एवं कृते विराजां व्यवहितोपधानं कृतं न भवति ।　असपत्नास्पृशोऽन्यतोऽन्तराः ॥८॥ सं॰ अन्यतोऽन्यासु तिसृषु दिक्षु विराजोऽस्पृशोऽसपत्नासंलग्ना असपत्नाभ्योऽन्तरा मध्यवर्तिलोकेषूपधेयाः ।

सर्वतोऽषाढविलायाः स्तोमभागा रश्मिना सत्यायेति (१५.६-१) प्रतिमन्त्रम् ॥९॥ उपधीयन्ते । सं॰ सर्वतः सर्वासु दिक्षु ।　पञ्चदश दक्षिणेनानूकम् ॥१०॥ तत्र चानूकमभितोऽर्धपक्ष्ये । सं॰ एतासां मध्ये पञ्च स्तोमभागाः प्रागनूकं दक्षिणेनोपदधाति　अर्थाच्चतुर्दशोत्तरेण प्रागनूकमिति · अत्र विभागः पूरणाकृता कृतः (इष्टकापूरण॰ २.१२-२२) अष्टौ पुरस्तात्स्तोमभागाः पश्चाच्च दक्षिणतः सप्तोत्तरतः शिष्टा इति ।　वेषश्रीः क्षत्राय क्षत्रं जिन्वेति[1] त्रिसप्ततमीमेके ॥११॥ उपदधति　एके नेति (८.५.३.८) ।　पुरीषमास्वावपति मन्त्रेण वा　ताप-

1) Kāṇva, see Vāj. S. pag. ४८७.

श्चितस्य तूष्णीश्रुतेः ॥१२॥ श्रासु स्तोमभागासु पुरीं॰ल्लेपा · कुत एतत्  ता॰तेः तत्र हि श्रूयते (१०.२.५.१३) तूष्णीं मासू स्तोमभागापुरीषमभिहरन्तीति · तेनात्र · मन्त्रवदिति गम्यते । सं॰ वा विकल्पे ॥  ॥ एकादशी कण्डिका ॥११॥  ॥

नाकसदोऽनूकेषु पूर्ववर्जमृतव्याविलायामाश्विनीवद्गाय्यसीति (१५.१०) प्रतिमन्त्रम् ॥१॥ नाकसद इष्टकाः श्रनूकेषूपधीयन्ते । सं॰ श्राश्विनीवदित्यनेन दक्षि॰श्वमीत्ये-तावल्लभ्यते (८.६) श्रन्यस्योक्तत्वात् · पूर्वा तु नानूकस्योपरि  सा तु श्राश्वि-नीवदित्यनूकमुत्तरेण द्वितीये लोके उपधेया · दक्षिणापश्चम्यावर्धपद्मे तिरश्च्या-लिखिते[1] प्रागायते · सर्वाश्चैना श्रर्धोत्सेधाः ।   पुरीषमोप्योपर्ययं पुर इति (१५.१५-१९) पञ्चचूडाः प्रतिमन्त्रम् ॥२॥ उपदधाति · एता श्रप्यर्धोत्सेधाः · पुरीषा-वापश्चोर्ध्वं[2] नाकसत्सु ।   प्रतिदिशं यथालिङ्गम् ॥३॥ सं॰ लिङ्गानतिक्रमेण · यद्दिग्लिङ्गोक्तो मन्त्रस्तस्यां दिशि तेन मन्त्रेणोपदधाति ।   पश्चिमोत्तमा ॥४॥ सं॰ पश्चिमा पञ्चचूडा श्रन्तिमा सर्वासामन्ते ।   छन्दस्यास्तिस्रस्तिस्रोऽनूकान्तेषु पुरस्ताद्गायत्रीरग्निर्मूर्धेति (१५.२०-२२) प्रत्यृचम्[3] ॥५॥ सं॰ वक्ष्यमाणा गायत्र्याद्याः छन्दस्याः एकैकस्मिन्स्थाने तिस्रस्तिस्र उपदधाति ।

उत्तराश्च ॥६॥ चशब्दात्प्रत्यृचम् । सं॰ वक्ष्यमाणाः प्र॰चमुप॰ ।

पुरस्तात्त्रिष्टुभो रेतःसिग्वेलायां भुवो यज्ञस्येति (१५.२३-२५) ॥७॥ प्रतिमन्त्रम् ।

जगतीश्च पश्चादयमिहेति (१५.२६-२८) ॥८॥ चशब्दाद्रेतःसिग्वेलायामेव ।

श्रपरास्ताभ्योऽनुष्टुभः सखायः सं व इति (१५.२९-३१) ॥९॥ जगतीभ्योऽपराः ।

श्रषाढवेलायाः पुरस्ताद्बृहतीरेना व इति (१५.३२-३४) ॥१०॥

भद्रो न इति (१५.३८-४०) ककुभस्ताभ्यो बृहत्यन्तरश्रुतेर्मन्त्रक्रमेण ॥११॥ बृह-तीनां पुरस्तात् बृहतीनामन्तरालश्रुतेः (८.६.२.१०) । सं॰ पुरस्तादित्यनुवर्तते ताभ्यो बृहतीभ्यः पुरस्तात् · मन्त्र॰मेणेति  पूर्वमुष्णिह उपधाय तदनन्तरं ककुभ उपधेया इत्यर्थः ।   उद्धृतान्यपकृष्येछन् ॥१२॥ एवं हि श्रूयते (८.६.२.६) श्रथैतासां ककुभां चत्वारि-चत्वार्यक्षराण्यादा॰सम्पद्यन्तऽइति । सं॰ भद्रा राति॰स्वि-

1) ? पंचम्यर्ध॰ तिरश्चालि॰ Cod. 2) ॰श्चार्थात् हिः K marg. 3) श्रनूकान्ते पुरस्ता-द्गायत्रीति पाठः ३ marg.

रामित्येतान्युद्धृतानि[1] चत्वारि-चत्वार्यक्षराणि भद्रो न इत्याद्यारभ्य इच्छया अपकृष्य तन्मध्ये अपठितैव ककुभामुपधानम् इच्छया नापकृष्य। अपरा गायत्रीभ्य उष्णिहोऽग्ने वाजस्येति (१५. ३५-३७) ॥१३॥ प्रतिमन्त्रमुपदधाति · इदानीं ककुभामुपधानम्। सं° गाभ्योऽपरास्तिस्र उष्णिह उप°। अनूकान्ते दक्षिणे पङ्क्तीरग्निं तमिति (१५. ४१-४३) ॥१४॥ उत्तरे पदपङ्क्तीरग्ने तमद्येति (१५. ४४-४७) ॥१५॥ पुरीषवत्याः पूर्वामतिछन्दसं प्राच्यौ पुरीषसंहिते भद्रा रातिर्वृत्रतूर्येऽवस्थिरामिमᳫं होतारमिति (१५. ४७) ॥१६॥ दक्षिणायोरुत्तरासपत्ना पुरीषवती तस्यां हि पुरीषं विहितम्। भद्रा रातिरित्येवमादिना मन्त्रेण पुरीषवन्दसमुपदधाति · भद्रा रातिरित्येतानि चत्वारि-चत्वार्यक्षराणीति (८. ६. २. ३)। सं° अग्नेः पुरीषमसीति (१५. ३) पुरीषशब्दवता मन्त्रेणोपहिता पञ्चम्यसपत्ना पुरीषवती · तस्याः पूर्वामतिछन्दसमिष्टकामुप° · सा पुरीषवती इयमतिछन्दा एते उभे प्राग्लक्षणे भवतः। अग्ने त्वमित्यनूकान्तेऽपरे द्विपदाः ॥१७॥ उपधीयन्ते। सर्वछन्दस्यास्वभितोऽर्धपद्ये उष्णिहस्तु तिस्रस्तिर्यगर्धपद्याः। मध्येऽष्टेष्टकं गार्हपत्यम् ॥१८॥ अष्टेष्टकमित्युक्तत्वात् अधिका न भवन्ति · गार्हपत्यमिति च नामधेयात् तद्वदेवोपधानमष्टानामपि · तथा चाह तं वा एतैरेव यजुर्भिश्चिनोतीति (८. ६. ३. ७) · इयांस्तु विशेषो ऽर्धबृहतीनां स्थानेऽर्धपद्याः (इष्टकापू° २. ७)। सं° मध्ये आत्मनि अष्टेष्टकमुपदधाति · तेन मध्ये चतस्रोऽर्धपद्यास्तासां पश्चाद्द्वे तिरश्च्यौ पादमात्र्यौ पुरस्ताच्च · तेनैवायᳫं सोऽइत्यादिभिर्मन्त्रैः (१२. ४७) तद्वदेवाष्टानां चयनम्[2]। पुनश्चितिं चोपरि तद्वद्येनऽऋषय इति (१५. ४३) प्रत्यृचम् ॥१९॥ तस्यैव गार्हपत्यस्योपरि तद्वदेव पुनश्चितिमुपदधाति · इयांस्तु विशेषः येनऽऋचम् · अस्मिंश्च पक्षे अर्धोत्सेधा इष्टका भवन्ति उत्सेधयोगात्। सं° तद्वत् गार्हपत्यवदेव · पुनश्चितेर्गार्हपत्यस्योपरि चयनविधानात् गार्हपत्येष्टकाः पुनश्चितेरिष्टका अर्धोत्सेधा भवन्ति। पुच्छसंधावेके ॥२०॥ पुनश्चितिमुपदधाति · इयांस्तु विशेषः ताᳫं हैके जघनदधतीति (८. ६. ३. ११) श्रुतेः · अस्मिंश्च पक्षे द्विपदा अर्धोत्सेधाः। पूर्वार्धे वा ॥२१॥ पुनश्चितिमुपदध्यात् · अत्र यथासम्भवमर्धोत्सेधाः।

---

[1]) sic! the text (१५. ४०.) has स्थिरा, not स्थिराम्. [2]) See १७. १. ८. ff.

गार्हपत्यं पुच्छसंधौ कृत्वा ॥२२॥ तद्धैके जघनार्धे पुनश्चितिमिति (८. ६. ३. १४) श्रुतेः। सं° अथवा गार्हं°धौ कृत्वा उपधाय पूर्वार्धे गायत्र्युष्णिग्विराट्ककुभामुपरि पुनश्चिति-मुपदध्यात् । ऋतव्ये तपश्च तपस्यश्चेति (१५. ५७) ॥२३॥ विश्वज्योतिषं परमेष्ठी त्वेति (१५. ५८) ॥२४॥ दक्षिणांसात्प्रत्यगरत्निमात्रादधि लोकम्पृणाः पूर्ववत् ॥२५॥ सं° आत्मनो दक्षिणांसादाग्नेयकोणात्प्रत्यगपरस्यां दिशि अर°दधि अन्तिमपश्चालोकं परित्यज्य तृतीयपश्चालोकादारभ्य पञ्चम्यां चितौ लो°णा उपदधाति · पूर्ववदिति प्रथमचित्युक्तप्रकारेण तेनात्रापि प्रथमं द्वे ततो दश अरत्निमात्रादारभ्य आ मध्यात्प्र°शेषमिति (६. ५-६) । प्रच्छाद्य पुरीषेण वि-कर्णीस्वयमातृण्णे शर्करे सस्पृष्टे छिद्रे प्रोथदश्व इत्युत्तरां (१५. ६३) विकर्णी-मायोष्ट्वेति (१५. ६३) स्वयमातृण्णाम् ॥२६॥ शर्करे छिद्रे इति च विकर्ण्यर्थमुच्यते। सं° पुरीषेण पञ्चमीं [चितिं] प्रच्छाद्य वि°ण्णे उप° · किंलक्षणे शर्करे तथा संस्पृष्टे परस्परसंलग्ने तथा छिद्रे छिद्रवत्यौ[१] · तयोर्मध्ये विकर्णीमुत्तरामनूक-रेखात उत्तरस्यां दिशि उदगनूकरेखामध्ये उपदधाति । सकृन्नित्ये ॥२७॥ सादनसूददोहसौ सकृदेव चोदनाऽभेदाद्ब्रवतः । पुरुषाभिहोमवत्तिष्ठन्नग्निं प्रोक्षति हिरण्यशकलसहस्रेण शते द्वे-द्वे प्रकिरति सहस्रस्येति (१५. ६५) प्रति-मन्त्रम् ॥२८॥ सं° अथैनं हिरण्यशकलैः प्रोक्षतीति (८. ७. ४. ७) सहस्रस्य मध्या-द्वे-द्वे शते प्रकिरति (°१) ॥ ॥ द्वादशी कण्डिका ॥१२॥ ॥

इति कात्यायनसूत्रभाष्ये कर्ककृतौ सप्तदशोऽध्यायः ॥

इति कात्यायनसूत्रे सप्तदशोऽध्यायः ॥१७॥ ॥

---

शतरुद्रियहोम उत्तरपक्षस्यापरस्यां स्रक्त्यां परिश्रित्स्वर्कपर्णेनार्ककाष्ठेन शातय-न्संततं जर्तिलमिश्रान्गवेधुकासक्तूनजाक्षीरमेके तिष्ठन्नुदङ्नमस्तऽइत्यध्यायेन (१६. १-६६) ॥१॥ शतरुद्रियमिति नाम अथातः°तीति (९. १. १. १)। स च उत्तर°श्रित्सु कर्तव्यः · परिश्रित आहवनीयकार्ये । अर्कपर्णं जुहूः कार्ये अर्कपर्णेन जुहोतीति (°४) · काष्ठमपूर्वत्वादुपकल्पनीयम् तेन शातयन् · संततमविच्छिन्नम् · जर्ति°क्तून्

---

१) वती Cod.

ज्ञर्तिर्लिर्ज्जुहोति (°३) तथा गवेंऽहोतीति (°८) विकल्पे प्राप्ते शाखान्तरात्समुच्चयः तेन ज्ञर्तिंश्रानित्युक्तम् · श्रज्ञाके श्रज्ञाज्ञीरेणैके जुह्वति शाखान्तरात् · तिष्ठन्नुदङ् जुहोतीति जुहोतौ सति तिष्ठति-क्रिया वाचनिकी उदङ्गिति दिङ्गियमार्थम्। नमस्तऽध्यायेन मन्त्रद्रव्यं संततं जुहोति · बहूनि चैतानि कर्माणि श्रूयन्ते षष्टिश्च ह वै त्रीणिऽशतानि षट्त्रिंशदिति (°३३) · एतावन्तो द्रव्यदेवतासम्बन्धाः · एवं च सति एतावन्ति चतुर्मुष्टिकानि गृह्यन्ते श्रज्ञाज्ञीरपते चैतावन्त एव षड्वर्गाः। सं° श्रग्नेः प्रोक्षणानन्तरं तदानीमेव शतरुद्रियसंज्ञको जुहोतिर्भवति · श्रपऽक्यां पश्चिमकोणे याः परिश्रितो जङ्घामात्र्यादयः सन्ति तासु कर्तव्यः समुदितानामेवाहवनीयकार्यत्वम् नैकस्याः · श्रत्र ज्ञऽश्रान् श्रारण्यतिलमिश्रान् गऽक्तून् कशकुसक्तून् श्रर्ककाष्ठेन शातयन् श्रनवरतं ज्ञारयन् जुहोति · श्रज्ञाके श्रज्ञाज्ञीरमत्र जुहोति न पूर्वोक्तान् · उदङ्मुखस्तिष्ठन्जुहोति। त्र्यनुवाकान्ते (१६.२६) स्वाहाकारो ज्ञानुमात्रे ॥२॥ (१.१.१.११) वचनात्। पञ्चान्ते (१६.३६) च नाभिमात्रे ॥३॥ पञ्चानुवाकान्ते नाऽत्रे चशब्दात्स्वाहाकारः। सं° नमस्त[ज्ञभ्य]ऽइत्यादिभिः पञ्चभिरनुवाकैः। प्राङ्क प्रत्यवरोहेभ्यो मुखमात्रे ॥४॥ स्वाहाकारः। सं° नमोऽस्तु रुद्रेभ्य इत्यादयो (१६.६४) मन्त्राः प्रत्यवरोहसंज्ञकाः · तेभ्यो मन्त्रेभ्यः प्राक् मुखे जुहोति। प्रतिलोमं प्रत्यवरोहान्जुहोति प्रमाणेषु नमोऽस्त्विति प्रतिमन्त्रम् ॥५॥ प्रातिलोम्यं च प्रथमं·मुखमात्रे ततो नाभिमात्रे पुनर्ज्ञानुमात्रऽइति। हवने प्रास्यति चावाले ॥६॥ श्रर्कपर्णार्ककाष्ठेऽइत्यर्थः · श्रागन्तुवाच्च कर्मापवर्गान्ते। सं° ह्रूयतऽश्राभ्यामिति हवने· श्रर्कपर्णार्ककाष्ठे ॥ ॥ प्रथमा कण्डिका ॥१॥ ॥

चित्यं परिषिञ्चत्यग्नीद्दक्षिणे निकक्षेऽद्रिं कृत्वाश्मन्नूर्जमित्यद्रेरधि (१७.१) ॥१॥ चित्यमग्निमग्नीत्परिषिञ्चेत् · श्रद्रेरारभ्य। सं° दक्षिणपक्षस्यापरसंधिसमीपवर्तिन्यात्मभागेऽद्रिं कृत्वा · उदकुम्भमादाय। श्रश्मंस्ते जुदित्यद्रौ (१७.१) कुम्भं कृत्वा मयि तऽऊर्गित्यादयैवं द्विरपरम् ॥२॥ परिषिञ्चति। तावत्प्रतिपर्येति ॥३॥ (१.१.२.६)। कुम्भेऽद्रिं कृत्वा दक्षिणस्यां वेदिश्रोणौ प्राङ् तिष्ठन्दक्षिणास्यति यं द्विष्म इति (१७.१) ॥४॥ श्रभिन्ने भेत्तवै ब्रूयात् ॥५॥ (१.

१. २. १२) · तच्च प्रतिप्रस्थाता भेदने तु प्रधानत्वादध्वर्युः । अत्रैतच्चिन्त्यते · किं कुम्भविषयमेतद्भेदनम् उताद्रिविषयमिति · किं तावत्प्राप्तम् · सूत्रेणैवोपक्रमः ·

कुम्भे भेदनꣳ सामर्थ्यात् ॥६॥ कुम्भविषयमेतद्भेदनम् नाद्रिविषयम् · कुत एतत् · एवमेतद्वचनं समर्थं भवति यदि न भिद्येत भेत्तवै ब्रूयादिति अद्रौ त्वसमर्थमेव न हि तस्य कठिनत्वाद्भेदनमाशङ्क्यते · एवं प्राप्तऽआह · अश्मनि वार्थवादात् ॥७॥ वाशब्दः पक्षव्यावृत्तौ · अश्मनि वैतद्भेदनं प्रतिपत्तव्यम् न कुम्भविषयम् कुत एतत् अर्थवादात् यदा ह्येव॰ शुगृच्छति यं द्वेष्टीति (६. १. २. १२) सा च शुगश्मनि निहिता तदश्मनि शुचं दधातीति । सं॰ वाशब्दोऽवधारणे · अश्मन्येवाभिन्ने अयं भेत्तवाऽइति प्रैषः न कुम्भे · वाक्यशेषात् यदा॰द्वेष्टीति ।

वाच्यत्वाच्च ॥८॥ अपि चाश्मन्येव वाच्यं भेदनम् न कुम्भे स ह्यसमर्थः क्षिप्तोऽवश्यमेव[1] भिद्यतऽइति । अनपेक्षमेत्योदङ् प्राङ् तिष्ठन्नात्मन उपरि प्रापणान्ते जपतीमा मऽइति (१७. २) ॥९॥ आत्मा चात्राग्न्यात्मोच्यते । सं॰ ततो यजमानोऽनपेक्षमेत्यात्मनो दक्षिणश्रोणिसमीपे उदङ् प्राङ् इत्यैशानदिगभिमुखस्तिष्ठन् उपरि हस्तं प्रलम्बं प्रसार्य प्रापणान्ते यत्र प्राप्नोति चयनप्रदेशं स्प्रष्टुं यत्र शक्नोति तत्र स्पृष्ट्वा जपति । मण्डूकावकावेतसशाखा वेणौ बद्ध्वावकर्षति मल्लकृष्टवत्समुद्रस्य त्वेति (१७. ४-७) प्रत्यृचम् ॥१०॥ मण्डूकादीन्वेणौ बद्ध्वाग्निं विकर्षति मल्ल॰वत् क्रमेण । सं॰ मल्ल॰वदिति (१७. २. १२) दक्षिणश्रोणेरारभ्य दक्षिणांसं यावत् भूमिसंलग्नान्येव कर्षति । पक्षपुच्छानि चाभ्यात्ममग्ने पावक रोचिषेति (१७. ८-१०) ॥११॥ अग्न्यात्मानमाभिमुख्येन प॰नि विकर्षति अग्ने॰षेति प्रत्यृचमेव । अन्त्यमुत्तरम् ॥१२॥ पक्षम् । वेणुमुत्करे कृत्वा चित्यमालभ्य तिष्ठन् ॥१३॥ ॥ द्वितीया कण्डिका ॥२॥ ॥

हिङ्कृत्य साम गायति ॥१॥ सामगानमुद्गातुः स्यात् समाख्यानात् अध्वर्योर्वा वचनसामर्थ्यात् नान्योऽध्वर्योर्गायेदिति (१. १. २. ४३) · समाख्यानमध्वर्योरेव विधानानुसारिणी हि समाख्या विधानं चाध्वर्यववेदविहितम् अथैनꣳ॰परिगायतीति (॰३२) एवं च नान्योऽ॰गायेदित्यनुवाद एव । पुरस्ताद्गायत्रम् ॥२॥ साम

[1]) ?? ह्यसमर्थः क्षिप्रोवस्य॰ K. ह्यसमा॰ sec. m.

गायति । दक्षिणे पक्षे रथन्तरमुत्तरे बृहदात्मनि वामदेव्यं पुच्छे यज्ञायज्ञियं दक्षिणे निकक्षे प्रजापतिहृदयमग्न्युक्थ७ शश्सेत्याह ॥३॥ होतुः प्रेषणम् । सं॰ दक्षिणनिकक्षे दक्षिणपक्षस्यापरसंधिसमीपस्थे आत्मप्रदेशे · अध्वर्युर्होतारं प्रत्याह ।

औपवसथ्ये विसृष्टवाचि पञ्चगृहीते हिरण्यशकलान्प्रास्यति पञ्च ॥४॥ (१.२.१.१)। सं॰ औ॰थ्ये उपसदामन्तिमेऽग्नीषोमीयेऽहनि · वाग्विसर्गे कृते । दधिमधुघृतं पात्र्या७ समासिच्य स्थाल्यां वा महामुख्यां कुशमुष्टिं चोपर्युभयमादाय चित्यारोहणं नमस्तऽइति (१७.११) ॥५॥ दध्यादीन्पात्र्यां प्रास्य म॰ख्यां वा स्थाल्याम् तदुपरि च कु॰ष्टिम् उभयं गृहीत्वा चित्यमारोहेत् । स्वयमातृण्णायां पञ्चगृहीतं जुहोति नाभिवद्धिरण्यादर्शनं च नृषदे वेडिति (१७.१२) प्रतिमन्त्रम् ॥६॥ नाभिव्याघारणवत् · हिरण्यदर्शनं च न भवति । सं॰ नाभिवदिति दक्षिणेऽ७से॰ मध्ये चेत्येतावल्लभ्यते (५.४.२४) । समासिक्तान्कुशैः प्रोक्षति सपरिश्रित्कं बाह्येन च ये देवा इति (१७.१३) ॥७॥ सर्वतः समुक्षत्यपि बाह्येन परिश्रित इति (१.२.१.१२) श्रुतेः । प्राणदा इत्यवरोहति (१७.१५) ॥८॥

एवमारोहणावरोहणामतः ॥९॥ अत ऊर्ध्वमेवमेवारोहणावरोहणे कार्ये । सं॰ अतः परमस्याग्नेरारोहणमवतरणं च एवमेव सर्वैः कर्तव्यम् । उपसदन्ते प्रवर्ग्योत्सादनं यथोक्तमग्नौ परिष्यन्दे वा ॥१०॥ वाशब्दो विकल्पार्थः · विकल्पेन हि श्रवणमत्र । सं॰ अग्नौ इष्टकाचितेः स्थलरूपे · परिष्यन्दे यस्य परितः आपः स्यन्दन्ते परिगच्छन्ति परिष्यन्दो द्वीपः जलमध्यस्थो जलानाच्छादित उच्चप्रदेशः ।

स्वयमातृण्णास्पृष्टं प्रथमम् ॥११॥ अग्निपक्षे स्वयमातृण्णया॰त्सादयतीति वचनात् (१.२.१.२३) । पञ्चगृहीतं जुहोत्यग्निस्तिग्मेनेत्यृचा (१७.१६) षोडशगृहीतार्धमनुवाकशेषेण (१७.१७-२४) ॥१२॥ पुनः षोड॰हीतं गृहीत्वा तदर्धमनु॰षेणाष्टाभिर्ऋग्भिर्जुहोति । सं॰ शालाद्वार्येऽग्नौ । चक्षुषः पितेत्यनुवाकेनाष्टाभिर्ऋग्भिः · सर्वाणि चैतानि शालाग्नौ जुहोति । आर्द्रौदुम्बरीर्घृतोषितास्तिस्र उदेनमित्यादधाति (१७.५०-५२) प्रत्यृचम् ॥१४॥ औ॰रीः समिधः घृते न्युत्ताः सर्वा रात्रिमुषिताः । वैकृतावसरे प्राकृतानुवृत्त्यर्थमाह (५.४.२) ·

अग्निं प्रणयति ॥१५॥ तत्र विशेषमाह · प्रेष्यत्युच्चैरिध्ममुपयच्छोपयमनीः

॥१६॥ अयं च प्रैषः प्रतिप्रस्थातुः तदर्थोऽध्वर्योः। अग्नये प्रक्रियमाणाया-नुब्रूह्यग्नीदेकस्फ्ययानूद्देहि ब्रह्मन्नप्रतिरथं (१७.३३-४४) जपेति (१.२.३.१) ॥१७॥ च प्रेष्यति। त्रिरुक्तायामुद्यम्योद्व लेति (१७.५३) चित्यं गच्छन्ति पञ्च दिश इति (१७.५४) ॥१८॥ त्रिरुक्तायां होत्रा प्रथमायामृचि उद्व लेत्युद्यम्याग्निं चित्यं प्रति गच्छन्ति। आग्नीध्रदेशाद्दक्षिणं पृष्ठ्यासक्तिं पृश्न्यश्मानमुपदधाति विमान इति (१७.५९-६०) ॥१९॥ सं° पृश्न्य°नं तनु वृत्तं पाषाणं विचित्रवर्णं वा। न नि-त्ये ॥२०॥ नित्ये सादनसूददोहसी न भवतः · इष्टकासंस्तवात्प्राप्तयोर्निषेधः। निधायैनमतिक्रामन्तीन्द्रं विश्वा इति (१७.६१-६४) ॥२१॥ (१.२.३.१९-२०)। सं° चयनं प्रति गच्छन्ति ॥ ॥ तृतीया कण्डिका ॥३॥ ॥

क्रमध्वमग्निनेति (१७.६५-६९) चित्यमारोहन्ति ॥१॥ अतश्च नमस्तेऽइत्ययं नि-वर्तते[1]। स्वयमातृण्णामध्यग्निं धारयञ्जुह्वत्प्तापयसाभिजुहोति कृष्णाया दोहनेन स्वयमातृण्णामवसिञ्चन्नक्तोषासेति (१७.७०) ॥२॥ स्व°ण्णाया उपरि धारयन्न-ग्निम् कृष्णायाः गोः शु°त्तायाः पयसा दोहनेनाभिजुहोति स्वयमातृण्णामवसिञ्चन्। अयं जुहोतिस्ततश्च सांनाय्यधर्माः प्रवर्तन्ते जुहोतिवान्मन्त्रवर्णम् · दोहनस्य जुहूकार्यापत्तिरतश्च तद्धर्मा भवन्ति · महावेदेश्च संमर्शनान्ता धर्माः कृताः तत उत्तरपरिग्रहाद्यत्र कर्तव्यम् शतरुद्रिये तु खननादि। सं° स्व°ण्णाया उपरि प्रति-प्रस्थाता[2] तमिध्माग्निं धारयन् मृन्मयेन पात्रेण जुहूस्थानीयेन[3] जुहोति। पैतुदारवाण्यत्रैके ॥३॥ एके प्राञ्चयि गृह्णामीति (१३.१) जपात् · तत्र व्युत्क्रमा-चार्येण (१७.३.२७) उत्तरवेदिं°कृतेति · यद्येवम् इह कस्मात्सम्भारनिवापः[4] अग्न्यर्थत्वात् · यद्येवम् इहैव सम्भारनिवापः[4]। तस्यामग्निं निदधाति सुप-र्णोऽसीति (१७.७२) वषट्कारेण ॥५॥ तस्यां स्वयमातृण्णायाम् · सु°सीत्यनेन मन्त्रेण वषट्कारान्तेन। नित्ये च ॥५॥ अत्र भवतः · इष्टकासंस्तवादग्नेः।

समिदाधानं शामीलीवैकङ्कत्यौदुम्बर्यस्ताः सवितुरिति (१७.७४-७६) प्रत्यृचमु-त्तमा सकर्णका ॥६॥ सं° उत्तमा तृतीयौदुम्बरी समित्सकर्णका भवति · कर्ण-को दारुस्फोटो रोगस्तद्वती सकर्णका इति केचित्। कर्णकाभावे दधिद्र-

1) See ३.५ and ३. 2) °स्थात्रा Cod. 3) जुह्वास्था° Cod. 4) निर्वा° K.

प्सात्ताः ॥७॥ कर्तव्या[ः] । सं॰ घनीभूतं दधि द्रप्स इत्युच्यते । स्रुवाहुती जुहोत्यग्ने तमद्येति (१७. ७७-७८) च प्रत्यचम् ॥८॥ पूर्णाहुतिं च सप्त तऽइति (१७. ७९) ॥९॥ सं॰ तृतीयामाहुतिं स्रुचा पूर्णां जुहोति · पूर्णया स्रुचा आहुतिः पूर्णाहुतिरिति । तिष्ठन्त्समिधः सर्वत्र मध्ये ॥१०॥ सर्वत्रग्रहणात् समिदुद्देशेन विहितत्वात् तिष्ठति-क्रिया सर्वत्र भवति · समिदाधानग्रहणादाहुत्योर्मध्ये अन्त्येऽन्तीरिति (११) सूत्रितत्वात्[१] । अन्तेष्वाहुतीरुपविश्य ॥११॥ तिष्ठति-क्रियानन्तर्यादुपविश्येत्युच्यते । सं॰ अन्तेषु समित्प्रान्तेषु । अत्र पञ्चम्याः सप्तर्चोपस्थानं सर्वोपधानात् ॥१२॥ अस्मिन्नवसरे पञ्चम्याः चितेः सप्तऽनं कर्तव्यम् · अत्र हि सकला पञ्चमी चितिरुपहिता भवति । धिष्ण्यान्वा चित्योत्तमासंयोगात् ॥१३॥ अथवा धिष्ण्यांश्चित्वा सप्तर्चोपस्थानं कर्तव्यम् · कुत एतत् धिष्ण्यानां हि पञ्चम्याश्चितेः अन्तर्भावः · तस्मात्तत्रैव युक्तरूपमुपस्थानम् । सं॰ पञ्चम्याश्चितेः सप्तर्चोपस्थानमत्रास्मिन्नवसरे कर्तव्यम् न ततः प्राक् · कुतः धिष्ण्येष्टकानामुत्तमऽगात् पञ्चमीसम्बन्धात् । अभिमृशेदिद्धन्त्संवत्सरोऽसीति (२७. ५४) ॥१४॥ अग्निम् । एवं यथाचिति ॥१५॥ संमर्शनं कर्तव्यम् · यन्नामा चितिस्तदभिधायकेन मन्त्रेण । सं॰ संवत्सरोऽसीति मन्त्रस्य मध्ये सुपर्णचिदसीति पठितमस्ति · तेन तत्पदं सुपर्णचितिपक्षे एवमेव प्रयोज्यम् · द्रोणचिदादिपक्षे यथाचिति । वैश्वानरमारुतान्निर्वपति यथोक्तम् ॥१६॥ वैश्वानरश्च मारुताश्च वैऽरुताः तान्निर्वपति · यथोक्तग्रहणाच्च वैश्वानरो यजतिः मारुता जुहोतयः · तत्कथम् वैश्वानरं हि प्रकृत्याह (९. ३. १. २६) तं वाऽएतं पुरोनुवाक्यवत्तं जुहोतीति यजतीनां ह्येष धर्मः पुरोऽनुवाक्याद्यभिधानाच्च यावदुक्तः स्यात् · तथा मारुतान्प्रकृत्याह (१६) हस्तेनैवेतरानासीनः स्वाहाकारेणेति जुहोतीनां ह्ययं धर्मः · कपालसंख्यार्थं च यथोक्तग्रहणम् वैश्वानरस्य हि द्वादशकपालता पठ्यते मारुतानां सप्तकपालता । सं॰ यथोक्तमिति यथा ब्राह्मणे उक्तम् तथेत्यर्थः · वैश्वानरोऽडाशः मारुताः सप्तकपालाः पुरोडाशा भवन्तीति ।

वैश्वानरमधिश्रित्य दक्षिणोत्तरौ मारुतौ ॥१७॥ अधिश्रयति[२] · अपरोक्तमुत्तरमित्यस्यापवादोऽयम् (१. १०. ५) । पश्चाच्च संकृष्टतरौ ॥१८॥ चशब्दाद्दक्षिणो-

---

१) See schol. at ४. १२. १३ १४. २३. २) °अपयति K.

तत्रावधिश्रयति । एवमपरौ ॥१९॥ द्वावधिश्रयतीति शेषः · एवंशब्देन च दक्षिणोत्तरता संकृष्टतरता च लभ्यते । पश्चादरण्येऽनूच्यम् ॥२०॥ अरण्ये ऽनूच्यं च पुरोडाशं पश्चादधिश्रयति । सं॰ अरण्ये ऽनूच्यः वक्तव्यः पठनीयो मन्त्रो यस्यासौ अरण्यः · उग्रश्च भीमश्चेत्ययं मन्त्रो (३९. ७) नियतमरण्ये पठ्यते · तत्सम्बन्धात्सप्तमो मारुतः पुरोडाशोऽप्यरण्य इत्युच्यते । होमासादनयोश्च ॥२१॥ चशब्दादयमेव विधिः । सं॰ मारुतानां होमऽआसादने चायमेव विधिर्भवति ·।

पुच्छादपरान्कुशानास्तीर्याहवनीयसंहितान्वा तत्रासादनम् ॥२२॥ कुर्येति प्राकृतमेव परिस्तरणमनूद्यते · प्रदेशविधानाय पुच्छानिति कुत एतत् सपुच्छो ऽयमाहवनीय इति प्रकृतौ चाहवनीयमपरेण स्तरणं वृत्तम् इहापि तथैव कर्तव्यम् · आहंहितान्वेति कुत एतत् आहवनीयशब्दो ह्यग्न्यभिधायक उपचारवृत्त्या स्थले वर्तते तस्मादाहंहितानिवेत्यवधार्यते · तत्रासादनं कर्तव्यम् ।

वैश्वानरेण प्रचर्य सर्वहुतेन हस्तेन मारुतान्जुहोत्युपविश्य वैश्वानरे वा वैश्वानरं पृथुं कृत्वा शुक्रज्योतिरिति (१७. ८०-८५) प्रतिमन्त्रम् ॥२३॥ मारुतान्जुहोति · विकल्पश्चायम् वैश्वानरे होमो ऽग्नौ वेति । सं॰ अथवा वैश्वानरं पृथुं कृत्वा पूर्वं वैश्वानरस्योपरि जुहोति । विमुखेनारण्येऽनूच्यम् ॥२४॥ अरण्यं पुरोडाशं विमुखेन जुहोति · विमुखश्चाध्येतॄणां प्रसिद्धः उग्रश्च भीमश्चेति (१७. ८६ ३९. ७) । सं॰ अरण्यं सप्तमं मारुतं विमुखेन उग्रश्चेति मन्त्रेण जुहोति ।

इन्द्रं दैवीरिति (१७. ८६) जपति ॥२५॥ आगन्तुत्वादन्ते । इमं स्तनमिति (१७. ८७-९९) वाचयति वा ॥२६॥ जपति वेति विकल्पः । वैश्वानरमारुतानामेकतन्त्र्यम् तत्र च यः साधारणः पदार्थः स मन्त्रवान्कर्तव्यः · मारुतानां हि पदार्थमात्रेण प्रयोजनम् समन्त्रकोऽपि पदार्थः पदार्थ एवेति ॥ ॥ चतुर्थी कण्डिका ॥४॥ ॥

वसोर्धारां जुहोत्यौदुम्बर्या पञ्चगृहीतं संततं यजमानोऽरण्येऽनूच्ये ऽग्निप्राप्ते वाजश्च मऽइत्यष्टानुवाकेन (१८. १-२९) ॥१॥ वसोर्धारेति कर्मनामधेयम् तच्च समुदायस्य एवं हि श्रूयते (९. ३. ३. १८) षष्टिश्च ह वैंपञ्चत्रिंशदिति अत्र च यदन्तरितम् तस्यावृत्तिर्भवति · औदुम्बर्या स्रुचा पञ्चगृहीतमाज्यं जुहोति यजुंच्ये अग्नौ

प्राप्ते · संततमिति च द्रव्यसंततम् मन्त्रसंततम् · अत्र च श्रूयते (१.३.२.८) अष्टासु कल्पयति दशसु कल्पयतीत्येवमादिना वाक्यपरिसमाप्तिः प्रतिवाक्यं च स्वाहाकारकरणम् · अत्र च देवतापदान्तराये पञ्चगृहीतमेव सकलवाक्येन होतव्यम् न ह्यन्यथैतद्दृष्टमिति । सं॰ अरण्येऽनूच्ये पुरोडाशेऽधिकरणभूते अग्निप्राप्ते घृतधारायां होममन्त्रस्य प्रारम्भः कार्यः । हुत्वा स्रुक्प्रासनम् ॥२॥ तच्चाग्नौ · एवं हि श्रूयते (१.३.३.१४) अत्र ता॰ द्धविर्धाग्नेरसदिति । अग्नये स्वाहेति (१०.५) षट् पार्थानि जुहोति ॥३॥ तानि च राजसूयिकानि तत्राम्नानात् · इह च श्रूयते (१.३.४.८) स वै राज॰ जुहोति । वाजप्रसवीयानि वप्रावत्सम्भृत्य चमसवत्स्रुवेण वाजपेयिकानि वाजस्येममिति (१.२३-३०) ॥४॥ वा॰वीयानीति नामधेयम् · विध्यर्थवादमन्त्रत्वासम्भवात् · समुदायनामधेयं चैतत् सप्त ह्येतानि कर्माणि वाजपेयिकानि प्रयोजनम् अन्यतमापाये तस्यैवावृत्तिः । तानि च वप्रा॰वेण वप्राशब्देनाग्निक्षेत्रकेदाराभिधानम् तद्वदत्रापि सम्भृत्य चमसवच्चतुःस्रक्तिना स्रुवेण वाजपे॰ममिति प्रतिमन्त्रं जुहोति · वाजपेयिकग्रहणाच्च अप्ययसी प्रक्षिप्येते एवं तत्राचार्येणाभिहितम् (१४.५.२०-२१) औदुम्बरे॰यावत्स्मृति वेति · एवं सति सप्त षड्वर्गाः सप्त चतुर्मुष्टिकान्युदादेयान्यापश्चेति । सं॰ जुहोतीति शेषः · तत्र वप्रावत् सर्वौषधमौदुम्बरे चमसे सम्भृत्य चमसव[दि]त्यौदुम्बरेण चतुःस्रक्तिना सप्त जुहोति · वप्रावदित्यग्निक्षेत्रवपनवदित्यर्थः तत्र यथौदुम्बरे चतुःकोणे सर्वौषध॰भोजनमित्येतावल्लभ्यते (१७.३.६-७) । आग्निकानि च वाजस्य न्विति (१८.३०-३६) ॥५॥ आ॰नि च वाजप्रसवीयानि वा॰न्विति प्रतिमन्त्रं जुहोति · आग्निकेष्वपि सप्तैव सर्वौषधस्य च चतुर्मुष्टिकानि । स्रुवं प्रास्य परिश्रित्स्पृक्कृष्णाजिनमास्तीर्य पुच्छादुत्तर॰ शेषेऽपः कृत्वा ॥६॥ अभिषिञ्चतीति सूत्रशेषः · स्रुवमग्नौ प्रास्य तदन्ते परिश्रित्संलग्नं पुच्छादुत्तरतः कृष्णा॰र्थं · हुतशेषेऽपः कृत्वा[1] कुत एतत् · अभिषेकसामर्थ्यात् ॥७॥ अन्यथाभिषेक एव न भवति । सं॰ अभिषेकस्य द्रवद्रव्यसाध्यत्वात् केवलेन सर्वौषधशेषेण तदसम्भवात् सामर्थ्याच्छेषेऽपामासेकं कृत्वा सोदकेन शेषेणाभिषेकः कर्तव्यः · इति पूर्वपक्षः · अथ सिद्धान्तः ·

१) सर्वौषधशेषे उदकमासिच्य Ss.

क्षीरोदके वा वाजपेयिकानीति श्रुतेः ॥८॥ येन क्षी॰के वाजपेयिकशेषे वि-द्यते ऽ एव अतश्चाभिषेकोऽपि सम्भवत्येव । सं॰ वाशब्दः पूर्वपक्षनिरासार्थः नैव शेषेऽपामासिकः कार्य इति · यतः शेषमध्ये क्षीरोदके विद्यते · कुतः वा॰तेः अत्र वाजपेयिकानि वाजप्रसवीयानि[1] जुहोतीति श्रवणात् तत्र च नामधेया-त्क्षीरोदके स्त एव । तत्राभिषिच्यते ब्रह्मवर्चसकामश्चित्यन्वारब्धो देवस्य त्वेति (१८. ३७) ॥९॥ तत्र कृष्णाजिनेऽभिषिच्यते यजमानः · ब्रह्मवर्चसकामस्य च कृष्णाजिनेऽभिषेकः वचनात् (१. ३. ४. १४) । तिष्ठन्बुभूषुः ॥१०॥ भूतिमिच्छं-स्तिष्ठन्नभिषिच्यते । भूत उपविष्टः ॥११॥ प्राप्तभूतिरुपविष्टोऽभिषिच्यते । सं॰ प्राप्तभूतिकः ग्रामादीश्वरः । बस्तचर्मणि पुष्टीक्षुः ॥१२॥ पुष्टिमिच्छन् । सं॰ बस्तो मक्षा[ज]स्तस्य चर्मणि । उभयेक्षुरुभयोः ॥१३॥ यो नाम पुष्टिब्रह्म-वर्चसे ऽउभे ऽअपीच्छति स उभयोश्चर्मणोर्व्यवस्थितोऽभिषिच्यते । एके दक्षि-णातश्चित्ये वा ॥१४॥ (१. ३. ४. ११ १२) । सं॰ एके यजमानं चित्यस्य दक्षिणतोऽव-स्थितमभिषिञ्चन्ति चित्ये वा । प्रास्य चमसमिन्द्राय स्वाहेति (१०. ५) षड्जु-होति प्रतिमन्त्रम् ॥१५॥ अग्नौ प्रास्य चम॰हेति षट् पार्थानि जुहोति · एतान्यपि राजसूयिकानि · ततश्च पूर्वपार्थान्यसंस्कारोऽत्रापि भवति । द्वादशगृहीतं विग्राहं जुहोत्यृताषाडिति (१८. ३८-४३) प्रतिस्वाहाकारं राष्ट्रभृतो वाट्कारान्तः पूर्वः-पूर्वो मन्त्रः ॥१६॥ द्वा॰तमाज्यं विगृह्य-विगृह्य जुहो॰कारं राष्ट्रभृत्संज्ञका-न्होमान् · तत्र च वाट्का॰न्तो भवति उत्तरस्तु स्वाहाकारान्तः (१. ४. १. ४-६) । सं॰ विगृह्य-विगृह्य विभज्य-विभज्य द्वादशं द्वादशमंशं[2] जुहोति । पञ्चगृहीतं च रथशिरस्यध्याहवनीयं ध्रियमाणे पञ्चकृत्वः स नो भुवनस्येति (१८. ४४) ॥१७॥ पञ्च॰तमाज्यम् · अत्र विशेषमाह · । सं॰ आहवनीयस्योपरि केनचित्पुरुषेण ध्रि-यमाणे धार्यमाणे रथशिरसि जुहोति । प्रदक्षिणं रथनीडपरिहारः ॥१८॥ (१. ४. १. १४) । सं॰ प्रतिहोमं प्र॰णं रथनीडस्य परिहारः कर्तव्यः सर्वतः सर्वासु दिक्षु परिहारं परिहृत्य-परिहृत्य परिणीयेत्यर्थः । पुरुषाकृतिवद्वा ॥१९॥ वेति विकल्पः । पक्षद्वयेऽपि · अध्वर्युरभिमुखो रथशिरः ॥२०॥ जुहोति ।

1) ? ॰सवानि Cod. 2) द्वादशंशं Ss.

सं॰ रथशिर इति द्वितीयैकवचनम् ॥ ॥ पञ्चमी कण्डिका ॥५॥ ॥

वातहोमान्नुहोत्यञ्जलिनाहृत्य पुरस्ताद्वेदेरधो दक्षिणस्यां धुर्युत्तरत उत्तरस्यां दक्षिणतो दक्षिणाप्रष्टेः समुद्रोऽसीति (१८.४५) प्रतिमन्त्रम् ॥१॥ अञ्जलिना हृत्य वातम्। सं॰ तथा उत्तरस्या दिशोऽञ्जलिनादाय उत्तरस्यां धुरि अधः · ततो दक्षिणतो दक्षिणस्या दिशोऽञ्जलिनादाय दष्टेः स्थाने युगस्य धुरि अधस्ताज्जुहोति।

योक्त्रपरिहरणं च सर्वत्र ॥२॥ चशब्दाद्धोमसमनन्तरमेव। सं॰ सर्वत्र त्रिष्वपि होमेषु योऽयं योक्त्रेण तस्य-तस्य हुतस्य वातस्याश्वस्थानीयस्य योजनं करोतीत्यर्थः। प्रगृह्याध्वर्येरावसथहरणम् ॥३॥ रथस्य कर्तव्यम्। सं॰ प्रगृह्य ऊर्ध्वमुत्पाद्य। दक्षिणाकालेऽध्वर्यवे ददाति ॥४॥ रथम्। अश्वांश्च ॥५॥ ददाति। नव जुहोति यास्तेऽइति (१४.४६-५०) प्रतिमन्त्रम् ॥६॥ आहुतीः।

ज्ञानन्ब्राह्मणोक्ता जुहुयाद्वा ॥७॥ यां कां चऽजुहुयादिति श्रुतेः (९.४.२.२७) · तामेव प्रकृत्याह (॰२८) न जुहुयान्निदतिरेचयानीति · विहितप्रतिषेधाद्विकल्पः। सं॰ शाखान्तरीयोक्ताः। हविर्धानप्रक्षालनाद्याग्नीध्रालम्भनात्कृत्वा धिष्ण्यांश्चिनोत्यष्टेष्टकाँल्लोकम्पृणाभिश्चतुःस्रक्तींस्तिरश्चो[1] न्युप्य-न्युप्य ॥८॥ वैकृतावसरे प्राकृतानुवृत्त्यर्थमाह हविर्धानात् प्राकृतं कर्म कृत्वा धिनोति अष्टेष्टकान् लोकम्पृणाभिरिति[2] तद्धर्मप्रवृत्त्यर्थम् · चतुःस्रक्तीन्[3] तिरश्च[4] इति तिर्यक्प्रस्तारान् नोपरिस्थलिकया[5] चयनम् · न्युप्य-न्युप्येति यं-यमेवाऽचिनोतीति (९.४.३.५) वचनात्। सं॰ किंलक्षणान् तिरश्चः तिर्यक्प्रस्तारान् एकचितिकान् न तु उपर्युपरि चयनेनोर्ध्वान् · किं कृत्वा पूर्वं न्युप्य प्रथमं ज्योतिष्टोमवदेव निवापं कृत्वा। पृश्न्यश्मा चाग्नीध्रीये ॥९॥ उपधेयः। सकृन्मन्त्रवचनम् ॥१०॥ सं॰ आग्नीध्रीये। होत्रीये त्रिरेकविꣳशत्या ॥११॥ होतृधिष्ण्ये त्रिर्मन्त्रवचनम्। सं॰ एत्या लोकम्पृणाभिश्चयनं कर्तव्यम् · लोकं पृणेति मन्त्रस्य त्रिः पठनम्। ब्राह्मणाच्छꣳस्ये द्विरेकादशसु षण्मार्जालीये ॥१२॥ शेषा अष्टेष्टकाः। सं॰ एकादशेष्टकासु द्विर्मन्त्रवचनं कर्तव्यम्। यावदिष्टकं परिश्रितः

---

1) Thus ९. ३. M. ॰रश्च्यो K. R. Ss. 2) ॰काभिर्लो॰ K. 3) ॰क्तीः K. 4) ! तिरश्च pr. m. 5) रांना K.

परिनिधाय ॥१३॥ परिनिधानं परिश्रितां श्रूयते न निखननम् स वै पर्येव निदधाति (९. ४. ३. १)। सं॰ यस्मिन्धिष्ण्ये यावत्य इष्टका उपहितास्तस्मिन् तावतीः परिश्रित उपदधाति परितो भूमाविव स्थापयति। पुरीषं च तूष्णीम् ॥१४॥ पुरीषनिवापमन्त्रो मा भूदिति तूष्णीमित्युक्तम्। प्राकृतानुवृत्त्यर्थमाह ·

अनुदेशाद्या पुरोडाशस्विष्टकृतोऽभिषेचनीयवत् ॥१५॥ एष वोऽमी राजेत्यस्य वचनसामर्थ्यात् विलिङ्गस्यापि प्रयोगो भवति (९. ४. ३. १६)। सं॰ अनुदेशादि सदोद्वारं पूर्वेणेत्येतस्मादारभ्य (८. ६. २३) आ पुरोऽष्टकृतः अभिषवदिति राजसूयस्यान्तर्गताभिषेचनीयसोमस्येव कर्म भवति। अग्नियोजनं प्रातरनुवाकमुपाकरिष्यन्परिधीनालभ्य यथापूर्वमग्निं युनज्मीति (१८. ५१-५३) प्रत्यृचम् ॥१६॥ सं॰ यथपूर्वमुपधानक्रमेण परिधीनाल[म]भ्याग्नियोजनं कर्तव्यम् · किं कुर्वन् प्रातःष्यन्।

आग्निमारुतस्तोत्रपुरस्ताद्विमोचनं[1] परिधिषंध्योर्दिवो मूर्धेति (१८. ५४) प्रत्यृचम् ॥१७॥ आग्निःस्तोत्रस्य पुरस्तादग्निमोचनम् परिधिषंध्यालम्भनं कृत्वा। सं॰ आग्निमारुतं यज्ञायज्ञीयम्। प्रायणीयेऽतिरात्रे युक्तोदयनीये विमोकमेके ॥१८॥ एके अहरहर्युञ्जन्ति च विमुञ्चन्ति च[2]। अधरसमिष्टयजुरन्तऽइष्टो यज्ञ इति (१८.५६-५७) प्रत्यृचमपरे ॥१९॥ समिष्टयजुषी जुहोति। पशुपुरोडाशमन्वनूबन्ध्यस्य देविकाहवींऽषि निर्वपति यजप्रैषाणि ॥२०॥ अनूबन्ध्यपशुःशमनु। तानीदानीमाह · अनुमतिराकासिनीवालीकुहूभ्यश्चरवो धात्रो द्वादशकपालः सर्वहुतः ॥२१॥ कर्तव्यः। हृदयशूलान्ते स्रुवाहुतीर्जुहोति यदाकूतादिति (१८.५८-६५) प्रत्यृचमष्टौ ॥२२॥ अनूबन्ध्याहृदयशूलान्ते। चित्रोऽसीति चित्यनाम कृत्वोपतिष्ठते येऽअग्नय इति (१८. ६७) ॥२३॥ तमेव चित्यम्।

पयस्या मैत्रावरुणी तूपरमिथुनदक्षिणोदवसानीयान्ते ॥२४॥ उदवसानीयान्तग्रहणम् मा भूदुपस्थानान्ते · पयस्यायाश्च तूपरौ छागौ मिथुनार्हौ दक्षिणा।

वर्षत्यसरणमतः ॥२५॥ अग्निचिद्वर्षति न धावेदिति वचनात्। सं॰ असरणमगमनं भवति। पक्ष्यभोजनम् ॥२६॥ सं॰ पक्षिणो मांसमग्निचित्[3] नाश्नीयात् (१०. २. ४. १३)। सवर्णोपायी ॥२७॥ सवर्णशब्देन द्विजात्यभिधानम्

---

[1] Thus १. ३. M. K. R. See १७. ३. १७. [2] See ६. ४. ४. १५. [3] ॰चितो Cod.

ततश्च शूद्रानिवृत्तिः · एवं ह्यामनन्ति　अग्निं चित्वा प्रथमं चित्वा न रामामुपेयादिति · रामा च शूद्री सा हि रमणायोपेयते न धर्मायेति[1] । सं॰ सवर्णां द्विजातिसम्बन्धिनीं ब्राह्मणीं क्षत्रियां वैश्यां वोपेयात् ।　द्वितीये स्वामेव ॥२८॥ द्वितीयेऽग्निचयने विनिर्वृत्ते[2] स्वामेवोपेयात् न क्षत्रियां वैश्यां चेति · एवमपि हि श्रूयतऽइति । सं॰ न ज्ञात्यन्तरस्त्रियम् ।　तृतीये न कां चन ॥२९॥ तृतीये चयनेऽभिनिर्वृत्ते न कां चन उपेयात् ब्रह्मचार्येव भवति । सं॰ स्वपरिणीतामपि नोपेयात् ।　यावज्जीवं व्रतान्यविशेषात् ॥३०॥ अग्निचिद्वर्षति न धावेदित्येवमादीनि भवेयुः · कुत एतत् अविशेषात् न ह्यत्र कालविशेषः श्रूयते एतावन्तं कालमेतानि व्रतानीति । एवं स्थितऽआह ·　संवत्सरं वा कालस्यानवस्थितत्वात् ॥३१॥ सं॰रं वा यावदेतानि व्रतानि भवेयुः · कुत एतत् का॰त्वात् न हि कालो व्यवस्थितः शास्त्रे　व्यवस्थितेन च शास्त्रार्थेन भवितव्यम् ।　तद्व्रतश्रुतेश्च ॥३२॥ अपि च तद्व्रतश्रुतिर्भवति　संवत्सरसंमिता वै व्रतचर्येति (५.५.३.२) । तदेतत्पक्षद्वयं प्रदर्शितमाचार्येण · अथ यः श्रेयस्करतरः पक्षः स एवाभ्युपेयः · कोऽसौ · यावज्जीवं व्रतान्येतानीति · कुत एतत्　अग्निचित्संयोगात् अग्निं चितवान्यः सोऽग्निचिदुच्यते　यावज्जीवं चासावग्निचित् अतो व्रतान्यपि तावदेवेति · आचार्यस्याप्ययमभिप्रायः　येन विश्वजिद्याजिनः संवत्सरसंमितां ब्रह्मचर्यामाह　संवत्सरं न याचेदिति (२२.१.३१) · यत्पुनरुक्तम् संवत्सरसंमि॰चर्येति　उक्तविधिशेषत्वात्तद्विषयमेव तदिति । सं॰ अपि च अनुक्तकालानां व्रतानां संवत्सरश्रुतिरस्ति राजसूये (५.५.३.२) ।

चित्याशक्तौ पुनः सोमेज्यायां स्वयमातृण्णाविश्वज्योतिर्ऋतव्यानामन्यतमाः ॥३३॥ उपधेयाः (९.५.१.५७-६०) ।　पुनश्चितिम् ॥३४॥ पुनश्चितिमेवोपदधीतेति (९.५.१.६१) च ।　अचयनं वा ॥३५॥ कुत एतत् · । सं॰ स्वयं॰ण्णादीनामचयनमेव भवति · कुतः ·　चित्यस्याहवनीयाभिसम्पत्तेः ॥३६॥ आहवनीयऽएव चित्याभिसम्पत्तिश्रवणात् यो वाव चितेऽग्निर्निधीयते तामेवेष्टकामेष सर्वोऽग्नि-

---

1) See Nirukti १२.१३.　2) ? विनिवृत्ते (i. e. समाप्ते ?) K.

DDD DDD*

रभिसम्पद्यतऽइति (९.५.१.६१)। सं° एकवारं चित्यस्योपरि निधानेनैवाहवनीयाग्नेरेव सर्वदा चित्यात्मकता सम्पन्ना ॥ ॥ षष्ठी कण्डिका ॥६॥ ॥

इत्युपाध्यायकर्कविरचिते कात्यायनसूत्रभाष्येऽष्टादशोऽध्यायः ॥ ॥ अग्निः समाप्तः ॥

इति कात्यायनसूत्रेऽष्टादशोऽध्यायः ॥१८॥

---

आचार्येणाग्निरनुविहितः · इदानीमवसरप्राप्तं सौत्रामण्यनुविधानं क्रियते। ब्राह्मणयज्ञः सौत्रामण्यृद्धिकामस्य ॥१॥ (१२.९.१.१) · ब्राह्मणग्रहणं क्षत्रियवैश्ययोर्निवृत्त्यर्थम् सा च ऋ°मस्य भवति शाखान्तरात् · ननु तयोरपि निधनविशेषविधानमस्ति संज्ञित्यै वि°वैश्यस्य (५.४-५) · उच्यते · क्षत्रियवैश्ययोर्विशेषश्रवणमग्न्यङ्गसौत्रामणीविषयम् कुत एतत् अग्नौ हि तयोरपि प्राप्तिरस्ति · तस्मादृद्धिकामस्य ब्राह्मणस्यैव नेतरयोर्वर्णयोरिति। सौ°णीति कर्मनामधेयम् तच्चेष्टिपशुसमुदायस्य संनिधानात् लिङ्गाच्च उभयं वै सौ°बन्धश्चेति (१२.७.२.१२) · तथा चाचार्यप्रस्थानम् सौत्रा°भेदादिति (६.१)। एवं प्राप्तऽउच्यते त्रिपशोर्वा नामधेयम् कुत एतत् लिङ्गादेव आत्मा वै°वयोधाश्चेत्यैन्द्रवायोधसव्यतिरिक्ते वस्तुनि सौत्रामणीशब्दमाह (१२.९.३.१६) तथा तद्यदेतत् सौत्रा°यूपावभित इति (°१६) सौत्रामणीशब्दं त्रिपशावेवाह · यच्चोक्तम् उभयं°बन्धश्चेति (१२.७.२.१२) तदितरेषामङ्गत्वेऽपि सम्भवत्येव यद्वा पयोग्रहसुराग्रहसम्बन्धेनोभयरूपा सौत्रामणीति · आचार्यप्रस्थानं तु प्रकरणोपलक्षणार्थम् · प्रयोजनम् त्रिपशोरेवान्तराये प्रयोक्तृत्वमिति। अग्निचित्सोमयाजिसोमातिपूतसोमवामिनाम् ॥२॥ एभिश्च निमित्तैः सौ°णी भवति। तत्राग्निचित्सोमयाजीति ग्रहणाम् अग्निमतः सोमस्याङ्गं यथा स्यादिति · स हि फलवान् निष्फलोऽग्निरिति · एवं च सत्यग्निमत्सोमयागान्ते सौ°णी भवति। ननु चानग्निमतोऽपि सोमस्याङ्गत्वेन सौत्रामणी श्रूयते (१२.८.२.२) सोमेनेष्ट्वा सौत्रामण्या यजेतेति नैतदेवम् अग्निं चित्वा सौ°ण्या यजेतेत्यस्य वाक्यस्याग्निप्रकरणे श्रुतत्वात् तदङ्गता युक्ता यस्य प्रकरणम् तस्यान्यद्विधीयमानं तदङ्गमेव भवतीति न्याय्यम् · सोमेनेष्ट्वा सौत्रामण्या यजेतेति (१२.८.२.२) सौत्रामणीप्रकरणे पाठः तेन प्रस्तुतविपरिवृत्त्या सोमस्यैव सौत्रा-

मण्यङ्गता भवति न सौत्रामण्याः सोमाङ्गता यथा वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति वाजपेयं प्रकृत्य विधानात् वाजपेयाङ्गता बृहस्पतिसवस्य · तस्मान्नानग्निमति सोमे सौत्रामणी · सोमेनेष्ट्वा सौत्रामण्या यजेतेति किमर्थस्तर्हि पाठः अग्निमत्सोमस्यानुवादोऽयमित्यदोषः यद्वाग्निं चित्वेत्यस्यैव शेषोऽयम् अग्निमता सोमेनेष्ट्वेत्येतदुक्तं भवति । सोमातिपूतवामिनोश्च सौत्रामणी भवति शाखान्तरश्रवणात् · सोमातिपूतः सोमवामी च ब्राह्मण एव न हि क्षत्रियवैश्ययोरेतद्विशेषणमिति · ननु च सोमकार्ये तयोरपि न्यग्रोधविधानम् तेन तदतिपवने तद्वमने च किमिति न भवति नैतदेवम् यदि नाम कार्यापत्त्या धर्मप्राप्तिर्भवति न चायं सोमधर्मः किं तर्हि तदतिपवने यागान्तरविधानमिति । अग्निचितस्तु वर्णत्रयस्यापि भवति अग्निसंयोगविधानात् । सं° अग्निचितः तथा सोमयाजिनः तथा सोमातिपूतस्य तथा सोमवामिनः · मुखव्यतिरिक्तेभ्यो नासिकाकर्णगुदादिच्छिद्रेभ्यः [यस्य सोमः] स्रवति स सोमातिपूत इत्युच्यते · मुखेन यः सोमं वमति स सोमवामी । राज्ञोऽपरुद्धस्य ॥३॥ च सौत्रामणी भवति दुष्टरीतुर्दृ पौंसायनोऽरुद्ध आसेति (१२. १. ३. १) तद्विधानात् । सं° स्वराज्यात्प्रच्यावितस्य राज्ञः स्वराज्यप्राप्त्यर्थम् । अलम्पशोरपशोः ॥४॥ सौत्रामणी भवति · पशुयोग्यः सन् यो नाम पशून्न विन्दते सोऽलम्पशुरपशुः ।

आदित्यश्चरुः ॥५॥ (१२. १. २. ११) । सं° अदितिदेवताकः प्रथम चरुर्भवति ।

अन्ते च ॥६॥ आदित्यश्चरुर्भवति · आदित्यमीशान इति (१२. १. २. ११) · ईशानशब्द इष्टवत्येव भवति । सं° अन्ते समाप्तौ चरुर्भवति । आमिक्षाया वा पूर्वः ॥७॥ आदित्यश्चरुर्भवति · तस्य हि कक्षौ चरव इति कक्षसंस्तवः वायोधसस्य च बाहुसंस्तवात् पयस्यान्ते च तद्विधानात् आमिक्षायाः पूर्वो भवतीति सम्प्रदायः विकल्प इत्यपरे । सं° अन्ते य आदित्यश्चरुः स आमिक्षायाः पयस्यायाः पूर्वो भवति ।

धेनुर्दक्षिणा ॥८॥ अस्यादित्यस्य चरोर्भवति · तत्र विभागमाह ·

वत्सः पूर्वे ॥९॥ चरौ । सं° पूर्वे प्रथमे आदित्यचरौ वत्सो दक्षिणा भवति ।

मातोत्तरे ॥१०॥ दीयते · वत्सं पूर्वस्यां ददाति मातरमुत्तरस्यामिति (१२. १. २. ११) इत्यपेक्षया स्त्रीलिङ्गान्तता । अभ्यादधामीति (२०. २४-२५) प्रत्यृचमाहवनीये

तिस्रः समिधोऽभ्यादधाति ॥११॥ उद्धृत्याहवनीयम् । सत्यवादी ॥१२॥ यज-
मानो भवतीति शेषः । हुतोच्छिष्टभक्षः ॥१३॥ अग्निहोत्रहुतशेषभक्ष इत्यर्थः ।
चतूरात्रम् ॥१४॥ अयं क्रतुर्भवतीति सूत्रशेषः · किं वा स्यात् पौर्णमास्यां
सर्वेष्टयो मा भूवन्निति । अग्निहोत्रं जुहोति ॥१५॥ पुनर्विधानसामर्थ्यात्
स्वयमेवेति नियमः । ऐन्द्रः पशुः ॥१६॥ सं॰ प्रथममैन्द्रः पशुर्भवति ।
चरुपश्वोर्विपर्यासमेके ॥१७॥ इच्छन्ति क्षत्रसंस्तवाच्चरोः बाहुसंस्तवाच्चैन्द्रस्येति ।
अन्तःपात्यस्थाने चर्मणि सुरासोमविक्रयिणः सीसेन शष्पक्रयस्तोक्मानामूर्णाभि-
र्लाजानाञ्च सूत्रैः सुरासोमविक्रयिन्क्रय्यास्ते सुरासोमा३ इत्यामन्त्र्य सर्वेषु ॥१८॥
प्रक्रमतृतीयेन सोमवदुत्तरां [वेदिं] वक्ष्यति (२.२) · तत्रान्तःपात्यस्थानमस्ति · तत्र
सुरा॰यिणः सकाशात् चर्मणि सीसेन शष्पक्रयः कर्तव्यः · सीसं प्रसिद्धमेव · शष्प-
शब्देन व्रीहयो विरूढा उच्यन्तऽइति सम्प्रदायः · अपरे तु शष्पशब्दं तृणमात्र-
वाचकमाहुः प्रसिद्धो ह्ययं तृणेष्वपीति · तोक्मशब्देन यवा विरूढा उच्यन्ते
तेषामूर्णाभिः क्रयः लाजानां च सूत्रैः यच्च पठ्यते ऊर्णासूत्रेण क्रीणातीति
(१२.७.२.११) स द्वन्द्वैकवद्भावः । सुरासोमविक्रयिन्॰ल्य क्रयः कर्तव्यः · सर्वेष्वि-
ति च सर्वग्रहणं नग्नहुविषयम् तस्यापि चामन्त्र्यानियतद्रव्येण क्रयणं कर्तव्यम् ।
सं॰ ऊर्णाभिर्मेषरोमभिः · लाजानां भृष्टव्रीहीणाम् · क्लीबादेके ॥१९॥ क्रेतु-
मिच्छन्ति · क्लीवः प्रसिद्ध एव । सं॰ नपुंसकात् । दक्षिणेन हुत्वा नग्नहुचू-
र्णानि कृत्वा तांश्च व्रीहिश्यामाकौदनयोः पृथगाचामौ निषिच्य चूर्णैः संसृज्य
निदधाति तन्मासरम् ॥२०॥ दक्षिणेन द्वारेण प्रवेश्याग्न्यगारम् नग्न॰त्वा नग्नहुः
किण्व उच्यते तांश्च शष्पादींश्चूर्णयित्वा व्रीहि॰धाति तन्मासरमुच्यते · व्री-
हिश्यामाकाभ्यां च सुरा निष्पाद्यते सा च यागसाधनम् तेन सा तद्धर्मैरभिसम्ब-
ध्यते अतस्तयोश्चतुर्मुष्टिकग्रहणपूर्वकं पृथगोदनौ निष्पाद्येते । सं॰ नग्न॰त्वा
नग्नहुशब्दार्थमाह सज्जवकित्रफला चैव शुण्ठी चैव पुनर्नवा चतुर्जातकसंयुक्ता
पिप्पली गजपिप्पली वंशोऽवका बृहच्छत्रा चित्रकं चेन्द्रवारुणी[1]) अश्व-
गन्धां समुत्पाद्य[2]) मूलान्येतानि निर्दिशेत् धान्यकं च यवानीं च[3]) जीरकं

1) ॰रुणी Ss. ३ marg. and Deva at १४. १. १७. 2) ॰त्पाद्य Deva l. c. 3) ? यवानींव Deva. यवानीकं ३ marg.

कृष्णजीरकम्[1] द्वे हरिद्रे वचा चैव[2] विद्रूढा व्रीहयो यवा इति · क्रयणानन्तरं तानि शष्पादीन्यादाय दक्षिणं हविर्धानमग्न्यगारं प्रवेश्य पूर्वं नग्नहूर्णानि कृत्वा सज्जव-गान्धौषधानि तूष्णीं पिष्ट्वा तान् शष्पतोक्मलाजान् चूर्णीकृत्य दर्शपूर्णमास-धर्मेण पात्रासादनादि श्यामाकचतुर्मुष्टिकग्रहणपूर्वकं फलीकरणान्तं समन्त्रकं कृ-त्वा बहुतरोदके पृथक्पृथक्चरू पक्त्वा शृतालम्भनानन्तरं व्रीहिश्यामाकौदनयोः पृथगा-सिच्य पृथग्भिन्नयोः पात्रयोश्चर्वोर्मध्यादतिरिक्तमुष्णोदकमवस्राव्य तदुदकं नग्नहु-प्रभृतिभिश्चतुर्भिश्चूर्णैः संसृज्य निःसृतं स्थापयति · तन्मासरम् तस्य चूर्णसंसृष्टस्याचा-मस्य मासरमिति संज्ञा । ओदनौ चूर्णमासरैः संसृज्य स्वाद्वीं त्वाऽऽशुना त इति (११.१ २०.२७) त्रिरात्रं निदधाति ॥२१॥ चूर्णमासरसंसृष्टावोदनौ स्वाद्वीं त्वेति मन्त्राभ्यां कुम्भ्यां प्रक्षिपति · प्रक्षिप्ता च त्रिरात्रं निधेया सुरा । सं॰ एवमा-चामयोश्चूर्णसंसर्गानन्तरमोदनौ चतुर्भिश्चूर्णैः संसृज्य स्वाद्वीं त्वा सुना तऽइति द्वाभ्यां मन्त्रा-भ्यामेकस्मिन्महति पात्रे चूर्णसंसृष्टावोदनौ मासराभ्यां च संसृज्य त्रिरात्रं दधाति सुगुप्ते देशे स्थापयति शालाया नैर्ऋतकोणे गर्तं कृत्वा तत्र स्थापयतीति जीर्णाः सम्प्र-दायः तिस्रो रात्रीरित्यादिश्रुतेः (१२. ७. ३. ६) । एकस्याः पयसापाकृतेना-श्विनेन परिषिञ्चति परीतो षिञ्चतेति (११. २) ॥२२॥ सुरां परिषिञ्चति एकस्यै परिषिञ्चतीति (१२. ८. २. ११) वचनात् · अश्विनावुद्दिश्यापाकरणं कर्तव्यम् तच्चापूर्व-त्वादप्रधानत्वाच्च पयसः अश्विभ्यामपाकरोमीति गोस्पर्शनमात्रमेवेति · सम्प्रदायः अपरे तु धर्मवदपाकरणमिच्छन्ति । शष्पचूर्णानि चावपति ॥२३॥ चशब्दात्सु-रायाम् । सारस्वतेन द्वयोः प्रातः ॥२४॥ प्रातःशब्देन च द्वितीयमहरभिधी-यते तत्रापि च रात्राविवाभिषेकः प्रथमां रात्रिं परिषिञ्चतीति प्रकृत्य (१२. ८. २. ११) द्वयोर्दुग्धेन द्वितीयामित्याह द्वितीयाम् रात्रिमिति गम्यते । सं॰ प्रातःशब्देन श्वोऽभिधीयते । तोक्मचूर्णानि च ॥२५॥ आवपति । ऐन्द्रेणोत्तमे तिसृणाम् ॥२६॥ गवां दुग्धेनैन्द्रेण परिषिञ्चति । सं॰ उत्तमे तृतीयेऽहनि ।

लाजचूर्णानि च ॥२७॥ आवपति · अत्र चूर्णानां पयसश्च संस्कारकत्वम् साधनं तु व्रीहिश्यामाकावेव · अतस्तयोरेव देवतोद्देशेन ग्रहणम् ॥ ॥ प्रथमा कण्डिका ॥१॥

---

1) यीरकं कृष्णायीरकं ३ marg. 2) ? Thus Ss. ३ marg. चत्वावैव Deva l. c.

वेदी मिमीते वरुणप्रघासवत् ॥१॥ उत्तरान्या भवति दक्षिणान्येति · दक्षिण-स्याः प्रतिप्रस्थातृकर्तृकता वतिना लभ्यते। प्रक्रमतृतीयेनावृत्तेनोत्तरां सो-मवत् ॥२॥ प्रक्रमस्य तृतीयं प्र°तीयम् तेनोत्तरस्यां वेद्यामावृता मानक्रिया सो-ऽवत्कर्तव्या · सो°वदिति च प्राची षट्त्रिंशत् पश्चात्त्रिंशत्त्रयस्त्रिंशद्वा पुरस्ताच्च-तुर्विंशतिः (८. ३. ८-११)। तृतीयेनेति कुतोऽध्यवसितम् वितृतीयं वै सोमस्य सौत्रामणीति वचनात् · एवं सति यदि प्रक्रमस्य तृतीयं गृह्यते ततः क्षेत्रस्य नवमभागः परिच्छिद्यते तत्र वितृतीये यजेतेत्यसमर्थं स्यात् तस्मात्प्रक्रमशब्देन प्रक्रमपरिच्छिन्नं क्षेत्रमभिधीयते यथा पादावृत्त्या परिच्छिन्नं क्षेत्रं पादावर्तशब्देना-भिधीयते एवं प्रक्रमपरिच्छिन्नं प्रक्रमशब्देन तस्य तृतीयं प्रक्रमतृतीयम् · तेन च मानस्याशक्यत्वात्तत्परिच्छेदकरणं प्रमाणं लक्ष्यते · तेन प्रमाणेन सोमवत्क्रियोत्त-रस्याः · यद्वा प्रक्रमपरिच्छिन्नक्षेत्रतृतीयकरणीप्रमाणेन सोमवदावृत्तेनेति प्रक्रम-तृतीयकरणीप्रकारश्च शुल्वकारेणोक्त (२) एव। सं° अत्र उत्तरां वेदिं प्रक्र°येन सोमवदावृत्तेन मिमीते[१]। तयोः पश्चात्खरौ करोति ॥३॥ तयोर्वेद्योर्नि-ष्पन्नस्वरूपयोः पश्चाद्भागे ख°रोति · खरकरणं च प्रदेशान्तरे विहितमेव।

श्वः प्रणयनीयाधानादि करोत्याऽऽज्यासादनात् ॥४॥ सं° श्वःशब्देन चतुर्थं यज-नीयमहरुच्यते पौर्णमासी अमावास्या वा। स्फ्यादि करोति दक्षिणस्यां वरुणप्रघासवत् ॥५॥ एवं चतुर्दश्यामुत्तरवेदिच्छादनान्तोत्तरा वेदिर्भवति दक्षिणो-त्करकरणान्ता · तस्यां च वरु°वदिति वत्युपदेशात्प्रतिप्रस्थाता कर्ता।

सौरमेवास्याम् ॥६॥ दक्षिणस्यां सौरमेव भवति · एवकारकरणं च तदङ्गाभा-वज्ञापनार्थम् · तत्कुतः अत्र हि श्रूयते[१] आश्विनोऽज्ञो धूम्रः सारस्वतो मेष ऐन्द्र ऋषभ इति · तथा पयश्च सुरा च भवत इति (१२. ७. ३. ८) सर्वस्यास्यैकत-न्त्र्यम् · तत्र वचनाद्दक्षिणेऽग्नौ सुराग्रहहोमः दक्षिणे°ङ्गान्युद्धतीति (१२. १. ३. १२ १५) तदङ्गान्युत्तरऽएव · तथा चाह (°१४) उत्तरेऽग्नौ पशुभिः°चान्यदिति अन्यग्रहणेन सौरग्रहाङ्गान्युच्यन्ते तान्यप्युत्तरस्यामेवैकतन्त्र्यात् · अतश्चाचार्येणा ज्ञा-

---

[१]) प्रक्रमतृतीयेन काष्ठादिना आवृत्तेन त्रिंशद्वारं षट्त्रिंशद्वारं चतुर्विंशतिवारं अभ्यासेन ३ marg. [२]) See ३. २-३.

पितमेतत् सौरमेवास्यां भवति एवकारकरणादङ्गान्युत्तरऽएव · एवं च कृत्वा तल्लैकवान्न दक्षिणावेद्यर्थं प्रणीताः क्रियन्ते अग्निप्रणयनमप्याहवनीयादेव दक्षिणास्याम् · सपाशुकेषु चातुर्मास्येषु तु तल्लभेदाद्दक्षिणावेद्यर्थं प्रणीताप्रणयनं क्रियते गार्हपत्याचाग्निप्रणयनम् । सं॰ अस्यां दक्षिणास्यां वेदौ केवलं सौरमेव कर्म भवति ।

श्वभ्रं खात्वा खरमपरेण चर्मावधाय परिस्रुतमासिच्य कारोतरमवदधाति कारोतराद्वा चर्मणि मन्त्रलिङ्गात् पूतामादत्ते सिञ्चन्ति परिषिञ्चन्तीति (२०.२८) ॥७॥ दक्षिणां वेदिश्रोणिमपरेण श्वभ्रं खात्वा चर्माच्य तत्र कारोऽधाति सुरापावनाय · कारोतरं च सुरापावनं प्रसिद्धं शौण्डिकानाम् · ततः पूतां सुरामादत्तेऽञ्चन्तीत्यनेन मन्त्रेण कारोतराद्वा पतितां चर्मणि गृह्णाति · कुत एतत् चर्मणि मन्त्रऽङ्गात् कारोतरेण दधतो गवां त्वचीति (१९.८२) मन्त्रलिङ्गमप्यर्थप्राप्तस्योपायस्य नियामकं भवति · यद्येवम् कारोतरादेव पतितां चर्मणि गृह्णाति सम्प्रदाये तु विकल्पः । सं॰ ततो दक्षिणावेदिखरमपरेण बहिर्वेदि श्वभ्रं गर्तं खात्वा तत्र गर्ते गोचर्मावधाय परिस्रुतं सुरां चर्मणि आसिच्य सुराया उपरि कारोतरं वंशमयं पात्रं[1] सुरागलनसमर्थं निदधाति एवं कृते मलस्तले तिष्ठति गलिता सुरा कारोतरस्योपर्यायाति एकोऽयं गलनोपायः · अथवा पूर्वं चर्मणि कारोतरमवधाय तत्र सुरामासिञ्चति तथा च सति कारोतराच्चर्मणि सुरा पतति कुतः मऽङ्गात् कारोऽत्वचीति · पूतां सुरामादत्ते । सते पुनाति गोऽश्ववालवालेन पुनाति ते परिस्रुतमिति (१९.४) ॥८॥ सतशब्दः पात्रवाची · तच्च पालाशम् तत्र हि सुरा न विनाशमुपयाति · तत्र गोऽश्ववालपवित्रेण सुरां पुनाति । सं॰ सते पालाशे महति पात्रे । वायोः पूत इति (१९.३) सोमातिपूतस्य ॥९॥ पुनाति । प्राङिति (१९.३) तद्धामिनः ॥१०॥ पुनातीति विशेषः ।

उत्तरस्यां पयो वैतसेऽजाविलोमपवित्रेण ब्रह्म क्षत्रमिति (१९.५) ॥११॥ उत्तरस्यां वेद्यामजा॰वित्रेण वैतसे पात्रे पयः पुनाति · तच्च पयो यागार्थत्वाद्धर्मवद्भवति । सं॰ वैतसे वेतसवृक्षविकारे पात्रे[2] । ब्रह्मानुमन्त्रणमधर्योऽग्निभिरिति (२०.३१) ॥१२॥ पूयमानं पयो ब्रह्मानुमन्त्रयते । पयोग्रहान्गृह्णाति कुविद-

१) कारोतरश्चालनिका ३ marg. २) वैतसी(!) जलजंबुकः ३ marg.

ङ्गेति (१९. ६) ॥१३॥ पृथगुपयामयोनी ॥१४॥ सं॰ अत्र मन्त्रसमाम्नाये उपया-
मगृहीतोऽस्येष ते योनिरित्येते सकृत्पठिते उप॰नी त्रिषु ग्रहेषु पृथग्भवतः ।
खरयोः सादनम् ॥१५॥ पयोग्रहसुराग्रहाणां च कर्तव्यम् । आश्विनमा-
म्नात्येन ॥१६॥ पात्रेण गृह्णाति । गोधूमकुवलचूर्णानि चावपति तेजोऽसीति
(१९. ९) ॥१७॥ चशब्दाद्ग्रहे । सं॰ कुवलान्यामलकतुल्यानि[१] बदराणि ।
सारस्वतमौदुम्बरेणोपवाकबदरचूर्णानि च वीर्यमसीति (१९. ९) ॥१८॥ चशब्दा-
दावपति । सं॰ उपवाका इन्द्रयवा गोधूमवत्तुषरहिता यवसदृशा एव भवन्ति ·
बदराणि चणकबदराणि । ऐन्द्रं नैयग्रोधेन ॥१९॥ यवकर्कन्धुचूर्णानि च
बलमसीति (१९. ९) ॥२०॥ आवपति । सं॰ यवाः प्रसिद्धाः · कर्कन्धून्यारण्यान्यु-
पजीव्यानि बदराणि[२] कर्कन्धु सूक्ष्ममतिमधुरं यदुत्तरापथे प्रायेण ज्ञायते[३] ।
स्थालीभिः सौरान्नाना हि वामिति (१९. ७) व्यत्यासम् ॥२१॥ ग्रहान्गृह्णाति ·
तांश्च गृह्णन्व्यत्यासेन गृह्णाति पयोग्रहं गृहीत्वा ततः सुराग्रहम् पुनरप्येवमेव
व्यतिषक्तान्गृह्णातीति (१२. ७. ३. १५) वचनात् । पयोग्रहान्वा पूर्वम् ॥२२॥
गृह्णाति एवमपि हि श्रूयतऽइति । सुराग्रहाञ्छ्रीणात्योजोऽसीति (१९. ९)
वृकव्याघ्रसिंहलोमभिः प्रतिमन्त्रं मिश्रैः ॥२३॥ ओजोऽसीत्येभिर्मन्त्रैः प्र॰न्त्रं वृका-
दिलोमभिर्मिश्रैः सुणाति । एके यथासंख्यम् ॥२४॥ लोमभिः श्रयणं कुर्वन्ति ।
सोमो राजेत्यनुवाकेन (१९. ७२-७९) ग्रहानुपतिष्ठते युगपत् ॥२५॥ यौगपद्येन ।
चतुर्भिर्वा पयोग्रहाञ्छेषेण सौरान् ॥२६॥ उपतिष्ठते । दीक्षावत्पावयतो
ऽन्तःपात्ये श्येनपक्षाभ्यां या व्याघ्रमिति (१९. १०) ॥२७॥ अध्वर्युप्रतिस्थातारौ अन्तः-
॰त्ये स्थितं यजमानं श्येभ्यां पाव॰तो दीक्षावदिति ऊर्ध्वमवाञ्चं च । सं॰ दीक्षा-
वदिति द्विरुपरिनाभ्यादि (७. ३. १) । अग्निं प्रेक्षयति यदापिपेषेति (१९. ११)
॥२८॥ प्रे॰तीति कारितवादध्येषणा · य॰षेति यजमानः प्रेक्षते ।
पयोग्रहसंमर्शनं सम्पृच स्थेति (१९. ११) ॥२९॥ विपृच स्थेति (१९. ११)
सौराणाम् ॥३०॥ अभिमर्शनम् · सौरानभिमृश्योदकस्पर्शनमिति सम्प्रदायः · व्यत्या-
सग्रहणेऽप्येवम् ॥ ॥ द्वितीया कण्डिका ॥२॥ ॥

---

१) ॰लकप्रायाणि ३ marg. २) See schol. at १५. १०. १८ ३) कर्कंधु वन्यबदराणि
मरीचप्रायाणि ३ marg.

अध्यादि करोति ॥१॥ वैकृतावसरे प्राकृतानुवृत्त्यर्थमाह । आश्विनोऽजो धूम्रः ॥२॥ पशुर्भवति · अजग्रहणमुत्तरविवक्षया । सं॰ धूम्रो धूसरवर्णः ।

सारस्वतो मेष ऐन्द्र ऋषभो मध्ये यूपो दक्षिणोत्तरावैन्द्रवायोधसयोः ॥३॥ एवं देशाध्यवसानं कर्तव्यम् एवं हि श्रूयते (१२.९.३.१६) तद्यदेतꣳ सौत्रामणिकं यूपमेतौ यूपावभितो भवत इति । वपामार्जनान्ते ग्रहानादाय पूर्ववदनुवाचनꣳ सुरासोमेभ्योऽनुब्रूहीति ॥४॥ पूर्ववच्छब्देन च राजसूयसौत्रामणिक उच्यते · तत्र ह्युक्तम् अश्विभ्याꣳ सरस्वत्याऽइन्द्राय सुत्राम्णाऽइति (५.५.४.२४) एता हि ग्रहदेवता इति · अतश्च पयोग्रहार्थं तदुद्देशेनापाकरणम् सुराग्रहार्थे च व्रीहिश्यामाकयोः चतुर्मुष्टिकं ग्रहणमिति · अयं च चरकसौत्रामण्यनुवाचनातिदेशोऽपरो विशेषः । सं॰ पूर्ववदिति राजसूयचरकसौत्रामणीवद्देवतापदान्यविभक्तिलोपेनैव समस्यानुवाचनमध्वर्युः करोति (१५.१०.१३) ।

सप्रैषं तु ॥५॥ तुशब्दो विशेषणार्थः । सं॰ प्रैषवचनं भवति । प्रस्थितमिति च ॥६॥ चशब्दादपरो विशेषः · प्रस्थितशब्दस्य प्रयोगः सुरासोमान्प्रस्थितान्प्रेष्येति । त्रिपशोः सर्वम् ॥७॥ प्रस्थितशब्दवद्भवति · सर्वग्रहणं च वपार्थम् पशुपुरोडाशार्थमित्यपरे तच्चानुपपन्नम् येनायं सवनीयेषु पठ्यते (६.६.२६ ८.१६) प्रस्थित॰प्रसुते तेनेह प्राप्तस्योपसंहारार्थमिदं वचनम् न च पुरोडाशे प्रस्थितशब्दस्य प्राप्तिः तस्मात्सर्वग्रहणं वपार्थमेव · पशुशब्दस्याङ्गेषूपचरितत्वात् तत्रैव मा भूदिति सर्वग्रहणम् इह चोपसंहारात्प्रस्थितशब्दस्य पशुगणान्तरेष्वप्रवृत्तिः । सुरावन्तमिति (१९.३२) जुहोति ॥८॥ सं॰ अध्वर्युस्त्रीनपि पयोग्रहान्सहैव जुहोति । पालाशैः सौरान्न मृन्मयमाङ्गतिमानशऽइति श्रुतेर्यस्तऽइति (१९.३३) ॥९॥ पार्शैः सुराग्रहान्जुहोति · कुत एतत् पार्शैरिति यस्मान्मृन्मयमाङ्गतिं न व्याप्नोति · कथं ज्ञायते यद्वानस्पत्यैर्देवेभ्यो जुहोत्यथ कस्मादेतं मृन्मयेनैव जुहोतीति (१४.२.२.५३) वानस्पत्यं देवानामुचितम् मृन्मयं चानुचितमिति ज्ञापयति · अपि च पालाशान्युपशयानि भवन्तीत्यत्र (१२.७.२.१५) श्रूयते मा भूददृष्टार्थता तेषामिति । सं॰ पार्शैः कुतः स्थालीभिरेव कुतो न जुहोति न मृन्मय॰ इति मृन्मयं पात्रमाङ्गतिं न आनशे न व्याप्नोति इति श्रुतेः ।

अध्वर्युः प्रतिप्रस्थाताग्नीध्रमश्विनेत्याश्विनं (११.३४) भक्षयन्ति द्विर्द्विरावर्तम् ॥१०॥ अध्वर्य्वादयः आश्विनग्रहशेषं द्विर्द्विरावर्त्यावर्त्य भक्षयन्ति। होतृब्रह्ममैत्रावरुणाः सारस्वतमाश्विनवत् ॥११॥ भक्षयन्तीति शेषः। सं° आश्विनवदिति यमश्विनेति मन्त्रेण द्विर्द्विरावर्तनम्। शेषछ-शेषमासिञ्चत्युत्तरे पूर्वस्य ॥१२॥ भक्षितशेषं पूर्वस्य ग्रहस्योत्तरे आसिच्यते। सं° पूर्वस्य-पूर्वस्य ग्रहस्य शेषमुत्तर उत्तरे ग्रहे आसिञ्चति। ऐन्द्रं यजमानः ॥१३॥ भक्षयतीति शेषः।

यदत्रेति (११.३५) सौरान्भक्षयन्ति यथाभक्षितं प्राचीनावीतिनो दक्षिणतः ॥१४॥ दक्षिणतो वितानस्य व्यवस्थिताः प्राञ्चः सन्तः सौथन्ति यथा पयोग्रहाणां भक्षणं कृतं तथैवेति। सं° पयोग्रहभक्षणेतिकर्तव्यतानतिक्रमेण। प्राणभक्षमेके ॥१५॥ कुर्वन्ति · स चायं विकल्पः शास्त्रस्य तुल्यत्वात्। परिक्रीतो वा वैश्यराजन्ययोरन्यतरः ॥१६॥ भक्षयेदिति। अङ्गारेषु वा बहिष्परिधि दक्षिणातो जुहोत्याश्विनमुत्तरे मध्यमे सारस्वतमैन्द्रं दक्षिणे पितृभ्य इति (११.३६) प्रतिमन्त्रम् ॥१७॥ जुहोति। अक्षन्पितर इति (११.३६) प्रक्षालनेनोपसिञ्चति ॥१८॥ यथाहोमं पात्रे। पितरः शुन्धध्वमिति (११.३६) जपति ॥१९॥

कुम्भीमासज्य कुम्भवच्छतवितृष्णां वालपवित्रहिरण्यान्यन्तर्धाय नवर्चं वाचयति पुनन्तु मेति (११.३७-४४) ॥२०॥ कुम्भवदिति दक्षिणास्याग्नेरुपरि सुरावतीमासजति वालर्धाय मध्ये। सं° ततश्चरकसौत्रामणीकुम्भ[व]च्छतर्ष्णां शतच्छिद्रां दक्षिणास्याहवनीयस्योपरि शिक्ये कृत्वा · कुम्भवदिति वतिना दक्षिणास्याग्नेरुपरि कुम्भीं शिक्ये कृत्वा परिस्रुच्छेषमासिच्य स्रवन्तीमित्येतावच्छाभ्यते (१५.१०.१७)।

सोमवतां बर्हिषदामग्निष्वात्तानां च ॥२१॥ सं° नवर्चं वाचयतीति शेषः[१] · त्वछ सोम (११.५२-५४) बर्हिषदः (११.५५-५७) आयन्तु नः (११.५८-६०) एतासां प्रत्येकं तृचं वाचयति। पूर्ववत्सोमातिपूतश्चेत् ॥२२॥ सोऽपूतसौत्रामण्यां पूर्ववदुपस्थानं कर्तव्यम् सोमवदादीति। सं° पूर्वं सोऽपूतश्चेद्यजमानस्तदा सोमवदादितृचैः पूर्ववच्चरकसौत्रामणीवत् कुम्भ्याः स्रवन्तीं सुरामुपतिष्ठते। ये समाना इति (११.४५) यजमानो जुहोति ॥२३॥ सं° दक्षिणाग्नौ। उत्तरे च यज्ञोप-

१) See Mahidh. at ११. ४३.

वीत्युत्तरया (११.४६) ॥२४॥ चशब्दाद्यजमानः · अत्र च श्रूयते (१२.८.१.१३) सर्वे यज्ञोपवीतानि कृत्वोत्तरमग्निमुपसमायन्तीति। सं° उत्तरेऽग्नौ उत्तरया ऋचा जुहोति।

अन्वारब्धेषु पयो जुहोति द्वे सृतीऽइति (११.४७) ॥२५॥ तच्चैतज्जुहोतिधर्मैर्धर्मवद्भवति[1]। शेषं यजमानो भक्षयतीदᳪ हविरिति (११.४८) ॥२६॥ चात्वाले मार्जयन्ते सपत्नीका हिरण्यमन्तर्धाय ॥२७॥ ॥ तृतीया कण्डिका ॥३॥ ॥

पशुपुरोडाशान्निर्वपत्यैन्द्रᳪ सावित्रं वारुणं दशकपालम् ॥१॥ अन्यदेवत्याः पशवो भवन्ति वचनादन्यदेवत्याः पुरोडाशा इति (१२.७.२.१६) · पशुपुरोडाशस्य च प्रकृतौ पशुदेवतासंस्कारार्थतोक्ता · सा चात्र न सम्भवति · तत्र केचिदाहुः पशुपुरोडाश ऐन्द्रः ऐन्द्रपशुदेवतासंस्कारकः सावित्रः संस्कारसामान्यात्सारस्वतस्य वारुण आश्विनस्य एवं संस्कारकत्वमेषाम् · तत्पुनः युक्तायुक्तविचारार्हमिति। एककपालं चावभृथाय ॥२॥ वारुणं चैक°लं तैरेव सहावभृथ्य निर्वपति · वारुणस्य दशकपालतैन्द्रसावित्रयोरपि कपालसंख्योपलक्षणार्थम् · एवं हि श्रूयते (१२.७.२.१८-२०) एकादश° द्वादश° दश° वारुणा इति।

आसाश्विनानाज्यभागौ यजत्यत्र स्विष्टकृद्वनस्पत्योः प्रैषदर्शनात् ॥३॥ पुरोडाशानासाद्याज्य°जति अत्र हि क्रमे स्वि°त्योः प्रैषे आज्यभागदेवतयोः संकीर्तनदर्शनात्। सं° अत्रावसरे स्वि°त्योः प्रैषे आज्यभागयोर्दर्शनात् यत्राग्नेः प्रिया धामानीत्यादि (२१.४६)। यथोक्तं वा मन्त्राणामविधानात् ॥४॥ वाशब्दः पक्षव्यावृत्तौ नात्र आज्यभागौ विद्येते यथाप्राप्तमेवाज्यभागयोरनुष्ठानम् कथं च प्राप्तिः ग्रहयागात्पूर्वम् तेषां हि दर्शपूर्णमासचोदकेनाज्यभागयोः प्राप्तिः · यत्तु स्विष्ट°र्शनादित्युक्तम् (३) तन्न मन्त्राणामविधायकत्वात् न हि विधायका मन्त्राः।

त्रयस्त्रिᳪशतं दक्षिणा ददात्यनुशिशुं च वडबधेनुम् ॥५॥ ननु च धेनुग्रहणादेवानुशिशुत्वं प्राप्तम् अनुशिशुग्रहणं न कर्तव्यम् न तत्कृतोपकाराभावाच्छिशुर्न लभ्यते तस्मात्कर्तव्यमेव · धेनुग्रहणं तर्हि न कर्तव्यम् नैतदेवम् न हि अक्रियमाणे हि परशिशुरपि प्राप्नुयात् तन्मा भूदित्युभयमुक्तम् · अस्मिन्नवसरे दक्षिणादानमुक्तम् पशुपुरोडाशान्ते यथा स्यादिति। सं° वडवा चासौ

1) See schol. at ६.१०.१७ २८.

शिशुश्च सः तत्रैव जातो यः शिशुः तेन सहितां वडबां दद्यात्। एकादशि-
निधर्माः पशुगणेषु ॥६॥ भवन्ति गणत्वसामान्यात्। सं॰ पशूनां गणाः द्विप्रभृ-
तिपशुसमूहाः · तेषु पशुगणेषु एकादशिनीधर्मा नियोजनादयो भवन्ति। शमित्रनुशा-
सनप्रभृति वनस्पत्यन्तं कृत्वा सोमासन्दीवदासन्दीं जानुमात्रपादीं वेद्योर्निदधाति
क्षत्रस्य योनिरिति (२०. १) ॥७॥ ह्वा ऽउत्तर॰णास्यामिति (१२. ८. ३. ६) श्रुतेः · शमि-
त्रनुशासनं तु द्वितीयं कर्तव्यम् प्रथमं हि सवनीयचोदकपरिप्राप्त्या पशुपुरोडाशा-
द्योदकदानान्ते[१] तत्पात्रसंमार्गं कृत्वा निर्वृत्तमिति। सं॰ सोमा॰वदित्यनेन मुञ्ज-
रज्ज्वा व्यूताम् (७. १. २७)। कृष्णाजिनमस्यामास्तृणाति मा त्वेति (२०. १)
॥८ आसन्द्याम्। तस्मिन्नास्ते यजमानो निषसादेति (२०. २) ॥९॥ यजमान
उपविशेत्। पादयो रुक्माऽउपास्यति राजतं सव्ये मृत्योरिति (२०. २) ॥१०॥
सौवर्णं शिरस्येके विद्योदिति (२०. २) ॥११॥ सौवर्णं पुनः शिरस्येकऽआचार्याः
उपास्यन्ति एके दक्षिणपादे। क्षुरैर्वसाग्रहान्द्वात्रिंशतं जुहोति सीसेने-
ति (११. ८०-९५) प्रत्यृचम् ॥१२॥ क्षुराश्चार्षभाः प्रतिपत्तव्याः। द्वौ-द्वौ जुह्वा
शेषात्स्तते करोति ॥१३॥ तांश्च द्वौ-द्वौ जुह्वा तच्छेषात्स्तते करोति वैतसे।
सर्वसुरभ्युन्मृदितं शेषैरभिषिञ्चत्या मुखादवस्रावयन्प्रतिदिशं सर्वत्र सावित्र-
मश्विनोः सरस्वत्याऽइन्द्रस्येति (२०. ३) प्रतिमन्त्रम् ॥१४॥ सर्वसुरभि[भि]श्चन्दनादि-
भिर्यजमानंमुन्मृदितं ग्रहशेषै॰षिञ्चति · आ मुखादिति मर्यादेयम् अकर्मविषयत्वात्·
प्रतिदिशं व्यवस्थितः सर्वतः॰क्राममिति (१२. ८. ३. १७) वचनात् · सर्व॰वित्रम्
सर्वाभिषेकेषु सावित्रं मन्त्रमाह। सं॰ त्रिष्वपि मन्त्रेषु सावित्रमनुषजन्ति।
सर्वाभिश्चतुर्थम् ॥१५॥ अभिषेकम् सर्वाभिर्देवताभिः करोति पुरस्ता॰च्छन्नम-
ग्नतऽइति (१२. ८. ३. १७) प्रकृत्य श्रुतेः। महाव्याहृतिभिरेके ॥१६॥ सा चेयं
स्वपदविभाषा · तं हैकऽ॰व्याहृतिभिरिति (१२. ८. ३. १८) वचनात्। अत्र न ज्ञा-
यते किं व्याहृतिपदं पूर्वं देवतापदेभ्यः उतोत्तममित्यत आह ·
उत्तमेन वा ॥१७॥ उत्तमेन व्याहृतिपदेनाभिषेको न पूर्वेण न चानियमः·
कुत एतत् पाठक्रमात् तं हैकऽएता॰हृतिभिरिति (१२. ८. ३. १८)। सं॰ उत्तमेने-

[१] Thus K. sec. m. द्यस्यो॰ pr. m.

न्द्रस्येन्द्रियेणेत्यनेन[1] चतुर्थमभिषिञ्चति। उन्मर्दनमभिषेकेऽवनीयेके ॥१८॥ उन्मर्दनं चन्दनादि · तदभिषेकेऽवनीय अभिषेकमेके कुर्वन्ति। सं॰ उन्मर्दनं सर्वसुरभि चन्दनाद्युद्वर्तनसाधनमभिषेके वसाशेषमध्येऽवनीयाभिषेकमिच्छन्ति।

यजमानमालभते कोऽसीति (२०. ४) ॥१९॥ सुश्लोकेत्यालब्धो (२०. ४) ह्वयति ॥२०॥ यदुक्तं भवति यजमानः। सं॰ अध्वर्युणा आलब्धः कृतान्वारम्भो यजमानः सुश्लोकादिसंज्ञान्पुरुषानाह्वयति। अङ्गानि चालभते यथालिङ्गं शिरो मऽइति (२०. ५) प्रतिमन्त्रम् ॥२१॥ चशब्दाद्यजमान एव यऽङ्गमङ्गान्यालभते · अत्र चास्त्विति क्रियापदाध्याहारः साकाङ्क्षत्वाद्यथायोगं मेऽइति च पदस्यानुषङ्गः। उद्यच्छन्त्येनं शतरुद्रियवत्प्रमाणेषु ॥२२॥ एनं यजमानं सुश्लोकादय आहूता उत्क्षिपन्ति · शत॰वत्[2] जानुदघ्नादिषु प्र॰षु · कुत एतत् एवं दृष्टार्थताह्वानस्य भवति सुश्लोकादिग्रहणं च राजसूयवदेव[3] नामोपलक्षणार्थम्। सं॰ उद्यच्छन्ति ऊर्ध्वमुत्पाद्य एतेषु प्रमाणेषु धारयन्ति। कृष्णाजिनेऽवरोहति प्रति क्षत्रऽइति (२०. १०) ॥२३॥ कृष्णाजिनेऽवतरति यजमानः।

त्रयस्त्रिंशं वसाग्रहं गृह्णाति यो भूतानामिति (२०. ३२) ॥२४॥ त्रयस्त्रिंशग्रहणाच्च क्षुरेण ग्रहणम्। आज्यग्रहमाद्यत्येनेके ॥२५॥ पात्रेण गृह्णन्ति · ततश्चाह्वनीय[य]जतित्वाद्ध्रुवायाः सवषट्कारत्वाच्चतुर्ग्रहणमाप्याय[नं] च। सं॰ न वसाग्रहं ॥ ॥ चतुर्थी कण्डिका ॥४॥ ॥

साम प्रेष्यति ॥१॥ साम गायेत्येवम् ब्रूहीति वा · ब्रह्मा गायति।

ऐन्द्र्यां बृहत्यां गायति ॥२॥ इन्द्रलिङ्गायां (२०. ३०) बार्हतेन छन्दसोपेतायामृचि।

सत्श्रवसे विश्रवसे सत्यश्रवसे श्रवसऽइति सर्वे निधनमुपयन्ति ॥३॥

संजित्यै विजित्यै सत्यजित्यै जित्याऽइति क्षत्रियस्य ॥४॥ निधनम्।

सम्पुष्ट्यै विपुष्ट्यै सत्यपुष्ट्यै पुष्ट्याऽइति वैश्यस्य ॥५॥ निधनम् · अश्यङ्गतया तयोरपि प्रापितत्वात्सौत्रामण्याम्[4]। यथाम्नातं वा सर्वेषाम् ॥६॥ सर्ववर्णानां वा यथा॰तं निधनं भवति तच्च सत्श्रवसऽइत्येवमादि (१२. ८. ३. २९)। सं॰ य॰तम् यथा स्वाध्यायपठितम् संश्रवसऽइत्याद्येव। आस्ते प्रतिगरिष्यन् ॥७॥

---

1) sic! 2) See १८. १. २. ff. 3) See १५. ७. १०. 4) See at १. १. Lâtyây. ५. ४. १३.

होतुरग्रतः। त्रया देवा इति (२०.११) शस्त्रान्ते जुहोति ॥८॥ ग्रहम् · तच्चा-नुवाचनयजप्रैषपूर्वकम् · देवताश्चात्र प्रकृता[1] एव · तथा याज्यानुवाक्ययोः तद-भिधानं दृश्यते अश्विना तेजसाश्विना पिबतमिति (२०.८० १०)।

शेषमृत्विजः प्राणभक्षं भक्षयन्ति प्राणपा मऽइति (२०.३४) ॥९॥ ग्रहशेषम्।

प्रत्यक्षभक्षं यजमानो लोमानि प्रयतिरिति (२०.१३) ॥१०॥ स्विष्टकृत्प्र-भृत्या बर्हिर्होमात्कृत्वा परिस्रुत्क्षीरलिप्तान्यादायावभृथवद्गमनम् ॥११॥ स्वि°भृति बर्हिर्होमान्तं कृत्वा परि°थवद्गच्छन्ति · शूलावभृथेन व्यवधानादवभृथवदित्युच्यते।

आ शूलाभिमन्त्रणात्कृत्वोदकाधिष्ठानप्रभृत्यावभृथेष्टेः ॥१२॥ सं° हृदयशूलमु° (६.१०.३) [अ]त आरभ्य शूलाभिमन्त्रणान्तं कर्म कृत्वा प्रवेशनादारभ्यावभृथेष्ट्यन्तं करोति। मासरकुम्भं प्लावयति यद्देवा इति (२०.१४-१८) ॥१३॥

पूर्ववन्मज्जनम् ॥१४॥ मासरकुम्भस्यैवावभृथे निमज्जनम्। सं° पूर्ववदित्यवभृ-थेति (२०.१८ १९) मन्त्रेण[2]। सुमित्रिया न इत्यपोऽञ्जलिनादाय दुर्मित्रिया इति (२०.१९) द्वेष्यं परिषिञ्चति[3] द्वौ विक्रमाऽउदङ्कृत्वा ॥१५॥ प्रतिषिञ्चति। या-मस्यऽपरासिञ्चेदिति (१२.१.३.६) वचनात्। अवभृथवत्स्नात्वा वासोऽपासनं द्रुपदादिवेति (२०.२०) ॥१६॥ अव°वत्स्नानग्रहणं वासोऽपासनार्थम् प्राप्तत्वादेव। सं° सौमिकावभृथवदेव स्नात्वा जलस्थलऽएवान्ये वाससी परिधाय।

सोमवदुत्क्रमणमागमनं च ॥१७॥ सोमवदेव (१०.१.७) उद्वयमित्युन्नयनम् (२०.२१) आमहीयजपवदागमनम्। आहवनीयमुपतिष्ठतेऽपोऽअद्येति (२०.२२) ॥१८॥

एधोऽसीति (२०.२३) समिधमादायाहवनीयेऽभ्यादधाति समिदसीति (२०.२३) ॥ १९॥ शूलावभृथसमिदाधानं सौत्रामणिकं च तन्त्रेण कालैकत्वाज्जुहोति।

जुहोति च समाऽववर्त्तीति (२०.२३) ॥२०॥ चशब्दाच्छेषपरिसमाप्तिं करोति।

उदवसाय पयस्या मैत्रावरुणी ॥२१॥ कर्तव्या · अस्याश्च पूर्वमादित्येष्टिरुक्तैव। सं° उत्पूर्वोऽवस्यतिः प्रदेशान्तरगमने वर्तते। तदन्ते पशुरिन्द्राय वयोधसे ॥२२॥ तच्छब्देन पयस्या परामृश्यते ॥ ॥ पञ्चमी कण्डिका ॥५॥ ॥

---

1) Thus K pr. and tertia m. प्राकृता sec. m. 2) see १०.१.३. 3) Thus १. M. K. प्रतिनिषि° ३ pr. m.

आचार्येण सौत्रामण्यनुविहिता। इदानीमध्वर्युवेदविहितहौत्रव्याख्यानोपन्यासाय न्यायोपप्रदर्शनायाचार्य[1] आह · सौत्रामण्यामिष्टिपशवो भिन्नतन्त्राः[2] कालभेदात् ॥१॥ इह चादित्यपयस्यात्रिपशूनामन्यत्रापि सम्भवात्तद्विषयतापि मा भूदिति सौ°णीग्रहणम् प्रयोगवचनैकत्वप्रज्ञप्त्यर्थं च एको हि प्रयोगवचनोऽत्र ऋद्धिकामः सौत्रामण्या यजेतेति · अत्रेष्टि°शवो भिन्न°न्त्राः भवन्ति · कुत एतत् का°त् भिन्नो हि कालः आदित्यं चरुं यद्य°मीजान इति (१२.१.२.११) चैवमादि · ननु च प्रयोगवचनैकत्वे राजसूयेन स्वाराज्यकामो यजेतेत्यत्र कालभेदात्तन्त्रभेद उक्तः इष्टि°भेदादिति किमर्थं पुनरुच्यते सत्यम् एतदेवम् तत्र ह्य[ा]नुमत्यादीनां फलैकत्वे तन्त्रभेदोऽभिहितः इह पुनस्तथा नेति इह हि यागविशेषाणां सौत्रामणीसंशब्दितानाम् ऋद्धिकामः सौत्रामण्या यजेतेति फलसम्बन्धः तत्संनिधानादितरेषां तदङ्गतेति वैषम्याद्भेदेनोच्यते अङ्गानां प्रधानानां च प्रयोगवचनैकत्वादेकतन्त्र्यं मा भूदित्युच्यते · ननु च ज्योतिष्टोमवदत्रैकतन्त्र्यं कस्मान्न भवत्यङ्गानां प्रधानानां च नेत्युच्यते तत्र हि ऋत्विग्वरणादेवयजनजोषणादीनामुत्तरकालं दीक्षणीयादिविधानम् इह पुनरादित्यादीनामङ्गत्वेऽपि सति कालभेदात्तन्त्रभेद इति न दुरुक्तम्। सप्तदश सामिधेन्यः ॥२॥ अत्र भवन्ति · अनारभ्य समधीतं साप्तदश्यं प्रकृतितः पाञ्चदश्येनोत्कालितम् यत्र-यत्र श्रूयते तत्र-तत्र भवति। वार्त्रघ्नावाज्यभागौ ॥३॥ अत्र भवतः। वृधन्वन्तौ वा पशुषु सांनाय्यविकारात् ॥४॥ पशुषु यस्याज्यभागौ तस्य वृ°न्तौ भवतः · पशुषु पयोग्रहा भवन्ति तेषां सां°राद्वृधन्वन्तौ भवतः। सं° कुतः पशोः सां°रात्।

आमिक्षायां च ॥५॥ वृधन्वन्तावेव सांनाय्यविकारत्वात् · अधस्तनसूत्रे (४) पशुष्विति विशेषितत्वादामिक्षायामप्राप्तिर्मा भूदिति भेदेन ग्रहणम्। उपांशु देवतेष्टिषु ॥६॥ भवतीति वाक्यशेषश्च। विराजौ संयाज्येऽअविशेषोपदेशात् ॥७॥ संयाज्याशब्देन स्विष्टकृत्सम्बन्धिन्यौ याज्यानुवाक्ये उच्येते (५.१३.२) ते च प्रेद्धोऽअग्नऽइमोऽअग्नऽइति (ऋक्सं° ७.१.३ १८) · अविशेषेण हि सौत्रामणीं प्रकृत्य विराजौ संयाज्येऽइति समाम्नायते। वसिष्ठशुनकानां नाराशंसः

---

१) ? °र्ययन्नाचार्य Cod. २) ? °शवः। अभि° ३. M. भिन्न° K.

॥८॥ वसिष्ठानां शुनकानां च नाराशंसो द्वितीयः प्रयाजो भवति। अत्रीणां चैके ॥९॥ द्वितीयं नाराशंसमिच्छन्ति एके तनूनपातम्। प्राकृताः प्रथमोत्तमयोः प्रयाजानुयाजप्रैषाः ॥१०॥ चोदकप्राप्त्या भवन्ति। सं° प्रथ°योः पश्वोः बह्वृचानां प्रैषाध्याये पठिताः प्राकृता इत्युच्यन्ते। ऐन्द्रानेके प्रथमस्य वायोधसानुत्तमस्य ॥११॥ तत्कुतो लिङ्गात् होता यक्षत्समिधेन्द्रमिडस्पदऽइति (२८. १) एवमादि तत्पुनर्बर्हिः प्रकरणात्पाठे सति लिङ्गं विनियोजकमिति पर्यालोचनीयम्। सं° ऐन्द्रस्य पशोः ऐन्द्रान् होता यक्षत्समिधेन्द्रं देवं बर्हिरिन्द्रमित्यादीन् (२८. १. १२)। समिद्ध इन्द्र इत्याप्रियः (२०. ३६-४६) प्रथमस्य ॥१२॥ प्रयाजयाज्याः प्रथमस्य पशोर्भवन्ति। याज्यानुवाक्याश्च वपापुरोडाशपशूनामायाविन्द्र इति (२०. ४७-५२) ॥१३॥ चशब्दात्प्रथमस्य भवन्ति। सं° आयाविन्द्र इत्यादयः षडृचः यथाक्रममैन्द्रस्य भवन्ति। होता यक्षत्समिधाग्निमिति (२१. २९-४०) प्रयाजप्रैषास्त्रिपशोः ॥१४॥ आप्रियश्च समिद्धोऽअग्निरश्विनेति (२०. ५५-६६) ॥१५॥ चशब्दात्त्रिपशोरेव। अश्विना हविरिति (२०. ६७-६९) तिस्रो वपानां याज्यानुवाक्याः ॥१६॥ प्रथमामनूच्य द्वितीया याज्या द्वितीयामनूच्य तृतीया याज्या तृतीयामनूच्य प्रथमा याज्या ॥१७॥ सर्वाः पुरो°याज्या इति श्रुतेः (१२. ८. २. ३५) · तथा सर्वाः प्रथमा°उत्तमा इति (°३५)।

य इन्द्र इति (२०. ७०-७२) पुरोडाशानां पूर्ववत् ॥१८॥ पूर्ववच्छब्दे[न] प्रथमामनूच्ये[त्ये]वमादि (१७) लभ्यते। सं° त्रयाणां पशुपुरोडाशानाम्। अश्विना गोभिरिति (२०. ७३-७५) च हविषाम् ॥१९॥ चशब्दात्पूर्ववद्याज्यानुवाक्याः।

ग्रहाणां युवᳪ सुरामं पुत्रमिवेति (२०. ७६-७७) ॥२०॥ याज्यानुवाक्ये भवतः। सं° त्रयाणां पयोग्रहाणां सुराग्रहाणां च षड्ग्रहा भ° सर्वेषां ग्रह°भवत इति श्रुतेः (१२. ८. २. ३४ ३५)। पशुस्विष्टकृतो यस्मिन्नश्वासोऽहाव्यमऽइति (२०. ७८-७९) ॥२१॥ या°क्ये। होता यक्षदश्विनाविति (२१. ४१) त्रयो वपानां प्रैषा यथालिङ्गम् ॥२२॥ ग्रहाणां चतुर्थः (२१. ४२) ॥२३॥ प्रैषो भवति। सं° होता यक्षदश्विना सरस्वतीत्ययं चतुर्थः प्रैषो ग्रहाणां भवति। हविषामुत्तरे (२१. ४३-४५) यथालिङ्गम् ॥२४॥ सं° चतुर्थात्प्रैषादुत्तरे होता यक्षदश्विनौ छागस्य

हविष इत्याद्यास्त्रयो यज्ञं प्रैषा भवन्ति। उत्तमौ (२१.४६-४७) वनस्पतिस्विष्टकृतोः ॥२५॥ यथालिङ्गमेव भवतः। सं० अन्ते पठ्यमानौ वनस्पतिमभि० अग्निं स्विष्टकृतम् इमौ प्रैषौ भवतः। प्रतिगरिष्यत्युपविष्टेऽध्वर्यो शोंसावेत्याह्वय ॥२६॥ केचिदुपविष्टेऽध्वर्याविति पठन्ति तेषाम् शोंसावेत्येतावानेवाह्वावः॥ ॥ षष्ठी कण्डिका ॥६॥ ॥

अश्विना तेजसेत्यनुवाकं (२०.८०-१०) शंसति ॥१॥ त्रिः प्रथमान्त्ये ॥२॥ सं० ऋचौ त्रिर्वारं पठति। त्रिचादिष्वाह्वय ॥३॥ त्रिचस्य-त्रिचस्यादौ आह्वावं कुर्यात्। सं० अस्मिन्ननुवाके एकादशऽर्चो वर्तन्ते तासां प्रथमोत्तमयोस्त्रिः शंसनमुक्तम् परिशिष्टास्त्रयस्तृचाः तेषामादिष्वाह्वय। उत्तमां शिष्ट्वा प्राङ्नवम्या दशम्या वा त्रया देवा इति (२०.११) निवित्सप्तदशावसानां ॥४॥ उत्तमाया ऋचः प्राक् नवम्या वा दशम्या वा निविंसाना शस्यते। ओङ्कारः ऋगन्ते ॥५॥ निवित्पदावसानेऽओङ्कारो भवति। अन्त्येऽक्षरे स्वरप्रभृति प्रणवे लोपः ॥६॥ ऋचो यदन्त्यमक्षरम् तस्य प्रणवे परत्रावस्थिते। सं० ऋचः सम्बन्धिन्यन्त्येऽक्षरे प्रणवे परे ओङ्कारे परे स्वरप्रभृतिवर्णजातस्य लोपो भवति तद्यथा इन्द्राय दधुरिन्द्रियम् (२०.८०) अम् इत्येतावदत्र लुप्यते तेन इन्द्रियोमित्येवं सम्पद्यते एवं सर्वत्र ज्ञेयम्। तस्मिन्प्रणवान्तं चैके ॥७॥ तस्मिन्नेव प्रणवे चैकेऽन्तमपि लुम्पन्ति[1] तत्र मकारो लुप्यते ओ इत्येतावानेव प्रणवो भवति।

अश्विना तेजसाश्विना पिबतामिति (२०.८० १०) याज्यानुवाक्ये सशस्त्रस्य ॥८॥ ग्रहस्य भवतः अनयोश्च ऋचोरपि नियुक्तत्वाच्छस्त्रे अप्रयोगो मा भूदिति अनुवाक्यग्रहणमधस्तात्कृतम् (१)। सं० त्रयस्त्रिंशत्तमे सशस्त्रग्रहे। अनुवाचनप्रैषौ समस्यानुयाजप्रैषा देवं बर्हिरिति (११.४८-५८) ॥९॥ सं० अनुब्रूहीत्यनुवाचनम् अमुं यजेति प्रैषश्च तौ समस्य कर्तव्यौ देवतापदान्यविभक्तिलोपेनैव समस्य कर्तव्यौ अश्विभ्यां सरस्वत्याऽइन्द्राय सुत्राम्णोऽनुब्रूहीत्येवम् देवं बर्हिः सरस्वती त्रिपशोः। याज्याश्च ॥१०॥ एता एव। सं० देवं बर्हिरित्याद्या एवानुयाजानां याज्याश्च भवन्ति। अग्निमद्येति (२१.५१) सूक्तवाकप्रैषः ॥११॥

1) Thus Ss. लुप्यंति K.

प्राकृतं सूक्तवाकप्रभृति प्रागवभृथेष्टेः ॥१२॥ सं॰ सर्वं प्राकृतं प्रकृतिवदेव भवति । अनुक्तं च ॥१३॥ यच्चान्वयेन होतुः प्राप्नोति तदप्यत्रैव भवत्येव । सं॰ यदत्र प्रकरणे अनुक्तं प्रणयनीयानुवाचनाग्निमन्थनीयामनोतायूपाञ्जनोच्छ्रयणादि तत्सर्वं प्राकृतं भवति । इमं मे तत्त्वेत्येककपालस्य (२१.१-२) ॥१४॥ या॰क्ये भवतः । अग्नीवरुणयोस्त्वं नः स त्वमिति (२१.३-४) ॥१५॥ या॰क्ये । आदित्यस्य सुत्रामाणं महीमू षु मातरमिति (२१.६ ५) ॥१६॥ आ नः प्र बाहवेति (२१.८-९) पयस्यायाः ॥१७॥ वाजिनस्य शं नो वाजे-वाजऽइति (२१.१०-११) ॥१८॥ अयं तु विशेषः · अनवानं याज्या ॥१९॥ वायोधसाप्रियः[1] समिद्धोऽअग्निः समिधेति (२१.१३-२२) ॥२०॥ वायोधसस्य पशोः प्रयाजयाज्याः । याज्यानुवाक्याश्च[2] वपापुरोडाशपशूनां वसन्तेनऽऋतुनेति (२१.२३-२८) ॥२१॥ चशब्दाद्वायोधसस्यैव ॥ ॥ सप्तमी कण्डिका ॥७॥ ॥

इत्युपाध्यायकर्कविरचिते कात्यायनसूत्रभाष्ये एकोनविंशतिमोऽध्यायः ॥१९॥ ॥
सौत्रामणी समाप्ता ॥

इति कात्यायनसूत्रेऽएकोनविंशोऽध्यायः ॥१९॥

---

सौत्रामणीविधानसमनन्तरं श्रुतिमन्त्रपाठावसरप्राप्तोऽश्वमेधोऽनुविधीयते । राजयज्ञोऽश्वमेधः सर्वकामस्य ॥१॥ राजशब्दोऽभिषेकवति क्षत्रिये वर्ततऽइत्युक्तं प्रदेशान्तरे · तथा च क्षत्रिययज्ञ॰यदश्वमेधः (१३.४.१.२) तस्माद्राजाश्वमेधेन यजेतेति (१.६.३) · राज्ञो यज्ञः राजयज्ञः न ब्राह्मणवैश्ययोरिति । अश्वमेध इति त्रिरात्रस्य यज्ञक्रतोर्नामधेयम् · स सर्वकामस्य भवति सर्वकामावाप्तिश्च परमात्माख्यसत्त्वप्राप्तिमन्तरेण न भवति यावच्छरीरकालभाविनो हि कामा इति · तेन सर्वकामस्येति मुमुक्षोः · तथा चाह सर्वान्ह॰यजतऽइति (१३.४.१.१) । अष्टम्यां नवम्यां वा फाल्गुनीशुक्लस्य ॥२॥ फाल्गुनशुक्लपक्षे[3]ऽष्टम्यां नवम्यां वा प्रारम्भः · सा यासौ फाल्गुनी पौर्णमासी भवतीति (१३.४.१.४) प्रकृत्य तस्यै

---

१) वा॰स॰आप्रि॰ Mahîdh. २) याज्यापुरो॰नु॰ Mahîdh. ३) फा॰न्याः संबंधी शुक्लपक्षः फाल्गुनीशुक्लः वसंतप्रत्यासन्नः Deva.

पुरस्तात्षडहे वा सप्ताहे वा ऋत्विज उपसमायन्तीति श्रुतेः । ग्रीष्मऽएके ॥३॥ आरम्भं कुर्वन्ति श्रुतेरेव (१३.४.१.२) । सं° ज्येष्ठाषाढयोः शुक्लाष्टम्यां नवम्यां वा । ब्रह्मौदनं पचति चतुर्णां पात्राणामञ्जलिप्रसृतानां च ॥४॥ सं° चतुर्णां पात्राणां चतुर्णामञ्जलीनां चतुर्णां प्रसृतानां च प्रसृतश्चैकहस्ताङ्गुलिकोशः । अक्तेनमाघ्नर्त्विग्भ्यः प्रयच्छति ॥५॥ एनमोदनम् । तेभ्यश्चत्वारि सहस्राणि ददाति शतमानांश्च तावतः ॥६॥ चत्वारि गोसहस्राणि चत्वारि च सुवर्णरक्तिकाशतानि । सं° गवां सहस्रं प्रत्यृत्विजमेकैकम् · शतमानवतः तांश्च हिरण्यस्य । अन्नाद्यशेषेण रशनां द्वादशारत्निं त्रयोदशारत्निं वा निदधाति ॥७॥ सं° ब्रह्मौदनाञ्जनार्थाद्यशेषेण । आदानकाले वाञ्जनम् ॥८॥ कार्यार्थत्वात् एवं वाद्यशेषं स्थाप्यते वाशब्दोऽवधारणार्थः । सं° पौष्ण्या इष्टेरनन्तरम् ।

निष्कं प्रतिमुञ्चन्वाचयति तेजोऽसीति (२२.१) ॥९॥ चतुःसौवर्णिकं निष्कमाभरणविशेषं यजमाने प्रयच्छति । वाचं यच्छेति चाह ॥१०॥ चशब्दादनन्तरम् ।

आ वरदानाद्वाग्यमनम् ॥११॥ पत्न्यश्चायन्त्यलङ्कृता निष्किण्यो महिषी वावाता परिवृक्ता पालागली सानुचर्यः शतेन-शतेन ॥१२॥ (१३.४.१.८) । सं° पत्न्यो यजमानसमीपे आगच्छन्ति · महिषी प्रथमपरिणीता स्त्री · द्वितीया वावाता वल्लभा · तृतीया परिवृक्ता अवल्लभा · पालागली दूतपुत्री · अनुचरीणां शतेन-शतेन सानुचर्यस्ताः पत्न्यो भवन्ति । राजदुहितरः प्रथमायाः ॥१३॥ सं° महिष्या राजपुत्र्योऽनुचर्यो भवन्ति । राजन्यानां द्वितीयायाः ॥१४॥ पत्न्याः राजन्यदुहितरोऽनुचर्यः । सं° क्षत्रियजातिमात्राणां दुहितरः । सूतग्रामण्यां तृतीयायाः ॥१५॥ सूतः संकरजातः ग्रामणीर्महत्तरः तयोर्दुहितरस्तृतीयाया अनुचर्यः । सं° सूतोऽश्वपोषकः । क्षात्तसंग्रहीतॄणां चतुर्थ्याः ॥१६॥ पत्न्याः अनुचर्यो भवन्ति · क्षत्ता प्रतीहारो दूतो वा संग्रहीता च सारथिः । सं° क्षत्तार आयव्ययाध्यक्षाः तेषां समूहः क्षात्त्रम् । अग्न्याधेयवत्प्रविश्य हुतेऽग्निहोत्रेऽपरेण गार्हपत्यमुदक्शिराः संविशति ॥१७॥ अग्न्याधेयवदिति पूर्वया द्वारा (४.७.१३) यजमा[नोऽग्न्यगारं प्रविशति][1] । ऊर्वन्तरे वावातायाः ब्रह्मचारी

[1] There is here (between fol. ८६b and ८७a) a lacuna in K, which reaches to ३२.

॥१८॥ सं॰ अन्तरा ऊरू शेते (१३.४.८.३)। इतराश्चान्वक् ॥१९॥

प्रातराहुत्याऽऽहुतायां पूर्णाहुत्यन्ते वरदानं ब्रह्मणे ॥२०॥ अध्वर्यवे च प्रतिमुक्तं निष्कम् ॥२१॥ सं॰ ददातीति शेषः। पुरोडाशोऽग्नये पथिकृते ॥२२॥ शतमानं दक्षिणा सौवर्णम् ॥२३॥ हिरण्यपरिमाणेऽन्यत्रापि[1] ॥२४॥ पौष्णं चरुं निर्वपति ॥२५॥ वासःशतं दक्षिणा ॥२६॥ देवस्य त्वेति (२२.१) रशनामादाय ब्रह्मन्नश्वं भन्त्स्यामीत्याह (२२.४) ॥२७॥ तं बधानेति (२२.४) ब्रह्मानुज्ञातोऽभिधा असीति (२२.३) बध्नात्यश्वम् ॥२८॥ त्रिरूपं सर्वरूपं वा ॥२९॥ सं॰ तस्य कृष्णः पूर्वार्ध इत्यादि (१३.४.२.४)। शीघ्रम् ॥३०॥ सं॰ वेगवत्तरम्। दक्षिणाधुर्यसमम् ॥३१॥ साहस्रम् ॥३२॥ गोसहस्रार्हम्। सं॰ गवां सहस्रं मूल्यं योऽर्हति। ललामं ॥३३॥ नीलीपौण्ड्रकम्[2]। सं॰ नीलवर्णलाञ्छनयुक्तम्। कृत्तिकाञ्जिं वा ॥३४॥ कृत्तिका शकटमिव यस्य ललाटे पौण्ड्राणि· अत्र येषां वर्णानामविरोधस्ते समुच्चीयन्ते येषां-येषां विरोधस्ते आम्नानसामर्थ्याद्विकल्पन्ते। सं॰ कृत्तिका शकटाकारमञ्जि पुण्ड्रं[3] ललाटे यस्य सः। पूर्वकायकृष्णं शुक्लापरम् ॥३५॥ तस्य कृष्णः५पराध इति श्रुतेः (१३.४.२.४)। कृष्णसारङ्गं वा ॥३६॥ कृष्णवर्णसहितान्यवर्णम्। सं॰ कृष्णवर्णो वर्णान्तरमिश्रः कृष्णसारङ्गः।

स्थावरा अपो गत्वा प्रजापतये त्वेति (२२.५) प्रोक्षत्यश्वं प्रतिमन्त्रम् ॥३७॥ या न वहन्ति ताः स्थावरा आपः। आयोगवमाह श्वानं चतुरक्षमभिमन्यस्वेति[4] ॥३८॥ आयोगवः संकरजातः वैश्यायां शूद्रेण जातः· चतुरक्षश्वाभावाच्चस्याक्षिसमीपे पौण्ड्राणि स गुणवृत्त्या चतुरक्षः। पुँश्चलूमेके ॥३९॥ आश्वेत्येवमाहुः· पंश्चलू[:] स्त्रीलोलुप उच्यते। सिध्रकमुसलेनैनं हन्ति ॥४०॥ स एवं प्रेषितः सन् [आयोगवः पुंश्चलूर्वा] सि᳚नं श्वानं हन्ति [मारयति]। सं॰ सिध्रकवृक्षोद्भवेन ॥ ॥ प्रथमा कण्डिका ॥१॥ ॥

योऽर्वन्तमिति (२२.५) वाचयति ॥१॥ वेतसकटेनाधोऽश्वं प्लावयति

---

1) See at ४.४.२८. यत्र-यत्र शतमानं श्रूयते तत्र हिरण्ये ज्ञातव्यम् न रजतपरिमाणे Deva.
2) Thus K pr. m. नीलं पौं॰ K sec. m. 3) पुंड्रं Ss. AB. 4) हन्यस्वेति B!

परो मर्त इति (२२. ५) ॥२॥ सं॰ वेतसवृत्तशाखानिर्मितेन कटकेन तं मारितं श्वानमश्वस्याधःप्रदेशे जलमध्ये प्लावयति तारयति। अग्निसमीपमानीयाग्नये स्वाहेति (२२. ६) जुहोत्यनुवाकेन प्रतिमन्त्रम् ॥३॥ अग्नि॰नीयाश्वम्।

सहस्रं वावर्तम् ॥४॥ सहस्रं वाहुतीनां जुहोत्यनुवाकमावर्त्यावर्त्य वचनात् (१३. १. ३. १)। आश्वस्रवणविरमणाद्वा ॥५॥ सं॰ अथवा न सहस्रस्य नियमः· किंतु आ अश्व॰द्वा यावत्कालं छिन्नादश्वशरीराद्रुदकं स्रवति तावज्जुहोतीत्यर्थः [शाखान्तरात्]। द्वादशकपालान्निर्वपति भिन्नतन्त्राञ्छतमानदक्षिणान्मध्यमस्य राजतः सवित्रे प्रसवित्रे सवित्रऽआसवित्रे सवित्रे सत्यप्रसवायेति ॥६॥ कालैक्यात्तन्त्रैक्यं मा भूदिति भिन्नतन्त्रानित्युक्तम्· मध्यमस्य राजतः शतमानो दक्षिणा इतरयोः सौवर्णाः। प्रयाजेषु दक्षिणतो ब्राह्मणो यजमानस्य यज्ञदानयुक्ताः स्वयंकृतास्तिस्रो गाथा गायत्युत्तरमन्द्रायाम् ॥७॥ उत्तरमन्द्रा च गायनप्रसिद्धा· वीणासंगतं च गानम् वीणागाथीति श्रुतेः (१३. ४. २. ८)· प्रयाजेषु तायमानेषु दक्षिणतो व्यवस्थितो ब्राह्मणः ब्राह्मणग्रहणादृत्विग्व्यतिरिक्तः यज्ञ॰कृता एव तिस्रो गाथा एव गायति उत्तरमन्द्रायां वीणागाथी स्व॰ताः। सं॰ पूर्वोक्तेष्टिप्रयाजेषु हूयमानेषु· उत्तरमन्द्रासंज्ञायां वीणायाम्।

राजन्यो धृतिषु युद्धजययुक्ताः ॥८॥ गाथा गायत्युत्तरमन्द्रायाम् वीणागाथी स्वयंकृताः यु॰क्ताः। सं॰ राजन्यः क्षत्रियः· धृतिषु हूयमानासु। अध्वर्युयजमानौ दक्षिणेऽश्वकर्णे जपतो विभूर्मात्रेति (२२. १३) ॥९॥ पशुवदुत्सर्जनं निरष्टेऽश्वशते ॥१०॥ पशुवदित्युत्तरपूर्वा दिग्लभ्यते (१६. ३. १५)· निरष्टे निरमणे[1] वृद्धतया। सं॰ अध्वर्युयजमानौ अश्वशते शतानामश्वानां मध्ये पशु॰नं कुरुतः· कीदृशे निरष्टे अश्वस्य [दन्त]गतान्यष्टौ [वयो]व्यञ्जनानि एकैकं त्रीणि-त्रीणि [वर्षाणि] अनुवर्तन्ते तानि निर्गतान्यस्मादिति निरष्टम् अतीतचतुर्विंशतिवर्षमित्यर्थः। देवा आशापाला इति (२२.१९) रक्षिणोऽस्यादिशत्यनुचरीजातीयांस्तावतस्तावतः कवचिनिषङ्गिकलापिदण्डिनो यथासंख्यम् ॥११॥ (१३.४.२.५)।

---

१) गतयौवने K. marg. निर्गतं रमणं क्रीडनं वृद्धतयास्मादिति निरमणम् गतयौवनम् Deva. See Harisvâmin at १३. ४. २. ५.

सं° अस्योत्सृष्टस्याश्वस्य अध्वर्युः रक्षिणो रक्षकान्पुरुषान्देवा इति मन्त्रेणादिशति · शतं राजपुत्रान्राजन्यपुत्रान् शतं सूतग्रामण्यां पुत्रान् शतं क्षात्त्रसंग्रहीतॄणां पुत्रान् · संनाहवन्तः कवचिनः खड्गधारिणो निषङ्गिनः कलापं शरावपनभस्त्रा तद्वन्तः वंशादिधारका दण्डिनः। वडबाभ्यो वारणम् ॥१२॥ अश्वस्य। प्रत्नेयाश्चोदकात् ॥१३॥ सं° स्नानार्हादुदकात्। ब्राह्मणोऽश्वमेधेऽविद्वान्वृत्तिः स वः ॥१४॥ इदानीं रक्षितॄणां वृत्तिमाह · अश्वमेधानभिज्ञो ब्राह्मणो वो वृत्तिः (१३. ४. २. १७)। सं° आश्वमेधिकसम्बन्धि कर्माज्ञानन् वो युष्माकं वृत्तिः जीवनम्। पक्वान्नं च सर्वेषु ॥१५॥ सं° अश्वमेधविद्वत्स्वपि ब्राह्मणेषु यत्पक्वान्नं तद्भवद्भिर्ग्राह्यम्। रथकारगृहवासाश्च[1] ॥१६॥ रथकारकुलऽएव वो वसतिरिति (१३. ४. २. १७)। अभिषेक्या भविष्यत समाप्नुवन्त इत्याह राजपुत्रान् ॥१७॥ नेतरान्। सं° राजपुत्रान्प्रत्याह यूयं अश्वरक्षणं समाप्नुवन्तः पट्टाभिषेकयोग्या भविष्यथ। दक्षिणतो वेदेर्हिरण्मयेषूपविशन्ति ॥१८॥ सम्प्रत्यभावाद्भूतकालीना वेदिः · तेषां विशेषमाह ·। सं° अध्वर्य्वादयो वक्ष्यमाणाः · अध्वर्युयजमानौ कूर्चयोः ॥१९॥ सौवर्णयोः। सं° सपादमासनं कूर्चः। फलकयोर्वा ॥२०॥ सं° पादरहितं फलकम्। होतृब्रह्मोद्गातारः कशिपुषु ॥२१॥ सं° कशिपुशब्देन मृद्वासनं मसूरक उच्यते। होतर्भूतान्याचक्ष्व भूतेष्विमं यजमानमध्यूहेति ॥२२॥ ॥ द्वितीया कण्डिका ॥२॥ ॥

पारिप्लवं प्रेष्यति ॥१॥ पारिप्लवमृग्द्वन्द्वमाख्यानम्। तस्मिंश्चस्यमाने[2] · हवै होतरिति प्रतिगृणाति तदन्ते प्रेष्यति वीणागणगिनो राजर्षिभिर्यजमानछ संगायतेति ॥२॥ वीणागणगिन उपसम्प्रेष्यतीति (१३. ४. ३. ३) श्रुतेः। सं° वीणगिनः वीणानामलाबुवीणा त्रितन्त्रिः सप्ततन्त्रिः शततन्त्रिः इत्यादीनां गणो वीणागणः तेन ये गायन्ति ते वीणगाः ते [शिष्यभूताः] सन्ति येषां [गायनाचार्यादीनां] ते [वीणगिनः] · राजर्षिभिरुपमानभूतैः सहोपमेयभूतं यजमानं संगायतेति [प्रेषार्थः]। दक्षिणाग्नौ[3] जुहोति हिङ्काराय स्वाहेति (२२. ७-८) प्रक्रमान् ॥३॥ प्रतिमन्त्रम् प्रक्रमसंज्ञकान्होमान्।

---

[1]) यूयं भवत Deva. [2]) °श्चंस्य° K. [3]) Thus १. ३. K. M. AB. दक्षिणेऽग्नौ Ss.

आहवनीयेऽस्तमिते चतस्रो धृतीर्जुहोति इह रन्तिरिति (२२.१३) ॥४॥ जुहोतीत्यनुवर्तते · चतस्र इति ग्रहणं मन्त्रविवेकार्थम् आहवनीयग्रहणमधिकृतदक्षिणाग्निव्युदासार्थम् । वावातासंवेशनसावित्र्युत्तरमन्द्रागानपारिप्लवधृतीः संवत्सरम्[1] ॥५॥ वावातासं°वित्रीणां चान्द्रमसः संवत्सरः तेन हि सर्वत्र व्यवहारः · पारिप्लवधृतीनां तु सावनः[2] · एवं हि श्रूयते पारिप्लवं प्रकृत्य षट्त्रिंशतं दशाहानाचष्टऽइति (१३.४.३.१५) · धृतिषु च षोडश नवतीरिता वाऽश्वस्य बन्धनमिति (१३.१.६.२) · इयं च संख्या सावनऽएव संवत्सरे घटते न चान्द्रमसऽइति । अर्धमासमासत्रैमास्यषण्मास्यानि चैके ॥६॥ वावातासंवेशनादीनि कुर्वन्ति शाखान्तरात् · अस्मिंश्च पक्षे सोमाविरोधिनोपक्रमः कार्यः । सं° एके पारिप्लवादीनि अर्धमासे मासे त्रैमास्ये षण्मास्ये कुर्वन्ति ।

वीणागाथिभ्यां पृथक्शते ददाति ॥७॥ शतं-शतं ददाति । सं° एकैकं गवां शतमुभाभ्यां ददाति । राजर्षिभिः संगायनमा दीक्षणीयायाः ॥८॥ सं° संवत्सरे पूर्णेऽपि आ दीक्षा रा°भिर्गानम् । दीक्षान्ते देवैरौपवसथ्यात् ॥९॥ दीक्षणीयायाꣳ°विसृष्टायामिति प्रकृत्याह (१३.४.४.२) देवैरिमं यजमानꣳ संगायतेति । सं° आ औ°थ्यात् आङभिविधौ [अग्नीषोमीयसमाप्तिपर्यन्तमित्यर्थः] ।

पश्चादौ प्रजापतिना सुत्यासु ॥१०॥ प्रजापतिनेमं यजमानं संगायतेति प्रैषः ।

अन्ते च ॥११॥ एवमेव प्रैषणम्[3] · अन्तग्रहणेनोदवसानीयान्त उच्यते · उदवसानीयायामन्ततः सꣳस्थितायामिति (१३.४.४.४) श्रुतेः · एवमेवाहरहः परिक्लृप्तास्विव वसतीवरीष्वपि एतदप्यन्तग्रहणेन सूचितम् । अश्वापदीष्ट्या चरुभिः सावित्र्यन्ते ॥१२॥ तत्कालता (२५.१.१) मा भूदिति सावित्र्यन्तग्रहणम् । सं° अश्वस्य रोगाद्यभिभवे चरुभिरिष्ट्या भवति । पौष्णः स्रामे ॥१३॥ स्रामः सिंहाणक उच्यते । सं° स्रामः सिंघाणकः[4] शालिक्षेत्रे प्रसिद्धः । सौर्योऽक्ष्यामये ॥१४॥ अक्षिरोगे । वारुणोऽप्सु मृते ॥१५॥ यवमयो भवतीत्युक्तमेव ।

---

१) संवत्सरपर्यन्तं प्रत्यहं भवंति । संवत्सरश्चोत्सर्गदिवसादारभ्य गणनीयो न ब्रह्मौदनदिवसात् Deva. २) Deva: तत्साहचर्याद्वावाता°गानानामपि सावन एव संवत्सरः · न ह्येकः शब्दो विधेयभेदेनार्थभेदमाश्रयते · तस्मात्सावन एव सर्वत्र । ३) प्रैष° K.
४) संघाणाक Ss. सिघाꣳपम B. सिंघाꣳण A pr. m. सिघाणाक A sec. m.

सं° उदकमध्ये मृते । भूमिकपालो वैश्वानरोऽरिथ्यामये ॥१६॥ अरिष्टरोगे द्रोण्यामये । सं° अरिथ्यामये अज्ञातामये (१३. ३. ८. ३) भूःनरो भवति · रिष्टिरायुधम् तत्कृत आमयो रिथ्यामयः न रिथ्योऽरिथ्यः · भूमिकपाल एव भूमिरेवास्य कपालस्थाने । लोष्टकपालं ज्ञातूकर्ण्यो भेदात् ॥१७॥ एवं हि श्रूयते (१३. ३. ८. ३) वैश्वानरं द्वादशकपालं भूमिकपालं पुरोडाशमनुनिर्वपतीति । तत्पुनरनुपपन्नम् · येनात्र द्वादशकपालो वैश्वानरोऽनूद्यते[१] यो वैश्वानरो द्वादशकपालः स भूमिकपालः कर्तव्य इति · द्वादशकपालताया[२] भूमिकपालतायाश्चासम्भवात् · लोष्टकपालत्वे च भूमिकपालतानुपपत्तिरेव · तस्माद्भूमिकपाल एवेति सम्प्रदायः । सं° लोष्टा[३] एव कपालानि यस्यासौ · कुतः भेदात् कपालेषु संख्यायोगेन भेदोपदेशात् न चासौ भूमिकपालत्वे सम्भवति · [तस्माल्लोष्टानि मृत्खण्डानि कपालस्थाने उपधेयानि । एवं सति उभयानुग्रहो भवति लोष्टानां भेदाद्द्वादशकपालता भूमिकपालता च · इतरथा भूमेरेकत्वेनाभेदाद्द्वादशकपाल एव] । नाशे तन्त्रेण द्यावापृथिव्यः पयो वायव्यः सौर्यः ॥१८॥ तन्त्रशब्दस्तन्त्रैकार्थ इति केचित् · तत्पुनरनुपपन्नम् कालाद्यभेदादिना प्राप्तत्वात् · तस्माद्वैश्वदेविकमत्र तन्त्रं यथा स्यादिति · ननु च वैश्वदेविकप्रकृतित्वेन प्राप्नोत्येव तत् नेत्युच्यते वायव्यसौर्याभ्यां न हि नवप्रयाजतादिविधिरुच्यते अतस्तत्प्राप्त्यर्थं तन्त्रेणेति वचनम् । सं° अश्वस्य नाशे तन्त्रेण त्रिहविष्केष्टिर्भवति ।

अन्यत्रापि ॥१९॥ अन्यस्मिन्नपि नष्टे द्रव्ये इयमिष्टिर्भवति । स यद्यस्याप्यन्यन्नश्येदेतयैव यजेतेति (१३. ३. ८. ६) · अस्येति च ग्रहणात्प्रकरणाद्बहिर्न भवति । सं° अश्वमेधयाजिनोऽन्यत्रापि हिरण्यादिद्रव्ये नष्टे इयमेवेष्टिर्भवति ।

प्रजाते वायव्यम् ॥२०॥ यद्यश्वो वडवाः स्कन्देद्वायव्यं पयोऽनुनिर्वपेदिति (१३. ३. ८. १) वचनात् । सं° वडवायां कृतरेतःस्कन्दनः प्रजात इत्युच्यते ।

मृतादर्शनयोः ॥२१॥ मृते चादर्शने च ॥ ॥ तृतीया कण्डिका ॥ ३ ॥ ॥

अन्यस्य रशनादानादि करोत्यश्वयुक्तम् ॥१॥ रशनाद्यन्यस्याश्वयुक्तं कर्तव्यम् अ-

---

[१] °च्यते K. °द्यते Deva in his quotation of this passage. [२] °लता Deva (AB). [३] Thus Ss. लोष्ट AB.

हननं तु न भवति अश्वयोगाभावात् । अग्नये स्वाहेति चानुवाके होमः[1] । प्रक्रमधृतिहोमोऽपीति चेत् न । अश्वसम्बन्धात् अश्वसम्बन्धो हि भवति । हिङ्काराय स्वाहेत्येवमादि प्रक्रमाणाम् धृतिहोमानामपि षोडश नवतीर्बन्धनमिति (१३.१.६.२) । सं० मृते अश्वस्यादर्शने अपुनरागमनसम्भवे च अन्यस्याश्वस्य रशनादानादि अश्वयुक्तम् अश्वसम्बन्धि अश्वोपकारकं सर्वं कर्म पुनः करोति[2] ।

पश्वालम्भनाद्याऽऽधरदीक्षणीयायाः कृत्वा चत्वार्यौद्ग्रभणानि जुहोत्याधरिकाणि ॥२॥ पश्वालम्भनं च पौर्णमास्यामेव । तदाद्यधरदीक्षणीयान्तं च । यत्कारणं द्वादशाहचोदकानुग्रहेण षष्ठ्याम् आग्निके॰निर्वपतीति (७) भवति । सं० [साग्निचित्ये क्रतौ य इष्टकापशुर्विहितः तस्य आल॰दि]कर्म कृत्वा[3] चत्वार्यौ॰णानि आकूत्यै प्रयुजऽ इत्यादीनि (४.७) जुहोति । काय स्वाहेति (२२.२०) चाश्वमेधिकानि त्रीणि ॥३॥ औद्ग्रभणानि जुहोतीति वर्तते । कृष्णाजिनदीक्षातः ॥४॥ सं० अत औद्ग्रभणहोमानन्तरं कृ॰क्षा । अधरदीक्षणीयायाश्चत्वारि त्रीणि त्रीणि चाश्वमधिकानि कृष्णाजिनान्तमन्वहम् ॥५॥ अध॰याया आग्नावैष्णवस्य[4] च चत्वार्यौद्ग्रभणानि त्रीणि-त्रीणि चा॰कानि जुहुयात्परिपाट्या । सं० कृ॰नान्तं [कृष्णाजिनोपवेशनान्तं] कर्म दीक्षणीयेष्ट्यादि अन्वहं प्रत्यहं [षट्स्वपि दीक्षणीयासु] भवति । प्राकृतव्रतोऽकृतत्वात् ॥६॥ सप्ताहं दीक्षणीयाप्रचारे प्राकृतमेव व्रतं भवति । कुत एतत् अकृतत्वात् दीक्षासंस्कारस्य दण्डान्तेन हि दीक्षितो भवति । सं० यजमानः प्रा॰तो [प्राकृतव्रतोपायनीयाशनो] भवति । कुतः अकृतत्वात् दीक्षासंस्कारस्य । आग्निके च सप्तम्यां निर्वपति ॥७॥ आग्निके च हविषी सप्तम्यामिष्ट्यां निर्वपति । ते च वैश्वानरो घृते चरुरादित्येभ्य इति (१६.४.२८-२९) । सं० सप्तम्यां दीक्षणीयायामाग्निके हविषी वैश्वानरो द्वादशकपाल आदित्यश्चरुः

---

1) अहननाग्नयेस्वाहेतिहोमौ न भवतोऽश्वयोगाभावादिति कर्कः । तदनुपपन्नम् तयोरप्यश्वयोगस्य सत्वात् Deva. 2) तत्र प्रथमं लौकिकेनाज्येन रशनाञ्जनम् ततो मन्त्रेणादानम् ब्रह्मन्नश्वमिति प्रश्नः ब्रह्मानुज्ञातस्याश्वबन्धनम् अपः प्रति नयनं प्रोक्षणं अहननं प्लावनं अग्नये स्वाहेति अनुवाकेन होमः कर्णजपः उत्सर्गः प्रक्रमहोमा यावन्तो गतास्ते सर्वे आवर्त्यन्ते Deva. 3) चैत्र्यां पौर्णमास्यां पश्वालम्भनादि कर्तव्यम् । चैत्रकृष्णाषष्ठ्यां सप्तमी दीक्षणीया । ततः प्रभृति द्वादश दीक्षाः । ततो वैशाखशुक्लतृतीयायां क्रयः । वैशाखशुक्लचतुर्दश्यामग्नीषोमीयः । वैशाख्यां च प्रथमा सुत्येति कर्कादयः Deva. 4) See ७. २. २६.

[इमे निर्वपति] चकारादाधरिकं आग्नावैष्णवश्च । अभ्यञ्जनप्रभृति करोति ॥८॥ इष्टाभ्यञ्जनविधानात्पूर्वं न भवतीति गम्यते । सं° सप्तम्यामित्यनुवर्तते ।

षडाग्निकानि चतुःस्थाने[1] ॥९॥ चतुर्णामौद्ग्रभणानामाधरिकाणां स्थाने षडाऽनि जुहुयात् · त्रीणि चाश्वमेधिकानि । सं° सप्तम्याम् प्रत्यहं यानि चत्वार्यौद्ग्रभणानि [आधरिकाणि] हूयन्ते [तेषां चतुर्णां स्थाने] आकूतिमग्निमिति (११.६६) षडाऽनि जुहोति । दशमं विश्वो देवस्येति (२२.२१) ॥१०॥ सं° [सप्तम्यां दीक्षणीयाया] षडाग्निकानि त्रीणि चाश्वमेधिकानि एवं नव[हुत्वा]दशम[मौद्ग्रभणं] विश्व इति जुहोति । कृष्णाजिनाद्या समिदाधानात्कृत्वाऽऽब्रह्मन्निति (२२.२२) जपति ॥११॥ सं° कृष्णाजिनदीक्षात आरभ्या सऽनात् उखायां त्रयोदशसमिदाधानान्तं कर्म[2] कृत्वा । उत्सर्गकालऽएके ॥१२॥ आ ब्रह्मन्निति जपमिच्छन्ति · ततश्च विकल्पः । सं° अश्वस्योत्सर्गकाले [विभूर्मात्रेति जपानन्तरम् २.१] ।

दीक्षा द्वादशोपसदश्च ॥१३॥ [ननु चाश्वमेधस्याहीनत्वेन द्वादशाहप्रकृतिकत्वात् एतद्वादशदीक्षोपसत्वं प्राप्नोत्येव] किमर्थमिदमुच्यते · अत्र हि पक्षे महाव्रतमुक्तमं भवति · अहीनानां च व्रतवतां सर्वजिद्दीक्षत्वमुक्तम् (२३.४.२८) · तन्मा भूदिति द्वादशदीक्षाग्रहणम् · श्रूयते चात्र द्वादश दीक्षा द्वाऽस्तिस्रः सुत्या इति (१३.४.४.१) । नित्योदकं देवयजनं पुरस्तात् ॥१४॥ नित्यं सर्वदा-स्थाय्युदकं यत्र तद्देवयजनमध्यवसेयम् । सं° प्राच्यां दिशि । आद्योऽग्निर्द्विगुणस्त्रिगुण एकविऽशतिविधो वा ॥१५॥ शाखान्तराद्विकल्पः । सं° आद्येऽग्नौ सार्धसप्तपुरुषाः क्षेत्रफलम् · तत्र द्विगुणपक्षे स पञ्चदशपुरुषो भवति · त्रिगुणपक्षे सार्धद्वाविंशतिपुरुषः । एकादशिनीवदेकविऽशतिर्यूपाः ॥१६॥ एकाऽवदिति किमर्थमुच्यते प्राप्तत्वादेव द्वे त्वेवैतेऽएकादशिन्यावालभेतेति (१३.५.१.३) मा भूत्तद्वत्क्रिया व्यत्यासेन च मानार्थम् एकादशिनीति । सं° सर्वे चैकविंशत्यरत्नयो भवन्ति। राज्जुदालो मध्ये ॥१७॥ सं° रज्जुदालः श्लेष्मातकः गूंदो[3] इति लोके प्रसिद्धः । अभितः पैतुदारवौ ॥१८॥ सं° तमभितः देवदारुवृक्षोद्भवौ । षट्षड्बैल्वखादिरपालाशाः ॥१९॥ यूपा भवन्ति । त्रयस्त्रयोऽभितः ॥२०॥ (१३.

[1] चतुःस्थाने K. B. A. चरुःस्थाने Ss. [2] Thus AB °धानं Ss. [3] Thus Ss. AB.

४. ४. ५)। सं० तेषां मध्ये त्रयस्त्रयो यूपा अभित उभयोः पार्श्वयोर्भवन्ति।

प्रतियूपमग्नीषोमीयाः ॥२१॥ पशवो नियुज्यन्ते (१३. ४. ४. ११) · ते च दक्षिणयूपादारभ्य वचनसामर्थ्यात् · अतश्चैकादशिनीवदुक्तेऽपि सर्वेषामग्नेवोच्छ्रयणम्।

प्रातरग्निष्टोमः ॥२२॥ एकादशिन्यौ सवनीयाः पशवो भवन्ति ॥२३॥ द्वेद्वे एतेऽएकादशिनेति (१३. ५. १. ३) श्रुतेः। मध्यमऽआग्नेयौ ॥२४॥ नियुज्येते · शेषा व्यत्यासेन। सं० मध्यमे यूपे प्रथमौ पशू आग्नेयौ आलम्भनीयौ।

उत्तरयोश्च ॥२५॥ सं० उत्तरयोरपि द्वितीयतृतीययोरह्नोर्द्वे-द्वे एकादशिन्यौ सवनीयाः पशवो भवन्ति। उत्तमे गावो बहुरूपाः ॥२६॥ सं० उत्तमेऽह्नि (८. १५) एकादशिन्योः पशवो बहुरूपा [विचित्रवर्णा] गाव आलब्धव्याः।

विजयमध्याद्धोतुः प्राची दिग्दक्षिणा ब्रह्मणोऽध्वर्योः प्रतीच्युद्गातुरुदीची ॥२७॥ विध्यात् प्राच्यां दिशि उत्पन्नं द्रव्यम् तद्धोतुर्देयिते। सं० दिग्विजयकाले प्राच्या दिशो यद्द्रव्यमानीतम् तद्धोतुर्देयम्। तृतीयं-तृतीयमन्वहं ददाति भूमिपुरुषब्राह्मणस्ववर्जम् ॥२८॥ आर्त्विक्प्रतिपुरुषाणां च तत एव चोदकानुरूपो विभागः · अथातो दक्षिणानामिति (१३. ५. ४. २४) प्रकृत्य सर्वमेवैतद्देवं श्रूयतऽइति · ब्राह्मणस्वं च यद्दण्डाद्युत्पन्नं तन्न देयम् तस्य हि ब्राह्मणेष्वेव विनियोगः स्मृतौ विहितः। तृतीयसवनऽउक्थ्यं गृहीत्वाग्निमारुतकाले त्रेधं विगृह्णाति ॥२९॥ (१०. ७. ११)। तच्चमसाननु होमभक्षौ ॥३०॥ आग्निमारुतचमसाननु भवतः।

वसतीवरीर्गृहीत्वा-गृहीत्वा प्रतिदिश७ समासिच्य परिहरति ॥३१॥ स चायं मध्यमस्य धर्मो वचनात् · ततश्च सर्वमेधऽआश्वमेधिके मध्यमेऽहनि वर्तमाने प्रतिदिशं वसतीवरीग्रहणं प्रवर्तते। सं० [द्वितीयस्याह्नोऽर्थे] प्रत्यहम् सर्वाभ्यो दिग्भ्यः सकाशात् वस७त्वा [आसादनान्तं पृथक्कृत्वा परिहरणकाले एकस्मिन्महति पात्रे स७च्य निनीय] मिश्रीकृत्य परिहरति। आज्यसक्तुधानालाजानामेकैकं जुहोति प्राणाय स्वाहेति (२२. २३) प्रतिमन्त्र७ सर्वरात्रमावर्तम् ॥३२॥ आज्यादीनामेकैकेन द्रव्येण होममभिनिर्वर्तयति · आवर्त्यावर्त्य सर्वरात्रम् · अत्र च रात्रेः प्रतिद्रव्यं विभागः प्रहरमेकमाज्येन द्वितीयं सक्तुभिः तृतीयं धानाभिः चतुर्थं लाजैः · इह च कर्मपरिमाणानवगमात्कालपरिमाणेन कर्मपरिमाणपरिच्छेदः

न ह्यत्र कर्मपरिमाणं श्रूयते · तेन यावन्तो होमाः प्रकारेणाभिनिर्वर्त्यन्ते तावन्ति प्रतिद्रव्यं चतुर्मुष्टिकानि ग्राह्याणि दर्विहोमानां पौर्णमासधर्मत्वेन (६. १०. १७) · आज्यस्य तूपांशुयाजविध्यन्तत्वेन परिमाणमेव · केचित्त्वाज्यस्य पूर्णाहुतिकं विध्यन्तमिच्छन्ति तदनुपपन्नम् सत्रादिमध्यऽआम्नानात्तत्तुल्यतास्य होमस्य ततश्च दर्विहोमोऽयमुपांशुयाजविध्यन्तग्राहक इति · अतश्च ध्रौवाच्चतुरवत्तेन होमः । इह चैकस्मै स्वाहा द्वाभ्याᳬ स्वाहेत्येवमादौ (२२. ३४) त्रिभ्यः स्वाहा चतुर्भ्यः स्वाहा पञ्चभ्यः स्वाहेत्येवमादौ लुप्तः स्वाध्यायो द्रष्टव्यः · एवं ह्यत्र श्रूयते अनुपूर्वं जुहोतीति (१३. २. १. ५) एकोत्तरा जुहोतीति (०५) तथा नैकशतमत्येतीति (०६) । व्युष्ट्याऽइति (२२. ३४) व्युष्टायाम् ॥३३॥ रजन्यां जुहोति · तच्च रात्रेर्शेषेवेति सम्प्रदायः । स्वर्गायेत्युदिते (२२. ३४) ॥३४॥ जुहोति · पूर्णाहुतिवत्संस्कारपूर्वकमाज्येन · युक्तरूपता पुनरुभयोराज्येन · अत्र च कर्मविरचना अनस्तमितऽआदित्ये आज्यभागान्तं कर्तव्यम् तत आज्यादिभिर्होमः · विरोधाच्चापररात्रिकं कर्म प्रतिप्रस्थाता करोति अध्वर्युर्हि अन्नहोमेषु (१३. ५. १. ४) व्यावृत्त इति ॥ ॥ चतुर्थी कण्डिका ॥४॥ ॥

प्रातरुक्थ्यः ॥१॥ भवतीति सूत्रशेषः[1] । महिमानौ गृह्णाति सौवर्णेन पूर्वᳬ हिरण्यगर्भ इति (२३. १) द्वितीयᳬ राजतेन यः प्राणत इति (२३. ३) ॥२॥ महिमानौ इति ग्रहयोर्नाम (१३. २. ११. १) । सं॰ सौवर्णेन पात्रेण ।

बहिष्पवमानाय सर्पणमश्वमालभ्य[2] ॥३॥ बहिष्पवमानं च वाचनिकमत्र[3] अहर्गणे सदसि विहितत्वात् । सं॰ अश्वालम्भश्च पुच्छे । वडबा दर्शयत्यभिरसति तत्स्तोत्रम् ॥४॥ अश्वस्य वक्ष्यति · दर्शनेन यद्धिङ्करोति तदेव स्तोत्रम् । स्तुवीरन्वा ॥५॥ उद्गातार इति विकल्पः शाखातुल्यत्वात् । शतमानं ददाति ॥६॥ स्तोत्रदक्षिणेति उद्गातृभ्यः । अश्वेनाक्रमयन्त्यास्तावम् ॥७॥ सं॰ आस्तावं बहिष्पवमानस्तवनप्रदेशमश्वेनन्ति अधिष्ठापयन्ति । ऐकादशिनानुपाकृत्याश्वादींश्च[4] ॥८॥ उपाकरोतीति शेषः । होतरश्वमभिष्टुहीति

1) first day ४. २२-३३, second day ५. १-८. ११, third day ८. १२-२३. 2) Thus ३. Ss. लंभ्य १. M. K. AB. 3) वचनादत्र पवमानस्तोत्रं सदसो बहिर्भवति प्राकृते स्थाने चात्वालाद्दक्षिणस्यां दिश्यन्तर्वेदि Deva. 4) एका॰ Ss. ऐका॰ १. M. K. AB.

प्रेष्यति ॥९॥ प्रैषार्थश्च तमेकादशभिर्होताभिष्टौतिॱजायमान इति (१३.५१.१६-१७)।

युनज्क्येनं युञ्जन्ति ब्रध्नमिति (२३.५) ॥१०॥ एनमश्वं रथे युनक्ति।

इतरांश्च युञ्जन्त्यस्येति (२३.६) ॥११॥ त्रीनश्वान्युनक्ति। अश्वाः सौवर्णालङ्काराः ॥१२॥ रथश्च ॥१३॥ सौवर्णकारः। अपो यावावगाढेषु वाचयति यद्वात इति (२३.७) ॥१४॥ [देव॰ ततश्चतुर्भिरश्वैर्युक्ते रथेऽध्वर्युयजमानावुपविश्याश्वान्प्रधावयतः तडागादिकं प्रति ॰ ततः जलमध्ये प्रविष्टेष्वश्वेषु]।

आयाय विमुक्तमश्वं महिषी वावाता परिवृक्ताल्येनाभ्यञ्जन्ति पूर्वकायमध्यापरकायान्यथादेशं वसवस्त्वेति (२३.८) प्रतिमन्त्रम् ॥१५॥ महिषी पूर्वकायम् मध्यं वावातापरकायं परिवृक्ता। सं॰ तडागादेः सकाशाद्देवयजनं प्रत्यागत्य।

अभ्यञ्ज्यमानान्मणीन्सौवर्णानेकशतमेकशतं केसरापुच्छेष्वावयन्ति भूर्भुवः स्वरिति (२३.८) प्रतिमन्त्रंव्याहृति ॥१६॥ अभ्यंञ्जनानिति यथा न पतन्ति ॰ सौवर्णान्मणीन् केसरयोः पुच्छे च प्रवयन्ति भूरिति महिषी भुव इति वावाता स्वरिति परिवृक्ता। सं॰ एकाधिकं शतम् ॰ शिरोग्रीवापुच्छवालेषु। अनुचर्यश्च तूष्णीमेकेषाम् ॥१७॥ आवयन्ति ॰ एकेषामिति विकल्पः। अश्वाय रात्रिकृतशेषं प्रयच्छति लाजीऽञ्छाचीऽनिति (२३.८) ॥१८॥ अस्त्ववहरणामखादति ॥१९॥ अखादति अश्वे ॰ सा चेयं प्रतिपत्तिः। ब्रह्मा पृच्छति होतारं यूपमभितः कः स्विदेकाकीति (२३.९) ॥२०॥ (१३.२.६.१)। सूर्य इत्याचष्टे (२३.१०) ॥२०॥ होता। होता ब्रह्माणं का स्विदासीदिति (२३.११) ॥२१॥

द्यौरिति (२३.१२) प्रत्याह ॥२२॥ ब्रह्मा ॥ ॥ पञ्चमी कण्डिका ॥५॥ ॥

पशूपाकरणा[न]न्त[र]माश्वमेधिकमभिहितमश्वाभिष्टवादि। इदानीं प्राकृतानुवृत्त्यर्थमाह ॰ अग्निमन्थनादि करोति ॥१॥ अग्निष्ठेऽश्वतूपरगोमृगान्नियुनक्ति ॥२॥ यूपे। यथोक्तमश्वादौ देवताः ॥३॥ यथाश्वस्तूपरोऽध्याय[1] (२४.१) ऽउक्तास्तथैव प्रतिपत्तव्याः ॰ ब्राह्मणमेवेदमिति। पर्यङ्ग्यानश्वे ॥४॥ सं॰ कृष्णग्रीव आग्नेयो रराटऽइत्यादयो वैष्णवो वामन इत्यन्ताः (२४.१) पर्यङ्ग्यसंज्ञाः ॰ तानश्वे यूपस्थानीये नियुनक्ति[2]। पञ्चदश-पञ्चदश रोहितादीन्सौर्यान्ता-

---

1) sic! 2) अत्राश्वस्य शरीरं तरणार्थं तु[म्]बीफलमिव सर्वतो रज्ज्वा गुम्फनीयं ॰ तथा सत्युक्तस्थाने पर्यङ्ग्यालम्भस्तत्तत्स्थाने गुम्फितरज्ज्वां सुकरः स्यादिति Deva.

नितरेषु ॥५॥ सं॰ रोहितो धूम्ररोहित इत्यादीन्पञ्चदश-पञ्चदश पशून् सौर्यान्तान् श्वेताः सौर्या इत्यन्तान् (२४. १-१९) इतरेषु यूपेषु उक्तयणक्रमेण नियुनक्ति।

कपिञ्जलादीन्पृषतान्तांस्त्रयोदश-त्रयोदश यूपान्तरेषु[1] ॥६॥ त्रयोदश-त्रयोदशारण्यानाकाशेष्वालभतऽइति वचनात् (१३.५.१.१५) · तांश्चाकाशोत्पत्तिक्रमेण अपरे तु दक्षिणात आरभ्येच्छन्ति। सं॰ वसन्ताय कपिञ्जलानित्यादीन् विश्वेषां देवानां पृषत इत्यन्तान् (२४.२०-४०) त्रयोदशत्रयोदशसंख्यान् यूप्षु यूपानामन्तरालेष्वाकाशोत्पत्तिक्रमेणालभते[2]। अश्वप्रोक्षणमद्भ्यस्त्वा (६.९) वायुष्ट्वेति (२३.१३-१६) ॥७॥ आध्वरिकं यजुरनुद्रुत्याश्वमेधिकं यजुः प्रतिपद्यतऽइति (१३.२.७.१) समुच्चयश्रवणात्। सं॰ अद्भ्यस्त्वौषधीभ्य इति [प्राकृतेन मन्त्रेण] वायुष्ट्वा पचतैरवत्वित्यत आरभ्य तत्र त्वा देवः सविता दधात्वित्यन्तेन [कण्डिकाचतुष्टयात्मकेन वैकृतेनाश्वमेधिकेन मन्त्रेण च] अश्वप्रोक्षणं करोति। उपगृह्णात्यपां पेरुरग्निः पशुरिति (६.१० २३.१७) ॥८॥ सं॰ [अपां पेरुरिति प्राकृतेन मन्त्रेण अग्निः पशुरिति वैकृतेन च प्रोक्षणीः] अश्वस्य मुखे उपगृह्णाति[3]। कपिञ्जलादीनुत्सृजन्ति पर्यग्निकृतान् ॥९॥ देवतामुद्दिश्योद्दिश्य नियोगक्रमेणोत्सर्गः। हिरण्यवासोऽधीवासेष्वश्वसंज्ञपनम् ॥१०॥ वासोऽधिस्तृणन्तीति वचनात् (१३.२.८.१) · तृणमपि प्रवर्ततऽएवादृष्टार्थत्वात्। सं॰ पूर्वं [तृणं ततो वासआदि · पूर्वं] वासस आस्तरणम् तस्योपरि अधीवासस्य तस्योपरि हिरण्यं निधेयम् · एतेष्वधिकरणभूतेष्वश्वस्य संज्ञपनं मारणं कुर्वन्ति [शमितारः]। परिपशव्ये हुत्वा प्राणाय स्वाहेति (२३.१८) तिस्रोऽपराः ॥११॥ आहुतीर्जुहोति। वाचयति पत्नीर्नयन्नमस्तेऽम्बऽइति (६.१२ २३.१८) ॥१२॥ मन्त्रसमुच्चयः। अश्वं त्रिस्त्रिः परियन्ति पितृवन्मध्ये गणानां प्रियाणां निधीनामिति (२३.१९) ॥१३॥ गणानां त्वेति त्रिः प्रदक्षिणम् प्रियाणामिति त्रिरप्रदक्षिणम् निधीनां त्वेति च प्रदक्षिणम् · वसो

---

[1] अत्र येषां पशुवाचकानां पदानामर्था न ज्ञायन्ते ते निगमनिरुक्तव्याकरणोणादिवृत्त्यभिधानग्रन्थेभ्यो विलोक्यावगन्तव्याः। अत्र २२ ऐकादशिनाः ३२७ अश्वादयः सौर्यान्ताः २६० कपिञ्जलादयः ६०९ पशवः · श्लोकश्च षट्शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि। अश्वमेधस्य यज्ञस्य नवभिरधिकानि होति Deva. [2] २१ यूपानां २० अन्तरालानि · तेष्वेकैकस्मिन्नन्तराले १३-१३ नियुनक्ति Deva. [3] अपगृ॰ Ss. (text and schol.) उप॰ AB.

ममेति च सर्वत्रानुषङ्गः तुल्ययोगात् । सं° सर्वाः पत्न्यः [पान्नेजनहस्ता एव प्राक्प्राणशोधनात्] अश्वं°यन्ति मध्ये पितृवदप्रदक्षिणम् । प्रक्षालितेषु महिष्यश्वमुपसंविशत्यहमजानीति (२३.१९) ॥१४॥ प्र°षु पशुषु · निष्ठितेषु°पादयन्तीति[१] (१३.५.२.२) वचनात् । सं° प्र°षु शोधितेषु पशूनां प्राणेषु [पत्नीभिरध्वर्युणा यजमानेन च शोधने कृते] महिषी अश्वस्य समीपे शेते । अधीवासेन प्रच्छादयति स्वर्गे लोकऽइति (२३.२०) ॥१५॥ अश्वमहिष्योरुपरि वासो ददाति । सं° अथ आस्तृतेनाधीवासेन तावश्वमहिष्यौ प्र°ति । अश्वशिश्नमुपस्थे कुरुते वृषा वाजीति (२३.२०) ॥१६॥ सं° महिषी स्वयमेव अश्वस्य शिश्नमात्मन उपस्थे [स्त्री]प्रजनने कुरुते [योनिप्रदेशे स्थापयति] (१३.५.२.२) । उत्सक्थ्या इत्यश्वं (२३.२१) यजमानोऽभिमन्त्रयते ॥१७॥ अध्वर्युर्मा भूदिति यजमानग्रहणम् ।

अध्वर्युब्रह्मोद्गातृहोतृक्षत्तारः कुमारीपत्नीभिः संवदन्ते यकासकाविति (२३.२२-३१) दशर्चस्य द्वाभ्यां-द्वाभ्यां ह्ये-ह्येऽसावित्यामन्त्र्यामन्त्र्य ॥१८॥ सं° अध्वर्य्वादयः पञ्च ह्ये°मन्त्र्य सम्बुद्ध्यन्तनामोच्चारणपूर्वकं कु°भिः सह सं°न्ते । सानुचर्यः प्रत्याहुः ॥१९॥ अनुचर्य एकेषाम् ॥२०॥ अतश्च विकल्पः । सं° न महिष्याद्याः पत्न्यः ।

महिषीमुत्थाप्य पुरुषा दधिक्राव्ण इत्याहुः (२३.३२) ॥२१॥ उत्थापनं च पत्न्या अनुचरीकर्तृकम् उत्थापयन्ति महिषीं ततस्ता यथेतं प्रतिपरायन्तीति (१३.५.२.९) श्रुतेः · अथेतरे सुर°ऽन्वाहुरिति (°१) ॥ ॥ षष्ठी कण्डिका ॥६॥ ॥

तिस्रः पत्न्योऽसिपथान्कल्पयन्त्यश्वस्य सूचीभिर्लौहराजतसौवर्णीभिर्मणिसंख्याभिर्गायत्री त्रिष्टुबिति (२३.३३-३८) द्वाभ्यां-द्वाभ्याम् ॥१॥ महिष्याद्यास्तिस्रः पत्न्योऽसिमार्गान्कल्पयन्ति · अश्वस्य सूचीभिर्मणिसंख्याभिरित्येकशतेनैकशतेन · ताश्च लौह°सौवर्ण्यो भवन्ति । सं° असिपथान् शासमार्गानश्वशरीरे कल्पयन्ति[१] ।

रजतसुवर्णसीसाभिर्वा मन्त्राम्नानात् ॥२॥ वाशब्दः पक्षव्यावृत्तौ · न लौ°र्ण्यो भवन्ति रजतसुवर्णसीसमय्यो भवन्तीति · कुत एतत् म°नात् मन्त्रे हि रजता हरिणीः सीसा इति (२३.३७) च दृश्यते · तेन लोहशब्दस्य ताम्रमात्रविषयत्वात् मन्त्रवर्णेन व्यवस्थापनं युक्तमिति सीसादिमय्यो भवन्तीति । सौवर्णासि-

---

[१] असेः सुखेन प्रवेशार्थं सूचीभिर्वितुद्य-वितुद्य त्वचं जर्जरीकुर्वन्ति Deva.

रुक्मः ॥३॥[1] भवति । लौहाः पर्यङ्ग्याणाम् ॥४॥ असयो भवन्ति[2] ।
आयसा इतरेषाम् ॥५॥ इतरेषां पशूनामायसा[3] असयो भवन्ति ।
अश्वं विशास्त्यनुवाकेन कस्त्वाछ्यतीति (२३. ३९-४४) ॥६॥[4] विशसनमवदानकालीनम् विशसनशब्दस्य तत्र दृष्टार्थत्वात् विशास्ति पशुमन्य इति (६. ७. १) · वपाकालीनं वा तत्रापि हि विशसनशब्दो भवति शसि हिंसार्थः तत्रापि हि हिंसा विद्यतऽइति · प्राथम्याच्च वपाकालीनमेव । मेदोऽस्योद्धरन्ति वपार्थे ॥७॥ अस्याश्वस्य वपाकार्ये मेदो गृह्यते · कार्यापत्त्या चात्र धर्मप्रवृत्तिः ।
लोहितं चास्य अपयन्ति ॥८॥ अस्येत्यश्वस्य । प्राजापत्यवपानामुत्तरतः अपणा७ होमो हविषश्च ॥९॥ आहवनीयस्योत्तरतः अ॰मश्च · तथा हविषः । सं॰ आहवनीयस्य उत्तरपार्श्वे । प्राग्वपाहोमाद्धोताध्वर्यू च सदसि संवदेते चतसृभिः कः स्विदेकाकीति (२३. ४५-४८) पूर्ववत् ॥१०॥ व॰णात्पूर्वं स्वाहाकृत्युत्तरकालम् पूर्ववदित्युक्तिप्रत्युक्त्या (५. २०-२३) · शृतासु वपासु॰र्यु पृच्छतीति (१३. ५. २. ११-१२) श्रुतेः · यदत्र सूत्रे नाभिहितं तच्चशब्देन लभ्यते प्रत्यश्वः प्रतिपरेत्येवमादि ।
ब्रह्मोद्गातारौ च पृच्छामि त्वेति (२३. ४९-५२) ॥११॥ चशब्दाच्चतसृभिर्ऋग्भिरुक्तिप्रत्युक्त्या । पुनः पूर्वावपरेणोत्तरवेदिं का स्विदासीदिति (२३. ५३-५६) ॥१२॥ संवदेते · पूर्वाविति होताध्वर्यू । उत्तरौ च कत्यस्येति (२३. ५७-६०) ॥१३॥ चशब्दात्संवदेते · चतसृभिरेव । यजमानोऽध्वर्युं पृच्छामि त्वेति (२३. ६१) ॥१४॥
इयं वेदिरित्यध्वर्युः (२३. ६२) ॥१५॥ प्रत्याह । सर्वहुतेन महिम्ना चरन्ति यस्तेऽहन्निति (२३. २) जुहोति ॥१६॥ महिम्नेति ग्रहस्य संज्ञा । अत्र वा ग्रहणम् ॥१७॥ उदिते ब्रह्मोद्यऽइति प्रकृत्य (१३. ५. २. २३) अध्वर्युर्हिरन्म॰ह्णातीति श्रुतेः · ततश्चात्रैव ग्रहणम्[5] पूर्वं सामान्यश्रुतेरध्यवसितम् । सं॰ वा सिद्धान्ते ।
वपाभिश्चरन्ति ॥१८॥[6] वपाप्रचारं करोतीत्यर्थः । अत्र कुल्वतूपररोहितादि-

---

[1]) सुवर्णपरिस्कृतासिरित्यर्थः · न हि केवलसुवर्णमयस्य छेदने सामर्थ्यं भवति मृदुत्वात् Deva. [2]) लौहास्ताम्रपरिस्कृताः · तथैव विशसनसामर्थ्यात् · यदि तु ताम्रहिरण्यगर्भधारा(!) एव स्युस्ततो विशसनमेव तैर्न शक्यते कर्तुम् Deva. [3]) अयोविकाराः · न तत्परिस्कृताः Deva. [4]) अध्वर्युः · अश्वस्योदरं पाठयति Deva. [5]) See ५. २. [6]) एवं प्रयाजशेषेणाभिघारणान्ते वैकृतं कर्म विधायाधुना प्राकृतप्रवृत्त्यर्थमाह · महिमग्रहहो-

भिर्गुणशब्दैश्चोदितानां पशूनां द्रव्यं प्रति संदेहः किंजातीयाः पशव इति जाति-
शब्देन चोपलक्षणं प्रकृतौ कृतम् इहापि तद्वदेव कर्तव्यमिति · अत इदमुच्यते
अन्वयाच्छागा एतऽइति ततश्च तच्छब्देनोपलक्षणमित्येवं प्राप्तऽआह ·

छागोस्रमेषाः पश्वभिधानाद्यथालिङ्गम् ॥ १९ ॥ छागषा एते पशवो यथालिङ्गम्
येन-येन लिङ्गेन यो-यः पशुर्लिङ्ग्यते अवगम्यते स-स प्रत्येतव्यो न सर्वे छा-
गा इति · तेन रोहितलिङ्गेन गौर्ग्रहीतव्यः तूपरत्वेन छागः कुल्वलिङ्गेन
मेषः · कुत एतत् पश्व॰नात् एते हि विशिष्टजातिव्यवच्छिन्नद्रव्यगतगुणाभिधाय-
काः न द्रव्यमात्रगतगुणाभिधायका इति · ततश्चोस्रादिशब्दैरुपलक्षणं कर्तव्यमि-
ति । [ननु] यदि रोहितादयः शब्दाः पश्वभिधायकाः ततस्तैरेवोपलक्षणं युक्तम् नो-
स्रादिभिरिति · एवं च विधिशब्दस्य मन्त्रत्वे भाव इति न्यायानुग्रहो भवति · को
ऽसौ न्याय इति चेत् मन्त्रस्य ह्यभिहितार्थप्रकाशकत्वमुदितम् अनभिधानं च
रोहितादिभिरिति · एवं प्राप्तऽउच्यते नैतद्युक्तम् कस्मात् · । सं॰ अ[त्रा]नुवाचना-
दौ छागोस्रमेषशब्दा एव द्रव्याभिधानार्थं[1] प्रयोज्याः · य॰ङ्गमिति यो-यो येन-येन
लिङ्गेन लिङ्ग्यते ज्ञाप्यते इति तत् तूपरशब्देन छागः प्रतीयते लोहितलिङ्गेनो-
स्रो गौरिति ऊर्णालिङ्गेन मेष इति · [एवमन्येऽपि गुणशब्दा उदाहार्याः · अत-
स्तूपरादिशब्दैर्विधान्ते[2] सत्यपि छागादयो जातिशब्दा एवानुवाचनादौ द्रव्याभि-
धानार्थं प्रयोज्याः न तूपरादयः] · कुतः पश्व॰नात् यतस्तूपरादिशब्दैः [तूपरत्वादि-
गुणविशिष्टाश्छागादयः] पशव एवाभिधीयन्ते [एते हि नियतजातीयपशुद्रव्यनिष्ठ-
गुणवचना इति गुणमुक्त्वा तद्गुणवति गुणिनि वर्तन्तऽइति गुणवचनाः · अत-
स्तूपरादिशब्दैस्तत्तद्गुणविशिष्टाः छागादयः पशव एवाभिधीयन्ते · ततश्च छागोस्रमे-
षशब्दा एवानुवाचनादौ प्रयोज्या इति । ननु यदि तूपरादिशब्दैश्छागादय एवो-
च्यन्ते तर्हि तेषामेवानुवाचनादौ प्रयोगो युक्तो न छागादीनाम् तथा सति विधि-
शब्दस्य मन्त्रत्वे भाव इति न्यायोऽनुगृहीतो भवति · अतस्तूपरादीनामेव प्रयोगे

---

मानन्तरमध्वर्युः वपा॰रति प्रथममेकादशिन्योः पशूनां वपाभिः ततोऽग्नतूपरगोमृगाणां वपाभि-
स्तन्त्रेण ततः क्रमेण पृथक्-पृथक् कृष्णग्रीव आग्नेयो रराटऽइत्यादीनां श्वेताः सौर्या इत्यन्तानां
वपा॰रति । अयमेको वपाचारपक्षः अन्यानग्रे वक्ष्यति Deva.

1) Thus AB. द्रष्टव्याः अभि॰ Ss. 2) Thus B. ॰र्विधाने A.

प्राप्तिऽस्राह्] · गुणवचनाच्चोदनाशब्दस्य ॥२०॥ यस्माद्गुणवचनाश्चोदनाशब्दाः न च प्रकृतौ गुणशब्देनोपलक्षणं कृतम् · नन्विदानीमेवोक्तम् यथालिङ्गं पश्वभिधायका रोहितादयः शब्दाः इदानीम् गुणवचना इति विरुद्धम् · उच्यते नैतद्विरुद्धम् रोहितादिशब्दा हि स्वार्थमभिधाय तद्वति द्रव्यविशेषे वर्तन्ते न शुक्लशब्दादिवद्द्रव्यमात्रे · कुत एतत् गोद्रव्यऽएव प्रयोगात् प्रत्ययाच्च · तेन गुणवचनत्वेऽपि सति द्रव्याभिधायकत्वमविरुद्धम् · यथा कलभकिसोरबर्करादयः शब्दा वयोविशेषवचना अपि सन्तो विशिष्टजातिव्यवच्छिन्नद्रव्यगतं वयो ऽभिदधति एवं च सति छागोस्रमेषशब्दैरेवोपलक्षणं युक्तमिति। ननु च रोहितादिशब्दानां जात्यभिधायकत्वे गोऽव्यजशब्दैरप्युपलक्षणं प्राप्नोति तेऽपि हि तज्जात्युपलक्षणसामर्थ्ययुक्ता इति · ततः किम् · छागोस्रमेषशब्दानामुपलक्षणसामर्थ्यमुपनीयते एतैरेवोपलक्षणमिति न नियोगतः प्राप्नोति · अत्रोच्यते ·। सं॰ तूपरादयश्चोद॰शब्दाः विधिशब्दाः गुणवचना यतः : [न च प्रकृतावग्नीषोमीये गुणवचनेन द्रव्याभिधानम् किं तर्हि जातिवचनेन छागशब्देन · अतोऽत्रापि (जाति)शब्दा एव प्रयोज्याः। तर्हि उक्तन्यायविरोधो भविष्यतीत्यत आह ·]।

प्रकृतौ चावचनात् ॥२१॥ प्रकृतौ अग्नीषोमीयं पशुमालभेतेति चोदनायां छागशब्देनोपलक्षणं दृष्टम् · तथा गौरनूबन्ध्य इति चोदनायामुस्रशब्देन शाखान्तरे · तथा चरकसौत्रामण्यामृषभेण सह विकल्पत्वरूपता पठ्यते मेषस्य तत्र च मेषशब्देनोपलक्षणं दृष्टम् · तेनेह चिन्त्यते तज्जातीयद्रव्याणि किं तैरेव शब्दैरूपलक्षणं क्रियतामुत शब्दान्तरैरिति · तैरेवेति युक्तरूपतरम् ते ह्यन्यत्र द्रव्याणामुपलक्षणं कुर्वाणा दृष्टाः · इहापि च तज्जातीयान्येव द्रव्याणीति · तस्मात्तैरेवोपलक्षणमिति · अत आचार्येण साधूक्तम् छागोस्रमेषाः पश्वभिधानादिति। अपि चैवं क्रियमाणे वैदिकमेवोपलक्षणं भवतीतरथा लौकिकं स्यात् · तस्माच्छागोस्रमेषशब्दैरेवोपलक्षणम्। अपि च निगमेष्वेवं द्रव्येषु छागोस्रमेषशब्दाः प्रयुक्ता दृश्यन्ते · न च निगमकारस्य कश्चित्प्रतारणीयः अतस्तत्स्मरणमपि समूलत्वादविरोधाच्च प्रमाणमेवेति। सं॰ प्रकृतावपि विधिशब्दस्यावचनात् · न हि प्रकृतौ अग्नीषोमीयं पशुमालभेत लोहितसारङ्गः स्यात् कृष्ण-

सारङ्गः स्यात् इत्यादयः पशुकृष्णसारङ्गादयो गुणवचनाः [विधिशब्दाः] प्रैषादावुच्यन्ते उच्चार्यन्ते · किं तर्हि होता यक्षदग्नीषोमाभ्यां छागस्येत्यादिवचनात् छागशब्द एव [·तथा गौरनूबन्ध्य इति गोशब्देन विधानेऽपि शाखान्तरादनुवाचनादावुस्रशब्दः प्रयुज्यते · एवमत्रापि छागोस्रमेषादयो जातिशब्दा एव प्रयुज्यन्ते] न गुणवचना विधिशब्दास्तूपररोहितादय इति सिद्धम् [·न्यायस्तु प्रकृतावेवं वचनाद्बाधितः प्रकृतिवच्चात्र कर्तव्यम् अतो न्यायबाधोऽत्र न दोषाय]।

एकविꣳशतिप्रदानानेकेऽन्वञ्चातुर्मास्यदेवताः पितृत्र्यैम्बकपुनरुक्तवर्जम् ॥२२॥ एकविꣳशतिं चातुर्मास्यदेवता अनुद्रुत्यैकविꣳशतिधा कृत्वा प्रचरेयुरिति श्रुतिः (१३. ५. ३. ४)। सं० एके अश्वतूपरगोमृगव्यतिरिक्तानां कृष्णग्रीव आग्नेयो रराटे पुरस्तादित्यादीनां श्वेताः सौर्या इत्यन्तानां (२४. १-१३) सर्वपशूनां वपा एकविꣳशतिधा कृत्वा तेषां विभागानां क्रमेण पितृ०वर्जम् चातु०वता एकविंशतिसंख्या अनुद्रुत्यानुपूर्वमुद्दिश्य तासामन्वक् अन्वञ्चि अनुसारीणि तद्देवतानि एकविंशतिसंख्यानि प्रदानानि कुर्वन्ति · [प्रदानानिति व्यत्ययेन पुंलिंगनिर्देशः प्रदानानीत्यर्थः]। [वपायागे पुनस्त्रीन्पक्षानाह ·] ऐन्द्राग्नवैश्वदेवकायानेके ॥२३॥ (१३. ५. ३. १-२)। सं० एके अग्निमसर्वपशूनां वपा ऐन्द्रा०कायाननु जुह्वति · [ऐन्द्राग्नो वारुणप्रघासिकः · वैश्वदेवो वैश्वदेवपर्वसम्बन्धी · कायश्च वारुणप्रघासिकः] · अयमभिप्रायः आदित आरभ्य वारुणप्रघासिकैन्द्राग्नपर्यन्तं क्रमेण पृथक्पृथक् वपाप्रचारं कृत्वा ऐन्द्राग्नस्य वपायां हुतायामवशिष्टाः सर्वा वपा अनु होतव्याः वचनात् · अथवा वैश्वदेवस्य वपाहोममनु सर्वा वपा होतव्याः अथवा कायस्य वपामनु सर्वा वपा० · [अनयोरपि पक्षयोः प्राचीनवपानां पृथक्पृथक् क्रमेण प्रचारः। एतेऽपि त्रयः पक्षा वाचनिकाः · वपायागे पक्षान्तरमाह ·] देवतातन्त्रेण तु ॥२४॥ अत्र सह प्रक्षेपे याः समानदेवतास्तासां तन्त्रेणोच्चारणम् सकृत्प्रयोगादेव कार्यसिद्धेः · व्यवहितास्वपि तन्त्रेण प्राप्तऽआह ·। सं० तुशब्दो[ऽस्य पक्षस्य स्वश्रुत्यभिमतत्वेन पक्षान्तरेभ्यो] विशिष्ट[त्व]सूचनार्थः · देवता[नां]तन्त्रं सकृदुच्चारणम् · तच्च विश्वेभ्यो देवेभ्य इत्यादिरूपम् [विश्वे वै सर्वे देवा इति श्रुतिः। तेनायमर्थः · देवतातन्त्रेण सर्ववपानां प्रचारो भवति] विश्वेभ्यो देवेभ्य इत्येवं

सर्वासां देवतानां तन्त्रेणोच्चारणं कृत्वा सर्ववपानां सकृदेव प्रचारः सहैव कर्तव्यः। न कालभेदात् ॥२५॥ भिन्नो हि तत्र कालः देवतान्तरव्यवधानात्। सं० [एकादशिन्योः पशूनां कृष्णग्रीवादिभिः सह] एकतन्त्रेण प्रचारो न भवति · कुतः कालभेदात् [तत्कुतः अश्वादिभिर्व्यवधानात् तेषां च पृथक्प्रचारवचनात् · अतस्तद्वपानां प्रथमं पृथक्पृथक् प्रचारः तेषामपि मध्ये द्वयोरेकदेवत्ययोस्तन्त्रेण प्रचारः ततोऽश्वादीनां त्रयाणाम् ततः कृष्णग्रीवादीनां सर्वेषां तन्त्रेणेति सर्वं निरवद्यम्]। वपान्ते द्वितीयेन पूर्ववद्यस्ते रात्राविति (२३. ४) जुहोति ॥ २६॥ वपाहोमान्ते द्वितीयेन महिम्ना चरति · पूर्ववच्छब्देन सर्वहोमो लभ्यते (१६)। शूलेऽश्वशेषश्रपणम् ॥२७॥ कर्तव्यमिति शेषः · शूलस्य चापूर्वत्वात्प्रोक्षणं न भवति। सर्पणप्रभृत्या पश्वासादनात्कृत्वा ॥२८॥ ॥ सप्तमी कण्डिका ॥७॥

लोहितमवद्यति गोमृगकण्ठाश्वशफयोरयस्मये चरौ ॥१॥ अश्वस्य लोहितं द्यति। सं० गवयस्य कण्ठे अश्वस्य खुरे अयःचरौ। वेतसशाखासु प्राजापत्यानाम् ॥२॥ अवद्यतीत्यनुवर्तते · वेतसकटे प्राजापत्यान्संचिनोतीति वचनात्। [प्रजापतिदेवत्यानां त्रयाणामश्वादिपशूनाम्]। अश्वस्य वा ॥३॥ वेतसशाखासु अवद्यति नान्येषां पशूनाम् · एवं हि श्रूयते (१३. ५. ३. ८) प्लक्षशाखा वेतसशाखास्वश्वस्येति · यत्तु शाखान्तरीयं वचनम् वेतसकटे प्राजापत्यान्संचिनोतीति तदनेन विशेषे स्थाप्यते अश्वोऽपि हि प्राजापत्य एवेति। सं० सिद्धान्ते · अश्वस्यैव [अवदानानि] वेतसशाखासु [अवखण्डयति]। स्विष्टकृद्वनस्पत्यन्तरे शूल्यं हुत्वा देवताश्वाङ्गेभ्यो जुहोत्यमुष्मै स्वाहेति प्रतिदेवतं शादप्रभृतिवगन्तेभ्यः (२५. १-९) ॥४॥ शूले अर्पितं शूल्यम् तद्धुत्वा जुहोतिवाच्यास्योपविष्टहोमः प्राजापत्योऽश्व इति च प्रजापतेर्देवतात्वम् · देवताभ्योऽश्वाङ्गेभ्यश्च जुहोति शादगन्तेभ्यः अमुष्मै स्वाहेति चतुर्गृहीतमाज्यम् आज्यमवदानाहुतीर्जुहोतीति (१३. ३. ४. १) वचनात्। सं० शादं दद्भिरित्यादि पृथिवीं त्वचेत्येतत्पर्यन्तः संहिताभागो ब्राह्मणम्] · तत्र शादादिका देवता दन्तादीन्यश्वाङ्गानि · ततश्चतुर्गृहीतमाज्यं गृहीत्वा-गृहीत्वा शादाय स्वाहा दद्भ्यः स्वाहा इत्यादि ज्ञेयम् पृथिव्यै स्वाहा त्वचे स्वाहेत्येतत्पर्यन्तं [जुहोति]। विमुखाच्च परेभ्यः ॥५॥ विमुखोऽध्येतृप्रसिद्धः

(३१.७) उग्रश्च भीमश्चेत्ययम् ततः परे[1] ये देवताविशेषास्तेभ्यश्च जुहोति अग्निं हृदयेनेत्येवमादिभ्यः (३१.८-१३)। सं॰ ततः परेभ्य उत्तरकालं पठितेभ्यो देवताभ्याङ्गेभ्योऽग्निं हृदयेनेत्येवमादिभ्यो जुहोति॰ तत्रापि अग्नये स्वाहा हृदयाय स्वाहा॰ उग्रश्च मारुती गायत्री विमुखसंज्ञा। मा नो मित्र इतिं च प्रत्यृचमनुवाकाभ्याम् (२५.२४-३१) ॥६॥ सं॰ प्रत्यृचं पूर्ववदाज्यं चतुर्गृहीत्वा-गृहीत्वा जुहोति। अन्त्यां द्यावापृथिवीयाम् (३१.१३) ॥७॥ (१३.३.४.१)। सं॰ द्या॰वीभ्यां स्वाहेत्येतामाहुतिमन्त्यां जुहुयात् [ततः स्विष्टकृदादि]। स्विष्टकृदन्ते ऽग्निभ्यः स्विष्टकृद्भ्यः स्वाहेति लोहितं जुहोति यथावत्तम् ॥८॥ यस्मिन्यस्मिन्नवत्तं तेनैव [पात्रेण] जुहोति॰ मा भूज्जुह्वा होम इति यथावत्तग्रहणाम्। [देव॰ गोमृगकपठेन प्रथमामाहुतिं अश्वशफेन द्वितीयाम् अयस्मयेन चरुणा तृतीयाम् तदाहुतित्रयं स्विष्टकृदनन्तरमेव जुहोतीति प्रथमः पक्षः। अथ द्वितीयतृतीययोराहुत्योः कालान्तरमाह॰] अश्वशफेन वानुयाजान्ते ॥९॥ जुहोति॰ वाशब्दो विकल्पार्थः। [देव॰ प्रथमाहुतिं तु स्विष्टकृदनन्तरमेव]। अयस्मयेन पत्नीसंयाजान्ते ॥१०॥ इमा नु कमिति (२५.४६-४७) च द्विपदाः ॥११॥ (१३.३.६.५)। सं॰ चकारादयस्मयाहुत्यन्ते षट् द्विपदा आज्याहुतीर्जुहोति। अतिरात्र उत्तमः ॥१२॥ उत्तममहरतिरात्रसंस्थं भवति॰ ननु चाहीनवादतिरात्रः प्राप्त एव किमर्थं पुनरुच्यते गवादीनां (१३) नाम्ना स्वसंस्था मा भूवन्निति पुनरुच्यते। सं॰ उत्तमस्तृतीयमहरतिरात्रो भवति। तस्याष्टौ विकल्पानाह॰ सर्वस्तोमो ज्योतिर्गौरायुरभिजिद्विश्वजिन्महाव्रतमप्तोर्यामो वा ॥१३॥ एते चाहर्विशेषा भवन्ति। अप्तोर्यामे विशेषमाह॰ अप्तोर्यामे तिरोऽह्नीयेभ्यो रात्रिपर्याय उत्तमः ॥१४॥ तेभ्यो ऽवसितेभ्यः उत्तमो रात्र्यः चतुःस्तोत्रो भवति। [देव॰ तिरश्च तदहश्च तिरोऽह्नः॰ तिरोऽह्ने रात्र्यन्तर्हितेऽह्नि भवाः सोमास्तिरोऽह्न्याः॰ तिरोऽह्नीया इति छप्रत्ययः]। अग्निष्टे प्राजापत्यौ च ॥१५॥ उत्तमाहःसंयोगेन॰ उत्तममहः प्रकृत्य हि श्रूयते (१३.५.३.११) चतुर्विंशतिं॰लभेतेति वचनात्॰ एवं चान्यत्राप्तोर्यामस्यातिरात्रिका एव क्रतुपशवस्तद्विकारत्वात्। सं॰ [उत्तमऽएवाहन्ययं विशेषः॰ अग्निष्टे यूपे

[1] ततो परे K.

द्वविकादशिनावग्नियावालभ्य] प्रजापतिदेवत्यौ च द्वौ पशू अग्निष्ठे यूपऽआलभते · [तौ च गावौ भवतः (४. २६)]। अवभृथेऽवान्तेऽप्सु मग्नस्य पिङ्गलखलतिविक्लिधशुक्लस्य मूर्धनि जुहोति जुम्बकाय[1] स्वाहेति (२५. ९) ॥१६॥ खलतिः खल्वाटः विक्लिधो दन्तुरः शुक्लोऽतिगौरः। सं° उदकमध्ये वुडितस्य[2] पिङ्गलस्य पिङ्गाक्षस्य°। उत्क्रान्ते यजमाने पापकृतोऽभ्यवयन्त्यचरित्वा व्रतानि ॥१७॥ प्रक्रान्तप्रायश्चित्तस्य चैतद्भवति अच°तानीत्युक्तत्वात् · पापकृद्ग्रहणेन च ब्रह्महा उच्यते। सं° य°ने जलमध्यादुत्क्रान्ते उत्तीर्णे सति ब्रह्महत्यादिकर्तारस्तच्छुद्ध्यर्थं तत्राश्वमेधावभृथसम्बन्धिनि जले अभ्यवयन्ति तत्र स्नान्ति · द्वादशाब्दकृच्छ्राचरणादिव्रतान्यकृत्वा। अश्वमेधपूताख्यास्ते ॥१८॥ अश्व°पूता इत्याख्यास्तेषाम् पूता भवन्तीत्यर्थः · अपि चाश्वमेधावभृथे स्नात्वा पूतो भवतीति स्मृतेः।

नानावभृथानि वा ॥१९॥ प्रत्यक्षमवभृथेन चरन्तीति वचनात्। सं° [अथवा अश्वमेधसम्बन्धीनि] त्रीण्यपि सौत्यान्यहानि ना°नि भवन्ति [· त्रयाणामप्यह्नां समिष्टयजुरन्ते पृथक्पृथक् अवभृथो भवति]। कुम्भोपमारणान्तं पूर्वयोः ॥२०॥ सं° प्रत्यक्षमवभृथे क्रियमाणे पूर्वयोरह्नोः कु°न्तं [कर्म] भवति [अवभृथेति मन्त्रेण] ऋजीषकुम्भस्य मज्जनान्तमित्यर्थः [· कुत एतत् ·] शेषे दीक्षाव्रताभावात्[3] ॥२१॥ कर्मशेषे दीक्षाव्रतस्याभावात्[4] · अवभृथस्नानेन उन्मुक्तदीक्षो भवतीत्यभिप्रायः। सं° शेषे कर्मशेषे [दीक्षाव्रतस्य] दीक्षारूपस्य व्रतस्य शास्त्रकृतनियमस्याभावात्[5] [अवभृथस्नानेन ह्युन्मुक्तदीक्षो भवति · यदि च प्रत्यहं स्नानान्तं क्रियेत ततो दीक्षोन्मोकः स्यात् ततश्चादीक्षितेनाहर्द्वयं कृतं स्यात् न च तदिष्यते · अतः कुम्भोपमारणान्तमेव पूर्वयोरह्नोः कर्तव्यमिति पूर्वः पक्षः]।

सर्वं वा श्रुतेः ॥२२॥ सर्वं वा स्नानाद्यपि भवति प्रत्यक्षमवभृथेन चरन्तीति श्रुतेः · यदुक्तम् स्नानेनोन्मुक्तदीक्ष इति तत्र वचनसामर्थ्यात् सर्वावभृथान्तेऽउन्मुक्तदीक्षो भवति · साभ्यासो ह्यवभृथोऽवभृथकार्ये वर्तते · यथा सप्ताहं दीक्ष-

१) जुंबुकाय ३. M pr. m. जंव° B. २) See Westergaard sub r. व्रुड्. and schol. at ५.५.३१ (क्रडणां). ३) Thus AB („as the dī°ta would be wanting for the rest"). व्रतभा° १. ३. M. K. R („as it is still to suffice for—"). ४) स्यऽभा° Cod. ५) Thus A. Ss. °स्य।भा° B.

णीयया चरतीति साभ्यासा दीक्षणीया दीक्षणीयाकार्ये वर्तते । एकविंशतिरनूबन्ध्याः ॥२३॥ [1] अभ्यस्तत्वपमिदमेकं कर्म प्रकृताविव दृष्टत्वात् ।

उदवसानीयान्ते भार्या ददाति यथासंवादं सानुचरीः ॥२४॥ उदव॰ दक्षिणां ददातीति (१३.४.५.२७) । कुमारीं पालागलीं चाध्वर्यवे ॥२५॥ कुमारी यजमानदुहिता । एते अध्वर्यवे ददाति । [देव॰ शाखान्तरात् । कुमार्या अभार्यत्वाद्दाने प्राप्ते पालागल्याश्च क्षत्तुर्दाने प्राप्ते आह ।] अनुचरीर्वा फलाधिकारादितरासाम् ॥२६॥ वाशब्दः पक्षव्यावृत्तौ । न भार्या ददाति अनुचरीरेव दद्यात् । कुत एतत् फ॰रात् भार्याणाम् यजमानतुल्या एवैता इति [2] । मध्यमकं हि यजमानस्य पत्नीनां च द्रव्यम् साधारणत्वाद्धोत्सर्गः सहैव भवति नान्यथेति ।

अनारभ्यत्वाच्च ॥२७॥ अपि च यथा पत्न्यो यजमानदानेऽसमर्थाः एवं यजमानोऽपि पत्नीनाम् । तस्मादनारभ्योऽयमर्थः । सं॰ न ह्ययमर्थ आरब्धुं शक्यो यद्भार्या ददाति । द्वादशाहमाग्नेयः पुरोडाशः ॥२८॥ गृहेषु कर्तव्यः । आग्नेय इति न्यायसूत्रम् । सं॰ अश्वमेधसमाप्त्यनन्तरं [द्वादशसंख्याकेष्वहःसु प्रत्यहं भवतीत्यर्थः] । ब्रह्मौदनो वा ॥२९॥ (१३.३.६.६) । सं॰ अथवा प्रत्यहं ब्र॰नो भवति । प्रत्यृतु पशूनालभते षट्षडृत्वसन्ताद्याग्नेयानैन्द्राग्नान्पार्जन्यान्मारुतान्वा मैत्रावरुणानैन्द्रावैष्णवानैन्द्राबार्हस्पत्यान् ॥३०॥ एवमपि हि श्रूयतऽइति (१३.५.४.२८) । सं॰ अश्वमेधसमाप्तेरूर्धमुत्तरे संवत्सरे वसन्तादारभ्य ऋतुमृतुं प्रति षट्षट्पशूनालभते [यज्ञनीयेऽहनि] । आग्नेयान्वसन्ते ऐन्द्राग्नान्ग्रीष्मे पार्जन्यान्मारुतान्वा वर्षासु मैत्रावरुणाञ्छरदि ऐन्द्रावैष्णवान्हेमन्ते ऐन्द्राबार्हस्पत्याञ्छिशिरे । एवं वर्षे षट्त्रिंशत्पशवो भवन्ति ॥ ॥ अष्टमी कण्डिका ॥

इत्युपाध्यायकर्ककृतौ कात्यायनसूत्रविवरणे विंशतितमोऽध्यायः ॥२०॥ ॥

इति कात्यायनसूत्रे विंशोऽध्यायः ॥

---

पुरुषमेधस्त्रयोविंशतिदीक्षोऽतिष्ठाकामस्य ॥१॥ स च पञ्चरात्रः स्यात् (१३.६.१.७) त्रयो॰क्षः (°२) । सर्वाणि भूतान्यतीत्य तिष्ठतऽइत्यतिष्ठेत्युच्यते तत्कामस्य ।

---

[1] उदयनीयेष्ट्यनन्तरम् Deva. [2] See schol. at १.१.८.

ब्राह्मणराजन्ययोः ॥२॥ भवति · न वैश्यस्य ।[देव॰ अत्र सौत्यान्यहान्याह ·]

अग्निष्टोमावन्तरेणातिरात्र उक्थ्यपक्षः ॥३॥ पञ्चरात्रस्याद्यन्तयोरग्निष्टोमो मध्येऽतिरात्रः तमभित उक्थ्यौ · संस्थामात्रविधानाच्च सर्वऽएतेऽपूर्वाः अतश्च द्वादशाहिको विध्यन्तः प्रत्येकम् । सं॰ [पक्षाविव उभयतो वर्तमानौ] उक्थ्यौ पक्षौ यस्य स उक्थ्यपक्षः । यूपैकादशिनी भवति ॥४॥ सं॰ अत्र प्रत्यहम् ।

तावन्तोऽग्नीषोमीयाः ॥५॥ (१३. ६. १. ४) · ते च मध्यमे यूपे नियुज्यन्ते · न ह्यत्राश्वमेधवत्प्रतियूपश्रवणम् । पशूनुपाकरिष्यन्नतिरात्रे देव सवितरिति (३०.१) प्रत्यृचं तिस्रो जुहोति ॥६॥ एतास्तिस्रः सावित्रीराहुतीर्जुहोतीति श्रवणात् (१३. ६. २१) । ऐकादशिनानुपाकृत्य ब्राह्मणादींश्च ॥७॥ चशब्दादुपाकरोति · ब्रह्मणे ब्राह्मणमिति (३०. ५) चैते ब्राह्मणादयः । सं॰ अध्यायसमाप्तिपर्यन्तान् ।

नियोजनकालेऽष्टाचत्वारिंशतमाद्यानग्निष्ठे ॥८॥ नियुनक्तीति शेषः । सं॰ ब्रह्मणे ब्राह्मणमित्यादीन् प्रकामोद्यायोपसदमित्यन्तान् (३०. ५-६) अष्टा॰तं पशूनग्निष्ठे यूपे आलभते । इतरेष्वेकादशैकादश ॥९॥ सं॰ अग्निष्ठादितरेषु [अन्येषु दशसु] ।

द्वितीयेऽह्नि शेषान् ॥१०॥ अन्ते मा भूदिति द्वि॰तग्रहणम् । सं॰ अवशिष्टान् ।

नियुक्तान्ब्रह्माभिष्टौति होतृवदनुवाकेन[1] सहस्रशीर्षेति (३१. १-१६) ॥११॥ होतृवदिति शस्त्रवदभिष्टवः । सं॰ होतृवदिति त्रिः प्रथमां त्रिरुत्तमाम् ऋगन्ते प्रणव इत्यादिशस्त्रशंसनधर्मेणेत्यर्थः[2] । कपिञ्जलादिवदुत्सृजन्ति ब्राह्मणादीन् ॥१२॥ पर्यग्निकृतानुत्सृजन्तीत्यर्थः (२०. ६. ९) । स्विष्टकृद्वनस्पत्यन्तरे पुरुषदेवताभ्यो जुहोति ॥१३॥ आज्येन । सं॰ पु॰भ्यः [ब्राह्मणादीनां] पुरुषाणां या ब्रह्मादयो देवतास्ताभ्यः ब्रह्मणे स्वाहा क्षत्रायेति । सपुरुषमश्वमेधवद्दक्षिणा ॥१४॥ राज्ञः । सं॰ अश्व॰वदिति (२०. ४. २७) विजयमध्या॰ · तत्र च भूमिपुरुषवर्जनादत्र सपुरुषं दक्षिणा भवति । सर्वस्वं ब्राह्मणस्य ॥१५॥ अथ यदि ब्राह्मणो यजेतेति श्रुतेः (१३. ६. २. १९) । प्रतिदेवतं[3] तिस्रस्तिस्रोऽनूबन्ध्याः पञ्चोत्तमायाम् ॥१६॥ तिस्रो मैत्रावरुण्यः तिस्रो वैश्वदेव्यः पञ्च बार्हस्पत्यः । सं॰ प्रतिदैवतमित्यनूबन्ध्यासम्बन्धि-

---

1) i. e. दक्षिणापुरुषेण नारायणेन Deva. 2) See १९. ७. २ and ५. Çânkhây. १. २. १८-१९. 3) ॰दैव॰ Ss. text and comm.

[नी]नां तिसृणां [मित्रावरुणादिदेवतानां मध्ये द्वयोः] तिस्रस्तिस्रः उत्तमायां बृहस्पतिदेवतायां पञ्चानूबन्ध्याः। त्रैधातव्यन्ते समारोह्यात्मन्नग्नी सूर्यमुपस्थायाद्यः सम्भृतः इत्यनुवाकेनानपेक्षमाणो (३१.१७-२२) ऽरण्यं गत्वा न प्रत्येयात् ॥१७॥[१] अरण्यमियात् अपुनर्गृहाय · ततश्चाश्रमान्तरप्रतिपत्तिरियमिति। तच्च स्मृतावुच्यते (मनु° ६.३८) प्राजापत्यां निरुप्येष्टिं[२] सर्ववेदसदक्षिणाम् आत्मन्नग्नी[३] समारोप्य ब्राह्मणः प्रव्रजेद्गृहादिति · सा चेयं पुरुषमेधाख्या सर्वस्वदक्षिणा प्राजापत्येष्टिः तां निरुप्य पारिव्राज्यं ब्राह्मणस्य · एवं च यावज्जीवमग्निहोत्रं जुहुयादिति श्रुतिरनया श्रुत्या विकल्पते अथ स्मार्तेष्टिः प्राजापत्या स्यात् तदानीं स्मृत्या श्रुतिर्बाधिता स्यात् न चैतदिष्यते। पुरुषमेधः कथं प्राजापत्येष्टिरिति चेत् सन्ति ह्यत्र प्राजापत्याः पशवस्तदुपलक्षिता प्राजापत्येत्युक्ता। सं° न ग्रामं प्रत्यागच्छेत्। ग्रामे वा विवत्सन्नरण्योः ॥१८॥ (१३.६.२.२०)। सं° अथवा ग्रामे वासं करिष्यन्नरण्योरेवाग्नी समारोह्य पूर्ववत् [सूर्यमुपस्थाय गृहं प्रत्यागच्छेत्] ॥

॥ प्रथमा कण्डिका ॥१॥ ॥

सर्वमेधः सर्वकामस्य ॥१॥ सर्वमेध इति कर्मनामधेयम् विध्यर्थवादमन्त्रावासम्भवात् · स सत्स्य भवति। दशरात्रः ॥२॥ उपक्रमात्तत्सिद्धेर्दशरात्रग्रहणं न कर्तव्यम् क्रियते च तत्किमर्थम् अग्निष्टुत्त्रय उक्थ्या इति (४) वक्ष्यति तत्रेन्द्रस्तुदादिभ्योऽधिका उक्थ्या मा भूवन्निति इन्द्रस्तुदादय एवोक्थ्याः। सं° दशसुत्या[हानि] भवन्ति। अग्निरुत्तमः ॥३॥ एकशतविधोऽग्निरत्र। [देव° तत्र दशरात्रसम्बन्धीनि सप्ताहान्याह ·] अग्निष्टुत् त्रय उक्थ्या इन्द्रस्तुत्सूर्यस्तुद्विश्वदेवस्तुत् व्रतम् वाजपेयो ऽप्तोर्यामः सर्वमस्मिन्नालभते ॥४॥ अस्मिन्नप्तोर्यामे सर्वमालभ्यते तस्मिन्त्सर्वान्मेधानालभतऽइति श्रुतेः (१३.७.१.१)। अशक्यार्थोपदेश इति चेत् न हि निरवग्रहः सर्वालम्भः शक्यते कर्तुम् · एवं चेत् येषामेवोपलम्भो दृष्टस्तेषां सर्वतोच्यते ते च पुरुषोऽश्वो गौरविरज इति · अपि चान्ते सर्वशब्दो दृश्यते पुरुषोऽश्वो गौरविरज इति प्रकृत्य (६.२.१.१४)

---

१) अग्नी गार्हपत्याहवनीयावात्मन्नात्मनि स्वशरीरे समारोह्य अयं ते योनिरित्यनेन मन्त्रेणोष्मायामास्ये कोष्ठे वा प्रवेश्य Deva. २) निरूप्ये° Manu. ३) आत्मन्यग्नीन् Manu.

एतावन्तो वै सर्वे पशवः तस्मात्सर्वशब्देन पञ्चपश्वालम्भ उच्यते। अतिरात्रविकारत्वाच्चाप्तोर्यामे तत्स्तोमायनदेवताभ्य आलभ्यन्त ऽएकैकस्यै देवतायै पञ्च-पञ्च पशव आलभ्यन्ते विभागाभावात् लिङ्गाच्च अवपाकानां त्वचो जुहोतीति (५)· यदि पञ्चैते पशव एते स्युस्ततोऽवपाकानां त्वचो जुहोतीति (५) बहुवचनमुपपन्नम् तस्मात्प्रतिदैवतं पञ्च-पञ्च पशवः। सर्वे चैते यूपे नियुज्यन्ते स्तोमायनं (१.८.७) ह्येतदिति · सर्वत्र चात्र स्तोमायनम् न ह्येकादशिनी विहृता सम्भवति न चैन्द्राग्नः क्वचित्प्रत्यक्षविधानात्। सं° [तस्मिन्नप्तोर्यामे] सर्वज्ञातीयं स्थावरजङ्गमरूपं यज्ञार्हम् तत्सर्वमेकैकसंख्यमुपकल्पयतीत्यर्थः। [तस्य सर्वस्य वस्तुनो होमविधिमाह·] अवपाकानां त्वचो जुहोति ॥५॥ पुरुषाश्वावपाकाः · अप्तोर्यामऽएवायमपरो विशेषः। [द्विव° वपारहितानामश्वादीनां त्वच उत्कृत्य जुहोति वपासहितानामजादीनां तु वपा एव जुहोतीत्यर्थसिद्धम्।]

ओषधिवनस्पतीनाᳬ संव्रश्चम् ॥६॥ प्रकिरतीति शेषः · संव्रश्चः कूट उच्यते। सं° संवृश्च्य-संवृश्च्य छित्वा-छित्वा [खण्डान्याहवनीये प्रकिरति। अन्नमन्नं जुहोति वपान्ते ॥७॥ सं° सर्वप्रकारमन्नजातीयम्। तृतीयसवने च हुतेषु हविःषु ॥८॥ अयं च सर्वान्नैर्द्विहोमः पूर्वतरमोषधिवनस्पतिसंव्रश्चं प्रकीर्य कर्तव्यः एवमपि हि श्रूयते (१३.७.१.१)। सं° [एतत्प्रागुक्तं] वपादि सर्वान्नपर्यन्तं जुहोति [प्रातःसवने वपान्ते[१]) वपाप्रचारान्ते अप्तोर्यामसम्बन्धिनामातिरात्रिकाणां चतुर्णामाग्नेयादिपशूनां वपामार्जनान्ते कृते · तथा तृतीऽने च एतेषामेव पशूनां हुःषु वपादिसर्वान्नपर्यन्तं जुहोति · उभयसवने प्रतिद्रव्यं होममन्त्रश्च तदेवाग्निरित्यध्याय (३२) एव · देवता तु सर्वात्मा प्रधानपुरुषो हिरण्यगर्भः।]

आश्वमेधिकं मध्यमं व्रतस्थाने ॥९॥ इदमपरं विकल्पत्वरूपतयोच्यते · सं° [पूर्वोक्तस्य पञ्चमस्याह्नो महाव्रतस्य स्थाने अहरन्तरमाह·] महाव्रतस्थाने अश्वमेधसम्बन्धि मध्यममहरुक्थ्यसंस्थं भवति। पौरुषमेधिकं वाजपेयस्य ॥१०॥ मध्यममहर्भवति · अत्र चाश्वमेधिकार्थं यूपानामेकविंशतिर्भवति · तज्जात्यनुग्रहे तु बहूनामङ्गानां विरोधः · तस्मात्खादिरा भवन्ति[२]) प्रमाणं त्वविरोधाद्भवत्येव

१) वपान्ते belongs in A to this sûtra, not to ७. २) ? ेरा भवति K.

वाजपेयिकपक्षे सप्तदशारत्निता । सं° [प्रागुक्तस्य षष्ठस्याह्नो वा°स्य] स्थाने पौ°कं मध्यममतिरात्रसंस्थं भवति । [अधुना अष्टमनवमे अहनी आह ·] त्रिणवत्रयस्त्रिंशावुक्थ्यौ ॥११॥ त्रिंशौ क्रतू उक्थ्यसंस्थौ भवतः · तौ च पूर्वस्तोमसम्बन्धिनौ तत्र दृष्टत्वात् । सं° अष्टमनवमौ त्रि°त्रिंशस्तोमौ उक्थ्यसंस्थौ भवतः ।

अतिरात्रो विश्वजित् ॥१२॥ विश्वजित्सर्वपृष्ठोऽतिरात्रो दशममहर्भवतीति श्रुतेः (१३. ७. १. १२) । पुरुषमेधवद्दक्षिणा सभूमि ॥१३॥ सं° अत्र पु°वत् भूमिसहिता दक्षिणा भवति ॥ ॥ द्वितीया कण्डिका ॥२॥ ॥

पितृमेधः संवत्सरास्मृतौ ॥१॥ सर्वमेध उक्तः · अवसरप्राप्तः पितृमेध इदानीमभिधीयते । पितृमेध इति कर्मणो नामधेयम् स च संतौ भवति यदा न स्मर्यन्ते संवत्सराः मृतस्य यत्र समा नानु चन स्मरेयुरिति (१३. ८. १. २) श्रुतेः । सं° मृतस्य मरणसंवत्सरस्यास्मृतौ । अयुग्मेषु वा ॥२॥ अयुङ्क्षु संवत्सरेषु कुर्यादिति श्रुतेः (१३. ८. १. ३) · अतश्च विकल्पोऽयम् । सं° यदि बहुकालव्यवधानेनापि संवत्सरविस्मृतिर्न भवति तदा अयुग्मेषु संवत्सरेषु वा कुर्यात् । एकनक्षत्रे ॥३॥ एकनक्षत्रे हि पितॄणामिति (१३. ८. १. ३) · एकनक्षत्रं च यत्रैका तारका चित्रास्वातिरेवतीत्यादि यथा । सं° हस्तस्वातिपुष्यादौ यत्रैकैव तारका आकाशे दृश्यते[1] । अमावास्यायाम् ॥४॥ वेति सामर्थ्याद्द्रष्टव्यम् । समुच्चयः कस्मान्न भवति एकनक्षत्रेऽमावास्यायां च · नैतदेवम् · अमावास्यायामेकनक्षत्रसंस्तवश्रवणात् अमावास्यायाममावास्या वाऽएकनक्षत्रमिति (१३. ८. १. ३) · तच्च समुच्चये न घटते । सं° तिथौ भवति । निदाघशरन्माघेषु ॥५॥ निदाघो ग्रीष्मः शरच्छरदेव माघोऽपि माघ एव · एवं हि श्रूयते (१३. ८. १. ४) । [देव° काल उपदिष्टो विधिमुपदिशति ·] यावन्तो धुविष्यन्तः[2] स्युस्तावतः कुम्भानादाय छत्राणि चापरिमितानि ॥६॥ सं° अग्रे (७) अमात्यानां पुत्रपौत्रादीनामुपवाजनं वक्ष्यति · उपवाजनं धवनम्[3] अ[तोऽ]त्र यावन्तो धविष्यन्ति अपरिमितानि [कुम्भसंख्यातोऽमात्यसंख्यातश्चाधिकसंख्यानि] छत्राणि चादाय [सशरीरा दक्षि-

---

1) यत्तु द्विवचनबहुवचनान्तशब्देन क्वाचित्प्रसिद्धं पुनर्वसू विशाखे कृत्तिकाः भरण्योऽनुराधा इत्यादि तदनेकनक्षत्रम् Deva. 2) धवि° A. Ss. 3) Thus A. Ss.

णा] गच्छन्तीति शेषः । शरीराणि ग्रामसमीपमाहृत्य कुम्भेन तल्पे कृत्वाह-
तपक्षेण परितत्याघ्नत्सु वाद्यमानेषु वीणायां चोद्धतायाममात्यास्त्रिस्त्रिः परिक्राम-
न्त्युत्तरीयैरुपवाजनैर्वोपवाजयन्तः ॥७॥ सं॰ [कुम्भ एवास्थिसंचयनं[1] कृत्वारण्ये
भूमिमध्येऽस्थीनि स्थापितानि भवन्ति · तेनैव] कुम्भेन शरीराणि तान्यस्थीनि
ग्रा॰हृत्य तल्पे खट्वायां कृत्वा कुम्भस्थान्येव [पूर्वमेव तत्र स्थापितायाः खट्वाया
उपरि निधाय] अह॰क्षेण अहतवस्त्रस्यैकदेशेन परितत्यास्थिकुम्भं [सर्वतो]
वेष्टयित्वा घ्ना॰त्सु [लोहमयेषु महत्सु] वादित्रेषु पटहादिषु वा॰नेषु उद्धताया-
मुत्कटायां वीणायां च वाद्यमानायाम् अमात्या [मृतस्य पुत्रपौत्राद्याः] उत्तरीयैः
प्रावरणवस्त्रैः उपवाजनैर्व्यजनैर्वा तमस्थिकुम्भं वाजयन्तः त्रिस्त्रिरप्रदक्षिणं परियन्ति।
स्त्रियो वा ॥८॥ परिक्रामन्ति [न] वेति विकल्पः [देव॰ अमात्यास्तु परिक्रा-
मन्त्येव] । पूर्वरात्रमध्यापररात्रेषु च ॥९॥ सं॰ रात्रेः पूर्वभागे मध्यभागे पा-
श्चात्यभागे परिक्रामन्ति । विफल्फान्नमहरेतत् ॥१०॥ फल्फ वृद्धौ · बह्वन्न-
मेतदहर्भवति[2]। नृत्तगीतवादित्रवच्च ॥११॥ भवति। [देव॰ अनवरतं नृ॰त्राणि
अस्मिन्नहनि कारयितव्यानि] । अन्नमस्मा उपहरन्त्येके ॥१२॥ अस्मा अ-
स्थिकुम्भाय एकेऽन्नोपहारं कुर्वन्ति[3]। उपव्युषसं सशरीरा दक्षिणा गच्छ-
न्ति ॥१३॥ उषसि विगच्छन्त्यां सह शरीरेण द॰न्ति । सं॰ विगच्छत्या[4] उषसः स-
मीपे उप॰सम् · [अस्थिकम्भसहिताः यजमानाध्वर्युमात्याः] । यथा कुर्वतो
ऽभ्युदियात्सूर्यः ॥१४॥ सं॰ तथा कर्तव्यम् यथा [वक्ष्यमाणम]स्थिनिवापं कुर्वतः
सूर्योऽभ्युदियात् । [देव॰ सूर्योदयात्प्रागेव वक्ष्यमाणमस्थिनिवापं कर्म प्रारभेतेत्यर्थः ।
अधुना श्मशानप्रदेशस्य विशेषमाह ·] कक्षेऽवतापिनि ॥१५॥ श्मशानं
कर्तव्यम् · कक्षो गहनप्रदेशः · अवतापी यस्मिन्नुपरि स्थितः सूर्यस्तपति न
पार्श्वस्थः । सं॰ कक्षे गह्वरे वृक्षगुल्मादिसंवृते प्रदेशे श्मशानं कुर्यात् · कीदृशे
कक्षे अवतापिति अधस्तापिनि · [यो गह्वरप्रदेश उपरिष्टात्स्थितेनैव सूर्येण
मध्याह्नेऽधस्तात्ताप्यते पार्श्वतो वृक्षगुल्मादिभिरावृतत्वात् तस्मिन्] ।

---

1) See २५. ८. ७. 2) एतत्पितृमेधारम्भसम्बन्धि दिनं वि॰न्नम् अस्मिन्दिने बह्वन्न-
दानं कर्तव्यम् Deva. 3) प्रथमपरिगमनानन्तरमिति सम्प्रदायः Deva. 4) ॰च्छत Ss. A.

ऊषरेऽउदक्प्रवणे समे वा ॥१६॥ सं° ऊषाः क्षारमृत्तिकाः सन्ति यस्मिन् · [उदीच्यां दिशि] प्रवणं निम्नं यत्र । दक्षिणाप्रवणाऽएके ॥१७॥

अदर्शनाद्ग्रामात् ॥१८॥ सं° सप्तम्यर्थे पञ्चमी ग्रामाददर्शने · [यत्र स्थितैर्ग्रामो न दृश्यते] । आरात्पथः ॥१९॥ सं° पथो मार्गादारात् दूरे कर्तव्यम् ।

न्यग्रोधाश्वत्थतिल्वकहरिद्रुस्फूर्जकबिभीदकपापनामभ्यश्च[1] ॥२०॥ दूरात्करोति । सं° [न्यग्रोधो वटः अश्वत्थः पिप्पलः] तिल्वकः तिणिसः हरिद्रुः प्रसिद्धः स्फूर्जको वृक्षविशेषः बिभीदको बहेदकः पापनामानः श्लेष्मातककोविदारादयः[2] · आरादित्यनुवर्तते एतेभ्य आरात् दूरे भवति । चितिवच्च ॥२१॥ देशो भवति तद्गुणयुक्त इत्यर्थः । सं° चितिवत् मृतस्य दाहार्थं यादृशे देशे काष्ठैश्चितिर्विहिता तादृशे देशे · [ततश्च उद्धृत्य क्षीरिणीः पुरुषाकृतीर्विशाखशराश्मगन्धापृश्निपर्ण्यध्याण्डाश्चेत्येतल्लभ्यते (२५.७.१६-१७)] ।

शम्वति कम्वति वा ॥२२॥ शमिति सुखनीयः प्रदेशः कमिति रमणीयः तत्र करोति · वाशब्दो विकल्पार्थः । सं° शम्वति सुखवति प्रदेशे कम्वति स्वर्गतुल्ये रमणीये कमनीये प्रदेशे · [केचित्तु शम्वति शमीवने कम्वति करीषवति करीरवने वेति व्याचक्षते] । चित्रं पश्चात्[3] ॥२३॥ चित्रमनेकप्रकारं वनं यस्य प्रदेशस्य [पश्चात्] सोऽङ्गीकर्तव्यः । सं° [तस्य श्मशानस्य पश्चात्] चित्रं दर्शनीयं [वन-]गिरिदेवगृहादिकं पश्चाद्भवति । तदभावऽउदकम् ॥२४॥ उत्तरतो वा ॥२५॥ सं° चित्राभावऽउदकं पश्चाद्वा उत्तरतो [वा] भवेत् । कर्षूवीरिणवति ॥२६॥ कर्षूशब्देन कुहर उच्यते · वीरिणानि तृणानि · तद्वति प्रदेशे करोति । सं° कर्षूः कोसारः[4] । ग्रामतस्तेजनीमुच्छ्रित्य न न्यस्येद्गृहेषूच्छ्रयेत् ॥२७॥ (१३.८.३.१२) । सं° यदा एतत्कर्मार्थं [ग्राममध्यात्] बहिरागम्यते तदा कश्चिद्यजमानपुरुषो ग्रामतो ग्राममध्यात् तेजनीं तृणपूलकमुच्छ्रित्य वंशादिबद्धामूर्ध्वीकृत्य तत्रागच्छेत् न न्यस्येत् तां तेजनीं नीचैर्भूमौ न निदध्यात् [किंतु यावत्कालं कर्म भवति तावत्कालं] उत्तरस्यां दिशि धारयेत् कर्मान्ते धृतामेव गृहं [प्रति]

---

१) द्रु M. ३. स्पू K. विभी° K. A. °तकपा° R. M sec. m. विभिदेक १. २) Thus A. °ष्मांतको° Ss. ३) श्चात्स्यात् Ss. ४) कौसारः A.

नीत्वा गृहेषूच्छ्रयेत् । दिक्स्रक्तिं पुरुषमात्रं मिमीते ॥२८॥ तच्छ्मशानं दि॰त्रं मेयम् । सं॰ दिक्कोणाम् । उत्तरतः पृथु पश्चाच्च ॥२९॥ सं॰ उत्तरस्यां दिशि ईशानपार्श्वे पृथु विस्तीर्णं विपुलं करोति · अपरस्यां दिशि वायव्यपार्श्वे च पृथु विपुलं भवति । विहृत्य स्रक्तिषु शङ्कूनाहन्ति ॥३०॥ सं॰ [तत्क्षेत्रमेवंविधं] विहृत्य मित्वा तस्य कोणेषु [वक्ष्यमाणान्] श॰न्ति । पालाशं पुरस्ताच्छामील-वारणदेहृशङ्कूनन्यासु ॥३१॥ स्रक्तिषु [दिव॰उत्तरत आरभ्य] अप्रदक्षिणम् · देहृ-शङ्कुर्वृत्रशङ्कुः वृत्रः पाषाणः वृत्रशङ्कुं दक्षिणत इति श्रुतेः (१३. ८. ४. १) । सं॰ प्राच्यां स्रक्तौ पालाशम् · शमीमयं [शमीवृक्षावयवम्] वारणमयं [वारणवृक्षा-वयवम्] · देहृशङ्कुः वृत्रशङ्कुः वृत्रो वै सोम॰यदश्मानः (४. २. ५. १५) [इति वच-नाद्वृत्रोऽश्मा ततश्चाश्ममयः शङ्कुः] वृत्रशङ्कुः पाषाणशङ्कुः । अपसलवि-सृष्टया रज्ज्वा परितत्यापेतो यन्त्विति (३५. १) पलाशशाखया व्युद्वहति ॥३२॥ अपस॰ष्टा अप्रदक्षिणवलिता तया । सं॰ अप्रादक्षिण्येन सृष्टा वणिता निष्पादिता तया [तन्मितं क्षेत्रं] परितत्य [समन्तादप्रदक्षिणमेव] वेष्टयित्वा अपेत इति पला-॰हृति तृणपर्णादि क्षेत्राद्बहिर्निष्काशयति । दक्षिणा शाखां निरस्य परि-श्रिद्भिः परिश्रयति पूर्ववदपरिमिताभिः ॥३३॥ गार्हपत्य[चिति]परिश्रिदपेक्षया इहा-परिमितत्वम् · एवं हि श्रूयते यजुषा ताः परिश्रयन्ति तूष्णीमिमा इति (१३.८.२.२) · यजुषा च परिश्रयणमिति गार्हपत्यपरिश्रिताम् । सं॰ पूर्ववदिति ऊर्ध्वाः शर्कराः क्षाति (१६. ८. २४) रज्ज्वा सहितं बद्धीरज्जु (१६. ८. २२) इत्यर्थः · एकविंशतिसंख्या-तोऽधिकाभिरपरिमिताभिरित्यर्थः । औदुम्बरसीरऽउत्तरतो वा षड्गवे युज्य-माने युङ्क्तेति सम्प्रेष्य सविता तऽइति (३५. २) जपति ॥३४॥ सम्प्रेषणजपौ याज-मानौ । सं॰ [ततोऽध्वर्युः तस्य क्षेत्रस्य] दक्षिणतो वोत्तरतो वेति विकल्पः [षड्-भिरनडुद्भिः सीरं युनक्ति · तस्मिन्सीरेऽध्वर्युणा यु॰ने यजमानो॰] ॥ ॥ तृतीया कण्डिका ॥ ३ ॥ ॥

अनुरज्जु चतस्रः सीताः कृषति वायुः पुनात्विति (३५. ३) प्रतिमन्त्रम् ॥१॥ सं॰ ततोऽध्वर्युरप्रदक्षिणां [परितो वेष्टितां रज्जुमनुलक्षीकृत्य] च॰षति ।

उत्तरतः प्रतीचीं प्रथमाम् ॥२२॥ अग्नेर्भ्राजसा सूर्यस्य वर्चसेति (३५. ३) चात्र

कृषामीत्यध्याहारः साकाङ्क्षत्वात् । सं॰ प्रथमामुत्तरपार्श्वे [प्राचीं कर्षति · दक्षिणातः सीरयोजनपक्षेऽपि तत्सीरमप्रदक्षिणमुत्तरत आनीय प्रथममुत्तरत एव कृषति] । अपरिमिता मध्ये तूष्णीम् ॥३॥ सीताः कृषति । सं॰ [एवं चतुर्षु पार्श्वेषु मन्त्रेण कर्षणं कृत्वाथ तस्यैव क्षेत्रस्य मध्ये] अप्रादक्षिण्येनैव॰ । अनड्वाहो विमुच्य विमुच्यन्तामिति (३५. ३) दक्षिणा सीरं निरस्याश्वत्थे व इति (३५. ४) सर्वौषधं वपति ॥४॥ कृष्टे । सविता त इति (३५. ५) शरीराणि निवपति मध्ये ॥५॥ कृष्टमध्ये[1] । तूष्णीमन्यः कुम्भमाहणोति दक्षिणानवानन्सृत्वा[2] ॥६॥ अन्योऽध्वर्युव्यतिरिक्तः तूष्णीमनवानं दक्षिणा गत्वा कुम्भमाहणोति क्षिपतीत्यर्थः भिनत्तीत्यपरे । सं॰ अन्यः कश्चिदवृत एव ब्राह्मणोऽनवानं श्वासोच्छ्वासमकृत्वेव[3] दक्षिणस्यां दिशि [गत्वा] अस्थिकुम्भं [तस्यामेव दिशि] प्रक्षिपतीत्यर्थः । प्रत्यागते परं मृत्यविति (३५. ७) जपति ॥७॥[4] प्रत्यागते क्षेप्तरि । शं वात इति (३५. ८) यथाङ्गं कल्पयित्विष्टकां निदधाति[5] मध्ये तूष्णीम् ॥८॥ (१३. ८. ३. ५) · तूष्णीमिति लौकिकवाक्प्रतिषेधः । सं॰ तानि मध्ये न्युप्तान्यस्थीनि यत्वा यदस्थि यस्याङ्गस्य तेनास्था तदङ्गकल्पनया [प्राक्शिरसं] पुरुषाकृतिं कृत्वा तन्मध्ये तूष्णीमेकामिष्टकां पादमात्रीं निदधाति । प्रतिदिशमन्तेषु पराचीस्तिस्रस्तिस्रोऽलक्षणाः पादमात्रीः ॥९॥ पराचीरिति नाभ्यात्मम् । सं॰ पराचीः पूर्वापराः नाभ्यात्मम् · [लक्षणं लेखाः तद्रहिताः] । प्रदरात्पुरीषमाहृत्य परिकृष्य वा सर्वतोऽपुरस्तात् ॥१०॥ सं॰ प्रकर्षेण स्वयमेव दीर्णो भूप्रदेशः प्रदरः · तस्मात्पुरीषमाहृत्य [श्मशाने] निवपति · अथवा सर्वतः [सर्वाभ्यो] दिग्भ्यः परिकृष्य परिकर्षणं कृत्वा [पुंत्य श्मशाने] निवपति अपुरस्तात् प्राच्या दिशः पुरीषाहरणं न कर्तव्यम् । शर्करा अनग्निचितः ॥११॥ सं॰ अनग्निचितः संस्का-

---

[1] तस्य पुरुषमात्रक्षेत्रस्य मध्ये मृतस्यास्थीनि निवपति एनं प्रेतमस्थ्यवस्थं अस्थिनिधानकुम्भात् श्मशानक्षेत्रमध्ये नोच्चैर्वपति क्षिपति मध्ये पुञ्जराशिं करोति । एतच्च सूर्योदयसमकालं कर्तव्यम् · अर्थाच्चातः पूर्वं कर्म प्रागभ्युदयात् Deva. [2] ॰न्त्व सृत्वा १. ॰नं सृत्वा K. ३. M sec. m. A (text). ॰नं स्तृत्वा Ss. M pr. m. See १३. ८. ३. ४. [3] ॰नन् श्वासोच्छ्वासमकुर्वन्नेव A. [4] अध्वर्युः । यजमान इति याज्ञिकाः Deva. [5] त्वाष्ट॰ १. ॰त्वैकेष्टकां Mahîdh. त्वेकष्टां A pr. m. त्वेष्टक sec. m. ॰कानि ३. M.

र्यस्य इष्टकास्थाने त्रयोदश शर्करा उपधेयाः [तेष्वेव स्थानेषु तद्वदेव · शर्कराः पाषाणाः]। ऊर्ध्वप्रमाणमास्यं ब्राह्मणस्य ॥१२॥ श्मशानस्य[1] भवति · ततश्च परिश्रितस्तावत्प्रमाणा भवन्ति। सं° मुखं ब्रा°स्य संस्कार्यस्य ऊर्ध्वस्य उच्चस्य प्रमाणं भवति पुरीषावापेन [· मुखमात्रमुच्चं ब्राह्मणश्मशानं कर्तव्यम्]।

उरः क्षत्रियस्य ॥१३॥ प्रमाणम्। सं° उरो हृदयम्। ऊर्ध्वबाहु वा ॥१४॥ वेति विकल्पः। ऊरू वैश्यस्य ॥१५॥[2] उपस्थ[3] स्त्रियाः ॥१६॥ सं° संस्कार्यायाः। जानु शूद्रस्य ॥१७॥[4] प्रमाणम्।

सर्वेषां वाधोजानु ॥१८॥ प्रमाणम् · वाशब्दो विकल्पार्थः। सं° जानुनोरधस्तादधोजानु। अवकाभिः कुशैश्च प्रछाद्य परिकृष्टं चेद्यवान्वपेत् ॥१९॥ यदि परिकृष्टात्पुरीषम् (१०) ततश्च तत्र यवानां वापः श्रुतिक्रमेण (१३.८.३.१३) [देव° न प्रदरात्पुरीषाहरणपक्षे]। दक्षिणतः कुटिले कर्षू खात्वा क्षीरोदकाभ्यां पूरयन्ति समोत्तरतः प्राचीरुदकस्य ॥२०॥ सं° श्मशानस्य दक्षिणतः ईषद्वक्रे [कर्षू] गर्तौ खात्वा [पूर्वदिनोपक्लृप्तैः] घटैः क्षीरेण [दुग्धेन] उदकेन च पूर्णन्ति [बहुवचनात्प्रकृता अध्वर्युयजमानामात्याः] · तथा श्मशानस्योत्तरतः सप्त कर्षूः प्राचीः प्रागायता दक्षिणोत्तरा दक्षिणसंस्थाः खनन्ति ता[श्च प्रागुपक्लृप्तैः घटै]ः केवलेनोदकेन पूरयन्ति। त्रींस्त्रीनावपन्त्यश्मनः ॥२१॥ सं° अध्वर्युयजमानामात्याः त्रींस्त्रीनश्मनः कर्षूषु प्रक्षिपन्ति। अध्यधि गछन्त्यश्मन्वतीरिति[5] (३५.१०) ॥२२॥ कर्षूषु। सं° तेऽमात्यास्ताः कर्षूरध्यधि तासां कर्षूणामुपरिष्टाद्गछन्ति ग्रामं प्रति[6]। अपाघमित्यपामार्गैरपमृजते (३५.११) ॥२३॥ आत्मानममात्या अपमृजन्ति। सं° स्वशरीरम् · [अन्ये तु अपामार्गवीजैरुद्वर्तनं कुर्युरिति व्याचक्षते]।

सुमित्रिया न इति (३५.१२) स्नात्वाहतवाससोऽनडुत्पुछमन्वारभ्यानड्वाहमित्युद्वयमित्यागछन्ति (३५.१३-१४) ॥२४॥ अहतानि वासांसि परिधाय [देव° ग्रामं प्रति]।

---

१) ? °शानं K. २) वोरू M. १. ३. K. R. ऊरू सक्थिनी Deva. ३) स्त्रीप्रजननप्रदेश एव Deva. ४) शूद्रस्य शूद्रदौहित्रस्य रथकारस्य जानु जंघा प्रमाणम् · अत्र हरिस्वामिनः यद्यपि शूद्रोऽग्निचिन्नास्ति अग्निचितश्चायमधिकारस्तथापि परिमाणप्रसंगादाचारतः प्राप्तस्यामन्त्रकस्य परिमाणमाह Deva. ५) sic! Thus all: १. ३. K. R. M. A. Ss. — See not. 11. at ३५. १०. ६) अग्यमसु पादान्निदधत उदकं गछन्तीति वासुदेवः Deva.

ग्रामश्मशानान्तरे मर्यादालोष्टं निदधातीमं जीवेभ्य इति (३५. १५) ॥२५॥ मर्यादायाऽएव लोष्टमाहृत्येति वचनात् (१३. ८. ४. १२)। आञ्जनाभ्यञ्जने कृत्वौपासनं परिस्तीर्य वारणान्परिधीन्परिधाय वारणेन स्रुवेणैकामाहुतिं जुहोत्यग्नऽआयूंष्यायुष्मानग्नऽइति (३५. १६-१७) ॥२६॥ परिधानोपदेशाच्चत्वारः परिधयः · औपासनश्चात्र कर्तृसम्बन्धी न प्रेतसम्बन्धी[1] तेन ह्यसौ विहितकर्मानुष्ठानसाधनभावायाहित[2] इति · तत्परिधीनां च संस्कारो न भवत्येवापूर्वत्वात्। सं॰ आञ्जनमक्ष्णोरञ्जनं कज्जलादिना अभ्यञ्जनं च पादयोस्तैलेनाञ्जनम्।

अथैषां परिदां वदति[3] परीमे गामनेषतेति (३५. १८) ॥२७॥ अथशब्दो मङ्गलार्थः पित्र्यं कर्म निवृत्तमिति · आनन्तर्यार्थमित्यपरे ततश्चानन्तरमर्थलक्षणमपि न कर्तव्यम् परिदावादश्च यजमानविषयोऽमात्यविषयश्च तेनैषामित्युक्तम्। सं॰ अथानन्तरमध्वर्युरेषां यजमानामात्यानां परिदां रक्षणं वदति। अद्वारेणौपासनं निरस्यति क्रव्यादमिति (३५. १९) ॥२८॥ औपासनश्च यस्मिन्नाहुतिर्हुता स एव ग्रहीतव्यो न प्रेतौपासनः · तस्यैकदेशं निरस्यति · स एव ह्यानन्तर्यात्सम्बध्यते तदेकदेशं निरस्यति तथा च मन्त्रवर्णः (३५. १९) इहैवायमितरो जातवेदाऽज्ञानन्निति जपमन्त्रऽएतदभिधीयते एकदेशो निरस्तः एकदेशऽइतरशब्दो वर्ततऽइति। सं॰ आहुतिहोमानन्तरं यस्मिन्नाहुतिर्हुता तस्यौपासनस्यैकदेशं क्रव्यादमग्निमिति मन्त्रेण निरस्यति। प्रेतस्यैवौपासनः सकलो निरसनीय इति हरिस्वामिनः · [औपासनः प्रेतस्यैव मन्त्रवर्णाद्विभागानुपदेशाच्चेति वासुदेवः]।

इहैवायमिति जपति (१३. १९) ॥२९॥ सं॰ यजमानः। आसन्दी सोपधाना दक्षिणानड्वान्यवाश्च सर्वं पुराणम् ॥३०॥ सं॰ उपधानमुच्छीर्षकम् तेन सहिता पुराणा जीर्णा आसन्दी दक्षिणा · तथा पुराणो वृद्धोऽनड्वांश्च दक्षिणा पुराणा यवाश्च दक्षिणा · एतत्सर्वं जीर्णं [ददाति] न नूतनम्।

---

1) अग्निस्तस्यैव प्रेतस्यौपासनः स हि एवमर्थमेव धारणीयः अद्वारेण च निरसनीय इति श्रुत्यक्षरादिति हरिस्वामिनः · कर्तुरेवौपासने होमस्तस्यैकदेशस्य निरसनमिति कर्कादयः Deva., see २८. 2) ? ॰धनाभावायाहित K sec. m. ॰धनानांवा॰ pr. m. 3) Thus M sec. m. R. A. ॰दंति K. ३. M pr. m. बरं ददाति १!

भूयसीश्चेहन् ॥३१॥ सं॰ इहन्नितोऽतिरिक्ता हिरण्यादिका ददाति ॥ ॥ चतुर्थी कण्डिका ॥४॥ ॥

इत्युपाध्यायकर्कविरचिते कात्यायनसूत्रभाष्यऽएकविंशतिमोऽध्यायः ॥ पितृमेधः समाप्तः ॥ ॥

इतिं कात्यायनसूत्रऽएकविंशोऽध्यायः ॥२१॥ ॥

---

अथैकाहाः ॥१॥ उक्तान्याधानादीन्यध्वर्युवेदविहितानि पितृमेधान्तानि कर्माणि। इदानीं छान्दोग्यवेदविहितान्येकाहादीनि सत्राणि व्याचिख्यासुराचार्य इदमाह अथैकाहा इति · तत्रायमथशब्दोऽधिकारान्तरप्रज्ञप्त्यर्थः · वेदान्तरविहितानि कर्माणि व्याख्यातुमधिक्रियन्ते। अधिकारान्तरप्रज्ञप्तेः किं प्रयोजनमिति चेत् इह चोदकपरिप्राप्ताङ्गपदार्थव्यतिरेकेणोद्गातुः कर्तृत्वं यथा स्यादिति · कुत एतदिति चेत् उद्गातृवेदसमधीतत्वात्समाख्ययोद्गातुरेव कर्तृत्वमिति · ननु च सर्वऽएवैतऽउद्भिदादय उद्गातृवेदसमधीताः सत्यमेव प्रधानेषु न समाख्यया कर्तृत्वम् उद्भिदा यजेत पशुकाम इति सर्वं प्रत्युपदेशात् अङ्गेषु त्वपूर्वेषु समाख्यया कर्तृत्वमिष्यते यानि पुनश्चोदकपरिप्रापितान्यगृहीतकर्तृकाण्येवेति। एकाहा व्याख्यास्यन्तऽइति सूत्रशेषः · एकाहैश्चोपलक्षणमहीनसत्राणामपि। सं॰ अथानन्तरमेकाहाः एकसुत्याः क्रतवोऽभिधास्यन्ते। अवचनेऽग्निष्टोमः ॥२॥ संस्थान्तरस्यावचनेऽग्निष्टोमो भवति · न्यायसूत्रमेतत् · प्राथम्यादविरोधान्नित्यत्वाच्चाग्निष्टोम एव भवति। सं॰ संस्थान्तरस्यानुक्तौ अग्निष्टोमसंस्थः क्रतुर्भवति।

भूर्धेनुर्दक्षिणाः ॥३॥ भूर्नामैकाहः स धेण्णो भवति · दक्षिणासंयोगेन धेनुविधानात्सकलस्य दाक्षिण्यस्य निवर्तिका धेनुः · अत्र च दक्षिणाभिमन्त्रणमन्त्रो विपरिणम्यते। ज्योतिः ॥४॥ ज्योतिर्नामैकाह एव · नात्र कश्चिद्विशेषः। सं॰ अग्निष्टोमसंस्थः। गोऽआयुषीऽउक्थ्यौ ॥५॥ एको गौः अपर आयुः · तावुक्थ्यसंस्थौ भवतः। अभिजिद्विश्वजितौ ॥६॥ अपरावेकाहौ। सं॰ अग्निष्टोमसंस्थौ। सहस्रमभिजितो दक्षिणा ॥७॥ ततश्च यत्सहस्रसंयो[गे]न श्रूयते तदत्र भवति · यथाश्वदाभ्यग्रहणम् (१२.५.११) तिस्रोऽनूबन्ध्यास्त्रेधातवीति (१३.४.५.८)। सं॰ सहस्रं गवाम्। शताश्वं वा ॥८॥ सहस्रम् · शतमश्वानां

यस्मिन्सहस्रे तद्धताश्वं सहस्रम् · तद्वाभिजिद्दक्षिणेति विकल्पः । सं° शतमश्वा अधिका यस्मिन्गवां सहस्रे तद्धताश्वम् ।　　सहस्रं सर्ववेदसं विश्वजितः ॥९॥ सहस्रसर्ववेदसयोर्विश्वजितीति विकल्पः । सर्ववेदसपक्षे इदमुच्यते ·

ज्येष्ठं पुत्रमपभज्य भूमिशूद्रवर्जं योगाविशेषात्सर्वेषाम् ॥१०॥ ज्येष्ठपुत्रस्य विभागं दत्त्वा भूर्जं ददाति · कुत एतत् सर्वमनुष्याणां हि भूम्या योगोऽविशिष्टः धारणाचङ्क्रमणाद्वारेण　शूद्रस्य च शुश्रूषोपनततेति[1] । सं° भूमिस्तावद्धारणाशयनासनचङ्क्रमणादिसम्बन्धः[2] सर्वेषामविशिष्टः · यः शूद्रो धर्मार्थं सेवां कुरुते स सर्वेषामविशिष्ट एव ।　　शूद्रदानं वा दर्शनाविरोधाभ्याम् ॥११॥ वाशब्दः पक्षव्यावृत्तौ · शूद्रस्य दानं च भवति · दृश्यते हि शूद्रस्य दानम् पुरुषमेधे (१३. ६. २. १८) सपुरुषं प्राची दिग्घोतुरिति · न च[3] विरोधो गर्भदासस्य · तस्माच्छूद्रो दीयतऽएव · अनेन च न्यायेन भूमेरप्येकदेशदाने नैव विरोधः　क्वचिच्च दृश्यते (१३. ७. १. १३) सभूमि सपुरुषमिति । सं° वावधारणे · भृत्यास्वीकृतस्य शूद्रस्य दानं भवति ।　　द्रव्याभावात्तदन्तः ॥१२॥ दक्षिणादानान्तो विश्वजिद्भवति · कुत एतत् द्र°वात् सर्वस्वदाने सति द्रव्यमेव नास्तीति तदन्तो विश्वजित् ।

समाप्तिर्वा चोदितावभृथश्रुतेः ॥१३॥ वाशब्दः पक्षव्यावृत्तौ · समाप्येत वा विश्वजित् · चोदितो ह्यसौ　विश्वजिता यजेतेत्यपवर्गपर्यन्त आख्यातार्थः · अपि चावभृथश्रुतिर्भवति　अवभृथादुदेत्य वत्सछविं परिदधातीति[4] वत्सछविपरिधानविधिपरे वाक्ये अवभृथं दर्शयति ।　　दीक्षासु चापदेशात् ॥१४॥ दीक्षासु च क्रत्वभिनिर्वृत्त्यर्थं द्रव्यमपदिष्टम्[5] अतस्तद्व्यतिरिक्तं सर्वस्वमिति । सं° दीक्षास्वेव क्रत्वर्थस्य द्रव्यस्य अन्यस्मै अपदेशात् ।　　न　समत्वात् ॥१५॥ नैतदेवं युक्तम् विश्वजित्समाप्येतेति · समं ह्येतदुभयम् विश्वजिता यजेतेति समाप्तिश्चोदिता　सर्वस्वं च ददातीति च सर्वस्वदानम्　अतो विरोधाद्विकल्प एव युक्तरूपः । एवं स्थितऽआधीतेन व्याख्यायते · सममेतददिति चेत्　नैतत्समम्　विश्वजिता यजेतेति पूर्वचोदना प्रधानचोदना च　सर्वस्वं ददातीति गुणचोदना

---

1) ? °ततेति K.　2) °स्तावद्धारणा° Ss.　3) ? न चन K.　4) See Lâṭyây. ८. २. १.　5) See ७. २. ७.

पश्चात्कालवाचिनी च · तेन विरोधे सति अयमेवार्थो ग्रहीतुं न्याय्य इति · विकल्पश्च तुल्यत्वे भवति न चेह तुल्यत्वमित्युक्तम्। विश्वजिति सहस्रसर्ववेदसयोर्विकल्प उक्तः (१) · तत्र संदेहः किं प्रागपि सहस्रात्सर्ववेदसं भवति उतोर्ध्वं सहस्रादिति किं तावत्प्राप्तम् · सूत्रेणैवोपक्रमः · परिमाणे सर्वमविशेषात् ॥१७॥ सर्वस्वपरिमाणे मृग्ये यस्य यावत्स्वम् तत्सर्वं गृह्यते सर्वं वेदः सर्ववेदसमिति · तेन प्रागपि सहस्रात्सर्ववेदसं भवति · एवं प्राप्तऽआह ·। सं॰ सर्वस्वपरिमाणे अपेक्षिते सर्वस्वं यस्य यावद्धनं गृहे सुवर्णादि तत्सर्वं देयम् · कुतः अविशेषात् न च सर्वस्वं ददातीति [अस्य] वाक्यशेषः श्रुतः येन सहस्रान्न्यूनमतिरिक्तं वेति विशेष आश्रीयते। अधिकं वा प्रकृत्यनुग्रहात् ॥१८॥ अधिकं वा सहस्रात्सर्ववेदसं ग्रहीतव्यम् · प्रकृत्य हि सर्ववेदसं सहस्रेणानुग्रहं दर्शयति[1] कोऽर्हति मनुष्यः सर्ववेदसं दातुं तस्मात्सहस्रं देयमिति · एतच्च सहस्रादधिकऽउपपद्यते नेतरथेति · एवं तावदत्र [विश्वजिति] सहस्रादधिकं सर्ववेदसमित्युक्तम्। अन्यत्रापि प्रतिहर्तृपक्षेदादौ सहस्राधिके प्राप्तऽआह ·। नानित्यत्वात् ॥१९॥ नैतदेवम् सहस्राधिकं सर्ववेदसमिति · न हि नित्ये कस्मिंश्चित्परिमाणविशेषे सर्ववेदसशब्दः प्रसिद्धः · यच्चस्य वेदः सर्वम् तत्सर्वस्वमिति। सं॰ न हि नि॰ब्दःप्रसिद्धः येनैवं निश्चीयते सहस्रादधिकमेवेति। कर्मशब्दाच्च ॥२०॥ अस्ति चायं लोके [कर्मशब्दो] व्यापारशब्दः सर्व[स्व]मनेन दत्तमिति · तस्मात्प्रागपि सहस्रात्सर्वस्वमिति · विश्वजिति तु लिङ्गेन व्यवस्था। अवभृथादुदेत्य रौहिण्यौ वत्सछव्यौ सकर्णपुछावछाते परिदधाते ॥२०॥ अवभृथादुत्थाय · सकर्णपुछावछिन्ने। सं॰ रक्तवर्णे वत्सस्य त्वचौ चर्मणी सकर्णपुछे अ[व]छाते अ[व]छिन्ने।

द्वादशरात्रं परिवसत्युखावदग्निं बिभ्रत् ॥२१॥ सं॰ उखावदिति वैणवी सुषिरा कल्माषी (१६.२.५) अतिदिश्यते एवंविधामौदुम्बरीं वाग्निं[2] बिभ्रत् द्वा॰त्रं वक्ष्यमाणेषु स्थानेषु वसति। औदुम्बरीं वा ॥२२॥ उष्णीषं च ॥२३॥ सं॰ शिरोवेष्टनम्। तिस्रस्तिस्रः ॥२४॥ द्वादशरात्रस्य विभागः। सं॰ एकैकस्मिन्स्थाने यजमानस्तिस्रस्तिस्रो रात्रीर्वसति। औदुम्बरे मूलफलभक्षः ॥

1) See at ५. ३. ३. 2) ? ॰ग्रीमग्निं Cod.

२५॥ औदुम्बरबकुले देशे मूर्ध्नः तिस्रो रात्रीर्वसति। निषादे ॥२६॥ निषादानां मध्ये अपरास्तिस्रो वसति। सं° अरण्ये तिस्रो रात्रीरुषित्वा निषादानां समीपे वसति। जने ॥२७॥ तिस्रो रात्रीर्वसति। समाने जने ॥२८॥ अपरास्तिस्रः। अप्रसिद्धत्वात्स्वयमेवाह · वैश्यो जनो राजन्यः समानजनः श्रुतेः ॥२९॥[1] सं° राजन्यः क्षत्रियः। ग्राम्याभोजनं निषादानां मृन्मयापानं च ॥३०॥ निषादानामस्यैष नियमः। सं° तत्र वसता यजमानेन निषादानां सम्बन्धि यद्ग्राम्यं व्रीहियवादि तस्याभोजनम् · मृच्च तत्र वसता मृन्मयपात्रेणोदकपानं न कर्तव्यम्। संवत्सरं न याचेत् ॥३१॥ किंचिदपि।

दीयमानं न प्रत्याचक्षीत ॥३२॥ संवत्सरमेव। यमाभ्यां वा यजेत पूर्वापराभ्याम् ॥३३॥ यमाभ्यां वाभिजिद्विश्वजिद्भ्यां यजते · तत्र पूर्वं कृत्वापरः क्रियते · पौर्वापर्ये[2] हि यमशब्दो लोके दृष्टः। एवं प्राप्तऽआह · । सं° अथवा विश्वजिदभिजिद्भ्यां यमाभ्यां दर्शपूर्णमासवत्संहताभ्यां यजेत। पूर्वमभिजितेष्ट्वानन्तरमवश्यं विश्वजिता यजेत। युगपद्वा ॥३४॥ वाशब्दः पक्षव्यावृत्तौ · न पौर्वापर्येण[3] किं तर्हि युगपदेव · न हि कर्मणोः पौर्वापर्ये यमशब्दो वर्तते तस्मात्सहैव क्रिया · यत्तु लोके पौर्वापर्येऽपि यमशब्दो दृश्यते तत्रान्यथोपपद्यतऽइति। यमयागपक्षे कर्म निरूप्यते · दक्षिणोत्तरे देवयजने ॥३५॥ भवतः। तत्र च · दक्षिणमभिजितः ॥३६॥ पत्नीशालमुत्तरे ॥३७॥ देवयजने भवति।

नानर्त्विजः ॥३८॥ नाना पृथक्पृथगृत्विजो भवन्ति देशभेदात्। तऽएव वा प्रभुत्वात् ॥३९॥ तऽएव वा ऋत्विजो भवन्ति न पृथक्त्वेन · प्रभवन्ति हि ते उभयोरपि देवयजनयोः दक्षिणेऽध्वर्युराध्वर्यवं करोति विरोधादुत्तरे प्रतिप्रस्थाता उक्तमाचार्येण (१.७.३०) वचनविरोधाभ्यामन्य इति · इह च युगपत्प्रवृत्तौ षोडशसंख्यैव ऋत्विग्विषया भवति · क्रतुद्वयाभिनिर्वृत्त्यर्थतया ब्रह्मा व्रियते तथोद्गात्रादयः तस्मात्तैरेव क्रतुद्वयमपि निर्वोढव्यमिति। सं° कुतः ब्रह्मादयो यत उभयत्र कर्म कर्तुं प्रभवन्ति। बाह्वैर्वैदिकानि समानानि ॥४०॥ बाह्यानि यान्यङ्गानि दीक्षणीयादीनि तानि समानानि भवन्ति अगृह्यमाणविशेषत्वात्।

---

1) See Lâṭyây. ८.२.१०-१२. 2) and 3) पूर्वा° K.

सं॰ साधारणानि । नानेतराणि ॥४१॥ यानि पुनरान्तर्वेदिकानि तानि पृथग्भवन्ति यथाग्नीषोमीयादीनि गृह्यतऽएव हि विशेषस्तत्र । कर्मसंनिपाते पूर्व-पूर्वमभिजितः ॥४२॥ कर्म भवति · यथा सयजमाना धिष्ण्यानुपतिष्ठन्तऽइति (९.८.१८) । सं॰ अभिषवधिष्ण्योपस्थानादौ सर्वर्विक्साध्ये पूर्वमभिजितः कर्म भवति ।

पृथक्सहस्रे दक्षिणा ॥४३॥ दक्षिणेऽपि देवयजने सहस्रम् उत्तरेऽपीति · सहस्रयुक्तं (७) चोभयोर्भवति त्रैधातवी तु बाह्यिर्वेदिकीति तल्लेण । सं॰ पृथक् गवां द्वे सहस्रे दक्षिणा । सर्वजित्समहाव्रतः संवत्सरदीक्षः सप्ताहाभिषवस्तिस्र उपसदः षड्वा ॥४४॥ सर्वजिन्नामैकाहः · स समन्तो भवति · संवत्सरं दीक्षा भवन्ति · संवत्सरादूर्ध्वं सप्ताहेऽतीते सुत्या भवति · तत्र च तिस्र उपसदो भवन्ति चतस्रो दीक्षाः षड्वा उपसदो भवन्ति एका दीक्षा । सं॰ संवत्सरादूर्ध्वं सप्ताहान्यतिक्रम्य सवः सुत्या । अग्निवद्वा दीक्षाः ॥४५॥ भवन्ति · उपसदां तु विकल्पः स्थित एव । सं॰ अग्निवद्वा चयनवदेव संवत्सरं दीक्षा ॥ ॥ प्रथमा कण्डिका ॥१॥ ॥

शताश्वरथमध्वर्यवे ददात्यग्नौ चीयमाने ॥१॥ तच्च[1] प्राग्धिष्ण्यचयनात् चीयमानऽइति श्रवणात् तत्र चाश्वाकृतेरपकर्षः क्रियते । सं॰ सर्वजिद्यज्ञे अग्नौ चीयमाने गवां शतमश्वयुक्तं रथं चाध्वर्यवे ददाति । उद्गात्रे व्रतकाले ॥२॥ शताश्वरथं ददाति । सं॰ महाव्रतस्तोत्रकाले । होत्रे शस्त्रकाले ॥३॥ व्रतसमनन्तरं यच्छस्त्रं तत्काले होत्रे ददाति । ततो ब्रह्मणे ॥४॥ तत्समनन्तरमेव च ब्रह्मणे ददाति · शताश्वरथमित्यनुवर्तते । सं॰ तत इति महदुक्थशंसनानन्तरं प्राक्माहेन्द्रहोमात्[2] । दक्षिणाकाले सर्वेभ्यः सहस्रम् ॥५॥ ददाति · प्रकृतेभ्य एव मा भूदिति सर्वग्रहणम् । सं॰ माध्यन्दिने सवने मरुत्वतीययागात्प्राक् ।

साहस्राश्ववारः सहस्रदक्षिणाः ॥६॥ साहस्रा इति चतुर्णामपि सामान्यसंज्ञा · संपास्ते भवन्ति । तेषां च · तृतीय उक्थ्यः ॥७॥ [उक्थ्य]संस्थो भवति · ब्राह्मणे हि सर्वज्योतिस्तृतीय उक्थ्यसंस्थः पठ्यते । संज्ञाविशेषमाह ·

ज्योतिर्विश्वज्योतिस्त्रिरात्रसंमितः[3] ॥८॥ सं॰ प्रथमो ज्योतिः द्वितीयो विश्वज्योतिः

---

[1] ? तत्र च K. [2] ? ॰होमानन्तरं Ss. [3] संमित इति K.

तृतीयः सं॰तिः उक्थ्यसंस्थः चतुर्थस्त्रिरा॰मितसंज्ञः । षट्साद्यःक्राः[1] ॥९॥ साद्यःक्रसंज्ञकाः षट् क्रतवो भवन्ति । स्वर्गकामपशुकामभ्रातृव्यवतां प्रथमः ॥१०॥ साद्यस्क्राख्यः क्रतुर्भवति । रुक्मललाटोऽश्वः श्वेतो दक्षिणा ॥११॥ सं॰ रुक्मः सौवर्ण आभरणविशेषः । अश्वाभावे गौः ॥१२॥ दक्षिणा भवति । तमुद्गात्रे ददाति ॥१३॥ तमश्वं गां वोद्गा॰ति । प्राकृतस्यानिवृत्तिरुद्गातृयोगात् ॥१४॥ प्राकृतस्य दक्षिणाज्ञातस्य च न निवृत्तिः · कुत एतत् उद्गा॰गात् अश्वस्य । एवं प्राप्तऽआह · निवृत्तिः क्रतुयोगात् ॥१५॥ निवृत्तिः प्राकृतस्य भवति · कुत एतत् क्रतुना हि युज्यते च तस्याश्वः श्वेतो दक्षिणेति[2] · तेन यद्दक्षिणायुक्तम् तन्निवर्तत ऽइति । सं॰ अश्वस्य क्र॰गात् । वचनादेकस्य ॥१६॥ यत्तूक्तम् उद्गात्रे ददातीति तत्क्रतुयोगेऽपि वचनादित्यदोषः ।

दीर्घव्याधिप्रतिष्ठाकामान्नाद्यकामानां द्वितीयः ॥१७॥ साद्यस्क्रो भवति · एषामत्राधिकार इत्यर्थः । अश्वैकविंशा दक्षिणाश्वो वा ॥१८॥ ततश्च विकल्पः । सं॰ अश्व एकविंशो यासां ताः । हीनस्यानुक्रीः ॥१९॥ अनुक्रीर्नाम साद्यस्क्रः स हीनस्य भवति · यः कर्मणा हीन-इव तस्यासौ भवति । सं॰ अनुज्ञादप्रधमो भवति स हीनः । साद्य॰ शतं दक्षिणाश्वो वा ॥२०॥ वेति विकल्पः । विश्वजिच्छिल्पः ॥२१॥ नाम साद्यस्क्रः । तत्र विशेषः · यथाद्रव्ये जनपदे यजेत तेषां यथोत्साहं दद्यात् ॥२२॥ दक्षिणाः · यद्यद्द्रव्यं यस्मिन्यस्मिञ्जनपदे प्रायोवृत्त्या तेषां यथोत्साहं दानम् । यथाद्रव्यमाचष्टे · । सं॰ यानि-यानि उत्कृष्टानि द्रव्याणि यस्मिञ्जनपदे · स यथाद्रव्यः तस्मिन्देशे यथोत्साहं यथाशक्ति इत्यर्थः । आजानेयानपरजने ॥२३॥ सं॰ अप॰ने प्रत्यक्प्रदेशे यागे क्रियमाणे आ॰यानश्वान्दद्यात् · आजानेयाः कुलीना विनीताः साधुवाहिन इत्यभिधानात् (अमर॰ २. ८. ४४) । प्राच्येषु हस्तिनः ॥२४॥ सं॰ प्राच्यां दिशि हस्तिनो दद्यात् । अश्वतरीरथानुदीच्येषु ॥२५॥ वेसरीयुक्तान्रथानुदीच्येषु ददाति । सर्वस्वप्रतिनिधिर्वा ॥२६॥[3] दीयते । अप्रसिद्धत्वादुच्यते · धेन्वनडुत्सीर-

---

[1] Thus १. ३. Ss. M. R. ॰द्यःक्रा K. [2] see Tândya १६. १२. Lâty. ८. ३. १५.
[3] See Lâty. ८. ४. १४.

धान्यपल्यदासमिथुनमहानसारोहणविमितशयनानि ॥२७॥ धेन्वादीनि दासमिथुनान्तानि प्रसिद्धानि · महानसोपयोगिकं द्रव्यं ताम्रचर्वादि[1] महानसशब्देनोच्यते · आरोहणं च युग्यम् · विमितशयने प्रसिद्धे ऽएव । सं॰ धेनुः प्रसिद्धा · अनडुद्बलीवर्दः[2] · सीरं हलम् · धान्यं गोधूमादि · पल्यं पलादिमानार्हम् · दासमिथुनं दासीदासौ · महानसं ताम्रचर्वादि गृहोपकरणम् · आरोहणं हस्त्यश्वादि · विमितं गृहम् · शयनं खट्वादि · एतानि दद्यात् ॥ ॥ द्वितीया कण्डिका ॥२॥

श्येनो ऽभिचरतः ॥१॥ श्येनो नाम साद्यष्कः पञ्चमः · सो ऽभि॰तो भवति ।

यत्रौषधयो न जायेरंस्तद्देवयजनम् ॥२॥ विदाहि वा ॥३॥[3] यत्र जाता ओषधयो दह्यन्ते अग्न्यादिना । सं॰ दावाग्निना । वृक्षस्तम्बछिन्नम् ॥४॥ यत्र वृक्षाः स्तम्बाश्च छिन्नास्तद्दे॰नम् । सं॰ वृक्षाः पलाशादयः स्तम्बा वीरिणकाशादयः । वा निर्व्रस्कम् ॥५॥ वा निर्वृकणमूला[4] वृक्षा भवन्ति वा अनिर्वृकणमूलाः[5] । अपरे तु सूत्रद्वयमन्यथा वर्णयन्ति वृक्ष॰न्नं वा अछिन्नं वा यदा छेदनम् तदा निर्वृकणमूला[6] वृक्षा भवन्ति । सं॰ वा निर्वृकणमूला वृक्षाः[7] स्तम्बाश्च कर्तव्याः । दक्षिणाप्रवणम् ॥६॥ देवयजनं भवति ।

अचषालो यूपः ॥७॥ · स्फ्याग्रः ॥८॥ स्फ्यस्येवाग्रं भवति ।

तैल्वको बाधको वा ॥९॥ यूपो भवति · तिल्वकः प्रसिद्धः · बाधको यः गिरिमालकः इति प्रसिद्धः । सं॰ तैल्वस्तिरीसः बाधको गिरिमालः ।

इध्मो बैभीदकः[8] ॥१०॥ शरमयं बर्हिः ॥११॥ अधिषवणे शवनभ्ये ॥१२॥ शवं येनानसोढम् तत्सम्बन्धिनी अधि॰णे फलके । सं॰ शवं मृतं येनानसा शकटेनोढं भवति तच्चक्रस्य यन्नभ्यं फलकम् ततो घटिते अधिषवणफलके भवतः । रथौ हविर्धाने ॥१३॥ नानसी । लोहितः सवनीयो ऽग्नये रुद्रवते ॥१४॥ लोहितवाससो लोहितोष्णीषाः प्रचरन्त्यृत्विजः ॥१५॥ लोहिते वाससी येषां ते । निवीताः ॥१६॥ कण्ठावसक्तयज्ञोपवीताः ।

उद्ज्यधन्वानः[9] ॥१७॥ उद्गता ज्या धनुषो येषाम् ते उ॰नः आरोपितधन्वान

---

१) ॰वर्चादि K. २) sic! ३) see Lâṭy. ८. ५. ५. ४) निव्रृक्त K. (न्न pr. m.) ५) निवृक्त K. ६) Thus K pr. m. निर्वक्त sec. m. ७) ? ॰कणां मूलाद्वृक्षा॰ Ss. ८) Thus the Shaḍvinça ३. ८. बैभीतकः Ss. Sâyaṇa and the Shaḍv. वैभीदकः १. ३. M. K. ९) उद्ज्य॰ १. ३. M. K. Ss.

इत्यर्थः । सं॰ उग्राणि उद्गतग्राणि ज्याधिरूढानि धनूंषि येषां ते उ॰नः · ऋत्विजः कर्म कुर्वन्ति । कलापिनः ॥१८॥ सं॰ कलापशब्देन शरपूर्णा चर्ममयी भस्त्रा उच्यते । काणखोरकूटबण्डा क्रुतमिश्रा नव-नव दक्षिणा ददाति लिङ्गानाम् ॥१९॥ काणाः प्रसिद्धाः · खोरा लङ्गाः · कूटबण्डाः छिन्नपुच्छभग्नशृङ्गाः · क्रुतमिश्राः स्वरगृहीतमिश्रा इत्यर्थः · नव काणान्नयति नव खोरान्नयत्येवमादिश्रवणात्[1] । सं॰ काणा एकाक्षिविहीनाः खोराः पादेन खञ्जाः कूटा भग्नशृङ्गाः बण्डाश्छिन्नपुच्छाः क्रुतमिश्रा स्वरगृहीतमिश्रा एवंविधा भवन्ति · काणादिचिह्नयुक्तानां गवां नवसंख्या-नवसंख्या दक्षिणा ददातीत्यर्थः · नव काणा नव खोरा एवं नव-नव । पुरुषाणां वा दानाधिकारात् ॥२०॥ पु॰णां वा नवसंख्यासम्बन्धः प्रतिपुरुषं नव-नव ददातीत्यर्थः । सं॰ प्र॰षं प्रत्यृत्विजं नव-नव काणादिका नयति ददाति · कुतः दा॰रात् दानस्य प्रस्तुतत्वात् दानं च पुरुषेभ्य एव । प्राकृतस्य वा नयनं भेदेन ॥२१॥ प्रा॰स्य वा दक्षिणाम्नातस्य एतानि लिङ्गानि भवन्ति तेषां च नयनं भेदेन · एवं प्रकृतिरनुगृहीता भवति नव-नव नयतीति च यथाश्रुतम् । सं॰ वाशब्दः पूर्वपक्षनिरासार्थः · न प्रतिपुरुषं नव-नव किंतु प्रा॰स्यैव गवां शतस्यैतानि काणादीनि भवन्ति · तस्य च दक्षिणादानानयनं भेदेन भवति नवभिर्नयनं भवतीत्यर्थः । दक्षिणाकाले कण्ठकैरेना विरुञ्जेयुः ॥२२॥ समाख्ययोद्गातारः । सं॰ कण्टकैर्बिल्वादिवृक्षोद्भवैरेनाः काणादिकाः विरुञ्जेयुः[2] वित्रुद्येयुः[3] । उपतप्तास्वनुपतप्तानामाज्यम् ॥२३॥ सं॰ उ॰सु ज्वरितासु गोषु मध्ये या अनुपतप्ताः रोगरहिताः तासामाज्यम् । साद्यःक्रधर्मा[4] हिरण्यस्रग्वत् ॥२४॥ साद्यस्क्रशब्देनात्र श्येनो ऽभिधीयते · तस्य धर्मा लोहितोष्णीषादयः हि॰ग्वत् यद्यस्योपयुक्तं[5] तत्तस्य भवति (१४.५.३६) । सं॰ सा॰र्मा लोहितवस्त्रादयः यथा वाजपेये हिरण्यस्रजो यथोपयुक्तं दीयन्ते एवमत्रापि येन-येन यद्वस्त्रादि परिहितम् तत्तस्मै देयम् ।

एकत्रिके दक्षिणा षष्टिशतं षट् ॥२५॥ एकत्रिकः षष्ठः साद्यस्क्रः तत्र षट्षष्टि-

---

1) see Láty. ८. ५. १६. 2) रैजेयुः Ss. 3) See Westergaard sub त्रुट्. 4) Thus १. ३. R. M. K. द्यस्क्र Ss. 5) युक्तं K.

शतं दक्षिणा । साद्यःक्रधर्माः[1] ॥२६॥ व्याख्यास्यन्तऽइति सूत्रशेषः ।
दीक्षादि सद्यः सर्वं क्रियते ॥२७॥ ऋजुः । सह पशूनालभते ॥२८॥ अग्नी-षोमीयसवनीयानूबन्ध्यान् · सद्यस्त्वे च सति सौत्येऽहनि सर्वं कर्तव्यम् · तत्र स्थानित्वात्सवनीयकालऽएव पशूनामालम्भः तदीयऽएव स्थाने युक्तः · स्वस्थानं च सवनीयो न त्यजति · अग्नीषोमीयस्तु स्वस्थानादुत्कालितः परतो गच्छति ।
पुरोडाशो वाग्नीषोमीयस्थाने ॥२९॥ अग्नी॰षोऽतः पशुरित्यत्र (८. ७. २५) अग्नी-॰यः पुरोडाशो वा भवति वा न वेति । वपान्ते सुब्रह्मण्यानिवृत्तिः ॥३०॥[2] वपान्ते या सु॰ण्या सा न भवति । प्रतिदिशं वसन्त्यृत्विजः ॥३१॥ अ-तश्च पूर्वस्मिन्नहनि ऋत्विग्वरणं कर्तव्यम् । सं॰ तदेव विवृणोति ·
पुरस्ताद्योजने होता ॥३२॥ वसतीति शेषः । इतरे क्रोशप्रत्यवायेन -क्रोशप्रत्यवायेन ॥३३॥ इतरे उद्गात्रादयः । सं॰ क्रो॰येनापचयेन परिमितेऽध्वनि वसन्ति । उद्गातोत्तरतः ॥३४॥ वसति त्रिभिः क्रोशैः । अध्वर्युः पश्चात् ॥३५॥ ब्रह्मा दक्षिणतः ॥३६॥ चतुर्भिरश्वरथैः सक्षीरदृतिभिरावहन्त्ये-नान् ॥३७॥ होत्रादीन् । सं॰ सद्योदुग्धेन क्षीरेण पूर्णाः सक्षीरा दृतयश्चर्ममय्यो भस्त्रा येषु रथेषु तैश्चतुर्भिरश्वयुक्तरथै रेनान्यजमानपुरुषा आवहन्ति आनयन्ति ।
यथाक्रोशमश्वाः ॥३८॥ सं॰ रथेषु क्रोशसंख्यानतिक्रमेणाश्वा युज्यन्ते होतुश्च-त्वारः उद्गातुस्त्रयः अध्वर्योर्द्वौ ब्रह्मण एकः । ततो नवनीतमाज्यम् ॥३९॥ ततो दृतेर्यज्जातं भवति । सोमक्रयणस्त्रिवत्सः साण्डः ॥४०॥[3] सं॰ त्रिव-त्सस्त्रिवर्षः साण्डः आण्डसंयुक्त ऋषभः । वेदिरुर्वरा ॥४१॥ सस्यमालिनी भवति । सं॰ सस्याढ्या भूमिर्वेदिर्भवति । व्रीहीन्यवान्वा पक्वानध्यवस्यति ॥४२॥ सं॰ अत्र व्री॰वान् वेदित्वेनाध्यवस्यति · व्रीहियवसस्येनाढ्या भूमिर्वेदिर्भ-वति । खल उत्तरवेदिः ॥४३॥ सं॰ अत्र संदेहः किं धान्यखलः पांसु-खलो वा धान्यखलः प्रत्ययात् ॥४४॥ प्रयोगप्रत्ययौ तत्रैव भवतः । सं॰ खल इत्युक्ते धान्यखलः प्रतीयते ज्ञायते यतः । ये वेदिमभितस्तानुत्तरवे-दिदेशे मृध्नन्ति[4] ॥४५॥ धान्यखले सति संनिधानात् · वेदिमभितो ये सस्यविशे-

---

१) साद्यःक्र ३. M. R. सद्यस्क १. २) see ८. १. १२. ३) see ७. ६. १५. ४) मृदन्ति schol. at Çâṅkhây. १४. ४०. १४.

षास्तानुत्त॰न्ति । सं॰ मर्दयन्ति स्तम्बेभ्यो विमोकार्थमनडुद्भिः परितो गहृद्दिरा-क्रमयन्तीत्यर्थः । पांसुखलो वा प्रत्ययाविशेषात् ॥४६॥ वाशब्दः पक्षान्त-रपरिग्रहे · पां॰ले वोत्तरवेदिर्भवति · तत्रापि हि खलशब्दप्रयोगप्रत्ययौ स्त एव । सं॰ वा सिद्धान्ते · पां॰लो धूलिराशिः प्रत्येतव्यः · कुतः प्र॰षात् खल इत्युक्ते धान्यखलोऽपि प्रतीयते पांसुखलोऽपि प्रतीयते । प्रकृत्यनुग्रहाच्च ॥४७॥ अपि चैवं प्रकृतिरनुगृहीता भवति । खलेवाली यूपो लाङ्गलेषा ॥४८॥ धारणं[1] यया क्रियते सा ख॰ली यूपकार्ये भवति · सा च पूर्वमेव निहि-ता द्रष्टव्या । सं॰ खलमध्ये निखाता मेथी ख॰ली सैव यूपो भवति · ला॰षा हलस्येषा हलसम्बन्धी ईषादण्डो यूपः कार्यः । कलापी[2] चषालार्थे ॥ ४९॥ कलापी च तृणपूलकः च॰र्थे भवति । सं॰ कपाली[3] धान्यतृणमुष्टिश्च॰र्थे भवति । निर्वृत्तग्रहणात्प्राकृतनिवृत्तिः ॥५०॥ निर्वृत्ता हि खलेवाली यू-पकार्ये विधीयते · अतश्च प्राकृतानां यूपधर्माणां निवृत्तिर्भवति · यूपशब्दो हि संस्कारनिमित्तः · छेदनादयश्च स्वर्वग्रहणपर्यन्ताः यूपस्वरूपप्रयुक्ताः न कार्य-प्रयुक्ताः · तस्मात्साधूक्तम् निर्वृ॰त्तिरिति । सं॰ निर्वृत्ताया निष्पन्नाया लोकसि-द्धायाः खलेवाल्या ग्रहणात् प्राकृतस्य यूपव्रश्चनादेर्धर्मजातस्य निवृत्तिर्भवति । आवेशादनिवृत्तिः ॥५१॥ स्यादेतदेवम् यदि कार्यविशिष्टा धर्मा भवेयुः · न चैते कार्यविशिष्टाः स्वरूपप्रयुक्ता एवैतऽइति · न हि यूपशब्द आकृतिवचनः अलौकिकत्वात्संस्कारनिमित्तः सत्सु संस्कारेषु प्रयोगात् । सं॰ पर्युक्षणप्रोक्षणा-देरनिवृत्तिर्निवृत्तिर्न भवति · कुतः आवेशात् ते हि खलेवाल्यामप्याविश्यन्ते विधीयन्ते । उर्वरादि वा द्वितीयस्य संनिधेः ॥२५॥ उर्वरादि (४१) धर्मजातं द्वितीयस्य भवति तत्संनिधौ हि तत्पठ्यतऽइति । वा सर्वेषां भवति साद्य-स्क्रान्प्रकृत्य श्रवणात् · यत्तु संनिधानाद्द्वितीयस्येति तत्रोच्यते अवश्यमेव पठ्यमानं वस्तु कस्यचिदेव संनिहितं भवतीति । सं॰ वेदिरुर्वरादिकं[4] धर्मजातं द्वितीयस्य साद्यःक्रस्य भवति · कुतः संनिधेः ताण्ड्ये (१६.१३) द्वितीयस्य सं-निधौ पाठात् ॥ ॥ तृतीया कण्डिका ॥३॥ ॥

---

१) ? पारणं K pr. m. वारणं or धारणं sec. m. २) कपाली Ss! ३) sic! ४) sic!

व्रात्यस्तोमाश्चत्वारः ॥१॥ व्रात्यस्तोमसंज्ञकाश्चत्वारः क्रतवो भवन्ति · व्रात्याः प्रसिद्धा एव त्रिपुरुषं पतितसावित्रीकाः · प्रायश्चित्तार्थत्वाच्च लौकिकेऽग्नौ भवन्ति · न श्रौतैराधानं प्रयुज्यते अतदङ्गत्वात् · तदुक्तमाचार्येण स्थपतीष्टिं प्रकृत्य (१.१.१४) लौकिकऽइति । द्वितीय उक्थ्यः ॥२॥ व्रात्यगणस्य ये सम्पादयेयुस्ते प्रथमेन यजेरन् ॥३॥ सम्पादनं च गायननर्तकादीनाम्[1] तेषां प्रथमेऽधिकारः । सं° ये व्रात्या नृत्यगीतवाद्यशस्त्रधारणादौ स्वयं प्रवीणाः सन्त उपदेष्टारो भूत्वा स्वां विद्यां व्रात्यसमूहस्य सम्पादयेयुः शिक्षेयुः पाठयेयुः ते प्रथमेन यजेरन् ।

द्वितीयेन निन्दिता नृशꣳसाः ॥४॥ नृशंसत्वेन ये निन्दितास्तेषां द्वितीयेऽधिकारः । सं° ये नृशंसा निन्दिता नृभिर्मनुष्यैरभिशंसनेन पापाध्यारोपणेन निन्दिताः गर्हिताः ज्ञातिभिर्बहिष्कृताः ते द्वि°न यजेरन् । तृतीयेन कनिष्ठाः ॥ ५॥ क°ष्ठाः लघवः । ज्येष्ठाश्चतुर्थेन ॥६॥ अधिक्रियन्ते । ज्येष्ठशब्दार्थमाह ·

अपेतप्रजनना स्थविरास्तदाख्यास्तेषां यो नृशꣳसतमः स्याद्व्यवत्तमो वानूचानतमो वा तस्य गार्हपते दीक्षेरन् ॥७॥ स गृहपतिः कर्तव्यः । सं° अपगतप्रजननेन्द्रियसामर्थ्या यौवनापगमेन निर्वीर्यप्रजननाः स्थविरा वृद्धास्तदाख्याः · नृशंसतमः अत्यन्तं क्रूरकर्मा । तस्य भक्षमनु भक्षयन्त आसीरन् ॥८॥ तस्य गृहपतेर्भक्षमनु इतरे भक्षयन्ति · अतश्च गम्यते उभयसंस्कारोऽयम् द्रव्यस्य पुरुषस्य च । सं° इतरे यजमानाः । व्रात्यधनानि भवन्ति ॥९॥ वक्ष्यमाणानि । तिर्यङ्नद्धमुष्णीषं प्रतोदः ॥१०॥ सं° ति°द्धं तिर्यग्बद्धमुष्णीषं शिरोवेष्टनं वासः · प्रतोदः प्राजनः तीक्ष्णाग्रः वंशादिदण्डः । ज्याह्रोडोऽयोग्यं धनुस्तदाख्यम् ॥११॥ ज्याह्रासेन यदयोग्यं धनुः तज्ज्याह्रोडाख्यम् । सं° ह्रोडतिर्गत्यर्थः[2] · ज्या प्रत्यंचा[3] ह्रोडा गता यस्यासौ ज्याह्रोडः ज्यारहितः केवलो धनुर्दण्डः · ज्याह्रासेन अयोग्यं धनुः तदाख्यम् ज्याह्रोडसंज्ञम् ।

वासः कृष्णशं कद्रु ॥१२॥ कृष्णमशितं येन तत्करणेन कृष्णशमित्युच्यते · कृष्णसूत्रोतमित्यर्थः · तत्कद्र्वाख्यम् । सं° कद्रु कर्बुरं वासः कृष्णशम् कृष्णमशितं येन कृष्णाशमिति प्राप्ते अकारलोपश्छान्दसः । अकृष्णं कृष्णदशं वा तदाख्यम् ॥

[1] °नर्तनकादीकादीनां K pr. m. [2] ह्रेडेति Ss. [3] ? sic! [4] ? °सितं K.

१३॥ वा अकृष्णम् कृष्णाभिर्दशाभिस्तद्वत् कद्वाख्यम् उभयत्र हि कद्रुशब्दः प्रसिद्धः। सं° कृष्णा दशा यस्य तत्कृष्णं स्वयमकृष्णं सत् कृष्णदशं वासः तद्वा कृष्णशमित्युच्यते।
फलकास्तीर्णो विपथः ॥१४॥ फलकैरास्तीर्णो रथः यो वर्त्मना न गच्छति। सं° फलकैरास्तीर्णो विस्तारितो रथः · स च विपथः विविधं कुटिलं पथो गच्छतीति विपथः यो मार्गेण न चलतीति। अश्वाश्वतराभ्यां कम्प्राभ्यां युक्तः स्यादित्येके ॥१५॥ एके आचार्याः कम्प्राश्वतरयुक्तं रथमिच्छन्ति · एकीयग्रहणं विकल्पार्थम्। सं° कम्प्राभ्यां कम्पनशीलाभ्याम् · अश्वतरो वेसरः। निष्को राजतः ॥१६॥ निष्क आभरणविशेषः · स राजतो भवति। सं° राजतो रजतनिर्मितो निष्कः कण्ठाभरणम्। अजिने पार्श्वसंहिते कृष्णवलक्षेऽआविके ॥१७॥ आविके चर्मणी पार्श्वसंलग्ने · कृष्णसितवती[1]। सं° मेषयोश्चर्मणी · पार्श्वतस्तन्तुभिः स्यूते · कृष्णवलक्षे शुक्लकृष्णवर्णे वलक्षः श्वेतो वर्णः। तद्गृहपतेः ॥१८॥ धनम्। एवमेवाजिनानीतरेषाम् ॥१९॥ इतरेषां व्रात्यानामेवमजिनानि भवन्ति। दामतूषाणि बलूकान्तानि[2] द्विचूडान्याविकानि वासांसि लोहितान्तानि कृष्णान्तानि वा तदाख्यानि ॥२०॥ सं° दामतूषाणि तूषशब्देन वस्त्रदशोच्यते · दामानीव दामाकारा रज्जुरूपा दशा येषाम् तानि · बलूकान्तानि बलूकः कृष्णो लोहितो वा वर्णः सोऽन्ते येषां तानि · द्विचूडानि द्वे चूडे येषां तानि। दामनी द्वे-द्वेऽउपानहौ च कर्णिन्यौ कृष्णे स्यातामित्येके ॥२१॥ एके अकृष्णेऽइति। सं° एकैकस्य वस्त्रस्य द्वे-द्वे दामनी द्वे-द्वे दशे स्याताम् · उपानहौ कर्णिन्यौ कर्णौ कर्णाकारौ चर्मावयवौ स्तो ययोः। मागधदेशीयाय ब्रह्मबन्धवे दक्षिणाकाले व्रात्यधनानि दद्युः ॥२२॥ सर्वऽएव व्रात्याः मागधदेशनिवासी यः स ब्रह्मबन्धुभिर्ज्ञायते स मागधः ब्रह्मबन्धुः तस्मै दद्युः · अपरे तु मागधं गेयमाहुः[3] तत्र यो देशीयः ईषदसमाप्तौ देशीय इत्युच्यते (पा° ५. ३. ६७) तस्मै दद्युः। सं° ब्रह्मबन्धवे जातिमात्रोपेतब्राह्मणाय। अविरतेभ्यो वा व्रात्यचरणात् ॥२३॥ अथवा ये व्रात्यचरणादविरतास्तेभ्यो दद्युः एवं हि श्रूयते।

---

1) ? कृष्णोऽसि° K. 2) Thus १. ३. M. Ss. Tâṇḍya १७. १. Lâṭy. ८. ६. २०. वलू° R. K. 3) see schol. at Lâṭy. ८. ६. २८.

सं॰ व्रात्यकर्माचरणादविरतेभ्यो व्रात्यकर्मतत्परेभ्यः । तेष्वेव मृज्जाना यन्तीति श्रुतेः[1] ॥२४॥ तेष्वेव व्रात्येषु मृज्जाना आत्मानं शोधयन्तीति । सं॰ तेषु व्रात्येषु पापिष्विवापापं मृज्जानाः शोधयन्तो यन्ति पूततां[2] प्राप्नुवन्तीति श्रवणात् ।

त्रयस्त्रिꣳशतं-त्रयस्त्रिꣳशतं दक्षिणा दद्युः ॥२५॥ एकैकाः । सं॰ त्र॰तं गा दक्षिणाः सर्वे व्रात्या दद्युः । द्विगुणा गृहपतिरित्येके ॥२६॥ एके आचार्याः गृ॰ति-द्विगुणा ददानीतीच्छन्ति । व्रात्यस्तोमेनेष्ट्वा व्रात्यभावाद्विरमेयुः ॥२७॥ विर-मतिरुपरम उच्यते । सं॰ व्रा॰मं कृत्वा व्रा॰वात्पापादुपरमेयुः ।

व्यवहार्या भवन्ति ॥२८॥ अतः परम् । सं॰ विवाहयाजनभोजनादियोग्याः ।

अग्निष्टुद्ब्रह्मवर्चसवीर्यान्नाद्यप्रतिष्ठाकामानां यश्चापूत-इव मन्येत ॥२९॥ अग्निष्टु-न्नामैकाहः · स वी॰द्यब्र॰चसप्रति॰नां भवति यश्चात्मानं कर्मदोषादपूतमिव म-न्यते । सं॰ ब्र॰मानां यजमानानामग्निष्टुन्नाम एकाहोऽग्निष्टोमसंस्थः क्रतुर्भवति · यश्चा॰त यो ब्रह्महत्यादिपापादपूतमपवित्रमात्मानमिव मन्येत तस्य पापस्य निवृत्त्यर्थमग्निष्टुद्भवति । यज्ञविभ्रष्टस्य च ॥३०॥ अग्निष्टुद्भवति । सं॰ यज्ञो विभ्रष्टो यस्य सः तस्य । यस्माद्वा विभ्रꣳशेरन् ॥३१॥ तस्य वा भवतीति विकल्पः । प्रतिष्ठाकामा[दी]नामग्निष्टुतां भेद इत्युक्तमेव[3] । सं॰ प्रारब्धे सोमयागे प्रधानयागानां मध्ये विस्मृतं [यदा] तदा प्रधानविस्मरणाद्विभ्रंशेरन् विभ्रष्टा भवेयुः· तेषामपि अग्निष्टुद्भवति ॥ ॥ चतुर्थी कण्डिका ॥४॥ ॥

छान्दोग्ये विशेषो यथाकामम् ॥१॥ सं॰ यथाकामम् कामं[-कामं] प्रति अग्निष्टु-[ति] छान्दोग्ये विशेषोऽस्ति नाध्वर्यवे । सुब्रह्मण्याग्नेयी ॥२॥[4] अत्रा-ग्निष्टुत्सु सु॰ण्याग्नेयी भवति । एवं यथास्तुत् ॥३॥ इन्द्रस्तुति ऐन्द्री सुब्र-ह्मण्या सूर्यस्तुति सौरी · इन्द्रस्तुदादयस्तु सार्वमेधिकाः[5] । सं॰ इन्द्रस्तुत्सूर्य-स्तुद्विश्वदेवस्तुतः एते पृथगेकाहा भवन्ति · यथास्तुत् यो यद्देवत्यः स्तुत् तत्र त-द्देवत्या सु॰ण्या भवति । सर्वमेके ॥४॥ अग्निष्टुत्याग्नेयमिच्छन्ति प्रकृतौ यत्रेन्द्रपदम् तत्राग्निपदप्रयोग इति · एके तन्नेच्छन्ति उक्तविशेषात् उक्तो हि वि-

---

1) See Tāṇḍya १७. १. यस्माऽएनद्ददति तस्मिन्नेव मृज्जाना यन्ति । 2) पूतानां Ss pr. m. पूततां sec. m. 3) See १२. १. ३. 4) See ७. ३. २०. 5) See २१. २. ४.

धिरत्र तस्याग्नेया ग्रहा भवन्त्याग्नेय्यः पुरोरुचः इत्येवं (१३.७.१.३) ग्रहदेवता-
स्थाने अग्निष्टुत्यग्निपदमूह्यते पुरोरुचस्त्वस्याङ्गाः संबन्धिन्यः (३३.१) एवमिन्द्र-
स्तुदादिष्वपि उत्तरानुवाकपुरोरुचो भवन्ति। यथोत्साहं दद्यात् अग्नेया-
नामनडुद्धिरण्याश्वाज्ञानाम् ॥५॥ अग्निष्टुति। सं॰ अग्निदेवत्यानामनडुहां हिरण्य-
स्याश्वानामजानां च यथेष्टं त्रिसंख्याप्रभृतीनां दानं कुर्यात्। त्रिवृतश्चत्वारः
॥६॥ क्रतवो भवन्ति। सं॰ त्रिवृत्स्तोमका अग्निष्टोमसंस्थाश्चत्वारः क्रतवो भवन्ति।
अनिरुक्तप्रातःसवनः प्रथमः ॥७॥ सं॰ अनिरुक्तं प्रातःसवनं यस्यासौ प्रथमः।
ईप्सुयज्ञः ॥८॥ तस्येप्सुयज्ञ इति विशेषसंज्ञा। सं॰ आप्तुमिच्छुरीप्सुः तस्येप्सो-
र्यज्ञः हिरण्यादीनामीप्सुः। ग्रामकामस्य वा ॥९॥ भवति।
दक्षिणाश्वरथश्चतुर्युक् श्यावोऽन्यतमः ॥१०॥ श्यावः श्यामवर्णः। सं॰ अस्य प्रथ-
मस्य त्रिवृतश्चतुर्भिरश्वैर्युक्तोऽश्वरथो दक्षिणा तेषां चतुर्णां मध्ये अन्यतमः श्या-
वो भवति कपिशः। तेजोब्रह्मवर्चसपुरोधाकामस्य बृहस्पतिसवः ॥११॥
भवति बृसव इति विशेषसंज्ञास्य। सं॰ एतत्त्रितयकामिनो बृसवसंज्ञो द्विती-
यस्त्रिवृदग्निष्टोमसंस्थो भवति। देवसूहवींष्यपि निर्वपति ॥१२॥
अतिग्राह्यवद्ग्रहं गृह्णाति बृहस्पतेऽअति यदर्य इति (२६.३) ॥१३॥ अतिवदि-
ति ग्रहणहोमकालौ[1] लभ्येते। सं॰ बृहस्पतिदेवतं ग्रहं गृह्णाति।
उपालभ्यो बार्हस्पत्यः ॥१४॥ द्वितीयः सवनीयो भवति। सं॰ बृहस्पतिदेवतः प-
शुरुपालभ्यः। निहितेषु नाराशंसेषु प्रातःसवनेऽनपाकुर्वन्नेकादश दक्षि-
णा व्यादिशति ॥१५॥ नाराशंसेषु चमसेषु प्राञ्चे स्थापितेषु ऋत्विग्भ्यः। सं॰ गोयूथा-
दपृथक्कुर्वन् एकादश गावः[2] आदिशति। अश्वद्वादशा माध्यन्दिने ॥१६॥
एतस्मिन्नेव काले व्यादिशति। सं॰ अश्वो द्वादशो यासां गवां ताः।
अपाकरोत्युभयीः ॥१७॥ गोमण्डलात् अत्र चाश्वाकृतेरपकर्षः दास्यन्नित्यु-
क्तत्वात्। सं॰ व्यादेशानन्तरं द्विविधा अपि गा गोयूथात्पृथक्करोति।
एकादश तृतीयसवने ॥१८॥ व्यादिशत्येतस्मिन्नेव काले तृतीये व्यादिष्टानाम्।
अनूबन्ध्यवपाहोमान्तेऽपाकरणम् ॥१९॥ कर्तव्यम्। अतिक्रमणं च सर्वा-

1) See १२.३.२ ५. 2) sic!

साम् ॥२०॥ दक्षिणापथेन · चशब्दात्तस्मिन्नेव काले । सं° सर्वासां गवामतिक्रमणं दानार्थं दक्षिणामार्गेण नयनम् । एकादशैकादश वा शतानि स्युः ॥२१॥ सहस्राणि वा ॥२२॥ विकल्पः । अश्वस्त्वेव माध्यन्दिनेऽधिकः ॥२३॥ वाजपेयवदास्येनाभिषिच्यते कृष्णाजिने ॥२४॥ वा°वदिति माहेन्द्रात्पूर्वम् [1] । शुक्रामन्थिसंस्रवेण वा ॥२५॥ अभिषिच्यते । अन्यतस्त्वभिवाद्यः ॥२६॥ अन्यत एवाभिवाद्यो भवति । सं° अयमन्येषामभिवाद्योऽभिवादनार्हो भवति · अयं च नान्यमभिवादयति । अप्रत्यवरोही स्यात् ॥२७॥ अनभ्युत्थायीत्यर्थः अभ्युत्थेयस्यापि । सं° प्रत्यवरोहो यानशयनासनादेः सकाशात्पूज्यान्प्रति अभ्युत्थानम् सोऽस्यास्तीति प्रत्यवरोही · सोऽप्र°ही स्यात् गुर्वादेरभ्युत्थेयस्याभ्युत्थानं न कुर्यात् । स्थपतिरित्येनं ब्रूयुः ॥२८॥ जनाः । सराजानो ब्राह्मणा यं पुरस्कुर्वीरंस्त एतेन यजेत ॥२९॥ बृहस्पतिसवेन । सं° राज्ञा सहिता ब्राह्मणा यं ब्राह्मणं धर्मस्थापकत्वेन चाङ्गीकुर्वीरन् स ए° । इषुः [2] श्येनवदसद्यः ॥ ३०॥ समानमितरच्छ्येनेनेति वचनात् · इयांस्तु विशेषः सद्यो न भवति । सं° इषुर्नाम एकाहः । मरणकामस्य ॥३१॥ ॥ पञ्चमी कण्डिका ॥५॥

सर्वस्वारः कृतान्नदक्षिणः ॥१॥ क्रतुर्भवति · तस्य च कृतान्नं दक्षिणा । सं° कृतं सिद्धान्नमोदनादि । दीक्षाद्यवजिघ्रत्येव भक्षान् ॥२॥ सं° दीक्षणीयात आरभ्य भक्षान् यजमानभागेडाभागसोमादीन् अवजिघ्रति न भक्षयति । अप्स्ववहरणमसोमानाम् ॥३॥ सं° अवघ्राणानन्तरं सोमवर्जित[ना]मप्स्ववहरणं कर्तव्यम् । आर्भवे स्तूयमाने दक्षिणेनौदुम्बरीं कृष्णाजिने संविशति दक्षिणाशिराः प्रावृतः ॥४॥ आर्भवमिति तृतीयसवनपवमानमुच्यते [3] । सं° प्रावृतः अहतेन वाससावेष्टितसर्वदेहः शेते । तदेव म्रियते जीवेच्चेद्दैर्घश्रवसं स्त्रासु यज्ञायज्ञियस्थाने कुर्युः ॥५॥ जीवति चेत् दै°सं साम स्वासु स्तोत्रियासु यज्ञा°यस्य स्थाने कार्यम् । मृते तदन्तमर्थाभावात् ॥६॥ मृते यजमाने तदन्तमेव कर्म भवति · कुत एतत् अ°वात् कार्याभावादित्यर्थः । सं° प्रयोजनाभावात् मरणकामः तच्च संजातम् । यजमानपात्राणीषिकवीथ्याहवनीये

---

1) See १४. ५. २३. 2) इषु १. ३. RKM. see VS. Prât. ३. १२. 3) °वदिति तृ°नपव° K.

प्रास्य यथार्थं गृह्युः ॥७॥ अन्यत्रैवमेव हि दृष्टत्वात् आसादनाद्याहवनीयऽइति (२५. ७. ८)। समाप्तिर्वोभयचोदनात् ॥८॥ वाशब्दः पक्षव्यावृत्तौ · समाप्तिः कर्तव्या न यजमानपात्रजीर्षादीनां प्रतिपत्तिः · उभयं हि चोदितम् सर्वस्वारेण यजेतेति प्रारम्भः समाप्तिश्च उपक्रमप्रभृत्यपवर्गपर्यन्तो व्याख्यातार्थः। सं॰ कुतः उभयनोदनात्[1] उभयं वि[हि]तम् यागो मरणं च · अतः समाप्तिरेव कर्तव्या।

समिष्टयजुरन्ते सं त्वा हिन्वन्तीति दार्वाहरणम् ॥९॥ स॰जुःषु हुतेषु आसन्द्यर्थं दा॰णाम्। सं॰ काष्ठानामानयनम्। सं त्वा ततक्षुरिति तक्षणम् ॥१०॥ तस्यैव दारुणः। सं॰ तेषामासन्द्यङ्गानाम्। सं त्वा रिणन्तीति प्रक्षालनम् ॥११॥ आसन्द्याः। सं त्वा शिशन्तीत्यासन्दीविवानम्[2] ॥१२॥ कर्तव्यम्।

आसन्द्यैनमवभृथ७ कृत्वाभ्युदेत्य सोमोपनहनेन प्रक्षाद्यानूबन्ध्यवपाहोमान्ते दक्षिणस्यां वेदिश्रोणौ सर्वकेशश्मश्रुलोमवपनम् ॥१३॥ अभ्युदयं च स्नानकार्ये।

मृताहिताग्न्यावृच्च ॥१४॥ कर्तव्यम्। सं॰ मृतस्य आहिताग्नेर्या आवृत्तिरितिकर्तव्यता सा सर्वा भवति। अनूबन्ध्यान्तेऽग्नीनाहृत्य वेदिमध्यमाग्नीध्राद्दक्षिणं दक्षिणाशिरसं चितावाहितमुद्गाता त्रियमेन परिगायन्नाके सुपर्णमित्येतस्याम् ॥१५॥ वेदिमध्यमग्नीनाहृत्य आग्नीध्राद्दक्षिणतो दक्षिणाशिरसम् · यमेन साम्ना त्रिः परिगायेत् ना॰तस्यामृचि · प्रस्तोतुः परिसामस्वधिकार इत्युद्गातृग्रहणम्। सं॰ वेदिमध्यं प्रत्याहृत्याग्नीध्राद्दक्षिणम्। धूमप्राप्ते त्वेषस्ते धूम ऋण्वतीति ॥१६॥ परिगायेत्। अग्निप्राप्तमग्ने मृड महाँ२ऽअसीत्यन्यतरेण[3] ॥१७॥ परिगायेत्। सं॰ द्वयोर्मध्ये एकेन साम्ना परिगायेत्। उदवसानीयान्ते वा सर्वस्य समाप्तेः ॥१८॥ उद॰न्ते वा वेदिमध्यम[भि] अग्न्याहरणादिकं कर्म कर्तव्यम् · कुत एतत् अत्र सर्वं समाप्तं भवतीति। जीवेच्चेदेतेनैवारम्भेण मुमूर्षेत् ॥१९॥ आरब्धत्वात्। सं॰ एतेन सर्वस्वारारम्भेण मु॰त् मर्तुमिच्छेत्।

जिजीविषेद्वा ॥२०॥ जीवितुमपि चेदिच्छेदिति। अविगपोहनीयास्त्रयः ॥२१॥ ऋ॰नीया इति सामान्यसंज्ञा · तत्रैकः ·। सं॰ ऋ॰नीयसंज्ञास्त्रयः क्रतवो भवन्ति। सर्वस्तोमः ॥२२॥ अहनी चोत्तमे छान्दोमिके पृथक्कृत्वा

---

1) sic! 2) विमानं Ss. 3) हां२ M. ३. हाँ१. हां K.

MMM MMM*

॥२३॥ क्रियेते · तन्त्रेण दृष्टत्वात् तयोः पृथग्ग्रहणम् । सं° द्वादशाहिकच्छन्दोम-त्रयमध्ये उत्तमे अहनी उक्थ्यसंस्थे पृथक्कृत्वा द्वितीयतृतीयौ अ°नीयौ कार्यौ ।

वाचस्तोमाश्चत्वारः ॥२४॥ वा°मसंज्ञकाश्चत्वारः क्रतवो भवन्ति । तत्र ·

छान्दोग्ये विशेषः ॥२५॥ सं° छन्दोगानां कर्मणि वि°षोऽस्ति । पृष्ठ्यस्तोमास्त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाः ॥२६॥ पृ°मसंज्ञकाः षट् क्रतवो भवन्ति त्रिवृदादयः ॥ ॥ षष्ठी कण्डिका ॥६॥ ॥

चातुर्मास्याः सोमास्त्रिषु पर्वस्थानेषु पार्ष्ठिकानि पृष्ठ्यो विहृत इति श्रुतेः ॥१॥ चा°स्याः सोमाः प°सु त्रिषु · तत्र च पा°नि अहानि भवन्ति पृ°तो भवतीति श्रुतेः । सं° पृष्ठ्यः षडहसम्बन्धीनि षडप्यहानि भवन्ति · कुतः पृष्ठ्यो वि° विहृतो विभक्तः शाखान्तरे श्रवणात् । वैश्वदेवस्थाने प्रथमम् ॥२॥ अहर्भवति पार्ष्ठिकम् · तच्च । सं° पार्ष्ठिकमग्निष्टोमसंस्थम् । अग्रूपम् ॥३॥ भवति।

उत्तरवेद्यकरणं च ॥४॥ तत्रैव । परिधौ पशुनियोजनम् ॥५॥

द्वितीये द्विदिवाख्यो द्व्यहः ॥६॥ द्वितीये पर्वस्थाने द्व्यहो भवति · द्विदिव इत्याख्या तस्य । सं° वरुणप्रघासे द्विदिवसंज्ञको द्व्यहः द्विरात्रः । अग्निष्टोमं प्रथममेके ॥७॥ यत्प्रथममहरुक्थ्यसंस्थम् तदग्निष्टोमसंस्थमेके इच्छन्ति एके उक्थ्यसंस्थम् · उक्थ्यस्य च संस्थामात्रान्यत्वं च धर्मास्तु तदीया एव । सं° वारुणप्रघासिकयोर्द्वयोरह्नोर्मध्ये प्रथममग्निष्टोमः । तृतीये त्र्यहोऽतिरात्र उत्तमः ॥८॥ तृतीये पर्वस्थाने पार्ष्ठिकस्त्र्यहो भवति · तत्र चातिरात्र उत्तमो भवति । सं° तृतीये साकमेधे पार्ष्ठिकश्चतुर्थाहप्रभृति त्र्यहो भवति · अस्मिन् त्र्यहे उत्तमोऽतिरात्रो भवति । अग्निष्टोमं प्रथममेके ॥९॥ एके षोडशिनमिच्छन्ति ।

ज्योतिष्टोमः शुनासीरीयस्थाने ॥१०॥ भवति । पार्ष्ठिकान्यहानि द्वादशदीक्षोपसदानि भवन्त्यतिग्राह्यवन्ति · किं बहुना पृष्ठ्ये यद्दृष्टम् तत्सर्वत्र भवति ।

पञ्चसु सवनीया वैश्वदेववारुणमारुताग्नेयैन्द्राग्नाः ॥११॥ पञ्चसु अहःसु वैश्वदेवादयो यथासंख्येन सवनीयाः । सं° आदित आरभ्य पञ्चस्वहःसु क्रमेण ।

षष्ठे चैकादशिनाः ॥१२॥ सं° साकमेधानां तृतीयेऽतिरात्रसंस्थे ।

वायव्यः सप्तमे ॥१३॥ सप्तमेऽहनि वायव्यः सवनीयः । सं° शुनासीरीये ।

पञ्चाशतं-पञ्चाशतं प्रत्यहं ददात्युत्तमे द्वादशं शतम् ॥१४॥ भवति · हिरण्या-देश्च निवृत्तिरत्र । सं॰ उत्तमे सप्तमे शुनासीरीये । वत्सा वा पञ्चाशतो यथर्तुज्ञाः ॥१५॥ यज्ञाः यो-यो यस्मिन्यस्मिन्नृतौ ज्ञातः स तत्र-तत्र दीयते । सं॰ यस्मिन्नृतौ वैश्वदेवादिसोमयागाः तस्मिन्नृतौ तद्दतुज्ञाः । प्रतिपर्वावभृथाः ॥१६॥ भवन्ति · पार्ष्ठिकानां ह्येकोऽवभृथो दृष्टः स मा भूदिति प्रतिपर्व-ग्रह-णम् · न्यायसूत्रमेतत् । पर्वान्तरेष्वहतं वस्ते ॥१७॥ सं॰ पर्वणां त्रीण्यन्तरा-लानि · तेषु अहतं वस्त्रं परिधत्ते । अस्त्युपायी ॥१८॥ स्त्रियं नोपगच्छेत् । अमांसाशी ॥१९॥ मांसं नाश्नीयात् । अनूबन्ध्या बार्हस्पत्यमैत्रावरुणी-सौर्याश्विन्यो यथावभृथम् ॥२०॥ भवन्ति । प्रतिकर्म सोमाः ॥२१॥ व्या-ख्यास्यन्त इति सूत्रशेषः । अग्न्याधेयपुनराधेयाग्निहोत्रदर्शपूर्णमासदाक्षायणा-ग्रयणाः ॥२२॥ एता एव संज्ञा एतेषाम् । उक्थ्यं पशुबन्धमेके ॥२३॥ पशु-बन्धमेक उक्थ्यसंस्थमिच्छन्ति एकेऽग्निष्टोमम् ॥ ॥ सप्तमी कण्डिका ॥७॥ ॥

प्रातः सवनीयाननु हवींषि निर्वपति ॥१॥ प्रतिकर्म सोमेषु विशेष उच्यते प्रातःसवने सवनीयं॰पति · तत्र च · । सं॰ सवनीयपुरोडाशनिर्वापानन्तरं हवि-र्यज्ञरूपाग्न्याधेयादीनि सम्बन्धीनि हवीं॰पति । पयसीऽग्निहोत्रयोः ॥२॥ सं॰ अग्निहोत्रसोमयोः प्रातः सवनीयाननु पयसीऽअनुनिरुप्येते । अन्त्यदेव-तानूबन्ध्याद्या सवनीया ॥३॥ तेषु कर्मसु यान्त्यदेवता सानूबन्ध्यायां भवति आद्या च सवनीया । सं॰ अन्ते भवा अन्त्या · आदौ भवा आद्या आद्या देवता सवनीयपशोर्भवति । एकदेवतेषूभयम् ॥४॥ यत्र पुनः कर्मण्येकैव देवता यथा अग्निहोत्रे पुनराधेये च तत्रोभयं तद्देवत्यं भवति । सं॰ एषु पुनराधेय-सोमादिषु उभयमेकदेवत्यं भवति । चातुर्मास्येषु चैके ॥५॥ निर्वापमिच्छन्ति एके न · तत्र च मारुत्या न देशभेदः सोमाङ्गाभावात् · अतिप्रणीत एव यागः · पितृयज्ञे चैवमेव । सं॰ एके चा॰स्यसोमेषु अपि प्रातः सवनीयाननु चातुर्मास्य-हवींषि आग्नेयादीनि निर्वपन्ति । सप्तदशाः पञ्च ॥६॥ सप्तदशसंज्ञकाः पञ्च क्रतवो भवन्ति । तद्विशेषानाह · । सं॰ वक्ष्यमाणाः पञ्च क्रतवः सप्तदशस्तोमका भवन्ति । उपहव्योऽनिरुक्तो ग्रामकामस्य ॥७॥ उपहव्य इति विशेषसंज्ञा ·

स ग्रा॰स्य भवति अनिरुक्तश्च । अनृतं वाभिशस्यमानस्य ॥८॥ अलीके-नाभिशस्यते यस्तस्याप्युपकल्प्यो भवति । सं॰ वाथवानृतमसत्यमभि॰स्य मिथ्या दोषेण निन्द्यमानस्य । श्यावोऽश्वो दक्षिणा तं ब्रह्मणे ददाति ॥९॥ सं॰ श्यावः कपिशवर्णः । स्वर्गकामस्यर्तपेयः ॥१०॥ ऋतपेय इति विशेषसंज्ञा सप्तद-शस्यैव · स स्व॰स्य भवति । दीक्षोपसदो द्वादश ॥११॥ द्वादश दी॰दो भव-न्तीति वचनात्[1] । सं॰ न प्रत्येकम् । तिस्र उपसदः ॥१२॥ भवन्ति एका-हस्युपसत्क इति (८. २. ३१) · शेषा नव दीक्षाः · एवं दीक्षोपसदां द्वादशसंख्या भवति । षड्वा ॥१३॥ वाशब्दः पक्षव्यावृत्तौ · षडुपसदो भवन्ति षड्वा दी-क्षाः · दीक्षोपसदां द्वादशसंख्या श्रूयते समविभागेनेति न्याय्यम् समं स्यादश्रुत-त्वादिति । उभयत्र वा द्वादशता गुणत्वात् ॥१४॥ वाशब्दः पक्षान्तरपरिग्रहे · न दीक्षोपसदः संख्यां प्रति श्रूयन्ते[2] किं तर्हि दीक्षोपसदः प्रति संख्या श्रूयते · कुत एतत् गुणत्वात् संख्यायाः दीक्षोपसदो द्वादश भवन्तीत्यत्र संख्या दीक्षो-पसदः प्रति विधीयते · गुणो हि संख्या गुणस्य च प्रतिप्रधानमावृत्तिर्न्याय्या · तस्माद्दीक्षासूपसत्सु च द्वादशसंख्येति । घृतं व्रतयति ॥१५॥ यद्व्रतयति तद्घृ-तम् ततश्च पयसो निवृत्तिः । तत्परिमाणमाह · चमसं पूर्णमङ्गुलिपर्वणा मौल्येन सर्वतः प्रमितमाद्यायामुपसदि ॥१६॥ अङ्गु॰णा मूल्येन[3] सर्वतः प्रमितं चमसं घृतस्य पूर्णं व्रतयति प्रथमायामुपसदि । सं॰ मौल्येन मूलभवेन अङ्गु॰णाङ्गु-ल्या मूल्यकाण्डेन सर्वतस्तिर्यगायामत ऊर्ध्वं च प्रमितं चमसं पूर्णं[4] यजमानो व्र-तयति । द्वितीयेन द्वितीयायाम् ॥१७॥ द्वितीयेन पर्वणा प्रमितं द्वि॰यामु-पसदि । सं॰ द्वि॰नाङ्गुलिपर्वणा मध्यमेनाङ्गु॰णा मितं चमसं व्रतयति ।

तृतीयेन तृतीयायाम् ॥१८॥ प्रमितम् । भक्षयिष्यन्तः सत्यं ब्रूयुः ॥१९॥ सोमान्भ॰न्तः सत्यं वदेयुः उष्णोऽग्निः शीतमुदकमित्येवमादि । सं॰ ऋत्विजः ।

सदो वा सर्प्स्यन्तः ॥२०॥ सत्यं ब्रूयुः · वाशब्दो विकल्पार्थः । सं॰ सदोमध्ये प्रवेशं करिष्यन्तः । सोमचमसो दक्षिणौदुम्बरः सगोत्राय ब्रह्मणे देयः ॥२१॥ पूतभृतः सर्वार्थत्वात् ॥२२॥ पू॰तः सोमो गृह्यते स॰त्वात् अतो

1) See Tâṇḍya १८. २. Lâṭy. ८. १. ७. 2) ? ॰यते K. 3) sic! 4) पूर्णो Ss.

ह्नि देवेभ्य उन्नयन्त्यतो मनुष्येभ्योऽतः पितृभ्य इति (४. ४. १. १२) · मनुष्यार्थमिदमे-वोन्नयनमित्यभिप्रायः । सं॰ पूतभृतः सकाशात्सोमेन पूरयित्वा चमसो देयः ।

अंशुचमसमेके तेन स यज्ञेतेति श्रुतेः ॥२३॥ सोमांशुचमसमेके इच्छन्ति यत एवं श्रूयते तेनेति · एवं कैश्चिद्विकल्प इष्यते । सं॰ अंशुचमसमनभिषुतसोमखण्डपूर्णं चमसं दक्षिणामिच्छन्ति । अश्ववत् ॥२४॥ अधिकरणातिदेशोऽयम् तमुद्गात्रे ददातीत्यस्य (२. १३) । यद्येवम् तेनैव गतार्थवादवाच्यमेतत् लिङ्गोपन्यासार्थं पुनर्वचनम् · तदुच्यते · पशूपवादाच्च ॥२५॥ इतरस्य सकलदाक्षिण्यस्य निवृत्तिः येन पशूपवादो भवति · सत्यं वाऽऋतपेयोऽनृतं पशवोऽनृतं कुर्याच्च ऋतपेये पशून्दद्यादिति । सं॰ पशूपवादः पशुदाननिन्दा · पशूपवादहेतोः सोमचमसः प्राकृतस्य दक्षिणादानादेर्निवर्तको भवति । द्विनामोत्तरो बहुहिरण्यो दूणाशश्च ॥२६॥ सं॰ उत्तरस्तृतीयः सप्तदशः द्विनामा भवति बहुहिरण्य इत्येकम् दूणाशश्चेति द्वितीयम् ॥ ॥ अष्टमी कण्डिका ॥८॥ ॥

दीक्षणीयायां हिरण्यं द्वादशमानं ददाति ॥१॥ मानं च कृष्णलम् लोके रक्तिकेति यत्प्रसिद्धम् · इयं च दक्षिणा न क्रतुदक्षिणाधिकारः न चेष्टिदक्षिणाप्रतिप्रसवः किं तर्ह्यपूर्ववाद्दक्षिणान्तरमेतत् · [त]तश्च दक्षिणाधर्मो नात्र भवति · अन्ते च दानम् आगन्तुदक्षिणेति । उत्तरेषु च द्विगुणं पूर्वं-पूर्वम् ॥२॥ सं॰ वक्ष्यमाणेषु पूर्वोक्तं द्विगुणं देयम् । प्रायणीयातिथ्योपसत्सु ॥३॥

पशुवपान्ते प्रतिसवनं[1] निहितेषु सवनमुखीयेषु ॥४॥ सं॰ सवनेषु चमसेषु हविर्धानमध्ये निहितेषु । उदयनीयायामनूबन्ध्यायामुदवसानीयायां स्रजं चोद्गात्रे ॥५॥ हिरण्मयीम् । रुक्मं होत्रेऽनडुहं काले सर्वेभ्यः ॥६॥ इयं च क्रतुदक्षिणा ततश्च तद्धर्मो भवति सर्वग्रहणाच्च · इतरेषु हिरण्यादिदानेषु तत्कर्मयुक्ताः प्रतिपत्तव्याः । सं॰ बलीवर्दानां शतं दक्षिणाकाले सर्वेभ्य ऋत्विग्भ्यः ।

वैश्यपशुकामयोर्वैश्यस्तोमः ॥७॥ वैश्यस्यापशुकामस्य · पशुकामस्य वावैश्यस्य । सं॰ वैश्यस्तोमसंज्ञक एकाहः वैश्यस्य पशुकामस्य [च] त्रैवर्णिकस्य भवति ।

सवनान्याशीर्वन्ति ॥८॥ भवन्ति । सं॰ आशीःशब्देन श्रयणं पयोद्रव्यं दधि वोच्यते ।

---

1) Thus K sec. m. R. ३ pr. m. संवर्णं १. सवन॰ M. K pr. m. ३ sec. m.

प्रातःसवने प्रतिदुह्या श्रयणम् ॥९॥ दुग्धमात्रेण । सं॰ प्रत्यंह्या धारोष्णेन । शृतेन माध्यन्दिने ॥१०॥ श्रयणम् । तृतीयसवने दध्ना ॥११॥

दक्षिणा वत्सतराः पञ्चवर्षाः पृश्नयः ॥१२॥ पृश्नयो विचित्राः । वत्सतर्यश्च त्रिहायण्योऽप्रवीताः पञ्चवर्णा राजीवपृश्नयो नवनीतपृश्नयोऽरुणाः पिशङ्ग्यः सारङ्ग्य इति ॥१३॥ अप्रवीताः अकामिताः · राजीऽनयः पद्मपृश्नयः · नवऽन्नयो नवनीतसदृशैश्चित्रैः · अरुणाः रक्ताः कपिलाः · पिशङ्ग्यो मांसवर्णाः · सारङ्ग्यो वर्णान्तरोपधस्ताः । सं॰ पृश्नयो विचित्रवर्णाः · वृषभेणाप्रवीताः अभुक्ताः · राऽयः राजीवाकाराणि पद्मवर्णानि पृश्नीनि मण्डलानि यासां ताः · नवनीतवर्णाः · अरुणाः अव्यक्तरागाः · पिशङ्ग्यः कपिलाः · सारङ्ग्यः वर्णान्तरोपेताः कर्बुराः · दक्षिणा भवन्ति । उभयस्य सहस्रं द्वादशं वा शतम् ॥१४॥ सहस्रपक्षे तद्युक्तं भवति । सं॰ उभयस्येति वत्सतरगणस्य वत्सतरीगणस्य मिलितं सहस्रं दद्यात् द्वाऽतम् द्वादशभिरधिकं शतम् । सोमातिपूतस्य तीव्रसुदुक्थ्यः ॥१५॥ 1) सोऽनस्तद्विरेचनः । अपरुद्धराजन्यस्य ॥१६॥ सं॰ अपरुद्धः राष्ट्रेण स्वराज्यात्प्रच्यावितः स चासौ राजन्यश्च · तस्यायं भवति । दीर्घव्याधिग्रामकामप्रजाकामपशुकामानां वा ॥१७॥ एषां च तीव्रसुद्भवति । पूर्ववत्सोमाः ॥१८॥ श्रयणवन्तो भवन्तीत्यर्थः । सं॰ अत्र तीव्रसुति सर्वेषु सवनेषु सोमाः पूर्ववदिति वैश्यस्तोमवदाशीर्वन्तो (८-११) भवन्ति ॥ ॥ नवमी कण्डिका ॥ १ ॥

धेनुशतमाशिरे दुहन्ति ॥१॥ अत्र विशेषः · तदेव दक्षिणा ॥२॥ भवति । अछावाकविग्रहेषु भक्षणम् ॥३॥ अवघ्राणमितरेषु ॥४॥ न भक्षणम् । तेष्वेवोन्नयनमभ्यभि सोमानुन्नयन्तीति श्रुतेः (ताण्ड्य॰ १८. ५) ॥५॥ सं॰ तेष्ववघ्रातेषु सोमोन्नयनं कर्तव्यम् · कुतः अभ्यभिऽतेः · अत्र छन्दोगसूत्रम् (लाट्या॰ ८. १०. १२) यानवजिघ्रेयुस्तेष्वेवाभ्युन्नयेयुः · अवघ्रातोऽपि भक्षित एवेति मत्वा न त्याज्य 2) इत्यर्थः । अध्वर्यू चमसाध्वर्यवश्च सर्वे प्रतिगृणन्त्यछावाकाय ॥६॥

द्वन्द्वानां प्रथमो राड्राजन्यस्य राज्यकामस्य ॥७॥ द्वन्द्वानां यः प्रथमः राट्संज्ञकः स राजऽमस्य भवति । सं॰ अग्निष्टोमसंस्थः । यथाशक्त्येकविंशतिवर्गान्द-

1) see ८. ८. २१. 2) ? त्याज्या Ss.

द्यात् ॥८॥ सं° अत्र एकविंशतिसंख्याभिर्गोभिरेको वर्गः · एवंविधान्गवां वर्गान् त्रिप्र[भृ]ति यथाशक्ति दद्यात् । ऋषभ ऐन्द्रः परियज्ञः ॥९॥ परिशब्दसामर्थ्याद्-धस्ताच्चोपरिष्टाच्च भवति · यज्ञनीयेषु । सं° यज्ञारम्भात्पूर्वं यज्ञसमाप्त्यनन्तरमैन्द्र [इन्द्र]देवत्य ऋषभः पशुर्भवति । अन्नाद्यकामस्य विराट् ॥१०॥ विराडाख्यो द्वन्द्वः सोऽन्नाद्यस्य भवति । यथाशक्ति दशवर्गान्दद्यात् ॥११॥ सं° दशभिर्गोभिरेको वर्गः · त्रिप्रभृति यथाशक्ति गवां दशवर्गान्दद्यात् ।

पशुराग्नेयः परियज्ञः ॥१२॥ भवति । सं° ऐन्द्रपरियज्ञवत् [इति] सूत्रार्थः ।

प्रज्ञातिकामस्यौपशदः[१] ॥१३॥ औपशदो नाम द्वन्द्वः स प्रजस्य भवति ।

दक्षिणा चतुर्विंशं शतम् ॥१४॥ सं° अत्र चतुर्विंशत्या अधिकं गवां शतं दद्यात् ।

पशुर्वैश्वदेवः परियज्ञः ॥१५॥ भवति । बहु प्रतिगृह्य गरगीरिव यो मन्येत तस्य पुनस्तोम उक्थ्यः ॥१६॥ बहु प्रगृह्य गरगृहीतमिवात्मानं [यो] मन्यते तस्य पुनस्तोमसंज्ञक उक्थ्यसंस्थो भवति । दक्षिणा द्वादशमिथुना पुनर्वतां च यथाशक्ति ॥१७॥ सं° अत्र गवां द्वादश मिथुनानि · द्वादश गावो द्वादशसंज्ञाः · तथा पुनर्वतां पुनःशब्दवतां वसूनां यथाशक्ति पुनःसंस्कृतो रथः (४. ६. १८) पुनरुत्स्यूतं वास इत्यादि । पशुकामयज्ञौ चतुष्टोमौ ॥१८॥ चर्मसंज्ञकौ द्वौ यज्ञौ · तौ पशुकामस्य भवतः । तयोश्च · षोडश्युत्तरः ॥१९॥

पूर्वस्मिन्यथाशक्त्येकशफान्दद्यादुभयानुत्तरस्मिन् ॥२०॥ एकशफान्द्विशफांश्च । सं° अश्वाश्वतरगर्दभादीनेकखुरान् · उभयस्मिन् एकखुराननेकखुरान् ।

उद्भिद्बलभिदौ चाहरतः संयुक्तौ ॥२१॥ आहरतौ इति कोऽस्यार्थः · । सं° तावेकाहौ चकारात्पशुकामयज्ञौ संयुक्तदर्शपूर्णमासवत्संहृतावेव फलमाहरतः ।

पूर्वेणोष्ट्रोत्तरेणावश्यम् ॥२२॥ यष्टव्यमित्ययमर्थः । इषुरिष्टिरन्तरेणोनावाग्नेयः पुरोडाशः ॥२३॥ एनौ उद्भिद्बलभिदावन्तरेणेषुरिष्टिसंज्ञेष्टिर्भवति आग्नेयः · आग्नेय इति न्यायसंसूचनम् । तत्र विशेषः · उद्धृतः प्रस्तरः ॥२४॥ वृक्ष

---

१) Thus M. ३. Tâṇḍya १९. ३. Lâṭy. ९. ४. ३. °सदः १. ३ pr. m. R. Ss. K pr. m. — °कामस्योपसद इति केचित्पठंति तत्र । शदि-धातु[:] विनाशे । उपसंप्राप्तस्य प्रजोत्पत्तिप्रतिबंधरसविनाश उपशदः । स यस्मिन्क्रतावस्ति सोऽयमौपशदः ३ marg.

निष्कर्षे · ऊर्ध्वं निःकृष्ट इत्यर्थः । सं° उद्धृतो बर्हिर्भारादग्रमार्गेण निष्काशितो भवति न प्रकृतिवन्मूलभागेन । बाणवन्तः परिधयः ॥२५॥ बाणवच्छब्द इषौ हि दृष्टः द्वौ बाणवन्तौ तिष्ठेदिति (१४. ६. ८. २) · एतच्च शरेषूपपद्यते यस्माद्बाणा एव परिधय इति । सं° बाणवन्तस्तीक्ष्णाः शरा एव परिधयः ।

अर्धमासं मासं संवत्सरं वा ॥२६॥ इषुरिष्टिर्भवति[1] । सं° उद्भिदा इष्ट्वा तत एव दिनादारभ्यार्धमासं वा प्रत्यक्षमियमिषु[रिष्टि]र्भवति । दक्षिणा गायत्री चतुर्विंशतिवर्गा यथाशक्ति ॥२७॥ इयमेव गायत्रीत्युच्यते । सं° गायत्रीशब्दं स्वयमाह चतुर्गा । अपचितिकामस्यापचिती ॥२८॥ अपचिती द्वौ क्रतू तावपमस्य भवतः · अपचितिः पूजोच्यते । सं° अपिचितिसंज्ञावेकाहौ ।

राजयज्ञावित्येके ॥२९॥ एके आचार्या मन्यन्ते राज्ञावेताविति · एके त्रैवर्णिकस्यापि । दक्षिणाश्वरथश्चतुर्युगुभयतः ॥३०॥ उभयतश्चत्वार इत्यर्थः ।

कांस्यकवचः ॥३१॥ सं° उभयतः[2] पार्श्वे कांचो रथो भवेत् कांस्यधातुनिर्मितकवचः । शतार्हा अश्वाः ॥३२॥ अश्वाः शतार्हा भवन्ति । सं° अत्र रथे · गोशतेन मूल्यभूतेन येषामेकैको लभ्यते । साग्निचित्यावग्निष्टोमौ सर्वजिद्वीजौ ॥३३॥ अग्निष्टोमसंज्ञकौ क्रतू सांत्यौ भवतः । सं° सर्वजित्समक्षाव्रत इत्यादि (२. ४४) । पूर्वः पत्न्युत्तरो ज्योतिः ॥३४॥ पूर्वस्य पत्नीति विशेषसंज्ञा उत्तरस्य च ज्योतिरिति ॥ ॥ दशमो कण्डिका ॥१०॥ ॥

धान्याचितानि चत्वारि-चत्वारि दक्षिणा ॥१॥ अग्निष्टोमयोर्धान्यस्य पूर्णान्यनांसि चत्वारिणा । सं° धान्यैर्व्रीहियवादिभिराचितानि पूर्णानि चत्वारि-चत्वारि शकटानि दक्षिणा । पूर्वस्य षड्गवान्युत्तरस्य चतुर्गवाणि[3] ॥२॥ पूर्वस्य पत्निणः षणि भवन्ति उत्स्य ज्योतिषः चणि । सं° षड्भिर्बलीवर्दैर्युक्तानि · चतुर्भिरनडुद्भिर्युक्तानि।

ऋषभगोसवौ ॥३॥ ऋषभश्च गोसवश्च क्रतू भवतः । पूर्वो राज्ञः ॥४॥ पूर्वः ऋषभसंज्ञको राज्ञः । दक्षिणाऽऋषभसहस्रं[4] द्वादशं वा शतम् ॥५॥ विकल्पेन । सं° ऋषभाणां सहस्रं द्वादशाधिकं शतं वा । उक्थ्यो गोसवोऽयुत-

---

1) सक्तुरि° K pr. m. 2) उभयतः belongs in Ss. to this sûtra, not to ३०.
3) °वानि K. Ss. 4) Thus M. ३ sec. m. पार्ष K pr. m. णा ऋ K sec. m. ३ pr. m.

दक्षिणाः ॥६॥ गोसवसंज्ञः क्रतुरुक्थ्यसंस्थो भवति अयुगाश्च । वैश्ययज्ञ इत्येके ॥७॥ मन्यन्ते · सर्वेषामित्यपरे । सराजानो विशो यं पुरस्कुर्वीरंस्त एतेन यजेत ॥८॥ सं॰ राज्ञा सहिता विशः प्रजाः सर्वे पुरुषा यं पुरुषं मुख्यत्वेनाङ्गीकुर्वीरन् स गोसवेन यजेत । स्थण्डिलेऽभिषिच्यते ॥९॥

प्रतिदुह्याहवनीयस्य दक्षिणतः ॥१०॥ स्थितः आगन्तुवादन्ते । सं॰ आहवनीयाद्दक्षिणस्यां स्थण्डिले उपविष्टो यजमानः प्रतिदुह्या धारोष्णेन दुग्धेनाभिषिच्यते ।

स्थपतिरित्येनं ब्रूयुः ॥११॥ गोसवयाजिनं जनाः । वैश्यस्तोमदक्षिणालिङ्गो मरुत्स्तोमो[1] गणयज्ञो भ्रातृणां सखीनां वा ॥१२॥ वैश्यस्तोमदक्षिणायां यानि लिङ्गानि तान्यत्रापि भवन्ति · मरुत्सोम[2] इति च संज्ञा । सं॰ वैश्यलिङ्गः · तानि च दक्षिणा वत्सतराः पञ्चवर्षा इत्यादि लिङ्गम् (२. १२) · भ्रातॄणां वा गणस्य मरुत्स्तोमसंज्ञो गणयज्ञः । प्रजाकामपशुकामयोरैन्द्राग्नकुलायः कुलदक्षिणः ॥१३॥ ऐन्द्राग्नस्य इति संज्ञा · गोकुलं चास्य दक्षिणा । स च ·

द्वियज्ञो भ्रात्रोः सख्योर्वा ॥१४॥ सं॰ द्वयोर्भ्रात्रोर्द्वयोः सख्योर्वा · कुलानि गोकुलानि चास्य दक्षिणा · इदं सरस्वत्याः कुलम् इदं यमुनायाः कुलम् इत्येवमाशतं पूरयेत् । इन्द्रस्तोमो राजयज्ञः ॥१५॥ सहस्रं दक्षिणा ॥१६॥ सहस्रं चास्य द॰ । उक्थ्यः ॥१७॥ उक्थ्यसंस्थश्चासौ भवति । पुरोधाकामस्येन्द्राग्न्योस्तोमः ॥१८॥ भवति · पौरोहित्यकामस्य । राजपुरोहितयोर्वा सह यजमानयोः ॥१९॥ तं प्रकृत्य हि श्रूयते[3] एतेन राजपुरोहितौ सायुज्यकामौ यजेयातामिति । पृथग्वा ॥२०॥ सह वेति विकल्पः । दक्षिणा गायत्रीसम्पन्ना ब्राह्मणस्य ॥२१॥ यष्टुर्भवति । सं॰ गावो गायत्र्यक्षरसमानसंख्याश्चतुर्विंशतिर्गावो दक्षिणा । जगत्या राज्ञः ॥२२॥ जगत्या सम्पन्ना राज्ञः · सहपत्नेः प्राकृतदक्षिणाः । सं॰ जगत्यक्षरसमानसंख्या अष्टाचत्वारिंशद्गावो भवन्ति ।

विघनौ पशुकामस्य ॥२३॥ सं॰ विघनौ नाम एकाहावग्निष्टोमसंस्थौ इन्द्रसोमौ पशव्यस्य यजमानस्य । अभिचरतो वा ॥२४॥ तौ भवतः । बृहतीसम्पन्नाः[4]

---

1) Thus M sec. m. R. Ss. Tāṇḍya १९. १४. Lāṭy. ९. ४. २५. मरुत्सो॰ १. ३. K. M pr. m.　2) Thus K.　3) See Tāṇḍya १९. १७.　4) ॰पन्ना K.

पशुकामस्य ॥२५॥ दक्षिणा । सं॰ षट्त्रिंशद्गावो भवन्ति । अभिचरतः[1] प्रज्ञाताः ॥२६॥ प्रकृताः । सं॰ प्राकृत्यः । संदंशवज्रावभिचरतः ॥२७॥ संदंशश्च वज्रश्च · तावभिचरतो भवतः । सं॰ सं॰ज्ञसंज्ञौ द्वन्द्वसोमौ ।

षोडशी वज्रः ॥२८॥ षोडशिसंस्थो भवति वज्रः । शुण्ठाधी लोहाकर्णी षोडशिनः सोमक्रयणी ॥२९॥ सं॰ शुण्ठाधी पीतमुखी वेष्टितमुखी वा पीतपुच्छी वा · लोहाकर्णी लोहितकर्णी । अहर्गणेऽप्यविशेषात् ॥३०॥ अहर्गणे गतेऽपि षोडशिनि उक्तलक्षणैव सोमक्रयणी भवति · कुत एतत् अ॰षात् अहर्गणगतोऽपि षोडशी षोडश्येव · न च संस्थान्तरैर्विरोधोऽस्ति । सं॰ यस्मिन्नहर्गणे षोडशिसंस्थमहः तस्मिन्नपि शुण्ठाधी लोहाकर्णी सो॰णी भवति ।

विश्वजित्परिवासाश्च ॥३१॥ अहर्गणगतेऽपि विश्वजिति परिवासा भवन्ति · तुल्यन्यायत्वात् । सं॰ अहर्गणेऽपि विश्वजिति वि॰सा भवन्ति द्वादशरात्रं परिवसतीत्यादयः (१. २१) । न वा स्वसम्बन्धात् ॥३२॥ न वाहर्गणगते विश्वजिति परिवासा भवन्ति सर्वस्वदानसम्बन्धेन हि तेषां श्रवणमिति · अथवा स्व॰न्धादिति विश्वजिद्याजिसम्बन्धात् न चाहर्गणयाजी · तस्मान्न भवन्ति ।

एकराजमेव पूर्वेणाभिचरेत् ॥३३॥ पूर्वेण संदंशेन राजानमेवैकमभिचरेत् न जनपदम् । जनपदं वज्रेण ॥३४॥ सं॰ वज्रसंज्ञेन ज॰दं सकलदेशमभिचरेत् । व्यत्यासं वैके प्रयुञ्जीत ॥३५॥ वज्रेण राजानं तज्जनपदं च संदंशेन ।

शमित्वा स्तृत्वा वा ज्योतिष्टोमेन यजेत शान्त्यर्थेन ॥३६॥ अभिचाराडुपशमं गत्वा मारयित्वा वा शत्रुं ज्यो॰न शा॰न यजेत । सं॰ शमित्वा मारणाडुपरम्य शत्रुं स्तृत्वा वा मारयित्वा शान्त्यर्थं ज्यो॰जेत ॥ ॥ एकादशी कण्डिका ॥११॥ ॥

इत्युपाध्यायकर्ककृतौ कात्यायनसूत्रविवरणे द्वाविंशतिमोऽध्यायः ॥ एकाहाः समाप्ताः ॥

इति कात्यायनसूत्रे द्वाविंशोऽध्यायः ॥२२॥ ॥

---

द्वादशोपसत्का अहीना मासापवर्गाः ॥१॥ ननु च द्वादशोपसत्त्वमवाच्यम्[2] अन्वयात्तत्प्राप्तेः अहीनात्मकस्य हि द्वादशाहस्य अहीनान्तरेषु सामान्याद्धर्मप्र-

---

1) अभिचरतः is wanting Ss. 2) °क्रम° K.

वृत्तिरिष्यते तेन द्वादशोपसत्त्वं[1] प्राप्तमेवात्रेति · अत्रोच्यते · दीक्षाः सुत्योपसच्छेषेणेति (२) वक्ष्यति जामदग्न्ये चतूरात्रे दीक्षाणां विंशतिरुक्ता (२. १४) तत्र मासापवर्गत्वे सति किं जामदग्न्ये मासापवर्गता बाध्यताम् उतोपसदां द्वादशत्वमिति · तेन मासापवर्गताबाधनाय द्वादशोपसत्त्वमुच्यते[2] · वचनात् मासापवर्गास्ते भवन्ति । सं° मासेनापवर्गः समाप्तिः [· मासश्चात्र सावनस्त्रिंशद्दिनात्मकः] ।

दीक्षाः सुत्योपसच्छेषेण ॥२॥ सौत्यान्यहानि परिगणय्य औपसदानि च शेषा दीक्षाः । सं° सुत्योपसदां शेषेण दीक्षा भवन्ति । द्व्यहप्रभृतयो द्वादशाहपर्यन्ताः ॥३॥ द्विरात्रप्रभृतयो द्वादशरात्रपर्यन्ता अहीनाः । तत्राम्नानादतिरात्रांश्चैके[3] ॥४॥ तन्मध्यऽआम्नानात् अ॰त्रांश्च एके अहीनधर्मकानिच्छन्ति प्रयोगवचनन्यायात् यथा कितवमध्यस्थोऽकितवोऽपि कितव-इवानुमीयते साहचर्यादेव · एके तन्नेच्छन्ति धर्मप्राप्तिरिह वचनाद्भवति न चेह वचनमस्ति प्रत्यक्षम् न चानुमानिकम् न च नामधेयम् तस्मान्नाहीनधर्मका अतिरात्राः न च संनिधावाम्नानमात्रेण धर्माणां प्रवृत्तिर्युक्ता । सं° तेषामहीनानां मध्ये आम्नानात्पठनात् अतिरात्रान् नवसप्तदशादीन् (१४) वक्ष्यमाणां[स्त्रयोदशसख्या]न् अहीनधर्मकानेके इच्छन्ति [अन्यऽएकाहधर्मकान् अतः कठमैत्रादिसूत्रेषु एकाहमध्यऽएव त्रयोदशातिरात्राः सूत्रिताः अत एकाहधर्मका एवेति सिद्धम्] ।

दाशरात्रिकाण्यहानि द्व्यहादिष्वेकोच्चयेन तद्गुणदर्शनात् ॥५॥ द्वादशाहे यो दशरात्रस्तदीयान्यहानि भवन्ति द्विरात्रादिषु · कुत एतत् तद्गु॰नात् तद्गुणा हि दृश्यन्ते द्विरात्रं प्रकृत्य अपशव्यो वै द्विरात्र इत्याहुः द्वे ह्येते छन्दसी गायत्रं च त्रैष्टुभं [च] जगतीमन्तर्यन्ति जगत्यत्र न भवतीति · त्रैष्टुभमेके [इति] वैखानसविधिपरे वाक्ये सिद्धं गायत्रं प्रथममहस्त्रैष्टुभं च द्वितीयं दर्शयति · यदि च दाशरात्रिकाण्यहानि द्व्यहादिषु तदेतदुपपद्यते · तथा त्रिककुकविधिपरे वाक्ये पृष्ठ्यमवसितं दर्शयति । लिङ्गमात्रमुपदिष्टम् न्यायोऽभिधीयते · द्विरात्रादिष्वहर्गणेषु गुणत्वसामान्याद्द्वादशाहिको विध्यन्त इष्यते · तत्र च प्रायणीयोदयनीयावतिरात्रौ · सर्वत्र प्रत्यहो दशरात्रऽएव प्रवृत्तिधर्मः । अपि च द्विरात्रस्त्रिरात्र इति च रात्रिसामान्याद्दाशरात्रिकी

1) °त्वं K.  2) °त्वमु° K.  3) Thus K. A. Ss. त्रांश्चैके ३. M.

विध्यन्तप्रवृत्तिर्युक्तेति · तस्मात्साधूक्तमाचार्येण दाशरात्रिकाण्यह्नानि घ्यहादिष्वि-
ति । सं° घ्यहादिष्वहीनेषु एकोच्चयेन दाश°ह्नानि द्वादशाह्निकदशरात्रसम्बन्धीन्य-
ह्नानि भवन्ति · कुतः तद्गुणनात् दाशरात्रिकाह्नर्गुणानां घ्यहादिषु शाखान्तरे
दर्शनात् [·एकोच्चयेनेत्येकैकाह्नवृद्ध्या] तेन घ्यहेष्वेकम् त्र्यहेषु द्वे चतुरहे त्रीणि।
सहस्रदक्षिणाः ॥६॥ द्विरात्रादयो भवन्ति । चतूरात्रादिष्वधिकम् ॥७॥ च°षु
तु सहस्राधिका दक्षिणा । सं° तेषां गवां सहस्रं किंचिदधिकम् । प्राकृतं वा
प्रत्यहम् ॥८॥ वाशब्दो विकल्पार्थः · प्राकृतं दक्षिणादानं द्विरात्रादिषु वा भव-
ति[1]। पौण्डरीकेऽयुतम् ॥९॥ दक्षिणा । समविभक्ताः प्रत्यहं ददाति
॥१०॥ प्रत्यहं समविभागेन दक्षिणादानम् । सं° तेन घ्यहेष्वन्वहं पञ्च-पञ्च शता-
नि ददाति त्र्यहेऽन्वहं त्रीणि-त्रीणि शतानि त्रयस्त्रिंशदधिकानि ।
अन्त्ये[2]ऽहन्यधिकाः ॥११॥ विभागाधिकानामन्त्येऽहनि दानम् । सं° समविभागे
क्रियमाणे या अधिका अवशिष्यन्ते ता अन्त्येऽहनि देयाः । त्रयोदशातिरात्राः
॥१२॥ व्याख्यायन्तऽइति सूत्रशेषः · तेषाम् · चत्वारोऽषोडशिकाः प्रथमाः
॥१३॥ षोडशि[ग्रह]रहिताश्चत्वारः प्रथमाः । [देव° तत्र प्रथममतिरात्रमाह ·]
प्रजातिकामस्य नवसप्तदशः ॥१४॥ सं° नवसप्तदशसंज्ञकः । ज्यैष्ठस्य ज्यै-
ष्ठिनेयस्य विषुवान् ॥१५॥ अतिरात्रो भवति । सं° यस्या योषितो ज्येष्ठो भ्राता
विद्यते सा ज्येष्ठिनी तस्याः पुत्रो ज्यैष्ठिनेयः · तादृशः [यः] पुमान्भ्रातृणां मध्ये
ज्येष्ठः तस्य भवति । गौर्भ्रातृव्यवतः ॥१६॥ स्वर्गकामस्यायुरामया-
विनो वा ॥१७॥ सं° आयुर्नामकः · आम°नो रोगिणो वा । ज्योतिष्टोमवि-
श्वजित्त्रिवृत्पञ्चदशसप्तदशैकविंशा यथासंख्यमृद्धिपशुब्रह्मवर्चसवीर्यान्नाद्यप्रतिष्ठा-
कामानाम् ॥१८॥ सं° [ऋद्धिकामादीनां] षण्णामधिकारिणां ज्योतिष्टोमादयः षड-
तिरात्रा भवन्ति । अप्तोर्यामः प्र-प्रेव यस्मात्पशवो भ्रंशेरन् ॥१९॥ प्राप्ताः
-प्राप्ता-इव यस्मात्पशवो भ्रश्यन्ते तस्याप्तोर्यामो भवति । सं° यस्माद्यजमानात्प्र
-प्रेव [प्राप्ताः-]प्राप्ता-इव पशवो भ्रंशेरन्गच्छेयुः[3]। अभिजिद्भ्रातृव्यवतः ॥२०॥

---

[1] °भवतीति । संनिधानाच्चतुरात्रादिष्विति वासुदेवः Deva. [2] Thus १. K. R. Ss. °न्ते M. ३. [3] अत्यन्तप्रकर्षेणैव भ्रष्टाः Deva.

सर्वस्तोमो बुभूषतः ॥२१॥ भूतिमिच्छतः । यूपैकादशिनी चास्मिन् ॥२२॥ भवति ॥ ॥ प्रथमा कण्डिका ॥१॥ ॥

द्व्यहास्त्रयः ॥१॥ सं° द्विसुत्यास्त्रयोऽहीना भवन्ति । अषोडशिकावतिरात्रा ऽउत्तरयोः ॥२॥ द्विरात्रयोः । सं° द्वितीयतृतीययोः । आङ्गिरसचैत्ररथकापिवनाः ॥३॥ एतेषामेव संज्ञाः । द्वितीयमुक्थ्यपूर्वमेके ॥४॥ द्वितीयं[1] द्विरात्रमेके ऊर्ध्वं कुर्वन्ति पार्ष्ठिकस्याग्निष्टोमस्य स्थाने उक्थ्यं कुर्वन्ति · संस्थामात्रान्यत्वम् धर्मास्तु तदीया एव । प्रथमेन यजेत यः पौण्यो हीन-इव स्यात् ॥५॥ पुण्यार्हः सन्पुण्यैर्न युज्यतऽइत्यर्थः । सं° पुण्येषु [श्रौतस्मार्तेषु] साधुः पौण्यः · तादृशोऽपि सन्यो हीन-इव स्यात् [पुण्यात्मनाम् सर्वैः] पूज्यानां मध्ये पूजारहित -इव स्यात् स प्रजेत । द्वितीयेन[2] प्रजाकामः ॥६॥ तृतीयेन[3] स्वर्गकामः पशुकामो वा ॥७॥ त्र्यहाः पञ्च गर्गबैदछन्दोमान्तर्वसुपराकाः[4] ॥८॥ सं° त्र्यहास्त्रिसुत्याः पञ्चाहीनाः । द्वितीये त्रिवृतोऽतिरात्राः सर्वे[5] ॥९॥[6] राज्यकामस्य ॥१०॥ त्रिवृत्स्तोमयुक्ताः अतिरात्राः राज्ञ्स्य भवन्ति क्रतवः · तत्रापि संस्थान्यत्वमात्रम् । सं° अयं बैदत्रिरात्रो भवति । अन्तर्वसुः पशुकामस्य ॥११॥ पराकः स्वर्गकामस्य ॥१२॥ चतुरहाश्चत्वारः ॥१३॥ सं° चत्वारोऽहीनाश्चतुरहाश्चतुःसुत्या भवन्ति । अत्रिचतुर्वीरजामदग्न्यवसिष्ठसछर्पविश्वामित्राः[7] ॥१४॥ संज्ञा एताः । जामदग्नो[8] विछशतिदीक्षः पुष्टिकामस्य ॥१५॥ तत्र च · उपसदः पुरोडाशिन्यः ॥१६॥ ऽन्यो भवन्तीति वचनात्[9] । सं° पुरोडाशवत्यः स्युः । अनूपसदं जुहोति ॥१७॥ उपसदुपसदि पुरोडाशाञ्जुहोतीत्यर्थः । यदा चानूपसदं पुरोडाशहोमस्तदा चिन्त्यते किमाज्यधर्मा भवन्ति उत औषधधर्मा इति · किं तावत्प्राप्तम् · सूत्रेणैव पक्षः · आज्यधर्मा स्थानापत्तेः ॥१८॥ कार्यापत्तौ हि धर्मप्राप्तिर्युक्तेति · एवं प्राप्तऽआह · । सं° पुरोडाशानामाज्यस्था-

---

1) चैत्ररथम् · एकेऽग्निष्टोमपूर्वमेव Deva. 2) चैत्ररथनाम्ना Deva. 3) कापिवननाम्ना Deva. 4) बैद M. १. A sec. m. ३ sec. m. वैद R. ३ pr. m. 5) K gives सर्वे at the head of sûtra १०, Ss. and A. join it to ९. 6) बैदत्रिरात्रे सर्वे त्रयोऽपि सौत्याः क्रतवोऽतिरात्रसंस्था भवन्ति Deva. 7) Thus ३. K. A. M pr. m. ग्न्य R. M sec. m. ग्नि १. 8) Thus ३. K. A. M pr. m. ग्न्यो Ss. R. M sec. m. १. (ग्नये pr. m.) 9) See Tâṇḍya २१. ११. पुरोडाशिन्य उपसदो भवन्ति·

नापन्नत्वात्[१]। औषधधर्मा वा द्रव्यसामान्यात् ॥१९॥ औषधधर्मा वा भवन्ति नाज्यधर्माः सत्यामपि कार्यापत्तौ पुरोडाशद्रव्यं ह्यत्र पर्युपस्थापकं धर्माणाम्. कार्यापत्तिरिति कृत्वाभिहितमेतत् न चेह कार्यापत्तिः। सं° वावधारणे. औषधधर्माः पुरोडाशधर्माः. कुतः द्रव्यसामान्यात् पुरोडाशानां पुरोडाशेन सामान्यं यतः।

अनुहोमाश्च पुरोडाशाः ॥२०॥ अनुहोमा हि पुरोडाशाः श्रूयन्तेऽइति अनूपसदं जुहोति (१७) उपसद्यागमनु जुहोतीत्यर्थः। सं° उपसद्यागमनु यतः पुरोडाशा हूयन्ते। प्रत्युपसदमेकोच्चयेन कपालान्येककपालप्रभृतीनामाग्नेयाग्निनवैष्णवसौम्यसावित्रधात्रमारुतबार्हस्पत्यमैत्रवारुणैन्द्रवैश्वदेवाः ॥२१॥ एतद्देवत्याः पुरोडाशाः. तेषां चैकोच्चयेन कपालानि एकप्रभृतीनि भवन्ति. अनूपसदं जुहोतीति (१७) च जुहोतिसंशब्दनाज्जुहोतय एते। सं° एककपालादीनां द्वादशानां पुरोडाशानां प्रत्युपसत्‍लानि भवन्ति ॥ ॥ द्वितीया कण्डिका ॥२॥ ॥

तेषाꣳ होमः अग्ने वेर्होत्रं वेरध्वरमा पितरं वैश्वानरमवसे करिन्द्राय देवेभ्यो जुहुता हविः स्वाहा देवावश्विनौ मधुकशयाद्येमं यज्ञं यजमानाय मिमिक्षतमिन्द्राय देवेभ्यो जु॰स्वाहा देव विष्णऽउर्वद्यास्मिन्यज्ञे यजमानायाधि विक्रमस्वेन्द्राय देवेभ्यो जु॰स्वाहा देव सोम रेतोधा अद्यास्मिन्यज्ञे यजमानायेधीन्द्राय देवेभ्यो जु॰स्वाहा देव सवितः सुसावित्रमद्यास्मिन्यज्ञे यजमानायासुवस्वेन्द्राय ॰स्वाहा देव धातः सुधाताद्यास्मिन्यज्ञे यजमानायेधीन्द्राय॰स्वाहा देवा ग्रावाणो मधुमतीमद्यास्मिन्यज्ञे यजमानाय वाचं वदतेन्द्राय॰स्वाहा देव्यनुमते ऽन्वद्येमं यज्ञं यजमानाय मन्यस्वेन्द्राय॰स्वाहा देव्यदिते स्वादित्यमद्यास्मिन्यज्ञे यजमानायासुवस्वेन्द्राय॰स्वाहा देव्य आपो नंनम्यधमद्यास्मिन्यज्ञे यजमानायेन्द्राय॰स्वाहा सदःसदः[२]प्रजावानृभुर्जुषाणा इन्द्राय॰स्वाहा देव त्वष्टः सुरेतोधा अद्यास्मिन्यज्ञे यजमानायेधीन्द्राय देवेभ्यो जुहुता हविः स्वाहेति ॥१॥[३] तेषां होम इत्येवमादि निगदव्याख्यातम्। सं° तेषामाग्नेयादीनां पुरोडाशानाम् अग्ने वेर्होत्रमित्याद्यो [होममन्त्राः] यथाक्रममेभिर्मन्त्रैर्होमः कार्यः। एतैः सुत्यान्ते

---

१) प्रकृतौ ह्याज्यमुपसद्यागद्रव्यम् Deva. २) सदःसद १. ३. M pr. m. ३) See Tândya २१. १०.

द्वादशाहं यजते प्रतिलोममेकैकेन ॥२॥ एतद्धर्मकैः पुरोडाशैः सुत्यान्ते सुत्यासंनिधौ द्वादशाहानि यजेत प्रातिलोम्येन · यजेतेति संशब्दनाच्च यज्ञतय एते न क्रुत्वोतयः । सं° [सुत्यानामन्ते] यज्ञसमाप्त्यनन्तरं पूर्वाह्णापराह्णयोर्यागं कुर्यात् ॥

॥ तृतीया कण्डिका ॥ ३ ॥ ॥

पञ्चाहास्त्रयः ॥१॥ देवानां प्रथमः ॥२॥ सं° [तत्र प्रथमः पञ्चाहो] देवानां सम्बन्धी देवपञ्चाहसंज्ञ इत्यर्थः । द्वितीयः[1] पञ्चशारदीयः ॥३॥ इतीयं संज्ञा । तेन यक्ष्यमाणः पञ्च वर्षाण्याश्वयुजीशुक्लेषु चतुस्त्रिंशतं पशूनालभते मारुतान् ॥४॥ तेनेति पञ्चशारदीयोपलक्षणम् । सं° आश्वयुजीशुक्लपक्षे[2] सप्तम्यामष्टम्यां [वा] । वैश्वस्तोमदक्षिणालिङ्गान् ॥५॥ सं° वैश्वस्तोमदक्षिणाया-इव लिङ्गानि येषां [ति वै°ङ्गाः तान्] तानि च दक्षिणा वत्सतराः°(२२.२.१२)।

उक्षणो वत्सतरीर्वर्णानुपूर्व्येण[3] ॥६॥ प्रतिवर्षम् । सं° [तत्र प्रतिवर्षं उक्षणो वृषभान् वर्णा°र्व्येण वर्णक्रमेण वत्सतरीश्चालभते · उक्षाणो वृषभाः साण्डाः सेचनसमर्थाः पञ्चवर्षाः पृश्नयो विचित्रवर्णा आलभ्यन्ते · वत्सतर्यश्च त्रिवर्षा अप्रवीता ऋषभेणाभुक्ताः ·] पञ्चवर्णा वत्सतर्यः सन्ति प्रथमे वर्षे राजीवपृश्नयः द्वितीये नवनीत° एवं तृतीये चतुर्थे पञ्चमेऽरुणादयस्त्रयः । अर्धा वत्सतर्यः ॥७॥ सं° चतुस्त्रिंशत्संख्या[नां]पशूनां मध्येऽर्धार्ण्यः अर्धा उक्षाणः ।

पर्यग्निकृतानुत्सृजन्त्युक्ष्णो वत्सतरीभिः सꣳस्थापयन्ति ॥८॥ उक्ष्णां तद्लाङ्गरीतिविधानम् · व°भिः परिसमाप्तिः । सं° कर्म इति शेषः । एवं पञ्च वर्षाण्युक्ष्णो नियुञ्जन्ति ॥९॥ तांश्चैवोक्ष्ण इति वचनात् (ताण्ड्य° २१.१४) तानेव · वत्सतर्यस्तु प्रतिवर्षं वर्णानुपूर्व्येणान्याश्चान्याश्च भवन्ति । सं° तानेव पर्यग्निकृतानुत्सृष्टान् तानेव प्रतिवर्षमालभन्ते । षष्ठे सवनीया भवन्ति त्र्यस्त्रयोऽन्वहमैन्द्रामारुताः ॥१०॥ सं° ये उक्षाणः पञ्च वर्षाण्यालभ्यालभ्य उत्सृष्टास्तऽएव षष्ठे [वर्षे] कार्त्तिके मासि सुत्यासु विभज्य सवनीयाः पशवो भवन्ति · चतसृषु सुत्यासु अन्वहं प्रत्यहं त्रयस्त्रय आलभ्यन्ते · ऐ°ताः इन्द्रामरुद्भ्यां जुष्टम् ।

1) द्वितीयस्य K. 2) आश्वयुजीपौर्णमासीसम्बन्धिषु शुक्लपक्षेषु आश्विनशुक्लपक्षेषु Deva. 3) °रीवर्णा° ३. °रीर्वर्णा° KMA. °र्व्येण K. २ pr. m. M marg. °र्वेण २ sec. m. Ss. M pr. m. १. A.

पञ्चोत्तमे ॥११॥ सं॰ उत्तमे पञ्चमे सौत्येऽहनि पञ्चोक्षाण आलभ्यन्ते ।
यः कामयेत बहुः स्यामिति स एतेन यजेत ॥१२॥ पञ्चशारदीयेन ।
पश्वापदि चरवः ॥१३॥ एतेषामेव पशूनामापत्सु चरवो भवन्ति ।
अपोनप्त्रियोऽप्सु मृते ॥१४॥ अप्सु मृते पशावपोनप्त्रियश्चरुर्भवति · अत्र चापोनपाद्देवता[1] न त्वपो-नप्ता · तत्र यप्रत्ययसंनियोगेन प्रातिपदिकव्युत्पत्त्या अपोनप्त्रिय इति रूपं भवति · तच्च तद्धितऽएव नानुवाचनादिषु ।
वायव्यः पलायिते ॥१५॥ नष्टे वायव्यश्चरुर्भवति । बार्हस्पत्यः[2] श्रवणाकूटकाणश्चेत् ॥१६॥ श्रोणो[3] व्याधिविशेषः · कूटो भग्नशृङ्गः · काणः प्रसिद्धः · एषु बार्हस्पत्यश्चरुः । सं॰ श्रवणो रोगविशेषः [·श्रोणो वेति[4] पाठो माधवीये ताण्ड्यभाष्ये व्याख्यातः श्रोणो रक्तवर्णो बिन्द्वाकारस्त्वग्दोष इति · काण एकाक्षिविहीनः] । नैर्ऋतोऽवसन्ने ॥१७॥ चरुर्भवति । सं॰ अवसन्ने अन्ययूथीयैः साण्डैर्युध्यमानस्य शिथिलीभावे [·अवसन्नोऽत्यन्तकृश इति माधवः] ।
पुरोडाशाः परे ॥१८॥ सं॰ अस्मात्सूत्रात्परे पुरोडाशा उपदिश्यन्ते ।
रुद्राभिमानेऽग्नये रुद्रवते ॥१९॥ रु॰ने ज्वरगृहीते । सं॰ पशोर्ज्वरपीडायाम् ।
सञ्शीर्णश्चेदेककपालो भौमः ॥२०॥ संशीर्णो विशीर्णः । सं॰ अकस्माच्छरीरं प्रकम्प्य भूमौ पतितश्चेत् तदा भौमः भूमिदेवतः [·संशीर्णो रोगान्तरं विनापि आह्वारापरिपाकेन शरीरपुष्ट्यभावात्क्षयेणावसन्न इति याज्ञिकाः] । प्रसह्य हृतश्चेदिन्द्राय प्रसह्वने ॥२१॥ प्रा॰तः प्रसह्य हृतः । सं॰ केनचिद्वैरिणा हृतश्चेत् ।
भोजनीयमृते प्राजापत्यो द्वादशकपालः ॥२२॥ भो॰तोऽजीर्णमृतः । सं॰ अन्नाद्यजीर्णेन मृते । [देव॰ अथ मृतस्य पशोः प्रतिपत्तिमाह ·] मृतं ब्राह्मणान्भोजयेत् ॥२३॥ प्रोक्षितस्य हि मांसभक्षणमुचितमिति । अप्सु प्रासनम् निधानं वादुष्टत्वात् ॥२४॥ दुष्टस्य हविषोऽप्स्ववहरणमिति (२५. ५. १) अप्सु प्रासनमुक्तम् · वा निधानं[5] भवति नाप्सु प्रासनम् · किं कारणम् अदुष्टत्वात् शिष्टभक्षप्रतिषिद्धं दुष्टं भवति न चैषु दोषेषु शिष्टभक्षप्रतिषेधः[6] तस्मान्निधा-

---

1) अपोनप्त्रे ब्रुष्टमिति याज्ञिकाः अपोनपाते ब्रुष्टमिति कर्कः Deva. 2) Thus A. R. ॰त्य १. ३. K. M. 3) sic! 4) The Tâṇḍya २१. १४. reads श्लवणः 5) अथवा भक्षणाय नि॰नं यत्नेन सुगुप्ते देशे स्थापनम् Deva. 6) न हि स्वयंमृतस्य शिष्टानां भक्षप्रतिषेधः Deva.

नमेव । इदमिदानीं विचार्यते · किमत्रैवैतानि नैमित्तिकानि उ[ता]तोऽन्यत्रापीति · अत्राह · अन्यत्रापि दोषसंयोगात् ॥२५॥ अतोऽप्यन्यत्राप्येभिर्दोषैः पशुव्यापत्तौ एतानि नैमित्तिकानि भवन्ति पशुव्यापत्त्युद्देशेन विहितत्वात् । एवं प्राप्तेऽआह · । सं॰ पञ्चशारदीयादन्यत्रापि [अन्यस्मिन्नपि] कर्मणि [पश्वापदि] इमानि प्रायश्चित्तानि भवन्ति · कुतः दोऽगात् पशुव्यापत्तिलक्षणदोषसंयोगोऽन्यत्राप्यविशिष्टः[1] [तदुद्देशेन विहितानि प्रायश्चित्तान्यपि सर्वत्र भवन्तीति पूर्वः पक्षः · सिद्धान्तमाह ·] न प्रकरणात् ॥२६॥ पञ्चशारदीयव्यतिरेकेणैतानि नैमित्तिकानि न भवन्ति · कुतः पञ्चऽर्थं हि प्रकृत्य श्रुतत्वात् प्रकृतत्वाच्च विशेषावसानम् । सं॰ पञ्चऽदीयप्रकरणे पठितत्वात् । [अथ तृतीयं पञ्चाहमाह ·]

व्रतवानुत्तमः ॥२७॥ उत्तमः पञ्चाहः व्रतवत्संज्ञको भवति । तत्राहान्याह · । सं॰ महाव्रतवान् । ज्योतिर्गौर्महाव्रतं गौरायुः ॥२८॥ सं॰ एतन्नामकाः पञ्च । अहीना व्रतवन्तः सर्वजिद्दीक्षाः ॥२९॥ सं॰ ये अहीना व्रतवन्तः ते सऽक्षाः सर्वजिति यथा (२२. १. ४४-४५) तथात्रापि [·यथा सर्वजिति चतुर्भिर्दिनैरधिकं संवत्सरं दीक्षा एकदिनाधिकं संवत्सरं वा संवत्सरं वा षण्मास्यमन्त्यमिति च ।] ॥ ॥ चतुर्थी कण्डिका ॥४॥ ॥

षडहास्त्रय ऋतूनां प्रथमः ॥१॥ षष्ठीनिर्देशेऽपि सति संज्ञैषा · यथा गवामयनम् शाक्त्यानामयनमिति च । सं॰ ऋतुषडह इति तस्य संज्ञा । द्वितीये बृहद्रथन्तरपृष्ठः पञ्चाहः पृष्ठ्यावलम्बाख्यः ॥२॥ द्वितीये षडहे पार्ष्ठिकः पञ्चाहः उभयपृष्ठः पृष्ठ्याऽख्यो भवति · पृष्ठ्याऽख्याया इह च प्रयोजनाभावादन्यार्थता[2] वक्ष्यति हि (२८) पृष्ठ्याऽन्दोमा इति । तृतीये त्रिभ्यस्त्रिककुकाः ॥३॥ सं॰ तृतीये षडहे त्रिभ्यः पार्ष्ठिकेभ्यः ऊर्ध्वं त्रिऽका भवन्ति · [ज्योतिरादीनां] त्रयाणां त्रिककुक्का इति संज्ञा (२४. १. १) । सप्त सप्ताहाः चत्वारो व्रतोत्तमाः प्रथमाः ॥४॥ चतुर्णां महाव्रतमुत्तमं भवति । तृतीयः पशुकामस्य ॥५॥ भवति । इन्द्रस्य पञ्चमः ॥६॥ पञ्चम इन्द्रसप्ताहसंज्ञकः । द्वितीयप्रभृति षडेकाहाः ॥७॥ सं॰ तत्र पञ्चमे सप्ताहे द्वितीयादेकाहादारभ्य षडेकाहाः सुत्याहानि भवन्ति

1) Thus A. त्राप्यव॰ Ss. 2) ? न्यार्था K.

[ज्योतिर्गौऽआयुषीऽअभिजिद्विश्वजित्सर्वजित्समहाव्रतश्च षष्ठ इत्येते]।

सर्वस्तोम उत्तमः ॥८॥ सं॰ अन्त्यः सर्वस्तोमोऽतिरात्रो भवति। जनकस-प्तरात्रः चतुर्थ्यो विश्वजिन्महाव्रतम् ॥९॥ सं॰ [षष्ठः सप्ताहः॰] चतुर्भ्यः पार्ष्ठिके-भ्यः परो विश्वजित् महाव्रतं च। उत्तमे षडहो बृहद्रथन्तरपृष्ठः पृष्ठ्यस्तो-माख्यः ॥१०॥ उभयपृष्ठस्य[1] षडहस्य पृष्ठ्यस्तोम[2] इतीयमाख्या संव्यवहारार्था। सं॰ उत्तमे [सप्तमे] सप्ताहे बृ॰ष्ठः षडहो भवति [स च] पृष्ठ्यस्तोमसंज्ञः।

विश्वजित्पशुकामस्य ॥११॥ [देव॰ अस्मिन्नेव सप्तमे सप्ताहे सप्तममहो] विश्वजि-दतिरात्रो भवति॰ प॰स्य चायम्। अष्टाहे षडहान्महाव्रतम् ॥१२॥ अ॰ड-हादवसितान्महाव्रतं भवति ततोऽतिरात्रः। सं॰ अष्टसुत्ये पार्ष्ठिकात्षडहादूर्ध्वं महाव्रतम्। नवरात्रे त्रिकद्रुकाः ॥१३॥ षडहादेवावसिताद्भवन्ति। सं॰ षड-हादूर्ध्वम्। द्वितीयं त्रिकद्रुकेभ्यः पृष्ठ्यावलम्बः ॥१४॥ ततोऽतिरात्रः। सं॰ व्यत्ययेन द्वितीये [इत्यस्यार्थे द्वितीयमिति॰ द्वितीये] नवरात्रे [नवसुत्येऽहीने] त्रिभ्यः परः पृ॰म्बः भवति बृहद्रथन्तरपृष्ठः पञ्चाहो (२) भवतीत्यर्थः।

दशरात्राश्चत्वारः ॥१५॥ भवन्ति। प्रथमस्त्रिककुप् ॥१६॥ प्र॰कुप्संज्ञो भवति।

उक्थ्योऽग्निष्टोमपक्षस्त्रिरावृतः ॥१७॥ सर्वे चैतेऽपूर्वाः [॰ देव॰ ततश्च पार्ष्ठिक-धर्माभावः ततो दशमो विश्वजिदतिरात्रः]। सं॰ अग्निष्टोमौ पक्षाविव यस्यो-क्थ्यस्य॰ त्रिरावृतस्त्रिर्वारं भवति॰ एवं नव। प्रतिष्ठाकामस्य ॥१८॥ सं॰ अयं ककुप्[संज्ञको दशरात्रो] भव[ती]ति [शेषः]। कौसुरुबिन्दः[3] ॥१९॥ कौ॰न्द इति संज्ञा॰ तत्राहान्याह॰। सं॰ [द्वितीयो दशरात्रः] एतत्संज्ञः।

अग्निष्टोमास्त्रिवृतस्त्रयः ॥२०॥ त्रिवृत्स्तोमयुक्ता[4] अग्निष्टोमास्त्रयो भवन्ति। सं॰ त्रिवृत्स्तोमास्त्रयोऽग्निष्टोमा भवन्ति। पञ्चदशाश्चोक्थ्याः ॥२१॥ त्रय एव। सं॰ पञ्चदशस्तोमाश्चकारात्त्रय उक्थ्या भवन्ति। सप्तदशाश्च ॥२१॥ चश-ब्दात्त्रय उक्थ्याः। सं॰ सप्तदशस्तोमकास्त्रय उक्थ्या भवन्ति। एकविꣳशो ऽतिरात्रः ॥२३॥ योऽतिरात्रः स एकविंशस्तोमको भवति। सं॰ एकविंशस्तोमको ऽतिरात्रः [दशममहर्भवति]। पूर्दशरात्रोऽभिचर्यमाणस्य ॥२४॥ [देव॰ तृतीयो

1) पञ्चय॰ K. 2) पृष्ठ॰ K. 3) कु॰ A. 4) त्रिवृत्सोम॰ K.

दशरात्रः] पूर्द॰त्र इति संज्ञैषा · सो॰भि॰स्य भवति । तत्राह्नान्याह ·
उक्थ्योऽग्निष्टोमपक्षः ॥२५॥ उक्थ्यस्योभयतोऽग्निष्टोमाविति । गोपक्षो ऽभिजित् ॥२६॥ अभिजिदिकाह्नः · तस्य गौरुभयतो भवतीत्यर्थः । सं॰ गौः[1] पक्षाविव यस्य । आयुर्विश्वजित्पक्षः ॥२७॥ आयुराख्यश्चैकाहस्तस्य विश्वजित्पक्षस्थानीयो भवति । सं॰ विश्वजिती पक्षाविवोभयतः । [अथ चतुर्थो दशरात्रः] ·
छन्दोमदशाहः पशुकामस्य ॥२८॥ छन्द इति संज्ञा · स प॰स्य भवति । तत्राह्नान्याह · पृष्ठ्यावलम्बाश्चत्वारश्छन्दोमाः[2] ॥२९॥ सं॰ चतुर्थे दशरात्रे पृ॰म्बादूर्ध्वं द्वादशाह्निकाश्चत्वारश्छन्दोमा भवन्ति [· तत्र पूर्वं बृहद्रथन्तरपृष्ठः पंचाहः ततश्चत्वारश्छन्दोमाः ततो दशमो विश्वजिदतिरात्रः] । पौण्डरीकः सर्वर्द्धिकामस्य ॥३०॥ सर्वामृद्धिं यः कामयते स सर्व॰मः तस्य पौ॰को भवति । सं॰ एतत्संज्ञक एकादशरात्रः । दशरात्रोऽसत्रोत्थानः ॥३१॥ सं॰ अत्र पौण्डरीके स॰नवर्जितो द॰त्रो भवति । विश्वजिदतिरात्रः ॥३२॥ [देव॰ एकादशमहर्भवति] । तुल्यमाध्वर्यवमतिरात्रेषु विश्वजिद्वर्जम् ॥३३॥ अहीनेषु ये ऽतिरात्राः तेषु समानमाध्वर्यवं भवति विश्वजितं वर्जयित्वा · को विशेषस्तत्रेति चेत् सर्वमेधे श्रूयते (१३. ७. १. १२) विश्वजित्सर्वपृष्ठोऽतिरात्रो दशममहर्भवतीति सर्वपृष्ठता विशेषः · तेनोच्यते वि॰र्जमिति । यथोक्तमुत्तमः[3] ॥३४॥ उत्तमो द्वादशरात्रो यथोक्त एव भवति । सं॰ उत्तमोऽन्त्यो[ऽहीनो] द्वादशाहसंज्ञो यथोक्तो यथा पूर्वमुक्तः (१२. १. १-६. ३३) तथा भवतीत्यर्थः[4] ॥ ॥ पञ्चमी कण्डिका ॥५॥ ॥

इत्युपाध्यायकर्ककृतौ कात्यायनसूत्रभाष्ये त्रयोविंशोऽध्यायः ॥ अहीनाः समाप्ताः ॥

इति कात्यायनसूत्रे त्रयोविंशोऽध्यायः ॥२३॥ ॥

---

उक्ता अहीनाः । इदानीं सत्राण्यभिधीयन्ते · द्वादशरात्रादीनि रात्रिसत्राणि ॥१॥ रात्रिसत्राणीति नाम · तच्च द्वा॰रात्रप्रभृतीनाम् · पूर्वपदप्रधानोऽयं

1) Thus A. Ss. गावौ! 2) ? Thus A. ॰म्बाश्च॰ १. ३. M. K (here and at २.) 3) Thus १. ३. M. A. K text. 4) सत्रात्मकद्वादशाहसंनिधाने अहीनद्वादशाहोऽप्युक्तोऽस्ति Deva.

बहुव्रीहिः । एकोच्चयेन चत्वारिंशदहानि ॥२॥ सं° [तत्र द्वादशरात्रं द्वादशाह एव सत्रात्मकः · स च पूर्वमुक्त एव · ततो] द्वादशरात्रादारभ्य एकैकाहर्वृद्ध्या चत्वारिंशद्रात्रान्तानि [सत्राणि] भवन्ति । यथोपदेशमहानि ॥३॥ येन क्रमेण यान्यहान्युपदिश्यन्ते तानि तथैव प्रतिपत्तव्यानि · किमर्थमिदमुच्यते आवापिकानामन्यः क्रमः औपदेशिकानां तु उपदेशक्रम एव · अथवा यथोपदेशमिति ऐकाहिकानां नाम्ना धर्मप्रतिपत्त्यर्थत्वात् । सं° [एषु त्रयोदशरात्रादिषु सत्रेषु] उपदेशक्रमेणैवाहानि भवन्ति । [अथोपदिष्टाहर्व्यतिरिक्तानामह्नामावापं तत्क्रमं चाह (४-१३) ·] अपूर्यमाणे दशरात्रः परः ॥४॥ अपूर्यमाणे सत्रे दशरात्रावापो भवति · स च भवन्परतो भवति न पूर्वः · षट् पार्ष्ठिकानि चत्वारि छान्दोमिकान्यहानि दशरात्र उच्यते । सं° द्वादशाहिको दशरात्रः [पृष्ठ्यः षडहः त्रयश्छन्दोमा अविवाक्यो दशम इत्ययं (१२. ३. १-२०) परो भवति सर्वेषामह्नामन्ते प्रागुदयनीयातिरात्राद्भवतीत्यर्थः] । प्रकृतिविहितेषु महाव्रतं दशरात्रादुत्तरमेकाहार्थे ॥५॥ यानि प्रकृतिविहितानीत्याचार्येणाभिधीयन्ते तत्रैकाहार्थे महाव्रतं भवति दशरात्रात्परम् । सं° प्रकृतिविहितानि सत्राणि वक्ष्यति तेषु एकाहार्थे एकाहं विना सत्रस्यापूरणे दशरात्रात्परं महाव्रतं भवति । पुरस्तादन्यत् ॥६॥ यदन्यदावापान्तरं व्याख्यास्यते तद्दशरात्रात्पूर्वं भवति । सं° महाव्रतादन्यद्यदावपनीयं वक्ष्यते तद्दशरात्रात्पूर्वं भवति । षडहार्थेऽभिप्लवः ॥७॥ यत्र षड्भिरहोभि[र्विना] न पूर्यते सत्रम्[1] तत्राभिप्लवः पूरणो भवति · अभिप्लवार्थश्चोक्तो गवामयने (१३. २. १) । तस्यादितः पञ्च पञ्चाहार्थे ॥८॥ तस्यैवाभिप्लवस्यादितः पञ्चाहानि गृह्यन्ते पञ्चाहार्थे[2] । त्र्यहार्थे ज्योतिर्गौरायुरिति त्रिकद्रुकाः ॥९॥ त्रिका इति ज्योतिरादीनां समुदितानां संज्ञा संव्यवहारार्था । व्रतं च यथोक्तं चतुरहार्थे ॥१०॥ चशब्दात्त्रिकद्रुकाश्च · यथोक्तग्रहणाच्च दशरात्रात्परं (५) व्रतं भवति । गोऽआयुषी द्व्यहार्थे ॥११॥ भवतः । अतिरात्रान्तरमावापस्थानम् ॥१२॥ सत्रस्याद्यन्तयोरतिरात्रविधानात् । सं° उभ-

---

१) यत्र सत्त्रपूरणार्थं षडहेन पञ्चामह्नां समूहेनार्थः प्रयोजनम् Deva. २) यत्र सत्त्रपूरणाय पञ्चैवाहानि मृग्यन्ते तत्र तस्याऽभिप्लवस्यादितः आदिमानि पञ्चाहानि गृह्यन्ते Deva.

यतोऽतिरात्रः सत्त्रमिति (१२.१.७) प्रागुक्तम् [तत्रातिरात्रयोः] प्रायणीयोदयनी-ययोर्यदन्तरालम् [तदावापनम्] यस्यावापः क्रियते तस्य तयोर्मध्ये क्रियतऽइत्यर्थः।

आवापसमवेतानामल्पमल्पं पूर्वम् ॥१३॥ यत्रावापानां समवायेन सत्त्रं पूर्यते तत्र यद्यदल्पं तत्तत्पूर्वं भवति। सं° आवापाश्च ते समवेताश्च ते [आ°वेताः] तेषाम् [· यत्रा]वापानां बहूनां समवायः तत्र अल्पमल्पं पूर्वं-पूर्वमावपनीयम् [· यथा एकोऽभिप्लवः षडहः अपरस्तस्यैव पश्चाद्दः चतुरहस्त्र्यहो द्व्यहो वा तत्र पश्चाद्द्व्यहादेः पूर्वमावापः ततोऽभिप्लवषडहस्येति। एवं सत्त्रपूरणोपयोगिनीं परिभाषामुक्त्वाऽधुना त्रयोदशरात्रप्रभृतीनि सत्त्राण्याह]। द्वे त्रयोदशरात्रे पृष्ठ्यात्सर्वस्तोमोऽतिरात्रः ॥१४॥ पृष्ठ्यादवसितात्सर्वस्तोमसंज्ञकोऽतिरात्रो भवति · पूर्णमिदमेकम्। सं° [त्रयोदशसुत्ये भवतः। तत्र प्रथमस्याहान्याह पृ°त्रः · द्वादशाह-धर्माः सत्त्रेष्वित्युक्तम् (१३.१.१) तेन सर्वेषु सत्त्रेषु द्वादशाहधर्मा भवन्ति अतस्त्रयोदश-रात्रे द्वादशाहः सकलोऽपि भवति एकमहर्मृग्यते तदर्थमाह] पृष्ठ्यात्परः सर्व°त्रः [ततस्त्रयश्छन्दोमा अविवाक्यम् उदयनीय इति। अत्र १ प्रायणीयातिरात्रः २-७ पृ-ष्ठ्यः षडहः ८ सर्वस्तोमोऽतिरात्रः ९-१२ चत्वारश्छन्दोमा १३ उदयनीयातिरात्र इति]।

प्रकृतिविहितं द्वितीयम् ॥१५॥ भवति · प्र°तग्रहणाच्च [महा]व्रतं दशरात्रादुत्तरं भवति (५)। सं° द्वितीयं त्रयोदशरात्रं प्र°तं भवति। सम्भार्यं तृतीयम् ॥१६॥ सं° तृतीयं [त्रयो]दशरात्रं सम्भार्यमन्यैरेवोपदिष्टैरेवाहोभिः सम्भरणीयम् [न त्वावापिकैः पूरणीयम्]। तदेव सम्भरणमाह · प्रायणीयाच्चतुर्विंशमहर-भिजित्त्रयः स्वरसामानो विषुवांस्त्रयः स्वरसामानो विश्वजिद्व्रतमुदयनीयोऽतिरात्रः ॥१७॥ अत्र चतुर्विंशमहरादिषु [1] गावामयनिकेषूक्तात्रालम्भसवनान्तजपा [2] भव-न्ति गावामयनिकत्वादेव [3]। चतुर्दशरात्राणि त्रीणि ॥१८॥ [दिव° तत्रा-हान्याह · प्रथमे चतुर्द°त्रे प्रायणीयातिरात्रः ततः] द्वौ पृष्ठ्यौ ॥१९॥ भवतः।

प्रतिलोमः परः ॥२०॥ भवति · प्रातिलोम्यं च त्रयस्त्रिंशारम्भणत्वेन। सं° परो द्वितीयः पृष्ठ्यः प्र°मः विपरीतक्रमो भवति [त्रयस्त्रिंशारम्भणो भवतीत्यर्थः · पृष्ठ्ये षडहे हि त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशा इति क्रमेणाहानि · प्रति-

1) ? °महरात्रिषु K. 2) ? गवा° K. 3) ? गवा° K.

लोमे तु विपरीतक्रमेण]। मध्यमे त्रिकद्रुकाः पृष्ठ्यमभितः ॥२१॥ मध्यमे चतुर्दशरात्रे। प्रतिलोमाः परे ॥२२॥ आयुर्गौर्ज्योतिरित्येवम्। सं° पृष्ठ्यात्परे ये त्रिकद्रुकास्ते प्र°मा भवन्ति। विवाहोदकतल्पसंशयितानामेतत् ॥२३॥ येषां विवाहे संशयो भवति किमस्माकं विवाहो भवति न भवतीति संशयः तथा उदकदाने शयने च तेषामेतत्सत्त्रं भवति। सं° विवाहे उदके तल्पे[1] अन्येषां संशयिताः तेषामेतद्द्वितीयं [चतुर्दशरात्रं भवति]· उदके अभिषेकाद्यर्थे।

प्रकृतिविहितं तृतीयम् ॥२४॥ प्र°तग्रहणाद्गोऽआयुषी भवतः (११)। सं° तृतीयं चतुर्दशरात्रं प्र°तं भवति [आवापप्रकारेण पूरणीयमित्यर्थः ततश्च १ प्रायणीयः २-३ गोऽआयुषी ४-१३ दशरात्रः १४ उदयनीय इति]। पञ्चदशरात्राणि चत्वारि ॥२५॥ भवन्ति। तत्र· उत्तरे प्रकृतिविहिते ॥२६॥ त्रिकद्रुकैः पूरणमित्येतदुक्तं (१) भवति। सं° तृतीयचतुर्थे पञ्चदशरात्रे प्र°ते भवतः [आवापप्रकारेण पूरणीयेऽइत्यर्थः त्र्यहार्थे त्रिकद्रुकैः पूरणं कार्यमित्यभिप्रायः]।

चतुर्दशरात्राभ्यां पूर्वे व्याख्याते ॥२७॥ पूर्वे पञ्चदशरात्रे च°भ्यां व्या°ते · इयांस्तु विशेषः ·। सं° पूर्वे प्रथमद्वितीये। पृष्ठ्ययोर्मध्ये महाव्रतम् ॥२८॥ सं° प्रथमे पञ्चदशरात्रे पृष्ठ्ययोर्म°तम् [· तेन १ प्रायणीयः २-७ पृष्ठ्यः ८ महाव्रतम् ९-१४ पृष्ठ्यः १५ उदयनीय इति]। अतिरात्रादग्निष्टुद्द्वितीयस्य ॥२९॥ अतिरात्रादवसितादग्नि°स्य भवति। सं° द्वितीयस्य पञ्चदशरात्रस्य प्रायणीयातिरात्रादग्निष्टुद्भवति [· अत्राग्निष्टुति सर्वं ग्रहादिकमाग्नेयं भवति · तेनैवम् १ प्रायणीयः २ अग्निष्टुत् ३-५ ज्योतिर्गौरायुः ६-११ पृष्ठ्यः १२-१४ आयुः गौर्ज्योतिः १५ उदयनीय इति]।

स प्रायणीयस्तृतीयस्य ॥३०॥ नाम्ना च तदीयैव संस्था। सं° तृतीयस्य पञ्चदशरात्रस्य स एवाग्निष्टुत्प्रा°यो भवति [ततश्चैवम् १ त्रिवृदग्निष्टुदग्निष्टोमसंस्थः २-४ त्रिकद्रुकाः ५-१४ दशरात्र १५ उदयनीय इति। चतुर्थे पञ्चदशरात्रे १ प्रायणीयः २-४ त्रिकद्रुकाः ५-१४ दशरात्र १५ उदयनीय इति]॥ ॥ प्रथमा कण्डिका ॥१॥ ॥

प्रकृतिविहितानि प्राग्विंशतिरात्रात् ॥१॥ षोडशरात्रादिषु चतुर्षु आवापेन हि पूरणम् · तत्र षोडशरात्रे प्रायणीया[त्] त्रिकद्रुकाः दशरात्रादुत्तरं व्रतम् ·

[1] see Tâṇḍya २३. ३. यांस्तल्पे वोदके वा विवाहे वा मीमांसेरंस्तऽएता रात्रीरुपेयुः।

सप्तदशरात्रे प्रायणीयात्पश्चाह्नः · अष्टादशरात्रे षडह्नः · एकान्नविंशतिरात्रे षडह्नो दशरात्राच्चोत्तरं व्रतम् । सं° षोडशरात्रादारभ्य प्राग्विंशरात्रात् चत्वारि सत्त्राणि प्र° तानि आवापक्रमेण पूरणीयानि[1] । विंशतिरात्रेऽभिप्लवोऽभिजिद्विश्वजितौ च ॥२॥[2] यथोपदेशम् । एकविंशतिरात्रयोरतिरात्रावषोडशिकौ ॥३॥

अभिप्लवास्त्रयः प्रथमादतिरात्रः ॥४॥ परिपूर्णमेवैतत् । सं° [प्रथमे एकविंशे] त्रयाणामभिप्लवानां मध्ये प्रथमादभिप्लवात्परोऽतिरात्रो भवति[3] । निदाघे द्वितीयं ब्रह्मवर्चसकामानाम् ॥५॥ निदाघो ग्रीष्मः · तत्र द्वितीयमेकविंशतिरात्रं ब्र°नां भवति । त्रयस्त्रयः स्वरसामानो विषुवन्तमभितः पृष्ठ्यौ च ॥६॥ सं° पृष्ठ्यौ च चशब्दादभितः[4] । उत्तरः प्रतिलोमः ॥७॥ सं° उत्तरो द्वितीयः [पृष्ठ्यः प्र°मः त्रयस्त्रिंशारम्भणो भवति । अत्र विषुवति विशेषमाह ·]

मानव्यः सामिधेन्यः ॥८॥ विषुवति च भवन्ति । सं° मनुना दृष्टा मानव्य[5] ऋचः।

सौमापौष्ण उपालम्भ्यः ॥९॥ विषुवत्येव । सं° तृतीय उ°म्भ्यः । प्रकृतिविहितान्या द्वात्रिंशद्रात्रात् ॥१०॥ सह द्वा°त्रेण · आङभिविधौ कर्मविषयत्वात् [देव° आवापक्रमेण पूरणीयानि] । द्वाविंशतिरात्रमन्नाद्यकामानाम् ॥११॥[6]

त्रयोविंशतिरात्रं प्रतिष्ठाकामानाम् ॥१२॥[7] पूर्वं चतुर्विंशतिरात्रं प्रजाकामानां पशुकामानां वा ॥१३॥[8] द्वाविंशतिरात्रे पूरणम् प्रायणीया[त्] त्रिकद्रुकास्ततोऽभिप्लवः दशरात्राच्च परं व्रतम् · त्रयोविंशतिरात्रे प्रायणीयात्पश्चाह्नस्ततः षडह्नः · पूर्वस्मिंश्चतुर्विंशतिरात्रे द्वौ षडह्नौ । सं° पूर्वं प्रथमम् ।

---

1) षोडशरात्रे १ प्राय° २-४ त्रिकद्रु° ५-१४ दशरात्रो १५ महाव्र° १६ उदय°। सप्तदशरात्रे १ प्राय° २-६ अभिप्लवस्य पश्चाहः ७-१६ दशरात्र १७ उदय°। अष्टादशरात्रे १ प्राय° २-७ अभिप्लवः षडहः ८-१७ दश° १८ उदय°। एकोनविंशतिरात्रे १ प्राय° २-७ अभि° ष° ८-१७ दश° १८ महाव्रतम् १९ उदय° ।　2) १ प्राय° २-७ अभिप्ल° ८ अभिजित् ९ विश्व° १०-१९ दशरा° २० उदय° ।

3) १ अषोडशिकः प्रायणीयः २-७ अभिप्लवः ८ अतिरात्रः सषोडशिकः ९-२० अभिप्लवौ २१ अषोडशिक उदय° ।　4) १ प्रायणीयः २-७ पृष्ठ्यः ८-१० त्रयः स्वर° ११ विषुवान् १२-१४ स्वरसा° त्रयः १५-२० त्रयस्त्रिंशारम्भणः पृष्ठ्यः २१ उदयनीयः ।　5) See Tâṇḍya २३. १६.　6) १ प्राय° २-४ त्रिकद्रुकाः ५-१० अभिप्लवः ११-२० दशरात्रः २१ महाव्रतम् २२ उदयनीयः ।　7) १ प्राय° २-६ अभिप्लवस्य पश्चाहः ७-१२ अभिप्लवः १३-२२ दशरा° २३ उदय° ।　8) १ प्राय° २-१३ द्वावभिप्लवौ १४-२३ दशरा° २४ उदय° ।

द्वितीयं संसदः ॥१४॥ द्वितीयं चतुर्विंशतिरात्रं संसदसंज्ञकम्। अत्र विशेषः ·। सं° द्वितीयं चतुर्विंशतिरात्रं संसदः इति-संज्ञम् · संसद इति षष्ठ्येकवचनम् [यथा द्वादशसंवत्सरं प्रजापतेः षट्त्रिंशत्संवत्सरं शाक्त्यानामित्यादि तेन संसदो ऽयनमित्येवं संज्ञमित्यर्थः]। अषोडशिकावतिरात्रौ ॥१५॥ सं° प्रायणीयोदयनीयावषोडशिकावत्र भवतः। विशालः ॥१६॥ वक्ष्यमाणस्याहःसंघातस्य संज्ञा। सं° वक्ष्यमाणस्य षडहस्य विशाल इतीदं नाम। पार्ष्ठिकानि त्रीण्युत्तराणि प्रतिलोमानुलोमानि ॥१७॥ सं° पार्ष्ठिकानि पृष्ठ्यषडहसम्बन्धीनि उत्तराणि चतुर्थप्रभृतीनि त्रीण्यहानि एकविंशत्रिणवत्रयस्त्रिंशानि प्रतिलोमानि अनुलोमानि चात्र भवन्ति [· पूर्वम् प्रतिलोमानि षष्ठपञ्चमचतुर्थानि ततोऽनुलोमानि चतुर्थपञ्चमषष्ठानि]। तमभितोऽग्निष्टोमावनिरुक्तौ ॥१८॥ तं विशालमभिक्तौ। पृष्ठ्यस्तोमौ च ॥१९॥ अभितो भवतः। सं° पूर्वं हि उक्तम् उत्तमे षडहो बृहत्यव्य इति (२३. ५. १०) तौ पृष्ठ्यस्तोमौ बृहद्रथन्तरपृष्ठौ षडहौ चकारात् तं साग्निष्टोमं विशालमभितो भवतः। उत्तरः प्रतिलोमः ॥२०॥ सं° [तयोः साग्निष्टोमं विशालमभितः क्रियमाणयोः पृष्ठ्यस्तोमयोर्मध्ये उत्तरः] प्रतिलोमोऽन्त्याहःप्रभृति भवति। तस्मादग्निष्टोमावनिरुक्तौ ॥२१॥ पूर्णमेतत्[1]। सं° योऽयं प्रतिलोम उत्तरः पृष्ठ्यस्तोमस्तस्मात्परौ अक्तौ अग्नौ भवतः।

पञ्चविंशतिरात्रमन्नाद्यकामानां षड्विंशतिरात्रं प्रतिष्ठाकामानां सप्तविंशतिरात्रमृद्धिकामानाम् अष्टाविंशतिरात्रं प्रजाकामानां पशुकामानां वा ॥२२॥

द्वात्रिंशद्रात्रं च ॥२३॥ चशब्दात्प्रजाकामानां पशुकामानां वा · पञ्चविंशतिरात्रे द्वावभिप्लवौ स्वस्थाने व्रतं च[2] · षड्विंशतिरात्रे प्रायणीयाद्गोऽआयुषी ततो ऽभिप्लवौ[3] · सप्तविंशतिरात्रे प्रायणीयात् त्रिकद्रुकाः ततोऽभिप्लवौ[4] · अष्टावि-

---

१) १ प्राय° २-७ पृष्ठ्यस्तोमः षडहः ८ अनिरुक्तोऽग्निष्टोमः ९-१२ (६. ५. ४) पार्ष्ठिकान्यहानि १२-१४ (४. ५. ६) तान्येव षोडश्यादीनि (!) १५ अनिरुक्तोऽग्निष्टोमः १६-२१ त्रयस्त्रिंशारम्भणः पृष्ठ्यस्तोमः षडहः २२-२३ अग्निष्टोमावनिरुक्तौ २४ उदयनीयः। २) १ प्राय° २-१३ अभिप्लवौ १४-२३ दशरात्रः २४ महाव्रतम् २५ उदय°। ३) १ प्राय° २-३ गोऽआयुषी ४-१५ अभिप्लवौ १६-२५ दश° २६ उदय°। ४) १ प्राय° २-४ त्रिकद्रुकाः ५-१६ अभिप्लवौ १७-२६ दशरात्रः २७ उदयनीयः।

शतिरात्रे प्रायणीयात्त्रिकद्रुकाः ततोऽभिप्लवौ स्वस्थाने च व्रतम्[1] · एकोनत्रिं-
शद्रात्रे प्रायणीयात्पञ्चाहः ततोऽभिप्लवौ[2] · त्रिंशद्रात्रे त्रयोऽभिप्लवाः[3] · एक-
त्रिंशद्रात्रे व्रतमधिकम्[4] · द्वात्रिंशद्रात्रे प्रायणीयाद्गोऽआयुषी अभिप्लवास्त्रयः[5]।

त्रयस्त्रिꣳशद्रात्राणि त्रीणि ॥२४॥ तत्र प्रथमे ·। सं° त्रीणि सत्त्राणि त्र°णि भवन्ति।
तत्र प्रथमस्याह्नान्याह · पञ्चाहाश्चत्वारः ॥२५॥ सं° प्रथमे त्रयस्त्रिंशद्रात्रे प्राय-
णीयादनन्तरं चत्वारोऽभिप्लवस्य पञ्चाहा भवन्ति। त्रिभ्योऽतिरात्रो विश्वजित्
॥२६॥ त्रिभ्यः पञ्चाहेभ्योऽवसितेभ्यो विश्वजिदतिरात्रः। सं° पूर्वसूत्रविहितानां च-
तुर्णां पञ्चाहानां मध्ये त्रिभ्यः पञ्चाहेभ्यः (२-१६) परो विश्वजिदतिरात्रो (१७) भवति[6]।

व्रतवद्द्वितीयं त्र्यभिप्लवम् ॥२७॥ सं° द्वितीयं त्रयस्त्रिंशद्रात्रं व्रतवत् महाव्रतयुक्तं
भवति [तथा] त्र्यभिप्लवम् प्रायणीयादनन्तरं प्रथमं त्रयोऽभिप्लवा भवन्ति।

अभिप्लवान्तरयोरतिरात्रौ ॥२८॥ सं° तत्र त्रयाणामभिप्लवानां द्वेऽअन्तराले भवतः ·
अन्तरालयोरतिरात्रौ भवतः[7]। तृतीये त्रयस्त्रयः पञ्चाहा विश्वजितमभितः
॥२९॥ सं° तृतीये त्रयस्त्रिंशद्रात्रे वि°तः त्रयस्त्रयः अभिप्लवस्य पञ्चाहा भवन्ति।

प्रतिलोमाः परे ॥३०॥ सं° [तेषां मध्ये] परे विश्वजितो ये पञ्चाहाभवन्ति ते प्र°माः[8]।

प्रकृतिविहितान्या चत्वारिꣳशद्रात्रात् ॥३१॥ सं° आङत्राभिविधौ · चतुस्त्रिंशद्रा-
त्रमारभ्या च°त्रात् सप्त सत्त्राणि प्र°तानि आवापप्रकारेण पूरणीयानि।

चतुस्त्रिꣳशद्रात्रमन्नाद्यकामानाम् ॥३२॥[9] षट्त्रिꣳशद्रात्रं प्रतिष्ठाकामा-
नाम् ॥३३॥[10] सप्तत्रिꣳशद्रात्रमृद्धिकामानाम् ॥३४॥[11] अष्टात्रिꣳशद्रात्रं

---

1) १ प्राय° २-४ त्रिकद्रु° ५-१६ अभिप्लवौ १७-२६ दश° २७ महाव्रतम् २८ उद°। 2)
१ प्राय° २-६ अभिप्लवस्य पञ्चाहः ७-१८ अभिप्लवौ १९-२८ दश° २९ उद°। 3) १ प्राय° २
-१९ त्रयोऽभिप्लवा २०-२९ दश° ३० उद°। 4) १ प्राय° २-१९ त्रयोऽभि° २०-२९ दश° ३०
महाव्र° ३१ उद°। 5) १ प्राय° २-३ गोऽआयुषी ४-२१ त्रयोऽभि° २२-३१ दश° ३२ उद°।
6) ततश्चतुर्थः पञ्चाहः १८-२२ ततो दशरात्रः २३-३२ उदयनीय ३३ इति। 7) १ प्राय°
२-७ अभिप्लवः ८ अतिरात्रः ९-१४ अभिप्लवः १५ अतिरात्रः १६-२१ अभिप्लवः २२-३१ दशरात्रः ३२
महाव्रतम् ३३ उदय°। 8) १ प्राय° २-१६ त्रयोऽभिप्लवस्य पञ्चाहाः १७ विश्वजिदतिरात्रः १८
-३२ प्रतिलोमास्त्रयः पञ्चाहाः ३३ उदय°। 9) १ प्राय° २-४ त्रिकद्रुकाः ५-२२ त्रयोऽभिप्लवाः
२३-३२ दशरात्रो ३३ महाव्र° ३४ उद°। पञ्चत्रिंशद्रात्रे १ प्राय° २-६ पञ्चाहः ७-२४ त्रयोऽभिप्ल°
२५-३४ दश° ३५ उदय°। 10) १ प्राय° २-२५ चत्वारोऽभिप्ल° २६-३५ दश° ३६ उद°. 11) the
same, but ३६ महाव्र° ३७ उदय°।

प्रजाकामानां पशुकामानां वा ॥३५॥[1] चत्वारिंशद्रात्रं च ॥३६॥ सं॰ चश-ब्दात्प्रजाकामानां पशुकामानां वा भवति[2]। व्रतवन्त्युत्तराणि प्रथमतृतीयवर्जं सप्तैकान्नपञ्चाशद्रात्राणि ॥३७॥ सं॰ उत्तराणि वक्ष्यमाणानि सप्त एकोनपञ्चाशद्रात्राणि सत्त्राणि भवन्ति · [तत्र सप्तानां मध्ये] प्रर्ञ्जमन्यानि [पञ्च व्रतवन्ति] महाव्रतवन्ति भवन्ति [प्रथमतृतीये तु महाव्रतरहिते भवतः]। प्रथमो विधृतिः ॥३८॥ पुंलिङ्गेन सत्त्रस्याभिधानम्। सं॰ प्रथम एकान्नपञ्चाशद्रात्रो विधृतिसंज्ञकः। अषोडशिकावतिरात्रौ ॥३९॥ सं॰ [प्रथमे एका॰द्रात्रे] अतिरात्रौ प्रायणीयोदयनीयावषोडशिकौ भवतः ॥ ॥ द्वितीया कण्डिका ॥२॥ ॥

कौसुरुबिन्दः प्रथमस्त्र्यहः ॥१॥ कौ॰ह्नोऽग्निष्टोमास्त्रिवृत्स्तोमयुक्तास्त्रयः। तत्र विशेषः ·। सं॰ [अत्र] प्रायणीयादनन्तरं कुसुरुबिन्दसंज्ञकदशरात्रस्य यः प्रथमस्त्र्यह्नो[ऽ]ग्निष्टोमास्त्रिवृतस्त्रय इति (२३.५.११) स एवात्र] भवतीत्यर्थः। [तत्र विशेषमाह ·] उक्थ्यौ तूत्तरौ ॥२॥ सं॰ [अत्र कौसुरुबिन्दे] त्र्यहे उत्तरौ द्वितीयतृतीयौ उक्थ्यौ [उक्थ्यसंस्थौ भवतः]। षोडशिदशमा उक्थ्याः ॥३॥ भवन्ति · यत्र संस्थामात्रमेवोद्दिश्यते तत्रापूर्वव्यपदेशः यत्र गौर्ज्योतिरायुरादिवदुपादानम् तत्रैकाह्निकाः दशरात्रे पुनर्द्वादशाह्निका इति · ऐकाह्निके पुनर्नाम्ना धर्मप्रवृत्तिः अपूर्वेषु तु द्वादशाह्निको विध्यन्तः। सं॰ ततस्त्र्यहात्परे [षोडशि]दशमा उक्थ्याः भवन्ति · षोडशी दशमो येषां ते। पृष्ठ्यं चाभितो द्वादश-द्वादश ॥४॥ उक्थ्या भवन्ति। सं॰ [अस्मादेव] वचनाद[त्रि]कः पृष्ठ्यः षडहः तमभितो द्वादश-द्वादश उक्थ्याः। वर्गान्तरेष्वतिरात्राः ॥५॥ सं॰ अत्र ताण्ड्ये (२४.११) पञ्च वर्गाः तेषां चत्वार्यन्तराणि · तेष्वन्तरेषु चत्वारोऽतिरात्राः[4]।

यमातिरात्रम् ॥६॥ व्याख्यास्यतऽइति सूत्रशेषः। सं॰ द्वितीयस्यैकान्नपञ्चाशद्रात्रस्येयं संज्ञा। अभिप्लवौ गोऽआयुषीऽअतिरात्रौ ॥७॥ अभिप्लवावभि-

---

[1]) १ प्राय॰ २-३ गोऽआयुषी ४-२७ चत्वारोऽभिप्ल॰ २८-३७ दश॰ ३८ उद॰। एकोनचत्वारिंशद्रात्रं the same, but २-४ त्रिकद्रुकाः। [2]) १ प्राय॰ २-४ त्रिकद्रु॰ ५-२८ चत्वारोऽभि॰ २९-३८ दश॰ ३९ महाव्र॰ ४० उदय॰। [3]) Thus A. बिंदुसंज्ञकः दश॰ Ss. [4]) १ प्राय॰ २-४ कौसुरुबिन्दत्र्यहः ५ अतिरात्रः ६-१४ नवोक्थ्याः १५ एकः षोडशी १६ अतिरात्रः १७-२८ द्वादशोक्थ्याः २९ अतिरात्रः ३०-३५ पृष्ठ्यः ३६ अतिरात्रः ३७-४८ द्वादशोक्थ्याः ४९ उदयनीयः।

जिद्विश्वजितावतिरात्रौ ॥८॥　　अभिप्लवः सर्वस्तोमनवसप्तदशावतिरात्रौ ॥९॥[1]
आञ्जनाभ्यञ्जनीयेऽभिप्लवाः षट् ॥१०॥ आ॰नीयमिति संज्ञा · तत्र ·। सं॰ आ॰यसंज्ञके एकान्नपञ्चाशद्रात्रे षडभिप्लवा भवन्ति।　　चतुर्भ्यः सर्वस्तोमोऽतिरात्रः ॥११॥ चतुर्भ्योऽभिप्लवेभ्योऽवसितेभ्यः (२-२५) स॰त्रो (२६) भवति । सं॰ ततो द्वौ अभिप्लवौ (२७-३८)[2] ।　　तस्मिन्नुपसत्सु सर्पिर्विपचेयुर्गार्हपत्ये गुल्गुलुसुगन्धितेजनपीतुदारुभिः ॥१२॥ तस्मिन्नाञ्जनाभ्यञ्जनीये उपसत्सु वर्तमानासु गु॰भिः पृथक्पृथक् स॰युः · पुरुषार्थत्वात् गार्हपत्ये न प्राप्नोतीति वचनं त्वेतत् । सं॰ अत्र दीक्षिताः गा॰त्ये गु॰भिः सह पृथक्पृथक् स॰युः [सुगन्धितेजनं रोहिणपुष्पाणि · पीतुदारुर्देवदारुः उडुम्बर इत्यन्यऽइति माधवाचार्याः । अथास्य त्रिधा पक्वस्य घृतस्य विनियोगमाह ·]　　यथासवनं तैः[3] सवनेष्वाञ्जनाभ्यञ्जने कुर्वीरन्नाग्नीध्रेऽहरहः ॥१३॥ प्रातःसवनान्ते गुल्गुलुना[4]　माध्यन्दिने सुग॰नेन　तृतीयसवने पैतुदारवेण · आञ्जनमक्ष्णोः अभ्यञ्जनं शरीरस्य　आग्नीध्रेऽहरहः । सं॰ अहरहः सर्वेषु एकोनपञ्चाशत्संख्ये[ष्वप्यहःसु अग्नीधः शरणे गृहे] तैर्गोल्गुलवादिभिः [सर्पिर्भिर्यथासवनं[5] सवनक्रमेण दीक्षिता आञ्ज॰जने कुर्वीरन्] ।
पृष्ठ्ये वा ॥१४॥ सं॰ षडहे वा आञ्जनाभ्यञ्जने कुर्युः [न सर्वेष्वहःसु] ।
सवनमुखीयेषु भक्षयिष्यन्तो वा ॥१५॥ वा सवनान्तेषु । सं॰ [अथवा स॰षु] चमसेषु भक्षयिष्यन्तः तद्भक्षणात्पूर्वम्] आञ्ज॰कुर्युः [· सर्वेषु सवनेषु सवनस्य मुखे आदौ भवाः सव॰खीयाः प्रस्थितयागचमसा इति यावत्] ।　　यऽआत्मानं नेव जानीरंस्तेषामेतत् ॥१६॥ यऽआत्मानं प्रसुप्तमिव मन्यन्ते तेषामाञ्ज॰नीयेऽधिकारः । सं॰ [ज्ञानातिरत्रान्तर्भावितण्यर्थः　न ज्ञापयेयुरेव]　विद्वत्सभामध्ये स्वात्मानं प्रख्यापयितुमशक्ताः　तेषामेतत्सत्त्रं भवति ।　　संवत्सरसंमिते चतुर्विंशमहः ॥१७॥ सं॰तमिति सत्त्रनाम · तत्र [प्रायणीयादनन्तरं] च॰हर्भवति । सं॰ चतुर्थस्यैकान्नपञ्चाशद्रात्रस्य संज्ञा[6] ।　　अभिप्लवाश्चत्वारः ॥१८॥　　गोऽआयुषी ॥१९॥

---

1) १ प्राय॰ २-१३ अभिप्लवौ १४. १५ गोऽआयुषी १६-२७ अभिप्लवौ २८-२९ अभिजिद्विश्व॰ ३०-३५ अभिप्ल॰ ३६. ३७ सर्वस्तोमनव॰ ३८-४७ दशरात्रो ४८ महाव्रतम् ४९ उदय॰ ।
2) ३९-४८ दशरात्रः ४९ उदय॰ ।　3) ? नतिः K. M pr. m.　4) ? गुल्गुलेन K.　5) see Tâṇḍya २४. १३.　6) १ प्राय॰ २ चतुर्विं॰ ३-२० त्रयोऽभिप्लवाः २१-२९ नवरात्रः ३०-३५ अभि-

[देव॰ यद्यपि सूत्रकारेण गो॒आयुषी॒इत्युक्तम् तथापि पञ्चविंशे आयुश्च गौश्च द्वे ॒अहनी॒इत्येवमत्र विशेषपाठात् (२४. १४) पूर्वमायुस्ततो गौरित्येवमनुष्ठेयम् सूत्रे त्वल्पाच्तरत्वेन गोशब्दस्य पूर्वनिपातः]। त्रिभ्यो विषुवन्मध्यो नवरात्रः ॥२०॥ सं॰ तत्र चतुर्णामभिप्लवानां मध्ये त्रिभ्यो॒भिप्लवेभ्यः परो विध्यो गावामयनिको नवरात्रो भवति[१)]। एकषष्टिरात्रे पृष्ठ्यो नवरात्रमभितः ॥२१॥ अप्रतिज्ञातमप्येकषष्टिरात्रं लाघविकेन सताचार्येणाभिहितम्[२)]। सं॰ [अथ प्रागप्रतिज्ञातमप्येकषष्टिरात्रं लाघवार्थं संवत्सरसंमितस्याज्ञामनुवृत्तिलोभेनात्तरोपनिबध्नाति ॰] नवतः पृष्ठ्यः षडहो भवति। प्रतिलोमः परः ॥२२॥ सं॰ उपरिष्टात्क्रियमाणः पृष्ठ्यः प्रथमः [त्रयस्त्रिंशारम्भणो भवति] अन्यत्सर्वं संवत्सरसंमितेन समानम्[३)]। [पञ्चममेकान्नपञ्चाशद्रात्रमाह ॰] सवितुः ककुभः ॥२३॥ व्याख्यास्यत॒इति सूत्रशेषः[४)]। नवरात्राश्चत्वारः ॥२४॥ तानाचष्टे ॰

अग्निष्टोमाः प्रथमसप्तमोत्तमा नववर्गाणाम् उक्थ्या इतरे ॥२५॥ सर्वे चैते॒पूर्वाः। परे षडभिप्लवे ॥२६॥ सं॰ परे पूर्वोक्तात्पञ्चमात्परे द्वे षष्ठसप्तमे एकान्नपञ्चाशद्रात्रे षष्ठे भवतः। पूर्वस्य चतुर्थ्यो व्रतम् ॥२७॥ सं॰ प्रस्तुतयोः षष्ठसप्तमयोर्मध्ये प्रथमस्य षष्ठस्यैकान्नपञ्चाशद्रात्रस्य चतुर्थ्यो॒भिप्लवेभ्यो॒वसितेभ्यः परं महाव्रतं भवति[५)]। प्रज्ञातिकामानामेतत् ॥२८॥ सं॰ एतत्सत्त्रम्।

प्रकृतिविहितत्र शतरात्रं चतुर्दशाभिप्लवं चतुरहश्च ॥२९॥ ननु च प्रकृतिविहितत्वेनैवैतत्प्राप्नोति चतुर्दशाहश्चेत्यवाच्यम् उच्यते च तत्किमर्थम्[६)] ॰ शतरात्रद्वयप्रज्ञापनाय ॰ एकं प्रकृतिविहितम् तत्र त्रिककुकाः पूर्वमभिप्लवेभ्यो भव-

---

प्र॰ ३६ आयुः ३७ गौः ३८-४७ दशरात्रो ४८ महाव्रतम् ४९ अतिरात्रः।

१) २१ अभिजित् २२-२४ त्रयः स्वरसामानः २५ विषुवान् २६-२८ त्रयः स्वरसा॰नः २९ विश्वजित्। २) ? अत्राचा K. See १७. १०. ५. ३) १ प्राय॰ २ चतुर्वि॰ ३-२० त्रयो॒भिप्ल॰ २१-२६ पृष्ठ्यः २७-३५ नवरात्रः ३६-४१ प्रतिलोमः पृष्ठ्यः ४२-४७ अभिप्लवः ४८-४९ आयुः गौः ५० -५९ दशरात्रः ६० महाव्र॰ ६१ उदय॰। ४) १ प्राय॰ २-३७ चत्वारो नवरात्राः ३८-४७ दशरात्रः ४८ महाव्र॰ ४९ उदय॰। ५) १ प्राय॰ २-२५ चत्वारो॒भिप्ल॰ २६ महाव्र॰ २७-३८ अभिप्लवौ ३९-४८ दशरात्रः ४९ उदय॰। ६) मन्दधियां सुखेन प्रतिपत्त्यर्थमित्यर्थः अन्यथा तेषां कठिन्येवंविधा प्रतिपत्तिर्न भवति यदेतावद्भिरेवाभिप्लवैः पूरणं भवतीति Deva.

न्ति दशरात्राच्च परं व्रतं भवति[1] द्वितीये यथोपदेशमहानीत्यभिप्लवेभ्यः (१.३) परतश्चतुरहः । सं॰ शतसुत्यं सत्त्रं प्र॰तं भवति · चतुरहशब्देन त्रयस्त्रिकद्रुका महाव्रतं चेति[2] । सदोहविर्धानानि चक्रीवन्ति ॥३०॥ सं॰ [च॰न्ति चक्रवन्ति] मञ्जूषादिवच्चक्रयुक्तानि भवन्ति यथा पुरुषैः प्रेरितानि चलन्ति ।

अभिप्रयायमभिषुण्वन्ति देशानपरोधेन[3] ॥३१॥ यावा-यावाभिषवं कुर्वन्ति देशानपरोधेन प्रतिनिवर्तन्ते । सं॰ अहरहः[4] प्रत्यहमभिप्रयायाभिप्रयाय यावायावाभिषुण्वन्ति सोमाभिषवं कुर्वन्ति · कथम् देशानुपरोधेन देशस्याभिषवस्थानस्यानुपरोधोऽबाधो देशानुपरोधः अभिगमनं कृत्वा पश्चात्स्वस्थानमागत्याभिषवः कार्यः । अहरहरभिप्लवेषु त्रिकद्रुकेषु वा ॥३२॥ वेति विकल्पः । सं॰ अभिप्रयायमभिषुण्वन्तीत्येतदभिप्लवेष्वेव[कर्तव्यम् न तद्व्यतिरिक्तेषु दशरात्रमहाव्रतत्रिकद्रुकप्रायणीयोदयनीयेषु अथवा त्रि॰षु एवैतत्कर्तव्यम् नाभिप्लवदशरात्रमहाव्रतप्राय॰ । अभिप्लवाभ्यासेनाभिपूरणम् ॥३३॥ सं॰ प्रकृतिविह्हितानां सत्त्राणाम् [यदा चाभिप्लवाभ्यासो न सम्भवति तदा तस्यादितः पञ्च इत्याद्युपायः (१.८)] । सकृत्प्रयोगी दशरात्रः ॥३४॥ प्रकृतिविह्हितानामेष धर्मः । सं॰ द्वादशाह्निको दशरात्रः स॰गी भवति एकस्य सत्त्रस्य मध्ये [एकवारमेव प्रयुज्यते] । व्रतवन्ति सर्वजिद्दीक्षाणि ॥३५॥ सं॰ यानि महाव्रतसंयुक्तानि सत्त्राणि तानि सर्वजिद्दीक्षाणि भवन्ति [यथा सर्वजिति (२२.१.४४-४५) चतुर्दिनाधिकं संवत्सरं दीक्षाः एकदिनाधिकं संवत्सरं वा संवत्सरं वा षण्मासान्वा] ।

सप्तदशरात्रादीनि त्रिंशदन्तान्येकऽएकान्नपञ्चाशद्रात्रे चाष्टादशदीक्षाणि पौर्णमासीप्रक्रमाणि ॥३६॥ स॰दीनि रात्रिसत्त्राणि त्रि॰नि एकान्न॰त्रे च यानि व्रतवन्ति तान्यष्टादशदीक्षाणि पौ॰माणि चेकऽइच्छन्ति एके यथाप्राप्तम् व्रतवन्त्वमात्रं[5] सर्वजिद्दीक्षता च । सं॰ सप्तदशरात्रादारभ्य त्रिंशद्रात्रपर्यन्तानि द्वे एकान्नपञ्चाशद्रात्रे च [ये महाव्रतवर्जिते प्रथमतृतीये विधृत्याञ्जनाभ्यञ्जनीयसंज्ञे] ·

---

1) ताण्ड्ये अस्यैव शतरात्रस्य दर्शनात् स्वबुद्ध्या शतरात्रद्वयकल्पनं निर्मूलमिति प्रतिभाति Deva. 2) १ प्राय॰ २-४ त्रिकद्रु॰ ५-८८ चतुर्दशाभिप्लवाः ८९-९८ दशरा॰ ९९ महाव्र॰ १०० उदय॰ । 3) Thus KM. ३. शानुप॰ A. Ss. शामुप R. 4) Ss. and A. join अहरहः to this sûtra, not to ३२. 5) ? ॰वंतमात्रं K.

पौर्णमास्या[मा]रम्भो येषां तानि ॥ ॥ शतातिरात्रꣳ सत्त्रमुपेयुरिति श्रूयते (११. ५. ५. ६) · तत्र संदेहः · किं शातरात्रिकाणामह्नां संस्थात्वमात्रमुच्यते उत द्वादशाहस्य यदाद्यमहरतिरात्रसंस्थम् तदेतत्कृत्वोऽभ्यसितव्यम् उत दशरात्रस्यातिरात्रसंस्थस्यैषोऽभ्यासः आहो स्विदेतत्संख्यासंयुक्तानामतिरात्राणां विधिरिति · किं तावत्प्राप्तम् · सूत्रेणैव पक्षः · शतातिरात्रेऽहानि शतरात्रसामान्यात् ॥३७॥ शंत्रे शतमह्नां श्रूयते तद्वातरात्रिकाण्यहानि प्रवर्तन्ते · शतसंख्यावच्छिन्नस्य हि धर्मापेक्षायां सत्यां शतरात्रस्य पर्युपस्थापक[त्व]मिति · एवं प्राप्तेऽभ्याह · । सं॰ शंत्रे शतरात्रस्याहानि भवन्ति · कुतः शत॰न्यात् ते शतातिरात्रꣳ सत्त्रमुपेयुरिति (११.५.५.६) श्रुतम् अहानि [च] तत्र न श्रुतानि [अतः शतसुत्यवसादृश्येन शतरात्रस्य सर्वाण्यहान्यतिरात्रसंस्थानि भवन्ति · इति पूर्वः पक्षः । सिद्धान्तमाह ·] । द्वादशाहाद्यं वा तत्प्रकृतेः ॥३८॥ अत्र वृद्धयाज्ञिको यशोगोप्याचष्टे द्वादशाहस्य यदाद्यं प्रायणीयमहरतिरात्रसंस्थम् तस्यैतदेतत्संख्याविधानमिति एवं चातिरात्रप्राप्ती शतसंख्याविधानमिति · यत्पुनरुक्तम् शतरात्रः प्रवर्तत इति तदयुक्तम् न हि शतातिरात्रस्य शातरात्रिकधर्मप्रवृत्तौ प्रमाणमस्ति उभयत्र ह्यानुमानिकेन वचनेन द्वादशाहविध्यन्तप्रवृत्तिरिष्यते तस्मान्न शातरात्रिको विध्यन्तः · यदप्युक्तम् द्वादशाहाद्यस्याङ्ग इयं संख्या विधीयत इति तदप्ययुक्तम् पृथक्कनिवेशिनी हि संख्या भवति न च प्रायणीयेऽभ्यस्यमाने पृथक्कनिवेशित्वसम्भवः तस्मादेतदप्यनुपपन्नमेव । पितृभूतिराचार्यः सूत्रमन्यथा व्याचष्टे द्वाद॰कृतेरिति द्वादशाहाद्यं प्रवृत्तिधर्माणां[1] विज्ञानीमः यः सत्त्रेषु प्रवर्तत इति कश्चासौ[2] दशरात्रः स हि सर्वसत्त्रेषु प्रवृत्तिधर्मेति · एतदपि नोपपद्यते · न हि दाशरात्रिकेष्वन्वयप्राप्तेष्वहःसु संस्थान्यत्वं शतसंख्याविधानं चोपपद्यते वाक्यभेदप्रसङ्गात् · अत्रापि च पृथक्कनिवेशिनी नैव संख्या भवति दशरात्राभ्यासात् · तस्मादेतदप्यसदेव । अत्र वदामः · द्वादशाह आद्यो मूलभूतो यस्य शतातिरात्रस्य तद्द्वादशाहाद्यं शतातिरात्रम् द्वादशाहमूलमित्यर्थः · कुत एतत् तत्प्रकृतेः द्वादशाहो हि प्रकृतिः सर्वसत्त्राणामित्युक्तमेव ·

१) ? प्रवृत्तिधर्माणां K. २) ? कश्चादौ K.

अपि च यत्राहर्विशेषो नाम्नायते तत्र दशरात्रप्रवृत्तिर्भवति इह संख्याविशिष्टानामतिरात्रसंस्थानामहर्विशेषाणामाम्नानाद्दशरात्रप्रवृत्तिर्न युक्ता इति · तस्मादियमेव व्याख्या द्वादशाहः आद्यः प्रकृतिभूतो यस्य शतातिरात्रस्य तद्द्वाद्यं शतातिरात्रमिति बहुव्रीहिः । सं॰ द्वादशाहप्रकृतिकं शतातिरात्रं भवति [न शतरात्रप्रकृतिकम् अतश्चात्र द्वादशाहिका एव धर्मा भवन्ति न शतरात्रधर्माः · अहानि तु शतातिरात्रसमाख्ययैव विहितानि शतमतिरात्रा यस्मिंस्तच्छतातिरात्रमित्यन्वर्थसंज्ञाविज्ञानात् अन्यथा एवंविधायाः संज्ञाया वैयर्थ्यापत्तेः · तेनात्र शतमतिरात्रा अपूर्वा एव विधीयन्ते · तेषु च सर्वेषु द्वादशाहधर्मा भवन्तीति सिद्धम्] ।

शताग्निष्टोमे शतोक्थ्ये च ॥३९॥ एष एव न्यायः । शतातिरात्रऽएव कर्म विचारयति · आश्विनस्याग्नेयान्ते प्रतिप्रस्थाता व्युत्क्रामतादि कृत्वा मैत्रावरुणाय प्रातरनुवाकमुपाकृत्यान्तर्यामऽ हुत्वा प्रपीड्य पवित्रं द्रोणकलशे निदधाति ॥ ४०॥ आश्विनस्य शस्त्रस्य[1] आग्नेयसूक्तान्ते प्रतिप्र॰वाकमुपाकरोति · अन्तर्या॰कलशे स्थापयति । सं॰ स्पष्टम् । सशेषऽ होतृचमसम् ॥४१॥ स्थापयति । ततः ·

तिरोऽह्न्यादि करोति पूर्वस्याह्नः ॥४२॥ [देव॰ ततः सूर्यऽउदिते आश्विनशस्त्रे समाप्ते अध्वर्युः पूह्नः ति॰दि तिरोऽह्न्यसोमयागादि कर्म करोति · तिरश्च तदहश्चेति विशेषणं विशेष्येण बहुलमिति (पा॰ २.१.५७) कर्मधारयः तिरोऽह्न इति रूपम् · रात्र्या अन्तर्हितं व्यवहितमहरिति तस्यार्थः · तिरोऽह्नि रात्र्यन्तर्हितेऽहनि भवाः सोमास्तिरोऽह्न्याः · आश्विनशस्त्रकयागसम्बन्धिनः चमसस्थाः सोमाः पूर्वदिननिष्पन्नत्वात्तिरोऽह्न्या इत्युच्यन्ते तत्प्रचारादि करोतीत्यर्थः] ।

ग्रहग्रहणाद्या विप्रुड्ढोमात्कृत्वा[2] ॥४३॥ [देव॰ पूर्वस्याह्नो यज्ञपुच्छे समाप्ते पुनः पवित्रं वितत्य होतृचमसे यजमानेन हस्तेन गृहीते प्रकृतिवद्धारायां प्रवृत्तायामध्वर्युरैन्द्रवायवादिग्रहग्र॰] ॥ ॥ तृतीया कण्डिका ॥३॥ ॥

सवनसंततिनिं जुहोत्यग्निः प्रातःसवनऽइति ॥१॥ सवनसंततिसंज्ञकं होमं करोति अग्निः॰नऽइत्यनेन मन्त्रेण (१.३.२१) । सं॰ अथानुपूर्व॰पद्याधाऽइति श्रवणात् (११.५.५.११) । संवत्सरप्रभृतीनि गवामयनप्रकृतीनि तद्गुणदर्शनात् ॥२॥

1) ? सञ॰ K. 2) हो K. M. ३. १.

सं॰तीनि यानि सत्राणि तानि ग॰तीनि भवन्ति संवत्सरसामान्यात् · तद्गु॰नात् दृश्यन्ते हि तेषु गावामयनिका गुणाः अथ यत्पृष्ठ्य० षडहमुपयन्ति अथ यदभिप्लव० षडहमुपयन्तीति (१२. १. ३. ११ १०)। आदित्यानामयनेऽभिप्लवा-स्त्रिवृत्पञ्चदशस्तोमाः ॥३॥ आदि॰यनमिति संज्ञा सत्रस्य · [देव॰ तत्र गवामयन-प्रकृतित्वात्सर्वं तद्वत्प्राप्तम् · तद्विशेषयति ·] तत्राभिप्ल॰माः भवन्ति। [देव॰ तत्रायु-ग्मान्यहानि त्रिवृत्स्तोमकानि युग्मानि तु पञ्चदशानीति षडहेषु त्रिवृत्पञ्चदशयो-र्विवेकः· उत्तरपक्षे तु विपरीतम् अयुग्मानि पञ्चदशानि युग्मानि तु त्रिवृत्स्तोमका-नीति]। मासाः पृष्ठ्यमध्याः ॥४॥ सं॰ पृष्ठ्यो मध्ये येषां ते · गवामयने हि पृष्ठ्या-न्ता मासा उक्ताः (१३.२.३) [इह पृष्ठ्याः कर्तव्याः द्वौ अभिप्लवौ पृष्ठ्यः द्वावभिप्लवा-वित्येवंरूपाः]। बृहस्पतिसवोऽभिजित्स्थाने ॥५॥ [देव॰ षष्ठे मासेऽभिजिदग्नि-ष्टोम इत्यस्य (१३.२.५) स्थाने त्रिवृद्बृह॰वो भवति ऐकाहिकबृह॰वधर्मक इत्यर्थः]।

इन्द्रस्तोमो विश्वजितः ॥६॥ स्थाने भवति। [देव॰ उत्तरस्मिन्पक्षे सप्तमे मासे · पञ्च-दश उक्थ्यसंस्थः]। विश्वजितः परे ये त्रयोऽभिप्लवास्तेषामुत्तरयो स्थाने त्रिवृतो ऽग्निष्टोमा दश ॥७॥ सं॰ तेषामुत्तरयोर्द्वितीयतृतीययोः स्थाने त्रिवृत्स्तोमका दशा-ग्निष्टोमा भवन्ति। उद्भिद्वलभिदौ च ॥८॥ सं॰ दशभ्योऽग्निष्टोमेभ्यः परौ · [एवं द्वयोरभिप्लवयोः स्थानं पूर्णं कृतम्]। षष्ठमासादौ मध्यमस्थाने पृष्ठ्यः ॥९॥ सं॰ [उत्तरस्मिन्पक्षे] षष्ठमासस्यादौ ये त्रयोऽभिप्लवा गवामयने विहिताः (१३.२.४) तेषां मध्ये मध्यमाभिप्लवस्थाने पृष्ठ्यः षडहो भवति। दशरात्रस्य छन्दोमदशाहः ॥१०॥ सं॰ द्वादशाहिकदशरात्रस्य स्थाने छ॰हो (२३.५.२८-३१) भवति।

अङ्गिरसामयनमादित्यानामयनवत् ॥११॥ विशेषमाह · अभिप्लवास्त्रिवृतः ॥१२॥ त्रिवृत्स्तोमकाः। मासाः पृष्ठ्यादयः पूर्वपक्षे प्रतिलोमाः परे ॥१३॥ सं॰ उत्तरपक्षे मासाः प्रतिलोमाः। योऽभिप्लवमध्ये पृष्ठ्य उत्तमः सः ॥१४॥ सं॰ आदित्यानामयने [उत्तरपक्षे] मध्यमस्थाने पृष्ठ्यः (९) अत्र स उत्तमः। गोऽआ-युषी प्रतिलोमे छन्दोमदशाहश्च ॥१५॥ प्रतिलोम एव। [देव॰ अन्तिमादह्न आरभ्य]। दृतिवातवतोरयनमेकैकेन पृष्ठ्यस्तोमेन मासं-मासम् ॥१६॥ दृति॰नमिति सत्रस्य संज्ञा · तत्रैकै॰मासं नयेत् · पृष्ठ्यस्तोमाश्च त्रिवृदादयः एवं

स्यात्र श्रूयते (ताण्ड्य° २५. ३) त्रिवृता मासम् पञ्चदशेन मासम् सप्तदशेन मासम् एकविंशेन मासम् त्रिणवेन मासम् त्रयस्त्रिंशेन मासमिति · अतस्त्रिवृदादिभिरेकाहैर्मासं-मासं नयेदिति · तदुक्तमाचार्येण · एकाहास्तच्छब्दात् ॥१७॥ इति · तेषां शब्दस्तच्छब्दः सत्राभिधायके उपलभ्यते पृष्ठ्यस्तोमशब्दो ऽपि च एकाहानामेव वाचक उपलभ्यते · पृष्ठ्यस्तोमशब्दास्त्रिवृदादयः । ननु च स्तोमेष्वपि दृश्यते पृष्ठ्यस्य षडहस्य स्तोमाः पृष्ठ्यस्तोमा इति स्तोमेष्वपि भवति · नैतदेवम् · पृष्ठ्यस्तोमशब्दः प्रत्यस्तमितावयवार्थवृत्तितया अश्वकर्णाजकर्णादिवदेकाहानां वाचक इति स्तोमेषु पुनः षष्ठीं कल्पयित्वा समासलक्षणेन तल्लोपेन च स्तोमे न प्रवृत्तिः न च तन्न्याय्यम् तस्मात्पृष्ठ्यस्तोमशब्द एकाहानां वाचक इति · एवं प्राप्तेऽभ्राह · । सं° [अत्रेदं संदिह्यते · किं पृष्ठ्यस्तोमशब्देन त्रिवृदादय एकाहा अभिधीयन्ते उत पृष्ठ्यस्य स्तोमाः पृष्ठ्यस्तोमा इति पृष्ठ्यस्य षडहस्य सम्बन्धिनस्त्रिवृदादय स्तोमा इति · किं चातः · यद्येकाहाभिधानम् एकैकेन त्रिवृदादिना एकाहेन मासस्य पूरणं कर्तव्यम् · अथ पृष्ठ्यस्य स्तोमानामभिधानम् तदा चोदकप्राप्तेषु गावामयनिकेषु नानाविधेष्वहःसु त्रिवृदादेः स्तोममात्रस्य विधानमिति · किं तावत्प्राप्तम् · सूत्रेणैव पक्षः एकाहास्तच्छब्दात्] अत्र पृष्ठ्यस्तोमशब्देन त्रिवृदादय एकाहा एवाभिधीयन्ते तच्छब्दात् [त्रिवृ°त्रिंशेन मासमिति (ताण्ड्य° २५.३) त्रिवृदादय एकाहवाचकाः शब्दा यतः] । नानाहानि वा संघातशब्दात् ॥१८॥ वाशब्दः पक्षव्यावृत्तौ · नानाहानि वा यान्यन्वयप्राप्तानि तेषु स्तोमविधानम् त्रिवृता स्तोमेन मासं पञ्चदशस्तोमेन मासमित्येवमादि · कुत एतत् संघातशब्दो यत्र भवति तत्रैकाहवचने त्रिवृद्वति तदा च[1] मासमिति वाक्यं भिद्यते · अथ पुनर्यो मासः स त्रिवृता स्तोमेनेति नैष दोषो भवति · । सं° अथवा दृतिवातवतोरयनस्य एकैकस्मिन्मासे] नानाहानि भवन्ति · [यानि प्रकृतितः प्राप्तानि · तेष्वेव त्रिवृदादिस्तोमविधानम् न तु त्रिवृदादिना एकैकेनैकाहेन मासपूरणम्] कुतः · संघातशब्दात् यतस्त्रिवृदादयः संघातशब्दाः [संघातवाचकाः स्तोत्रियासंख्यावाचकाः अतो मुख्यया वृत्त्या स्तोत्रियासंघवाचिनः गौण्या वृत्त्या त्वेकाहेषु वर्तन्ते त्रि-

1) ? स च K.

वृत्स्तोमयोगस्त्रिवृदिति · गौणमुख्ययोश्च मुख्ये सम्प्रत्यय इति न्यायात्त्रिवृदा[दि]-शब्दाः पृष्ठ्यसम्बन्धिनां स्तोमानां वाचका इति सिद्धम्] । मध्ये व्रतम् ॥ १९॥ विषुवत्स्थाने व्रतं भवति । सं° विषुवतः स्थाने महाव्रतं भवति ।

उत्तरपक्षं प्रतिलोमम् ॥२०॥ सं° पूर्वपक्षस्य प्रातिलोम्येनोत्तरपक्षो भवति [त्रयस्त्रिंशेन मासं त्रिणवेन मासमित्यादि] । कुण्डपायिनामयनं पौर्णमासीदीक्षम् ॥२१॥ कुण्डपायिनामयनमिति सत्रस्य संज्ञा · तस्य पौर्णमास्यां दीक्षा भवति ।

चतुर्थ्यां वापरपक्षस्य ॥२२॥ इति विकल्पः । सं° फाल्गुनापरपक्षस्य [· वा चैत्र्यां पौर्णमास्यामिति] । मासं दीक्षाः ॥२३॥ तस्य भवन्ति ।

सोममुपनह्य सुत्यास्थानेषु मासमग्निहोत्रं जुह्वति ॥२४॥ सोमोपनहनं कृत्वा यानि सुत्यास्थानानि तेष्वग्निहोत्रहोमः । अग्निहोत्रं च सायारम्भं प्रातरपवर्गम् · तत्र द्वावपि होमौ कालैक्यात्तन्त्रेणोपक्रमितव्यौ प्रधानस्य तु भेदः · चतुर्गृहीतेनाग्नेयीं सायमाहुतिं हुत्वा पुनश्चतुर्गृहीतेन सौरीमाहुतिं जुहोति तन्त्रेणोत्तरां जुहोति । गार्हपत्यकार्यं तत्र प्राग्वंशहित एव न शालाद्वार्ये ज्योतिष्टोमे हि तद्धुतम् न चाग्निहोत्रं ज्योतिष्टोमो न च तदङ्गत्वमिति · आहवनीयस्त्वतिप्रणीत एव । सं° सोमबन्धनपूर्वकम् · [अत्राग्निहोत्रशब्दो नित्याग्निहोत्रधर्मातिदेशार्थः ततश्च तद्धर्मकं कर्मान्तरं मासपूर्तिपर्यन्तं प्रत्यहमत्र भवति] ।

दर्शपूर्णमासाभ्यां मासम् ॥२५॥ नयेयुः । पक्षादौ यद्यद्धविस्तत्सर्वस्मिन् ॥२६॥ सं° [पक्षस्यादौ] प्रतिपदि यद्यद्धविस्तदेव सर्वस्मिन्पक्षे भवति [सकले] शुक्ले दर्शेष्टिः [सकले] कृष्णे पौर्णमासेष्टिः । सारस्वते च प्रथमे ॥२७॥ एवमेव । तन्त्रेण वा समस्तचोदितत्वात् ॥२८॥ वाशब्दः पक्षव्यावृत्तौ · तन्त्रेणैव दर्शपूर्णमासौ कर्तव्यौ · समस्तयोर्हि चोदना दर्श°साभ्यां मासमिति (२५) · न ह्यत्र कालभेदकः तस्माद्ग्निहोत्रवदत्रापि तन्त्रमेव । सं° [न दर्शपौर्णमासस्य पक्षभेदेनानुष्ठानम् किं तर्हि] तन्त्रेण कर्तव्यौ · कुतः स°त्वात् समस्तयोरेव दर्श°मासयोः [प्रत्यहं मासस्य पर्यन्तं विहितत्वात् · सारस्वते तु पक्षभेदेनैव तत्र तथैव] विधानात् । अग्निहोत्रं च ॥२९॥ अस्य सूत्रस्य पूर्वमेवाभिहितो न्यायः (२४)। सं° तन्त्रेण · [न तु नित्याग्निहोत्रवत्सायम्प्रातः पृथक्पृथगिति · अतो दिवसे एव

सायम्प्रातस्तनमग्निहोत्रं तन्त्रेणैव होतव्यम् · एककालत्वादङ्गानि तन्त्रेण · प्रधानावृत्तयस्तु भिन्नाः]। पृथङ्मासाश्चातुर्मास्यपर्वभिः ॥३०॥ नीयन्ते · वैश्वदेवेन मासम् वरुणप्रघासैर्मासम् साकमेधैर्मासम् शुनासीरीयेण मासमिति श्रुतेः (ताण्ड्य° २५. ४)। सं° पृथक् [पृथक्कवारो] मासा नेयाः। साकमेधा दर्शपूर्णमासवत् ॥३१॥ तन्त्रेणेत्युक्तो न्यायः। सोमा वा सामान्यात् ॥३२॥ सं° एते अग्निहोत्रादयः सोमा वा भवन्ति · कुतः सामान्यात् सत्त्रं हि सोमयागैः पूरणीयम्। न जुहोतिशब्दात् ॥३३॥ नैतदेवम् सोमा इति · कुत एतत् जु°ब्दात् मासमग्निहोत्रं जुहोतीति जुहोतिशब्दोऽत्र भवति न चासौ सोमयागेषु प्रसिद्धः तस्मान्न सोमा इति। काममितरे ॥३४॥ इतरे तर्हि दर्शपूर्णमासादयो भवन्तु सोमाः न हि तत्र जुहोतिशब्द इति · नेत्युच्यते · दर्शपूर्णमासादयः शब्दा निरुपपदा एव दर्श°सादीन्प्रत्याययन्ति सोमोपपदाः सोमान् · निरुपपदाश्चेते मासं दर्श°साभ्यामिति तस्माद्दर्श°सादयोऽपि न सोमा एते। सं° दर्श°सादयः कामं सोमा भवन्तु [यतस्तत्र जुहोतिशब्दो नास्ति · परमार्थतस्तु तेऽप्यत्र सोमा न भवन्ति यतो दर्शपूर्णमासादयः शब्दा निरुपपदा अत्र श्रूयन्ते न चातुर्मास्यसोमा दर्शपूर्णमाससोमा इत्येवं सोम[ोप]पदाः अतस्तेऽपि न सोमा इति सिद्धान्तः। एवं षण्मासाः परिपूर्णाः मासश्चात्र सर्वत्र सावनस्त्रिंशद्दिनात्मकः · अथोत्तरेषु षट्सु मासेष्वहान्यह ·] दृतिवातवतोरयनपूर्वपक्षेण षण्मासान् ॥३५॥ दृतिऽयनस्य पूर्व°सान् नयेयुः। [दिव° तत्र विशेषमाह ·] उत्तमे त्र्योऽभिप्लवा दशरात्रो महाव्रतम् ॥३६॥ सं° उत्तमे द्वादशे मासि एतान्यहानि भवन्ति। उपरिष्टादतिरात्रं भवति ॥३७॥ अनुग्रहश्रुतेः यदन्यतरतोऽतिरात्रस्तेनाहीन इति। [दिव° अन्ते एक उदयनीयातिरात्र एव भवति (१२.१.६) न प्रायणीय इत्यर्थः]। उभयतो वा ॥३८॥ अतिरात्रो भवति सत्त्रत्वात् · अनुग्रहश्रुतिस्तु अहीनत्वेन संस्तौति तत्कथम् हविर्यज्ञैर्व्यवहितत्वात्। [दिव° अथवोभयतोऽतिरात्रं भवति प्रायणीयश्चोदयनीयश्चात्र द्वावपि भवत इत्यर्थः]। हविर्यज्ञेभ्योऽतिरात्रमेके सोमानन्तर्यात् ॥३९॥ हुभ्योऽवसितेभ्यः एके प्रायणीयमतिरात्रमिच्छन्ति एवं सोमानन्तर्यं भवति · एके तन्नेच्छन्ति अग्नीषोमीयोत्तरकालता हि तस्य प्रकृ-

तौ दृष्टा इहापि तद्वदेव तस्मात्प्रागेव हविर्भ्यः प्रायणीयः । सं° [उभयतो ऽतिरात्रपक्षे प्रायणीयमतिरात्रमेके आचार्या] हविर्भ्योऽग्निहोत्रदर्शपूर्णमासचातुर्मास्यपर्वभ्यः परं कुर्वन्ति · [एवं हि सर्वेषां] सोमयागानामानन्तर्यमव्यवधानं कृतं भवति इतरथा हविर्यज्ञैर्व्यवधानं स्यात् [· एके एतन्न वाञ्छन्ति · यतः प्रकृतौ प्रायणीयस्याग्नीषोमीयोत्तरकालता दृष्टा · इहापि च तद्वदेवानुष्ठानं युक्तम् · तस्माद्धविर्यज्ञेभ्यः पूर्व एव प्रायणीयो भवति । अन्येभ्यः सत्त्रेभ्योऽत्र विशेषमाह ·] अत्सरुकाः कुण्डपायिनामसाः ॥४०॥ अत्सरुकाः अवृत्तकाः कुण्डा वृत्ताकाराः । सं° अत्र अत्सरुका अवृत्ता मूलज्ञापकचिह्नदण्डरहिताः कुण्डा कुण्डाकारा वृत्ताश्च भवन्ति[1] । पञ्चऽर्त्विजस्त्रीणि-त्रीणि कर्माणि कुर्युः ॥४१॥ सं° [अत्र कुण्डपायिनामयने] वक्ष्यमाणाः पञ्चर्माणि कुर्वन्ति त्रयाणां-त्रयाणामृत्विजां कर्माणि एकैकः करोति । होताधर्यवपोत्रीये च ॥४२॥ चशब्दाद्धौत्रं च । उद्गाता नेष्टृहावाकीये ॥४३॥ मैत्रावरुणो ब्रह्मत्वप्रातिहर्त्रे ॥४४॥ प्रस्तोता ब्राह्मणाच्छंसिग्रावस्तोत्रीये ॥४५॥ सं° सर्वत्र प्रथमान्तः कर्ता । प्रतिप्रस्थाताग्नीध्रीन्नेत्रे[2] ॥४६॥ चकारः (४२) सर्वत्रानुवर्तते ।

मुख्यासनेभ्योऽनुसृप्सर्पगितराणि ॥४७॥ आसनशब्दः स्थानवाची · मुख्यस्थानेभ्यः अनु सृप्त्वा-सृप्त्वा परकीयाणि कर्माणि कुर्युः स्वकर्मकर्तृकस्य चरितार्थत्वात् । सर्पसत्त्रम् व्यत्यासं विराट् कौसुरुबिन्दद्वितीयं च ॥४८॥ सर्पसत्त्रमिति नाम · तत्राहान्याह · विराडेकाहः कौसुरुबिन्दस्य द्वितीयमहः वचनसामर्थ्यात् । सं° [पूर्वं प्रायणीयातिरात्रः ततो द्वन्द्वसोमानां द्वितीयो विराडेकाहोऽग्निष्टोमसंस्थः तथा कौ°बिन्दस्य यद्वितीयं त्रिवृदग्निष्टोमः (२३.५.१३-२०)] एतदह्नर्द्वयं व्यत्यस्य प्रयुञ्जानः सर्वं सत्त्रं पूरयेत् । गवामयनं वाभिगरश्रुतेः ॥४९॥ ग°नमेव वा भवति · कुत एतत् अभिगरश्रवणात् षण्डकुषण्डावभिगरापगराविति श्रवणात् (ताण्ड्य° २५.१५) अभिगरापगरौ च गवामयने दृष्टौ तेन गवामयनं भवति · अत्र वाशब्दं विकल्पार्थमेकऽइच्छन्ति । न चैतद्युक्तम् · अभिगरापगरौ हि लिङ्गमा-

---

1) see २.३.१. 2) Thus १.३. M. K. AB. उन्नेतुः कर्म उन्नेत्रं · आग्नीध्रं च उन्नेत्रं च आग्नीध्रोन्नेत्रे · उद्गात्रादिवादन् (°दत् B.) Deva.

त्रम् विराड्गौःतीयमिति (४८) वचनात् तस्मात्तदेव युक्तरूपमिति लिङ्गं तु संस्तवार्थं भविष्यति ॥ ॥ चतुर्थी कण्डिका ॥४॥ ॥

तापश्चितम् दीक्षाः संवत्सरमुपसदश्च तथा सुत्याः ॥१॥ तापश्चितमिति सत्त्रनाम · तत्र दीर्घं भवन्ति उपसदः सुत्याश्च । इदानीमहान्याह · । [देव· अत्र सुत्या आह ·] गवामयनेनेयुः ॥२॥ ग·नमेव कर्तव्यमित्यर्थः ।

अग्निष्टोमेन वा ॥३॥ इयुः · अपूर्वश्चायमग्निष्टोमः नैकाहिको न द्वादशाहिकः संस्थामात्रोपदेशात् । सं° [अग्निष्टोमसंस्थेन ज्योतिष्टोमेन] पूरणं कर्तव्यम् ।

सर्वजिदभिजिद्विश्वजितां वैकैकेन ॥४॥ सर्वजिदादय एकाहाः । सं° त्रयाणां मध्य ऽएकैकेन पूरणम् । त्रिकद्रुकैर्वा ॥५॥ एतेऽप्येकाहिका एव ।

महातापश्चितं त्रिसंवत्सरोपसत्कम् ॥६॥ सं° महा·तसंज्ञमभिधीयते · त्रयः संवत्सरा उपसदो यत्र तत् । तुल्यमन्यत् ॥७॥ सं° अन्यत्सर्वं प्रागुक्तेन तापश्चितेन तुल्यं समानं भवति । क्षुल्लकतापश्चिते चतुर्मासशो दीक्षोपसत्सुत्यानि ॥८॥ सं° सत्त्रनाम · अतिलघु क्षुद्रम् · चतुर्भिर्मासैर्दीक्षो·त्सुत्या भवन्ति । [तत्राहान्याह ·] विषुवन्तमभितो गवामयनपक्षयोः प्रथमोत्तमौ-प्रथमोत्तमौ ॥९॥ सं° विषुवतः पुरस्तादुपरिष्टात् गवामयनस्य पूर्वोत्तरयोः [पक्षयोः] प्रथमोत्तमौ मासौ[1] । सहस्रसाव्यमग्नेः ॥१०॥ स·व्यं नामाग्नेः सत्त्रम् । सं° अग्नेः सत्त्रं सहस्रसुत्यम् । अभिप्लवानां चतुःषष्ट शतं चतुरहश्च ॥११॥[2]

त्रिसंवत्सर‍ षष्टिदीक्षम् ॥१२॥ त्रि·र्घं सत्त्रम् · तच्च ष·क्षं भवति ।

यथाशक्ति वा ॥१३॥ दीक्षा भवन्ति । आदितस्त्रयः संवत्सराः सौत्याः ॥ ॥१४॥ सं° [अस्मिन्सत्त्रे] आदितः प्रथमाद्गवामयनादारभ्य त्रयः सं·त्याः [सुत्याहानि भवन्तीत्यर्थः] । महासत्त्राण्यतः ॥१५॥ अतः परं व्याख्यायन्ते · महास-

---

१) पूर्वं पूर्वपक्षस्य प्रथमषष्ठौ मासौ विषुवत उत्तरमुत्तरपक्षस्य प्रथमषष्ठौ । ततश्च १ प्रायणीयः २ चतुर्विंशमहः ३-२६ चत्वारोऽभिप्लवाः २७-३२ पृष्ठ्यः एवं प्रथमो मासः । १-१८ त्रयोऽभिप्लवाः १९-२४ पृष्ठ्यः २५ अभिजिदग्निष्टोमः २६-२८ त्रयः स्वरसामानः एवं द्वितीयः । विषुवान् । १-३ त्रयः स्वरसा° ४ विश्वजित् ५-१० पृष्ठ्यः प्रतिलोमः ११-२८ त्रयोऽभिप्ल° एवं तृतीयः । चतुर्थे मासे १-१८ त्रयोऽभिप्ल° १९-२० गोऽआयुषी २१-३० दशरात्रः ३१ महाव्रतम् ३२ उदयनीय इति । २) १ प्रायणीयः २-४ त्रिकद्रुकाः ५-९८८ चतुःषष्टं शतमभिप्लवाः ९८९-९९८ दशरात्रः ९९९ महाव्र° १००० उदय° ।

त्त्वग्रहणं तुल्यधर्मप्रज्ञास्यर्थम् । चतुर्भागं-चतुर्भागमेकैकस्य ज्योतिष्टोमिकैः स्तोमैः[१] ॥१६॥ नयेयुः । सं° एकैकस्य द्वादशसंवत्सरादेर्महासत्त्रस्य चतुर्थं भागं ज्यो°मैः[२] त्रिवृत्पञ्चदशसप्तदशैकविंशैः पूरयेयुः । तेष्वतिरात्रविषुवन्तः स्युर्वा न वा ॥१७॥ तेषु महासत्त्रेषु अति°न्तो भवेयुर्वा न वा भवेयुः · भवेयुरिति कुत एतत् प्रतिसंवत्सरमादिमध्यावसानेषु अतिरात्रविषुवतां दृष्टत्वाद्भवेयुरिति गम्यते · यद्येवम् न भवेयुः कथम् सत्त्रसंयोगेन ह्यतिरात्रश्रवणात् उभयतोऽतिरात्रं सत्त्रमिति (१२.१.६) न संवत्सरसंयोगेन · अतो न प्रतिसंवत्सरमतिरात्रौ · एवं सत्युपसंहरत्याचार्यः · । सं° [महासत्त्रान्तर्गतेषु संवत्सरेषु] अतिरात्रौ [प्रायणीयोदयनीयौ] विषुवांश्च एते त्रयोऽपि प्रतिसंवत्सरं स्युः न वा स्युः । [पक्षान्तरमाह ·] आद्यन्तयोर्वातिरात्रौ विषुवांश्च मध्ये-मध्ये ॥१८॥ वाशब्दोऽवधारणार्थः · आद्यन्तयोरेवातिरात्रौ भवतः सत्त्रस्यैकत्वात् · वि°श्च प्रतिसंवत्सरं मध्ये-मध्ये संवत्सरसंयोगेन तस्य श्रुतत्वात् । द्वादशसंवत्सरं प्रजापतेः ॥१९॥ प्रजापतिसत्त्रस्य संज्ञा । सं° सत्त्रनाम द्वाद°रं सुत्या भवन्ति ।

षट्त्रिंशत्संवत्सरं शाक्त्यानाम् तरसमयाः पुरोडाशाः ॥२०॥ शाक्त्यानामयनमिति संज्ञा सत्त्रस्य · तत्ष°रं भवति · तत्र तर°शाः भवन्ति मांसमया इत्यर्थः । सं° शाक्त्यायनमिति सत्त्रनाम षट्°त्सरसुत्यम् । सर्वत्राविशेषात् ॥२१॥ सर्वत्र सत्त्रे तरसमयाः पुरोडाशा भवन्ति अविशेषश्रुतेः । सं° अत्र सर्वत्र दीक्षणीया[तिथ्यापशुपुरोडाशसवनीया]दयः पुरोडाशास्तरसमया मांसमया भवन्ति [· तथा हि संस्थितेऽहनि गृहपतिर्मृगयां याति स तत्र यान्मृगान्हन्ति तेषां तरसाः सवनीयाः पुरोडाशा भवन्तीति] । सवनीया वा बहुश्रुतेः ॥२२॥ वाशब्दः पक्षव्यावृत्तौ · सवनीया एव तरसमया भवन्ति · कुत एतत् ब°तेः तरसमयाः पुरोडाशा भवन्तीति बहुत्वयुक्तानां हि तरसविधानम् । सं° सवनीया एव तरसमयाः [न सर्वत्र] · पुरोडाशा इति बहुत्वश्रवणात् · [अत्र मांसस्य पेषणाकाले (२.५.६) धान्यमसीत्यत्र मन्त्रे तरसमसीत्येवमूहः कार्यः न तु मृगोऽसीति] ।

शतसंवत्सरं साध्यानाम् ॥२३॥ साध्यानामयनं सत्त्रम् · तच्छत°रं भवति ।

---

१) Thus ३ Ss. R. ज्यो° AB. २) Thus Ss. B. ज्यो° A.

सहस्रसंवत्सरं विश्वसृजाम् ॥२४॥ विश्वसृजामयनमिति सत्त्रस्य संज्ञा · तत्सहस्रं भवति । [देव॰ अत्र संवत्सरशब्दोऽसंभवाद्गौण्या वृत्त्याहर्लक्षक इति प्रागुक्तम् अङ्गानां वाशक्यत्वादित्यत्र (१. ६. २५) तेन सहस्रसुत्यमेतत्सत्त्रं भवति । अथ त्रीणि सारस्वतसत्त्राणि क्रमेणाह ·] यात्सत्त्राणि सारस्वतानि ॥२५॥ यात्वा-यात्वा क्रियन्त इति यात्सत्त्राणीत्येके तदनुपपन्नम् गमनस्य स्वशब्दाभिहितत्वात् तस्माद्यात्सत्त्राणि सारस्वतसत्त्राणीति उभे अपि च संज्ञे एते । सं॰ सारस्वतानीति-संज्ञकानि यात्सत्त्राणि व्याख्यायन्ते · यात्वा-यात्वा क्रियन्ते यात्सत्त्राणि यान्ति च तानि सत्त्राणि [च] यात्सत्त्राणि[इति वा] । सदोहविर्धानाग्नीध्राणि चक्रीवन्ति ॥२६॥ भवन्ति अन्यथा गमनासम्भवात् । [देव॰ एतच्च पत्नीशालाया अप्युपलक्षणम् ।] उलूखलबुध्नो यूपः प्रकृष्यः ॥२७॥ उलूखलमिव बुध्नो यूपस्य भवति · स च प्रकृष्यते न निखन्यते । सं॰ उलूखलस्येव बुध्नं यस्यासौ उध्नः विपुलबुध्नः स्थिरासन इत्यर्थः · प्रकृष्यो देशान्तरनयने प्रकर्षणीयः भूमिसंलग्न एव प्रेरणीयः [न तूत्पाट्य नेय इत्यर्थः] । वत्सतरीशतमृषभाधिकं गर्भिणीनामुत्सृजन्ति सहस्रपूरणाय ॥२८॥ सहस्रपूरणेन हि सत्त्रस्य परिसमाप्तिः । सं॰ ऋषभेणाधिकं गर्भिणीनां वत्सतरीणां शतं सरण्यायारण्ये उत्सृजन्ति · [वत्सभावादुत्तीर्णा वत्सतर्यः] अल्पं तासां वत्सत्वम् बहु तासां गोत्वम् · [वत्सोक्षेति (पा॰ ५. ३. ९४) ष्टरच् षित्वात् ङीष् तेन प्रथमगर्भाणामिति सिद्धम् ·] सहस्रणायेति याः स्त्रियः तासां मातरो न दोग्धव्याः · एवं वर्धमानाः क्षिप्रं सहस्रं सम्पद्यन्ते ।

उपकिरन्त्युपरवस्थानेषु न खनन्ति ॥२९॥ उपकिरणं च मृदः । सं॰ उपरवानुपकिरन्ति न खनन्ति आलेखनमात्रमेव कुर्वन्ति । शुक्लपक्षसप्तम्यां दीक्षा सरस्वतीविनशने ॥३०॥ सरस्वतीविनशनप्रदेशे । सं॰ चैत्र[स्य] शुक्लपक्षे [सप्तम्यां तिथौ] सरस्वतीविनशने सरस्वती[समुद्र]संगमे प्रभासे सारस्वतसत्त्रार्थं दीक्षा भवति [· यत्र सरस्वत्यन्तर्भवति तद्विनशनमुच्यत इत्यग्निस्वामिनः (लाट्या॰ १०. १५. १) · सरस्वती नाम नदी प्रत्यक्स्रोता प्रवहति तस्याः प्रागपरभागौ सर्वलोकप्रत्यक्षौ मध्यमस्तु भागो भूम्यन्तर्निमग्नः प्रवहति नासौ केनचिद्दृश्यते तद्विनशनमुच्यत इति माधवाचार्याः] । द्वादशाहवद्दीक्षोपसदः ॥३१॥ अत्रैकाहिकान्यहानि · तत्र द्वा-

दशाहवदप्राप्तौ सत्यां द्वादशाहवदित्युच्यते । अषोडशिकावतिरात्रौ ॥३२॥ भवतः । तत्रैव प्रायणीयोऽतिरात्रः ॥३३॥ सं° तत्रैव सर°नशनऽएव ।

सांनाय्यं च तस्मिन्[1] ॥३४॥ यज्ञादौ°प्रथमऽइत्युक्तम् (४. २६-२७) · तेन सांनाय्यमत्र प्राप्नोति · अत उच्यते सां°तस्मिन्निति । सं° अतिरात्रे समाप्ते [चकारात्] सांनाय्यमपि तत्रैव सर°शनऽएव । सञ्स्थितेऽध्वर्युराहवनीयसमीपे स्थित्वाभ्यर्धं शम्यां प्रास्यति·तद्गार्हपत्यस्य स्थानम् ॥३५॥ सं° अभ्यर्धं मार्गाभिमुखम् ।

यथोक्तमाहवनीयस्य ॥३६॥ सं° [आहवनीयस्यौत्तरवेदिकस्य स्थानं] यथा प्रकृतावुक्तं (८. ३. ७-८) तथैव भवति ॥ ॥ पञ्चमी कण्डिका ॥५॥ ॥

यथास्थितं यज्ञाङ्गानि हरन्ति ॥१॥ येषु स्थानेषु स्थितानि तत्समवेतान्येव हरन्ति । सं° यज्ञाङ्गानि शालासदोहविर्धानाग्नीध्रीयादीनि य°तं हरन्ति · य°तं [यत्र स्थितानि] यावन्मात्रे अन्तराले यादृशान्यवस्थितानि तथाविधान्येव प्रेरणया[2] वेदिं प्रति हरन्ति । पाञ्सूनादाय भौमानां यथादेशं निवपन्ति ॥२॥ सं° भौमानां भूमिमयानां [यज्ञाङ्गानां] वेदिखरधिष्ण्योत्तरवेदीनां पांसून्यात्रान्तरेणादाय [देवयजनान्तरे वेदिमध्ये] य°शं यथास्वस्थानं निवपन्ति [तूष्णीमेव उत्तरवेदिदेशे तत्पांसून् धिष्ण्यदेशे तत्पांसून्] । यजनीययोरह्नोर्गोऽआयुषी ॥३॥ सं° यजनीययोः प्रतिपदोरुभयोः [यथाक्रमं] गोऽआयुषी भवतः [तावुभावुक्थ्यसंस्थौ · गौरुक्थ्यः पौर्णमास्याम् अमावास्यायामायुरुक्थ्य इति] । पर्वान्तरेषु दर्शपूर्णमासौ ॥४॥ प्रथमे पर्वान्तरे दर्शः द्वितीये पौर्णमासम् एवं व्यत्यासेन । सं° पर्वणोरन्तरालेषु द°सौ भवतः · शुक्लपक्षे प्रत्यहं दर्शयागः कृष्णपक्षे प्रत्यहं पौर्णमासयागः [·अत्राग्न्यन्वाधानवर्जं पत्नीसंयाजान्तं तन्त्रमिति माधवाचार्याः] ।

शम्याप्रासे-शम्याप्रासे वसन्तो यजमानाश्च यन्ति दक्षिणेन तीरेण ॥५॥ श°सऽउषित्वा यागं कृत्वा ततो यन्ति द°रेण सरस्वत्याः । सं° शम्यायाः प्रासे क्षेपणे व°नाः द°रेण यन्ति · [इष्ट्यनन्तरमेव देशान्तरं गत्वा तत्र वासः · प्रातरिष्ट्यन्ते पुनः शम्याप्रासनादि । इह सत्त्रे पर्वसु चन्द्रप्रमाणा एव मासाः स्युः न त्रिंशिनः सावना इति] । दृषद्वत्यप्ययेऽपोनप्त्रीयश्चरुः ॥६॥ सं° दृ°ये सरस्वतीदृषद्वत्योः

[1]) Ss. and AB. draw तस्मिन् over to ३५. [2]) Thus AB. °रणाय Ss.

संगमे [एवं दक्षिणेन तीरेण प्रतिदिनं शम्याप्रासे-शम्याप्रासे वसतां यदा सर॰व-
त्योः संगम आयाति] अपोनप्त्रीयश्चरुर्भवति अपांनपाद्देवताकः [नलातिक्रमदोष-
परिहारार्थम्]। अग्नये कामायेष्टिः प्लक्षे प्रास्रवणे ॥७॥ सं॰ प्ल॰णी सरस्वत्या
उत्पत्तिस्थाने[1)]। तस्यामश्वपुरुष्यौ धेनुके दद्युः ॥८॥ इष्यते अश्वपुरुष्योर्दा-
नम् धेनुत्वे सति तदुपकाराभावात् तत्प्रसूतेश्च दानम् · दानं च प्रासर्पकेभ्यः। सं॰
अ॰ष्यौ अश्वां वडवां पुरुषीं मानुषीं स्त्रियं च ते उभे धेनुके प्रत्यग्रप्रसूते सापत्ये
दद्युः · [दानं चात्र प्रासर्पकाणां मध्ये कस्मैचिद्गुणवते]। अवशिष्टं चैके यज्ञोप-
करणमुदयनीयान्ते ॥९॥ सं॰ [अवभृथानन्तरमुदयनीयासंज्ञिकेष्टिर्भवति तस्या अन्ते]
एके य॰णां घृतधान्यसुवर्णद्रव्यादिकं गुणवते दद्युः। अवभृथमभ्यवयन्ति य-
मुनां कारपचवं प्रति ॥१०॥ कारपचवप्रदेशं प्रति यमुनामवभृ॰न्ति · अनेन चाव-
भृथग्रहणेन सत्त्रसमाप्तिर्लक्ष्यते। सं॰ कारपचवो देशविशेषः · तन्मध्ये यमुना
वर्तते · तां का॰चवदेशस्थां यमुनां प्राप्य तत्रावभृ॰न्ति। पुरस्ताद्वावभृथा-
दग्नये कामाय ॥११॥ इष्टिर्भवति। सं॰ इष्टेः (७) कालान्तरविधानम्।

उदवसानीयान्ते वा ॥१२॥ वेति विकल्पः। सं॰ इष्टिर्भवति। यथार्थं वि-
प्रव्रजेयुः ॥१३॥ सं॰ इदं सत्त्रं समाप्तम् अतो यजमानाः स्वस्वकार्यार्थं गच्छेयुः।

अपृष्ठशमनानि सारस्वतानि ॥१४॥ सं॰ पृष्ठशमनीयवर्जितानि सा॰तसत्त्राणि
भवन्ति [पृ॰नीय एषु न भवतीत्यर्थः · सत्राङ्गं हि सः (१३. ४. १) अतोऽत्रापि प्रा-
प्नोति · अत्र प्रतिषेधादन्येषु सत्त्रेषु सत्त्रान्ते नियमेनायं भवतीति प्रतीयते]।

त्रीण्येषाम् साम्युत्थानान्यतिरात्रैः ॥१५॥ एषां सारस्वतसत्त्राणां मध्ये सा॰नि
त्रीणि भवन्ति। सहस्रपूरणगृहपतिमरणसर्वज्यान्यः ॥१६॥ प्रथमं
साम्युत्थानं गवां सहस्रपूरणे द्वितीय गृहपतिमरणे तृतीयं सर्वज्यान्याम्
सर्वज्यानिश्च सर्वहानिरुच्यते। सं॰ [पूर्वं सत्त्रारम्भकाले यद्वत्सरीणां गर्भिणी-
नां शतमृषभेणाधिकं सहस्रपूरणार्थमुत्सृष्टमभूत् (५.२८) तत्र] यदा तासां [तत्प्र-
सूतानां च] प्रसवैः गवां सहस्रस्य पूरणं भवति यदा गृहपतेर्मरणं भवति
यदा [सर्वासां] गवां हानिः सर्वज्यानिर्भवति · एतानि त्रीणि एषां दीक्षितानां

1) See Tāṇḍya २५.१० चतुश्चत्वारिंशदाश्वीनानि सरस्वत्या विनशनात्प्लक्षः प्रास्रवणः।

साम्युत्थानानि अर्धसमाप्तसत्त्रपरित्यागकारणानि · तत्रातिरात्रैर्वक्ष्यमाणैर्गवादिभिरिष्ट्वा साम्युत्थानं कुर्युः [प्रकृतप्राप्तत्वणात्प्रागेव समापनं कुर्युः]। सहस्रपूरणे गौः ॥१७॥ सं॰ स॰णे सति यदा साम्युत्थानं क्रियते तदा गौरतिरात्रो भवति।

तदेव दत्त्वा ॥१८॥ सं॰ [तत्र गवि अतिरात्रे] गवां सहस्रं दत्त्वा साम्युत्तिष्ठेयुः।

आयुर्गृहपतिमरणे ॥१९॥ अतिरात्रो भवति। सर्वज्यान्यां विश्वजित् ॥२०॥ अतिरात्रः कर्तव्यः। [दिव॰ अत्र तासामेव गवामधिकारः · तासामेव सहस्रसम्पत्त्यर्थमुत्सृष्टानां हानौ साम्युत्थानेऽधिकारो भवति न द्रव्यान्तरस्य हानौ · कुतः प्रकरणाभूतत्वात्]। ज्योतिष्टोमो वा सर्वेषाम् ॥२१॥ [दिव॰ अथवा स॰षां गवादीनां स्थाने ज्योतिष्टोमातिरात्र एवोदयनीयो भवति]। नावभृथः सरस्वत्याम् ॥२२॥ सं॰ साम्युत्थाने सति स॰त्यां नावभृथं कुर्युः। परिपार्श्वेषूदकेषु ॥२३॥ सं॰ [यदि सरस्वत्यामवभृथकरणप्रतिषेधस्तदा] सरस्वतीपरिपार्श्ववर्तिषु नदीतडागादिषु अवभृथं कुर्युः। असत्सूद्धृत्य ततः ॥२४॥ यदि नाम न सन्ति ततः सरस्वत्या एवोदकमुद्धृत्यावभृथः कार्यः। सं॰ ततः सरस्वत्याः [·महति पात्रे कटाहादौ। एवमेकं सारस्वतं सत्त्रमुक्तम् · अथ द्वितीयमाह ·] द्वितीये दृतिवातवतोरयनस्याहनी त्रिवृत्पञ्चदशस्तोमे पर्वान्तरेषु व्यत्यासम् ॥२५॥ सं॰ द्वितीये सारस्वतसत्त्रे पर्वणोः पौर्णमास्यमावास्ययोरन्तराले[षु शम्याप्रासे शम्याप्रासे दर्शपूर्णमासयोः स्थाने दृ॰नस्य सम्बन्धिनी] त्रि॰स्तोमे अहनी व्यत्यासं भवतः [एकस्मिन्दिने त्रिवृत् द्वितीये पञ्चदशः तृतीये त्रिवृत् चतुर्थे पञ्चदशः · त्रिवृदग्निष्टोमसंस्थः पञ्चदश उक्थ्यसंस्थः]। तयोश्चेदसमाप्तयोरागच्छेद्यजनीयकालस्तमुपेत्य शेषमनुसमापयेयुः ॥२६॥ सं॰ [यदा तिथिक्षयवृद्धिवशादेकस्मिन्पक्षे समप्रयोगो न सिध्यति] त्रिवृत्पञ्चदशस्तोमयोरसमाप्तयोर्यदि यजनीयकाल आगच्छेत् [त्रिवृति कृते पञ्चदशे अकृते इत्यर्थः तदा तं यजनीयकालीनं] गामाग्रुर्वा उपेत्य शेषं समापयेयुः [·तत आरभ्याग्निमं पक्षमुपक्रमेयुः]। शुक्लपक्षश्चेत्त्रिवृदग्निष्टोम इत्येके ॥२७॥ एके शेषपरिसमाप्तिमिच्छन्ति। [दिव॰ पर्वान्तरेषु व्यत्यासेन त्रिवृत्पञ्चदशयोरनुष्ठानपक्षात्पक्षान्तरमाह · यदि शु॰क्षः तदा सकलेऽपि तस्मिन् त्रि॰मः केवलः कार्यः कृष्णपक्षे सकलेऽपि पञ्चदश उक्थ्यः केवलः कार्यः]। पञ्चदश उक्थ्यः कृष्णे ॥२८॥

भवतीत्येके । [दिव° अथ तृतीयं सारस्वतमाह ·] तृतीये यजनीययोरह्नो-रभिजिद्विश्वजितौ ॥२९॥ सं° यज्ञोः गोऽआयुषोः स्थाने । पर्वान्तरेषु त्रिक-द्रुकाः ॥३०॥ सं° पर्वणोरन्तराले[षु पौर्णमास्यमावास्ययोरन्तरालेषु शम्याप्रासे दर्श-पूर्णमासयोः स्थाने त्रि°काः उभयोः पक्षयोर्भवन्ति] । पूर्ववदनुसमापनम् ॥ ३१॥ [दिव° अत्रापि तिथिवृद्धिक्षयवशात्त्रिकद्रुकेष्वसमाप्तेषु यजनीयकाल आगच्छेत् (२६) तदा पूर्ववदनुस°नं कर्तव्यम् त्रिकद्रुकशेषेणोत्तरपक्षे उपक्रमः प्रारम्भः कार्य इत्यर्थः] ॥ दार्षद्वतम् अर्विगाचार्ययोरन्यतरस्य गा रक्षेत्संवत्सरम् ॥३२॥ सं° दा°तम् एतत्संज्ञं सत्रमभिधीयतऽइति शेषः · अरण्ये तृणान्याशयितुं पालयेत् ।
अपरं व्युष्टे नैतन्धवेऽग्निमिन्धीत ॥३३॥ नैतन्धवप्रदेशे विगतोदके । सं° अपरं द्वितीयं संवत्सरं व्युष्टे विगतोदके नैतन्धवे सरस्वत्यां वर्तमाने ह्रदे अग्निं लौ-किकं काष्ठादिभिरिन्धीत · [सरस्वत्यास्तीरे नैतन्धवा नामार्माः पुराणा ग्रामाः सन्ति · तथा च मन्त्रान्तरम् येषामिमे पूर्वे[1]ऽअर्मास आसन्नयूपाः सद्म विभृताः पुरूणीति] । कुरुक्षेत्रे परिणाहि स्थलेऽग्न्याधेयमन्वारम्भणीयान्तं भवति ॥ ३४॥ अन्वा°न्तमिति कुत एतत् इष्ट्यङ्गत्वादन्वारम्भणीयायाः । सं° ततस्तृतीये संवत्सरे परीणान्नामस्थले° । दर्शपूर्णमासान्तं वा ॥३५॥ वाशब्दः पक्षव्यावृत्तौ · दर्श°सान्तमेव भवति नान्वारम्भणीयान्तम् दर्श°सस्य ह्रीष्ट्यन्तरे प्रवृत्तिर्न्याय्येति ।
आहिताग्निश्चेद्व्युष्टेऽग्निहोत्रमेव जुहुयात् ॥३६॥ संवत्सरम् । सं° पूर्वमेवाहि-°श्चेत्] कृतश्रौताग्न्याधानो भवेत् [एवकारेण ततोऽन्यत्प्रागुक्तमग्नीन्धनं वार्यते गोरक्षणं तु भवत्येव] । पुरोडाशोऽग्नये तेन यजमानः पूर्ववत् ॥३७॥ तेन यागं कुर्वन् पूर्ववच्छम्याप्रासे दृषद्वतीतीरेण दक्षिणेन गच्छेत् । सं° अग्नये ऽष्टाकपालः पु°शः प्रत्यहं भवति · तेन पुरोडाशेन पूर्ववदिति शम्याप्रासे-शम्या-प्रासे वसन्यजमानः दृषद्वत्या दक्षिणेन तीरेणेत्येतावल्लभ्यते (५) ।
एत्य च दृषद्वतीतीरेण ॥३८॥ तद्वदेव । [दिव° तस्या उत्पत्तिस्थानमागत्य] ।
अवभृथमभ्यवयन्ति यमुनां त्रिप्लक्षावहरणं[2] प्रति ॥३९॥ त्रिप्लक्षावहरणास्यार्जव्येन

---

1) Thus Dhanvin at Drâhyây. ३१. ३. पूर्वेषु AB. 2) Thus १. ३. AB. M pr. m. K (schol.). Lâtyây. १०. १९. १. Tâṇḍya २५. १३. त्रिःप्ल° K (text). M sec. m. R.

यमुनामवभृथमभ्युपैति · तत्र च · । सं॰ यमुनां प्राप्य त्रिप्लक्षे देशे [त्रिप्लक्षान्तन-पदं प्राप्य तत्रैव यमुनायामवभृ॰वैति · तत्रैव हि देशे दृषद्वती मनुष्येभ्यस्तिरो-भवति बहूदकापि सती तत्रैवान्तर्हिता भवतीत्यर्थः । अत्र दार्षद्वतावभृथे ·]

स्वयमेव सामगानम् ॥४०॥ [देव॰ यजमानः करोति · प्रस्तोतुरभावात्] ।

आप्लवनमात्रं वा ॥४१॥ भवति नावभृथः · वाशब्दो विकल्पार्थः । सं॰ स्नानमात्रम् नावभृथेष्ट्यादिकं किंचित् । उदेत्यैतयैवेष्ट्या यजेत ॥४२॥ परिसमाप्य सत्रम् । सं॰ अवभृथादागत्यैतयैवाग्नेय्या इष्ट्या । पशुना वा तद्देवतेन ॥४३॥ यजेत । अग्निष्टोमेन वा ॥४४॥ यजेतेति ॥ ॥ षष्ठी कण्डिका ॥६॥

तुरायणं वैशाखीशुक्लस्य पञ्चम्याम् ॥१॥ तुरायणमिति सत्रनाम । चैत्रस्य वा ॥२॥ शुक्लपञ्चम्यां भवति । प्रातराहुत्यन्ते ऽदीक्षितो दीक्षारूपाण्यासजते ॥३॥ तूष्णीं कृष्णाजिनादीनि ॥४॥ स्वयमेव । हवींषि निर्वपत्याग्नेयमैन्द्रं वैश्वदेवं चरुं सवनकालेष्वेकैकम् ॥५॥ कुत एतत् आग्नेयं प्रातःसवनम् ऐन्द्रं माध्यन्दिनम् वैश्वदेवं तृतीयसवनमित्यर्थवादात् । सं॰ प्रातर्मध्यन्दिनापराह्णेषु एकैकं हविर्निर्वपति । तन्त्रेण वा ॥६॥ वाशब्दः पक्षव्यावृत्तौ · तन्त्रेण वा करोति न सवनकालेषु · कुत एतत् कालैक्यात् · तस्मात्तन्त्रेणैव । अन्वहम्[1] ॥७॥ हवींषि निर्वपति । [देव॰ प्रत्यहमेकैकं वा हविर्निर्वपति] । वा[2] हविःशेषभक्षः ॥८॥ वा प्राकृताशनः[3] । [देव॰ अत्र तुरायणे यजमानो हंस्नो भवति कर्तृत्वाविशेषात्पत्न्यपि] । संवत्सरं यजते ॥९॥ अत्राधस्तनसूत्रे वाशब्दमन्यथा वर्णयन्ति · संवत्सरं यजनीयेषु यागपरिसमाप्तौ सत्यामन्वहं वेत्युच्यते · ततश्चावधारणैषा · संवत्सरशब्देन हि सर्वाण्यहानि गृह्यन्ते तेन यजनीयान्येव तत्रैव प्रयोगदर्शनात् । [देव॰ एवमुक्तप्रकारेण सं॰जते वर्षपूर्तिपर्यन्तमेतत्प्रत्यहं करोतीत्यर्थः] । अनियतोदकं दार्षद्वतवदवभृथादि ॥१०॥ अनियतोदको ऽवभृथः कार्यः · आदिग्रहणाच्च उदेत्यैत यजेतेत्येवमादि (६. ४२) लभ्यते । सं॰ स्वयमेव सा॰जेतेत्येतावदतिदिश्यते (६.४०-४२) [·तद्वदेव त्रिप्लक्षावहरणं प्रति यमुनायां नियमेनावभृथः प्राप्नोति · तत्राह] अ॰निकम्

[1] अन्वहं वा AB. [2] AB join वा to ७. [3] ? प्रकृ॰ K.

अत्रावभृथे उदकनियमो न भवति ॥ द्वादशाहविकल्पाः ॥११॥ व्याख्यायन्त ऽइति सूत्रशेषः। सर्वाग्निष्टोमो भरतद्वादशाहः ॥१२॥ भर॰शाहे सर्वऽएवाग्निष्टोमा भवन्ति प्रायणीयोदयनीयवर्जम्। सं॰ दशरात्रस्य स्थाने दशाप्यग्निष्टोमा भवन्ति आद्यन्तयोरतिरात्रावेव। संक्रमद्वादशाहे दशरात्रस्य त्र्यहप्रथमानि प्रथमस्त्र्यहः ॥१३॥ सं॰ संक्र॰हे [द्वादशाहिकस्य] द॰स्य दशमवर्जितानि नवाहानि त्रेधा विभज्य त्रयस्त्र्यहाः कर्तव्याः · तेषां त्रयाणां त्र्यहाणां यानि प्रथमान्यहानि तैरत्र प्रथमस्त्र्यहो भवति [तेन प्रथमे त्र्यहे पृष्ठ्यस्य प्रथमं चतुर्थं छन्दोमानां प्रथमं चेति सिद्धम्]। त्र्यहद्वितीयानि द्वितीयस्त्र्यहस्त्र्यहतृतीयानि तृतीयस्त्र्यहः ॥१४॥ सं॰ त्रयाणां त्र्यहाणां यानि द्वितीयान्यहानि तैरत्र द्वितीयस्त्र्यहः कार्यः [· तेन पृष्ठ्यस्य द्वितीयं पञ्चमं छन्दोमानां द्वितीयं च] · त्रयाणां त्र्यहाणां यानि तृतीयान्यहानि तैरत्र तृतीयस्त्र्यहः [· तेन पृष्ठ्यस्य तृतीयं षष्ठं च छन्दोमानां तृतीयं च]।

प्रकृत्या दशमम् ॥१५॥ अविकृतरूपमेव दशमं भवति। सं॰ अविवाक्यमेवेत्यर्थः [ अत्रातिग्राह्यग्रहणाभावः षडहस्य विकृतत्वात्]। अग्निष्टुदिन्द्रस्तुत्सूर्यस्तुद्वैश्वदेवस्तुतां वैकैकेन ॥१६॥ दशरात्रस्य पूरणम्। सं॰ एषामेकैकेन दशरात्रपूरणम् [केवलेनाग्निष्टुता अथवा केवलेनेन्द्रस्तुतोक्थ्येन अथवा सूर्यस्तुता उक्थ्येन अथवा वै॰ता उक्थ्येनेति]। त्रिकद्रुकैर्वाहीनैकाहानां वैकैकेनाप्तोर्यामराजसूयवर्जम् ॥१७॥ सं॰ त्रि॰र्वा समुदितैरेवाभ्यस्तैर्दशरात्रस्य पूरणम् · अही॰केन अहीनाश्च एकाहाश्च अहीनैकाहाः तेषामही॰हानां मध्ये एकैकेन द्व्यहादिना पौण्डरीकान्तेनाभ्यस्तेन एकैकेन भूरादिना एकाहेन दशकृत्वोऽभ्यस्तेन दशरात्रस्य पूरणम् · [एकाहानां मध्ये] अप्तोर्यामेणा राजसूयाहोभिश्च दशरात्रस्य पूरणं न कार्यम्। गोऽआयुर्भ्यां वा ॥१८॥ सर्वऽएवेति विकल्पः। [दिव॰ आभ्यां मिलिताभ्यां पञ्चवारमावृत्ताभ्यां एकैकेन वा दशरात्रस्य पूरणं कर्तव्यम्]। अभ्यासानुपपत्तौ ज्योतिष्टोमः पूरणः ॥१९॥ तच्चैतद्रूपापन्नऽएव सम्भवति नैकाहरूपत्वे। सं॰ पूर्वोक्तैरहोभिरभ्यासो नोपपद्यते [यदा] तदा ज्यो॰मो दशरात्रस्यावशिष्टानामह्नां पूरणो भवति। यथोक्तस्य स्तोत्रात् स्तोत्रियं वऽर्चं वा साम वा यजुर्वाहर्वान्यत्कृत्वा यजेत ॥२०॥ सं॰ [अथ प्रकारा-

न्तरेण द्वादशाहविकल्पा उच्यन्ते ·] यथोऽस्य द्वादशाहस्य स्तोत्रमेकमन्यत् [कुर्यात्
अथवा स्तोत्रं तदेव] एकां स्तोत्रिया[मेकामृचमन्यां[१] कुर्यात् · अथवा शस्त्रादौ]
एकामृचम् [अन्यां कुर्यात्] अथवा एकं साम[न्यत्कुर्यात्] अथवा ग्रहग्रहणादाविकं
यजुः [प्रस्तुतादन्यत्कुर्यात् अथवा] यथोक्तानामेकमह्नो[ऽन्यत्कुर्यात्] ।

व्यत्यासमन्ततः ॥२१॥ स्तोत्रियादीनां व्यत्यासेनाप्यन्ततो भवति । सं॰ अन्ततो
दशरात्रस्यान्ते [अन्तिमे दशमेऽहनि न ततः प्राक् नवस्वहःसु] प्रागुक्तं स्तोत्रा-
दीनां व्यत्यासं विपर्यासं कुर्यात् । नास्त्येषामन्तः ॥२२॥ एषां [एवंविधानां
द्वादशाह]विकल्पानामन्त एव नास्ति दिङ्मात्रं प्रदर्शितमाचार्येण ॥

अयनमुत्सर्गिणाम् गवामयनविकल्पाः ॥२३॥ विकल्परूपमुत्सर्गिणामयन-
मुच्यते । सं॰ अय॰णाम् उच्यत[ऽइति शेषः · तत्र प्रथमं] ग॰ल्पा अभिधीयन्ते ।

पञ्चोक्थ्यांस्त्रीनभिप्लवानुपेत्य चतुर्थं चतुरुक्थ्यमुपयन्ति ॥२४॥ इत्येको विकल्पः ।
सं॰ चतुर्थमभिप्लवं चतुरुक्थ्यमुपयन्ति [प्रकृतिवदेव (१३.२.१-२) कुर्वन्ति · त्रिष्वभि-
प्लवेष्वेकैकस्याह्नोऽग्निष्टोमत्वस्योत्सर्गेणास्योत्सर्गिणामयनत्वम् । पक्षान्तरमाह] ·

स्तोमोत्सर्गो वैकस्याह्नः ॥२५॥ एकस्मिन्नहनि स्तोम एव वा न भवति । सं॰
अथवा संवत्सरमध्ये एकस्य कस्याह्नः स्तोमोत्सर्गः त्रिवृदादेर्विहितस्य स्तोमस्यो-
त्सर्गो भवति । [अथ पक्षान्तरमाह ·] पशोर्वा सवनविधिक्रिया ॥२६॥
ततश्च प्रातःसवनऽएव परिसमाप्यते पशुः । सं॰ अथवा पशोरेव सवनविधि-
[ना] क्रिया अनुष्ठानं भवति · अत्र पशुरेव केवलस्तस्मिन्नहनि न ग्रहस्तोत्र-
शस्त्रादिक[मित्यर्थः] । अनारम्भो वा ॥२७॥ पशोः । सं॰ [अथवा] एकस्य
कस्यचिदह्नः अनारम्भ एव [अकरणमेव कर्तव्यम्] ॥ तापश्चितविकल्पः ॥
२८॥ व्याख्यायतऽइति सूत्रशेषः । अयमेव प्रायणीयोऽतिरात्रः सर्वं सत्रं
स्यात् ॥२९॥ सं॰ अयं द्वादशाहिको ज्योतिष्टोमोऽतिरात्रः प्रायणीयसंज्ञक एव सर्वं
सत्रं स्यात् संवत्सरपर्यन्तमयमेव [सर्वेषामह्नां स्थाने] स्यादित्यर्थः ।

यथोक्तपृष्ठः ॥३०॥ अथापरम् ॥३१॥ सं॰ अपरं [उक्तादन्यत्] विकल्पान्तरं
तापश्चितस्याभिधीयते । ज्योतिष्टोमाश्ववारोऽभिजित् तैः षण्मासान् ॥३२॥

[१] स्तोत्रियां Ss. AB (schol.). स्तोत्रियं १. ३. KRM. AB (text).

सं° एतैः [एवंविधैः पञ्चभिरहोभिः प्रतिमासं षड्वारमावृत्तैः] पूर्वपक्षषण्मासान्नयेत् ·

व्रतम् विषुवत्स्थाने ॥३३॥ सं° [मध्ये विषुवतः स्थाने] महाव्रतम् ।

विश्वजिज्ज्योतिष्टोमाश्ववारस्तैरुत्तरान् ॥३४॥ सं° तैरेवंविधैः पञ्चभिरहोभिः [प्रतिमासं षड्वारमावृत्तैः] विषुवतः परान्षन्मासान्नयेत् । एतत्पुरुषस्य नारायणस्योत्तमम् ॥३५॥ नारायणसत्रमित्यस्य संज्ञा । सं° एतदुत्तममन्तिमं सत्रं नारायणस्य पुरुषस्य नारायणपुरुषसत्रमित्येतस्य संज्ञा ॥ ॥ सप्तमी कण्डिका ॥७॥

इत्युपाध्यायकर्ककृतौ कात्यायनसूत्रभाष्ये चतुर्विंशोऽध्यायः ॥ सत्राणि समाप्तानि ॥

इति कात्यायनसूत्रे चतुर्विंशोऽध्यायः ॥२४॥ ॥

---

अथ प्रायश्चित्तानि । अध्वर्युवेदविहितान्युक्तानि साङ्गानि कर्माणि तत्समनन्तरं च उद्गातृवेदविहितानि चोक्तानि · इदानीं तेषामेव नैमित्तिकाङ्गव्याचिख्यासयेदमाह · कर्मोपपाते प्रायश्चित्तं तत्कालम् ॥१॥ कर्मण उपपातः कर्मोपपातः उपपातो विनाशो भ्रेष इत्यनर्थान्तरम् · स च चतुःप्रकारो भवति अकरणम् न्यूनकरणम् अतिरिक्तकरणम् अयथाकरणं चेति · यद्वा एक एव प्रकारः सर्वमेवेदमयथाकरणम् यथैतद्विहितं तथा न भवतीति · प्रायश्चित्तमिति नैमित्तिकस्य संज्ञा तच्च तत्कालऽ एव[1] भवति यस्मिन्कालऽ उपपातः · कुत एतत् · भिन्ने जुहोति स्कन्ने जुहोति निमित्तसप्तमीयम् नाधिकरणसप्तम्येषा अधिकरणसप्तम्यामाहवनीयापवादप्रसङ्गात् · नैमित्तिकस्य च निमित्तकालता न्याय्येति । एवं प्राप्तऽ आह · । देव° प्रायो विनाशः विध्यतिक्रमजनितो दोषः · चिती संज्ञानऽ इत्यस्य धातोश्चित्तम् अनेकार्थत्वाद्धातोः संधानं चित्तमित्युच्यते · प्रायस्य चित्तं प्रायश्चित्तम् विनष्टस्य कर्मणः संधानमित्यर्थः · प्रायस्य चित्तिचित्तयोः सुडागमो (पाणिनि° ६. १. १४७) लक्षणात् · स कर्मविनाशकाल एव कालो यस्य तत्तत्कालम् । एवं सिद्धान्तमुक्त्वान्तरा पूर्वपक्षमाह · ] चोदना वाकालशब्दात् ॥२॥ वाशब्दः पक्षव्यावृत्तौ · नैमित्तिकस्य चोदनामात्रमेवैतत् न तत्कालता · कुत एतत् अकालशब्दात् न ह्यत्र कालप्रतिपादकः शब्दोऽस्ति तेनागन्तुत्वादन्ते निवेशः प्रा-

---

1) Thus K.

प्नोति । एवं प्राप्तऽउच्यते ·। देव° अधुना उक्तमेव सिद्धान्तं स्थापयति ·

कालो वा प्रत्ययात् ॥३॥ तत्कालतैव नैमित्तिकस्य स्यात् प्रतीयते हि निमित्तकालता नैमित्तिकस्य प्राक्तावन्निमित्तान्नैमित्तिकं न भवति निमित्तऽउपजाते नैमित्तिकं भवति तेन तत्कालतास्य · तस्मात्साधूक्तम् कर्मापत्त्कालमिति (१) · कर्मग्रहणाच्च पुरुषसम्बन्धिन्युपपाते तत्कालता न भवति यथा गेहदाहेऽग्नये क्षामवतऽइति (४. ३६) । महाव्याहृतिहोमोऽनादेशे ॥४॥ भूर्भुवः स्वरित्येता महाव्याहृतयोऽध्येतृप्रसिद्धाः नाभिर्होमः कर्तव्यः · यत्र निमित्तमुपदिश्य नैमित्तिकस्यानादेशः तत्र भवति · यत्र पुनर्निमित्तोद्देशेन नैमित्तिकादेशस्तत्र तदेव यथा प्रणीता स्कन्ना अभिमृशेदिति (५. २८) · तत्र महाहोमो न भवति अनादेशऽइत्युक्तत्वात् । व्याहृतिहोमविशेषार्थमिदमाह ·

हौत्रिके भूरिति गार्हपत्ये ॥५॥ हौत्रिके उपपाते भूःत्ये जुहोति · हौत्रिकं चार्ग्वैदिकमुच्यते । देव° अत्र स्वाहेत्यध्याहारः · स्वाहाङ्कृत्वादित्युक्तेः (४. ४. १८) । अत्राग्निर्देवता · अयमनादिष्टहोमो यत्र कर्मणि ब्रह्मा भवति तत्र ब्रह्मणा कर्तव्यः · ब्रह्मवरणात्प्राक् निमित्ते जाते व्याहृतिहोमार्थं ब्रह्मणो वरणं समन्त्रकं कृत्वा तेन होमः कारयितव्यः · यत्र ब्रह्मा न भवत्यग्निहोत्रादौ तत्र तत्कर्त्रैव कार्यः · सोमे च कालाहुतिभिरस्य समुच्चयः । दक्षिणाग्नावाध्वर्यवे भुव इति ॥६॥ अध्वर्युवेदविहितोपपाते । आग्नीध्रीये सोमे ॥७॥ सोमे वर्तमानऽआध्वर्यवऽउपपाते आग्ने जुहोति · प्रागाग्नीध्रीयोत्पत्तेः दक्षिणाग्नावेव हूयते न हीयमाहुतिराग्नीध्रीयं प्रयोजयति स्वकालत्वात् अस्याश्च नैमित्तिकत्वात् । देव° अत्र वायुर्देवता । स्वरित्यौद्गात्रऽआहवनीये ॥८॥ उद्गातृवेदविहिते ऽेषे स्वरित्याग्ने जुहोति । देव° अत्र सूर्यो देवता । चतुर्गृहीतान्येतानि सर्वत्र ॥९॥ सर्वप्रायश्चित्तं च पञ्चभिः प्रत्यृचम् ॥१०॥ सःत्तमिति संज्ञा संव्यवहारार्था · तदाह ·। देव° व्याहृतिहोमानन्तरं वक्ष्यमाणाभिः पञ्चभिर्ऋग्भिः प्रत्यृचं सःत्तं [आहवनीये] जुहोति · एकैकया ऋचा एकैकामाहुतिं जुहोतीत्यर्थः ।

त्वं नोऽअग्नऽइति द्वाभ्याम् (२१. ३-४) अयाश्चाग्नेऽस्यनभिशस्तिश्च[1] सत्यमित्त्वमया

---

[1] ? शस्तिपाश्च ३. See Kauçika ५ and ९७. Kâṭhaka ५. ४. Çânkh. ३. १९. ३.

असि अया नो यज्ञं वहास्यया नो धेहि भेषजं स्वाहा ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहोदुत्तममिति (१२. १२) च ॥ ११॥ अत्र द्वयोर्मन्त्रयोः परशाखीयत्वात्पाठः । एतत्सर्वप्रायश्चित्तं चशब्दात्सर्वत्र भवति · इयांस्तु विशेषः सकृद्गृहीतेनेति । अविज्ञाते प्रतिमन्त्राव्याहृति सर्वाभिश्चतुर्थम् ॥ १२॥ अविज्ञातं स्मार्तमभिधीयते · न हि तज्ज्ञायते किमाग्वैदिकम् याजुर्वैदिकम् सामवैदिकमिति · अथ च दृढं स्मरणम् शुचिना कर्म कर्तव्यम् यज्ञोपवीतिना कर्तव्यम् बद्धशिखेनेत्येवमादि · तदुपपाते तदपचारे प्रतिमन्त्रं हुत्वा सर्वैश्च होमं करोति । देव॰ यज्ञोपवीतिना बद्धशिखिना दक्षिणेन पाणिना पवित्रपाणिना कर्म कर्तव्यमित्येवमादि तस्मिन्नवितते अविज्ञातवेदविशेषमूले स्मृतिविहितस्य कर्मणो विनाशे । सर्वप्रायश्चित्तं च ॥ १३॥ अत्र भवति । देव॰ अत्र विप्रतिपत्तिः · भूरिति गार्हपत्ये भुव इति दक्षिणाग्नौ स्वरित्याहवनीये भूर्भुवः स्वरिति सर्वप्रायश्चित्तं चेत्याहवनीये याज्ञिकवासुदेवभट्टाश्च · भूरित्याद्याहुतिनवकमप्याहवनीय एवेति सम्प्रदायकारिकाकारौ · महापितृयज्ञे दक्षिणाग्नौ अवभृथे चाप्स्वेव शतरुद्रिये परिश्रित्सु त्र्यम्बकासु चतुष्पथाग्नौ । अग्निहोत्री चेदुह्यमानोपविशेद्यजुषोत्थापनमेकऽउदस्थाद्देव्यदितिरायुर्यज्ञपतावधादिन्द्राय कृण्वती भागं मित्राय वरुणाय चेति ॥ १४॥ अग्निहोत्रशब्देन तत्साधनभूतं [पयो]द्रव्यमुच्यते · तद्द्रव्यं यस्यां विद्यते सेयमग्निहोत्रिणी मत्वर्थीयलोपेन अग्निहोत्रीत्युक्तम् · सा चेदुह्यमानोपविशेत्तामेके यजुषोत्थापयन्ति (१२. ४. १. १) । दुग्धा ब्राह्मणायैनां दद्याद्यमनभ्यागमिष्यन्त्स्यात् ॥ १५॥ देव॰ तत्र मतभेदः · यः पुनर्गृहे नागच्छतीति कारिकाकारः · यस्य गृहे कार्यार्थमपि गमिष्यन्यजमानो न भवतीति याज्ञिकाः धूर्तस्वामिनश्च । दण्डेन वानुपिष्योत्थाप्य दोहनम् ॥ १६॥ वाशब्दो विकल्पार्थः । अदानं च ॥ १७॥ तस्मिन्पक्षे । अदुह्यमानायामन्याम् ॥ १८॥ प्राप्तमेवेदमुच्यते प्रायश्चित्तव्युदासार्थम् । वाश्येत चेत्तृणान्यालुप्य ग्रासयेत् सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम अद्धि तृणमघ्न्ये वि-

श्वदानीं[1] पिब शुद्धमुदकमाचरन्तीति ॥११॥ (१२.४.१.१२) ॥ ॥ प्रथमा कण्डिका ॥१॥

तस्यै पयसा जुहोति ॥१॥ षष्ठ्यर्थे चतुर्थी तस्याः पयसा । लोहितदोहे दक्षिणाग्निं परिश्रित्य व्युत्क्रामतेत्युक्त्वोष्णे भस्मनि रुद्राय हुत्वा पूर्ववद्दानम् ॥२॥ लोहे दक्षिणाग्निः परिश्रयणम् व्यु॰तेति च प्रैषः (१२.४.२.१) · दक्षिणाग्नेरेव उष्णे भस्मनि रुद्राय स्वाहेति हुत्वा [तस्या लोहितदोहिन्या गोः] पू॰नम् यमनभ्याग-मिष्यन्मन्येत तस्मै (१.१५) · मेक्षणाकरणं प्रैषदानं श्रपणं च नोपनिबद्धमाचार्येण। होम्यं[2] गवि सन्नैन्द्रम् उपसृष्टं वायव्यम् दुह्यमानमाश्विनम् दुग्धं सौम्यम् अधि-श्रितं वारुणम् उदन्तं पौष्णम् विष्यन्दमानं[3] मारुतम् बिन्दुमत्सारस्वतं शान्तं मैत्रम् उद्वास्यमानं सवितुरुद्वासितमदितेरुन्नीयमानं वैश्वदेवम् उन्नीतं बार्हस्प-त्यम् प्रह्रियमाणं धात्रम् प्रहृतं वैश्वकर्मणम् अन्तराग्नी वैश्वानरायोपसन्नं द्यावापृ-थिव्योः पूर्वाहुतिरिन्द्राग्न्योरुत्तरा प्रजापतेर्हुतमैन्द्रम् ॥३॥ तद्धोम्यं होमद्रव्यं गवि स्थितं सद्दुष्यति चेत् रुद्रदेवत्यं भवति · एवमुपरिष्टादपि तस्मिंस्तस्मि-न्काले देवतासम्बन्धात्तद्दैवतमुच्यते वक्ष्यति हि (४) यथाकालो॰हुत्वेति ता-दर्थ्यात् · गवि स्थितस्य च ऋषभाक्रमणादिना दोषः · उपसृष्टं वायव्यम् वत्सोप-सर्गकाले वायव्यं भवति·। देव॰ दुह्यमानप्रभृतिहुतपर्यन्तस्यामेध्यमलकेशकीटा-दिपातादिना विनाशः । यथाकालोपपाते तद्देवते तद्देवतं[4] हुत्वा तद्धा-तिदिश्यान्येन जुहुयात् ॥४॥ यस्मिन्यस्मिन्काले उपपातस्तद्देवत्यं होमं कृत्वा तदु-द्देशेन वातिदिश्या॰धात् । स्कन्देच्चेदस्कन्नधित प्राजनीत्यभिमृश्य शेषेण जुहुयात् ॥५॥ (१२.४.१.७) । [देव॰ तदग्निहोत्रार्थं पयश्चेत्स्कन्देत्स्थालीतो बहि-र्गच्छेत् भूमौ अन्यत्र वा पतेत् । भिद्येत चेदवापद्येत स्कन्नप्रायश्चित्तेनाभिमृश्य व्याहृतिभिश्चाद्भिरुपनिनीय कपालानि भस्मोद्वापे कुर्यात् ॥६॥ (१२.४.१.६) । [देव॰ भिद्येत विदीर्येत अथवा अवा॰द्येत अधोमुखी भवेत् · भस्मोद्वापशब्देन प्रत्यहं गार्हपत्यादिखरेभ्यो भस्मोद्धृत्य यो राशिः क्रियते स उच्यते । भुवपतये[5] इति (२.२) हविर्यज्ञियम्[2] ॥७॥ स्कन्नमभिमृशेत् । [देव॰ हविर्यज्ञशब्देन दर्शपूर्णमा-

---

1) विश्वे॰ ३. M. विश्व॰ १. R. Rik १.१६४.४०. 2) See ११.५.३.५. 3) Thus १. ३. R. M. विष्यंद॰ A. 4) Thus all. 5) Mahidhara at २.२. has: स्कन्नमभि-मृशति भुवपतये स्वाहेति ।

सौ तद्विकाराश्च · तत्सम्बन्धि हाव्यम् चरुपुरोडाशान्यसांनाय्यमांसादि । सोमे हा-
विर्यज्ञिये स्कन्ने इदमेव प्रायश्चित्तम् तत्र भुवपतयऽइत्यभिमर्शनात्पूर्वं कालाहुति-
वाचनेऽग्रधिकेऽइति विशेषः । देवान्दिवमगन्निति (८.६०) सोमे ॥८॥ सोमे
हाविर्यज्ञियं स्कन्नं दे॰न्नित्यनेन मन्त्रेणाभिमृशेत् । देव॰ सोमे रसद्रूपे सोमद्रव्ये
स्कन्ने · स्कन्नस्य सोमस्याभिमर्शनं कर्तव्यम् · अत्रापि कालाहुतिवाचने भवतः ।
यद्योरोजसेति (८.४१) वोदकेनोपसिञ्चेत् ॥९॥ सोमऽएव हाविर्यज्ञियं स्कन्नम् ·
वाशब्दो विकल्पार्थः । देव॰ स्कन्नं सोमम् · अत्रापि पूर्वं कालाहुतिहोमो वा-
चनं च । उन्नीतसर्वस्कन्दनस्रुग्भेदयोस्तत्रैवासनम् ॥१०॥ देव॰ यत्र प्रदेशे स्रुग्भि-
न्ना सर्वस्कन्दनं वा जातम् तत्रैवोपवेशनं कुर्यात् · ततः स्कन्नस्यास्कन्निति मन्त्रेणा-
भिमर्शनम् (५) उदकोपसेचनं (९) च · ततः · अन्यदुन्नीयान्योऽस्मै प्रयच्छेत्तेन हो-
मः ॥११॥ अन्यस्मिन्नुन्नीयमाने प्रैषो न भवति तद्दो द्वैवोन्निष्या॰ भवतीति श्रुतेः
(१२. ४. २. ८) । देव॰ अन्यो होमकर्तुरन्यः कश्चित्सर्वस्कन्दने तस्यामेव स्रुचि स्रुग्भेदे
चान्यस्यां प्रतपनादिसंस्कृतायां स्थाल्याः सकाशादुन्नीयोन्नयनं कृत्वा अस्मै होमकर्त्रे
सर्वस्कन्दनभेदनस्थाने उपविष्टाय प्रयच्छेत् ॥ ॥ द्वितीया कण्डिका ॥२॥ ॥

पूर्वाहुतौ हुतायां चेदाहवनीयोऽनुगच्छेत्तदुक्तम् ॥१॥ तदुक्तग्रहणं न्यायप्राप्तो-
द्धरणप्रज्ञप्त्यर्थम् (१२. ४. ३. २) · प्राप्तत्वादेवावाच्यमिति चेत् उत्तरविधानेन सह
विकल्पार्थत्वादित्यदोषः । काष्ठं हिरण्यं वाभिजुहुयाच्छ्रुतेः (१२. ४. ३. १) ॥२॥
काष्ठं निधायाभिजुहुयात् हिरण्यं वेति विकल्पः · श्रुतिग्रहणं हृदयविलेखप्रज्ञप्त्य-
र्थम् (१२. ४. ३. १) यद्युऽअस्य हृदयं व्येव लिखेद्धिरण्यमभिजुहुयादिति । देव॰ अग्नि-
स्थाने काष्ठं निधाय होमे क्रियमाणे यदि यजमानस्य हृदयविलेखो भवति अवि-
श्वासोऽपरितोषो भवति । त्रिरुद्धृतश्चेदाहवनीयोऽनुगच्छेदुदक्स्थानान्युपलिप्य
निर्मथ्य सकृदुद्धृते तस्मिन्त्सायम्प्रातर्होममेके ॥३॥ त्रिरुद्धृताहवनीयानुगमने उदी-
च्यां दिश्यग्निस्थानान्युपलिप्य निर्मन्थनोपदेशाद्गार्हपत्ये समारोह्य निर्म॰द्धृतेतस्मि-
न्नेव विहारे एके साय॰ममिच्छन्ति एके शतकृत्वोऽप्युद्धरन्ति ।

गार्हपत्येऽनुगते भस्मनारणी संस्पृश्य मन्थनम् ॥४॥ अग्निहोत्रकालऽएतन्नै-
मित्तिकमिति सम्प्रदायः · तथा चोपरितनान्यपि नैमित्तिकानि तद्विषयाण्येव

दृश्यन्ते येनेदमाह (१) पूर्वमुपशमय्य होम इति होमग्रहणादग्निहोत्रविषयता गम्यते अपरे तु सर्वविषयं मन्यन्ते। देव॰ अग्निहोत्रे विहारकाले गार्हपत्यानुगमन एतद्भवतीति कर्कसम्प्रदायकारी अन्ये तु सर्वदैवैतद्भवतीत्याहुः। आहवनीयजागरणे वा तत एवोद्धरणम् ॥५॥ आह॰रणे गार्हपत्यानुगमने तत एवाहवनीयोद्धरणम् शेषश्च गार्हपत्यकार्ये। देव॰ इतः प्रभृति अग्निहोत्रहोमविषयाण्येव नैमित्तिकान्यभिधीयन्ते। यः प्रागुद्धृतः स आहवनीयः यश्चाहवनीयस्थाने अवशिष्टः स गार्हपत्यः · पूर्वोद्धृत एव दक्षिणाग्निराहृत्य वितृतीये स्थाप्यः · एवं कृत्वाग्निहोत्रं होतव्यम् होमान्ते गार्हपत्यस्य मन्थनं कार्यम्। पक्षान्तरमाह · आहृत्य वा ॥६॥ गार्हपत्यस्थानमाहवनीयम् पुनरुद्धरणम् · शेषश्च गार्हपत्यः। देव॰ अत्रापि होमान्ते गार्हपस्यस्य मन्थनं कार्यम्।

उलपराज्यागताद्वा ॥७॥ उलपराजी तृणावर्तिरुच्यते · तया वा ज्वलन्त्या गार्हपत्यस्थानमागतात् पुनरुद्धरणं भवति। निर्मथ्य वा ॥८॥ (१२. ४. ३. ८) · अस्मिंश्च पक्षे न्यायप्राप्तमेवैतदिति नैमित्तिकं भवति · प्राप्तस्य चोपादानमितरैः सह विकल्पार्थम्। देव॰ अथवा गार्हपत्यं नि॰थ्य तत उद्धरणम् · न चास्मिन्पक्षे होमान्ते मन्थनम् कृतत्वात्। निर्मन्थनपक्षे प्रकारद्वयमाह · समारोह्यासमारोह्य वा पूर्वमुपशमय्य पूर्ववद्धोमः ॥९॥ समारोह्य पूर्ववदुदक्स्थानान्युपलिप्य (३) निर्मथ्य सकृदुद्धृते सायम्प्रातर्होमः · असमारोह्य पूर्वस्योपशमनं कृत्वा निर्मथ्योद्धृत्यात्रैव होमः · एवं हि श्रूयते (१२. ४. ३. ९-१०)। देव॰ तत्रासमारोपपक्षे पूर्वमाहवनीयमुपशम्य उपशान्तं कृत्वा गार्हपत्यं निर्मथ्य स्वस्थान एव संस्थाप्य स्वस्थान एवाहवनीयमुद्धृत्य तत्रैवाग्निहोत्रहोमः पूर्वोद्धृत एव दक्षिणाग्निः · समारोह्येति पक्षे तु आहवनीयं समारोह्य पूर्ववद्धोमः दक्षिणाग्निः पूर्वोद्धृत एव तत्र नीयते। त्रिराहृतो दक्षिणाग्निरनुगच्छेच्चेत् अनाहरणमस्य तदहरेके ॥१०॥ एके शतकृत्वोऽप्युद्धरन्ति · अनाहरणपक्षे च तदर्थत्वात्तत्साध्यकर्मलोपः। जाग्रतमाहवनीयमभ्युद्धरेच्चेत्तदुक्तम् ॥११॥ तदुक्तमिति ग्रहणमुत्तरविवक्षार्थम्। देव॰ यदि अनुपशान्तमाहवनीयं भ्रान्त्या गार्हपत्यादभ्युद्धरेत् तदा तदुक्तम् तत्प्रायश्चित्तमुक्तम् · किंतु आध्वर्यवमेव · अन्यस्यानुक्तत्वात् · एवं च सत्याधर्यवं कृत्वा भ्रान्त्योद्धृतस्य गार्हपत्य-

मध्ये पश्चात्प्रक्षेपः । पश्चान्निधाय पुरस्ताद्वोभयत्र होममेके ॥१२॥ पश्चादाहवनीयस्य स्थापयित्वा पुरस्ताद्वा तमग्निमुभयमेके कुर्वन्ति · एके तदुक्तम् गार्हपत्योऽसाविति · उभयत्र च होमपक्षे चतुर्गृहीतेन हुत्वैकस्मिन्नग्नौ पुनश्चतुर्गृहीतेन द्वितीये जुह्वत्येके शेषभक्षादि तन्त्रेण । अन्ये त्वेतन्नेच्छन्ति साध्यो होमः साधनमग्निः न च साधनभेदात्साध्यभेदो युक्तः तेनान्यथा वर्णयन्ति · एकैव समित् खातवती अग्निद्वयेऽप्युपधीयते · तत्र प्रक्षिप्तं होमद्रव्यमग्निद्वयेऽप्युपार्हतीति · एवमुभयत्र होमः कृतो भवतीति सम्प्रदायः · युक्तरूपमिव चैतत् न हि साधनापेक्षया साध्यावृत्तिर्युक्तेति । देव° तं आन्त्योद्धृतं स्थापनात्प्राग्ज्ञातं पश्चाधाय पूर्वोद्धृतस्याहवनीयस्य अपरस्मिन्देशे स्थापयित्वा अथवा पुरस्तात्पूर्वदेशे निधाय उभाग्निद्वये होमं कुर्वन्त्येके · एके गार्हपत्यमध्ये पश्चात्प्रक्षेपं कुर्वन्ति । अथास्येव आन्त्योद्धृतस्याग्नेः पूर्वोद्धृतस्याहवनीयस्योपरि स्थापने कृते प्रायश्चित्तमाह ·

अभिनिधानेऽग्नयेऽग्निमते पुरोडाशः ॥१३॥ यदि पुनरुद्धृतोऽग्निरग्नावभिनिहित एव भवति तदाग्नयेंऽशः कार्यः । देव° इष्टेरनन्तरमग्निहोत्रहोमः । अथ वित्तकालाद्यभावे नेष्टिं कर्तुमशक्तस्य हविर्लेखरहितस्य वाभिनिधाने प्रायश्चित्तान्तरमाह ·

समितमिति (१२.५७-५८) वोपस्थानं द्वाभ्याम् ॥१४॥ वाशब्दो विकल्पार्थः । देव° तयोरुभयोरग्न्योः । गृहीतानुगमने चान्वग्निरित्याहृत्य (११.१७) ॥१५॥ ममाग्नऽइत्यग्निं (२.१.२) गृह्णातीति गृहीतस्यानुगमने एतदेव प्रायश्चित्तद्वयं विकल्पेन भवति · अन्वग्निरित्यनेन मन्त्रेण आहृत्य पूर्ववत्तरम् । अनादेशे पुरोडाशः सर्वत्र ॥१६॥ वक्ष्यत्युपरिष्टात् अग्नये च[1] सूर्यवते (२३) सूर्याय च ज्योतिष्मतऽइति (२१) तत्र पुरोडाशो भवति · एतच्चोक्तमाचार्येण यत्र वेदवाक्ये द्रव्यस्य न विधानम्[2] तद्विषयमिति · इतरथाग्नयेऽग्निमते पुरोडाश इत्यवाच्यं (१३) स्यात् । अनुद्धृताभ्यस्तमये कुशबद्धे हिरण्ये पश्चाद्ध्रियमाणऽइध्मेनोद्धरेदार्षेयो ब्राह्मणः ॥१७॥ यस्याहवं मियादिति (१२.४.४.६) प्रकृत्य सर्वमेतच्छ्रूयते · प्रैषवचनं तु नोपनिबद्धमाचार्येण । देव° गार्हपत्यस्यापरस्मिन्प्रदेशेऽन्येन केनचिद्ध्रियमाणे । विष्णुव्याहृतिः ॥१८॥ तत्र देयेति । अग्नये च सूर्यवते

---

१) च deest K. २) ? स्यानवि K.

॥१९॥ पुरोडाशः । देव॰ दक्षिणाग्निमुद्धृत्य · इष्यते तद्विहार एवाग्निहोत्रं होतव्यम् । अभ्युदये रजतधारणं पुरस्तात् वैश्वदेव्याहुतिः ॥२०॥ देव॰ आहवनीयखरात्पूर्वस्यां दिशि । सूर्याय च ज्योतिष्मते ॥२१॥ पुरोडाशः ।
समानमुद्धरणम् ॥२२॥ इध्मेनोऽंहस इति (१७) । वैश्वदेवो वोभयत्रापुरोडाशा ॥२३॥ उभ॰ वा वैश्वी आहुतिर्भवति अपुंशा चतुर्गृहीतेन ।
उभयानुगमने पुनराधेयं वा ॥२४॥ उभयोरनुगतयोः गार्हपत्याहवनीययोर्यद्यभ्यस्तमयो भवति अभ्युदयो वा तदा पुंश्यं वा भवति न्यायप्राप्तमग्न्याधेयं वा · को न्याय इति चेत् उभावग्नी युगपदुत्पाद्यौ युगपदुत्पत्तिश्चाग्न्याधेयेन भवति · यद्येवम् पुनराधेयं वेति कुत एतत् वाक्यात् यस्योभावग्नी अनुगतावभिनिम्लोचेदभ्युदियाद्वा सूर्यः पुनराधेयमेव तत्र प्रायश्चित्ति[रिति] · एवं चेत् पुनराधेयमेव भवति नाग्न्याधेयमिति न हि न्यायो वाक्येन विकल्पते । एतच्चानुगतपरिज्ञानोत्तरकालं यद्यभिनिम्लोचनं भवति तदेव भवति न अभिनिम्लोचनोत्तरकालमनुगमनपरिज्ञाने । भेदेनाप्युपपातात् ॥२५॥ भेदेनाप्यनुगम[ना]भिनिम्लोचने भवत्येव पुनराधेयम् · कुत एतत् उप॰त् उपपातो हि भवति अग्न्यनुगमनेऽभिनिम्लोचनम् · तद्यद्युभयशब्देन विशिष्यते ततो वाक्यं भिद्येत · तस्माद्भेदेनाप्यनुगतयोः पुनराधेयमिति · एवं प्राप्त आह · न सह-प्रक्लृप्तेः[1] ॥१६॥
नैतदेवम् अन्यतरानुगमने पुनराधेयम् · सहैव हि प्रकल्पिता गार्हपत्याहवनीययोरुत्पत्तिः · तत्रैकैको न शक्यत उत्पादयितुम् तस्मात्सविशेषणमेवात्र निमित्तम् । देव॰ पुनराधेयसमाप्त्यनन्तरं चास्मिन्नेव विहारेऽग्निहोत्रहोमः ॥ ॥ तृतीया कण्डिका ॥३॥ ॥

देव॰ अथ गार्हपत्यस्योपशान्तस्य समारूढे वा होमकाले मथ्यमानस्य प्रागुद्धरणकालादजन्मसम्भावनायां कर्तव्यं तदाह · मथ्यमानश्चेन्न जायेत यमद्दूरात्पराः पश्येत्तमाहृत्याभिजुहुयात् ॥१॥ मथ्यमानग्रहणं कालासम्भवप्रज्ञप्त्यर्थम् न हि कश्चिन्मथ्यमानो न जायते · यमेवान्तिकेऽग्निमपरिगृहीतं पश्येत् तमाधात् · स चायमस्यैवैकस्य प्रयोगस्य साधनीभूतः तावन्मात्रश्रवणात् · पुनः स्वयोनेराह-

1) Thus ३. R. M sec. m. कृते: M pr. m. प्रकृतीभेद्ये: १ (!). प्रकृप्ते: A.

रणाम् । ब्राह्मणहस्ते वा ॥२॥ जुहोति . वाशब्दो विकल्पार्थः · अयं चा-हवनीयविकारत्वेन विधीयते · ततश्चोत्तरसमिदाधानमन्त्रे विपरिणामः · सा ह्य-दृष्टार्थत्वाद्धा॰स्तेऽपि दीयते पूर्वा तु दृष्टार्थत्वादेव न भवति। देव॰ अत्र गा-र्हपत्याहवनीयदक्षिणाग्निस्थाने त्रीन्ब्राह्मणानुपवेश्य तद्धस्तेषु दक्षिणेषु परिस्तर-णादि पर्युक्षणोपस्थानान्तं सर्वं कार्यम् · इयांस्तु विशेषः · होमात्पूर्वं यत्समिदा-धानं तन्न भवति दृष्टार्थत्वात् इन्धनं हि तस्य प्रयोजनम् न च तदनग्निषु सम्भव-ति (४.१४.१३) समिदसीत्येतत्तु समिदाधानं भवत्येवादृष्टार्थत्वात् तत्र च (४.१४.३०) समिदसि समिद्धो मे ब्राह्मणहस्त दीदिहि समेद्धा ते ब्रा॰स्त दीद्यासमिति विशेषः। अस्मिन्पक्षे यजमानस्य व्रतमाह · वासानपनोदश्च ॥३॥ वसत्यर्थमागतो ब्रा-ह्मणो नापनोद्यः । अजकर्णे वा दक्षिणे ॥४॥ जुहोति · तस्मिंश्च पक्षे व्रतमाह ·। देव॰ प्रत्यग्नि अजान्स्थापयित्वा तद्दक्षिणकर्णेषु होमः कार्यः ।

अभोजनं तस्य ॥५॥ आजमांसस्य । कुशस्तम्बे वा ॥६॥ जुहोति · तत्र व्रतम् ·। देव॰ त्रिष्वग्निस्थानेषु कुशस्तम्बान्स्थापयित्वा तेषु । अनासनं त-स्मिन् ॥७॥ अप्सु वा ॥८॥ जुहोति । तत्र व्रतम् ·। देव॰ उदकस्य पात्रा-धारस्याग्निस्थानेषु स्थापनम्। नाप्सो बीभत्सेतेति श्रुतेः ॥९॥ बीभत्सा परि-वाद उच्यते · एवं श्रूयते नापः परिचक्षीतेति · अपन्याय्यत्वाच्च श्रुतिग्रहणमत्र क्रियते । देव॰ अपां निन्दां न कुर्यात् · सर्वपक्षेषु (१-९) होमान्ते गार्हपत्यम-न्थनं कार्यं । अहुताभ्युदितऽउन्नीया तमितोरासीत ॥१०॥ अहुतऽएव [अग्निहोत्रे] यद्यभ्युदयो भवति । देव॰ उन्नीय होमार्थं चतुर्गृहीतस्योन्नयनं कृत्वा आहवनीयसमीपे आ त॰सीत तावच्छ्वासधारणं कृत्वासीत यावच्छरीरस्यात्यन्तग्ला-निर्मरणावस्था भवति तत ऊर्ध्वं श्वासधारणं कर्तुं न शक्यतऽइत्यर्थः। ततो यत्क-र्तव्यं तदाह · हुत्वा भूरित्यनुमन्त्रणम् ॥११॥ देव॰ हुत्वा पूर्वाहुतिं भूरिति मन्त्रेण तस्या अ॰णं कार्यम्। वरदानं च ॥१२॥ देव॰ क्षीरहोत्रे · स्वयंहोमे त्वन्यस्मै संनिहिताय । सर्वनाशे हविषां दोषे वा तदुक्तम् ॥१३॥ तदुक्त-ग्रहणं पक्षान्तरेण सह विकल्पार्थम्। देव॰ सर्वेषां हविषां नाशे अपहारादिना अदर्शने जाते दोषे वा श्लेष्माद्यमेध्योपघाते वा त॰म् तत्प्रायश्चित्तमुक्तम् प्रधान-

द्रव्य॰व्यापत्तौ साङ्गावृत्तिस्तदादेशादित्यत्र (१. ७. २८) · तेनाध्वर्यवं कृत्वा तद्विकार ऽएव सांनिपातिकैरङ्गैस्तानि विनष्टानि हवींष्युत्पाद्य यागाः कर्तव्याः । अथ पक्षान्तरमाह · आज्येन वा प्रतिसंख्याय देवतेज्या ॥१४॥ प्रतिसंख्यानविधिग्रहणाच्च तासामेव देवतानामिज्या · देवताग्रहणाच्चाङ्गाभावः । देव॰ प्र॰थ इयतीनां देवतानां हवींषि विनष्टानीति परिगणय्याज्येन दे॰ज्या विनष्टहविःसम्बद्धानां देवतानामाज्येन हविषा यागः कर्तव्यः · आज्यसंस्कारात्पूर्वमस्य निमित्तस्य पाते आज्यसंस्कारं वेदिसंस्कारमग्निसंस्कारं च कृत्वा यागः कर्तव्यः ।

पुनःक्रिया च ॥१५॥ एवं हि श्रूयते यस्य सर्वाणि हवीꣳषि नश्येयुर्वा दुष्येयुर्वापहरेयुर्वाज्येन ता देवताः सꣳस्थाप्य पुनर्निर्वपेदिति । भेदे विप्रकृस्युपपाताभ्याम् ॥१६॥ सर्वविषयत्वेन श्रवणात्सर्वहविर्नाशे एवं प्राप्तऽ इदमुच्यते भेदेऽपि भवतीति · कुत एतत् विप्रकृतेः पृथक्पृथक्प्रक्लृप्तानि ह्येतानि हवींषि नाग्न्युत्पत्तिवत्सहत्वम् · उपपाताच्च न सह-प्रक्लृप्तिः अपि चोपपातो भवति यस्य हवीꣳषि नश्येयुरिति · तत्र सर्वशब्देन विशेष्यमाणे वाक्यभेदप्रसङ्गः हवींषि नश्येयुः सर्वाणि च नश्येयुरिति · स चान्याय्यः · तस्मान्नाशमात्रं निमित्तम् · तत्र भेदेऽपि भवति चेत् भवेदिदं नैमित्तिकमिति । देव॰ एकैकहविर्विनाशेऽपीदं नैमित्तिकम् । अन्तरागमने नाद्रियेत ॥१७॥ गार्हपत्यादीनामन्तरा-गमने अनादरः · तच्चैतदग्निहोत्रविषयम् · तदेव प्रकृत्य श्रूयते (१२. ४. १. ३) कामं न्वाऽ॰चरन्तीति । देव॰ प्रायश्चित्तान्तरस्यानुपदेशात् व्याहृतिहोमः प्राप्नोति सोऽनेन वार्यते · प्रायश्चित्तानादरस्याग्निहोत्रविषयत्वाद्दर्शपौर्णमासाद्यर्थमुद्धृतेष्वन्तरागमनेऽनादिष्टहोमो भवत्येव । श्वेडवराहेषूदधारा प्राचीदं विष्णुरिति (५. १५) ॥१८॥ देया । देव॰ श्वा कुक्कुरः एडको मेषः वराहो ग्रामसूकरो विड्वराहः · गार्हपत्यादारभ्याहवनीयपर्यन्तमुदकस्य धारां निनयति । भस्मनो वा ॥१९॥ विकल्पेन हि श्रूयते (१२. ४. १. ४) गार्हपत्याद्भ॰स्मन्तीति । देव॰ धारा देया · तच्च भस्म गार्हपत्याद्ग्राह्यम् एतदप्यग्निहोत्रविषयमेव । चक्रीवत्यग्नये पथिकृते ॥२०॥ पुरोडाशं निर्वपेत् · चक्रीवान्रासभ उच्यते · तस्मिन्नन्तरा गच्छतीत्यर्थः · एतच्च सर्वविषयमसंयुक्तविधानात् । देव॰ चक्रीवान्रथ उच्यते · अग्निहोत्रनैमि-

त्तिक्रमध्ये विधानादेतदप्यग्निहोत्रविषयमेवेति याज्ञिकाः । प्रज्ञातेष्ट्यतिपत्तौ च ॥२१॥ पथिकृद्भवति । प्रज्ञातग्रहणमाचष्टे । देव॰ प्रज्ञाताः प्रसिद्धाः इष्टयः दर्शपौर्णमासाग्रयणचातुर्मास्येष्टयः तासामतिपत्तौ कालातिक्रमे । नियतास्वतिपत्तिश्रुतेः ॥२२॥ अतिपत्तिर्हि नियतास्वेव भवति नानियतासु । इष्टिग्रहणाच्च पश्वतिपत्तौ न भवति । देव॰ अतिपतनमतिपत्तिः कालातिक्रमः । नित्यास्वेवेष्टिषु कालातिक्रमो नानित्यासु तासामनियतकालत्वात् । स्तोत्रमोहे शस्त्रस्य च ॥२३॥ पथिकृद्भवति । देव॰ स्तो॰हे अन्यस्य स्थानेऽन्यस्य गानम् अन्यास्वृक्षु वा तास्वेव ऋक्षु सामान्तरगानं च । अत्र च कालाकृतिवाचने पूर्वे भवतः । शस्त्रस्य च अन्यस्य स्थानेऽन्यशंसनेऽक्षसूत्रादेर्विपर्यासे विस्मरणे च । जनमरणे च ॥२४॥ पथिकृद्भवति । देव॰ एतदेव विशेषयति । उपपातसामर्थ्यात्स्वजने ॥२५॥ सा च स्वकीयजनमरणे न सार्वत्रिके । कुत एतत् उपर्थ्यात् उपपातो हि कादाचित्को भवति । देव॰ पुत्रपौत्रादिमरणे । नित्यत्वाच्च ॥२६॥ अपि च नित्यं जनमरणमिति । अग्नये व्रतपतये व्रत्येऽहनि मैथुनमांसभोजनं चेत् ॥२७॥ व्रतमर्हतीति व्रत्यम् तस्मिन्मैथु॰चेद्भवति अग्न॰तये इष्टिर्भवति । देव॰ अष्टाकपालः पुरोडाशः । स्मृतिप्रतिषिद्धाचरणे तु स्मार्तम् । आहिताग्नेरार्त्यश्रुकरणेऽग्नये व्रतभृते ॥२८॥ आहिताग्निग्रहणं विहृताग्निप्रज्ञप्त्यर्थम् । आर्तिग्रहणाच्च नानन्दाश्रुकरणे । देव॰ व्रत्येऽहनीत्यत्रानुवर्तते । संसर्गे नाद्रियेत ॥२९॥ अग्न्यन्तरसंसर्गेऽनादरः । देव॰ आहवनीयादीनां लौकिकवैदिकाग्निभिः संर्गे प्रायश्चित्तं ना॰त । असंतोषे तु प्रा॰तमाह । अनुक्रोशेऽग्नये संसर्गायाकृतिर्वा ग्रामाग्निना चेत् ॥३०॥ अथ यद्यनुक्रोशो भवति तदाग्नये संसर्गाय इष्टिर्भवति आकृतिर्वेति विकल्पः । एतच्च ग्रा॰ना संसर्गे भवति । देव॰ अ॰शे हृदयसंतापे सति ।

अग्नये विविचये मिथश्चेत् ॥३१॥ मिथः परस्परतो यदि संसर्गो भवति तदाग्नये विविचये इष्टिर्भवति आकृतिरनादरो वेति सर्वं ह्येतदत्र पठ्यते । हृदयविलेखे इष्ट्याकृत्योर्विकल्पः । देव॰ हृद्विलेखाभावे त्वनादर एव ।

अग्नये संवर्गाय प्रदव्याचेत् ॥३२॥ प्रदव्यो दावाग्निः । दावाग्निना चेत्संसर्गः तदाप्यनादरः । हृदयविलेखे अग्न॰र्गाय इष्टिराकृतिर्वा । अग्नयेऽप्सुमते वैद्युताचेत्

॥३३॥ वैद्युतेन चेदग्निसंसर्गः तदाप्यनादरः · हृदयविलेखे अग्न°ते इष्टिराहुतिर्वा । अग्नये शुचये शुच्यायतनाच्चेत् ॥३४॥ अशु°तनाग्निना चेत्संसर्गः अग्नये शुचये इष्टिराहुतिर्वा भवति · न ह्यत्रानादरः पठ्यते (१२. ४. ४. ५) । देव° अशुचि अपवित्रं चण्डालादिगृहं आयतनं स्थानं यस्य । भार्यागोषु यमजनने मारुतं त्रयोदशकपालं निर्वपेत् ॥३५॥ देव° भार्यायाः शुद्धौ यजनीयेऽहनि आग्नान्वारम्भणीयापूर्वकम् · शब्दपरिमाणादत्रैन्द्राग्नधर्मा भवन्ति (४. ३. ८) । गेहदाहेऽग्नये क्षामवते पुरोडाशः ॥३६॥ देव° यजमानस्य निवासगृहदाहेऽग्निगृहदाहे वा । चन्द्रमसाभ्युदितऽआमावास्ये पुरस्तात्तद्व्रतः स्यात् ॥३७॥ आ°स्ये प्रक्रान्ते यदि चन्द्रमा अभ्युदेति तदा तद्व्रतः एव भवति नान्यद्व्रतयति । देव° दर्शेष्टिसंज्ञककर्मणि प्रारब्धे पूर्वस्यां दिशि चन्द्रेणोदये कृते सति त°तः यजमानः स्यात् तदेव पूर्वदिने कृतमेव व्रतं भोजनं यस्य स त°तः तस्मिन्दिने पुनर्व्रतमशनं न कुर्यादित्यर्थः । तत्र निर्वापात्प्राक् ज्ञाते पूर्वकृतपदार्थानां आसादितपात्राणामुत्सर्गः वत्सापाकरणादेः पुनर्विधानात् · पिण्डपितृयज्ञात्प्राक्चेद्भान्त्योपक्रान्तं ज्ञायते तदोपोष्य स्वकाले द्वितीयेऽहनि पिण्डपितृयज्ञव्रतादिकं कुर्यात् । दधि हविरातञ्चनं निदध्यात् ॥३८॥ उत्पाद्यमानस्य हविषः । देव° यत्पूर्वेद्युः सायंदोहसम्बन्धि दध्युत्पादितं तद्धवि°नं हविषोऽस्य करिष्यमाणस्य सायंदोहस्यातञ्चनमातञ्चनार्थं सुगुप्ते स्थापयेत् । स°सृज्य वत्सान्पुनरपाकरणम् ॥३९॥ (११. १. ४. १) । देव° पूर्वेद्युः रात्रौ सायंदोहानन्तरं प्रातर्दोहाय ये वत्सा अपाकृताः तान् सं°ज्य स्वस्वमातृभिः संयोज्य पुनः सायंदोहार्थमपराह्णेऽपा°णां कर्तव्यम् · तच्च पिण्डपितृयज्ञं कृत्वा कार्यम् तस्य पूर्वेद्युरकाले कृतस्याकृतरूपत्वात् · अग्न्यन्वाधानं कृतमेव । निरुप्ते व्रताशक्तौ वा त्रेधं तण्डुलान्विभज्य मध्यमानग्नये दात्रे स्थविष्ठानिन्द्राय प्रदात्रे दधनि चरुम् अणिष्ठान्विष्णवे शिपिविष्टाय शृते चरुम् ॥४०॥[1] निरुप्ते चेद्धविषि अभ्युदयपरिज्ञानं [अकालोपक्रमप्रतिज्ञानं] भवति व्रतस्य वा अशक्तिरनिरुप्तेऽपि तदा त्रेधं°दात्रे पुरोडाशं कुर्यात् °· यद्यु व्रतचर्यां°दियादिति

[1] हविर्निर्वापानन्तरं चन्द्रोदयपरिज्ञाने निर्वापात्पूर्वमपि लङ्घनकरणाशक्तौ · निरुप्तस्याग्नेयस्य चतुर्मुष्टिकस्य हविषस्तण्डुलान्मध्यमस्थविष्ठाणिष्ठभेदेन त्रिधा विभज्य · अयं च द्रव्यदेवतासंयोगः सूत्रकारेण शाखान्तरीयः संगृहीतः · स्वश्रुतावन्यथा दर्शनात् Deva.

(११.१.४.२) प्रकृत्य सर्वमेतच्छ्रूयते। इदानीमिदं विचार्यते किं तदेवेदं कर्म उतान्य-त्कर्मान्तरमिति · किं तावत्प्राप्तम् · सूत्रेणैवोपक्रमः · संस्कारात्सांनाय्यम् ॥४१॥ तदेवेदं कर्मेति · कुत एतत् संस्कारात् यत्पूर्वं यागायोपकल्पितं संस्कृतं द्रव्यम् तदेवेदमिति · तत्साध्यत्वाच्च तदेव कर्मेति। एवं प्राप्तऽआह · अन्यद्वेज्या-योगात् ॥४२॥ तस्य अन्यदेव वा कर्मान्तरमिदम् न तदेव · कुत एतत् इज्यायो-गात् इज्यान्तरयोगो ह्यत्रोपलभ्यते अग्निर्दाता इन्द्रः प्रदाता विष्णुः शिपिविष्ट इति · तथा दधनि चरुऽ शृते चरुमिति (४०) अन्यदेव यागान्तरं ततोऽन्यदिति। एवं पक्षद्वयोपन्यासे किं कर्मान्तरता युक्ता उत तस्यैव विकार इति · तस्यैव वि-कार इति युक्तारूपता · तदेव हि प्रक्रान्तं कर्म प्रत्यभिज्ञायते न चान्यत्कर्मान्तर-मत्रारब्धम् तस्मात्तस्यैव [प्राकृतस्य] कर्मणो विकार इति। देव॰ ननु यदि कर्मा-न्तरमिदं तर्ह्यन्यदेवतार्थमुपक्लृप्तं हविस्तत्र्यं कथमन्यदेवताके कर्मणि यागसाधनं भविष्यतीत्यतोऽयुक्तमिदम् अत आह · तस्य तण्डुलापनयो वचनात् ॥ ४३॥ तण्डुलैरुपलक्षणं दध्नः पयसश्च पूर्वदेवताभ्योऽपनीय देवतान्तरसम्बन्धो नैमित्तिक इति · किं भवति प्रयोजनम् तत्त्वे सति कर्मणो गुणकामानां (२.३.५) प्रवृत्तिः · पुनरपि च तत्कर्म विहितमेव अथ यदेव नोदियादथोपवसेदिति (११.१.४.४)। देव॰ तस्य प्राकृतस्य कर्मणो व॰नात् तण्डुलानामपनयः प्राकृतदे-वताभ्योऽपच्छेदो विभागो देवतान्तरसंयोगश्च तण्डुलग्रहणं प्रकृतानां त्रयाणा-मपि हविषामुपलक्षणम् · वचनं हि किं न कुर्यात्। ननु द्रव्यान्यत्वे च देवता-न्यत्वे च कर्मान्यत्वं भवतीत्युक्तम् तर्हि यत्र द्रव्यान्यत्वाभाव आद्ये हविषि पुरो-डाशे तत्र कथमित्यत आह · प्रकृत्या पूर्वम् ॥४४॥ असांनाय्यगुणकं प्रकृ-त्या स्वरूपेणैव भवति दधिपयसोरभावात्। देव॰ प्रथमं हविः पुरोडाशलक्षणं प्राकृतमेव न प्रायश्चित्तरूपं कर्मान्तरम् कुतो यतो द्रव्यं तदेव पुरोडाशरूपम् देवताप्यग्निः · ननु विशिष्टेयम् अग्नये दात्रऽइति सत्यम् विशेषणमात्रं तत् न स्वरूपस्य भेदापादकम्। इति प्राप्तऽआह · सर्वं वा तिमित्तात् ॥४५॥ वा-शब्दः पक्षव्यावृत्तौ सर्वं वा विक्रियते · पूर्वमपि हि निमित्तं भवति प्रक्रान्ते ऽभ्युदय इति। देव॰ तत्र विशये लौकिकमिति (४.३.७)। पश्चादभ्युदृष्टऽआमावा-

स्येनेष्ट्वा तदहर्वैव श्वो वाग्नये पथिकृतऽइन्द्राय वृत्रघ्नऽएकादशकपालो वैश्वानरश्च ॥४६॥ सोऽग्न्यामावास्येति°हृदृशऽइति प्रकृत्यैतच्छ्रूयते (११.१.५.४) · तद्दर्शनं च शास्त्रतः प्रतिपद्येव भवति · भ्रान्त्या प्रतिपद्युपवासोपक्रमे एतत्। देव॰ आमावास्ये चन्द्रमसेति पदद्वयमनुवर्तते (३७) · आमावास्ये उपक्रान्ते पश्चादपरस्यां दिशि चन्द्रमसः अभ्युदये ज्ञाते भ्रान्त्या प्रतिपद्यप्यग्न्यन्वाधानादिकर्मोपक्रमे कृतऽइत्यर्थः · तदा तस्मिन्नेवाह्नि पिण्डपितृयज्ञवर्जितेन सद्य एवामावा॰ष्ट्वा दर्शेष्टिं कृत्वा तस्मिन्नेव दिन श्वो वा द्वितीयायामग्नये॰कृतेऽष्टाकपालः पुरोडाशः प्रथमो भवति इन्द्रा॰पालो द्वितीयो ऽग्नये वैश्वानराय द्वादशकपालस्तृतीयः। त्रीषुकं धनुर्दक्षिणा ॥४७॥ त्रिभिरिषुभिरुपेतम्। देव॰ अस्यां त्रिहविष्कायामिष्टौ। दण्डो वा ॥४८॥ इति विकल्पः। देव॰ वंशमयो दण्डः। प्राकृताश्चेहन् ॥४९॥ एतानेव हविर्विशेषान्प्रकृत्य याः श्रूयन्ते ताश्चेच्छया ददाति · यथाश्वमेधे पथिकृतः शतमानम् (२०.१.२२) वैश्वानराय कृष्णं वासः (२५.८.१७) इन्द्राय वृत्रघ्ने चोदकेनान्वाहार्यः। देव॰ चकारः पूर्वोक्तदक्षिणासमुच्चयार्थः। अनभ्युद्दृष्टस्यापि पशुकामस्य ॥५०॥ इयमिष्टिर्भवति (११.१.५.११) ॥ ॥ चतुर्थी कण्डिका ॥४॥

उद्वास्यमानं चेत्कपालं नश्येदाश्विनः ॥१॥ उद्वास्यमानकपालनाशे आश्विनो द्विकपालः पुरोडाशः कर्तव्यः · स च परतन्त्रमध्यपाती तदङ्गत्वेन भवति। अत्र पशुपुरोडाशन्यायः यान्यङ्गिनोऽङ्गानि प्रयुक्तानि तानीहापि प्रसज्यन्ते · पात्राणि च यान्यनपवृक्तानि[1] वज्रादीनि तान्यप्यत्र प्रयुज्यन्ते · यानि पुनः कृष्णाजिनोलूखलमुसलादीनि निवृत्तप्रयोजनानि तेषां पुनः प्रोक्षणादिसंस्कारः कर्तव्यः अपवृक्तत्वात्[2] · शृतावदानं प्राशित्रहरणमिडापात्री च संस्कृतान्येव विद्यन्ते · अनसि ग्रहणापन्ने अनोऽप्यासाद्यते धर्माश्चास्य धूरीषालम्भनादयः क्रियन्ते पूर्वधर्माणामपवृक्तत्वात्[3] तदपवर्गश्च तत्कार्याभिनिर्वृत्तेः · अग्नीन्धनं त्वङ्गप्रधानार्थत्वादपकृष्यते अङ्गप्रधानार्थता चास्याहवनीयसंस्कारकत्वात् यदाहवनीये जुहोतीत्यनेनाहवनीयस्याङ्गप्रधानार्थता · एवं च कृत्वोपवाजनसंमार्गावपि कर्तव्यौ · अनेन प्रकारेणोडान्त आश्विनः सांनिपातिभिरङ्गैः कार्यः · यानि पुनरारादुपकार-

1) ? °क्तानि K. 2) ? °क्तत्वात् K. 3) ? °क्तत्वात् K.

काण्याघारप्रयाजाज्यभागादीनि तेषां च सकृदेव क्रिया · अन्त्ये[१] ऽवयवे तेषां प्रधानाभिसम्बन्ध इष्यते · न हि यद्यदङ्गं क्रियते तत्तदेव प्रधानेनाभिसम्बन्धमुपयाति · यदाङ्गम् न तदा प्रधानम् यदा प्रधानम् न तदाङ्गमिति तस्मादन्त्ये ऽवयवे ऽङ्गापूर्वसम्बन्धः आम्नानसामर्थ्यात् · अतः सकृत्क्रिया आघारादीनाम् · तेन मुख्यसंनिधिन्यायादङ्गिसंनिधावेवानुष्ठानमिति । अनेन न्यायेन कर्ममध्ये या इष्टयः व्रातपतीयाद्याश्च आपतन्ति ता अनुष्ठेया इति । सायम्प्रातर्दोहार्ताविन्द्रं पञ्चशरावमोदनं निर्वपेत्पुरोडाशं वा ॥२॥ एवं हि श्रूयते यस्योभयठ्ठविरार्तिमार्छेदैन्द्रं पञ्चदनं निर्वपेदिति · सांनाय्यं हि प्रकृत्यैतच्छ्रूयते तेन न ह्रविर्मात्रार्तौ · पञ्चशराव ओदनः पुरोडाशो वेति विकल्पः । इदानीमिदं विचार्यते किमुभयार्तौ पञ्चशरावः उतान्यतरार्तावपीति · किं तावत्प्राप्तम् उभयार्ताविति उभयोर्हि श्रूयते यस्योभयठ्ठविरार्तिमार्छेदिति · एवं प्राप्त ऽआह · भेदेनाप्युपपातात् ॥३॥ अन्यतरार्तावपि भवति पञ्चशरावः · ह्रविर्विशिष्टार्तिनिमित्तम् तत्रोभयशब्देन विशेष्यमाणो वाक्यं भिद्येत · तस्मादन्यतरार्तावपि भवति । इदानीमिदं विचार्यते पञ्चशरावः किं प्रतिनिधिः उत निमित्ते नैमित्तिकं प्रायश्चित्तमिति · किं तावत्प्राप्तम् · सूत्रेणैव पक्षः · तत्प्रतिनिधिः ॥४॥ तस्य सांनाय्यस्य विनष्टस्य सतः प्रतिनिधिरयम् · द्रव्ये नष्टे द्रव्यान्तरं विधीयमानं तत्कार्य ऽएव भवति · तस्मात्प्रतिनिधिरिति । प्रायश्चित्तं वा देवताश्रुतेः ॥५॥ वाशब्दः पक्षान्तरपरिग्रहे · प्राक्तमेतत् न प्रतिनिधिः · कुत एतत् देवतेः देवता ह्यत्र श्रूयते ऐन्द्रं पञ्चशरावमिति देवतासम्बन्धाद्यागविधानम् · नन्वैन्द्रमित्यनुवादः ततश्च द्रव्यमात्रविधानम् नेत्युच्यते अनुवादमात्रं ह्यनर्थकं भवति · अपि चानुवादोऽसमञ्जस एव पक्षे महेन्द्रस्यापि सांनाय्यदेवतात्वात् · तस्मात्प्रायश्चित्तमिति । देव॰ प्रयोजनम् नैमित्तिकानन्तरं पुनः सांनाय्यमुत्पाद्य यागः कार्यः । चरू सांनाय्यालाभे ॥६॥ आर्तौ सत्यां लाभे सति चरू भवतः । देव॰ वाचनिकः प्रतिनिधिरयम् · प्रधानयागसाधनभूतावदानमात्रपर्याप्तस्यापि सांनाय्यस्यालाभे अप्राप्तौ सायम्प्रातर्दोहयोः स्थाने चरू भवतः ।

---

१) ? अंते K.

सायंदोहस्थाने वा पुरोडाशः ॥७॥ चरुर्वेति विकल्पः । देव° अष्टाकपाल ऐन्द्रः आग्नेयविकारत्वात् । असांनाय्यवद्वा ॥८॥ अथवा यादृशमसांनाय्यवदामावास्यम् तादृगेव कुर्यात् · वाशब्दो विकल्पार्थः । देव° तद्यथा आग्नेयः पुरोडाशो वैष्णव उपांशुयाग ऐन्द्राग्नः पुरोडाश इति । दुष्टस्य हविषो ऽप्स्ववहरणम् ॥९॥ दुष्टं हविरप्स्ववहरेदिति श्रुतिः । देव° यत्केशकीटादिभिः सह पाकादिना द्वादशमलोपघातादिना अस्पृश्यस्पर्शविडालाद्यवघ्राणादिना वा दुष्टम् । उष्णे वा भस्मनि ॥१०॥ अवहरणम् । शिष्टभक्षप्रतिषिद्धं दुष्टम् ॥११॥ मन्वादिभिर्यदभक्ष्यमुक्तम् तद्दुष्टम् । एकस्यानिष्टे तदुक्तम् ॥ १२॥ हविर्गणे मानसादपचाराद्यद्येकेन यागो न कृतः स्यात् तदा कर्तव्य इति तदुक्तम् । देव° सिद्धान्तमाह · सांनिपातिकानि वा तस्य ॥१३॥ सांनि अङ्गानि कर्तव्यानि संस्पृशीनि । देव° सांकान्येव नारादुपकारकाणि न ह्यत्र कालभेदः कर्मभेदकोऽस्ति येन तत्वभेदादारादुपकारकाण्यपि पुनः क्रियन्ते · क्रमान्यथात्वमात्रनिमित्तमनादिष्टं (१.४) हूयते । इष्टं चेदाज्येन शेषम् ॥१४॥ इष्टं चेद्धविर्दुष्येत [शिषं] स्विष्टकृत् आज्येन कर्तव्यम् । हविरन्तरणे प्राक्प्रधानेज्यायाः[1] स्मृत्वान्वाहरेत् ॥१५॥ यदि नाम हविरन्तरितम् न गृहीतमेव तदा प्रांरेत् यागक्रमानुग्रहात् । देव° हविषोऽन्तरणं बहूनां मध्य एकस्याग्रहणम् · एकस्य हविषो भ्रान्त्या विस्मरणे प्रधानयागात्पूर्वं स्मृत्वा अनादिष्टपूर्वकमन्वाहरेत् ग्रहणादिभिः सांनिपातिकैः संस्कृत्य यागार्थं वेदिमध्य आसादनाय पश्चादाहरेत् । प्राग्वा समिष्टयजुषः संस्थाश्रुतेः ॥१६॥ समिंषो वा पूर्वं स्मृत्वान्वाहरेत् न प्रधानेज्याया एव · कुत एतत् संस्थाश्रुतेः अन्तो हि यज्ञस्य समिष्टयजुरिति · यावदपि अन्तो न भवति तावदप्यन्वाहरणं युक्तन्नूपमेवेति ।

हुतं चेत्संस्थाप्य तदेव पुनर्निर्वपेत् ॥१७॥ हुतं चेत्समिष्टयजुः संस्थाप्य तत्कर्म तदेव [विस्मृतं हविः] पुंपेत् । देव° तस्मिन्नेव विहारेऽग्न्यन्वाधानादि कर्मापवर्गान्तं कुर्यात् । देवताविपर्यासे पुष्कलं दत्वा यथानुपूर्व्यकरणम् ॥ १८॥ आग्नेयस्यावदानक्रमे यदग्नीषोमोच्चारणम् स देवताविपर्यासः · पुष्कलशब्दः

[1] Thus १. A. ज्याया ३. M. R.

सुवर्णपरिमाणवाचीति केचित् अपरे तु सारद्रव्यमात्रमाहुः । देव॰ यज्ञपार्श्वे (२५) अष्टमुष्टि भवेत्किंचित्किंचिदष्टौ च पुष्कलमिति (२७) धेनुर्वा यदि वानड्वान्मेषका द्वादशापि वा देवतानां विपर्यासे एतत्पुष्कलमुच्यते (२१) धान्यमुष्टिचतुःषष्टिरितरेषु च[2] पुष्कलमिति · तथान्यदपि (यज्ञ॰ २६) ग्रासमात्रा भवेद्भिक्षा पुष्कलं च चतुर्गुणमिति[1] · तेन देव्यासे धेनुर्वेत्यादिकमेव इतरेषु च पुष्कलदाननिमित्तेषु यथाशक्ति व्यवस्था समर्थस्य चतुःषष्टि[मुष्टि]परिमितधान्येन पुष्कलम् असमर्थस्य चतुर्ग्रासपरिमितेन · एतेन यत्सुवर्णमेकीयं यच्च सारद्रव्यमात्रम् तदुभयं निरस्तम् । अवदानयाज्यानुवाक्यासु च ॥१९॥ विपर्यासे एतदेव भवति · आग्नेयस्यावदानक्रमे यदग्नीषोमीयस्यावदानग्रहणम् सोऽवदानविपर्यासः । स्रुच्ये दुष्टे पुनर्ग्रहणम् ॥२०॥ देव॰ प्राप्तमेवैतदुत्तरेण सह विकल्पार्थमुच्यते · स्रुचि भवं स्रुच्यं जौहवादि · तस्मिन् जुहूपभृद्ध्रुवास्थे आज्ये दुष्टे पुनर्ग्रहणम् स्थालीतो धाम नामेति मन्त्रेण यथाविहितं कार्यम् । ध्रुवाया वा ततो यज्ञः प्रभवतीति श्रुतेः ॥२१॥ ध्रुवाया वा ग्रहीतव्यम् · वाशब्दो विकल्पार्थः · ततोऽतीति वाक्यैकदेशोपन्यासः । अदुष्टाद्वानयनमेके ॥२२॥ एकऽआचार्याः स्रुच्यादिवादुष्टादानयनमिच्छन्ति । तस्मिंश्च पक्षे · नोपभृतो ध्रुवायाम् ॥२३॥ ग्रहीतव्यम् । देव॰ जौहवे दुष्टे ध्रुवाया उपभृतो वा ग्रहणम् औपभृते दुष्टे जौहवाद्ध्रौवाद्वा ध्रौवे तु दुष्टे जुह्वा एव नोपभृतः । आज्यस्थालीदोषेऽन्यत् ॥२४॥ स्थालीदुष्टेऽन्यद्ग्रहीतव्यम् · न्याय एवायम् । देव॰ आज्यस्थालीशब्देन तत्स्थमाज्यमभिधीयते · अमेध्यातिपाते श्वाद्यवलीढे च · न्यायप्राप्तमेवैतदुत्तरविवक्षयोच्यते । अदोषो वा न वै देवाः कस्माच्चन बीभत्सन्तऽइति श्रुतेः ॥२५॥ देव॰ हविर्मात्रविषयमेतदुच्यते । अधिकं निरुप्य तच्च यजेत् ॥२६॥ मानसादपचारादधिके हविषि गृहीते तेनापि यागः कर्तव्यः संकल्पदोषपरिहाराय । एवं स्थितऽउच्यते · न वाचोदितत्वात् ॥२७॥ न वा तेन यागः कर्तव्यः न ह्यत्र चोदनास्तीति । ऐतु राजा वरुणो रेवतीभिरस्मिन्त्स्थाने तिष्ठतु मोदमानः अरिष्टा अस्माकं वीरा मा परासेचि मत्पय इति प्रणीता स्कन्ना अभिमृशेत् ॥२८॥ देव॰ भूमावन्यत्र

---

१) ॰षष्टि इतरे वक्ति Yajnap. २) चतुर्ग्रासं तु पुष्कलम् Yajnap.

वा पतिता अपः। भूमिर्भूमिमवागान्माता मातरमप्यगात् भूयाम पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति मृन्मयं भिन्नमभिमृशेत् ॥२९॥ स्थाल्यादि।

य अग्ने चिदभिश्रिषः पुरा जत्रुभ्य आतृदः संधाता संधिं मघवा पुरूवसुरिष्कर्ता विह्रुतं पुनरिति च घर्म्यम् ॥३०॥ घर्मे मृन्मयं घर्म्यं भिन्नमभिमृशेत् · चशब्दादधस्तनेन [च] मन्त्रेण। घर्मभेद [1] एवायमपरो विशेषः ·। देव॰ घर्मसम्बन्धि महावीरपिन्वनरौहिणकपालादि ॥ ॥ पञ्चमी कण्डिका ॥५॥ ॥

परमेष्ठ्यादींश्च चतुस्त्रिंशतं जुहोति ॥१॥ परमेष्ठ्यभिधीत इत्येवमादिव्याहृतीनां (८.५४) चतु॰होति तच्चाध्वर्युरादिष्टवात् अनादेशे हि ब्रह्मणो विधानम् (१४.३५) · अतश्च वक्ष्यमाणा (७-८) कालाहुतिरप्यत्र [सवाचना] भवति कर्तृभेदादिति। देव॰ भिन्ने पिन्वनादिकमुपशयां च पिष्ट्वान्यया मृदा संसृज्य पिन्वनादीनां करणाभिमर्शनाञ्जनधूपनप्रदहनोद्धरणासेचनानि तूष्णीं कुर्यात्।

घर्मधुग्घ्वाले चादोहे च ॥२॥ ह्वलनं चलनम् आत्यन्तिके चलने मरणऽ इत्यर्थः · तस्या एवादोहे च [2]। उदीच्या दोहस्थानेऽन्यस्याः ॥३॥ देव॰ घर्मदुघाया दोहनप्रदेशे उदङ्मुख्या अवस्थितायाः अन्यस्या गोः। शालाया वा पुरस्तात्प्राच्याः ॥४॥ अवस्थितायाः। पुच्छकाण्डाद्दक्षिणेऽस्थनि हुत्वा दोहयेत् ॥५॥ देव॰ पुच्छाद्दक्षिणविभागे उच्चे अस्थनि होमाधिकरणे परमेष्ठिनऽ इत्याद्याश्चतुस्त्रिंशतमाज्याहुतीः हुत्वा तामन्यां गां दो॰। पृषदाज्यस्कन्दने चैके ॥६॥ चतुस्त्रिंशद्धोममिच्छन्ति · एकीयग्रहणाद्विकल्पः (२.७)। देव॰ पृ॰ज्यस्य स्थालीस्थस्य स्रुकस्थस्य वा · अया विष्ठेति होमो (१०) नित्यम्। सोमेज्योपपाते चैकैकां यथाकालं हुत्वा यज्ञस्य दोह इति (८.६२) वाचयति ॥७॥ सोमेज्यायामुपपातः सोमेज्योपपातः न सोमयागोपपातः · एवं यदि किंचिदापद्येतेति श्रूयते (१२.६.१.६-३६) · तत्र [परमेष्ठ्यादिचतुस्त्रिंशदाहुतीनां मध्ये] यथाकालमेकैकामाहुतिं हुत्वा यज्ञस्य वाचयति · यथाकालग्रहणेन च अथ यदि पण्यमानः (॰१०) अथ यदि क्रयायोपोत्थित (॰१) इत्येवमादि गृह्यते · एवमेव हि श्रूयतऽ इति। अत्र च ब्रह्मणः कर्तृत्वम् ता ब्रह्मैव जुहुयादिति (॰३८) · ननु च सूत्रकारेण नैवैतदभिहितम् यथाकालमे-

[1] See २६.७.४६.  [2] See ४.५.७.४.

कैकां ब्रह्मा जुहोतीति नैवैतन्नोक्तम् उक्तमेव ब्रह्माऽनादिष्टानीति (१४.३५)· कथमयमनादेश इति चेत् यत्र नाम निमित्तादेशपूर्वकं नैमित्तिकमादिश्यते यथा पृषदाज्यस्कन्दने जुहुयाद्या विष्ठा जनयन्निति (१०) पृषदाज्यस्कन्दनेऽभि-मृशेदिति च स आदेशः· इह पुनर्नैवं निमित्तादेशपूर्वको नैमित्तिकादेशः इह हि पद्यमानः किंचिदापद्येतेति (१२.६.१.२०) अभिषूयमाणः किंचिदापद्ये-तेति (°२१) च अनिमित्तादेशपूर्वको नैमित्तिकादेशः· तस्मादनादिष्टसूत्रेण (१४.३५) एतान्यपि गृह्यन्ते· तथा चैकैकहोममेवाङ्गीकृत्य ता ब्रह्मैव जुहुयादित्युक्तम् (१२.६.१.३८) चतुस्त्रिंशद्धोमस्तु आदेशऽएवेत्यध्वर्युकर्तृकः। आग्नीध्रीये सु-त्यासु ॥८॥ सुत्यासु वर्तमानासु कालाहुतिः आग्ये· आहवनीयापवादोऽयम् (१२.६.१.२)। देव° कालाहुतयः दीक्षासूपसत्सु चापररात्रऽऋत्विजः प्रबोधयन्तीत्ये-तस्मात्प्राक् (९.१.१) आहवनीये होतव्याः ऋत्विक्प्रबोधनादारभ्य सुत्यायामा-ग्नीध्रीये। आ पवस्व हिरण्यवदित्युद्गातृहोमो (८.६३) धाङ्गारोहणे यूपस्य ॥९॥ काकारोहणे यूपस्य· आहवनीये। पृषदाज्यस्कन्दने जुहुयाद्या विष्ठा जनयन्कर्वराणि स हि घृणिरुरुर्वराय[1] गातुः स प्रत्युदैद्धरुणो मध्वोऽअग्रꣳ स्वायां यत्तन्वां तनूमैरयत[2] स्वाहेति ॥१०॥ देव° अध्वर्युराहवनीये सकृद्गृहीतमाज्यं जुहु-यात्· चतुस्त्रिंशद्धोमश्च (६) विकल्पेन भवति अयं नित्यं भवत्येव। घर्मधुक्शा-र्दूलहता चेत्स्पृतीर्जुहुयाच्चन्द्रात्ते मन स्पृणोमि स्वाहा सूर्यात्ते चक्षु स्पृणोमि स्वा-हा वातात्ते प्राणान्त्स्पृꣳहा दिग्भ्यस्ते श्रोत्रꣳ स्पृꣳहा ऽद्भ्यस्ते लोहितꣳ स्पृꣳहा पृथिव्यै ते शरीरꣳ स्पृणोमि स्वाहेति ॥११॥ शार्दूलो व्याघ्रः तन्निपातने स्पृतीरा-हुतीर्जुहोति (११.८.४.६)। हुत्वान्यामाजतेति ब्रूयात् ॥१२॥ अध्वर्युरेव हाप्रत्य-योपदेशात्। स्वयꣳहोम्यशक्ताऽउपासीत ॥१३॥ स्वयंहोमी यजमानः तदशक्तौ समीपऽआसीत। देव° अन्येन होमे क्रियमाणे अग्निसमीपे आ°। उपसर्पणा-शक्तावासनमधः ॥१४॥ यदि चङ्क्रमणेऽप्यशक्तस्तदासीताधः। देव° अग्निसमीपे गम-नाशक्तौ खट्वादेरुत्तीर्य अधः भूमौ आसनं कार्यम् खट्वादिसमीपऽएव· द्रव्यत्यागमा-

1) Thus the Kâṭhaka १.६ १४.३. Ath. ७.३.१. घृणिरुर्वराय १.३. MKR. 2) यंतः १. यतः M sec. m.

ᴗᴗᴗ ᴗᴗᴗ*

त्रस्य करणासामर्थ्ये पत्नी त्यागं कुर्यात् उभयोरसामर्थ्ये नियुक्तः कश्चित् ॥ ॥ षष्ठी कण्डिका ॥ ६ ॥ ॥

सायमाहुत्याऽऽहुतायां चेद्दुर्बलः स्यात्तदेव प्रातराहुतिस्तत्संस्थाश्रुतेरग्निहोत्रस्य ॥ १ ॥ यदि सा॰तायां यजमानो दुर्बलो भवति प्रातराहुतिकालं यावन्न जीवतीत्याशङ्क्यते तदा तस्मिन्नेव काले प्रातराहुतिर्देया · कुत एतत् तत्सं॰त्रस्य प्रातराहुत्यां हि संतिष्ठतेऽग्निहोत्रम् · तद्धि प्रकृत्य सायं जुहोति प्रातर्जुहोतीत्युच्यते आग्नेयीं सायमाहुतिमाहुः सौरीं प्रातराहुतिमिति उभयोरप्यग्निहोत्रसंज्ञा नैते द्वे कर्मणी अग्निहोत्रं जुहोतीत्येकवचननिर्देशात्[1] · न चैकमेव कर्म शरद्वसन्ताग्रयणवत्पुनः प्रातरभ्यस्यते देवतान्यत्वात् अन्या चान्या च देवतोभयत्र अतः सायारम्भं प्रातरपवर्गमिदमेकं कर्मेति · एतदेव च द्यवयवमग्निहोत्रं प्रकृत्य अग्निहोत्रं जुहुयात्स्वर्गकाम इति श्रूयते यावज्जीवमग्निहोत्रं जुहुयादिति च · तस्मादवयवद्वयस्याप्येकं कार्यमित्येककर्मत्वम् · यद्येकमेव कर्म तत्त्वं किमिति न भवति कालभेदादित्यदोषः यथा दर्शपूर्णमासयोः कार्यैकत्वेऽपि कालभेदान्नानात्वं तथैवमत्रापि · तदुक्तमाचार्येण (२६. ६. २७) आवृत्तिर्वा प्रधानकालत्वादिति · तथा चाह (२. ३. १. ४) स यत्सायमस्तमितेऽभिकरोतीति पुनश्च (५) अथ यत्प्रातरनुदितेऽविभ्राजमान उदेतीति कार्यैकत्वमिव दर्शयति · तस्मात्साधूक्तम् तत्संस्था॰त्रस्येति । जीवेच्चेत् पुनः काले ॥ २ ॥ यदि पुनर्जीवति यजमानः काले प्रातराहुतिर्देया · नित्यानां हि निमित्तं कालः निमित्तमन्तरेण च नैमित्तिकं कृतमप्यकृतसममित्यभिप्रायः । एवं प्राप्तेऽऽह ·

न वा कृतत्वात् ॥ ३ ॥ नैव प्रातराहुतिर्देया कृता हि परिसमाप्तिस्तस्येति · ननु चोक्तम् कालो निमित्तभूत इति न च निमित्तमन्तरेण नैमित्तिकम् कृतमप्यकृतमिव भवति तस्मात्पुनः क्रियेति · अत्रोच्यते · न प्रातर्होमस्य निमित्तं कालः अन्यदेव हि तत्र निमित्तम् सायारम्भः · अतः प्रातर्होमस्य श्रूयमाणोऽपि कालो बलादङ्गीभवति न हि निमित्तस्यानेकत्वमिष्यते · तस्मात्कृतत्वान्न पुनः प्रातराहुतिर्देयेति । पौर्णमासान्ते[2] चामावास्यमग्निहोत्रवत् ॥ ४ ॥ तु-

[1] See schol. at ४. १२. १. [2] मास्यंते ३ sec. m. M pr. m.

त्यन्यायत्वात् · अधिकरणातिदेशः चातुर्मास्यराजसूयादिष्वपि प्रदर्शनार्थः ।

हविष्येषु चेदाह्रियमाणेषु मरणम् दक्षिणाग्नावेनान्त्संदहेत् ॥५॥ हविष्येषु चेद्व्री-ह्रियवादिषु आंशुषु पौर्णमासादौ यजमानस्य मरणं भवति दक्षिं॰हेत् हविष्यान् · एवं हि श्रूयते (१२. ४. २. ५-१०) । न वायुक्तत्वात् ॥६॥ न वा दक्षिणाग्नौ संदहेत् · अयुक्तो ह्याहरणकाले हविष्यग्रहणेन तेषां योगः । देव॰ अविनियुक्तत्वात् ग्रहणेन हि हविष्याणां विनियोगो भवति नाहरणमात्रेण ।

गार्हपत्ये ग्रहणादि प्रागासादनात् ॥७॥ संदहेत् संनिधानात् । देव॰ हविर्ग्रहणादारभ्य आसादनात्प्राक् यजमानस्य मरणे हवींषि गा॰त्येऽग्नौ दहेत् ।

आसादनाद्याहवनीये[1] ॥८॥ संदहेत् संनिधानादेव । देव॰ वेद्यासादनादि प्राग्यागात् यजमानस्य मरणे तान्यासादितानि हवींषि आहृ॰ये दहेत् ।

मरणान्तं भवति ॥९॥ देव॰ तदारब्धमामावास्यं क्रियमाणं मृते यजमाने [अन्तवद्भवति] कर्तुरभावात् हविःप्रतिपत्तिविधानाच्च । सऽस्थाप्यं वा प्रक्लृप्तत्वात्[2] ॥१०॥ प्रवृत्तं हि तत् तस्यापरिसमाप्तौ दोषश्रवणात् तदुक्तमाचार्येणापि (१. ४. ४) दोषश्चासमाप्तौ स्यादिति । एवं पक्षद्वयोपप्रदर्शने सति य एव युक्ततरः पक्षः स एवाश्रयणीयः कश्चासौ मरणान्तमेव भवतीति न हि मृते यजमाने मिथ्या-संकल्पदोष आशङ्क्यतऽइति । हविष्यवद्धौम्यम् ॥११॥ अग्निहोत्रहोमार्थमपि द्रव्यं ह॰वत् द्रष्टव्यम् · एतदुक्तम् गार्हप॰दनादित्येवमादि (७) ।

संदीपनवतीः प्रत्यधिश्रयन्त्युखाः ॥१२॥ मृते यजमाने संदीपनवतीनामुखानां प्रत्यग्न्यधिश्रयणम् · संदीपनं च गोमयशुष्ककर्पासादिना । देव॰ प्रवृञ्ज्यादित्येकवचनात् (१२. ५. २. ३) एक एवाधिश्रयेत् सूत्रेऽधिश्रयन्तीति बहुवचनमधिकारिबहुत्वख्यापनार्थम् । संतापजानग्नीनादाय सशरीरा दक्षिणा गच्छन्ति ॥१३॥ देव॰ सम्यक्तापाज्जायन्तऽइति सं॰जाः तानग्नीन् स्थालीस्थानेवादाय यजमानशरीरसहिताः सपिण्डाः दक्षिणस्यां दिशि गच्छन्ति । अनसा ॥१४॥ शरीरमुद्वहन्ति[3] शाखान्तरात् । देव॰ उखास्थानग्नीन्यजमानशरीरं पात्राणि च सर्वमनसि कृत्वा दक्षिणा गच्छ-

---

1) सद् K. ३ sec. m. A (text). 2) ? प्रक्लृप्त॰ K (text). प्रवृत्त A (text and comm.) K (schol). प्रक्लृप्त॰ १. ३. M. 3) श॰न्ति is given as part of the text by १ and M marg. deest as such ३. R. K. A. M pr. m.

न्ति · दाहार्थं सभ्यावसथ्यौ च प्रत्यक्षावेव स्थाल्यां कृत्वा नेयौ न संतापनौ ।
वितानं साधयित्वा समे बहुलतृणेऽन्तराग्नी चितिं चिनोति ॥१५॥ वितान-साधनमग्नीनां यथादेशस्थापनं कृत्वा समे तृणबहुले देशेऽन्तराग्नी काष्ठैः चि°ति । पूर्वतरम् · उद्धृत्य क्षीरिणोः पुरुषाह्वतीः ॥१६॥ पुरुषमाह्वानं यासामोष-धीनाम् ता उद्धृत्य । देव° क्षीरयुक्ताः पु°तीः पुरुषनाम्नीः पुंलिङ्गशब्दाभिधेयाः अर्काद्याः । विशाखशराश्मगन्धापृश्निपर्ण्यध्याण्डाश्च[1] ॥१७॥ उद्धृत्येति वर्त-ते · विशाखा दूर्वा शरो मुञ्जः पृश्निपर्णी माषपर्णी अध्याण्डा ठण्ठणिका । देव° अश्वगन्धा आसंधिः · पृश्निपर्णी लक्ष्मणेत्यपरे · अध्याण्डा च ब्रह्ममाण्डूकी-ति[2] निगमे (७) । केशश्मश्रुनखलोमनिकृन्तनानि कृत्वा विपुरीषं चेछन् ॥१८॥ देव° इछन्वि°षम् उदरं पाटयित्वा पुरीषरहितं कुर्यात् । केशादि निखाय सर्पिषान्तरक्त्वा चितावेनमादधाति कृष्णाजिनमास्तीर्य प्राक्शिरसम् ॥१९॥ यजमा-नम् · सर्पिषाभ्यञ्जनं प्रक्षालनं च विपुरीषपक्षऽएव । सप्तसु प्राणायतनेषु सप्त हिरण्यशकलान्प्रास्यति मुखे प्रथमम् ॥२०॥ देव° मुखे नासिकाद्वये चक्षुर्द्वये कर्णद्वये च · सुवर्णखण्डानि सूक्ष्माणि । दक्षिणहस्ते जुहूं सादयति घृतपूर्णाम् ॥२१॥ अधिकारमुपजीवन्नाह · स्फ्यं च ॥२२॥ दक्षिणहस्तऽएव · पाठक्रमेण (१२. ५. २. ७) सर्वपात्रचयनान्ते । उपभृतं सव्ये ॥२३॥ सादयतीति वर्तते ।
उरसि ध्रुवाम् ॥२४॥ मुखेऽग्निहोत्रहवणीम् ॥२५॥ नासिकयोः स्रुवौ ॥२६॥ देव° अस्मात्त्वमित्याहुतिहोमानन्तरम् (३८) नेदानीम् । कर्णयोः प्राशित्रहरणे शिरसि चमसं प्रणीताप्रणयनम् ॥२७॥ कपालानि चैके ॥२८॥ एके तन्नेछन्ति प्रतिपत्त्यन्तरविधानात् अप्स्ववहरणं हि तेषामुक्तम् (३२) । पार्श्वयोः शूर्पे ॥२९॥ द्वितीयं प्रतिप्रस्थातृसक्तम् · अकृतवरुणप्रघासस्य तु छिद्रैकं द्वेधोपधीयते तैत्तिरी-यपाठा[त्] छिद्रैवैकमिति । उदरे पात्रीं समवत्तधानीं पृषदाज्यवतीं शिश्ने शम्याम् अरणी वृषणयोः ॥३०॥ अन्तरोरू यज्ञपात्राण्यन्यानि ॥३१॥ उपधीयन्ते । देव° अनुक्तस्थानानि उलूखलमुसलपिष्टपात्र्युपवेषाभ्रिशृतावदानपुरोडाशपात्रीपी-ठषडवत्तपूर्णपात्रचर्वाज्यस्थाल्यादीनि । अप्स्ववहरणं मृन्मयाश्ममयानाम् ॥३२॥

---

[1] Thus ३. R. K. M. A (text). राम्य १. राश्व A (Comm.) [2] ? ब्रह्मदंडी Nigama.

देव॰ अश्ममयानां दृषदुपलादीनाम् मृन्मयानां अग्निहोत्रस्थालीकपालसांनाय्योखो-पसर्जनीपात्रान्वाहार्यपात्रादीनाम् · आज्यस्थाल्यपि मृन्मयी चेत् । अयस्मयानि वा ब्राह्मणाय दद्यात् ॥३३॥ वा एषामप्यप्स्ववहरणाम् · विकल्पेन हि श्रुतौ पाठः (१२.५.२.१४)। देव॰ लोहमयानि श्रौविलीस्थानि शासादीनि । अनुस्तरणी चेत् पश्चात्कर्णमाहत्य हस्तयोर्वृक्कौ ॥३४॥ देव॰ कर्णप्रदेशस्य पश्चाद्भागे आहननं प्रहारं कृत्वा मारयित्वा तस्याः कुक्षिगोलकौ मृतस्य हस्तयोर्निधेयौ । अङ्गैरङ्गानीति जानूकर्पः ॥३५॥ देव॰ प्रेतस्य हस्तपादावयवेषु अनुस्तरण्याः हस्तपादादीन्युपधेयानि । न वास्थिसंदेहात् ॥३६॥ न वाङ्गान्यङ्गेषूपधीयन्ते · [एकत्रदाहे] अस्थ्नां हि संदेहो मा भूदिति · अत उत्कृत्य मांसान्युपधेयानि । वपया मुखमवच्छाद्याग्निभिरादीपयन्ति ॥३७॥ वपया च मुखाच्छादनमनुस्तरणीपक्ष एव · अनुस्तरणी गौः । आहुतिं जुहोति पुत्रो भ्रातान्यो वा ब्राह्मणोऽअस्मात्त्वमधि[1] जातो ऽसि त्वदयं जायतां पुनः असौ स्वर्गाय लोकाय स्वाहेति (३५.२२) ॥३८॥ सकलपाठः पत्न्या अप्यनूहप्रज्ञप्त्यर्थः · ब्राह्मणग्रहणं च पुत्रभ्रात्रोः क्षत्रियवैश्ययोर्व्युदासार्थम् । अनपेक्षमेत्योपस्पृशन्त्यपः ॥३९॥ चितिमनपेक्षमाणा एत्योऽपः · अपामुपस्पर्शनं गृह्योक्तम् (पारस्कर॰ ३.१०) ॥ ॥ सप्तमी कण्डिका ॥७॥ ॥

संचयनं चतुर्थ्याम् अयुग्मान्ब्राह्मणान्भोजयित्वा पलाशवृन्तेनास्थीनि परिवर्त्य -परिवर्त्याङ्गुष्ठकनिष्ठिकाभ्यामादाय पलाशपुटे प्रास्यति ॥१॥ संचयनमिति कर्मणो नामधेयम् · तच्चतुर्थेऽहनि कर्तव्यम् । देव॰ वटपलाशादिपत्त्रमूलेन परिवर्त्य भस्मनागुप्तानि प्रकटानि कृत्वा · वटकदलीपलाशादिपर्णपुटे । शम्यवकाः कर्दमं च श्मशाने ॥२॥ चशब्दात्प्रास्यति · श्मशानशब्देन अस्थिसंचय उच्यत ऽइति सम्प्रदायः भस्मकूट इत्यपरे · ते च शमीशब्देन शमीशाखामिच्छन्ति इतरे तु तत्पर्णानि । देव॰ अवका शेवालः · कर्दमः क्वथिता मृत्तिका पक्षकर्दम इत्यपरे · श्मशाने भस्मराशौ । अक्तास्थीनि सर्वसुरभिमिश्राणि दक्षिणापूर्वायतां कर्षू खात्वा कुशानास्तीर्य वस्त्रावकृत्तं च हारिद्रं वागिति निवपत्यस्मिन् ॥३॥ घृतेनाक्तास्थीनि सर्वसुरभिणा मिश्रीकृत्य · वागित्यनेन मन्त्रेण नि-

1) Thus M. ३. णोऽस्मा॰ १. RKA.

वपत्यस्थीनि । देव॰ कर्पूरागुरुचन्दनकस्तूरिकाकेसरादिभिः सर्वैः सुगन्धैः द्रव्यैर्मिश्राणि · वस्त्रखण्डं हरिद्रया रक्तम् । एतद्वाजसनेयकम् ॥४॥ वक्ष्यमाणं तु शाखान्तरात् । अनेन वा ॥५॥ मन्त्रेण निवपति । वा[१] मनसानार्तेन वाचा ब्रह्मणा त्रय्या विद्यया पृथिव्यामक्षिकायामपाᳪ रसे[२] निवपाम्यसाविति ॥६॥

श्मशानं चिकीर्षतः कुम्भे संचयनम् ॥७॥ पितृमेधं कर्तुमिच्छतः कु॰नं कर्तव्यम् · तस्मिंश्च पक्षे कुशहारिद्रास्तरणमस्थिसंस्काराद्धर्ममात्रवाच्च कुम्भऽएव कर्तव्यम् । देव॰ श्मशानशब्दः पितृमेधवाची श्रवणात् (१३.८.१.१) । निधानं च तूष्णीम् ॥८॥ निधानं[३] च कुम्भस्य तूष्णीं कर्तव्यम् । देव॰ कुम्भस्य क्वचिद्दूरप्रदेशे निखननं गर्तमध्ये स्थापनम् । प्रोषितश्चेत्प्रेयात्प्राचीनावीती निवान्यां दुग्ध्वा दक्षिणतोऽधिश्रयणोद्वासने ॥९॥ देव॰ प्रोषितस्य मरणं संनिकृष्टे देशान्तरे चेत् शरीरमेव दाहार्थमग्निसमीपे आनेतव्यम् विप्रकृष्टे चेत्तदा यत्र मृतस्तत्रैव लौकिकाभ्यां काष्ठाभ्यामग्निं मथित्वा काष्ठवदेव विधिरहितं शरीरं दग्ध्वास्थीन्यानीय विधिवत्पुनर्दाहः कर्तव्यः · शरीरस्य तदस्थ्नां वा गृहागमनपर्यन्तं प्रतिदिनमेव सायम्प्रातर्होमः पुत्रादिभिः कार्यः [तत्र]होमे विशेषमाह · नि॰न्यां मृतवत्सामन्येन वत्सान्तरेण दुह्यमानां गां दुग्ध्वा गार्हपत्याद्दुष्णं भस्म दक्षिणास्यां दिशि निरुह्य तस्मिन्नुष्णे भस्मन्यधिश्रयणमुद्वासनं च गार्हपत्याद्दक्षिणस्यां दिशि कुर्यात् ।

तत एव हरणम् ॥१०॥ दक्षिणात एव स्रुग्घरणं कर्तव्यम् । अधस्तात्समिधं धारयन् ॥११॥ स्रुचं हरतीति शेषः । उदगग्रान्कुशान्दक्षिणाग्रान्कृत्वा ॥१२॥ तांश्च स्वावसरऽएव । सकृद्वा पितृवत्पर्यस्य ॥१३॥ सकृदेव पितृवत् अपसव्यं पर्यस्येत् (१२.५.१.६) । अतः परं कर्माचष्टे · । देव॰ एकवारमेव पि॰वदपसव्येन दक्षिणाभिमुखः पितृतीर्थेनाधोमुख्या स्रुचा प॰स्य आहवनीयमध्ये प्रक्षिप्य वक्ष्यमाणं कुर्यात् · सकृद्ग्रहणेन द्वितीयाहुतेर्निरासः · एवकारार्थेन वाशब्देन होमव्यतिरिक्तस्योद्गिङ्गनोपमार्जनप्राशनोद्गुक्षणासमिदाधानादेर्निरासः । शरीराण्याहृत्य कृष्णाजिने पुरुषविधिं विधायोर्णाभिः प्रच्छाद्याज्येनाभिघार्य पूर्ववद्दाहः ॥१४॥ देव॰ संदीपनवत्यधिश्रयणादिना (७.१२) दाहः कर्तव्यः । शरीरनाशे त्रीणि षष्टिशतानि

---

[१] वां? or आ वा? [३] ? ॰क्षिताया॰ AR. रसेन A. [२] निखननं K pr. m.

पलाशवृन्तानां कृष्णाजिने पूर्ववत् ॥१५॥ पुरुषविध्यादि पूर्ववत् दाहान्तम् · तेषा-मेव संचयनम् पितृमेधश्च तैरेवेति । अनिष्ट्वाग्रयणेन नवस्याश्नीयात् पतित-स्य भुक्त्वा प्रतिगृह्य विद्विषाणयोर्वायाज्यं याजयित्वाविं प्रतिगृह्योभयाद्वा¹⁾ यस्या-ग्निभिरन्यं याजयेयुर्यो वा यजेत वैश्वानरं निर्वपेत् ॥१६॥ निगदव्याख्यातम् · वैश्वा-नरो यजनीयेऽहनि अन्वारम्भणीयापूर्वकः । देव° आग्रयणेष्ट्या यजनमकृत्वा यदि यजमानो नवनिष्पन्नस्य धान्यस्य व्रीहियवादेरश्नीयात् तदा वैं° द्वादशकपालमग्नि-गुणयुक्तं यजनीयेऽहनि निर्वपेत् · तथा पति° पतिता महापातकाद्यो विहि-तानधिकारिणः तेषां पतितानामन्नं भुक्त्वा किंचित्प्र°ह्य च वैश्वानरं निर्वपेत् · तथा विद्विषा वि°णौ द्वेषं कुर्वाणौ तयोरुभयोर्द्वेष्यद्विषतोरन्नं भुक्त्वा किंचिद्रवादिकं प्र°ह्य वा वैश्वा° · तथा मन्त्रादिभिर्योऽयाज्य उक्तः तं या°त्वा वै° · तथा अविं मेषं प्र°ह्य वै° · तथा उ°द्वा उभयत इत्यधस्तादुपरिष्टाच्च दन्ता यस्य तदुभयादत् प्राणिषु पुरुषाश्वादिकम् तत्प्र°ह्य वा वै°पेत् · तथा यस्य सम्बन्धिभिरग्निभिः अन्यं य-जमानमृत्विजो या°युः सोऽग्निस्वामी स्वाग्निभिरन्ययाजननिमित्तं वै°पेत् · यो वा आत्या अन्याग्निभिः यजेत सोऽपि निर्वपेत् । कृष्णं वासो दक्षिणा ॥१७॥

पुरोडाशे क्षामेऽवशिष्टं समाप्य तदेव पुनर्निर्वपेत् ॥१८॥ क्षामे दग्धे पुरोडाशे ऽवशिष्टं कर्म समाप्य तस्यैव हविषो निर्वापः कार्यः । अत्रेदं विचार्यते · किम-शेषदाहे पुनर्निर्वापः उतैकदेशदाहेऽपीति · किं तावत्प्राप्तम् · सूत्रेणैव पक्षः ·

एकदेशदग्धेऽपि संयोगात् ॥१९॥ ए°ग्धेऽपि नैमित्तिकं प्रवर्तते · कुत एतत् दाहसंयोगात् दाहसंयोगोऽत्र निमित्तम् एकदेशदाहोऽपि दाह एवेति ।

दर्शनाच्च ॥२०॥ दृश्यते चायमर्थो यथैकदेशदाहेऽपि भवति यद्वा तद्धविः सं-तिष्ठतेऽथ पुनर्निर्वपेदिति तेनैव हविषा समाप्तिं दर्शयति तच्चैकदेशदाह उपप-द्यतऽइति । एवं प्राप्तऽआह · न नित्यत्वात् ॥२१॥ नैकदेशदग्धे नैमि-त्तिकम् नित्यो ह्यग्निसंयोगात्पुरोडाशस्य दाहो भवति [देव° तेषु हि कपालेषु पुरोडाशमवस्थाप्योपरि ज्वलद्भिर्दर्भतृणैः श्रपणे क्रियमाणे सूक्ष्मांशदाहस्य वर्जयि-तुमशक्यत्वेन] · तत्र यस्य पुरोडाशो²⁾ क्षायतऽइति निमित्तशब्दोपरोध[:] स्यात् ·

1) °त्वाविप्र° MKR. A text pr. m. °याद्वा ३. MK. 2) ? Thus A. शो क्षामत K.

xxx xxx

सर्वस्यैवाग्निसंयोगात्पुरोडाश[ः] क्षामवमापद्यतऽइति · तस्मान्नैकदेशदाहे नैमि-त्तिकम् । यत्तु दर्शनमुक्तम् तत्परिह्रियते · कर्मार्थं दर्शनम् ॥२२॥ तद्धविः संतिष्ठते [इत्यत्र] हविःशब्देन कर्म लक्ष्यते यदा तद्धविष्कं कर्म संतिष्ठतऽइति · अशेषस्य दग्धौ सत्यां द्रव्यान्तरेण परिसमाप्तिः ॥ ॥ अष्टमी कण्डिका ॥८॥ ॥

पशुश्चेदुपाकृतः पलायेत वायवे तमनुदिश्यान्यं तद्वर्णं तद्वयसमालभेत ॥१॥ यदि पशुरुपाकृतो नश्येद्वायवे तं पशुम[नुदिश्या]यं वायवऽइत्येवमनुदेशं कृत्वा अन्य-स्तद्वर्णास्तद्वया आलब्धव्यः । देव॰ तृणोपस्पर्शनादारभ्य प्राङ्नियोगादिदं द्रष्टव्यम् · नियोगादूर्ध्वं तु नष्टः प्राप्यते चेत् तदाधर्यवं हुत्वा तेनैव यागः अप्राप्तौ आधर्यवं हुत्वान्येन सदृशेन यागः । उपलभ्य वायवे तम् ॥२॥ पशुमुपलभ्य वायव ऽआलभेत मिथ्यासंकल्पदोषपरिजिहीर्षया । अनादरणं वा ॥३॥ न वा पुनरालम्भ आदर्तव्यः · न ह्यत्र चोदनेति । प्राक्प्रयाजेभ्यश्चेन्नियुक्तो म्रियेतान्यमालभेत ॥४॥ देव॰ प्राग्भ्य इत्युक्तत्वात् प्रवृत्तेषु प्रयाजेषु मृते तेनैव यागः ।

पूर्वस्य वपां दक्षिणाग्नौ जुहुयात् ॥५॥ तदा च पूर्वस्य वपा दग्नौ होतव्या ।

सोमश्चेन्मार्जालीये यऽईक्षानाः पितरो ये पितामहा येऽनीक्षाना यज्ञियाः सोमपासस्तेषामिष पशुरालब्धोऽग्नौ स्वाहा देवेभ्यः सुकृतो यमायेति ॥६॥ सोमश्चेत् मा‍र्ये वपा होतव्या । अनपनयो वादुष्टत्वात् ॥७॥ वाशब्दः पक्ष-व्यावृत्तौ · अनपनयः पूर्वस्य पशोः न ह्यसौ दुष्ट इति · अतस्तेनैव यागः कर्तव्यः तदीयैव वपा दक्षिणाग्नौ मार्जालीये वा होतव्येति · नैमित्तिकका-र्यापत्त्या चात्र दक्षिणाग्निमार्जालीययोराहवनीयधर्मप्रवृत्तिः । अवदानहानौ नाद्रियेत ॥८॥ पश्ववदानहानावनादरः · एवं हि श्रूयते (३. ८. ३. १६) तस्माद्यदि किंचिदवदानं हीयेत न तदाद्रियेतेति । हृदयनाशे त्वन्यमालभेतेत्येके हृदयं पशुरिति श्रुतेः ॥९॥ एके आचार्या हृन्नाशेऽन्यं पशुमालभन्ते · यस्मादेवं[१] श्रूयते (॰१६) हृदयमु वै पशुरिति · तन्नाशे च सर्व एव पशुर्नष्टः स्यादिति ।

सर्वेषां वाऽयस्य यजेत् ॥१०॥ वाशब्दः सूत्रद्वयोपात्तपक्षव्यावर्तकः · नावदानहा-नावनादरो न च हृदयनाशेऽन्य आलब्धव्यः यत्कारणं यदि किंचिदवदानं[२]

[१] ? तस्मा॰ K. [२] ? यत्किंचि॰ K.

ह्रीयेत न तदाद्रियेतेत्यर्थवादपरिशेषोऽयम् · किमर्थ इति चेत् स हृदयस्यैवाग्रे ऽवद्यतीत्यग्रताविधानार्थः (९.५) · हृदयमु वै पशुरित्ययमप्यर्थवादोऽग्रताविधानार्थ एव · तस्मात्सर्वेषामवदानानां प्रत्येकं नाशे आज्यस्य यजेत्। उक्तं चाचार्येण · अर्थवादमात्रं पशुवचनम् ॥११॥ इति। देव॰ हृदयमु वै पशुरित्येतत्पशुत्वं हृदयस्य यत्पशुत्वकथनं तदर्थं ऽत्रम् स हृदयस्यैवाग्रेऽवद्यतीत्यग्रताविधिरिति शेषः · अतो न स्वार्थप्रमाणम् · तेन हृदयनाशेऽप्यनादिष्टं कृत्वा आज्यमेवोपादेयम्। संज्ञप्यमानश्चेद्वाश्येताकृतिं जुहुयात् यत्पशुर्मायुमकृतोरो वा पद्भिराहते[1] अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहस इति ॥१२॥ इमं मे वरुणेति (२१.१-२) च प्रत्यृचं द्वाभ्याम् ॥१३॥ मन्त्राभ्यां जुहोति। पशूखा चेत्स्रवेत्सांनाय्योखा वा तामभिमन्त्रयेतोखा स्रवल्लीमगदामगन्म त्वष्टा वायुः पृथिव्यन्तरिक्षम् यत श्चुनङ्कुतमग्नौ तदस्तु न तत्प्राप्नोति निर्ऋतिः परस्तादिति ॥१४॥

यूपविरोहणेऽन्तस्तन्त्रं सत्स्थितेऽहनि ॥१५॥ ॥ नवमी कण्डिका ॥९॥ ॥

त्वाष्ट्रं बहुरूपमालभेत ॥१॥ यद्यहर्गणे तन्त्रमध्ये यूपः रूढो भवति तदा सं॰ ऽहनि त्वष्टृदेवत्यं पशुं बहुरूपं पाटलमालभेत · सर्वाहःशेषभूतो यूपः तन्निमित्तत्वाच्च पशुरपि सर्वाहःशेषभूत एवेति सं॰ऽहनीत्युक्तम् तत्कालता मा भूदिति। देव॰ अथानूबन्ध्यायां गर्भसंदेहे तत्सद्भावे प्रायश्चित्तमाह · अनूबन्ध्यायै वपामुत्खिद्यानुमर्शं गर्भमेष्टवै ब्रूयात् ॥२॥ अनेन च शमिता प्रेष्यते ततश्चाध्वर्युः प्रैषदाने। दर्शने स्थालीं चैवोष्णीषं चोपकल्पयितवै ब्रूयात् ॥३॥ अयं च शमितुः प्रतिप्रैषः तदर्थोऽध्वर्योरेव। देव॰ स्थालीं मेधश्रपणार्थाम् उष्णीषं गर्भवेष्टनार्थम्। वपान्तेऽनपेक्षमध्वर्युः प्रेष्यति निरूहैतं गर्भमिति (४.५.२.३) विरुह्य श्रोणी प्रत्यञ्चं निरूहितवै ब्रूयात् ॥४॥ प्रैषद्वयं चैतत् उभयत्र हि क्रियापदमाम्नातम् प्रेष्येति ब्रूहीति च · तत्रेतिकरणपरिच्छिन्न एकः प्रैषः शेषो द्वितीयः · प्रयोजनम् मध्ये विरामः। निरुह्यमाणमभिमन्त्रयत एजतु दशमास्य इति (८.२८) पशुवदवदानं गर्भस्य ॥५॥ कर्तव्यम्। कण्ठं वावकृत्य

---

[1] हृते ३ pr. m. M pr. m. हतः ३ sec. m. M sec. m. १. हतेः। आपस्तम्बे ३ marg. हतः R.

स्थाल्यां मेधस्रावणम् ॥६॥ कर्तव्यम् · मेधपक्षे च स्थाल्या अमन्त्रकं प्रोक्षणम् जुहोतिवात् । अवदानसहितमधिश्रित्योष्णीषवेष्टितं गर्भं पार्श्वतो निदधात्यनभिघारितमवदानवड्भृत्वा दक्षिणतो मेधं निदधाति ॥७॥ देव॰ स्थालीस्थं मेधं वशावदानसंलग्नं शामित्रेऽधिश्रित्य उष्णीषेण लघुवस्त्रेण वेष्टितं गर्भं पशुश्रपणस्य पार्श्वे समीपे स्थापयति · तं मेधमनभिघारितमेव अवदानवत् जघनेन चात्वालमन्तरा यूपाग्नी हृत्वा वशावदानानामासादनदेशस्य दक्षिणस्यां दिशि आसादयति ।

प्रतिप्रस्थाता वशावदानकाले प्रचरण्यां मेधमवद्यति ॥८॥ प्रचरण्याश्च मन्त्ररहिता जुहूवत्संस्कारक्रिया · मेधस्य चोपस्तीर्य द्विरवदानं प्रत्युपस्तारश्च । देव प्रचरणीति वसाहोमहवनीतो व्यतिरिक्ता पालाशी स्रुक् । अवदानान्यनु जुहोति यस्यै तऽइति (८. २९) ॥९॥ वशावदानान्यनु मेधं जुहोति । अङ्गान्यहुता यस्य यस्या इति यथालिङ्गम् ॥१०॥ यल्लिङ्गो गर्भः । अविज्ञाते पुंवत् ॥११॥ अविज्ञाते गर्भे पुंवत्प्रयोगः । स्विष्टकृद्वनस्पत्यन्तरे प्रत्येत्य प्रतिप्रस्थाता प्रचरण्या७ सर्वं मेधमवद्यति ॥१२॥ देव॰ वनस्पतियागानन्तरं स्विष्टकृतः पूर्वं । स्विष्टकृतमनु जुहोति पुरुदस्म इति (८. ३०) ॥१३॥ देव॰ तं प्रचरण्यामवत्तं सर्वं मेधमशेषं अन्तरा यूपाग्नी हृत्वोत्तरत उपविश्य स्विष्टकृदवदानहोमानन्तरं जुहोति । स्विष्टकृदन्तऽउष्णीषवेष्टितस्य वृक्षासञ्जनं वाप्स्ववकरणं वाबूत्करोपकिरणं वा ॥१४॥ वाशब्दो विकल्पार्थः । अनुव्याहारभयं त्वेतेषु ॥१५॥ वृक्षऽएनं मृतमुद्वास्यन्तीति (३. ५. २. १३) तथा अप्स्वेव मरिष्यतीति (°१४) निन्दार्थवादः · पक्षान्तरविधानार्थं तदभिधीयते । देव॰ अनुव्याहारः शाप इति धूर्तस्वामी · तुशब्दो यस्मर्थे · यस्मे तेषु पूर्वोक्तेषु वृक्षासञ्जनादिपक्षेषु वैरिकर्तृकादनुभाषणात् शापात् वृक्षेऽमरिष्यतीति क्षिप्रेऽस्मै मृतायेत्यादिरूपात् भयं भवति तदाः

समिष्टयजुरन्ते शामित्रऽएव जुहुयात्तिष्ठन्मरुत इत्यस्वाहाकृत्य (८. ३१) मह्नो द्यौरित्यङ्गारैरभ्यूहति (८. ३२) ॥१६॥ देव॰ शामित्रे सोष्णीषं हुतं गर्भमङ्गारैराच्छादयति । अग्निहोत्रऽआसन्नेषु चेत्यात्रेधाहवनीयोऽनुगच्छेद्गार्हपत्ये जुहुयात्प्राण उदानमप्यगादिति ॥१७॥ देव॰ इदं प्राणायेति त्यागः · तत आहवनीयमुद्धृत्याग्निहोत्रं जुहुयात् । गार्हपत्यश्चेदाहवनीयऽउदानः प्राणमप्यगादिति

॥१८॥ जुहोति । दक्षिणाग्निश्चेद्गार्हपत्ये व्यान उदानमप्यगादिति ॥१९॥

सर्वे चेत् तूर्णं मथित्वा प्रतिवातमुद्धृत्य वायव्यामाहुतिं हुत्वा यथानुपूर्व्यंकरणम् ॥२०॥ उपावहृतेषु पात्रेषु यदि सर्वेऽग्नयोऽनुगच्छेयुः तदा तूर्णं शीघ्रं [गार्हपत्यं] मथित्वा प्रतिवातमाहवनीयमुद्धृत्य वा°तिं जुहुयात् · पुनस्तमेवाहवनीयं प्राच-मुद्धृत्य [उत्याद्य स्वस्थाने स्थापनं कार्यम् · ततो दक्षिणाग्निमाहृत्य] यथानुपूर्व्यम-ग्निहोत्रक्रिया । देव° प्रतिवातमिति प्रतिगतो वातं प्रतिवातः तं प्र°तमित्याहव-नीयविशेषणम् नाभिमुख्येऽव्ययीभावो वाताभिमुखमिति · कुतः यां दिशं वातो वायात्तां°त्येति श्रुतेः (११. ५. ३. ११) । निवातं चेत्पूर्ववन्मथित्वा प्राचमुद्धृत्य गार्हपत्ये संस्कृत्य पश्चादाहवनीयस्य स्वयं पानम् ॥२१॥ उपावहृतेष्वेव पात्रेषु यदि निवाते सर्वेऽग्नयोऽनुगच्छेयुस्तदा पूर्ववत् तूर्णं मथित्वा प्राचमाहवनीयमु-द्धृत्य गा°स्कृत्य संस्कारश्चाहोमार्थवादभिधीयते पश्चादाहवनीयस्योपविश्य स्व-यमेव पानम् । देव° एतानि सर्वाणि प्रायश्चित्तानि कूर्चासादनोत्तरकालं (१७) प्राग्घोमात् ज्ञेयानि । अग्निहोत्रातिपत्तावाहुतिं जुहुयान्मनो ज्योतिर्जुषता-माज्यस्य विच्छिन्नं यज्ञं समिमं दधातु या इष्टा उषसो या अनिष्टास्ताः संतनोमि हविषा घृतेन स्वाहेति ॥२२॥ देव° अग्निहोत्रस्य सायम्प्रातर्होमस्य कालातिपत्तौ कालातिक्रमे · इदं मनसे ज्योतिषे ॥ ॥ दशमी कण्डिका ॥१०॥ ॥

सत्त्रायागूर्याशक्तौ विश्वजितातिरात्रेण यजेत ॥१॥ गूरी उद्यमे सत्त्रायागूर्य सत्त्रायोद्यमं कृत्वा सत्त्राय संकल्पे सतीत्यर्थः · एवं हि श्रूयते[1] सर्वेभ्यश्छन्दोभ्यः सर्वेभ्यः पृष्ठेभ्यः सर्वेभ्य स्तोमेभ्य आत्मानमागुरते यः सत्त्रायागुरते विश्वजितातिरात्रेण यजेतेति । देव° स सर्वेभ्यः स्तोमादिभ्यः आत्मानमागुरते तत्स्तोमाद्य-धीनं कुरुते यः सत्त्रायोपक्रमं कुरुते तेन यावत्सत्त्रं न निष्पद्यते तावदात्मा तदधीन एवेति श्रुत्यर्थः । सत्त्राङ्गं वागूर्णमात्रश्रुतेः[2] ॥२॥ वाशब्दः पक्षा-न्तरप्रतिपत्तौ · सत्त्राङ्गं वा विश्वजिद्भवति · ततश्च कृतेऽपि सत्त्रे प्रवर्तते · कुत एतत् आगूरणमात्रश्रवणात् न हि कश्चिदनागूर्य करोति · आगूरणं च निमित्तं विश्वजितः तस्मात्कृतेऽपि सत्त्रे प्रवर्ततऽइति । एवं पक्षद्वयोपप्रदर्शने सत्यु-

1) see Taitt. Br. १. ४. ७. ७. 2) Thus all, but गूरण K and A in the schol.

च्यते · न कृते सत्त्रे प्रवर्तते अकृतऽएव प्रवर्तते · कुत एतत् · आगूरणनिमित्तस्य तावत्कालभावित्वात् यावन्न क्रियते सत्त्रम् तावदेव संकल्पनिमित्तमिति · अपि च निष्क्रयकार्ये भवति विश्वजिद्यागं हि प्रकृत्योच्यते सर्वेभ्य स्तोमेभ्यः सर्वेभ्यः पृष्ठेभ्यः सर्वेभ्यश्छन्दोभ्य आत्मानं निष्क्रीणीतऽइति निष्क्रयश्चाकृतऽएव भवति [न कृते]। दीक्षितानां चेत्साम्युत्थानं जायेत सोमं विभज्य तेनैव सर्ववेदसेन सर्वपृष्ठेन यजेरन् ॥३॥ अथ यदि संदीक्षिताः साम्युत्तिष्ठेरन्निति प्रकृत्यैवं हि श्रूयतऽइति · साम्युत्थानं चार्धसमाप्ते सत्त्रऽउत्थानम्। देव॰ सत्त्रार्थं कृतदीक्षाणां यदि दैवान्मानुषाद्वा निमित्तात्सामि असमाप्तऽएव सत्त्रे उत्थायेत सत्त्रं नैव समापयाम इति बुद्धिर्जायते · सोमेनोपलक्षितं सर्वं साधारणं धान्यघृतादिद्रव्यं विभज्य आत्मीयमात्मीयं पृथक्कृत्वानेनैव पूर्वसूत्रोक्तेन विश्वजिता सर्वस्वदक्षिणेन पृथक्पृथग्यजेरन्। क्रीते विभागश्रुतेः[1] ॥४॥ स च विश्वजित्क्रीते सोमे भवति नाक्रीते · कुत एतत् विभागश्रवणात् सोममपभज्येति (ताण्ड्य॰ ९.३) · न चाक्रीतस्य विभागः सम्भवति · तस्मात्क्रीते विश्वजित्।

उपपाताद्वोभयतः ॥५॥ वाशब्दः पक्षव्यावृत्तौ · उभयत्र क्रीते चाक्रीते च साम्युत्थाने विश्वजिद्भवति · कुत एतत् उपपातात् साम्युत्थानं हि [उपपातो विश्वजितो] निमित्तम् तद्यदि विभागेन विशेष्यते वाक्यं भिद्येत तस्मादुभयतो विश्वजित्। तर्हि कथमुच्यते विभागश्रवणात् सोममपभज्येति ·

विभागः क्रियागुणत्वात् ॥६॥ क्रियागुणभूतानां द्रव्याणां सामर्थ्यपरिप्राप्तो विभागः सोऽनूद्यते सोमशब्देन लक्षणया सोममपभज्येति। देव॰ न ह्यत्र सोममपभज्येत्यनेन सोमस्य विभागो विधीयते · कस्मात् · सोमस्य क्रि॰त् क्रियाङ्गत्वात् इतरसाधारणद्रव्यवत् यागार्थत्वात् · तथा हि न तावदक्रीतसोमस्य तद्विभागो विधातुं शक्यते नापि क्रीतसोमस्य तस्येतरसाधारणद्रव्यविभागवत्सोमविभागस्यार्थप्राप्तत्वात् · तस्मादुभयथापि सोमविभागविधानासंभवादेकीकृतसाधनानां सत्त्रिणां प्रवृत्तानां मध्ये साम्युत्तिष्ठतां प्राप्तमेव धनविभागं सोमविभागशब्दोऽनुवदति · सोमशब्दस्तु द्रव्यमात्रोपलक्षणार्थः · तस्मात्प्रवृत्तमात्रस्योत्थाने

1) Thus K sec. m. R. A. ग: श्रुतेः ९.३. M. K pr. m.

विश्वजिद्भवति ।   अनीतासु चेद्दक्षिणासूद्गात्रपच्छेदोऽदक्षिणं संस्थाप्य पुनराहारः ॥७॥ देव° ज्योतिष्टोमे अध्वर्युप्रतिप्रस्थातृप्रस्तोत्रुद्गातृप्रतिहर्तृसुन्वतां परस्परमन्वारब्धानां पवमानार्थं गमनं विहितम् (९.६.२७) · तत्र दक्षिणानयनात्प्राक् प्रातःसवने यदि उ°दः उद्गातुर्विभागः प्रस्तोतुः कृतान्वारम्भस्य विभागो भवति तदा तं प्रारब्धं यज्ञं दक्षिणादानवर्जितं समाप्य पुनः तस्य यज्ञस्य ऋत्विग्वरणादारभ्य पुनः-करणम् ।   प्रस्तोता चेद्ब्रह्मणे वरं दत्त्वा पुनर्वरणम् ॥८॥ प्रस्तोता चेदपच्छिद्यते [अन्वारब्धो विसृजेत्] ब्रह्म°रणम् प्रस्तोतुः ।   प्रतिहर्ता चेत्सर्ववेदसं देयम् ॥९॥   युगपच्चेद्विरोधाद्विकल्पः ॥१०॥ उद्गातृप्रतिहर्त्रोर्युगपदपच्छेदे विरो°ल्पो नैमित्तिकस्य । देव° तदा उद्गात्रपच्छेदनिमित्तं तस्यादक्षिणं समापनं प्राप्नोति प्रतिहर्त्रपच्छेदनिमित्तं च तस्मिन्नेव प्रयोगे सर्वस्वदानं प्राप्नोति ।

पूर्वदौर्बल्यमानुपूर्व्ये प्रकृतिवत् ॥११॥ अनयोरेवानुपूर्व्यापच्छेदे पूर्वनिमित्तं दुर्बलम् उत्तरं च बलवत् · पूर्वविज्ञानानुपमर्देनेनोत्तरस्यानुत्पत्तेः · तद्यथा प्राकृतं कौशं विज्ञानं विकृतौ चोदकप्राप्तं प्रत्यक्षेण शरविज्ञानेन बाध्यतऽएव ।

यस्मिन्नहन्युद्गात्रपच्छेदोऽहर्गणे तस्यावृत्तिः ॥१२॥ देव° द्विरात्रादावहर्गणे यस्यां सुत्यायामुद्गा°दो भवति तदेवैकमहरदक्षिणं कृत्वा तस्यैकस्याह्नो व्युत्क्रामतेत्यत आरभ्यावृत्तिः   न सकलस्याहर्गणस्य · अनी°णास्वित्युक्तत्वात् (७) तृतीयसवनेऽपच्छेदेऽनादिष्टमेव भवति   अन्यस्यानुक्तत्वात् · सत्त्रेषु तु तेषामदक्षिणत्वात् आवृत्तिरेव तस्याह्नः ।   पत्न्युदक्या दीक्षारूपाणि निधाय सिकतास्वासीतोपस्रवणात् ॥१३॥ [ज्योतिष्टोमादौ दीक्षितस्य] पत्नी रजस्वला दीक्षारूपाणि शृङ्गादीनि निधाय सिक°सीत आ रक्तविरमणात् ।   तिष्ठेत्संधिवेलयोः ॥१४॥ देव° प्रातःसंध्याकाले सायंसंध्याकाले च सिकतास्वेव तिष्ठेत् ।   वेदिसमीपे सुत्यासु ॥१५॥ देव° सुत्यासु वर्तमानासु सिकतासूपविशेत् संधिवेलयोर्वेदिसमीपे सिकतास्वेव तिष्ठेत् ।   त्रिरात्रान्ते गोमूत्रमिश्रेणोदकेन स्नापयित्वा परिधानादि करोति सांनिपातिकम् ॥१६॥ देव° रजोदर्शनाच्चतुर्थेऽहनि स्मृत्युक्तस्नानानन्तरं गो°केन तां रजस्वलां स्ना°त्वा वासःपरि°दि कर्म सां°कं संनिपत्योपकारकं करोति   नारादुपकारकं दीक्षणीयाभूम्युल्लेखनादि ।   प्रज्ञातायाश्च दशरात्राद्-

र्धं स्नानादि ॥१७॥ देव॰ प्रसूतायाः प्रसवदिनादेकादशेऽह्नि । न गर्भिणीं दीक्षयेदित्येकेऽयज्ञिया गर्भा इति श्रुतेः ॥१८॥ (४. ५. २. १०) । नानूबन्ध्याप्रकरणात् ॥१९॥ अनूबन्ध्यां हि प्रकृत्य श्रूयते अयज्ञिया वै गर्भा इति (४. ५. २. १०) न सार्वत्रिकम् तत्रापि चायमर्थवादः मन्त्रस्तुत्यर्थः । देव॰ इयं श्रुतिः अनू॰णो पठ्यते न पत्नीप्रकरणे । दीक्षितोऽमनोज्ञं स्वप्नं दृष्ट्वा जपेत् पर्यावर्ते दुःष्वप्न्यात्पापः[1] स्वप्नादभूत्यै ब्रह्माहमन्तरं करवे परः स्वप्न मुखा कृधीति ॥२०॥ देव॰ स्वप्नाध्यायनिन्दितं स्वप्नेऽवगाहनेऽत्यर्थं जलं मुण्डांश्च पश्यतीत्याद्यनिष्टसूचकं स्वप्नम् । इन्द्रियं स्कन्नमाद्रिरुपसिञ्चेद्यो मेऽत्र पयसो रसः परि दोषाडुदर्पिथः[2] अग्निहोत्रमिव सोमेन तमहं पुनराददऽइति ॥२१॥ उदकं चेत्तरेत्तदभिमन्त्रयेतोन्दतीर्बलं धत्तौजो धत्त सहो धत्त मा मे दीक्षां मा तपो निर्बधिष्टेति[3] ॥२२॥ अववृष्टश्च ॥२३॥ चशब्दादनेनैव मन्त्रेणाभिमन्त्रयेत । अमेध्यं दृष्ट्वा सूर्यमुपतिष्ठेताबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हासीदिति[4] ॥२४॥ देव॰ अमेध्यमशुचि शूद्रान्त्यजपापिष्ठपुरीषादिकमपवित्रं वस्तु । शोणितं चेत्कुर्याद्रुद्रियाभ्योऽद्भ्यः स्वाहेति जुहुयात् ॥२५॥ देव॰ दीक्षितश्चेत्प्रयत्नपूर्वकं स्वदेहाद्रुधिरनिष्काशनं कुर्यात् । निष्ठीवेद्बीभत्साभ्योऽद्भ्यः स्वाहेति ॥२६॥ धावेच्चेद्वायवे स्वाहेति ॥२७॥ स्विद्याच्चेत्तपस्याभ्योऽद्भ्यः स्वाहेति ॥२८॥ स्वप्याच्चेत्प्रजापतये स्वाहेति ॥२९॥ तच्चेतद्दिवा-स्वापे भवति । आर्त्यश्रुकरणे तृप्राभ्योऽद्भ्यः स्वाहेति ॥३०॥ देव॰ दीक्षितकर्तृके दुःखेनाश्रुपाते । छर्द्याविष्टः पयः पीत्वोदकं वा छर्दयीत निष्ठ्यूतवद्धोमः ॥३१॥ देव॰ छर्दिः वमनम् । वयसावप्रस्रुते[5] चमसेऽन्तरिक्षेण पतति यातुधानप्रबोधितश्चमसं यमभ्यचुश्चुतदग्निष्टद्धुन्धतादिह पुनः स्वाहेति ॥३२॥ [अध्वर्युः] जुहोति । देव॰ पक्षिणा सोमचमसे अवप्रस्रुते उपरि मूत्रादिस्रवणे कृते । भक्षितांश्चमसान्सदसो निष्काश्य तेषां नाराशंसानामाप्यायितानां हविर्धानमध्ये

---

1) Thus १. K. दुष्व MR दुस्व A (text). दुःस्व A (schol.). See Atharva ७. १००. १.
2) ? Thus १. ३. M. °दुल्पिथः R. — K gives here as throughout only the beginning of the mantra, viz. to पयसोरिति (sic!). 3) ? °धिष्टश्चेत्य° ३. M. R. १ (धिश्रष्टश्चे°)
4) मामहासी° ३ sec. m. R. 5) ? Thus K (or स्नु?). A. स्तु १. ३. M. श्रु R.

निधानं कृत्वा (१. १२. ७) स्तोत्रोपाकरणं (°१४. ४) क्रियते नाराशंसव्यतिरिक्तान्भक्षितान्सदसो निष्क्राश्य प्रक्षाल्य पुनरुन्नीय स्तोत्रोपाकरणं क्रियतऽइति सर्वत्र विहितम् · तत्र नाराशंसे तद्व्यतिरिक्ते वा चमसे सदसोऽनिष्काशिते स्तोत्रोपाकरणे कृते प्रायश्चित्तमाह · अभ्युपाकृतचमससमुपस्थे कृत्वाग्नऽआयाहि वीतये गृणानो हव्यदातये नि होता सत्सि बर्हिषि स्वाहेति ॥३३॥ जुहोति · अधस्तनमनुपाकृते द्रष्टव्यम् । आग्नीध्रीये वा हिरण्यगर्भ इत्यृचा ॥३४॥ आहवनीये वेति विकल्पः । हुताहुतसंसर्गेऽङ्गारमन्तःपरिधि निर्वर्त्य ॥ ३५॥ देव° परिधीनां मध्ये तत्समीपऽएवाङ्गारं होमसमर्थं ज्वालारहितपृष्ठमग्निं पृथक्कृत्य ॥ ॥ एकादशी कण्डिका ॥११॥ ॥

कुशतरुणेन जुहोति हुतस्य चाहुतस्य चाहुतस्य हुतस्य च पीतापीतस्य सोमस्येन्द्राग्नी पिबतं सुतमिति ॥१॥ देव° दर्भतृणेन तं संसृष्टं[1] सोमं तस्मिन्नङ्गारे जुहोति । वषट्कृते ॥२॥ हुताहुतसंसर्गश्चाभक्षिते चमसऽउन्नयनम् · एवं हि शाखान्तरे श्रूयते यस्याभक्षितं चमसमभ्युन्नयन्तीति । देव° वषट्कारानन्तरम् । चुक्कते[2] स्वाहेत्यनुवषट्कृते ॥३॥ देव° तमेव हुताहुतसंसृष्टं सोमं जुहोति । संसर्गकाले वोपपातसामर्थ्यात् ॥४॥ वाशब्दः पक्षान्तरपरिग्रहे · न वा वषट्कारानुवषट्कारयोर्होमः उपपातो ह्ययं श्रूयते नैमित्तिकस्य चोपपातकालता न्याय्या । तस्य भक्षणम् मा यजमानं तमो विदन्माऽर्त्विजो मा यः सोममिमं पिबा[3] संसृष्टमभयं क्रतुमिति ॥५॥ देव तस्य हुताहुतसंसृष्टस्य[1] सोमस्य ।

अववृष्टभक्षणम् इन्दुरिन्दुमवागात्तस्य तऽइन्द्रविन्द्रपीतस्येन्द्रियावतो गायत्रछन्दसः सर्वगणस्य सर्वगण उपहूतस्योपहूतो भक्षयामीति ॥६॥ देव° यदा सोमस्योपरि मेघो वृष्टः स्यात् भक्षाधिकारिणां भक्षणम् तस्याङुष्टत्वात्तस्यैव स्वकाले होमानन्तरम् · भक्षमन्त्रमात्रे विशेषोऽयम् । त्रिष्टुप्छन्दसो जगच्छन्दस इति यथासवनम् ॥७॥ विशेषः । अछन्दसमेके ॥८॥ छन्दःशब्दमेके न कुर्वन्ति । पतितं चदेव° गायत्रछन्दस इत्येवमादिपदवर्जितं भक्षमन्त्रं ब्रूयादित्याहुः ।

---

1) ? संस्पृ° A. 2) ? Thus K. A (text sec. m). चुक्कते १. A (text pr. m. and schol.) चुङ्क्रते ३. M. वुक्रते R. See Westergaard sub बुक्क. 3) Thus १. ३. M. R.

मसमालभते ऽस्कन्पर्जन्यः पृथिवीमस्कन्गामृषभो युवा अस्कन्नेमा[1] विश्वा भूतानि प्र स्कन्नाज्जायताꣳ हविरिति ॥९॥ चमसशब्देन च द्रव्यं लक्ष्यते तत्संस्कारात् । उत्तरपूर्वे जुहोत्युपरवे चमसं दुष्टं प्रजापतये स्वाहेत्यथ येऽन्येऽनादिष्टास्तान्खरे जुहुयादग्नये वैश्वानराय स्वाहेति नाराशꣳसश्चेदुपवायात्तदुक्तम् ॥१०॥ नाराशंसश्चेद्दुष्येत तदुक्तम् पूꣳसानिति( १. ५. २२) उत्तरेण सह विकल्पार्थमिदमुच्यते । देव॰ अमेध्यातिपातश्वाघ्रवघ्राणादिना दुष्टं चमसस्थं सोमम् · अन्ये चमसव्यतिरिक्ताः सर्वे सोमाः दुष्टाः तान् खरे ग्रहासादनार्थं कृतेऽध्वर्युर्जुहुयात् · शुष्कस्य नाराशंसस्याग्रयणादाप्यायनं (१. ५. २१) कार्यम् । पक्षान्तरमाह ·

अन्त्याद्वा ग्रहात्स्तोकमासिच्य भक्षयेयुः ॥११॥ आग्रयणोऽन्त्यो ग्रह उच्यते अन्तसम्बन्धात्[2] । देव॰ अन्ते शुष्कनाराशंससमीपे भवो गृहीतोऽन्त्यः ऐन्द्राग्नवैश्वदेवमरुत्वतीयमाहेन्द्रमहावैश्वदेवानां मध्येऽन्यतमः । कलशश्चेदुपवायात्क्षीरासेचनमेके ॥१२॥ द्रोणकलशश्चेद्दुष्यति क्षीꣳके कुर्वन्ति । एके · हिरण्यवद्वोदकम् ॥१३॥ देव॰ सुवर्णसंयुक्तमुदकम् · हिरण्यं मध्ये निधाय तदुपर्यपामासेकः कार्यः । उन्नयने च ॥१४॥ एतदेव भवति · उन्नयत्यस्मादित्युन्नयनं पूतभृदुच्यते । देव॰ तस्मिन्नुपक्षीणोऽपि पयो हिरण्यवदुदकं वासिञ्चेत् ।

अद्रिभेदने मारुतेन ब्रह्मसाम्ना स्तुवीरन् ॥१५॥ अद्रौ भिन्ने मरुल्लिङ्गास्वृक्षु ब्रह्मसाम क्रियते · ब्रह्मसाम च माध्यन्दिने ब्राह्मणाच्छंसिविग्रहस्तोत्रम् । देव॰ मरुद्देवताकेन ब्रꣳम्ना उद्गातारः स्तुꣳरन् · अथाद्रिभेदनऽएवाध्वर्यवं नैमित्तिकमाह ·

चतुस्त्रिꣳशद्धोमश्च ॥१६॥ देव॰ परमेष्ठिने स्वाहेत्यादिमन्त्रैः (६. १) चतुꣳशदाहुतीनां होमः । सोमापहरणे विधावतेहतेति ब्रूयात् ॥१७॥ अध्वर्युः बहुविषयत्वात्प्रेषणास्य । देव॰ केनचिच्छत्रुणा सोꣳणो कृते । अदर्शनेऽरुणपुष्पाण्यर्जुनान्यभिषुणुयात् ॥१८॥ अर्जुनशब्दश्चात्र तृणविषयः (अमर॰ २. ४. १६७) · अभिषवशब्देन च यागसाधनत्वोपलक्षणम् · श्रुतप्रतिनिधिरयम् ततश्च सोमशब्देनोपलक्षणम् । देव॰ अव्यक्तरागपुष्पाणि तृणानि अभिषवपूर्वकं सोमकार्ये विनियुञ्जीत।

श्येनहृतं पूतीकानादारानरुणादूर्वा हरितकुशान्पूर्वालाभे-पूर्वालाभऽउत्तरान् ॥

---

1) अस्कंतेमा R. 2) Thus K pr. m. अन्त्य sec. m.

११॥ अभिषुणुयात् · एवं ह्यत्र श्रूयतऽइति (४.५.१०.१-६)। देव॰ खदिरादिर्बहु-कालीनस्य वृक्षस्य ये[1] वल्लीरूपा अङ्कुरा उत्पद्यन्ते तच्छि॰तमित्युच्यते · तथा पू-॰कान् अस्यैवं व्याख्यानम् आदारानिति · अथवा आदारानभिषुणुयात् तद्व्याख्यानं पू॰कानिति श्रुत्युक्तं पदमुपादाय पर्यायान्तरप्रयोगं करोति सूत्रकारः श्रुत्यु-क्तं चादारानित्येतत् पूतीका रोहिषतृणामिति निघण्टौ · तथा अरुर्वा अव्य-क्तरागा दूर्वाः · तथा कु॰शान् अशुष्कानार्द्रान्दर्भान् · माधवाचार्यास्तु पूतीकान् श्यामलान्सोमसदृशान् लताविशेषान् पूतीकसंज्ञानभिषुणुयादिनि व्याख्यातवन्तः।

एकां गां दत्वा समाप्य पुनर्यज्ञः ॥२०॥ अत्र च गोः सङ्ख्यासम्बन्धो यज्ञः तदे-कामिति · ततश्च हिरण्यादीनामनिवृत्तिः[2]। देव॰ गवां शतस्य स्थाने एका गौः।

अवभृथान्ते वा श्रुतिसामर्थ्यात् ॥२१॥ अवभृथान्तऽएव वा पुनर्यज्ञो भवति [उदयनीयाद्यकृत्वैवेत्यर्थः] तथा अथावभृथादेवोदेत्य पुनर्दीक्षेतेति श्रुतेः (४. ५.१०.६)। कलशभेदने वषट्कारनिधनं ब्रह्मसाम ॥२२॥ कर्तव्यम्।

अनुलिप्सध्वमिति प्रेष्यति ॥२३॥ अध्वर्युः · अन्ये चानुलिप्सन्ते। यदनुलभे-रंस्तदेकधनैरभ्युन्नीय प्रभावयन्तः प्रचरेयुः ॥२४॥ देव॰ यत्परिमाणं सोमं प्रसृति-मात्रं वा अञ्जलिमात्रं वा अधिषवणचर्मणि पतितं प्राप्नुयुः तदेकधनस्थैर्जलैरभ्यु-न्नीयाप्याय्याभ्युन्नयनेनोपरिसेचनेन बहुलं कृत्वा प्र॰न्तः सर्वेषु द्रोणकलशसोमस-म्बन्धिद्रव्येषु प्रापयन्तः प्रच॰युः सर्वं द्रोणकलशसोमकार्यं तेन सोमेन कुर्युः।

आग्रयणाद्वानुपलभमानेषु पूर्ववत् ॥२५॥ अनुपलभ्यमाने सोमे आग्रयणादादाय एकधनैरभ्युन्नीय पूर्ववत् प्रभा॰येयुः। देव॰ द्रोणकलशान्तरं सम्पाद्य। अनी-तासु चेद्दक्षिणासु भेदनं पूर्ववद्दत्वा तथैव यज्ञः ॥२६॥ (४.५.१०.७)। देव॰ पू॰वत् एकां गां दत्वा (२०) अवभृथान्तऽएव पुनः स एव यज्ञो भवति यः प्राक्क्रिय-माणः ॥ ॥ द्वादशी कण्डिका ॥१२॥ ॥

प्रातःसवनाच्चेत्सोमोऽतिरिच्येत तमुन्नीयोपाकरणमस्ति[3] सोमोऽअयमिति ॥१॥ मन्त्रान्तरविधानादितरो निवर्तते। देव॰ अच्छावाकोक्थ्यविग्रहसम्बन्धिचमसोन्नय-नानन्तरं यदि पूतभृति सोमः चमसेषु पूर्णोऽप्यवशिष्येत तदा उक्थ्यान्ते तमति-

---

1) ? या A. 2) see १४. ३०. 3) Deva joins अस्ति सोमो॰ with २. xxx xxx॰

रिक्तं सर्वमपि सोमं दशसु होत्रादीनां चमसेषु विभागेनोन्नीय तृणाभ्यां होतृचमस-मुपस्पृश्योपावर्तध्वमित्यनेनैव मन्त्रेण स्तोत्रोपाकरणं कुर्यात्। मरुत्वतीषु गायत्रेण स्तुवीरन् ॥२॥ मरुल्लिङ्गासु ऋक्षु गायत्रेण साम्ना स्तुवन्। देव॰ उपाकरणानन्तर-मुद्गातारोऽस्ति सोमो अयं सुत इत्यादिकासु गायत्रीछन्दस्कासु मरुच्छब्दवतीषृक्षु॰।

ऐन्द्राविष्णवꣳ होता शꣳसति ॥३॥ शस्त्रम्। देव॰ तत्स्तोत्रानन्तरम्।

यस्मात्स्तोमादतिरिच्येत स एव कार्यः सर्वत्र ॥४॥ यत्स्तोमसमनन्तरं सोमाति-रेको भवति स एव॰र्वत्र सर्वत्रग्रहणात्सवनान्तरेऽपि। देव॰ प्रातःसवनेऽच्छा-वाकोक्थ्ये यस्त्रिवृदादिस्तोमो भवति स एव प्रायश्चित्तार्थे स्तोत्रेऽपि कार्यः· न के-वलमत्र किंतु सर्वत्र माध्यन्दिने सवने तृतीयसवने चेति· माध्यन्दिनेऽपि सवने अन्त्यऽउक्थ्यस्तोत्रे यस्त्रिवृदादिस्तोमस्तत्र सोमातिरेकनिमित्तस्तोत्रेऽपि स एव कार्यः· एवं तृतीयसवनेऽपि यज्ञायज्ञियान्ते सोमातिरेके अन्तिमस्तोत्रस्तोम एव सोमातिरेकनितित्तस्तोत्रेऽपि भवति·। माध्यन्दिनाच्चेत्पूर्ववदुपाकरणम् ॥५॥ देव॰ यदि अन्तिमोक्थ्यचमसोन्नयनानन्तरं पूतभृति सोमोऽतिरिच्येत।

बण्महाꣳ२ऽअसीति (३३. ३९) बृहतीष्वादित्यवतीषु गौरीवितेन स्तुवीरन् ॥६॥ गौरीवितं साम तेन स्तुवीरन्। पूर्ववद्धोता ॥७॥ ऐन्द्रा॰सतीत्येतदुक्तं भ-वति (३)। देव॰ स्तोत्रगानानन्तरम्। तृतीयसवनाच्चेद्विष्णोः शिपिविष्टव-तीषु गौरीवितेन ॥८॥ तृतीयसवनाच्चेदतिरिच्येत शिपिविष्टविष्णुलिङ्गासु ऋक्षु गौरीवितेन स्तुवीरन्। एतत्कृत्वोक्थ्यं वा गृहीत्वा विगृह्णीयात् ॥९॥ वाशब्दाद्यदि पूर्वेण न निःशेषितः सोमः तदा उक्थ्यं गृह्णी॰यात्।

उक्थ्याच्चेत् षोडशी कार्यः ॥१०॥ उक्थ्यसंस्थाच्चेत्तृतीयसवने सोमोऽतिरिच्येत षोडशी कर्तव्यः। देव॰ उक्थ्यसंस्थः प्रारब्धोऽपि निमित्तवशात्षोडशिसंस्थः कार्यः।

षोडशिनश्चेत् अतिरात्रः ॥११॥ कर्तव्य इति वर्तते। अतिरात्राच्चेत् बृहत् ॥१२॥ देव॰ तदा तदुपयोगाय बृहत् विष्णोः शिपिविष्टवतीषु बृहतीषु बृहत् साम कर्तव्यम् शाखान्तरात्। महाव्रतमेके यथोक्तम् ॥१३॥ देव॰ अतिरात्रादतिरिक्ते सोमे तदुपयोगाय महाव्रतं साम यथा गवामयने उक्तम् पृष्ठो-पाकरणं वाणोनेत्यादिना (१३. २. २०) तथा कुर्वन्ति। अप्तोर्यामो वा ॥१४॥

अन्त्याच्चेत् तस्यैवावृत्तिर्नातीरिक्तोऽस्तीति श्रुतेः ॥१५॥ अन्त्यशब्देनाप्तोर्यामो ऽभिधीयते · ततश्चेदतिरिच्येत तस्यैᳲतिः कार्या　न ह्यतोऽभ्यधिकोऽतिरिक्तो ऽस्तीति श्रुतेः[1]। देव॰ न ह्याप्तोर्यामात्परं संस्थान्तरमस्त्यतिरिक्तविनियोगाय।

पूर्वात्सवनादतिरिक्तस्योत्तरे सम्पावनमेके ॥१६॥ एके आचार्याः पूर्वसवनातिरिक्तसोममुत्तरे सवने[2] सम्पावयन्ति। अस्य विधेरर्थवादोऽयम् ·　तं निकामयमानोऽभ्यतिरिच्यतऽइति श्रुतेः ॥१७॥ तमुत्तरसवनसोमं निकामयमानः पूर्वसोमोऽ[भ्य]तिरिच्यते यद्यहमुत्तरसवनसोमं प्राप्स्यामीति। देव॰ सम्पावनं पवमानकाले पूतभृति पूयमानेन तत्सवनसोमेन सह पावनम्।　तृतीयसवनाच्चेद्धारियोजनेऽवनीय होमः ॥१८॥ देव॰ द्रोणकलशे गृहीतस्य हारियोजनस्य मध्ये ऽतिरिक्तस्य सोमस्य प्रक्षेपं कृत्वा होमः कार्यः।　अस्मृतावृजीषमिश्रस्याप्स्ववहरणम्[3] ॥१९॥ यदि हारियोजनकाले न स्मर्यते तदा ऋजीषमिश्रमप्स्ववहरेत्।　दीक्षितश्चेदुपतप्येतोप्यानां येनेच्छेत्तेन चिकित्सेत् ॥२०॥ उप्यानि च सर्वसुरभीणि। देव॰ प्रथमव्रते (७. ४. २१ २४) प्रक्षिप्तानामौषधानां व्रीहियवादीनां सर्वसुरभीणां च शुण्ठीपिप्पल्यादीनां मध्ये चिकित्सको वैद्यो येनौषधेन चिकित्सितुमिच्छेत् तेन भिषज्येत्।　आग्नीध्रमेनं नयतेति ब्रूयात्कृतं चेत् ॥२१॥ अध्वर्युः · बहुवचनात्तत्वादन्ये नेतारः · तच्चाग्नीध्रं यदि कृतं भवति तदैव ब्रूयादिति एवं प्रातःआह ·　अकृतेऽप्यविशेषात् ॥२२॥ अकृतेऽप्याग्नीध्रे आग्नीध्रमेनं नयतेति वक्तव्यमेव · अविशेषेण हि श्रूयते (३. ६. ८. २१) तस्माद्यं दीक्षि॰ब्रूयादिति। तदा च ·　तद्देशे वासः ॥२३॥ दीक्षितस्य भवति। देव॰ ज्वरादिरोगशान्तिं यावत्।　वासतीवरमुदकमाचामेदित्येके चात्वालगताभ्यः ॥२४॥ वसतीवरीभ्यः। तत्र मन्त्रमाह ·　आपः प्रजापतिर्यज्ञो यज्ञस्य भेषजमसीति ॥२५॥　अनुसवनमेनमालभेरन्वसव एतद्वः प्रातःसवनं तद्रक्षधं तद्वोपायधं तद्वो मा व्यवच्छैत्सीदिति ॥२६॥ देव॰ एनं ज्वराद्यभिभूतं दीक्षितं सर्वे ऋत्विजः सवनान्तेषु स्पृशेरन्।　रुद्रा आदित्या इत्युत्तरयोः सवनयोः ॥२७॥ विशेषः।　म्रियेत चेन्निर्मन्थ्येन दग्ध्वा शामित्राद्वास्थीन्युपनह्य नेदिष्ठिनमुप-

1) See ३. ५. १०. ८.　2) Thus A. सोमे K.　3) ऋषीक instead of ऋजीष A.

दीक्ष्य तेन सह यजेरन् ॥२८॥ मृतं यजमानं निर्मन्थ्येन शामित्रेण वा दग्धास्थी-न्युपनह्य तस्य यो नेदिष्ठी स्वो भ्राता स्यात् तं दीक्षयित्वा तेन सह यजेरन् । देव॰ स्वारणिभ्यां तदानीमेव मथितेनाग्निना शामित्रैकदेशेन वा दग्धा अग्नौ स्मार्तविधिरहितं दाहमात्रं कृत्वा तस्य दीक्षितस्य दग्धस्य अस्थीनि शाखान्तरा-त्कृष्णाजिने बद्ध्वा॰ · पत्न्यपि मृतस्यैव तत्र पत्नीकर्म करोति नेदिष्ठी तु यजमान-कर्मेति धूर्तस्वामिनः । सत्रगणयज्ञे सहत्वशब्दात् ॥२९॥ एतच्च सत्रे भव-ति गणयज्ञे च तेन सह यजेरन्निति (२८) सहत्वशब्दात् । देव॰ तयोरनेकयज-मानसद्भावान्नान्यत्र । एकयज्ञे दर्शपूर्णमासवत् ॥३०॥ मरणान्तं भवतीत्येत-दुक्तं भवति (७.१) । देव॰ एकस्य यजमानस्य यज्ञ एकाहोऽग्निष्टोमादिः · विधिवदेव दाहः कार्यः · पत्नीमरणेऽप्येवमेव । एतत्कृत्वा राजानमभिषुत्यागृहीत्वा ग्रहा-न्दक्षिणापूर्वस्यां वेदिस्रक्त्यां यामेन स्तुवीरन् ॥३१॥ यथोपदेशमेतत्कृत्वा · ग्रहान्न गृहीत्वैव · यामेन साम्ना । देव॰ पूर्वोक्तं निर्मन्थ्येन दग्धेत्यादिकं (२८) कृत्वा सौत्ये ऽहनि सोमाभिषवं कृत्वा॰ । तिसृषु पराचीषु सार्पराज्ञीषु ॥३२॥ तिसृषु पराचीषु अनभ्यावृत्तासु साम्सु स्तुवीरन्निति बहुवचनादुद्गातारः । देव॰ पराचीषु पराङ्मुखीष्व-नावृत्तासु साम्सु सर्पराज्ञी नाम ब्रह्मवेदिनी सर्पराजस्य स्त्री तया दृष्टासु आयं गौ-रित्याद्यासु ऋक्षु · अगृहीत्वा ग्रहानित्युक्तेऽप्युपांश्वन्तर्यामयोर्न प्रतिषेधः ।

मार्जालीये वा ॥३३॥ स्तुवीरन्निति विकल्पः । स्तुते मार्जालीयं त्रिः परिय-न्त्यपसव्यं सव्योरूनाघ्नाना स्तोत्रिया जपन्तः ॥३४॥ स्तुते स्तोत्रे उद्गातारो मार्जा-लीयमपसव्यं त्रिः परियन्ति । देव॰ यामेन साम्ना स्तुते सर्वे दीक्षिताः॰ · अस्य साम्नः स्तोत्रियाः आयं गौरित्याद्याः · अत्र परिगमनानन्तरं होता तस्मिन्नेव देशे उपवि-श्य प्राचीनावीती दक्षिणाभिमुखः सार्पराज्ञीः शंसति । एतावन्मृतोपकाराय वैकृतं कर्म · अस्मिन्सुत्याहे · अग्न आयूंषि पवस इति (३५.१६) प्रतिपद्भवति ॥३५॥ पवमानस्य प्रथमा ऋक्प्रतिपदुच्यते । संवत्सरेऽस्थीनि याजयेयुः ॥३६॥ प्रयोज-कव्यापारेण प्रयोज्यव्यापारो लक्ष्यते अस्थीनि याजयेरन्निति यथा निषाद-स्थपतिं याजयेदिति । इदं विचार्यते किं मरणात्संवत्सरेऽस्थियज्ञः उत कर्मा-पवर्गादिति · नियमकारिशास्त्राभावादनियमे प्राप्तेऽआह · कर्मापवर्गादसम्भ-

वान्मरणस्य ॥३७॥ कण्गात्संवत्सरेऽस्थियज्ञः न हि मरणं संवत्सरविशेषणत्वेन सम्भवति कदाचित्सत्रमध्येऽपि संवत्सरः पूर्यतऽइति [देव° तदा च तत्सत्रमध्य ऽएवानुष्ठानमस्थियज्ञस्यापद्येत तच्चायुक्तम् असम्भवात्]। अपरिमितस्तोमेन यजेरन् ॥३८॥ ज्योतिष्टोमे हि स्तोमपरिमाणमुक्तम् इहापरिमितस्तोमोऽभिधीयते वचनात्। देव° अनेनास्थियज्ञेन शास्त्रितपरिमाणातिक्रान्तस्तोमेन।

त्रिवृद्बहिष्पवमानेन वा ॥३९॥ अस्थीनि यजेरन्। तदा च सप्तदशमन्यत् ॥४०॥ देव° बहिष्पवमानव्यतिरिक्तमाज्यादि स्तोत्रजातं सप्तदशस्तोमकं भवति।

मैत्रावरुणाग्रान्ग्रहान्गृह्णीयात् ॥४१॥ ऐन्द्रवायवात्पूर्वं मैत्रावरुणो गृह्यतऽइत्युक्तमेतद्बृहच्छन्दसि द्वादशाहे (१२.६.११)। देव° तस्मिन्नस्थियज्ञे प्रथमं मैत्रावरुणं गृहीत्वा कस्यचिद्धस्ते समर्प्य पश्चादैन्द्रवायवं गृहीत्वासाद्य ततो मैत्रावरुणस्य परिमार्जनप्रभृति सादनम् ततः शुक्रादित्यग्रहणम् प्रकृतिवत्। प्रातिनिधिको यजमानं कुर्यात् ॥४२॥[1] न ह्यस्यां कर्तृत्वं सम्भवति। तच्च यजमानम् दीक्षणीयापुरुषसंस्काराशीर्वर्जम् ॥४३॥ क्रियते। समाप्तेऽस्थीनि सपात्राण्यरण्ये निवपेयुः ॥४४॥ प्रतिपत्त्यन्तराविधानात्। पुनर्दाहो वा युक्तत्वात्पात्राणाम् ॥४५॥ वाशब्दः पक्षान्तरपरिग्रहे पुनर्दाहो भवति नारण्ये निवापः कुत एतत् युक्तत्वात्पात्राणाम् तानि हि प्रतिपत्त्या युज्यन्ते द्वितीयान्तनिर्देशात् दक्षिणहस्ते जुहूं सादयतीत्येवमादि (७.२१) अतस्तत्संस्कारात् पुनर्दाहः। ततः संचयनादि ॥४६॥ देव° पुनर्दाहानन्तरं संचयनादि अस्थिसंचयनप्रभृति सर्वमौर्ध्वदेहिकं स्मार्तं भवति॥

॥ त्रयोदशी कण्डिका ॥१३॥ ॥

उखां चेद्बिभ्रन्म्रियेत सोपकरणामाहिताग्न्यावृता दग्ध्वा नेदिष्ठमग्निं चित्वा तमस्मा अनुदिशेदित्येके ॥१॥ उखाभरणेन[2] साग्निकोऽभिगणो लक्ष्यते तत्र चेन्म्रियेत कश्चिद्यजमानः (१२.३.५.२)। देव° सोऽग्निमग्निपात्रस्वरूपोपकरणसंयुक्तम् आहिताग्नेः मृतस्याहिताग्नेः सम्बन्धिन्या इतिकर्तव्यतया संदीपनवत्यधिश्रयणादिकया (७.२२) दग्ध्वा साग्निचित्यं क्रतुमारम्भप्रभृति समाप्यन्तं कृत्वा तं क्रतुं तस्य क्रतोः फलं अस्मै दीक्षामध्ये मृताय अनुदिशेत् दानरूपेण तस्य यज्ञस्य फलं दद्यात्।

1) प्रतिनिधिभूतः पुत्रादिः Deva. 2) ? उखाहर° K.

न कर्मफलासम्भवात् ॥२॥ नैतदेवम् फलानुदेशः कर्तव्य इति · न हि कर्मफलप्रदानं सम्भवति । देव॰ न हि कर्मफलं दातुं शक्यते अस्यामूर्तत्वेनानुपादेयत्वात् · तेन नेदिष्ठिना स्वेष्वग्निषु स्वकीयेन द्रव्येणानुष्ठितस्य साग्निचित्यस्य क्रतोः फलं नेदिष्ठिन एव । उपदीक्षी स्वेष्वग्निषु नखनिकृन्तनाद्युद्वादनान्तꣳ सांनिपातिकम् ॥३॥ उपदीक्षी नेदिष्ठी स्वानग्नीन्विहृत्य नख॰तिकं (७. २. ८-४. ११) कर्म करोति । तेषूपहवमिष्ट्वाग्नी[1] सꣳसृजेत ॥४॥ दीक्षिता उपह्वयध्वमित्येवमुप॰ष्ट्वाग्निसंसर्गं कुर्यात् । अनाहिताग्निश्चेत्तेष्वेवेत्येके वैश्वानरं निर्वपेद्यस्याग्निभिरन्यं याजयेयुरिति वचनात् (८. २६) ॥५॥ यद्यनाहिताग्निर्नेदिष्ठी भवति तदा तेष्वेव [सत्रिणाम]ग्निषु नखनिकृन्तनादि करोति · ततश्च [सत्रान्ते] वैश्वानरनिर्वापः कार्यः · एवं हि श्रूयते (८. १६) यस्याग्निभि॰र्वपेदिति तस्य चायमेव विषय इत्यभिप्रायः । एवं प्राप्तऽआह · नाश्रुतेः ॥६॥ नैतदेवम् तेष्वेवाग्निषु नेदिष्ठ्यपि करोतीति · न ह्येवं श्रूयतऽइति । वैश्वानरस्य तर्हि को विषयः स उच्यते · आपदि वैश्वानरः ॥७॥ सत्रसंमोहे[2] सति परकीयैरग्निभिर्यागे कृते वैश्वानर इति । देव॰ तस्मादनाहिताग्नीनामत्रानधिकार एव ।

समानजनपदसꣳसवे महारात्रे प्रातरनुवाकमुपाकृत्य पूर्वः-पूर्वः कर्म प्रवर्तयेत् ॥८॥ राजन्यः समानजन इत्युक्तम् (२२. १. २१) तेषां यदि संसवो भवति समित्येकीभावे अनद्यन्तरे (२३) ऽगिर्यन्तरे (२४) वा संसवो भवति । देव॰ यदा द्वौ यजमानौ मिथः प्रीतिरहितौ वसन्तादिके यागकाले वर्षान्तरादि प्रतीक्षमाणावतिक्रान्तं मन्यमानौ स्वाधिकारप्रवृत्तौ एकस्मिन्देशे गिरिनद्यादिव्यवधानं विना यागार्थं सोममेकस्मिन्काले सुनुतः तदा समेत्य सवनात्संसव इत्युच्यते · सर्वं कर्म सत्वरं प्रथमं-प्रथमं कारयेत् । सुसमिद्धहोमः ॥९॥ देव॰ अतिशीघ्रं कर्म कुर्वद्भिरपि सुं॰द्धे एवाग्नौ होमः कार्यः । सꣳस्थोत्तरं च कुर्यात्[3] ॥१०॥ देव॰ इहन्परकीययागापेक्षया स्वकीये यज्ञे सं॰रं संस्थाधिकं कु॰त् यदीतरेणाग्निष्टोमः प्रारब्धः तर्ह्यत्यग्निष्टोमं स्वं यज्ञं कुर्यात् यद्यत्यग्निष्टोमस्तर्ह्युक्थ्यम् यद्युक्थ्यस्तदा षोडशिनम् यदि षोडशी तदातिरात्रम् इहन्प्रारब्धामेव संस्थाम् · कर्कादयस्तु इह-

1) ॰ग्नीन् A (text and schol.). 2) सत्र K pr. m. यत्र sec. m. 3) कुर्यादिहन् A., see the schol.

न्नित्येतत्पदमग्रिमेण सूत्रेण योजयन्ति · तेन तन्मते संस्थाधिकं नियमेन वृष॰तिप-
द्विकल्प्येनेति · तदयुक्तम् मूलभूतताण्ड्यश्रुतिविरोधात्[1] शाखान्तरविरोधाच्च · तत्र
हि संस्थाधिक्यस्यैव विकल्पो दृश्यते न प्रतिपदः । इहन्वृषण्वती प्रतिपत्
॥११॥ पवमानस्य प्रथमा स्तोत्रिया प्रतिपदुच्यते · सेहन्वृ॰तीति इह्यान्वय-
प्रातिव । देव॰ वृषन्शब्दयुक्ता पवस्वेन्दो वृषा सुत इत्यादिका । अनुसवनं
वा ॥१२॥ अनुशब्दः प्रतिशब्दस्यार्थे · प्रतिसवनं वा वृषण्वती भवति न ब-
हिष्पवमानऽएवेति विकल्पः । बृहद्रथन्तरपृष्ठः ॥१३॥ संसवसोमः[2] कार्यः·
एवं हि श्रूयते सछसवऽउभे कुर्यात् गोसवऽउभे कुर्यात् अभिजितावप्येकाह्ने उभे
बृहद्रथन्तरे कुर्यादिति । देव॰ उभे बृहद्रथन्तरे कार्ये इति ताण्ड्ये श्रवणात् (९.४)।
तौश्रवसे माध्यन्दिने पवमाने तदावपनश्रुतेः ॥१४॥ तौ॰से सामनी मा॰माने
प्रक्षेप्तव्ये · कुत एतत् त॰तेः तत्र ह्यावापः श्रूयते तदेव प्रकृत्य अत्र ह्याव-
पन्ति अत्रोद्वपन्तीति । आभीकमभिनिधनमाभीशवानि चैके ॥१५॥ एके आ-
चार्या आभीकाद्यान्यपि सामान्यावपन्ति । प्रातःसवने जुहोति संवेशायोप-
वेशाय गायत्र्यै छन्दसेऽभिभूत्यै स्वाहेति ॥१६॥ आगन्तुवादन्ते । त्रिष्टुभे
जगत्याऽइत्युत्तरयोः सवनयोः ॥१७॥ विशेषः । विहवीयसजनीयकया-
शुभीयानि होता शछसति ॥१८॥ सूक्तनामधेयान्येतानि · बहिष्पवमानस्तोत्रस-
मनन्तरं यच्छस्त्रम् तत्रैतानि हो॰ति । देव॰ विहवशब्दोऽस्मिन्नस्तीति विहवीयम्
ममाग्ने वर्च इति · यो जात एव प्रथमो मनस्वानिति सजनीयम् ।
साख्यमरणमिच्छन्तः प्राजापत्यऽर्चा जुहुयुः ॥१९॥ सखिसम्बन्धि साख्यम् तन्मर-
णमिच्छ॰ । देव॰ सदृशः सदृशस्य सखा · परकीयोऽ[ध्वर्यु]ध्वर्योः सखा होता होतुः
उद्गातोद्गातुः ब्रह्मा ब्रह्मणः यजमानो यजमानस्य · अध्वर्युहोत्रुद्गातृब्रह्मगृहपतयः
परकीययज्ञस्याध्वर्य्वादेः सख्युर्मरण॰न्तो वाञ्छन्तः प्रा॰र्चा प्रजापते न त्वदित्यनया
उक्तकाले होमं कुर्युः । होमकालमाह · प्रातःसवनेऽध्वर्युर्माध्यन्दिने हो-
तोद्गाता तृतीयसवने ॥२०॥ जुहोति । अनुसवनं ब्रह्मा गृहपतिश्च
॥२१॥ जुहुतः । देव॰ त्रिष्वपि सवनेष्वन्ते । सर्वमरणमिच्छन्तः सर्वेऽनुसव-

1) See ताण्ड्य॰ ९.४. 2) ? स्तोमः K.

नम् ॥२२॥ सर्वेषां प्रतिपन्ननिमित्तानां मरणमिच्छन्तः सर्वऽएवैतेऽनुसवनं जुह्व-
ति । नद्यन्तरेऽसंसवो गिरिभिच्चेत् ॥२३॥ गिरिं भित्त्वा या नद्यागता
तदन्तरे संसवो न भवति · संसवसोमनिमित्तं न भवतीत्यर्थः । देव॰ यत्र द्व-
योर्वैरिणोः सह प्रारब्धयज्ञयोर्मध्ये व्यवधायिका नदी भवति तत्र संसवो न भ-
वति । गिरौ ॥२४॥ देव॰ कस्मिंश्चन महति पर्वते वैरियज्ञयोर्व्यवधा-
यकेऽप्यसंसवः । रथाह्ने च ॥२५॥ यावन्तं प्रदेशमह्ना रथो गच्छति तदन्ते
ऽप्यसंसवः । देव॰ रथाह्ने प्रदेशे यज्ञयोर्व्यवधायके गिरिनद्यादिव्यवधानं विनापि
असंसवः । सर्वत्राविद्विषाणानाम् ॥२६॥ देव॰ परस्परं द्वेषमकुर्वाणानां
सर्वत्र गिरिनद्यादिव्यवधानं विनापि असंसवः । विद्वेषे[1]ऽप्ययं वा-
युर्महान्त्समुद्र इति श्रुतेः ॥२७॥ अ[न्यतर]विद्वेषेऽप्यसंसवो भवति · एवं हि
श्रूयते वायुः समुद्रं[2] विद्वेष्टि कृतमपहरन्तीति[3] । देव॰ कुत एतत् अयं-
॰श्रुतेः अयं वायुः समुद्रं सदा द्वेष्टि शोषयितुमिच्छति समुद्रश्च सर्वदा स्नेहपरः
अत एव महान् बहुल एव वायुकृतेन द्वेषेण समीपऽएव स्थितस्य तस्य कि-
मपि न हीयतऽइत्यर्थः · अनेन दृष्टान्तेनान्यतरस्मिन्द्वेषं कुर्वाणोऽपि इतरस्य स्ने-
हपरस्य किमपि नष्टं न भवतीति ज्ञायते । सोमदाहे यथास्वं वृत्तान्तान्धा-
रयेयुः ॥२८॥ धारणं स्वपदार्थानामनु[स्म]रणम् । देव॰ सोमस्य दाहे सति य॰स्व-
मध्वर्य्वादिर्यद्यत्स्वं कर्म वृ॰त्तान्वृत्तस्य कृतस्य कर्मणोऽन्तानध्वर्य्वादयो हृदये धा॰युः
मया एतत्पदार्थान्तरं मदीयं कर्म कृतमित्येवं चित्ते दृढं धारणमविस्मरणं कुर्युः ।
प्रतिनिधाय यथापूर्वं यज्ञेन चरेयुः ॥२९॥ देव॰ प्रशान्ते दाहभये यथास्थानमा-
गता अध्वर्य्वादयः य॰वं पूर्ववत् सोमापहरणवत् (१२. १७-१९) अर्जुनश्येनहृतादिकं
प्र॰धाय प्रतिनिधिद्रव्यं सम्पाद्याभिषुत्य कृतावशिष्टं यज्ञं समापयेयुः ।
पञ्च गा दत्त्वा प्राग्द्वादश्याः पुनर्यज्ञः ॥३०॥ अत्र गोः संख्यासम्बन्धो · या गा-
स्ताः पञ्च · ततश्च हिरण्यादीनामनिवृत्तिः[4] । देव॰ द्वादश्या रात्रेः प्राक् स एव
यज्ञः पुनः कार्यः । तत्र तद्द्रव्याद्यत्पूर्वस्मिन्दास्यन्स्यात् सत्त्रेऽप्यविशेषात् ॥

---

1) Thus ३. MA. विद्विषे K (text and comm.) 2) ? Thus K sec. m. द्रुश्च pr. 3) sic! see Çâṅkh. १३.५.२३. स्रवन्त्यो वा विहरन्ति [संसवं विच्छिन्दन्ति] वायुराकाशश्चेति. 4) see १२.२०.

३१॥ देव॰ तत्र पुनर्यज्ञे तद्दक्षिणात्वेन दद्यात् यस्मिन्प्रयोगे दास्यात् कृत्स्नां क्रतुदक्षिणामित्यर्थः । एतत्सोमदाहनिमित्तं सत्रेऽपि भवति । दानं प्रायश्चित्तसंयोगात् ॥३२॥ देव॰ अतः सत्रेऽपि नैमित्तिकं दानं भवतीति पूर्वः पक्षः । सिद्धान्तमाह · न वादक्षिणत्वात् ॥३३॥ न वा दानं प्रवर्तते अदक्षिणानि हि सत्राणीति (१२.१.८) । तस्य वक्ष्यः पुनराहारः ॥३४॥ देव॰ सत्रेऽपि । ब्रह्मा प्रायश्चित्तानि जुहुयादनादिष्टानि ॥३५॥ यान्यनादिष्टनिमित्तानि यथा यदि दीक्षासु किंचिदापद्येतेति (१२.६.१.७) तन्निमित्ताविशेषे आदिष्टानि ब्रह्मा जुहोति · एवं हि श्रूयते (॰३८) ता ब्रह्मैव जुहुयादिति व्याहृत्यङ्गीकरणेन स्त्रीलिङ्गबहुवचनात्तता · तथा यद्यृत्तो भूरिति चतुर्गृहीतमाज्यं गृहीत्वेत्येवमादि (११.५.८.६) महाव्याहृतीरेव प्रकृत्य श्रूयते (॰८) यदेव त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वमिति । ब्रह्मा विलिष्टं संदधातीति श्रुतेः ॥३६॥ विलिष्टं दुरिष्टं यत् तद्ब्रह्मा संदधाति · यद्वै यज्ञस्य दुरिष्टं तद्ब्रह्मा संदधातीति श्रुतिः । देव॰ शाखान्तरे । त्रिवेदसंयोगाच्च ॥३७॥ अपि च वेद[त्रय]विहितकर्मसंयोगो ब्रह्मण एवेति ॥ ॥ चतुर्दशी कण्डिका ॥१४॥ ॥

इत्युपाध्यायकर्कविरचिते कात्यायनसूत्रभाष्ये पञ्चविंशोऽध्यायः ॥

इति कात्यायनसूत्रे पञ्चविंशोऽध्यायः ॥२५॥ ॥

---

आधानादीनि पितृमेधान्तानि कर्माण्यभिधाय वेदान्तरविहितान्येकाहादीन्युक्त्वा तेषामेव यानि नैमित्तिकान्यङ्गानि भिन्ने [जुहोती]त्येवमादीनि यानि च नैमित्तिकान्येव पुरुषार्थरूपाणि क्षामवत्यादीनि तान्यप्यभिहितानि । इदानीमवसरप्राप्तः प्रवर्ग्योऽनुविधेयः · तद[र्थमिदमा]रभ्यते · दीक्षासु महावीरान्त्संभरति ॥१॥ महावीरान्करोतीत्यर्थः । देव॰ अनेकदीक्षापक्षे यस्मिन्नहनीष्टा भवति एकदीक्षापक्षे च दीक्षितोऽयं ब्राह्मण इति प्रैषानन्तरम् प्रागस्तमयात् महावीरसम्भरणं श्रपणान्तं कृत्वा आ पाकादुद्धरणं प्रातः कर्तव्यम् · महावीरग्रहणं पिन्वनरौहिणकपालानामप्युपलक्षणम् । अन्तःपात्यदेशे सम्भारान्निदधाति मृदं वल्मीकवपां वराहविहतं पूतीकानजापयो गवेधुकाः कृष्णाजिनमभ्रिं चोत्त-

रतः ॥२॥ देव॰ मृत्पिण्डम् · उपदीकाभिः कृतो मृत्संचयः तस्य वपेव वपा मध्यवर्ती लोष्टः · वराहः सूकरः तेन विहतम् तदुत्खातां मृत्तिकाम् · पूतीकान् रोहिषपुष्पाणि · गवेधुकाः जलसंनिहितमहातृणजानि शुक्लानि फलानि · एतान्सम्भारान् प्राक्संस्थानुदक्संस्थान्वा निधाय कृष्णं च वक्ष्यमाणलक्षणमेतेषां सम्भाराणामुत्तरतो निदधाति । देवस्य त्वेत्यभ्रिमादायौदुम्बरीं (३७. १) वैकङ्कतीं वारत्निमात्रीं सव्ये कृत्वा दक्षिणेनालभ्य जपति युञ्जतऽइति (३७. २) ॥३॥ सव्यहस्तस्थिताया एवालभ्य जपो यथा स्यादिति दक्षिणग्रहणम् ।

मृदमादत्ते पिण्डवद्देवी द्यावापृथिवीऽइति (३७. ३) ॥४॥ दक्षिणोत्तराभ्यां पाणिभ्यां दक्षिणः साभ्रिरिति (१६. २. २७) वतिना निर्दिश्यते । देव॰ अत्र मृच्छब्देनातिचिक्कणाया भाण्डादिनिर्माणयोग्यायाः कुम्भकारसंस्कृताया मृदः पिण्डोऽभिधीयते । कृष्णाजिने निदधात्युत्तरतः ॥५॥ मृदम् । देव्यो वम्र्य इति (३७. ४) वल्मीकवपाम् ॥६॥ देव॰ पिण्डवदेव आदत्ते आदाय च तूष्णीमेव कृष्णाजिने निदधाति । इयत्यग्रऽइति (३७. ५) वराहविहतम् ॥७॥ आदत्ते ।

इन्द्रस्यौज स्थेति (३७. ६) पूतीकान् ॥८॥ मखायेति (३७. ६) पयः ॥९॥

तूष्णीं गवेधुकाः ॥१०॥ आदत्तऽइति सर्वत्रानुषङ्गः । सम्भृतानभिमृशति मखायेति (३७. ६) ॥११॥ तान्सम्भृ॰मृशतीत्युपदेशाद्युगपदभिमर्शनम् (१४. १. २. १४)।

कृष्णाजिनं परिगृह्योत्तरतः परिवृतं गच्छन्ति प्रैतु ब्रह्मणस्पतिरिति (३७. ७) ॥१२॥ बहुवचनोपदेशात्सर्वेषां मन्त्रः · परिवृतं च पूर्वं कृतं द्रष्टव्यम् तद्भूतोपदेशात्करणस्य [च]ाचोदितत्वात् । देव॰ परिश्रितस्य सिद्धस्यैव निर्देशादर्थात्पूर्वं पञ्चारत्निप्रमाणं समचतुरश्रं प्राग्द्वारं कृत्वा तन्मध्ये सप्त भूसंस्कारान्कृत्वा सिकतोपकिरणं कार्यम् ।

परिवृते निदधाति सम्भारान् ॥१३॥ देव॰ कृष्णाजिनस्थानेव । उद्धतावोक्षिते सिकतोपकीर्णे प्राग्द्वारे मखयेति (३७. ७) ॥१४॥ देव॰ उल्लिखितम् अद्भिरभ्युक्षितं च एतत्संस्कारद्वयं पञ्चभूसंस्कारेभ्योऽधिकम् । सम्भारैः संसृजति मखायेति (३७. ७) ॥१५॥ देव॰ ततोऽध्वर्युः गवेधुका अजापयश्च पृथङ्निधाय सर्वैः वल्मीकवपादिभिः सह मृत्पिण्डं मिश्रयति । मृदमादाय मखायेति (३७. ७) महावीरं करोति प्रादेशमात्रमूर्ध्वमासेचनवन्तं मेखलावन्तं मध्यसंगृहीतमूर्ध्वं मेख-

लायाश्च्यङ्गुलम् ॥१६॥ मृदादानं तूष्णीम् मन्त्रेण महावीरकरणाम् । देव॰ आसे-
चनं गर्तः तद्युक्तम् · मध्यप्रदेशे संकुचितम् उलूखलवत् मुष्टिग्रहणायोग्यम् मेख-
लाया ऊर्ध्वं त्र्य॰लम् अतश्च प्रादेशमात्रस्योपरि भागे त्र्य॰लं परिशिष्य ततोऽधस्ता-
न्मेखला [रास्ना] कार्येत्यर्थः । निष्ठितमभिमृशति मखस्य शिर इति (३७. ८)
॥१७॥ निष्पन्नं महावीरम् । आदानमेके ॥१८॥ देव॰ अनेन मन्त्रेण महा-
वीरकरणार्थमादानं कुर्वन्ति अर्थान्निष्ठिताभिमर्शनं तूष्णीमिति ।

एवमितरौ प्रतिमन्त्रम् ॥१९॥ महावीरौ करोति । देव॰ निष्ठितावभिमृशति च
अभिमर्शनानन्तरं सर्वेषां संनिधौ भूमौ निधानं । स्रुक्पुष्कराकृती पिन्वने
रौहिणकपाले परिमण्डले ॥२०॥ देव॰ स्रुचः पुष्करं मुखं स्रु॰रम् तस्येवाकृतिरा-
कारो ययोस्ते · रौहिणौ वक्ष्यमाणौ पुरोडाशौ तदर्थं कपाले वर्तुले ।

मृदमुपशयां निदधाति ॥२१॥ देव॰ महावीरपिन्वनरौहिणकपालनिष्पादनान-
न्तरमवशिष्टां मृदं उपशयासंज्ञिकां नि॰ति स्थापयति प्रायश्चित्तार्थम् ।

गवेधुकाभिः श्लक्ष्णयति मखायेति (३७. ८) प्रतिमन्त्रम् ॥२२॥ श्लक्ष्णनं च मृन्मा-
र्ष्टीकिरणम् · एतदेव तासां सम्भरणप्रयोजनम् । देव॰ महावीरान्घर्षणेन श्लक्ष्णा-
न्सुकुमारान्करोति । अश्वशकृता धूपयत्यश्वस्य त्वेति (३७. ९) प्रतिमन्त्रम् ॥
२३॥ देव॰ अश्वपुरीषेण दक्षिणाग्निनादीप्तेन । उखावदग्निः प्रदहनं च
मखायेति (३७. ९) प्रतिमन्त्रम् ॥२४॥ देव॰ महावीराणां प्र॰नं प्रकर्षेण दहनं अ-
पणं चशब्दादुखावत्करोति · ततश्च चतुरश्रमवटं खात्वा तत्र अपणमास्तीर्य तत्र
यथाकृतं त्रीन्महावीरान्युब्जान्निधाय पिन्वने रौ॰पाले च न्युब्जे निधाय पुनः अप-
णेनावच्छाद्य दक्षिणाग्निनादीपयतीत्येतावद्धतिना गृह्यते (१६. ४. १-१३) ।

पक्वानुद्धरत्यृजवे त्वेति (३७. १०) प्रतिमन्त्रम् ॥२५॥ उद्वपामीति चाध्याहारः सा-
काङ्क्षत्वात् । देव॰ आ पाकादुत्तारयति · उखावदित्यनेनैव दिवैव प्रदहनोद्धरणे
(१६. ४. १७) । अजापयसावसिञ्चति मखायेति (३७. १०) प्रतिमन्त्रम् ॥२६॥ सा-
काङ्क्ष एवातो यथार्थमध्याहारो युक्तरूप इति । तूष्णीं पिन्वनादीनां करणा-
भिमर्शनश्लक्ष्णनधूपनप्रदहनोद्धरणावसेचनानि ॥२७॥ ॥ प्रथमा कण्डिका ॥१॥

देव॰ इति महावीरसम्भरणमुक्तम् । अथ प्रवर्ग्यमाह॰ उपसदा चरिष्यन्नरिष्य-

न्प्रवर्ग्येण चरति सप्रवर्ग्ये ॥१॥ ननु चैतदुक्तमेव (८. २. १४) प्रवर्ग्योपसदावत इत्य-वाच्यमत्र · सत्यमेव · तत्र समासनिर्देशात् [इह निय]मार्थोऽयमारम्भः । देव° सह प्रवर्ग्येण वर्ततऽइति सप्रवर्ग्यः प्रवर्ग्यवान्यज्ञः तस्मिन् · प्रत्यहं सायम्प्रातः प्रागुपसदः प्रवर्ग्यचरणं कर्तव्यम् । अपिहितद्वारे प्रवर्ग्यचरणम् ॥२॥ विमिते । देव° अपिहितानि कपाटकरादिना ढङ्कितानि द्वाराणि यस्य । पत्न्यदर्शनम् ॥३॥ संनिधानेऽपि सति दर्शनमात्रप्रतिषेधः । देव° पत्न्या महावीरस्य दर्शनं न कर्तव्यम् । अननूक्तिभिश्च ॥४॥ चशब्दाद्दर्श[नम् · ना]नूक्तिर्येषाम् तेऽननूक्तयः । देव° अवेदिकाः । यावदुक्तम् ॥५॥ [प्रत्य]क्षविधानाद्धर्माणाम् · अतोऽपूर्वः प्रवर्ग्यः · यथा पिण्डपितृयज्ञः सत्यपि द्रव्यसामान्ये तद्वद्यमपि । देव° अपूर्वत्वात् न ह्यस्य कापि प्रकृतिरिति · अतो यावदत्रोच्यते तावदेव भवति नाधिकमित्यर्थः । परिघर्म्यमौदुम्बरम् ॥६॥ देव° घर्मसम्बन्धि यत्पात्रजातं काष्ठमयमुपयमन्यादि । मौञ्जं त्रिवृद्रज्जव्यम् ॥७॥ [र]ज्जुजातं मौञ्जं त्रिवृद्भवति । देव° तत्रापवादमाह · बाल्वजं[1] विवानमासन्द्यौदुम्बर्या स्कन्धमात्र्याः ॥८॥ देव° यजमानस्कन्धप्रमाणपादाया औदुम्बर्या आसन्द्या बाल्ब[जं] बाल्बमयं विवानं [वि]वानरज्जुर्भवति । पूर्वेण गार्हपत्यं प्राचः कुशानास्तीर्य पात्रासादनं द्वन्द्वम् ॥९॥ गार्ह[पत्यस्य पुरस्तात्प्रागग्रे]षु कुशेषु द्वन्द्वं पात्राण्यासादयति [देव° पूर्वं द्वारापिधानं शान्तिकरणं च कृत्वा] । तान्याह · उपयमनीं महावीरम् परीशासौ पिन्वने रौहिणकपाले रौहिणहवन्यौ च स्रुचावनुत्कीर्णे स्थूणामयूखम् धृष्टी शतमाने मुञ्जप्रलवान्विकङ्कतशकलान्विंशतिं प्रादेशमात्रान् स्रुवं मुञ्जवेदम् धवित्राणि परिधींश्च रज्जुसंदानम् आसन्दीं कृष्णाजिनम् अभ्रिं सिकताः खरार्था अर्थवच्च ॥१०॥ अर्थ°च्च यत्तदासादयति पृथक्पाठकरणम् कार्यक्रमो यथा स्यादिति इतरेषां तु पाठक्रम एव । देव° उपयमनीमौदुम्बरीं बाहुप्रमाणां महापुष्करां स्रुचम् प्रचरणीयम् · परीशासौ संदंशाकारौ · गोर्बन्धनार्था स्थूणा अजाबन्धनार्थः शङ्कुः कीलको मयूषः · धृष्टी उपवेषौ औदुम्बरौ · एकं रजतशतमानम् द्वितीयं सुवर्णशतमानम् औदुम्बरमरत्निमात्रं स्रुवम् · मुञ्जमयं

1) Thus A. वाल्ब ३. बाल्ब° M. K (ल्बा pr. m.). बाल्म १. 2) मयूखं R. A.

वेदं च · धूनोत्येभिरिति ध॰णि कृष्णाजिनखण्डनिर्मितास्त्रयो व्यजनाः · रज्जुर्गो-बन्धनार्था अजाबन्धनार्था च संदानशब्देन दोहनकाले गोपादबन्धनार्था रज्जुरभिधीयते केचिदजाया अपि संदानमिच्छन्ति · अर्थश्च उक्तपात्रव्यतिरिक्तमपि यत्किंचित्प्रयोजनवदित्यर्थः स्फ्यः पवित्रे अग्निहोत्रहवणी आज्यस्थाली प्रभृत-माज्यम् शूर्पम् पात्री पिष्टम् उपसर्जनीपात्रम् उपशया इतरौ महावीरौ च होतृ-षदनम् मौञ्जः कूर्च औदुम्बरी समिदिति अत्रापि द्वन्द्वमेवासादनम्।

प्रोक्षणीः संस्कृत्योद्यम्योत्थायाह ब्रह्मन्प्रचरिष्यामो होतरभिष्टुहि प्रस्तोतः सा-मानि गायेति ॥११॥ प्रोक्षणीसंस्कारो यथादृष्टः प्रदेशान्तरे (२. ३. ३१-३६)।

ब्रह्मानुज्ञातो यमाय त्वेति (३७. ११) महावीरं प्रोक्षति ॥१२॥ [ब्र]ह्मानुज्ञात-ग्रहणं प्रागनुज्ञायाः सर्वप्रैषोच्चारणप्रज्ञप्त्यर्थम्। प्रतिमन्त्रं वा वाक्यभेदात् ॥१३॥ प्रत्म्त्रमेव वा प्रोक्षणम् · कुत एतत् वाभ्दात् भिन्नानि] हि वाक्यानि यमाय त्वा मखाय त्वा सूर्यस्य त्वा तपसऽइति। परिघर्म्यं च तूष्णीम् ॥१४॥ परिघर्म्यं च यदासादितम् तच्च तूष्णीं प्रोक्षति। देव॰ प॰र्म्यं पात्रजातमुपयमन्यादि सर्वं राशीकृत्य सकृदेव प्रोक्षणम्। पूर्वया द्वारा स्थूणामयूखं निर्हृत्य दक्षि-णतो निखनति होतुः संदर्शने ॥१५॥ देव॰ शालायाः पूर्वद्वारेण स्थू॰खं निष्का-श्य शालाया दक्षिणस्यां दिशि निख॰ति गार्हपत्यसमीपे उपविष्टो होता यत्र निखातां स्थूणां मयूखं च पश्यति तस्मिन्स्थाने। गार्हपत्याहवनीयाऽउत्त-रेण खरौ निवपति दक्षिणतोऽनुभित्त्युच्छिष्टखरम् ॥१६॥ देव॰ दक्षिणद्वारस्य पूर्व-द्वार्यास्थूणासमीपे भित्तिसंलग्नमुच्छि॰रं निवपति। पूर्वेणाहवनीयंऽ सम्राडा-सन्दीं पर्याहृत्य दक्षिणतः प्राचीमासादयति राजासन्द्या उत्तरतः कृष्णाजिनम-स्यामास्तृणाति तस्मिन्नभ्युपशये निदधाति महावीरौ चावच्छादयेद्वा ॥१७॥ न वेति विकल्पः। देव॰ तावासन्द्यास्थापितौ महावीरौ वस्त्रादिनावच्छा॰।

अन्यो वा परिघर्म्ययोजनमध्वर्योः कालसम्पत्तेः ॥१८॥ [अध्वर्योरन्यो वा स्थू]णा-मयूखनिर्हरणादि करोति · कुत एतत् अध्वर्योः कालसम्पत्तिर्हि भवति स यत्रैताऽ होता॰समनक्तीति (१४. १. ३. १३) · यदि ह परि॰जनमध्वर्युः कुर्यात् कालो न सम्भाव्येत। अञ्जन्तीत्युच्यमाने देवस्त्वेत्यनक्ति (३७. ११) महावीरमाज्यऽ

संस्कृत्य ॥१९॥ संस्कारश्च पूर्णाहुतिकः (४. १०. ५)। रजतशतमानं खरेऽउपगूहति पृथिव्याः सम्पृच इति (३७. ११) ॥२०॥ शतमानं च रक्तिकाशतेन। देव॰ खरसिकतामध्ये नीचैः प्रवेशयति ॥ ॥ द्वितीया कण्डिका ॥२॥ ॥

शुक्रं गायेति प्रेष्यति ॥१॥ देव॰ अध्वर्युः प्रस्तोतारम् शाखान्तरात्।

पत्नी शिरः प्रोर्णुते ॥२॥ स्वयमेव प्रथमान्तनिर्देशात् (१४. १. ३. १६)। देव॰ आच्छादनं च सचतुष्कं कर्तव्यं यथा घर्मो न दृश्यते। सम्सीदस्वेत्युच्यमाने मुञ्जप्रलवान्द्विगुणानादीप्य प्रतिदिशं खरे करोति ॥३॥ संसीदस्वेति यदा होता पठति। देव॰ मुञ्जाः शरतृणानि शरेषीकापरितोभवानि तान् मध्यमोटनेन द्विगुणीकृतान् आदीप्य गार्हपत्ये प्रदीप्तान्कृत्वा सर्वासु प्रागादिदिक्षु खरे॰ति।

तेषु महावीरमाज्यवन्तमर्चिरसीति (३७. ११) ॥४॥ तेष्विति मुञ्जप्रलवेषु। देव॰ संस्कृतेनाज्येन पूर्णं प्रचरणीयं म॰रं निदधाति प्रवृणक्ति स्थापयतीत्यर्थः।

अनाधृष्टेति (३७. १२) वाचयति प्रादेशमध्यधि धारयन्तम् ॥५॥ महावीरस्योपरिष्टात्प्रादेशं धारयन्तं [यजमानं] वाचयति · वाचनं च शाखान्तरात्।

प्रतिदिशमेके ॥६॥ मन्त्रलिङ्गात् अनाधृष्टा पुरस्तात्पुत्रवती दक्षिणत इत्येवमादि · यद्येवम् तदा वचनेऽसति लिङ्गाद्विभागो नावगम्येत अथ तु वचनमिदम् तदा विकल्प इति। विश्वाभ्यो मेति (३७. १२) दक्षिणत उत्तानं पाणिं निदधाति ॥७॥ तच्चाधिकाराद्यजमान एव (१४. १. ३. १८ २४)। मनोरश्वेति (३७. १२) प्रादेशमुत्तरतः ॥८॥ निदधातीति वर्तते। देव॰ महावीरादुत्तरस्यां दिशि।

धृष्टिभ्यां भस्मना परिकीर्याङ्गारैश्च विकङ्कतशकलैः परिश्रयति त्रयोदशभिः प्रागुदग्भिः स्वाहा मरुद्भिरिति (३७. १३) ॥९॥ धृष्टिभ्यामुपवेषाभ्यां महावीरं भस्मर्थ। देव॰ महावीरं परितो भस्मविक्षेपं कृत्वा गार्हपत्याङ्गारैश्च धृष्टिभ्यामेव महावीरं पर्य महावीरस्य सर्वतो निरन्तरानङ्गारान्निधाय। अधिकं दक्षिणतो द्वौ मन्त्रेण ॥१०॥ देव॰ तेषां त्रयोदशानां शकलानां द्वौ शकलौ स्वा॰रुद्भिरिति मन्त्रेण प्रागग्रौ प्रथमं परिश्रयति परितःप्रकीर्णानामङ्गाराणामुपरि निदधाति इतरानेकादश तूष्णीमिवोपर्युपरि निदधाति · द्वयोर्द्वयोः परिश्रयणे क्रियमाणे सर्वासु दिक्षु त्रिषु-त्रिषु सम्पन्नेषु एकः त्रयोदशोऽधिकः शकलः तं द॰णतः परिश्रयति।

सुवर्णशतमानेनापिदधाति दिवः सᳵस्पृश इति (३७. १३) ॥११॥ महावीरम् ॥
॥ तृतीया कण्डिका ॥३॥ ॥

चन्द्रं गायेति च प्रेष्यति ॥१॥ देव॰ चकारादपिधानसमकालमेव प्रस्तोतारं प्रे-
ष्यति शाखान्तरात् । कृष्णाजिनावकृत्तैर्धवित्रैरुपवाजयति त्रिभिर्दण्डवद्भि-
र्मधु-मध्विति (३७. १३) ॥२॥ देव॰ व्यजनैः महावीरं परितः प्रकीर्णानङ्गारान् शक-
लसमिद्धान् उप॰ति उपवीजयति दीपनाय । एकं प्रयच्छति प्रतिप्रस्थात्रेऽपर-
मग्नीधे धून्वन्तस्त्रिस्त्रिः परिक्रामन्ति पितृवद्देववच्च ॥३॥ पितृवदपसव्यम् देववच्च
धून्वन्तः प्रदक्षिणम् । देव॰ चन्द्रसामसमाप्तौ छन्दोगवशाद्घर्मस्य तन्वौ गायेति प्र-
स्तोतारं संप्रेष्य तद्गाने क्रियमाणेऽध्वर्युप्रतिप्रस्थात्राग्नीध्राः धवित्रैः धून्वन्तः प्रथमं
पितृवत्त्रिर्वारं परि॰न्ति ततो धवित्राणि अन्तरतः कृत्वा पुनर्देववदिति प्रदक्षिणं
त्रिः प॰न्ति । रुचिते वोत्तरम् ॥४॥ उत्तरं परिक्रमणं रुचिते वा घर्मे भवति
[निदानीम्] · विकल्पः । देव॰ पूर्वं त्विदानीमेव । अर्चिषि प्राप्ते सुवर्णशत-
मानं निधायाज्येन महावीरं परिषिञ्चति स्रुवेण प्रतिप्रणवम् ॥५॥ [वीजनेन प्र-
दीप्तत्वात्] अर्चिषि प्राप्ते महावीरे सुव॰मानमपनीय म॰रमाज्येन स्रुवेण परि॰ञ्चति
प्रणवे-प्रणवे होतुः । देव॰ सुव॰मानं महावीरादन्यत्र सुगुप्ते देशे स्थापयित्वा ।
रौहिणावधिश्रयति तूष्णीं ग्रामपिष्टानाम् ॥६॥ रौहिणौ पुरोडाशावधिश्रयति ·
तूष्णीमिति लौकिकवागुच्चारणप्रतिषेधः · ग्रा॰नामिति च न पेषणक्रिया । देव॰
अध्वर्योर्महावीरपरिषेके व्यापृतत्वेन विरोधात्प्रतिप्रस्थाता · ग्रा॰नां लौकिकपि-
ष्टानां व्रीहीणां यवानां वा । आज्यधर्मा स्थानापत्तेः ॥७॥ रौहिणयोर्ये
नाम सांनिपातिका धर्मास्ते आज्यसम्बन्धिनो भवन्ति · कुत एतत् स्था॰त्तेः आ-
ज्यभागस्थानापन्नौ ह्येतौ (१४. २. २. ५२) । औषधधर्मा वा संस्कारशब्दात् ॥
८॥ वाशब्दः पक्षान्तरपरिग्रहे · औ॰र्मा वा भवन्ति नाज्यधर्माः · कुत एतत्
सं॰ब्दात् संस्कारो ह्ययम् कपालयोः श्रपणम् तेन पुरोडाशावेताविति पौरोडा-
शिका धर्माः · यत्तु स्थानापत्तिरुक्ता सोऽर्थवादः । ईडे द्यावापृथिवीऽइत्यु-
च्यमाने परिधीन्परिधाय रौहिणाऽउद्वास्य स्रुचोरासादयत्याहवनीयाद्दक्षिणोत्तरौ
॥९॥ देव॰ रौ॰णौ पुरोडाशौ रौहिणाहवन्योः स्रुचोः पात्रीस्थानीययोरुपस्तीर्णयो-

रुद्रास्य तत्स्थावेव आहु॰त्तरौ आसा॰ति रौहिणनिर्वापादि रौहिणासादनान्तं विरोधात्प्रतिप्रस्थाता करोति । अप्नस्वतीमित्युच्यमाने रुचितो घर्म इत्याह्वोपोत्तिष्ठन् घर्मस्य तन्वौ गायेति प्रेष्यति ॥१०॥ अत्र च छान्दोग्ये कालश्रवणम् अभीन्धने तु घर्मस्य तन्वौ गायेदिति[1] · तथा च प्रागभीन्धनात्प्रैषदानम् ।

परिक्रम्योपतिष्ठन्तेऽकृतं चेद्गर्भो देवानामिति (३७. १४) ॥११॥ बहुवचनोपदेशाच्च सर्वेषामुपस्थानम् तथा च षडुपतिष्ठन्तऽइति श्रुतिः (१४ १. ४. १) । देव॰ उत्तरं देववत्परिक्रमणं प्राक् अकृतं चेत् (४) इह पूर्वं त्रिः प्रदक्षिणं प॰म्य इतरथावृत्तिं च सकृत्कृत्वा सर्वे ऋत्विजः सयजमाना घर्ममुप॰न्ते · प्रस्तोतृव्यतिरिक्ताः सयजमानाः पञ्चर्त्विजः षड्ग्रहणेन गृह्यन्ते श्रुतौ प्रस्तोतुरदृष्टत्वात् छन्दोगानां च तस्याप्युपस्थानं विहितं । अपोर्णोति पत्नीशिरः ॥१२॥ समासश्चायम् न वाक्यम् · तथा च श्रुतिः (१४. १. ४. १६) अथ पत्न्यै शिरो॰ । त्वष्टृमन्त इत्येनां (३७. २०) वाचयति महावीरमीक्षमाणाम् ॥१३॥ अहः केतुनेति (३७. २१) दक्षिणाऽ रौहिणं जुहोति मन्त्रक्रमेणोत्तरऽ रात्रिरिति सायम् ॥१४॥ देव॰ ततः उपस्थानानन्तरं प्रारब्धगानस्य साम्नः परिसमाप्तौ निधनोपायेन सहाध्वर्युः रौहिणाहवन्या स्रुचैव दक्षि॰होति एककपालत्वात्सर्वहुतम् · इदं घर्मायेति त्यागः इदमह्नऽइदं रात्र्या इति तु जीर्णः संप्रदायः · उत्तरं म॰णा जुहोति स्वाहा रुद्राय रुद्रहूतये स्वाहा सं ज्योतिषा ज्योतिरित्येतन्मन्त्रककर्मणोऽनन्तरमित्यर्थः (६. १८) · सायमित्यपराह्णकालीने प्रवर्ग्यचरणे रात्रिरिति द्वावपि रौहिणौ यथाकालं जुहोति ॥ ॥ चतुर्थी कण्डिका ॥४॥ ॥

देवस्य त्वेति (३८. १) रज्जुसंदानमादायेडऽएहीति गामाह्वयति नाम्ना च त्रिरुच्चैरपरेण गार्हपत्यं गच्छन् ॥१॥ घर्मधुग्बन्धनार्थाय पाशवती रज्जुः तस्या एव पश्चात्पादनियोजनार्थं संदानम् तदादाय · इडऽएहीति गामाह्वयति [उपांशु] नाम्ना च त्रिरुच्चैः आह्वानम् । देव॰ नाम चात्र व्यावहारिकम् । धेनु गायेति प्रेष्यति ॥२॥ प्रस्तोतारम्[2] । अदित्यै रास्नेति (३८. ३) गां पाशेन प्रतिमुच्य स्थूणायां बद्ध्वा पूषासीति (३८. ३) वत्समुत्सृजति ॥३॥ तदीयमेव । देव॰ तामागतां गां

1) see Lâty. १. ६. २५. 2) see Lâty. १. ६. २६.

॰च्य तस्याः शृङ्गयोः रज्जुपाशं प्रोतयित्वा । गवा सह संयोगार्थम् । संदाय घर्माय दीष्वेति (३८. ३) वत्समुन्नयति ॥४॥ देव॰ धेनुं पश्चिमपाद्योः संदानेन नियोजनेन बद्धा ततो वत्सं नयति अपाकरोति गोः स्तनेभ्यः पृथक्करोति ।

अश्विभ्यां पिन्वस्वेति (३८. ४) पिन्वने दोग्धि ॥५॥ एनां गाम् ।

स्वाहेन्द्रवदिति (३८. ४) विप्रुषोऽभिमन्त्रयते ॥६॥ ये पिन्वने पतिताः । अन्नु ।

यस्ते स्तन इति (३८. ५) स्तनमालभते ॥७॥ काण्वपाठे स्तनानालभतऽइति तथा च सर्वेषामालम्भो युगपदेकत्वात् । एवं प्रतिप्रस्थातातानाम् मयूखे तूष्णीम् ॥८॥ दोग्धि । देव॰ मयूषे कीलके बध्नाति । पयो गायेति प्रेष्यति ॥९॥ प्रस्तोतारम् । उत्तिष्ठ ब्रह्मणस्पतऽइत्युच्यमानऽउपोत्तिष्ठति ॥१०॥ होत्रोच्यमाने[1] । देव॰ अध्वर्युः गोः समीपादुत्तिष्ठति । उपद्रव पयसेत्युच्यमाने गच्छत्युर्वन्तरिक्षमिति (३८. ५) ॥११॥ होत्रोच्यमाने[2] । विमितं प्रति । देव॰ गोः समीपाद्गार्हपत्यं प्रति । अध्वर्युः प्रतिप्रस्थाता च । परीशासावादत्ते गायत्रं छन्दोऽसीति (३८. ६) प्रतिमन्त्रम् ॥१२॥ वसिष्ठशफौ गायेति प्रेष्यति ॥१३॥ प्रस्तोतारम्[3] । देव॰ शाखान्तरात् । ताभ्यां महावीरं परिगृह्णाति द्यावापृथिवीभ्यां त्वा परिगृह्णामीति (३८. ६) ॥१४॥ ताभ्यामिति परीशासावुच्येते । उद्यम्य मुञ्जवेदेनोपमृज्योपयमन्योपगृह्णात्यन्तरिक्षेणोपयच्छामीति ॥१५॥ उद्यम्य उत्क्षिप्य परीशासाभ्यां महावीरम् । देव॰ उपयमनीं घर्मस्याधस्ताद्धारयति । अन्नापयसावसिच्य शान्ते गोः पयोऽवनयतीन्द्राश्विनेति (३८.६) ॥१६॥ देव॰ उपयमन्योपगृहीतं महावीरमन्ना॰सिच्य । शान्ते महावीरे । प्रैतु ब्रह्मणस्पतिरित्युच्यमाने ॥१७॥ होत्रा[4] उच्यमाने ॥ ॥ पञ्चमी कण्डिका ॥५॥ ॥

समुद्राय त्वेति (३८. ७-९) वातनामानि जपति गच्छन्नाहवनीयम् ॥१॥

स्वाहा घर्मायेत्युपयमन्यासिञ्चति (३८. ९) घर्मे ॥२॥ यदुपयमन्यां पतितं पयो घृतं वा घर्मे तदासिञ्चति । स्वाहा घर्मः पित्रऽइति (३८. ९) जपित्वातिक्रम्याश्राव्याह घर्मस्य यजेति ॥३॥ प्रेष्यति । वषट्कृते जुहोति विश्वा आशा

1) see Çânkhây. ५. १०. ९. 2) see Çânkhây. ५. १०. १०. 3) see Lâṭyây. १. ६. ३२.
4) Çânkhây. ५. १०. १४.

इति (३८. १०) ॥४॥ दिवि धा इति (३८. ११) त्रिरुत्कम्पयति ॥५॥ महावीरम् । स्वाहाग्नयऽइत्यनुवषट्कृते (३८. ११) ॥६॥ जुहोति । अश्विना घर्ममिति (३८. १२) ब्रह्मानुमन्त्रयते ॥७॥ हुतं द्रव्यम् । देव॰ हुतं द्रव्यमिति कर्कः पात्रस्थमित्यन्ये · उभयमप्येतत्समूलम् शाखान्तरात् · अतश्चेच्छयानुष्ठानम् ।

अपातामिति (३८. १३) यजमान· ॥८॥ तदेवानुमन्त्रयते । देव॰ घर्मं पात्रस्थमेव । इषे पिन्वस्वेति (३८. १४) पिन्वमानमनुमन्त्रयते ॥९॥ तदेव द्रव्यम् । देव॰ पि॰न्नमिति अतितप्तत्वात्पात्रमध्ये सर्वतः प्रसरन्तमुत्कलन्तमितस्ततः उच्छलन्तमित्यर्थः । अत्र च निःसंदिग्धं घर्मस्थस्यैव द्रव्यस्याभिमन्त्रणम् शाखान्तरेऽपि तथैव दर्शनात् · अतो ब्रह्मादीनामपि (७) पात्रस्थस्यैवानुमन्त्रणं युक्तम् ·· अयमेव स्वश्रुत्यभिप्रायः ।

धर्मासीत्युत्क्रामत्युत्तरपूर्वार्धम् (३८. १४) ॥१०॥ देव॰ अध्वर्युः ऐशानीं दिशं प्रति उद्गच्छति । अमेन्यस्मेऽइति (३८. १४) खरे करोति ॥११॥ महावीरम् । देव॰ आहवनीयस्योत्तरतः ख॰ति परीशासगृहीतमेव स्थापयति । विकङ्कतशकलैर्जुहोति घर्मे न्यज्य-न्यज्य स्वाहा पूष्णे शरसऽइति (३८. १५) प्रतिमन्त्रम् ॥१२॥ वि॰लैः घर्मद्रव्ये न्यक्त्वा न्यक्त्वा[1] तदेव जुहोति । देव॰ नीचैर्घर्ममध्ये शकलं प्रवेश्याहत्याहत्य तत्स्थेनाज्येन नितरामक्त्वाक्त्वेत्यर्थः । हुत्वा-हुत्वा प्रथमपरिधाऽउपश्रयति ॥१३॥ विकङ्कतशकलान् । देव॰ शकलैः हु॰त्वा प्रतिहोमं तत्तच्छकलं प्र॰यति आश्रितं करोति तत्र निदधातीत्यर्थः । चतुर्थमहुतमुदङ्ङीक्षमाणो दक्षिणातो बर्हिष्युपगूहति ॥१४॥ शकलम् । देव॰ वेदेर्दक्षिणभागे आतिथ्याबर्हिषि प्रवेशयति । सप्तमं च सर्वलेपाक्तं दक्षिणेक्षमाणः प्रतिप्रस्थात्रे प्रयच्छति ॥१५॥ चशब्दादहुतम् । देव सर्वमपि मूलाग्रपर्यन्तं महावीरस्थघृतलेपेनाक्तम् । त॰ स उत्तरतः शालाया उदस्तं निरस्यति ॥१६॥ तमेव शकलम् ।

स्वाहा सं ज्योतिषेत्युपयमन्यामासिञ्चति (३८. १६) घर्म्यम् ॥१७॥ घर्म्यशब्देन द्रव्यमुच्यते । देव॰ घर्म्यं घर्मसम्बन्धि तन्मध्यस्थितमाज्यमुप॰न्यां स्रुचि आ॰ति परीशासाभ्यां घर्ममुत्पाद्य स्रुक्पुष्करस्योपर्यधोमुखं करोतीत्यर्थः । रौहिणं जुहोति ॥१८॥ द्वितीयम्[2] । उपश्रितानि च प्रहरति ॥१९॥ चशब्दादनन्तरमेव ।

---

1) sic! 2) see 8. १८., viz. अहः केतुनेति प्रातःकाले सायं च रात्रिः केतुनेति मन्त्रेण·

देव° मध्यमपरिधौ निहितानि पञ्च वैकङ्कतशकलानि (१३) शाखान्तरादत्रावसरे आहवनीये प्र° । अग्निहोत्रावृता हुत्वा वाजिनवद्भक्षयन्ति मधु हुतमिति (३८. १६) ॥२०॥ घर्मर्त्विजो बहुवचनोपदेशात् · आवृच्छब्देन च होममात्रावृदेवो-च्यते द्रव्यप्रधानत्वादुपदेशस्य · तत्रापि केचिदेकामेवाहुतिमिच्छन्ति आहुतिद्वय-मित्यपरे · वाजिनवदिति च समुपहावं (४. ३. २१ १०. १. २५) भक्षणाम् ।

उच्छिष्टखरे प्रक्षाल्योपयमनीं निदधात्यत्र वोपश्रितप्रहरणात् सन्नसाद्यमानाया-नुवाचयति ॥२१॥ सन्नसाद्यमानायानुब्रूहीत्येवम् । देव° अध्वर्युः संनाय महावीरा-यानुवाचनं कारयति होत्रा । सन्नसाद्यमानेभ्य इत्येके ॥२२॥ अनुवाचनं कारयन्ति · स चायं विकल्पः . शास्त्रस्य तुल्यत्वात् । देव° महावीरादिसर्वपात्रेभ्यः ।

सूयवसाद्भगवतीत्युच्यमाने यवसोदके धेनवे प्रयच्छन्त्येके ॥२३॥ एके न प्रयच्छ-न्ति । देव° होत्रोच्यमाने (शाङ्खा° ५.१०.३३) तृणोदके । सर्वमासन्द्यां करो-ति ॥२४॥ पात्रजातम् · अनाशाय । अभीममिति (३८. १७) महावीरम् ॥२५॥ आस°रोति । देव° इतराणि तु पात्राणि तूष्णीम् · शान्तिकरणं द्वारोद्घाटनं चेति ।

सकृदासादनप्रोक्षणे खरस्थूणामयूखकृष्णाजिनाभ्र्युपशयासन्दीनाम् ॥२६॥ आरा-दुपकारकत्वात् । देव° सकृदेकवारमेव भवतः प्रथमे प्रवर्ग्यचरणे एव भवत इत्यर्थः न प्रतिप्रवर्ग्यचरणाम् · खरार्थानां सिकतानाम् । आवृत्तिर्वा प्रधानकालत्वात् ॥२७॥ अथवा आवृत्तिर्भवति न सकृदासादनादि · कुत एतत् प्र°त्वात् प्रधानका[लीनं ह्या]सादनम् प्रोक्षणं च प्रधानावृत्त्या च तदावृत्तिर्न्या-य्येति ॥ ॥ षष्ठी कण्डिका ॥६॥ ॥

उपसदन्ते प्रवर्ग्योत्सादनम् ॥१॥ देव° उपसत्समाप्तान्ते (८. ३. १३) प्र°दनं भवति (१४. ३. १. १) । अन्तःपात्ये परिघर्म्यं निधाय दक्षिणेन निर्हृत्योच्छिष्टखरम् ॥२॥ देव° शालामध्याद्दक्षि°कृत्य दक्षिणेन द्वारेण निष्काश्य अन्तःपात्यसमीपे सादित-पात्रेभ्यो दक्षिणमेव निदधाति । आहवनीये त्रीञ्छलाकान्प्रदीप्य-प्रदीप्या-ग्नीध्रो धारयति शतरुद्रियवत्प्रतिलोमं प्रमाणेषु शत°णेषु ॥३॥ देव° यजमानसक्तेषु मुखमात्रनाभिमात्रजानुमात्रप्रमाणेषु (१८. १. २-४) तान्प्रदीप्तान् शलाकान्धारयति ।

चतुर्गृहीतेनाभिजुहोति या ते घर्म दिव्या शुगिति (३८. १८) प्रतिमन्त्रम् ॥४॥

देव० अध्वर्युराज्यं संस्कृत्य चतुर्गृहीतं गृहीत्वा तेन तेषां प्रदीप्तानां शालाकानामुपरि जुहोति एकमेव चतुर्गृहीतं विभज्य त्रिष्वपि शालाकेषु जुहोतीत्यर्थः · शलाकानां समूहः शालाकः तेन तिसृभिः शलाकाभिः एकः शालाको भवति · एवंविधान् त्रीन् शालाकान्हस्ते गृहीत्वा तेषां मध्यऽएकं शालाकं शालाद्वार्ये प्रदीप्याग्नीध्रो मुखमात्रे आहवनीयस्योपरि धारयति . अध्वर्युश्चतुर्गृहीततृतीयांशं तस्मिञ्छालाके प्रदीप्ते जुहोति ततस्तं शालाकमाहवनीयमध्यऽएव प्रक्षिपति · ततो द्वितीयं शालाकं प्रदीप्याग्नीध्रो यजमानस्य नाभिदघ्ने आहवनीयस्योपरि धारयति अध्वर्युस्तथैव जुहोति · तत आग्नीध्रस्तं शालाकमाहवनीये प्रक्षिपति ।

प्रास्य तृतीयमुपविश्य ॥५॥ देव० तृतीयं शालाकमग्नीधा प्रदीप्य जानुमात्रे धृतमध्वर्युराहवनीये प्रास्य प्रक्षिप्य तत उप॰श्य सर्वं चतुर्गृहीतं शेषं जुहोति · अत्रोपवेशनविधानीत्पूर्वौ होमौ तिष्ठता कर्तव्यौ । छत्रस्य वेति (३८. १३) निष्क्रमणं पुरस्तात्पत्नीमन्तर्धाय ॥६॥ देव० होमानन्तरमध्वर्युः पुरस्तादग्रे पत्नी॰र्धाय पत्नीमग्रे कृत्वा शालाया नि॰णं करोति · पत्न्यन्तर्धानं शाखान्तरात् ।

साम प्रेष्यत्यवभृथवत् ॥७॥ देव० ततोऽध्वर्युः प्रस्तोतारं प्रति साम प्रेष्यति कथम् अवभृथवत् यथावभृथे प्रेषणमुक्तम् गाय ब्रूहीति वेति (१०. ८. १६) तथात्रापीति । देशाः ॥८॥ देव० अवभृथवदित्यनुवर्तते · सामगानदेशाः अवभृथवद्भवन्ति व्यधोद० (१०. ८. १७) । निधनं च ॥९॥ देव० अवभृथवत् (१०. ८. १८) · सर्वे निधनमुपयन्तीत्यर्थः । उत्सादनदेशं गच्छन्ति ॥१०॥ देव० सामगानानन्तरमुत्सा॰शं प्रति सर्वे गच्छन्ति · उत्सादनं महावीरादीनां परित्यागः स यत्र विहितः श्रुतौ परिष्यन्दे (१४. ३. १. १४) वा अन्यत्र वा स उत्सा॰शः । अनग्नाऽउत्तरवेदिम् ॥११॥ अग्नौ तूक्तमेव । देव० वेति सामर्थ्याद्द्रष्टव्यम् · अनग्नौ अग्निरहिते अनग्निचित्ये यज्ञे उ॰दिं प्रति गच्छन्ति (१४. ३. १. १५) · अग्नौ तु प्रागुक्तमेव अग्नौ परिष्यन्दे वेति · परिष्यन्दो द्वीपः जलपरिवृतो निर्जलः स्थलः । त्रिः परिषिच्याचिक्रददिति (३८. २२) ॥१२॥ तामिवोत्तरवेदिम् । देव० तमुत्सादनदेशमग्निमुत्तरवेदिं वा त्रिः प॰च्य त्रिर्वारं परितो जलसेकं कृत्वा वक्ष्यमाणं करोति ।

मन्त्रक्रमेण वा ॥१३॥ देव० परिषिञ्चति नेदानीम् · स्वश्रुतौ तत्रैव विधानात्

(१४. ३. १. २५) · तमवसरं पुनः स्वयमेव वक्ष्यति सूत्रकारः (३५)। नाभिस्पृशं प्रवृञ्जनीयं निदधाति चतुःस्रक्तिरिति (३८. २०) ॥१४॥ देव° अध्वर्युरुत्तरवेदौ उत्सादनपक्षे प्रथमं महावीरं ना°शं नाभिस्पृष्टं नि°ति नाभेः पुरस्तात्।

प्राञ्चावितरौ ॥१५॥ महावृत्त्या रीत्या महावीरौ। देव° पूर्वासादितान्महावीरात्प्राच्यां प्राक्संस्थौ च। उपशयां च तूष्णीम् ॥१६॥ देव° महावीरघटनावसरे परिशेषितां मृदं चकारान्महावीरेभ्यः प्राचीं पुरस्तात्तूष्णीं निदधाति · अत्र तूष्णीमिति यत्नादितरौ महावीरौ चतुःस्रक्तिरिति (३८. २०) मन्त्रेणासादयेदिति लभ्यते।

परीशासावभितः ॥१७॥ देव° प°सौ महावीरादिक्रमभितः। रौहिणहवन्यौ चावकृष्टे बाह्ये ॥१८॥ चशब्दान्निदधाति। देव° रौ°न्यौ स्रुचौ चकारादभितश्चासादयति · परीशासाभ्यां बहिःप्रदेशे अवकृष्टे च परीशासापेक्षया नीचे किंचित्पश्चादपसृते। अग्निमुत्तरतः ॥१९॥ देव° रौ°न्योरुत्तरतः।

आसन्दीं दक्षिणतः ॥२०॥ देव° रौ°न्योरेव दक्षिणतः सम्राडासन्दीमासादयति।

कृष्णाजिनमुत्तरतः ॥२१॥ देव° अग्नेरुत्तरतः। सर्वतो धवित्राणि ॥२२॥ देव° आसादितपात्राण्यपेक्ष्य स°त्राणि आसादयति दक्षिणतः पश्चादुत्तरतश्चैकैकम्।

परिधींश्च ॥२३॥ देव° परिधीनपि चकारादासादितपेक्षया सर्वत आसादयति धवित्रवत् · शाखान्तरात्। रज्जुसंदानं वेदमुपयमन्यामाधाय पश्चात् ॥२४॥ देव° आसादितपात्रगणस्य पश्चादुपयमनीं स्रुचं प्रागग्रां सादयति रज्जु°नं वेदं च तस्यामाधाय तन्मध्ये कृत्वा। पश्चात्पिन्वने[1] चाभितो दण्डम् ॥२५॥ देव° पिन्वने च चकारात्पश्चात् उपयमनीपुष्करस्य पश्चात्तस्या दण्डमभितो दक्षिणोत्तरेऽआसादयति। स्थूणामयूखं पश्चात् ॥२६॥ ऊरुसंमितवात् (१४. ३. १. २२)। देव° पिन्वनयोः पश्चात् दक्षिणतः स्थूणाम् उत्तरतो मयूखमिति।

रौहिणकपाले च[2] ॥२७॥ जानुसंस्तवात्तयोरेव (१४. ३. १. २२)। देव° स्थू°खयोः चकारात्पश्चात् रौ°ले। धृष्टी च ॥२८॥ चशब्दात्तयोरेव पश्चात्। देव° रौ°लयोः पश्चाद्धृष्टीऽउपवेषौ। मध्येऽन्यत् ॥२९॥ घर्मोपयुक्तम्। देव° स्रुवमौञ्जकूर्चादि सादितपात्राणां मध्ये। खराऽउत्तरतः ॥३०॥ देव° सर्वपा-

---

१) Thus १. ३. MRK. पश्चात् deest A. २) पश्चाद्रौ° K. च A, deest १. ३. MRK.

त्राणामुत्तरतः प्रचरणीयौ खरावासादयति । दक्षिणतो मार्जालीयदेशं बहि-र्वेद्युच्छिष्टखरम् ॥३१॥ देव॰ मार्जालीयधिष्ण्यस्थानस्य द॰तो वेदेर्बहिर्भागे उ॰रमा-सादयति । आसेचनवन्ति पयसः पूरयति घर्मैतत्तऽइति (३८.२१) ॥३२॥ देव॰ गर्तयुक्तानि सप्त पात्राणि पय॰ति पयसा पूरयतीत्यर्थः · तृतीयार्थे षष्ठी · महावीरत्रयम् द्वे पिन्वने उपयमनी स्रुवश्च एतानि सप्त · प्रत्येकं मन्त्रः ।

शेषं व्रतमिश्रं दीक्षिताय प्रयच्छति ॥३३॥ देव॰ पयःशेषं व्रतमिश्रं कृत्वा ।

प्रत्तं चेत् केवलम् ॥३४॥ देव॰ साग्निके सोमे व्रतं प्रागेव सकलं प्रत्तं दत्तं चेत् (८.३.१८) तदा केवलं प्रवर्ग्योत्सादनपयःशेषं यजमानाय प्रयच्छति · व्रतकालऽएव ।

अत्र वा परिषेचनम् ॥३५॥ उत्तरवेदेः कार्यम् । देव॰ मन्त्र॰ण वेति (१३) यत्प्रा-गुक्तम् तस्यायमवसरः · अत्रैव श्रुतौ पाठात् (१४.३.१.२५) · मन्त्रपाठक्रमेणाप्य-त्रैव भवति · तस्माद्वाशब्दोऽवधारणे अत्रैव परिषेचनं कर्तव्यमित्यर्थः ।

वार्षाहरेष्टाहोत्रीये सामनी गायेति प्रेष्यति ॥३६॥ देव॰ अध्वर्युः प्रस्तोतारम् · यद्यप्यत्र तन्त्रेण प्रैष उक्तः तथापि प्रैषप्रैषार्थयोरानन्तर्यानुग्रहाय भेदेनैव देयः वार्षाहर साम गायेति तदानान्तरमिष्टाहोत्रीयं साम गायेति ।

चात्वाले मार्जयन्ते सपत्नीकाः सुमित्रिया न इति (३८.२३) ॥३७॥ देव॰ ऋत्विग्यज-मानाः · पत्न्या अपि मार्जनमन्त्रपाठो भवत्येव क्वचित्तूष्णीमिति यज्ञदर्शनात् (४०) ।

उद्वयमित्युत्क्रामन्त्युत्तरपूर्वार्धम् (३८.२४) ॥३८॥ देव॰ ऐशानीं प्रति उद्गच्छन्ति · यजमानोऽत्र कर्ता । अनपेक्षमेत्येधोऽसीति (३८.२५) समिधमादायाहवनीये ऽभ्यादधाति समिदसीति (३८.२५) ॥३९॥ देव॰ प्रादेशमात्रीमेकां समिधं हस्तेना-दाय । पत्नी च गार्हपत्ये तूष्णीम् ॥४०॥ देव॰ शाखान्तरात् । प्रवृञ्जनीयौ शतमानौ ब्रह्मणे ददाति ॥४१॥ देव॰ रजतसुवर्णमयौ यजमानः ।

घर्मदुघामध्वर्यवे ॥४२॥ देव॰ ददातीति शेषः । यजमानव्रतदुघां होत्रे ॥ ४३॥ देव॰ स्वव्रतदुघामिति सिद्धे यजमानग्रहणं श्रुत्यनुकरणमात्रम् (१४.३.१.३४)।

पत्न्या उद्गात्रे ॥४४॥ देव॰ पत्न्या व्रतदुघाम् · यद्यप्युद्गात्रऽइति सूत्रऽएकवचनम् तथापि त्रिभ्यो दानम् अथ॰द्गातृभ्यो दद्यादिति श्रवणात् (॰३५) ।

आग्नीध्रेऽजाम् ॥४५॥ देव॰ शाखान्तरात् । अथ घर्मभेदे प्रायश्चित्तमाह ·

घर्मभेदे यथोक्तम् ॥४६॥ एतच्चाभिधीयते विशेषणार्थम्· तच्चाह·। देव॰ घर्मस्य भेदे पाठने यथा प्रागुक्तं (२५. ५. २१-३०) प्रायश्चित्तम् तथा भवतीत्यर्थः।

उखावच्चान्यं कुर्यात् ॥४७॥ उखावदिति मन्त्ररहितक्रि[यामात्रेण] (१६. ७. १) · अयं [चोत्सादन]ाय (१४. ३. २. २१) क्रियते। देव॰ प्रायश्चित्तहोमानन्तरं भग्नं महावीरमुपशयां च पिष्टान्यया मृदा सह संसृज्य तूष्णीं महावीरकरणमजापयसोऽवसेकान्तमुत्सादनार्थं कुर्यात्। अभिन्नेन चरेत् ॥४८॥ देव॰ अभग्नेन इतरयोर्द्वितीयतृतीयमहावीरयोर्मध्ये अन्यतरेण दृढेन चरेत् प्रचरणं कुर्यात् नूतनं तूत्सादनार्थं निदध्यात्। स्वाहा प्राणेभ्यः साधिपतिकेभ्य इति (३१. १) पूर्णाहुतिमाद्याम् उत्तमां च मनसः काममाकूतिमिति (३१. ४) ॥४९॥ देव॰ स्वा॰भ्य इति मन्त्रेणाद्यां प्रथमां पूर्णाहुतिं जुहुयात् मन॰तिमिति मन्त्रेण चोत्तमामन्तिमां पूर्णाहुतिं जुहुयात् इदं श्रियाऽइत्यस्यास्त्यागः· अन्याः पृथिव्यै स्वाहेत्याद्याः श्रोत्राय स्वाहेत्यन्ता (३१. १-३) मध्यवर्तिन्यो विंशतिराहुतयः सकृद्धोतव्याः।

प्रजापतिः सम्भ्रियमाण इति (३१. ५) च यथाकालम् ॥५०॥ देव॰ जुहोति · सम्भ्रियमाणाद्यवस्थायां महावीरभेदे प्रजापतये स्वाहेत्याद्याः यथाकालमाहुतयो होतव्या इत्यर्थः· तद्यथा सम्भ्रियमाणो महावीरो यदि भिद्यते तदा प्रायश्चित्तहोमे प्रजापतिर्देवता प्रजापतये स्वाहेति प्रायश्चित्ताहुतिर्होतव्येत्यर्थः निष्ठिताभिमर्शनादारभ्याजापयोऽवसेचनान्तं सम्भ्रियमाणः· एताः सकृद्धोतिराहुतयः।

सविता प्रथमेऽहन्निति (३१. ६) च प्रत्यहम् ॥५१॥ देव॰ सवि॰हन्नित्येतद्विहिताप्येकैकाहुतिः प्रत्यहम् चकाराज्जुहोति सकृद्धोतेनैव · प्रथमेऽहन् प्रथमेऽहनि घर्मभेदे सविता प्रायश्चित्तदेवता एवमेव सर्ववाक्येषु योजना तेन सवित्रे स्वाहेति आहुतिहोमः· एवं द्वितीयेऽहनि घर्मभेदे अग्निर्देवता अग्नये स्वाहेति · तृतीये वायवे॰ द्वादशे विश्वेभ्यो देवेभ्य इति · उपसत्प्रवद्दावेता एवाहुतयः पुनः पुनरादित आरभ्यावर्त्यन्ते। अथ प्रवर्ग्यस्याधिकारिण आह·

अवकाश्यस्य प्रवृञ्ज्यात् ॥५२॥ देव॰ अवकाशवाचनार्होऽवकाश्यः (१. ७. १६)।

न प्रथमयज्ञे ॥५३॥ देव॰ प्रथमयज्ञशब्देनाग्निष्टोमस्यातिरात्रस्य वा प्रथमः प्रयोगोऽभिधीयते · तत्र न प्रवृञ्ज्यात् प्रवर्ग्यं न कुर्यात् (१४. २. २. ४४)। विकल्पेन प्रश्नि

ऽपि प्रवर्ग्यो भवति (८.२.१६) शाखान्तरात् प्रथमयज्ञेऽप्येकऽ इति · तथा अग्निष्टोमे प्रवृणक्तीति तैत्तिरीयाणां वचनम् । अथ सप्रवर्ग्ये क्रतौ दधिघर्मसम्बन्धिनीं कियतीमितिकर्तव्यतामाह · यावती द्यावापृथिवीऽइति (३८.२६) दधिघर्मग्रहणम् ॥५४॥ देव° सपवित्रायामग्निहोत्रहवण्यां दध्नं कुर्यात् (१०.१.२१) · तच्च यथा-कथंचित्स्थालीमुखेनैव स्रुचि निनयनम् अवद्यतीत्यश्रवणात् अत एवोपस्तरणाभिघारणेऽअपि न भवतः · स आनीयमानऽआह होतर्वदस्वेत्यादि श्रवणाच्च (१४.३.१.३०) स्रुचि निनयनमेव स्थालीमुखेन कर्तव्यमिति प्रतीयते अतो नावदानधर्माः । मयि त्यदिति (३८.२७) भक्षणम् ॥५५॥ देव° हुतशेषस्य भक्षाधिकारिभिः कर्तव्यम् अनुवषट्कृतऽआहरति · स उपहवमिष्ट्वा भक्षयतीति श्रवणात् (१४.३.१.३१) · अत्र तु यजमानस्यैव भक्षणमुक्तम् कात्यायनेन तु शाखान्तरात् हुतशेषं घर्मर्त्विजः सयजमानाः समुपहावं भक्षयन्तीति (१०.१.२५) सूत्रितम् । त्विषः संवगिति (३८.२८) महाव्रतीये ॥५६॥ देव° मध्येऽहनि त्विषः संवृगिति मन्त्रेण दधिघर्मस्य हुतशेषस्य भक्षणमधिकारिभिः कर्तव्यम् ।

चावाले मार्जनम् ॥५७॥ देव° भक्षणानन्तरं भक्षयितृभिः । दधिघर्मस्य कियन्तः पदार्थाः प्रागुक्ताः सप्रवर्ग्ये दधिघर्म इत्यत्र (१०.१.२०) कियन्तश्चात्रेति · तत्कस्माद्धेतोः सूत्रकार एव वेद । शान्तिकरणमाद्यन्तयोः स्वाध्यायदर्शनात् ॥५८॥ देव° प्रवर्ग्यचरणस्यादौ अन्ते च ऋचं वाचमित्यध्यायेन (३६.१) शान्तिकरणं कर्तव्यम् · कुत एतत् स्वाध्याये मन्त्रपाठे अस्य शान्तिकरणस्य ऋचं वाचमित्यध्यायस्य प्रवर्ग्यमन्त्राणामादौ दर्शनात् · अत एवोक्तम् (अनुक्रम° ४.५) आद्योऽध्यायः शान्त्यर्थो वैश्वदेव इति · तच्च द्वारापिधानोत्तरकालऽआदिमम् पात्राणामासन्द्यामासादनानन्तरमन्तिममिति ॥ ॥ सप्तमी कण्डिका ॥७॥ ॥

इति कात्यायनसूत्रे षड्विंशोऽध्यायः ॥२६॥

समाप्तं चेदं कात्यायनीयं श्रौतसूत्रम् ॥

